# अथ श्रीमद्भागवतं चूर्णिकासमेतं सटिप्पणं प्रारभ्यते

खेमराज श्रीकृष्णदास प्रकाशन, बम्बई

संस्करण : सितंबर २०१९, सम्वत् २०७६

मूल्य:
पत्राकार :१४०० रुपये मात्र।
साजिल्द : १५०० रुपये मात्र।

© सर्वाधिकार : प्रकाशक द्वारा सुरक्षित

मुद्रक एवं प्रकाशक :
खेमराज श्रीकृष्णदास,
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग, बम्बई-४०० ००४.

Printers & Publishers :
**Khemraj Shrikrishnadass**
**Prop. : Shri Venkateshwar press,**
Khemraj Shrikrishnadass Marg,
7th Khetwadi, Mumbai - 400 004.

**Web Site : http://www.khe-shri.com**
**Email : khemraj@vsnl.com**

Printed by Shri Sanjay Bajaj for M/s. Khemraj Shrikrishnadass, Proprietors Shri Venkateshwar Press, Mumbai- 400 004, At their Shri Venkateshwar Press, 66 Hadapsar Industrial Estate, Pune -411 013

श्रीवैकुण्ठविहारिणे नमः

# अथ श्रीमद्भागवतविषयानुक्रमणिकाप्रारम्भः

अध्यायाः — विषयाः

## प्रथम स्कन्धे


१ दुष्टकलेरागमनं ज्ञात्वा तत्पापतारणोपायं शौनकादयः सूतं पप्रच्छुः ।

२ एकाग्रमनसा भगवत्कथाश्रवणकीर्तनमेव ततो निस्तरणोपायः ।

३ भगवतः पुरुषाद्यवतारस्तच्चरितं भागवतार्कोदयश्च ।

४ आम्नायविभागसदर्थप्रकाशनाय भारतादिपुराणकरणेनाऽपि व्यासस्यापरितोषः ।

५ नारदं प्रति व्यासेन चित्तापरितोषकारणे पृष्टे भगवद्गुणवर्णनाप्राचुर्यं कारणमुपदिष्टं तेन ।

६ व्यासप्रत्ययार्थमात्मनः पूर्वजन्मचरितं कृष्णकथोद्भवं नारदेन वर्णितम् ।

७ भागवतश्रोतुः परीक्षिज्जन्मप्रस्तावे सुप्तद्रौपदीपुत्रवधादि चौरकृत्यमश्वत्थाम्नः कथितम् ।

८ अश्वत्थाम्नोऽस्त्रात्परीक्षिद्रक्षणं कृष्णेन । तत्स्तुतिश्च कुंत्या कृता ।

९ धर्मस्य शोके तच्छांत्यर्थं भीष्मसन्निधिगमनं तेन तच्छोकापनोदस्तन्निर्याणं च ।

१० युधिष्ठिरस्य राज्याभिषेकानंतरं भगवतो द्वारकागमनम् ।

११ भगवतो द्वारकाप्रवेशस्तदैश्वर्यकथनम् ।

१२ द्रौण्यस्त्राद्रक्षितस्य परीक्षितो जन्म तज्जातकर्म च युधिष्ठिरेण कृतं वर्ण्यते ।

१३ सस्त्रीकस्य धृतराष्ट्रस्य विदुरोपदेशेन निर्याणं परीक्षिद्राज्याभिषेकः ।

१४ उत्पातदर्शनेन युधिष्ठिरस्यार्जुनागमचिंतायां तदागमनम् ।

१५ अर्जुनाद्भगवन्निर्याणं श्रुत्वा प्रव्रजितानां पाण्डवानां स्वर्गारोहणम् ।

१६ कलिखिन्नभूमिधर्मसंवादे परीक्षिदागमनम् ।

१७ उभयोः संवादात्कलिं ज्ञात्वा तन्निग्रहः परीक्षिता कृतः ।

१८ मृतसर्पकलेवरं शमीककंठे राज्ञा क्षिप्तं निशम्य तत्पुत्रेण शृङ्गिणा शापोत्सर्जनम् ।

१९ गंगायां प्रायोपविष्टे परीक्षिति ऋषीणामागमनं शुक–प्राप्तिश्च।


## द्वितीयस्कन्धे


१ राज्ञा पृष्टः शुकः सूक्ष्मे ब्रह्मणि चित्तस्थैर्यार्थमादौ स्थूल विराड्रूपोपासनमुपादिशत् ।

२ स्थूलधारणाजितस्य मनसोऽतिसूक्ष्मे ब्रह्मणि । चित्तलयोपदेशः ।

३ विष्णुभक्तिश्रैष्ठ्यश्रवणेन तत्साधनभूतासु भगवत्कथासु परीक्षित आदरो दर्शितः ।

४ हरिलीलाप्रश्ने परीक्षिता कृते शुकेन नारदब्रह्मसंवादप्रस्तावो वर्णितः ।

५ ब्रह्मणा नारदाय विराड्रूपसृष्टिरुक्ता ।

६ पुरुषसूक्तार्थेन भगवतो विराड् देहवर्णनम् ।

७ वराहावतारादारम्य आकृष्णावतारमवतारास्तच्चरितानि चोपवर्णितानि ।

८ जीवपरमात्मसम्बन्धाक्षेपपूर्वकं पुराणार्थप्रश्नाः ।

९ शुकेन परीक्षित्प्रश्नोत्तरे भगवता ब्रह्मणे प्रोक्तं चतुःश्लोकं भागवतमुपदिष्टम् ।

१० राज्ञः परीक्षितः प्रश्नोत्तरद्वारा पुराणलक्षणादिवर्णनम् ।


## तृतीयस्कन्धे


१ गतायुषान्यदून् त्यक्त्वा गतस्योद्धवस्य विदुरेण सह संभाषणम् ।

२ कृष्णविरहदुःखितोद्धवः कृष्णचरितानि संक्षेपेण क्षत्त्रेऽकथयत् ।

३ मथुराया आगतस्य भगवतो द्वारकाक्रीडादिवर्णनम् ।

४ भगवदादेशादुद्धवज्ञापितो विदुरो मैत्रेयमगमत् ।

अध्यायाः — विषयाः

५ विदुरसंदेहे मैत्रेयेण तन्निरासार्थं महदादीनां स्थूलानां सृष्टिवर्णनम् ।
६ ईशशक्तिप्रवेशेन स्थूलभूतानां जगन्निर्माणशक्तित्वम् ।
७ स्वतो निर्गुणस्य भगवतो गुणमय्या मायायाः कथं संग इत्यादि विदुरप्रश्नाः ।
८ नाभिकमलोद्भूतस्य भीतस्य ब्रह्मणो भगवत्स्तुतिः ।
९ ततस्तपस्तुष्टस्य भगवतो वरदानेन ब्रह्मणः सृष्टिप्रवृत्तिः ।
१० प्रथमं कालोत्पत्तिर्विसर्गसृष्टिश्च वर्णिता ।
११ कल्पयुगादिकालमानवर्णनम् ।
१२ ब्रह्मणः सनत्कुमारादिमानससृष्टेरनंतरं द्विधा देहभेदेन स्वायंभुवस्य शतरूपायाश्चोत्पत्तिः ।
१३ ब्रह्मणो नासिकोद्भूतस्य यज्ञरूपवराहस्य स्तुतिः ।
१४ दितिप्रार्थनया कश्यपात्तस्यां गर्भसंभूतिः ।
१५ सनत्कुमाराद्वैकुंठस्थितयोर्जयविजययोः शापवर्णनम् ।
१६ कुपितस्य कुमारस्य भगवता सांत्वनं तयोरनुग्रहश्च कृत इति वर्ण्यते ।
१७ हिरण्याक्षहिरण्यकशिप्वोर्जन्मन्युत्पातकथनं ताभ्यां दिग्विजयश्च ।
१८ धरोद्धारे हिरण्याक्षवराहयोर्महाभयमायोधनम् ।
१९ ब्रह्मप्रार्थनांगीकारेण हिरण्याक्षवधः ।

अध्यायाः — विषयाः

२० सर्वस्थिरचरसर्गानंतरं स्वायंभुवमनोर्वंशवर्णनम् ।
२१ कर्दमतपस्तुष्टेन भगवतस्तस्य सृष्ट्यर्थं विवाहोपदेशः ।
२२ स्वायंभुवमनुना स्वयंप्रत्या देवहूत्या सह कर्दमर्षेर्विवाहः ।
२३ पत्न्याः प्रसन्नेन कर्दमेन तपःसिद्धिनिर्मिते विमाने तयोर्गार्हस्थ्यवर्णनम् ।
२४ भगवतः कपिलस्य जन्मानंतरं कर्दमस्य प्रव्रज्योक्ता ।
२५ मात्रा पृष्टः कपिलो जीवस्य बंधविमोक्षणं भक्तियोगमाह ।
२६ पुंप्रकृत्योर्विवेकाय सर्वसूक्ष्मभावानां जन्मलक्षणम् ।
२७ पुंप्रकृत्योर्विवेके मोक्षप्राप्तिर्दर्शिता कपिलेन ।
२८ सगुणस्य भगवतो ध्यानयोग उक्तः ।
२९ मायाध्यासेन कालकृता जीवस्य जन्मादिघोरा संसृतिरुपदिष्टा ।
३० देहाध्यासेन जीवानां पापादधोगतिरुदीरिता ।
३१ पुण्यपापयोः साम्यान्मानुषी गतिः कथ्यते ।
३२ सात्त्विकैः कर्मभिरूर्ध्वगतिः ज्ञानविहीनस्य पुनरावृत्तिर्वर्णिता ।
३३ कपिलोपदेशेन ज्ञानप्राप्त्या मातुर्विदेहकैवल्यप्राप्त्यनंतरं कपिलस्य योगालंबनम् ।

## चतुर्थस्कन्धे

१ स्वायंभुवमनोर्वंशकीर्तनं ब्रह्मपुत्रादत्रेर्दत्तावतारः ।
२ विश्वसृजां सत्रे दक्षशिवयोर्वैरकारणं परस्परशापविसर्जनं च ।

अध्यायाः — विषयाः

३ दाक्षायण्याः सत्याः पितृयज्ञदिदृक्षया गच्छन्त्याः शिवेन निषेधः कृतः ।
४ शिवं विहाय गतायाः सत्याः पितृकृतावमानाद् योगेन देहन्यासः ।
५ नारदात् पत्नीनाशश्रवणेन कुपितः शिवो वीरभद्रं निर्माय तेन दक्षयज्ञविध्वंसनं दक्षवधं च कारयामास ।
६ स देवो विधिः कैलासं गत्वा यज्ञसंधानार्थं दक्षजीवितार्थे शिवं तुष्टाव ।
७ पुनर्दक्षयज्ञसंधानार्थमुद्भूतस्य विष्णोः सर्वदेवैः स्तुतिः कृता ।
८ सापत्नमातुः कोपादरण्यं गत्वा नारदोपदेशेन ध्रुवो हरिमतोषयत् ।
९ ध्रुवोऽभीष्टवरान्हरेर्लब्ध्वा पित्रा समर्पितं राज्यमकरोत् ।
१० पुण्यजनाद्भ्रातृवधं श्रुत्वा ध्रुवः पुण्यजनालकां गत्वाऽब्रवीत् ।
११ पुण्यजनक्षयं दृष्ट्वाऽऽगतेन स्वयंभुवा ध्रुवस्य सांत्वनं युद्धात्परावर्तनं च ।
१२ पश्चात्कुबेरेणाभिनंदितो ध्रुवः प्रजापालनं कृत्वा यज्ञैरिष्ट्वा हरेः स्थानमारुरोह ।
१३ ध्रुवान्वयोत्पन्नस्यांगस्य पुत्रवेनक्रौर्याददर्शनगमनम् ।
१४ अंगगमनादूर्ध्वं तत्पुत्रवेनस्य राज्याभिषेके कृते तस्याधर्मवर्तित्वाद् ऋषिभिर्बंधः ।

| अध्यायाः | विषयाः |
|---|---|
| १५ | अराजके वेनदक्षिणबाहुमथनं कृत्वा ऋषिभिरुत्पादितस्य पृथोर्जन्म । |
| १६ | ऋषिप्रेरितैर्मागधवंदिभिस्तत्स्तुतिः कृतेति वर्ण्यते । |
| १७ | क्षुत्पीडितानां शरणं प्राप्तानां प्रजानामन्नदानार्थं ग्रस्तबीजां महीं हन्तुमुद्यतस्य पृथोस्तया कृता स्तुतिः । |
| १८ | महीवचनाद्वत्सपात्रादिकल्पनया सर्वैर्महीदोहनम् । |
| १९ | तस्याश्वमेधे हयापहरणादिन्द्रवधोद्यतस्य पृथोर्ब्रह्मणा निवारणम् । |
| २० | तद्यज्ञोद्भूतस्य विष्णोर्वरप्रदानमुभयप्रीतिसंबन्धश्च । |
| २१ | स्वप्रजाभ्यः पृथुना भगवद्धर्मशासनं कृतम् । |
| २२ | भगवदाज्ञया गतेन सनत्कुमारेण पृथवे ज्ञानोपदेशः कृतः । |
| २३ | ध्यानयोगेन त्यक्तदेहस्य सभार्यस्य पृथोर्विमानेन वैकुंठप्राप्तिः । |
| २४ | पृथोः प्रपौत्रात्प्राचीनबर्हिषो दशप्रचेतसां जन्म रूद्रगीतम् च । |
| २५ | तपस्यत्सु प्रचेतःसु तत्पित्रे नारदोऽध्यात्मपारोक्ष्यमुपादिशत् । |
| २६ | पुरञ्जनाय देशस्य जीवस्य समृद्धित्यागात्संसृतिरुदीयत । |
| २७ | प्रियापुत्रापदेशाद्व्यासक्तया जीवस्य स्वरूपप्रच्युत्या कालक्रमेण जरारोगाद्यागमः । |
| २८ | स्त्रीसंगात् स्त्रीत्वं प्राप्तस्य पुरञ्जनस्यपरमात्मज्ञानोपदेशान्मुक्तिः । |
| २९ | परोक्षार्थव्याख्यानेन स्त्रीसंगाद्भव ईशसंगान्मुक्तिरितीरितम् । |
| ३० | ईशाल्लब्धवराः प्राचीनबर्हिषः पुत्रा वार्क्षी कन्यां परिणीय राज्यमकुर्वन् । |
| ३१ | स्वसुते दक्षे राज्यधुरं यस्य वनं गतानां प्रचेतसां नारदोपदेशान्मुक्तिः । |


## पंचमस्कन्धे


| अध्यायाः | विषयाः |
|---|---|
| १ | प्रियव्रतस्य विरक्तत्वेऽपि ब्रह्मणो मनोधारणार्थं राज्यकर्तृत्वं तदनु नारदोपदेशात्परमपदप्राप्तिः । |
| २ | आग्नीध्रस्य स्त्रैणस्य गन्धर्वलोकावाप्तिश्च तस्मान्नाभे राज्ञ उत्पत्तिः । |
| ३ | पुत्रार्थं यजतो नाभेर्यज्ञे भगवताविर्भूय तत्प्रार्थनयात्मसदृशपुत्रदानम्, ऋषभावतारः । |
| ४ | इंद्रेण वृष्टिप्रतिबन्धे स्वयोगमाययर्षभस्य वर्षणादिचरितं तद्राज्ये प्रजानां परमनिवृतिश्चाख्याता । |
| ५ | भरतादीनामुपदेश आत्मनश्च पारमहंस्यधर्माचरणम् । |
| ६ | देहाभिमानत्यागान्निरभिमानत्वेन भुवं चरतस्तस्याग्निप्रवेशः । |
| ७ | भरतेन यज्ञेश्वरस्य भगवतः स्तुतिः पश्चात्तस्य प्रव्रजनं तपश्च कथितम् । |
| ८ | विष्णुं भजतस्तस्यैणसंगादैणत्वं वर्णितम् । |
| ९ | तस्य तृतीयविप्रजन्मनि जडत्वेन गृहीतस्य चौरैर्बलिप्रदानाद्भद्रकाल्या मोक्षः । |
| १० | रहूगणेनाक्षिप्तस्यापि तथैव शिबिकावहनं तद्वाक्यं च कथितम् । |
| ११ | सिंधुसौवीरपतिना पृष्टः स योगी तस्मै ज्ञानमाचष्ट । |
| १२ | तत्संशयापाकरणेनाज्ञाननिवृत्त्या तज्ज्ञानप्राप्तिश्च । |
| १३ | अविरक्ताय ज्ञान व्यर्थमिति प्रदर्शनार्थं भवाटव्युपदेशः । |
| १४ | भवाटवीरूपकस्य वास्तवार्थकथनम् । |
| १५ | भरतवंशस्य सुमत्यंतस्य वर्णनं समाप्तिश्च । |
| १६ | मेरोः सर्वतो विस्तरस्य वर्णनं योजनप्रमाणादि । |
| १७ | तस्माच्चतुर्दिक्षु गंगावतारणमिलावृते रुद्रेण संकर्षण स्तुतिः । |
| १८ | मेरोः पूर्वदिक्क्रमतः खण्डत्रयवर्णनम् । |
| १९ | किंपुरुषभरतखण्डवर्णनं भरतखण्डश्रेष्ठ्यं च दर्शितम् । |
| २० | प्लक्षादिषड् द्वीपवर्णनं षण्णां सागराणामंते लोकालोकमर्यादाविस्तारः कथितः । |
| २१ | कालचक्रेण भ्रमतो रवेरन्वहं गतिमानं तद्रथवर्णनं । |
| २२ | सोमशुक्रादिग्रहाणामूर्ध्वस्थितिमानं तद्गतिश्च । |
| २३ | ध्रुवपदादारभ्य ज्योतिश्चक्ररूपेण भगवतो विराड्देह देहकल्पनम् । |
| २४ | सूर्याधस्ताद्राहोरारभ्य पातालादिनां भूविवराणां मानं लक्षणतः । |
| २५ | शेषसंस्थितिस्तन्मुखज्वालादिभ्यः प्रलयप्रवर्तनम् । |
| २६ | पापिनां यथायथं या नारक्यो गतयस्तासां कथनम् । |


## षष्ठस्कन्धे


| अध्यायाः | विषयाः |
|---|---|
| १ | भगवन्नाममाहात्म्यनिरूपणार्थमजामिलकथायां विष्णुयमदूतसंवादः । |
| २ | विष्णुदूतैर्नाममाहात्म्यं याम्याञ्छ्रावयित्वा सोऽजामिलो विष्णुलोकं नीतः । |

| अध्यायाः | विषयाः |
| --- | --- |
| ३ | यमेनापि वैष्णवोत्कर्षवर्णनैः स्वदूताः सांत्विताः । |
| ४ | प्रजासिसृक्षया दक्षेण कृतस्य तपसोऽन्ते भगवदाविर्भावः । हंसगुह्यस्तुतिश्च । |
| ५ | हर्यश्वसंज्ञानां दक्षसुतानां नारदोपदेशादपुनरावर्तने नारदाय दक्षेण शापदानम् । |
| ६ | दक्षस्य षष्टिकन्याप्रसवः । तद्वंशे विश्वरूपजन्म । |
| ७ | बृहस्पतित्यक्तैर्देवैर्विश्वरूपः पौरोहित्याय वृतः । |
| ८ | विश्वरूपेणेंद्राय नारायणवर्मदानम् । |
| ९ | इन्द्रेण हते विश्वरूपे तत्पित्रा वृत्रे इंद्रनाशार्थमुत्पादिते भीतैर्देवैर्भगवत्स्तुतिः । |
| १० | भगवदुपदेशेन दधीचऋषेरस्थिभिर्निर्मितं वज्रमात्तवता सदेवेन्द्रेण वृत्रस्य युद्धम् । |
| ११ | वृत्रयुद्धे तस्य भक्तिज्ञानवैराग्यजुष्टा वाचो वर्णिताः । |
| १२ | विषण्णोत्साहितेनेंद्रेण वृत्रवधः । |
| १३ | वृत्रवधोत्पन्नया ब्रह्महत्यया नष्टस्येंद्रस्य पुनरागमनमश्वमेधेन यजनं च । |
| १४ | वृत्रस्येदृग्भक्तिकारणप्रश्ने तत्पूर्वचित्रकेतुजन्मकथनं तस्य कृच्छ्रलब्धसुते नष्टेऽतिशोकः । |
| १५ | चित्रकेतोर्नारदोऽङ्गिरोभ्यां शोकापनोदः । |
| १६ | मृतपुत्रोक्तिभिस्तन्मायामपहाय नारदेन शेषतोषिणी विद्या तस्मा उपदिष्टा । |
| १७ | शेषवरदानेन ऋद्धचुन्मत्तस्येशहसनं तन्निदानेन पार्वतीशापाद्दैत्यत्वम् । |
| १८ | चतुर्थादित्यान्वयवर्णने दितिगर्भच्छेदनादिना मरुतामुत्पत्तिः । |
| १९ | कश्यपेन दित्या इंद्रहन्तृपुत्रोत्पादनसमर्थव्रतोपदेशः । |

## सप्तमस्कन्धे

| अध्यायाः | विषयाः |
| --- | --- |
| १ | हिरण्यकशिपोर्ब्रह्मशापेनविष्णुभक्तैर्विरोधः । |
| २ | भ्रातृवधसंतप्तानां बंधूनां कपोताद्याख्यानेन सांत्वनं हिरण्यकशिपुना । |
| ३ | हिरण्यकशिपोस्तपसा तप्तानां देवानां प्रार्थनया ब्रह्मणा तस्मै वरदानम् । |
| ४ | लब्धवरो दैत्यस्त्रैलोक्यं विजित्य ब्रह्मवरेण देवानपीडयत् । |
| ५ | गुरुशिक्षितमनङ्गीकुर्वाणं भगवत्स्तुतौ रतं स्वपुत्रं प्रह्लादं विषसर्पाद्यैर्घातयितुं यत्नाः। |
| ६ | गुरौ गृहकर्माणि व्यग्रे प्रह्लादो दैत्यसुतानां विष्णुभक्ति धर्मानुपादिशत् । |
| ७ | वनं प्रस्थिते पितरि स्वभ्रातरं हंतुं प्रवृत्त इन्द्रे नारदोपदेशेन गर्भस्थ एवं तदुपदिष्टं ज्ञानमहमगृह्णामिति दैत्यसुतानादिशत् । |
| ८ | पितासुतं निघ्नन् हरिण नृहर्यवतारं कृत्वा स्तम्भादाविर्भूय हतः ब्रह्मादिभिः कृताभगवत्स्तुतिः । |
| ९ | तत्स्वरूपभीतेन ब्रह्मणाप्रणोदितः प्रह्लादो हरिमस्तौत् । |
| १० | एनमनुगृह्यांतर्हिते भगवति प्रसंगेन शिवात् त्रिपुरवध ईरितः । |
| ११ | युधिष्ठिरेण पृष्टो नारदो नृणां तथा स्त्रीणां साधारणंधर्ममुपादिशत् । |
| १२ | ब्रह्मचारिवानप्रस्थयोर्धर्मप्राधान्येन चतुर्णामाश्रमाणां साधारणा धर्मा उपदिष्टाः । |
| १३ | साधकस्य यतेर्धर्मस्तथा सिद्धस्यावधूतेतिहासेन धर्माः सिद्धावस्था च वर्णिता । |
| १४ | देशकालादि विशेषेण गृहस्थस्य श्रेयस्कृद्धर्म उपदिष्टः । |
| १५ | सर्वेषां मोक्षधर्माणां सर्ववर्णाश्रमनिबंधनं सारसंग्रहं धर्ममाचष्ट नारदः । |

## अष्टमस्कन्धे

| अध्यायाः | विषयाः |
| --- | --- |
| १ | यज्ञावतारस्तथा स्वायंभुवस्वारोचिषोत्तमतामसानां चतुर्णां मन्वंतराणां वर्णनम् । |
| २ | तुर्यमन्वंतरोक्तगजेंद्रमोक्षश्रवणोत्सुकस्य राज्ञस्तत्कथाप्रस्तावः । |
| ३ | शमलं प्राप्तेन गजेंद्रेण स्तुतस्तन्मवंतरावतारा हरिर्ग्राहग्रस्तं गजेंद्र देवलशापतश्च ग्राहं मोचयामास । |
| ४ | ग्राहस्य गंधर्वतां दत्वा गजेन्द्रं स्वपार्षदं कृत्वा तौ हरिर्निजं पदमनयत् । |
| ५ | पंचमषष्ठमन्वंतरवर्णनं प्रसंगाद्दुर्वासः शापान्निःश्रीकैर्देवै स्तुतः इति कथ्यते । |

अध्यायाः — विषयाः

६ भगवदाविर्भावानंतरं तदुपदेशतो देवैर्दैत्यानां संधिमभिधाय सुधोत्पादनार्थं समुद्रमंथनोद्योगः ।

७ मंथोनोद्भूतविषभयेन भीतैर्देवैः स्तुतो रुद्रस्तद्विषं पपौ ।

८ तदुद्भूतेषु चतुर्दशरत्नेषूत्पन्नया लक्ष्म्या हरिर्वृतः । धन्वंतरेरमृते दैत्यैर्हृते भगवतो मोहिनीरूपाविर्भावः ।

९ तन्मोहितैर्दैत्यैरर्पितेऽमृतभाजने तान्वंचयित्वा सुरानमृतं पाययन् स्वयं रूपं हरिर्जगृहे ।

१० एतत्कारणादेव दैत्यैरारब्धे युद्धे दैत्यपराजितैर्देवैः स्तुतो हरिराविर्बभौ ।

११ नारदो ब्रह्मणो वाक्याद्दैत्यवधाद्देवान्यषेधत् ते च शुक्रेण संजीविन्या जीविताः पातालं विविशुः ।

१२ मोहिनीरूपदर्शनोत्सुकेन हरेण हरिरात्मनो मोहिनीरूपदर्शनेन धैर्यं त्याजयित्वा तं सांत्वितवान् ।

१३ अवशिष्टानि सप्त मन्वंतराणि क्रमादवर्णयत् ।

१४ प्रतिमन्वंतरमाविर्भूतस्यावतारादिषट्कस्य प्रत्येकस्य कर्म वर्ण्यते ।

१५ आचार्यः शुक्रोबलिं विश्वजिताऽयाजयत् तद्भयेन स्वर्गाभ्रष्टा देवा निलिल्यिरे ।

१६ पुत्रनाशसंतप्तयाऽदित्या स्तुतः कश्यपः पयोव्रतमुपादिशत् ।

१७ तत्कृतेन व्रतेन तुष्टो भगवानाविर्भूय पुत्रत्वस्वीकरणेन तामनंदयत् ।

अध्यायाः — विषयाः

१८ वामनावतारं गृहित्वाखिलैः संभावितो बलेर्यज्ञं गतस्तं तुष्टाव तेन च वराय नियुक्तः ।

१९ पदत्रये भूमेर्याचिते श्रुतदानो बलिः शुक्रेण निषिद्धः ।

२० अनृताद्भीतो बलिर्गुरुणा शप्तोऽपि कपटं ज्ञात्वा पदत्रयं ददौ । अनंतरं हरिरवर्द्धत ।

२१ तद्धर्मनिष्ठां प्रथयितुं तं नागपाशैर्बबंध ।

२२ प्रसन्नो हरिः सुतले तं प्रस्थाप्य वरान्दत्वा तद्द्वारपोऽभवत् ।

२३ याते बलावुपेंद्रश्चेंद्रेण सह स्वर्गं गत्वा सर्वान्देवाननंदयत् ।

२४ प्रसंगान्मत्स्यावतारेण प्रलये मनो रक्षणम् ।

## नवमस्कन्धे

१ सूर्यसुतान्वये सोमवंशोद्भवार्थं मनुपुत्रसुद्युम्नस्त्रीत्वं तस्मात्पुरूरवस उत्पत्तिस्तद्राज्यप्रतिष्ठा नाभागचरितं च ।

२ मनोर्दशपुत्राणां मध्ये पंचानां पृषध्र-कवि-करूष-धृष्टनृगानां वंशानाह ।

३ शर्यातेः कन्यायाः सुकन्यायाश्च्यवनपरिणयः रैवतकस्याख्यानं तेन बलभद्राय कन्यादानम् ।

४ नाभगपुत्रस्यांबरीषस्य चरिते दुर्वासकृत्यानाशः सुदर्शनेन दुर्वाससः पलायनं तत्पृष्ठतश्चक्रगमनम् ।

५ विष्णुचक्रसंतप्तं दुर्वाससमंबरीषस्तत्स्तुत्या त्रासान्मोचितवान् । मोचितस्तं संस्तूय दुर्वासा गतः ।

६ इक्ष्वाकुवंशस्य शशादस्य चरितम्-तत्पुत्रककुत्स्थचरितं तदन्वये यौवनाश्वस्य मांधातुराख्यानं तत्पञ्चाशतकन्यकाभिर्वृत्तस्य सौभरेराख्यानम् ।

अध्यायाः — विषयाः

७ तदन्वयोत्पन्नस्य हरिश्चन्द्रस्याख्यानम्, तद्यज्ञे विश्वामित्रकृपया-शुनःशेपमोक्षश्च ।

८ तदन्वयोत्पन्नसगरयज्ञे इन्द्रेण हरिताश्वनयनार्थं प्रवृत्तान्सगरसुतान् कपिलो ददाह तत्पौत्रेणांशुमता स्तुतः कपिलोऽश्वं तस्मै दत्वा पितृणामुद्धरणार्थं गंगावतारणमादिशत् ।

९ तत्पौत्रो भगीरथो गंगामानीय स्वपितॄनुदधीधरत तदन्वये ऋतुपर्णोत्पत्ति सौदासाख्यानम्, खट्वांगो मुहूर्ताद् ब्रह्मलोकमगमदितीर्यते ।

१० तदन्वये दशरथाद्रामावतारः संक्षेपेण तच्चरितं च ।

११ रामराज्यवर्णनम्, तदाज्ञाः, शत्रुघ्नेन लवणासुरं हत्वा मथुरानिर्माणम् ।

१२ कुशादारभ्य सुमित्रांतो मनोर्वंशः ।

१३ ऐक्ष्वाकस्य निमेर्वंशे जनकादीनां राज्ञां वर्णनं, वसिष्ठ निम्योः शापेन परस्परं देहत्यागः ।

१४ इंदुनागुरुपत्न्यंगीकारे देवदैत्यैर्युद्धोद्योगे ब्रह्मणा सांत्वितायास्ताराया बुधजन्म तस्मात्पुरूरवस उर्वश्याख्यानं, तस्याः सकाशादायुरादीनां षण्णां पुरुरवसः पुत्राणां जन्म ।

१५ पुरुरवसो वंशे जह्नोरुत्पत्तिः गार्धेविश्वामित्राख्याने परशुरामजन्म सहस्रार्जुनवधश्च ।

| अध्यायाः | विषयाः |
|---|---|
| १६ | सहस्राजुंनसुतंर्जमदग्नेर्वधे तत्क्रोधात्क्षत्रियाणामेकविंशतिवारं परशुरामेण निःक्षत्रीकरणम् । |
| १७ | पुरूरवसश्चतुर्णां सुतानां वंशवर्णनम् । |
| १८ | नाहुषस्य ययातेर्देवयान्या सह विवाहः शर्मिष्ठायां च द्रुह्व्वादीनांजन्म, तत्पुत्रेण पूरुणा पितृजराग्रहणम् । |
| १९ | ययातेर्वैराग्यं पूरो राज्याभिषेकानंतरं तस्य वनाश्रयणं च । |
| २० | पितृप्रसादाप्तराज्यस्य पूरोर्वंशे दुष्यंतशकुन्तलयोर्विवाहोत्तरं तत्पुत्रस्य भरतस्याख्यानं, तद्वंशे नष्टे यज्ञतुष्टंर्भरद्वाजपुत्रार्पणम् । |
| २१ | रन्तिदेवाजमीढादेश्चरितं, दिवोदासोत्पत्तिरहल्याख्यानं तस्याः शतानंदोत्पत्तिः । |
| २२ | दिवोदासवंशवर्णनमृक्षवंशेजरासन्धपार्थदुर्योधनादीनामुत्पत्तिः । |
| २३ | द्रुह्यु तुर्वसुयदूनां यावज्ज्यामघं वंशः । |
| २४ | रामकृष्णावतारावधि यादवान्वयोत्पन्नस्य विदर्भस्य नानामुखा वंशाः । |

## दशमस्कन्धे

| अध्यायाः | विषयाः |
|---|---|
| १ | वसुदेवदेवकीविवाहे कंसः स्वमृत्युं देवकी सुताद्विज्ञाय तत्षड् गर्भानवधीत् । |
| २ | कंसादीनां घाताय ब्रह्मणा प्रार्थितो देवकीगर्भंतो हरिरभूत् गर्भस्तुतिः । |
| ३ | देवक्या निजरूपेणोत्पन्नो देवकीवसुदेवस्तुतो हरिर्भीतेन पित्रा गोकुलं नीतः । |
| ४ | कन्यकावाक्यात्त्रस्तिभयाकुलः कंसो दुष्टदैत्यैः सर्वबालवधमाज्ञापयत् । |
| ५ | नंदः पुत्रानंदनिर्वृत्तो महोत्सवं कृत्वा मथुरां गत्वा वसुदेव देवसंगममकरोत् । |
| ६ | वसुदेववाक्याद्गोकुलेऽनर्थागमशंकितो नंदः पूतनावधादिकं श्रुत्वा विस्मितोऽभूत् । |
| ७ | शकटासुरवधः तृणावर्तवधः, मातुः स्वमुखे विश्वरूपदर्शनम् । |
| ८ | गर्गेण कृष्णजन्मकर्मादि जातककथनम्, मृद्भक्षणव्याजेन विश्वरूपदर्शनम् । |
| ९ | पयस्युत्सिक्ते यशोदा कृष्णकृतं भांडभंगादि दृष्ट्वोलूखले कृष्णं बबंध |
| १० | सहोलूखलेन रिंगन् कृष्णो यमलार्जुनौ बभञ्ज तत्र ताभ्यां नलकूबराभ्यां स्तुतः । |
| ११ | वत्सान्पालयता कृष्णेन वत्सासुरबकासुरौ हतौ । |
| १२ | महासर्पवपुर्धरमघासुरं वत्सगोपालगलं कृष्णो गले प्रविश्याहन् । |
| १३ | ब्रह्मणा वत्सगोपालहरणे तावद्रूपो हरिर्भूत्वा पूर्ववद्गोकुलं चिक्रीड । |
| १४ | कृष्णं परं ब्रह्म विदित्वा कृता ब्रह्मस्तुतिर्वर्ण्यंते । |
| १५ | तालवने धेनुकार्दनं कालियविषमृतान्वत्सबालकानजीवयत् । |
| १६ | यमुनाह्रदे कालियनिग्रहः । तत्पत्न्यभिष्टुतस्तमनुजग्राह । |
| १७ | कालियं रमणके निर्वास्य सुप्तान् गोपान् दावाग्नितो ररक्ष । |
| १८ | वसंतगुणलक्षिते ग्रीष्मे बलेन प्रलम्बासुरमघातयत् । |
| १९ | मुंजारण्ये दावाग्नितो गोगोपानरक्षत् । इतीरितम् । |
| २० | बलरामकृष्णयोर्वर्षाशरदृतुक्रीडा वर्ण्यंते । |
| २१ | शरदि भगवतो वेणुनादं श्रुत्वा गोपीभिः कृत वेणुगीतं वर्ण्यंते । |
| २२ | कात्यायनीव्रतं कुर्वाणाना गोपकन्यानां परिहासेन वस्त्रार्पणं यज्ञपत्नीभ्यो गोपप्रेषणम् । |
| २३ | अन्नयाच्ञामिषेण यज्ञपत्नीरनुग्राह्य तत्पतीनन्वतापयत् । |
| २४ | इन्द्रमखाद्गोपान्निवार्य गोवर्धनमहोत्सवमकारयत्कृष्ण इत्युदीर्यते । |
| २५ | कुपितेन्द्रो घनमाज्ञाय वर्षति गोवर्धनमुद्धृत्य कृष्णो गोपानरक्षत् । |
| २६ | नंदः कृष्णपराक्रमशंकितान् गोपान् गर्गोक्तिमाश्राव्यतदैश्वर्यंवर्णयत् |

| अध्यायाः | विषयाः |
|---|---|
| २७ | कृष्णैश्वर्यप्रबोधित इंद्रस्तुष्टाव । कामधेन्वेन्द्रेण च गोराज्येभिषिक्तः कृष्णइतीर्यते । |
| २८ | वरुणलोकगतं नंदं भगवांस्तल्लोकं गत्वा तेन स्तुतः पितरमानयत् । गोपानां वैकुंठदर्शनम् । |
| २९ | रासार्थमानीताभिर्गोपीभिर्हरेः संवादानंतरं रासे गोपीभ्यो भगवदंतर्धानम् । |
| ३० | विरहतप्ताभिर्गोपीभिर्मार्गेण तद्भावभावाकृतयश्च तासां वर्ण्यन्ते । |
| ३१ | यमुनापुलिनमागताभिः कृतं गोपीगीतं वर्ण्यते । |
| ३२ | तद्भक्त्याकृष्टो हरिराविर्भूय ता अरीरमत् । |
| ३३ | ताभिः सह कृष्णो जलस्थलवनक्रीडा अकरोत् । |
| ३४ | अंगीरसः शापजातेन सर्वरूपेण गंधर्वेण ग्रस्तं नंदममूमुचत् । धनदानुगं शंखचूडमवधीत् । |
| ३५ | वनं याते कृष्णे युग्मगीतेन गोप्यो वासरमप्नयन् । |
| ३६ | अरिष्टासुरवधे नारदोपदेशेन् वसुदेवसुतौ रामकृष्णौ ज्ञात्वा कंसस्तावानेतुमक्रूरं प्रैषयत् । |
| ३७ | केशिदैत्ये हते नारदो भाविकर्मभिर्भगवंतमस्तौत् । कृष्णः क्रीडन् व्योमासुरमवधीत् । |
| ३८ | असुरो भगवंतं ध्यायन् गोकुलं गतो रामकृष्णाभ्यां सत्कृत्य गृहं नीत इतीर्यते । |
| ३९ | मथुरां गच्छति कृष्णे गोपीकोक्तयः । अथ कालिंद्यामक्रूरस्य विष्णुलोकदर्शनम् । |
| ४० | अक्रूरः कृष्णमीश्वरेश्वरं मत्वां सगुणागुण भेदैस्तमस्तावीत् । |
| ४१ | मथुरां प्रविशन् रजकं हत्वा मालाकारेण सुदाम्नालंकृतस्तस्मै वरमदात् । |
| ४२ | कुब्जाचंदनालंकृतस्तामृजूकृत्य धनुर्भंगं विधाय तद्रक्षिणः कंससेवकाञ्जघान । |
| ४३ | कुवलयापीडं हत्वा रंगं प्रविष्टयो रामकृष्णयोर्नेव रसाविर्भावश्चाणूरमुष्टिकादिभाषणं च । |
| ४४ | चाणूरवधानंतरं कंसवधः तस्य स्त्रीणामाश्वासनं ताभ्यां - पितुर्जरासंधस्य दर्शनम् । |
| ४५ | श्रीकृष्णेन नंदादीनां सांत्वनम् । उग्रसेनस्य राज्याभिषेकः भगवतो गुरुकुलवासे वरार्थं तत्पुत्रं जयन्तं समर्प्य पुनर्मथुरागमनम् । |
| ४६ | गोकुले उद्धवं प्रेष्य कोपीनां सांत्वनम् । यशोदानंदयोः शोकापनोदनं च । |
| ४७ | उद्धवः कृष्णादेशेन गोपीर्ज्ञानमुपदिश्य पुनः पुरीमगमत् । |
| ४८ | कुब्जां रमयित्वाऽक्रूरगृहमागत्य तं पांडवानां क्षेमज्ञानार्थं हस्तिनापुरं प्रैषयत् । |
| ४९ | गजाह्वयमक्रूरो गत्वा पांडवेषु विषमशीलं धृतराष्ट्रं बुद्ध्वा पुनरागमत् । |
| ५० | जरासंधं पराजित्य तद्भयादिव द्वारकां निर्माय तत्र स्वजनं रात्रावारोपयत् । |
| ५१ | मुचुकुंददृशा कालयवनं दग्ध्वा तेन स्तुतस्तमनुजग्राह । |
| ५२ | भयाद्वावन्निव द्वारकामागतो द्विजमुखाद्रुक्मिण्याः संदेशमशृणोत् । |
| ५३ | भगवान्विदर्भान् गत्वा जरासंधादीनां मिषतां रुक्मिणीं बलादहरत् । |
| ५४ | शिशुपालपक्षगान् राज्ञो जित्वा रुक्मिणं विरूपयित्वा पुरे भैष्म्याः पाणिमग्रहीत् । |
| ५५ | रुक्मिण्यामुत्पन्नः प्रद्युम्नः शंबरेण हृतोऽपि तं हत्वा सस्त्रीको द्वारकामागमत् । |
| ५६ | स्यमंतकस्यात्मानं मिथ्यारोपं परिहरन् हरिर्जाम्बवतो जाम्बवतीं प्राप । सत्राजितः सत्यभामां प्रत्यपद्यत । |
| ५७ | पुनः शतधन्वनो वधात् प्राप्तं दुर्यशः परिमाष्टुंमक्रूरान्मणिमाजहार । |
| ५८ | कालिंदी-मित्रविंदा-सत्या-भद्रा-लक्ष्मणानां पंचानां पाणि-पाणिनग्रहीत् । |
| ५९ | भौमं हत्वा तेनाहृताः षोडशसहस्रकन्या अवरयत् पारिजातं च दिवोऽहरत् । |
| ६० | परिहासेन रुक्मिणीं कोपयित्वा कलहे तामसांत्वयत् । |
| ६१ | भगवतः पुत्रपौत्रादिसंततेर्वर्णनम् । अनिरुद्धविवाह रामतो रुक्मिणो वधः । |

| अध्यायाः | विषयाः |
|---|---|
| ६२ | उषया सह रममाणस्यानिरुद्धस्य रोधनं बाणासुरेण कृतम् । |
| ६३ | बाणयादवसंगरे माहेश्वरेण ज्वरेण भगवत्स्तुतिः कृता बाणासुरस्य बाहुच्छेदने रुद्रेण कृता स्तुतिः हरिस्तमनुजग्राहोषयाऽनिरुद्धविवाहश्च । |
| ६४ | नृगं शापान्मुक्त्या दृप्तानां राज्ञाब्रह्मस्वहरणे दोषमदर्शयत् । |
| ६५ | गोकुलमागतो रामो गोपी रमयन् यमुनां चकर्ष । |
| ६६ | कृष्ण आत्मरूपधरं पौण्ड्रकं जित्वा तन्मित्रेण सुदक्षिणेन काशीपतिना कृतां कृत्यां तत्पुरीं काशिकां च सुदर्शनेनादहत् । |
| ६७ | रैवतके पर्वते स्त्रीभिः सह रममाणो रामो द्विविदं वानरमहनत् । |
| ६८ | कौरवैर्युधि पराजित्य रुद्धे सांबे तत्मोक्षार्थमागतेन रामेण हस्तिनापुरकर्षणम् । |
| ६९ | प्रत्येक स्त्रीगृहे भगवतो गार्हस्थं दृष्टा तुष्टो नारदो विस्मयं जगाम् । |
| ७० | कृष्णस्याह्निकं जरासंधनिगृहीतानां राज्ञां दूतप्रेषणं तदैव युधिष्ठिरनिमंत्रणे कार्यमंत्रविचारणम् । |
| ७१ | उद्धवमंत्रनिर्णयेनेंद्रप्रस्थं गतो भगवान्पांडवाननंदयत् । |
| ७२ | युधिष्ठिरेण कर्तव्ये राजसूये निवेदिते दुर्जये जरासंधं भगवान्भीमेनाघातयत् । |
| ७३ | जरासंध निगृहीतान् राज्ञो मुक्त्वा तान् सत्कृत्य स्वंस्वं राज्यं प्रैषयत् । |

| अध्यायाः | विषयाः |
|---|---|
| ७४ | धर्मराजस्य राजसूयवर्णने तथाऽग्रपूजाप्रसंगेन भगवन्निंदया चैद्यवधः । |
| ७५ | यज्ञावभृथसंभ्रमे सुयोधनस्याक्षांत्या मानभंगकथनम् । |
| ७६ | शाल्ववृष्णिरणे द्युमत्सेनगदया रणात्प्रद्युम्ननिर्गमः । |
| ७७ | नानामायाविनं शाल्वं हत्वा कृष्णस्तद्विमानमचूर्णयत् । |
| ७८ | विदूरथदंतवक्रौ कृष्णो हत्वा पुरे रेमे। प्रसंगेन रामः सूतगव० । |
| ७९ | द्विजतुष्टये रामो बल्वलं हत्वा भूतहत्यापापशांत्यर्थं यात्रामकरोत् । |
| ८० | कृष्णः श्रीदामानं सतीर्थ्यं गृहागतं विधिवत् संपूज्य गुरुकुलवासकथा मुदाऽकरोत् । |
| ८१ | तत्पृथुकान् भक्षयित्वा तस्य स्वतुल्यां श्रियमदात् । |
| ८२ | कृष्णो यदुभिर्ग्रहणयात्रायां कुरुक्षेत्रमगमत् तत्र–यदुभिः सह राजानः कृष्णकथामकुर्वन्– गोपनंदगोपीश्च भगवान् संमान्य तेषामात्मज्ञानमुपदिशत् । |
| ८३ | द्रौपद्या सह जल्पंतीभिः कृष्णस्य स्त्रीभिः स्वस्वकरग्रहाः । |
| ८४ | वसुदेवनारदसंवादानंतरं वसुदेवयज्ञमहोत्सवं वर्णयित्वा भगवान् सर्वानागतान्स्वगृहं प्रैषयत् । |
| ८५ | पित्रा संप्रार्थितौ रामकृष्णौ तस्मै ज्ञानमुपदिश्य मात्रे मृतान् पुत्रानयच्छताम् । |
| ८६ | दंभात्सुभद्रामर्जुनोऽहरत् । भगवान्मिथिलां गत्वा स्वभक्तौ विप्रावनंदयत् । |

| अध्यायाः | विषयाः |
|---|---|
| ८७ | नारायणनारदसंवादप्रस्ताश्राद्वैर्गुणालंबान्निर्गुणवधि स्तुतिः । |
| ८८ | विष्णुभक्तः कैवल्यपदभागर्वाग्देवताराधकस्तु संपदं प्राप्नोतीति निगद्यते । |
| ८९ | को महान्देव इति निर्णये भृगुर्विष्णोरुत्कर्षमृषिभ्यः समकथयत् । |
| ९० | कृष्णकथाः संक्षेपेणोक्त्वा यादवानां कुलानंत्यं कीर्तितम् । |


## एकादशस्कन्धे


| अध्यायाः | विषयाः |
|---|---|
| १ | कपटगर्भनिमित्तेन सांबादिभिः प्रतारिता ऋषयो मौसलापदेशेन यदुकुलक्षयं भगवदिच्छयाभिदधुः । |
| २ | नारदः पृच्छते वसुदेवाय निमिजायंतेयसंवादेन भागवतान्धर्मानुपादिशत् । |
| ३ | निमिना माया तत्तरणं ब्रह्मकर्मेति चतुर्षु प्रश्नेषु कृतेष्वार्षभैस्तन्निर्णयः कृतः । |
| ४ | अवतारकथाप्रश्नं राज्ञा कृते द्रुमिलो जायंतेयोऽवतारानकथयत् । |
| ५ | भक्तिहीनानां का निष्ठेति प्रश्ने तेषां पूजाधिकारार्थं पूजाविधिरुपदिष्टः । |
| ६ | ब्रह्मादिभिः स्तुतो हरिर्निजं पदं यास्यन्नुद्धवेन स्वधामनयनार्थं प्रार्थितः । |
| ७ | उद्धवस्यात्मज्ञानसिद्धया अवधूतेतिहासेऽष्टौ गुरून् हरिरवर्णयत् । |

| अध्यायाः | विषयाः |
|---|---|
| ८ | नवम्यो गुरुम्य उद्धवस्य विवेकाय शिक्षितमुपादिशत् । |
| ९ | कुररादिभ्यः शिक्षितमवधूताच्छ्रुत्वा यदुः कृतार्थोऽभूत् । |
| १० | देहसंबंधादात्मनः संसृतिः स्वतो नेति मतांतरनिरासतोऽकथयत् । |
| ११ | बद्धमुक्तानां साधूनां च तथा भक्तेर्लक्षणमुद्धवाय भगवानादिदेश । |
| १२ | सत्संगमहिमानमादिश्य कर्मानुष्ठातारस्तत्त्यागाधिकारिणो दर्शिताः । |
| १३ | सत्त्वगुणसेवयाज्ञानोदयो हंसेतिहासेन चित्तगुणविश्लेषवर्णनम् । |
| १४ | भक्तियोग एव परं श्रेयो नान्यत् इति साधनैः सह ध्यानयोगः कथ्यते । |
| १५ | अणिमाद्याः सिद्धयः ससाधना विष्णुपदप्राप्तिविघ्नभूताः कथिताः। |
| १६ | अभिव्यक्तभगवदंशरूपा विभूतय उक्ता उपासनार्थम् । |
| १७ | स्वधर्मे भक्तिलक्षणे पृष्टे ब्रह्मचारिगृहस्थयोर्हंसोक्तं धर्ममाह । |
| १८ | सविशेषं वानप्रस्थयतिधर्ममधिकारिविशेषणाकथयत् । |
| १९ | पूर्वोक्तस्य ज्ञानादेर्दिङ्मोहादिवत् भ्रमकारित्वात् त्यागः कथ्यते । |
| २० | अधिकारिभेदेन भक्तिज्ञानक्रियात्मकं योगमुपादिशत् । |
| २१ | पूर्वोक्तयोगत्रयानधिकारिणां कामिनां द्रव्यदेशादीनां गुणदोषा दर्शिताः । |
| २२ | तत्त्वानां मतांतरेणाविरोधः पुंप्रकृत्योर्विवेको जन्ममृत्युविधा चोच्यते । |
| २३ | कर्दमाख्यानेन तिरस्कार सहनोपायो भिक्षुगीतेन धिया मनसः संयम उदीर्यते । |
| २४ | आत्मनां सर्वभावानामागमापायांचितया सांख्ययोगेन मनोमोहो निवार्यते । |
| २५ | आत्मनो नैर्गुण्यज्ञानलाभाय चित्तप्रभवाः सत्त्वादिवृत्तीरनेकधाऽकथयत् । |
| २६ | दुष्टसंगेन योगनिष्ठाविघातः साधुसंगेन तत्प्राप्तिरित्यलैगीतं वर्ण्यते । |
| २७ | सद्यश्चित्तप्रसादकः सर्वकामाप्तिहेतुश्च क्रियायोगः सांगः प्रोक्तः । |
| २८ | पूर्वं विस्तरेणोक्तो ज्ञानयोग एकः सौकर्यार्थं पुनः संक्षेपेण निगद्यते । |
| २९ | पूर्वं विस्तरेण प्रोक्तं भक्तियोगं संक्षेपेणस्वभक्ताय हरिरकथयत् । |
| ३० | स्वधाम गन्तुमिच्छन् हरिमौसलापदेशेन स्वकुलं संजहार । |
| ३१ | स्वधाम्नि प्रविष्टे हरौ तमनुवसुदेवादयो देहान् जहुरिति वर्णितम् । |


## द्वादशस्कन्धे


| अध्यायाः | विषयाः |
|---|---|
| १ | मागधान्वये कलिना मलीमसांतः करणा भाविनो राजानां निर्दिष्टाः । |
| २ | कलिदोषवृद्धौ भगवता कल्क्यवतारेणाधार्मिकाणां नाशः पुनः कृतयुगागमः । |
| ३ | भूमिगीतं राज्ञा मोहादिवर्णनं तथा दोषभूयिष्ठे कलौ– तद्दोषहंत्री हरेः स्तुतिर्निर्दिश्यते । |
| ४ | नैमित्तिकः प्राकृत आत्यंतिको नित्य इति चतुरः प्रलयान्प्रदर्श्य तन्निस्तारे भगवत्कथेति सिद्धांतितम् । |
| ५ | परीक्षितः परब्रह्मोपदेशेन तक्षकसंदंशाद्भयनिवारणम् । |
| ६ | परीक्षितो मोक्षस्ततपुत्रजनमेयजयस्य तक्षकरोषात्सर्पसत्रं तथा व्यासेन वेदशाखाविभागश्च तथा गुर्ववज्ञया याज्ञवल्क्यः सूर्यमाराध्य वेदं लेभे । |
| ७ | अथर्ववेदविस्तारस्तथा पुराणविभागेन तल्लक्षणादि भागवतश्रवणफलं च निगद्यते । |
| ८ | तपसि तिष्ठतो मार्कंडेयस्य कामादिभिरसंमोहः । तथा तत्प्रसादार्थमागतयोर्नरनारायणयोः स्तुतिः । |
| ९ | भगवन्मायादिदृक्षोर्मुनेर्मिथ्याप्रलयदर्शनेन प्रलयाब्धौ वटपत्रस्थशिशुभूतस्य भगवतो मुखे प्रवेशनिर्गमौ च कथितौ । |
| १० | शिव आगत्य मार्कंडेयाय वरमदात् तेन सह प्रीतिमकरोत् । |
| ११ | उपासनासिद्धयै महापुरुषवर्णनं तथा रवेः प्रतिमासं पृथक् व्यूहकथनम् । |
| १२ | भागवतोक्तार्थसंग्रहः । |
| १३ | पुराणप्रतिपाद्यं देवं नमस्यन्नष्टादशपुराणग्रन्थसंख्यां चाकथयत् । |


**इति श्रीमद्भागवत विषयानुक्रमणिका समाप्ता**

श्रीमद्वेङ्कटेशो विजयतेतराम्

★

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ॥
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ १ ॥

अस्ति खलु सकलशास्त्रकलाधुरीणजनानां यदेतच्छ्रीमद्भागवतं नामाष्टादशमहापुराणशिरोविराजमानमत्र त्रिभुवनेषु साधुसेव्यं महतामपि पातकानां कर्तनं मोक्षदं च महाशास्त्रम् । यदेतद्व्यासमुखाच्छ्रुत्वा श्रीशुकाचार्यैः श्रीमत्परीक्षिद्राजैतदाश्राव्य संसारे असारतामवबोध्य संसारसरणितो मोचितः । अस्तु । एवं रीत्याऽधुनापि पौराणिकाः सप्ताहेन इदं मोक्षशास्त्रं पठन्ति शृण्वन्ति च जनाः पातकमुक्तिद्वारा मोक्षप्राप्तये । तथा तत्सारावबोधनायापि सप्तभिर्दिनैरेव तदर्थमपि कथयन्ति । तदर्थस्य सम्यग्ज्ञानाय भागवतार्थद्योतिनी चूर्णिका नाम गद्यात्मकः कैश्चित्पण्डितैः प्रबन्धो निरमायि । स तु पूर्वमनेकवारं मुद्रितोऽपि प्रतिश्लोकतात्पर्यज्ञानायैव हरिकृष्णवेङ्कटरामशर्मणा पण्डितेन निवेशितं प्रतिश्लोकाङ्कं चूर्णिकायां निवेश्य मुद्रितः । ततश्च नत्थूभाईतलखचन्द्रनाम्ना श्रेष्ठिना तत्पुस्तकं संशोध्य निर्णयसागरे मुद्रितमासीत् । परंतु मुद्रणोत्तरं कालवशात्तस्मिन् सुरपथवमतीर्णे तद्दायादेन सर्वाणि तन्मुद्रितपुस्तकानि राजकीयनियतमुद्रणाधिकारेण सह विक्रीतानि अस्माभिः क्रीतानि च । तस्मादग्रे एतदीयमुद्रणाधिकारोऽस्मद्वशंवद एवेति तान्यस्मदीयक्रीतपुस्तकानि सर्वाणि विक्रेतृभिर्विक्रीतानि यदा तदा पुनः सम्यक् संशोध्य महायसाक्षरैश्चिक्कणसुपुष्टपत्रेष्वस्माभिः स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालये-मुद्रितान्यतो विक्रेतृजनैरादर्तव्यानीति प्रार्थयाम इत्यलम् ॥

प्रार्थी-क्षेमराज-श्रीकृष्णदासः-"श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालयाध्यक्षः-मुम्बईस्थः ।

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ॥ पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥१॥ नैमिषे[1] सूतमासीनमभिवाद्य महामतिम् ॥ कथामृतरसास्वादकुशलः शौनकोऽब्रवीत् ॥ २ ॥ शौनक उवाच ॥ अज्ञानध्वान्तविध्वंसकोटिसूर्यसमप्रभ ॥ सूताख्याहि कथासारं मम कर्णरसायनम् ॥३॥ भक्तिज्ञानविरागाप्तो विवेको वर्धते[2] कथम् ॥ मायामोहनिरासश्च वैष्णवैः क्रियते कथम् ॥४॥ इह घोरे कलौ प्राप्ते जीवश्चासुरतां गतः[3] ॥ क्लेशाक्रान्तस्य तस्यैव शोधने किं परायणम् ॥५॥ श्रेयसां यद्भवेच्छ्रेयः पावनानां च पावनम् ॥ कृष्णप्राप्तिकरं शश्वत्साधनं तद्वदाधुना ॥ ६ ॥ चिन्तामणिर्लोकसुखं सुरेन्द्रः स्वर्गसंपदम् ॥ प्रयच्छति गुरुः प्रीतो वैकुण्ठं योगिदुर्लभम् ॥७॥ सूत उवाच ॥ प्रीतिः शौनक चित्ते ते ह्यतो वच्मि विचार्य च ॥ सर्वसिद्धान्तनिष्पन्नं संसारभयनाशनम् ॥८॥ भक्त्योघवर्धनं यच्च कृष्णसंतोषहेतुकम् ॥ तदहं तेऽभिधास्यामि सावधानतया शृणु ॥ ९ ॥ कालव्यालमुखग्रासत्रासनिर्णाशहेतवे ॥ श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ॥ १० ॥ एतस्मादपरं किंचिन्मनश्शुद्ध्यै न विद्यते ॥ जन्मान्तरे भवेत्पुण्यं तदा भागवतं लभेत् ॥११॥ परीक्षिते कथां वक्तुं सभायां संस्थिते शुके ॥ सुधाकुम्भं गृहीत्वैव देवास्तत्र समागमन् ॥१२॥ शुकं नत्वाऽवदन्सर्वे स्वकार्यकुशलाः सुराः ॥ कथासुधां प्रयच्छस्व गृहीत्वैव सुधामिमाम् ॥१३॥ एवं विनिमये जाते सुधा राज्ञा प्रपीयताम् ॥ प्रपास्यामो वयं सर्वे श्रीमद्भागवतामृतम् ॥१४॥ क्व सुधा क्व कथा लोके क्व काचः क्व मणिर्महान् ॥ ब्रह्मरातो विचार्येति तदा देवाञ्जहास ह ॥१५॥ अभक्तांस्तांश्च विज्ञाय न ददौ स कथामृतम् ॥ श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा ॥१६॥ राज्ञो मोक्षं तथा वीक्ष्य पुरा धाताऽपि विस्मितः ॥ सत्यलोके तुलां बद्ध्वाऽतोलयत्साधनान्यदः[4] ॥१७॥ लघून्यन्यानि जातानि गौरवेण इदं महत् ॥ तदा ऋषिगणाः सर्वे विस्मयं परमं ययुः ॥१८॥ मेनिरे भगवद्रूपं शास्त्रं भागवतं क्षितौ[5] ॥ पठनाच्छ्रवणात्सद्यो वैकुण्ठ-

---

१ "नैमिषे" इ० पा०। २ "महान्" इ० पा०। ३ "सुरद्रुः" इ० पा०। ४ "साधनान्यजः" इ० पा०। ५ "कलौ" इ० पा०।

यद्यपि
फलदायकम् ॥१९॥ सप्ताहश्रवणेनैव सर्वथा मुक्तिदायकम् ॥ सनकाद्यैः पुरा प्रोक्तं नारदाय दयापरैः ॥ २० ॥ यद्यपि
ब्रह्मसंबन्धाच्छ्रुतमेतत्सुरर्षिणा ॥ सप्ताहश्रवणविधिः कुमारैस्तस्य भाषितः ॥२१॥ शौनक उवाच ॥ लोकविग्रहयुक्तस्य
नारदस्यास्थिरस्य च ॥ विधिश्रवे कुतः प्रीतिः संयोगः कुत्र तैः सह ॥ २२ ॥ सूत उवाच ॥ अत्र ते कीर्तयिष्यामि
भक्तियुक्तं कथानकम् ॥ शुकेन मम यत्प्रोक्तं रहः शिष्यं विचार्य च ॥२३॥ एकदा तु विशालायां चत्वार ऋषयोऽमलाः ॥
सत्सङ्गार्थं समायाता ददृशुस्तत्र नारदम् ॥२४॥ कुमारा ऊचुः ॥ कथं ब्रह्मन्दीनमुखः कुतश्चिन्तापरो भवान् ॥ त्वरितं
गम्यते कुत्र कुतश्चागमनं तव ॥ २५ ॥ इदानीं शून्यचित्तोऽसि गतवित्तो यथा जनः ॥ तवेदं मुक्तसङ्गस्य नोचितं
वद कारणम् ॥ २६ ॥ नारद उवाच ॥ अहं तु पृथिवीं यातो ज्ञात्वा सर्वोत्तमामिति ॥ पुष्करं च प्रयागं च काशीं
गोदावरीं तथा ॥ २७ ॥ हरिक्षेत्रं कुरुक्षेत्रं श्रीरङ्गं सेतुबन्धनम् ॥ एवमादिषु तीर्थेषु भ्रममाण इतस्ततः ॥ २८ ॥
नापश्यं कुत्रचिच्छर्म मनस्संतोषकारकम् ॥ कलिनाऽधर्ममित्रेण धरेयं बाधिताऽधुना ॥२९॥ सत्यं नास्ति तपः शौचं
दया दानं न विद्यते ॥ उदरम्भरिणो[1] जीवा वराकाः कूटभाषिणः ॥३०॥ मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥
पाखण्डनिरताः सन्तो विरक्ताः सपरिग्रहाः ॥ ३१ ॥ तरुणी प्रभुता गेहे श्यालको बुद्धिदायकः ॥ कन्याया विक्रयो
लोभाद्दम्पतीनां च कल्कनम् ॥ ३२ ॥ आश्रमा यवनै रुद्धास्तीर्थानि सरितस्तथा ॥ देवतायतनान्यत्र दुष्टैर्नष्टानि
भूरिशः ॥३३॥ न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियो नरः ॥ कलिदावानलेनाद्य साधनं भस्मतां गतम् ॥ ३४ ॥
अट्टशूला[2] जनपदाः शिवशूला द्विजातयः ॥ कामिन्यः केशशूलिन्यः संभवन्ति कलाविह ॥३५॥ एवं पश्यन्कलेर्दो-
षान्पर्यटन्नवनीमहम् ॥ यामुनं तटमापन्नो यत्र लीला हरेरभूत् ॥३६॥ तत्राश्चर्यं मया दृष्टं श्रूयतां तन्मुनीश्वराः ॥
एका तु तरुणी तत्र निषण्णा खिन्नमानसा ॥ ३७ ॥ द्वौ वृद्धौ पतितौ पार्श्वे निःश्वसन्तावचेतनौ ॥ शुश्रूषन्ती प्रबोधन्ती

१ 'उदरम्भरयः' इति पाठान्तरम् । २ अट्टमन्नं शिवो वेदः शूलो विक्रय उच्यते । केशो भगमिति प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ १ ॥

रुदती च तयोः पुरः ॥३८॥ दशदिक्षु निरीक्षन्ती रक्षितारं निजं वपुः ॥ वीज्यमाना शतस्त्रीभिर्बोध्यमाना मुहुर्मुहुः ॥३९॥ दृष्ट्वा दूराद्गतः सोऽहं कौतुकेन तदन्तिकम् ॥ मां दृष्ट्वा चोत्थिता बाला विह्वला चाब्रवीद्वचः ॥४०॥ बालोवाच ॥ भो भो साधो क्षणं तिष्ठ मच्चिन्तामपि नाशय ॥ दर्शनं तव लोकस्य सर्वथाऽघहरं परम् ॥४१॥ बहुधा तव वाक्येन दुःखशांतिर्भविष्यति ॥ यदा भाग्यं भवेद् भूरि भवतो दर्शनं तदा॥४२॥नारद उवाच ॥ काऽसि त्वं काविमौ चेमा नार्यः काः पद्मलोचनाः ॥ वद देवि सविस्तारं स्वस्य दुःखस्य कारणम्॥४३॥बालोवाच ॥ अहं भक्तिरिति ख्याता इमौ मे तनयौ मतौ ॥ ज्ञानवैराग्यनामानौ कालयोगेन जर्जरौ ॥४४॥ गङ्गाद्याः सरितश्चेमा मत्सेवार्थं समागताः॥तथाऽपि न च मे श्रेयः सेवितायाः सुरैरपि ॥४५॥ इदानीं शृणु मद्वार्तां सचित्तस्त्वं तपोधन ॥ वार्ता मे वितताऽप्यस्ति तां श्रुत्वा सुखमावह ॥४६॥ उत्पन्ना द्रविडे साऽहं वृद्धिं कर्णाटके गता॥क्वचित्क्वचिन्महाराष्ट्रे गुर्जरे जीर्णतां गता॥४७॥ तत्र घोरकलेर्योगात्पाखण्डैः खण्डिताङ्गिका॥दुर्बलाऽहं चिरं जाता पुत्राभ्यां सह मन्दताम्॥४८॥वृन्दावनं पुनःप्राप्य नवीनेव सुरूपिणी॥जाताहं युवती सम्यक्प्रेष्ठरूपा तु साम्प्रतम्॥४९॥इमौ तु शयितावत्र सुतौ मे क्लिश्यतः श्रमात्॥ इदं स्थानं परित्यज्य विदेशं गम्यते मया ॥५०॥ जरठत्वं समायातौ तेन दुःखेन दुःखिता॥साऽहं तु तरुणी कस्मात्सुतौ वृद्धाविमौ कुतः ॥५१॥ त्रयाणां सहचारित्वाद्वैपरीत्यं कुतः स्थितम् ॥ घटते जरठा माता तरुणौ तनयाविति ॥५२॥ अतः शोचामि चात्मानं विस्मयाविष्टमानसा ॥ वद योगनिधे धीमन्कारणं चात्र किं भवेत् ॥५३॥ नारद उवाच ॥ ज्ञानेनात्मनि पश्यामि सर्वमेतत्तवानघे ॥ न विषादस्त्वया कार्यो हरिः शं ते करिष्यति ॥ ५४ ॥ सूत उवाच॥क्षणमात्रेण तज्ज्ञात्वा वाक्यमूचे मुनीश्वरः ॥ नारद उवाच ॥ शृणुष्वावहिता बाले युगोऽयं दारुणः कलिः ॥५५॥ तेन लुप्तः सदाचारो योगमार्गस्तपांसि च ॥ जना अघासुरायन्ते शाठ्यदुष्कर्मकारिणः॥५६॥इह सन्तो विषीदन्ति प्रहृष्यन्ति ह्यसाधवः ॥ धत्ते धैर्यं तु यो धीमान्स धीरः

१ 'सचिन्तः' इ० पा०। २ 'खण्डिताङ्गका' इ० पा०। ३ प्रथमार्थे द्वितीया। ४ 'अघासु'—इ० पा०।

पण्डितोऽथवा ॥५७॥ अस्पृश्याऽनवलोक्येयं शेषभारकरी धरा ॥ वर्षे वर्षे क्रमाज्जाता मङ्गलं नापि दृश्यते ॥ ५८ ॥ न त्वामपि सुतैः साकं कोऽपि पश्यति साम्प्रतम् ॥ उपेक्षिताऽनुरागान्धैर्जर्जरत्वेन संस्थिता ॥५९॥ वृन्दावनस्य संयोगात्पुनस्त्वं तरुणी नवा ॥ धन्यं वृन्दावनं तेन भक्तिर्नृत्यति यत्र च ॥६०॥ अत्रेमौ ग्राहकाभावान्न जरामपि मुञ्चतः ॥ किंचिदात्मसुखेनेह प्रसुप्तिर्मन्यतेऽनयोः ॥ ६१ ॥ श्रीभक्तिरुवाच ॥ कथं परीक्षिता राज्ञा स्थापितो ह्यशुचिः कलिः ॥ प्रवृत्ते तु कलौ सर्वसारः कुत्र गतो महान् ॥ ६२ ॥ करुणापरेण हरिणाऽप्यधर्मः कथमीक्ष्यते ॥ इमं मे संशयं छिन्धि त्वद्वाचा सुखिताऽस्म्यहम् ॥ ६३ ॥ नारद उवाच ॥ यदि पृष्टस्त्वया बाले प्रेमतः श्रवणं कुरु ॥ सर्वं वक्ष्यामि ते भद्रे कश्मलं ते गमिष्यति ॥६४॥ यदा मुकुन्दो भगवान्क्ष्मां त्यक्त्वा स्वपदं गतः ॥तद्दिनात्कलिरायातः सर्वसाधनबाधकः ॥ ॥६५॥ दृष्टो दिग्विजये राज्ञा दीनवच्छरणं गतः ॥ न मया मारणीयोऽयं सारङ्ग इव सारभुक् ॥६६॥ यत्फलं नास्ति तपसा न योगेन समाधिना ॥ तत्फलं लभते सम्यक्कलौ केशवकीर्त्तनात् ॥६७॥ एकाकारं कलिं दृष्ट्वा सारवत्सारनीरसम् ॥विष्णुरातः स्थापितवान्कलिजानां सुखाय च ॥६८॥ कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना ॥ पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा ॥६९॥ विप्रैर्भागवती वार्ता गेहे गेहे जने जने ॥ कारिता कणलोभेन कथासारस्ततो गतः ॥ ॥७०॥अत्युग्रभूरिकर्माणो नास्तिका रौरवा जनाः ॥ तेऽपि तिष्ठन्ति तीर्थेषु तीर्थसारस्ततो गतः॥७१॥कामक्रोधमहालोभतृष्णाव्याकुलचेतसः ॥ तेऽपि तिष्ठन्ति तपसि तपःसारस्ततो गतः ॥७२॥ मनसश्चाजयाल्लोभाद्दम्भात्पाषण्डसंश्रयात्॥ शास्त्रानभ्यसनाच्चैव ध्यानयोगफलं गतम् ॥ ७३ ॥ पण्डितास्तु कलत्रेण रमन्ते महिषा इव ॥ पुत्रस्योत्पादने दक्षा अदक्षा मुक्तिसाधने ॥७४॥ न हि वैष्णवता कुत्र संप्रदायपुरःसरा ॥ एवं प्रलयतां प्राप्तो वस्तुसारः स्थले स्थले ॥७५॥ अयं तु युगधर्मो हि वर्तते कस्य दूषणम् ॥ अतस्तु पुण्डरीकाक्षः सहते निकटे स्थितः ॥७६॥ सूत उवाच ॥ इति तद्वचनं

श्रुत्वा विस्मयं परमं गता ॥ भक्तिरूचे वचो भूयः श्रूयतां तच्च शौनक ॥७७॥ श्रीभक्तिरुवाच ॥ सुरर्षे त्वं च धन्योऽसि मद्भाग्येन समागतः ॥ साधूनां दर्शनं लोके सर्वसिद्धिकरं परम् ॥ ७८ ॥ जयंति जयति मायां यस्य कायाधवस्ते वचनरचनमेकं केवलं चाकलय्य ॥ ध्रुवपदमपि यातो यत्कृपातो ध्रुवोऽयं सकलकुशलपात्रं ब्रह्मपुत्रं नताऽस्मि ॥७९॥ इति श्रीपद्मपुराणे उत्तरखण्डे श्रीभागवतमाहात्म्ये भक्तिनारदसमागमो नाम प्रथमोऽध्यायः ॥ १ ॥ नारद उवाच ॥ वृथा खेदयसे बाले अहो चिन्तातुरा कथम् ॥ श्रीकृष्णचरणाम्भोजं स्मर दुःखं गमिष्यति ॥ १ ॥ द्रौपदी च परित्राता येन कौरवकश्मलात् ॥ पालिता गोपसुन्दर्यः स कृष्णः क्वापि नो गतः ॥२॥ त्वं तु भक्ते प्रिया तस्य सततं प्राणतोऽधिका॥त्वयाऽऽहूतस्तु भगवान्याति नीचगृहेष्वपि ॥३॥ सत्यादित्रियुगे बोधवैराग्यौ मुक्तिसाधकौ ॥ कलौ तु केवलाभक्तिर्ब्रह्मसायुज्यकारिणी ॥ ४ ॥ इति निश्चित्य चिद्रूपः सरूपां त्वां ससर्ज ह ॥ परमानन्दचिन्मूर्तिः सुन्दरीं कृष्णवल्लभाम् ॥५॥ बद्ध्वाऽञ्जलिं त्वया पृष्टं किं करोमीति चैकदा ॥ त्वां तदाऽऽज्ञापयत्कृष्णो मद्भक्तान्पोषयेति च ॥६॥ अङ्गीकृतं त्वया तद्वै प्रसन्नोऽभूद्धरिस्तदा ॥ मुक्तिं दासीं ददौ तुभ्यं ज्ञानवैराग्यकाविमौ ॥ ७ ॥ पोषणं स्वेन रूपेण वैकुण्ठे त्वं करोषि च ॥ भूमौ भक्तिविपोषाय छायारूपं त्वया कृतम्॥८॥मुक्तिं ज्ञानं विरक्तिं च सह कृत्वा गता भुवि॥ कृतादिद्वापरस्यान्तंमहानन्देन संस्थिता ॥९॥ कलौ मुक्तिः क्षयं प्राप्ता पाखण्डामयपीडिता ॥ त्वदाज्ञया गता शीघ्रं वैकुण्ठं पुनरेव सा ॥१०॥ स्मृता त्वयाऽपि चात्रैव मुक्तिरायाति याति च ॥ पुत्रीकृत्य त्वयेमौ च पार्श्वे स्वस्यैव रक्षितौ ॥ ११ ॥ उपेक्षातः कलौ मन्दौ वृद्धौ जातौ सुतौ तव ॥ तथापि चिन्तां मुञ्च त्वमुपायं चिन्तयाम्यहम् ॥ १२ ॥ कलिना सदृशः कोऽपि युगो नास्ति वरानने ॥ तस्मिंस्त्वां स्थापयिष्यामि गेहे गेहे जने जने ॥१३॥ अन्यधर्मांस्तिरस्कृत्य पुरस्कृत्य महोत्सवान् ॥ तदा नाहं हरेर्दासो लोके त्वां न प्रवर्तये ॥ १४ ॥ तदन्विताश्च ये जीवा भविष्यन्ति

१ "हि" इ० पा० । २ "जगति" इ० पा० ।

कलाविह ॥ पापिनोऽपि गमिष्यन्ति निर्भयाः कृष्णमन्दिरम् ॥ १५ ॥ येषां चित्ते वसेद्भक्तिः सर्वदा प्रेमरूपिणी ॥ न ते पश्यन्ति कीनाशं स्वप्नेऽप्यमलमूर्तयः ॥१६॥ न प्रेतो न पिशाचो वा राक्षसो वाऽसुरोऽपि वा ॥ भक्तियुक्तमनस्कानां स्पर्शने न प्रभुर्भवेत् ॥१७॥ न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा ॥ हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः ॥ १८ ॥ नृणां जन्मसहस्रेण भक्तौ प्रीतिर्हि जायते ॥ कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः ॥ १९ ॥ भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये ॥ दुर्वासा दुःखमापन्नः पुरा भक्तिविनिन्दकः[1] ॥२०॥ अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः ॥ अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा ॥ २१ ॥ सूत उवाच ॥ इति नारदनिर्णीतं स्वमाहात्म्यं निशम्य सा ॥ सर्वाङ्गपुष्टिसंयुक्ता नारदं वाक्यमब्रवीत् ॥२२॥ श्रीभक्तिरुवाच ॥ अहो नारद धन्योऽसि प्रीतिस्ते मयि निश्चला ॥ न कदाचिद्विमुञ्चामि चित्ते स्थास्यामि सर्वदा ॥२३॥ कृपालुना त्वया साधो मद्बाधा ध्वंसिता क्षणात् ॥ पुत्रयोश्चेतना नास्ति ततो बोधय बोधय ॥ २४ ॥ सूत उवाच ॥ तस्या वचः समाकर्ण्य कारुण्यं नारदो गतः ॥ तयोर्बोधनमारेभे कराग्रेण विमर्दयन् ॥२५॥ मुखं संयोज्य कर्णान्ते शब्दमुच्चैः समुच्चरन् ॥ ज्ञानं! प्रबुध्यतां शीघ्रं रे वैराग्य प्रबुध्यताम् ॥ २६ ॥ वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मुहुः ॥ बोध्यमानौ तदा तेन कथंचिच्चोत्थितौ बलात् ॥ २७ ॥ नेत्रैरनवलोकन्तौ जृम्भन्तौ सालसावुभौ ॥ बकवत्पलितौ प्रायः शुष्ककाष्ठसमाङ्गकौ ॥ २८ ॥ क्षुत्क्षामौ तौ निरीक्ष्यैव पुनः स्वापपरायणौ ॥ ऋषिश्चिन्तापरो जातः किं विधेयं मयेति च ॥ २९ ॥ अहो निद्रा कथं याति वृद्धत्वं च महत्तरम् ॥ चिन्तयन्निति गोविन्दं स्मारयामास भार्गव ॥ ३० ॥ व्योमवाणी तदैवाभून्मा ऋषे खिद्यतामिति ॥ उद्यमः सफलस्तेऽयं भविष्यति न संशयः ॥ ३१ ॥ एतदर्थं तु सत्कर्म सुरर्षे त्वं समाचर ॥ तत्ते कर्माभिधास्यन्ति साधवः साधुभूषणाः ॥ ३२ ॥ सत्कर्मणि कृते तस्मिन्सनिद्रा वृद्धताऽनयोः ॥ गमिष्यति क्षणा-

१ 'भक्तविनिन्दकः' इति पाठान्तरम् ।

द्भक्तिः सर्वतः प्रसरिष्यति ॥३३॥ इत्याकाशवचः स्पष्टं तत्सर्वैरपि विश्रुतम् ॥ नारदो विस्मयं लेभे नेदं ज्ञातमिति ब्रुवन् ॥ ३४ ॥ नारद उवाच ॥ अनयाऽऽकाशवाण्यापि गोप्यत्वेन निरूपितम् ॥ किं वा तत्साधनं कार्यं येन कार्यं भवेत्तयोः ॥३५॥ क्व भविष्यन्ति सन्तस्ते कथं दास्यन्ति साधनम् ॥ मयाऽत्र किं प्रकर्तव्यं यदुक्तं व्योमभाषया ॥३६॥ सूत उवाच ॥ तत्र तावपि संस्थाप्य निर्गतो नारदो मुनिः ॥ तीर्थं तीर्थं विनिष्क्रम्य पृच्छन्मार्गे मुनीश्वरान् ॥३७॥ वृत्तान्तः श्रूयते सर्वैः किंचिन्निश्चित्य नोच्यते ॥ असाध्यं केचन प्रोचुर्दुर्ज्ञेयमिति चापरे ॥३८॥ मूकीभूतास्तथान्ये तु कियन्तस्तु पलायिताः ॥ हाहाकारो महानासीत्त्रैलोक्ये विस्मयावहः ॥३९॥ वेदवेदान्तघोषैश्च गीतापाठैर्विबोधितम् ॥ भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं यदा ॥४०॥ उपायो नापरोऽस्तीति कर्णे कर्णेऽजपञ्जनाः ॥ योगिना नारदेनापि स्वयं न ज्ञायते तु यत् ॥४१॥ तत्कथं शक्यते वक्तुमितरैरिह मानुषैः ॥ एवं ऋषिगणैः पृष्टं निर्णीयोक्तं दुरासदम् ॥४२॥ ततश्चिन्तातुरः सोऽथ बदरीवनमागतः ॥ तपश्चरामि चात्रेति तदर्थं कृतनिश्चयः ॥४३॥ तावद्ददर्श पुरतः सनकादीन्मुनीश्वरान् ॥ कोटिसूर्यसमाभासानुवाच मुनिसत्तमः ॥ ४४ ॥ नारद उवाच ॥ इदानीं भूरिभाग्येन भवद्भिः संगमोऽभवत् ॥ कुमारा ब्रुवतां शीघ्रं कृपां कृत्वा ममोपरि ॥४५॥ भवन्तो योगिनः सर्वे बुद्धिमन्तो बहुश्रुताः ॥ पञ्चहायनसंयुक्ताः पूर्वेषामपि पूर्वजाः ॥४६॥ सदा वैकुण्ठनिलया हरिकीर्तनतत्पराः ॥ लीलामृतरसोन्मत्ताः कथामात्रैकजीविनः ॥४७॥ हरिः शरणमेवं हि नित्यं येषां मुखे वचः ॥ अतः कालसमादिष्टा जरा युष्मान्न बाधते ॥४८॥ येषां भ्रूभङ्गमात्रेण द्वारपालौ हरेः पुरा ॥ भूमौ निपतितौ सद्यो यत्कृपातः पुरं गतौ ॥४९॥ अहो भाग्यस्य योगेन दर्शनं भवतामिह ॥ अनुग्रहस्तु कर्तव्यो मयि दीने दयापरैः ॥ ॥५०॥ अशरीरगिरोक्तं यत्तत्किं साधनमुच्यताम् ॥ अनुष्ठेयं कथं तावत्प्रब्रुवन्तु सविस्तरम् ॥५१॥ भक्तिज्ञानविरागाणां सुखमुत्पद्यते कथम् ॥ स्थापनं सर्ववर्णेषु प्रेमपूर्वं प्रयत्नतः ॥५२॥ कुमारा ऊचुः ॥ मा चिन्तां कुरु देवर्षे हर्षं चित्ते समावह ॥

१ "द्वावपि" इ० पा० ।

उपायः सुखसाध्योऽत्र वर्तते पूर्व एव हि ॥५३॥ अहो नारद धन्योऽसि विरक्तानां शिरोमणिः ॥ सदा श्रीकृष्णदासाना-मग्रणीर्योगभास्करः ॥५४॥ त्वयि चित्रं न मन्तव्यं भक्त्यर्थमनुवर्तिनि ॥ घटते कृष्णदासस्य भक्तेः संस्थापना सदा ॥५५॥ ऋषिभिर्बहवो लोके पन्थानः प्रकटीकृताः ॥ श्रमसाध्याश्च ते सर्वे प्रायः स्वर्गफलप्रदाः ॥५६॥ वैकुण्ठसाधकः पन्थाः स तु गोप्यो हि वर्तते ॥ तस्योपदेष्टा पुरुषः प्रायो भाग्येन लभ्यते ॥५७॥ सत्कर्म तव निर्दिष्टं व्योमवाचा तु यत्पुरा[1] ॥ तदुच्यते शृणुष्वाद्य स्थिरचित्तः प्रसन्नधीः ॥५८॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ॥ स्वाध्यायज्ञानयज्ञाश्च ते तु कर्मविसूचकाः ॥५९॥ सत्कर्मसूचको नूनं ज्ञानयज्ञः स्मृतो बुधैः ॥ श्रीमद्भागवतालापः स तु गीतः शुकादिभिः ॥६०॥ भक्तिज्ञानविरागाणां तद्घोषेण बलं महत् ॥ व्रजिष्यति द्वयोः कष्टं सुखं भक्तेर्भविष्यति ॥६१॥ प्रलयं हि गमिष्यन्ति श्रीमद्भागवतध्वनेः ॥ कलेर्दोषा इमे सर्वे सिंहशब्दाद्वृका इव ॥६२॥ ज्ञानवैराग्यसंयुक्ता भक्तिः प्रेमरसावहा ॥ प्रतिगेहं प्रतिजनं ततः क्रीडां करिष्यति ॥६३॥ नारद उवाच ॥ वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् ॥ भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं यदा ॥६४॥ श्रीमद्भागवतालापात्तत्कथं बोधमेष्यति ॥ तत्कथासु तु वेदार्थः श्लोके श्लोके पदे पदे ॥६५॥ छिन्दन्तु संशयं ह्येनं भवन्तोऽमोघदर्शनाः ॥ विलम्बो नात्र कर्तव्यः शरणागतवत्सलाः ॥६६॥ कुमारा ऊचुः ॥ वेदोपनिषदां साराज्जाता भागवती कथा ॥ अत्युत्तमा ततो भाति पृथग्भूता फलोन्नतिः[2] ॥६७॥ आमूलाग्रं रसस्तिष्ठन्नास्ते न स्वाद्यते यथा ॥ संभूय स पृथग्भूतः फले विश्वमनोहरः ॥६८॥ यथा दुग्धे स्थितं सर्पिर्न स्वादायोपकल्पते ॥ पृथग्भूतं हि तद्दिव्यं[3] देवानां रसवर्धनम् ॥६९॥ इक्षूणामादिमध्यान्तं शर्करा व्याप्य तिष्ठति ॥ पृथग्भूता च सा मिष्टा तथा भागवती कथा ॥७०॥ इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम् ॥७१॥ वेदान्त

१ 'तु यत्' इ० पा० । २ "फलाकृतिः" इ० पा० । ३ "तद्गव्यं" इ० पा० ।

वेदसुस्नाते गीताया अपि कर्तरि ॥ परितापवति व्यासे मुह्यत्यज्ञानसागरे ॥७२॥ तदा त्वया पुराप्रोक्तं चतुःश्लोकसमन्वितम् ॥ तदीयश्रवणात्सद्यो निर्बाधो बादरायणः ॥७३॥ तत्र ते विस्मयः केन यतः प्रश्नकरो भवान् ॥ श्रीमद्भागवतं श्राव्यं शोकदुःखविनाशनम् ॥७४॥ नारद उवाच ॥ यद्दर्शनं च विनिहन्त्यशुभानि सद्यः श्रेयस्तनोति भवदुःखदवार्दितानाम् ॥ निश्शेषशेषमुखगीतकथैकपानाः प्रेमप्रकाशकृतये शरणं गतोऽस्मि ॥ ७५ ॥ भाग्योदयेन बहुजन्मसमार्जितेन सत्सङ्गमं च लभते पुरुषो यदा वै ॥ अज्ञानहेतुकृतमोहमदान्धकारनाशं विधाय हि तदोदयते विवेकः ॥७६॥ इति श्रीपद्मपुराणे उत्तरखण्डे श्रीभागवतमाहात्म्ये कुमारनारदसंवादो नाम द्वितीयोऽध्यायः ॥ २ ॥ नारद उवाच ॥ ज्ञानयज्ञं करिष्यामि शुकशास्त्रकथोज्ज्वलम् ॥ भक्तिज्ञानविरागाणां स्थापनार्थं प्रयत्नतः॥१॥यत्र कार्यो महायज्ञः स्थलं तद्वाच्यतामिह ॥ महिमा शुकशास्त्रस्य वक्तव्यो वेदपारगैः॥२॥कियद्भिर्दिवसैः श्राव्या श्रीमद्भागवती कथा ॥ को विधिस्तत्र कर्तव्यो ममेदं ब्रुवतामितः ॥ ३ ॥ कुमारा ऊचुः ॥ शृणु नारद वक्ष्यामो विनम्राय विवेकिने ॥ गङ्गाद्वारसमीपे तु तटमानन्दनामकम् ॥४॥ नानाऋषिगणैर्जुष्टं देवसिद्धनिषेवितम् ॥ नानातरुलताकीर्णं नवकोमलवालुकम् ॥ ॥ ५ ॥ रम्यमेकान्तदेशस्थं हेमपद्मसुशोभितम् ॥ यत्समीपस्थजीवानां वैरं चेतसि न स्थितम् ॥ ६ ॥ ज्ञानयज्ञस्त्वया तत्र कर्तव्यो ह्यप्रयत्नतः ॥ अपूर्वा रसरूपा च कथा तत्र भविष्यति ॥७॥ पुरःस्थं निर्बलं चैव जराजीर्णकलेवरम् ॥ तद्द्वयं च पुरस्कृत्य भक्तिस्तत्रागमिष्यति ॥८॥ यत्र भागवती वार्ता तत्र भक्त्यादिकं व्रजेत ॥ कथाशब्दं समाकर्ण्य तत्त्रिकं तरुणायते ॥ ९ ॥ सूत उवाच ॥ एवमुक्त्वा कुमारास्ते नारदेन समं ततः ॥ गङ्गातटं समाजग्मुः कथापानाय सत्वराः ॥ १० ॥ यदा यातास्तटं ते तु तदा कोलाहलोऽप्यभूत् ॥ भूर्लोके देवलोके च ब्रह्मलोके तथैव च ॥११॥ श्रीभागवतपीयूषपानाय रसलम्पटाः॥ धावन्तोऽप्याययुः सर्वे प्रथमं ये च वैष्णवाः ॥१२॥ भृगुर्वसिष्ठश्च्यवनश्च गौतमो मेधा-

१ 'मया' इ० पा० । २ 'तत्र गमिष्यति' इ० पा० ।

तिथिर्देवलदेवरातौ ॥ रामस्तथा गाधिसुतश्च शाकलो मृकण्डुपुत्रोऽत्रिजपिप्पलादाः ॥१३॥ योगेश्वरौ व्यासपराशरौ
च छायाशुको जाजलिजह्नुमुख्याः ॥ सर्वेऽप्यमी मुनिगणाः सह पुत्रशिष्याः स्वस्त्रीभिरायययुरतिप्रणयेन युक्ताः ॥ १४ ॥
वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राः समूर्तयः ॥ दशसप्तपुराणानि षट्शास्त्राणि यथाऽऽययुः ॥ १५ ॥ गङ्गाद्याः सरित-
स्तत्र पुष्करादिसरांसि च ॥ क्षेत्राणि च दिशः सर्वा दण्डकादिवनानि च ॥ १६ ॥ नगादयो ययुस्तत्र देव-
गन्धर्वदानवः ॥ गुरुत्वात्तत्र नायातान्भृगुः सम्बोध्य चानयत् ॥ १७ ॥ दीक्षिता नारदेनाथ दत्तमासनमुत्तमम् ॥
कुमारा वन्दिताः सर्वैर्निषेदुः कृष्णतत्पराः ॥१८॥ वैष्णवाश्च विरक्ताश्च न्यासिनो ब्रह्मचारिणः ॥ मुख्यभागे स्थितास्ते
च तदग्रे नारदः स्थितः ॥ १९ ॥ एकभागे ऋषिगणास्तदन्यत्र दिवौकसः ॥ वेदोपनिषदोऽन्यत्र तीर्थान्यत्र स्त्रियो-
ऽन्यतः ॥ २० ॥ जयशब्दो नमश्शब्दः शङ्खशब्दस्तथैव च ॥ चूर्णलाजाप्रसूनानां निक्षेपः सुमहानभूत् ॥ २१ ॥
विमानानि समारुह्य कियन्तो देवनायकाः ॥ कल्पवृक्षप्रसूनानि सर्वं तत्र समाकिरन् ॥२२॥ सूत उवाच ॥ एवं तेष्वेक-
चित्तेषु श्रीमद्भागवतस्य च ॥ माहात्म्यमूचिरे स्पष्टं नारदाय महात्मने ॥२३॥ कुमारा ऊचुः ॥ अथ ते संप्रवक्ष्यामो
महत्त्वं शुकशास्त्रजम् ॥ यस्य श्रवणमात्रेण मुक्तिः करतले स्थिता ॥ २४ ॥ सदा सेव्या सदा सेव्या श्रीमद्भागवती
कथा ॥ यस्याः श्रवणमात्रेण हरिश्चित्तं समाश्रयेत् ॥ २५ ॥ ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंमितः ॥ परीक्षि-
च्छुकसंवादः शृणु भागवतं च तत् ॥२६॥ तावत्संसारचक्रेऽस्मिन्भ्रमतोऽज्ञानतः पुमान् ॥ यावत्कर्णगता नास्ति शुक-
शास्त्रकथा क्षणम् ॥ २७ ॥ किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः ॥ एकं भागवतं शास्त्रं मुक्तिदानेन गर्जति
॥ २८ ॥ कथा भागवतस्यापि नित्यं भवति यद्गृहे ॥ तद्गृहं तीर्थरूपं हि वसतां पापनाशनम् ॥ २९ ॥ अश्वमेध-
सहस्राणि वाजपेयशतानि च ॥ शुकशास्त्रकथायाश्च कलां नार्हन्ति षोडशीम् ॥३०॥ तावत्पापानि देहेऽस्मिन्निवसन्ति

१ तीर्थान्यन्यत्रेतिवाच्ये वर्णलोप आर्षः छन्दोऽनुरोधात् । २ 'प्रसूनानां सर्वान्' इ० पा० । ३ 'वर्ण्यतेऽस्याभिर्महिमा शुकशास्त्रजः' इ० पा० ।

तपोधनाः ॥ यावन्न श्रूयते सम्यक्छ्रीमद्भागवतं नरैः ॥३१॥ न गङ्गा न गया काशी पुष्करं न प्रयागकम् ॥ शुकशास्त्र-कथायाश्च फलेन समतां नयेत् ॥३२॥ श्लोकार्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ॥ पठस्व स्वमुखेनैव यदीच्छसि परां गतिम् ॥३३॥ वेदादिर्वेदमाता च पौरुषं सूक्तमेव च ॥ त्रयी भागवतं चैव द्वादशाक्षर एव च॥३४॥द्वादशात्मा प्रयागश्च कालः संवत्सरात्मकः ॥ ब्राह्मणाश्चाग्निहोत्रं च सुरभिर्द्वादशी तथा ॥३५॥ तुलसी च वसन्तश्च पुरुषोत्तम एव च ॥ एतेषां तत्त्वतः प्राज्ञैर्न पृथग्भाव इष्यते ॥३६॥ यश्च भागवतं शास्त्रं वाचयेदर्थतोऽनिशम् ॥ जन्मकोटिकृतं पापं नश्यते नात्र संशयः॥३७॥श्लोकार्धं श्लोकपादं वा पठेद्भागवतं च यः ॥ नित्यं पुण्यमवाप्नोति राजसूयाश्वमेधयोः॥३८॥उक्तं भागवतं नित्यं कृतं च हरिचिन्तनम्॥तुलसीपोषणं चैव धेनूनां सेवनं समम्॥३९॥अन्तकाले तु येनैव श्रूयते शुकशास्त्रवाक्॥प्रीत्या तस्यैव वैकुण्ठं गोविन्दोऽपि प्रयच्छति॥४०॥हेमसिंहयुतं चैतद्वैष्णवाय ददाति च ॥ कृष्णेन सह सायुज्यं स पुमाँल्लभते ध्रुवम्॥४१॥आजन्ममात्रमपि येन शठेन किंचिच्चित्तं विधाय शुकशास्त्रकथा न पीता ॥ चाण्डालवच्च खरवद्बत तेन नीतं मिथ्या स्वजन्म जननीजनिदुःखभाजा ॥ ४२ ॥ जीवच्छवो निगदितः स तु पापकर्मा येन श्रुतं शुककथावचनं न किंचित्॥धिक् तं नरं पशुसमं भुवि भाररूपमेवं वदन्ति दिवि देवसमाजमुख्याः॥४३॥दुर्लभैव कथा लोके श्रीमद्भागवतो-द्भवा॥कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते ॥ ४४ ॥ तेन योगनिधे धीमञ्छ्रोतव्या सा प्रयत्नतः ॥ दिनानां नियमो नास्ति सर्वदा श्रवणं मतम्॥४५॥ सत्येन ब्रह्मचर्येण सर्वदा श्रवणं मतम् ॥ अशक्यत्वात्कलौ बोध्यो विशेषोऽत्र शुका-ज्ञया ॥४६॥ मनोवृत्तिजयश्चैव नियमाचरणं तथा ॥ दीक्षां कर्तुमशक्यत्वात्सप्ताहश्रवणं मतम् ॥४७॥ श्रद्धातः श्रवणे नित्यं माघे तावद्धि यत्फलम् ॥ तत्फलं शुकदेवेन सप्ताहश्रवणे कृतम् ॥ ४८ ॥ मनसश्चाजयाद्रोगात्पुंसां चैवायुषः क्षयात् ॥ कलेर्दोषबहुत्वाच्च सप्ताहश्रवणं मतम् ॥४९॥ यत्फलं नास्ति तपसा न योगेन समाधिना ॥ अनायासेन तत्सर्वं

१ 'सरोजमुख्यः' इ० पा० ।

सप्ताहश्रवणाल्लभेत्॥५०॥यज्ञाद्गर्जंति सप्ताहःसप्ताहो गर्जति व्रतात्॥तपसो गर्जंति प्रोच्चैस्तीर्थान्नित्यं हि गर्जति ॥५१॥
योगाद्गर्जंति सप्ताहो ध्यानाज्ज्ञानाच्च गर्जति॥किं ब्रूमो गर्जनं तस्य रे रे गर्जति गर्जति॥५२॥शौनक उवाच॥साश्चर्यमे-
तत्कथितं कथानकं ज्ञानादिधर्मान्विगणय्य साम्प्रतम्॥निःश्रेयसे भागवतं पुराणं जातं कुतो योगविदादिसूचकम्॥५३॥
सूत उवाच ॥ यदा कृष्णो धरां त्यक्त्वा स्वपदं गन्तुमुद्यतः ॥ एकादशं परिश्रुत्याप्युद्धवो वाक्यमब्रवीत् ॥५४॥ उद्धव
उवाच ॥ त्वं तु यास्यसि गोविंद भक्तकार्यं विधाय च ॥ मच्चित्ते महती चिन्ता तां श्रुत्वा सुखमावह॥५५॥आगतोऽयं
कलिर्घोरो भविष्यन्ति पुनः खलाः॥तत्सङ्गेनैव संतोऽपि गमिष्यन्त्युग्रतां यदा॥५६॥तदा भारवती भूमिर्गोरूपेयं कमा-
श्रयेत् ॥ अन्यो न दृश्यते त्राता त्वत्तः कमललोचन॥५७॥अतः सत्सु दयां कृत्वा भक्तवत्सल मा व्रज॥भक्तार्थं सगुणो
जातो निराकारोऽपि चिन्मयः॥५८॥त्वद्वियोगेन ते भक्ताः कथं स्थास्यन्ति भूतले॥ निर्गुणोपासने कष्टमतः किंचिद्वि-
चारय॥५९॥इत्युद्धववचः श्रुत्वा प्रभासेऽचिन्तयद्धरिः॥ भक्तावलम्बनार्थाय किं विधेयं मयेति च ॥६०॥ स्वकीयं यद्भवे-
त्तेजस्तच्च भागवतेऽदधात्॥तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम्॥६१॥तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः॥
सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी ॥ ६२ ॥ सप्ताहश्रवणं तेन सर्वेभ्योऽधिकं कृतम् ॥ साधनानि तिरस्कृत्य
कलौ धर्मोऽयमीरितः॥६३॥दुःखदारिद्र्यदौर्भाग्यपापप्रक्षालनाय च॥कामक्रोधजयार्थं हि कलौ धर्मोऽयमीरितः ॥६४॥
अन्यथा वैष्णवी माया देवैरपि सुदुस्त्यजा॥कथं त्याज्या भवेत्पुंभिः सप्ताहोऽतः प्रकीर्तितः ॥६५॥सूत उवाच॥एवं नगाह
श्रवणोरुधर्मे प्रकाश्यमाने ऋषिभिः सभायाम् ॥ आश्चर्यमेकं समभूत्तदानीं तदुच्यते संशृणु शौनक त्वम्॥६६॥भक्तिः
सुतौ तौ तरुणौ गृहीत्वा प्रेमैकरूपा सहसाऽऽविरासीत्॥श्रीकृष्ण गोविन्द हरे मुरारे नाथेति नामानि मुहुर्वदन्ती॥६७॥
तां चागतां भागवतार्थभूषां सुचारुवेषां ददृशुः सदस्याः॥ कथं प्रविष्टा कथमागतेयं मध्ये मुनीनामिति तर्कयन्तः॥६८॥

भा० प्र० ॥ ७ ॥

चू० अ० ३

धृत्वाऽसुरान् वञ्चयित्वा देवानमृतमपाययत् ॥ १७ ॥ चतुर्दशे नृसिंहो
द्वादशे धन्वन्तरिः सन्नायुर्वेदं प्रकाशितवान् । त्रयोदशे मोहिनीरूपं धृत्वाऽसुरान् वञ्चयित्वा देवानमृतमपाययत् ॥ १७ ॥ चतुर्दशे नृसिंहो
भूत्वा नखैर्हिरण्यकशिपुं वक्षसि विददार ॥ १८ ॥ पञ्चदशे वामनो भूत्वा त्रिपादभूमियाञ्चाछलेन बलिं वञ्चयित्वा स्वर्गं गृहीत्वेन्द्राय
ददौ ॥ १९ ॥ षोडशे परशुरामो भूत्वैकविंशतिवारं निःक्षत्रां महीमकरोत् ॥ २० ॥ सप्तदशे पराशरात् सत्यवत्यां व्यासो भूत्वाऽल्पबुद्धीन्
नरान् दृष्ट्वा वेदतरोः शाखाः कृतवान् ॥ २१ ॥ अष्टादशे दाशरथिः रामो भूत्वा समुद्रनिग्रहादीनि कर्माणि कृतवान् ॥ २२ ॥ एकोन-

धान्वन्तरं द्वादशमं त्रयोदशममेव च ॥ अपाययत् सुरानन्यान्मोहिन्या मोहयन्स्त्रिया ॥ १७ ॥ चतुर्दशं नारसिंहं
बिभ्रद्दैत्येन्द्रमूर्जितम् ॥ ददार करजैर्वक्षस्येरकां[1] कटकृद्यथा ॥ १८ ॥ पञ्चदशं वामनकं कृत्वाऽगादध्वरं बलेः ॥ पदत्रयं
याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ॥ १९ ॥ अवतारे षोडशमे पश्यन्ब्रह्मद्रुहो नृपान् ॥ त्रिस्सप्तकृत्वः कुपितो निः-
क्षत्रामकरोन्महीम् ॥ २० ॥ ततः सप्तदशे जातः सत्यवत्यां पराशरात् ॥ चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥
॥ २१ ॥ नरदेवत्वमापन्नः सुरकार्यचिकीर्षया ॥ समुद्रनिग्रहादीनि[2] चक्रे वीर्याण्यतः परम् ॥ ॥ २२ ॥ एकोनविंशे
विंशतिमे वृष्णिषु प्राप्य जन्मनी ॥ रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३ ॥ ततः कलौ संप्रवृत्ते संमोहाय
सुरद्विषाम् ॥ बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥ २४ ॥ अथासौ युगसंध्यायां दस्युप्रायेषु राजसु ॥ जनिता
विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥ २५ ॥ अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ॥ यथाऽविदासिनः[3] कुल्याः
सरसः स्युः सहस्रशः ॥ २६ ॥

॥ ७ ॥

विंशे विंशे च यदुकुले रामकृष्णौ भूत्वा भुवो भारं जहार ॥ २३ ॥ एकविंशे कलौ संप्रवृत्ते दैत्यमोहनाय बुद्धनामा गयाप्रदेशे भवि-
ष्यति ॥ २४ ॥ ततो द्वाविंशे कलेरन्ते चौरप्रायेषु राजसु सत्सु विष्णुयशसो ब्राह्मणात् कल्किर्भविष्यति ॥ २५ ॥ हे द्विजाः ! हरेरवताराअसं-
ख्येया यथा सरोवरात् सहस्रशः क्षुद्रप्रवाहा निर्गच्छन्ति ॥ २६ ॥

१ एरकां निर्ग्रन्थितृणम् । २ निग्रहः सेतुबन्धादिरूपः । ३ उपक्षयशून्यात् 'दसु उपक्षये' इत्युक्तेः ।

तथा ऋषिमनुदेवमनुपुत्रप्रजापतिप्रभृतयो हरेः कलाः स्युः ॥२७॥ श्रीकृष्णस्तु साक्षान्नारायण एव । अथैषां प्रयोजनमाह । इन्द्रारीति । एते सर्वे यदा दैत्यपीडितं जगत् भवति तदा तत् सुखयन्ति ॥२८॥ एतद् भगवतो गुह्यं जन्म यः सायंप्रातः पठेत् स दुःखसमूहाद् विमुच्यते ॥२९॥ अरूपस्यापि चिदेकरसस्य जीवस्य स्थूलं रूपमेतद् भगवन्मायागुणैर्महदादिभिरात्मनि कल्पितम् ॥ ३० ॥ यथा वाय्वाश्रितो मेघौघ आकाशे पार्थिवो रेणुर्वा यो मूढैः समारोपितस्तथाऽऽत्मनि शरीरमारोपितम् ॥३१॥ एवं लिङ्गशरीरमपि जीवोपाधितया कल्पितमस्ति ॥३२॥

ऋषयो मनवो देवा मनुपुत्रा महौजसः ॥ कलाः सर्वे हरेरेव सप्रजापतयस्तथा ॥ २७ ॥ एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ॥ इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥ जन्म गुह्यं भगवतो य एतत्प्रयतो नरः ॥ सायंप्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९ ॥ एतद्रूपं[2] भगवतो ह्यरूपस्य चिदात्मनः ॥ मायागुणैर्विरचितं महदादिभिरात्मनि[1] ॥३०॥ यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले ॥ एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥३१॥ अतः परं यदव्यक्तमव्यूढ[3]गुणव्यूहितम् ॥ अदृष्टाश्रुत[4]वस्तुत्वात्स जीवो यत्[5]पुनर्भवः[6] ॥ ३२ ॥ यत्रेमे सदसद्[7]रूपे प्रतिषिद्धे स्वसंविदा ॥ अविद्ययाऽऽत्मनि कृते इति तद्ब्रह्मदर्शनम् ॥३३॥ यद्येषोपरतादेवी माया वैशारदी[8] मतिः ॥ संपन्न एवेति[9] विदुर्महिम्नि स्वे महीयते[10] ॥३४॥ एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ॥ वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥३५॥

इमे स्थूलसूक्ष्मे रूपे ज्ञानेन यदा प्रतिषिद्धे भवतस्तदा जीवो ब्रह्मैव भवति ॥३३॥ यदा संसारचक्रे क्रीडन्ती मायेयमुपरता भवेत्तदा ब्रह्मस्वरूपं प्राप्त एवेति तत्त्वज्ञा विदुः ॥ ३४ ॥ एवमकर्तुर्जन्मरहितस्येश्वरस्य जन्मकर्माणि कवयो वर्णयन्ति ॥ ३५ ॥

---

१ आत्मनिशरीरं कृतमित्यर्थः । २ स्थूलाद्रूपात् । ३ अव्यूढाः करचरणादिरूपेणापरिणता ये गुणास्तैः रचितम् । ४ अव्यक्तत्वे हेतुः । ५ यस्माज्जीवात्सूक्ष्मदेहादित्यर्थः । ६ जन्म । ७ स्वरूप सम्यग्ज्ञानेन । ८ विशारदः ईश्वरस्तदीया । ९ ब्रह्मस्वरूपं प्राप्तः । १० पूज्यते विराजते ।

स भगवान् विश्वं प्रविश्य विषयान् गृह्णन् जगत्पालनादि करोति ॥३६॥ तस्य जन्मकर्मलीलाः कोऽपि पुरुषस्तर्कादिकौशलेन न वेत्ति ॥३७॥
यस्त्वकुटिलभावेन परमभक्त्या तच्चरणारविन्दं भजते स एव तत्पदवीं जानाति ॥३८॥ अतो भवन्तो धन्या यतो हरावेकान्तभक्तिं कुर्वन्ति।
यद्भक्त्या भूयो जन्ममरणाद्यावर्तो न भवति ॥३९॥ इदं वेदतुल्यं भागवतं पुराणं लोकहिताय व्यासः कृत्वा स्वपुत्रं शुकमध्यापयामास

स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ॥ भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति
षड्गुणेशः ॥ ३६ ॥ न चास्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः ॥ नामानि रूपाणि मनोवचोभिः
संतन्वतो नटचर्यामिवाज्ञः ॥ ३७ ॥ स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः ॥ योऽमायया संततयाऽनु-
वृत्त्या भजेत तत्पादसरोजगन्धम् ॥ ३८ ॥ अथेह धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे ॥ कुर्वन्ति
सर्वात्मकमात्मभावं न यत्र भूयः परिवर्त उग्रः ॥ ३९ ॥ इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ उत्तमश्लोकचरितं
चकार भगवानृषिः ॥ ४० ॥ निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् ॥ तदिदं ग्राहयामास सुतमात्मवतां
वरम् ॥ ४१ ॥ सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ॥ स तु संश्रावयामास महाराजं परीक्षितम् ॥४२॥ प्रायोप-
विष्टं गङ्गायां परीतं परमर्षिभिः ॥ कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ॥४३॥ कलौ नष्टदृशामेष पुराणार्कोऽद्यु-
नोदितः ॥ तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः ॥ ४४ ॥ अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात् ॥ सोऽहं वः
श्रावयिष्यामि यथाऽधीतं यथामति ॥ ४५ ॥ इति श्रीभा० म० प्रथमस्कं० तृतीयोऽध्यायः ॥ ३ ॥

॥ ४० ॥ ॥ ४१ ॥ ॥ ४२ ॥ स शुको गंगायां प्रायोपविष्टं महर्षिभिः परिवृतं परीक्षितं श्रावयामास धर्मज्ञानादिभिः सह कृष्णे स्वधामोपगते
सति कलौ नष्टदृशां पुंसां स एष सम्प्रति पुराणाख्यः सूर्यो लोके उदयं प्राप्तः ॥ तत्र सभायां शुकस्य कीर्तयतः सतस्तदनुग्रहात् तत्र निषण्णः
सोऽहं यथाऽधीतं यथामति युष्मान् श्रावयिष्यामि ॥ ४३ ॥ ॥ ४४ ॥ ॥ ४५ ॥ इतिश्रीभा० चू० प्र० तृतीयोऽध्यायः ॥ ३ ॥



१ इन्द्रियषड्वर्गविषयम् । २ दूरादेव गन्धवत् गृह्णाति । ३ षडिन्द्रियनियन्ता । ४ दुर्बुद्धिः । ५ विस्तारयतः । ६ दुःस्वरूपः । ७ जितेन्द्रियाणाम् । ८ मृत्युपर्यन्तमनशनतयाऽवस्थितम् । ९ ज्ञातवान् ।

तुर्यं भागवतारम्भकारणत्वेन वर्ण्यते ॥ व्यासस्यापरितोषस्तु तपःप्रवचनादिभिः ॥१॥ व्यास उवाच । एवं ब्रुवाणं सूतं स्तुत्वा ऋषीणां मध्ये वृद्ध ऋग्वेदी शौनक उवाच ॥१॥ शौनक उवाच । हे सूत ! यां पुण्यां भागवतीं कथां शुकः कथयामास तां कथय ॥२॥ इयं संहिता कस्मिन् युगे कस्मिन् देशे केन हेतुना प्रवृत्ता केन पुरुषेण प्रेरितो व्यास इमां संहितां कृतवान् ॥३॥ किंच व्यासपुत्रो महायोगी शुकः समदृष्टिर्निरस्त भेदोऽपिमूढ इव प्रतीयते ॥४॥ निरस्तभेदत्वं दर्शयति दृष्ट्वेति ॥ पुत्रमनुगच्छन्तमनग्नमपि व्यासं दृष्ट्वा जले क्रीडन्त्योऽप्सरसो लज्जया वस्त्राणि

व्यास उवाच ॥ इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ॥ वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥ शौनक उवाच ॥ सूत सूत महाभाग वद नो वदतां वर ॥ कथां भागवतीं पुण्यां यदाह भगवाञ्छुकः ॥ २ ॥ कस्मिन्युगे प्रवृत्तेयं स्थाने वा केन हेतुना ॥ कुतः संचोदितः कृष्णः कृतवान्संहितां मुनिः ॥ ३ ॥ तस्य पुत्रो महायोगी समदृङ् निर्विकल्पकः ॥ एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥ दृष्ट्वाऽनुयान्तमृषिमात्मजमप्यनग्नं देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ॥ तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति स्त्रीपुंभिदा न तु सुतस्य विविक्तदृष्टेः ॥ ॥ ५ ॥ कथमालक्षितः पौरैः संप्राप्तः कुरुजाङ्गलान् ॥ उन्मत्तमूकजडवद्विचरन्गजसाह्वये ॥ ६ ॥ कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ॥ संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः ॥ ७ ॥ स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ॥ अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ८ ॥

परिदधुः नग्नस्य पुरतो गच्छतः सुतस्य तु ह्रिया न । तद्वीक्ष्य व्यासे पृच्छति सति स्त्रिय ऊचुः । हे व्यास ! तव स्त्रीपुरुषभेदोऽस्ति । सुतस्य तु नास्ति ॥५॥ एवंभूतः शुकः कुरुजाङ्गलदेशान् समतिक्रम्य अज्ञानशून्यः हस्तिनापुरे मत्तजडवत् चरन् सन् पौरैः कथं ज्ञातः ॥ ६ ॥ तेन शुकेन सह परीक्षितः कथं संवादोऽभूत् यत्र भागवती संहिता प्रवृत्ता ॥७॥ अहो यो गृहस्थाश्रमिणां गृहेषु तानि पवित्रीकुर्वन् गोदोहनकालं

१ गणमुख्यः २ यत् यां कथाम् । ३ एकनिष्ठचित्तः ४ मायाशयनादुत्थितः । ५ अनग्नमपीत्यनेन तत्सुतो नग्न इत्याक्षेपः । ६ पूतदृष्टेः । ७ अयं हेतुरक्षवेक्षने नतु भिक्षायाम् ।

प्रतीक्षते सोऽत्र वक्तेत्याश्चर्य्यम् ॥ ८ ॥ किंच तस्य परीक्षितो जन्म कर्माणि च नः कथय ॥९॥ स परीक्षित् राजलक्ष्मीं त्यक्त्वा कस्य हेतो-र्गङ्गायां प्रायोपविष्टः ॥१०॥ शत्रवो धनादीन् दत्त्वा यत्पादं नमन्ति स वीरस्तरुण एव दुस्त्यजां श्रियं प्राणैः सह कथमत्यजत् ॥ ११ ॥ ईश्वरपरायणा योगिनोऽपि लोकस्य सुखाद्यर्थं जीवंति न स्वकीयार्थम् एवं सति स राजा परोपकारकं शरीरं निर्विद्य कुतो मुमोच ॥१२॥ तत्

अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ॥ तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ९ ॥ स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः ॥ प्रायोपविष्टो गङ्गायामनादृत्याऽधिराट्श्रियम् ॥ १० ॥ नमन्ति यत्पादनिकेतमात्मनः शिवाय हाऽऽनीय धनानि शत्रवः ॥ कथं स वीरः श्रियमङ्ग दुस्त्यजां युवैषतोत्स्रष्टुमहो सहासुभिः ॥ ११ ॥ शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः ॥ जीवन्ति नात्मार्थमसौ पराश्रयं मुमोच निर्विद्य कुतः कलेवरम् ॥ १२ ॥ तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किंचन ॥ मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥ १३ ॥ सूत उवाच ॥ द्वापरे समनुप्राप्ते तृतीये युगपर्यये ॥ जातः पराशराद्योगी वासव्यां कलया हरेः ॥१४॥ स कदा-चित्सरस्वत्या उपस्पृश्य जलं शुचि ॥ विविक्तदेश आसीन उदिते रविमण्डले ॥ १५ ॥ परावरज्ञः स ऋषिः कालेना-व्यक्तरंहसा ॥ युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १६ ॥ भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ॥ अश्रद्द-धानान्निस्सत्त्वान्दुर्मेधान्ह्रसितायुषः ॥ १७ ॥ दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ॥ सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक् ॥ १८ ॥

सर्वं नः कथय । यतो वेदं विना सर्वशास्त्रविदं त्वां मन्ये ॥१३॥ सूत उवाच । तृतीये युगपर्यये द्वापरे पराशरात् सत्यवत्यां हरेरंशो व्यासो जातः ॥१४॥ स एकदा सूर्योदये एकांते आसीनः सन् सरस्वत्यां स्नानादिकं कृत्वा कालेन युगधर्मसंकरं प्रजानां शक्तिह्रासं च धैर्यहीनान् मन्द भाग्यान् स्वल्पायुषो मन्दबुद्धीन् दुर्भगान् जनांश्च ज्ञानचक्षुषा वीक्ष्य सर्वेषां हितं कथं स्यादिति दध्यौ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

१ अधिराजां श्रियम् । २ पीठम् । ३ ऐवंतेत्यार्षमिवेषेत्यर्थः । ४ पारगतम् । ५ वसोजातायां मत्स्यगन्धायाम् । ६ भूतभविष्यद्वित् । ७ रंहो वेगः । ८ शरीरादीनाम् ।

एवं विचार्य ततो यज्ञाविच्छेदाय वेदमेकमपि चतुर्धा स व्यभजत् ॥१९॥ तथा हि ऋग्यजुस्सामाऽऽथर्वणा इति चत्वारो वेदा इतिहासः पुराणं च पञ्चमो वेदः ॥२०॥ तत्र ऋग्वेदधरः पैलमुनिः । सामगो जैमिनिः ॥ वैशम्पायनो यजुर्वेदी ॥२१॥ आथर्वणः सुमन्तुः । इतिहासपुराणानां ज्ञाता मम पिता रोमहर्षणः ॥२२॥ ते च ते पैलादयः स्वं वेदमनेकधा विभक्तवन्तः शिष्यादिभेदेन ते वेदा शाखावन्तोऽभवन् ॥२३॥ कृपण-

चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ॥ व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ १९ ॥ ऋग्यजुः सामाऽथर्वाख्या वेदाश्चत्वार उद्धृताः ॥ इतिहासः पुराणं च पञ्चमो वेद उच्यते ॥ २० ॥ तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ॥ वैशम्पायन एवैको निष्णातो यजुषामुत ॥२१॥ अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः ॥ इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २२ ॥ त एव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ॥ शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥ २३ ॥ त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ॥ एवं चकार भगवान्व्यासः कृपणवत्सलः ॥ ॥ २४ ॥ स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ॥ कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥ इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५ ॥ ❋ एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ॥ सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः ॥ २६ ॥ नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ ॥ वितर्कयन्विविक्तस्थ इदं प्रोवाच धर्मवित् ॥ २७ ॥ धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ॥ मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २८ ॥

वत्सलो व्यासो मन्दबुद्धिभिः पुरुषैर्यथा ते वेदा धार्यन्ते स्म तथा चकार ॥ २४ ॥ श्रुत्यनधिकारिणां स्त्रीशूद्रब्रह्मबन्धूनां श्रेयोऽर्थं व्यासो भारताख्यानं कृतवान् ॥ २५ ॥ तथाऽपि सर्वहिताय प्रवृत्तस्य व्यासस्य हृदयं यदा नाऽतुष्यत् ॥ २६ ॥ तदाऽप्रसन्नमना व्यासः सरस्वतीतीरे इदं प्रोवाच ॥ २७ ॥ मया वेदाः गुरुवोऽग्नयश्च पूजितास्तेषामाज्ञा च पालिता ॥ २८ ॥

---

१ ब्रह्मा होताध्वर्युरग्नीध्र इति चतुर्होतारः तैरनुष्ठेयं कर्म । २ कर्मरूपे श्रेयस्साधने । ❋ 'वेदार्थं च समुद्धृत्य भारते प्रोक्तवान्मुनिः' इत्यधिकः पाठः । ३ चित्ताप्रसादहेतुमिति शेषः । ४ निष्कपटबुद्ध्या ।

भारतमिषेण वेदार्थोऽपि दर्शितः यत्र सर्वेषां धर्मो दृश्यते ॥२९॥ तथाऽपि मे जीवस्तादात्म्यमप्राप्त इव भाति ॥३०॥ असंपन्नत्वे हेतुं स्वयमेवा-
शङ्कते । परमहंसधर्मा भगवत्प्रियाः ते मया बहुशो न वर्णिताः किम् ॥ ३१ ॥ एवं न्यूनात्मानं मन्यमानस्य व्यासस्य पूर्वोक्तं सरस्वतीतीर-
स्थमाश्रमं नारदोऽगात् ॥३२॥ तदा व्यासो नारदं समागतं ज्ञात्वा सहसोत्थाय विधिवत् पूजयामास ॥३३॥ इति श्रीभा० चू० प्र० चतुर्थः ॥पञ्चमे
सर्वधर्मेभ्यो हरिकीर्तनगौरवम् । व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥१॥ सूत उवाच। अथ वीणापाणिर्नारदः सुखमासीनः सन् समीपे आसीनं

भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ॥ दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥ २९ ॥ तथापि बत मे दैह्यो
ह्यात्मा चैवात्मना विभुः ॥ असंपन्न इवाभाति ब्रह्मवर्चस्यसत्तमः ॥३०॥ किं वा भागवता धर्मा न प्रायेण निरूपिताः॥
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३१ ॥ तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः॥कृष्णस्य नारदोऽभ्या-
गादाश्रमं प्रागुदाहृतम् ॥ ३२ ॥ तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः ॥ पूजयामास विधिवन्नारदं सुरपूजितम् ॥
॥३३॥ इति श्रीभा० म० प्रथ० चतुर्थोऽध्यायः ॥४॥ सूत उवाच ॥ अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ॥ देवर्षिः
प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥ नारद उवाच ॥ पाराशर्य महाभाग भवतः कच्चिदात्मना ॥ परितुष्यति
शारीर आत्मा मानस एव वा ॥ २ ॥ जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम् ॥ कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितम्
॥ ३ ॥ जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनम् ॥ अथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥

व्यासं प्रोवाच॥१॥नारद उवाच। हे महाभाग व्यासमुने! तवानेन शरीरेण मनसा च तुष्यति किं नो वा॥२॥ज्ञातुमिष्टं यद् धर्मादि तत् सर्वं त्वया
सम्यक् ज्ञातमनुष्ठितं च। सर्वार्थपरिपूर्णं भारतं च कृतम् ॥३॥ किं यन्नित्यं ब्रह्म तत् विचारितं प्राप्तं च एवं सति अकृतार्थ इव कथं शोचसि॥४॥

१ देहे भव आत्मा जीवः । २ ब्रह्म वर्चसवानपि असत्तमः ब्रह्मवर्चस्येषु सत्तमो वा वर्चस्तेजाः । ३ ब्रह्मलोकादागतमित्यर्थः । ४ इवेत्यनधिकारार्थं महत्यपि मोह इति स्मयः । ५ शरीराभिमानी । ६ मनोऽ-
भिमानी । ७ अनुष्ठितं चेत्यर्थः । ८ अर्था धर्मादयः ।

व्यास उवाच ॥ हे नारद ! त्वयोक्तं सर्वं ममास्ति । तथाऽपि योऽयं ममाऽसंतोषस्तस्य कारणं त्वां पृच्छामि ॥ ५ ॥ यतस्त्वया पुराणपुरुष
उपासितः । अतस्त्वं सर्वं वेत्थ ॥६॥ त्वं त्रिलोकीं सूर्य इव पर्यटन् वायुरिव सर्वप्राणिनामन्तश्चरसि अतो न मे न्यूनं यत् तद्वितर्कय ॥७॥
नारद उवाच । हे व्यास ! त्वया केवलं भगवद्यशो बहुशोऽवर्णितं तदेवासंतोषकारणं मन्ये ॥ ८ ॥ यथा धर्मादयोऽर्था वर्णितास्तथा भगव-

व्यास उवाच ॥ अस्त्येव मे सर्वमिदं त्वयोक्तं तथाऽपि नात्मा परितुष्यते मे ॥ तन्मूलमव्यक्तमगाधबोधं पृच्छामहे
त्वाऽऽत्मभवात्मभूतम् ॥ ५ ॥ स वै भवान्वेद समस्तगुह्यमुपासितो यत्पुरुषः पुराणः ॥ परावरेशो मनसैव विश्वं
सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६ ॥ त्वं पर्यटन्नर्क इव त्रिलोकीमन्तश्चरो वायुरिवात्मसाक्षी ॥ परावरे ब्रह्मणि धर्मतो
व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७ ॥ नारद उवाच ॥ भवताऽनुदितप्रायं यशो भगवतोऽमलम् ॥ येनैवासौ
न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८ ॥ यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः ॥ तथा न वासुदेवस्य महिमा
ह्यनुवर्णितः ॥ ९ ॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्वायसं[11] तीर्थमुशन्ति मानसा[12] न
यत्र हंसा निरमन्त्युशिक्षयाः[13] ॥ १० ॥ तद्वाग्विसर्गो जनताऽघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामा-
न्यनन्तस्य यशोऽङ्कितानि यैः[14] शृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ११ ॥

न्महिमा न वर्णितः ॥९॥ किंच यद्वचो हरेर्यशो न गृणीत तद्वायसं तीर्थं मन्यन्ते ॥१०॥ अपशब्दयुक्तेऽपि वाचःप्रयोगे भगवद्यशोऽस्तिचेत्
स एव लोकमलापहः । तमेव साधवः शृण्वंति गायन्ति गृणंति च ॥ ११ ॥

---

१ असंतोषमूलम् । २ अतिगम्भीरज्ञानम् । ३ आत्मभवस्य ब्रह्मणः आत्मभूतः आत्मजः । ४ कार्यकारणनियन्ता । ५ बुद्धिवृत्तिज्ञः । ६ परे ब्रह्मणि धर्मतो योगेन वेदाख्ये । ७ व्रतैः स्वाध्यायाविभिः ।
८ निष्णातस्य । ९ येनधर्मादिज्ञानेन । १० ज्ञानम् । ११ काकतुल्यानां कामिनां रतिस्थानम् । १२ सत्वप्रधाने मनसि वर्तमाना यतयः । १३ ब्रह्मनिवासाः । १४ यानि नामानि ।

नैष्कर्म्यमपि ज्ञानं भक्तिहीनं चेन्न स्वल्पमपि शोभते । कुतः पुनरीश्वरेऽनर्पितं दुःखरूपं काम्यं च कर्म शोभते ॥१२॥ अतो हे महाभाग ! त्वं यथार्थधीरसि तस्माद् बन्धमुक्तये भगवल्लीलां चित्तैकाग्र्येण स्मृत्वा वर्णय ॥१३॥ अन्यथा हरिचेष्टितात् पृथग्दृशः पुंसः क्वापि विषये स्थानं न लभेत यथा वातेन हता नौः ॥ १४ ॥ किंच स्वभावत एव रतस्य पुंसो धर्मार्थं काम्यकर्मादि एव भारतादिषु कथयतस्तव महानन्यायः यतस्त्वदुक्तं धर्म इति मन्वानो जनस्तत्त्वज्ञेन त्वया क्रियमाणं न मन्यते ॥१५॥ विचक्षणः पुरुषस्तु कर्मनिवृत्त्या भगवत्स्वरूपं ज्ञातुमर्हति

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १२ ॥ अथो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः ॥ उरुक्रमस्याखिलबन्धमुक्तये समाधिनाऽनुस्मर तद्विचेष्टितम् ॥ १३ ॥ ततोऽन्यथा किंचन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः ॥ न कुत्रचित् क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदम् ॥१४॥ जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः ॥ यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ १५ ॥ विचक्षणोऽस्यार्हति वेदितुं विभोरनन्तपारस्य निवृत्तितः सुखम् ॥ प्रवर्तमानस्य गुणैरनात्मनस्ततो भवान् दर्शय चेष्टितं विभोः ॥१६॥ त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि ॥ यत्र क्व वाऽभद्रमभूदमुष्य किं को वाऽर्थ आप्तोऽभजतां स्वधर्मतः ॥१७॥ तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ॥ तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥ १८ ॥

न प्रवृत्तिस्वभाववान् एवं गुणैः प्रवर्तमानं जनं प्रति हरेर्लीलां दर्शय ॥ १६ ॥ किंच स्वधर्मं त्यक्त्वा हरेश्चरणाम्बुजं भजन् सन् यत्र कुत्रापि पतेत् चेत् तर्हि तस्य किं स्यादभद्रम् ॥ अभजतां पुंसां स्वधर्मतः को वाऽर्थः प्राप्तो न कोऽपि ॥ १७ ॥ अत एव निपुणः सन् भक्त्यर्थमेव यतेत । विषयसुखं तु दुःखवत् ॥ १८ ॥



१ अलमत्यर्थम् । २ निरुपाधि । ३ श्रवो यशः । ४ तया विवक्षया कृतैः स्फुरितैः । ५ इतरः प्राकृतो जनः । ६ निर्विकल्पकसुखात्मकस्वरूपम् । ७ अकृतार्थः भक्तिपरिपाकाभावात् । ८ उपरिब्रह्मपर्यन्तं अधः स्थावरपर्यन्तं च । ९ प्राचीनकर्मणा ।

पुनश्च हे व्यास ! मुकुन्दसेवी जनः संसृतिं न प्राप्नोति । अतः प्राधान्येन भगवल्लीलां वर्णय ॥१९॥ कोऽसौ भगवान् यतो विश्वस्य स्थित्यादयो भवन्ति । तद्धि स्वयमेव भवान् वेद ॥२०॥ यतः परमात्मनस्त्वंशो जगतः शिवाय जातः ॥ तस्मात् हरेर्विक्रमो निरूप्यताम् ॥ २१ ॥ इदमेव तपः शास्त्रयज्ञदानादीनामुत्तमं फलम् ॥ अनेनैव तव तप आदि सर्वं सफलं भविष्यतीत्यर्थः ॥२२॥ सत्संगतो भगवति भक्तिर्भवतीति

न वै जनो जातु कथंचनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् ॥ स्मरन् मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो[1] यतः[2] ॥ १९ ॥ इदं हि विश्वं[3] भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवः ॥ तद्धि स्वयं वेद भवांस्तथाऽपि वै प्रादेशमात्रं[4] भवतः प्रदर्शितम् ॥ २० ॥ त्वमात्मनाऽऽत्मानमवेह्यमोघदृक्परस्य पुंसः परमात्मनः कलाम् ॥ अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम् ॥ २१ ॥ इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ॥ अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥ २२ ॥ अहं पुराऽतीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम् ॥ निरूपितोबालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥ २३ ॥ ते मय्यपेताखिलचापलेऽर्भके दान्तेऽधृतक्रीडनकेऽनुवर्तिनि ॥ चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥ २४ ॥ उच्छिष्टलेपाननुमोदितो द्विजैः सकृत्स्म भुञ्जे तदपास्तकिल्बिषः ॥ एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः प्रजायते ॥ २५ ॥

स्ववृत्तान्तेनाह । अहमिति । हे मुने ! अहं प्राग्जन्मनि वेदवादिनां दास्याः पुत्रोऽभवम् । ततश्चातुर्मास्य एकत्र वासं कर्तुमिच्छता योगिनां शुश्रूषणे योजितः ॥ २३ ॥ ते योगिनस्त्यक्तक्रीडनके बालके मयि कृपां चक्रुः ॥ २४ ॥ तेषामुच्छिष्टान्नं तैरनुज्ञातः सन् भुञ्जेस्म, तेन भोजनेन निष्पापोऽहं जातः । एवं प्रवृत्तस्य मे तद्धर्मे रुचिर्जाता ॥ २५ ॥

---

१ रसग्राह्यो रसग्राही वाऽयं जनः । २ यतो हेतोः । ३ विश्वस्मादितरः, विश्वं भगवति स त्वस्मिन्न । ४ एकदेशमात्रमित्यर्थः ।

तेषां कृष्णकथाः गायतां प्रसादेन मम कृष्णे भक्तिर्मतिश्च जाता ॥२६॥ यया मत्या प्रपञ्चातीते ब्रह्मरूपे मयि स्थूलं सूक्ष्मं शरीरं मायाकल्पितं
न तु वस्तुतोऽस्तीति पश्यामि॥२७॥ इत्थं हरेर्यशस्त्रिकालं शृण्वतो मे रजस्तमोऽपहा भक्तिर्जाता ॥२८॥ ततश्चातुर्मास्यान्ते तत्स्थानात् गंतुमि-
च्छन्तो योगिनः श्रद्दधानस्य बालस्य मम भगवतोक्तं गुह्यं ज्ञानं कृपया समुपादिष्टवन्तः ॥२९॥३०॥ येन ज्ञानेन भगवन्मायानुभावं वेदाऽहम्

तत्रान्वहं कृष्णकथाः प्रगायतामनुग्रहेणाशृणवं मनोहराः ॥ ताः श्रद्धया मेऽनुपदं विशृण्वतः प्रियश्रवस्यङ्ग ममाभ-
वद्रुचिः ॥२६॥ तस्मिंस्तदा लब्धरुचेर्महामुने प्रियश्रवस्यस्खलिता मतिर्मम ॥ ययाऽहमेतत् सदसत् स्वमायया पश्ये
मयि ब्रह्मणि कल्पितं परे ॥ २७ ॥ इत्थं शरत्प्रावृषिकावृतू हरेर्विशृण्वतो मेऽनुसवं यशोऽमलम् ॥ संकीर्त्यमानं मुनि-
भिर्महात्मभिर्भक्तिः प्रवृत्ताऽऽत्मरजस्तमोपहा ॥२८॥ तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ॥ श्रद्दधानस्य बालस्य
दान्तस्यानुचरस्य च ॥२९॥ ज्ञानं गुह्यतमं यत्तत्साक्षाद्भगवतोदितम् ॥ अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥३०॥
येनैवाहं भगवतो वासुदेवस्य वेधसः ॥ मायानुभावमविदं येन गच्छन्ति तत्पदम् ॥३१॥ एतत्संसूचितं ब्रह्मंस्तापत्रयचि-
कित्सितम् ॥ यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ ३२ ॥ आमयो यश्च भूतानां जायते येन सुव्रत ॥ तदेव
ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥३३॥ एव नृणां क्रियायोगाः सर्वे संसृतिहेतवः ॥ त एवात्मविनाशाय कल्पन्ते
कल्पिताः परे ॥ ३४ ॥ यदत्र क्रियते कर्म भगवत्परितोषणम् ॥ ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ ३५ ॥



॥३१॥ एतत् सत्त्वशोधकं कर्म यद्भगवति समर्पितं तत् सूचितम्॥३२॥ यथा रोगजनकं द्रव्यं द्रव्यान्तरमिश्रितं सत् रोगनाशकं भवति ॥३३॥
एवं कर्मापि भगवदर्पितं सत् कर्मनाशाय भवति ॥३४॥ अपि च भगवत्तोषकारकं कर्म यत् क्रियते तद्भक्तियोगयुक्तं ज्ञानं जनयति ॥३५॥

१ श्रवो यशः । २ त्रिकालम् । ३ विनीतस्य । ४ क्षीणपापस्य । ५ आधिदैविकाधिभौतिकाध्यात्मिकतापौषधम् ।

यदा भगवच्छिक्षया कर्माणि कुर्वन्ति तदा श्रीकृष्णस्य गुणनामानि गृणन्ति स्मरन्ति च ॥ ३६ ॥ भक्तिहेतुत्वमुक्त्वा ज्ञानहेतुत्वमाह । ॐ नम इति । प्रणवसहिताय भगवते वासुदेवाय प्रद्युम्नायानिरुद्धाय संकर्षणाय मनसा नमनं कुर्वीमहि ॥ ३७ ॥ इति जपतः पूजयतः पुंसः सम्यग् ज्ञानं वर्तते ॥३८॥ एवं स्वकीयमुपदेशं मयाऽऽचरितं ज्ञात्वा केशवो मह्यं ज्ञानं भावं च ददौ ॥३९॥ हे व्यास ! हरेर्यशः कथय । येन श्रुतेन विदुषां बोद्धुमिच्छा समाप्यते । यतो दुःखशान्तिः । नान्यथा ॥४०॥ इति भा० प्रथ० चू० पञ्चमः ॥५॥ व्यासस्य प्रत्ययार्थं च

कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ॥ गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥ ३६ ॥ ॐ नमो भगवते तुभ्यं वासुदेवाय धीमहि ॥ प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥ ३७ ॥ इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम् ॥ यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥ ३८ ॥ इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् ॥ अदान्मे ज्ञानमैश्वर्यं स्वस्मिन्भावं च केशवः ॥ ३९ ॥ त्वमप्यदभ्रश्रुतविश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम् ॥ आख्याहि दुःखैर्मुहुरर्दितात्मनां संक्लेशनिर्वाणमुशन्ति नान्यथा ॥ ४० ॥ इति श्रीभा० म० प्रथ० व्यासनारदसं० पञ्चमोऽध्यायः ॥ ५ ॥ सूत उवाच ॥ एवं निशम्य भगवान्देवर्षेर्जन्म कर्म च ॥ भूयः पप्रच्छ तं ब्रह्मन्व्यासः सत्यवतीसुतः ॥ १ ॥ व्यास उवाच ॥ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव ॥ वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥ २ ॥ स्वायंभुव कया वृत्त्या वर्तितं ते परं वयः ॥ कथं चेदमुदस्राक्षीः काले प्राप्ते कलेवरम् ॥ ३ ॥ प्राक्कल्पविषयामेतां स्मृतिं ते सुरसत्तम ॥ न ह्येष व्यवधात्काल एष सर्वनिराकृतिः[६] ॥ ४ ॥

षष्ठे प्राग्जन्मसंभवम् । स्वभाग्यं नारदः प्राह कृष्णसंकथनोद्भवम् ॥१॥ सूत उवाच ॥ एवं नारदस्य जन्मादि निशम्य व्यासः पप्रच्छ ॥१॥ व्यास उवाच ॥ भिक्षुषु दूरं गतेषु सत्सु त्वं बालकः सन् किमकार्षीः ॥२॥ हे नारद ! शेषं वयः कया वृत्त्या नीतम् ? काले प्राप्ते तच्छरीरं कथं त्यक्तम् ॥ ३ ॥ सर्वविनाशकः कालस्तव प्राग्जन्मस्मृतिं कथं न खण्डितवान् ॥ ४ ॥

---

१ भवन्तीति शेषः । २ मूर्तिवाचकमन्त्रेण । ३ मन्त्रोक्तमूर्तिम् । ४ मंत्रोक्तमूर्तिव्यतिरिक्तमूर्तिशून्यम् । ५ मन्यन्ते । ६ सर्वस्य निराकृतिरपलापो स्यात्सः ।

नारद उवाच । मम विज्ञानादेष्टृभिर्भिक्षुभिर्गमने कृते सति प्रथमवयसि वर्तमानोऽहमेतदकार्षम् ॥ ५ ॥ एकात्मजा मे माताऽज्ञा मयि स्नेहं कृत्वा मम प्रपञ्चनिर्वाहमिच्छन्ती सती तदुद्योगकरणे समर्था नासीत् ॥६॥७॥ अहं च पंचवर्षात्मको बालस्तद्ब्रह्मकुले तदवेक्षया वासम् कृतवान् ॥८॥ तत एकदा मे माता निशि गोदोहनार्थं गेहाद्बहिर्गता सती पथि सर्पेण दष्टा ततो मृता ॥९॥ तदा हरेः स एव प्रसाद इति

नारद उवाच ॥ भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम ॥ वर्तमानो वयस्याद्ये तत एतदकारषम् ॥ ५ ॥ एकात्मजा मे जननी योषिमूढा च किंकरी ॥ मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम् ॥ ६ ॥ साऽस्वतन्त्रा न कल्पाऽऽसीद्योगक्षेमं ममेच्छती ॥ ईशस्य हि वशे लोको योषा दारुमयी यथा ॥७॥ अहं च तद्ब्रह्मकुले ऊषिवांस्तदवेक्षया ॥ दिग्देशकालाऽव्युत्पन्नो बालकः पञ्चहायनः ॥८॥ एकदा निर्गतां गेहाद् दुहन्ती निशि गां पथि ॥ सर्पोऽदशत्पदा स्पृष्टः कृपणां कालचोदितः ॥ ९ ॥ तदा तदहमीशस्य भक्तानां शमभीप्सतः अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ १० ॥ स्फीतांजनपदांस्तत्र पुरग्रामव्रजाकरान् ॥ खेटखर्वटवाटीश्च वनान्युपवनानि च ॥११॥ चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ॥ जलाशयाञ्छिवजलान्नलिनीः सुरसेविताः ॥ १२ ॥ चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः ॥ नलवेणुशरस्तम्बकुशकीचकगह्वरम् ॥ १३ ॥ एक एवातियातोऽहमद्राक्षं विपिनं महत् ॥ घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम् ॥ १४ ॥ परिश्रान्तेन्द्रियात्माहं तृट्परीतो बुभुक्षितः ॥ स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः ॥ १५ ॥

मन्यमानोऽहं तदुत्तरक्रियां कृत्वोत्तरां दिशं गतवान् ॥१०॥ तत्र जनपदपुरग्रामव्रजाकरखेटखर्वटवाटीवनोपवनानि ॥११॥ चित्रधातुविचित्रोद्रीन् शिवजलान् सरोवरान् अतीत्य नलवेणुशरस्तम्बादिभिर्दुर्गमं व्यालोलूकशिवाभिश्च घोरं महद्वनमेकाकी प्रविष्टः ॥ १२ ॥ १३ ॥ १४ ॥ ततस्तृषाव्याप्तो बुभुक्षितोऽहं नद्यां स्नात्वाऽऽचम्य जलं च पीत्वा गतश्रमः सन् ॥ १५ ॥



---

१ तस्य मातुः स्नेहानुबन्धस्यावेक्षया यदा स विरमेदिति प्रतीक्षया । २ समृद्धान् । ३ खेटः कृषीवलग्रामः । ४ खर्वटः पर्वतप्रान्तग्रामः । ५ वाटी पुष्पादिवाटिका । ६ क्रीडास्थानम् ।

निर्मनुजेऽरण्ये पिप्पलमूले स्थितः सन् मनसा हृदिस्थं भगवन्तं समचिन्तयम् ॥१६॥ एवं ध्यायतो हृदि हरिः प्रादुर्बभूव ॥१७॥ तदाऽऽनन्द सागरे मग्नः आत्मानं परं च नापश्यम् ॥१८॥ ततो भगवतस्तद्रूपमपश्यन् सन् सहसोत्थितोऽस्मि ॥१९॥ पुनर्हृदि मनः स्थिरीकृत्य तद्रूपं वीक्ष-माणोऽपि नापश्यम् ॥२०॥ एवं वने यतन्तं मां शुचः प्रशमयन्निवाकाशवाग् जगाद ॥२१॥ हे नारद ! अस्मिन् जन्मनि दुर्दर्शं मां द्रष्टुं नार्हसि

तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आस्थितः ॥ आत्मनाऽऽत्मानमात्मस्थं यथाश्रुतमचिन्तयम् ॥ १६ ॥ ध्यायतश्चर-णाम्भोजं भावनिर्जितचेतसा ॥ औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥ १७ ॥ प्रेमातिभरनिर्भिन्नपुलकाङ्गोऽति-निर्वृतः ॥ आनन्दसंप्लवे लीनो नापश्यमुभयं मुने ॥ १८ ॥ रूपं भगवतो यत्तन्मनःकान्तं शुचापहम् ॥ अपश्यन् सहसोत्तस्थे वैक्लव्याद्दुर्मना इव ॥ १९ ॥ दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ॥ वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः ॥ २० ॥ एवं यतन्तं विजने मामाहागोचरो गिराम् ॥ गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥ २१ ॥ हन्ताऽस्मिञ्जन्मनि भवान्न मां द्रष्टुमिहार्हति ॥ अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥ २२ ॥ सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ ॥ मत्कामः शनकैः साधुः सर्वान्मुञ्चति हृच्छयान् ॥ २३ ॥ सत्सेवयादीर्घया ते जाता मयि दृढा मतिः ॥ हित्वाऽवद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २४ ॥ मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित् ॥ प्रजा-सर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥ २५ ॥ एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिङ्गमलिङ्गमीश्वरम् ॥ अहं च तस्मै महतां महीयसे शीर्ष्णाऽवनामं विदधेऽनुकम्पितः ॥ २६ ॥

॥२२॥ तव मयि प्रीतये रूपमिदं सकृद्दर्शितम् ॥२३॥ सत्सेवया तव मयि दृढा मतिर्जाता किंच इमं देहं हित्वा मत्पार्षदो भविष्यसि ॥२४॥ मदनुग्रहात् ते स्मृतिः सृष्टौ प्रलयेऽपि न नङ्क्ष्यति ॥२५॥ एवमुक्त्वा भगवानन्तर्हितः । अहं चादृष्टाय तस्मै प्रणामं कृतवान् ॥ २६ ॥

---

१ कलया युक्ते अक्षिणी यस्य तस्य । २ गिरामगोचरो वागतीतः परमेश्वरः । ३ अदग्धपापानाम् । ४ अनिष्पन्नयोगानाम् । ५ कामान् । ६ नभसि लिंगं मूर्तिर्यस्य सः ।

ततः

ततोऽहं तन्नामानि पठन् त्यक्तलज्जो गतस्पृहो गां पर्यटन् कालं प्रतीक्षमाण आसम् ॥२७॥ स्वावसरे मृत्युकालः प्रादुरभूत् ॥ २८ ॥ ततः पार्षदरूपां तनुं भगवता मयि नीयमाने पञ्चभूतात्मको मद्देहः पपात ॥२९॥ ततः कल्पान्ते शिशयिषोर्ब्रह्मणो मध्यं तच्छ्वासेन सह प्रविशम् ॥ ३० ॥ पुनः कल्पादाविदं स्रष्टुमिच्छतो ब्रह्मणः प्राणेभ्यो मरीच्यादय ऋषयोऽहं च जातः। ।३१॥ सोऽहं श्रीहरेः प्रसादात् क्वचिदप्य-

नामान्यनन्तस्य हतत्रपः पठन् गुह्यानि भद्राणि कृतानि च स्मरन् ॥ गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन्विमदो विमत्सरः ॥ २७ ॥ एवं कृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः । कालः प्रादुरभूत्काले विद्युत्सौदामिनी यथा ॥ २८ ॥ प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्॥आरब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः॥२९॥कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः ॥ शिशयिषोरनुप्राणं विविशेऽन्तरहं विभोः ॥३०॥ सहस्रयुगपर्यन्ते उत्थायेदं सिसृक्षतः॥मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे ॥३१॥ अन्तर्बहिश्च लोकांस्त्रीन्पर्येम्यस्कन्दितव्रतः॥अनुग्रहान्महाविष्णोरविघातगतिः क्वचित् ॥३२॥ देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् ॥ मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥३३॥ प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ॥ आहूत इव मे शीघ्रं दर्शनं याति चेतसि॥३४॥एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ॥ भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥३५॥ यमादिभिर्योगपथैः कामलोभहतो मुहुः ॥ मुकुन्दसेवया यद्वत्तथाऽऽत्माद्धा न शाम्यति॥३६॥ सर्वं तदिदमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ॥जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम्॥३७॥

कुण्ठितगतिः सन् ॥ ३२ ॥ देवदत्तां वीणां वादयन् हरिकथां गायमानो ब्रह्माण्डं भ्रमामि ॥३३॥ एवं गायतो मम हृदि भगवान् निमंत्रित इव दर्शनं याति ॥३४॥ विषयभोगेच्छयाऽऽतुरचित्तानां संसारसिन्धुतरणे हरिभजनमेव नौका दृष्टा ॥३५॥ हरिसेवया यथा मनः शाम्यति तथा यमादिभिर्न ॥३६॥ हे व्यास ! त्वया यत् पृष्टं तत् सर्वं व्याख्यातम् ॥३७॥



१ त्रैलोक्यम् । २ संहृत्य । ३ अखण्डितब्रह्मचर्यव्रतः । ४ मूर्च्छनालापवतीं कृत्वा । ५ साक्षात् ।

सूत उवाच॥ एवं सम्भाष्य वीणां वादयन् नारदो ययौ ॥३८॥ अहो अयं देवर्षिर्धन्यो यतो वीणया हरेः कीर्तिं गायन् क्लेशत्रयपीडितं जगत् रमयति ॥३९॥ इति श्रीभागवते चू० प्रथमे० षष्ठोऽध्यायः ॥६॥ अथ भागवतश्रोतुर्जन्मवक्तुं परीक्षितः।सुप्तबालवधाद्द्रौणेर्दण्डः सप्तम उच्यते॥ ॥१॥ शौनक उवाच। नारदे गते सति तदभिप्रायं ज्ञात्वा व्यासः किमकरोत् ॥१॥ सूत उवाच॥ सरस्वत्याः पश्चिमे तटे शम्याप्रासनामकाश्रमे

सूत उवाच ॥ एवं संभाष्य भगवान्नारदो वासवीसुतम् ॥ आमन्त्र्य वीणां रणयन्ययौ यादृच्छिको मुनिः ॥ ३८ ॥ अहो देवर्षिर्धन्योऽयं यत् कीर्तिं शार्ङ्गधन्वनः ॥ गायन्माद्यन्निदं तन्त्र्या रमयत्यातुरं जगत् ॥ ३९ ॥ इति श्रीभा० म० प्रथम० व्यासनारदसंवादे षष्ठोऽध्यायः ॥६॥ शौनक उवाच ॥ निर्गते नारदे सूत भगवान्बादरायणः ॥ श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः ॥१॥ सूत उवाच ॥ ब्रह्मनद्यां सरस्वत्यामाश्रमः पश्चिमे तटे ॥ शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः ॥ २ ॥ तस्मिन्स्व आश्रमे व्यासो बदरीषडमण्डिते ॥ आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम् ॥ ३ ॥ भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ॥ अपश्यत्पुरुषं पूर्वं मायां च तदपाश्रयाम् ॥ ४ ॥ यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥ ५ ॥ अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम् ॥ ६ ॥ यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ॥ भक्तिरुत्पद्यते पुंसः शोकमोहजरापहा ॥ ७ ॥ स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् ॥ शुकमध्यापयामास निवृत्तिनिरतं मुनिः ॥ ८ ॥

॥२॥ व्यास आचम्य समुपविष्टः सन् मनः स्थिरीकृत्य दध्यौ ॥३॥ ततो मनसि प्रथमं पुरुषं तन्मायां च ददर्श ॥४॥ यया मोहितो जीवोऽनर्थं प्राप्नोति ॥५॥ ततोऽधोक्षजे भक्तियोगं च ददर्श। एतत् सर्वं दृष्ट्वा मूढस्य लोकस्य हिताय भागवतीं संहितां चक्रे ॥६॥ यस्यां श्रूयमाणायां सत्यां कृष्णे सद्यो भक्तिः समुत्पद्यते ॥ ७ ॥ एवं संहितां कृत्वा शोधयित्वा च शुकमध्यापयामास ॥ ८ ॥

१ त्रिगुणव्यतिरिक्तः। २ तत्कृतं त्रिगुणत्वाद्यभिमानकृतमनर्थं कर्तृत्वादि च। ३ भागवतसंहिताम्।

शौनक उवाच ॥ हे सूत! स शुकः सर्वत्रोपेक्षकः आत्मारामोऽपि तामिमां बृहतीं संहितां कस्य हेतोः समभ्यसत् तद्वद ॥९॥ सूत उवाच॥आत्मा-
रामा अपि मुनयो हरौ भक्तिं कुर्वन्ति । यतो हरिरेवंप्रभावः ॥१०॥ अत एव हरेर्गुणाकृष्टमतिः शुको महदाख्यानमिदमधीतवान् ॥११॥ अथ हे
शौनक! परीक्षितो जन्म कर्म मुक्तिं पाण्डवानां महाप्रस्थानं च कृष्णकथोदयो यथा स्यात् तथा वक्ष्ये॥१२॥यदा युद्धे कौरवपाण्डवानां वीरेषु

शौनक उवाच ॥ स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ॥ कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ॥ ९ ॥ सूत
उवाच ॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥ कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥१०॥ हरेर्गुणाऽऽक्षिप्त-
मतिर्भगवान्बादरायणिः ॥ अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः ॥ ११ ॥ परीक्षितोऽथ राजर्षेर्जन्म कर्म विला-
पनम् ॥ संस्थां च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम् ॥ १२ ॥ यदा मृधे कौरवसृञ्जयानां वीरेष्वथो वीरगतिं गतेषु ॥
वृकोदराविद्धगदाभिमर्शभग्नोरुदण्डे धृतराष्ट्रपुत्रे ॥ १३ ॥ भर्तुः प्रियं द्रौणिरिति स्म पश्यन्कृष्णासुतानां स्वपतां
शिरांसि ॥ उपाहरद्विप्रियमेव तस्य जुगुप्सितं कर्म विगर्हयन्ति ॥ ॥ १४ ॥ माता शिशूनां निधनं सुतानां निशम्य
घोरं परितप्यमाना ॥ तदाऽरुदद्बाष्पकलाकुलाक्षी तां सान्त्वयन्नाह किरीटमाली ॥ १५ ॥ तदा शुचस्ते प्रमृजामि
भद्रे यद्ब्रह्मबन्धोः शिर आततायिनः ॥ गाण्डीवमुक्तैर्विशिखैरुपाहरे त्वाऽऽक्रम्य यत्स्नास्यसि दग्धपुत्रा ॥ १६ ॥

स्वर्गतेषु भीमगदया भग्नोरौ दुर्योधने सति ॥१३॥ तस्य प्रियं स्यादिति द्रोणपुत्रो निंद्यमपि कर्म कृतवान्। तथाहि। शयानानां द्रौपदीपुत्राणां
शिरांसि चिच्छेद॥१४॥ततः शिशूनां नाशं दृष्ट्वा द्रौपदी विललाप। तच्छ्रुत्वा तां सान्त्वयन् पार्थ उवाच ॥१५॥ हे भद्रे! अहं यदाऽश्वत्थाम्नः
शिरो बाणैश्छित्त्वा त्वत्समीपमानेष्यामि त्वं च तस्यासनं विधाय स्नास्यसि तदा ते शोकाश्रूणि मार्जयिष्यामि ॥ १६ ॥

१ निवृत्तहृदग्रन्थयः । २ विलापनं मृत्युं मुक्तिं वा । ३ अभिमर्शोऽभिघातः । ४ कला बिन्दवः । ५ ब्राह्मणाधमस्य । ६ "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः" इत्यु-
क्तेरत्र सशस्त्रत्वमाततायित्वम् । ७ तत्र पादप्रक्षेपं विधाय ।

अर्जुन इत्युक्त्वा श्रीकृष्णेन सह रथं समारुह्य तं द्रौणिं धावति स्म ॥ १७ ॥ तदा दूरादागच्छन्तमर्जुनं दृष्ट्वा प्राणप्रेप्सुरश्वत्थामा प्राद्रवद् यथा रुद्रभयात् सूर्यः । अत्र वामनपुराणोक्ता कथा प्रदर्श्यते । विद्युन्माली नाम कश्चित् राक्षसस्तपसा शिवं तोषयामास । तदा तुष्टेन रुद्रेण तस्मै सौवर्णं विमानं दत्तम् । ततो राक्षसोऽर्कस्य पृष्ठतो भ्राम्यन् विमानतेजसा रात्रिं विलोपितवांस्ततः सूर्येण स्वतेजोभिर्द्रावयित्वा तद्विमानं पातितम्, तच्छ्रुत्वा कुपिते रुद्रे भयात् सूर्यः पराद्रवत् ॥ ततो रुद्रस्य क्रूरदृष्ट्या संदह्यमानः पतन् वाराणस्यां पतितो लोलार्क नाम्ना

इति प्रियां वल्गुविचित्रजल्पैः स सान्त्वयित्वाऽच्युतमित्रसूतः ॥ अन्वाद्रवद्दंशित[1] उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥ तमापतन्तं स विलक्ष्य दूरात्कुमारहोद्विग्नमना रथेन ॥ पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं[2] रुद्रभयाद्यथाऽर्कः[3] ॥१८॥ यदाऽशरणमात्मानमैक्षत श्रान्तवाजिनम् ॥ अस्त्रं ब्रह्मशिरो मेने आत्मत्राणं द्विजात्मजः ॥ १९॥ अथोपस्पृश्य सलिलं संदधे तत्समाहितः ॥ अजानन्नुपसंहारं प्राणकृच्छ्र उपस्थिते ॥२०॥ ततः प्रादुष्कृतं तेजः प्रचण्डं सर्वतो दिशम् ॥ प्राणापदमभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥ अर्जुन उवाच ॥ कृष्ण कृष्ण महाभाग भक्तानामभयंकर ॥ त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः ॥ २२ ॥ त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ॥ मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥२३॥ स एव जीवलोकस्य मायामोहितचेतसः॥विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥ २४ ॥

विख्यातो जातः ॥ १८ ॥ अथाश्वत्थामा यदास्वरक्षकोऽन्यो नास्तीति ददर्श तदा ब्रह्मास्त्रमेव स्वरक्षणकर्तृ मेने ॥१९॥ तत् आचम्य प्राण संकटे प्राप्ते सति तस्योपसंहारं न ज्ञात्वा ब्रह्मास्त्रं संदधे ॥२०॥ तदा तत् तेजः प्रेक्ष्य भयातुरोऽर्जुनः श्रीकृष्णं वदति स्म ॥ २१ ॥ अर्जुन उवाच ॥ हे कृष्ण ! त्वं भक्तानामभयंकरः संसारतापेन तप्यमानानां च मोक्षः ॥२२॥ साक्षादीश्वरः प्रकृतेः परो मायां जित्वा ज्ञानशक्त्याऽऽत्मन्येव स्थितः ॥२३॥ त्वं जीवलोकस्य धर्मादि कल्याणरूपं फलं यद्युपासितस्तर्हि ददासि ॥ २४ ॥

१ बद्धकवचः । २ यावद्गन्तुं शक्यम् । ३ 'यथा कः' इति पा० ।

अयं च तेऽवतारो भूभारहरणाय स्वजातीनां भक्तानां चानुध्यानाय चास्ति ॥२५॥ अतः सर्वतोमुखं दारुणं तेजइदं किं कुतो वाऽऽयाति तत् न वेद्मि तद् वद ॥२६॥ श्रीभगवानुवाच । हे अर्जुन ! अश्वत्थाम्न इदं ब्रह्मास्त्रं विद्धि । स चास्त्रसंहारं न जानाति ॥२७॥ किंच एतस्य नाश-कमन्यदस्त्रं नास्ति । अतो ब्रह्मास्त्रेणैव तदेतद् घातय ॥२८॥ सूत उवाच ॥ अर्जुनो भगवदुक्तं श्रुत्वाऽऽचम्य ब्राह्मं ब्राह्माय संदधे ॥२९॥ तदा

तथाऽयं चावतारस्ते भुवो भारजिहीर्षया ॥ स्वानां चानन्यभावानामनुध्यानाय चासकृत् ॥ २५ ॥ किमिदं स्वित्कुतो वेति देवदेव न वेद्म्यहम् ॥ सर्वतोमुखमायाति तेजः परमदारुणम् ॥२६॥ श्रीभगवानुवाच ॥ वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ॥ नैवासौ वेद संहारं प्राणबाध उपस्थिते ॥२७॥ नह्यस्यान्यतमं किंचिदस्त्रं प्रत्यवकर्शनम् ॥ जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो ह्यस्त्रतेजसा ॥२८॥ सूत उवाच ॥ श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा ॥ स्पृष्ट्वाऽऽपस्तं परिक्रम्य ब्राह्मं ब्राह्माय संदधे ॥ २९ ॥ संहत्याऽन्योन्यमुभयोस्तेजसी शरसंवृते ॥ आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत् ॥३०॥ दृष्ट्वाऽस्त्रतेजस्तु तयोस्त्रींल्लोकान्प्रदहन्महत् ॥ दह्यमानाः प्रजा सर्वाः सांवर्तकममंसत ॥३१॥ प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तम् ॥ मतं च वासुदेवस्य संजहारार्जुनो द्वयम् ॥३२॥ तत आसाद्य तरसा दारुणं गौतमीसुतम् ॥ बबन्धामर्षताम्राक्षः पशुं रशनया यथा ॥३३॥ शिबिराय निनीषन्तं दाम्ना बद्ध्वा रिपुं बलात् ॥ प्राहार्जुनं प्रकुपितो भगवानम्बुजेक्षणः ॥ ३४ ॥ मैनं पार्थार्हसि त्रातुं ब्रह्मबन्धुमिमं जहि ॥ योऽसावनागसः सुप्तानवधीन्निशि बालकान् ॥३५॥



तयोस्तेजसी संहत्य गगनं भूमिं च संछाद्य ववृधाते ॥३०॥ ततस्तत्तेजसा दह्यमानान् लोकान् दृष्ट्वा प्रजाः प्रलयाग्निं मेनिरे॥३१॥तदा प्रजानाशं दृष्ट्वा श्रीकृष्णमतं च ज्ञात्वाऽर्जुनोऽस्त्रद्वयं संजहार ॥ ३२ ॥ ततः क्रुद्धोऽर्जुनस्तन्निकटमागत्य रशनया पशुमिव तं बबन्ध ॥३३॥ ततः स्वशिबिरं नेतुमिच्छन्तमर्जुनं भगवानाह ॥ ३४ ॥ हे पार्थ ! असौ यतः सुप्तान् बालान् जघान तत एनं जहि त्रातुं नार्हसि ॥ ३५ ॥

१ प्राणिघाते, इ० पा० ।

यतो मद्यादिना मत्तं ग्रहवातादिनोन्मत्तं सुप्तं स्त्रियं जडं शरणागतं भग्नरथं भीतं रिपुमपि धर्मविन्न हंति ॥ ३६ ॥ किंच यः परप्राणैः स्वप्राणान् पुष्णाति तस्य वधस्तस्यैव श्रेयो यतस्तद्दोषेण नरकं याति। तथा चोक्तम् "राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। विधूतकल्मषा यान्ति स्वर्गं सुकृतिनो यथा" इति ॥ ३७ ॥ हे अर्जुन ! मम शृण्वतस्त्वयाऽस्य शिरो हरामीति द्रौपद्यै प्रतिश्रुतम् ॥३८॥ अतः पापोऽयं वध्यतां यो दुर्योधनस्यापि विप्रियं कृतवान् ॥३९॥ एवं धर्मं विजानता कृष्णेन चोदितोऽपि पार्थोऽश्वत्थामानं हन्तुं नैच्छत् ॥४०॥ अथ स्वशिबिरं गत्वा

**मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् । प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित् ॥ ३६ ॥ स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः । तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥ प्रतिश्रुतं च भवता पाञ्चाल्यै शृण्वतो मम । आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥ ३८ ॥ तदसौ वध्यतां पाप आततायात्मबन्धुहा । भर्तुश्च विप्रियं वीर कृतवान् कुलपांसनः ॥ ३९ ॥ एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः । नैच्छद्धन्तुं गुरुसुतं यद्यप्यात्महनं महान् ॥ ४० ॥ अथोपेत्य स्वशिबिरं गोविन्दप्रियसारथिः । न्यवेदयत्तं प्रियायै शोचन्त्या आत्मजान्हतान् ॥ ४१ ॥ तथाऽऽहृतं पशुवत्पाशबद्धमवाङ्मुखं कर्मजुगुप्सितेन । निरीक्ष्य कृष्णाऽपकृतं गुरोः सुतं वामस्वभावा[1] कृपया ननाम च ॥ ४२ ॥ उवाच चाऽसहन्त्यस्य बन्धनानयनं सती । मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥ सरहस्यो धनुर्वेदः सविसर्गोपसंयमः[2] । अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥ स एष भगवान्द्रोणः प्रजारूपेण वर्तते[3] । तस्याऽऽत्मनोऽर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी ॥ ४५ ॥**

शोचन्त्यै द्रौपद्यै तं द्रौणिं न्यवेदयत् ॥४१॥ तदा द्रौपदी तथाऽऽनीतमधोमुखमश्वत्थामानं दृष्ट्वा कृपया ननाम ॥४२॥ ततस्तद्बन्धनेनानयनं तस्यासहमानोवाच । हे अर्जुन ! एष मुच्यतां मुच्यताम् ॥४३॥ यतस्त्वयाऽस्य पितुः सकाशाद् धनुर्वेदोऽस्त्रसमूहश्च शिक्षितः ॥४४॥ स एव द्रोणः प्रजारूपेणास्ते । तस्य स्त्री कृपी जीवति । सा पतिलोकं न गता यतः पुत्रवती ॥ ४५ ॥

---

१ चारुस्वभावा । २ सप्रयोगोपसंहारः । ३ भर्तारमिति शेषः ।

तद् गुरोः कुलं पूज्यं दुःखयितुं नार्हसि ॥४६॥ अपि च यथाऽऽहं मृतवत्साऽऽर्ता रोदिमि तथाऽस्य माता कृपी मा रोदीत् ॥४७॥ ये राजभिर्ब्रह्म कुलं यत् कोपितं तत् तेषामेव राज्ञां सानुबन्धं कुलं दहति ॥४८॥ सूत उवाच। एवं सकरुणं धर्म्यं न्याय्यं च तस्या वचः श्रुत्वा धर्मो नकुलः सहदेवोऽर्जुनः श्रीकृष्णश्च तां प्रशशंसुः ॥४९॥५०॥ ततः क्रुद्धो भीम आह। अहो अनेन व्यर्थं बालवधः कृतः अतोऽस्य वध एव श्रेयान्॥५१॥

तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम् ॥ वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः ॥ ४६ ॥ मा रोदीदस्य जननी गौतमी पतिदेवता ॥ यथाऽहं मृतवत्साऽऽर्ता रोदिम्यश्रुमुखी मुहुः ॥४७॥ यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः ॥ तत्कुलं प्रदहत्याशु सानुबन्धं शुचाऽर्पितम् ॥ ४८ ॥ सूत उवाच ॥ धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ॥ राजा धर्मसुतो राज्ञ्याः प्रत्यनन्दद्वचो द्विजाः ॥ ४९ ॥ नकुलः सहदेवश्च युयुधानो धनञ्जयः ॥ भगवान् देवकीपुत्रो ये चान्ये याश्च योषितः ॥५०॥ तत्राहामर्षितो भीमस्तस्य श्रेयान्वधः स्मृतः ॥ न भर्तुर्नात्मनश्चार्थे योऽहन् सुप्तान्शिशून् वृथा ॥ ५१ ॥ निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ॥ आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥ श्रीभगवानुवाच ॥ ब्रह्मबन्धुर्न हन्तव्य आततायी वधार्हणः ॥ मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥ ५३ ॥ कुरु प्रतिश्रुतं सत्यं यत्तत्सान्त्वयता प्रियाम् ॥ प्रियं च भीमसेनस्य पाञ्चाल्या मह्यमेव च ॥ ५४ ॥ सूत उवाच ॥ अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथासिना ॥ मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम् ॥ ५५ ॥

एवं भीमस्य द्रौपद्याश्च वचनं श्रुत्वाऽर्जुनस्य मुखं विलोक्य श्रीकृष्ण आह ॥ ५२ ॥ श्रीभगवान् उवाच ॥ हे अर्जुन ! वधार्होऽपि ब्राह्मणो न हन्तव्यः । आततायी तु हंतव्य इति मयैव द्वयमपि कथितं तत् प्रतिपालय ॥५३॥ अथ च स्वप्रतिज्ञां मम द्रौपद्याः भीमसेनस्य च प्रियं यथा स्यात् तथा कुरु ॥५४॥ सूत उवाच ॥ अर्जुनो भगवदभिप्रायं ज्ञात्वाऽश्वत्थाम्नः सकेशं शिरोगतं मणिं जहार ॥ ५५ ॥



---

१ गुरोरिदम् । २ धर्म्मं मुच्यतामिति न्याय्यं सरहस्यम् इत्यादि सकरुणं तस्यात्मनदति निर्व्यलीकं तद्धर्मज्ञेति च गतपूर्वम् ।

ततो बद्धं द्रोणपुत्रं मुक्त्वा तेजसा मणिना च हीनं तं शिबिरान्निस्सारितवान् ॥५६॥ वपनं द्रविणादानं तथा स्थानान्निष्कासनं ब्राह्मणाधमानां वध एष एव न दैहिक इति ॥५७॥ ततः पाण्डवाः द्रौपद्या सह शोकार्ताः सन्तो मृतबालानां प्रेतकार्याणि चक्रुः ॥५८॥ इति श्रीभा० चू० प्रथ० सप्तमोऽध्यायः॥७॥अष्टमे कुपिताद्द्रौणेरस्त्राद्रक्षा परीक्षितः।श्रीकृष्णेन स्तुतिः कुन्त्या राज्ञः शोकश्च कीर्त्यते॥१॥सूत उवाच। अथ ते पाण्डवः स्त्रियोऽग्रतः कृत्वा मृतानां जलदानार्थं गङ्गां जग्मुः ॥१॥ तत्र जलाञ्जलिं दत्त्वा विलापं च कृत्वा गंगायां स्नात्वा च स्थितवन्तः ॥२॥ तत्र

विमुच्य रशनाबद्धं बालहत्याहतप्रभम् ॥ तेजसा मणिना हीनं शिबिरान्निरयापयत् ॥ ५६ ॥ वपनं द्रविणादानं स्थानान्निर्यापणं तथा ॥ एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥ ५७ ॥ पुत्रशोकातुराः सर्वे पाण्डवाः सह कृष्णया ॥ स्वानां मृतानां यत् कृत्यं चक्रुर्निर्हरणादिकम् ॥५८॥ इति श्रीभा० म० प्रथ० द्रौणिनिग्रहो नाम सप्तमोऽध्यायः ॥७॥

सूत उवाच ॥ अथ ते संपरेतानां स्वानामुदकमिच्छताम् ॥ दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः ॥ १ ॥ ते निनीयोदकं सर्वे विलप्य च भृशं पुनः॥आप्लुता हरिपादाब्जरजःपूतसरिज्जले॥२॥तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम्॥गान्धारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः॥३॥सान्त्वयामास मुनिभिर्हतबन्धूञ्छुचाऽर्पितान्॥भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियाम् ॥ ४ ॥ साधयित्वाऽजातशत्रोः स्वं राज्यं कितवैर्हृतम् ॥ घातयित्वाऽसतो राज्ञः कचस्पर्शक्षतायुषः ॥ ५ ॥ याजयित्वाऽश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ॥ तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥ ६ ॥ आमन्त्र्य पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः ॥ द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥ ७ ॥

धृतराष्ट्रं गान्धारीं द्रौपदीं पृथां भीमादिसहितं युधिष्ठिरं च ऋषिभिः सह कृष्णः उपायशून्यां कालस्य गतिं दर्शयन् सान्त्वयामास ॥३॥४॥ ततो दुष्टान् नृपान् घातयित्वा युधिष्ठिरस्य राज्यं संसाध्य ॥ ५ ॥ त्रिभिरश्वमेधैर्धर्मराजं याजयित्वा तद्यशः इंद्रस्येव दिक्षु विस्तारयन् ॥६॥ पाण्डवान् पृष्ट्वा सात्यकिनोद्धवेन च युतो व्यासादिभिः पूजितश्च श्रीकृष्णो द्वारकां गन्तुं रथम् समारुरोह ॥ ७ ॥

---

१ निर्हरणं बाह्यं नयनम् । २ चौरप्रायैर्दुर्योधनादिभिः । ३ क्षत-नष्टम् ।

एतस्मिन्नवसरे उत्तरां धावन्तीं भीतां सतीं ददर्श ॥८॥ सा जगाद हे कृष्ण कृष्ण मां पाहि त्वत्तोऽन्यं रक्षकं न पश्यामि ॥९॥ अयं तप्तायसः शरो मां दग्धुं संमुखमायातिं ॥ स तु मां काम दहतु । परं मे गर्भो मा पततु ॥१०॥ सूत उवाच ॥ इति तस्याः दीनं वचः श्रुत्वा शरोऽयं द्रौणेरस्त्रमपाण्डवं भूतलं कर्तुं प्राप्तमिति ज्ञातवान् ॥११॥ तदैव पांडवाः स्वोपर्यापततः पञ्चशरान् दृष्ट्वाऽस्त्राणि जगृहुः ॥१२॥ तदा भक्त

गन्तुं कृतमतिर्ब्रह्मन् द्वारकां रथमास्थितः ॥ उपलेभेऽभिधावन्तीमुत्तरां भयविह्वलाम् ॥ ८ ॥ पाहि पाहि महायोगिन् देवदेव जगत्पते ॥ नान्यं त्वदभयं पश्ये यत्र मृत्युः परस्परम् ॥ ९ ॥ अभिद्रवति मामीश शरस्तप्तायसो विभो ॥ कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥ १० ॥ सूत उवाच ॥ उपधार्य वचस्तस्या भगवान् भक्तवत्सलः ॥ अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ ११ ॥ तर्ह्येवाऽथ मुनिश्रेष्ठ पाण्डवाः पञ्च सायकान् ॥ आत्मनोऽभिमुखान्दीप्तानालक्ष्यास्त्राण्युपाददुः ॥ १२ ॥ व्यसनं वीक्ष्य तत्तेषामनन्यविषयात्मनाम् ॥ सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः ॥१३॥ अन्तःस्थः सर्वभूतानामात्मा योगेश्वरो हरिः॥स्वमायया्ऽऽवृणोद्गर्भं वैराट्याः कुरुतन्तवे॥१४॥ यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं चाप्रतिक्रियम् ॥ वैष्णवं तेज आसाद्य समशाम्यद् भृगूद्वह ॥१५॥ मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ॥ य इदं मायया देव्या सृजत्यवति हन्त्यजः ॥ १६ ॥ ब्रह्मतेजोविनिर्मुक्तैरात्मजैः सह कृष्णया॥ प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ॥ १७ ॥

वत्सलः कृष्णः स्वानां तेषां संकटं वीक्ष्य सुदर्शनेन तद्रक्षां चकार ॥ १३ ॥ कुरुवंशवृद्ध्यर्थं स्वमाययोत्तरायाः गर्भं छादयामास ॥१४॥ हे शौनक ! अमोघमपि ब्रह्मास्त्रं तद् विष्णुतेजसा शान्तिं जगाम ॥ १५ ॥ एतद्सृष्ट्यादिकर्तरि श्रीकृष्णे आश्चर्यं न मन्यस्व ॥१६॥ ततो ब्रह्मास्त्रविनिर्मुक्तैः पाण्डवादिभिः सह कुन्ती प्रयाणाभिमुखं कृष्णं स्तौति ॥ १७ ॥

१ यत्र लोके । २ भुवनमिति शेषः । ३ स्वैकनिष्ठानामित्यर्थः । ४ आत्माऽन्तर्यामी योगेश्वर इति वैशिष्ट्यस्यापि प्रवेशघटनार्थम् ।

कुंत्युवाच ॥ हे भगवन् ! आद्यं पुरुषं त्वां सर्वप्राणिनामन्तर्बहिःस्थितमपि तैरदृश्यं नमस्करोमि ॥१८॥ हे ईश ! मायाजवनिकाच्छन्नस्त्वं देहाभिमानिनां पुंसां न लक्ष्यसे ॥१९॥ किंच परमहंसानां योगिनामपि दुर्लक्ष्यं त्वां वयं स्त्रियः कथं हि पश्येम ॥२०॥ ततः कृष्णाय वासुदेवाय देवकीनन्दनाय गोविन्दाय पंकजनाभाय पंकजमालिने पंकजनेत्राय केवलं नमस्करोमि ॥ २१ ॥ २२ ॥ हे भगवन् ! यथा कंसेन रुद्धा देवकी

कुन्त्युवाच ॥ नमस्ते पुरुषं त्वाऽऽद्यमीश्वरं प्रकृतेः परम् ॥ अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम् ॥ १८ ॥ माया जवनिकाच्छन्नमज्ञाऽधोक्षजमव्ययम् ॥ न लक्ष्यसे मूढदृशां नटो नाट्यधरो यथा ॥ १९ ॥ तथा परमहंसानां मुनीनाममलात्मनाम् ॥ भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥ २० ॥ कृष्णाय वासुदेवाय देवकीनन्दनाय च ॥ नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ २१ ॥ नमः पङ्कजनाभाय नमः पङ्कजमालिने ॥ नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २२ ॥ यथा हृषीकेश खलेन देवकी कंसेन रुद्धाऽतिचिरं शुचाऽर्पिता ॥ विमोचिताऽहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥ २३ ॥ विषान्महाग्नेः पुरुषाददर्शनादसत्सभायां वनवासकृच्छ्रतः ॥ मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥२४॥ विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो ॥ भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २५ ॥ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् ॥ नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम् ॥ २६ ॥

त्वया विमोचिता तथाऽहमपि पांडवैः सह दुःखान्मुहुर्मुहुर्विमोचिता॥ २३ ॥ तथा हि—विषमोदकाज्ञाक्षागृहदाहाद्धिडिम्बादिराक्षसेभ्यो वनवासदुःखात् युद्धे वीराणां शस्त्रतः सम्प्रति च द्रौण्यस्त्रतो वयं रक्षिताः ॥२४॥ हे जगद्गुरो ! अस्माकं शश्वद्विपदः सन्तु । यतस्तासु भवतो दर्शनं भवति ॥ २५ ॥ श्र्यादिभिर्गर्वितः पुमान् कृष्ण इति नामाभिधातुमपि न शक्नोति ॥ २६ ॥

१ भक्तियोगानभिज्ञा । २ अधः अक्षजमिन्द्रियजं ज्ञानं यस्मात्तम् । ३ अपरिच्छिन्नम् । ४ पुंसामिति शेषः । ५ अलक्ष्यः । ६ नास्ति पुनरपि भवदर्शनं यस्मात्तत् । ७ अकिञ्चनानां विषभूतम् ।

॥ २७ ॥ हे कृष्ण ! सर्वत्र समं चरन्तं त्वामाद्यन्तशून्यं नियन्तारं कालं मन्ये एवंभूताय निष्किंचनवित्ताय ते शांतायात्मारामाय नमः ॥२८॥ तव चेष्टितं कोऽपि न वेत्ति। तव कश्चित् प्रियो द्वेष्यश्च नास्ति ॥२९॥ एवंभूतस्य तव तिर्यगादिषु यज्जन्म तद् विडम्बनमात्रम् ॥३०॥ किंच त्वया दधिभांडस्फोटने कृते यशोदा यावत् त्वां बद्धुं रज्जुं जग्राह तत्क्षणमेव मां ताडयिष्यतीति भयभावनया स्वमुखमधः कृत्वा

नमोऽकिंचनवित्ताय निवृत्तगुणवृत्तये ॥ आत्मारामाय शान्ताय कैवल्यपतये नमः ॥२७॥ मन्ये त्वां कालमीशानमनादिनिधनं विभुम् ॥ समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥२८॥ न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडम्बनम् ॥ न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद् द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम् ॥२९॥ जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ॥ तिर्यङ्नृषिषु यादस्सु तदत्यन्तविडम्बनम् ॥ ३० ॥ गोप्याददे त्वयि कृतागसि दाम तावद्या ते दशाऽश्रुकलिलाञ्जनसंभ्रमाक्षम् ॥ वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति ॥ ३१ ॥ केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ॥ यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम् ॥ ३२ ॥ अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ॥ अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥ ३३ ॥ भारावतरणायान्ये भुवो नाव इवोदधौ ॥ सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः ॥ ३४ ॥

स्थितस्य तव या दशा सा मां मोहयति ॥ ३१ ॥ अपिच प्रियस्य यदुवंशस्य कीर्तये तत्कुले त्वं जात इति केचिदाहुः। यथा मलयगिरेः केवलं कीर्तये तस्मिंश्चन्दनं भवति ॥३२॥ अपरे वासुदेवस्य भार्यायां देवकीसंज्ञायां ताभ्यामेव सुतपः पृश्निरूपाभ्यां प्रार्थितः सन् विश्वस्य क्षेमाय राक्षसानां च नाशाय जात इत्याहुः ॥ ३३ ॥ अन्ये तु ब्रह्मप्रार्थनया भूभारहरणाय जात इति वदंति ॥ ३४ ॥



१ भक्तरूपवित्ताय। २ निवृत्ता धर्मादिविषया यस्मात्तस्मै। ३ कैवल्यं दातुं समर्थाय। ४ यद्यस्मात्वत्तो निमित्तभूतात्। ५ न त्वयि वैषम्यमिति भावः। ६ अनुकरणमवताररूपेण। ७ अनुग्रहनिग्रहरूपा। ८ ऋति सवर्णे ऋ वा' इति ईषत्स्पृष्ट ऋकारः। ९ अश्रुमिश्रमंजनं ययोस्ते व्याकुले चाक्षिणी यस्मिंस्तत्। १० यद्यस्मात्त्वत्तः। ११ पुण्यश्लोकस्य युधिष्ठिरस्य कीर्तये यदोरेव कीर्तय इति वा। १२ प्रथम पुरुष आर्षः। १३ अभ्यंत्यमिति पाठः सुगमः।

इतरे तु संसारेऽस्मिन्क्लिष्टानां जनानां मायानिवृत्तये श्रवणस्मरणाद्यर्हाणि कर्माणि कर्तुं जात इति ॥३५॥ एवंभूतस्य ते चरितं शृण्वंति गायंति च ते संसारनाशकं त्वदीयं पादपंकजं पश्यंति ॥३६॥ हे भक्तपालक! अस्मांस्त्वं सुहृदोऽद्य त्यजसि किम् त्वत्पदाम्बुजाद् विनाऽन्य आश्रयो नास्ति ॥ ३७ ॥ किंच यदा त्वं नास्मान् पश्यसि तदा मत्पुत्राः शूरा अपि नितरां तुच्छा एव ॥ ३८ ॥ अपि च इयं भूमिस्त्वत्पदैश्चिह्निता

भवेऽस्मिन्क्लिश्यमानानामविद्याकामकर्मभिः ॥ श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥ ३५ ॥ शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः ॥ त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥ ३६ ॥ अप्यद्य नस्त्वं स्वकृतेहितं[1] प्रभो जिहाससि स्वित्सुहृदोऽनुजीविनः ॥ येषां न चान्यद्भवतः पदाम्बुजात्परायणं राजसु योजितांहसाम्[2] ॥ ३७ ॥ के वयं नामरूपाभ्यां[3] यदुभिः सह पाण्डवाः ॥ भवतोऽदर्शनं यर्हि हृषीकाणामिवे-शितुः[4][5] ॥ ॥ ३८ ॥ नेयं शोभिष्यते तत्र यथेदानीं गदाधर ॥ त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः[6] ॥ ३९ ॥ इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ॥ वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः ॥ ४० ॥ अथ विश्वेश विश्वात्मन्विश्व-मूर्ते स्वकेषु मे ॥ स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु ॥४१॥ त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ॥ रतिमु-द्वहतादद्धा[7] गङ्गेवौघमुदन्वति ॥ ४२ ॥ श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्[8]राजन्यवंशदहनानपवर्ग[9]वीर्य ॥ गोविन्द गोद्विजसुरार्तिहरावतार योगेश्वराखिलगुरो भगवन्नमस्ते ॥ ४३ ॥

सम्प्रति यथा भाति तथा त्वयि निर्गते सति न शोभिष्यते ॥३९॥ अपि च इमे दशौषधिनदीसमुद्रादयस्तव वीक्षणाद् वर्धंते ॥४०॥ अथ हे विश्वेश! यादवेषु पांडवेषु च मे स्नेहपाशं छिन्धि ॥ ४१ ॥ अथ च मम मतिरनन्यविषया त्वयि प्रीतिमखण्डां करोतु ॥ ४२ ॥ हे कृष्ण हे अर्जुनसखे! हे गोविंद! योगेश्वर ते नमोऽस्तु ॥ ॥४३ ॥

---

१ स्वानां कृतमीहितं येन तत्संबुद्धिः । २ योजितं दुःखं तेषाम् । ३ नाम्ना विख्यात्या रूपेण समृद्धया च । ४ इन्द्रियाणाम् । ५ जीवस्य । ६ स्वानि असाधारणानि लक्षणानि वज्रादीनि । ७ प्राचीन पुस्तके रतिमुद्वहतोतद्वत् इति । ८ ध्रुक् द्रोही । ९ अपवर्गः क्षयः ।

सूत उवाच ॥ हे शौनक ! एवं कुन्त्या स्तुतः कृष्णो मन्दं जहास ॥ ४४ ॥ ततः कुंत्युक्तं स्वीकृत्य रथस्थानात् पुनर्गजसाह्वयं प्रविश्य सुभद्रा-
दिस्त्रियः आमन्त्र्य च यास्यन् सन् धर्मेण निवारितः ॥४५॥ अथ व्यासाद्यैः कृष्णेन च बोधितोऽपि शोकयुक्तो धर्मो विवेकं न प्राप ॥४६॥
ततो हे विप्राः सुहृद्वधं चिन्तयन् मोहं प्राप्तो धर्म आह ॥४७॥ अहो ! हृदि रूढं मम तदेतदज्ञानं पश्यत । किं तत् । श्वादिभक्ष्यदेहस्यार्थे मयाऽक्षौ-
हिण्यो हताः ॥४८॥ अपिच बालगुरुसुहृदादीनां द्रोहं कुर्वतो मे नरकाद् बहुवत्सरैरपि मोक्षो न स्यात् ॥ ४९ ॥ किंच युद्धे द्विषां वधः न पापम्

सूत उवाच ॥ पृथयेत्थं कलपदैः परिणूताखिलोदयः ॥ मन्दं जहास वैकुण्ठो मोहयन्निव मायया ॥ ४४ ॥ तां बाढ-
मित्युपामन्त्र्य प्रविश्य गजसाह्वयम् ॥ स्त्रियश्च स्वपुरं यास्यन्प्रेम्णा राज्ञा निवारितः ॥ ४५ ॥ व्यासाद्यैरीश्वरेहाज्ञैः
कृष्णेनाद्भुतकर्मणा ॥ प्रबोधितोऽपीतिहासैर्नाबुध्यत शुचाऽर्पितः ॥४६॥ आह राजा धर्मसुतश्चिन्तयन्सुहृदां वधम् ॥
प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः ॥ ४७ ॥ अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः ॥ पारक्यस्यैव देहस्य
बह्व्यो मेऽक्षौहिणीर्हताः ॥ ४८ ॥ बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ॥ न मे स्यान्निरयान्मोक्षो ह्यपि वर्षायुतायुतैः
॥ ४९ ॥ नैनो राज्ञः प्रजाभर्तुर्धर्मयुद्धे वधो द्विषाम् ॥ इति मे न तु बोधाय कल्पते शासनं वचः ॥ ५० ॥ स्त्रीणां
मद्धतबन्धूनां द्रोहो योऽसाविहोत्थितः ॥ कर्मभिर्गृहमेधीयैर्नाहं कल्पो व्यपोहितुम् ॥ ५१ ॥ यथा पङ्केन पङ्काम्भः
सुरया वा सुराकृतम् ॥ भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥ ५२ ॥ इति श्रीभा० म० प्र० अष्टमोऽध्यायः ॥ ८ ॥
सूत उवाच ॥ इति भीतः प्रजाद्रोहात्सर्वधर्मविवित्सया ॥ ततो विनशनं प्रागाद्यत्र देवव्रतोऽपतत् ॥ १ ॥

अतः पापमेवेदम् ॥ ५० ॥ अन्यच्च युद्धे पुंसां वधो भवतु नाम धर्मः । मया यासां पतयो हतास्तासां स्त्रीणां यो द्रोहः उत्पन्नस्तं नाशयितुं गृह-
स्थकर्मभिर्नाहं समर्थः ॥ ५१ ॥ किंच यथा मद्यलेशदूषितं पात्रं बहुमद्येन शुद्धं न भवति एवमेकामपि भूतहत्यां हिंसाप्रायैर्यज्ञैर्मार्ष्टुं नार्हतीति
॥ ५२ ॥ इति श्रीभा० चू० प्र० अष्टमोऽध्यायः ॥ ८ ॥ युधिष्ठिराय भीष्मेण सर्वधर्मनिरूपणम् ॥ कृष्णस्तुतिश्च मुक्तिश्च नवमे तस्य वर्ण्यते
॥ १ ॥ सूत उवाच ॥ एवं प्रजाद्रोहाद् भीतो धर्मः यत्र भीष्मः शरैः पपात तस्मिन् कुरुक्षेत्रे धर्मजिज्ञासया जगाम ॥ १ ॥

तदा सर्वे भ्रातरो रथैर्ऋषयश्च व्यासधौम्यादयो विप्राश्च तमन्वगच्छन् ॥ २ ॥ हे शौनक ! सार्जुनो भगवानपि तमन्वगच्छत् ॥ तदा धर्मो बंधुभिः कुबेर इव शुशुभे ॥ ३ ॥ ततो भूमौ देवमिव साक्षात् पतितं भीष्मं दृष्ट्वा कृष्णेन सह सर्वे पाण्डवाः प्रणेमुः ॥४॥ तत्क्षणमेव देवर्षयो राजर्षयश्च भीष्मं द्रष्टुमाजग्मुः ॥५॥ तथा पर्वतो नारदो धौम्यो व्यासो बृहदश्वो भरद्वाजः परशुरामः ॥६॥ वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदोऽसितः कक्षीवान् गौतमोऽत्रिः कौशिकः सुदर्शनः ॥७॥ शुकः कश्यपो बृहस्पतिः अन्ये च मुनयः शिष्यैः सह भीष्मं द्रष्टुम् आजग्मुः ॥ ८ ॥

तदा ते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः ॥ अन्वगच्छन्रथैर्विप्रा व्यासधौम्यादयस्तथा ॥ २ ॥ भगवानपि विप्रर्षे रथेन सधनंजयः ॥ स तैर्व्यरोचत नृपः कुबेर इव गुह्यकैः ॥ ३ ॥ दृष्ट्वा निपतितं भूमौ दिवश्च्युतमिवामरम् ॥ प्रणेमुः पाण्डवा भीष्मं सानुगाः सह चक्रिणा ॥४॥ तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तम ॥ राजर्षयश्च तत्रासन्द्रष्टुं भरतपुंगवम् ॥ ॥ ५ ॥ पर्वतो नारदो धौम्यो भगवान्बादरायणः ॥ बृहदश्वो भरद्वाजःसशिष्यो रेणुकासुतः ॥६॥ वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदोऽसितः ॥ कक्षीवान्गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥ ७ ॥ अन्ये च मुनयो ब्रह्मन्ब्रह्मरातादयोऽमलाः ॥ शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः ॥८॥ तान्समेतान्महाभागानुपलभ्य वसूत्तमः ॥ पूजयामास धर्मज्ञो देश कालविभागवित् ॥ ९ ॥ कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ॥ हृदिस्थं पूजयामास माययोपात्तविग्रहम् ॥ १० ॥ पाण्डुपुत्रानुपासीनान्प्रश्रयप्रेमसंगतान् ॥ अभ्याचष्टानुरागास्रैरन्धीभूतेन चक्षुषा ॥ ११ ॥ अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनन्दनाः ॥ जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥ संस्थितेऽतिरथे पाण्डौ पृथा बालप्रजा वधूः ॥ युष्मत्कृते बहून्क्लेशान्प्राप्ता तोकवती मुहुः ॥ १३ ॥

आगतान् तान् प्रति शरतल्पस्थो भीष्मो नमस्कारेणपूजयामास ॥९॥ समीपस्थं श्रीकृष्णं च वचसा पूजयामास ॥१०॥ ततः समीपं आसीनान् नम्रतया स्नेहेन च युक्तान् पाण्डवान् ददर्श जगाद च ॥११॥ हे पाण्डवाः ! यूयं कष्टेन जीवितुं नार्हथ ॥ यतो यूयं विप्रधर्माच्युताश्रयाः स्थ ॥ १२ ॥ पाण्डौ मृते कुन्ती युष्मत्कृते बहून् क्लेशान् प्राप्ता ॥ १३ ॥

---

१ 'बहवः' इ० पा० ।

तत् सर्वं कालकृतं मन्ये ॥ सर्वोऽप्ययं लोकः कालाधीनोऽस्ति ॥ १४ ॥ अहो यत्र धर्मसुतो राजा भीमो गदापाणिरर्जुनो धनुर्धरो गाण्डीवं धनुः कृष्णो मित्रं तत्रापि विपत् ॥ १५ ॥ कृष्णस्य कर्तुमिष्टं कर्हिचित् पुमान् न वेद । यद्विजिज्ञासया कवयोऽपि मुह्यन्ति ॥१६॥ अतस्त्वं कृष्णानुवर्ती सन् प्रजाः पाहि ॥ १७ ॥ एष श्रीकृष्णो मायया लोकं मोहयन् गुप्तो यदुषु चरति ॥१८॥ हे नृप ! अस्य प्रभावं शिवनारदादयो

सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ॥ सपालो यद्वशे लोको वायोरिव घनावलिः ॥१४॥ यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ॥ कृष्णोऽस्त्री गाण्डिवं चापं सुहृत्कृष्णस्ततो विपत् ॥ १५ ॥ न ह्यस्य कर्हिचिद्राजन्पुमान्वेद विधित्सितम् ॥ यद्विजिज्ञासया युक्ता मुह्यन्ते कवयोऽपि हि ॥१६॥ तस्मादिदं दैवतन्त्रं व्यवस्य भरतर्षभ ॥ तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो ॥ १७ ॥ एष वै भगवान्साक्षादाद्यो नारायणः पुमान् ॥ मोहयन्मायया लोकं गूढश्चरति वृष्णिषु ॥ १८ ॥ अस्यानुभावं भगवान्वेद गुह्यतमं शिवः ॥ देवर्षिर्नारदः साक्षाद्भगवान्कपिलो नृप ॥ १९ ॥ यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ॥ अकरोः सचिवं दूतं सौहृदादथ सारथिम् ॥ २० ॥ सर्वात्मनः समदृशो ह्यद्वयस्यानहंकृतेः ॥ तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥२१॥ तथाऽप्येकान्तभक्तेषु पश्य भूपानुकम्पितम् ॥ यन्मेऽसूंस्त्यजतः साक्षात्कृष्णो दर्शनमागतः ॥ २२ ॥ भक्त्याऽऽवेश्य मनो यस्मिन्वाचा यन्नाम कीर्तयन् ॥ त्यजन्कलेवरं योगी मुच्यते कामकर्मभिः ॥२३॥ स देवदेवो भगवान् प्रतीक्षतां कलेवरं यावदिदं हिनोम्यहम् ॥ प्रसन्नहासारुणलोचनोल्लसन्मुखाम्बुजो ध्यानपथश्चतुर्भुजः ॥ २४ ॥

विदुः ॥१९॥ यं त्वं मातुलेयं मित्रं प्रधानं सारथिं च मन्यसे ॥२०॥ तस्य समदृश ईश्वरस्य नीचोच्चकर्मकृतं मतिवैषम्यं क्वापि नास्ति ॥२१॥ तथाऽप्येकांतभक्तेषु तस्य दयां पश्य ॥ यत एवंभूतो भगवान् प्राणत्यागं कुर्वतो मे दर्शनं प्राप्तः ॥२२॥ यस्मिन् कृष्णे मनः स्थापयित्वा वाण्या तन्नाम कीर्तयन् यो योगी कलेवरं त्यजति स कर्मभिर्मुच्यते ॥ २३ ॥ अतः स भगवान् यावदहं कलेवरं त्यजामि तावत् मां पश्यतु ॥ २४ ॥

१ 'सपालः' इ० पा० । २ सुखदुःखादि । ३ ईश्वराधीनम् । ४ ध्यानस्य पन्था अन्येषां ध्यानाविषय एवेत्यर्थः ।

सूत उवाच ॥ एवं भीष्मवचः श्रुत्वा युधिष्ठिरः शरपंजरस्थं तमृषीणां शृण्वतां विविधान् धर्मान् पप्रच्छ ॥ २५ ॥ तदा भीष्मो नानाख्यानेतिहासेषु संक्षेपविस्तारयोगतः साधारणनरजातिधर्मान् वर्णाश्रमधर्मान् राजदानमोक्षस्त्रीधर्मान्धर्मार्थकाममोक्षांश्च वर्णयामास ॥२६॥२७॥२८॥ एवं धर्मं वर्णयतः सतो योगिनः भीष्मस्य यः प्रियः स उत्तरायणः कालः प्राप्तः ॥ २९ ॥ तदा भीष्मो वाणीं संहृत्य निस्संगं मनोऽग्रस्थिते

सूत उवाच ॥ युधिष्ठिरस्तदाकर्ण्य शयानं शरपञ्जरे ॥ अपृच्छद्विविधान्धर्मानृषीणामनुशृण्वताम् ॥ २५ ॥ पुरुषस्वभावविहितान्यथावर्णं यथाऽऽश्रमम् ॥ वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान् ॥ २६ ॥ दानधर्मान्राजधर्मान्मोक्षधर्मान्विभागशः ॥ स्त्रीधर्मान्भगवद्धर्मान्समासव्यासयोगतः ॥ २७ ॥ धर्मार्थकाममोक्षांश्च सहोपायान्यथा मुने ॥ नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित् ॥ २८ ॥ धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः ॥ यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः ॥ २९ ॥ तदोपसंहृत्य गिरः सहस्रणीर्विमुक्तसङ्गं मन आदिपुरुषे ॥ कृष्णे लसत्पीतपटे चतुर्भुजे पुरः स्थिते मीलितदृग्व्यधारयत् ॥ ३० ॥ विशुद्धया धारणया हताशुभस्तदीक्षयैवाशु गतायुधश्रमः ॥ निवृत्तसर्वेन्द्रियवृत्तिविभ्रमस्तुष्टाव जन्यं विसृजञ्जनार्दनम् ॥ ३१ ॥ भीष्म उवाच ॥ इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि ॥ स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ ३२ ॥ त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ॥ वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥ ३३ ॥

कृष्णे निश्चलं चकार ॥३०॥ भगवद्दर्शनाद् गतशरपातव्यथः स्वशरीरं मुञ्चन् कृष्णं तुष्टाव ॥ ३१ ॥ भीष्म उवाच । अहो सात्त्वतश्रेष्ठे भगवति निष्कामा मतिः समर्पिता मया ॥ ३२ ॥ त्रिभुवनसुन्दरं नीलं पीताम्बरयुतं केशकलापसंछादितमुखकमलं शरीरं दधानेऽर्जुनसारथौ

---

१ आम्नातमुभयं प्रवृत्तिनिवृत्तिरूपलक्षणं येषां तान् । २ इच्छामृत्योः । ३ रथिसहस्रस्य नेता पालकः । ४ 'व्यथः' इ० पा० । ५ अवितृष्णेतिछेदेऽवितृप्ता भगवतीत्यर्थः । ६ यदुश्रेष्ठे । ७ विगतो भूमायस्मात्तस्मिन् परमेश्वरे । यमपेक्ष्यान्यत्र महत्त्वं नास्तीत्यर्थः । ८ योगमायाम् । ९ यद्यतः प्रकृतेः ।

भगवति मे प्रीतिरस्तु ॥३३॥ युधि मद्बाणैर्विभिद्यमानत्वचि तुरगखुररजसा विधूम्रविष्वक्कचलुलितश्रमवार्यलंकृतास्ये श्रीकृष्णे मनोऽस्तु ॥ ३४ ॥ अर्जुनवचो निशम्य स्वपरसैन्ययोर्मध्ये रथं स्थापयित्वा स्वदृष्ट्या द्रोण एप इति परसैनिकानामायुर्हृतवति भगवति मम प्रीतिरस्तु ॥ ३५ ॥ किंच यो युद्धे स्वजनवधाद् विमुखस्य पार्थस्य विद्योपदेशेन अहं हन्तेत्यादिकुमतिं जहार। तस्य चरणे मे रतिरस्तु ॥ ३६ ॥ यो-ऽशस्त्र एवाहं साहाय्यमात्रं करिष्यामीत्येवंभूतां स्वप्रतिज्ञां त्यक्त्वा श्रीकृष्णं शस्त्रं ग्राहयिष्यामीत्येवंरूपां मम प्रतिज्ञां सत्यां कर्तुं हस्ते रथ

युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलंकृतास्ये ॥ मम निशितशरैर्विभिद्यमानत्वचि विलसत्कचेऽस्तु कृष्ण आत्मा ॥३४ सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य ॥ स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥३५॥ व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या ॥ कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ३६ ॥ स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः ॥ धृतरथचरणो-ऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥३७॥ शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ॥ प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥ ३८ ॥ विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ॥ भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः स्वरूपम् ॥३९॥ ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ॥ कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन्किल यस्य गोपवध्वः ॥ ४० ॥ मुनिगणनृपवर्यसकुलेऽन्तः सदसि युधिष्ठिरराजसूय एषाम् ॥ अर्हणमुपपेद ईक्षणीयो मम दृशि गोचर एष आविरात्मा ॥ ४१ ॥

चक्रं धृत्वा रथादवप्लुत्य मां हन्तुं समीपमाययौ ॥ ३७ ॥ मम तीक्ष्णबाणैर्हतो विध्वस्तकवचो रुधिरव्याप्तश्च भगवानाततायिनो मे वधार्थं प्राप्तः स मे गतिरस्तु ॥३८॥ किंच अर्जुनरथकुटुम्बे गृहीतप्रतोदे धृतहयरश्मिनि सारथ्यश्रिया शोभमाने भगवति मुमूर्षोर्मम रतिरस्तु ॥३९॥ यस्य गतिविलासादिभिः प्राप्तमानाः गोपिकाः यस्य भगवतः स्वरूपं प्राप्ताः ॥ ४० ॥ तथा च युधिष्ठिरराजसूये मुनिगणादीनां प्रेक्षणीयः श्रीकृष्णोऽग्रपूजां यः प्राप स विश्वात्मा मम दृष्टिगोचरोऽस्ति। अहो मे भाग्यम् ॥ ४१ ॥



१ दूरस्थित- । २ चलतीति गौः पृथिवी यस्मात्सः । ३ रथ एव कुटुम्बमकृत्यशतैरपि, रक्षणीयो यस्य तस्मिन् । ४ अगमन् । ५ प्रकटो वर्तते ।

एवंभूतं योगिनां हृदि स्थितं श्रीकृष्णं विधूतमदः प्राप्तोऽस्मि ॥४२॥ सूत उवाच ॥ एवं स्वात्मभूते परमात्मनि सर्ववृत्तिभिर्मनः स्थापयित्वा स भीष्म उपरराम ॥४३॥ ततो ब्रह्मणि प्राप्तं भीष्मं ज्ञात्वा ते ऋषयस्तूष्णीं बभूवुः ॥४४॥ तदा देवमानववादिता दुन्दुभयो नेदुः साधवः प्रशशंसुः खात पुष्पवृष्टयश्च पेतुः ॥४५॥ ततो युधिष्ठिरस्तस्य भीष्मस्य प्रेतकार्याणि कारयित्वा क्षणं दुःखितो बभूव॥४६॥ ततो हृष्टा मुनयः

तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम्[1] ॥ प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥ ४२ ॥ सूत उवाच ॥ कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः ॥ आत्मन्यात्मानमावेश्य सोऽन्तःश्वास[2] उपारमत् ॥४३॥ संपद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ॥ सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥ ॥ ४४ ॥ तत्र दुन्दुभयो नेदुर्देवमानववादिताः ॥ शशंसुः साधवो राज्ञां खात्पेतुः पुष्पवृष्टयः ॥४५ ॥ तस्य निर्हरणादीनि संपरेतस्य भार्गव ॥ युधिष्ठिर कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥४६॥ तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः ॥ ततस्ते कृष्णहृदयाः स्वाश्रमान्प्रययुः पुनः ॥४७॥ ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ॥ पितरं सान्त्वयामास गान्धारीं च तपस्विनीम्[3] ॥४८॥ पित्रा चानुमतो राजा वासुदेवानुमोदितः ॥ चकार राज्यं धर्मेण पितृपैतामहं विभुः ॥४९॥ इति श्रीभा० म० प्रथ० युधिष्ठिरराज्यप्रलम्भनं नाम नवमोऽध्यायः ॥ ९ ॥ शौनक उवाच ॥ हत्वा स्वरिक्थस्पृध[4] आततायिनो युधिष्ठिरो धर्मभृतां वरिष्ठः ॥ सहानुजैः प्रत्यवरुद्धभोजनः[5] कथं प्रवृत्तः किमकारषीत्ततः ॥ १ ॥

श्रीकृष्णं स्तुत्वा स्वाश्रमं ययुः ॥४७॥ युधिष्ठिरः कृष्णेन सह हस्तिनापुरं गत्वा धृतराष्ट्रं गान्धारीं च सान्त्वयित्वा ॥४८॥ धृतराष्ट्रकृष्णाभ्यां समनुज्ञातः सन् धर्मेण राज्यं चकार ॥४९॥ इति श्री भा० चू० प्रथ० नवमोऽध्यायः ॥९॥ दशमे कृतकार्यस्य हस्तिनापुरतो हरेः ॥ स्त्रीभिः संस्तूयमानस्य वर्ण्यते द्वारकागमः ॥ १ ॥ शौनक उवाच ॥ अथ युधिष्ठिरः स्वरिपून् हत्वा राज्यं प्राप्य किं चकार ॥ १ ॥

१ स्वर्निर्मितानाम् । २ अन्तरेव विलीन श्वासो यस्य सः । ३ सन्तापवतीम् । ४ स्वधनस्पृर्धावतः । ५ वन्धुवधदुःखात्संकुचितभोगः ।

सूत उवाच । नष्टं कुरुवंशं परीक्षिद्रक्षणेनाङ्कुरितं कृत्वा धर्मं राज्ये स्थापयित्वा श्रीकृष्णः प्रसन्नो बभूव॥२॥ततो धर्मो भीष्मोक्तं भगवतोक्तं च धर्मं श्रुत्वा महेन्द्र इव महीं शशास ॥३॥ धर्मे राज्यपालके सति पर्जन्यः कामं ववर्ष, मही कामदुघा बभूव, गावो बहु दुग्धं दुदुहुः॥४॥ नद्यः समुद्रगिरयो वनस्पतिलतौषधय ऋतौ ऋतौ फलन्ति स्म ॥५॥ आधयो व्याधयः क्लेशाश्च जन्तूनां नाभवन् ॥६॥ ततः श्रीकृष्णो हस्तिनापुरे

सूत उवाच ॥ वंशं कुरोर्वंशदवाग्निनिर्हृतं संरोहयित्वा भवभावनो हरिः ॥ निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह ॥२॥ निशम्य भीष्मोक्तमथाच्युतोक्तं प्रवृत्तविज्ञानविधूतविभ्रमः ॥ शशास गामिन्द्र इवाजिताश्रयः परिध्युपान्तामनुजानुवर्तिनः ॥ ३ ॥ कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ॥ सिषिचुः स्म व्रजान्गावः पयसोधस्वतीर्मुदा ॥४॥ नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः ॥ फलन्त्योषधयः सर्वाः काममन्वृतु तस्य वै ॥५॥ नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः ॥ अजातशत्रावभवञ्जन्तूनां राज्ञि कर्हिचित् ॥६॥ उषित्वा हास्तिनपुरे मासान्कतिपयान्हरिः ॥ सुहृदां च विशोकाय स्वसुश्च प्रियकाम्यया ॥ ७ ॥ आमन्त्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम् ॥ आरुरोह रथं कश्चित्परिष्वक्तोऽभिवादितः ॥ ८ ॥ सुभद्रा द्रौपदी कुन्ती विराटतनया तथा ॥ गान्धारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ ॥ ९ ॥ वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः ॥ न सेहिरे विमुह्यन्तो विरहं शार्ङ्गधन्वनः ॥ १० ॥ सत्सङ्गान्मुक्तदुस्सङ्गो हातुं नोत्सहते बुधः ॥ कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥ ११ ॥

कतिचिद् मासान् सुहृदां विशोकाय स्थित्वा ॥७॥ ततः कैश्चित् समालिंगितः कैश्चिदभिवादितो युधिष्ठिरमामन्त्र्य नमस्कृत्य द्वारकां गन्तुं रथमारुरोह॥८॥तदा सुभद्रा द्रौपदी कुन्ती विराटतनया गान्धारी धृतराष्ट्रो युयुत्सुः कृपो नकुलसहदेवौ॥९॥ भीमो धौम्यः सत्यवत्यादयःस्त्रियश्च भगवतो वियोगं न सेहिरे ॥ १० ॥ अहो यस्य यशः श्रुत्वा ज्ञानी सन् तं त्यक्तुं नोत्सहते ॥ ११ ॥



---

१ प्राप्तं विज्ञानं जगन्न स्वतन्त्रमित्येवम्भूतं तेन विधूतो विभ्रमोऽहं कर्तेति मोहो यस्य सः । २ कृष्णाश्रयः । ३ समुद्रपर्यन्ताम् । ४ स्थूलोधसः । ५ मनोव्यथाः । ६ रोगाः । ७ त्रिविधा आदिदैविकादयः शीतोष्णादिकृताः । ८ सुभद्रायाः ।

तस्मिन् भगवति दर्शनस्पर्शसंलापशयनासनभोजनैर्न्यस्तधियः पाण्डवास्तद्विरहं कथं सहेरन् ॥१२॥ किंच ते पाण्डवाः कृष्णं पश्यन्तः सन्तः पूजानयनाद्यर्थं चलन्ति स्म ॥ १३ ॥ तथा कृष्णे गृहात् निर्गते सति बान्धवस्त्रियोऽशुभं मा भूदित्यश्रूणि न्यरुन्धन् ॥१४॥ तदा मृदङ्गशङ्खभेर्यादयो दुन्दुभयश्च नेदुः ॥ १५ ॥ तथा प्रासादशिखरारूढाः कौरवस्त्रियः श्रीकृष्णं पुष्पैर्ववृषुः ॥१६॥ तदाऽर्जुनो मुक्तादामवि-

तस्मिन्न्यस्तधियः पार्थाः सहेरन्विरहं कथम् ॥ दर्शनस्पर्शसंलापशयनासनभोजनैः ॥१२॥ सर्वे तेऽनिमिषैरक्षैस्तमनुद्रुतचेतसः ॥ वीक्षन्तः स्नेहसंबद्धा विचेलुस्तत्र तत्र ह ॥ १३ ॥ न्यरुन्धन्नुद्गलद्बाष्पमौत्कंठ्याद्देवकीसुते ॥ निर्यात्यागारान्नोऽभद्रमिति स्याद्बान्धवस्त्रियः ॥ १४ ॥ मृदङ्गशङ्खभेर्यश्च वीणापणवगोमुखाः ॥ धुन्धुर्यानकघण्टाद्या नेदुर्दुन्दुभयस्तथा ॥ १५ ॥ प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया ॥ ववृषुः कुसुमैः कृष्णं प्रेमव्रीडास्मितेक्षणाः ॥ ॥ १६ ॥ सितातपत्रं जग्राह मुक्तादामविभूषितम् ॥ रत्नदण्डं गुडाकेशः[1] प्रियः प्रियतमस्य ह ॥ १७ ॥ उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते ॥ विकीर्यमाणः कुसुमै रेजे मधुपतिः पथि ॥ १८ ॥ अश्रूयन्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः ॥ नानुरूपानुरूपाश्च[2] निर्गुणस्य गुणात्मनः ॥ १९ ॥ अन्योन्यमासीत्संजल्प उत्तमश्लोकचेतसाम् ॥ कौरवेन्द्रपुरस्त्रीणां सर्वश्रुतिमनोहरः ॥ २० ॥ स्त्रिय ऊचुः ॥ स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष[3] आत्मनि[4] ॥ अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्[5]निशि[6] सुप्तशक्तिषु[7] ॥ २१ ॥

भूषितं रत्नदण्डं श्वेतच्छत्रं जग्राह ॥१७॥ उद्धवसात्यकी द्वौ चामरे जगृहतुः ॥१८॥ विप्रा आशिषस्तत्र तत्र ददुः ॥१९॥ किंच कौरवस्त्रीणां परस्परं सर्वश्रुतिमनोहरं भाषणं बभूव ॥२०॥ तत्र कृष्णस्य तेजस्सौन्दर्याद्यतिशयेन विस्मिताभ्यः सखीभ्यः इतराः स्त्रियः कथयन्ति ॥ स वै इति । हे सख्यः ! अत्र विस्मयो न कार्यः ॥ यो गुणक्षोभात् पूर्वं प्रलये चैकः पुरुष आसीत् स एवायं श्रीकृष्णः ॥ २१ ॥

---

१ गुडाका निद्रा तदीशो जितनिद्रोऽर्जुनः । २ निर्गुणस्याननुरूपा गुणात्मनो मनुष्यरूपस्यानुरूपाः संधिरार्षः । ३ निष्प्रपंचे । ४ निजस्वरूपे । ५ लुप्तसप्तम्यन्तमिदं लीनरूपेषु जीवेष्वित्यर्थः । ६ प्रलये । ७ जीवोपाधिभूतसत्त्वादिशक्तिषु लयमापन्नेषु ।

अनामरूपः स जीवे रूपनामनी कर्तुमिच्छन् स्वकालशक्तिप्रेरितां स्वांशभूतजीवानां मोहिनीं प्रकृतिमनुससार ॥२२॥ जितेन्द्रिया जितप्राणा ज्ञानिनो यत्पदं पश्यन्ति स एव बुद्धिं शोधयितुमर्हति न योगादयः ॥२३॥ हे सखि ! गुह्येषु वेदेषु गुह्यवादिभिर्गीतसत्कथो यः स एवायम् ॥२४॥ यदा दुष्टा राजानोऽधर्मेण प्राणान् पुष्णन्ति तदा जगत्क्षेमाय यो रूपाणि धत्ते स एवायं श्रीकृष्णः ॥२५॥ अहो यदोः कुलं धन्यं

स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम्[1] ॥ अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृत् ॥ २२ ॥ स वा अयं यत्पदमत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः ॥ पश्यन्ति भक्त्युत्कलिता-[2] मलात्मना नन्वेष सत्त्वं परिमार्ष्टुमर्हति ॥ २३ ॥ स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः ॥ य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते ॥ २४ ॥ सदा ह्यधर्मेण तमोधियो नृपा जीवन्ति तत्रैष हि सत्त्वतः किल ॥ धत्ते भगं[3] सत्यमृतं[4] दयां यशो भवाय रूपाणि दधद्युगे युगे ॥ २५ ॥ अहो अलं श्लाघ्यतमं यदोः कुलमहो अलं पुण्यतमं मधोर्वनम् ॥ यदेष पुंसामृषभः श्रियः पतिः स्वजन्मना चङ्क्रमणेन चाञ्चति ॥ २६ ॥ अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः ॥ पश्यन्ति नित्यं यदनुग्रहेषितं[5] स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ २७ ॥ नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ॥ पिबन्ति याः सख्यधरामृतं मुहुर्व्रजस्त्रियःसंमुमुहुर्यदाशयाः[6] ॥ २८ ॥ या वीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान् हि शुष्मिणः[7] ॥ प्रद्युम्नसाम्बाम्बसुतादयोऽपरा याश्चाहृता भौमवधे सहस्रशः ॥ २९ ॥

मथुरा च धन्या यस्मात् श्रीकृष्ण स्वजन्मना गमनेन च यत् पूजयति ॥२६॥ अहो द्वारकाऽपि धन्या ॥ यतस्तस्यां प्रजा नित्यस्मितावलोकं भगवन्तं पश्यन्ति ॥२७॥ हे सखि ! अस्य पत्नीभिर्नूनं जन्मान्तरेषु व्रतस्नानादिना परमेश्वरः पूजितो यतोऽस्याधरामृतं पिबन्त्यो मोहं प्रापुः ॥२८॥ किंच शिशुपालादीन् प्रमथ्य वीर्यमूल्येन नीताः रुक्मिणीजाम्बवत्यादयः स्त्रियो धन्याः ॥ २९ ॥



१ स्रष्टुमिच्छन्तीम् २ उत्कलिता उत्कण्ठिता । ३ ऐश्वर्यम् । ४ यथार्थोपदेशकत्वम् । ५ 'अनुग्रहेषितम् अनुग्रहोषितम् इ० च पा० । ६ यदधरगतचित्ताः । ७ बलिष्ठान् ।

यत एता अशौचमस्वातन्त्र्यं स्त्रीत्वं शोभनं कुर्वते । यासां गृहात् भगवान् कदाचिदपि न निर्गच्छति ॥३०॥ एवं पुरस्त्रीणां गिरः श्रुत्वा हास्यावलोकनेन ताः संमानयन् कृष्णो ययौ ॥३१॥ तदा धर्मः शत्रुभ्यः शंकितः सन् संरक्षणार्थं हरेश्चतुरङ्गिणीं सेनां ददौ ॥३२॥ अथ दूरागतान् पाण्डवान् निवर्त्योद्धवादिभिः सह कृष्णः स्वपुरीं ययौ ॥३३॥ तत्र मार्गे कुरुजाङ्गलपाञ्चालशूरसेनब्रह्मावर्तकुरुक्षेत्रमत्स्यसारस्वतान् ॥३४॥ मरुसौवीराऽऽभीरान् देशान् समतिक्रम्य द्वारकादेशसमीपे प्राप्तः ॥३५॥ तत्रत्यैर्जनैस्तत्र तत्र मार्गे पूजितः सन् रथादवतीर्य सायंसंध्यां कृतवान् ॥३६॥

एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं बत साधु कुर्वते ॥ यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥ ३० ॥ एवंविधा गदन्तीनां स गिरः पुरयोषिताम् ॥ निरीक्षणेनाभिनन्दन् सस्मितेन ययौ हरिः ॥ ३१ ॥ अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ॥ परेभ्यःशङ्कितः स्नेहात्प्रायुङ्क्त चतुरङ्गिणीम् ॥३२॥ अथ दूरागताञ्छौरिः कौरवान्विरहातुरान् ॥ सन्निवर्त्य दृढं स्निग्धान्प्रायात्स्वनगरीं प्रियैः ॥३३॥ कुरुजाङ्गलपाञ्चालाञ्छूरसेनान्सयामुनान् ॥ ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान्सारस्वतानथ ॥ ३४ ॥ मरुधन्वमतिक्रम्य सौवीराभीरयोः परान् ॥ आनर्तान्भार्गवोपागाच्छ्रान्तवाहो मनाग्विभुः ॥ ३५ ॥ तत्र तत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हणः ॥ सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ॥ ३६ ॥ इति श्रीभा० म०प्र० दशमोऽध्यायः ॥ १० ॥ सूत उवाच ॥ आनर्तान्स उपव्रज्य स्वृद्धाञ्जनपदान्स्वकान् ॥ दध्मौ दरवरं तेषां विषादं शमयन्निव ॥ १ ॥

इति भा० प्र० चू० दशमोऽध्यायः ॥ १० ॥ आनर्तैः स्तूयमानस्य पुरीं निर्विश्य बन्धुभिः । एकादशे रतिः सम्यग्यादवेन्द्रस्य वर्ण्यते ॥१॥ उत्सवैरुच्चरत्पौरमुदञ्चद्ध्वजतोरणम् ॥ उल्लसद्रत्नदीपालि स्वपुरं प्रभुराविशत् ॥२॥ सूत उवाच ॥ ततः कृष्णो द्वारकाप्रदेशान् प्राप्य तत्रस्थानां विषादं शमयन् शङ्खं दध्मौ ॥ १ ॥

१ स्वातन्त्र्यरूपं भद्रमपास्तं यस्मात्तत् । २ व्याहारैः पारिजातविप्रियवर हरणैर्वाऽऽनन्दयन् । ३ हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधम्' । ४ भूमिष्ठः । ५ उवकम् ।

स दाध्मायमानः शङ्खः कृष्णस्य हस्तकमलसंपुटे सशब्दो हंस इव शुशुभे ॥२॥ तच्छङ्खनादं श्रुत्वा भगवद्दर्शनलालसाः प्रजाः प्रत्युज्जग्मुः॥३॥ ततः कृष्णाय प्राभृतानि दत्त्वा प्रीत्या प्रसन्नमुखाः सत्यस्तमात्मारामं वदन्ति स्म ॥ ४ ॥ ५ ॥ हे नाथ ! ब्रह्मेन्द्रादिवन्दितं तव चरणारविन्दं नताः स्मः ॥ ६ ॥ हे भगवन् ! माता सुहृत् पतिः पिता गुरुश्च त्वमेवासि नः ॥ ७ ॥ अहो देवानामपि तव दर्शनं दुर्लभं यत् तदस्माकं

स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याधरशोणशोणिमा ॥ दाध्मायमानः करकञ्जसंपुटे यथाऽब्जखण्डे कलहंस उत्स्वनः ॥२॥ तमुपश्रुत्य निनदं जगद्भयभयावहम् ॥ प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः ॥ ३ ॥ तत्रोपनीतबलयो रवेर्दीपमिवाऽऽदृताः॥ आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥४॥ प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षगद्गदया गिरा ॥ पितरं सर्वसुहृदमवितारमिवार्भकाः ॥५॥ नताः स्म ते नाथ सदाऽङ्घ्रिपङ्कजं विरिञ्चिवैरिञ्च्यसुरेन्द्रवन्दितम्॥ परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परः प्रभुः ॥ ६ ॥ भवाय नस्त्वं भव विश्वभावन त्वमेव माताऽथ सुहृत्पतिः पिता ॥ त्वं सद्गुरुर्नः परमं च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥७॥ अहो सनाथा भवता स्म यद्वयं त्रैविष्टपानामपि दूरदर्शनम् ॥ प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम् ॥ ८ ॥ यर्ह्यम्बुजाक्षापससार भो भवान्कुरून्मधून्वाऽथ सुहृद्दिदृक्षया ॥ तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाऽक्ष्णोरिव नस्तवाच्युत ॥ ९ ॥ इति चोदीरिता वाचः प्रजानां भक्तवत्सलः ॥ शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन्प्राविशत्पुरीम् ॥ १० ॥ मधुभोजदशार्हार्हकुकुरान्धकवृष्णिभिः ॥ आत्मतुल्यबलैर्गुप्तां नागैर्भोगवतीमिव ॥ ११ ॥

जातम्। अतो वयं कृतार्थाः स्मः ॥८॥ हे कमलनेत्र! यदा त्वमस्मान् हित्वा सुहृद्दिदृक्षया हस्तिनापुरं गतवान् तदा क्षणः कोटिवर्षतुल्यो बभूव ॥ ९ ॥ इति प्रजानां वचः शृण्वन् दृष्ट्या तासामुपरि प्रसादं कुर्वन् कृष्णो द्वारकां विवेश ॥ १० ॥ कथं भूतां तां स्वतुल्यबलैर्मधुभोजदशार्हादियादवै रक्षिताम् ॥ ११ ॥

१ उपायनानि । २ जगतो यद्भयं तस्य भयावहम् ।

सर्वर्तुषु पुष्पादिसंपदा युक्तवृक्षलताश्रमैरुद्यानादिभिः शोभिताम् ॥१२॥ पुरद्वारगृहद्वारेषु कृततोरणां ध्वजपताकाग्रैः प्रतिहतातपाम् ॥१३॥ सुगन्धजलैः संसिक्तमार्गां फलपुष्पाक्षतांकुरैरवकीर्णाम् ॥ १४ ॥ द्वारि द्वारि पूर्णकुम्भबलिदीपादिभिः समलङ्कृताम् ॥ १५ ॥ एवं भूतां नगरीं प्राप्तं श्रीकृष्णं श्रुत्वा वसुदेवोऽक्रूर उग्रसेनो रामः प्रद्युम्नश्चारुदेष्णः सांबादयो हर्षेण त्यक्तशयनासनभोजनाः सन्तः ॥ १६ ॥ १७ ॥

सर्वर्तुसर्वविभवपुण्यवृक्षलताश्रमैः ॥ उद्यानोपवनारामैर्वृतपद्माकरश्रियम् ॥१२॥ गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम् ॥ चित्रध्वजपताकाग्रैरन्तःप्रतिहतातपाम् ॥ १३ ॥ संमार्जितमहामार्गरथ्यापणकचत्वराम् ॥ सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः ॥ १४ ॥ द्वारि द्वारि गृहाणां च दध्यक्षतफलेक्षुभिः ॥ अलंकृतां पूर्णकुम्भैर्बलिभिर्धूपदीपकैः ॥ १५ ॥ निशम्य प्रेष्ठमायान्तं वसुदेवो महामनाः ॥ अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः ॥ १६ ॥ प्रद्युम्नश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ॥ प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः ॥ १७ ॥ वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः ससुमङ्गलैः ॥ शङ्खतूर्यनिनादेन ब्रह्मघोषेण चादृताः ॥ प्रत्युज्जग्मू रथैर्हृष्टाः प्रणयागतसाध्वसाः ॥ १८ ॥ वारमुख्याश्च शतशो यानैस्तद्दर्शनोत्सुकाः ॥ लसत्कुण्डलनिर्भातकपोलवदनश्रियः ॥१९॥ नटनर्तकगन्धर्वाः सूतमागधवन्दिनः ॥ गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च ॥ २० ॥ भगवांस्तत्र बन्धूनां पौराणामनुवर्तिनाम् ॥ यथाविध्युपसंगम्य सर्वेषां मानमादधे ॥ २१ ॥ प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः ॥ आश्वास्य चाऽऽश्वपाकेभ्यो वरैश्चाभिमतैर्विभुः ॥ २२ ॥

हस्तिश्रेष्ठं पुरस्कृत्य ब्राह्मणैः शङ्खतूर्यादिवाद्यघोषेण च सह रथैः प्रत्युजग्मुः ॥ १८ ॥ तथा शतशो वेश्याः स्वलंकृता यानैर्जग्मुः ॥ १९ ॥ नटनर्तकगन्धर्वा जग्मुः । सूतमागधबंदिनो भगवच्चरितानि गायन्ति ॥ २० ॥ श्रीकृष्णोऽपि नमनालिङ्गनकरस्पर्शहास्यावलोकनैर्यथायोग्यं सुहृदां सर्वेषां पौराणां संमानं चक्रे ॥ २१ ॥ २२ ॥

---

१ कृतानि कौतुकेनोत्सवेन तोरणानि यस्यां सा । २ आपणकाः पण्यवीथयः । ३ प्रहर्षवेगनोच्छ्वसितान्युल्लङ्घितानि शयनादीनियैस्ते । शशप्लुतगतौ इति श्री० टीकायाम् उच्छ्वशित इति पाठभेद आयाति ४ सुमङ्गलपुष्पादियुक्तैः । ५ नटा नवरसाभिनयनचतुराः तालाद्यनुसारेण नृत्यन्तो नर्तकाःगन्धर्वाः गायकाः सूताः पौराणिका मागधा वंशप्रशंसकाः वंदिनः प्रस्तावसदृशोक्तयः चकारस्य वन्दिनश्चेत्यन्वयः । ६ श्वपाकानभिव्याप्य ।

ततो गुरुविप्रवृद्धादिभिराशीर्भिर्युज्यमाने श्रीकृष्णे राजमार्गं गते सति हर्म्यारूढाः पुरस्त्रियस्तं ददृशुः ॥२३॥२४॥ अहो तं नित्यं पश्यन्तीनामपि पुरस्त्रीणां दृष्टिर्नातृप्यत् ॥ २५ ॥ यस्य वक्षो लक्ष्म्याः स्थानं बहवो लोकपालानां स्थानं पदांबुजं भक्तानां स्थानम् ॥२६॥ ततो मार्गे श्वेतच्छत्र चामरैः पुष्पवर्षैः पीताम्बरेण वनमालया च कृष्णो मेघ इव बभौ ॥२७॥ एवंभूतः कृष्णः पितृगृहं प्रविष्टो मातृभिरालिङ्गितः सन् देवकीप्रमुखा



स्वयं च गुरुभिर्विप्रैः सदारैः स्थविरैरपि ॥आशीर्भिर्युज्यमानोऽन्यैर्बन्दिभिश्चाविशत्पुरम् ॥ २३ ॥ राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः ॥ हर्म्याण्यारुरुहुर्विप्र तदीक्षणमहोत्सवाः ॥ ॥२४॥ नित्यं निरीक्षमाणानां यदपि द्वारकौ-कसाम् ॥ न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम् ॥ २५ ॥ श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ॥ बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥२६॥ सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि ॥ पिशङ्गवासा वनमालया बभौ घनो यथाऽर्कोडुपचापवैद्युतैः ॥ २७ ॥ प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः ॥ ववन्दे शिरसा सप्त देवकीप्रमुखा मुदा ॥२८॥ ताः पुत्रमङ्कमारोप्य स्नेहस्नुतपयोधराः ॥ हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः ॥२९॥ अथाविशत्स्वभवनं सर्वकाममनुत्तमम् ॥ प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ॥३०॥ पत्न्यः पतिं प्रोष्य गृहानु-पागतं विलोक्य संजातमनोमहोत्सवाः ॥ उत्तस्थुरारात्सहसाऽऽसनाशयात्साकं व्रतैर्व्रीडितलोचनाननाः ॥ ३१ ॥

मातृर्ववन्दे ॥ २८ ॥ ततःस्नेहस्नुतपयोधरास्ताः पुत्रमङ्कं समारोप्य नेत्रोदकैः सिषिचुः ॥ २९ ॥ अथ यत्र स्त्रीणां षोडशसहस्राणां प्रासा-दास्तत् स्वगृहं प्राविशत् ॥ ३० ॥ ततः पत्न्य आगतं स्वपतिं विलोक्य जातमनोमहोत्सवा धृतव्रता एवाकस्मादासनादुत्तस्थुः ॥ ३१ ॥



---

१ श्रियः शोभाया धामाङ्गं यस्य तम् । २ सौन्दर्यामृतपानाय पात्रम् । ३ सारं श्रीकृष्णं गायन्ति ते भक्ताः । ४ वैद्युतं विद्युत्तेजः । ५ व्रतलक्षणं याज्ञवल्क्यस्मृतौ—"क्रीडां शरीरसंस्कारंसमाजोत्सवदर्शनम् । हास्यं परगृहं यानं त्यजेत् प्रोषितभर्तृका ॥"

आयान्तं तं पतिं दर्शनात् पूर्वं बुद्ध्या ततो दृष्टिभिस्ततः पुत्रैरालिंगनं चक्रिरे ॥३२॥ यद्यपि भगवान् समीपस्थस्तथाऽपि तस्य चरणयुगं प्रतिक्षणं नवं नवं यतश्चलाऽपि लक्ष्मीर्यत्पदं न त्यजति ॥३३॥ एवं क्षितिभारभूतानां राज्ञां मध्ये द्वेषमुत्पाद्य मिथो घातयित्वा स्वयं निववृते ॥ ३४ ॥ एवंविधः श्रीकृष्णः स्वमाययाऽवतीर्णः सन् प्राकृतवत् स्त्रीभिः सह रेमे ॥३५॥ यासां सुन्दरहास्यावलोकनादिभिः मदनोऽपि

तमात्मजैर्दृष्टिभिरन्तरात्मना दुरन्तभावाः परिरेभिरे पतिम् ॥ निरुद्धमप्यास्रवदम्बु नेत्रयोर्विलज्जतीनां भृगुवर्य वैक्लवात् ॥ ३२ ॥ यद्यप्यसौ पार्श्वगतो रहोगतस्तथाऽपि तस्याङ्घ्रियुगं नवं नवम् ॥ पदे पदे का विरमेत यत्पदाच्चलाऽपि यच्छ्रीर्न जहाति कर्हिचित् ॥ ३३ ॥ एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम् ॥ विधाय वैरं श्वसनो यथाऽनलं मिथो वधेनोपरतो निरायुधः ॥ ३४ ॥ स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया ॥ रेमे स्त्रीरत्नकूटस्थो भगवान्प्राकृतो यथा ॥ ३५ ॥ उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतो मदनोऽपि यासाम् ॥ संमुह्य चापमजहात्प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ ३६ ॥ तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम् ॥ आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः ॥ ३७ ॥ एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ॥ न युज्यतेऽसदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥ ३८ ॥ तं मेनिरेऽबला मूढाः स्त्रैणं चानुव्रतं रहः ॥ अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ॥ ३९ ॥ इति श्रीभागवतेमहापुराणे प्रथमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

मुह्यन् लज्जया धनुस्तत्याज ताः स्त्रियो भगवतो मनो विलासैर्वशीकर्तुं न शेकुः ॥३६॥ ईदृशं भगवन्तं लोको विषयिणं मन्यते। यतोऽबुधः॥३७॥ किंच भगवत ऐश्वर्यं तदेव । किं तत् । प्रकृतिस्थोऽपि तद्गुणैर्न सज्जत इति यत् ॥३८॥ ईशं तं मूढाः स्त्रियः स्त्रैणं मेनिरे । यथाऽहंकारवृत्तयः क्षेत्रज्ञं स्वाधीनं मन्यन्ते तद्वत् ॥ ३९ ॥ इति श्री भागवते महापु० प्रथमस्कन्धे० चू० एकादशोऽध्यायः ॥ ११ ॥

---

१ पुत्रैर्गृहीतकण्ठमालिङ्गयन्त्य इव स्वयमालिङ्गितवत्य इत्यर्थः । २ गम्भीराभिप्रायाः । ३ उपशान्तः । ४ कूटं कदम्बः । ५ व्याप्रियमाणम् । ६ अनुसृतम् ।

पुरोक्तं यत् प्रसंगाय द्रौणिदण्डादि विस्तरात्। द्वादशे तु तदेवाथ परीक्षिज्जन्म वर्ण्यते ॥१॥ शौनक उवाच। हे सूत! अश्वत्थाम्ना मुक्तेन ब्रह्मास्त्रेण पीडित उत्तराया गर्भः कृष्णेन पुनर्जीवितः ॥१॥ तस्य परीक्षितो जन्म कर्माणि निधनम् ॥२॥ तथा तस्य शुको ज्ञानं यथा ददौ तत् सर्वं श्रोतुमिच्छामि। तद् नो वद ॥३॥ सूत उवाच॥ कृष्णपादाब्जसेवया निःस्पृहः सन् युधिष्ठिरः पितृवत् प्रजाः पालयामास ॥४॥ मुकुन्दमनसस्तस्य सम्पदो यज्ञोपार्जितलोकाः स्त्रियो भ्रातरो मही जम्बूद्वीपाधिपत्यं स्वर्गव्याप्तं यशश्च ॥५॥ एते राज्ञो हर्षं न दुदुः। क्षुधितस्य स्रक्चन्दनादयो यथा

शौनक उवाच ॥ अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा ॥ उत्तराया हतो गर्भ ईशेनाजीवितः पुनः ॥१॥ तस्य जन्म महाबुद्धेः कर्माणि च महात्मनः ॥ निधनं च यथैवासीत्स प्रेत्य गतवान्यथा ॥२॥ तदिदं श्रोतुमिच्छामि गदितुं यदि मन्यसे ॥ ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः ॥३॥ सूत उवाच॥ अपीपलद्धर्मराजः पितृवद्रञ्जयन्प्रजाः ॥ निःस्पृहः सर्वकामेभ्यः कृष्णपादाब्जसेवया ॥ ४ ॥ सम्पदः क्रतवो विप्रा महिषी भ्रातरो मही ॥ जम्बूद्वीपाधिपत्यं च यशश्च त्रिदिवं गतम् ॥५॥ किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः ॥ अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे ॥६॥ मातुर्गर्भगतो वीरः स सदा भृगुनन्दन ॥ ददर्श पुरुषं कंचिद्दह्यमानोऽस्त्रतेजसा ॥ ७ ॥ अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम् ॥ अपीच्यदर्शनं श्यामं तडिद्वाससमच्युतम् ॥८॥ श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम् ॥ क्षतजाक्षं गदापाणिमात्मनः सर्वतोदिशम् ॥९॥ परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः ॥ * अस्त्रतेजः स्वगदया नीहारमिव गोपतिः ॥ विधमन्तं संनिकर्षे पर्यैक्षत क इत्यसौ ॥१०॥ विधूय तदमेयात्मा भगवान्धर्मगुब्विभुः ॥ मिषतो दशमास्यस्य तत्रैवान्तर्दधे हरिः ॥११॥

॥६॥ अथ प्रस्तुतमाह। गर्भगतः परीक्षित् ब्रह्मास्त्रतेजसा दह्यमानः सन् कश्चित् पुरुषं ददर्श ॥७॥ तं वर्णयति अङ्गुष्ठमात्रं सुवर्णमुकुटं पीताम्बरधरं श्यामम् ॥८॥ चतुर्बाहुं तप्तकांचनकुण्डलं सर्वतोदिशं परिभ्रमन्तं गदया ब्रह्मास्त्रतेजो नाशयन्तं पुरुषं दृष्ट्वा क एष इति वितर्कितवान् ॥ ९ ॥ १० ॥ ततो दशमासपरिच्छेद्यस्य राज्ञः परीक्षितः पश्यतः सतो ब्रह्मास्त्रं दूरीकृत्य हरिस्तत्रैवाऽन्तर्दधे ॥ ११ ॥



१ "गृणीहि नः" इत्यपि पाठः सुबोधिन्याम्। २ देहं त्यक्त्वा। ३ 'पादानुसेवया' इ०। ४ अतिसुन्दरम्। * कौमोदकीमतिश्रेष्ठां भक्तरक्षणतत्पराम्॥ इत्यधिकः क्वचित् पाठः। ५ नाशयन्तम्॥

ततः सर्वगुणसूचके सानुकूलग्रहलग्ने काले पाण्डोर्वंशधरः परीक्षित् जज्ञे॥१२॥तदा प्रीतमना धर्मराजो धौम्यकृपादिभिर्मङ्गलं वाचयित्वा तस्य जातकं कृत्वा॥१३॥सुवर्णं गां महीं ग्रामान् हस्तिनोऽश्वान् स्वन्नं च ब्राह्मणेभ्यो ददौ॥१४॥ ततस्तुष्टा ब्राह्मणा राजानं वदन्ति स्म तद् तथा। एष पुरुवंशे नाशं गते सति वोऽनुग्रहार्थाय श्रीविष्णुना दत्तः॥१५॥१६॥ अतो लोके नाम्ना विष्णुरात इति महाभागवतो भविष्यति॥१७॥ युधिष्ठिर उवाच

ततः सर्वगुणोदर्के[1] सानुकूलग्रहोदये॥ जज्ञे वंशधरः पाण्डोर्भूयः पाण्डुरिवौजसा॥१२॥ तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः॥ जातकं कारयामास वाचयित्वा च मङ्गलम्॥१३॥ हिरण्यं गां महीं ग्रामान्हस्त्यश्वान्नृपतिर्वरान्॥प्रादात्स्वन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित्॥१४॥ तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयानतम्॥ एष ह्यस्मिन्प्रजातन्तौ कुरूणां पौरवर्षभ॥१५॥ दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि[2]॥ रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना॥१६॥तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः॥ भविष्यति न संदेहो महाभागवतो महान्॥१७॥ युधिष्ठिर उवाच॥ अप्येष वंश्यान्राजर्षीन्पुण्यश्लोकान्महात्मनः॥ अनुवर्तिता सुयशसां[3] साधुवादेन सत्तमाः॥१८॥ ब्राह्मणा ऊचुः॥ पार्थ प्रजाऽविता साक्षादिक्ष्वाकुरिव मानवः॥ ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा॥१९॥ एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः॥ यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम्॥२०॥ धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः॥ हुताश इव दुर्धर्षः समुद्र इव दुस्तरः॥२१॥मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव॥तितिक्षुर्वसुधेवाऽसौ सहिष्णुः पितराविव॥२२॥

हे विप्राः! अयं परीक्षित् वंश्यान् राजर्षीन् सुयशसाऽनुवर्तिता भविष्यति किम्॥१८॥ ब्राह्मणा ऊचुः। हे धर्म! परीक्षिदिक्ष्वाकुरिव प्रजापालकः श्रीराम इव ब्रह्मण्यः सत्यवक्ता च॥१९॥ शिबिरिव दाता शरण्यश्च। भरत इव ज्ञातीनां यशोविस्तारकः॥२०॥ अर्जुनकार्तवीर्याविव धन्वी पावक इव दुस्सहः समुद्र इव गम्भीरः॥२१॥ सिंह इव पराक्रमी हिमवानिव सतां सेव्यो भूरिव क्षमावान् पितराविव सहनयोग्यः॥२२॥

---

१ सर्वे गुणा उदर्कं उत्तरफलं यस्य तस्मिन्। २ नाशम्। ३ 'स्वियशा इत्यपि पाठः।

साम्ये ब्रह्मसमः प्रसादे शिवसमः सर्वभूतानामाश्रयदाने विष्णुसमः ॥२३॥ रन्तिदेव इव दाता ययातिरिव धार्मिकः ॥२४॥ बलिरिव धैर्यवान् भक्त्या प्रह्लाद इव किं च अश्वमेधत्रयस्य कर्ता वृद्धानां सेवकः ॥२५॥ राजर्षीणां जनयिता कुमार्गिणां शास्ता कलेर्निग्रहीता धर्मस्य रक्षकः ॥२६॥ एवंविधो भविष्यति । किं च द्विजपुत्रप्रेरिततक्षकात् स्वमृत्युं श्रुत्वा मुक्तसङ्गः सन् ॥२७॥ श्रीशुकात् ज्ञानं प्राप्य गङ्गायां देहं त्यक्त्वा साक्षात् हरेः पदं यास्यति ॥२८॥ इति राज्ञे कथयित्वा प्राप्तपूजा ज्योतिर्विदो विप्राः स्वागृहान् ययुः ॥२९॥ ततः स नरेषु गर्भदृष्टं पुरुषमनु-

पितामहसमः साम्ये प्रसादे गिरिशोपमः ॥ आश्रयः सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥ सर्वसद्गुण-माहात्म्य एष कृष्णमनुव्रतः ॥ रन्तिदेव इवोदारो ययातिरिव धार्मिकः ॥ २४ ॥ धृत्या बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः ॥ आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥२५॥ राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ॥ निग्रहीता कलेरेष भुवो धर्मस्य कारणात ॥ २६ ॥ तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात् ॥ प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः ॥२७॥ जिज्ञासितात्मयाथात्म्यो मुनेर्व्याससुतादसौ ॥ हित्वेदं नृप गङ्गायां यास्यत्यद्धाऽकुतोभयम् ॥ २८ ॥ इति राज्ञ उपादिश्य विप्रा जातककोविदाः ॥ लब्धोपचितयः सर्वे प्रतिजग्मुः स्वकान्गृहान् ॥२९॥ स एष लोकविख्यातः परीक्षिदिति यत्प्रभुः ॥ गर्भदृष्टमनुध्यायन्परीक्षेत नरेष्विह ॥ ३० ॥ स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः ॥ आपूर्य-माणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥३१॥ यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया ॥ राजाऽलब्धधनो दध्याव-न्यत्र करदण्डयोः ॥३२॥ तदभिप्रेतमालक्ष्य भ्रातरोऽच्युतचोदिताः ॥ धनं प्रहीणमाजह्रुरुदीच्यां दिशि भूरिशः ॥३३॥

ध्यायन्सर्वमपि नरं परीक्षेतातः परीक्षिदिति नाम्ना लोके प्रसिद्धोऽभवत् ॥३०॥ स पितृभिः पाल्यमानः शुक्लपक्षस्य चन्द्र इव ववृधे ॥ ३१ ॥ अथ पूर्वमुक्तानश्वमेधान् स्वावसरे सप्रकारं कथयति । ज्ञातिद्रोहं दूरीकर्तुमश्वमेधेन यक्ष्यमाणः करदण्डाभ्यां विनाऽलब्धधनो राजा धर्मं चिन्त-यामास ॥३२॥ ततो धर्मस्याभिप्रायं ज्ञात्वा कृष्णप्रेरिता भ्रातरं उत्तरदिशि मरुत्तस्य राज्ञः यज्ञे त्यक्तं सुवर्णपात्रादिकं धनमानीय ददुः ॥३३॥

१ जनमेजयादीनाम् । २ 'पूर्वदृष्टम्' इ० पा० ।

तेन धनेन सम्पादितयज्ञसंभारो युधिष्ठिरस्त्रिभिरश्वमेधैर्हरिमयजत् ॥३४॥ ततो हरिर्नृपं द्विजैर्याजयित्वाऽर्जुनयदुभिः सह द्वारकां ययौ ॥ ३५ ॥ ॥३६॥ इति श्रीभा० प्रथ० चू० द्वादशोऽध्यायः ॥ १२ ॥ निगमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे ॥ उक्तः पौत्राभिषेकेण वक्तुं राज्ञो महापथम् ॥१॥ सूत उवाच ॥ तीर्थयात्रायां गतो विदुरो मैत्रेयात् स्वगतिरूपं हरिं ज्ञात्वा हस्तिनापुरं जगाम ॥१॥ त्रिचतुरप्रश्नार्थज्ञानमात्रेण कृतार्थः सन्

तेन संभृतसंभारो लब्धकामो युधिष्ठिरः ॥ वाजिमेधैस्त्रिभिर्भीतो यज्ञैः समयजद्धरिम् ॥ ३४ ॥ आहूतो भगवान्राज्ञा याजयित्वा द्विजैर्नृप ॥ उवास कतिचिन्मासान्सुहृदः प्रियकाम्यया ॥ ३५ ॥ ततो राज्ञाऽभ्यनुज्ञातः कृष्णया सह बन्धुभिः ॥ ययौ द्वारवतीं ब्रह्मन्सार्जुनो यदुभिर्वृतः ॥ ३६ ॥ इति श्रीभा० म० प्रथम० द्वादशोऽध्यायः ॥ १२ ॥ सूत उवाच ॥ विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम् ॥ ज्ञात्वाऽगाद्धास्तिनपुरं तयाऽवाप्तविवित्सितः ॥ १ ॥ यावतः कृतवान्प्रश्नान्क्षत्ता कौषारवाग्रतः ॥ जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह ॥ २ ॥ तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः ॥ धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा ॥ ३ ॥ गान्धारी द्रौपदी ब्रह्मन्सुभद्रा चोत्तरा कृपी ॥ अन्याश्च जामयः पाण्डोर्ज्ञातयः ससुताः स्त्रियः ॥ ४ ॥ प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्वं इवागतम् ॥ अभिसंगम्य विधिवत्परिष्वङ्गाभिवादनैः ॥ ५ ॥ मुमुचुः प्रेमवाष्पौघं विरहौत्कण्ठ्यकातराः ॥ राजा तमर्हयाञ्चक्रे कृतासनपरिग्रहम् ॥ ६ ॥ तं भुक्तवन्तमासीनं विश्रान्तं सुखमासने ॥ प्रश्रयावनतो राजा प्राह तेषां च शृण्वताम् ॥ ७ ॥

स मैत्रेयस्य पुरतो यावतः प्रश्नान् प्रथमं कृतवान् तेभ्यः प्रश्नेभ्य उपरराम ॥२॥ ततस्तं विदुरं प्राप्तं दृष्ट्वा बन्धुभिः सह धर्मो धृतराष्ट्रो युयुत्सुः संजयः कृपः पृथा ॥३॥ गान्धारी द्रौपदी सुभद्रा कृपी स्त्रियोऽन्याश्च ॥ ४ ॥ हर्षेण संमुखं जग्मुः । तत आलिङ्गनादिभिर्मिलित्वा ॥ ५ ॥ प्रेम्णाऽश्रूणि मुमुचुः । ततो धर्म आसने उपविष्टं तं पूजयित्वा ॥ ६ ॥ सुखमासीनं तं नम्रतया सर्वेषां शृण्वतां वदति स्म ॥ ७ ॥

१ ज्ञातिद्रोहात् । २ 'आहुतः इ० पा० । ३ 'सहुवां इ० पा० । ४ तया गत्याऽवाप्तं विवित्सितं जिज्ञासितं येन सः । ५ ज्ञातिभार्याः । ६ कराङ्घ्र्यादयो यथा प्राणे क्षणमवसन्ने निश्चेष्टाः अवयवाः पश्चात्प्राणाविर्भावे उत्तिष्ठन्ति तद्वत् ।

युधिष्ठिर उवाच । हे विदुर ! विपद्गणाद् मुहुर्मोचितान् नः स्मरसि किम् ॥ ८ ॥ किंच तीर्थयात्रां कुर्वता त्वया देहवृत्तिः कथं कृता । कानि च तीर्थानि सेवितानि ॥९॥ किंच भगवद्भक्ताः स्वयं शुद्धाः सन्तः स्वान्तःस्थेन गदाभृता तीर्थानि पवित्रीकुर्वन्तश्चरन्ति ॥१०॥ अपि च अस्माकं सुहृदः कृष्णदेवता यदवः स्वपुर्यां सुखिनः सन्ति किम् । ते च क्वापि दृष्टाः श्रुता वा किम् ॥११॥ एवं राज्ञा पृष्टो विदुरो यदुकुलक्षयं विना सर्वं वर्णयामास ॥१२॥ अहो दुःखयुतान् पाण्डवान् द्रष्टुं न समर्थो यतस्ततो यदुकुलक्षयं नावर्णयत् ॥१३॥ अथ पाण्डवैः सत्कृतो विदुरो धृतराष्ट्राय तत्त्वं समुपादिदेश । नगरे च कंचित् कालमुवास ॥१४॥ ननु शूद्रोऽसौ कथमुपादिशत् । नायं शूद्रः किं तु शूद्ररूपेण यम आसीत् ॥ तत्र हेतुः

युधिष्ठिर उवाच ॥ अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान् ॥ विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः ॥ ८ ॥ कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमण्डलम् ॥ तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ॥ ९ ॥ भवद्विधा भागवतास्तीर्थीभूताः स्वयं विभो ॥ तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता ॥ १० ॥ अपि नः सुहृदस्तात बान्धवाः कृष्णदेवताः ॥ दृष्टाः श्रुता वा यदवःस्वपुर्यां सुखमासते ॥ ११ ॥ इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत् ॥ यथाऽनुभूतं क्रमशो विना यदुकुलक्षयम् ॥ १२ ॥ नन्वप्रियं दुर्विषहं नृणां स्वयमुपस्थितम् ॥ नावेदयत्सकरुणो दुःखितान्द्रष्टुमक्षमः ॥ १३ ॥ कंचित्कालं यथाऽवात्सीत्सत्कृतो देववत्सुखम् ॥ भ्रातुर्ज्येष्ठस्य श्रेयस्कृत्सर्वेषां प्रीतिमावहन् ॥ १४ ॥ अबिभ्रदर्यमा दण्डं यथावदघकारिषु ॥ यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः ॥ १५ ॥

माण्डव्यऋषेः शापात् शतवर्षपर्यन्तं यमः शूद्रत्वं दधार । तावद् यमलोके पातकिषु दण्डमर्यमा दधार । माण्डव्यशापस्य कारणमुक्तं पुराणान्तरे क्वचित् चौराननुधावन्तो राजभटा माण्डव्यऋषेस्तपश्चरतः समीपे तान् दृष्ट्वा ऋषिणा सह तान् चौरान् निबध्यानीय राज्ञे निवेदयामासुस्ततो राजा सर्वान् शूलम् आरोपयितुमाज्ञां चकार । तदा राजभटास्तथैव चक्रुस्ततो राजा तम् ऋषिं ज्ञात्वा शूलादवतार्य प्रसादयामास । ततो मुनिनायं तवापराध इति राजानं वदति स्म ॥ यमं च गत्वा कुपित उवाच । कस्मादहं शूलमारोपित इति । यमेनोक्तं त्वं बाल्ये शलभं कुशाग्रेणाविध्य क्रोधितवांस्तेन दोषेणेति । तच्छ्रुत्वा माण्डव्यस्तं शशाप । पञ्चवर्षपर्यन्तं बालस्य पुण्यपापं न वर्तते । एवं सति

बाल्येऽजानतो मे महान्तं दण्ड यतस्त्वं कारितवांस्ततस्त्वं शूद्रो भवेति ॥१६॥ अथ लब्धराज्यो युधिष्ठिरो वंशधरं परीक्षितं दृष्ट्वाभ्रातृभिः सह श्रिया मुमुदे ॥१६॥ एवं गृहेषु सक्तानां तेषां काल आजगाम ॥ १७ ॥ तत् ज्ञात्वा विदुरो धृतराष्ट्रं बभाषे । हे धृतराष्ट्र ! गृहात् शीघ्रं निर्गम्यताम् । अयं दुरन्तः कालः प्राप्तः । तं पश्य पश्य ॥१८॥ अरे अस्य प्रतिक्रिया प्रियैः प्राणैरपि न ॥ १९ ॥ कालेनाभिग्रस्तो जनः प्राणादिभिर्वियुज्येत किं पुनर्धनादिभिः ॥ २० ॥ तव पितृभ्रातृसुहृत्पुत्रा मृता वयश्चापि गतं देहश्च जरया ग्रस्तः सांप्रतं परगेहे वससि

युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलंधरम् ॥ भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया ॥ १६ ॥ एवं गृहेषु सक्तानां प्रमत्तानां तदीहया ॥ अत्यक्रामदविज्ञातः कालः परमदुस्तरः ॥ १७ ॥ विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत ॥ राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम् ॥ १८ ॥ प्रतिक्रिया न यस्येह कुतश्चित्कर्हिचित्प्रभो ॥ स एव भगवान्कालः सर्वेषां नः समागतः ॥१९॥ येन चैवाऽभिपन्नोऽयं प्राणैः प्रियतमैरपि ॥ जनः सद्यो वियुज्येत किमुतान्यैर्धनादिभिः ॥ २० ॥ पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयः ॥ आत्मा च जरया ग्रस्तः परगेहमुपाससे ॥ २१ ॥ अहो महीयसी जन्तोर्जीविताशा यया भवान् ॥ भीमेनावर्जितं पिण्डमादत्ते गृहपालवत् ॥ २२ ॥ अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ॥ हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत् ॥२३॥ तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः ॥ परैत्यनिच्छतो जीर्णो जरया वाससी इव ॥ २४ ॥ गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः ॥ अविज्ञातगतिर्जह्यात्स वै धीर उदाहृतः ॥ २५ ॥ यः स्वकात्परतो वेह जातनिर्वेद आत्मवान् ॥ हृदि कृत्वा हरिं गेहात्प्रव्रजेत्स नरोत्तमः ॥ २६ ॥

॥ २१ ॥ अहोजन्तोर्जीविताशा बलीयसी यतस्त्वं स्वपुत्रहन्त्रा भीमेन दत्तमन्नं श्ववद्भक्षयसि ॥ २२ ॥ किंच येषां पाण्डवानां वह्निः प्रक्षिप्तो विषं दत्तं स्त्रियश्चापमानितास्तद्दत्तान्नलब्धप्राणैः किम् न किंचित् ॥ २३ ॥ एवं दैन्यमनुभवतस्तवायं देहो वस्त्रमिव क्षीयते ॥ २४ ॥ अतो धीरो भव । धीरलक्षणमाह । स्वतः परोपदेशेन वा जातवैराग्यः सन् हृदि हरिं कृत्वा गेहाद् यो गच्छेत् स धीर इति ॥ २५ ॥ २६ ॥

१ गृहव्यापारेण । २ 'एवः' इ० पा० । ३ 'उपासते' इत्यपि पाठः । ४ 'यया' इत्यपि पाठः । ५ यशोधर्मादिशून्यम् । ६ त्यक्ताभिमानः । ७ क्व इत इत्यविज्ञाता गतिर्यस्य सः ।

त्वं तु धीरो नाभूः॥ अतस्त्वमुत्तरां दिशं गच्छ॥इतोऽर्वाक्पुंसां गुणविकर्षणःकाल एष्यति ॥२७॥ एवं विदुरेण बोधितो धृतराष्ट्रस्तेन सह स्वेषु स्नेह-पाशं छित्त्वा गृहान्निश्चक्राम ॥२८॥ गच्छन्तं पतिं दृष्ट्वा गान्धारी हिमाचलं पतिमनुजगाम ॥२९॥ ततो धर्मराजः संध्यावन्दनादि कृत्वा गुरुवन्दनार्थं गृहं प्रविष्टः सन् तौ विदुरधृतराष्ट्रौ गान्धारीं च नापश्यत्॥३०॥तत्र आसीनं संजयं पप्रच्छ। हे संजयः! अस्माकं ततो धृतराष्ट्रो विदुरो गान्धारी च क्क

अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान् ॥ इतोऽर्वाक्प्रायशः कालः पुंसां गुणविकर्षणः ॥ २७ ॥ एवं राजा विदुरेणा-नुजेन प्रज्ञाचक्षुर्बोधितो ह्याजमीढः ॥ छित्त्वा स्वेषु स्नेहपाशान्द्रढिम्नो निश्चक्राम भ्रातृसंदर्शिताध्वा ॥ २८ ॥ पतिं प्रयान्तं सुबलस्य पुत्री पतिव्रता चानुजगाम साध्वी ॥ हिमालयं न्यस्तदण्डप्रहर्षं मनस्विनामिव सत्संप्रहारः ॥ ॥ २९ ॥ अजातशत्रुः कृतमैत्रो हुताग्निर्विप्रान्नत्वा तिलगोभूमिरुक्मैः ॥ गृहं प्रविष्टो गुरुवन्दनाय न चापश्यत्पितरौ सौबलीं च ॥ ३० ॥ तत्र संजयमासीनं पप्रच्छोद्विग्नमानसः ॥ गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः ॥ अम्बा च हतपुत्राऽऽर्ता पितृव्यः क्व गतः सुहृद् ॥ ३१ ॥ अपि मय्यकृतप्रज्ञे हतबन्धुः स्वभार्यया ॥ आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् ॥ ३२ ॥ पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून् ॥ अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः ॥ ३३ ॥ सूत उवाच ॥ कृपया स्नेहवैक्लव्यात्सूतो विरहकर्शितः ॥ आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः ॥ ३४ ॥ विमृज्याऽश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना ॥ अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३५ ॥

गता ॥३१॥ मय्यपराधं शङ्कमानो गङ्गायां पपात किम् ॥३२॥ अस्मत्पितरि पाण्डौ मृते नः शिशून् यौ ररक्षतुस्तौ क्व गतौ वद ॥३३॥ सूत उवाच धृतराष्ट्रमपश्यन् पीडितः संजयः प्रत्युत्तरं न दत्तवान् ॥३४॥ ततः पाणिभ्यामश्रूणि विमृज्य बुद्ध्या मनसि धैर्यं धृत्वा धर्मराजं वदति स्म॥३५॥

१ अजमीढवंशजः । २ चित्तदाढर्यात् । ३ जितेन्द्रियाणां प्रहर्षो यस्मिंस्तम् । ४ शूराणाम् । ५ तीव्र-संप्रहारदुःखदमपि केषांचित्सुखदमित्यस्य दृष्टान्तोऽयम् । ६ मैत्रं मित्रदेवताकं संध्यावन्दनम् । ७ गवल्गणस्य पुत्रः ।

संजय उवाच ॥ हे धर्मराज ! तेषां निश्चितं न जाने । तैरहं वञ्चितोऽस्मि ॥ ३६ ॥ एतस्मिन् काले तुम्बुरुणा सह नारद आगतः । तं प्रत्युत्थाय नमस्कृत्य वदति स्म ॥३७॥ युधिष्ठिर उवाच ॥ हे नारद ! अस्माकं पित्रोर्गान्धार्याश्च गतिं न वेद्मि । भवान् सर्वज्ञोऽस्ति । अतो वद ॥३८॥ अथ नारद आह । शोकं मा कुरु । यत इदं जगत् परमेश्वराधीनम् । स एव भूतानि तेषां संयोगं वियोगं च करोति । इमे लोका वाक्तन्त्यां बद्धाः

संजय उवाच ॥ नाहं वेद व्यवसितं पित्रोर्वः कुलनन्दन ॥ गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः ॥ ३६ ॥ अथाजगाम भगवान्नारदः सह तुम्बुरुः ॥ प्रत्युत्थायाभिवाद्याह सानुजोऽभ्यर्चयन्निव ॥३७॥ युधिष्ठिर उवाच ॥ नाहं वेद गतिं पित्रोर्भगवन्क गतावितः ॥ अम्बा वा हतपुत्राऽऽर्ता क गता च तपस्विनी ॥ ३८ ॥ कर्णधार इवापारे भगवन्पारदर्शकः ॥ अथाबभाषे भगवान्नारदो मुनिसत्तमः ॥३९॥ मा कंचन शुचो राजन्यदीश्वरवशं जगत् ॥ लोकाः सपाला यस्येमे वहन्ति बलिमीशितुः ॥४०॥ स संयुनक्ति भूतानि स एव वियुनक्ति च ॥ यथा गावो नसि प्रोतास्तन्त्यां बद्धाः स्वदामभिः ॥ वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः ॥४१॥ यथा क्रीडोपस्कराणां संयोगविगमाविह ॥ इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ४२ ॥ यन्मन्यसे ध्रुवं लोकमध्रुवं वा न चोभयम् ॥ सर्वथा हि न शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥ ४३ ॥ तस्माज्जह्यङ्ग वैक्लव्यमज्ञानकृतमात्मनः ॥ कथं त्वनाथाः कृपणा वर्तेरन्वनमाश्रिताः ॥ ४४ ॥ कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः ॥ कथमन्यांस्तु गोपायेत्सर्पग्रस्तो यथा परम् ॥ ४५ ॥

सन्त ईश्वराय बलिं हरन्ति । यथा दामभिर्बद्धा वृषभाः ॥३९॥४०॥४१॥ यथा क्रीडाकर्तुर्बालस्येच्छया क्रीडोपस्कराणां संयोगवियोगौ भवतस्तथेश्वरेच्छया नृणां संयोगवियोगौ स्याताम् ॥४२॥ तस्मादिह लोके स्नेहात् विना शोकहेतुर्नास्ति ॥४३॥ अतो मत्पितरो वनं गताः सन्तः कथं वर्तेरन्निति चिन्तां त्यज ॥ ४४ ॥ अहो ! अयं देहः कालाधीनः सन् कथं रक्षेदन्यान् सर्पग्रस्तो यथाऽन्यं न रक्षति तद्वत् ॥ ४५ ॥

१ वेदव्यायाम् । २ ब्रह्मचारीत्यादिभिः ।

अथ सर्वेषामीश्वरकल्पिता वृत्तिरस्त्येव । तथा हि । सहस्तानां जीवनं पश्वादीनि । चतुष्पदां जीवनं तृणादीनि । एवं जीवस्य जीवो जीवनम् ॥ ४६ ॥ हे राजन् ! जगति नारायण एक एव मायया बहुधा भाति॥ ४७ ॥ स एव भगवान् दैत्यानां नाशाय भूम्यां कालरूपोऽवतीर्णोऽस्ति ॥ ४८ ॥ स देवकार्यं निष्पादितवान् । किंचित् शेषं प्रतीक्षते तावत् यूयं प्रतीक्षध्वम् ॥४९॥ प्रस्तुतमाह । गान्धार्या सह धृतराष्ट्रो विदुरश्च हिमवतो दक्षिणेन ऋषीणामाश्रमं गतः ॥ ५० ॥ यत्र गङ्गाऽऽत्मानम् ऋषिप्रीतये सप्तधा व्यधात् तत् तीर्थं सप्तस्रोत इति

अहस्तानि सहस्तानामपदानि चतुष्पदाम् ॥ फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥ ४६ ॥ तदिदं भगवान्राजन्नेक आत्माऽऽत्मनां स्वदृक् ॥ अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा ॥ ४७ ॥ सोऽयमद्य महाराज भगवान् भूतभावनः ॥ कालरूपोऽवतीर्णोऽस्यामभवाय सुरद्विषाम् ॥ ४८ ॥ निष्पादितं देवकृत्यमवशेषं प्रतीक्षते ॥ तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः ॥ ४९ ॥ धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया ॥ दक्षिणेन हिमवत ऋषीणामाश्रमं गतः ॥ ५० ॥ स्रोतोभिः सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात् ॥ सप्तानां प्रीतये नाम्ना सप्तस्रोतः प्रचक्षते ॥ ५१ ॥ स्नात्वाऽनुसवनं तस्मिन्हुत्वा चाग्नीन्यथाविधि ॥ अब्भक्ष उपशान्तात्मा स आस्ते विगतैषणः ॥ ५२ ॥ जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः ॥ हरिभावनया ध्वस्तरजःसत्त्वतमोमलः ॥ ५३ ॥ विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ॥ ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥ ५४ ॥ ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः ॥ निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः तस्यान्तरायो मैवाभूः संन्यस्ताखिलकर्मणः ॥ ५५ ॥

वदन्ति ॥ ५१ ॥ यत्र त्रिकालं स्नात्वाऽग्निं हुत्वा स्वस्थचित्तोऽब्भक्षः ॥ ५२ ॥ जितासनो जितश्वासो हरिभावनया ध्वस्तरजःसत्त्वतमोमलो धृतराष्ट्रः ॥ ५३ ॥ मनो बुद्धावेकीकृत्य बुद्धिं जीवे प्रविलाप्य घटाकाशं महाकाशे यथा विलाप्यते तद्वत् जीवं ब्रह्मणि प्रविलाप्य ॥ ५४ ॥ निरुद्धेन्द्रियः सन् वृक्ष इव निश्चल आस्ते । तस्य त्वं गत्वा विघ्नो मा भूः ॥ ५५ ॥



---

१ भोक्तृणाम् । २ अनन्तरो बहिश्च । भोक्तृ भोग्यरूपश्च । ३ मायागुणानामुदर्कं उत्तरफलं वासना । ४ निरुद्धानि करणानि चक्षुरादीनि आशयो मनश्च यस्य ।

स धृतराष्ट्र इतः पंचमेऽहनि देहं त्यक्ष्यति स च भस्मीभविष्यति ॥५६॥ ततो गान्धार्यपि पर्णशालासहिते पत्युर्देहे योगाग्निना दह्यमाने सति बहिः स्थिता सती वह्निं प्रवेक्ष्यति ॥५७॥ विदुरस्तदाश्चर्यं दृष्ट्वा हर्षशोकयुतः सन् तीर्थस्नानार्थं गमिष्यति ॥५८॥ हे शौनक! एवं धर्ममुक्त्वा तुम्बुरुणा सह नारदः स्वर्गं गतः। युधिष्ठिरो नारदवचो हृदि कृत्वा शोकं जहौ ॥५९॥ इति श्रीभा० प्रथम० चू० त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशे त्वरी-

स वा अद्यतनाद्राजन् परतः पञ्चमेऽहनि ॥ कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति ॥५६॥ दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ॥ बहिःस्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति ॥५७॥ विदुरस्तु तदाश्चर्यं निशम्य कुरुनन्दन ॥ हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः ॥५८॥ इत्युक्त्वाऽथारुहत् स्वर्गं नारदः सहतुम्बुरुः ॥ युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥ ५९ ॥ इति श्रीभा० म० प्रथ० त्रयोदशोऽध्यायः ॥१३॥

सूत उवाच ॥ संप्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया॥ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥१॥ व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्जुनः ॥ ददर्श घोररूपाणि निमित्तानि कुरूद्वहः ॥२॥ कालस्य च गतिं रौद्रां विपर्यस्त-र्तुधर्मिणः ॥ पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥ जिह्मप्रायं व्यवहृतं शाठ्यमिश्रं च सौहृदम् ॥ पितृमातृसुहृद्भ्रातृदम्पतीनां च कल्कनम् ॥ ४ ॥ निमित्तान्यत्यरिष्टानि काले त्वनुगते नृणाम् ॥ लोभाद्यधर्मप्रकृतिं दृष्ट्वोवाचानुजं नृप ॥ ५ ॥

त्वानि दृष्ट्वा राजा विशङ्कितः। अशृणोदर्जुनात्कृष्णतिरोधानमितीर्यते ॥१॥ सूत उवाच ॥ हे शौनक! द्वारकायां कृष्णचेष्टितं ज्ञातुमर्जुने गते सति ॥१॥ कतिचिन्मासा गताः कालातिक्रमेऽपि पार्थो नायातः तदा धर्म उत्पातान् कालस्य घोरां गतिं च ददर्श। तदेवाह-नृणां पापां वृत्तिम् ॥२॥ ॥३॥ कपटप्रायं व्यवहारं वंचनप्रायं सख्यं पितृमातृसुहृद्भ्रातृदम्पतीनां कलहम् ॥४॥ लोभादीनां धर्मप्रवृत्तिं च दृष्ट्वा धर्मो भीमं वदति स्म ॥५॥

१ विपर्यस्ता ऋतुधर्मा यस्मिंस्तस्य। २ निशाम्य इ० पा०।

युधिष्ठिर उवाच ॥ हे भीम ! बन्धुदिदृक्षया द्वारकायां मया प्रवेशितोऽर्जुनः ॥६॥ सप्त मासा गता अद्यापि कस्य हेतोर्नायाति तद् न वेद्मि ॥७॥ नारदेन कथितः कालः स एव प्राप्तः किम् ॥८॥ यस्मात् श्रीकृष्णादस्माकं संपदो राज्यं स्त्रियः प्राणाः प्रजाः शत्रुविजयश्च सर्वमिदमासीत् स भगवान् स्वस्थानं गतः किम् ॥९॥ हे भीम ! दिव्यांश्च भौमांश्च दैहिकांश्च भयसूचकानुत्पातान् पश्य ॥१०॥ ते च मम वामा ऊर्वक्षिबाहवः

युधिष्ठिर उवाच ॥ संप्रेषितो द्वारकायां जिष्णुर्बन्धुदिदृक्षया ॥ ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ ६ ॥ गताः सप्ताधुना मासा भीमसेन तवानुजः ॥ नायाति कस्य वा हेतोर्नाहं वेदेदमञ्जसा ॥ ७ ॥ अपि देवर्षिणाऽऽदिष्टः स कालोऽयमुपस्थितः ॥ यदात्मनोऽङ्गमाक्रीडं[1] भगवानुत्सिसृक्षति ॥ ८ ॥ यस्मान्नः संपदो राज्यं दाराः प्राणाः कुलं प्रजाः ॥ आसन्सपत्नविजयो[2] लोकाश्च[3] यदनुग्रहात् ॥ ९ ॥ पश्योत्पातान्नरव्याघ्र दिव्यान् भौमान्सदैहिकान्[4] ॥ दारुणाञ्शंसतोऽदूराद्भयं नो बुद्धिमोहनम् ॥ १० ॥ ऊर्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग पुनः पुनः ॥ वेपथुश्चापि हृदये आराद्दास्यन्ति विप्रियम् ॥ ११ ॥ शिवैषोद्यन्तमादित्यमभिरौत्यनलानना[5] ॥ मामङ्ग सारमेयोऽयमभिरौति ह्यभीरुवत् ॥१२॥ शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे[6] ॥ वाहांश्च पुरुषव्याघ्र लक्षये रुदतो मम ॥ १३ ॥ मृत्युदूतः कपोतोऽयमुलूकः कम्पयन् मनः ॥ प्रत्युलूकश्च कुह्वानैरनिद्रौ शून्यमिच्छतः ॥ १४ ॥ धूम्रा दिशः परिधयः[7] कम्पते भूः सहाद्रिभिः ॥ निर्घातश्च महानासीत् साकं च स्तनयित्नुभिः[8] ॥ १५ ॥

स्फुरन्ति हृदि कम्पो वर्तते ॥ ११ ॥ एषा शिवा सूर्याभिमुखं रौति । अयं श्वा ममाभिमुखं रौति ॥१२॥ गवादयो मां वामं कुर्वन्ति । गर्दभादयो मां दक्षिणं कुर्वन्ति । मम तुरगांश्च रुदतो लक्षये ॥ १३ ॥ उलूकः काकश्च कुशब्दैर्विश्वं शून्यमिच्छतः ॥ १४ ॥ भूः कम्पते ॥ १५ ॥

१ क्रीडासाधनम् । २ शत्रूणां कर्मणो विजयः । ३ स्वर्गादयः एकादशश्लोके वर्णिताः । ४ दैहिकोत्पाताः । ५ शिवेत्यादित्रिभिर्भौमोत्पातवर्णनम् । ६ गवादयः । ७ धूम्रा दिशोऽग्निं परिधय इव लोकमावृण्वन्ति । ८ सार्धाभ्यां दिव्योत्पातवर्णनम् ।

वायुस्तीक्ष्णं वाति । मेघा रक्तं वर्षंति । सूर्यं नष्टकान्तिं ग्रहयुद्धं च पश्य ॥ १६ ॥ द्यावापृथिव्यौ ज्वलिते इव पश्य ॥१७॥ नद्यो नदः क्षुभिताः पश्य । आज्येनाऽग्निर्न ज्वलति ॥ १८ ॥ वत्साः स्तनं न पिबन्ति । गावोऽश्रुमुखा रुदन्ति ॥ १९ ॥ देवतानि रुदन्ति । जना भ्रष्टश्रियो निरानन्दा दृश्यन्ते ॥२०॥ अतः एतैरुत्पातैः कृत्वा भगवतः पदैर्हीना भूर्जातेति मन्ये ॥२१॥ एवं धर्मस्य चिन्तयतः सतोऽर्जुनो

वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ॥ असृग्वर्षन्ति जलदा बीभत्समिव सर्वतः ॥ १६ ॥ सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ॥ ससंकुलैर्भूतगणैर्ज्वलिते इव रोदसी ॥ १७ ॥ नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च ॥ न ज्वलत्यग्निराज्येन कालोऽयं किंविधास्यति ॥ १८ ॥ न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः ॥ रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे ॥ १९ ॥ दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च ॥ इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः ॥ भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः ॥ २० ॥ मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः ॥ अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा ॥ २१ ॥ इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा ॥ राज्ञः प्रत्यागमद् ब्रह्मन् यदुपुर्याः कपिध्वजः ॥ २२ ॥ तं पादयोर्निपतितमयथापूर्वमातुरम् ॥ अधोवदनमब्बिन्दून्सृजन्तं नयनाब्जयोः ॥ २३ ॥ विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः ॥ पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम् ॥ २४ ॥ युधिष्ठिर उवाच ॥ कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ॥ मधुभोजदशार्हार्हसात्त्वतान्धकवृष्णयः ॥ २५ ॥ शूरो मातामहः कच्चित्स्वस्त्यास्ते वाऽथ मारिषः ॥ मातुलः सानुजः कच्चित्कुशल्यानकदुन्दुभिः ॥ २६ ॥ सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः ॥ आसते सस्नुषाः क्षेमं देवकीप्रमुखाः स्वयम् ॥ २७ ॥

द्वारकाया आगतः ॥ २२ ॥ ततः पादयोः पतितमधोमुखंरुदन्तं नष्टकान्तिमर्जुनं विलोक्य कम्पितहृदयो धर्मो नारदोक्तं स्मरन्नर्जुनं पप्रच्छ ॥ २३ ॥ २४ ॥ युधिष्ठिर उवाच ॥ हे अर्जुन द्वारकायां मधुभोजदशार्हाद्याः सर्वे यादवाः सुखं सन्ति किम् ॥ २५ ॥ अस्मन्मातामहः शूरो मातुलो वसुदेवः कुशली कच्चित् ॥ २६ ॥ वसुदेवपत्न्यो देवक्याद्याःक्षेमयुताः सन्ति किम् ॥ २७ ॥

१ पुनर्भौमोत्पाताः ।

उग्रसेनो हृदीकः कृतवर्माऽक्रूरो जयन्ताद्याः ॥ २८ ॥ शत्रुजिद् बलरामः प्रद्युम्नोऽनिरुद्धः सुषेणश्चारुदेष्णः साम्ब ऋषभादयः सुखयुताः सन्ति किम् ॥ २९ ॥ ३० ॥ ३१ ॥ तथा कृष्णानुचराः श्रुतदेवोद्धवसुनन्दनन्दाद्याः सुखमासते किम् ॥ ३२ ॥ अपि च रामकृष्णभुजाश्रयाः सर्वेऽस्माकं कुशलं स्मरन्ति किम् ॥ ३३ ॥ तथा भक्तवत्सलः सुहृद्वृतो भगवान् स्वपुर्यां कुशली किम् ॥ ३४ ॥ लोकानां क्षेमाय

कच्चिद्राजाऽऽहुको जीवत्यसत्पुत्रोऽऽस्य चानुजः ॥ हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः ॥ २८ ॥ आसते कुशलं कच्चिद्ये च शत्रुजिदादयः ॥ कच्चिदास्ते सुखं रामो भगवान् सात्त्वतां प्रभुः ॥ २९ ॥ प्रद्युम्नःसर्ववृष्णीनां सुखमास्ते महारथः ॥ गम्भीररयोऽनिरुद्धो वर्धते भगवानुत ॥ ३० ॥ सुषेणश्चारुदेष्णश्च साम्बो जाम्बवतीसुतः ॥ अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥ तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः ॥ सुनन्दनन्दशीर्षण्या ये चान्ये सात्त्वतर्षभाः ॥ ३२ ॥ अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः ॥ अपि स्मरन्ति कुशलमस्माकं बद्धसौहृदाः ॥ ३३ ॥ भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः ॥ कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥ मङ्गलाय च लोकानां क्षेमाय च भवाय च ॥ आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान् ॥ ३५ ॥ यद्बाहुदण्डगुप्तायां स्वपुर्यां यदवोऽर्चिताः ॥ क्रीडन्ति परमानंदं महापौरुषिका इव ॥ ३६ ॥ यत्पादशुश्रूषणमुख्यकर्मणा सत्यादयो द्व्यष्टसहस्रयोषितः ॥ निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरन्ति वज्रायुधवल्लभोचिताः ॥ ३७ ॥ यद्बाहुदण्डाभ्युदयानुजीविनो यदुप्रवीरा ह्यकुतोभया मुहुः ॥ अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात्सभां सुधर्मां सुरसत्तमोचिताम् ॥ ३८ ॥

विभवाय कृष्णो यदुकुलाम्भोधौ सुखी किम् ॥ ३५ ॥ यद्बाहुरक्षितायां पुर्यां वैकुण्ठानुचरा इव यदवः क्रीडन्ति ॥ ३६ ॥ किं च यस्य चरणसेवया युद्धे श्रीकृष्णः बलेन देवान् निर्जित्य देवभोग्यान् पारिजातादीन् सत्यभामादयः सेवन्ते ॥ ३७ ॥ किं च यद्बाहुरक्षिता यदुवीरा बलादानीतां सुधर्मां सभां चरणैराक्रमन्ते स गोविन्दः सुखी किम् ॥ ३८ ॥

१ वृष्णीनां मध्ये महारथ इत्यन्वयः । २ परम आनन्दो यथा स्यात् तथा ।

अथार्जुनस्य कुशलं पृच्छति। हे अर्जुन! तवारोग्यं किम्। यतो भ्रष्टतेजा मे विभासि। किं च तव तत्रापमानो जातः किम् ॥३९॥ अमङ्गल-शब्दैरभिहतो वा त्वम्। त्वयाऽर्थिने दास्यामीति प्रतिज्ञाय न दत्तं किम् ॥४०॥ यद्वा ब्राह्मणं बालं वृद्धं गां रोगिणं स्त्रियं च शरणागतान्वा न रक्षितवान् किम् ॥४१॥ किं च अगम्यां स्त्रियं गतः किम्। अधमैर्वा समैर्वा पराभूतः किम् ॥४२॥ यद्वा वृद्धान् बालांश्च विहाय त्वया

कच्चित् तेऽनामयं तात भ्रष्टतेजा विभासि मे ॥ अलब्धमानोऽवज्ञातः किं वा तात चिरोषितः ॥ ३९ ॥ कच्चिन्नाभिहतोऽभावैः शब्दादिभिरमङ्गलैः ॥ न दत्तमुक्तमर्थिभ्य आशया यत् प्रतिश्रुतम् ॥ ४० ॥ कच्चित् त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ॥ शरणोपसृतं सत्त्वं नात्याक्षीः शरणप्रदः ॥ ४१ ॥ कच्चित् त्वं नागमोऽगम्यां गम्यां वाऽसत्कृतां स्त्रियम् ॥ पराजितो वाऽथ भवान् नोत्तमैर्नासमैः पथि ॥४२॥ अपिस्वित् पर्यभुङ्क्थास्त्वं संभोज्यान् वृद्धबालकान् ॥ जुगुप्सितं कर्म किंचित् कृतवान् न यदक्षमम् ॥ ४३ ॥ कच्चित् प्रेष्ठतमेनाथ हृदयेनात्मबन्धुना ॥ शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक् ॥ ४४ ॥ इति श्रीभा० म० प्र० युधिष्ठिरदर्शनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ सूत उवाच ॥ एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञाऽऽविकल्पितः ॥ नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥ शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ॥ विभुं तमेवानुध्यायन्नाशक्नोत् प्रतिभाषितुम् ॥ २ ॥ कृच्छ्रेण संस्तभ्य शुचः पाणिनाऽऽमृज्य नेत्रयोः ॥ परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकातरः ॥ ३ ॥

पूर्वं भोजनं कृतम् ॥४३॥ यद्वा प्रियतमेन श्रीकृष्णेन रहितोऽस्मीति मन्यसे किम्। अन्यथा तव मनःपीडा न घटेत ॥४४॥ इति श्रीभा०प्रथम० चू० चतुर्दशोऽध्यायः ॥१४॥ कलिप्रवेशमालक्ष्य धुरं न्यस्य परीक्षिति। आरुरोह नृपः स्वर्गमिति पञ्चदशेऽब्रवीत् ॥१॥ सूत उवाच। एवं धर्मराजेन विकल्पितोऽर्जुनः शोकेन शुष्यद्वदनः सन् प्रतिभाषितुं नाशक्नोत् ॥१॥२॥ ततोऽर्जुनः कृच्छ्रेण नेत्रजलं विमृज्य प्रेमण्याकुलः ॥३॥

१ बहुकालं स्थितः। २ प्रेमशून्यैः। ३ यथाऽऽशा भवति तथा दास्यामीति। ४ मलिनवस्त्रादिनाऽसत्कृताम्। ५ आ।विकल्पित इति च्छेदः नानाशंकास्पदं रूपमालक्ष्य विकल्पित इत्यर्थः। ६ कृष्णेनेतिशेषः

कृष्णस्य सख्यादीनि सारथ्यादिषु स्मृत्वा गद्गदया गिरा प्राह ॥४॥ अर्जुन उवाच ॥ हे महाराज ! श्रीकृष्णेन वञ्चितोऽस्मि । यतो देवाश्चर्यकरं मे तेजो नष्टम् ॥५॥ यस्य वियोगेन लोकोऽयमप्रियदर्शनो भवति प्राणरहितो देहो यथा तद्वत् ॥६॥ यस्याश्रयात् मया स्वयंवर आगतानां राज्ञां तेजो हृत्वा धनुषा मत्स्यो विद्धो द्रौपदी च प्राप्ता ॥७॥ तथा यस्य सान्निध्यात् सगणं महेन्द्रं विजित्य वह्नयेऽहं खाण्डवं वनं दत्तवान् मयसभा च लब्धा॥८॥यत्ते-

सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन् ॥ नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥ ४ ॥ अर्जुन उवाच ॥ वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ॥ येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥ यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः ॥ उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥ यत्संश्रयाद्द्रुपदगेहमुपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ॥ तेजो हृतं खलु मयाऽभिहतश्च मत्स्यः सज्जीकृतेन धनुषाऽधिगता च कृष्णा ॥ ७ ॥ यत्संनिधावहमु खाण्डवमग्नयेऽदामिन्द्रं च सामरगणं तरसा विजित्य ॥ लब्धा सभा मयकृताद्भुतशिल्पमाया दिग्भ्योऽहरन् नृपतयो बलिमध्वरे ते ॥८॥ यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थे आर्योऽनुजस्तव गजायुतसत्त्ववीर्यः ॥ तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन् बलिमध्वरे ते ॥ ९ ॥ पत्न्यास्तवाधिमखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरं कितवैः सभायाम् ॥ स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्यां यस्तत्स्त्रियोऽकृत हतेशविमुक्तकेशाः॥१०॥ यो नो जुगोप वनमेत्य दुरन्तकृच्छ्राद्दुर्वाससोऽरिविहितादयुताग्रभुग् यः ॥ शाकान्नशिष्टमुपभुज्य यतस्त्रिलोकीं तृप्ताममंस्त सलिले विनिमग्नसंघः ॥ ११ ॥



जसा गजायुतसत्त्ववीर्यो भीमो यज्ञार्थं जरासन्धं हतवान् ततस्तेन रुद्धा राजानो विमोचितास्तव यज्ञे बलिमानीतवन्तः ॥९॥ किं च सभायां यैर्दुःशासनादिभिर्द्रौपद्या केशबन्धं विमुच्य केशा दूषितास्तेषां स्त्रियो हतनाथा यत्कृपया मया कृताः॥१०॥यो भगवानयुतशिष्यैः सह भोजनं कुर्वतो दुर्वाससो दुःखादस्मान् वनमेत्य जुगोप। किं कृत्वा पात्रलग्नं शाकान्नशिष्टं जग्ध्वा। यतो जले निमग्नो मुनिसंघस्त्रिलोकीं तृप्तां मेने। अत्र विशेषो भारते

१ नृपशिरः स्वङ्घ्रिर्यस्य तम् । २ यस्मात् । ३ तस्मात् । ४ क्लृप्तं रचितम् । ५ उन्मुच्य । ६ कृष्णनमने पादयोःपतिताश्रूणि मुखाद्यस्यास्तस्याः ।

कदाचित् दुर्वाससो दुर्योधनेनातिथ्यं कृतम्। तेन च परितुष्टेन वरं वृणीष्वेत्युक्तम्। दुर्वाससः शापात् पाण्डवा नश्येयुरिति मनसि विधाय दुर्योधनेनोक्तम्। युधिष्ठिरोऽस्मत्कुलमुख्योऽतस्तस्यापि भवता शिष्यायुतसहितेनातिथिना भवितव्यं किंतु द्रौपदी यथा क्षुधा नावसीदेत् तथा तस्यां भुक्तवत्यां तद्गृहं गन्तव्यमिति। ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वाऽऽगम्यतामिति विज्ञापितो मुनिसंघोऽघमर्षणाय जले निममज्ज। तत्र चिन्तातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णस्तत्क्षणमेव भक्तवत्सलतया तत्र प्राप्तः। तथा चाऽऽवेदिते वृत्तान्ते भगवतोक्तं द्रौपद्यहं बुभुक्षितोऽस्मि प्रथमं मां भोजय। तया चातिलज्जयोक्तम्। स्वामिन्! मद्भोजनपर्यन्तमक्षयमप्यन्नं सूर्यदत्तस्थाल्याम्। मया

यत्तेजसाऽथ भगवान्युधि शूलपाणिर्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे ॥ अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेन्द्रभवने महदासनार्धम् ॥ १२ ॥ तत्रैव मे विहरतो भुजदण्डयुग्मं गाण्डीवलक्षणमरातिवधाय देवाः ॥ सेन्द्राः श्रिता यदनुभावितमाजमीढ तेनाहमद्यमुषितः पुरुषेण भूम्ना ॥१३॥ यद्बान्धवः कुरुबलाब्धिमनन्तपारमेको रथेन ततरेऽहमतीर्यसत्त्वम् ॥ प्रत्याहृतं बहुधनं च मया परेषां तेजास्पदं मणिमयं च हृतं शिरोभ्यः ॥ १४ ॥ यो भीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमण्डलमण्डितासु ॥ अग्रेचरो मम विभो रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत् ॥१५॥

व सर्वान् संभोज्य भुक्तम्। ततो नास्त्यन्नमिति। तथाऽप्यतिनिर्बन्धेन स्थालीमानाय्य तत्कण्ठलग्नं किंचित् शाकान्नं प्राश्योक्तम्। अनेन विश्वात्मा भगवान् प्रीयताम्। अथ भोक्तुं मुनिसंघमाह्वयेति। स च तावताऽतितृप्तो वृथापाकभयेन पलायित इति॥ ११॥ किं च यत्तेजसा शूलपाणिः शिवो युधि विस्मयं प्रापितः सन् मह्यं पाशुपतास्त्रं ददौ। अन्येऽपि लोकपाला निजास्त्राणि ददुः। अपि च इन्द्रस्यार्धासनमपि प्राप्तोऽहम् ॥ १२ ॥ तत्रैव क्रीडतो मे भुजदण्डमिन्द्रादिदेवा दैत्यवधार्थं समाश्रितवन्तस्तेन श्रीकृष्णेन वञ्चितोऽस्मि ॥ १३ ॥ उत्तरगोग्रहे च भीष्मादीन् विजित्य तेषां धनं शिरोभूषणं च मया हृतम्॥ १४॥ तथा कुरुयुद्धे यो मम सारथिर्भूत्वा दृष्ट्या परसैनिकानां बलमस्त्रादिकौशलं च हृतवान् ॥ १५॥

१ उत्तीर्याणि दुस्तराणि भीष्मादिरूपसत्त्वानि यस्मिंस्तम्। २ अदभ्रमनल्पम्। ३ उत्साहादिशक्तिम्।

यस्य प्रसादात् द्रोणभीष्मकर्णादिभिः प्रेरितान्यस्त्राणि दैत्यप्रयुक्तानि प्रह्लादमिव ममाङ्गं नोपस्पृशुः ॥ १६ ॥ स्वापराध स्मरन्नाह । अहो यत्पादपद्मं भक्ता भजन्ति स भगवान् सारथ्ये मया वृतः ॥ १७ ॥ हे धर्मराज ! कृष्णस्य 'हे पार्थ हे अर्जुन हे सखे' इत्यादिनर्मभाषणानि स्मर्तुर्मे हृदयं क्षोभयन्ति ॥१८॥ किं च शय्याऽऽसनाटनविकत्थनभोजनादिष्वैक्याद्धेतोः कदाचित् व्यभिचारं दृष्ट्वा हे वयस्य ! सत्ययुक्त-

यद्दोषषु मा प्रणिहितं गुरुभीष्मकर्णद्रौणित्रिगर्तशलसैन्धवबाह्लिकाद्यैः ॥ अस्त्राण्यमोघमहिमानि निरूपितानि नोपस्पृ-
शुर्नृहरिदासमिवाऽऽसुराणि ॥ १६ ॥ सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे यत्पादपद्ममभवाय भजन्ति भव्याः ॥ मां
श्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन्यदनुभावनिरस्तचित्ताः ॥ १७ ॥ नर्माण्युदाररुचिरस्मितशोभितानि हे पार्थ
हेऽर्जुन सखे कुरुनन्दनेति ॥ संजल्पितानि नरदेव हृदिस्पृशानि स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥ १८ ॥
शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः ॥ सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे
महान्महितया कुमतेरघं मे ॥ १९ ॥ सोऽहं नृपेन्द्र रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः ॥
अध्वन्युरुक्रमपरिग्रहमङ्ग रक्षन् गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥ तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं
रथी नृपतयो यत आनमन्ति ॥ सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम् ॥ २१ ॥
राजंस्त्वयाऽनुपृष्टानां सुहृदां नः सुहृत्पुरे ॥ विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः ॥ २२ ॥

स्त्वमसीति वक्रोक्त्या तिरस्कृतोऽपि सख्युः सखेव पितृवत् पुत्रस्य मेऽपराधं सेहे तेनाहं वञ्चितः ॥१९॥ किंच पथि श्रीकृष्णस्य स्त्रीसमूहं रक्षन् गोपैः पराजितोऽस्मि ॥ २० ॥ सोऽहं रथी तदेव धनुस्ते च शराः स एव रथस्तएवाश्वा एतत् सर्वं यद्वियोगाद्भस्मनि हुतमिव व्यर्थं बभूव ॥ २१ ॥ हे राजन् । त्वया कुशलं पृष्टानां सुहृदां विप्रशापेन मूढानामेरकामुष्टिभिर्निघ्नताम् ॥ २२ ॥



१ स्थापितम् । २ श्रेष्ठाः । ३ भूमौस्थितं भूभेदनेन जलोत्पादनाय । ४ लोठयन्ति । ५ येभ्यो हेतुभ्य : ६ असत् कार्याक्षमम् । ७ मायाविनो लब्धम् । × नप्तृ इ० पा० ।

मदिरापानेन मत्तानामन्योऽन्यमजानतामिव मध्ये चत्वारः पञ्च वाऽवशिष्टाः सन्ति ॥२३॥ प्रायेणेदं भगवतश्चेष्टितम् ॥२४॥ यथा महान्तो जलचरा जलेऽन्यान् भक्षयन्ति यथा बलिनो महान्तश्च मिथो घ्नन्ति ॥२५॥ तथा बलिष्ठैर्यदुभिरितरान् यदून् संहृत्य भूभारं संजहार ॥२६॥ अतः परं वक्तुं न शक्नोमीति सूचयन्नाह। मनःशान्तिकराणि भगवतो वाक्यानि स्मरतो मे चित्तं मोहयन्ति ॥२७॥ हे शौनक !

वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम् ॥ अजानतामिवान्योऽन्यं चतुष्पञ्चावशेषिताः ॥ २३ ॥ प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम् ॥ मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥२४॥ जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः ॥ दुर्बलान्बलिनो राजन्महान्तो बलिनो मिथः ॥ २५ ॥ एवं बलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः ॥ यदून्यदुभिरन्योऽन्यं भूभारान्संजहार ह ॥ २६ ॥ देशकालार्थयुक्तानि हृत्तापोपशमानि च ॥ हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे ॥ २७ ॥ एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् ॥ सौहार्देनातिगाढेन शान्ताऽऽसीद्विमला मतिः ॥ २८ ॥ वासुदेवाङ्घ्र्यनुध्यानपरिबृंहितरंहसा ॥ भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥ २९ ॥ गीतं भगवता ज्ञानं यत्तत्संग्राममूर्धनि ॥ कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः ॥ ३० ॥ विशोको ब्रह्मसंपत्त्या संछिन्नद्वैतसंशयः ॥ लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसंभवः ॥ ३१ ॥ निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ॥ स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः ॥ ३२ ॥

एवं भगवतः पादपद्मं स्मरतोऽर्जुनस्य मतिः शान्ताऽऽसीत् ॥ २८ ॥ ततो वासुदेवचरणचिन्तया नष्टविषयवासनोऽर्जुनः कुरुयुद्धे भगवता गीतोक्तं ज्ञानं पुनः प्राप ॥ २९ ॥ ३० ॥ किंच ब्रह्मसंपत्त्या छिन्नद्वैतभ्रमः सन् विशोको जातः ॥ ३१ ॥ एवं भगवन्मार्गं ज्ञात्वा यदुकुलस्य नाशं श्रुत्वा युधिष्ठिरः स्वर्गं गन्तुं मतिं चक्रे ॥ ३२ ॥

---

१ पालयन्ति । २ वृद्धवेगया । ३ निर्मथिता अशेषाः कामादयो यस्याः सा बुद्धिर्यस्य सः । ४ लीना प्रकृतिरविद्या यस्मिंस्तस्मात् । ५ गुणकार्यलिङ्गनाशात् । ६ स्थूलदेहरहितः । ७ निश्चलचित्तः ।

तस्मिन्नेव कालेऽर्जुनोदितं यदूनां नाशं भगवद्गतिं च श्रुत्वाऽधोक्षजं ध्यायन्ती सती कुन्ती जीवन्मुक्ता बभूव ॥ ३३ ॥ हरिर्यया तन्वा 'कण्टकं कण्टकेनैव' भूभारं जहार तां तनुं नटवत् जहौ ॥ ३४ ॥ ३५ ॥ यदा भगवान् महीं जहौ तस्मिन्नेव समयेऽज्ञानां मनसि कलिः प्रादुरभूत् ॥ ३६ ॥ तदा युधिष्ठिरः पुरे राष्ट्रे गृह आत्मनि च कलिप्रवृत्तिं ज्ञात्वा गमनाय तदुचितं परिधानं चकार ॥ ३७ ॥ सर्वगुणसंपन्नं पौत्रं

पृथाऽप्यनुश्रुत्य धनंजयोदितं नाशं यदूनां भगवद्गतिं च ताम् ॥ एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मो-परराम संसृतेः ॥ ३३ ॥ ययाऽहरद्भुवो भारं तां तनुं विजहावजः ॥ कण्टकं कण्टकेनैव द्वयं चापीशितुः समम् ॥३४॥ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ॥ भूभारः क्षपितो येन जहौ तच्च कलेवरम् ॥ ३५ ॥ यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः ॥ तदाऽहरेवाप्रतिबुद्धचेतसामधर्महेतुः कलिरन्ववर्तत ॥ ३६ ॥ युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तदात्मनि ॥ विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् ॥ ३७ ॥ स्वराट् पौत्रं विनयिनमात्मनः सुसमं गुणैः ॥ तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये ॥ ३८ ॥ मथुरायां तथा वज्रं शूरसेनपतिं ततः ॥ प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥ ३९ ॥ विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् ॥ निर्ममो निरहंकारः संछिन्नाशेषबन्धनः ॥ ४० ॥ वाचं जुहाव मनसि तत्प्राण इतरे च तम् ॥ मृत्यावपानं सोत्सर्गं तं पञ्चत्वे ह्यजोहवीत् ॥ ४१ ॥ त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ॥ सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥

परीक्षितं स्वराज्येऽभिषिच्य ॥ ३८ ॥ तथाऽनिरुद्धपुत्रं वज्रं मथुरायां शूरसेनपतिं कृत्वा प्राजापत्येष्टिं च विधायाऽग्नीनात्मनि समारोपितवान् ॥ ३९ ॥ ततस्तत्रैव वस्त्रालंकारादिकं विसृज्य ममतारहितो धर्मराजः ॥ ४० ॥ इन्द्रियाणि मनसि विलाप्य तन्मनः प्राणे प्राणमपानेऽपानम् मृत्यौ मृत्युं देहे देहम् ॥ ४१ ॥ गुणत्रये गुणत्रयमविद्यायामविद्यां जीवे शुद्धजीवं ब्रह्मणि विलाप्य ॥ ४२ ॥

१ यादवतनुर्भूभारतनुश्चेति द्वयम् । २ समुद्रनीव्याः । ३ कृत्वा । ४ सर्वोपाधिमुक्तः । ५ सव्यापारम् । ६ सर्वारोपहेतुमविद्या ।

चीरवासा निराहारो मौनी मुक्तमूर्धजो धर्मो जडोन्मत्तपिशाचस्वरूपं लोकं दर्शयन् ॥४३॥ अनुजादिप्रतीक्षामकुर्वन् हृदि ब्रह्म ध्यायन् कुबेर-दिशं जगाम ॥ ४४ ॥ तमनु सर्वे भीमादयो भ्रातरः कलिना व्याप्ताः प्रजा दृष्ट्वा निर्जग्मुः ॥४५॥४६॥ ततस्ते मनसा वैकुण्ठचरणाम्बुजं ध्यायन्तः ॥४७॥ विधूतकल्मषाः सन्तस्तस्मिन् नारायणपदे गतिं प्रापुः ॥४८॥ ततो विदुरोऽपि प्रभासे देहं विसृज्य स्वाधिकारस्थानं ययौ ॥४९॥

चीरवासा निराहारो बद्धवाङ्मुक्तमूर्धजः ॥ दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ॥ ४३ ॥ अनवेक्षमाणो निरगादशृण्वन्बधिरो यथा ॥ उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः ॥४४॥ हृदि ब्रह्म परं ध्यायन् नावर्तेत यतो गतः ॥ सर्वे तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः ॥ ४५ ॥ कलिनाऽधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ ते साधुकृतसर्वार्था ज्ञात्वाऽऽत्यन्तिकमात्मनः ॥ ४६ ॥ मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥ तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ॥ ४७ ॥ तस्मिन्नारायणपदे एकान्तमतयो गतिम् ॥ अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः ॥ विधूतकल्मषाः स्थानं विरजेनात्मनैव हि ॥ ४८ ॥ विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान् ॥ कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ॥ ४९ ॥ द्रौपदी च तदाऽऽज्ञाय पतीनामनपेक्षताम् ॥ वासुदेवे भगवति ह्येकान्तमतिराप तम् ॥ ५० ॥ यः श्रद्धयैतद्भगवत्प्रियाणां पाण्डोः सुतानामिति सम्प्रयाणम् ॥ शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम् ॥ ५१ ॥ इति श्रीभा० महा० प्रथ० पञ्चदशोऽध्यायः ॥ १५ सूत उवाच ॥ ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह ॥ यथा हि सूत्यामभिजातकोविदाः समादिशन्विप्र महद्गुणस्तथा ॥ १ ॥

ततो द्रौपदी च स्वां प्रति पतीनामनपेक्षतां ज्ञात्वा भगवति मतिं कृत्वा परं प्राप ॥ ५० ॥ यः श्रद्धया पाण्डुपुत्राणां प्रयाणं शृणोति स हरौ भक्तिं लब्ध्वा सिद्धिं प्राप्नोति ॥ ५१ ॥ इति श्रीभा० म० प्रथमस्कन्धे सू० पञ्चदशोऽध्यायः ॥ १५ ॥ ततश्च षोडशे भूमिधर्मयोः कलि-खिन्नयोः । संवादे वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥ १ ॥ सूत उवाच ॥ ततः परीक्षिद्द्विजशिक्षया महीं शशास ॥ १ ॥

१ मौनी । २ शरणम् । ३ कृष्णे चित्तमावेश्य । ४ आत्मानं प्रतीति शेषः । ५ अविद्यावेन । ६ मंगलास्पदम् ।

स उत्तरस्य कन्यामिरावतीं नामोपयेमे ॥ तस्यां जनमेजयादींश्चतुरः पुत्रान् जनयामास ॥ २ ॥ ततः स कृपं गुरुं कृत्वा गङ्गातीरे भूरिदक्षिणां-स्त्रीनश्वमेधांश्चकार ॥३॥ ततो दिग्विजये नृपलिंगधरं गोमिथुनं पदा घ्नन्तं कलिं निगृहीतवान् ॥ ४ ॥ शौनक उवाच ॥ हे सूत ! परीक्षित् कस्य हेतोः कलिं निजग्राह । यः पदा गां जघान स शूद्रः कः॥५॥इदं कृष्णस्य तद्भक्तानां वा कथाश्रयं चेत् कथय।अन्यैरसदालापैः किं यैर्वृथाऽऽयु-

स उत्तरस्य तनयामुपयेम इरावतीम् ॥जनमेजयादींश्चतुरस्तस्यामुत्पादयन्सुतान्॥२॥ आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान् ॥ शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः॥ ३ ॥ निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित् ॥ नृपलिंगधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥४॥शौनक उवाच॥ कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः॥ नृदेवचिह्नधृक्-शूद्रः कोऽसौ गां यः पदाऽहनत् ॥५॥ तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम्॥ अथवाऽस्य पदाम्भोजमकरन्दलिहां सताम्॥किमन्यैरसदालापैरायुषो यदसद्व्ययः ॥ ६ ॥ क्षुद्रायुषां नृणामङ्ग मर्त्यानामृतमिच्छताम् ॥ इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि ॥ ७ ॥ न कश्चिन्म्रियते तावद्यावदास्त इहान्तकः ॥ एतदर्थं हि भगवानाहूतः परमर्षिभिः ॥ अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ८ ॥ "यस्मिन्पीते कृतं सर्वमिष्टापूर्तादिकं भवेत्" ॥ मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै ॥ निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥९॥ सूत उवाच ॥ यदा परीक्षित्कुरुजांगले वसन्कलिं प्रविष्टं निजचक्रवर्तिते ॥ निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौण्डिराददे ॥१०॥ स्वलंकृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमास्थितः पुरात् ॥ वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥ ११ ॥

नंश्यति ॥ ६ ॥ अस्माकं यज्ञप्रयत्नोऽपि हरिकथाश्रवणार्थ एव ॥ नृणां यो मृत्युः सोऽस्मिन् यज्ञ आहूतः ॥ ७ ॥ अतो यज्ञसमाप्तिपर्यन्तं कोऽपि जनो न म्रियेत तस्मान्नृलोके हरिकथामृतं पीयेत तत्पान इष्टापूर्तादिकं कृतं भवेत् ॥८॥ मन्दस्याल्पायुषो जनस्यायू रात्रौ निद्रया दिवा च व्यर्थकर्मभिर्नश्यति अतो हरिकथां कथय ॥९॥ सूत उवाच ॥ यदा स्वदेशे कलिं प्रविष्टं शुश्राव तदा श्यामतुरङ्गयोजितं स्वलं-कृतं रथमास्थाय धनुर्गृहीत्वा सेनया सह परीक्षिद्दिग्विजयार्थं पुरात् निर्गतः सन् ॥ १० ॥ ११ ॥



१ 'उत्पादयन्' इत्यपि पाठः । २ पशुहिंसनकर्मणि । ३ इदं क्वचिन्नास्ति । ४ निजसेनापालिते ।

भद्राश्वं केतुमालं भारतं वर्षं कुरूनुत्तरान् किं पुरुषादींश्च विजित्य प्राभृतानि जगृहे ॥ १२ ॥ तत्र तत्र जनैर्गीयमानं स्वपूर्वजानां यशः ॥१३॥ अश्वत्थाम्नोऽस्त्रतः स्वरक्षणं वृष्णिपाण्डवानां स्नेहं तेषां केशवे भक्तिं च श्रुत्वा ॥ १४ ॥ प्रसन्नः सन् तेभ्यो धनानि वस्त्राणि हारांश्च ददौ ॥ १५ ॥ किंच पाण्डवेषु श्रीकृष्णस्य सारथ्यादिकर्माणि शृण्वन् विष्णोश्चरणारविन्दे भक्तिं कृतवान् ॥ १६ ॥ तदैवं वर्त्तमानस्य राज्ञः सतो

भद्राश्वं केतुमालं च भारतं चोत्तरान्कुरून् ॥ किंपुरुषादीनि सर्वाणि विजित्य जगृहे बलिम् ॥१२॥ तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् ॥ प्रगीयमानं च यशः कृष्णमाहात्म्यसूचकम् ॥ १३ ॥ आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः ॥ स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे ॥१४॥ तेभ्यः परमसंतुष्टः प्रीत्युज्जृम्भितलोचनः ॥ महाधनानि वासांसि ददौ हारान्महामनाः ॥ १५ ॥ सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामम् ॥ स्निग्धेषु पाण्डुषु जगत्प्रणतिं च विष्णोर्भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १६ ॥ तस्यैवं वर्तमानस्य पूर्वेषां वृत्तिमन्वहम् ॥ नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे ॥ १७ ॥ धर्मः पदैकेन चरन्विच्छायामुपलभ्य गाम् ॥ पृच्छति स्माश्रुवदनां विवत्सामिव मातरम् ॥ १८ ॥ धर्म उवाच ॥ कच्चिद्भद्रेऽनामयमात्मनस्ते विच्छायाऽसि म्लायतेषन्मुखेन ॥ आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कंचनाम्ब ॥ १९ ॥ पादैर्न्यूनं शोचसि नैकपादमात्मानं वा वृषलैर्भोक्ष्यमाणम् ॥ अथो सुरादीन्हृतयज्ञभागान्प्रजा उतस्विन्मघवत्यवर्षति ॥ २० ॥

नातिदूरे यद् वृत्तं तच्छृणु ॥ १७ ॥ एतस्मिन् काले एकेन पदा चरन् वृषरूपधरो धर्मो हतप्रभां गोरूपां पृथ्वीं रुदतीं दृष्ट्वोवाच ॥ १८ ॥ हे भद्रे ! तव कुशलं कच्चित् यतो म्लानवदना अतो भवतीं दुःखितां लक्षये ॥ १९ ॥ किंच पादैर्न्यूनमेकपादं मां तथा शूद्रैर्भोक्ष्यमाणमात्मानं वा शोचसि किम् । अथवाऽलब्धयज्ञभागान् देवान् शोचसि ॥ २० ॥

---

१ पारषदं पार्षदं सभापतित्वम् । २ चित्रानुवृत्तिः । ३ रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् । ४ जगत्कर्तृकां प्रणतिं श्रुत्वेत्यर्थः । ५ हृताः यज्ञाद्यकरणात् ।

हे पृथ्वि ! भर्तृभिर्न रक्ष्यमाणाः स्त्रियः पितृभिर्न रक्ष्यमाणान् बालान् तैरेव पुरुषादैरिव पीडितान्नरान् वा कुकर्मणि स्थितां ब्रह्मकुले विमुखां सरस्वतीं वा शोचसि किम् ॥२१॥ क्षत्रबन्धून् वा जारकर्मादिनिरतं जीवलोकं वा शोचसि किम्॥२२॥हे अम्ब ! भूरिभारनाशार्थं कृतावतारस्य हरेरन्तर्धानं वा शोचसि किम् ॥२३॥ हे वसुंधरे ! इदं तवाधिमूलं कथय येन त्वं कर्शिताऽसि ॥ २४ ॥ धरण्युवाच ॥ हे धर्म ! यन्मां पृच्छसि तत् सर्वं वेत्थ येन हेतुभूतेन त्वं चतुष्पादोऽभवः॥ २५ ॥यस्मिन् भगवति यथार्थभाषणं शौचं दया क्रोधो मनःसंयमः दानम् अलंबुद्धिः अव-

अरक्ष्यमाणाः स्त्रिय उर्वि बालाञ्छोचस्यथो पुरुषादैरिवार्तान् ॥ वाचं देवीं ब्रह्मकुले कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान् ॥ २१ ॥ किं क्षत्रबन्धून्कलिनोपसृष्टान्राष्ट्राणि वा तैरवरोपितानि ॥ इतस्ततो वाऽशनपानवासःस्नानव्यवायोन्मुखजीवलोकम् ॥ २२ ॥ यद्वाऽम्ब ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि ॥ अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि ॥ २३ ॥ इदं ममाचक्ष्व तवाधिमूलं वसुंधरे येन विकर्शिताऽसि ॥ कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमम्ब सौभगम् ॥२४॥ धरण्युवाच ॥ भवान्हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि ॥ चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः ॥ २५ ॥ सत्यं शौचं दया क्षान्तिस्त्यागः संतोष आर्जवम् ॥ शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ ॥ २६ ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः ॥ स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥ २७ ॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ॥ गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥ २८ ॥

कता मनोनैश्चल्यं बाह्येन्द्रियस्थिरता स्वधर्मः अरिमित्राद्यभावः परापराधसहनं लाभः औदासीन्यं शास्त्रविचारः ॥२६॥ आत्मबोधो वैतृष्ण्यं नियन्तृत्वं संग्रामोत्साहः प्रभावःदक्षत्वं कार्याकार्यार्थानुसंधानं स्वातन्त्र्यं क्रियानिपुणता सौन्दर्यं धैर्यं चित्ताकाठिन्यम् ॥२७॥ प्रभावातिशयो विनयस्वभावः मनसो ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च पाटवानि भोगास्पदत्वमक्षोभ्यत्वमचञ्चलता श्रद्धा यशः पूज्यत्वं गर्वाभावः ॥ २८ ॥



१ सेवकत्वेन स्थितानिति शेषः । २ निर्बन्धानादरेण । ३ मैथुनम् । ४ मोक्षः आश्रितः येषु तानि ।

एतेऽन्ये च गुणा यस्मिन् नित्यं सन्ति तेन श्रीनिवासेन रहितं पाप्मना कलिना दृष्टं च लोकं शोचामि ॥२९॥३०॥ तथाऽऽत्मानं भवन्तं पितॄन् ऋषीन् देवान् साधून् वर्णानाश्रमांश्च शोचामि॥३१॥ किंच यस्याः प्रसादं ब्रह्मादयो वाञ्छन्ति सा लक्ष्मीः स्वगृहं कमलवनं हित्वा यत्पादपङ्कजं भजते ॥३२॥ तस्य भगवतः श्रीमत्पदैश्चिह्निताः ततो गर्विता मां यस्त्यक्तवान्॥३३॥किंच यः अवतीर्य न्यूनपदं त्वां स्वस्मिन् संपूर्णपदं संपाद-

एते चान्ये च भगवन्नित्या यत्र महागुणाः ॥ प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥ २९ ॥ तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम् ॥ शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ३० ॥ आत्मानं चानुशोचामि भवन्तं चामरोत्तमम् ॥ देवान्पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाऽऽश्रमान् ॥ ३१ ॥ ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकामास्तपः समचरन्भगवत्प्रपन्नाः ॥ सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥३२॥ तस्याहमब्जकुलिशाङ्कुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलङ्कृताङ्गी ॥ त्रीनत्यरोच उपलभ्य ततो विभूतिं लोकान्स मां व्यसृजदुत्स्मयतीं तदन्ते ॥ ३३ ॥ यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतन्त्रः ॥ त्वां दुःस्थमूनपदमात्मनि पौरुषेण संपादयन्यदुषु रम्यमबिभ्रदङ्गम् ॥३४॥ का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ॥ स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदङ्घ्रिविटङ्कितायाः ॥ ३५ ॥ तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ॥ परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥ ३६ ॥ इति श्रीभा० महा० प्रथम० षोडशोऽध्यायः ॥१६॥ सूत उवाच ॥ तत्र गोमिथुनं राजा हन्यमानमनाथवत् ॥ दण्डहस्तं च वृषलं ददृशे नृपलाञ्छनम् ॥१॥

यन् मम भारं दूरीकृतवान्॥३४॥यः प्रेमावलोकनादिभिः सत्यभामादीनां स्थैर्यं जहार तस्य भगवतो वियोगं का सहेत ॥३५॥ एवं पूर्ववाहिनीसरस्वतीतीरे पृथ्वीधर्मयोः कथयतोः सतोस्तत्र परीक्षिन्नाम राजर्षिः प्राप्तः ॥३६॥ इति श्रीभा०चू०षोडशोऽध्यायः॥१६॥ततः सप्तदशे राज्ञा कलेर्निग्रह उच्यते। तस्यैवं वीर्यभाजोऽपि वैराग्यं वक्तुमद्भुतम् ॥१॥ सूत उवाच ॥ तत्र सरस्वत्यां राजा परीक्षित् दण्डहस्तं नृपवेषधरं शूद्रम्॥१॥

१ क्षीयन्ते । २ अतिक्रम्याऽशोभे । ३ गर्वं कुर्वाणाम् । ४ विभ्रत्यन्ते । ५ दानवीयराज्ञाम् । ६ सम्पादयितुमित्यर्थः । ७ सगर्वम् । ८ सत्यादिभिर्येन । ९ शोभितायाः ।

तथा भयात् मूत्रयन्तं श्वेतमेकपादं शूद्रताडितं वृषम् ॥२॥ तथा दीनां शूद्रपदाहतामश्रुवदनां कृशां तृणमिच्छन्तीं गां दृष्ट्वा ॥३॥ स्वयं रथारूढो धृतकार्मुकः सन् गम्भीरया वाचा पप्रच्छ ॥ ४ ॥ अस्मिन् मच्छरणे लोके बलात् दीनान् घातयसि एवंभूतो नृपवेषधरः कर्मणा शूद्रस्त्वं कोऽसि ॥ ५ ॥ किंच अर्जुनेन सह श्रीकृष्णेऽन्तर्हिते सति निरपराधान् विजने प्रहरसि । अतस्त्वं वधयोग्योऽसि ॥ ६ ॥ ततो वृषं प्रत्याह ।

वृषं मृणालधवलं मेहन्तमिव बिभ्यतम् ॥ वेपमानं पदैकेन सीदन्तं शूद्रताडितम् ॥ २ ॥ गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम् ॥ विवत्सामश्रुवदनां क्षामां यवसमिच्छतीम् ॥३॥ पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम् ॥ मेघगम्भीरया वाचा समारोपितकार्मुकः ॥४॥ कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली ॥ नरदेवोऽसि वेषेण नटवत्कर्मणाऽद्विजः ॥५॥ कस्त्वं कृष्णे गते दूरं सह गाण्डीवधन्वना ॥ शोच्योऽस्यशोच्यान्रहसि प्रहरन्वधमर्हसि ॥ ६ ॥ त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् ॥ वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ॥ ७ ॥ न जातु कौरवेन्द्राणां दोर्दण्डपरिरम्भिते ॥ भूतलेऽनुपतन्त्यस्मिन्विना ते प्राणिनां शुचः ॥ ८ ॥ मा सौरभेयानुशुचो व्येतु ते वृषलाद्भयम् ॥ मा रोदीरम्ब भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥ यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्वसाधुभिः ॥ तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः ॥ १० ॥ एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः ॥ अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ॥ ११ ॥ कोऽवृश्चत्तव पादांस्त्रीन्सौरभेय चतुष्पद ॥ मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् ॥ १२ ॥

हे वृष ! श्वेतवर्णः पादैर्न्यूनस्त्वं कोऽसि । कश्चित् देवस्त्वं वृषरूपेण नः खेदयन् वर्तसे किम् ॥ ७ ॥ पाण्डवरक्षिते भूतले तवाश्रूणि विना प्राणिनामश्रूणि न पतन्ति ॥८॥ त्वमपि शोकं मा कुरु । अस्मात् शूद्रात् ते भयं गच्छतु । गां प्रत्याह हे अम्ब ! खलानां मयि शास्तरि सति त्वं मा रोदीः ॥ ९ ॥ अहो यस्य राज्ये दुष्टैः प्रजास्त्रस्यन्ते तस्य राज्ञः कीर्तिरायुर्भाग्यादयो नश्यन्ति ॥ १० ॥ दीनानां दुःखहरणमेव राज्ञां परो धर्मः । अत एनं शूद्रं वधिष्यामि ॥ ११ ॥ हे वृष ! तव पादान् कोऽच्छिनत् ॥ १२ ॥

१ क्षीयमाणम् । २ 'साश्रुवदनाम्' इत्यपि पाठः । ३ स्वर्णनिबद्धम् । ४ सज्जीकृतकार्मुकः । ५ अहं शरणं रक्षिता यत्र तस्मिन् । ६ शोच्योऽपराधी ।

तं मम कीर्तिनाशकर्तारं वद । निरपराधे जने यो दुःखकरो भवति तस्य मत्तो भयं भवति ॥१३॥ किंच निरपराधेषु भूतेष्वपराधकर्तुर्देवस्यापि भुजं हरिष्यामि । इतरस्य किं वक्तव्यम् ॥१४॥ यतः प्रजापालनमेव राज्ञां परो धर्मः ॥१५॥ धर्म उवाच ॥ हे राजन् ! एतत् वः पाण्डवेयानां दुःखितस्याभयदानं युक्तम् ॥१६॥ किंच यस्मात् प्राणिनां दुःखं भवति तं पुरुषं वयं न जानीमः । यतो वाक्यभेदैर्मोहिताः ॥१७॥ तानेवाह

आख्याहि वृष भद्रं वः साधूनामकृतागसाम् ॥ आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् ॥ जनेऽनागस्यघं युञ्जन्सर्वतोऽस्य च मद्भयम् ॥ १३ ॥ अनागस्स्विह भूतेषु य आगस्कृन्निरङ्कुशः ॥ आहर्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् ॥ १४ ॥ राज्ञो हि परमो धर्मः स्वधर्मस्यानुपालनम् ॥ शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथानिह ॥ १५ ॥ धर्म उवाच ॥ एतद्वः पाण्डवेयानां युक्तमार्ताभयं वचः ॥ येषां गुणगणैः कृष्णो दौत्यादौ भगवान्कृतः ॥ १६ ॥ न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ॥ पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥ १७ ॥ केचिद्विकल्पवसना आहुरात्मानमात्मनः ॥ दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् ॥ १८ ॥ अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः ॥ अत्रानुरूपं राजर्षे विमृश्य स्वमनीषया ॥ १९ ॥ एवं धर्मे प्रवदति स सम्राड् द्विजसत्तम ॥ समाहितेन मनसा विखेदः पर्यचष्ट तम् ॥२०॥ राजोवाच ॥ धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् ॥ यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत् ॥ २१ ॥ अथवा देवमायाया नूनं गतिरगोचरा ॥ चेतसो वचसश्चापि भूतानामिति निश्चयः ॥ २२ ॥

केचित् सुखदुःखकर्तारमात्मानं वदन्ति केचित्स्वभावं केचित् कर्म ॥१८॥ अतो हे राजन् ! त्वं स्वबुद्ध्या दुःखदातारं विचारय ॥ १९ ॥ एवं धर्मे वदति सति राजा गतमोहः सन् निश्चित्य वदति स्म ॥ २० ॥ राजोवाच ॥ त्वं वृषरूपी धर्मोऽसि । यतस्त्वं घातकं जानन्नपि न सूचयसि । सूचने दोषमाह । अधर्मकृतः स्थानं सूचकस्यापि भवति ॥२१॥ अथवा भगन्मायाया गतिरगोचरा ॥ अतो नोक्तवान् ॥२२॥

१ भवत्विति शेषः । २ एकपादत्वरूपं वैरूप्यम् । ३ 'साधूनां भद्रमेव स्यादसाधुदमने कृते' इत्यधिकःपाठः । ४ मूलत इत्यर्थः । ५ भेदं वसंते आच्छादयन्ति ते योगिनः कुतर्कप्रवृत्ता नास्तिका वा ।

किंच तपः शौचं दया सत्यं चत्वार इमे तव पादाः। तन्मध्येऽधर्मांशैः स्मयसङ्गमदैस्त्रयो भग्नाः ॥२३॥ इदानीं सत्यरूप एक एवावशिष्टः तमपि कलिर्हर्तुमिच्छति ॥ २४ ॥ किंच इयं भारातिपीडिता भगवता त्यक्ता च पृथ्वी मां शूद्रा भोक्ष्यन्तीति शोचति ॥ २५॥२६॥ इति धर्मं महीं च सान्त्वयित्वा कलिं हन्तुं परीक्षित् खड्गं जग्राह ॥ २७ ॥ एतादृशं परीक्षितं दृष्ट्वा नृपचिह्नं विहाय कलिस्तच्चरणयोः पतितः ॥२८॥ तदा

तपः शौचं दया सत्यमिति पादाः प्रकीर्तिताः ॥ अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ॥२३॥ इदानीं धर्म पादस्ते सत्यं निर्वर्तयेद्यतः ॥ तं जिघृक्षत्यधर्मोऽयमनृतेनैधितः कलिः ॥२४॥ इयं च भूर्भगवता न्यासितोरुभरा सती ॥ श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २५ ॥ शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिताऽधुना ॥ अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति ॥२६॥ इति धर्मं महीं चैव सान्त्वयित्वा महारथः ॥ निशातमाददे खड्गं कलयेऽधर्महेतवे ॥ ॥२७॥ तं जिघांसुमभिप्रेत्य विहाय नृपलाञ्छनम् ॥ तत्पादमूलं शिरसा समगाद्भयविह्वलः ॥२८॥ पतितं पादयोर्वीक्ष्य कृपया दीनवत्सलः ॥ शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव ॥ २९ ॥ राजोवाच ॥ न ते गुडाकेशयशोधराणां बद्धाञ्जलेर्वै भयमस्ति किंचित् ॥ न वर्तितव्यं भवता कथंचन क्षेत्रे मदीये त्वमधर्मबन्धुः ॥ ३० ॥ त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः ॥ लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दम्भः ॥ ३१ ॥ न वर्तितव्यं तदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये ॥ ब्रह्मावर्ते यत्र यजन्ति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः ॥ ३२ ॥

राजा पादयोः पतितं तं दृष्ट्वा कृपया नावधीत्। आह च ॥ २९ ॥ राजोवाच ॥ हे कले ! बद्धाञ्जलेस्तव मत्तो भयं नास्ति। परन्तु त्वया मद्देशे न वर्तितव्यं यतस्त्वमधर्मबन्धुः ॥ ३० ॥ तदेवाह। राजदेहेषु त्वयि वर्तमाने सति लोभानृतचौर्यदौर्जन्यस्वधर्मत्यागालक्ष्मीकपटकलहदम्भरूपोऽधर्मो भवति ॥ ३१ ॥ अतो हे अधर्मबन्धो ! यत्र भगवन्तं यज्ञैर्यजन्ति तत्र ब्रह्मावर्ते मद्देशे न वर्तितव्यम् ॥ ३२ ॥



---

१ अर्जुनयशोधराणां पाण्डवेयानाम्।

यस्मिन् ब्रह्मावर्ते यज्ञेनेज्यमानो भगवान् यज्ञकर्तॄणां शं तनोति ॥ ३३ ॥ सूत उवाच ॥ एवं परीक्षितोक्तः कलिर्जातकम्पः सन् दण्डपाणि-मिव हन्तुमुद्यतं राजानं वदति स्म ॥३४॥ हे सार्वभौम ! तवाज्ञया यत्र क्वापि वत्स्यामि तत्र तत्र गृहीतधनुर्बाणं त्वामेव लक्षये ॥३५॥ तस्मात् त्वदाज्ञाधारकः सन् यत्रैव निश्चलो वत्स्यामि तत् स्थानं दर्शय ॥ ३६ ॥ हे शौनक ! एवं प्रार्थितो राजा तस्मै कलये द्यूतं मद्यपानं स्त्रियः प्राणवधश्चेति स्थानानि ददौ ॥ ३७ ॥ पुनर्याचमानाय तस्मै सुवर्णं ददौ । तद्दानादनृतं मदं स्त्रीसङ्गं हिंसां वैरं च ॥ ३८ ॥

यस्मिन्हरिर्भगवानिज्यमान इज्यामूर्तिर्यजतां शं तनोति ॥ कामानमोघान्स्थिरजङ्गमानामन्तर्बहिर्वायुरिवैष आत्मा ॥ ३३ ॥ सूत उवाच ॥ परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ॥ तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम् ॥ ३४ ॥ यत्र क्वचन वत्स्यामि सार्वभौम तवाज्ञया ॥ लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम् ॥ ३५ ॥ तन्मे धर्मभृतां श्रेष्ठ स्थानं निर्देष्टुमर्हसि ॥ यत्रैव नियतो वत्स्ये आतिष्ठंस्तेऽनुशासनम् ॥ ३६ ॥ सूत उवाच ॥ अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ॥ द्यूतं पानं स्त्रियस्सूना यत्राधर्मश्चतुर्विधः ॥ ३७ ॥ पुनश्च याचमानाय जातरूपमदात्प्रभुः ॥ ततोऽनृतं मदं कामं रजो वैरं च पञ्चमम् ॥ ३८ ॥ अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः ॥ औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥ ३९ ॥ अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ॥ विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥ ४० ॥ वृषस्य नष्टांस्त्रीन्पादांस्तपःशौचं दयामिति ॥ प्रतिसंदध आश्वास्य महीं च समवर्धयत् ॥ ४१ ॥ स एष एतर्ह्यध्यास्त आसनं पार्थिवोचितम् ॥ पितामहेनोपन्यस्तं राज्ञाऽरण्यं विविक्षिता ॥ ४२ ॥ आस्तेऽधुना स राजर्षिः कौरवेन्द्रः श्रियोल्लसन् ॥ गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४३ ॥

एवं परीक्षिता दत्तेषु स्थानेषु कलिर्न्यवसत् ॥ ३९ ॥ अतः श्रेय इच्छुः पुरुषस्तत्रापि विशेषतो राजा तानि न सेवेत ॥ ४० ॥ ततो राजा महीं धर्मं च सान्त्वयित्वा धर्मस्य नष्टान् तपः शौचं दयेति पादान् सन्दधे ॥ ४१ ॥ स राजा युधिष्ठिरेण दत्तं नृपासनमाश्रित्य ॥ ४२ ॥ अधुना चक्रवर्ती स गजाह्वये वर्तते ॥ ४३ ॥

यस्य राज्ये यूयं यज्ञं कर्तुं दीक्षां कृतवन्तः ॥४४॥ इति श्रीभा० प्रथम० चू० सप्तदशोऽध्यायः ॥ १७॥ राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते । स चानुग्रह एवास्य जातो वैराग्यमावहन् ॥१॥ सूत उवाच ॥ यः परीक्षिदश्वत्थाम्नोऽस्त्रतेजसा दग्धस्तथाऽपि मातुरुदरे भगवदनुग्रहान्न मृतः ॥ १ ॥ किंच ब्रह्मकोपोत्थितात् प्राणनाशकात् तक्षकात् न संमुमोह ॥२॥ ततः सर्वत्र सङ्गं हित्वा शुकशिष्यो भूत्वा ज्ञाततत्त्वः सन् गङ्गायां स्वदेहं जहौ ॥ ३ ॥ अहो भगवच्चरणारविन्दं स्मरतामन्तकालेऽपि भ्रमो न भवति ॥ ४ ॥ यावत् परीक्षित् राज्यं चकार तावद्

इत्थंभूतानुभावोऽयमभिमन्युसुतो नृपः ॥ यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४४ ॥ इति श्रीभा० महा० प्रथमस्कन्धे सप्तदशोऽध्यायः ॥१७॥ सूत उवाच ॥ यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ॥ अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः ॥१॥ ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात् ॥ न संमुमोहोरुभयाद्भगवत्यर्पिताशयः ॥२॥ उत्सृज्य सर्वतः सङ्गं विज्ञाताजितसंस्थितिः ॥ वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम् ॥ ३ ॥ नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम् ॥ स्यात्संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ४ ॥ तावत्कलिर्न प्रभवेत्प्रविष्टोऽपीह सर्वतः ॥ यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥५॥ यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ॥ तदैवेहानुवृत्तोऽसावधर्मप्रभवः कलिः ॥६॥ नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् ॥ कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥७॥ किं नु बालेषु शूरेण कलिना धीरभीरुणा ॥ अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते ॥ ८ ॥ उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया ॥ वासुदेवकथोपेतमाख्यानं यदपृच्छत ॥ ९ ॥

भगवदन्तर्धानानन्तरमेव प्रविष्टोऽपि कलिर्न समर्थो बभूव ॥ ५ ॥ ६ ॥ यस्मिन् कलौ पुण्यानि संकल्पमात्रेण सिध्यन्ति ॥ अतो राजा कलिं न जघान ॥ ७ ॥ किं च अधीरेषु शूरेण धीरेषु भीरुणा कलिना किं नु भवेदिति हेतोः राजा द्वेषं नाकरोत् ॥ ८ ॥ हे शौनक ! एवं पुण्यं परीक्षिदाख्यानं युष्मभ्यं वर्णितम् ॥ ९ ॥

१ यस्मिन् ।

किंच भगवतो या या कथास्ताः पुरुषैः सेव्याः । इदमेव सर्वसारम् ॥ १० ॥ ऋषय ऊचुः ॥ हे सूत ! चिरं जीव यतस्त्वं हरेर्यशो वर्णयसि ॥ ११ ॥ किंच अस्मिन् यज्ञे गोविन्दकथारूपममृतं नः पाययसि ॥ १२ ॥ साधुसङ्गक्षणेनापि स्वर्गं मोक्षं च समं न तुलयाम । किं पुनः राज्यादयः ॥१३॥ किंच शिवब्रह्माद्या यस्य गुणानां पारं न जग्मुः तस्य भगवतः कथायां रसवित् पुरुषः कस्तृप्येत् ॥१४ ॥ तस्मात्

या या कथा भगवतः कथनीयोरुकर्मणः ॥ गुणकर्माश्रयाः पुंभिः संसेव्यास्ता बुभूषुभिः ॥ १० ॥ ऋषय ऊचुः ॥ सूत जीव समाः सौम्य शाश्वतीर्विशदं यशः ॥ यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः ॥ ११ ॥ कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ॥आपाययति गोविन्दपादपद्मासवं मधु ॥ १२ ॥ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ॥ भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ १३ ॥ को नाम तृप्येद्रसवित्कथायां महत्तमैकान्तपरायणस्य ॥ नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः ॥ १४ ॥ तन्नो भवान्वै भगवत्प्रधानो महत्तमैकान्तपरायणस्य ॥ हरेरुदाराचरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वन् ॥ १५ ॥ स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः ॥ ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् ॥ १६ ॥ तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम्[2] ॥ आख्याह्यनन्ताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥ १७ ॥ सूत उवाच ॥ अहो वयं जन्मभृतोऽद्य हाऽऽस्म[3] वृद्धानुवृत्त्याऽपि विलोमजाताः ॥ दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥१८॥

हे विद्वन् ! हरेरुदाराचरितं शुश्रूषतां नः कथय ॥ १५ ॥ अपि च स परीक्षित् राजा शुकोक्तज्ञानेन देहं त्यक्त्वा भगवत्पदं प्राप ॥ १६ ॥ तस्य राज्ञः पुण्यं भगवत्कथाश्रयमाख्यानं कथय ॥ १७ ॥ सूत उवाच ! हे शौनक ! युष्मत्पादसेवया वयं विलोमजा अपि धन्याः स्मः यतः साधूनां भाषणरूपः संबन्धो दुष्कुलत्वनिमित्तां मनःपीडां धुनोति ॥ १८ ॥

---

१ अनिश्चितफले त्रैगुण्यबाहुल्यात् । २ योगे निष्ठा यस्य तत् । ३ 'अस्मद्' इ० पा० ।

अहो पुनरनन्तस्य नाम गृणतः पुंसो दौष्कुल्यं धुनोतीति किं वक्तव्यम् ॥१९॥ किंच ब्रह्मादीन् हित्वा लक्ष्मीर्यत्पादरजः सेवते एवं भूतस्य भगवतः एतावता माहात्म्यसूचनेनालम् ॥२०॥ अथापि यत्पादांगुष्ठनिर्गतं गङ्गारूपं जलं जगत् पुनाति तस्मात् भगवतः को नाम लोके श्रेष्ठोऽस्ति ॥२१॥ यत्रेश्वरे प्रीतिं कुर्वन्तः पुरुषाः देहादिषु संगं हित्वा परं पदं यान्ति ॥२२॥ इत्युक्त्वाऽऽख्यानमाह हे । ऋषयः ! भवद्भिः पृष्टोऽहं यथामति तदाख्यानं

कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ॥ योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥ १९ ॥ एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य ॥ हित्वेतरान्प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥२०॥ अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः ॥ सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः ॥ २१ ॥ यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम् ॥ व्रजन्ति यत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोपशमः स्वधर्मः ॥ २२ ॥ अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान् ॥ नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः ॥ २३ ॥ एकदा धनुरुद्यम्य विचरन्मृगयां वने ॥ मृगाननुगतः श्रान्तः क्षुधितस्तृषितो भृशम् ॥ २४ ॥ जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ॥ ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ॥ २५ ॥ प्रतिरुद्धेन्द्रियप्राण मनोबुद्धिमुपारतम् ॥ स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥ विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च ॥ विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥

कथयामि यथा पक्षिणः स्वशक्त्यनुरूपं गगने गच्छन्ति न तन्मापयितुं शक्नुवन्ति तथा विद्वांसोऽपि यथामति विष्णुलीलां नदन्ति ॥२३॥ अथैकदा परीक्षित् मृगयायां वने गतः तत्र मृगाननुगच्छन् श्रान्तः क्षुधितस्तृषितः ॥२४॥ जलमपश्यन् ऋषेराश्रमं विवेश । तत्र मीलिताक्षं शान्तं ॥२५॥ जितेन्द्रियं समाधौ स्थितमविक्रियम् ॥ २६ ॥ कृष्णमृगचर्मणाछन्नं शमीकं मुनिं दृष्ट्वा शुष्कतालुः राजा जलं ययाचे ॥ २७ ॥



१ भगवत्पदस्यार्थः । २ धृतम् ।

ततोऽप्राप्ततृणासनादिसत्कारो राजाऽऽत्मानमपमानितमिव ज्ञात्वा क्षुत्तृड्भ्यां पीडितो मत्सरयुतः सन् मुनिं प्रति चुकोप ॥२८॥२९॥ ततः क्रुद्धो राजा ऋषेः स्कन्धे मृतसर्पं धनुष्कोटया निधाय पुरं ययौ॥३०॥यतोऽस्य ऋषेः समाधिः सत्यो मिथ्या वा इति जिज्ञासया सर्पः स्थापितः ॥३१॥ पश्चात् तस्य पुत्रः शृङ्गी नाम बालकैः सह क्रीडन् सन् राज्ञोऽपराधं श्रुत्वा बालकमध्ये इदं जगाद ॥ ३२ ॥ अहो राज्ञामधर्मोऽयं पुष्टशुनामिव पश्यत ॥३३॥ किंच ब्राह्मणैः क्षत्रियो द्वारपालो निरूपितः । स तद्गृहस्थं सर्वं भोक्तुं कथमर्हति ॥ ३४ ॥ अधर्मिणां

अलब्धतृणभूम्यादिरसंप्राप्तार्घसूनृतः ॥ अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह ॥२८॥ अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ॥ ब्राह्मणं प्रत्यभूद्ब्रह्मन्मत्सरो मन्युरेव च ॥ २९ ॥ स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ॥ विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागमत् ॥ ३० ॥ एष किं निभृताशेषकरणो मीलितेक्षणः ॥ मृषासमाधिराहोस्वित् किं नः स्यात्क्षत्रबन्धुभिः ॥३१॥ तस्य पुत्रोऽति तेजस्वी विहरन्बालकोऽर्भकैः ॥ राज्ञाऽघं प्रापितं तात श्रुत्वा तत्रेदमब्रवीत् ॥३२॥ अहो अधर्मः पालानां पीव्नां बलिभुजामिव ॥ स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव ॥३३॥ ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो निरूपितः॥ स कथं तद्गृहे द्वाःस्थःसभाण्डं भोक्तुमर्हति ॥ ३४ ॥ कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ॥ तद्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥३५॥ इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकान् ॥ कौशिक्याऽप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥ इति लङ्घितमर्यादं तक्षक सप्तमेऽहनि ॥ दङ्क्ष्यति स्म कुलाङ्गारं चोदितो मे ततद्रुहम्[1] ॥३७॥ ततोऽभ्येत्याश्रमं बालो गले सर्पकलेवरम्॥ पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह॥३८॥

शास्तरि श्रीकृष्णे दूरं गते सति कुपथगामिनोऽद्य शास्मि मम बलं पश्यत ॥ ३५ ॥ इत्युक्त्वा क्रोधताम्राक्षः शृङ्गी कौशिक्या उदकमाचम्य शापं विससर्ज ॥ ३६ ॥ एवं लङ्घितमर्यादं नृपं मत्प्रेरितस्तक्षकः सप्तमेऽहनि दङ्क्ष्यति ॥ ३७ ॥ ततः स्वाश्रमं गत्वा सर्पयुतं पितरं दृष्ट्वा मुक्तकण्ठो रुरोद ॥ ३८ ॥

१ तातद्रुहम् ।

तदा शमीकः पुत्रविलापं श्रुत्वा शनैर्नेत्रे उन्मील्य स्वस्कन्धे मृतसर्पं च दृष्ट्वा ॥ ३९ ॥ तं सर्पं विसृज्य पुत्रं पप्रच्छ । हे वत्स ! कस्मात् त्वं रोदिषि । केन तेऽपराधः कृतः । ततः पुत्रः सर्वं न्यवेदयत् ॥४०॥ ततः शापं श्रुत्वा मुनिरुवाच । हे पुत्र ! त्वया महत् पापं कृतम् । अल्पापराधे महान् दण्डः कृतः ॥४१॥ हे अपक्वबुद्धे ! विष्णुसमं राजानं नृभिः समानं द्रष्टुं नार्हसि । यस्य राज्ञस्तेजसा प्रजा सुखं विन्दन्ति॥४२॥ तस्मिन् राज्ञि मृते सति लोकोऽयं चौरादिभिर्नंक्ष्यति ॥ ४३ ॥ नष्टनाथस्य लोकस्य चौरादेर्हेतोर्यत् पापं भविष्यति तदद्य नः समुपैष्यति

स वा आङ्गिरसो ब्रह्मञ्छ्रुत्वा सुतविलापनम् ॥ उन्मील्य शनकैर्नेत्रे दृष्ट्वा स्वांसे मृतोरगम् ॥३९॥ विसृज्य पुत्रं पप्रच्छ वत्स कस्माद्धि रोदिषि ॥ केन वा ते प्रतिकृतमित्युक्तः स न्यवेदयत् ॥ ४० ॥ निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनन्दत ॥ अहो बतांहो महदद्य ते कृतं स्वल्पीयसि द्रोह उरुर्दमो धृतः ॥४१॥ न वै नृभिर्नरदेवं पराख्यं संमातुमर्हस्यविपक्वबुद्धे ॥ यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः ॥४२॥ अलक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग लोकः ॥ तदा हि चौरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात् ॥४३॥ तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य वसोर्विलुम्पकात् ॥ परस्परं घ्नन्ति शपन्ति वृञ्जते पशून्स्त्रियोऽर्थान्पुरुदस्यवो जनाः ॥ ४४ ॥ तदार्यधर्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः ॥ ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसंकरः ॥४५॥ धर्मपालो नरपतिः स तु सम्राड् बृहच्छ्रवाः॥साक्षान्महाभागवतो राजर्षिर्हयमेधयाट्॥क्षुत्तृट्श्रमयुतो दीनो नैवास्मच्छापमर्हति ॥४६॥ अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना ॥ पापं कृतं तद्भगवान्सर्वात्मा क्षन्तुमर्हति ॥ ४७ ॥

॥ ४४ ॥ ततो नृणां वर्णाश्रमाचारयुतो धर्मो नश्यति ॥ शुनां कपीनामिव वर्णसंकरो भवेत् ॥ ४५ ॥ किंच अयं चक्रवर्ती महाभागवतो राजर्षिःक्षुत्तृट्श्रमयुतोऽस्मत्तः शापं नार्हति ॥ ४६ ॥ अथ भगवन्तं प्रार्थयते ॥ अपक्वबुद्धिना बालेन महाभागवते राज्ञि पापं कृतं तद् भगवान् क्षन्तुमर्हति ॥ ४७ ॥



---

१ संबन्धशून्यम् । २ अपहर्तुः । ३ अपहरन्ति । ४ अभिनिवेशितं निबद्धम् ।

एवंभूताः भागवताः अपराधकर्तुः प्रतिशापं न कुर्वन्ति ॥४८॥ इति पुत्रकृताघेन संतप्तो मुनिः राज्ञा कृतमपराधं न चिन्तयामास ॥ ४९ ॥ किंच अस्मिन् लोके सुखदुःखादिष्वन्यैर्योजिता अपि साधवो न व्यथन्ते न हृष्यन्तीत्युक्त्वा राज्ञे शिष्यं प्राहिणोत् ॥ ५० ॥ इति श्रीभा० चू० प्रथमेऽष्टादशोऽध्यायः ॥१८॥ प्रायोपविष्टे गङ्गायां राज्ञि योगिजनावृते । शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥१॥ सूत उवाच ॥ अथ

तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि ॥ नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥४८॥ इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः ॥ स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत् ॥४९॥ प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः ॥ न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥५०॥ इतिश्रीभा०महापु० प्रथमस्कन्धेऽष्टादशोऽध्यायः ॥१८॥

सूत उवाच ॥ महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्मनाः ॥ अहो मया नीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥ ध्रुवं ततो मे कृतदेवहेलनाद्दुरत्ययं व्यसनं नातिदीर्घात् ॥ तदस्तु कामं त्वघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा ॥ २ ॥ अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ॥ दहत्वभद्रस्य पुनर्न मेऽभूत्पापीयसी धीर्द्विजदेवगोभ्यः ॥ ३ ॥ स चिन्तयन्नित्थमथाशृणोद्यथा मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः ॥ स साधु मेने न चिरेण तक्षकानलं प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥ अथो विहायेममम् च लोकं विमर्शितो हेयतया पुरस्तात् ॥ कृष्णाङ्घ्रिसेवामधिमन्यमान उपाविशत्प्रायममर्त्यनद्याम् ॥ ५ ॥

राजा स्वकृतं निन्द्यं कर्म चिन्तयन् वदति । अहो निरपराधे ब्राह्मणे मयाऽपराधः कृतः ॥१॥ अतो मेऽचिरादपराधजं दुःखं भवतु । यथा पुनरेवं न कुर्याम् ॥२॥ किं च ब्रह्मकोपोत्थितोऽग्निरद्यैव मे राजसैन्यकोशादिकं दहतु । पुनरेवं द्विजदेवगोभ्यो मे बुद्धिर्मा भूत ॥ ३ ॥ इत्थं चिन्तयन् स राजा शमीकप्रेषितशिष्यमुखेन तक्षकात् मृत्युं श्रुत्वा साधु मेने ॥ ४ ॥ अथ कृष्णाङ्घ्रिसेवामधिकं मन्यमानो राजा भगवच्चरणनिर्गतायां गंगायां प्रायोपवेशं कृतवान् ॥ ५ ॥

---

१ गुणः सुखदुःखादय इति यावत् । २ मृत्युः । ३ विषयमग्नस्य । अनशनम् ।

या गङ्गाऽन्तर्बहिश्च लोकपालैः सह लोकान् पुनाति तां मरिष्यमाणः को न सेवेत ॥ ६ ॥ तत्र मुक्तसमस्तसङ्गः स नृपो मुकुन्दाङ्घ्रिं दध्यौ ॥ ७ ॥ एतस्मिन्नन्तरे तद्दर्शनार्थं सशिष्याः मुनयः आगताः ॥ ८ ॥ ते चात्रिवसिष्ठच्यवनशरद्वदरिष्टनेमिभृग्वङ्गिरःपराशरविश्वामित्रपरशुरामोतथ्येन्द्रप्रमदेध्मवाहमेधातिथिदेवलार्ष्टिषेणभारद्वाजगौतमपिप्पलादमैत्रेयौर्वकवषागस्तिव्यासनारदाः ॥ ९ ॥ १० ॥



या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ॥ पुनाति लोकानुभयत्र सेशान्कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥ इति व्यवच्छिद्य स पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ॥ दध्यौ मुकुन्दाङ्घ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसङ्गः ॥ ७ ॥ तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ॥ प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ॥ ८ ॥ अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च ॥ पराशरो गाधिसुतोऽथ राम उतथ्य इन्द्रप्रमदेध्मबाहौ ॥ ९ ॥ मेधातिथिर्देवल आर्ष्टिषेणो भारद्वाजो गौतमः पिप्पलादः ॥ मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ॥ १० ॥ अन्ये च देवर्षिब्रह्मर्षिवर्या राजर्षिवर्या अरुणादयश्च ॥ नानार्षिवर्यप्रवरान्समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥११॥ सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ॥ विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽभिगृहीतपाणिः ॥ १२ ॥ परीक्षिदुवाच ॥ अहो वयं धन्यतमा नृपाणां महत्तमानुग्रहणीयशीलाः ॥ राज्ञां कुलं ब्राह्मणपादशौचाद् दूराद्विसृष्टं बत गर्ह्यकर्म ॥ १३ ॥ तस्यैव मेऽघस्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ॥ निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो भयमाशु धत्ते ॥ १४ ॥

॥४४॥

अन्ये च देवर्षिब्रह्मर्षिराजर्षिवर्याः । एतान् सर्वान् पूजयित्वा राजा शिरसा ववन्दे ॥ ११ ॥ तथा सुखोपविष्टेषु पुनः प्रणम्याञ्जलिं बद्ध्वा स्वचिकीर्षितं विज्ञापयामास ॥१२॥ परीक्षिदुवाच ॥ अहो वयं भवद्भिरनुगृहीताः अत एव धन्याः । राज्ञां कुलं तु ब्राह्मणपादशौचस्थलेऽपि स्थातुमयोग्यम् ॥१३॥ आस्तां तावदनुग्रहः । ब्रह्मशापोऽपि मेऽनुग्रहाय भवति, यतः पापात्मनो गृहेषु सक्तचित्तस्य मे स्वरूपप्राप्तये भगवान्

१ रेणुभिः सर्वोत्कृष्टमम्बु तस्य वाहिनी । २ निश्चित्य । ३ विविक्तं शुद्धम् ।

द्विजशापतया बभूव ॥ यस्मिन् शापे सति विरक्तो राजा भवति ॥ १४ ॥ हे विप्राः ! ईशे धृतचित्तं शरणागतं मां जानन्तु । द्विजप्रेरितस्तक्षकोऽलं दशतु ॥ परं तु विष्णुकथाः गायत ॥ १५ ॥ किंच अहं यद्यज्जन्म प्रतियामि तत्तज्जन्मनि पुनर्भगवद्रतिः साधुसङ्गश्चास्तु द्विजेभ्यो वो नमः ॥१६॥ इति निश्चययुक्तो राजा स्वसुतोपरि राज्यभारं स्थापयित्वा गङ्गायाः दक्षिणतटे पूर्वाग्रदर्भासनेषूदङ्मुख आस्ते स्म ॥१७॥ एवं

तं मोपयातं प्रतियन्तु विप्रा गङ्गा च देवी धृतचित्तमीशे ॥ द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः ॥ १५ ॥ पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु ॥ महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥ १६ ॥ इति स्म राजाऽध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः ॥ उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्तभारः ॥ १७ ॥ एवं च तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसंघाः ॥ प्रशस्य भूमौ व्यकिरन्प्रसूनैर्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥ १८ ॥ महर्षयो वै समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः ॥ ऊचुः प्रजानुग्रहशीलसारा यदुत्तमश्लोकगुणाभिरूपम् ॥ १९ ॥ न वा इदं राजर्षिवर्य चित्रं भवत्सु कृष्णं समनुव्रतेषु ॥ येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २० ॥ सर्वे वयं तावदिहास्महेऽद्य कलेवरं यावदसौ विहाय ॥ लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः ॥ २१ ॥ आश्रुत्य तदृषिगणवचः परीक्षित्समं मधुच्युद्गुरु चाव्यलीकम् ॥ अभाषतैतानभिवन्द्य युक्तं शुश्रूषमाणश्चरितानि विष्णोः ॥ २२ ॥

राज्ञि प्रायोपविष्टे सति देवाः पुष्पवृष्टिं चक्रुः । मुहुर्मुहुर्दुन्दुभयश्च नेदुः ॥ १८ ॥ महर्षयः साधु साध्विति प्रशस्यानुमोदमानाः सन्तः ऊचुः ॥ १९ ॥ हे राजर्षिवर्य ! श्रीविष्णुभक्तेषु भवत्सु तदिदं चित्रं न, पाण्डवा अपि भगवत्पार्श्वकामाः राज्यासनं जहुः ॥ २० ॥ अथ परस्परमूचुः असौ राजा देहं त्यक्त्वा विशोकं परलोकं यावद् यास्यति तावद् वयं सर्वे इह स्थास्यामः ॥ २१ ॥ परीक्षित् तदृषिगणवचः श्रुत्वा तानभिवन्द्य विष्णोश्चरितानि शुश्रूषमाणः सन् बभाषे ॥ २२ ॥

---

१ जन्म । २ निर्मायम ।

हे ऋषयः ! यूयं सर्वेऽत्रागता युष्माकमिह परत्र वा परानुग्रहं विनाऽर्थो नास्ति ॥२३॥ अतो वः इमं प्रष्टव्यं पृच्छे । विप्राः यूयमेकमतयः सन्तः सर्वावस्थासु म्रियमाणैश्च यत् कृत्यं तद् विचारयत ॥२४॥ ततस्तेषु यागयोगतपोदानादिभिर्विवदमानेषु सत्सु यदृच्छया गां पर्यटन् स्त्रीबालैर्वृतोऽवधूतवेषो निजलाभतुष्टो व्यासपुत्रस्तत्र प्राप्तः ॥२५॥ षोडशवर्षं चारुनेत्रमुन्नतनासं सुभ्र्वाननम् ॥२६॥ गुप्तजत्रुं विशालवक्ष संदिग-

समागताः सर्वत एव सर्वे वेदा यथा मूर्तिधरास्त्रिपृष्ठे ॥ नेहाथवाऽमुत्र च कश्चनार्थमृते परानुग्रहमात्मशीलम् ॥ २३ ॥ ततश्च वः पृच्छयमिमं विपृच्छे विश्रम्य विप्रा इतिकृत्यतायाम् ॥ सर्वात्मना म्रियमाणैश्च कृत्यं शुद्धं च तत्रामृशताभियुक्ताः ॥ २४ ॥ तत्राभवद्भगवान्व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ॥ अलक्ष्यलिङ्गो निजलाभतुष्टो वृतः स्त्रीबालैरवधूतवेषः ॥ २५ ॥ तं द्व्यष्टवर्षं सुकुमारपादकरोरुबाह्वंसकपोलगात्रम् ॥ चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननं कम्बुसुजातकण्ठम् ॥२६॥ निगूढजत्रुं पृथुतुङ्गवक्षसमावर्तनाभिं वलिवल्गूदरं च ॥ दिगम्बरं वक्त्रविकीर्णकेशं प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ २७ ॥ श्यामं सदाऽपीच्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन ॥ प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ २८ ॥ स विष्णुरातोऽतिथय आगताय तस्मै सपर्यां शिरसाऽऽजहार ॥ ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपविवेश पूजितः ॥ २९ ॥ स संवृतस्तत्र महान्महीयसां ब्रह्मर्षिराजर्षिदेवर्षिसंघैः ॥ व्यरोचतालं भगवान्यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः ॥ ३० ॥ प्रशान्तमासीनमकुण्ठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य ॥ प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिर्नत्वा गिरा सूनृतयाऽन्वपृच्छत् ॥ ३१ ॥

म्बरं हरिसदृशकान्तिम् ॥ २७ ॥ श्यामं शरीरकान्त्या स्त्रीणां मनोज्ञं गुप्ततेजसमपि शुकं दृष्ट्वा तल्लक्षणज्ञा मुनयः आसनेभ्यः प्रत्युत्थिताः ॥२८॥ ततः परीक्षिदागताय तस्मै शिरसैव सपर्यां चकार । ततः स्त्रियोऽर्भकाः निवृत्ताः । स पूजितः सन् महासने उपविवेश ॥२९॥ स शुको ब्रह्मर्षिदेवर्षिसंघैर्वेष्टितो ग्रहादिभिश्चन्द्र इव व्यरोचत ॥ ३०॥ ततः परीक्षित् समासीनं शुकं मूर्ध्ना प्रणम्य सूनृतया गिरा पप्रच्छ ॥ ३१ ॥

१ सत्यलोके- । २ आर्षो ह्रस्वः । ३ अपीच्यमत्युत्तमम् । ४ संघिरार्षः ।

हे ब्रह्मन् ! अहो वयं क्षत्रबन्धवो भवद्भिः कृपया योग्याः कृताः ॥३२॥ येषां वः स्मरणात् पुंसां गृहाः सद्यः शुध्यन्ति किं पुनर्दर्शनस्पर्शनादिभिः ॥ ३३ ॥ हे योगिन् ! तव सान्निध्यात् पुंसां महापापान्यपि सद्यो नश्यन्ति विष्णुसान्निध्यात् दैत्या यथा ॥३४॥ पाण्डवानां प्रियः कृष्णः पार्थानां प्रीत्यर्थं तद्गोत्रोत्पन्नस्य मे प्रीतो जातः खलु ॥ ३५ ॥ अन्यथा म्रियमाणानां नस्तव दर्शनं कथं स्यात् ॥ ३६ ॥ अतो योगिनां गुरुं त्वां पृच्छामि । इह म्रियमाणस्य यत् कार्यं यच्छ्रोतव्यं यद् जाप्यं स्मर्तव्यं भजनीयं च यत् तद् ब्रूहि ॥ ३७ ॥ ३८ ॥

अहो अद्य वयं ब्रह्मन्सत्सेव्याः क्षत्रबन्धवः ॥ कृपयाऽतिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥३२॥ येषां संस्मरणात्पुंसां सद्यः शुध्यन्ति वै गृहाः ॥ किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः ॥३३॥ सान्निध्यात्ते महायोगिन्पातकानि महान्त्यपि ॥ सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः ॥ ३४ ॥ अपि मे भगवान्प्रीतः कृष्णः पाण्डुसुतप्रियः ॥ पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबान्धवः ॥३५॥ अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम् ॥ नितरां म्रियमाणानां संसिद्धस्य वनीयसः ॥ ३६ ॥ अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् ॥ पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा ॥ ३७ ॥ यच्छ्रोतव्यमथो जाप्यं यत्कर्तव्यं नृभिः प्रभो ॥ स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ॥ ३८ ॥ नूनं भगवतो ब्रह्मन्गृहेषु गृहमेधिनाम् ॥ न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ॥ ३९ ॥ सूत उवाच ॥ एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा ॥ प्रत्यभाषत धर्मज्ञो भगवान्बादरायणिः ॥ ४० ॥ इति श्रीभागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां प्रथमस्कन्धे शुकागमनं नामैकोनविंशोऽध्यायः ॥ १९ ॥ समाप्तोऽयं प्रथमस्कन्धः ॥ १ ॥

यतस्तवावस्थानं गृहाश्रमिणां गृहेषु गोदोहनकालमपि न लक्ष्यते ॥ ३९ ॥ सूत उवाच ॥ हे शौनक ! राज्ञैवं पृष्टो धर्मज्ञो भगवान् शुकः प्रत्यभाषत ॥ ४० ॥ इतिश्रीभागवते महापुराणे प्रथमस्कन्धे चूर्णिकायामेकोनविंशोऽध्यायः ॥ १९ ॥ यः साक्षाद् भुवि कौरवादिहननं कृत्वा नृपं धर्मजं, राज्ये न्यस्य मखान् विधाय सविधीन्ख्यातांश्च तत्पौत्रकम् । गर्भे रक्षितवांस्ततः कलिजयं ख्यातं विधाय स्थितं, कृष्णोऽगात्स्वपदं सदाऽस्तु स हरिः संसारतापापहः ॥ १ ॥

१ आत्तं बन्धुकृत्यं येन सः । २ वनयितृतमो वनीयांस्तस्यात्युदारतया मां याचेथा इति प्रवर्तकस्य ।

इति सचूर्णिके श्रीमद्भागवते प्रथमस्कन्धः समाप्तः


वराह
गरुड
व्यास
सत्यवती
दत्तात्रेय
सनत्कुमार
नर
नारायण
ध्रुव
पृथु
ऋषभदेव
हयग्रीव
ब्रह्मा
नारद
शुक
परीक्षित
दैत्य
प्रल्हाद
नृसिंह
हरि
गजेंद्र
बली
वामन
हंसावतार
नारद
स्वायंभु मनु
धन्वंतरी
परशुराम
लक्ष्मण
राम
राम
कृष्ण
कंस
बौद्ध
कलंकी

श्रीगणेशाय नमः॥ द्वितीये तु दशोऽध्यायैः श्रीभागवतमादितः। उद्देशलक्षणोक्तिभ्यां संक्षेपेणोपवर्ण्यते॥१॥ तत्र तु प्रथमेऽध्याये कीर्तनश्रवणादिभिः॥ स्थविष्ठे भगवद्रूपे मनसो धारणोच्यते ॥२॥ यन्नामकीर्तनं नाम तपोयोगादिसत्फलम्॥ तं नित्यं परमानन्दं हरिं नरमनुस्मर ॥ ३ ॥ श्रीशुक उवाच ॥ हे नृप! पुंसां श्रोतव्यादिषु श्रेष्ठ आत्मविदां मान्यः एष ते प्रश्नः ॥१॥ हे राजेन्द्र! नृणां श्रोतव्यादीनि बहूनि सन्ति॥ आत्मतत्त्वं तु न पश्यतां संसारिणां जीवनं वृथैव ॥२॥ तदाह। रात्रिर्निद्रया रत्या च ह्रियते, दिवाऽर्थेच्छया कुटुम्बभरणेन च ह्रियते ॥ ३ ॥

ॐ नमो भगवते वासुदेवाय ॥ श्रीशुक उवाच ॥ वरीयानेष ते प्रश्नः कृतो लोकहितं नृप ॥ आत्मवित्सम्मतः पुंसां श्रोतव्यादिषु यः परः ॥ १ ॥ श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः ॥ अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम् ॥२॥ निद्रया ह्रियते नक्तं व्यवायेन च वा वयः ॥ दिवा चार्थेहया राजन्कुटुम्बभरणेन वा ॥३॥ देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि ॥ तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति ॥ ४ ॥ तस्माद्भारत सर्वात्मा भगवान्हरिरीश्वरः ॥ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥ ५ ॥ एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ॥ जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥ ६ ॥ प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः ॥ नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥ ७ ॥ इदं भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम् ॥ ८ ॥ परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया ॥ गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ९ ॥ तदहं तेऽभिधास्यामि महापौरुषिको भवान् ॥ यस्य श्रद्दधतामाशु स्यान्मुकुन्दे मतिः सती ॥ १० ॥

एवं देहापत्यकलत्रादिषु निधनं पश्यन्तोऽपि ते आत्महितं न पश्यन्ति॥४॥ हे राजन्! तस्मादभयमिच्छता पुंसा सर्वात्मा हरिः श्रोतव्यः कीर्तितव्यः स्मर्तव्यश्च॥५॥ सांख्ययोगाभ्यां पुंसां मरणकाले नारायणस्मृतिः परो जन्मलाभः॥६॥ बहुधा मुनयो विधिनिषेधातीताः ब्रह्मनिष्ठाः अपि हरिगुणानुकथने रमन्ते ॥७॥ तदिदं भगवद्गुणानुकथनरूपं श्रीभागवतं नाम पुराणं सर्ववेदतुल्यं नैर्गुण्ये परिनिष्ठितोऽपि हरिलीलया गृहीतचेताः सन् द्वापरादौ पितुर्द्वैपायनादहमधीतवान् ॥ ८ ॥ ९ ॥ तद्भागवतं तुभ्यं कथयिष्यामि, यस्मिन् श्रद्धां कुर्वतां पुंसां कृष्णे निर्मला मतिः स्यात् ॥१०॥

१ यतो लोकहितं भवति । २ सैन्यं परिकरः ।

हे नृप! मोक्षमिच्छतां योगिनां सद्भिर्हरेर्नामानुकीर्तनमेव कथितम्॥ ११॥अल्पमेव ममायुः परिशिष्टं किमहं साधयेयमिति मा शुच इत्याह। किमिति प्रमत्तस्य बहूनि वर्षाणि किंफलानि। ज्ञानप्रयासेन मुहूर्तमपि यज्ज्ञातं कल्याणाय भवति तदेव वरम्॥१२॥ खट्वांगो नाम राजा स्वायुषो मुहूर्तमात्रं परिमाणं ज्ञात्वा राज्यादिकं सर्वं त्यक्त्वा हरेः पदं प्राप्तः॥१३॥ हे नृप! तव तु सप्ताहो जीवितावधिरस्ति तर्हि तावत्कालं पारलौकिकं साधनं त्वं संपादय ॥१४॥ अन्तकाले प्राप्ते निर्ममत्वशस्त्रेण देहपुत्रकलत्रादिषु स्पृहां छिन्द्यात् ॥१५॥ धीरो गृहात् निर्गत्य तीर्थे स्नात्वा विजने शुचौ

एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ॥ योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ ११ ॥ किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह ॥ वरं मुहूर्तं विदितं घटेत श्रेयसे यतः ॥१२॥ खट्वाङ्गो नाम राजर्षिर्ज्ञात्वेयत्तामिहायुषः॥ मुहूर्तात्सर्वमुत्सृज्य गतवानभयं हरिम् ॥१३॥ तवाप्येतर्हि कौरव्य सप्ताहं जीवितावधिः ॥ उपकल्पय तत्सर्वं तावद्यत्साम्परायिकम् ॥१४॥ अन्तकाले तु पुरुष आगते गतसाध्वसः ॥ छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् ॥ १५ ॥ गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः ॥ शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ १६ ॥ अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ॥ मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन् ॥१७॥ नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः ॥ मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया॥१८॥तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा ॥ मनो निर्विषयं युक्त्वा ततः किंचन न स्मरेत्॥ पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति ॥१९॥ रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः ॥ यच्छेद्धारणया धीरो हन्ति या तत्कृतं मलम् ॥२०॥ यतः संधार्यमाणायां योगिनो भक्तिलक्षणः ॥ आशु संपद्यते योग आश्रयं भद्रमीक्षतः ॥२१॥



देशे आसीनः सन् ॥१६॥ मनसा प्रणवमभ्यसेत् । जितश्वासः सन् मनो वशीकुर्यात् ॥१७॥ मनसा विषयेभ्यः इन्द्रियाणि नियम्य बुद्ध्या मनो भगवद्रूपे धारयेत् ॥ १८ ॥ एकैकं पादाद्यवयवं ध्यात्वा ततः किंचन न स्मरेत् । यत्र मनः प्रसीदति तत् विष्णोः पदं ज्ञातव्यम् ॥१९॥ धीरः रजस्तमोभ्यां कर्षितं मनो धारणया वशीकुर्यात् ॥ २० ॥ यस्यां क्रियमाणायां सत्यां योगिनो भक्तियोग आशु संपद्यते ॥ २१ ॥

१ अलक्षितैः । २ त्रिभिरकारादिभिर्वर्तितं त्रिवृत् । ३ समग्रस्यादवियुक्तेन । ४ 'मानसे पूजन सक्तास्ते यान्ति परमं पदम्' इत्यधिकः पाठः क्वचित् ।

राजोवाच। हे ब्रह्मन्! हरेर्यादृशी धारणा कर्तव्या तां वद या पुरुषस्य मनोमलं हरेत्॥२२॥ श्रीशुक उवाच। जितासनो जितसङ्गो जितेन्द्रियो भगवतो विराड्रूपे धिया मनो धारयेत् ॥ २३ ॥ अयं तस्य स्थूलो देहो यत्र त्रैकालिकं विश्वं दृश्यते ॥ २४ ॥ तस्मिन् पृथिव्यादिसप्तावरण संयुते विराड्रूपे धारणाश्रयो भगवान् ॥२५॥ तस्य पादमूलं पातालं पार्ष्णिप्रपदे रसातलं गुल्फौ महातलं जङ्घे तलातलम् ॥ २६ ॥ जानुनी

राजोवाच ॥ यथा संधार्यते ब्रह्मन्धारणा यत्र संमता ॥ यादृशी वा हरेदाशु पुरुषस्य मनोमलम् ॥ २२ ॥ श्रीशुक उवाच ॥ जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः ॥ स्थूले भगवतो रूपे मनः संधारयेद्धिया ॥२३॥ विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् ॥ यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च सत् ॥ २४ ॥ आण्डकोशे शरीरेऽस्मिन्सप्तावरणसंयुते ॥ वैराजः पुरुषो योऽसौ भगवान्धारणाश्रयः ॥ २५ ॥ पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम् ॥ महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे ॥ २६ ॥ द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलं चातलं च ॥ महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृणन्ति ॥२७॥ उरःस्थलं ज्योतिरनीकमस्य ग्रीवा महर्वदनं वै जनोऽस्य ॥ तपो रराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः ॥२८॥ इन्द्रादयो बाहव आहुरुस्राः कर्णौ दिशः श्रोत्रममुष्य शब्दः ॥ नासत्यदस्रौ परमस्य नासे घ्राणोऽस्य गन्धो मुखमग्निरिद्धः ॥२९॥ द्यौरक्षिणी चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे च ॥ तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा ॥३०॥ छन्दांस्यनन्तस्य शिरो गृणन्ति दंष्ट्रा यमः स्नेहकला द्विजानि ॥ हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः ॥३१॥

सुतलमतलं वितलमूरुद्वयं जघनं महीतलं नाभिर्नभस्तलम् ॥२७॥ उरःस्थलं स्वर्गो ग्रीवा महर्लोको वदनं जनलोको ललाटं तपोलोकः शीर्षाणि सत्यलोकः॥२८॥ इन्द्रादयो बाहवः कर्णौ दिशः श्रोत्रं शब्दोऽश्विनीकुमारौ नासापुटे घ्राणं गन्धोऽग्निर्मुखम्॥२९॥ अन्तरिक्षं नेत्रगोलके चक्षुः सूर्यो दिनरात्री पक्ष्माणि भ्रूकटाक्षो ब्रह्मपदं तालुरापो रसो जिह्वा॥३०॥ शिरो वेदः दंष्ट्राः यमो दन्ताः पुत्रादिस्नेहलेशाः हासो माया सर्गः कटाक्षः ॥३१॥

उत्तरोष्ठो लज्जाऽधरोष्ठो लोभो धर्मः स्तनः पृष्ठमधर्मः प्रजापतिः शिश्नं मित्रावरुणौ वृषणौ समुद्राः कुक्षिरस्थिसंघाः गिरयः ॥३२॥ नाड्यो नद्यो रोमाणि वृक्षाः श्वासो वायुर्गतिः कालः संसारः कर्म ॥३३॥ केशाः मेघा संध्या वासः प्रधानं हृदयं चन्द्रो मनः ॥३४॥ चित्तं महत्तत्त्वमन्तःकरणम् अहंकारो रुद्रो नखान्यश्वोष्ट्रगजादयः श्रोणिदेशो मृगाः ॥३५॥ शिल्पनैपुण्यं पक्षिणो बुद्धिर्मनुर्निवासो मनुजः षड्जा-

व्रीडोत्तरोष्ठोऽधर एव लोभो धर्मः स्तनोऽधर्मपथोऽस्य पृष्ठः ॥ कस्तस्य मेढ्रं वृषणौ च मित्रौ कुक्षिः समुद्रा गिरयो-ऽस्थिसंघाः ॥ ३२ ॥ नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहा विश्वतनोर्नृपेन्द्र ॥ अनन्तवीर्यः श्वसितं मातरिश्वा गतिर्वयः कर्म गुणप्रवाहः ॥३३॥ ईशस्य केशान्विदुरम्बुवाहान्वासस्तु संध्यां कुरुवर्य भूम्नः ॥ अव्यक्तमाहुर्हृदयं मनश्च स चन्द्रमाः सर्वविकारकोशः ॥ ३४ ॥ विज्ञानशक्तिं महिमामनन्ति[1] सर्वात्मनोऽन्तःकरणं गिरित्रम् ॥ अश्वाश्वतर्युष्ट्र गजा नखानि सर्वे मृगाः पशवः श्रोणिदेशः[2] ॥ ३५ ॥ वयांसि तद्व्याकरणं विचित्रं मनुर्मनीषा मनुजो निवासः ॥ गन्धर्वविद्याधरचारणाप्सरःस्वरस्मृतीरसुरानीकवीर्यः ॥ ३६ ॥ ब्रह्माननं क्षत्रभुजो महात्मा विड्ऊरुरङ्घ्रिश्रितकृष्णवर्णः ॥ नानाभिधाभीज्य[3]गणोपपन्नो द्रव्यात्मकः कर्मवितानयोगः ॥ ३७ ॥ इयानसावीश्वरविग्रहस्य यः सन्निवेशः कथितो मया ते ॥ संधार्यतेऽस्मिन्वपुषि स्थविष्ठे मनः स्वबुद्ध्या न यतोऽस्ति किंचित् ॥ ३८ ॥ स सर्वधीवृत्त्यनुभूत-सर्व आत्मा यथा स्वप्नजनेक्षितैकः ॥ तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः ॥ ३९ ॥ इति श्रीमा-गवते महापुराणे द्वितीयस्कन्धे महापुरुषसंस्थानुवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥



दिस्वरस्मृतयो गन्धर्वादयः असुरानीकं वीर्यम् ॥३६॥ ब्राह्मणाः मुखं क्षत्रियाः भुजाः ऊरू वैश्याः पादौ शूद्राः यज्ञप्रयोगः कर्म ॥ ३७ ॥ एतावान् विराड्देहस्य संनिवेशो मया ते कथितः । अस्मिन् स्वबुद्ध्या मनः संधार्यते ॥ ३८ ॥ तं सत्यमानन्दनिधिं भजेत अन्यत्र न सज्जेत् यतोऽन्यस्मात् संसारो भवति ॥३९॥ इति श्रीभागवतचूर्णिकायां द्वितीयस्कंधे प्रथमोऽध्यायः ॥ १ ॥

१ 'महमामनन्ति' इत्यपि पाठः । २ 'श्रोणिदेशे' इत्यपि पाठः । ३ अभीज्या देवाः । ×पृष्ठम् इ० पा० ।

द्वितीये तु ततः स्थूलधारणातो जितं मनः ॥ सर्वसाक्षिणि सर्वेशे विष्णौ धार्यमितीर्यते ॥ १ ॥ शुक उवाच । एवं धारणया ब्रह्मा प्रलयसमये नष्टां स्मृतिं लब्ध्वा विश्वं यथापूर्वं ससर्ज ॥१॥ हे राजन् ! साधकस्य धीर्व्यर्थैः स्वर्गादिनामभिस्तत्तदिच्छां करोति अयं वेदब्रह्मणो मार्गः परंतु तत्तल्लोकं प्राप्तोऽपि मोक्षसुखं न लभते ॥२॥ अतः कविर्भोग्यार्थेऽन्यथा सिद्धे सति तदर्थं तत्र न यतेत ॥३॥ तदाह क्षितौ सत्यां शय्या-प्रयत्नैः किं बाहौ स्वसिद्धे सति उच्छीर्षके किम् अञ्जलौ सति बहुभोजनपात्रेण किम् दिग्वल्कलादौ सति वस्त्रैः किम् ॥४॥ पथि वस्त्रखण्डानि

श्रीशुक उवाच ॥ एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् ॥ तथा ससर्जेदममोघदृष्टिर्यथाऽप्ययात्प्राग्व्यवसायबुद्धिः ॥ १ ॥ शाब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः ॥ परिभ्रमंस्तत्र न विन्दतेऽर्थान्मायामये वासनया शयानः ॥ २ ॥ अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः ॥ सिद्धेऽन्यथाऽर्थे न यतेत तत्र परिश्रमं तत्र समीक्षमाणः ॥३॥ सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ॥ सत्यञ्जलौ किं पुरुधान्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः ॥४॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ॥ रुद्धा गुहाः किमजितोऽवति नोपसन्नान्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ ५ ॥ एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्तः ॥ तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ ६ ॥ कस्तां त्वनादृत्य परानुचिन्तामृते पशूनसतीं नाम युञ्ज्यात् ॥ पश्यञ्जनं पतितं वैतरण्यां स्वकर्मजान्परितापाञ्जुषाणम् ॥ ॥७॥ केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ॥ चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति॥८॥

किं न सन्ति । वृक्षा भिक्षां न दास्यन्ति किं जलार्थं सरितः शुष्काः किं निवासार्थं गुहाः रुद्धाः किम् ईश्वरः शरणागतान् किं न रक्षति यतः कवयो धनदुर्मदान्धान् भजन्ति ॥ ५ ॥ एवं विरक्तः सन् स्वचित्ते आत्मानं हरिं भजेत् । यस्मिन् भजनेऽविद्यानाशो भवति ॥ ६ ॥ तां धारणां त्यक्त्वा पशून् विना विषयचिन्तां कः कुर्यात् ॥ ७ ॥ केचित् पुरुषाः स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं चतुर्भुजं शङ्खचक्रादिधरम् ॥ ८ ॥

१ 'भूयः' इ० पा० । २ प्रादेशस्तर्जन्यङ्गुष्ठयोर्विस्तारः ।

प्रसन्नमुखं कमलनेत्रं पीताम्बरधरं किरीटकुण्डलाङ्गदादिहारैर्युक्तम् ॥९॥ कौस्तुभश्रीवत्सवनमालायुक्तं योगेश्वरैर्हृत्कमले स्थापितचरणकमलम् ॥१०॥
कटिसूत्राङ्गुलीयकनूपुरकङ्कणादिभिर्भूषितं स्निग्धकुञ्चितनीलकेशैः शोभायमानमुखम् ॥११॥ भ्रूविक्षेपेण सूचितानुग्रहं परमेश्वरं यावन्मनो धार-
णया निश्चलं स्यात् तावत् पश्येत् ॥ १२ ॥ हरेः पादादिमुखपर्यन्तमेकैकशोऽङ्गानि । तत्र जितंजितं स्थानं त्यक्त्वा परं परं ध्यायेत् ॥१३॥

प्रसन्नवक्त्रं नलिनायतेक्षणं कदम्बकिञ्जल्कपिशङ्गवाससम् ॥ लसन्महारत्नहिरण्मयाङ्गदं स्फुरन्महारत्नकिरीटकुण्ड-
लम् ॥ ९ ॥ उन्निद्रहृत्पङ्कजकर्णिकालये योगेश्वरास्थापितपादपल्लवम् ॥ श्रीलक्ष्मणं कौस्तुभरत्नकन्धरमम्लान
लक्ष्म्या वनमालयाऽऽचितम् ॥ १० ॥ विभूषितं मेखलयाऽङ्गुलीयकैर्महाधनैर्नूपुरकङ्कणादिभिः ॥ स्निग्धामलाकु-
ञ्चितनीलकुन्तलैर्विरोचमानाननहासपेशलम् ॥ ११ ॥ अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम् ॥ ईक्षेत
चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठते ॥ १२ ॥ एकैकशोऽङ्गानि धियाऽनुभावयेत्पादादि यावद्धसितं
गदाभृतः ॥ जितं जितं स्थानमपोह्य धारयेत् परं परं शुद्ध्यति धीर्यथा यथा ॥ १३ ॥ यावन्न जायेत परावरेऽस्मि-
न्विश्वेश्वरे द्रष्टरि भक्तियोगः ॥ तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत ॥ १४ ॥ स्थिरं सुखं चासन-
माश्रितो यतिर्यदा जिहासुरिममङ्ग लोकम् ॥ काले च देशे च मनो न सज्जयेत्प्राणं नियच्छेन्मनसा जितासुः ॥१५॥
मनः स्वबुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि ॥ आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विर-
मेत कृत्यात् ॥ १६ ॥ न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे ॥ न यत्र सत्त्वं न रजस्तमश्च
न वै विकारो न महान्प्रधानम् ॥ १७ ॥

एवं विश्वेश्वरे यावद् भक्तियोगो न जायते तावत्कर्मावसाने पुरुषस्य स्थूलं रूपं स्मरेत् ॥१४॥ अथ यतिर्यदेमं लोकं त्यक्तुमिच्छति तदा देशे
काले च मनः सज्जं कृत्वा स्थिरमासनमाश्रितो मनसा सह प्राणं नियच्छेत् ॥ १५ ॥ क्षेत्रज्ञे मनोबुद्ध्या नियम्य शुद्धे आत्मनि नियम्या-
त्मैवाहमिति प्राप्तशान्तिः सन् कृत्याद् विरमेत् ॥ १६ ॥ तदेवाह ॥ यत्र कालसत्त्वादिगुणादयः समर्था न ॥ १७ ॥

तद् वैष्णवं पदं हृदि ध्यात्वा मुनिरुपरमेत्॥१८॥इदानीं तस्य देहत्यागप्रकारमाह। पुरुषः स्वपार्ष्णिनागुदं निरुध्य जितश्रमः सन् वायुं नाभ्यादिषु षट्सु स्थानेषूर्ध्वं नयेत्॥१९॥तदाह॥नाभ्यां मणिपूरकचक्रे स्थितं प्राणं हृद्यनाहतचक्रेऽधिरोप्य तत उरसि विशुद्धिचक्रं नीत्वा ततः स्वतालुमूलं नीत्वा॥२०॥ततः शनैर्भ्रुवोरंतरं नीत्वा ब्रह्मरन्ध्रं निर्भिद्य देहं विसृजेत्॥२१॥एवं सद्योमुक्तिमुक्त्वा क्रममुक्तिमाह। यदीति। हे नृप! यदि पारमेष्ठ्या-

परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः[1] ॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यार्हपदं पदे पदे ॥ १८ ॥ इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः[2] ॥ स्वपार्ष्णिनाऽऽपीड्य गुदं ततोऽनिलं स्थानेषु षट्सून्नमयेज्जितक्लमः ॥ १९ ॥ नाभ्यां स्थितं हृद्यधिरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः ॥ ततोऽनुसंधाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ॥ २० ॥ तस्माद्भ्रुवोरन्तरमुन्नयेत निरुद्धसप्तायतनोऽनपेक्षः ॥ स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन्विसृजेत्परं गतः ॥ २१ ॥ यदि प्रयास्यन्नृप पारमेष्ठ्यं वैहायसानामुत यद्विहारम्[3] ॥ अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च ॥ २२ ॥ योगेश्वराणां गतिमाहुरन्तर्बहिस्त्रिलोक्याः पवनान्तरात्मनाम् ॥ न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम् ॥ २३ ॥ वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषा ॥ विधूतकल्कोऽथ हरेरुदस्तात्प्रयाति चक्रं नृप शैशुमारम् ॥ २४ ॥ तद्विश्वनाभिं त्वतिवर्त्य विष्णोरणीयसा विरजेनात्मनैकः ॥ नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते ॥ २५ ॥ अथो अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम् ॥ निर्याति सिद्धेश्वरजुष्टधिष्ण्यं यद्द्वैपरार्ध्यं तदु पारमेष्ठ्यम् ॥ २६ ॥

दिपदानि गन्तुमिच्छति तर्हि मनसेन्द्रियैश्च सह तत्तल्लोकभोगार्थं गच्छेत्॥२२॥योगेश्वराणां गतिस्त्रिलोक्याःअन्तर्बहिश्च भवति कर्मवन्तो नरास्तां गतिं नाप्नुवन्ति ॥२३॥ स योगी सुषुम्नया नाड्या ब्रह्मलोकपथेन गतः सन् प्रथममग्निलोकं याति। ततः शैशुमारं चक्रं याति॥२४॥ततस्तच्चक्रं हित्वैक एव लोकनमस्कृतं महर्लोकं प्राप्नोति ॥२५॥ ततः प्रलये इदं विश्वं भगवतो मुखानलेन दह्यमानं वीक्ष्य ब्रह्मलोकं याति ॥ २६ ॥

१ अतदात्मव्यतिरिक्तं नेति नेतीत्येवमुत्स्रष्टुमिच्छवः । २ विहिंसितवासनः । ३ समूहे ।

यत्र शोकजरामृत्युभयादयो न यत्र ब्रह्मलोकगतानां त्रिविधा गतिः ये पुण्योत्कर्षेण गतास्तेऽधिकारिणो भवन्ति। ये तु हिरण्यगर्भाद्युपासनाबलेन गतास्ते ब्रह्मणा सह मुच्यन्ते। येतु भगवदुपासकास्ते स्वेच्छया ब्रह्माण्डं भित्त्वा वैष्णवं पदं यान्ति ॥२७॥ प्रस्तुतस्य भक्तस्य ब्रह्माण्डभेदनप्रकारमाह। तत इति ॥ भक्तस्तु लिङ्गदेहेन पृथ्व्यात्मतां प्राप्य ततः पृथ्वीरूपेण जलं प्राप्य जलेनाग्निं तेन वायुं वाय्वात्मना खं प्राप्य ॥२८॥ घ्राणेन गन्धं जिह्वया रसं दृष्ट्या रूपं त्वचा स्पर्शं श्रोत्रेण शब्दं प्राप्य ॥ २९ ॥ ततो योगी त्रिविधमहंकारं प्राप्य ततः प्रधानतत्त्वं याति

न यत्र शोको न जरा न मृत्युर्नार्तिर्न चोद्वेग ऋते कुतश्चित् ॥ यच्चित्ततोदः[1] कृपयाऽनिदंविदां[2] दुरन्तदुःखप्रभवानुदर्शनात् ॥ २७ ॥ ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनाऽपोऽनलमूर्तिरत्वरन् ॥ ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम् ॥ २८ ॥ घ्राणेन गन्धं रसनेन वै रसं रूपं तु दृष्ट्या श्वसनं त्वचैव ॥ श्रोत्रेण चोपेत्य नभोगुणत्वं प्राणेन चाकूतिमुपैति योगी ॥ २९ ॥ स भूतसूक्ष्मेन्द्रियसन्निकर्षं मनोमयं देवमयं विकार्यम् ॥ संसाद्य गत्या सह तेन याति विज्ञानतत्त्वं गुणसन्निरोधम् ॥ ३० ॥ तेनात्मनाऽऽत्मानमुपैति शान्तमानन्दमानन्दमयोऽवसाने ॥ एतां गतिं भागवतीं गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग ॥ ३१ ॥ एते सृती ते नृप वेदगीते त्वयाऽभिपृष्टे ह सनातने च ॥ ये वै पुरा ब्रह्मण आह पृष्ट आराधितो भगवान् वासुदेवः ॥३२॥ न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह ॥ वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥३३॥ भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ॥ तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत् ॥ ३४ ॥ भगवान्सर्वभूतेषु लक्षितः स्वात्मना हरिः ॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥ ३५ ॥

॥३०॥ अनेन क्रमेणानन्दमयः सन् परमानन्दं प्राप्नोति ततः पुनर्नावर्तते॥३१॥ हे नरदेव ! तुभ्यं सद्योमुक्तिः क्रममुक्तिरिति द्वौ वेदोक्तावेतौ मार्गौ मया कथितौ यौ पुरा भगवान् ब्रह्मणे कथयामास ॥ ३२ ॥ इह संसारे वासुदेवभक्तिं विनाऽन्यः शिवः पन्थाः न ॥३३॥ किंच ब्रह्मा त्रिवारं वेदं विचार्य यतो हरौ भक्तिर्भवेत् तदेव निश्चितवान् ॥ ३४ ॥ भगवान् हरिः सर्वभूतेषु जीवान्तर्यामितया बुद्ध्यादिभिर्लक्षितः ॥ ३५ ॥



१ चित्ततोदो मनःपीडेति यत्सदृते कुतश्चिद्यत्र न शोक इत्यादि । २ इदं भगवतो ध्यानमजानताम् ।

हे राजन्! तस्मात् सर्वात्मना हरिः श्रोतव्यः कीर्तितव्यः स्मर्तव्यः ॥३६॥ ये हरिकथामृतं पिबन्ति ते पूतात्मानस्तच्चरणारविन्दसमीपं व्रजन्ति ॥ ॥३७॥ इति श्रीभागवतचूर्णिकायां द्वि० पुरुषसंस्थानुवर्णनं नाम द्वितीयोऽध्यायः ॥२॥ तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं शृण्वतो मुनेः ॥ भक्त्युद्रेकेण तत्कर्म श्रवणादर ईर्यते ॥१॥ श्रीशुक उवाच ॥ हे राजन्! भवान् यत् पृष्टवान् तद् म्रियमाणानां गदितम् ॥१॥ अथ ब्रह्मतेजस्कामो ब्रह्माणं यजेत् । इन्द्रियपाटवकाम इन्द्रं प्रजाकामो दक्षादीन् ॥ २ ॥ श्रीकामो दुर्गां तेजस्कामोऽग्निं द्रव्यकामो वसून् वीर्यकामो रुद्रान् ॥३॥ अन्नाद्य-

तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा ॥ श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ॥३६॥ पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् ॥ पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥३७॥ इति श्रीभा० म० द्वितीयस्कन्धे पुरुषसंस्थानुवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥ श्रीशुक उवाच ॥ एवमेतन्निगदितं पृष्टवान्यद्भवान्मम ॥ नृणां यन्म्रियमाणानां मनुष्येषु मनीषिणाम् ॥ १ ॥ ब्रह्मवर्चसकामस्तु यजेत ब्रह्मणस्पतिम् ॥ इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ २ ॥ देवीं मायां तु श्रीकामस्तेजस्कामो विभावसुम् ॥ वसुकामो वसून्रुद्रान्वीर्यकामोऽथ वीर्यवान् ॥३॥ अन्नाद्यकामस्त्वदितिं स्वर्गकामोऽदितेः सुतान् ॥ विश्वान्देवान्राज्यकामः साध्यान्संसाधको विशाम् ॥४॥ आयुष्कामोऽश्विनौ देवौ पुष्टिकाम इलां यजेत् ॥ प्रतिष्ठाकामः पुरुषो रोदसी लोकमातरौ ॥५॥ रूपाभिकामो गन्धर्वान्स्त्रीकामोऽप्सरउर्वशीम् ॥ आधिपत्यकामः सर्वेषां यजेत परमेष्ठिनम् ॥ ६ ॥ यज्ञं यजेद्यशस्कामः कोशकामः प्रचेतसम् ॥ विद्याकामस्तु गिरिशं दाम्पत्यार्थ उमां सतीम् ॥ ७ ॥ धर्मार्थ उत्तमश्लोकं तन्तुं तन्वन्पितृन्यजेत् ॥ रक्षाकामः पुण्यजनानोजस्कामो मरुद्गणान् ॥ ८ ॥

कामोऽदितिं स्वर्गकामो द्वादश सूर्यान् राज्यकामो विश्वान् देवान् देशस्थप्रजानां स्वाधीनतामिच्छन् साध्यान् ॥४॥ आयुष्कामोऽश्विनौ पुष्टिकामः पृथिवीं प्रतिष्ठाकामो द्यावापृथिव्यौ ॥५॥ रूपकामो गन्धर्वान् स्त्रीकामः उर्वशीं सर्वेषामाधिपत्यकामः परमेष्ठिनम् ॥६॥ यशस्कामो यज्ञं कोशकामो वरुणं विद्याकामः शिवं दाम्पत्यप्रीतिकाम उमाम् ॥७॥ धनकामो विष्णुं पुत्रकामः पितॄन् बाधानिवृत्तिकामो यक्षान् बलकामो मरुद्गणान् ॥८॥

राज्यकामो मनून् शत्रुवधकामो राक्षसं विषयकामः चंद्रमसं वैराग्यकामो विष्णुम् ॥ ९ ॥ अकामः सर्वकामो वा मोक्षकामो वा भक्तियोगेन परं पुरुषं यजेत ॥१०॥ इह यजतां यद् भगवति भावः सत्सङ्गश्चैतावानेव पुरुषार्थलाभः ॥११॥ अतो हरिकथासु रतिं को न कुर्यात् यासु कथासु ज्ञानं भवति ॥१२॥ शौनक उवाच ॥ इदं राजा श्रुत्वा शुकं प्रति किमन्यत् पृष्टवांस्तद् वद ॥१३॥ हे सूत ! साधुसभायां हरिकथोदर्काःस्युः ॥१४॥

राज्यकामो मनून्देवान्निर्ऋतिं त्वभिचरन्यजेत् ॥ कामकामो यजेत्सोममकामः पुरुषं परम् ॥ ९ ॥ अकामः सर्वकामो वा मोक्षकाम उदारधीः ॥ तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥ एतावानेव यजतामिह निःश्रेयसोदयः ॥ भगवत्यचलो भावो यद्भागवतसङ्गतः ॥ ११ ॥ ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उत यत्र गुणेष्वसङ्गः ॥ कैवल्यसंमतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ १२ ॥ शौनक उवाच ॥ इत्यभिव्याहृतं राजा निशम्य भरतर्षभः ॥ किमन्यत्पृष्टवान्भूयो वैयासकिमृषिं कविम् ॥ १३ ॥ एतच्छुश्रूषतां विद्वन्सूत नोऽर्हसि भाषितुम् ॥ कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवम् ॥ १४ ॥ स वै भागवतो राजा पाण्डवेयो महारथः ॥ बालक्रीडनकैः क्रीडन्कृष्णक्रीडां य आददे ॥ १५ ॥ वैयासकिश्च भगवान्वासुदेवपरायणः ॥ उरुगायगुणोदाराः सतां स्युर्हि समागमे ॥ १६ ॥ आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ॥ तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया ॥ १७ ॥ तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत ॥ न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥ १८ ॥ श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ॥ न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥ १९ ॥

किंच स भगवतो राजा बालक्रीडनकैः क्रीडन् यः कृष्णपूजादिक्रीडां स्वीकृतवान् ॥१५॥ शुकश्च वासुदेवपरायणो जातः ॥१६॥ किञ्च असौ सूर्योऽस्तमुदयं च गच्छन् प्राणिनामायुर्वृथा हरति हरिकथया यः क्षणो नीतस्तं विना ॥१७॥ ननु जीवनमेव तेषामायुषःफलमिति चेत्तर्हि वृक्षाः किं न जीवन्ति भस्त्राः किं न श्वसन्ति अपरे न खादन्ति न मैथुनं कुर्वन्ति किम् ॥१८॥ यस्य कर्णपथं कदाचिदपि हरिनाम न स श्वसूकरोष्ट्रवत् ज्ञेयः ॥ १९ ॥

---

१ आसमन्तात् प्रतिनिवृत्तं गुणोर्मिचक्रं यस्मात् तत् । २ अनन्तरम् । ३ उरुगायस्य गुणैरुदाराः महत्यः कथाः ।

किंच नरस्य कर्णपुटे हरिविक्रमान् ये न शृणुतस्ते बिले एव। या जिह्वा हरिकथां न गायति सा भेकजिह्वेव॥२०॥ यच्छिरो मुकुन्दं न नमेत् तत् परं भारः। यौ हस्तौ हरेः पूजां न कुरुतस्तौ शवकरतुल्यौ॥२१॥ ये नयने विष्णोर्मूर्तिं न निरीक्षेते ते बर्हायिते। यौ पादौ हरेः क्षेत्राणि न गच्छतस्तौ द्रुमाविव॥२२॥ भागवतानां पादरेणुं यो न लभेत् स जीवन् शवः। यस्तुलस्या गन्धं न वेद स श्वसन् शवः॥२३॥ यद्हृदयं हरिनामभिर्न विक्रियेत् तद् हृदयं वज्रसमम् ॥२४॥ हे सूत ! वैयासकिर्नृपं प्रति यामात्मविद्यां कथयति स्म तां नः कथय ॥२५॥ इति भागवत॰ चू॰ द्विती॰ तृतीयोऽ

बिले बतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य ॥ जिह्वाऽसती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः ॥२०॥ भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गं न नमेन्मुकुन्दम् ॥ शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा ॥ २१ ॥ बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये ॥ पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ २२ ॥ जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु ॥ श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम् ॥ २३ ॥ तदश्मसारं हृदयं बतेदं यद् गृह्यमाणैर्हरिनामधेयैः ॥ न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥२४॥ अथाभिधेह्यङ्ग मनोऽनुकूलं प्रभाषसे भागवतप्रधानः ॥ यदाह वैयासकिरात्मविद्याविशारदो नृपतिं साधु पृष्टः ॥२५॥ इति श्रीभागवते महापुराणे द्वितीयस्कन्धे श्रोतृश्रद्धानिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥ सूत उवाच ॥ वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः ॥ उपधार्य मतिं कृष्ण औत्तरेयः सतीं व्यधात् ॥ १ ॥ आत्मजायासुतागारपशुद्रविणबन्धुषु ॥ राज्ये चाविकले नित्यं निरूढां ममतां जहौ ॥ २ ॥ पप्रच्छ चेममेवार्थं यन्मां पृच्छथ सत्तमाः ॥ कृष्णानुभावश्रवणे श्रद्दधानो महामनाः ॥ ३ ॥ संस्थां विज्ञाय संन्यस्य कर्म त्रैवर्गिकं च यत् ॥ वासुदेवे भगवति आत्मभावं दृढं गतः ॥ ४ ॥

ध्यायः॥३॥ तुर्ये परीक्षिता पृष्टं सृष्ट्यादि हरिचेष्टितम् । शुकेन ब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते ॥१॥ सूत उवाच ॥ हे शौनक ! आत्मतत्त्वनियामकं शुकवचो निशम्य परीक्षित् कृष्णे सद्बुद्धिं व्यधात् ॥१॥ देहस्त्रीपुत्रगृहपशुद्रव्यबन्धुषु राज्ये च ममतां त्यक्त्वा॥२॥ यमर्थं यूयं संप्रति मां पृच्छथ तमेवार्थं कृष्णस्य माहात्म्यं श्रद्धायुक्तः श्रोतुकामः पृष्टवान् ॥३॥ स परीक्षित् तस्मिन् काले स्वमरणं समीपं ज्ञात्वा त्रैवर्गिकस्य कर्मणः फलं हित्वा

भगवति वासुदेवे बुद्धिं स्थिरां कृतवान् ॥४॥ राजोवाच ॥ हे ब्रह्मन्! तव वचः समीचीनं येन ममाज्ञानं नश्यति ॥५॥ यतः पुनरहं पृच्छामि। कथं भगवानात्ममायया विश्वं सृजति ॥ ६ ॥ कथं विश्वं पालयते संहरते च स्वयं क्रीडन् ॥ ७ ॥ एतद् हरेश्चेष्टितं कविभिर्दुर्ज्ञेयमिव भाति ॥ ८ ॥ किंच प्रकृतेर्गुणानेकः परमात्मा युगपत् क्रमशो वा कथं बिभर्ति तद् मे वद ॥ ९ भवान् वेदब्रह्मणि च निपुणोऽस्ति ॥ १० ॥

राजोवाच ॥ समीचीनं वचो ब्रह्मन्सर्वज्ञस्य तवानघ ॥ तमो विशीर्यते मह्यं हरेः कथयतः कथाम् ॥५॥ भूय एव विवित्सामि भगवानात्ममायया ॥ यथेदं सृजते विश्वं दुर्विभाव्यमधीश्वरैः ॥ ६ ॥ यथा गोपायति विश्वं यथा संयच्छते पुनः ॥ यां यां शक्तिमुपाश्रित्य पुरुशक्तिः परः पुमान् ॥ आत्मानं क्रीडयन्क्रीडन्करोति विकरोति च ॥ ७ ॥ नूनं भगवतो ब्रह्मन्हरेरद्भुतकर्मणः ॥ दुर्विभाव्यमिवाभाति कविभिश्चापि चेष्टितम् ॥ ८ ॥ यथा गुणांस्तु प्रकृतेर्युगपत्क्रमशोऽपि वा ॥ बिभर्ति भूरिशस्त्वेकः कुर्वन्कर्माणि जन्मभिः ॥९॥ विचिकित्सितमेतन्मे ब्रवीतु भगवान्यथा ॥ शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान्खलु ॥ १० ॥ सूत उवाच ॥ इत्युपामन्त्रितो राज्ञा गुणानुकथने हरेः ॥ हृषीकेशमनुस्मृत्य प्रतिवक्तुं प्रचक्रमे ॥ ११ ॥ श्रीशुक उवाच ॥ नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ॥ गृहीतशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने ॥ १२ ॥ भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाखिलसत्त्वमूर्तये ॥ पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥ १३ ॥ नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ॥ निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥ १४ ॥



सूत उवाच ॥ एवं राज्ञा हरिगुणानुकथनेन यदा प्रार्थितस्तदा शुकः उत्तरं वक्तुं मङ्गलाचरणं कृतवान् ॥ ११ ॥ श्रीशुक उवाच ॥ प्रपञ्चस्योत्पत्तिपालननाशेषु निमित्तभूतलीलया गृहीतशक्तित्रितयाय परस्मै पुरुषाय नमः ॥ १२ ॥ सतां संकटच्छिदे निखिलसत्त्वमूर्तये आत्मतत्त्वदात्रे नमः ॥ १३ ॥ कुयोगिनां दूरदिशे दुर्ज्ञेयाय भक्तपालकाय स्वस्वरूपे रममाणाय नमः ॥ १४ ॥

यत्कीर्तनं यत्स्मरणं यद्वन्दनं यच्छ्रवणं यत्पूजनं लोकस्य सद्यः पापं धुनोति तस्मै मंगलयशसे नमः ॥ १५ ॥ विवेकिनो यच्चरणसेवनादिह परत्र च सङ्गं हित्वा ब्रह्मगतिं विन्दन्ति तस्मै मंगलयशसे नमः ॥ १६ ॥ तपस्विनो दानादितत्परा अपि यदर्पणं विना क्षेमं न विन्दन्ति तस्मै नमः ॥१७॥ किंच किरातहूणान्ध्रपुलिन्दपुल्कसाद्याः पापिष्ठा अपि यदाश्रयाः सन्तः शुध्यन्ति तस्मै विष्णवे नमः ॥ १८ ॥ स ब्रह्मशिवा-

यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ॥ लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥ १५ ॥ विचक्षणा यच्चरणोपसादनात्सङ्गं व्युदस्योभयतोऽन्तरात्मनः ॥ विन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः ॥ १६ ॥ तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ॥ क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः ॥ १७ ॥ किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः ॥ येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥ १८ ॥ स एष आत्माऽऽत्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः ॥ गतव्यलीकैरजशंकरादिभिर्वितर्क्यलिङ्गो भगवान्प्रसीदताम् ॥ १९ ॥ श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्लोकपतिर्धरापतिः ॥ पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतां पतिः ॥ २० ॥ यदङ्घ्र्यनुध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्त्वमात्मनः ॥ वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो भगवान्प्रसीदताम् ॥ २१ ॥ प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि ॥ स्वलक्षणा प्रादुरभूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥ २२ ॥ भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ॥ भुङ्क्ते गुणान्षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान्वचांसि मे ॥ २३ ॥

दिभिर्वितर्क्यलिङ्गो भगवान् नः प्रसीदतु ॥ १९ ॥ श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियां पतिर्यदुसात्त्वतां पतिर्भगवान् नः प्रसीदतु ॥ २० ॥ कवयो यत्पादपद्मध्यानेनात्मतत्त्वं पश्यन्ति स नः प्रसीदतु ॥ २१ ॥ किंच येन पुरा प्रेरिता सरस्वती ब्रह्मणो मुखेभ्यः प्रादुरभूत् स ज्ञानप्रदानां श्रेष्ठो नः प्रसीदतु ॥ २२ ॥ यः पुरुषः इमान् देहान् निर्माय तेषु शेते स मे वचांसि शोभनानि करोतु ॥ २३ ॥

१ भागवताश्रयाः ।

सौम्या ज्ञानमयं यन्मुखाम्बुरुहासवं पपुः तस्मै वेधसे भगवते वासुदेवाय नमः॥२४॥हे राजन् ! एतदेव ब्रह्मा नारदाय हरिणोक्तमकथयत्॥२५॥ इति श्री भा० चू० द्वि चतु० ॥४॥ पञ्चमे नारदेनाथ पृष्टः सृष्ट्यादि वक्त्यजः ॥ हरेर्लीलां विराट्सृष्टिं कालकर्मादिशक्तिभिः ॥ १ ॥ श्रीनारद उवाच ॥ हे देव देव! ते नमः मह्यं तज्ज्ञानं कथय येनात्मतत्त्वं विजानीयाम्॥१॥किंच तद् विश्वं यदाश्रयं येन सृष्टं यस्मिन्लीयते यदधीनं सर्वं तद् भवान् वेद। ते तद् विश्वं करामलकवत् ज्ञानेन निश्चितम् ॥२॥३॥ त्वमेको यद्विज्ञानो यदाधारो यत्परो भूतैरेव भूतानि सृजसि॥४॥तानि

नमस्तस्मै भगवते वासुदेवाय वेधसे ॥ पपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम् ॥ २४ ॥ एतदेवात्मभू राजन्नारदाय विपृच्छते ॥ वेदगर्भोऽभ्यधात्साक्षाद्यदाह हरिरात्मनः ॥ २५ ॥ इति श्रीभागवते महापुराणे द्वितीयस्कन्धे वक्तृश्रद्धानिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥ नारद उवाच ॥ देवदेव नमस्तेऽस्तु भूतभावन पूर्वज ॥ तद्विजानीहि यज्ज्ञानमात्मतत्त्वनिदर्शनम् ॥ १ ॥ यद्रूपं यदधिष्ठानं यतः सृष्टमिदं प्रभो ॥ यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्त्वतः ॥ २ ॥ सर्वं ह्येतद्भवान्वेद भूतभव्यभवत्प्रभुः ॥ करामलकवद्विश्वं विज्ञानावसितं तव ॥ ३ ॥ यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः ॥ एकः सृजसि भूतानि भूतैरेवात्ममायया ॥ ४ ॥ आत्मन्भावयसे तानि न पराभावयन्स्वयम् ॥ आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः ॥ ५ ॥ नाहं वेद परं ह्यस्मिन्नापरं न समं विभो ॥ नामरूपगुणैर्भाव्यं सदसत्किंचिदन्यतः ॥६॥ स भवानचरत् घोरं यत्तपः सुसमाहितः ॥ तेन खेदयसे नस्त्वं पराऽऽशङ्कां प्रयच्छसि ॥ ७ ॥ एतन्मे पृच्छतः सर्वं सर्वज्ञः सकलेश्वर ॥ विजानीहि यथैवेदमहं बुध्येऽनुशासितः ॥ ८ ॥ ब्रह्मोवाच ॥ सम्यक्कारुणिकस्येदं वत्स ते विचिकित्सितम् ॥ यदहं चोदितो धर्मे भगवद्वीर्यदर्शने ॥ ९ ॥



पालयसि न चोत्पादनपालनादिव्यापारैस्तवाल्पोऽपि खेदो भवति यथोर्णनाभेः ॥५॥ हे विभो ! अहं विश्वस्मिन्नुत्तममध्यमाधमं किंचिदपि न वेद्मि किंतु त्वत्त एव सर्वं भवतीति मन्ये ॥६॥ स भवान् यद् घोरं तप आचरत् तेन नो मोहयसि। अतः ईश्वरान्तरशङ्कां प्रयच्छसि ॥ ७ ॥ हे सर्वज्ञ ! एतत् सर्वं यथा बुध्येयं तथा विशेषेण कथय॥८॥ब्रह्मोवाच। हे वत्स! तव प्रश्नः समीचीनः यतोऽहं भगवद्वीर्यप्रकाशे त्वया प्रेरितः॥९॥

१ ''व्यासायामिततेजसे'' इ० पा० । २ 'सौम्य' इ० पा० । × बुध्द्ये इ० पा० ।

त्वया मत्तः परमीश्वरमविजानता पृष्टम् ॥ १० ॥ येन भगवता स्वप्रकाशेन प्रकाशितं विश्वं सृष्ट्वा प्रकटं करोमि ॥ ११ ॥ तस्मै वासुदेवाय धीमहि । यन्मायया मां जगद्गुरुं वदन्ति ॥१२॥ अमुया मायया मोहिताः अस्मदादयो ममाहमिति कत्थन्ते ॥१३॥ हे पुत्र ! तत्त्वतो वासुदेवात् परोऽर्थो न ॥ १४ ॥ वेदा नारायणपराः देवा नारायणाङ्गाज्जाताः नारायणपराः लोकाः मखाश्च ॥ १५ ॥ योगस्तपो ज्ञानं गतिः सर्वं

नानृतं तव तच्चापि यथा मां प्रब्रवीषि भोः ॥ अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥ १० ॥ येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम् ॥ यथाऽर्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारकाः ॥ ११ ॥ तस्मै नमो भगवते वासुदेवाय धीमहि ॥ यन्मायया दुर्जयया मां ब्रुवन्ति जगद्गुरुम् ॥१२॥ विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ॥ विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ॥ १३ ॥ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ वासुदेवात्परो ब्रह्मन्न चान्योऽर्थोऽस्ति तत्त्वतः ॥ १४ ॥ नारायणपरा वेदा देवा नारायणाङ्गजाः ॥ नारायणपरा लोका नारायणपरा मखाः ॥ १५ ॥ नारायणपरो योगो नारायणपरं तपः ॥ नारायणपरं ज्ञानं नारायणपरा गतिः ॥१६॥ तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ॥ सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥१७॥ सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः ॥ स्थितिसर्गनिरोधेषु गृहीता मायया विभोः ॥ १८ ॥ कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः ॥ बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥१९॥ स एष भगवाँल्लिङ्गैस्त्रिभिरेभिरधोक्षजः ॥ स्वलक्षितगतिर्ब्रह्मन्सर्वेषां मम चेश्वरः ॥ २० ॥ कालं कर्म स्वभावं च मायेशो मायया स्वया ॥ आत्मन्यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ २१ ॥ कालाद् गुणव्यतिकरः परिणामः स्वभावतः ॥ कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥ २२ ॥

नारायणपरम् ॥ १६ ॥ तस्य दृष्ट्या प्रेरितः सृजामि ॥ १७ ॥ ईश्वरेण रजस्सत्त्वतमोगुणाः उत्पत्तिपालननाशेषु गृहीताः ॥१८॥ ते गुणा मुक्तमपि जीवं कार्यकारणकर्तृत्वे बध्नन्ति ॥१९॥ स भगवान् सर्वेषां मम चेश्वरः ॥२०॥ तस्य सृष्टिप्रकारमाह । स भगवान् विविधं भवितुमिच्छन् कालादीन् स्वीकृतवान् ॥२१॥ ततः पुरुषाधिष्ठितात् कालाद् गुणक्षोभो जातः । स्वभावात् रूपान्तरापत्तिः कर्मणो महत्तत्त्वम् ॥२२॥

महत्तत्त्वात् तमःप्रधानो बभूव ॥ २३ ॥ बुधैर्योऽहंकार इति प्रोक्तः स रूपान्तरं गच्छन् त्रिधा बभूव । यस्य द्रव्यक्रियाज्ञानेषु शक्तिरस्ति ॥ २४ ॥ तत्र तामसाहंकारात् शब्दवन्नभो बभूव ॥ २५ ॥ नभसः स्पर्शगुणो वायुः ॥ २६ ॥ वायोर्विकुर्वाणात् रूपवत्तेजः उदपद्यत ॥२७॥ तेजसो रसात्मकं जलं बभूव ॥ २८ ॥ तस्माद्गन्धवती पृथ्वी ॥२९॥ सात्त्विकाहंकारात् मनइन्द्रियाधिष्ठात्र्यो दश देवता बभूवुः ॥ ३० ॥ राजसाहंकारात् दशेन्द्रियाणि बुद्धिः प्राणश्च बभूवुः ॥ ३१ ॥ यदैते भावा अमिलिताः सन्तः शरीरनिर्माणे न शेकुः ॥ ३२ ॥ तदा प्रधानगुणभावं स्वीकृत्यान्योन्यं मिलित्वा स्थूलसूक्ष्मशरीरं ससृजुः ॥ ३३ ॥ तदुदकेशयमचेतनं वर्षपूगसहस्रान्ते परमात्मा चेतयति स्म ॥ ३४ ॥ ततः स एव परमात्मा अण्ड निर्भिद्य निर्गतः । स सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्रमुखः सहस्रशीर्षवान् जातः ॥ ३५ ॥

महतस्तु विकुर्वाणाद्रजःसत्त्वोपबृंहितात् ॥ तमःप्रधानस्त्वभवद् द्रव्यज्ञानक्रियात्मकः ॥ २३ ॥ सोऽहंकार इति प्रोक्तो विकुर्वन्समभूत्त्रिधा ॥ वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ॥ द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो ॥२४॥ तामसादपि भूतादेर्विकुर्वाणादभून्नभः ॥ तस्य मात्रा गुणः शब्दो लिङ्गं यद् द्रष्टृदृश्ययोः ॥२५॥ नभसोऽथ विकुर्वाणादभूत्स्पर्शगुणोऽनिलः ॥ परान्वयाच्छब्दवांश्च प्राण ओजः सहो बलम् ॥२६॥ वायोरपि विकुर्वाणात्कालकर्मस्वभावतः ॥ उदपद्यत तेजो वै रूपवत्स्पर्शशब्दवत् ॥ २७ ॥ तेजसस्तु विकुर्वाणादासीदम्भो रसात्मकम् ॥ रूपवत्स्पर्शवच्चाम्भो घोषवच्च परान्वयात् ॥२८॥ विशेषस्तु विकुर्वाणादम्भसो गन्धवानभूत् ॥ परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः ॥ ॥२९॥ वैकारिकान्मनो जज्ञे देवा वैकारिका दश ॥ दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥३०॥ तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन् ॥ ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसौ ॥ श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः ॥ ३१ ॥ यदैतेऽसंगता भावा भूतेन्द्रियमनोगुणाः ॥ यदाऽऽयतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥ ३२ ॥ तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः ॥ ३३ ॥ वर्षपूगसहस्रान्ते तदण्डमुदकेशयम् ॥ कालकर्मस्वभावस्थो जीवो जीवमजीवयत् ॥३४॥ स एव पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः ॥ सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान् ॥ ३५ ॥

ज्ञानिनो यस्यावयवैश्चतुर्दश लोकान् कल्पयन्ति ॥ ३६ ॥ तस्य मुखतो ब्राह्मणाः बाहुभ्यः क्षत्रियाःऊर्वोर्वैश्याः पद्भ्यां शूद्राः ॥ ३७ ॥ तस्य पद्भ्यां भूर्लोकः कल्पितः नाभितो भुवर्लोकः हृदा स्वर्लोकः उरसा महर्लोकः ॥ ३८ ॥ ग्रीवायां जनलोकः स्तनयोस्तपोलोकः मूर्धभिः सत्य-लोकः ॥३९॥ तस्य कट्यामतलम् ऊरुभ्यां वितलं जानुभ्यां सुतलं जङ्घाभ्यां तलातलम् ॥ ४० ॥ गुल्फाभ्यां महातलम् । प्रपदाभ्यां रसातल-लम् ।पादतलतः पातालम् एवं लोकमयः पुमान्॥४१॥अथवा भूर्लोकः पद्भ्यां कल्पितः भुवर्लोको नाभितः स्वर्लोको मूर्ध्नः । इति लोकरचना

यस्येहावयवैर्लोकान्कल्पयन्ति मनीषिणः ॥ कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥ ३६ ॥ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ॥ ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ ३७ ॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ हृदा स्वर्लोक उरसा महर्लोको महात्मनः ॥३८॥ ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात् ॥ मूर्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ॥३९॥ तत्कट्यां चातलं क्लृप्तमूरुभ्यां वितलं विभोः ॥ जानुभ्यां सुतलं शुद्धं जङ्घाभ्यां तु तलातलम् ॥४०॥ महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम् ॥ पातालं पादतलत इति लोकमयः पुमान् ॥४१॥ भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ॥ स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ ४२ ॥ इति श्रीभा० म० द्विती० जननिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ब्रह्मोवाच ॥ वाचां वह्नेर्मुखं क्षेत्रं छन्दसां सप्तधातवः ॥ हव्य कव्यामृतान्नानां जिह्वा सर्वरसस्य च ॥ १ ॥ सर्वासूनां च वायोश्च तन्नासे परमायने ॥ अश्विनोरोषधीनां च घ्राणो मोदप्रमोदयोः ॥२॥ रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी ॥ कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः॥३॥

ज्ञातव्या ॥ ४२ ॥ इति श्रीभा० चू० द्विती० पञ्चमोऽध्यायः ॥ ५ ॥ षष्ठे विराड्विभूतिश्चप्रोक्ताऽध्यात्मादिभेदतः । दृढीकृतं च पूर्वोक्तं सर्वं पुरुषसूक्ततः ॥ १ ॥ ब्रह्मोवाच ॥ तस्य विराड्रूपिणो भगवतो मुखं वाचां वह्नेश्चोत्पत्तिस्थानम् । तस्य त्वगादिसप्तधातवो गायत्र्यादि च्छन्दसां क्षेत्रंहव्यकव्यामृतान्नानां षड्रसस्य वरुणस्य च क्षेत्रं तज्जिह्वा ॥१॥ तन्नासे सर्वासूनां वायोर्गन्धस्याश्विनोश्च क्षेत्रम् ॥ २ ॥ तस्य चक्षुरिन्द्रियं रूपप्रकाशानां स्थानं दिवः तस्य नेत्रगोलके सूर्यस्य च स्थानं दिशामाकाशस्य शब्दस्य च तत्कर्णौ क्षेत्रम् ॥ ३ ॥

तस्य शरीरं वस्तुसाराणां सौभगस्य च स्थानं तस्य त्वक् स्पर्शवाय्व्योः क्षेत्रम् ॥ ४ ॥ रोमाणि वृक्षादीनां क्षेत्रं केशा मेघानां श्मश्रूणि विद्युतां नखानि शिलालोहानां क्षेत्रम् ॥ ५ ॥ तस्य बाहवः इन्द्रादिलोकपालानां स्थानं तस्य पादन्यासो भूरादिलोकानामाश्रयः ॥ ६ ॥ सर्वकामानां तच्चरणौ क्षेत्रम् अपां शुक्रस्य सर्वस्य पर्जन्यस्य प्रजापतेस्तच्छिश्नः स्थानम् ॥७॥ तस्योपस्थस्तु संतानार्थं संभोगसुखस्य स्थानं यमस्य मित्रस्य मलत्यागस्य तत्पायुरिन्द्रियं क्षेत्रम् ॥ ८ ॥ हिंसाया निर्ऋतेर्मृत्योर्निरयस्य तद्गुदः स्थानं पराभवस्याधर्मस्य तमसस्तत्पृष्ठभागः ॥ ९ ॥



तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम् ॥ त्वगस्य स्पर्शवाय्वोश्च सर्वमेधस्य चैव हि ॥ ४ ॥ रोमाण्युद्भिज्जजातीनां यैर्वा यज्ञस्तु संभृतः ॥ केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ॥ ५ ॥ बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् ॥ विक्रमो भूर्भुवः स्वश्च क्षेमस्य शरणस्य च ॥ ६ ॥ सर्वकामवरस्यापि हरेश्चरण आस्पदम् ॥ अपां वीर्यस्य सर्गस्य पर्जन्यस्य प्रजापतेः ॥ ७ ॥ पुंसः शिश्न उपस्थस्तु प्रजात्यानन्दनिर्वृतेः ॥ पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ॥८॥ हिंसाया निर्ऋतेर्मृत्योर्निरयस्य गुदः स्मृतः ॥ पराभूतेरधर्मस्य तमसश्चापि पश्चिमः ॥९॥ नाड्यो नदनदीनां तु गोत्राणामस्थिसंहतिः ॥ अव्यक्तरससिन्धूनां भूतानां निधनस्य च ॥१०॥ उदरं विदितं पुंसो हृदयं मनसः पदम् ॥ धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च ॥११॥ विज्ञानस्य च सत्त्वस्य परस्यात्मा परायणम् ॥ अहं भवान्भवश्चैव त इमे मुनयोऽग्रजाः ॥ १२ ॥ सुरासुरनरा नागाः खगा मृगसरीसृपाः ॥ गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः ॥ १३ ॥ पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः ॥ अन्ये च विविधा जीवा जलस्थलनभौकसः ॥१४॥ ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥ सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ॥ १५ ॥



नदनदीनां नाड्यः । पर्वतानामस्थीनि प्रधानस्यान्नादिरसस्य समुद्राणां भूतानां लयस्य च तदुदरं स्थानम् ॥ १० ॥ लिङ्गशरीरस्य तद्धृदयं स्थानं धर्मस्य मम तव कुमाराणां शिवस्य ॥११॥ विज्ञानस्य सत्त्वस्य च तच्चित्तं क्षेत्रम् । अहं भवान् शिवो मरीच्यादयोऽसुराः नराः नागाः खगा मृगा मृगसरीसृपाः गन्धर्वाप्सरसो यक्षाः रक्षोभूतगणोरगाः ॥ १२ ॥ १३ ॥ पशवः पितरः सिद्धविद्याधरचारणद्रुमाः अन्ये जलस्थलदिवौकसो जीवाः ॥ १४ ॥ ग्रहनक्षत्रकेतवस्ताराः विद्युतो मेघाः भूतं भव्यं भवच्च तत्सर्वं पुरुष एव ॥१५ ॥

तेन पुरुषेणेदं विश्वं व्याप्तम् । स सर्वं व्याप्य वितस्तिमात्रमधितिष्ठति । यथा सूर्यो मण्डलं बहिश्च प्रकाशयति ॥१६॥ एवं पुरुषो विराड् देहं प्रकाशयन् ब्रह्माण्डं प्रकाशयति । सोऽमृतस्याभयस्य च प्रभुः ॥१७॥ हे नारद ! अस्य महिमा दुरत्ययः । अस्याङ्घ्रिषु सर्वभूतानि विदुः ॥ १८ ॥ किंच ब्रह्मचारिवानप्रस्थादीनामाश्रमास्त्रिलोक्या बहिरासन् । गृहस्थाश्रमिणां त्वन्तः ॥ १९ ॥ स पुरुषो दक्षिणोत्तरौ भोगमोक्षप्राप्ति साधनभूतौ मार्गौ चालयति स्म ॥ २० ॥ यस्मादण्डं विराट् च जज्ञे ॥२१॥ तस्येश्वरस्य नाभिकमलादहं जातः सन् पुरुषावयवं विना यज्ञ-

तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥ स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ ॥१६॥ एवं विराजं प्रतपंस्तपत्य-न्तर्बहिः पुमान् ॥ सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ॥ १७ ॥ महिमैष ततो ब्रह्मन्पुरुषस्य दुरत्ययः ॥ पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ॥१८॥ अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः ॥ अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रतः ॥१९॥ * सृती विचक्रमे विष्वङ् साशनानशने उभे ॥ यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥२०॥ यस्मादण्डं विराड् जज्ञे भूतेन्द्रियगुणात्मकः ॥ तद्द्रव्यमत्यगाद्विश्वं गोभिःसूर्य इवातपन् ॥ २१ ॥ यदाऽस्य नाभ्यां नलिनादहमासं महात्मनः ॥ नाविदं यज्ञसंभारान्पुरुषावयवादृते ॥ २२ ॥ तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः ॥ इदं च देवयजनं कालश्चोरुगुणान्वितः ॥२३॥ वस्तून्योषधयः स्नेहा रसलोहमृदो-जलम् ॥ ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम ॥२४॥ नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ॥ देवतानुक्रमः कल्पः संकल्पस्तन्त्रमेव च ॥२५॥ गतयो मतयश्चैव प्रायश्चित्तं समर्पणम् ॥ पुरुषावयवैरेते संभाराः संभृता मया ॥२६॥

सम्भारान् नापश्यम् ॥ २२ ॥ ततः पुरुषावयवैरेते संभाराः मया संपादिताः । ते के । पशवो यज्ञस्तम्भाः कुशाः यज्ञभूमिः ॥२३॥ पात्रा-दीनि व्रीह्यादयो घृतादिरसाः सुवर्णादीनि मृदो जलं त्रिवेदी चातुर्होत्रादिकम् ॥ २४ ॥ ज्योतिष्टोमादियज्ञनामानि मन्त्राः दक्षिणाः व्रतानि देवतोद्देशः पद्धतिग्रन्थः संकल्पस्तन्त्रम् ॥ २५ ॥ गतयो ध्यानानि प्रायश्चित्तं कृतस्य भगवति समर्पणम् ॥ २६ ॥

* 'विप्रक्षत्रियवैश्यानां गृहे मुक्तिः सदा भवेत्' इत्यधिकः पाठः । १ गतयः विष्णुक्रमाद्याः । २ पापस्य चित्तस्य शोधकम् ।

एवं संभारान् संपाद्य तैरेव संभारैरीश्वरमयजम् ॥ २७ ॥ ततस्ते भ्रातरो मरीच्यादयोऽयजन् ॥२८॥ ततो मनवः ऋषयः पितरो देवाः दैत्याः मनुष्याः स्वस्वावसरे विभुमीजिरे ॥ २९ ॥ भगवति नारायणे इदं विश्वं स्थितमस्ति ॥ ३० ॥ तेन प्रेरितः सृजामि । तद्वशः शिवो हरति । विष्णुरूपेण स पाति ॥३१॥ हे तात ! इति ते कथितम् । कार्यकारणात्मकमिदं भगवतः पृथक् न ॥३२॥ हे नारद ! यस्माद् मया हृदा-

इति संभृतसंभारः पुरुषावयवैरहम् ॥ तमेवं पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥२७॥ ततस्ते भ्रातर इमे प्रजानां पतयो नव ॥ अयजन्व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥२८॥ ततश्च मनवः काले ईजिरे ऋषयोऽपरे ॥ पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥ २९ ॥ नारायणे भगवति तदिदं विश्वमाहितम् ॥ गृहीतमायोरुगुणः सर्गादावगुणः स्वतः ॥ ३० ॥ सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ॥ विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्[1] ॥३१॥ इति तेऽभिहितं तात यथे-दमनुपृच्छसि ॥ नान्यद्भगवतः किंचिद्भाव्यं सदसदात्मकम् ॥ ३२ ॥ न भारती मेऽङ्गमृषोपलक्ष्यते[2] न वै क्वचिन्मे मनसो मृषा गतिः ॥ न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ॥३३॥ सोऽहं समाम्नायमयस्त-पोमयः प्रजापतीनामभिवन्दितः पतिः ॥ आस्थाय योगं निपुणं समाहितस्तन्नाध्यगच्छं[3] यत आत्मसंभवः ॥३४॥ नतो-ऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गलम् ॥ यो ह्यात्ममाया विभवं स्म पर्यगाद्यथा नभः स्वान्तमथा-परे कुतः ॥३५॥ नाहं न यूयं यदृतां गतिं विदुर्न वामदेवः किमुतापरे सुराः ॥ तन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं चात्मसमं विचक्ष्महे ॥३६॥ यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः ॥ न यं विदन्ति तत्त्वेन तस्मै भगवते नमः ॥३७॥ ॥११॥

हरिर्धृतोऽतो मे वाणी मृषा न, मम मनसो गतिर्मृषा न, ममेन्द्रियाणि कुमार्गे न गच्छन्ति ॥ ३३ ॥ स तपोमयोऽहं योगमास्थाय यतो मम जन्म तं न ज्ञातवान् ॥३४॥ सोऽहं भवच्छिदं सुमङ्गलं तच्चरणं नतोऽस्मि ॥ ३५ ॥ यस्य गतिमहं यूयं शिवो न विदुः अपरे किमु ॥३६॥ अस्मदादयो यस्यावतारकर्माणि गायन्ति तत्त्वेन यं न विदन्ति तस्मै भगवते नमः ॥ ३७ ॥

१ त्रिशक्तिर्माया तां धारयतीति श्रीश्रीधरीटीका । धृदिति टीकाकारपाठेन भाव्यम् । २ 'लभ्यते' इत्यपि पाठः । ३ न ज्ञातवान् । परिशब्दो निषेधे । ४ नभसोऽन्तम् ।

स एष पुरुषः कल्पे कल्पे सृजति पाति हरति ॥ ३८ ॥ हे नारद ! मुनयः प्रसन्नदेहेन्द्रियमनसो यदा भवन्ति तदा विशुद्धं केवलं सत्यं निर्गुणं तत्त्वं विदन्ति ॥ ३९ ॥ ४० ॥ पुरुषः आद्योऽवतारः कालः स्वभावः प्रकृतिरित्येतास्तस्य समर्थस्य शक्तयः । महत्तत्त्वं पञ्च भूतान्यहंकारः सत्त्वादिगुणाः इन्द्रियाणि विराड् वैराजः स्थावरं जङ्गममेतानि कार्याणि ॥ ४१ ॥ अहं शिवो विष्णुरिमे गुणावताराः । दक्षादयो भवदादयः स्वर्गलोकखगलोकनृलोकपातालोकानां पतयः ॥ ४२ ॥ गन्धर्वविद्याधरचारणयक्षरक्षस्सर्पनागानां नाथा ऋषिपितृ-

स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः ॥ आत्माऽऽत्मन्यात्मनाऽऽत्मानं संयच्छति च पाति च ॥ ३८ ॥ विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम् ॥ सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥३९॥ ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः ॥ यदा तदेवासत्तर्कैस्तिरोधीयेत विप्लुतम् ॥ ४० ॥ आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च ॥ द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु चरिष्णु भूम्नः ॥४१॥ अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च ॥ स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः ॥ ४२ ॥ गन्धर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः ॥ ये वा ऋषीणामृषभाः पितॄणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः ॥ अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्ष्यधीशाः ॥४३॥ * यत्किंच लोके भगवन्महस्वदोजस्सहस्वद्बलवत्क्षमावत् ॥ श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपम् ॥४४॥ प्राधान्यतो यान्नृष आमनन्ति लीलावतारान्पुरुषस्य भूम्नः ॥ आपीयतां कर्णकषायशोषाननुक्रमिष्ये त इमान्सुपेशान् ॥४५॥ इति श्रीभा० म० द्वि० विराड्विभूतिपुरुषसूक्तार्थवर्णनं नाम षष्ठोऽध्यायः ॥६॥

दैत्यसिद्धदानवानां प्रभवः प्रेतपिशाचभूतकूष्माण्डयादोमृगपक्षिणामधीशाः ॥ ४३ ॥ किंच लोके यदैश्वर्यतेजओजइंद्रियमनश्शक्तिबलक्षमाश्रीह्रीसंपत्तिबुद्धियुक्तमस्ति तत् सर्वं भगवद्विभूतयः ॥४४॥ हे नारद ! अथ पुरुषस्यावतारान् प्राधान्यतस्तुभ्यमनुक्रमेण कथयिष्ये ॥४५॥ इति श्रीभागवते चूर्णिकायां द्वितीयस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

---

१ सर्वान्तरम् । २ संदेहादिरहितम् । ३ परस्य भूम्न इति योज्यम् । * 'यदस्ति ब्रह्माण्डकटाहमध्ये सर्वं स्वरूपं परमेश्वरस्य' इत्यधिकः पाठः । ४ इन्द्रियमनः शक्तियुक्तम् । ५ कषायो मलः । ६ सुन्दरान् ।

सप्तमे भगवल्लीलावतारा ब्रह्मणोदिताः । नारदाय तु तत्कर्मप्रयोजनगुणैः सह ॥१॥ ब्रह्मोवाच । यदाऽनन्तः क्षितितलोद्धरणार्थं वराहावतारं
धारयामास तदा समुद्रे हिरण्याक्षं दंष्ट्रया ददार ॥ १ ॥ रुचेराकूत्यां सुयज्ञो नाम जातः स्वभार्यायां दक्षिणायां सुयमान् देवानजनयत् स
एव सुयज्ञ इन्द्रः सन् लोकत्रयस्य दुःखं यदा जहार तदा स्वायंभुवमनुना हरिः कथितो नाम्ना ॥ २ ॥ कर्दमगृहे देवहूत्यां कपिलो भूत्वा
स्वमात्रे ब्रह्मविद्यां कथयामास यया स मुक्तिं प्राप्तवती ॥ ३ ॥ अपत्यमिच्छतोऽत्रेस्तुष्टः सन् मयाऽहमेव तुभ्यं दत्त इति यत आह ततः स

ब्रह्मोवाच ॥ यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्क्रौडीं तनुं सकलयज्ञमयीमनन्तः ॥ अन्तर्महार्णव उपागतमादिदैत्यं
तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददार ॥ १ ॥ जातो रुचेरजनयत्सुयमान्सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम् ॥ लोक-
त्रयस्य महतीमहरद्यदाऽऽर्तिं स्वायंभुवेन मनुना हरिरित्यनूक्तः ॥ २ ॥ जज्ञे च कर्दमगृहे द्विज देवहूत्यां स्त्रीभिः समं
नवभिरात्मगतिं स्वमात्रे ॥ ऊचे ययाऽऽत्मशमलं गुणसङ्गपङ्कमस्मिन्विधूय कपिलस्य गतिं प्रपेदे ॥ ३ ॥
अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान्स दत्तः ॥ यत्पादपङ्कजपरागपवित्रदेहा योगर्द्धिमा-
पुरुभयीं यदुहैहयाद्याः ॥ ४ ॥ तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसः स चतुस्सनोऽभूत् ॥ प्राक्क-
ल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षतात्मन् ॥ ५ ॥ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारा-
यणो नर इति स्वतपःप्रभावः ॥ दृष्ट्वाऽऽत्मनो भगवतो नियमावलोपं देव्यस्त्वनङ्गपृतना घटितुं न शेकुः ॥ ६ ॥



दत्तो जातः यत्पादसेवनात् यदुहैहयाद्याः भुक्तिं मुक्तिं च प्रापुः ॥ ४ ॥ आदौ मया लोकसिसृक्षया यत् तपस्तप्तं तस्य समर्पणात् स हरिः
सनत्कुमारादिचतुर्मूर्तिर्भूत्वा पूर्वकल्पस्य प्रलये नष्टमात्मतत्त्वमस्मिन् कल्पे उक्तवान् ॥ ५ ॥ धर्मस्य मूर्त्यां भार्यायां नारायणो नर इति
द्विमूर्त्या जज्ञे यस्मादुत्पन्नाः स्वसदृशीः स्त्रीर्दृष्ट्वाऽप्सरसस्तस्य तपोनाशं कर्तुं न शेकुः ॥ ६ ॥

---

१ चत्वारः सनशब्दा नाम्नि यस्य । २ आत्मनि मनसि अपश्यन् ।

क्रोधश्च यन्मध्यं प्रविशन् बिभेति ॥ ७ ॥ उत्तानपादसमीपे सापत्नमातुर्वाग्बाणैर्विद्धो ध्रुवो बालोऽपि तपस्तप्तुं वनं गतः तस्मै स भगवान् ध्रुवं पदं ददौ यत्पदं मुनयोऽधस्तात् स्तुवन्ति ॥ ८ ॥ ऋषिभिः प्रार्थितो भगवान् नरके पतन्तं वेनं रक्षयित्वा पुत्रनाम लेभे येन पृथुना जगदर्थं पृथिवी दुग्धा ॥ ९ ॥ नाभिराजात् सुदेव्यामृषभो भूत्वा जडयोगचर्यां चचार यां चर्यामृषयः पारमहंस्यं पदं वदन्ति ॥१०॥ स एव

कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमपि ते न दहन्त्यसह्यम् ॥ सोऽयं यदन्तरमलं प्रविशन्बिभेति कामः कथं नु पुनरस्य मनः श्रयेत ॥ ७ ॥ विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञो बालोऽपि सन्नुपगतस्तपसे वनानि ॥ तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात् ॥८॥ यद्वेनमुत्पथगतं द्विजवाक्यवज्रविप्लुष्टपौरुषभगं निरये पतन्तम् ॥ त्रात्वार्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन ॥ ९ ॥ नाभेरसावृषभ आस सुदेविसूनुर्यो वै चचार समदृग्जडयोगचर्याम् ॥ यत्पारमहंस्यमृषयः पदमामनन्ति स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ॥ १० ॥ सत्रे ममास भगवान्हयशीरषाऽथो साक्षात्स यज्ञपुरुषस्तपनीयवर्णः ॥ छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥११॥ मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः ॥ विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ॥ १२ ॥ क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धय आदिदेवः ॥ पृष्ठेन कच्छपवपुर्विदधार गोत्रं निद्राक्षणोऽद्रिपरिवर्तकषाणकण्डूः ॥१३॥

भगवान् मम ब्रह्मणो यज्ञे हयशीर्षा बभूव । यस्य नासापुटात् वेदलक्षणाः वाचः प्रादुर्बभूवुः ॥ ११ ॥ युगान्तसमये भाविना वैवस्वतमनुना मत्स्यो दृष्टः स मत्स्यो मम मुखगलितान् वेदान् गृहीत्वा युगान्तसलिले हर्षेण विजहार ॥ १२ ॥ अमृतप्राप्तयेऽमरदानवानां क्षीराब्धिं मथ्नतां सतां भगवान् कूर्मावतारं धारयन् सन् पृष्ठे मन्दरगिरिं धृतवान् ॥ १३ ॥

---

१ यदुपरि स्थितामधस्तात्सप्तर्षयः । २ कमनीयाः । ३ निद्रया क्षणोऽवसर उत्सवो वा यस्य सः । ४ अद्रेः परिवर्तः परिभ्रम एव कषाणो वर्षणसुखप्रदो यस्यां सा कण्डूर्यस्य सः ।

देवभयहन्ता स ईशो नृसिंहरूपं धृत्वाऽऽपतन्तं हिरण्यकशिपुमूरौ नखैर्विददार॥१४॥सरोवरे नक्रेण पदे गृहीतो गजेन्द्रो दुःखितः सन् वदति स्म हे आदिपुरुष हे लोकनाथ ! मां रक्ष ॥१५॥ तदा तद्वचः श्रुत्वा तत्र गत्वा चक्रेण नक्रमुखं विदार्य तं शुण्डायां प्रगृह्योज्जहार॥१६॥द्वादशादित्यानां मध्ये कनिष्ठोऽपि विष्णुर्गुणैर्ज्येष्ठो यतः इमान् लोकान् पादन्यासैः क्रान्त्वा बलेः क्ष्मां त्रिपादयाञ्चाछलेन वामनरूपेण जग्राह॥१७॥यो बलिः

त्रैविष्टपोरुभयहा स नृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ॥ दैत्येन्द्रमाशु गदयाऽभिपतन्तमारादूरौ निपात्य विददार नखैःस्फुरन्तम् ॥ १४ ॥ अन्तः सरस्युरुबलेन पदे गृहीतो ग्राहेण यूथपतिरम्बुजहस्त आर्तः ॥ आहेदमादिपुरुषाखिललोकनाथ तीर्थश्रवः श्रवणमङ्गलनामधेय ॥ १५ ॥ श्रुत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः ॥ चक्रेण नक्रवदनं विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान्कृपयोज्जहार ॥ १६ ॥ ज्यायान्गुणैरवरजोऽप्यदितेः सुतानां लोकान्विचक्रम इमान्यदथाधियज्ञः ॥ क्ष्मां वामनेन जगृहे त्रिपदच्छलेन याच्ञामृते पथि चरन्प्रभुभिर्न चाल्यः॥१७॥ नार्थो बलेरयमुरुक्रमपादशौचमापः शिखां धृतवतो विबुधाधिपत्यम् ॥ यो वै प्रतिश्रुतमृते न चिकीर्षदन्यदात्मानमङ्ग शिरसा हरयेऽभिमेने ॥१८॥ तुभ्यं च नारद भृशं भगवान्विवृद्धभावेन साधु परितुष्ट उवाच योगम् ॥ ज्ञानं च भागवतमात्मसतत्त्वदीपं यद्वासुदेवशरणा विदुरञ्जसैव ॥ १९ ॥ चक्रं च दिक्ष्वविहतं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधरो बिभर्ति ॥ दुष्टेषु राजसु दमं व्यदधात्स्वकीर्तिं सत्ये त्रिपृष्ठ उशतीं प्रथयंश्चरित्रैः ॥ २० ॥

शुक्रेण शप्तेऽपि प्रतिश्रुतं विनाऽन्यत् कर्तुं नैच्छत् तस्य स्वर्गाधिपत्येन नार्थो भवति ॥ १८ ॥ हे नारद ! भगवान् हंसो भूत्वा भक्त्या तुष्टः सन् भागवतं नाम ज्ञानं भक्तियोगं च तुभ्यमाह ॥ १९ ॥ मन्वन्तरेषु मनुवंशधरो भगवान् स्वकीर्तिं विस्तारयन् दुष्टराजसु दण्डं धत्ते ॥ २० ॥

१ भयहा—स इति च्छेदाभावे देवानामपि महाभयजनको हासो यस्येत्यर्थः । २ अरणं शरणम् । ३ आ सर्वतः अपः शिखां शिखायाम् । ४ तत्त्वमेव सतत्त्वम् । ५ चक्रवदप्रतिहतप्रभावं बिभर्तीत्यर्थः ।

भगवान् लोकेऽवतीर्य धन्वन्तरिः सन् नृणां रोगान् स्वनाम्नैव हन्ति यज्ञभागं च लभते आयुर्वेदं च प्रवर्तयति ॥ २१ ॥ असौ हरिः परशुरामः सन् पृथिवीकण्टकतुल्यं क्षत्रं परशुनैकविंशतिवारान् समुत्पाटयति ॥ २२ ॥ स हरिरिक्ष्वाकुवंशे रामनाम्नाऽवतीर्य दशरथस्याज्ञां पालयन् सीतालक्ष्मणाभ्यां सहितो वनं प्रवेक्ष्यति यस्मिन् विरोधं कृत्वा स रावणो नाशं प्राप्स्यति ॥ २३ ॥ किंच यस्य क्रोधदृष्ट्या संतप्यमा-

धन्वन्तरिश्च भगवान्स्वयमेव कीर्तिर्नाम्ना नृणां पुरुरुजां रुज आशु हन्ति ॥ यज्ञे च भागममृतायुरवावरुन्ध आयुश्च वेदमनुशास्त्यवतीर्य लोके ॥२१॥ क्षत्रं क्षयाय विधिनोपभृतं महात्मा ब्रह्मध्रुगुज्झितपथं नरकार्तिलिप्सु ॥ उद्धन्त्यसाववनिकण्टकमुग्रवीर्यस्त्रिस्सप्तकृत्व उरुधारपरश्वधेन ॥ २२ ॥ अस्मत्प्रसादसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे ॥ तिष्ठन् वनं सदयितानुज आविवेश यस्मिन्विरुध्य दशकन्धर आर्तिमार्च्छत् ॥२३॥ यस्मा अदादुदधिरूढभयाङ्गवेपो मार्गं सपद्यरिपुरं हरवद्दिधक्षोः ॥ दूरे सुहृन्मथितरोषसुशोणदृष्ट्या तातप्यमानमकरोरगनक्रचक्रः ॥ २४ ॥ वक्षस्स्थलस्पर्शरुग्णमहेन्द्रवाहदन्तैर्विडम्बितककुब्जुष ऊढहासम् ॥ सद्योऽसुभिः सह विनेष्यति दारहर्तुर्विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये ॥ २५ ॥ भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः ॥ जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबन्धनानि ॥२६॥ तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽप्रवृत्तः ॥ यद्रिङ्गताऽन्तरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम् ॥२७॥

नमकरोरगनक्रचक्रः समुद्रो यस्मै रामाय मार्गं दास्यति ॥ २४ ॥ ततः स्वस्त्रीहर्तू रावणस्य गर्वं प्राणैः सहापनेष्यति ॥ २५ ॥ स हरिर्दैत्यांशसुतराजसैन्यभारेण पीडिताया भूमेः क्लेशनाशाय बलेन सह कृष्णो भूत्वाऽतिमानुषाणि कर्माणि करिष्यति अतः स ईश्वरः ॥ २६ ॥ अन्यथा बालेन पूतनाप्राणहरणं त्रैमासिकस्य पदा शकटपातनं जानुभ्यां गच्छताऽर्जुनयोरुन्मूलनं न भाव्यम् ॥ २७ ॥

---

१ 'अवाप रुद्धमायुः' इ० पा० । २ सुहृदा सीतया निमित्तभूतया । ३ मकरादीनां चक्रं समूहो यस्मिन्सः । ४ वक्षो रावणस्य । महेन्द्रवाह ऐरावतः तद्दन्तैः विडम्बिताः स्वधवलिना धवलीकृता ककुभो दिशः सेवते तस्य । ५ अत्युच्चयोः ।

किंच अयं विषमयजलपानात् गोपान् जीवयिष्यति। यमुनाजलशुद्धये कालियमुच्चाटयिष्यति॥२८॥तत्रैव निशि शयानं दावाग्निना दह्यमानं व्रजमुद्धरिष्यति॥२९॥यशोदा सुतस्य बन्धनार्थं यद्यत् दाम ग्रहीष्यति तत्तदस्य न पूर्येत। ततो यशोदा जृम्भतोऽस्य मुखे भुवनानि वीक्ष्य शङ्कितमना भविष्यति॥३०॥अयं वरुणपाशान्नन्दं मोक्ष्यति। व्योमासुरेण गुहायां रुद्धान् गोपान् मोक्ष्यति। गोकुलं वैकुण्ठमुपनेष्यति॥३१॥गोपैर्मखे

यद्वै व्रजे व्रजपशून्विषतोयपीथान्पालांस्त्वजीवयदनुग्रहदृष्टिवृष्ट्या ॥ तच्छुद्धयेऽतिविषवीर्यविलोलजिह्वमुच्चाटयिष्यदुरगं विहरन्ह्रदिन्याम् ॥ २८ ॥ तत्कर्म दिव्यमिव यन्निशि निश्शयानं दावाग्निना शुचिवने परिदह्यमाने ॥ उन्नेष्यति व्रजमतोऽवसितान्तकालं नेत्रे पिधाय्य सबलोऽनधिगम्यवीर्यः ॥ २९ ॥ गृह्णीत यद्यदुपबन्धममुष्य माता शुल्बं सुतस्य न तु तत्तदमुष्य माति ॥ यज्जृम्भतोऽस्य वदने भुवनानि गोपी संवीक्ष्य शङ्कितमनाः प्रतिबोधिताऽऽसीत ॥ ३० ॥ नन्दं च मोक्ष्यति भयाद्वरुणस्य पाशाद्गोपान्बिलेषु पिहितान्मयसूनुना च ॥ अह्न्यापृतं निशि शयानमतिश्रमेण लोके विकुण्ठ उपनेष्यति गोकुलं स्म ॥ ३१ ॥ गोपैर्मखे प्रतिहते व्रजविप्लवाय देवेऽभिवर्षति पशून्कृपया रिरक्षुः ॥ धर्तोच्छिलीन्ध्रमिव सप्त दिनानि सप्तवर्षो महीध्रमनघैककरे सलीलम् ॥ ३२ ॥ क्रीडन्वने निशि निशाकररश्मिगौर्यां रासोन्मुखः कलपदायतमूर्छितेन ॥ उद्दीपितस्मररुजां व्रजभृद्वधूनां हर्तुर्हरिष्यति शिरो धनदानुगस्य ॥ ३३ ॥ ये च प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ॥ अन्ये च शाल्वकपिबल्वलदन्तवक्रसप्तोक्षशम्बरविदूरथरुक्मिमुख्याः ॥ ३४ ॥ ये वा मृधे समितिशालिन आत्तचापाः काम्बोजमत्स्यकुरुकैकयसृञ्जयाद्याः ॥ यास्यन्त्यदर्शनमलं बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीयम् ॥ ३५ ॥

नष्टे व्रजनाशाय इन्द्रे वर्षति सति तेषां रक्षणाय सप्तवर्षो यः सप्त दिनानि करेण गोवर्धनं धारयिष्यति॥३२॥किंच रासोन्मुखः सन् रात्रौ वने क्रीडन्व्रजवधूनां हर्तुः शङ्खचूडस्य शिरो हरिष्यति ॥३३॥ किंच प्रलम्बधेनुकबककेश्यरिष्टमल्लहस्तिकंसयवनभौमासुरपौण्ड्रकशाल्वद्विविदबल्वलदन्तवक्रशम्बरविदूरथरुक्मिमुख्याः॥३४॥काम्बोजमत्स्यकुर्वादयो युद्धेऽनेन मृत्युं यास्यन्ति।एतत् सर्वमीश्वरं विनाऽन्यथा न भवितव्यम्॥३५॥

१ पीथं पानम् । २ शुचिर्ग्रीष्मः, शुष्कायां मुञ्जाटव्यामित्यर्थः । ३ उपबन्धं शुल्बं बन्धनदाम । ४ मूर्छनायुक्तगीतेन ।

पराशरात् वासव्यां जातो व्यासो वेदद्रुमं शाखाभेदेन विभजिष्यति॥३६॥ततः स ईशो लोकान् घ्नतां दैत्यानां मोहाय बुद्धवेषं कृत्वा पाखण्डधर्मं भाषिष्यते॥३७॥यदा त्रैवर्णिकाः पाखण्डिनः स्युः शूद्रा राजानः स्युस्तदा कल्किरूपेण हरिः कलेः शासिता भविष्यति ॥३८॥ ततो जगत्सृष्टौ तपोऽहं नव प्रजेशाः पालने धर्मयज्ञमनुदेवराजानः संहारे रुद्रसर्पासुराद्या इमाः सर्वा भगवतो विभूतयः॥३९॥हे नारद! विष्णोर्वीर्यगणनां कर्तुं कः

कालेन मीलितधियामवमृश्य नृणां स्तोकायुषां स्वनिगमो बत दूरपारः ॥ आविर्हितस्त्वनुयुगं स हि सत्यवत्यां वेदद्रुमं विटपशो विभजिष्यति स्म ॥ ३६ ॥ देवद्विषां निगमवर्त्मनि निष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः ॥ लोकान्घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्यम् ॥३७॥ यर्ह्यालयेष्वपि सतां न हरेः कथाः स्युः पाखण्डिनो द्विजजना वृषला नृदेवाः ॥ स्वाहास्वधावषडिति स्म गिरो न यत्र शास्ता भविष्यति कलेर्भगवान्युगान्ते ॥३८॥ सर्गे तपोऽहमृषयो नव ये प्रजेशाः स्थाने च धर्ममखमन्वमरावनीशाः ॥ अन्ते त्वधर्महरमन्युवशासुराद्या माया विभूतयः इमाः पुरुशक्तिभाजः ॥ ३९ ॥ विष्णोर्नु वीर्यगणनां कतमोऽर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसि ॥ चस्कम्भ यः स्वरंहसाऽस्खलता त्रिपृष्ठं यस्मात्त्रिसाम्यसदनादुरुकम्पयानम् ॥ ४० ॥ नान्तं विदाम्यहममी मुनयोऽग्रजास्ते मायाबलस्य पुरुषस्य कुतोऽपरे ये ॥ गायन्गुणान्दशशतानन आदिदेवः शेषोऽधुनाऽपि समवस्यति नास्य पारम् ॥ ४१ ॥ येषां स एव भगवान्दययेदनन्तः सर्वात्मनाऽऽश्रितपदो यदि निर्व्यलीकम् ॥ ते दुस्तरामतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वशृगालभक्ष्ये ॥ ४२ ॥ वेदाहमङ्ग परमस्य हि योगमायां यूयं भवश्च भगवानथ दैत्यवर्यः ॥ पत्नी मनोः स च मनुश्च तदात्मजाश्च प्राचीनबर्हिर्ऋभुरङ्ग उत ध्रुवश्च ॥ ४३ ॥

समर्थः ॥४०॥ यस्यान्तमहं न वेद्मि । मुनयोऽपि न विदन्ति । शेषोपि सहस्रमुखेन गुणान् गायन् सम्प्रत्यपि यस्य पारं न प्राप्नोति॥४१॥ स एव भगवान् येषां दयां कुर्यात् ते दुस्तरां देवमायां तरन्ति॥४२॥ किंच अहं भवः प्रह्लादो मनुस्तत्पत्नी पुत्रकन्याः प्राचीनबर्हिर्ऋभुरङ्गो ध्रुवः॥४३॥

१ नितरां ह्यितानाम् । २ अदृश्यवेगाभिः । ३ अनुस्वारलोप आर्षः । ४ सत्यलोकम् । ५ त्रिसाम्यरूपं सवनमधिष्ठानं प्रधानं तस्मादारभ्य ।

इक्ष्वाकुरैलो मुचुकुन्दो जनको गाधी रघुरम्बरीषः सगरो गयो नाहुषो मान्धाता अलर्कः शतधन्वा रन्तिदेवो भीष्मो बलिरमूर्तरयो दिलीपः ॥४४॥ सौभरिरुतङ्कः शिबिर्देवलः पिप्पलादः सारस्वत उद्धवो व्यासो भूरिषेणो विभीषणो हनुमान् शुकः पार्थः आर्ष्टिषेणो विदुरः श्रुतदेवः ॥४५॥ एते भगवन्मायां विदन्ति तरन्ति च। स्त्रीशूद्रादयोऽपि तिर्यग्जना अपि तद्भक्ताश्चेत् मायां तरन्ति ॥४६॥४७॥ किं तद्भगवतः स्वरूपं तदाह। मुनयो

इक्ष्वाकुरैलमुचुकुन्दविदेहगाधिरघ्वम्बरीषसगरा गयनाहुषाद्याः ॥ मान्धात्रलर्कशतधन्वनुरन्तिदेवा देवव्रतो बलि-रमूर्तरयो दिलीपः ॥ ४४ ॥ सौभर्युतङ्कशिबिदेवलपिप्पलादसारस्वतोद्धवपराशरभूरिषेणाः ॥ येऽन्ये विभीषणह-नूमदुपेन्द्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः ॥ ४५ ॥ ते वै विदन्त्यतितरन्ति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः ॥ यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जना अपि किमु श्रुतधारणा ये ॥ ४६ ॥ शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम् ॥ शब्दो न यत्र पुरुकारकवान्क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना ॥ ४७ ॥ तद्वै पदं भगवतः परमस्य पुंसो ब्रह्मेति यद्विदुरजस्रसुखं विशोकम् ॥ सध्र्यङ्नियम्य यतयो यमकर्तहेतिं जह्युः स्वराडिव निपानखनित्रमिन्द्रः ॥ ४८ ॥ स श्रेयसामपि विभुर्भगवान्यतोऽस्य भावस्व-भावविहितस्य सतः प्रसिद्धिः ॥ देहे स्वधातुविगमेऽनुविशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ॥ ४९ ॥ सोऽयं तेऽभिहितस्तात भगवान्विश्वभावनः ॥ समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत् ॥ ५० ॥ इदं भागवतं नाम यन्मे भगवतोदितम् ॥ संग्रहोऽयं विभूतीनां त्वमेतद्विपुलीकुरु ॥ ५१ ॥



नित्यसुखरूपमभयं भेदशून्यं ज्ञानैकरसं यद् ब्रह्मेति विदुस्तत् परमस्य पुंसः स्वरूपम् ॥ ४८ ॥ स एव फलानां दाता शुभकर्मणः प्रसिद्धिर्यतो भवति ॥४९॥ स भगवान् संक्षेपेण तुभ्यं कथितः ॥ ५० ॥ हे नारद ! मया भगवतोदितमिदं भागवतं संक्षेपेणोक्तं तत् त्वं विपुलीकुरु ॥ ५१ ॥

१ विषयकरणसङ्गशून्यम् । २ बहुकारकसाध्यः क्रियार्थः उत्पाद्याप्यविकार्यरूपं चतुर्विधं क्रियाफलम् ३ सह।ञ्चतीति मनः । ४ यं प्रति नियम्येत्य·वयः : । ५ अभेदसाधनम् । ६ स्वयमेव पर्जन्यरूपेण राजत इति । ७ कूपखननसाधनम् । ८ भावा ब्राह्मणादयस्तेषां स्वभावैः शमदमादिभिर्विहितस्य । ९ भूतानामपगमे ।

किंच नृणां भगवति भक्तिर्यथा भविष्यति तथा वर्णय ॥५२॥ भगवतो मायां वर्णयतः शृण्वतश्च पुंसः आत्मा मायया न मुह्यति ॥५३॥ इति श्रीभा॰म॰द्वि॰ब्रह्मनारदसंवादो नाम सप्तमोऽध्यायः॥७॥अष्टमे देहसम्बन्धमाक्षिपन्नीशजीवयोः। बहून् परीक्षिदापृच्छत् पुराणार्थान् बुभुत्सितान् ॥१॥ परीक्षिदुवाच। हे ब्रह्मन्! अगुणस्य भगवतो गुणाख्याने ब्रह्मणा प्रेरितो नारदो यस्मै यस्मै यथा प्राह ॥१॥ तत्तत्त्वं वेदितुमिच्छामि

यथा हरौ भगवति नृणां भक्तिर्भविष्यति ॥ सर्वात्मन्यखिलाधारे इति संकल्प्य वर्णय ॥५२॥ * मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः ॥ शृण्वतः श्रद्धया नित्यं माययाऽऽत्मा न मुह्यति ॥५३॥ इति श्रीभागवते महापुराणे द्वितीयस्कन्धे ब्रह्मनारदसंवादे चतुर्विंशत्यवतारचरित्रवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥ राजोवाच ॥ ब्रह्मणा चोदितो ब्रह्मन्गुणाख्यानेऽगुणस्य च ॥ यस्मै यस्मै यथा प्राह नारदो देवदर्शनः ॥ १ ॥ एतद्वेदितुमिच्छामि तत्त्वं वेदविदां वर ॥ हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः ॥ २ ॥ कथयस्व महाभाग यथाऽहमखिलात्मनि ॥ कृष्णे निवेश्य निस्सङ्गं मनस्त्यक्ष्ये कलेवरम् ॥ ३ ॥ शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ॥ कालेन नातिदीर्घेण भगवान्विशते हृदि ॥ ४ ॥ प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ॥ धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥ ५ ॥ धौतात्मा पुरुषः कृष्णपादमूलं न मुञ्चति ॥ मुक्तसर्वपरिक्लेशः पान्थः स्वशरणं यथा ॥ ६ ॥ यदधातुमतो ब्रह्मन्देहारम्भोऽस्य धातुभिः ॥ यदृच्छया हेतुना वा भवन्तो जानते यथा ॥ ७ ॥

॥ २ ॥ हे महाभाग! यथा अहं कृष्णे मनो निवेश्य कलेवरं त्यक्ष्यामि तथा हरेः कथाः कथय ॥३॥ कृष्णः स्वलीलां नित्यं शृण्वतां पुरुषाणां हृदि कर्णरन्ध्रेण प्रविष्टः सन् पापं हरति ॥ ४ ॥ ५ ॥ अतो निष्पापः पुरुषो मुक्तसर्वक्लेशः सन् कृष्णपादमूलं न मुञ्चति ॥ ६ ॥ किंच हे ब्रह्मन् अधातुमतोऽस्य धातुभिर्देहारम्भ इति यत् तत् किं निर्निमित्तं वा कर्मादिना वा भवति यथा भवन्तो जानन्ति तथा मम कथयन्तु ॥ ७ ॥

* नृजन्मनि न तुष्येत कृतेन भगवान्यदि ॥ धर्मार्थकामैः किं तर्हि कार्यं सिद्ध्यति नश्वरैः ॥ कृष्णे न चोत्तमश्लोके चेद्भक्तिरनपायिनी ॥ किं स्याद्वर्णाश्रमाचारैः किं दानैः किं तपःश्रुतैः ॥ इत्यधिकः पाठः।

यस्योदरात् सकललोकसंस्थानलक्षणं पद्मं बभूव ॥ ८ ॥ पद्मोद्भवो ब्रह्मा यदनुग्रहात् भूतानि सृजति ॥ ९ ॥ किंच विश्वस्य यस्मादुत्पत्त्यादयो भवन्ति स ईश्वरो मायां त्यक्त्वा येन रूपेणावर्तिष्ठते ॥ १० ॥ एते लोकाः पुरुषावयवैः कल्पिता इति शुश्रुम ॥ ११ ॥ तस्मात् कल्पो विकल्पः कालानुमानं देवपितृमनुष्यादीनामायुर्मानम् ॥ १२ ॥ कालस्य गतिः कर्मगतयः ॥ १३ ॥ सत्त्वादिगुणानां

आसीद्यदुदरात्पद्मं लोकसंस्थानलक्षणम् ॥ यावानयं वै पुरुष इयत्ताऽवयवैः पृथक् ॥ तावानसाविति प्रोक्तः संस्थावयववानिव ॥ ८ ॥ * अजः सृजति भूतानि भूतात्मा यदनुग्रहात् ॥ ददृशे येन तद्रूपं नाभिपद्मसमुद्भवः ॥ ९ ॥ स चापि यत्र पुरुषो विश्वस्थित्युद्भवाप्ययः ॥ मुक्त्वाऽऽत्ममायां मायेशः शेते सर्वगुहाशयः ॥ १० ॥ पुरुषावयवैर्लोकाः सपालाः पूर्वकल्पिताः ॥ लोकैरमुष्यावयवाः सपालैरिति शुश्रुम ॥११॥ यावान्कल्पो विकल्पो वा यथा कालोऽनुमीयते ॥ भूतभव्यभवच्छब्द आयुर्मानं च यत्सतः ॥ १२ ॥ कालस्यानुगतिर्या तु लक्ष्यतेऽण्वी बृहत्यपि ॥ यावत्यः कर्मगतयो यादृशीर्द्विजसत्तम ॥ १३ ॥ यस्मिन्कर्मसमावायो यथा येनोपगृह्यते ॥ गुणानां गुणिनां चैव परिणाममभीप्सताम् ॥ १४ ॥ भूपातालककुब्व्योमग्रहनक्षत्रभूभृताम् ॥ सरित्समुद्रद्वीपानां संभवश्चैतदोकसाम् ॥ १५ ॥ प्रमाणमण्डकोशस्य बाह्याभ्यन्तरभेदतः ॥ महतां चानुचरितं वर्णाश्रमविनिश्चयः ॥ १६ ॥ अवतारानुचरितं यदाश्चर्यतमं हरेः ॥ युगानि युगमानं च धर्मो यश्च युगे युगे ॥ १७ ॥ नृणां साधारणो धर्मः सविशेषश्च यादृशः ॥ श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीवताम् ॥ १८ ॥

गुणिनां परिमाणम् ॥१४॥ भूपातालदिग्व्योमग्रहनक्षत्रपर्वतानां सरित्समुद्रद्वीपानां संभवः । एषु स्थानेषु जातानां प्राणिनां च संभवः ॥ १५ ॥ ब्रह्माण्डप्रमाणं महतां चरितं वर्णाश्रमधर्माः ॥१६॥ हरेरवतारानुचरितं युगमानं युगानि युगधर्माः ॥ १७ ॥ नृणां साधारणधर्मस्तत्तद्व्यव-

* 'शुकार्य ब्रूहि तत्सर्वं यच्च न ज्ञायते मया' इत्यधिकः पाठः ।

हारोपजीविनां च राजर्षीणां च धर्मः आपद्धर्मः ॥१८॥ तत्त्वानां संख्यानां पुरुषाराधनविधिरष्टाङ्गयोगस्य च विधिः ॥१९॥ योगेश्वराणां तेषु तेषु लोकेषु गतिर्वेदोपवेदधर्माणामितिहासपुराणयोश्च स्वरूपम् ॥ २० ॥ भूतानामवान्तरप्रलयो महाप्रलयः इष्टापूर्तकाम्यानां त्रिवर्गस्य च विधिः ॥२१॥ जीवस्य बन्धमोक्षातिरिक्तस्वरूपावस्थानं पाखण्डस्य संभवः आत्मनो बन्धमोक्षौ ॥ २२ ॥ यथा स्वतन्त्रो भगवान् मायया

तत्त्वानां परिसंख्यानं लक्षणं हेतुलक्षणम् ॥ पुरुषाराधानविधिर्योगस्याध्यात्मिकस्य च ॥ १९ ॥ योगेश्वरैश्वर्यगतिर्लिङ्ग[1]भङ्गस्तु योगिनाम् ॥ वेदोपवेदधर्माणामितिहासपुराणयोः ॥ २० ॥ संप्लवः सर्वभूतानां विक्रमः प्रतिसंक्रमः ॥ इष्टापूर्तस्य[2] काम्यानां[3] त्रिवर्गस्य[4] च यो विधिः ॥ २१ ॥ यश्चानुशायिनां[5] सर्गः पाखण्डस्य च संभवः ॥ आत्मनो बन्धमोक्षौ च व्यवस्थानं स्वरूपतः ॥ २२ ॥ यथाऽऽत्मतन्त्रो भगवान्विक्रीडत्यात्ममायया ॥ विसृज्य वा यथा मायामुदास्ते साक्षिवद्विभुः ॥ २३ ॥ सर्वमेतच्च भगवन्पृच्छते मेऽनुपूर्वशः ॥ तत्त्वतोऽर्हस्युदाहर्तुं प्रपन्नाय महामुने ॥ २४ ॥ अत्र प्रमाणं हि भवान्परमेष्ठी यथाऽऽत्मभूः ॥ परे चेहानुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम् ॥ २५ ॥ न मेऽसवः परायन्ति ब्रह्मन्ननशनादमी ॥ पिबतोऽच्युतपीयूषमन्यत्र कुपिताद्[6]द्विजात् ॥ २६ ॥ सूत उवाच ॥ स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः ॥ ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि ॥ २७ ॥ प्राह भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥

क्रीडति ॥ २३ ॥ हे शुक ! एतत् सर्वं पृच्छते मे क्रमेण वक्तुमर्हसि ॥ २४ ॥ अत्र भवान् सम्यग् ज्ञाताऽस्ति ॥ २५ ॥ हे ब्रह्मन् ! मम प्राणाः अनशनाद् व्याकुलाः न भवन्ति कुतोऽच्युतकथामृतपानात् ॥ २६ ॥ सूत उवाच ॥ हे शौनक ! राज्ञैवं सदसि पृष्टः शुकः प्रीतः सन् ॥ २७ ॥ ब्रह्मसंमितं भागवतं नाम पुराणं राज्ञे प्राह ॥ २८ ॥

---

१ लिङ्गशरीरस्य क्षयः । २ इष्टं वैदिकं कर्म, पूर्तं वापीकूपादिनिर्माणम् । ३ अग्निहोत्रादीनाम् । ४ धर्मार्थकामानाम् । ५ लीनोपाधीनां जीवानाम् । ६ कुपितद्विजशापादन्यस्माद्धेतोः ।

परीक्षिता कृतप्रश्नान् प्रस्तावक्रमेण वक्तुमुपचक्रमे ॥ २९ ॥ इति श्रीभागवतचूर्णिकायां द्वितीयस्कन्धे प्रश्नविधिर्नामाष्टमोऽध्यायः ॥ ८ ॥
राजप्रश्नोत्तरं वक्ष्यन् ब्रह्मणे हरिणोदितम् ॥ कथयामास नवमे शुको भागवतं पुनः ॥ १ ॥ श्रीशुक उवाच ॥ जीवस्य देहसंबन्ध आत्ममायां
विना न घटते ॥ १ ॥ संसारेऽपि माययैवाहं ममेत्यभिमानात् यतः स भवति ॥ २ ॥ स एव जीवो यदा निरहंकारो भवति तदा भक्त्या मोक्षं
याति ॥ ३ ॥ किंच भगवान् जीवस्य तत्त्वज्ञानार्थं यत् तपआदिना भजनं ब्रह्मणे आह ॥ ४ ॥ स ब्रह्मा पुरा कमले स्थितः सन् सृष्टिं कर्तुमै-

यद्यत्परीक्षिदृषभः पाण्डूनामनुपृच्छति ॥ आनुपूर्व्येण तत्सर्वमाख्यातुमुपचक्रमे ॥ २९ ॥ इति श्रीभागवते महापुराणे द्वितीयस्कन्धे प्रश्नविधिर्नामाष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ आत्ममायामृते राजन्परस्यानुभवात्मनः ॥ न घटेतार्थसम्बन्धः स्वप्नद्रष्टुरिवाञ्जसा ॥ १ ॥ बहुरूप इवाभाति मायया बहुरूपया ॥ रममाणो गुणेष्वस्यां ममाहमिति मन्यते ॥ २ ॥ यर्हि वाव महिम्नि स्वे परस्मिन्कालमाययोः ॥ रमेत गतसंमोहस्त्यक्त्वोदास्ते तदोभयम् ॥ ३ ॥ आत्मतत्त्वविशुद्ध्यर्थं यदाह भगवानृतम् ॥ ब्रह्मणे दर्शयन्रूपमव्यलीकव्रतादृतः ॥ ४ ॥ स आदिदेवो जगतां परो गुरुः स्वधिष्ण्यमास्थाय सिसृक्षयैक्षत ॥ तां नाध्यगच्छद्दृशमत्र संमतां प्रपञ्चनिर्माणविधिर्यया भवेत् ॥ ५ ॥ स चिन्तयन्द्व्यक्षरमेकदाऽम्भस्युपाशृणोद्द्विर्गदितं वचो विभुः ॥ स्पर्शेषु यत्षोडशमेकविंशं निष्किंचनानां नृप यद्धनं विदुः ॥ ६ ॥ निशम्य तद्वक्तृदिदृक्षया दिशो विलोक्य तत्रान्यदपश्यमानः ॥ स्वधिष्ण्यमास्थाय विमृश्य तद्धितं तपस्युपादिष्ट इवादधे मनः ॥ ७ ॥ दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः ॥ अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः ॥ ८ ॥ तस्मै स्वलोकं भगवान्सभाजितः संदर्शयामास परं न यत्परम् ॥ व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ ९ ॥

क्षत । तां सृष्टिं नाध्यगच्छत् ॥५॥ स एकदाऽम्भसि चिन्तयन् तप तप इति शुश्राव ॥६॥ ब्रह्मा तच्छ्रुत्वातद्वाक्यवक्तुर्दिदृक्षया दिशो विलो-
क्य तासु तमदृष्ट्वा स्वहितं विचार्य तपसि मनो दधे ॥ ७ ॥ स जितानिलात्मा दिव्यवर्षसहस्रं तपस्तेपे । भगवान् ब्रह्मणे स्वं वैकुण्ठलोकं

१ पुरुषप्रकृत्योः । २ अहं ममेति । ३ प्रजाम् । ४ अव्यभिचारिणीम् । ५ कादयो मावसानाः स्पर्शाः । ६ उभयेन्द्रियाणि ज्ञानकर्मात्मकानि ।

दर्शयामास । तं लोकं वर्णयति । क्लेशमोहभ्रमादिरहितम् ॥ ८ ॥ ९ ॥ यत्र रजस्तमः कालविक्रमः क्रोधलोभादयश्च न ॥ १० ॥ यत्र हरेः पार्षदाः कमलनेत्राः श्यामाः पीताम्बरधराः अतिसुकुमाराश्चतुर्भुजाः कुण्डलमुकुटमालाभिः शोभिताः विचरन्ति ॥ ११ ॥ यो लोको महात्मनां विमानपङ्क्तिभिः परितः शोभते ॥ १२ ॥ यत्र मूर्तिमती श्रीर्हरेः पादयोः पूजां करोति ॥ १३ ॥ एवं लोकं दृष्ट्वा ब्रह्मा तत्र भक्तपतिं

प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ १० ॥ श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः । सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः । प्रवालवैदूर्यमृणालवर्चसः परिस्फुरत्कुण्डलमौलिमालिनः ॥ ११ ॥ * भ्राजिष्णुभिर्यः परितो विराजिते लसद्विमानावलिभिर्महात्मनाम् । विद्योतमानः प्रमदोत्तमाद्युभिः सविद्युदभ्रावलिभिर्यथा नभः ॥ १२ ॥ श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः । प्रेङ्खं[1] श्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥ १३ ॥ ददर्श तत्राखिलसात्त्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् । सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् ॥ १४ ॥ भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणलोचनाननम् । किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं वक्षसि लक्षितं श्रिया ॥ १५ ॥ अध्यर्हणीयासनमास्थितं परं वृतं चतुःषोडशपञ्चशक्तिभिः[2] । युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन्रममाणमीश्वरम् ॥ १६ ॥ तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः । ननाम पादाम्बुजमस्य विश्वसृग्यत्पारमहंस्येन पथाऽधिगम्यते ॥१७॥

श्रियः पतिं यज्ञपतिं सुनन्दादिभिः पार्षदमुख्यैः सेवितम् ॥ १४ ॥ भृत्यप्रसादाभिमुखं किरीटकुण्डलधरं चतुर्भुजं पीताम्बरं वक्षसि श्रियाऽलंकृतम् ॥ १५ ॥ सिंहासनस्थं पञ्चविंशतितत्त्वरूपाभिः शक्तिभिर्युक्तमणिमाद्यष्टैश्वर्ययुक्तं प्रभुं ददर्श ॥ १६ ॥ तद्दर्शनेन हृष्यत्तनुः प्रेमभराश्रुलोचनो ब्रह्मा तत्पादाम्बुजं ननाम ॥ १७ ॥

* गायन्ति सामानि नमन्ति वै विभुं स्मरन्ति नन्दंति गृणन्ति पार्षदाः । इत्यधिकः पाठः । १ आन्दोलम् । २ चतस्रः प्रकृतिपुरुषमहदहंकाररूपाः षोडश एकादशेन्द्रियपञ्चमहाभूताख्याः पञ्च तन्मात्ररूपाः ।

तदा भगवान् प्रीतमनाः ब्रह्माणं करे स्पृशन् वदति स्म॥१८॥श्रीभगवानुवाच। हे ब्रह्मन्! कुयोगिनां दुस्तोपोऽहं त्वया तपसा तोषितः॥१९॥
तव भद्रमस्तु वांछितं वरं वरय॥२०॥ किंच मम लोकावलोकनं यत् तत् मत्कृपयैव प्राप्तम्। रहसि तप तपेति यद्वचः उपश्रुत्य त्वं तपः कृत-
वानसि॥२१॥ तदपि तपः सृष्ट्यारम्भे कार्ये त्वयि मोहिते सति मयैवोपदिष्टम्। किंच तपो मे हृदयं स्वरूपं च॥२२॥ हे ब्रह्मन्! अहं तपसा विश्वं

तं प्रीयमाणं समुपस्थितं तदा प्रजाविसर्गे निजशासनार्हणम्॥ बभाष ईषत्स्मितशोचिषा गिरा: प्रियः प्रियं प्रीतमनाः
करे स्पृशन्॥१८॥ श्रीभगवानुवाच॥ त्वयाऽहं तोषितः सम्यग्वेदगर्भ सिसृक्षया॥ चिरं भृतेन तपसा दुस्तोषः कूट-
योगिनाम्॥ १९॥ वरं वरय भद्रं ते वरेशं माऽभिवाञ्छितम्॥ ब्रह्मञ्छ्रेयः परिश्रामः पुंसो मद्दर्शनावधिः॥ २०॥
मनीषितानुभावोऽयं मम लोकावलोकनम्॥ यदुपश्रुत्य रहसि चकर्थ परमं तपः॥ २१॥ प्रत्यादिष्टं मया तत्र त्वयि
कर्मविमोहिते॥ तपो मे हृदयं साक्षादात्माऽहं तपसोऽनघ॥ २२॥ सृजामि तपसैवेदं ग्रसामि तपसा पुनः॥ बिभर्मि
तपसा विश्वं वीर्यं मे दुश्चरं तपः॥ २३॥ ब्रह्मोवाच॥ भगवन्सर्वभूतानामध्यक्षोऽवस्थितो गुहाम्॥ वेद ह्यप्रतिरुद्धेन
प्रज्ञानेन चिकीर्षितम्॥ २४॥ तथाऽपि नाथमानस्य नाथ नाथय नाथितम्॥ परावरे यथा रूपे जानीयां ते स्वरू-
पिणः॥ २५॥ यथाऽऽत्ममायायोगेन नानाशक्त्युपबृंहितम्॥ विलुम्पन्विसृजन्गृह्णन्बिभ्रदात्मानमात्मना॥ २६॥
क्रीडस्यमोघसंकल्प ऊर्णनाभिर्यथोर्णुते॥ तथा तद्विषयां धेहि मनीषां मयि माधव॥ २७॥ भगवच्छिक्षितमहं
करवाणि ह्यतन्द्रितः॥ नेहमानः प्रजासर्गं बध्येयं त्वदनुग्रहात॥ २८॥



सृजामि, तपसा पालयामि, तपसा संहरामि, अतस्तपो मे शक्तिः॥२३॥ब्रह्मोवाच। हे भगवन्! सर्वेषां हृदयाकाशे स्थितस्त्वं सर्वं वेत्सि॥२४॥
तथाऽपि अरूपिणस्तव सूक्ष्मं स्थूलं च रूपं यथाहं जानीयाम्॥२५॥यथा चात्ममायायोगेन विश्वं विविधं सृजन् पालयन् संहरन्॥२६॥ ऊर्ण-
नाभिरिव क्रीडसि तथा तद्विषयां बुद्धिं मयि स्थापय॥२७॥अहं त्वच्छिक्षितं करवाणि अहं प्रजासर्गे यथा न बद्धः स्यां तथाऽनुगृहाण॥२८॥

१ ममेच्छाप्रभावः। २ याच्यमानस्य। ३ प्रयच्छ।

हे ईश ! अहं करस्पर्शादिना ममत्वेन संमानितः सन् प्रजासर्गरूपायां तव सेवायां स्थितो यावद् जनं सृजामि तावदहमपि स्वतन्त्र इति मदो मा भूत् ॥ २९ ॥ श्रीभगवानुवाच । हे ब्रह्मन् ! मम शास्त्रोक्तं ज्ञानं तथाऽनुभावो भक्तिस्तत्साधनं च परमगुह्यमस्ति । तथाऽपि तुभ्यं कथयामि त्वं गृहाण ॥३०॥ स्वरूपतो यावानहं यादृक्सत्तावान् मम यथा रूपाणि कर्माणि गुणाश्च तथैव तत्त्वज्ञानं मदनुग्रहात् तव भवतु ॥ ३१ ॥ हे ब्रह्मन् ! सृष्टेः प्रागहमेवासम् । अन्यत् स्थूलसूक्ष्मप्रधानादि न किंचिदप्यास। सृष्ट्युत्तरमप्यहमेवास्मि । यदेतद् विश्वं तदप्यहमेव। प्रलये योऽवशिष्यते सोऽप्यहमेव ॥३२॥ एवं परिपूर्णोऽहम् । वास्तवमर्थं विनाऽऽत्मनि तत् प्रतीयेत न प्रतीयेत च तां मम मायां विद्यात् ।

यावत्सखा सख्युरिवेश ते कृतः प्रजाविसर्गे विभजामि भो जनम्[1]॥ अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः[2] ॥ २९ ॥ श्रीभगवानुवाच ॥ ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ॥ सरहस्यं तदङ्गं च गृहाण गदितं मया ॥३०॥ यावानहं यथाभावो यद्रूपगुणकर्मकः ॥ तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्॥ ३१ ॥ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ॥ पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥३२॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि॥ तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥ ३३ ॥ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ॥ प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥३४॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः ॥ अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ३५ ॥ एतन्मतं समातिष्ठ परमेण समाधिना ॥ भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ३६ ॥

यथा द्विचन्द्रादिराभासोऽर्थं विना प्रतीयते किंच राहुर्ग्रहमण्डले स्थितोऽपि न प्रतीयते तद्वत् ॥ ३३ ॥ किंच यथा महाभूतान्युच्चनीचेषु भौतिकेषु देहेषु सृष्ट्युत्तरं प्रविष्टान्यप्रविष्टानि च वर्तन्ते तथाऽहमपि तेषु भूतभौतिकेषु ॥३४॥ आत्मनस्तत्त्वजिज्ञासुना त्वयैवं विचार्यम् । अन्वयव्यतिरेकाभ्यां सर्वत्र सर्वदा यत् स्यात् तदेवात्मा ॥ ३५ ॥ हे ब्रह्मन् ! एतन्मम मतं चित्तैकाग्र्येण त्वमनुतिष्ठ तेन त्वं कल्पेषु याः सृष्टयस्तासु कर्तृत्वाभिनिवेशं न यास्यसि ॥ ३६ ॥ इति चतुः श्लोकी ॥

१ उत्तममध्यमादिभेदेन सृजामि । २ मा समुन्नद्ध उत्कटो मदो नाभूत् । लुङि रूपमडागमाभावः ।

श्रीशुक उवाच ॥ भगवान् ब्रह्माणमेवमुपदिश्य तस्य पश्यतोऽन्तर्दधे ॥ ३७ ॥ तदा ब्रह्मा तं नत्वा पूर्ववदिदं विश्वं ससर्ज ॥ ३८ ॥ एकदा ब्रह्मा प्रजानां भद्रमन्विच्छन् यमान् नियमानकरोत् ॥ ३९ ॥ तदा महाभागवतो नारदो विष्णोर्मायां ज्ञातुमिच्छन् शीलादिना ब्रह्माणं परितोषयामास ॥४०॥४१॥ ततो नारदः पितरं प्रसन्नं दृष्ट्वा भगवान् मां यदनुपृच्छति तत् पप्रच्छ ॥४२॥ तदा ब्रह्मा प्रीतः सन् स्वसुताय नारदायेदं दशलक्षणं भागवतं पुराणं प्राह ॥४३॥ नारदः सरस्वत्यास्तटे ब्रह्म ध्यायते व्यासाय तत् कथयामास, स मह्यं प्रोवाच ॥ ४४ ॥

श्रीशुक उवाच ॥ संप्रदिश्यैवमजनो जनानां परमेष्ठिनम् ॥ पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः ॥३७॥ अन्तर्हितेन्द्रियार्थाय हरये विहिताञ्जलिः ॥ सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ॥ ३८ ॥ प्रजापतिर्धर्मपतिरेकदा नियमान्यमान् ॥ भद्रं प्रजानामन्विच्छन्नातिष्ठत्स्वार्थकाम्यया ॥ ३९ ॥ तं नारदः प्रियतमो रिक्थादानामनुव्रतः ॥ शुश्रूषमाणः शीलेन प्रश्रयेण दमेन च ॥ ४० ॥ मायां विविदिषन्विष्णोर्मायेशस्य महामुनिः ॥ महाभागवतो राजन्पितरं पर्यतोषयत् ॥४१॥ तुष्टं निशाम्य पितरं लोकानां प्रपितामहम् ॥ देवर्षिः परिपप्रच्छ भवान्यन्माऽनुपृच्छति ॥४२॥ तस्मा इदं भागवतं पुराणं दशलक्षणम् ॥ प्रोक्तं भगवता प्राह प्रीतः पुत्राय भूतकृत् ॥ ४३ ॥ नारदः प्राह मुनये सरस्वत्यास्तटे नृप ॥ ध्यायते ब्रह्म परमं व्यासायामिततेजसे ॥ ४४ ॥ यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम् ॥ यथाऽऽसीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ॥ ४५ ॥ इति श्रीभागवते म० द्वितीयस्कन्धे नवमोऽध्यायः ॥ ९ ॥

श्रीशुक उवाच ॥ अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥ मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥ १ ॥ दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् ॥ वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसा ॥ २ ॥



अहं त्वया पृष्टो वैराजात् पुरुषादिदं यथाऽऽसीत् तथा व्याख्यास्ये अन्यांश्च कृत्स्नशस्तव प्रश्नान् कथयामि ॥ ४६ ॥ इति श्रीभाग० चू० द्वितीयस्कन्धे नवमोऽध्यायः ॥९॥ ततो भागवतव्याख्याद्वारैव दशमे स्फुटम् । राजप्रश्नोत्तरं वक्तुमारेभे बादरायणिः ॥१॥ श्रीशुक उवाच ॥ अतः परं दशलक्षणानि शृणु । सर्गो विसर्गः स्थानं पोषणमूतयो मन्वन्तरमीशानुकथा निरोधो मुक्तिराश्रय इति ॥ १ ॥ आश्रयस्य

१ पुत्राणाम् । २ भवान् राजेत्यर्थः ।

तत्त्वज्ञानार्थं नवानां स्वरूपं ज्ञानिनो वर्णयन्ति ॥ २ ॥ पञ्चभूतेन्द्रियादीनां जन्म स सर्गः । मायागुणवैषम्याच्चराचरसर्गो विसर्गः ॥ ३ ॥ भगवतो विजयित्वेन स्थितिस्तत् स्थानम् भक्तानुग्रहः पोषणम् ॥ सद्धर्मो मन्वतराणि । कर्मवासनाः ऊतयः ॥४॥ अवतारानुचरितं भक्तानां सत्कथाः ईशानुकथाः ॥ ५ ॥ हरेर्योगनिद्रा तदूर्ध्वं जीवस्योपाधिभिः सह शयनं निरोधो नाम लयः । मुक्तिर्नाम ब्रह्मत्वेन स्थितिः ॥ ६ ॥ आश्रयो नाम यतः सृष्टिनिरोधौ स्यातां तत् परं ब्रह्म ॥ ७ ॥ य आध्यात्मिकश्चक्षुरादीन्द्रियाभिमानो द्रष्टा स जीवः । सोऽसावेवाधिदैविकः

भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः ॥ ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥ ३ ॥ स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः ॥ मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः ॥ ४ ॥ अवतारानुचरितं हरेश्चास्यानुवर्तिनाम् ॥ पुंसामीशकथाः प्रोक्ता नानाख्यानोपबृंहिताः ॥ ५ ॥ निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः ॥ मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः ॥ ६ ॥ आभासस्य निरोधस्य यतश्चाध्यवसीयते ॥ स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥ ७ ॥ योऽध्यात्मिकोयं पुरुषः सोऽसावेवाधिदैविकः ॥ यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः ॥ ८ ॥ एकमेकतराभावे यदा नोपलभामहे ॥ त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥ ९ ॥ पुरुषोऽण्डं विनिर्भिद्य यदाऽसौ स विनिर्गतः ॥ आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥ १० ॥ तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान् ॥ तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥११॥ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया॥१२॥एको नानात्वमन्विच्छन्योगतल्पात्समुत्थितः॥वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा॥१३॥

सूर्यादिः तत्रैकस्मिन्नेव द्विरूपभेदो यस्मात् स आधिभौतिको देहः ॥ ८ ॥ एतत् त्रितयं यो वेद स आश्रय इति कथ्यते ॥ ९ ॥ स पुरुषोऽण्डं निर्भिद्य निर्गतः आत्मनः स्थानमन्विच्छन् सर्गादावपः ससर्ज ॥१०॥ तास्वप्सु सहस्रपरिवत्सरान् स्थितत्वान्नारायण इति नाम प्राप ॥११॥ तस्यानुग्रहाद् द्रव्यकर्मादिकं सर्वमुत्पद्यते तदुपेक्षया नश्यति ॥ १२ ॥ एक एव स नानात्वमिच्छन् गर्भरूपं विराड्देहं भूतेन्द्रियदेवता

१ आर्षं पूर्वरूपम् । २ 'स स्मृतः' इत्यपि पाठः ।

रूपेण त्रिधा विभक्तवान् ॥१३॥ एकं पौरुषं वीर्यमधिभूतमध्यात्ममधिदैवमिति त्रिधा यथोत्पद्यते तथा शृणु ॥ १४ ॥ विचेष्टतस्तस्य पुरुषस्य हृदयाकाशे इन्द्रियमनोदेहानां शक्तयो जाताः । ततः सूत्राख्यो मुख्यप्राणः ॥१५॥ प्राणस्य मुख्यत्वं दर्शयति । इन्द्रियाणि चेष्टां कुर्वन्तं प्राणं पश्चाच्चेष्टां कुर्वन्ति त्यजन्तमनुत्यजन्ति ॥१६॥ प्राणेन चालयता क्षुत्तृषावुत्पन्ने । भक्षयितुमिच्छोस्तस्य मुखं निरभिद्यत ॥ १७ ॥ तत्र तालुरधिष्ठानं जिह्वेन्द्रियं रसो विषयः वरुणो देवता । एवं सर्वत्राधिष्ठानमिन्द्रियं देवता विषय इति चतुष्टयं ज्ञातव्यम् ॥ १८ ॥ एवं वक्तुमिच्छोर्मु-

अधिदैवमथाध्यात्ममधिभूतमिति प्रभुः ॥ यथैकं पौरुषं वीर्यं त्रिधाऽभिद्यत तच्छृणु ॥ १४ ॥ अन्तश्शरीर आकाशात्पुरुषस्य विचेष्टतः ॥ ओजः सहो बलं जज्ञे ततः प्राणो महानसुः ॥ १५ ॥ अनुप्राणन्ति यं प्राणाः प्राणन्तं सर्वजन्तुषु ॥ अपानं तमपानन्ति नरदेवमिवानुगाः ॥१६॥ प्राणेन क्षिपता क्षुतृडन्तरा जायते प्रभो ॥ पिपासतो जक्षतश्च प्राङ्मुखं निरभिद्यत ॥ १७ ॥ मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते ॥ ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥ १८ ॥ विवक्षोर्मुखतो भूम्नो वह्निर्वाग्व्याहृतं तयोः ॥ जले वै तस्य सुचिरं निरोधः समजायत ॥१९॥ नासिके निरभिद्येतां दोधूयति नभस्वति ॥ तत्र वायुर्गन्धवहो घ्राणो नसि जिघृक्षतः ॥ २० ॥ यदात्मनि निरालोकमात्मानं च दिदृक्षतः ॥ निर्भिन्ने ह्यक्षिणी तस्य ज्योतिश्चक्षुर्गुणग्रहः ॥ २१ ॥ बोध्यमानस्य ऋषिभिरात्मनस्तज्जिघृक्षतः ॥ कर्णौ च निरभिद्येतां दिशः श्रोत्रं गुणग्रहः ॥ २२ ॥ वस्तुनो मृदुकाठिन्यलघुगुर्वोष्ण[1]शीतताम्॥ जिघृक्षतस्त्वङ्निर्भिन्ना तस्यां रोममहीरुहाः॥ तत्र चान्तर्बहिर्वातस्त्वचा लब्धगुणो वृतः ॥ २३ ॥ ❋

खाद् वह्निर्वाग्वचनानि जातानि ॥ १९ ॥ प्राणवायौ प्रचलति सति नासिके जाते । तयोर्वायुर्देवता गन्धो विषयो घ्राणमिन्द्रियम् ॥ २० ॥ द्रष्टुमिच्छोस्तस्याक्षिणी जाते । तत्र सूर्यो देवता चक्षुरिन्द्रियं रूपं विषयः ॥२१॥ श्रोतुमिच्छतस्तस्य कर्णौ जातौ । तयोर्दिशो देवताः श्रोत्रमिन्द्रियं शब्दो विषयः ॥ २२ ॥ वस्तुनो मृदुकाठिन्यशीतोष्णादि ज्ञातुमिच्छतस्तस्य त्वगधिष्ठानं रोमाणीन्द्रियं वृक्षाः देवताः स्पर्शो विषयो



१ औष्ण्यमीषदुष्णम् । • स्पर्शं गृह्णत्तदेव त्वग्लोकपालोऽनिलोऽविशत् । इत्यधिकः पाठः ।

जातः ॥ २३ ॥ कर्म कर्तुमिच्छतस्तस्य हस्तौ रुरुहतुः । तस्य बलमिन्द्रियम् इन्द्रो देवता आदानं विषयः ॥ २४ ॥ गमनं कर्तुमिच्छोः पादौ रुरुहतुः इन्द्रियं कर्मशक्तिः विष्णुर्देवता गमनं विषयः ॥ २५ ॥ अपत्यं रतिं चेच्छतः शिश्नो निरभिद्यत । उपस्थम् इन्द्रियं प्रजापतिर्देवता मूत्रोत्सर्गकामसुखो विषयः ॥ २६ ॥ मलं त्यक्तुमिच्छोर्गुदं निरभिद्यत पायुरिन्द्रियं मित्रो देवता उत्सर्गो विषयः ॥ २७ ॥ देहात् देहान्तरं गन्तुमिच्छोर्नाभिद्वारं रुरोह । अपानमिन्द्रियं मृत्युर्देवता मरणं विषयः ॥ २८ ॥ अन्नसंग्रहेच्छोः कुक्षिस्थानं निरभिद्यत ।

हस्तौ रुरुहतुस्तस्य नानाकर्मचिकीर्षया ॥ तयोस्तु बलमिन्द्रश्च आदानमुभयाश्रयम् ॥ २४ ॥ गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम् ॥ पद्भ्यां यज्ञः स्वयं हव्यं कर्मभिः क्रियते नृभिः ॥ २५ ॥ निरभिद्यत शिश्नो वै प्रजानन्दामृतार्थिनः ॥ उपस्थ आसीत्कामानां प्रियं तदुभयाश्रयम् ॥२६॥ उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम् ॥ ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ॥ २७ ॥ आसिसृप्सोः पुरः पुर्या नाभिद्वारमपानतः ॥ तत्रापानस्ततो मृत्युः पृथक्त्वमुभयाश्रयम् ॥ २८ ॥ आदित्सोरन्नपानानामासन्कुक्ष्यन्त्रनाडयः ॥ नद्यः समुद्राश्च तयोस्तुष्टिः पुष्टिस्तदाश्रये ॥२९॥ निदिध्यासोरात्ममायां हृदयं निरभिद्यत ॥ ततो मनस्ततश्चन्द्रः संकल्पः काम एव च ॥३०॥ त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातवः ॥ भूम्यप्तेजोमयाः सप्त प्राणो व्योमाम्बुवायुभिः ॥३१॥ गुणात्मकानीन्द्रियाणि भूतादिप्रभवा गुणाः ॥ मनःसर्वविकारात्मा बुद्धिर्विज्ञानरूपिणी ॥३२॥ एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया ॥ मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम् ॥ ३३ ॥ अतः परं सूक्ष्मतममव्यक्तं निर्विशेषणम् ॥ अनादिमध्यनिधनं नित्यं वाङ्मनसः परम् ॥ ३४ ॥

इन्द्रियमन्त्राणि समुद्रो देवता तुष्टिर्विषयः ॥ २९ ॥ चिन्तयितुमिच्छोर्हृदयं मनश्चन्द्रः संकल्पो जातः ॥ ३० ॥ तथा त्वक्चर्ममांसरुधिरमेदोमज्जास्थीनि सप्त धातवो जाताः ॥ ३१ ॥ अस्य मनः सर्वविकाराणां स्वरूपं तथा बुद्धिरर्थज्ञानरूपिणी बभूव ॥ ३२ ॥ हे नृप ! एतद् भगवतः स्थूलं रूपं तुभ्यं कथितम् ॥ ३३ ॥ अतःपरं द्वितीयमनादिमध्यनिधनं वाङ्मनसयोः परं नित्यं सूक्ष्मरूपं च ॥ ३४ ॥

ज्ञानिनः उभे अपि मायोत्पन्ने इति मत्वा न गृह्णन्ति ॥ ३५ ॥ स ब्रह्मरूपधृक् भगवान् वाच्यवाचकतया सकर्माऽकर्मकः सन् नामरूपक्रियाः धत्ते ॥ ३६ ॥ तदेवाह प्रजापतीन् मनून् देवान् ऋषीन् पितृगणान् सिद्धचारणगन्धर्वादीन् ॥ ३७ ॥ किन्नराप्सरसो नागान् सर्पकिंपुरुषादीन् रक्षोभूतप्रेतपिशाचान् ॥ ३८ ॥ कूष्माण्डोन्मादवेतालयक्षग्रहखगमृगपशून् वृक्षपर्वतवृश्चिकादीन् ॥ ३९ ॥ एवं द्विविधचतुर्विधजीवाः कर्मणां

अमुनी भगवद्रूपे माया ते ह्यनुवर्णिते॥ उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः ॥३५॥ स वाच्यवाचकतया भगवान् ब्रह्मरूपधृक् ॥ नामरूपक्रिया धत्ते सकर्माऽकर्मकः परः ॥३६॥ प्रजापतीन्मनून्देवानृषीन्पितृगणान्पृथक् ॥ सिद्धचारणगन्धर्वान्विद्याध्रासुरगुह्यकान् ॥ ३७ ॥ किन्नराप्सरसो नागान्सर्पान्किंपुरुषोरगान् ॥ मातृरक्षःपिशाचांश्च प्रेतभूतविनायकान् ॥ ३८ ॥ कूष्माण्डोन्मादवेतालान्यातुधानान्ग्रहानपि ॥ खगान्मृगान्पशून्वृक्षान्गिरीन्नृप सरीसृपान् ॥ ३९ ॥ द्विविधाश्चतुर्विधा येऽन्ये जलस्थलनभौकसः ॥ कुशलाकुशला मिश्राः कर्मणां गतयस्त्विमाः ॥ ४० ॥ सत्त्वंरजस्तम इति तिस्रः सुरनृनारकाः ॥ तत्राप्येकैकशो राजन्भिद्यन्ते गतयस्त्रिधा ॥ यदैकैकतरोऽन्याभ्यां[१] स्वभाव उपहन्यते ॥ ४१ ॥ * स एवेदं जगद्धाता भगवान्धर्मरूपधृक् ॥ पुष्णाति स्थापयन्विश्वं तिर्यङ्नरसुरात्मभिः ॥ ४२ ॥ ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः ॥ संनियच्छति कालेन घनानीकमिवानिलः ॥ ४३ ॥ इत्थंभावेन कथितो भगवान्भगवत्तमः ॥ नेत्थंभावेन हि परं द्रष्टुमर्हन्ति सूरयः ॥ ४४ ॥ नास्य कर्मणि जन्मादौ परस्यानुविधीयते ॥ कर्तृत्वप्रतिषेधार्थं माययाऽऽरोपितं हि तत् ॥ ४५ ॥

गतिरूपाः । तानपि धत्ते ॥ ४० ॥ हे राजन् ! तत्राप्येकैकशः सत्त्वं रजस्तम इति भेदेन सुरनरनारकयस्त्रिधा गतयो भिद्यन्ते ॥ ४१ ॥ स भगवानिदं ब्रह्मरूपेण सृजति विष्णुरूपेण पाति रुद्ररूपेण हरति ॥ ४२ ॥ ४३ ॥ इत्थंभावेन कथितः । ज्ञानिनस्तु परं केवलं तमेवं स्रष्टृत्वादिरूपेण द्रष्टुं नार्हन्ति ॥ ४४ ॥ इदं जगद् यस्मिन् माययाऽऽरोपितम् ॥ ४५ ॥



१ अन्याभ्यां गुणाभ्यां स्वभावो गुणोऽनुविध्यते । * यस्य यादृक्स्वभावोऽस्ति तादृक्तस्य गतिर्भवेत् । इत्यधिकः पाठः ।

अयं तु ब्राह्मः कल्प उक्तः यत्र प्राकृतवैकृतसर्गाणां प्रकारः ॥ ४६ ॥ कालस्य सूक्ष्मस्थूलरूपं कल्पलक्षणमवान्तरकल्पं विस्तरेण तृतीयस्कन्धे कथयिष्यामि वक्ष्यमाणं पाद्मं कल्पं शृणु ॥ ४७ ॥ शौनक उवाच ॥ हे सूत ! विदुरो दुस्त्यजान् बंधूस्त्यक्त्वा भुवः क्षेत्राणि चचारेति यद् भगवान् नः आह॥४८॥तस्य विदुरस्य मैत्रेयस्य च संवादः कुत्र बभूव॥४९॥हे सौम्य ! विदुरस्य बन्धुत्यागनिमित्तं चेष्टितं च कथय ॥ ५० ॥

अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः ॥ विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥ ४६ ॥ परिमाणं च कालस्य कल्पलक्षणविग्रहम् ॥ यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु ॥ ४७ ॥ शौनक उवाच ॥ यदाऽऽह नो भवान्सूत क्षत्ता भागवतोत्तमः ॥ चचार तीर्थानि भुवस्त्यक्त्वा बन्धून्सुदुस्त्यजान् ॥४८॥ कुत्र कौषारवेस्तस्य संवादोऽध्यात्मसंश्रितः ॥ यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वमुवाच ह ॥४९॥ ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् ॥ बन्धुत्यागनिमित्तं च तथैवागतवान्पुनः ॥ ५० ॥ सूत उवाच ॥ राज्ञा परीक्षिता पृष्टो यदवोचन्महामुनिः ॥ तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ॥ ५१ ॥ इति श्रीभा० म० द्वि० स्कन्धे पारमहंस्यां वैयासिक्यामष्टादशसाहस्र्यां पुरुषसंस्थानुवर्णनं नाम दशमोऽध्यायः ॥ १० ॥ इति द्वितीयस्कन्धः समाप्तः ॥ २ ॥

सूत उवाच ॥ एवं परीक्षिता पृष्टः शुको विदुरमैत्रेयसंवादं यमवोचत् तं वः कथयामि शृणुत ॥५१॥ इनि श्रीभागवतचूर्णिकायां द्वितीयस्कन्धे दशमोऽध्यायः॥१०॥समाप्तोऽयं द्वितीयस्कन्धः ॥२॥ अस्मिन् स्कन्धे वृत्तानुष्टुप्श्लोकानांसंख्याः ॥३९०॥ अनुमानेन चू० ग्रन्थसं० ॥३७६॥

अथ सच्चूर्णिके श्रीमद्भागवते तृतीयस्कन्धः प्रारभ्यते

श्रीकृष्णाय नमः ॥ तृतीये तु त्रयस्त्रिंशदध्यायैः सर्गवर्णनम् ॥ ईशेच्छया गुणक्षोभात् सर्गो ब्रह्माण्डसम्भवः ॥ १ ॥ तत्र तु प्रथमेऽध्याये बन्धून् हित्वा गतायुषः ॥ निर्गतस्योद्धवेनादौ संवादः क्षत्तुरुच्यते ॥ श्रीशुक उवाच ॥ हे नृप ! एवं पुरा स्वगृहं हित्वा वनं प्रविष्टो विदुरो मैत्रेयं प्रति पृष्टवान् ॥ यद् दुर्योधनगृहम् अयं श्रीकृष्णः पाण्डवानां दौत्यकर्ता सन् हित्वाऽनाहूतोऽपि विदुर गृहं विवेश ॥ २ ॥ राजोवाच ॥ भगवता मैत्रेयेण सह विदुरस्य समागमः संवादश्च कुत्र बभूव, हे प्रभो ! तत् नो वर्णय ॥ ३ ॥ विदुरस्य श्रेष्ठे मैत्रेये प्रश्नोऽल्पा-

ॐ नमो भगवते वासुदेवाय ॥ श्रीशुक उवाच ॥ एवमेतत्पुरा पृष्टो मैत्रेयो भगवान्किल ॥ क्षत्त्रा वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥१॥ यद्वा अयं मन्त्रकृद्वो भगवानखिलेश्वरः ॥ पौरवेन्द्रगृहं हित्वा प्रविवेशात्मसात्कृतम् ॥२॥ राजोवाच ॥ कुत्र क्षत्तुर्भगवता मैत्रेयेणास संगमः ॥ कदा वा सह संवाद एतद्वर्णय नः प्रभो ॥ ३ ॥ न ह्यल्पार्थोदयस्तस्य विदुरस्यामलात्मनः ॥ तस्मिन्वरीयसि प्रश्नः साधुवादोपबृंहितः ॥ ४ ॥ सूत उवाच ॥ स एवमृषिवर्योऽयं पृष्टो राज्ञा परीक्षिता ॥ प्रत्याह तं स बहुवित्प्रीतात्मा श्रूयतामिति ॥ ५ ॥ श्रीशुक उवाच ॥ यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः ॥ भ्रातुर्यविष्ठस्य सुतान्विबधून्प्रवेश्य लाक्षाभवने ददाह ॥ ६ ॥ यदा सभायां कुरुदेवदेव्याः केशाभिमर्शं सुतकर्म गर्ह्यम् ॥ न वारयामास नृपः स्नुषायाः स्वास्रैर्हरन्त्याः कुचकुङ्कुमानि ॥७॥ द्यूते त्वधर्मेण जितस्य साधोः सत्यावलम्बस्य वनागतस्य ॥ न याचतोऽदात् समयेन दायं तमो जुषाणो यदजातशत्रोः ॥८॥

र्थोदयो न ॥ ४ ॥ सूत उवाच ॥ हे शौनक ! एवं राज्ञा पृष्टः शुकः श्रूयतामिति तं प्रत्याह ॥ ५ ॥ श्रीशुक उवाच ॥ यदा धृतराष्ट्रोऽसाधून् पुत्रान् पुष्णन् पितृहीनान् पाण्डवान् लाक्षाभवने ददाह ॥ ६ ॥ यदा सभायां स्नुषायाः द्रौपद्याः दुश्शासनादिभिः केशाकर्षणं सुतकर्म न निवारयामास ॥ ७ ॥ द्यूतेऽधर्मेण जितस्य द्वादशाब्दानन्तरं वनादागतस्य धर्मस्य समयेन भागं याचमानस्य सतो न ददौ ॥ ८ ॥

१ यथा भवता पृष्टमनेन प्रकारेण । २ आत्मीयत्वेन गृहीतम् । ३ सदनुमोदनसंवर्धितः साधोर्मैत्रेयस्य वादेनोत्तरेण श्लाघितः इति वा साधु साध्विति शब्देन वा श्लाघितः । ४ युधिष्ठिरस्य पट्टाभिषिक्तायाः ॥ ५ केशाकर्षणलक्षणम् ।

यदा च पार्थप्रेषितः सामार्थं गतः कृष्णो यानि वाक्यान्यूचे तानि धृतराष्ट्रः साधु न मेने॥९॥यदा धृतराष्ट्रेण विचारार्थमाहूतो विदुरोऽन्तर्गृहं प्रविश्य यदाह तत् मन्त्रिणोऽद्यापि विदुरवाक्यमिति प्रसिद्धं वदन्ति॥१०॥तदेवाह। हे बन्धो! तवापराधं सहमानस्य युधिष्ठिरस्य विभागं देहि यत्रापराधेऽनुजैः सह भीमरूपोऽहिः क्रोधेन श्वसन् वर्तते॥११॥पाण्डवांस्तु भगवान् कृष्णः आत्मीयत्वेन गृहीतवान्।स कृष्णः स्वपुर्यां सुखमास्ते

यदा च पार्थप्रहितः सभायां जगद्गुरुर्यानि जगाद कृष्णः॥ न तानि पुंसाममृतायनानि[1] राजोरु मेने क्षतपुण्यलेशः ॥९॥ यदोपहूतो भवनं प्रविष्टो मन्त्राय पृष्टः किल पूर्वजेन[2]॥ अथाह तन्मन्त्रदृशां[3] वरीयान्यन्मन्त्रिणो वैदुरिकं वदन्ति ॥ १० ॥ अजातशत्रोः प्रतियच्छ दायं तितिक्षतो दुर्विषहं तवागः॥ सहानुजो यत्र वृकोदराहिः श्वसन्रुषा यत्[4] त्वमलं बिभेषि ॥ ११ ॥ पार्थांस्तु देवो भगवान्मुकुंदो गृहीतवान्स क्षितिदेवदेवः[5]॥ आस्ते स्वपुर्यां यदुदेवदेवो[6] विनिर्जिताशेषनृदेवदेवः॥ १२ ॥ स एष दोषः[7] पुरुषद्विडास्ते गृहान्प्रविष्टोऽयमपत्यमत्या॥ पुष्णासि कृष्णाद्विमुखो गतश्रीस्त्यजाश्वशैवं[8] कुलकौशलाय ॥ १३ ॥ इत्यूचिवांस्तत्र सुयोधनेन प्रवृद्धकोपस्फुरिताधरेण॥ असत्कृतः सत्स्पृहणीयशीलः क्षत्ता सकर्णानुजसौबलेन ॥ १४ ॥ क एनमत्रोपजुहाव जिह्मं दास्याः सुतं यद्बलिनैव पुष्टः॥ तस्मिन् प्रतीपः[9] परकृत्य आस्ते निर्वास्यतामाशु पुराच्छ्वसानः॥ १५ ॥ स इत्थमत्युल्बणकर्णबाणैर्भ्रातुः[10] पुरो मर्मसु ताडितोऽपि॥ स्वयं धनुर्द्वारि निधाय मायां गतव्यथोऽयादुरु मानयानः[11]॥ १६ ॥

॥१२॥ किंच यं पुत्रबुद्ध्यात्वं पुष्णासि तं कृष्णद्वेषिणं पुत्रं कुलकौशलाय शीघ्रं त्यज ॥१३॥ इति विदुरेणोक्ते सति कर्णदुश्शासनशकुनिदुर्योधनादिभिः कोपात् विदुरस्तिरस्कृतः ॥१४॥ एनं जिह्मं दासीपुत्रमत्र क आजुहाव यो यस्यान्नेन पुष्टस्तस्मिन्नेव प्रतिकूलः परेषां कार्ये वर्तते अतः पुरात् शीघ्रं निष्कास्यताम् ॥१५॥ एवं भ्रातुः पुरोऽतिकठोरवाक्यैर्मर्मसु ताडितोऽपि गतव्यथो विदुरः सभाद्वारि धनुर्निधाय निरगात् ॥१६॥

१ अमृतस्रावाणि । २ ज्येष्ठेन । ३ विदुरोक्तं नीतिशास्त्रम् । ४ यस्मात् । ५ क्षितौ देवाः ब्राह्मणाः तेषां देवः श्रीकृष्ण इत्यर्थः उचितः । ६ यदुश्रेष्ठपूज्यः । ७ मूर्तो दोष एव । ८ अमङ्गलम् । ९ जीवमात्रशेषः । १० भयंकर । ११ मायामुरु बहु मानयन् अयात् इत्यन्वयः ।

ततः स गजाह्वयात् निर्गतः सन् हरेः स्थानानि क्षेत्राणि पुण्यचिकीर्षया जगाम ॥ १७ ॥ एकाकी स भगवत्प्रतिमाभिरलंकृतेषु पुण्योपवनाद्रिकुञ्जेषु सरित्सरस्तीर्थादिषु च चचार ॥ १८ ॥ स प्रतितीर्थं स्नातोऽधश्शयनोऽवधूतवेषः स्वजनैरलक्षितो गां पर्यटन् हरितोषणानि व्रतानि चेरे ॥ १९ ॥ एवं भारतमेव वर्षं व्रजन् यावता कालेन प्रभासं गतवांस्तावन्तं कालं कृष्णेन सहायेन धर्मः पृथ्वीं शशास ॥ २० ॥ तत्र प्रभासे

स निर्गतः कौरवपुण्यलब्धो गजाह्वयात्तीर्थपदः पदानि ॥ अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यां स्वधिष्ठितो यानि सहस्रमूर्तिः ॥ १७ ॥ पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरस्सु ॥ अनन्तलिङ्गैः समलंकृतेषु चचार तीर्थायतनेष्वनन्यः ॥ १८ ॥ गां पर्यटन्मेध्यविविक्तवृत्तिः सदाऽऽप्लुतोऽधश्शयनोऽवधूतः ॥ अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानि ॥ १९ ॥ इत्थं व्रजन्भारतमेव वर्षं कालेन यावद्गतवान् प्रभासम् ॥ तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ २० ॥ तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निसंश्रयम् ॥ संस्पर्धया दग्धमथानुशोचन्सरस्वतीं प्रत्यग्[6]इयाय तूष्णीम् ॥ २१ ॥ तस्यां त्रितस्योशनसो मनोश्च पृथोरथाग्नेरसितस्य वायोः ॥ तीर्थं सुदासस्य गवां गुहस्य यच्छ्राद्धदेवस्य स आसिषेवे ॥ २२ ॥ अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः ॥ प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात्कृष्णमनुस्मरन्ति ॥ २३ ॥ ततस्त्वतिव्रज्य सुराष्ट्रमृद्धं सौवीरमत्स्यान्कुरुजाङ्गलांश्च ॥ कालेन तावद्यमुनामुपेत्य तत्रोद्धवं भागवतं ददर्श ॥ २४ ॥

सुहृदां नाशं श्रुत्वा शोचन् सरस्वतीं ययौ ॥ २१ ॥ ततस्तस्यास्तीरे त्रितस्योशनसो मनोः पृथोरग्नेर्वायोरसितस्य सुदासस्य गवां गुहस्य श्राद्धदेवस्य च तीर्थानि क्रमेण सेवितवान् ॥ २२ ॥ अन्यानि च ऋषिभिर्देवैश्च कृतानि विष्णोर्मन्दिराणि सिषेवे येषां दर्शनात् श्रीकृष्णस्मरणं भवति ॥ २३ ॥ ततः सुराष्ट्रसौवीरकुरुमत्स्यादिदेशान् गत्वा कालेन यमुनां प्राप्य तत्र भागवतमुद्धवं ददर्श ॥ २४ ॥

१ तीर्थौ पादौ यस्य तस्य । २ अधिष्ठाय स्थितः । ३ पवित्रासंकीर्णजीविकः शुद्धैकान्तवर्त्तनो वा । ४ असंस्कृतदेहः । ५ चक्रं सैन्यम् । ६ उदगमाभिमुखम् । ७ प्रत्यङ्गान्यायुधानि तेषु मुख्येन चक्रेण चिह्नितानि ।

तदा वासुदेवानुचरमुद्धवमालिङ्ग्य स्वज्ञातीनां कुशलं पप्रच्छ ॥ २५ ॥ हे उद्धव । ब्रह्मप्रार्थनयाऽवतीर्णौ रामकृष्णौ पृथ्व्याः कुशलं विधाय शूरसेनगेहे कुशलौ किम् ॥ २६ ॥ अस्माकं पूज्यो वसुदेवः सुखी किं यौ भगिनीनां पितृवद् धनं ददाति ॥ २७ ॥ यदूनां सेनापतिः प्रद्युम्नः सुखी किम् ॥ २८ ॥ सात्वतवृष्णिभोजादीनां पतिरुग्रसेनः सुखी कच्चित् । यं श्रीकृष्णो राज्येऽभ्यषिञ्चत् ॥ २९ ॥ हे सौम्य ! हरेः सदृशः

स वासुदेवानुचरं प्रशान्तं बृहस्पतेः प्राक्तनयं प्रतीतम् ॥ आलिङ्ग्य गाढं प्रणयेन भद्रं स्वानामपृच्छद्भगवत्प्रजानाम्
॥ २५ ॥ कच्चित्पुराणौ पुरुषौ स्वनाभ्यपाद्मानुवृत्त्येह किलावतीर्णौ ॥ आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं
शूरगेहे ॥२६॥ कच्चित्कुरूणां परमः सुहृन्नो भामः सः आस्ते सुखमङ्ग शौरिः ॥ यो वै स्वसॄणां पितृवद्ददाति वरा-
न्वदान्यो वरतर्पणेन ॥ २७ ॥ कच्चिद्वरूथाधिपतिर्यदूनां प्रद्युम्न आस्ते सुखमङ्ग वीरः ॥ यं रुक्मिणी भगवतो-
ऽभिलेभे आराध्य विप्रान्स्मरमादिसर्गे ॥ २८ ॥ कच्चित्सुखं सात्वतवृष्णिभोजदाशार्हकाणामधिपः स आस्ते ॥
यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाशां परिहृत्य दूरात् ॥ २९ ॥ कच्चिद्धरेः सौम्य सुतः सदृक्ष आस्तेऽग्रणी रथिनां
साधु साम्बः ॥ असूत यं जाम्बवती व्रताढ्या देवं गुहं योऽम्बिकया धृतोऽग्रे ॥३०॥ क्षेमं स कच्चिद्युयुधान आस्ते
यः फाल्गुनाल्लब्धधनूरहस्यः ॥ लेभेऽञ्जसाधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ॥३१॥ कच्चिद् बुधः स्वस्त्य-
नमीव आस्ते श्वफल्कपुत्रो भगवत्प्रपन्नः ॥ यः कृष्णपादाङ्कितमार्गपांसुष्वचेष्टत प्रेमविभिन्नधैर्यः ॥३२॥ कच्चिच्छिवं
देवकभोज्यपुत्र्या विष्णुप्रजाया इव देवमातुः ॥ या वै स्वगर्भेण दधार देवं त्रयी यथा यज्ञवितानमर्थम् ॥ ३३ ॥



साम्बः सुखी किम् ॥ ३० ॥ सात्यकिः सुखी किं यः श्रीकृष्णसेवयैव तदीयां गतिं लेभे ॥३१॥ यः कृष्णपादाङ्कित मार्गपांसुषु व्यलुठत् सोऽक्रूरः क्षेमी किम् ॥ ३२ ॥ देवक्याः शिवं कच्चित् या स्वगर्भे देवं दधार ॥ ३३ ॥

---

१ पूर्वशिष्यम् । २ प्रख्यातम् । ३ नाम्यो नाभिजातः । ४ सर्वेषां दत्तोत्सवौ । ५ पूज्य । ६ पतीन तर्पणेन सह । ७ पूर्वजन्मनि मारं सन्तमित्यर्थः । ८ स्थितमिति शेषः ; ९ पूर्वजन्मनि । १० अनमीवो निष्पापः । ११ देवकनामा भोजः । १२ विष्णुपुत्र्याः । १३ यज्ञवितानरूपमभिधेयम् ।

सात्वतां कामपूरोऽनिरुद्धः सुखी किं वेदाः यं शास्त्रस्य कारणं वदन्ति॥३४॥हे सौम्य ! अन्ये च हृदीकचारुदेष्णगदादयः स्वस्ति विचरन्ति किम् ॥३५॥अथ कुरूणां कुशलं पृच्छति । हे उद्धव ! युधिष्ठिरो धर्मेण धर्ममर्यादां परिरक्षति किं यत्सभायां साम्राज्यलक्ष्म्या दुर्योधनोऽतप्यत॥३६॥ अहो अहिवदत्यमर्षी भीमः कृतापराधेषु रोषं किं व्यमुञ्चत् नो वा ।यस्य पादपातं रणभूर्न सेहे॥३७॥रथयूथपानां मध्ये कीर्तिधारी पार्थः समाप्ता-

अपिस्विदास्ते भगवान्सुखं वो यः सात्वतां कामदुघोऽनिरुद्धः ॥ यमामनन्ति स्म ह शब्दयोनिं मनोमयं सत्त्वतुरीयतत्त्वम् ॥ ३४ ॥ अपिस्विदन्ये च निजात्मदैवमनन्यवृत्त्या समनुव्रता ये ॥ हृदीकसत्यात्मजचारुदेष्णगदादयः स्वस्ति चरन्ति सौम्य ॥ ३५ ॥ अपि स्वदोर्भ्यां विजयाच्युताभ्यां धर्मेण धर्मः परिपाति सेतुम् ॥ दुर्योधनोऽतप्यत यत्सभायां साम्राज्यलक्ष्म्या विजयानुवृत्त्या ॥ ३६ ॥ किंवा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुञ्चत् ॥ यस्याङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ३७ ॥ कच्चिद्यशोधा रथयूथपानां गाण्डीवधन्वोपरतारिरास्ते ॥ अलक्षितो यच्छरकूटगूढो मायाकिरातो गिरिशस्तुतोष ॥ ३८ ॥ यमावुतस्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव ॥ रेमात उद्दाय मृधे स्वरिक्थं परात्सुपर्णाविव वज्रिवक्त्रात् ॥ ३९ ॥ अहो पृथाऽपि ध्रियतेऽर्भकार्थे राजर्षिवर्येण विनाऽपि तेन॥ यस्त्वेकवीरोऽधिरथो विजिग्ये धनुर्द्वितीयः ककुभश्चतस्रः ॥ ४० ॥ सौम्यानुशोचे तमधः पतन्तं भ्रात्रे परेताय विदुद्रुहे यः ॥ निर्यापितो येन सुहृत्स्वपुर्या अहं स्वपुत्रान्समनुव्रतेन॥४१॥ सोऽहं हरेर्मर्त्यविडम्बनेन दृशो नृणां चालयतो विधातुः ॥ नान्योपलक्ष्यः पदवीं प्रसादाच्चरामि पश्यन्गतविस्मयोऽत्र ॥४२॥

रिः सुखी कच्चित्॥३८॥किंच नकुलसहदेवौ युद्धे दुर्योधनात् स्वराज्यं समाच्छिद्य क्रीडेते किंस्वित् ॥३९॥ अहो पृथाऽपि पाण्डुना विना पुत्रार्थं जीवतीत्याश्चर्यम्॥४०॥हे सौम्य! अधःपतन्तं धृतराष्ट्रं शोचे यो मृतबन्धोः पाण्डोर्द्रोहं कृतवान् येनाहं पुर्या निष्कासितः॥४१॥सोहं हरेः प्रसा-

१ मनसः प्रवर्तकम् । २ अन्तःकरणचतुर्थभेदस्य मनसोऽधिष्ठातारम् । ३ निजमात्मानं देवं च श्रीकृष्णमित्यर्थः । ४ स्व बाहुवद्वर्तमाना याम् । ५ विजयस्य परंपरा यस्यां तया । ६ कीर्तिधारी । ७ रक्षितौ । ८ आक्षिप्य । ९ गरुडपक्षेऽमृतम् । १० अनुकरणेन । ११ चित्तवृत्तीः । १२ भ्रमयतः ।

दात् तन्माहात्म्यं पश्यन् भूतले गूढः सन् चरामि ॥४२॥ नूनं कृष्णः उन्मत्तराजानां वधाय भूमेर्भारहरणार्थं च कुरूणामपराधान् सेहे ॥४३॥ किंच अजस्य जन्म दुष्टनाशाय, अकर्तुः कर्माणि पुंसां कर्मसु प्रवृत्तये, अन्यथा न ॥ ४४ ॥ अतो हे सखे ! तीर्थकीर्तेर्भगवतो वार्तां कथय ॥४५॥ इति श्रीभागवते महापुराणे चूर्णिकायां तृतीयस्कन्धे प्रथमोऽध्यायः ॥१॥ द्वितीये कृष्णविश्लेषादनुशोचन्नथोद्धवः ॥ क्षत्रे बालचरित्राणि कृष्णस्यावर्णयत् श्वसन् ॥१॥ श्रीशुक उवाच । इत्थं विदुरेण पृष्टः उद्धवः कृष्णाश्रयां वार्तां प्रतिवक्तुं न चोत्सेहे ॥१॥ कुतो यः पञ्चवर्षात्मको

नूनं नृपाणां त्रिमदोत्पथानां महीं मुहुश्चालयतां च भूमिः ॥ वधात्प्रपन्नार्तिजिहीर्षयेशो व्युपेक्षताघं भगवान्कुरूणाम् ॥ ४३ ॥ अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् ॥ नन्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम् ॥ ४४ ॥ तस्य प्रपन्नाखिललोकपानामवस्थितानामनुशासने स्वे ॥ अर्थाय जातस्य यदुष्वजस्य वार्तां सखे कीर्तय तीर्थकीर्तेः ॥ ४५ ॥ इति श्रीभागवते महापुराणे तृतीयस्कन्धे विदुरोद्धवसंवादे प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ इति भागवतः पृष्टः क्षत्त्रा वार्तां प्रियाश्रयाम् ॥ प्रतिवक्तुं न चोत्सेहे औत्कण्ठ्यात्स्मारितेश्वरः ॥ १ ॥ यः पञ्चहायनो मात्रा प्रातराशाय याचितः ॥ तन्नैच्छद्रचयन्यस्य सपर्यां बाललीलया ॥ २ ॥ स कथं सेवया तस्य कालेन जरसं गतः ॥ पृष्टो वार्तां प्रतिब्रूयाद्भर्तुः पादावनुस्मरन् ॥ ३ ॥ स मुहूर्तमभूत्तूष्णीं कृष्णाङ्घ्रिसुधया भृशम् ॥ तीव्रेण भक्तियोगेन निमग्नः साधुनिर्वृतः ॥ ४ ॥ पुलकोद्भिन्नसर्वाङ्गो मुञ्चन्मीलद्दृशा शुचः ॥ पूर्णार्थो लक्षितस्तेन स्नेहप्रसरसंप्लुतः ॥ ५ ॥ शनकैर्भगवल्लोकान्नृलोकं पुनरागतः ॥ विमृज्य नेत्रे विदुरं प्रत्याहोद्धव उत्स्मयन् ॥ ६ ॥

मात्रा प्रातर्भोजनायाहूतः सन् बालक्रीडया कृष्णस्य सपर्यां रचयन् भोजनमपि नैच्छत् ॥ २ ॥ स तस्य सेवया वृद्धत्वं प्राप्तः सन् प्रभोः पादौ स्मरन् श्रीकृष्णवार्तां कथं ब्रूयात् ॥ ३ ॥ स भक्तियोगे निमग्नो मुहूर्तं तूष्णीं बभूव ॥ ४ ॥ रोमाञ्चितो मीलितदृशा प्रेमाश्रूणि मुञ्चन् विदुरेण कृतार्थो लक्षितः ॥ ५ ॥ ततः शनैर्भगवद्ध्यानाद् देहानुसंधानं प्राप्तः सन् नेत्रे विमृज्य विदुरं प्राह ॥ ६ ॥

१ विद्याधनाभिजनानां क्रमेण त्रयो भेदाः उत्पथाः उन्मार्गगाः। २ गुणातीतः । ३ कर्मविस्तारम् । ४ शरणमागताः ।

उद्धव उवाच ॥ कृष्णद्युमणौ स्वधाम गते सति कालसर्पेण गिलितानां बन्धूनां कुशलं किंनु ब्रूयाम् ॥७॥ अयं लोको दुर्भगः यादवास्तु नितरां दुर्भगाः ये कृष्णेन सह वसन्तोऽपि तमीश्वरं न विदुः ॥ ८ ॥ चित्तस्थं जानन्तोऽपि यादवा अस्मासु श्रेष्ठ इति कृष्णं मेनिरे ॥ ९ ॥ किंच ये यादवाःदेवमायया व्याप्तास्तेऽयमस्मद्बन्धुरिति वदन्ति ! शिशुपालादयो वैरं कृत्वा निन्दन्ति ॥१०॥ यो नृणां स्वबिम्बं दर्शयित्वाऽन्तरधात्

उद्धव उवाच ॥ कृष्णद्युमणिनिम्लोचे गीर्णेष्वजगरेण ह ॥ किं नु नः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम् ॥ ७ ॥ दुर्भगो बत लोकोऽयं यदवो नितरामपि ॥ ये संवसन्तो न विदुर्हरिं मीना इवोडुपम् ॥ ८ ॥ इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्त्वताः ॥ सात्त्वतामृषभं सर्वे भूतावासममंसत ॥ ९ ॥ देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः ॥ भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ ॥ १० ॥ प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ॥ आदायान्तरधाद्यस्तु स्वबिम्बं लोक-लोचनम् ॥ ११ ॥ यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् ॥ विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥ १२ ॥ यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ॥ कार्त्स्न्येन चाद्येह गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥ यस्यानुरागप्लुतहासरासलीलावलोकप्रतिलब्धमानाः ॥ व्रजस्त्रियो दृग्भिरनुप्रवृत्तधियोऽवतस्थुः किल कृत्यशेषाः ॥ १४ ॥ स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ॥ परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाऽग्निः ॥ १५ ॥

॥११॥ यत् बिम्बं मर्त्यलीलासु योग्यं स्वस्यापि विस्मयजनकं बभूव ॥१२॥ धर्मसूनोः राजसूये त्रिलोकी यं निरीक्ष्य ब्रह्मणः कौशलं महदिति मेने॥१३॥यस्यानुरागहासविनोदलीलावलोकनैः प्राप्तमानाःव्रजस्त्रियोऽसमापितकृत्या एव यस्यावलोकने तस्थुः॥१४॥ बिम्बदर्शने कारणमाह।

१ अस्तमये । २ 'पुनः' इ० पा० । ३ चन्द्रममृतमयत्वेन क्षीरसमुद्रं प्रतिविम्बितं वा । ४ अतिशयेन प्रौढाः । ५ एकाग्रचित्ताः । ६ भूताश्रयम् । ७ विक्षिप्तचित्तस्य । ८ लोकलोचनमाच्छिद्य तादृशस्यान्यस्या-
भावात् । ९ पराकाष्ठा । १० भूषणानां शोभाप्रदान्यङ्गानि यत्र तत् । ११ परमानन्दकरम् । १२ अर्वाचीनसंसारसृष्टौ । १३ दृग्भिः सह तमनुगताः धियो यासां ताः । १४ महत्तत्व कायलेशो यस्य तेनाव्यक्तेन
युक्तः । १५ काष्ठादिष्वित्यर्थः ।

देवादिशान्तरूपेषु दैत्यादिदुष्टरूपैः पीड्यमानेषु सत्सु परमकारुणिको भगवान् जन्मना रहितोऽपि प्रादुर्भवति ॥ १५ ॥ किंच यत् वसुदेवगृहेऽजस्य जन्म अनन्तवीर्योऽपि च शत्रुभयात् व्रजं पलाययामास तत् मां खेदयति ॥१६॥ यः पित्रोः पादौ अभिवन्द्य, हे तात ! हे अम्ब ! शुश्रूषामकुर्वाणानामपि नः प्रसीदतमिति यदाह तत् स्मरतो मे चेतो व्यथयति॥१७॥तस्य कृष्णस्य चरणारविन्दरेणुं विस्मर्तुं कः समर्थो भवेत् ॥१८॥ किंच राजसूये कृष्णं द्विषतोऽपि शिशुपालस्य सिद्धिर्भवद्भिर्दृष्टा । तद्वियोगं कः सहेत ॥१९॥ तथैव वीरा युद्धे कृष्णमुखारविन्दं नेत्रैः

मां खेदयत्येतदजस्य जन्मविडम्बनं यद्वसुदेवगेहे ॥ व्रजे च वासोऽरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनन्तवीर्यः ॥१६॥ दुनोति चेतः स्मरतो ममैतद्यदाह पादावभिवन्द्य पित्रोः ॥ तताम्ब कंसादुरुशङ्कितानां प्रसीदतं नोऽकृतनिष्कृतीनाम् ॥ १७ ॥ को वा अमुष्याङ्घ्रिसरोजरेणुं विस्मर्तुमीशीत पुमान्विजिघ्रन् ॥ यो विस्फुरद्भ्रूविटपेन भूमेर्भारं कृतान्तेन तिरश्चकार ॥ १८ ॥ दृष्टा भवद्भिर्ननु राजसूये चैद्यस्य कृष्णं द्विषतोऽपि सिद्धिः ॥ यां योगिनः संस्पृहयन्ति सम्यग्योगेन कस्तद्विरहं सहेत ॥ १९ ॥ तथैव चान्ये नरलोकवीरा य आहवे कृष्णमुखारविन्दम् ॥ नेत्रैः पिबन्तो नयनाभिरामं पार्थास्त्रपूताः पदमापुरस्य ॥ २० ॥ स्वयं त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याऽऽप्तसमस्तकामः ॥ बलिं हरद्भिश्चिरलोकपालैः किरीटकोट्येडितपादपीठः ॥ २१ ॥ तत्तस्य कैङ्कर्यमलं भृतान्नो विग्लापयत्यङ्ग यदुग्रसेनम् ॥ तिष्ठन्निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव निधारयेति ॥ २२ ॥ अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी ॥ लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम ॥ २३ ॥

पिबन्तोऽर्जुनास्त्रेण पूताः सन्तोऽस्य पदं प्रापुः ॥२०॥ यमपेक्ष्यान्यस्य साम्यमतिशयश्च नास्ति स त्रिलोकानामीशः ॥२१॥ तस्य किंकरत्वं नो विग्लापयति यो राज्यासने स्थितमुग्रसेनं स्वयमग्रे तिष्ठन्, हे देव ! नः आज्ञां कुर्विति विज्ञापितवान् ॥२२॥ अहो इयं पूतना यं जिघांसया स्तनयोः संभृतं विषं पाययामास । सा धात्र्युचितां गतिं लेभे । एतादृशं दयालुं त्यक्त्वाऽकं शरणं व्रजेम ॥ २३ ॥

१ लतया । २ कृतान्तरूपेण । ३ भगवति सायुज्यम् । ४ त्रिगुणाधीशः ।

अहमसुरान् भागवतान् मन्ये ये युद्धे गरुडारूढं चक्रायुधं हरिं पश्यन्तो देहं जहुः ॥ २४ ॥ यो ब्रह्मणा प्रार्थितः सन् भूमेर्भारहरणाय वसुदेवस्य देवक्यां जातः॥२५॥ततः कंसाद् बिभ्यता वसुदेवेन नन्दव्रजं नीतः । तत्र सबलः एकादश समाः अवसत् ॥२६॥ तत्र यमुनोपवने वत्सांश्चारयन् चिक्रीड ॥ २७ ॥ क्वचित् रुदन्निव हसन्निव व्रजौकसां प्रेक्षणीयां कौमारीं चेष्टां दर्शयामास ॥ २८ ॥ स एवाधिकं वयः प्राप्तः सन् गोधनं

मन्येऽसुरान्भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ॥ ये संयुगेऽचक्षत तार्क्ष्यपुत्रमंसे[1]सुनाभायुधमापतन्तम् ॥ ॥ २४ ॥ वसुदेवस्य देवक्यां जातो भोजेन्द्रबन्धने[2] ॥ चिकीर्षुर्भगवानस्याः शमजेनाभियाचितः ॥ २५ ॥ ततो नन्दव्रजमितः पित्रा कंसाद्धि[3] बिभ्यता ॥ एकादश समास्तत्र गूढार्चिः[4] सबलोऽवसत् ॥ २६ ॥ परीतो वत्सपैर्वत्सांश्चारयन् व्याहरद्विभुः ॥ यमुनोपवने कूजद्द्विजसंकुलिताङ्घ्रिपे ॥ २७ ॥ कौमारीं दर्शयंश्चेष्टां प्रेक्षणीयां व्रजौकसाम् ॥ रुदन्निव हसन्मुग्धबालसिंहावलोकनः[5] ॥ २८ ॥ स एव गोधनं लक्ष्म्या निकेतं सितगोवृषम् ॥ चारयन्ननुगान्गोपान्रणद्वेणुररीरमत् ॥ २९ ॥ प्रयुक्तान्भोजराजेन मायिनः कामरूपिणः ॥ लीलया व्यनुदत्तांस्तान्बालः क्रीडनकानिव[6] ॥ ३० ॥ विपन्नान्विषपानेन निगृह्य भुजगाधिपम् ॥ उत्थाप्यापाययद्गा[7]वस्तत्तोयं प्रकृतिस्थितम्[8] ॥ ३१ ॥ अयाजयद्गोसवेन[9] गोपराजं द्विजोत्तमैः ॥ वित्तस्य चोरुभारस्य चिकीर्षन्सद्व्ययं[10] विभुः ॥ ३२ ॥ वर्षतीन्द्रे व्रजः कोपाद्भग्नमानेऽतिविह्वलः ॥ गोत्रलीलातपत्रेण[11] त्रातो भद्रानुगृह्णता ॥ ३३ ॥

चारयन् वेणुशब्दं कुर्वन् गोपान् रमयामास ॥ २९ ॥ किं च कंसेन प्रेरितान् दैत्यान् लीलया जघान ॥ ३० ॥ कालियं दमयित्वा विषजलपानेन मृतान् गोपान् जीवयामास ॥ ३१ ॥ इन्द्रस्य मानभङ्गं कुर्वन् गोवर्धनोत्सवं कारयामास ॥ ३२ ॥ कोपादिन्द्रे वर्षति सति गोवर्धनोद्धारणं कृत्वा गोपादीन् संरक्षितवान् ॥ ३३ ॥

---

१ अंसे आपतन् प्राप्तः सुनाभायुधः सुदर्शनायुधो हरिः यस्य तमिति अलुक्समासोऽयम् । २ कंसस्य बन्धनागारे । ३ हेतुभूतेन । ४ गूढतेजाः । ५ सिंहवदवलोकनं यस्य सः । ६ तृणादि निर्मितान्सिंहादीन्यथा । ७ गाः । ८ निर्विषम् । ९ गोपूजया । १० नन्दम् । ११ गोत्र एव लीलातपत्रं तेन ।

शरदि चन्द्रकिरणैः प्रकाशितायां रात्र्यां स्त्रीमंडलं रमयन् रेमे ॥३४॥ इति श्रीभागवते चूर्णिकायां तृतीयस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ तृतीये मथुरामेत्य व्रजात् कंसवधादिकम् । यत् कृतं द्वारकायां च कृष्णेन तदवर्णयत् ॥ १ ॥ उद्धव उवाच । ततो वसुदेवदेवक्योः शिवाचिकीर्षया बलदेवसंयुतो मथुरां गत्वा कंसराजं मञ्चात् पृथिव्यां निपात्य व्यकर्षयत् ॥१॥ ततोऽवन्तिकायां सान्दीपनिना प्रोक्तं वेदमधीत्य तस्मै मृतंपुत्रं प्रादात् ॥ २ ॥ ततः सर्वेषां पश्यतां गान्धर्वविधिना रुक्मिणीं परिणीतवान् ॥ ३ ॥ ततोऽविद्धनासिकान् सप्त वृषान्दमयित्वा नाग्नजितीमुप-

शरच्छशिकरैर्मृष्टं मानयन्रजनीमुखम् ॥ गायन्कलपदं रेमे स्त्रीणां मण्डलमण्डनः ॥ ३४ ॥ इति श्रीभा० म० तृतीय० द्वितीयोऽध्यायः ॥ २ ॥ उद्धव उवाच ॥ ततः स आगत्य पुरं स्वपित्रोश्चिकीर्षया शं बलदेवसंयुतः ॥ निपात्य तुङ्गा-द्रिपुंयूथनाथं हतं व्यकर्षद्व्यसुमोजसोर्व्याम् ॥ १ ॥ सान्दीपनेः सकृत् प्रोक्तं ब्रह्माधीत्य सविस्तरम् ॥ तस्मै प्रादाद्वरं पुत्रं मृतं पञ्चजनोदरात् ॥ २ ॥ समाहुता भीष्मककन्यया ये श्रियः सवर्णेन बुभूषयैषाम् ॥ गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्सुपर्णः ॥ ३ ॥ ककुद्मतोऽविद्धनसो दमित्वा स्वयंवरे नाग्नजितीमुवाह ॥ तद्भग्नमानानपि गृध्यतोऽज्ञाञ्जघ्नेऽक्षतः शस्त्रभृतः स्वशस्त्रैः ॥ ४ ॥ प्रियं प्रभुर्ग्राम्य इव प्रियाया विधित्सुरार्च्छद् द्युतरुं यदर्थे ॥ वज्र्याद्रवत्तं सगणो रुषाऽन्धः क्रीडामृगो नूनमयं वधूनाम् ॥ ५ ॥ सुतं मृधे स्वं वपुषा ग्रसन्तं दृष्ट्वा सुनाभोन्मथितं धरित्र्या ॥ आमन्त्रितस्तत्तनयाय शेषं दत्त्वा तदन्तः पुरमाविवेश ॥ ६ ॥ तत्राहृतास्ता नरदेवकन्याः कुजेन दृष्ट्वा हरिमार्तबन्धुम् ॥ उत्थाय सद्यो जगृहुः प्रहर्षव्रीडानुरागप्रहितावलोकैः ॥ ॥ ७ ॥ आसां मुहूर्त एकस्मिन्नाना-गारेषु योषिताम् ॥ सविधं जगृहे पाणीननुरूपः स्वमायया ॥ ८ ॥

येमे ॥ ४ ॥ सत्यभामायाः प्रियार्थमिन्द्रं जित्वा पारिजातमानिनाय ॥ ५ ॥ धरित्र्या प्रार्थितः सन् युद्धे भौमं हत्वा तत्पुत्राय हृतशेषं राज्यं दत्त्वा तस्यान्तर्गृहं विवेश ॥ ६ ॥ तत्र भौमेनानीताः नरदेवकन्याः हरिं वव्रुः ॥७॥ भगवान् कृष्ण एकस्मिन् मुहूर्ते आसां पाणीन् जगृहे ॥८॥

१ रिपुयूथानां नाथं कंसम् । २ पञ्चजनाख्यशंखोदरविदारणद्वारा । ३ समानेन रूपेण । ४ गुपतनः । ५ अयमिन्द्रः । ६ 'वपुषा महान्तम्' इ० पा० । ७ सुनाभं चक्रम् । ८ यथाविधि ।

एकैकस्यां दश दश पुत्रान् जनयामास॥९॥कालयवनमागधशाल्वादीन् मुचुकुंदभीमादिनिमित्तमात्रैः स्वयमेव हतवान्॥१०॥शम्बरद्विविदबाण-मुरदन्तवक्रादीन् हतवान् कांश्च नान्यैरघातयत्॥११॥अथ कुरुक्षेत्रे कौरवपाण्डवानां सैन्यैर्भूश्चकम्पे। तत्र भग्नोरुं दुर्योधनं धरण्यां पतितं पश्यन्नपि कृष्णः संतोषं न प्राप ॥ १२ ॥१३॥ यतो भीष्मभीमादिभिर्नाशितोऽष्टादशाक्षौहिणीको भूभारः कियान् कुतः यदूनां बलं दुर्विषहं यतोऽस्ति

तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः ॥ एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥ ९ ॥ कालमागधशाल्वादीननेकैः रुन्धतः पुरम् ॥ अजीघनत्स्वयं दिव्यं स्वपुंसां तेज आदिशत् ॥ १० ॥ शम्बरं द्विविदं बाणं मुरं बल्वलमेव च ॥ अन्यांश्च दन्तवक्त्रादीनवधीत्कांश्च घातयत् ॥ ११ ॥ अथ ते भ्रातृपुत्राणां पक्षयोः पतितान्नृपान् ॥ चचाल भूः कुरुक्षेत्रं येषामापततां बलैः ॥ १२ ॥ स कर्णदुःशासनसौबलानां कुमन्त्रपाकेन हतश्रियायुषम् ॥ सुयोधनं सानुचरं शयानं भग्नोरुमूर्व्यां न ननन्द पश्यन्॥१३॥कियान्भुवोऽयं क्षपितोरुभारो यद्द्रोणभीष्मार्जुनभीममूलैः ॥ अष्टादशाक्षौहिणिको मदंशैरास्ते बलं दुर्विषहं यदूनाम् ॥ १४ ॥ मिथो यदैषां भविता विवादो मध्वामदाताम्रविलोचनानाम् ॥ नैषां वधोपाय इयानतोऽन्यो मय्युद्यतेऽन्तर्दधते स्वयं स्म ॥१५॥ एवं संचिन्त्य भगवान्स्वराज्ये स्थाप्य धर्मजम् ॥ नन्दयामास सुहृदः साधूनां वर्त्म दर्शयन् ॥ १६ ॥ उत्तरायां धृतः पूरोर्वंशः साध्वभिमन्युना ॥ स वै द्रौण्यस्त्रसंछिन्नः पुनर्भगवता धृतः ॥ १७॥ अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ॥ सोऽपि क्ष्मामनुजै रक्षन्रेमे कृष्णमनुव्रतः ॥ १८ ॥ भगवानपि विश्वात्मा लोकवेदपथानुगः ॥ कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमास्थितः ॥ १९ ॥

॥१४॥ यदा एषां मिथो विवादो भविष्यति तदेयानेवैषां वधोपायः अन्यथा न ॥१५॥ एवं संचिन्त्य युधिष्ठिरं राज्ये संस्थाप्य सुहृदो नन्दयामास॥१६॥ब्रह्मास्त्रेण दग्धं पूरोर्वंशं रक्षित्वा॥१७॥धर्मं त्रिभिरश्वमेधैरयाजयत्॥१८॥भगवानपि द्वारकायामसक्तः सन् कामान् सिषेवे॥१९॥

१ मायाविस्तारेच्छया । २ दत्तवान् । ३ नृपाणाम् । ४ प्रद्युम्नादिभिः । ५ संहारायेत्यर्थः । ६ नश्येयुः । ७ रक्षितः । ८ प्रकृतिपुरुषविवेकम् ।

किंच स्निग्धहास्यावलोकनेन सुधातुल्यया वाण्या शुद्धचरितेन च यदून् नितरां रमयन् स्वयं रेमे ॥२०॥ २१ ॥ ततो बहून् संवत्सरगणान् रममाणः कृष्णो गृहेषु वैराग्यं चकार ॥ २२ ॥ दैवाधीनेषु कामेषु स्वयं दैवाधीनः पुमान् को विश्वासं कुर्यात् ॥ २३ ॥ कदाचित् पुर्यां क्रीडद्भिर्यदुकुमारकैः कोपिताः मुनयो भगवन्मतं जानन्तः शापं ददुः ॥ २४ ॥ ततः कतिपयैर्मासैर्यदुभोजाद्याः शापमुक्तये प्रभासं ययुः ॥ २५ ॥ तत्र स्नात्वा देवऋषिपितॄंस्तर्पयित्वा ब्राह्मणेभ्यो गां हिरण्यं रजतं शय्यां वासांसि कम्बलान् रथाश्वगजान् कन्याः पृथ्वीं

स्निग्धस्मितावलोकेन वाचा पीयूषकल्पया ॥ चरित्रेणानवद्येन श्रीनिकेतेन चात्मना ॥ २० ॥ इमं लोकममुं चैव रमयन् सुतरां यदून् ॥ रेमे क्षणदया दत्तक्षणस्त्रीक्षणसौहृदः ॥ २१ ॥ तस्यैवं रममाणस्य संवत्सरगणान्बहून् ॥ गृहमेधेषु योगेषु विरागः समजायत ॥ २२ ॥ दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् ॥ को विस्रम्भेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥ पुर्यां कदाचित् क्रीडद्भिर्यदुभोजकुमारकैः ॥ कोपिता मुनयः शेपुर्भगवन्मतकोविदाः ॥ २४ ॥ ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः ॥ ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥ २५ ॥ तत्र स्नात्वा पितॄन्देवानृषींश्चैव तदम्भसा ॥ तर्पयित्वाऽथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥ हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् ॥ यानं रथानिभान्कन्या धरां वृत्तिंकरीमपि ॥ २७ ॥ अन्नं चोरुरसं तेभ्यो दत्त्वा भगवदर्पणम् ॥ गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्द्धभिः ॥ २८ ॥ इति श्रीभागवते म० तृतीय० तृतीयोऽध्यायः ॥ ३ ॥ उद्धव उवाच ॥ अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् ॥ तया विभ्रंशितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥



चतुर्विधमन्नं च दत्त्वा मूर्धभिः प्रणेमुः ॥ २६ ॥ २७ ॥ २८ ॥ इति श्रीभागवते महापुराणे चूर्णिकायां तृती० तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे बन्धुनिधनं श्रुत्वाऽऽत्मज्ञानलब्धये । उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागमत् ॥ १ ॥ उद्धव उवाच । अथ ब्राह्मणैरनुज्ञातास्ते यादवाः भुक्त्वा मदिरां पीत्वा मदिरया विभ्रंशितधियोऽन्यं दुरत्ययं मर्मभाषणं चक्रुः ॥ १ ॥

१ देहेन । २ स्वर्वासिनोदेवान् । ३ रात्र्या । ४ क्षण उत्सवः । ५ क्षणपरिमितम् । ६ धर्मेषु । ७ कामभोगोपायेषु । ८ श्रीकृष्णम् । ९ जीविकापर्याप्ताम् ।

तदा मदिरादोषेण विषमीकृतचेतसां तेषां रवावस्तं गते सति वेणूनामिव मर्दनमासीत् ॥२॥ भगवान् स्वमायाया गतिं वीक्ष्य सरस्वत्यामाचम्याश्वत्थमूल उपाविशत् ॥३॥ मां तु द्वारकायामेव पूर्वमुक्तवान्, हे उद्धव ! त्वं बदरीं प्रयाहि ॥४॥ एवमुक्तोऽपि तदभिप्रायं जानन् तत्पृष्ठतोऽन्वगमम् ॥ ५ ॥ सरस्वत्यामासीनं श्यामरूपमरुणलोचनं चतुर्भुजं पीताम्बरधरं वामे ऊरौ कृतदक्षिणाङ्घ्रिं पृष्ठतः कोमलाश्वत्थमवष्टभ्य स्थितं कृष्णमद्राक्षम् ॥ ६ ॥ ७ ॥ ८ ॥ तदैव भगवान् मैत्रेयो यदृच्छया तत्रैवागमत् ॥ ९ ॥ तदा मुकुन्दः प्रेमासक्तस्य मैत्रेयस्य शृण्वतो मां गतश्रमं कुर्वन्नुवाच ॥१०॥ श्रीभगवानुवाच ॥ हे उद्धव ! तव मनसि यदीप्सितं तद् वेद्मि यदन्यैर्दुरवापं तद् ददामि ॥११॥

तेषां मैरेयदोषेण विषमीकृतचेतसाम् ॥ निम्लोचति रवावासीद्वेणूनामिव मर्दनम् ॥ २ ॥ भगवान् स्वात्ममायाया गतिं तामवलोक्य सः ॥ सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥ ३ ॥ अहं प्रोक्तो भगवता प्रपन्नार्तिहरेण ह ॥ बदरीं त्वं प्रयाहीति स्वकुलं संजिहीर्षुणा ॥ ४ ॥ अथापि तदभिप्रेतं जानन्नहमरिन्दम ॥ पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ॥ ५ ॥ अद्राक्षमेकमासीनं विचिन्वन्दयितं पतिम् ॥ श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥ ६ ॥ श्यामावदातं विरजं प्रशान्तारुणलोचनम् ॥ दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥ वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम् ॥ अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥ तस्मिन्महाभागवतो द्वैपायनसुहृत्सखः ॥ लोकाननुचरन्सिद्ध आससाद यदृच्छया ॥ ९ ॥ तस्यानुरक्तस्य मुनेर्मुकुन्दः प्रमोदभावानतकन्धरस्य ॥ आशृण्वतो मामनुरागहाससमीक्षया विश्रमयन्नुवाच ॥ १० ॥ श्रीभगवानुवाच ॥ वेदाहमन्तर्मनसीप्सितं ते ददामि यत्तद्दुरवापमन्यैः ॥ सत्रे पुरा विश्वसृजां वसूनां मत्सिद्धिकामेन वसो त्वयेष्टः ॥ ११ ॥

१ कृतवासम् । २ अनाश्रयम् । ३ शुद्धसत्त्वमयम् । ४ लक्षितम् । ५ पृष्ठतोऽवष्टब्धो बालोऽश्वत्थो येन तम् । ६ विषयसुखम् । ७ द्वैपायनः सुहृत्सखा च यस्य । यद्यपि सुहृत्सख इति पाठो बहु पुस्तकेष्वस्ति तथापि बहुव्रीहौ टचोऽसंभवादयुक्त इव प्रतिभाति । दृष्टश्च प्राचीनतमटीकासु सुहृत्सखेतिपाठः । आर्षत्वाश्रयणे टचोपि न दुर्लभत्वमिति टजंतोपि श्रेयान् सिद्धो योगसिद्धः लोकान्भूरादिकान् यदृच्छया केनापि भाग्ययोगेन "यदृच्छा निर्निमित्ते स्याद्भाग्ययोगेऽपिचेष्यते 'इति श्रीधरीभावार्थदीपिकाप्रकाशवंशीधरीटीकायाम् ॥' ८ विगतश्रमं कुर्वन् । ९ पूर्वजन्मनि वसुभूतत्वात्संबुद्धिरियम् ।

हे उद्धव! तव जन्मनां मध्ये इदमन्त्यं जन्म यतः एकान्तभक्त्या पुनर्मां दृष्टवानसि ॥ १२ ॥ किं च मयाऽऽदिसर्गे यज्ज्ञानं ब्रह्मणे प्रोक्तं तत्सूरयो भागवतं वदन्ति ॥ १३ ॥ भगवता इति परमादरेणोक्तो रोमाञ्चितशरीरोऽश्रूणि मुञ्चन् कृताञ्जलिर्हरिं बभाषे ॥ १४ ॥ हे ईश ! तव पदाम्बुजं सेवमानानां चतुर्वर्गे कोऽर्थो दुर्लभः तथाऽपि तानहं नेच्छामि ॥ १५ ॥ अजन्मनो जन्म कालात्मनस्तव शत्रुभयात् पलायनं स्वात्मनि रतस्य स्त्रीभिः

स एष भांवश्चरमो भवानामासादितस्ते मदनुग्रहो यत् ॥ यन्मां नृलोकान्रह उत्सृजन्तं दिष्ट्या ददृश्वान्विशदानुवृत्त्या ॥ १२ ॥ पुरा मया प्रोक्तमजाय नाभ्ये पद्मे निषण्णाय ममादिसर्गे ॥ ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदन्ति ॥ १३ ॥ इत्यादृतोक्तः परमस्य पुंसः प्रतीक्षणानुग्रहभाजनोऽहम् ॥ स्नेहोत्थरोमा स्खलिताक्षरस्तं मुञ्चञ्छुचः प्राञ्जलिराबभाषे ॥ १४ ॥ को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह ॥ तथापि नाहं प्रवृणोमि भूवन् भवत्पदाम्भोजनिषेवणोत्सुकः ॥ १५ ॥ कर्माण्यनीहस्य भवोऽभवस्य ते दुर्गाश्रयोऽथारिभयात् पलायनम् ॥ कालात्मनो यत्प्रमदायुताश्रयः स्वात्मन्रतेः खिद्यति धीर्विदामिह ॥ १६ ॥ मन्त्रेषु मां वा उपहूय यत्त्वमकुण्ठिताखण्डसदात्मबोधः ॥ पृच्छेः प्रभो मुग्ध इवाप्रमत्तस्तन्नो मनो मोहयतीव देव ॥ ॥ १७ ॥ ज्ञानं परं स्वात्मरहःप्रकाशं प्रोवाच कस्मै भगवान्समग्रम् ॥ अपि क्षमं नो ग्रहणाय भर्तर्वदाञ्जसा यद्वृजिनं तरेम ॥ १८ ॥ इत्यावेदितहार्दाय मह्यं स भगवान्परः ॥ आदिदेशारविन्दाक्ष आत्मनः परमां स्थितिम् ॥ १९ ॥ स एवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ॥ प्रणम्य पादौ परिवृत्य देवमिहागतोऽहं विरहातुरात्मा ॥ २० ॥

सह गृहाश्रम इति यत् तत्र विदुषामपि धीः खिद्यति ॥ १६ ॥ किंच त्वं मन्त्रेषु मामुपहूय संशयरहितोऽपि मूढवत् मां यदपृच्छस्तेन मे मनो मोहयसि ॥ १७ ॥ हे हरे ! यज्ज्ञानं ब्रह्मणे उक्तं तद् ग्रहणाय योग्यं चेत् तर्हि नः वद येन वृजिनं तरेम ॥ १८ ॥ इति हृद्गताभिप्राये निवेदिते सति स भगवान् मह्यमात्मनः परमं स्थितिरूपं ज्ञानं प्रोवाच ॥ १९ ॥ ततोऽहं तत्पादौ प्रणम्य प्रदक्षिणीकृत्य वियोगातुरः इहागतः ॥ २० ॥

१ 'साधो' इ० पा० । २ 'प्रतिक्षण' इ० पा० । ३ अकुंठितः कालादिना अखण्डः सन्ततः सदात्मा संशयादिरहितः बोधो ज्ञानं यस्य सः । ४ आत्मतत्त्वप्रकाशकम् । ५ तत्वं परमार्थः ।

इतस्तस्य दयितं बदर्याश्रममण्डलं गमिष्यामि ॥ २१ ॥ यत्र नारायणो नरश्चाकल्पान्तं तीव्रं तपस्तेपाते ॥ २२ ॥ श्रीशुक उवाच ॥ विदुर उद्धवादेवं सुहृदां वधं निशम्योत्पतितं शोकं ज्ञानेन शमयामास ॥ २३ ॥ ततो विदुरो व्रजन्तमुद्धवमिदमाह ॥ २४ ॥ विदुर उवाच ॥ हे उद्धव ! योगेश्वरः कृष्णस्तुभ्यं यज्ज्ञानमाह तत् नो वक्तुमर्हसि ॥ २५ ॥ उद्धव उवाच ॥ हे विदुर ! मर्त्यलोकं जिहासता भगवताऽऽदिष्टो

सोऽहं तद्दर्शनाह्लादवियोगार्तियुतः प्रभो ॥ गमिष्ये दयितं तस्य बदर्याश्रममण्डलम् ॥ २१ ॥ यत्र नारायणो देवो नरश्च भगवानृषिः ॥ मृदु तीव्रं तपो दीर्घं तेपाते लोकभावनौ ॥ २२ ॥ श्रीशुक उवाच ॥ इत्युद्धवादुपाकर्ण्य सुहृदां दुस्सहं वधम् ॥ ज्ञानेनाशमयत् क्षत्ता शोकमुत्पतितं बुधः ॥ २३ ॥ स तं महाभागवतं व्रजन्तं कौरवर्षभः ॥ विश्रम्भाद्भ्यधत्तेदं मुख्यं कृष्णपरिग्रहे ॥ २४ ॥ विदुर उवाच ॥ ज्ञानं परं स्वात्मरहःप्रकाशं यदाह योगेश्वर ईश्वरस्ते ॥ वक्तुं भवान्नोऽर्हति यद्धि विष्णोर्भृत्याः स्वभृत्यार्थकृतश्चरन्ति ॥ २५ ॥ उद्धव उवाच ॥ ननु ते तत्त्वसंराध्य ऋषिः कौषारवोऽन्तिमे ॥ साक्षाद्भगवताऽऽदिष्टो मर्त्यलोकं जिहासता ॥ २६ ॥ श्रीशुक उवाच ॥ इति सह विदुरेण विश्वमूर्तेर्गुणकथया सुधया प्लावितोरुतापः ॥ क्षणमिव पुलिने यमस्वसुस्तां समुषित औपगविर्निशां ततोऽगात् ॥ २७ ॥ राजोवाच ॥ निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः ॥ स तु कथमवशिष्टं उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥ श्रीशुक उवाच ॥ ब्रह्मशापापदेशेन कालेनामोघवाञ्छितः ॥ संहृत्य स्वकुलं नूनं त्यक्ष्यन् देहमचिन्तयत् ॥ २९ ॥ अस्माल्लोकादुपरते मयि ज्ञानं मदाश्रयम् ॥ अर्हत्युद्धव एवाद्धा सम्प्रत्यात्मवतां वरः ॥ ३० ॥

मैत्रेयस्ते ज्ञानं वक्ष्यति यतः स एवादिष्टः ॥ २६ ॥ श्रीशुक उवाच ॥ इति विदुरेण सह हरेर्गुणान् कथयन् यमुनायाः पुलिने एकां रात्रिं स्थित्वोद्धवो वनं जगाम ॥२७॥ परीक्षिदुवाच । सर्वे यादवाः शापात् नष्टाः हरिरपि शरीरं तत्याज उद्धवस्तु कथमवशिष्टः ॥ २८ ॥ श्रीशुक उवाच ॥ ब्रह्मशापनिमित्तेन हरिः स्वकुलं संहृत्य देहं त्यजन्निदं चिन्तयामास ॥ २९ ॥ मयि लोकादुपरते सति मदाश्रयं ज्ञानं

१ लोकानुग्रहकारकौ । २ परिजने । ३ तत्त्वार्थसंराध्यः । ४ समीपे ।

लोकानां कथयितुमिहोद्धवस्तिष्ठतु यतो मत्तः स ईषदपि न्यूनो न भवति ॥ ३० ॥३१॥ एवं भगवताऽज्ञप्तः उद्धव कश्चित् कालमत्र स्थितः । ततो बदर्याश्रमं गत्वा समाधिना हरिमीजे ॥३२॥ विदुरोऽपि कृष्णस्य कर्माणि धीराणां धैर्यवर्धनं देहत्यागं चोद्धवात् शुश्राव ॥३३॥३४॥ हे नृप ! स विदुरो भगवता चास्मत्स्मरणं कृतमिति श्रुत्वोद्धवे गते प्रेमविह्वलो रुरोद॥३५॥ततःकालिन्द्याः सकाशात् कतिभिर्दिवसैर्यत्र मैत्रेयस्तिष्ठति तद्गङ्गाद्वारं ययौ॥३६॥इति श्रीभा० महापु० चू० तृती० चतुर्थोऽध्यायः॥४॥पञ्चमे भगवल्लीलां क्षत्त्रा पृष्टो महामुनिः।प्रोवाच महदा-

नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दितः प्रभुः ॥ अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥ एवं त्रिलोकगुरुणा संदिष्टः शब्दयोनिना ॥ बदर्याश्रममासाद्य हरिमीजे समाधिना ॥ ३२ ॥ विदुरोऽप्युद्धवाच्छ्रुत्वा कृष्णस्य परमात्मनः ॥ क्रीडयोपात्तदेहस्य कर्माणि श्लाघितानि च ॥ ३३ ॥ देहन्यासं च तस्यैव धीराणां धैर्यवर्धनम् ॥ अन्येषां दुष्करतरं पशूनां विक्लवात्मनाम् ॥३४॥ आत्मानं च कुरुश्रेष्ठ कृष्णेन मनसेक्षितम् ॥ ध्यायन्गते भागवते रुरोद प्रेमविह्वलः ॥३५॥ कालिन्द्याः कतिभिः सिद्ध अहोभिर्भरतर्षभः ॥ प्रापद्यत स्वस्सरितं यत्र मित्रासुतो मुनिः ॥ ३६ ॥ इति श्रीभा० म० तृतीय० विदुरोद्धवसंवादे संपूर्णवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ द्वारि द्युनद्या ऋषभः कुरूणां मैत्रेयमासीनमगाधबोधम् ॥ क्षत्तोपसृत्याच्युतभावशुद्धः पप्रच्छ सौशील्यगुणाभितृप्तः॥१॥ विदुर उवाच ॥ सुखाय कर्माणि करोति लोको न तैः सुखं वान्यदुपारमं वा ॥ विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान्वदेन्नः ॥ २ ॥ जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ॥ अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्य ॥ ३ ॥

दीनां सर्गं तैश्च हरेः स्तुतिम् ॥१॥ उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसङ्गमः । संवादस्तु तयोः स्कन्धद्वयेनाथ निगद्यते ॥२॥ श्रीशुक उवाच । गंगाद्वारे[1] आसीनं मैत्रेयं प्रति विदुरो गत्वा पप्रच्छ॥१॥विदुर उवाच ॥ हे मैत्रेय ! लोकः सुखाय कर्माणि करोति तैःसुखं दुःखोपशमं च नाप्नोति भूयो दुःखमेव विन्दते। अत एवंविधे संसारे यत् कर्तुं योग्यं तद् भगवान् नः कथयतु॥२॥भवादृशा इह कृष्णविमुखानां जनानामनुग्रहाय चरन्ति॥३॥

१ मङ्गलानि ।

हे साधुवर्य ! येन हरिर्हृदि स्थितः सन् ज्ञानं यच्छति तं मार्गं नः कथय ॥४॥ हरिरिदमग्रे यथा ससर्जावतारान् कृत्वा यद्यदकरोत् तत् वद ॥५॥ किंच स स्वहृदयाकाशे इदं विश्वं स्थापयित्वा निवृत्तवृत्तिः सन् योगमायायां यथा शेते ॥६॥ स हरिर्द्विजगोसुराणां क्षेमाय मत्स्याद्यवतार भेदैः क्रीडन् यानि कर्माणि विधत्ते ॥७॥ अपि च हरिर्यैस्तत्त्वभेदैर्लोकादीन् कल्पयामास ॥८॥ किंच स येन प्रकारेण जीवानां स्वभावकृत

तत्साधुवर्यादिश वर्त्म शं नः संराधितो भगवान् येन पुंसाम् ॥ हृदि स्थितो यच्छति भक्तिपूते ज्ञानं सतत्त्वाधिगमं पुराणम् ॥ ४ ॥ करोति कर्माणि कृतावतारो यान्यात्मतन्त्रो भगवांस्त्र्यधीशः ॥ यथा ससर्जाग्र इदं निरीहः संस्थाप्य वृत्तिं जगतो विधत्ते ॥ ५ ॥ यथा पुनः स्वे ख इदं निवेश्य शेते गुहायां स निवृत्तवृत्तिः ॥ योगेश्वराधीश्वर एक एतदनुप्रविष्टो बहुधा यथाऽऽसीत् ॥ ६ ॥ क्रीडन्विधत्ते द्विजगोसुराणां क्षेमाय कर्माण्यवतारभेदैः ॥ मनो न तृप्यत्यपि शृण्वतां नः सुश्लोकमौलेश्चरितामृतानि ॥ ७ ॥ यैस्तत्त्वभेदैरधिलोकनाथो लोकानलोकान्सहलोकपालान् ॥ अचीक्लृपद्यत्र हि सर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतः ॥ ८ ॥ येन प्रजानामुत आत्मकर्मरूपाभिधानां च भिदां व्यधत्त ॥ नारायणो विश्वसृगात्मयोनिरेतच्च नो वर्णय विप्रवर्य ॥ ९ ॥ परावरेषां भगवन्व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् ॥ अतृप्नुम क्षुल्लसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥ १० ॥ कस्तृप्नुयात्तीर्थपदोऽभिधानात्सत्रेषु वः सूरिभिरीड्यमानात् ॥ यः कर्णनाडीं पुरुषस्य यातो भवप्रदां गेहरतिं छिनत्ति ॥ ११ ॥

कर्मरूपाभिधानानां भेदं कृतवान् तत् नः कथय ॥९॥ हे मैत्रेय ! मया व्यासमुखाद् बहूनि व्रतानि श्रुतानि । तृप्तिरपि जाता । परन्तु हरिकथाश्रवणेन न तृप्यामि ॥ १० ॥ कृष्णस्य कथामृतात् कस्तृप्येत् यत्कथामृतं नरस्य गृहरतिं छिनत्ति ॥ ११ ॥

१ आत्मापरोक्ष्यसहितम् । २ अनादिवेदप्रमाणकम् । ३ त्रिगुणमायानियन्ता । ४ जगत् । ५ सुस्थितं कृत्वा । ६ जीविकाम् । ७ वृत्तिर्जगत्सृष्ट्यादिरूपा । ८ अतर्क्यैश्वर्य इत्यर्थः । ९ जगत् । १० ब्रह्मादिरूपेण । ११ अलोकान् लोकालोकपर्वताद्बहिर्भागान् । १२ यत्र सर्वेषां सत्त्वसमूहानां भेदोऽधिकृतः तत्तत्कर्माधिकारीकृतः । १३ अवगतः । १४ कुत्वकल्पनार्थेति '' विश्वसृडात्मयोनि'' इ० पां ० । १५ परे त्रैवर्णिकाः । अवरे शूद्रादयः । १६ 'वै' इ० पा० ।

हे मुने ! व्यासो भगवद्गुणान् वक्तुमिच्छुः सन् भारतमाह। यस्मिन् भारते ग्राम्यसुखानुवादैर्नृणां मतिर्हरिकथायां नीता ॥ १२ ॥ सा मतिः
पुंसो गृहादिषु विरक्तिं करोति॥१३॥भगवत्कथायां विमुखान् शोचे येषामायुर्व्यर्थं गच्छति ॥१४॥ अतो हे मैत्रेय ! जगतः कल्याणाय हरेः
कथामेव नः कथय ॥१५॥ स विश्वस्य जन्मस्थितिसंयमार्थं कृष्णावतारः सन् यानि कर्माणि चकार तानि मह्यं कीर्तय ॥ १६ ॥ श्रीशुक

मुनिर्विवक्षुर्भगवद्‌गुणानां सखाऽपि ते भारतमाह कृष्णः ॥ यस्मिन् नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथा-
याम् ॥ १२ ॥ सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः ॥ हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखात्यय-
माशु धत्ते ॥१३॥ ताञ्छोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन ॥ क्षिणोति देवोऽनिमिषस्तु येषामायु-
र्वृथावादगतिस्मृतीनाम् ॥ १४ ॥ तदस्य कौषारव शर्मदातुर्हरेः कथामेव कथासु सारम् ॥ उद्‌धृत्य पुष्पेभ्य इवार्तबन्धो
शिवाय नः कीर्तय तीर्थकीर्तेः॥१५॥स विश्वजन्मस्थितिसंयमार्थे कृतावतारः प्रगृहीतशक्तिः॥ चकार कर्माण्यतिपूरुषाणि
यानीश्वरः कीर्तय तानि मह्यम् ॥ १६ ॥ श्रीशुक उवाच ॥ स एवं भगवान् पृष्टः क्षत्त्रा कौषारविर्मुनिः ॥ पुंसां निःश्रे-
यसार्थेन तमाह बहु मानयन् ॥ १७ ॥ मैत्रेय उवाच ॥ साधु पृष्टं त्वया साधो लोकान्साध्वनुगृह्णता ॥ कीर्तिं वितन्वता
लोक आत्मनोऽधोक्षजात्मनः ॥१८॥ नैतच्चित्रं त्वयि क्षत्तर्बादरायणवीर्यजे ॥ गृहीतोऽनन्यभावेन यत्त्वया हरिरीश्वरः
॥ १९ ॥ माण्डव्यशापाद्भगवान्प्रजासंयमनो यमः ॥ भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ २० ॥



उवाच । हे नृप ! एवं विदुरेण पृष्टो मैत्रेयस्तं संमानयन्नाह ॥१७॥ मैत्रेय उवाच ॥ हे साधो ! लोकाननुगृह्णता त्वया साधु पृष्टम् ॥१८॥ त्वया-
ऽनन्यभावेन हरिर्गृहीतः एतच्चित्रं न ॥१९॥ भवान् यमो माण्डव्यशापात् व्यासाद् दास्यां जातोऽस्ति ॥ २० ॥

१ शोच्यानामपि शोच्यान् । २ अविदो भारततात्पर्यानभिज्ञान् । ३ अनिमिषः कालः । ४ वृथावाग्देहमनोव्यापाराणाम् । ५ पुरुषानतिक्रम्य वर्तमानानि । ६ निःश्रेयसहेतोः । ७ अधोक्षज एवात्मा यस्य तस्या-
त्मनः स्वस्य । ८ क्षेत्रत्वेन गृहीतायाम् ।

तव ज्ञानोपदेशाय भगवान् गच्छन् सन् मामादिशत् ॥२१॥ अथ भगवल्लीलाः अनुक्रमेण तुभ्यं वर्णयामि ॥२२॥ आदौ सृष्टेः पूर्वमात्मैक एवासीत् ॥२३॥ स आत्मा द्रष्टा सन् यदा दृश्यं नापश्यत् तदाऽऽत्मानमसन्तमिव मेने ॥२४॥ उतः स सदसदात्मिकां मायां ससर्ज ॥२५॥ तस्यां मायायामात्मांशभूतेन मायाधिष्ठातृरूपेण चिदंशमाधत्त ॥ २६ ॥ ततो मायातो महत्तत्त्वं जातम् ॥ २७ ॥ सोऽपि विश्वस्य सिसृक्षयाऽऽत्मानं

भवान्भगवतो नित्यं संमतः सानुगस्य च ॥ यस्य ज्ञानोपदेशाय माऽऽदिशद्भगवान् व्रजन् ॥ २१ ॥ अथ ते भगवल्लीला योगमायोपबृंहिताः ॥ विश्वस्थित्युद्भवान्तार्था वर्णयाम्यनुपूर्वशः ॥ २२ ॥ भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः ॥ आत्मेच्छानुगतो वाऽऽत्मा नानामत्युपलक्षणः ॥ २३ ॥ स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट् ॥ मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २४ ॥ सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका ॥ माया नाम महाभाग ययेदं निर्ममे विभुः ॥ २५ ॥ कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः ॥ पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ २६ ॥ ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् ॥ विज्ञानात्माऽऽत्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः ॥ २७ ॥ सोऽप्यंशगुणकालात्मा भगवद्दृष्टिगोचरः ॥ आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ २८ ॥ महत्तत्त्वाद्विकुर्वाणादहंतत्त्वं व्यजायत ॥ कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमयः ॥ २९ ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ अहंतत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् ॥ वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः ॥ ३० ॥ *तैजसानीन्द्रियाण्येव ज्ञानकर्ममयानि च ॥ तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥ ३१ ॥

रूपान्तरं निनाय ॥२८॥ महत्तत्त्वात् सात्त्विकराजसतामसभेदेनाहंकारस्त्रिधा बभूव ॥ २९ ॥ सात्त्विकाहंकारात् मनो देवाश्चाभवन् ॥३०॥ राजसाहंकाराज्ज्ञानकर्मेन्द्रियाणि । तामसाहंकाराद् भूतसूक्ष्माणि ॥ ३१ ॥

१ अनुगाः भक्ताः । २ इदं विश्वम् । ३ जीवानां स्वरूपम् । ४ द्रष्टृदृश्यादिमतिभिर्नोपलक्ष्यते तथा । ५ शक्तयो मायाद्याः । ६ दृक् चिच्छक्तिः । ७ कालशक्त्या । ८ विज्ञानेति महतो लक्षणम् । ९ व्यञ्जन् प्रकाशयन् । १० अंशश्चिदाभासो, गुणाः उपादनं, कालः क्षोभकस्तदात्मा तदधीनः । ११ अधिभूताध्यात्माधिदैवाश्रय इत्यर्थः। १२ शब्दादिप्रकाशाः । १३ देवेभ्यः । * रजःसत्वमयाप्रोक्ता ब्रह्मविष्णुशिवादयः । इत्यधिकः पाठः ।

तेषु कालमायांशयोगेन भगवता वीक्षितेष्वाकाशमभूत् । आकाशाद् वायुः ॥३२॥ वायोर्विकुर्वाणादग्निः । अग्नेः सकाशाद् रसमयं जलम् । जलात् कालमायांशयोगतो गन्धवती पृथ्वी ॥ ३३ ॥ ३४ ॥ ३५ ॥ हे विदुर ! एवमाकाशादिपञ्चभूतानां कथाक्रममुत्तरोत्तरमेकैकाधिकान् गुणान् विदुः ॥ ३६ ॥ एते विष्णोरंशाः देवाः ब्रह्माण्डरचनायामशक्ताः सन्तो विभुं तुष्टुवुः ॥ ३७ ॥ देवा ऊचुः । हे देव ! शरणागतताप-

कालमायांशयोगेन भगवद्वीक्षितं नभः ॥ नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ॥ ३२ ॥ अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ॥ ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ॥ ३३ ॥ अनिलेनान्वितं ज्योतिर्विकुर्वत्परवीक्षितम् ॥ आधत्ताम्भो रसमयं कालमायांशयोगतः ॥ ३४ ॥ ज्योतिषाऽम्भोऽनुसंसृष्टं विकुर्वद्ब्रह्मवीक्षितम् ॥ महीं गन्धगुणामाधात् कालमायांशयोगतः ॥ ३५ ॥ भूतानां नभआदीनां यद्यद्भव्यावरावरम् ॥ तेषां परानुसंसर्गान्यथासंख्यं गुणान्विदुः ॥ ३६ ॥ एते देवाः कला विष्णोः कालमायांशलिङ्गिनः ॥ नानात्वात्स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ॥ ३७ ॥ देवा ऊचुः ॥ नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् ॥ यन्मूलकेता यतयोऽञ्जसोरु संसारदुःखं बहिरुत्क्षिपन्ति ॥ ३८ ॥ धातर्यदस्मिन् भव ईश जीवास्तापत्रयेणोपहता न शर्म ॥ आत्मँल्लभन्ते भगवंस्तवाङ्घ्रिच्छायां सविद्यामत आश्रयेम ॥ ३९ ॥ मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते ॥ यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः ॥ ४० ॥

वारकं ते चरणारविन्दं नमामः ॥ ३८ ॥ हे पितः ! त्वत्पदभजनं विना तापत्रयहताः जीवाः सुखं न लभन्ते ॥ ३९ ॥ हे ईश ! ऋषयो वेद पक्षिभिर्यत् तव पदमन्वेषयन्ति तत् तव चरणं वयं प्रपन्नाः ॥ ४० ॥



---

१ परमेश्वरः । २ भव्येति 'संबुद्धिः भाव्यं परावरम्' इ० पा० । ३ अवरमवरं कार्यमित्यर्थः । ४ परं कारणम् । ५ अयमर्थः । नभसः शब्द एव गुणः, वायोस्तु स्पर्शः, आकाशान्वयाच्छब्दश्च । ६ कालादीनां यथाक्रमं विकृतिविक्षेपचेतनारूपाणि लिङ्गानि येषु ते 'अंशयोगतः' इ० पा० । ७ परस्परासंबन्धात् । ८ केत आश्रयः । ९ असंगे मनसि । १० अघनाशकमुदकं यासां तासां मध्ये श्रेष्ठायाः । ११ गङ्गाया उद्गमस्थानम् ।

यत् पदं हृदये ध्यात्वा ज्ञानेन धीरा भवन्ति तत् पदं शरणं व्रजेम ॥४१॥ यत् स्वपुंसामभयं प्रयच्छति ॥४२॥ किंच पुंसां स्वदेहे एव वसतोऽपि बत दुष्प्रापं यत् तत् ते पदाम्बुजं भजेम॥४३॥ हे परेश ! इन्द्रियैर्हृतमनसः पुरुषास्त्वद्भक्तान् न पश्यन्ति॥४४॥ हे प्रभो ! त्वत्कथामृतपानेन स्वच्छान्तःकरणाः ये ते ज्ञानं प्राप्य वैकुण्ठलोकं प्राप्नुयुः ॥ ४५ ॥ तथाऽपरे योगबलेन मायां जित्वा श्रमेण मोक्षं प्राप्नुवन्ति ॥

यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय ॥ ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽङ्घ्रिसरोजपीठम् ॥ ४१ ॥ विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते ॥ व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥ ४२ ॥ यत्सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् ॥ पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्जम् ॥ ४३ ॥ तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश ॥ अथो न पश्यन्त्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥ ४४ ॥ पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ॥ वैराग्यसारं प्रतिलभ्य बोधं यथाञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम् ॥ ४५ ॥ तथाऽपरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् ॥ त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥ ४६ ॥ तत्ते वयं लोकसिसृक्षयाऽऽद्य त्वयाऽनुसृष्टास्त्रिभिरात्मभिः स्म ॥ सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत्प्रतिहर्तवे ते॥४७॥यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ॥ यथोभयेषां त इमे हि लोका बलिं हरन्तोऽन्नमदन्त्यनूहाः ॥४८॥ त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः॥ त्वं देव शक्त्या गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ ४९ ॥

त्वत्सेवया तु श्रमं विनैव मोक्षः ॥ ४६ ॥ एवं स्तुत्वा प्रार्थयन्ते । हे आद्य ! यदर्थं त्वया सृष्टास्तत् कार्यं कर्तुं वयं न शक्नुमः ॥ ४७ ॥ हे अज ! वयं यथा तत्तदवसरे भोगं साकल्येन तुभ्यं समर्पयाम येन प्रकारेणान्नं भक्षयाम तथा स्वीयं ज्ञानं देहि ॥४८॥ हे देव ! सर्वेषामस्माकं त्वमेवाद्यः कूटस्थोऽसि ॥ ४९ ॥

१ यदवधार्येत्यन्वयः । २ श्रवणपूर्विकया । ३ सोपकरणे । ४ वै प्रसिद्धम् । ५ तव चास्माकं च । ६ निस्संशयाः । ७ योनिः कारणभूता । ८ मायायाम् ।

हे आत्मन्! यथाऽस्माभिर्ब्रह्माण्डरचना स्यात् तथानुग्रहो विधीयताम् ॥५०॥ इति श्रीभागवतचूर्णिकायां तृतीयस्कन्धे पञ्चमोऽध्यायः ॥५॥ षष्ठे तैरीश्वराविष्टैः सृष्टिमाह विराट्तनोः ॥ अधिदैवादिभेदं च तत्रैव भगवत्कृतम् ॥१॥ मैत्रेय उवाच। हे विदुर ! अमिलित्वा स्थितानां महदादीनां गतिं दृष्ट्वा भगवान् ॥१॥ कालसंज्ञां शक्तिं गृहीत्वा प्रकृत्यादित्रयोविंशतितत्त्वानां गणं युगपदाविश्य भिन्नं गणं संयोजयामास ॥ २ ॥ ३ ॥

ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं ते ॥ त्वं नः स्वचक्षुःपरिदेहि शक्त्या देव क्रियार्थे यदनुग्रहाणाम् ॥ ॥५०॥ इति श्रीभा॰ म॰ तृ॰ स्कन्धे महदादिसर्गे सर्वदेवकृतिस्तोत्रवर्णनं नाम पञ्चमोऽध्यायः ॥५॥ ऋषिरुवाच ॥ इति तासां स्वशक्तीनां सतीनामसमेत्य सः ॥ प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ॥१॥ कालसंज्ञां तदा देवीं बिभ्रच्छ-क्तिमुरुक्रमः ॥ त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥२॥ सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम् ॥ भिन्नं संयोज-यामास सुप्तकर्म प्रबोधयन् ॥३॥ प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः॥ प्रेरितोऽजनयत् स्वाभिर्मात्राभिरधिपूरुषम् ॥४॥ परेण विशता स्वस्मिन्मात्रया विश्वसृग्गणः ॥ चुक्षोभान्योऽन्यमासाद्य यस्मिंल्लोकाश्चराचराः ॥ ५ ॥ हिरण्मयः स पुरुषः सहस्रपरिवत्सरान् ॥ आण्डकोश उवासाप्सु सर्वसत्त्वोपबृंहितः ॥ ६ ॥ स वै विश्वसृजां गर्भो देवकर्माऽऽत्मशक्ति-मान् ॥ विबभाजात्मनाऽऽत्मानमेकधा दशधा त्रिधा ॥७॥ एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ॥ आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते ॥ ८ ॥ साध्यात्मः साधिदैवश्च साधिभूत इति त्रिधा ॥ विराट् प्राणो दशविध एकधा हृदयेन च ॥ ९ ॥ स्मरन्विश्वसृजामीशो विज्ञापितमधोक्षजः ॥ विराजमतपत्स्वेन तेजसैषां विवृत्तये ॥ १० ॥



तदा स गणः स्वांशैर्विराड्देहं जनयामास ॥ ४ ॥ स गणोऽन्योऽन्यं प्राप्य चुक्षोभ ॥५॥ स विराडन्तर्याम्याण्डकोशेऽप्सु बहुकालं वसन् ॥६॥ स आत्मानमेकधा हृदयावच्छिन्नचैतन्यरूपेण त्रिधाऽध्यात्माधिदैवाधिभूत इति भेदेन दशधा प्राणरूपेण व्यभजत् ॥ ७ ॥ ८ ॥ ९ ॥ तत ईशस्तत्त्वानां विज्ञापितं स्मरन् तेषां विविधवृत्तिलाभाय विराड्देहं चिच्छक्त्यैवं करिष्यामीति विचारितवान् ॥ १० ॥

१ तस्याः शक्तेः । २ स्वकीयं ज्ञानम् । ३ सृष्ट्यर्थः दयानेवानुग्रहो येषां तेषाम् । ४ लोकतन्त्रं विश्वरचना । ५ ईश्वरेण । ६ अंशेन ।

अथ तस्य स्थानानि निरभिद्यन्त । तानि मत्तः शृणु ॥११॥ आदौ तस्य मुखं निर्भिन्नं यत्राग्निर्देवता वागिन्द्रियं वक्तव्यं विषयःयया जीवः शब्दमुच्चारयति ॥ १२ ॥ ततस्तालु उत्पन्नम् । तस्य वरुणो देवता जिह्वेन्द्रियं रसो विषयः यया रसं जानाति ॥१३॥ ततो नासिके उत्पन्ने अश्विनौ देवते घ्राणमिन्द्रियं गन्धो विषयः । येन गन्धं जिघ्रति ॥ १४ ॥ ततोऽक्षिणी उत्पन्ने । सूर्यो देवता चक्षुरिन्द्रियं रूपं विषयः येन

अथ तस्याभितप्तस्य कति चायतनानि ह ॥ निरभिद्यन्त देवानां तानि मे गदतः शृणु ॥ ११ ॥ तस्याग्निरास्यं निर्भिन्नं लोकपालोऽविशत्पदम् ॥ वाचा स्वांशेन वक्तव्यं ययाऽसौ प्रतिपद्यते ॥१२॥ निर्भिन्नं तालु वरुणो लोकपालोऽविशद्धरेः ॥ जिह्वयांशेन च रसं ययाऽसौ प्रतिपद्यते ॥१३॥ निर्भिन्ने अश्विनौ नासे विष्णोराविशतां पदम् ॥ घ्राणेनांशेन गन्धस्य प्रतिपत्तिर्यतोभवेत् ॥१४॥ निर्भिन्ने अक्षिणी त्वष्टा लोकपालोऽविशद्विभोः ॥ चक्षुषांऽशेन रूपाणां प्रतिपत्तिर्यतो भवेत् ॥ १५ ॥ निर्भिन्नान्यस्य चर्माणि लोकपालोऽनिलोऽविशत् ॥ प्राणेनांशेन संस्पर्शं येनासौ प्रतिपद्यते ॥ १६ ॥ कर्णावस्य विनिर्भिन्नौ धिष्ण्यं स्वं विविशुर्दिशः ॥ श्रोत्रेणांशेन शब्दस्य सिद्धिर्येन प्रपद्यते ॥ १७ ॥ त्वचमस्य विनिर्भिन्नां विविशुर्धिष्ण्यमोषधीः ॥ अंशेन रोमभिः कण्डूं यैरसौ प्रतिपद्यते ॥१८॥ मेढ्रं तस्य विनिर्भिन्नं स्वधिष्ण्यं क उपाविशत् ॥ रेतसांऽशेन येनासावानन्दं प्रतिपद्यते॥१९॥गुदं पुंसो विनिर्भिन्नं मित्रो लोकेश आविशत् ॥ पायुनांऽशेन येनासौ विसर्गं प्रतिपद्यते ॥२०॥ हस्तावस्य विनिर्भिन्नाविन्द्रः स्वःपतिराविशत् ॥ वार्तयांऽशेन पुरुषो यया वृत्तिं प्रपद्यते ॥२१॥

रूपं पश्यति॥१५॥ ततश्चर्माण्युत्पन्नानि । वायुर्देवता त्वगिन्द्रियं स्पर्शः विषयः येन स्पर्शं जानाति ॥१६॥ अथ कर्णावुत्पन्नौ । दिशो देवताः श्रोत्रमिन्द्रियं शब्दो विषयः येन शब्दज्ञानं भवति ॥१७॥ ततस्त्वगुत्पन्ना । ओषधयो देवताः रोमाणीन्द्रियं कण्डूर्विषयः ॥ १८ ॥ ततो मेढ्रमुत्पन्नम् । प्रजापतिर्देवता रेतः इन्द्रियं सुखं विषयः येनानन्दः प्राप्यते ॥१९॥ ततो गुदमुत्पन्नम् । मित्रो देवता पायुरिन्द्रियं विसर्गो विषयः येन मलत्यागं करोति ॥ २० ॥ विराजो हस्तावुत्पन्नौ इन्द्रो देवता वार्तेन्द्रियं जीविका विषयः येन व्यापारं करोति ॥ २१ ॥

१ क्रयविक्रयादिरूपया ।

अस्य पादावुत्पन्नौ । विष्णुर्देवता गतिरिन्द्रियं प्राप्यं विषयः येन गमागमं करोति॥२२॥ततो हृदयमुत्पन्नम् । चन्द्रो देवता मन इंद्रियं संकल्प विकल्पविक्रियाः विषयाः येन कर्त्तव्याकर्तव्यविचारं करोति ॥ २३ ॥ ततोऽहंकार उत्पन्नः । इन्द्रो देवताऽहंवृत्तिरिन्द्रियं क्रिया विषयः येनाहं करोमीत्यभिमानं करोति ॥२४॥ अस्य बुद्धिरुत्पन्ना । ब्रह्मा देवता चित्तमिन्द्रियं विज्ञानं विषयः ॥२५॥ अस्य विराड्रूपस्य शिरसः स्वर्ग उत्पन्नः पद्भ्यां धरा नाभेः खं येषु परिणामाः सुरादयो दृश्यन्ते ॥२६॥ आत्यन्तिकसत्त्वगुणेन देवाः स्वर्गं प्रपेदिरे । अतिरजोगुणेन मनुष्या

पादावस्य विनिर्भिन्नौ लोकेशो विष्णुराविशत् ॥ गत्या स्वांशेन पुरुषो यया प्राप्यं प्रपद्यते॥२२॥ हृदयं चास्य निर्भिन्नं चन्द्रमा धिष्ण्यमाविशत् ॥ मनसांऽशेन येनासौ विक्रियां प्रतिपद्यते ॥ २३ ॥ आत्मानं चास्य निर्भिन्नमभिमा-नोऽविशत्पदम् ॥ कर्मणांऽशेन येनासौ कर्तव्यं प्रतिपद्यते ॥ २४ ॥ सत्त्वं चास्य विनिर्भिन्नं महान्धिष्ण्यमुपाविशत् ॥ चित्तेनांशेन येनासौ विज्ञानं प्रतिपद्यते ॥ २५ ॥ शीर्ष्णोऽस्य द्यौर्धरा पद्भ्यां खं नाभेरुदपद्यत ॥ गुणानां वृत्तयो येषु प्रतीयन्ते सुरादयः ॥२६॥ आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे ॥ धरां रजस्स्वभावेन पणयो ये च ताननु ॥२७॥ तार्तीयेन स्वभावेन भगवन्नाभिमाश्रिताः ॥ उभयोरन्तरं व्योम ये रुद्रपार्षदां गणाः ॥२८॥ मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह ॥ यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः ॥ २९ ॥ बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः ॥ यो जात-स्त्रायते वर्णान्पौरुषः कण्टकक्षतात् ॥३०॥ विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः ॥ वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्तयत् ॥३१॥ पद्भ्यां भगवतो जज्ञे शुश्रूषा धर्मसिद्धये ॥यस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥३२॥



धरां प्रपेदिरे ॥२७॥ अतितमोगुणेन भूतादिगणाः आकाशं प्रपेदिरे ॥ २८ ॥ विराजो मुखतो ब्राह्मणः उत्पन्नः यस्तु मुखोद्भवत्वात् वर्णानां गुरुरभूत् ॥ २९ ॥ बाहुभ्यां क्षत्रियो जातः यः सर्वोपद्रवात् रक्षति ॥३०॥ तस्योरुभ्यां वैश्यो जातः यः स्ववृत्त्या नृणांजीविकां सम्पादि-तवान् ॥ ३१ ॥ शुश्रूषाधर्मसिद्धये पद्भ्यां शूद्रो जातः । ३२ ॥

१ द्यावापृथिव्यौ । २ जीविकाम् ।

एते चत्वारो वर्णाः आत्मशुद्ध्यर्थं स्वधर्मेण हरिं यजन्ति॥३३॥ हे विदुर! एतत् भगवतो विराड्रूपं संपूर्णेन कथयितुं कः समर्थो भवेत्॥३४॥ अथापि यथा गुरुमुखात् श्रुतं तथा हरेः कीर्तिं कथयामि॥३५॥भगवतो गुणानज्ञात्वाऽपि यथामति कीर्तने श्रवणे वाऽवश्यं मोक्षो भवति॥३६॥ हे विदुर! हरेर्महिमा संवत्सरसहस्रान्तेऽपि ज्ञातः किं? नैव॥३७॥अहो हरेर्माया मायिनामपि मोहिनी यस्मात् हरिः स्वमायायागतिरेतावतीति न वेद अनन्तत्वात्॥३८॥अतो दुर्ज्ञेयत्वात् केवलं तस्मै भगवते नमस्करोमि॥३९॥इति॰श्रीभा॰चू॰तृतीय॰षष्ठोऽध्यायः॥६॥ सप्तमे संशयच्छेदि

एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम् ॥ श्रद्धयाऽऽत्मविशुद्ध्यर्थं यज्जाताः सह वृत्तिभिः ॥ ३३ ॥ एतत्क्षत्तर्भगवतो दैवकर्मात्मरूपिणः ॥ कः श्रद्दध्यादुपाकर्तुं योगमायाबलोदयम् ॥३४॥ अथापि कीर्तयाम्यङ्ग यथामति यथाश्रुतम् ॥ कीर्तिं हरेः स्वां सत्कर्तुं गिरमन्याभिधाऽसतीम् ॥ ३५ ॥ एकान्तलाभं वचसोऽनु पुंसां सुश्लोकमौलेर्गुणवादमाहुः ॥ श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसंप्रयोगम् ॥३६॥ आत्मनोऽवसितो वत्स महिमा कविनाऽऽदिना ॥ संवत्सरसहस्रान्ते धिया योगविपक्वया ॥३७॥ अतो भगवतो माया मायिनामपि मोहिनी ॥ यत्स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ॥ ३८ ॥ यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह ॥ अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ३९ ॥ इति श्रीभा॰ म॰ तृतीय॰ विराड्देहे ईश्वरप्रवेशवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ॥ प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥ १ ॥ विदुर उवाच ॥ ब्रह्मन्कथं भगवतश्चिन्मात्रस्याविकारिणः ॥ लीलया चापि युज्येरन्निर्गुणस्य गुणाः क्रियाः ॥ २ ॥ क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषाऽन्यतः ॥ स्वतस्तृप्तस्य च कथं निवृत्तस्य सदाऽन्यतः ॥ ३ ॥

प्रतिनन्द्य मुनेर्वचः।पुनःक्षत्त्रा कृता नानाप्रश्नाःसम्यगुदीरिताः॥१॥श्रीशुकउवाच॥विदुरोमैत्रेयाद्विराडुत्पत्तिं श्रुत्वाप्रत्यभाषत॥१॥विदुर उवाच॥ हे ब्रह्मन्! निर्विकारस्य क्रियाः निर्गुणस्य गुणाः लीलयाऽपि कथं युज्येरन् ॥२॥ स्वतस्तृप्तस्य भगवतो बालकवत् लीलाऽपि न युज्येत ॥३॥

१ इच्छेत् । २ हरिव्यतिरिक्तार्थाभिधानदुष्टाम् । ३ श्रुतेरुपसंप्रयोगमित्यन्वयः । एकाग्रतया श्रवणम् । ४ आत्मवर्त्म आत्मगतिम् ।

यः स्वमायया विश्वं सृजति पालयति नाशयति ॥४॥ देशतः कालतोऽवस्थातः स्वतोऽन्यतो यस्य बोधो न लिप्यते सोऽविद्यया कथं युज्येत ॥५॥ एष एको भगवान् सर्वक्षेत्रे स्थितः तस्य कर्मभिर्दुर्भगत्वं क्लेशो वा कुतः ॥६॥ एतस्मिन् ज्ञानसंकटे मे मनःखिद्यते तद्दूरी कुरु ॥७॥ श्रीशुक उवाच ॥ हे नृप ! एवं विदुरेण प्रेरितो मैत्रेयस्तं प्रत्याह ॥ ८ ॥ मैत्रेय उवाच ॥ सेयं भगवतो माया या तर्केण न ज्ञायते ॥९॥यथा स्वप्ने मे शिरश्छिन्नमिति मृषा तत् सत्यमेव प्रतीयते तद्वत् ॥ १० ॥ यथा जले प्रतिबिंबितचन्द्रस्यैव कम्पादिधर्मो न त्वाकाशस्थितस्य ।

अस्राक्षीद्भगवान्विश्वं गुणमय्याऽऽत्ममायया ॥ तया संस्थापयत्येतद् भूयः प्रत्यपिधास्यति ॥ ४ ॥ देशतः कालतो यो-ऽसाववस्थातः स्वतोऽन्यतः ॥ अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥५॥ भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः ॥ अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥६॥ एतस्मिन्मे मनो विद्वन्खिद्यतेऽज्ञानसंकटे ॥ तन्नः पराणुद विभो कश्मलं मानसं महत् ॥ ७ ॥ श्रीशुक उवाच ॥ इत्थं चोदितः क्षत्त्रा तत्त्वजिज्ञासुना मुनिः ॥ प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥८॥ मैत्रेय उवाच ॥ सेयं भगवतो माया यन्नयेन विरुध्यते ॥ ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥९॥ यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः ॥ प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः ॥१०॥ यथा जले चन्द्र-मसःकम्पादिस्तत्कृतो गुणः॥ दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः॥११॥ स वै निवृत्तिधर्मेण वासुदेवानुकम्पया ॥ भगवद्भक्तियोगेन तिरोधत्ते शनैरिह॥१२॥ यदेन्द्रियोपरामोऽथ द्रष्ट्रात्मनि परे हरौ ॥ विलीयन्ते तदा क्लेशाःसंसुप्तस्येव कृत्स्नशः॥१३॥ अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ॥ कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥१४॥ विदुर उवाच ॥ संछिन्नः संशयो मह्यं तव सूक्तासिना विभो ॥ उभयत्रापि भगवन्मनो मे संप्रधावति ॥ १५ ॥



देहादिधर्मोऽसन्नपि जीवस्यैव न त्वीश्वरस्य ॥११॥ सा माया निवृत्तिधर्मेण वासुदेवकृपया भक्तियोगेन च शनैस्तिरोधत्ते ॥ १२ ॥ यदेश्वरे इंद्रियोपरमो भवेत् तदा क्लेशा विलीयन्ते ॥१३॥ हरिगुणानुवादः श्रवणं च सर्वक्लेशनाशं करोति किं पुनस्तच्चरणसेवा ॥१४॥ विदुर उवाच॥ हे मैत्रेय ! ईशस्य कर्तृत्वादि जीवस्य संसारः इदं कथम् एवं यः संशयः स तु गतः । अधुनेशस्वातन्त्र्ये जीवपारतन्त्र्ये मे मनो धावति॥१६॥

किंच एतद् दुर्भगत्वादि मायाश्रयं त्वयोक्तं तत् साधु ॥ १६ ॥ यो लोकेऽतिमूढो यश्चेश्वरं प्राप्तः तौ सुखं जीवतः अन्तरितः क्लिश्यति ॥१७॥ अपि च अत्र भवे अर्थो नास्ति किंतु प्रतीतिर्वर्तते ॥ साऽपि भवच्चरणसेवया गच्छेत् ॥ १८ ॥ भगवत्पादयोः प्रेमोत्सवः संसारं नाशयति ॥ १९ ॥ भगवद्भक्तेषु स्वल्पतपसः सेवा दुरापा ॥२०॥ अपि च यो महत्तत्त्वाद्यंशैर्विराजं सृष्ट्वा तदनु तं प्राविशत् ॥२१॥ यं सहस्रा-

साध्वेतद्व्याहृतं विद्वन्नात्ममायायनं हरेः ॥आभात्यपार्थं निर्मूलं विश्वमूलं न यद्बहिः ॥ १६ ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ॥ तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १७ ॥ अर्थाभावं विनिश्चित्य प्रतीतस्यापि नात्मनः ॥ तां चापि युष्मच्चरणसेवयाऽहं पराणुदे ॥ १८ ॥ यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ॥ रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दनः ॥ १९ ॥ दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ॥ यत्रोपगीयते नित्यं देवदेवो जनार्दनः ॥ २० ॥ सृष्ट्वाऽग्रे महदादीनि सविकाराण्यनुक्रमात् ॥ तेभ्यो विराजमुद्धृत्य तमनुप्राविशद् विभुः ॥२१॥ यमाहुराद्यं पुरुषं सहस्राङ्घ्र्यूरुबाहुकम् ॥ यत्र विश्व इमे लोकाः सविकाशं समासते ॥२२॥ यस्मिन्दशविधः प्राणः सेन्द्रियार्थेन्द्रियस्त्रिवृत् ॥त्वयेरितो यतो वर्णास्तद्विभूतीर्वदस्व नः ॥२३॥ यत्र पुत्रैश्च पौत्रैश्च नप्तृभिः सह गोत्रजैः ॥ प्रजा विचित्राकृतय आसन्याभिरिदं ततम् ॥२४॥ प्रजापतीनां स पतिश्चक्लृपे कान्प्रजापतीन् ॥ सर्गांश्चैवानुसर्गांश्च मनून्मन्वन्तराधिपान् ॥ २५ ॥ एतेषामपि वंशांश्च वंश्यानुचरितानि च ॥ उपर्यधश्च ये लोका भूमेर्मित्रात्मजासते ॥ २६ ॥ तेषां संस्थां प्रमाणं च भूर्लोकस्य च वर्णय ॥ तिर्यङ्मानुषदेवानां सरीसृपपतत्रिणाम् ॥ ❋ वद नः सर्गसंव्यूहं गार्भस्वेदद्विजोद्भिदाम् ॥२७॥

ङ्घ्र्यूरुबाह्वादिविशिष्टं वदन्ति यत्रेमे लोकाः असंकोचेन तिष्ठन्ति ॥ २२ ॥ त्वया यस्मिन् प्राणेन्द्रियार्थादिरुक्तः तस्य विभूतीर्वद ॥२३॥ यासु विभूतिषु विश्वं पुत्रपौत्रादिभिर्व्याप्तम् ॥२४॥ स ब्रह्मा यान् प्रजापतीन् सर्गान् अनुसर्गान् मनून् मन्वन्तराधिपान् ससर्ज ॥२५॥ तेषां वंशान् वंश्यानुचरितं च त्रिलोकानां प्रमाणं तिर्यङ्मनुष्यदेवसरीसृपपक्षिणां चतुर्विधप्राणिनामुत्पत्तिं वद ॥ २६ ॥ २७ ॥

१ स्वाज्ञानाद्वयतिरिक्तम् । २ नात्मनः प्रपञ्चस्य । ३ यतो विराजो वर्णा उक्ताः । ४ ब्रह्माद्या विसर्गशब्दवाच्याः । ५ सन्निवेशम् । ❋ संप्रदायं कलेर्धर्मं श्रीवैष्णवमतं तथा । इत्यधिकः पाठः ।

भगवद्गुणावताराणां विक्रमम्॥२८॥वर्णाश्रमविभागान् ऋषीणां जन्मकर्म वेदविभागान्॥२९॥यज्ञविस्तारान् योगज्ञानसांख्यानां मार्गान् वद ॥३०॥ पाखण्डप्रवृत्तिं जीवस्य गतिं धर्मार्थकाममोक्षोपायान् कृषिवाणिज्यदण्डनीत्यादीनां विधिम् ॥३१॥ ॥३२॥ श्राद्धविधिं पितॄणां सर्गं ग्रह नक्षत्रादीनां स्थितिम्॥३३॥दानस्य तपस इष्टापूर्तयोश्च फलं प्रवासधर्ममापदि धर्मम् ॥३४॥ येन जनार्दनस्तुष्येत् प्रसीदति तद् ब्रूहि ॥ ३५ ॥

गुणावतारैर्विश्वस्य सर्गस्थित्यप्ययाश्रयम् ॥ सृजतः श्रीनिवासस्य व्याचक्ष्वोदारविक्रमम् ॥ २८ ॥ वर्णाश्रमविभागांश्च रूपशीलस्वभावतः ॥ ऋषीणां जन्मकर्मादि वेदस्य च विकर्षणम् ॥ २९ ॥ यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ नैष्कर्म्यस्य च सांख्यस्य तन्त्रं वा भगवत्स्मृतम् ॥ ३० ॥ पाखण्डपथवैषम्यं प्रतिलोमनिवेशनम् ॥ जीवस्य गतयो याश्च यावतीर्गुणकर्मजाः ॥३१॥ धर्मार्थकाममोक्षाणां निमित्तान्यविरोधतः ॥ वार्ताया दण्डनीतेश्च श्रुतस्य च विधिं पृथक् ॥३२॥ श्राद्धस्य च विधिं ब्रह्मन्पितॄणां सर्गमेव च ॥ ग्रहनक्षत्रताराणां कालावयवसंस्थितिम् ॥ ३३ ॥ दानस्य तपसो वाऽपि यच्चेष्टापूर्तयोः फलम् ॥ प्रवासस्थस्य यो धर्मो यश्च पुंस उतापदि ॥३४॥ येन वा भगवांस्तुष्येद्धर्मयोनिर्जनार्दनः ॥ संप्रसीदति वा येषामेतदाख्याहि चानघ ॥ ३५ ॥ अनुव्रतानां शिष्याणां पुत्राणां च द्विजोत्तम ॥ अनापृष्टमपि ब्रूयुर्गुरवो दीनवत्सलाः ॥ ३६ ॥ तत्त्वानां भगवंस्तेषां कतिधा प्रतिसंक्रमः ॥ तत्रेमं क उपासीरन्क उ स्विदनुशेरते ॥ ३७ ॥ पुरुषस्य च संस्थानं स्वरूपं वा परस्य च ॥ ज्ञानं च नैगमं यत्तद्गुरुशिष्यप्रयोजनम् ॥ निमित्तानि च तस्येह प्रोक्तान्यनघ सूरिभिः ॥ ३८ ॥ स्वतो ज्ञानं कुतः पुंसां भक्तिर्वैराग्यमेव वा ॥ एतान्मे पृच्छतः प्रश्नान्हरेः कर्मविवित्सया ॥ ब्रूहि मेऽज्ञस्य मित्रत्वादजया नष्टचक्षुषः ॥ ३९ ॥

हे मैत्रेय ! दीनवत्सला गुरवः शिष्याणां पुत्राणां चापृष्टमपि यत् योग्यं तत् ब्रूयुः ॥३६॥ तत्त्वानां प्रलयं पुरुषस्य संस्थानं जीवस्य तत्त्वमौपनिषदं ज्ञानं ज्ञानस्य साधनानि॥३७॥३८॥एतान् प्रश्नान् हरेः कर्म ज्ञातुमिच्छया मया कृतान् त्वं मायया नष्टचक्षुषो मे ब्रूहि ॥ ३९ ॥

१ प्रतिलोमविवाहादिलक्षणम् ।

वेदयज्ञतपआदयः सर्वे तत्त्वोपदेशेन जीवाभयप्रदानस्य कलामपि न कुर्वीरन् ॥४०॥ श्रीशुक उवाच ॥ इति विदुरेण पृष्टः सन् मैत्रेयः सर्वं कथयामास ॥४१॥ इति श्रीभागवते चू० तृतीयस्कन्धे सप्तमोऽध्यायः ॥७॥ अष्टमे समभूद्ब्रह्मा नाभेस्तु जलशायिनः ॥ तमजानञ्जले बिभ्यत्तपसाऽतोषयद्विभुम् ॥१॥ मैत्रेय उवाच ॥ हे विदुर ! अहो अयं पूरुवंशः सद्भिः सेव्यः यस्मिन् वंशे लोकपालस्त्वं भूत्वा भगवत्कीर्तिं पदे पदे नूतन-

सर्वे वेदाश्च यज्ञाश्च तपोदानानि चानघ ॥ जीवाभयप्रदानस्य न कुर्वीरन्कलामपि ॥४०॥ श्रीशुक उवाच ॥ स इत्थमापृष्टपुराणकल्पः कुरुप्रधानेन मुनिप्रधानः ॥ प्रवृद्धहर्षो भगवत्कथायां संचोदितस्तं प्रहसन्निवाह ॥ ४१ ॥ इति श्रीभा० म० तृती० विदुरोक्तप्रश्नविधिवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥ मैत्रेय उवाच ॥ सत्सेवनीयो बत पूरुवंशो यल्लोकपालो भगवत्प्रधानः[1] ॥ बभूविथेहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् ॥ १ ॥ सोऽहं नृणां क्षुल्लसुखाय दुःखं महद्गतानां विरमाय तस्य ॥ प्रवर्तये भागवतं पुराणं यदाह साक्षाद्भगवानृषिभ्यः॥२॥ आसीनमुर्व्यांभगवन्तमाद्यं संकर्षणं देवमकुण्ठसत्त्वम् ॥ विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन्[3] ॥ ३ ॥ स्वमेव धिष्ण्यं बहु मानयन्तं यं वासुदेवाभिधमामनन्ति ॥ प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं[2] विबुधोदयाय ॥ ४ ॥ स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम् ॥ पद्मं यदर्चन्त्यहिराजकन्याः सप्रेम नानाबलिभिर्वरार्थाः ॥ ५ ॥ मुहुर्गृणन्तो वचसाऽनुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः ॥ किरीटसाहस्रमणिप्रवेक प्रद्योतितोद्दामफणासहस्रम् ॥ ६ ॥

यसि ॥१॥ अतोऽहं नृणां दुःखनाशाय महासुखप्राप्तये भागवतं पुराणं प्रारभे यत् संकर्षणः कुमारान् कथयामास ॥२॥ तदेवाह । एकदा सनकादयस्तत्त्वं ज्ञातुमिच्छया पातालतले आसीनमाद्यं संकर्षणं पप्रच्छुः॥३॥ कथंभूतं तं स्वीयमाश्रयं सर्वोत्कर्षेण पूजयन्तं कृपावलोकेन सनकादीनामभ्युदयार्थं नेत्रे उन्मीलयन्तम् ॥४॥ तादृशमनन्तं दृष्ट्वा गङ्गोदकेनार्द्रैर्जटाकलापैस्तच्चरणं नमन्तः॥५॥ तत्कृतानि कर्माणि गृणन्तःसंकर्षणं

१ भगवानेव प्रधानभूतो यस्य । २ प्रत्यग्धृतमन्तर्मुखीकृतम् । ३ अन्वपृच्छन्निति (तृतीयश्लोके) पदेनान्वयः ।

पप्रच्छुः ॥६॥ तदा संकर्षणो निवृत्तिधर्माभिरतं सनत्कुमारं वदति स्म। सनत्कुमारः सांख्यायनाय वदति स्म॥७॥सांख्यायनो मम गुरवे पराशराय
बृहस्पतये च॥८॥पराशरो मह्यं कथयामास अहं तद् भागवतं हे विदुर! ते श्रद्धालवे कथयामि॥९॥ ! हे विदुर! यदा विश्वमेकार्णवोदके निम-
ग्नमासीत् तदा मायाविनोदं परित्यज्य भुजगेन्द्रतल्पे शयानः श्रीनारायणो नेत्रे निमील्य तस्मिन् सलिले उवास यथा काष्ठे रुद्धवीर्योऽग्निः

प्रोक्तं किलैतद्भगवत्तमेन निवृत्तिधर्माभिरताय तेन ॥ सनत्कुमाराय स चाह पृष्टः सांख्यायनायाङ्ग धृतव्रताय
॥७॥ सांख्यायनः पारमहंस्यमुख्यो विवक्षमाणो भगवद्विभूतीः ॥ जगाद सोऽस्मद्गुरवेऽन्विताय पराशरायाथ बृहस्प-
तेश्च ॥८॥ प्रोवाच मह्यं स दयालुरुक्तो मुनिः पुलस्त्येन पुराणमाद्यम् ॥ सोऽहं तवैतत्कथयामि वत्स श्रद्धालवे नित्य-
मनुव्रताय ॥ ९ ॥ उदाप्लुतं विश्वमिदं तदाऽऽसीद्यन्निद्रयाऽमीलितदृङ्न्यमीलयत् ॥ अहीन्द्रतल्पेऽधिशयान एकः
कृतक्षणः स्वात्मरतौ निरीहः ॥१०॥ सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः ॥ उवास तस्मि-
न्सलिले पदे स्वे यथाऽनलो दारुणि रुद्धवीर्यः ॥ ११ ॥ चतुर्युगानां च सहस्रमप्सु स्वपन्स्वयोदीरितया स्वशक्त्या ॥
कालाख्ययाऽऽसादितकर्मतन्त्रो लोकानपीतान्ददृशे स्वदेहे ॥ १२ ॥ तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा
तनीयान् ॥ गुणेन कालानुगतेन विद्धः सूष्यंस्तदाऽभिद्यत नाभिदेशात् ॥ १३ ॥ स पद्मकोशः सहसोदतिष्ठत्कालेन
कर्मप्रतिबोधनेन ॥ स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ १४ ॥ तल्लोकपद्मं स उ एव विष्णुः
प्रावीविशत्सर्वगुणावभासम् ॥ तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदन्ति सोऽभूत् ॥ १५ ॥



॥१०॥११॥ स चतुर्युगसहस्रं योगनिद्रयाऽप्सु स्वपन् स्वदेहे लीनान् लोकान् ददर्श ॥१२॥ यदा च भगवतो लोकसिसृक्षा जाता तदा तन्नाभि-
तः कमलं प्रादुर्बभूव ॥ १३ ॥ तत् कमलं स्वतेजसा सूर्य इव विशालं तज्जलं प्राकाशयत् ॥१४॥ तत् पद्मं यस्माज्जातं स एव विष्णुस्त-

१ अतिरोहितचिच्छक्तिरेव । २ कृतोत्सवः । ३ आसादितं प्राप्तम् । ४ अर्थसूक्ष्मेऽभिनिविष्टा दृष्टिर्यस्य तस्य । ५ रजोगुणेन क्षोभितः । ६ अतिसूक्ष्मः । ७ प्रसोष्यन् । ८ जीवभोग्यानर्थानवभासयतीति तत् ।

स्मिन् कमले ब्रह्मरूपो बभूव यं स्वयंभुवं वदन्ति॥१५॥स पद्मकर्णिकायां स्थितो लोकमपश्यन् प्रतिदिशमीक्षणेन चत्वारि मुखानि लेभे॥१६॥ ततस्तत्प्रलयोदकान्निस्सृतं कमलमाश्रितोऽपि तत् पद्मं लोकतत्त्वमात्मानं च साक्षात् न ज्ञातवान् ॥ १७ ॥ तदाह योऽसावहं कमलपृष्ठे एष कः । एकमेव चैतदब्जमप्सु कुतो वा जातं यत्रैतत् पद्मं तदधस्तात् किंचिदस्ति॥१८॥स एवं विचार्य तत्कमलनाडीद्वाराऽन्तर्जलं प्रविश्य बहु-

तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः॥ परिक्रमन्व्योम्नि निवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥ तस्माद्युगान्तश्वसनावघूर्णजलोर्मिचक्रात्सलिलाद्विरूढम् ॥ उपाश्रितः कञ्जमु लोकतत्त्वं नात्मानमद्धाऽविददादिदेवः॥१७॥क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाऽब्जमनन्यदप्सु ॥ अस्ति ह्यधस्तादिह किंचनैतदधिष्ठितं यत्र सताऽनुभाव्यम् ॥ १८ ॥ स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश ॥ नार्वाग्गतस्तत्खरनालनालनाभिं विचिन्वंस्तदविन्दताजः॥१९॥ तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः ॥ यो देहभाजां भयमीरयाणः परिक्षिणोत्यायुरजस्य हेतिः ॥ २० ॥ ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः ॥ शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥ २१ ॥ कालेन सोऽजः पुरुषायुषाभिप्रवृत्तयोगेन विरूढबोधः ॥ स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्यत यन्न पूर्वम् ॥ २२ ॥ मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् ॥ फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ २३ ॥ प्रेक्षां क्षिपन्तं हरितोपलाद्रेः संध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ॥ रत्नोदधारौषधिसौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥ २४ ॥

कालं वर्षशतं विचिन्वन् स्वस्योत्पत्तिकारणं न ज्ञातवान् ॥१९॥ एवं स्वकारणं विचिन्वतस्तस्य महान् कालोऽभूत् ॥ २० ॥ पुनः कमलं प्राप्य तत्र स्थित्वा समाधिस्थो बभूव ॥ २१ ॥ तदा पूर्वं यं संवत्सरशतं विचिन्वन्नपि नापश्यत् तं स्वयमेवान्तर्हृदयेऽपश्यत् ॥ २२ ॥ कथंभूतं तम् । शेष पर्यङ्के शयानमेकं मरकतश्यामं पीताम्बरं वनमालिनम् ॥ २३ ॥ २४ ॥

१ खरनालं पद्मम् । २ चातुर्मास्यरूपास्त्रिस्रो नेमयो यस्य स कालः । ३ शोभाम् । ४ तिरस्कुर्वन्तमात्मशोभातिशयेन । ५ रत्नानि उदकधाराः ओषधयः सौमनस्यानि च वनस्रजो यस्य तस्य । ६ वेणुरूपभुजस्य वृक्षरूपचरणस्य च ।

स्वमानेन सार्धत्रयहस्तविस्तीर्णदेहं विचित्रदिव्याभरणम् ॥२५॥ कामनया भजतां पुंसां कामदुघाङ्घ्रिपद्मं कृपया प्रदर्शयन्तम् ॥२६॥ परिस्फुरत्कुण्डलमण्डितेन स्मितमुखेन पूजकान् संमानयन्तम् ॥२७॥ मेखलया हारेण श्रीवत्सेन च स्वलंकृतम् ॥२८॥ अमूल्याङ्गदैर्व्याप्तदोर्दण्डं ब्रह्ममूलं शेषस्य फणैः संवेष्टितस्कन्धम् ॥२९॥ चराचराणां स्थानं कौस्तुभधरं सूर्यचन्द्रादिभिः स्वव्यापारैरगम्यं हरिं ददर्श ॥ ३० ॥ ३१ ॥

आयामतो विस्तरतःस्वमानदेहेन लोकत्रयसंग्रहेण ॥ विचित्रदिव्याभरणांशुकानां कृताश्रिया ऽपाश्रितवेषदेहम् ॥ २५ ॥ पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघाङ्घ्रिपद्मम् ॥ प्रदर्शयन्तं कृपया नखेन्दुमयूखभिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥ मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन ॥ शोणायितेनाधरबिम्बभासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २७ ॥ कदम्बकिञ्जल्कपिशङ्गवाससा स्वलंकृतं मेखलया नितम्बे ॥ हारेण चानन्तधनेन वत्स श्रीवत्सवक्षःस्थलवल्लभेन ॥२८॥ परार्ध्यकेयूरमणिप्रवेकपर्यस्तदोर्दण्डसहस्रशाखम् ॥ अव्यक्तमूलंभुवनाङ्घ्रिपेन्द्रमहीन्द्रभोगैरधिवीतवल्शम् ॥ २९ ॥ चराचरौको भगवान्महीध्रमहीन्द्रबन्धुं सलिलोपगूढम् ॥ किरीटसाहस्रहिरण्यशृङ्गमाविर्भवत्कौस्तुभरत्नगर्भम् ॥३०॥ निवीतमाम्नाय मधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम् ॥ सूर्येन्दुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥ ३१ ॥ तर्ह्येव तन्नाभिसरस्सरोजमात्मानमम्भः श्वसनं वियच्च ॥ ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः ॥३२॥ स कर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा ॥ अस्तौद्विसर्गाभिमुखस्तमीड्यमव्यक्तवर्त्मन्यभिवेशितात्मा ॥ ३३ ॥ इति श्रीभागवते महापुराणे तृतीयस्कन्धे ब्रह्मकृतं सर्वोत्कृष्टश्रीमन्नारायणस्वरूपवर्णनं नाम अष्टमोऽध्यायः ॥ ८ ॥



तदैव लोकविसर्गदृष्टिः सन् तस्य नाभिसरसि पद्ममात्मानं जलं प्रलयवायुमाकाशं च ददर्श ॥३२॥ तदा भगवति प्रवेशितचित्तः सन् विभुं तुष्टाव ॥ ३३ ॥ इति श्रीभागवते चू० तृतीये० अष्टमोऽध्यायः ॥ ८ ॥

१ कृता आ समन्तात् श्रीर्येन तेन । २ अपाश्रितः स्वीकृतः । ३ श्रीवत्सयुक्तं वक्षःस्थलम् । ४ कंकणादिषु विद्यमानाः मणिश्रेष्ठाः पर्यस्ता व्याप्ताः । ५ 'भगवत्' इ० पा० । ६ नाभिसरोजादिपञ्चकावन्यत्

नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः ॥ अस्तौदेकार्णवे सीदन् लोकसर्गचिकीर्षया ॥ १ ॥ ब्रह्मोवाच ॥ हे भगवन्! बहुकालोपासनेन मयाऽद्य त्वं ज्ञातोऽसि। मायागुणक्षोभात् त्वं बहुरूपो भासि ॥ १ ॥ हे ईश! त्वयैतद्रूपमुपासकानामनुग्रहायाविष्कृतं यन्नाभितोऽहमासम् ॥ २ ॥ हे परम! निर्भेदमानन्दमात्रं यत् स्वरूपं तद्भिना भिन्नं न पश्यामि अतस्तवेदं रूपं श्रितोऽस्मि ॥३॥ इदं भुवनमङ्गलं रूपमुपासका-

ब्रह्मोवाच ॥ ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम् ॥ नान्यंत्त्वदस्ति भगवन्नपि तन्न शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि ॥ १ ॥ रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्ततमसः सदनुग्रहाय ॥ आदौ गृहीतमवतारशतैकबीजं यन्नाभिपद्मभवनादहमाविरासम् ॥ २ ॥ नातः परं परम यद्भवतः स्वरूपमानन्दमात्रमविकल्पमविद्धवर्चः ॥ पश्यामि विश्वसृजमेकमविश्वमात्मन् भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥ ३ ॥ तद्वा इदं भुवनमङ्गलमङ्गलाय ध्याने स्म नो दर्शितं त उपासकानाम् ॥ तस्मै नमो भगवतेऽनुविधेम तुभ्यं योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः ॥ ४ ॥ ये तु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ॥ भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम् ॥ ५ ॥ तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः ॥ तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ६ ॥ दैवेन ते हतधियो भवतः प्रसङ्गात्सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये ॥ कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥ ७ ॥

नां मङ्गलाय ध्याने त्वया दर्शितम्। तस्मै भगवते नमः ॥ ४ ॥ ये तु त्वत्कथाश्रवणमत्यादरेण कुर्वन्ति तेषां हृदि नित्यं त्वं प्रकाशसे ॥ ५ ॥ किं च यावल्लोकोऽभयं ते पादमूलं नाश्रयेत् तावद् द्रव्यगृहसुहृन्निमित्तं भयं शोकस्पृहादयो भवन्ति ॥६॥ ये त्वत्कथाश्रवणादिषु विमुखाः सन्तः काम्यकर्माणि ते कुर्वंति ते नष्टमतयः ॥ ७ ॥

१ ज्ञातुं योग्यमिति शेषः। २ यद्यपि किंचिदस्ति तत्। ३ तवेति शेषः।

हे हरे ! क्षुत्तृटशीतोष्णवातादिभिः पीड्यमानाः प्रजाः दृष्ट्वा मे मनसीदति॥८॥जनो यावद् देहादिभावमहन्तया पश्येत् तावत् जन्ममरणात् नोपरमेत ॥९॥ हे देव ऋषयोऽपि युष्मत्प्रसङ्गविमुखा ये ते दैवेन हतार्थोद्यमा इह संसरंति॥१०॥हे नाथ ! त्वं भक्तानां हृत्कमले तिष्ठसि किंच भक्ता यद्यत् तव रूपं स्वेच्छयाध्यायन्ति तत् रूपं तेषामनुग्रहाय प्रकटयसि॥११॥यथा सर्वभूतेषु दयया त्वं तुष्यसि तथा सकामिकैर्देवगणैर्बहुपूजो

क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः शीतोष्णवातवर्षैरितरेतराच्च ॥ कामाग्निनाऽच्युत रुषा च सुदुर्भरेण सपश्यतो मन उरुक्रम सीदते मे ॥ ८ ॥ यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थमायाबलं भगवतो जन ईश पश्येत् ॥ तावन्न संसृतिरसौ प्रतिसंक्रमेत व्यर्थाऽपि दुःखनिवहं वहती क्रियार्था ॥ ९ ॥ अह्न्यापृतार्तकरणा निशि निश्शयाना नानामनोरथधिया क्षणभग्ननिद्राः ॥ दैवाहतार्थरचना ऋषयोऽपि देव युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥ १० ॥ त्वं भावयोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् ॥ यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥ ११ ॥ नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः ॥ यत्सर्वभूतदययाऽसदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ १२ ॥ पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च ॥ आराधनं भगवतस्तव सत्क्रियाऽर्थो धर्मोऽर्पितः कर्हिचिद् ध्रियते न यत्र ॥ १३ ॥ शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः परस्मै ॥ विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय ॥१४॥ यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति ॥ तेऽनेकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥ १५ ॥

पहारैराराधितो नातिप्रसीदसि॥१२॥कामिकानां यज्ञदानतपआदिभिर्मनोरथप्राप्तिर्भवति ईश्वराराधनमेवश्रेष्ठं फलम्॥१३॥अतःसर्वदा चैतन्यस्वरूपेणनिरस्तभेदभ्रमायेश्वराय ते वयंनमनं कुर्मः॥१४॥प्राणान्तसमये ये तव नामानि गृणन्ति तेऽनेकजन्मपापं तदैव त्यक्त्वा तवपदं प्राप्नुवन्ति।१५॥

१ वातपित्तश्लेष्माणस्त्रयो धातवः । २ परिभावितं परिशोधितम् 'परिभासित' इ० पा० । ३ यस्मिंस्त्वयि । ४ निरस्तावरणम् । ५ ब्रह्म ।

त्रयो ब्रह्मादयः स्कन्धा यस्य मरीच्यादिमन्वादिरूपाः शाखोपशाखा यस्य तथाभूतः सन् यो वृक्षः एको ववृधे तस्मै भुवनाकाराय वृक्षाय नमः ॥१६॥ हे ईश ! लोकस्त्वत्पूजनरूपे कर्मणि यावदत्तचित्तः प्रवर्तते तावत् कालः तल्लोकस्य जीविताशां छिनत्ति ॥१७॥ आस्तां तावल्लोकस्य कथा । अहमपि द्विपरार्धाख्यस्थानं समारूढोऽपि भीतः सन् त्वामेव प्राप्तुमिच्छन् तपस्तप्तवान् तस्मै ते नमः ॥१८॥ यः स्वधर्ममर्यादापा-

योऽवा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममूलम् ॥ भित्त्वा त्रिपाद्ववृध एक उरुप्ररोह-स्तस्मै नमो भगवते भुवनद्रुमाय ॥ ॥ १६ ॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ १७ ॥ यस्माद्बिभेम्यहमपि द्विप-रार्धधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत् ॥ तेपे तपो बहुसवोऽवरुरुत्समानस्तस्मै नमो भगवतेऽधिम-खाय तुभ्यम् ॥ १८ ॥ तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः ॥ रेमे निरस्त-रतिरप्यवरुद्धदेहस्तस्मै नमो भगवते पुरुषोत्तमाय ॥ १९ ॥ योऽविद्ययाऽनुपहतोऽपि दशार्धवृत्त्या निद्रामुवाह जठरीकृतलोकयात्रः ॥ अन्तर्जले हि कशिपुस्पर्शानुकूलां भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ॥ २० ॥ यन्नाभिपद्मभवनादहमाससमीड्य लोकत्रयोपकरणो यदनुग्रहेण ॥ तस्मै नमस्त उदरस्थभवाय योगनिद्रावसानवि-कसन्नलिनेक्षणाय ॥ २१ ॥ सोऽयं समस्तजगतां सुहृदेक आत्मा सत्त्वेन यन्मृडयते भगवान्भगेन ॥ तेनैव मे दृशमनुस्पृशताद्यथाऽहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥ २२ ॥

लनार्थं देवतिर्यङ्मनुष्यादियोनिषु कृतावतारः सन् रेमे तस्मै पुरुषोत्तमाय नमः ॥ १९ ॥ किंच निद्रया अनभिभूतोऽपि यः स्वोदरे विश्वं प्रविलाप्य जलमध्ये शेषशय्यायां निद्रां चकार । किं कुर्वन् । अज्ञानजनस्य निद्रासुखमीदृगिति प्रदर्शयन् ॥ २० ॥ यन्नाभिकमलात् सृष्टि-कर्ताऽहंयदनुग्रहेणासं तस्मै ते नमः ॥ २१ ॥ एवं स्तुत्वा प्रार्थयते । हे ईश ! यथाऽहं विश्वं स्रष्टुं समर्थो भविष्यामि तथा अनुग्रहः क्रिय-

१ बहुकालं बहुयागान्कृत्वा वा । २ तामिस्रमन्धतामिस्रं तमो मोहो महातम इति पञ्च वृत्तयो यस्यास्तया ।

ताम् ॥ २२ ॥ किंच इदं तवाज्ञया सृजतोऽपि मे चेतोऽग्रे त्वमेव प्रवर्तय ! सृष्टिनिमित्तजं पापं यथा त्यक्ष्यामि तथा क्रियताम् ॥ २३ ॥
तस्मादहमुत्पन्नस्तस्यानन्तशक्तेर्विचित्रं रूपं विस्तारयतो मे वाणी मा लुप्यताम् ॥ २४ ॥ सोऽसौ भगवान् नेत्रकमलमुद्घाटयन् विश्वोद्भवा-
यास्मदनुग्रहाय चोत्थाय मधुरवाण्या नः खेदं दूरीकरोतु ॥ २५ ॥ मैत्रेय उवाच । ब्रह्मैवं स्तुत्वा श्रान्तवद् विरराम ॥ २६ ॥ तदा भगवान्

एष प्रपन्नवरदो रमयाऽऽत्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः ॥ तस्मिन्स्वविक्रममिदं सृजतोऽपि चेतो
युञ्जीत कर्मशमलं च यथा विजह्याम् ॥ २३ ॥ नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्त-
शक्तेः ॥ रूपं विचित्रमिदमस्य विवृण्वतो मे मारीरिषीष्ट निगमस्य गिरां विसर्गः ॥ २४ ॥ सोऽसावदभ्रकरुणो
भगवान् विवृद्धप्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ॥ उत्थाय विश्वविजयाय च नो विषादं माध्व्या गिराऽपन-
यतात्पुरुषः पुराणः ॥ २५ ॥ मैत्रेय उवाच ॥ स्वसंभवं निशाम्यैवं तपोविद्यासमाधिभिः ॥ यावन्मनोवचः स्तुत्वा
विरराम स खिन्नवत् ॥ २६ ॥ अथाभिप्रेतमन्वीक्ष्य ब्रह्मणो मधुसूदनः ॥ विषण्णचेतसा तेन कल्पव्यतिकराम्भसा
॥ २७ ॥ लोकसंस्थानविज्ञान आत्मनःपरिखिद्यतः ॥ तमाहागाधया वाचा कश्मलं शमयन्निव ॥ २८ ॥ श्रीभग-
वानुवाच ॥ मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यममावह ॥ तन्मयाऽऽपादितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥ भूय-
स्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम् ॥ ताभ्यामन्तर्हृदि ब्रह्मँल्लोकान्द्रक्ष्यस्यपावृतान् ॥ ३० ॥ तत आत्मनि
लोके च भक्तियुक्तः समाहितः ॥ द्रष्टासि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनः ॥ ३१ ॥

ब्रह्मणोऽभिप्रायं ज्ञात्वा प्रलयोदकेन विषण्णचेतसं ब्रह्माणं मोहं शमयन्निव प्राह ॥ २७ ॥ २८ ॥ श्रीभगवानुवाच । हे वेदगर्भ ! त्वमालस्यं
मा कुरु सर्गोद्यममावह त्वं यत् मां प्रार्थयसे तत् मयाऽग्रे संपादितम् ॥२९॥ त्वं भूयस्तपो मदाश्रयां विद्यां चातिष्ठ । ताभ्यां स्वहृद्यपावृ-
तान् लोकान् पश्यसि ॥ ३० ॥ ततो भक्तियुक्तः लोके च व्याप्तं मां द्रक्ष्यसि ॥ ३१ ॥

१ विष्णोर्विक्रमा यत्र । २ विश्वम् ।

यदा सर्वभूतेषु स्थितं मां पश्येत् तर्हि कश्मलं जह्यात् ॥ ३२ ॥ यदा भूतेन्द्रियगुणाशयै रहितं जीवं मयैकीभूतं पश्येत् मोक्षं प्राप्नोति॥३३॥ नानाकर्मविस्तारेण बह्वीः प्रजाः सिसृक्षतस्तव देहः श्रमं न प्राप्स्यति॥३४॥त्वया मनो मयि निबद्धम् । अतो रजोगुणस्त्वां न बध्नाति॥३५॥ अद्य त्वया देहिनां दुर्विज्ञेयोऽप्यहं ज्ञातः ॥३६॥ किंच सलिले पद्मस्य मूलं विचिन्वतस्तव मया स्वरूपं दर्शितम्॥३७॥ हे ब्रह्मन् ! मत्कथाभ्यु-

यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम् ॥ प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम् ॥ ३२ ॥ यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ॥ स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ॥ ३३ ॥ नानाकर्मवितानेन प्रजा बह्वीः सिसृक्षतः ॥ नात्माऽवसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ॥ ३४ ॥ ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः ॥ यन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥ ३५ ॥ ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् ॥ यन्मां त्वं मन्यसेऽयुक्तं भूतेन्द्रियगुणात्मभिः ॥ ३६ ॥ तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितोऽबहिः ॥ नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥३७॥ यच्चकर्थाङ्ग मत्स्तोत्रं मत्कथाभ्युदयांकितम् ॥यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ॥३८॥ प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया ॥ यदस्तौषीर्गुणमयं निर्गुणं माऽनुवर्णयन् ॥३९॥ य एतेन पुमान् नित्यं स्तुत्वा स्तोत्रेण मां भजेत् ॥ तस्याशु संप्रसीदेयं सर्वकामवरेश्वरः ॥४०॥ पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना ॥ राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥ ४१ ॥ अहमात्माऽत्मनां धातः प्रेष्ठः सन् प्रेयसामपि ॥ अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥४२॥ सर्ववेदमयेनेदमात्मनाऽऽत्माऽऽत्मयोनिना ॥ प्रजाःसृज यथापूर्वं याश्च मय्यनुशेरते॥४३॥

दयाङ्कितं यत् स्तोत्रं कृतवानसि यच्च तपसि ते निष्ठा यच्च हृदि मद्दर्शनम् । एष मदनुग्रहः ॥३८॥ अहं ते प्रीतोऽस्मि भद्रमस्तु ॥३९॥ यः पुमान् त्वत्कृतेन स्तोत्रेण स्तुत्वा मां भजेत् तस्य शीघ्रं प्रसन्नः स्याम् ॥४०॥ यज्ञदानतपोयोगादिभिः सिद्धं यत् फलं तत् मत्प्रीतिरेव॥४१॥ अहं सर्वेषां प्रियतमः आत्माऽस्मि । अतो मयि रतिं कुर्यात् ॥ ४२ ॥ हे ब्रह्मन् ! याः प्रजाः मयि लीनाः बभूवुः ता यथापूर्वं सृज ॥ ४३ ॥

---

१ मम पद्मस्याश्रयेण सत्त्वासत्त्वयोः संशये सति । २ आत्मा अहं योनिर्यस्य तेन ।

मैत्रेय उवाच ॥ एवं ब्रह्मणे स्वेन रूपेणेदं सृज्यं प्रकाश्य पद्मनाभोऽन्तर्दधे॥४४॥इति श्रीभा० चू० तृतीये नवमोऽध्यायः॥९॥दशमे कालसंप्रश्नं प्रतिवक्तुं तदुद्भवः ॥ प्राकृतादिविभागेन सर्गस्तु दशधोच्यते ॥१॥ विदुर उवाच ॥ भगवत्यन्तर्हिते सति ब्रह्मा दैहिकीर्मानसीश्च प्रजाः कतिधा ससर्ज ॥ १ ॥ हे मैत्रेय ! मया येऽन्ये प्रश्नाः कृताःताश्च वद ॥२॥ सूत उवाच ॥ हे शौनक ! एवं विदुरेण प्रेरितो मैत्रेयो हृदिस्थान् प्रश्नान् आह ॥३॥ मैत्रेय उवाच ॥ ततो ब्रह्माऽपि भगवान् यदाह तत् तपो दिव्यं वर्षशतं तेपे॥४॥ब्रह्मा वायुना कम्पितं पद्मं जलं च विलोक्य ॥५॥

मैत्रेय उवाच ॥ तस्मा एवं जगत्स्रष्ट्रे प्रधानपुरुषेश्वरः ॥ व्यज्येदं स्वेन रूपेण कञ्जनाभस्तिरोदधे ॥ ४४ ॥ इति श्रीभा० म० तृ० विदुरमैत्रेयसंवादे ब्रह्मणो भगवद्दर्शनं नाम नवमोऽध्यायः ॥९॥ विदुर उवाच ॥ अन्तर्हिते भगवति ब्रह्मा लोकपितामहः ॥ प्रजाः ससर्ज कतिधा दैहिकीर्मानसीर्विभुः ॥ १ ॥ ये च मे भगवन् पृष्टास्त्वय्यर्था बहुवित्तम ॥ तान् वदस्वानुपूर्व्येण छिन्धि नः सर्वसंशयान् ॥ २ ॥ सूत उवाच ॥ एवं संचोदितस्तेन क्षत्त्रा कौषारवो मुनिः ॥ प्रीतः प्रत्याह तान्प्रश्नान् हृदिस्थानथ भार्गव ॥ ३ ॥ मैत्रेय उवाच ॥ विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः ॥ आत्मन्यात्मानमावेश्य यदाह भगवानजः ॥ ४ ॥ तद्विलोक्याब्जसंभूतो वायुना यदधिष्ठितः ॥ पद्मम-म्भश्च तत्कालकृतवीर्येण कम्पितम् ॥ ५ ॥ तपसा ह्येधमानेन विद्यया चात्मसंस्थया ॥ विवृद्धविज्ञानबलो न्यपाद्वायुं सहाम्भसा ॥ ६ ॥ तद्विलोक्य वियद्व्यापि पुष्करं यदधिष्ठितम् ॥ अनेन लोकान्प्राग्लीनान्कल्पितास्मीत्यचिन्तयत ॥ ७ ॥ पद्मकोशं तदाविश्य भगवत्कर्मचोदितः ॥ एकं व्यभाङ्क्षीदुरुधा त्रिधा भाव्यं द्विसप्तधा ॥ ८ ॥ एतावाञ्जीवलोकस्य संस्थाभेदः समाहृतः ॥ धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठ्यसौ ॥ ९ ॥



तपसा विद्यया युक्तो जलेन सह वायुं सर्वं पीतवान् ॥ ६ ॥ ब्रह्मा पद्मं विलोक्यानेन प्राग्लीनान् त्रिलोकान स्रक्ष्यामीत्यचिन्तयत् ॥ ७ ॥ ततः पद्मकोशं प्रविश्य तं चतुर्दशलोकरूपेण कल्पयामास ॥ ८ ॥ जीवलोकस्य स्थानभेदः एतावानुक्तः ॥ ९ ॥

१ उरुधा बहुप्रकारेण । २ भाव्यं भवितुं योग्यम् ।

विदुर उवाच ॥ हे ब्रह्मन्! बहुरूपस्य हरेः कालाख्यं लक्षणं नो वर्णय ॥ १० ॥ मैत्रेय उवाच ॥ गुणानां परिणामः आद्यन्तशून्यः स काल इत्यभिधीयते ईश्वरस्तेन निमित्तभूतेनात्मानं विश्वरूपेण ससर्ज ॥११॥ विष्णुमायया सन्तं विश्वं ब्रह्मतन्मात्रं सत् कालनिमित्तेन पृथक् प्रकाशितम्॥१२॥यथेदानीं विश्वमस्ति तथा पूर्वमासीत् । तत्र प्राकृतादिसर्गान् शृणु । सर्गो नवविधः । प्राकृताः षट् वैकृतास्त्रयः । प्राकृतवैकृत-

विदुर उवाच ॥ यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः ॥ कालाख्यं लक्षणं ब्रह्मन्यथा वर्णय नः प्रभो ॥ १० ॥ मैत्रेय उवाच ॥ गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः ॥ पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ॥ ११ ॥ विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया ॥ ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ १२ ॥ यथेदानीं तथाऽग्रे च पश्चादप्येतदीदृशम् ॥ सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः ॥ १३ ॥ कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः ॥ आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥ द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ॥ भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ॥१५॥ चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ॥ वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ॥ १६ ॥ षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभो ॥ षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥ १७॥ रजोभाजो भगवतो लीलेयं हरिमेधसः ॥ सप्तमो मुख्यसर्गस्तु षड्विधस्तस्थुषां च यः ॥ १८ ॥ वनस्पत्यौषधिलतात्वक्सारा वीरुधो द्रुमाः ॥ उत्स्रोतसस्तमःप्राया अन्तस्स्पर्शा विशेषिणः ॥ १९ ॥ तिरश्चामष्टमः सर्गः सोऽष्टाविंशतिधा मतः ॥ अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः ॥ २० ॥

योर्यः स दशमः सर्गः ॥१३॥ आद्यो महतः सर्गः ॥१४॥ अहंकारस्य द्वितीयः सर्गः । महाभूतानां तृतीयः सर्गः॥१५॥ इंद्रियाणां चतुर्थः सर्गः।देवतानां पञ्चमः॥१६॥पञ्च पर्वाविद्यायास्तमसः षष्ठः।एते षट् प्राकृताः । वैकारिकान् शृणु॥१७॥वृक्षाणां सर्वः सप्तमः स षड्विधः॥१८॥ वनस्पतयः १ औषधयः २ लताः ३ त्वक्साराः ४ वीरुधः ५ द्रुमाः ६ इति ॥१९॥ अथ पशुपक्षिणामष्टमः सर्गः । चाष्टाविंशतिधा॥२०॥

---

१ गुणव्यतिकरो महदादिपरिणामस्तेन विक्रियते यः कालः । २ श्वस्तनादिज्ञानशून्याः । ३ आहारादिज्ञानमात्रनिष्ठाः । ४ हृदि अवेदिनः दीर्घानुसंधानरहिताः ।

गौः१ अजः २ महिषः३ हरिणः४सूकरः ५ गवयः ६ रुरुः ७ मेषः ८ उष्ट्रः ९ एते द्विशफा नव॥२१॥खरः १ अश्वः२ अश्वतरः ३ गौरः४शरभः५ चमरी ६ एते एकशफाः॥पञ्चनखान् शृणु॥२२॥ श्वा १ शृगालः २ वृकः ३ व्याघ्रः ४ मार्जारः ५ शशः ६ शल्लकः७ सिंहः ८ कपिः ९गजः१० कूर्मः ११ गोधा१२ मकरादयः१३॥२३॥कङ्कः १ गृध्रः २ वटः ३ श्येनः ४ भासः ५ भल्लूकः ६ बर्ही७ हंसः८ सारसः९ चक्रवाकः१० काकः ११ उल्लूकादयः १२ एते पक्षिणः । एवमष्टाविंशतिभेदाः ॥२४॥ नृणां सर्गो नवमः स च स्त्रीपुरुषात्मकः एकविधः ॥ नराः रजोऽधिकाः दुःखे

गौरजो महिषः कृष्णः सूकरो गवयो रुरुः ॥ द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥ २१ ॥ खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ॥ एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून् ॥ २२॥ श्वा शृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ ॥ सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २३ ॥ कङ्कगृध्रवटश्येनभासभल्लूकबर्हिणः हंससारसचक्राह्वकाकोल्लूकादयः खगाः ॥२४॥ अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ॥ रजोऽधिकाः कर्मपरा दुखे च सुखमानिनः २५ ॥ वैकृतास्त्रय एवैते देवसर्गश्च सत्तम ॥ वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः ॥ २६ ॥ देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः ॥ गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥२७॥ भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ॥ दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ॥ २८ ॥ अतः परं प्रवक्ष्यामि वंशान्मन्वन्तराणि च ॥ एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः ॥ २९ ॥ सृजत्यमोघसंकल्प आत्मैवात्मानमात्मना ॥ ३० ॥ ❀ इति श्रीभागवते महापुराणे तृतीयस्कन्धे दशविधसर्गवर्णनं नाम दशमोऽध्यायः ॥ १० ॥

च सुखमानिनः॥२५॥उभयात्मकः कुमाराणां सर्गो दशमः देवानां सर्गो वैकृत एव॥२६॥सोऽष्टविधः । देवाः १पितरः २ असुराः ३ गन्धर्वाप्सरसः ४ यक्षरक्षांसि ५ भूतप्रेतपिशाचाः ६ सिद्धचारणविद्याधराः ७ किन्नरादयः ८ इमे दश सर्गा ब्रह्मणः कृताः ॥ २७ ॥ २८ ॥ अतः परं वंशान् मन्वन्तराणि च कथयामि । एकं श्रीहरिरात्मनाऽऽत्मानं सृजति ॥२९ ॥ ३०॥ इति श्रीभागवते चू० तृती० दशमोऽध्यायः ॥१०॥



१. मकरादयो जलचराः कंकादयः खगाः अभूचरत्वेनेकीकृत्य गृहीताः । २ अधः आहारसंचारो यस्य सः । ३ देवत्वेन मनुष्यत्वेन च सृज्यः । * सदा शुद्धस्वरूपोऽसौ सर्वं भवति सैव हि ॥ गुणव्यत्यय एतस्मिन्मायावित्वादधीशितुः ॥१॥ न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेरिव ॥ देवासुरादयः क्षत्तः कल्पेऽस्मिन्ये त्र कीर्तिताः ॥२॥ त एव नामरूपाभ्यामासन्मन्वन्तरान्तरे ॥ इत्यधिकः पाठः ॥

तत एकादशे कालपरमाण्वादिलक्षणैः युगमन्वन्तरादिभ्यः कल्पमानादि वर्ण्यते ॥१॥ मैत्रेय उवाच ॥ कार्यस्यांशानां योऽन्त्यांशो यस्यांशो नास्ति यः कार्यावस्थामप्राप्तः समुदायावस्थां चाप्राप्तः स परमाणुर्विज्ञेयः ॥ १ ॥ यस्यान्त्यान्त्यांशः परमाणुस्तस्यैव कार्यमात्रस्य यदैक्यं स परममहान् ॥ २ ॥ यथा-सूक्ष्मः स्थूलश्चायं पदार्थ एवं कालोऽप्यनुमितो विभुः परमाण्वाद्यवस्थाऽन्याप्त्या व्यक्तं व्याप्नोति ॥ ३ ॥ हे विदुर ! कालमानं शृणु । सूर्यो यावता कालेन परमाणुदेशम् अतिक्रामति तावान् परमाणुकालः। यावता च द्वादशराश्यात्मकं सर्वं भुवन

मैत्रेय उवाच ॥ चरमः सद्विशेषाणामनेकोऽसंयुतः सदा ॥ परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥ १ ॥ सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ॥ कैवल्यं परममहानविशेषो निरन्तरः ॥ २ ॥ एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम ॥ संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥ ३ ॥ स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ॥ सतोऽविशेषभुग्यस्तु स कालः परमो महान् ॥ ४ ॥ अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ॥ जालार्करश्म्यवगतः खमेवानुपतन्न गाम् ॥ ५ ॥ त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः ॥ शतभागस्तु वेधः स्यात्तैस्त्रिभिस्तु लवः स्मृतः ॥ ६ ॥ निमेषस्त्रिलवो ज्ञेय आम्नातस्ते त्रयः क्षणः ॥ क्षणान् पञ्च विदुः काष्ठां लघु ता दश पञ्च च ॥ ७ ॥ लघूनि वै समाम्नाता दश पञ्च च नाडिका ॥ ते द्वे मुहूर्तः प्रहरः षड् यामाः सप्त वा नृणाम् ॥ ८ ॥

कोशमतिक्रामति तावान्कालः परममहान् ॥ ४ ॥ परमाणू द्वावणुः । अणुत्रये त्रसरेणुः । स जालार्के दृश्यते स गां न पतति ॥ ५ ॥ त्रसरेणुत्रयं त्रुटिकालः त्रुटीनां शतं वेधः वेधैस्त्रिभिर्लवः ॥ ६ ॥ लवत्रयेण निमिषः । निमिषत्रयं क्षणः । पञ्चक्षणैः काष्ठा । काष्ठाः पञ्चदश लघु ॥ ७ ॥ लघूनि पञ्चदश नाडिका । ते द्वे मुहूर्तः षट् सप्त नाडिका नृणां प्रहरः ॥ ८ ॥

---

१ सतः कार्यस्य भूम्यादेर्विशेषाणामंशानां चरमः यस्यांशो नास्ति । २ अवयविबुद्धिः ३ विशेषविवक्षारहितः । ४ भेदविवक्षारहितः ५ प्रपंचस्य परमाण्ववस्थाम् । ६ अविशेषः साकल्यम् । ७ पृथ्वीम् 'अगात्' इ० पा० । ८ ह्रासे षट् । ९ वृद्धौ सप्त ।

अथ घटिकामानम् । षट्पलमितं ताम्रपात्रं तन्मूलदेशे विंशतिगुञ्जसुवर्णकृतचतुरङ्गुलशलाकया कृतच्छिद्रं यावत्प्रस्थजलं प्रविशति तेन च निमग्नं भवति तावान् कालो घटिका ॥९॥ अष्टौ यामाः नृणां दिवारात्री । पञ्चदश दिवारात्रयः पक्षः स शुक्लकृष्णसंज्ञः ॥१०॥ तौ द्वौ एको मासः तत् पितॄणामहर्निशम् । द्वौ मासौ ऋतुः । तैस्त्रिभिरयनम् । तद् दक्षिणमुत्तरं च ॥११॥ ते अयने देवानामहोरात्रम् । तत् नृणां संवत्सरः एवं नृणामायुः संवत्सरशतम् ॥ १२ ॥ सूर्यः परमाण्वादिना संवत्सरावसानेन भुवनकोशं पर्यटति ॥ १३ ॥ संवत्सरः पञ्चविधः । संवत्सरः

द्वादशार्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ॥ स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलप्लुतम् ॥ ९ ॥ यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे ॥ पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥ १० ॥ तयोः समुच्चयो मासः पितॄणां तदहर्निशम् ॥ द्वौ तावृतुः षडयनं दक्षिणं चोत्तरं दिवि ॥ ११ ॥ अयने चाहनी प्राहुर्वत्सरो द्वादश स्मृतः ॥ संवत्सरशतं नृणां परमायुर्निरूपितम् ॥ १२ ॥ ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत् ॥ संवत्सरावसानेन पर्येत्यानिमिषो विभुः ॥ १३ ॥ संवत्सरः परिवत्सर इडावत्सर एव च ॥ अनुवत्सरो वत्सरश्च विदुरैवं प्रभाष्यते ॥ १४ ॥ यः सृज्यशक्तिमुरुधोच्छ्वसयन् स्वशक्त्या पुंसोऽभ्रमाय दिवि धावति भूतभेदः ॥ कालाख्यया गुणमयं क्रतुभिर्वितन्वंस्तस्मै बलिं हरत वत्सरपञ्चकाय ॥१५॥ विदुर उवाच ॥ पितृदेवमनुष्याणामायुः परमिदं स्मृतम् ॥ परेषां गतिमाचक्ष्व ये स्युः कल्पाद्बहिर्विदः ॥ १६ ॥ भगवान् वेद कालस्य गतिं भगवतो ननु ॥ विश्वं विचक्षते धीरा योगराद्धेन चक्षुषा ॥१७॥ मैत्रेय उवाच ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ दिव्यैर्द्वादशभिर्वर्षैः सावधानं निरूपितम् ॥ १८ ॥

परिवत्सरः इडावत्सरोऽनुवत्सरो वत्सरः इति ॥ १४ ॥ यः कालात्मा सूर्यः पुंसो मोहनिवृत्तयेऽन्तरिक्षे धावति तस्मै संवत्सरपञ्चकप्रवर्तकाय हे जनाः ! पूजां कुरुत ॥१५॥ विदुर उवाच ॥ पितृदेवमनुष्याणामायुस्त्वयोक्तं श्रुतम् । ये तु त्रैलोक्याद् बहिस्तेषां गतिं वद ॥१६॥ धीरा योगसिद्धेन चक्षुषा विश्वं विचक्षते ॥ १७ ॥ मैत्रेय उवाच । कृतं त्रेता द्वापरं कलिश्चेति चतुर्युगं देवानां द्वादशभिर्वर्षैर्भवति ॥ १८ ॥

१. प्रभवादिषष्टिसंवत्सरेषु द्वादशपञ्चकानां क्रमेणैतन्नामभिर्व्यवहारो बोध्यः । २ बीजादिशक्तिम् । ३ कार्याभिमुखीकुर्वन् । ४ भूतविशेषः । ५ स्वर्गादिफलम् । ६ विदो ज्ञानिनः ।

कृतादियुगेषु चत्वारि त्रीणि द्वे एकमिति कथाक्रमं सहस्राणि द्विगुणशतानि च मानमाहुः ॥१९॥ या शतसंख्योक्ता स युगस्याद्यन्ते सन्ध्यांशकालः ॥ सन्ध्यासन्ध्यांशयोर्मध्ये यः कालस्तं युगं वदन्ति ॥२०॥ कृते धर्मश्चतुष्पाद् वर्तते अन्ययुगेषु क्षीयते॥२१॥ त्रिलोक्याश्चतुर्युगसहस्रं ब्रह्मणो दिनम् । तावती निशा यस्यां ब्रह्मा स्वपिति ॥ २२ ॥ ब्रह्मदिने चतुर्दश मनवो भवन्ति ॥२३॥ ते मनवश्चतुर्युगानामेकसप्ततिं(७१)

चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ॥ संख्यातानि सहस्राणि द्विगुणानि शतानि च ॥ १९ ॥ संध्यांशयोरन्तरेण यः कालः शतसंख्ययोः ॥ तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥२०॥ धर्मश्चतुष्पान्मनुजान् कृते समनुवर्तते ॥ स एवान्येष्वधर्मेण व्येति पादेन वर्धता ॥ २१ ॥ त्रिलोक्या युगसाहस्रं बहिराब्रह्मणो दिनम् ॥ तावत्येव निशा तात यन्निमीलति विश्वसृक् ॥ २२ ॥ निशावसान आरब्धो लोककल्पोऽनुवर्तते ॥ यावद्दिनं भगवतो मनून्भुञ्जंश्चतुर्दश ॥ २३ ॥ स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां[1] ह्येकसप्ततिम् ॥ मन्वन्तरेषु मनवस्तद्वंशा ऋषयः सुराः ॥२४॥ * भवन्ति चैव युगपत्सुरेशाश्चानु ये च तान् ॥ एष दैनन्दिनः सर्गो ब्राह्मस्त्रैलोक्यवर्तनः॥तिर्यङ्नृपितृदेवानां संभवो यत्र कर्मभिः ॥ २५॥ मन्वन्तरेषु भगवान् बिभ्रत्सत्त्वं स्वमूर्तिभिः ॥ मन्वादिभिरिदं विश्वमवत्युदितपौरुषः ॥ २६ ॥ तमोमात्रामुपादाय प्रतिसंरुद्धविक्रमः ॥ कालेनानुगताशेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥ तमेवान्वपि धीयन्ते लोका भूरादयस्त्रयः ॥ निशायामनुवृत्तायां निर्मुक्त[2]शशिभास्करम् ॥ २८ ॥ त्रिलोक्यां दह्यमानायां शक्त्या संकर्षणाग्निना ॥ यान्त्यूष्मणा महर्लोकाज्जनं भृग्वादयोऽर्दिताः ॥ २९ ॥

स्वं स्वं कालं भुञ्जते । तेषु मन्वन्तरेषु मनवो मनुपुत्रा ऋषयो देवाः इन्द्राः अवताराश्चेति समकालमेव भवन्ति॥२४॥ एष दैनन्दिनः सर्गः यत्र तिर्यङ्नृपितृदेवानां कर्मभिः सम्भवः ॥२५॥ प्रतिमन्वन्तरं भगवानवतारं धृत्वा विश्वं रक्षति ॥२६॥ब्रह्मा विक्रमं संहृत्य स्वपिति॥२७॥ तदा भूरादयस्त्रयो लोकाःसूर्यचन्द्राभ्यां विनाप्रलयाय कल्पन्ते॥२८॥ तदाभृग्वादयस्त्रिलोक्यां दह्यमानायामूष्मणा महर्लोकाज्जनलोकं यान्ति॥२९॥

---

१ किंचिदधिकाम् । * सप्तर्षयस्तु गन्धर्वाः क्रमेणैव भवन्ति ते ॥ इत्यधिकः पाठः । २ निर्मुक्तो रहितः ।

तावत् कल्पान्तेन वृद्धिं गताः समुद्राः सद्यस्त्रिभुवनं प्लावयन्ति॥३०॥तदा सलिले जनलोकवासिभिस्तूयमानः शेषासनो हरिः शेते ॥३१॥
एवमहोरात्रैर्ब्रह्मणः आयुःशतमपि गतप्रायम्॥३२॥तस्यायुषोऽर्धं परार्धमभिधीयते । तत्र पूर्वपरार्धो गतः । अपरः प्रवर्तते ॥ ३३ ॥ पूर्वपरार्ध-
स्यादौ ब्राह्मो नाम कल्पो बभूव ॥३४॥ पूर्वपरार्धस्यान्ते पाद्मकल्पो बभूव ॥३५॥ इदानीं तु वाराहः कल्पः । स द्वितीयपरार्धस्यादौ कथितः ।

तावत्त्रिभुवनं सद्यः कल्पान्तैधितसिन्धवः ॥ प्लावयन्त्युत्कटाटोपचण्डवातेरितोर्मयः ॥ ३० ॥ अन्तः स तस्मिन्
सलिल आस्तेऽनन्तासनो हरिः ॥ योगनिद्रानिमीलाक्षः स्तूयमानो जनालयैः ॥ ३१ ॥ एवंविधैरहोरात्रैः कालगत्योप-
लक्षितैः ॥ अपेक्षितमिवास्यापि परमायुर्वयःशतम् ॥ ३२ ॥ यदर्द्धमायुषस्तस्य परार्धमभिधीयते ॥ पूर्वः परार्धो-
ऽपक्रान्तो ह्यपरोऽद्य प्रवर्तते ॥ ३३ ॥ पूर्वस्यादौ परार्धस्य ब्राह्मो नाम महानभूत् ॥ कल्पो यत्राभवद्ब्रह्मा
शब्दब्रह्मेति यं विदुः ॥ ३४ ॥ तस्यैव चान्ते कल्पोऽभूद्यं पाद्ममभिचक्षते ॥ यद्धरेर्नाभिसरस आसील्लोकसरोरुहम्
॥३५॥ अयं तु कथितः कल्पो द्वितीयस्यापि भारत ॥ वाराह इति विख्यातो यत्रासीत्सूकरो हरिः ॥३६॥ कालोऽयं
द्विपरार्धाख्यो निमेष उपचर्यते ॥ अव्याकृतस्यानन्तस्य अनादेर्जगदात्मनः ॥ ३७ ॥ कालोऽयं परमाण्वादिर्द्वि-
परर्धान्त ईश्वरः ॥ नैवेशितुं प्रभुर्भूम्न ईश्वरो धाममानिनाम् ॥ ३८ ॥ विकारैः सहितो युक्तैर्विशेषादिभिरावृतः ॥
आण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः ॥ ३९ ॥ दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ॥ लक्ष्यतेऽन्त-
र्गताश्चान्ये कोटिशो ह्यण्डराशयः ॥ ४० ॥

यत्र हरिर्वराहो बभूव ॥३६॥ एवं द्विपरार्धाख्यकालोऽनन्तस्य निमेषवदुपचर्यते ॥ ३७ ॥ एवं परमाण्वादि द्विपरार्धान्तः कालः । सम्पूर्णत्वेन
वक्तुं न कोऽपि समर्थः ॥ ३८ ॥ अयमाण्डकोशः पञ्चाशत्कोटियोजनविशालः ॥ ३९ ॥ अष्टप्रकृतिभिर्दशोत्तराधिकैर्युतः स ईश्वरे परमाणु-
वल्लक्ष्यते । यस्मिन्ननन्त एवं कोटिशोऽण्डराशयः प्रतिरोमं सन्ति ॥ ४० ॥

१ जनलोकः आलयो येषां तैः । २ 'तें' इ० पा० । ३ कार्योपाधिशून्यस्य । ४ परिपूर्णस्यापरिच्छिन्नस्वरूपस्य भगवतः । ५ अण्डकोशान्तर्गतो लोकः ।

तत् सर्वकारणानां कारणमक्षरं ब्रह्म वदन्ति ॥४१॥ इति श्रीभागवते महापुराणे तृतीयस्कन्धे चूर्णिकायामेकादशोऽध्यायः ॥११॥ द्वादशे तु कुमारादिमनःसर्गासमेधनात् ॥ कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥१॥ मैत्रेय उवाच ॥ हे विदुर ! परमात्मनः कालरूपं तुभ्यं कथितम् । अथ ब्रह्मा यथाऽस्राक्षीत् तद् मत्तः शृणु ॥ १ ॥ ब्रह्मा प्रथमं मरणं क्रोधं विषयभोगसुखेषणामन्तःकरणविभ्रममविवेकं च । एवं पञ्चपर्वाविद्यां ससर्ज ॥ २ ॥ तां पापीयसीं सृष्टिं दृष्ट्वा नाभ्यनन्दतः । ततो मनसा सनकः सनन्दनः सनातनः सनत्कुमारश्चेति चतुरः सुतान् ससर्ज

तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् ॥ विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः ॥ ४१ ॥ इति श्रीभागवते महापुराणे तृतीयस्कन्धे विदुरमैत्रेयसंवादे कल्पमानादिवर्णनं नामैकादशोऽध्यायः ॥११॥ मैत्रेय उवाच ॥ इति ते वर्णितः क्षत्तः कालाख्यः परमात्मनः ॥ महिमा वेदगर्भोऽथ यथाऽस्राक्षीन्निबोध मे ॥१॥ ससर्जाग्रेऽन्धतामिस्रमथ तामिस्रमादिकृत् ॥ महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥ २ ॥ दृष्ट्वा पापीयसीं सृष्टिं नात्मानं बह्वमन्यत ॥ भगवद्ध्यानपूतेन मनसाऽन्यां ततोऽसृजत् ॥३॥ सनकं च सनन्दं च सनातनमथात्मभूः ॥ सनत्कुमारं च मुनीन् निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥ तान् बभाषे स्वभूः पुत्रान्प्रजाः सृजत पुत्रकाः ॥ ते नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः ॥ ५ ॥ सोऽवध्यातः सुतैरेवं प्रत्याख्यातानुशासनैः ॥ क्रोधं दुर्विषहं जातं नियन्तुमुपचक्रमे ॥ ६ ॥ धिया निगृह्यमाणोऽपि भ्रुवोर्मध्यात्प्रजापतेः ॥ सद्योऽजायत तन्मन्युः कुमारो नीललोहितः ॥ ७ ॥ स वै रुरोद देवानां पूर्वजो भगवान् भवः ॥ नामानि कुरु मे धातः स्थानानि च जगद्गुरो ॥ ८ ॥ इति तस्य वचः पाद्मो भगवान् परिपालयन् ॥ अभ्यधाद्भद्रया वाचा मा रोदीस्तत्करोमि ते ॥९॥

॥ ३ ॥ ४ ॥ ब्रह्मा तानाह । पुत्रकाः प्रजाः सृजत । तदा ते मोक्षधर्माणः सर्गं नैच्छन् ॥५॥ तदा तान् प्रति क्रुद्धो ब्रह्मा तं क्रोधमुपशमयितुमुपचक्रमे ॥ ६ ॥ स बुद्ध्या निगृह्यमाणोऽपि ब्रह्मणो भ्रुवोर्मध्यात् सद्योमन्युः कुमारो जातः ॥ ७ ॥ स रुदन् वदति स्म हे धातः ! मम नामानि स्थानानि च कुरु ॥ ८ ॥ तदा ब्रह्मा तद्वचः श्रुत्वा प्राह । हे भव ! त्वं मा रोदीः तत् करोमि ॥ ९ ॥

१ 'तन्नैच्छन्' इ० पा० ।

हे सुरश्रेष्ठ! यस्मात् त्वं बालक इवारोदीः। अतः प्रजाः त्वां रुद्र इति कथयिष्यन्ति॥१०॥ हे रुद्र! ते चैकादश निवासस्थानानि। हृदयमिन्द्रियाणि प्राणः आकाशं वायुरग्निर्जलं मही सूर्यश्चन्द्रस्तप इति ॥११॥ अथ ते एकादश नामानि। मन्युः। मनुः। महिनसः। महान्। शिवः ऋतुध्वजः। उग्ररेताः। भवः। कालः। वामदेवः। धृतव्रतः॥१२॥ अथ हे रुद्र! ते स्त्रियः। धीः। वृत्तिः। उशना। उमा। नियुत्। सर्पिः इला। अम्बिका। इरावती। सुधा। दीक्षा। एता एकादश॥ १३॥ अतो हे रुद्र! एतानि नामानि स्थानानि च गृहाण। आभिः स्त्रीभि-

यदरोदीः सुरश्रेष्ठ सोद्वेग इव बालकः॥ ततस्त्वामभिधास्यन्ति नाम्ना रुद्र इति प्रजाः॥ १०॥ हृदिन्द्रियाण्यसुर्व्योम वायुरग्निर्जलं मही॥ सूर्यश्चन्द्रस्तपश्चैव स्थानान्यग्रे कृतानि मे॥ ११॥ मन्युर्मनुर्महिनसो महाञ्छिव ऋतुध्वजः॥ उग्ररेता भवः कालो वामदेवो धृतव्रतः॥ १२॥ धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलाऽम्बिका॥ इरावती सुधा दीक्षा रुद्राण्यो रुद्र ते स्त्रियः॥ १३॥ गृहाणैतानि नामानि स्थानानि च सयोषणः॥ आभिः सृज प्रजा बह्वीः प्रजानामसि यत्पतिः॥१४॥ इत्यादिष्टः स गुरुणा भगवान्नीललोहितः सत्त्वाकृतिस्वभावेन ससर्जात्मसमाः प्रजाः॥ १५॥ रुद्राणां रुद्रसृष्टानां समन्ताद् ग्रसतां जगत्॥ निशाम्यासंख्यशो यूथान् प्रजापतिरशङ्कत॥ १६॥ अलं प्रजाभिः सृष्टाभिरीदृशीभिः सुरोत्तम॥ मया सह दहन्तीभिर्दिशश्चक्षुर्भिरुल्बणैः॥१७॥ तप आतिष्ठ भद्रं ते सर्वभूतसुखावहम्॥ तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान्॥ १८॥ तपसैव परं ज्योतिर्भगवन्तमधोक्षजम्॥ सर्वभूतगुहावासमञ्जसा विन्दते पुमान्॥ १९॥ मैत्रेय उवाच॥ एवमात्मभुवाऽऽदिष्टः परिक्रम्य गिरां पतिम्॥ बाढमित्यमुमामन्त्र्य विवेश तपसे वनम्॥२०॥

र्बह्वीः प्रजा सृज॥१४॥ इति ब्रह्मणाऽऽदिष्टो रुद्रस्तीव्रस्वभावेनात्मसमाः प्रजाः ससर्ज॥१५॥ तदा समन्तात् जगत् ग्रसतां रुद्रसृष्टानामसंख्यातयूथानि दृष्ट्वा ब्रह्मा प्राह॥१६॥ हे रुद्र! मया सह दिशो दहन्तीभिरीदृशीभिः प्रजाभिरलम्॥१७॥ अतस्ते भद्रम्। सर्वसुखावहं तपः आतिष्ठ॥१८॥ पुमान् तपसैव सर्वभूतगुहावासमीश्वरं विन्दते॥१९॥ मैत्रेय उवाच। एवं श्रुत्वा रुद्रस्तपसे इलावृतं नाम वनं विवेश॥२०॥

१ 'एभिः' इ० पा०।

ततो ब्रह्मा दश पुत्रान् जनयामास॥२१॥मरीचिः । अत्रिः ।अङ्गिराः । पुलस्त्यः । पुलहः । क्रतुः । भृगुः । वसिष्ठः । दक्षः । नारदः । एते ब्रह्मणः पुत्राः॥२२॥ब्रह्मण उत्सङ्गात् नारदो जातः । अंगुष्ठाद् दक्षः । प्राणाद् वसिष्ठः । त्वचो भृगुः । करात् क्रतुः॥२३॥नाभितः पुलहः । कर्णयोः पुलस्त्यः । मुखादङ्गिराः ।अक्ष्णोऽत्रिः । मनसो मरीचिरिति॥२४॥ततः स्तनात् धर्मः। पृष्ठतोऽधर्मो यस्मात् मृत्युः॥२५॥हृदयात् कामो भ्रुवः क्रोधोऽधरोष्ठाल्लोभो मुखाद्वाणी मेढ्रात् समुद्राः गुदात् निर्ऋतिः छायायाः कर्दमो जज्ञे । एवं ब्रह्मणो मनसो देहतश्च जगत् जज्ञे॥२६॥२७॥हे

अथाभिध्यायतःसर्गं दश पुत्राः प्रजज्ञिरे ॥ भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः ॥ २१ ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥ २२॥ उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः ॥ प्राणाद्वसिष्ठः संजातो भृगुस्त्वचि करात्क्रतुः ॥ २३ ॥ पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोर्ऋषिः ॥ अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत् ॥ २४ ॥धर्मः स्तनाद्दक्षिणतो यत्र नारायणः स्वयम् ॥ अधर्मः पृष्ठतो यस्मान्मृत्युर्लोकभयंकरः ॥ २५ ॥ हृदि कामो भ्रुवःक्रोधो लोभश्चाधरदच्छदात् ॥आस्याद्वाक् सिन्धवो मेढ्रान्निर्ऋतिः पायोरघाश्रयः ॥२६॥ छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः ॥ मनसो देहतश्चेदं जज्ञे विश्वकृतो जगत् ॥२७॥ वाचं दुहितरं तन्वीं स्वयंभूर्हरतीं मनः ॥ अकामां चकमे क्षत्तः सकाम इति नःश्रुतम् ॥ २८ ॥ तमधर्मे कृतमतिं विलोक्य पितरं सुताः ॥ मरीचिमुख्या मुनयो विश्रम्भात्प्रत्यबोधयन् ॥२९॥ नैतत्पूर्वैः कृतं त्वद्य न करिष्यन्ति चापरे ॥ यत्त्वं दुहितरं गच्छेरनिगृह्याङ्गजं प्रभुः ॥३०॥ तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो ॥ यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पते ॥३१॥ तस्मै नमो भगवते य इदं स्वेन रोचिषा ॥ आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥ ३२ ॥

विदुर! सकामो ब्रह्माऽकामया स्वकन्यया सरस्वत्या सह रन्तुं मनश्चक्रे इति नः श्रुतम्॥२८॥तदा मरीच्यादयः पुत्राः अधर्मे कृतमतिं पितरं विलोक्य प्रत्यबोधयन् ॥२९॥ हे प्रभो । अद्य यत् त्वं दुहितरं गच्छेस्तत् पूर्वैर्न कृतम् अपरे न करिष्यन्ति ॥३०॥ हे जगद्गुरो ! अतितेजस्विनामपि कर्मैतत् कीर्तिदं न भवति येषां वृत्तमनुतिष्ठन् लोकः क्षेमाय कल्पते॥३१॥यः स्वतेजसेदं जगत् जनयामास स धर्मं पातुमर्हति तस्मै नमः॥३२॥

एवं वदतः पुत्रान् दृष्ट्वा लज्जितो ब्रह्मा तां तनुं तत्याज । तत् नीहारं तमो जातं तद् दिशो जगृहुः॥३३॥कदाचिद् ध्यायतश्चतुर्मुखाच्चतुर्वेदाश्च-तुर्होत्रं यज्ञविस्तारः उपवेदाः धर्मस्य चत्वारः पादाः आश्रमास्तद्वृत्तयश्च बभूवुः ॥ ३४ ॥३५॥ विदुर उवाच । ब्रह्मा मुखतो यद्यत् ससर्ज तद् ब्रूहि ॥ ३६ ॥ मैत्रेय उवाच ॥ ब्रह्मा पूर्वादिभिर्मुखैर्ऋग्यजुस्सामाथर्वाख्यान् वेदान् ससर्ज॥३७॥तथाऽऽयुर्वेदं धनुर्वेदं गान्धर्ववेदं शिल्पा-

स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ॥ प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥ तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः ॥३३॥*कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् ॥ कथं स्रक्ष्याम्यहं लोकान्समवेतान्यथापुरा ॥ ३४ ॥चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः[1] सह ॥ धर्मस्य पादाश्चत्वारस्तथैवाश्रमवृत्तयः ॥ ३५ ॥ विदुर उवाच ॥ स वै विश्वसृजामीशो वेदादीन्मुखतोऽसृजत् ॥ यद्यद्येनासृजद्देवस्तन्मे ब्रूहि तपोधन ॥ ३६ ॥ मैत्रेय उवाच ॥ ऋग्यजुस्सामाथर्वाख्यान्वेदान्पूर्वादिभिर्मुखैः ॥ शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात् ॥ ३७ ॥ आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः ॥ स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः ॥ ३८ ॥ इतिहासपुराणानि पञ्चमं वेदमीश्वरः ॥ सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः ॥ ३९ ॥ षोडश्युक्थौ पूर्ववक्त्रात्पुरीष्याग्निष्टुतावथ ॥ आप्तोर्यामातिरात्रौ च वाजपेयं सगोसवम् ॥ ४० ॥ विद्या दानं तपः सत्यं धर्मस्येति पदानि च ॥ आश्रमांश्च यथासंख्यमसृजत्सह वृत्तिभिः ॥ ४१ ॥ सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा ॥ वार्तासंचयशालीनशिलोञ्छ[2] इति वै गृहे ॥ ४२ ॥

ख्यवेदमिति चतुरः उपवेदान् पूर्वादिमुखेभ्यः ससर्ज ॥३८॥ इतिहासपुराणानि पञ्चमं वेदं च सर्वमुखेभ्यः ससर्ज ॥३९॥ तथा षोडश्युक्थौ चयनाग्निष्टोमाः आप्तोर्यामादिरात्रौ वाजपेयगोसवौ पूर्वादिमुखतः ससर्ज ॥४०॥ विद्या दानं तपः सत्यमिति धर्मस्य पदानि चतुर आश्रमान् तद्वृत्तीश्च ससर्ज ॥ ४१ ॥ ततो ब्रह्मचर्यप्राजापत्यब्रह्मनैष्ठिकवार्तादिकाः गृहस्थानां वृत्तीः ससर्ज ॥ ४२ ॥



* इदानीमपि संसारे कुहको दृश्यते नरः इत्यधिकः पाठः । १ नयाः न्यायाः । २ क्रमात् अनिषिद्धकृष्यादिवृत्तिः, याजनादिवृत्तिः अयाचितवृत्तिः, पतितकणिशकणादानवृत्तिः । एकवचनमार्षम् ।

वैखानसा वालखिल्याः औदुम्बराः फेनपाश्चेति वने स्थितानां चतस्रो वृत्तीः । तथा कुटीचको बह्वोदो हंसो निष्क्रियश्चेति संन्यासिनाम् । एवमेतत् पूर्वादिमुखतः ससर्ज ॥४३॥ तथैवान्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च बभूवुः । एवं तिस्रो व्याहृतयश्चासन् । तस्य हृदयाकाशात् प्रणवः ॥ ४४ ॥ रोमभ्य उष्णिक् छन्दः त्वचो गायत्री मांसात् त्रिष्टुप् स्नायुतोऽनुष्टुबस्थितो जगती ॥४५॥ मज्जायाः पंक्तिः प्राणतो बृहतीच्छन्दः समभवत् ॥ ४६ ॥ वर्णोत्पत्तिमाह तस्य जीवात् स्पर्शाक्षराणि । देहतोऽकारादिस्वराःइन्द्रियेभ्यःशषसहाक्षराणि।तस्य बलाद् यरलवाक्षराणि

वैखानसा वालखिल्यौदुम्बराः फेनपा वने ॥ न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियौ ॥४३॥ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ॥ एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्रतः ॥४४॥ तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः॥त्रिष्टुब् मांसात्स्नुतोऽनुष्टुब् जगत्यस्थ्नः प्रजापतेः ॥४५॥ मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत्॥ स्पर्शस्तस्याभवज्जीवः स्वरो देह उदाहृतः ॥ ४६ ॥ ऊष्माणमिन्द्रियाण्याहुरन्तःस्था बलमात्मनः ॥ स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ॥ ४७ ॥ शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः परः ॥ ब्रह्माऽवभाति विततो नानाशक्त्युपबृंहितः ॥ ४८ ॥ ततोऽपरामुपादाय स सर्गाय मनो दधे ॥ ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् ॥ ज्ञात्वा तद्वृद्धये भूयश्चिन्तयामास कौरव ॥४९॥ अहो अद्भुतमेतन्मे व्यापृतस्यापि नित्यदा ॥ न ह्येधन्ते प्रजा नूनं दैवमत्र विघातकम् ॥५०॥ एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा ॥ कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ॥ ५१ ॥ ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत ॥ यस्तु तत्र पुमान् सोऽभून्मनुः स्वायंभुवः स्वराट् ॥ ५२ ॥ स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः ॥ तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ॥ ५३ ॥

तस्य क्रीडया सप्त स्वराः अभवन् ॥ ४७ ॥ किंच वैखरीप्रणवात्मनः परब्रह्म देवः परिपूर्णः परमेश्वर एव भाति ॥ ४८ ॥ वेदादिसप्तस्वरान्तं सर्वं मनसैव सृष्ट्वा ततोऽपरां तनुं धृत्वा सर्गाय मनो दधे । मरीच्यादिऋषीणामपि सर्गमविस्तृतं ज्ञात्वा तद्वृद्धये भूयश्चिन्तयन्नाह॥४९॥ अहो एतदद्भुतं यत्प्रजाः न वर्धन्ते अत्र दैवं विघातकम् ॥५०॥ एवं चिन्तयतः कस्य रूपं द्विधा बभूव॥५१॥ताभ्यां रूपविभागाभ्यां मिथुनं जातम्। तत्र यः पुमान् स स्वायंभुवो मनुः ॥५२॥ या स्त्री सा शतरूपा । सा तस्य महिषी बभूव । तदा मिथुनधर्मेण प्रजाः वृद्धिं प्राप्ताः ॥५३॥

स शतरूपाया प्रियव्रतोत्तानपादौ पुत्रौ कन्या आकूतिर्देवहूतिः प्रसूतिरिति तिस्रो जनयामास ॥५४॥ तासां मध्ये रुचये आकूतिं कर्दमाय देवहूतिं दक्षाय च प्रसूतिं ददौ यतो जगत् पूरितम् ॥५५॥ इति श्रीभाग० चू० तृतीय द्वादशोऽध्यायः ॥१२॥ त्रयोदशे सिसृक्षायां मनोराकस्मिकाप्लुताम्। धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम् ॥ १ ॥ श्रीशुक उवाच॥विदुरो मैत्रेयस्य पुण्यतमां वाणीं निशम्य पुनःपप्रच्छ ॥१॥ विदुर उवाच ॥ हे मैत्रेय ! स्वायंभुवो मनुः प्रियां पत्नीं प्राप्य ततः किं चकार ॥२॥ तस्यादिराजस्य चरितं मे ब्रूहि॥३॥येषां हृदयेषु भग-

स चापि शतरूपायां पञ्चापत्यान्यजीजनत ॥ प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत ॥ ५४ ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम ॥ आकूतिं रुचये प्रादात्कर्दमाय तु मध्यमाम्॥दक्षायादात्प्रसूतिं च यत आपूरितं जगत् ॥ ५५ ॥ इति श्रीभा० म० तृती ० मनुसर्गवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ निशम्य वाचं वदतो मुनेः पुण्यतमां नृप ॥ भूयः पप्रच्छ कौरव्यो वासुदेवकथादृतः ॥ १ ॥ विदुर उवाच ॥ स वै स्वायंभुवः सम्राट् प्रियः पुत्रः स्वयंभुवः ॥ प्रतिलभ्य प्रियां पत्नीं किं चकार ततो मुने ॥ २ ॥ चरितं तस्य राजर्षेरादिराजस्य सत्तम ॥ ब्रूहि मे श्रद्दधानाय विष्वक्सेनाश्रयो ह्यसौ ॥ ३ ॥ श्रुतस्य पुंसां सुचिरश्रमस्य नन्वञ्जसा सूरिभिरीडितोऽर्थः॥तत्तद्गुणानुश्रवणं मुकुन्दपादारविन्दं हृदयेषु येषाम् ॥ ४ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणं विदुरं विनीतं सहस्रशीर्ष्णश्चरणोपधानम् ॥ प्रहृष्टरोमा भगवत्कथायां प्रणीयमानो मुनिरभ्यचष्ट ॥ ५ ॥ मैत्रेय उवाच ॥ यदा स्वभार्यया साकं जातः स्वायंभुवो मनुः ॥ प्राञ्जलिः प्रणतश्चेदं वेदगर्भमभाषत ॥ ६ ॥ त्वमेकः सर्वभूतानां जन्मकृद्वृत्तिदः पिता ॥ अथापि नः प्रजानां ते शुश्रूषा केन वा भवेत् ॥ ७ ॥ तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु ॥ यत् कृत्वेह यशो विष्वगमुत्र च भवेद्गतिः ॥ ८ ॥

वच्चरणारविन्दं तेषां भक्तानां गुणानुश्रवणं पुंसां श्रेयस्करम् ॥ ४ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणं विदुरं प्रति भगवत्कथायां प्रवर्तमानो हृष्टरोमा मुनिः प्राह ॥५॥ मैत्रेय उवाच ॥ हे विदुर ! यदा भार्यया सह स्वायंभुवो मनुर्जातस्तदा प्राञ्जलिः सन् ब्रह्माणं वदति स्म॥६॥हे भगवन् ! त्वं नः पिता पोषकश्च । अतस्तव शुश्रूषा केन वा भवेत ? तद् वद ॥ ७ ॥ तुभ्यं नमः यत् कृत्वा सर्वतो यशः परत्र सद्गतिश्च॥ ८ ॥

ब्रह्मोवाच ॥ हे तात अहं तुभ्यं प्रीतः भद्रं भूयात् ॥ ९ ॥ पुत्रैः पितुराज्ञा कर्तव्या । इयमेव गुरोः पूजा ॥ १० ॥ अतस्त्वमस्यामपत्यान्यु-त्पाद्य धर्मेण पृथ्वीं पालयन् यज्ञैर्हरिं यज ॥ ११ ॥ हे मनो ! प्रजारक्षया मे शुश्रूषणं भवेत् । ईश्वरश्च तुष्टो भविष्यति ॥ १२ ॥ येषां हरिर्न तुष्टस्तेषां श्रमो व्यर्थ एव ॥ १३ ॥ मनुरुवाच । हे भगवन् ! तवाज्ञामनुवर्तिष्ये । अतोऽत्र स्थातव्यमित्याज्ञां देहि ॥ १४ ॥ महीति चेदत

ब्रह्मोवाच ॥ प्रीतस्तुभ्यमहं तात स्वस्ति स्ताद्वां क्षितीश्वर ॥ यन्निर्व्यलीकेन हृदा शाधि मेत्यात्मनाऽर्पितम् ॥ ९ ॥ एतावत्यात्मजैर्वीर कार्या ह्यपचितिर्गुरौ ॥ शक्त्याऽप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥ १० ॥ स त्वमस्यामपत्यानि सदृशान्यात्मनो गुणैः ॥ उत्पाद्य शास धर्मेण गां यज्ञैः पुरुषं यज ॥ ११ ॥ परं शुश्रूषणं मह्यं स्यात्प्रजारक्षया नृप ॥ भगवांस्ते प्रजाभर्तुर्हृषीकेशोऽनुतुष्यति ॥ १२ ॥ येषां न तुष्टो भगवान् यज्ञलिङ्गो जनार्दनः ॥ तेषां श्रमो ह्यपार्थाय तदात्मा नादृतः स्वयम् ॥ १३ ॥ मनुरुवाच ॥ आदेशेऽहं भगवतो वर्तेयामीवसूदन ॥ स्थानं त्विहानुजानीहि प्रजानां मम च प्रभो ॥ १४ ॥ यदोकः सर्वसत्त्वानां मही मग्ना महाम्भसि ॥ अस्या उद्धरणे यत्नो देव देव्यां विधीयताम् ॥ १५ ॥ मैत्रेय उवाच ॥ परमेष्ठी त्वपां मध्ये तथाऽऽसन्नामवेक्ष्य गाम् ॥ कथमेनां समुन्नेष्य इति दध्यौ धिया चिरम् ॥ १६ ॥ सृजतो मे क्षितिर्वार्भिः प्लाव्यमाना रसां गता ॥ अथात्र किमनुष्ठेयमस्माभिः सर्गयोजितैः ॥ १७ ॥ यस्याहं हृदयादासं स ईशो विदधातु मे ॥ *इत्यभिध्यायतो नासाविवरात्सहसाऽनघ ॥ वराहतोको निरगादङ्गुष्ठपरिमाणकः ॥ १८ ॥

आह । प्रजानां यन्निवासस्थानं सा मही जले निमग्ना । अस्या उद्धरणे यत्नं कुरु ॥१५॥ मैत्रेय उवाच ॥ तथा ब्रह्मा जलमध्ये मग्नां महीं वीक्ष्य कथमेनामुद्धरिष्यामीत्यचिन्तयत् ॥ १६ ॥ अहो मे क्षितिर्जलैः प्लाव्यमाना सती रसातलं गता अत्र किं कर्तव्यम् ॥ १७ ॥ यस्य हृदयादहमुत्पन्नः स ईशो मे कार्यं संपादयतु इति ध्यायतस्तस्य नासाविवरादङ्गुष्ठपरिमाणको वराहतोको निरगात् ॥ १८ ॥

---

१ पृथ्व्याः । * करोतु करुणासिन्धुस्तीर्थकीर्तिरधोक्षजः इत्यधिकः पाठः ।

तदा ब्रह्मणः पश्यतः सतो वराहतोकः आकाशे स्थितः सन् क्षणेन गजप्रमाणो ववृधे ॥ १९ ॥ ततो मरीचिप्रमुखैः कुमारैश्च सह ब्रह्मा किमेत-
दिति तर्कयामास ॥ २० ॥ अहो मे नासाया विनिस्सृतं महदाश्चर्यम् ॥ २१ ॥ पूर्वमङ्गुष्ठपर्वमात्रो दृष्टः क्षणात् स्थूलपाषाणसमः । अतः
एष भगवानेव मे मनः खेदयन् जातः ॥२२॥ इति ब्रह्मणो मीमांसतः सतो भगवान् यज्ञो जगर्ज ॥२३॥ हरिः स्वगर्जितेन ब्रह्माणमृषींश्च

तस्याभिपश्यतः खस्थः क्षणेन किल भारत ॥ गजमात्रः प्रववृधे तदद्भुतमभून्महत्॥१९॥मरीचिप्रमुखैर्विप्रैः कुमारैर्म-
नुना सह ॥ दृष्ट्वा तत्सौकरं रूपं तर्कयामास चित्रधा ॥२०॥ किमेतत्सौकरव्याजं सत्त्वं दिव्यमवस्थितम् ॥ अहो बता-
श्चर्यमिदं नासाया मे विनिस्सृतम् ॥२१॥ दृष्टोऽङ्गुष्ठशिरोमात्रः क्षणाद्गण्डशिलासमः ॥ अपिस्विद्भगवानेष यज्ञो मे
खेदयन्मनः ॥२२॥ इति मीमांसतस्तस्य ब्रह्मणा सह सूनुभिः ॥ भगवान् यज्ञपुरुषो जगर्जागेन्द्रसन्निभः ॥२३॥ ब्रह्माणं
हर्षयामास हरिस्तांश्च द्विजोत्तमान् ॥ स्वगर्जितेन ककुभः प्रतिस्वनयता विभुः ॥२४॥ निशम्य ते घर्घरितं स्वखेदक्ष
यिष्णु मायामयसूकरस्य ॥ जनस्तपस्सत्यनिवासिनस्ते त्रिभिः पवित्रैर्मुनयोऽगृणन्स्म ॥ २५ ॥ तेषां सतां वेदवितान-
मूर्तिर्ब्रह्मावधार्यात्मगुणानुवादम् ॥ विनद्य भूयो विबुधोदयाय गजेन्द्रलीलो जलमाविवेश॥२६॥उत्क्षिप्तवालः खचरः
कठोरः सटा विधुन्वन् खररोमशत्वक् ॥ खुराहताभ्रः सितदंष्ट्र ईक्षाज्योतिर्बभासे भगवान्महीध्रः॥२७॥ घ्राणेन पृथ्व्याः
पदवीं विजिघ्रन्क्रोडापदेशः स्वयमध्वराङ्गः ॥ करालदंष्ट्रोऽप्यकरालदृग्भ्यामुद्वीक्ष्य विप्रान्गृणतोऽविशत्कम् ॥ २८ ॥
स वज्रकूटाङ्गनिपातवेगविशीर्णकुक्षिः स्तनयन्नुदन्वान् ॥ उत्कृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोश यज्ञेश्वर पाहि मेति॥२९॥

हर्षयामास ॥ २४ ॥ तद्ध्वनिं श्रुत्वा जनस्तपस्सत्यनिवासिनो जना अयं यज्ञवराह इति वेदत्रयेण तुष्टुवुः॥२५॥ तदा वराहो विबुधोदयाय
भूयो विनद्य जलं प्रविवेश ॥ २६ ॥ कथंभूतः । उच्चपुच्छः आकाशचारी स्कन्धकेशान् विधुन्वन् श्वेतदंष्ट्रो हरिः शुशुभे ॥ २७ ॥ स स्वयं
यज्ञाङ्गोऽपि पशुरिव घ्राणेन पृथिव्याः स्थानं जिघ्रन् करालदंष्ट्रोऽपि प्रेमदृष्ट्या विप्रानूर्ध्वं वीक्ष्य जलं प्रविवेश ॥२८॥ तदा वज्रकूटाङ्गनिपा-
तवेगेन विशीर्णकुक्षिः समुद्रः आर्त इव शब्दं कुर्वन् भो यज्ञेश्वर ! मां पाहीत्येवं चुक्रोश ॥ २९ ॥

वराहः खुरैस्तज्जलं विदारयन् रसातले महीं ददर्श॥३०॥तदा निमग्नां महीं स्वदंष्ट्रयोद्धृत्य रसायाः उत्थितः तत्रापि गदामुद्यम्याागच्छन्तम्
॥ ३१ ॥ असह्यविक्रमं दैत्यं लीलया हत्वा तद्रक्तपङ्काङ्कितगण्डतुण्डो जलादूर्ध्वं निर्गतः ॥ ३२ ॥ तदा ब्रह्ममरीच्यादयो दन्तकोट्याक्ष्मा-
मुत्क्षिपन्तं तमालनीलं हरिं दृष्ट्वा बद्धाञ्जलयस्तुष्टुवुः ॥ ३३ ॥ ऋषय ऊचुः । हे यज्ञपालक ! त्वया जितं जितम् । वेदमयीं स्वां तनूं धुन्वते

खुरैः क्षुरप्रैर्दरयंस्तदाऽप उत्पारपारं त्रिपरू रसायाम् । ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त
॥ ३० ॥ स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः । तत्रापि दैत्यं गदयाऽऽपतन्तं सुनाभसंदीपि-
ततीव्रमन्युः ॥ ३१ ॥ जघान रुन्धानमसह्यविक्रमं स लीलयेभं मृगराडिवाम्भसि । तद्रक्तपङ्काङ्कितगण्डतुण्डो
यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३२ ॥ तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाऽङ्ग । प्रज्ञाय
बद्धाञ्जलयोऽनुवाकैर्विरिञ्चिमुख्या उपतस्थुरीशम् ॥ ३३ ॥ ऋषय ऊचुः । जितं जितं तेऽजित यज्ञभावन त्रयीं
तनूं स्वां परिधुन्वते नमः । यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥ ३४ ॥ रूपं तवैतन्ननु
दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् । छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥३५॥
स्रुक् तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे । प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भग-
वन्नग्निहोत्रम् ॥ ३६ ॥ दीक्षाऽनुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः । जिह्वा प्रवर्ग्यस्तव शीर्षकं
क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ३७ ॥

ते नमः यद्रोमगर्तेषु यज्ञाः निलिल्युः ॥ ३४ ॥ हे ईश ! यज्ञात्मकं ते रूपं दुष्कृतात्मनां दुर्दर्शनं यस्य त्वचि छन्दांसि रोमसु दर्भाः नेत्रयोः
आज्यम् अङ्घ्रिषु चातुर्होत्रम् ॥३५॥ मुखाग्रे स्रुक् नासिकयोः स्रुवः उदरे भक्षणपात्रं कर्णरन्ध्रे चमसाः । हे देव ! यत् ते भक्षणं तदग्निहोत्रम्
॥ ३६ ॥ तव ग्रीवायाम् उपसदस्तिस्र इष्टयः । दंष्ट्रायां दीक्षाऽनन्तरेष्टिः समाप्तेष्टिश्च ॥ ३७ ॥

---

१ पारशून्यानामपां पारं यथा भवति तथा ॥ २ त्रीणि पर्वाणि सवनात्मकानि पर्वाणि यस्य यज्ञमूर्तेः सः । ३ जीवाधारभूताम् । ४ वैदिकसत्रुर्शवाक्यैः । ५ आर्षो दीर्घाभावः ।

रेतसि सोमपानं बाल्याद्यवस्थादिषु प्रातःसवनादीनि तव सर्वसंधिषु सर्वसत्राणि सन्ति ॥३८॥ हे यज्ञ ! सर्वमन्त्रादिरूपाय क्रियात्मने ज्ञानप्रदाय गुरवे ते नमः ॥३९॥ हे भगवन् ! दंष्ट्राग्रकोटच्या त्वया धृतेयं भूः राजते ॥ ४० ॥ हे नाथ ! इदं त्रयीमयं सौकरं रूपं च भूमण्डलधारणेन नितरां शोभते ॥४१॥ जगतां मातरं तामेतां वासस्थानार्थं स्थापय यतस्त्वं जगतां पिताऽसि । अतस्त्वया सहास्यै मात्रे नमनं करि-

सोमस्तु रेतःसवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः ॥ सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥३८॥ नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने ॥ वैराग्यभक्त्याऽऽत्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥३९॥ दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा ॥ यथा वनान्निस्सरतो दता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी ॥४०॥ त्रयीमयं रूपमिदं च सौकरं भूमण्डलेनाथ दता धृतेन ते ॥ चकास्ति शृङ्गोढघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः ॥४१॥ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता ॥ विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ४२ ॥ कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् ॥ न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ ४३ ॥ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् ॥ सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीश पाविताः ॥ ४४ ॥ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः ॥ यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम् ॥४५॥ मैत्रेय उवाच ॥ इत्युपस्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ॥ सलिले स्वखुराक्रान्त उपाधत्तावितावनिम् ॥४६॥

ष्यामः ॥४२॥ हे प्रभो ! भुवः उद्धरणमन्यः कः स्पृहयेत् त्वयि तु विस्मयो न ॥४३॥ हे ईश ! निजं वपुर्विधुन्वता त्वया सटाशिखोद्धूतशिवाम्बुबिन्दुभिः सिच्यमानाः जनस्तपस्सत्यनिवासिनो वयं पवित्रीकृताः ॥ ४४ ॥ हे भगवन् ! योगमायामोहितस्य विश्वस्य मङ्गलं विधेहि ॥ ४५ ॥ मैत्रेय उवाच ॥ एवं मुनिभिः स्तूयमानो हरिः रसातलादानीतां पृथ्वीमप्सु न्यस्य स्वशक्त्या स्थिरां कृत्वा ययौ ॥ ४६ ॥

१ एष ते अवलोकयति ज्ञातुमिच्छति ।

॥४७॥ एवं हरेः कथां यः शृणुयात् श्रावयेद्वा तस्य जनार्दनः आशु प्रसीदति ॥४८॥ तस्मिन् प्रसन्ने सति किं दुर्लभम् । भगवान् भजतां स्वगतिं विधत्ते ॥ ४९ ॥ इमां भवापहां भगवत्कथासुधां कर्णाञ्जलिभिः पीत्वा पशुं विना को विरमेत् ॥ ५० ॥ इति श्रीभा० चू० तृती० त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते । सन्ध्यायां कश्यपाद्गर्भसम्भवः कामतो दितेः ॥१॥श्रीशुक उवाच ॥ मैत्रेयेण

स इत्थं भगवानुर्वी विष्वक्सेनः प्रजापतिः ॥ रसाया लीलयोन्नीतामप्सु न्यस्य ययौ हरिः ॥ ४७ ॥ य एवमेतां हरिमेधसो हरेः कथां सुभद्रां कथनीयमायिनः ॥ शृण्वीत भक्त्या श्रवयेत वोशर्तीं जनार्दनोऽस्याशु हृदि प्रसीदति ॥ ४८ ॥ तस्मिन्प्रसन्ने सकलाशिषां प्रभौ किं दुर्लभं ताभिरलं लवात्मभिः ॥ अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम् ॥ ४९ ॥ को नाम लोके पुरुषार्थसारवित्पुराकथानां भगवत्कथासुधाम् ॥ आपीय कर्णाञ्जलिभिर्भवापहामहो विरज्येत विना नरेतरम् ॥ ५० ॥ इति श्रीभा०म०तृ० श्रीवराहप्रादुर्भावे त्रयोदशोऽध्यायः ॥१३॥

श्रीशुक उवाच ॥ निशम्य कौषारविणोपवर्णितां हरेः कथां कारणसूकरात्मनः ॥ पुनः स पप्रच्छ समुद्यताञ्जलिर्न चातितृप्तो विदुरो धृतव्रतः ॥१॥ विदुर उवाच ॥ तेनैव तु मुनिश्रेष्ठ हरिणा यज्ञमूर्तिना ॥ आदिदैत्यो हिरण्याक्षो हत इत्यनुशुश्रुम ॥ २ ॥ तस्य चोद्धरतः क्षोणीं स्वदंष्ट्राग्रेण लीलया ॥ दैत्यराजस्य च ब्रह्मन्कस्माद्धेतोरभून्मृधः ॥ ३ ॥ मैत्रेय उवाच ॥ साधु वीर त्वया पृष्टमवतारकथां हरेः ॥ यत्त्वं पृच्छसि मर्त्यानां मृत्युपाशविशातनीम् ॥ ४ ॥ ययोत्तानपदः पुत्रो मुनिना गीतयाऽर्भकः ॥ मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेः पदम् ॥ ५ ॥

सूकरात्मनो हरेर्वर्णितां कथां निशम्य नातितृप्तो विदुरः पुनः पप्रच्छ ॥१॥ विदुर उवाच ॥ हे मुनिश्रेष्ठ ! यज्ञमूर्तिना हरिणा हिरण्याक्षो हत इति त्वन्मुखात् श्रुतम् ॥ २ ॥ अतः स्वदंष्ट्राग्रेण भूमिमुद्धरतो वराहस्य दैत्यराजस्य कस्माद्धेतोर्युद्धं बभूव ॥ ३ ॥ मैत्रेय उवाच ॥ हे वीर ! त्वया साधु पृष्टं यस्मात् त्वं हरेरवतारकथां पृच्छसि ॥ ४ ॥ यया कथया ध्रुवो बाल एव मृत्योर्मूर्धनि पदं दत्त्वा विष्णुपदं प्राप ॥ ५ ॥

---

१ उशतीं कमनीयाम् ।

पूर्वं देवानां पृच्छतां ब्रह्मणेतिहासः कथितः स मया श्रुतस्तं शृणु॥६॥एकदा दक्षकन्या दितिः पुत्रकामा सती संध्यायामग्निमिष्ट्वा होमशालायां स्थितं पतिं कश्यपं कामेच्छया चकमे ॥ ७ ॥८॥ दितिरुवाच।हे विद्वन् ! त्वत्कृतेऽयं कामो मां पीडयति ॥९॥ प्रजावतीनां सपत्नीनां समृद्धि-भिर्दह्यमानायां मयि प्रसादं कुरु॥१०॥यासां भवद्विधः पतिस्तासां यशो लोकान् व्याप्नोति॥११॥पुरा नः पिता दक्षो हे वत्साः ! यूयं कं पतिं

अथात्रापीतिहासोऽयं श्रुतो मे वर्णितः पुरा ॥ ब्रह्मणा देवदेवेन देवानामनुपृच्छताम् ॥ ६ ॥ दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ॥ अपत्यकामा चकमे संध्यायां हृच्छयार्दिता ॥ ७ ॥ इष्ट्वाऽग्निजिह्वं पयसा पुरुषं यजुषां पतिम् ॥ निम्लोचत्यर्क आसीनमग्न्यगारे समाहितम् ॥८॥ दितिरुवाच ॥ एष मां त्वत्कृते विद्वन्काम आत्तशरासनः ॥ दुनोति दीनां विक्रम्य रम्भामिव मतङ्गजः ॥ ९ ॥ तद्भवान्दह्यमानायां सपत्नीनां समृद्धिभिः ॥ प्रजावतीनां भद्रं ते मय्यायुङ्क्तामनुग्रहम् ॥ १० ॥ भर्तर्याप्तोरुमानानां लोकानां विशते यशः ॥ पतिर्भवद्विधो यासां प्रजया ननु जायते ॥११॥ पुरा पिता नो भगवान्दक्षो दुहितृवत्सलः ॥ कं वृणीत वरं वत्सा इत्यपृच्छत नः पृथक् ॥१२॥ स विदित्वाऽऽत्मजानां नो भावं सन्तानभावनः ॥ त्रयोदशाददात्तासां यास्ते शीलमनुव्रताः ॥१३॥ अथ मे कुरु कल्याणं कामं कञ्जविलोचन ॥ आर्तोपसर्पणं भूमन्नमोघं हि महीयसि ॥ १४ ॥ इति तां वीर मारीचः कृपणां बहुभाषिणीम् ॥ प्रत्याहानुनयन्वाचा प्रवृद्धानङ्गकश्मलाम् ॥ १५ ॥ एष तेऽहं विधास्यामि प्रियं भीरु यदिच्छसि ॥ तस्याः कामं न कः कुर्यात्सिद्धिस्त्रैवर्गिकी यतः ॥ १६ ॥ सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ॥ व्यसनार्णवमत्येति जलयानैर्यथाऽर्णवम् ॥ १७ ॥

वृणुतेति नः पृथक् पृथक् पप्रच्छ॥१२॥ततो दक्षः स्वकन्यानां नस्त्वयि भावं विदित्वा तासां मध्ये त्रयोदश तुभ्यं ददौ॥१३॥अतो हे कमल-नेत्र ! मे मनोरथं कुरु ॥१४॥ एवं श्रुत्वा कश्यपः प्रवृद्धकामेन प्राप्तमोहां तां प्रत्याह॥१५॥कश्यप उवाच ॥ हे भीरु । तव कामं करिष्यामि यतस्त्रैवर्गिकी सिद्धिस्तस्याः कामं को कुर्यात् ॥१६॥ कलत्रवानन्नादिदानेन कृच्छ्रादन्यान् तारयन् स्वयं तरति ॥ १७ ॥

१ पुत्रइच्छया ।

हे मानिनि। यां स्त्रियमर्धाङ्गं वदन्ति यस्यां गृहकृत्यं स्थापयित्वा पुमान् निश्चिन्तश्चरति ॥ १८ ॥ वयं यामाश्रित्येतराश्रमैर्दुर्जयानिन्द्रिय शत्रून् जयेम ॥ १९ ॥ हे गृहेश्वरि ! तां त्वां प्रत्युपकारैस्त्वत्सदृशीभवितुं यावज्जीवं प्रत्युपकुर्वन्तोऽपि न समर्थाः ॥ २० ॥ अथापि तव प्रजारूपं मनोरथं करवाणि मुहूर्तं धैर्यं कुरु ॥२१॥ कुतः एषा घोरतमा वेला यस्यां रुद्रानुचराश्चरन्ति ॥२२॥ हे साध्वि। अस्यां संध्यायां

यामाहुरात्मनो ह्यर्धं श्रेयस्कामस्य मानिनि ॥ यस्यां स्वधुरमध्यस्य पुमांश्चरति विज्वरः ॥ १८ ॥ यामाश्रित्येन्द्रियारातीन्दुर्जयातितराश्रमैः ॥ वयं जयेम हेलाभिर्दस्यून्दुर्गपतिर्यथा ॥ १९ ॥ न वयं प्रभवस्तां त्वामनुकर्तुं गृहेश्वरि ॥ अप्यायुषा वा कात्स्न्र्येन ये चान्ये गुणगृध्नवः ॥ २० ॥ अथापि काममेतं ते प्रजात्यै करवाण्यलम् ॥ यथा मां नातिवोचन्ति मुहूर्तं प्रतिपालय ॥ २१ ॥ एषा घोरतमा वेला घोराणां घोरदर्शना ॥ चरन्ति यस्यां भूतानि भूतेशानुचराणि ह ॥ २२ ॥ एतस्यां साध्वि संध्यायां भगवान्भूतभावनः ॥ परीतो भूतपर्षद्भिर्वृषेणाटति भूतराट् ॥ २३ ॥ श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः ॥ भस्मावगुण्ठामलरुक्मदेहो देवस्त्रिभिः पश्यति देवरस्ते ॥ २४ ॥ न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः ॥ वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २५ ॥ यस्यानवद्याचरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः ॥ निरस्तसाम्यातिशयोऽपि यस्स्वयं पिशाचचर्यामचरद्गतिः सताम् ॥ २६ ॥ हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन्रतस्याविदुषः समीहितम् ॥ यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ २७ ॥

भगवान् शिवो भूतगणैः सह वृषेण चरति ॥२३॥ श्मशानधूलिना प्रकाशितजटाकलापः स ते देवरः सोमार्काग्निनेत्रैः पश्यति ॥२४॥ यस्य लोके स्वजनः परोऽत्यादृतोऽतिनिन्द्यो न कश्चित्। किंच येन स्वचरणेन निर्माल्यवद् दूरतस्त्यक्ता या विभूतिस्तां वयं महाप्रसादः इत्याशास्महे॥२५॥ज्ञानिनो यस्य चरितं गृणन्ति यः स्वयं निरस्तसाम्यातिशयोऽपि पिशाचचर्या चरति॥२६॥दुर्भगाःयस्य चरितं हसन्ति ॥२७॥

१ निन्दन्ति । २ मायाम् । ३ शुनां भोज्यं शरीरम् ।

ब्रह्मादयो यत्कृतं मार्गं पालयन्ति माया च यस्याज्ञाकरी। अहो तस्य चरितमतर्क्यम् ॥२८॥ मैत्रेय उवाच। एतद् दितिः श्रुत्वाऽपि वेश्येव भर्तुर्वस्त्रं जग्राह ॥ २९ ॥ तदा कश्यपो भार्याया विकर्मणि नितरामाग्रहं ज्ञात्वा देवाय नत्वा तया सह रहसि जगाम ॥ ३० ॥ अथ स्नात्वा प्राणानायम्य गायत्रीं जजाप ॥ ३१ ॥ दितिस्तेन कर्मणा लज्जिताऽधोमुखी पतिं बभाषे ॥३२॥ दितिरुवाच ॥ हे ब्रह्मन्! रुद्रो मदपराधात्

आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्ब-
ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया ॥ नम् ॥ २८ ॥ मैत्रेय उवाच ॥ सैवं संविदिते भर्त्रा मन्मथोन्मथितेन्द्रिया ॥ जग्राह वासो ब्रह्मर्षेर्वृषलीव गतत्रपा ॥ २९ ॥ स विदित्वाऽथ भार्यायास्तं निर्बन्धं विकर्मणि ॥ नत्वा दिष्टाय रहसि तयाऽथोपविवेश ह ॥३०॥ अथोपस्पृश्य सलिलं प्राणानायम्य वाग्यतः ॥ ध्यायञ्जजाप विरजं ब्रह्म ज्योतिः सनातनम् ॥ ३१ ॥ दितिस्तु व्रीडिता तेन कर्मावद्येन भारत ॥ उपसंगम्य विप्रर्षिमधोमुख्यभ्यभाषत ॥ ३२ ॥ दितिरुवाच ॥ न मे गर्भमिमं ब्रह्मन्भूतानामृषभो वधीत् ॥ रुद्रः पतिर्हि भूतानां यस्याकरवमंहसम् ॥ ३३ ॥ नमो रुद्राय महते देवायोग्राय मीढुषे ॥ शिवाय न्यस्त दण्डाय धृतदण्डाय मन्यवे ॥३४॥ स नः प्रसीदतां भामो भगवानुर्वनुग्रहः॥व्याधस्याप्यनुकम्प्यानां स्त्रीणां देवः सती पतिः ॥ ३५ ॥ मैत्रेय उवाच ॥ स्वसर्गस्याशिषं लोक्यामाशासानां प्रवेपतीम् ॥ निवृत्तसंध्यानियमो भार्यामाह प्रजा-पतिः ॥ ३६ ॥ कश्यप उवाच ॥ अप्रायत्यादात्मनस्ते दोषान्मौहूर्तिकादुत ॥ मन्निदेशातिचारेण देवानां चातिहेल-नात् ॥ ३७ ॥ भविष्यतस्तवाभद्रावभद्रे जाठराधमौ ॥ लोकान्सपालांस्त्रींश्चण्डि मुहुराक्रन्दयिष्यतः ॥ ३८ ॥

मे गर्भं मा वधीत्। यस्याहमपराधं कृतवती ॥ ३३ ॥ तस्मै रुद्रायोग्राय धृतदण्डाय शिवाय नमः ॥ ३४ ॥ स देवो नः प्रसीदतु ॥ ३५ ॥ मैत्रेय उवाच। एवं दितेर्वाक्यं श्रुत्वा निवृत्तसंध्यानियमः कश्यपस्तामाह ॥ ३६ ॥ हे अभद्रे! तव चित्तस्याशुचित्वात् मुहूर्तातिक्रमदोषात् ममाज्ञालङ्घनादेवहेलनाच्च ॥ ३७ ॥ तव जठरे अधमौ द्वौ पुत्रौ भविष्यतः तौ सर्वेषां दुःखं दास्यतः ॥ ३८ ॥

१ सकामेषु फलासेचनकर्त्रे। २ लोकद्वयार्हाम्।

निरपराधिनां दीनानां प्राणिनां हन्यमानानां तां साधुषु कोपितेषु सत्सु तदा विश्वेश्वरो भगवान् क्रुद्धः सन्नवतीर्य तौ हनिष्यति ॥ ३९ ॥ ॥ ४० ॥ दितिरुवाच ॥ पुत्रवधं भगवता आशासे क्रुद्धाद् ब्रह्मणात् मा भूत ॥ ४१ ॥ नरकस्था अपि ब्रह्मदण्डदग्धं न गृह्णन्ति ॥ ४२ ॥ कश्यप उवाच । हे दिते ! तव पश्चात्तापो जातः । अतस्ते पौत्रः साधुर्भविष्यति साधवो यद्यशो गास्यन्ति ॥ ४३ ॥ ४४ ॥ साधवो यस्य

प्राणिनां हन्यमानानां दीनानामकृतागसाम् । स्त्रीणां निगृह्यमाणानां कोपितेषु महात्मसु ॥ ३९ ॥ तदा विश्वेश्वरः क्रुद्धो भगवाँल्लोकभावनः । हनिष्यत्यवतीर्यासौ यथाऽद्रीञ्छतपर्वधृक् ॥ ४० ॥ दितिरुवाच । वधं भगवता साक्षात्सुनाभोदारबाहुना । आशासे पुत्रयोर्मह्यं मा क्रुद्धाद्ब्राह्मणाद्विभो ॥ ४१ ॥ न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च । नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः ॥४२॥ कश्यप उवाच कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् । भगवत्युरुमानाच्च भवे मय्यपि चादरात् ॥४३॥ पुत्रस्यैव तु पुत्राणां भवितैकः सतां मतः । गास्यन्ति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥ योगैर्हेमेव दुर्वर्णं[1] भावयिष्यन्ति साधवः । निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥ ४५ ॥ यत्प्रसादादिदं विश्वं प्रसीदति यदात्मकम् । स स्वदृग् भगवान्यस्य तोष्यतेऽनन्यया दृशा ॥४६॥ स वै महाभागवतो महात्मा महानुभावो महतां महिष्ठः । प्रवृद्धभक्त्या ह्यनुभाविताशये निवेश्य वैकुण्ठमिमं विहास्यति ॥४७॥ अलम्पटः शीलधरो गुणाकरो हृष्टः परर्द्ध्या व्यथितो दुःखितेषु । अभूतशत्रुर्जगतः शोकहर्ता नैदाघिकं तापमिवोडुराजः ॥४८॥ अन्तर्बहिश्चामलमब्जनेत्रं स्वपूरुषेच्छानुगृहीतरूपम् । पौत्रस्तव श्रीललनाललामं द्रष्टा स्फुरत्कुण्डलमण्डिताननम् ॥ ४९ ॥

स्वभावं प्राप्तं निर्वैरादिभिर्योगैरात्मानं शोधयिष्यन्ति ॥ ४५ ॥ यत्प्रसादादिदं विश्वं प्रसीदति स भगवान् यस्मात् संतोषं प्राप्स्यते ॥४६॥ स ते पौत्रो महाभागवतः प्रवृद्धभक्त्या शोधिते चित्ते हरिं निवेश्य देहाद्यभिमानं त्यक्ष्यति ॥ ४७ ॥ अपि च सोऽलम्पटः सुस्वभावो गुणाकरो जगतः शोकहर्ता भविष्यति ॥ ४८ ॥ एतादृशस्ते पौत्रः स्फुरत्कुण्डलमण्डिताननं कमलनेत्रं श्रीकृष्णं द्रक्ष्यति ॥ ४९ ॥

---

[1] हीनवर्णं हेमेव ।

मैत्रेय उवाच ॥ भागवतः पौत्रो भाव्यः पुत्रयोश्च कृष्णाद् वध इति श्रुत्वा दितिर्भृशमानन्दं प्राप ॥५०॥ इति श्रीभाग० चू० तृतीय० चतुर्दशोऽध्यायः ॥ १४ ॥ हतप्रभैः सुरैः पृष्टः प्राह पञ्चदशे विधिः । तद्बीजं विप्रशापादि वैकुण्ठे विष्णुभृत्ययोः ॥१॥ मैत्रेय उवाच । हे विदुर ! दितिस्तत्काश्यपं वीर्यमुदरे शतवर्षं दधार ॥१॥ तेन वीर्येणान्धकारो जातः । तदा शक्रादयो भीताः सन्तो ब्रह्माणं गत्वा प्रार्थयामासुः॥२॥ देवा ऊचुः ॥ हे भगवन् तवैतदज्ञातं न तथाऽपि वयं भीताः निवेदयामः ॥ ३ ॥ ब्रह्माणं परमेश्वरत्वेन प्रार्थयन्ति । हे देवदेव ! त्वं सर्व-

मैत्रेय उवाच ॥ श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् ॥ पुत्रयोश्च वधं कृष्णाद्विदित्वाऽऽसीन्महामनाः ॥५०॥ इति श्रीभा० महापु० तृ० दितिकश्यपसंवादवर्णनं नाम चतुर्दशोऽध्यायः ॥१४॥ मैत्रेय उवाच ॥ प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः ॥ दधार वर्षाणि शतं शङ्कमाना सुरार्दनात् ॥ १ ॥ लोके तेन हतालोके लोकपाला हतौजसः ॥ न्यवेदयन्विश्वसृजे ध्वान्तव्यतिकरं दिशाम् ॥ २ ॥ देवा ऊचुः ॥ तम एतद्विभो वेत्थ संविग्ना यद्वयं भृशम् ॥ न ह्यव्यक्तं भगवतः कालेनास्पृष्टवर्त्मनः ॥ ३ ॥ देवदेव जगद्धातर्लोकनाथ शिखामणे ॥ परेषामपरेषां त्वं भूतानामसि भाववित् ॥ ४ ॥ नमो विज्ञानवीर्याय माययेदमुपेयुषे ॥ गृहीतगुणभेदाय नमस्तेऽव्यक्तयोनये ॥५॥ ये त्वाऽनन्येन भावेन भावयन्त्यात्मभावनम् ॥ आत्मनि प्रोतभुवनं परं सदसदात्मकम् ॥ ६ ॥ तेषां सुपक्वयोगानां जितश्वासेन्द्रियात्मनाम् ॥ लब्धयुष्मत्प्रसादानां न कुतश्चित्पराभवः ॥ ७ ॥ यस्य वाचा प्रजाःसर्वा गावस्तन्त्येव यन्त्रिताः॥ हरन्ति बलिमायत्तास्तस्मै मुख्याय ते नमः॥८॥ स त्वं विधत्स्व शं भूमंस्तमसा लुप्तकर्मणाम्॥अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम्॥९॥

भूतानामभिप्रायं जानासि ॥ ४ ॥ मायया ब्रह्मदेहं प्राप्तवते गृहीतरजोगुणाय तुभ्यं नमः ॥ ५ ॥ ये त्वां निष्कामभावेन ध्यायन्ति ॥ ६ ॥ जितश्वासेन्द्रियात्मनां तेषां कुतश्चित् पराभवो न ॥ ७ ॥ यस्य वाक्तन्त्या बद्धाः प्रजाः पूजां यस्मै अर्पयन्ति तस्मै ते नमः ॥ ८ ॥ हे ईश ! स त्वं शं विधत्स्व । विपत्तिं प्राप्तानस्मान् दयार्द्रदृष्ट्येक्षितुं प्रसीद ॥ ९ ॥

१ सोत्साहचित्ता । २ तमसा संकरम् ।

हे देव ! इदं काश्यपं तेजो दितेर्गर्भो दिशोऽन्धीकुर्वन् वर्धते । अतोऽस्माद् रक्ष ॥१०॥ मैत्रेय उवाच ॥ तदा ब्रह्मा प्रहस्य देवानुवाच ॥११॥ हे देवाः ! युष्मत्पूर्वजाः मे मानसाः पुत्राः सनकादयो गतस्पृहाः सन्तो लोकेषु चेरुः ॥ १२ ॥ एकदा ते सर्वलोकनमस्कृतं वैकुण्ठाख्यं लोकं ययुः ॥१३॥ यत्र सर्वे पुरुषाः वैकुण्ठमूर्तयो हरिमाराधयन्ति ॥१४॥ यत्राद्यः शब्दगोचरो भगवानास्ते ॥१५॥ यत्र कामदुघैर्वृक्षैः शोभितं नै-

एष देव दितेर्गर्भ ओजः काश्यपमर्पितम् ॥ दिशस्तिमिरयन्सर्वा वर्धतेऽग्निरिवैधसि ॥१०॥ मैत्रेय उवाच ॥स प्रहस्य महाबाहो भगवाञ्छब्दगोचरः ॥ प्रत्याचष्टात्मभूर्देवान्प्रीणन्रुचिरया गिरा ॥ ११ ॥ ब्रह्मोवाच ॥ मानसा मे सुता युष्मत्पूर्वजाः सनकादयः ॥ चेरुर्विहायसा लोकाँल्लोकेषु विगतस्पृहाः ॥ १२ ॥ त एकदा भगवतो वैकुण्ठस्यामलात्मनः ॥ ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥ १३ ॥ वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ॥ येऽनिमित्तनिमित्तेन धर्मेणाराधयन्हरिम् ॥ १४ ॥ यत्र चाद्यः पुमानास्ते भगवाञ्छब्दगोचरः ॥ सत्त्वं विष्टभ्य विरजं स्वानां नो मृडयन्वृषः ॥ १५ ॥ यत्र नैःश्रेयसं नाम वनं कामदुघैर्द्रुमैः ॥ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिव मूर्तिमत् ॥ १६ ॥ वैमानिकाः सललनाश्चरितानि यत्र गायन्ति लोकशमलक्षपणानि भर्तुः ॥ अन्तर्जलेऽनुविकसन्मधुमाधवीनां गन्धेन खण्डितधियोऽप्यनिलं क्षिपन्तः ॥ १७ ॥ पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः ॥ कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृङ्गाधिपे हरिकथामिव गायमाने ॥ १८ ॥ मन्दारकुन्दकुरवोत्पलचम्पकार्णपुन्नागनागबकुलाम्बुजपारिजाताः ॥ गन्धेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयन्ति ॥ १९ ॥

श्श्रेयसं नाम वनम् ॥१६॥ यत्र सललनाः देवा वसन्तकालिकपुष्पाणां गन्धेन खण्डितधियोऽपि तद्गन्धप्रापकं वायुं तिरस्कुर्वन्तो हरेश्चरितानि गायन्ति ॥१७॥ किंच यत्र वने भृङ्गाधिपे उच्चैर्हरिकथामिव गायमाने सति पारावतकोकिलसारसचक्रवाकानां शब्दः क्षणमात्रं विरमति ॥१८॥ मन्दारपारिजातचम्पकादिपुष्पजातयः सुगन्धा अपि श्रीहरिणा तुलस्याः गन्धेऽर्चिते सति तस्यास्तपो बहु मानयन्ति ॥ १९ ॥

१ अनिमित्तं निमित्तं यस्मिन् तेन निष्कामेनेत्यर्थः । २ धर्ममूर्तिः ।

यत्र वैदूर्यमारकतहेममयैरनेकविमानैः स्त्रीभिश्च सहदेवाः पर्यटन्ति ॥ २० ॥ यत्र लक्ष्मीर्हरेःसद्मनि स्फटिकभित्तिषु संमार्जनं कुर्वतीव लक्ष्यते ॥२१॥ सा श्रीः स्वोद्याने तुलसीभिःश्रीविष्णुं पूजयन्ती विमलामृताप्सु वापीषु प्रतिबिम्बितं स्वमुखं वीक्ष्य हरिणा चुम्बितं मेने ॥ २२ ॥ किंच ये मतिभ्रंशिका अर्थकामादिवार्ताः शृण्वन्ति ते तद्वैकुण्ठं न व्रजन्ति ॥२३॥ हे देवाः ! यस्यां तत्त्वज्ञानं भवति तां मनुष्यजातिं प्राप्ताः

तत्संकुलं हरिपदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ॥ येषां बृहत्कटितटाः स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥ श्रीरूपिणी क्वणयती चरणारविन्दं लीलाम्बुजेन हरिसद्मनि मुक्तदोषा ॥ संलक्ष्यते स्फटिककुडच उपेतहेम्नि संमार्जतीव यदनुग्रहणेऽन्ययत्नः ॥ २१ ॥ वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् ॥ अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः ॥ २२ ॥ यन्न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ॥ यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्ता-न्क्षिपन्त्यशरणेषु तमस्सु हन्त ॥ २३ ॥ येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र ॥ नाराधनं भगवतो वितरन्त्यमुष्य संमोहिता विततया बत मायया ते ॥ २४ ॥ यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या दूरेयमा ह्युपरि नः स्पृहणीयशीलाः ॥ भर्तुर्मिथः सुयशसः कथनानुरागवैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥ २५ ॥ तद्विश्वगुर्वधिकृतं भुवनैकवन्द्यं दिव्यं विचित्रविबुधाग्र्यविमानशोचिः ॥ आपुः परां मुदमपूर्वमुपेत्य योगमायाबलेन मुनयस्तदथो विकुण्ठम् ॥ २६ ॥ तस्मिन्नतीत्य मुनयः षडसज्जमानाः कक्षाः समानवयसावथ सप्तमायाम् ॥ देवावचक्षत गृहीतगदौ परार्ध्यकेयूरकुण्डलकिरीटविटङ्कवेषौ ॥ २७ ॥

सन्तोऽपि ये हरेराराधनं न कुर्वंति ते भगवन्मायया मोहिता इति दुःखमेतत् ॥२४॥ ये यमनियमान् त्यक्त्वा मिथो भगवत्कथाप्रेम्णा बाष्पकलया सह पुलकीकृताङ्गाः भवन्ति ते तत्र गच्छन्ति ॥ २५ ॥ तत्र योगमायाबलेन सनकादयो गत्वा वैकुण्ठं विलोक्य हर्षं प्रापुः ॥ २६ ॥ मुनयस्तस्मिन् वैकुण्ठे षट् प्राकारद्वाराण्यतीत्य सप्तमे द्वारे गृहीतगदौ केयूरकुण्डलकिरीटधरौ ॥ २७ ॥

१ रचना सृष्ट्यादिलीला । २ हर्म्यधिष्ठितम । ३ आसक्तिमकुर्वाणाः ।

वनमालिकया युक्तौ रक्तेक्षणौ यतस्ततो रभसं दधानाविव भासमानौ कुटिलया भ्रुवा समलंकृतं वदनं धारयन्तौ॥२८॥जयविजयाख्यौ ताव-
पृष्ट्वैव यथा पूर्वाणि षट् द्वाराणि विविशुस्तथा सप्तमे द्वारेऽपि तावदृष्ट्वाऽपृष्ट्वा च विविशुः ॥ २९ ॥ तदा तौ वृद्धानपि पञ्चवर्षबालसदृशान्
नग्नान् चतुरः कुमारान् वीक्ष्य वेत्रेण निवारितवन्तौ॥३०॥ तदा हरेर्द्वारपालाभ्यां निषिध्यमानाः कुमाराः ऊचुः ॥३१॥ अहो इह वसतां सम-

मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तया सितचतुष्टयबाहुमध्ये ॥ वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्ष-
णेन च मनाग्रभसं दधानौ ॥ २८ ॥ द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः ॥ सर्वत्र तेऽवि-
षमया मुनयः स्वदृष्ट्या ये संचरन्त्यविहता विगताभिशङ्काः ॥२९॥ तान्वीक्ष्य वातरशनांश्चतुरः कुमारान्वृद्धान्दशार्धव-
यसो विदितात्मतत्त्वान्॥ वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ॥३०॥ताभ्यां मिषत्स्व-
निमिषेषु निषिध्यमानाः स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् ॥ ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्कामानुजेन सहसा
त उपप्लुताक्षाः ॥ ३१ ॥ मुनय ऊचुः ॥ को वामिहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमः स्वभावः ॥
तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां को वाऽऽत्मवत्कुहकयोः परिशङ्कनीयः ॥ ३२ ॥ न ह्यन्तरं भगवतीह समस्तकु-
क्षावात्मानमात्मनि नभो नभसीव धीराः ॥ पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं
यतोऽस्य ॥३३॥ तद्वाममुष्य परमस्य विकुण्ठभर्तुः कर्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम् ॥ लोकानितो व्रजतमन्त-
रभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ ३४ ॥

दर्शिनां मध्ये कपटयोर्युवयोरेव कोऽयं विषमः स्वभावः ॥३२॥ विद्वांसो विश्वकुक्षौ भगवति भेदं न पश्यन्ति। इह भगवद्वसतौ युवाभ्या-
मेव भेदः उत्पादितः ॥ ३३ ॥ अतः इह वस्तुं नार्हौ । अतः इमे कामक्रोधलोभाः यत्र सन्ति तं लोकं गच्छतम् ॥ ३४ ॥

---

१ निर्गमौ नासापुटौ । २ पुरटं सुवर्णम् । ३ 'विदवं चरन्ति' इ० पा० । ४ देवेषु पश्यत्सु । ५ दिदृक्षितं दर्शनेच्छा । ६ भद्रम् । ७ दृष्टिर्दर्शनम् ।

अनिवारणं ब्रह्मशापं श्रुत्वा हरेरनुचरावपि तौ द्वौ नितरां बिभ्यतुः । तेषां पादग्रहणं कुर्वन्तौ दण्डवत्पेततुरूचतुश्च ॥ ३५ ॥ हे मुनीश्वराः ! भवद्भिर्नौ उचितो दण्डः कृतः स मूढयोनीर्व्रजतोरपि नौ भगवत्स्मृतिनाशको मा भूत् ॥ ३६ ॥ एवं स्वपार्षदैर्महत्सु कृतापराधं ज्ञात्वा तदैव भगवान् लक्ष्म्या सह तत्र ययौ ॥३७॥तदा ते पश्चात् स्वपुंभिरानीतच्छत्रचामरादिभिः समागतं हरिं ददृशुः॥३८॥कथंभूतं हरिम् । द्वारपालमुनि

तेषामितीरितमुभाववधार्य घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः ॥ सद्यो हरेरनुचरावुरु बिभ्यतुस्तत्पादग्रहावपततामतिकातरेण ॥ ३५ ॥ भूयादघोनि भगवद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्यशेषम् ॥ मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥ एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः ॥ तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः ॥ ३७ ॥ तं त्वागतं प्रतिहृतौपयिकं स्वपुंभिस्तेऽचक्षताक्षविषयं स्वसमाधिभाग्यम् ॥ हंसश्रियोर्व्यजनयोः शिववायुलोलच्छुभ्रातपत्रशशिकेसरशीकराम्बुम् ॥ ३८ ॥ कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशन्तम् ॥ श्यामे पृथावुरसि शोभितया श्रिया स्वश्चूडामणिं सुभगयन्तमिवात्मधिष्ण्यम् ॥ ३९ ॥ पीतांशुके पृथुनितम्बिनि विस्फुरन्त्या काञ्च्याऽलिभिर्विरुतया वनमालया च ॥ वल्गुप्रकोष्ठवलयं विनतासुतांसे विन्यस्तहस्तमितरेण धुनानमब्जम् ॥४०॥ विद्युत्क्षिपन्मकरकुण्डलमण्डनार्हगण्डस्थलोन्नसमुखं मणिमत्किरीटम् ॥ दोर्दण्डखण्डविवरे हरता परार्ध्यहारेण कन्धरगतेन च कौस्तुभेन ॥४१॥ अत्रोपसृष्टमिति चोत्स्मितमिन्दिरायाः स्वानां धिया विरचितं बहुसौष्ठवाढ्यम् ॥ सह्यं भवस्य भवतां च भजन्तमङ्गं नेमुर्निरीक्ष्य नवितृप्तदृशो मुदा कैः ॥ ४२ ॥



वृन्दस्य प्रसादे सुमुखं प्रेमकटाक्षेण हृदिसुखयन्तम्॥३९॥कौशेयकाञ्चीवनमालाधरं गरुडस्कन्धे स्थापितहस्तं हस्तेनान्येन कमलं भ्रामयन्तम् ॥४०॥किरीटकुण्डलहारकौस्तुभधरम्॥४१॥किंच अहमेव सर्वसौन्दर्यनिधिरिति लक्ष्म्याःअहंकारदूरकरं हरेःस्वरूपं दृष्ट्वा मुनयो नमश्चक्रुः॥४२॥

१ 'बिभ्यतः' इ० पा० । २ कृते इति शेषः । ३ शिरोभिः ।

तदा हरिपदाब्जतुलसीसुगन्धवायुर्नासाच्छिद्रेणान्तः प्रविश्य ब्रह्मानन्दसेविनामपि मुनीनां चित्ते हर्षं तनौ रोमाञ्चं च चकार॥४३॥ते सुन्दरमुखं वीक्ष्य लब्धमनोरथाः सन्तस्तच्चरणं ध्यातवन्तः॥४४॥ योगिनां ध्यानविषयभूतमणिमाद्यष्टैश्वर्ययुतं हरिं तुष्टुवुः॥४५॥ कुमारा ऊचुः॥ हे अनन्त ! त्वदुद्भवेन नः पित्रा पूर्वं त्वं वर्णितः। तथाऽपि स त्वं नयनैरद्य दृष्टः॥४६॥ विरागाः मुनयः श्रवणादिभक्तियोगैर्हृदि यं विदुस्तं त्वां

तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः॥ अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः॥ ४३॥ ते वा अमुष्य वदनासितपद्मकोशमुद्वीक्ष्य सुन्दरतराधरकुन्दहासम्॥ लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रिद्वन्द्वं नखारुणमणिश्रयणं निदध्युः॥ ४४॥ पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहुमतं नयनाभिरामम्॥ पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन् युतमष्टभोगैः॥ ४५॥ कुमारा ऊचुः॥ योऽन्तर्हितो हृदिगतोऽपि दुरात्मनां त्वं सोऽद्यैव नो नयनमूलमनन्त राद्धः॥ यर्ह्येव कर्णविवरेण गुहां गतो नः पित्राऽनुवर्णितरहा भवदुद्भवेन॥ ४६॥ तं त्वा विदाम भगवन्परमात्मतत्त्वं सत्त्वेन सम्प्रति रतिं रचयन्तमेषाम्॥ यत्तेऽनुतापविदितैर्दृढभक्तियोगैरुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः॥ ४७॥ नात्यन्तिकं विगणयन्त्यपि ते प्रसादं किं त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते॥ येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः॥ ४८ कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोऽलिवद्यदि नु तं पदयो रमेत॥ वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः॥ ४९॥

परमात्मानं विदाम॥ ४७॥ ये त्वत्कथारसज्ञास्ते मोक्षाख्यमपि तव प्रसादं नाद्रियन्ते॥४८॥ हे भगवन् ! नो जन्म नरकेऽपि भवतु परं नःचित्तं ते पादयो भ्रमरवत् नो वाणी च तुलसीवद ते चरणवर्णते कर्णौ च गुणगणै पूर्यैताम् पदयोर्यथा रमेत तथा कुरु॥४९॥

१ नित्यं। २ अणिमाद्यैः। ३ बुद्धिम्। ४ उपदिष्टरहस्यः।

हे विपुलकीर्ते ! यस्मादिदं रूपं प्रकटीकृतवानसि तस्मादद्य वयं कृतार्थास्तुभ्यं नमो विदध्मः॥५०॥इति श्रीभा० चू० तृतीये० पञ्चदशोऽध्यायः ॥ १५ ॥ हरिणा सान्त्वितैर्विप्रैरनुतप्तैस्तु षोडशे । तयोरसुरभावेऽपि कृतोऽनुग्रह ईर्यते ॥१॥ ब्रह्मोवाच । देवाः गृणतां मुनीनां वचः प्रतिनन्द्य विभुर्जगाद ॥१॥ श्रीभगवानुवाच। एतौ जयविजयौ मत्पार्षदौ मां तुच्छीकृत्य वोऽपराधं कृतवन्तौ ॥२॥ भवद्भिरेतयोर्दण्डः कृतः स एवा-

प्रादुश्चकर्थ यदिदं पुरुहूत रूपं तेनेश निर्वृतिमवापुरलं दृशो नः ॥ तस्मा इदं भगवते नम इद्विधेम योऽनात्मनां दुरुदयो भगवान् प्रतीतः ॥५०॥ इति श्रीभा० म० तृतीय० श्रीवैकुण्ठविप्रशापयोर्वर्णनं नाम पञ्चदशोऽध्यायः ॥१५॥ब्रह्मोवाच॥ इति तद् गृणतां तेषां मुनीनां योगधर्मिणाम् ॥ प्रतिनन्द्य जगादेदं विकुण्ठनिलयो विभुः ॥ १ ॥ श्रीभगवानुवाच ॥ एतौ तौ पार्षदौ मह्यं जयो विजय एव च ॥ कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् ॥ २ ॥ यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः ॥ स एवानुमतोऽस्माभिर्मुनयो देवहेलनात् ॥३॥ तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे ॥ तद्धीत्यात्मकृतं मन्ये यत्स्वपुंभिरसत्कृताः ॥ ४ ॥ यन्नामानि च गृह्णाति लोको भृत्ये कृतागसि ॥ सोऽसाधुवादस्तत्कीर्तिं हन्ति त्वचमिवामयः ॥५॥ यस्यामृतामलयशश्श्रवणावगाहः सद्यः पुनाति जगदा श्वपचाद्विकुण्ठः ॥ सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥६॥ यत्सेवया चरणपद्मपवित्ररेणुं सद्यः क्षताखिलमलं प्रतिलब्धशीलम् ॥ न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थ इतरे नियमान् वहन्ति ॥७॥ नाहं तथाऽद्मि यजमानहविर्विताने श्च्योतद् घृतप्लुतमदन् हुतभुङ्मुखेन॥यद्ब्राह्मणस्यमुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥८॥

स्माभिर्मान्यः ॥ ३ ॥ कुतः ब्राह्मणा मे परं दैवतम् । अतो वः प्रसादयामि । दूतैर्यः कृतोऽपराधः स मयैव कृत इति मन्ये॥४॥किंच लोकः कृतापराधे भृत्ये स्वामिनो नामानि गृह्णाति । सोऽपवादस्तस्य कीर्तिं हन्ति ॥ ५ ॥ युष्माकमपराधकर्तारं स्वबाहुमपि छिन्द्याम् । काऽन्यस्य कथा ॥ ६ ॥ ब्राह्मणसेवया पवित्रं विरक्तमपि मां लक्ष्मीर्न त्यजति ॥ ७ ॥ अहं यथा क्षरता घृतेन विलोडितं पायसादि

१ अजितेन्द्रियाणाम् । २ अप्रकटः ।

प्रतिग्रासं भुञ्जानस्य ब्राह्मणस्य मुखेनाश्नामि तथा यज्ञेऽग्निमुखेन न तृप्यामि ॥८॥ यस्य मे पादोदकं सद्यो लोकान् पुनाति सोऽहं येषां पादरजः किरीटैर्बिभर्मि तेषामपराधं कर्तुं कः समर्थः ॥९॥ किंच गोब्राह्मणाः मे तनूः अतो ये तान् मद्बुद्ध्या न पश्यन्ति तेषां दृशो गृध्राश्चञ्चुभिश्छिन्दन्ति ॥१०॥ ये ब्राह्मणान् मद्बुद्ध्या पूजयन्ति तैरहं वशीकृतः ॥११॥ इमौ ममाभिप्रायमजानन्तौ युष्मदपराधं कृतवन्तौ । इमौ

येषां बिभर्म्यहमखण्डविकुण्ठयोगमायाविभूतिरमलाङ्घ्रिरजः किरीटैः ॥ विप्रांस्तु को न विषहेत यदर्हणाम्भः सद्यः
पुनाति सह चन्द्रललामलोकान् ॥ ९ ॥ ये मे तनूर्द्विजवरान् दुहतीर्मदीया भूतान्यलब्धशरणानि च भेदबुद्ध्या ॥
द्रक्ष्यन्त्यघक्षतदृशो ह्यहिमन्यवस्तान् गृध्रा रुषा मम कुषन्त्यधिदण्डनेतुः ॥ १० ॥ ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयन्तस्तुष्यद्धृदः स्मितसुधोक्षितपद्मवक्त्राः ॥ वाण्याऽनुरागकलयाऽऽत्मजवद् गृणन्तः संबोधयन्त्यहमिवाहमुपाहृतस्तैः ॥ ११ ॥ तन्मे स्वभर्तुरवसायमलक्षमाणौ युष्मद्व्यतिक्रमगतिं प्रतिपद्य सद्यः ॥ भूयो ममान्तिकमितां तदनुग्रहो मे यत्कल्पतामचिरतो भृतयोर्विवासः ॥१२॥ ब्रह्मोवाच ॥ अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् ॥ नास्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत ॥१३॥ सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वराम् ॥ विगाह्यागाधगम्भीरां नविदुस्तच्चिकीर्षितम् ॥१४॥ ते योगमाययाऽऽरब्धपारमेष्ठ्यमहोदयम् ॥ प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ॥१५॥ ऋषय ऊचुः ॥ न वयं भगवन् विद्मस्तव देव चिकीर्षितम् ॥ कृतो मेऽनुग्रहश्चेति यदध्यक्षः प्रभाषसे ॥१६॥

पुनः स्वल्पकालेनैवममान्तिकं यथा प्राप्स्यतस्तथा मयि प्रसादः कर्तव्यः ॥१२॥ ब्रह्मोवाच ॥ एवं प्रियां वाणीं निशम्य तेषां मनो नातृप्यत् ॥ ॥१३॥ ततस्तां वाणीं विचार्यापि किमस्मानभिनन्दति निन्दति वेति तत्त्वं न विदुः ॥१४॥ ततोऽभिनन्दतीति ज्ञात्वा हृष्टाः सन्तः प्राञ्जलयः प्रोचुः ॥ १५ ॥ ऋषय ऊचुः हे भगवन् ! तव चिकीर्षितं वयं न विद्मः सर्वेश्वरस्त्वं मयि प्रसादः क्रियतामिति प्रभाषसे ॥ १६ ॥

१ युष्मदपराधोचितगतिम् । २ प्राप्नुताम् । ३ भृत्ययोः । ४ कमनीयाम् । ५ प्रसार्य कर्णं वस्त्वेत्यर्थः ।

किंच विप्राणां च दैवतं त्वमेव ।ब्राह्मणा मे परं दैवतमिति त्वमेव वदसि । अस्तु ॥ १७ ॥ अहो धर्मस्तेऽवतारै रक्ष्यते ॥ १८ ॥ योगिनो यदनुग्रहात् सद्यो मृत्युं तरन्ति स भगवान् परैरनुगृह्यते किं नेत्यर्थः ॥१९॥ किंच अर्थिनो यस्याः पादरेणुं शिरसा दधते सा लक्ष्मीः प्रतिक्षणं त्वदङ्घ्रिं सेवते ॥ २० ॥ शुद्धभावैः सेवमानामपि लक्ष्मीं यो नात्याद्रियेत स त्वं ब्राह्मणपादरजसैश्वर्यं प्राप्त इति यद् भाषसे तल्लोकसंग्रह-

ब्राह्मणस्य परं दैवं ब्राह्मणाः किल ते प्रभो ॥ विप्राणां देवदेवानां भगवानात्मदैवतम् ॥ १७ ॥ त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव ॥ धर्मस्य परमो गुह्यो निर्विकल्पो भवान्मतः ॥ १८ ॥ तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ॥ योगिनः स भवान्किं स्विदनुगृह्येत यत्परैः ॥ १९ ॥ यं वा विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः ॥ धन्यार्पिताङ्घ्रितुलसी नवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥ यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियेत्परमभागवतप्रसङ्गः ॥ स त्वं द्विजानुपथपुण्यरजः पुनीतः श्रीवत्सलक्ष्म किमगा भगभाजनस्त्वम् ॥ २१ ॥ धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् ॥ नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य ॥ २२ ॥ न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृषः स्वर्हणेन ससूनृतेन ॥ तर्ह्येव नङ्क्ष्यति शिवस्तव देव पन्था लोकोऽग्रहीष्यदृषभस्य हि तत् प्रमाणम् ॥ २३ ॥ तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः ॥ नैतावता त्र्यधिपते बत विश्वभर्तुस्तेजः क्षतं त्ववनतस्य स ते विनोदः ॥ २४ ॥ यं वाऽनयोर्दममधीश भवान्विधत्ते वृत्तिं नु वा तदनुमन्महि निर्व्यलीकम् ॥ अस्मासु वा य उचितो ध्रियतां स दण्डो येऽनागसौ वयमयुङ्क्ष्महि किल्बिषेण ॥ २५ ॥

मात्रम् ॥२१॥ हे त्रियुग ! द्विजदेवानां प्रयोजनाय तपश्शौचदयाभिरिदं चराचरं पालितम् ॥२२॥ हे देव ! कदा द्विजकुलं त्वं न रक्षिता तदा वेदमार्गो नाशं यास्यति ॥ २३ ॥ हे ईश ! धर्मरक्षणार्थं ब्राह्मणानां नमनं कृतवतस्तव प्रभावो न क्षीणः यतः स नमनादिस्ते विनोदः ॥२४॥ किंच अस्माभिरनयोर्दण्डः कृतः स भवताऽनुमन्तव्यः । अथवा तं दूरीकर्तुमस्मासु योग्यो दण्डः क्रियताम् । तत् सर्वं वयं मन्यामहे ॥२५॥



१ त्रीणि युगानि षड् गुणाः सन्ति यस्य तत्संबुद्धिः । २ यद्यदाचरति श्रेष्ठ इति गीतायां संगच्छते । ३ वेदमार्गनाशनम् । ४ इवेति लोकोक्तिः । ५ 'त्र्यधिपतेः' इ० पा० ।

श्रीभगवानुवाच ॥ एतौ सद्योऽसुरयोनिं प्राप्य क्रोधसमाधिना मयि बद्धवैरौ भूयो जन्मत्रयेण मत्समीपं शीघ्रमेष्यतः। हे विप्राः! अयं शापो मयैव निर्मित इति जानीत ॥२६॥ ब्रह्मोवाच ॥ अथ ते मुनयो वैकुण्ठलोकं हरिं च दृष्ट्वा भगवन्तं प्रणम्य वैष्णवीं श्रियं शंसन्तः प्रतिजग्मुः ॥२७॥२८॥ भगवान् स्वपार्षदौ जगाद। हे जयविजयौ! मा भैष्टं युवां शमस्तु ॥२९॥ मयि वैरयोगेन ब्रह्मशापं निस्तीर्य मे समीपं स्वल्प-

श्रीभगवानुवाच ॥ एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसंभृतसमाध्यनुबद्धयोगौ ॥ भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निर्मितस्तदवैत विप्राः ॥ २६ ॥ ब्रह्मोवाच ॥ अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् ॥ वैकुण्ठं तदधिष्ठानं विकुण्ठं च स्वयंप्रभम् ॥ २७ ॥ भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च ॥ प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥ भगवाननुगावाह यातं मा भैष्टमस्तु शम् ॥ ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतं तु मे ॥ २९ ॥ * मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् ॥ प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः ॥ ३० ॥ द्वास्स्थावादिश्य भगवान् विमानश्रेणिभूषणम् ॥ सर्वातिशयया लक्ष्म्या जुष्टं स्वं धिष्ण्यमाविशत् ॥ ३१ ॥ तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः ॥ हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ ॥ ३२ ॥ तदा वैकुण्ठधिषणात्तयोर्निपतमानयोः ॥ हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ॥ ३३ ॥ तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः ॥ दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् ॥ ३४ ॥ तयोरसुरयोरद्य तेजसा यमयोर्हि वः ॥ आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति ॥ ३५ ॥

कालेन प्रत्येष्यथः॥३०॥इति तावादिश्य हरिः स्वधिष्ण्यं प्रविवेश॥३१॥ततस्तौ ब्रह्मशापात् हतश्रियौ नष्टगर्वौ च बभूवतुः॥३२॥तदा वैकुण्ठात् सद्यः पतमानयोः सतोर्विमानेषु महान् हाहाकारो बभूव॥३३॥अधुना हे देवाः! तौ दितेर्जठरे प्राप्तौ॥३४॥तयोस्तेजसा वस्तेजः आक्षिप्तम्॥३५॥

---

१ निर्मितः । * एतत्पुरंव निर्विष्टं क्रुद्धया मुदा ॥ पुराऽपवारिता द्वारि विशन्ती मय्युपारते ॥ इत्यधिकः पाठः ॥

त्र्यधीशो भगवान् शं विधास्यति तत्रास्मद्विचारेण कियानर्थः ॥३६॥ इति श्रीभा० चू० तृतीयस्कन्धे षोडशोऽध्यायः ॥१६॥ ततः सप्तदशे जन्म तयोर्लोकभयंकरम् । हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः ॥१॥ मैत्रेय उवाच । हे विदुर ! देवाः ब्रह्मवाक्यं निशम्य स्वर्गं ययुः ॥१॥ दितिः पूर्णे वर्षशते यमौ प्रसुषुवे ॥ २ ॥ तदा तयोर्जायमानयोर्दिवि भुव्यन्तरिक्षे चोत्पाताः बभूवुः ॥ ३ ॥ तानाह । पर्वतैः सह भुवश्चेलुः ।

विश्वस्य यः स्थितिलयोद्भवहेतुराद्यो योगेश्वरैरपि दुरत्यययोगमायः ॥ क्षेमं विधास्यति स नो भगवांस्त्र्यधीशस्तत्रास्मदीयविमृशेन कियानिहार्थः ॥ ३६ ॥ इति श्रीभा० म० तृतीय० ब्राह्मणमाहात्म्यवर्णनं नाम षोडशोऽध्यायः ॥ १६ ॥ मैत्रेय उवाच ॥ निशम्यात्मभुवा गीतं कारणं शङ्कयोज्झिताः ॥ ततः सर्वे न्यवर्तन्त त्रिदिवाय दिवौकसः ॥ १ ॥ दितिस्तु भर्तुरादेशादपत्यपरिशङ्किनी ॥ पूर्णे वर्षशते साध्वी पुत्रौ प्रसुषुवे यमौ ॥ २ ॥ उत्पाता बहवस्तत्र निपेतुर्जायमानयोः ॥ दिवि भुव्यन्तरिक्षे च लोकस्योरुभयावहाः ॥ ३ ॥ सहाचला भुवश्चेलुर्दिशः सर्वाः प्रजज्वलुः ॥ सोल्काश्चाशनयः पेतुः केतवश्चार्तिहेतवः ॥ ४ ॥ ववौ वायुः सुदुःस्पर्शः फूत्कारानीरयन्मुहुः ॥ उन्मूलयन्नगपतीन् वात्यानीको रजोध्वजः ॥ ५ ॥ उद्धसत्तडिदम्भोदघटया नष्टभागणे ॥ व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् ॥ ६ ॥ चुक्रोश विमना वार्धिरुदूर्मिः क्षुभितोदरः ॥ सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः ॥ ७ ॥ मुहुः परिधयोऽभूवन्सराह्वोः शशिसूर्ययोः ॥ निर्घाता रथनिर्ह्रादा विवरेभ्यः प्रजज्ञिरे ॥ ८ ॥ अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्बणम् ॥ सृगालोलूकटङ्कारैः प्रणेदुरशिवं शिवाः ॥ ९ ॥ संगीतवद्रोदनवदुन्नमय्य शिरोधराम् ॥ व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्ततः ॥ १० ॥

दिशो जज्वलुः केतवः उदयं चक्रुः ॥ ४ ॥ दुस्स्पर्शो वायुर्वृक्षानुन्मूलयन् ववौ ॥ ५ ॥ व्योम्नि सतडिन्मेघानां समूहेन नष्टप्रभाणां सूर्यादीनां तमसा स्थानं नादृश्यत ॥ ६ ॥ समुद्रः क्षुभितोदरश्चुक्रोश । सवापीकूपा सरितश्चुक्षुभुः ॥ ७ ॥ परिवेषाः सराह्वोः सूर्येन्दोर्ग्रहणे गिरिगुहाभ्यः शब्दाश्च जज्ञिरे ॥८॥ सृगालोलूकानां शब्दैः सह शिवाः मुखतोऽग्निं वमन्त्यो दुष्टशब्दं चक्रुः ॥९॥ श्वान इतस्ततः उच्चमुखैः रोदनं चक्रुः ॥१०॥

खरास्तीक्ष्णैः खुरैर्भूतलं घ्नन्तः स्वजातिशब्दं कुर्वन्तः पर्यधावन्॥११॥खगाः गर्दभशब्देन भीताः क्रोशन्तो नीडादुदपतन् । पशवश्च तच्छब्देन शकृन्मूत्रमकुर्वत ॥१२॥ गावस्त्रसन्त्यो रक्तदोहाः बभूवुः । देवप्रतिमा व्यरुदन् ॥१३॥ शनिभौमादिक्रूरग्रहाः गुरुबुधानतिक्रम्य जग्मुः वक्रगत्या युयुधुश्च ॥१४॥ प्रजाः अन्यांश्च महोत्पातान् दृष्ट्वा भीताः सत्यो ब्रह्मपुत्रान् विना विश्वप्रलयं मेनिरे ॥१५॥ तावादिदैत्यो सहसा

खराश्च कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम् ॥ खार्कार[1]रभसा मत्ताः पर्यधावन् वरूथशः ॥ ११ ॥ रुदन्तो रासभत्रस्ता नीडादुदपतन् खगाः ॥ घोषेऽरण्ये च पशवः शकृन्मूत्रमकुर्वत ॥ १२ ॥ गावोऽत्रसन्नसृग्दोहास्तोयदाः पूयवर्षिणः ॥ व्यरुदन् देवलिङ्गानि द्रुमाः पेतुर्विनाऽनिलम् ॥ १३ ॥ ग्रहान् पुण्यतमानन्ये भगणांश्चापि दीपिताः ॥ अतिचेरुर्वक्रगत्या युयुधुश्च परस्परम् ॥ १४ ॥ दृष्ट्वाऽन्यांश्च महोत्पातानतत्तत्त्वविदः प्रजाः ॥ ब्रह्मपुत्रानृते भीता मेनिरे विश्वसंप्लवम् ॥ १५ ॥ तावादिदैत्यो सहसा व्यज्यमानात्मपौरुषौ ॥ ववृधातेऽश्मसारेण कायेनाद्रिपती इव ॥ १६ ॥ दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौ स्फुरदङ्गदाभुजौ ॥ गां कम्पयन्तौ चरणैः पदे पदे कट्या सुकाञ्च्याऽर्कमतीत्य तस्थतुः ॥ १७ ॥ प्रजापतिर्नाम तयोरकार्षीद्यः प्राक् स्वदेहाद्यमयोरजायत ॥ तं वै हिरण्यकशिपुं विदुः प्रजा यं तं हिरण्याक्षमसूत साऽग्रतः[2] ॥ १८ ॥ चक्रे हिरण्यकशिपुर्दोर्भ्यां ब्रह्मवरेण च ॥ वशे सपालाँल्लोकांस्त्रीनकुतोमृत्युरुद्धतः ॥ १९ ॥ हिरण्याक्षोऽनुजस्तस्य प्रियः प्रीतिकृदन्वहम् ॥ गदापाणिर्दिवं यातो युयुत्सुर्मृगयन्रणम् ॥ २० ॥ तं वीक्ष्य दुस्सहजवं रणत्काञ्चननूपुरम् ॥ वैजयन्त्या स्रजा जुष्टमंसन्यस्तमहागदम् ॥ २१ ॥

पूर्वसिद्धस्वपौरुषौ लोहवत् कायेन पर्वताविव ववृधाते ॥ १६ ॥ हेमकिरीटकोटिभिर्दिविस्पृशन्तौ सन्तौ कट्याऽर्कं समतीत्य तस्थतुः॥१७॥ कश्यपस्तयोर्नाम चकार । ज्येष्ठं हिरण्यकशिपुमनुजं हिरण्याक्षं विदुः ॥१८॥ ततो हिरण्यकशिपुर्ब्रह्मवरेण त्रैलोक्यं वशं चक्रे ॥ १९ ॥ हिरण्याक्षो गदापाणिर्योद्‌धुमिच्छुर्युद्धं मृगयन् स्वर्गं बभ्राम ॥ २० ॥ तदा देवाः दुस्सहवेगं स्कन्धे न्यस्तमहागदम् ॥ २१ ॥

---

१ खार्कारो गर्दभजातिशब्दः । २ टावन्तत्वमार्षम् ।

शौर्यवीर्यबलेन गर्वितमकुतोभयं तं दैत्यं दृष्ट्वा भीताः सन्तो गुप्ता बभूवुः ॥२२॥ तदा हिरण्याक्षः स्वतेजसा गुप्तान् पौरुषहीनान् तान् ज्ञात्वा भृशं व्यनदत् ॥२३॥ ततः स्वर्गान्निवृत्तो जलक्रीडां कर्तुमिच्छन् समुद्रं प्रविवेश ॥२४॥ तं दृष्ट्वा वरुणदूता जलचराः अहन्यमाना अपि तत्तेजसा पलायांचक्रिरे ॥ २५ ॥ जलधौ सोऽनेकवर्षं क्रीडन् गदया कल्लोलान् निघ्नन् विभावरीं नाम वरुणपुरीं प्राप्तः ॥ २६ ॥ तत्र वरुणं

मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम् ॥ भीता निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥ २२ ॥ स वै तिरोहितान् दृष्ट्वा महसा स्वेन दैत्यराट् ॥ सेन्द्रान्देवगणान्क्षीबानपश्यन्व्यनदद् भृशम् ॥ २३ ॥ ततो निवृत्तः क्रीडिष्यन्गम्भीरं भीम निस्स्वनम् ॥ विजगाहे महासत्त्वो वार्धिं मत्त इव द्विपः ॥ २४ ॥ तस्मिन्प्रविष्टे वरुणस्य सैनिका यादोगणाः सन्नधियः ससाध्वसाः ॥ अहन्यमाना अपि तस्य वर्चसा प्रधर्षिता दूरतरं प्रदुद्रुवुः ॥ २५ ॥ स वर्षपूगानुदधौ महाबलश्चरन्महोर्मीञ्छ्वसनेरितान्मुहुः ॥ मौर्व्याऽभिजघ्ने गदया विभावरीमासेदिवांस्तात पुरीं प्रचेतसः ॥२६॥ तत्रोपलभ्यासुरलोकपालकं यादोगणानामृषभं प्रचेतसम् ॥ स्मयन् प्रलब्धुं प्रणिपत्य नीचवज्जगाद मे देह्यधिराज संयुगम् ॥ २७ ॥ त्वं लोकपालोऽधिपतिर्बृहच्छ्रवा वीर्यापहो दुर्मदवीरमानिनाम् ॥ विजित्य लोकेऽखिलदैत्यदानवान्यद्राजसूयेन पुराऽयजत्प्रभो ॥ २८ ॥ स एवमुत्सिक्तमदेन विद्विषा दृढं प्रलब्धो भगवानपां पतिः ॥ रोषं समुत्थं शमयन्स्वया धिया व्यवोचदंगोपशमं गता वयम् ॥ २९ ॥ पश्यामि नान्यं पुरुषात्पुरातनाद्यः संयुगे त्वां रणमार्गकोविदम् ॥ आराधयिष्यत्यसुरर्षभेहि तं मनस्विनो यं गृणते भवादृशाः ॥ ३० ॥

दृष्ट्वोपहसितुं नीचवत् प्रणिपत्योवाच । हे अधिराज ! मया सह युद्धं कुरु ॥२७॥ यतस्त्वं पुरा लोके सर्वदैत्यदानवान् विजित्य राजसूयेनाऽयजः ॥ २८ ॥ एवं शत्रुणा दृढं वञ्चितो वरुणः उत्पन्नं रोषं धिया शमयन् जगाद । हे दैत्य ! वयं युद्धात् सम्प्रति शान्तिं प्राप्ताः ॥२९॥ त्वां युद्धे तोषयितुं पुराणपुरुषादन्यं न पश्यामि । अतस्तं प्रति गच्छ भवादृशाः यं स्तुवन्ति ॥ ३० ॥

१ असृण्यं निरंकुशम् ।

हे वीर ! तं प्राप्य रणाङ्गणे श्वभिर्वेष्टितः शयिष्यसे यस्त्वद्विधानां प्रशान्तये सतामनुग्रहेच्छयाऽवतारान् धत्ते॥३१॥इति श्रीभाग० चू० तृती० सप्तदशोऽध्यायः ॥१७॥ अष्टादशे हिरण्याक्षधरोद्धर्तृवराहयोः ॥ निर्विशेषं महायुद्धं देवक्षोभि निरूप्यते॥१॥मैत्रेय उवाच ॥ एवं जलेशभाषितं श्रुत्वा तद् विगणय्य नारदात् हरेर्गतिं विदित्वा त्वरया स रसातलं विवेश॥१॥तत्र पृथ्वीं दंष्ट्रयोन्नयन्तं वराहं दृष्ट्वा वनगोचरो मृग इत्युक्तो-

तं वीरमारादभिपद्य विस्मयः शयिष्यते वीरशये श्वभिर्वृतः ॥ यस्त्वद्विधानामसतां प्रशान्तये रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥ इति श्रीभा० म० तृती० हिरण्याक्षदिग्विजये सप्तदशोऽध्यायः ॥ १७ ॥ मैत्रेय उवाच ॥ तदेवमाकर्ण्य जलेशभाषितं महामनास्तद्विगणय्य दुर्मदः ॥ हरेर्विदित्वा गतिमङ्ग नारदाद्रसातलं निर्विविशे त्वरान्वितः ॥ १ ॥ ददर्श तत्राभिजितं धराधरं प्रोन्नीयमानावनिमग्रदंष्ट्रया ॥ मुष्णन्तमक्ष्णा स्वरुचोऽरुणश्रिया जहास चाहो वनगोचरो मृगः ॥ २ ॥ आहैनमेह्यज्ञ महीं विमुञ्च नो रसौकसां विश्वसृजेयमर्पिता ॥ न स्वस्ति यास्यस्यनया ममेक्षतः सुराधमासादितसूकराकृते ॥ ३ ॥ त्वं नः सपत्नैरभवाय किं भृतो यो मायया हंस्यसुरान्परोक्षजित् ॥ त्वां योगमायाबलमल्पपौरुषं संस्थाप्य मूढ प्रमृजे सुहृच्छुचः ॥ ४ ॥ त्वयि संस्थिते गदया शीर्णशीर्षण्यस्मद्भुजच्युतया ये च तुभ्यम् ॥ बलिं हरन्त्यृषयो ये च देवाः स्वयं सर्वे न भविष्यन्त्यमूलाः ॥५॥ स तुद्यमानोऽरिदुरुक्ततोमरैर्दंष्ट्राग्रगां गामुपलक्ष्य भीताम् ॥ तोदं मृषन्निरगादम्बुमध्याद् ग्राहाहतः सकरेणुर्यथेभः ॥ ६ ॥

च्चैर्जहास जगाद च॥२॥हे सूकराकृते ! ब्रह्मणेयं पृथ्वी रसौकसां नोऽर्पिता । इमां मुञ्च मुञ्च । मम पश्यतः सतोऽनया सह सुखं न यास्यसि॥३॥ त्वं परोक्षमसुरान् हंसि । अतो गदया त्वां हत्वा सुहृदां शुचः प्रमृजे ॥४॥ मद्गदया शीर्णशीर्षणि त्वयि संस्थिते सति सर्वे देवाः निर्मूलाः भविष्यन्ति ॥ ५ ॥ स हरिः शत्रोर्दुर्वाक्यशस्त्रेण पीड्यमानां भीतां पृथ्वीं दृष्ट्वा जलमध्यान्निरगात् ॥ ६ ॥

---

१ नष्टगर्वः दुरुक्तव्यथाम् ।

गतह्रियां पलायनं नायुक्तम् ॥७॥ एवमुक्तोऽपि भगवान् सलिलोपरि पृथ्वीं
तदा हिरण्याक्षो जलान्निर्गच्छन्तं हरिमनु निर्गतः सन् जगाद । गतह्रियां पलायनं नायुक्तम् ॥७॥ एवमुक्तोऽपि भगवान् सलिलोपरि पृथ्वीं
स्वाधारशक्त्या संस्थाप्य देवैः स्तुतः प्रचण्डमन्युर्देवानां भयनिवृत्तये हिरण्याक्षं बभाषे ॥ ८ ॥९॥ वराह उवाच ॥ हे दैत्य ! वयं वनगोच-
राः मृगाः सत्यम् ! युष्मद्विधान् ग्रामसिंहान् मृगये । हे पाप ! मृत्युपाशैरमुक्तस्य तव कत्थनं वीराः न गृह्णन्ति॥१०॥अहो त्वया स्वगदया

तं निस्सरन्तं सलिलादनुद्रुतो हिरण्यकेशो द्विरदं यथा झषः ॥ करालदंष्ट्रोऽशनिनिस्स्वनोऽब्रवीद्गतह्रियां किं त्वसतां
विगर्हितम् ॥ ७ ॥ स गामुदस्तात्सलिलस्य गोचरे विन्यस्य तस्यामदधात्स्वसत्त्वम् ॥ अभिष्टुतो विश्वसृजा प्रसूनै-
रापूर्यमाणो विबुधैः पश्यतोऽरेः ॥ ८ ॥ परानुषक्तं तपनीयोपकल्पं महागदं काञ्चनचित्रदंशम् ॥ मर्माण्यभीक्ष्णं प्रतु-
दन्तं दुरुक्तैः प्रचंडमन्युः प्रहसंस्तं बभाषे ॥ ९ ॥ श्रीभगवानुवाच ॥ सत्यं वयं भो वनगोचरा मृगा युष्मद्विधान्
मृगये ग्रामसिंहान् ॥ न मृत्युपाशैः प्रतिमुक्तस्य वीरा विकत्थनं तव गृह्णन्त्यभद्र ॥ १० ॥ एते वयं न्यासहरा रसौकसां
गतह्रियो गदया द्राविताश्स्ते ॥ तिष्ठामहेऽथापि कथंचिदाजौ स्थेयं क्व यामो बलिनोत्पाद्य वैरम् ॥ ११ ॥ त्वं पद्र-
थानां किल यूथपाधिपो घटस्व नोऽस्वस्तय आश्वनूहः ॥ संस्थाप्य चास्मान् प्रमृजाश्रु स्वकानां यः स्वां प्रतिज्ञां
नातिपिपर्त्यसभ्यः ॥ १२ ॥ मैत्रेय उवाच॥ सोऽधिक्षिप्तो भगवता प्रलब्धश्च रुषा भृशम् ॥ आजहारोल्बणं क्रोधं
क्रीडयमानोऽहिराडिव ॥ १३ ॥ सृजन्नमर्षितः श्वासान् मन्युप्रचलितेन्द्रियः ॥ आसाद्य तरसा दैत्यो गदयाऽभ्यहन-
द्धरिम् ॥ १४ ॥ भगवांस्तु गदावेगं विसृष्टं रिपुणोरसि ॥ अवञ्चयत् तिरश्चीनो योगारूढ इवान्तकम् ॥ १५ ॥

वयं पलायनं कारिताः अतोऽसमर्था अपि त्वदग्रे तिष्ठामः ॥ कुतः बलिना वैरमुत्पाद्य क्व यामः ॥ ११ ॥ अतस्त्वं मां संस्थाप्य स्वकानां
शुचः आशु प्रमार्जय । स्वयं यः प्रतिज्ञां त्यजति स सभायां न योग्यः ॥ १२ ॥ मैत्रेय उवाच ॥ एवं हरिणा रुषा प्रलब्धः उपहसितो हिर-
ण्याक्षः क्रोधेन प्रचलितेन्द्रियः सन् गदया हरिं जघान ॥ १३ ॥ १४ ॥ भगवांस्तु रिपुणा विसृष्टं गदावेगं तिरश्चीनो वञ्चयामास ॥ १५ ॥

१ स्वर्णाभरणभूषितम् । २ दंशं कवचम् । ३ निक्षेपहराः ।

पुनः स्वां गदां गृहीत्वा मुहुर्मुहुर्भ्रामयन्तं दैत्यं प्रति हरिः क्रुद्धः सन् गदया तस्य दक्षिणस्यां भ्रुवि जघान दैत्यस्तु हरिगदामप्राप्तामेव स्वगदया जघ्ने ॥ १६ ॥ १७ ॥ एवं तौ मिथो जिगीषया गदाभ्यां जघ्नतुः ॥१८॥ ततो गदायुद्धभ्रमणभेदान् चरतोस्तयोस्तीक्ष्णगदाप्रहारेण शरीरात् रुधिरं सुस्राव ॥१९॥ एवं महीनिमित्तं द्विषतोस्तयोर्युद्धं द्रष्टुमृषिभिः सह ब्रह्माऽऽजगाम॥२०॥ तत्र ब्रह्मा प्राप्तमदमतिपराक्रमं दैत्यं दृष्ट्वाऽऽदि

पुनर्गदां स्वामादाय भ्रामयन्तमभीक्ष्णशः॥ अभ्यधावद्धरिः क्रुद्धः संरम्भाद्दष्टदच्छदम् ॥१६॥ ततश्च गदयाऽऽरातिं दक्षिणस्यां भ्रुवि प्रभुः॥ आजघ्ने स तु तां सौम्य गदया कोविदोऽहनत् ॥१७॥ एवं गदाभ्यां गुर्वीभ्यां हर्यक्षो हरिरेव च ॥ जिगीषया सुसंरब्धावन्योन्यमभिजघ्नतुः ॥ १८ ॥ तयोः स्पृधोस्तिग्मगदाहताङ्गयोः क्षतास्रवघ्राणविवृद्धमन्य्वोः ॥ विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिवशुष्मिंणोर्मृधः ॥ १९ ॥ दैत्यस्य यज्ञावयवस्य मायया गृहीतवाराहतनोर्महात्मनः ॥कौरव्य मह्यां द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥२०॥ आसन्नशौण्डीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम् ॥ विलक्ष्य दैत्यं भगवान् सहस्रणीर्जगाद नारायणमादिसूकरम् ॥२१॥ ब्रह्मोवाच ॥ एष ते देव देवानामङ्घ्रिमूलमुपेयुषाम्॥ विप्राणां सौरभेयीणां भूतानामप्यनागसाम् ॥ २२ ॥ आगस्कृद्भयकृद् दुष्कृदस्मद्राद्धवरोऽसुरः ॥ अन्वेषन्नप्रतिरथो लोकानटति कण्टकः ॥ २३ ॥ मैनं मायाविनं दृप्तं निरङ्कुशमसत्तमम् ॥ आक्रीड बालवद्देव यथाऽऽशीविषमुत्थितम् ॥ २४ ॥ न यावदेष वर्धेत स्वां वेलां प्राप्य दारुणः ॥ स्वां देवमायामास्थाय तावज्जह्यघमच्युत ॥ २५ ॥ एषा घोरतमा संध्या लोकच्छम्बट्करी प्रभो ॥ उपसर्पति सर्वात्मन् सुराणां जयमावह ॥ २६ ॥

सूकरं जगाद ॥२१॥ ब्रह्मोवाच ॥ हे देव ! एष त्वच्छरणागतानां देवविप्रसौरभीणाम् ॥२२॥ अपराधकर्ता भयकर्ता प्राणादिहर्ता मत्तो वरं प्राप्तः प्रतियोद्धारमन्वेषयन् कण्टक इव लोकान् पर्यटति ॥२३॥ अतो गर्विष्ठं मायाविनं निरङ्कुशमेनं बालवत् मा क्रीड॥२४॥ एष यावत् सन्ध्यां प्राप्य न वर्धते तावत् त्वमेनं जहि ॥२५॥ हे सर्वात्मन् ! एषा लोकनाशकरी संध्या समायाति। अतो देवानां जयं कुरु ॥ २६ ॥

१ मत्तवृषभयोरिव। २ शौण्डीरं शौर्यं मदो वा। ३ छम्बडित्यव्यये नाशे।

अधुनाऽभिजिन्नाम योगः किञ्चित् शेषोऽस्ति तावत् नः शिवायैनं जहि ॥ २७ ॥ त्वयैव शापानुग्रहकाले निर्मितं मृत्युमेष स्वयमेव प्राप्तः । अत एनं हत्वा लोकान् सुखे स्थापय ॥२८॥ इति श्रीभा० चू० तृतीये० अष्टादशोऽध्यायः ॥१८॥ ऊनविंशे विरिञ्च्यादिप्रार्थितेन महामृधे । वराहेण हिरण्याक्षवधः श्लाघ्योऽनुवर्ण्यते ॥१॥ मैत्रेय उवाच ॥ हरिर्ब्रह्मणो निष्कपटं वचः श्रुत्वा प्रहस्य कटाक्षेण विलोक्य तद्वचो जग्राह

अधुनैषोऽभिजिन्नाम योगो मौहूर्तिको ह्यगात् ॥ शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥ दिष्ट्या त्वां विहितं मृत्युमयमासादितः स्वयम् ॥ विक्रम्यैनं मृधे हत्वा लोकानाधेहि शर्मणि ॥२८॥ इति श्रीभा० म० तृतीय० हिरण्याक्षयुद्धेऽष्टादशोऽध्यायः ॥ १८ ॥ मैत्रेय उवाच ॥ अवधार्य विरिञ्चस्य निर्व्यलीकामृतं वचः ॥ प्रहस्य प्रेमगर्भेण तदपाङ्गेन सोऽग्रहीत् ॥ १ ॥ ततः सपत्नं मुखतश्चरन्तमकुतोभयम् ॥ जघानोत्पत्य गदया हनावसुरमक्षजः ॥ २ ॥ सा हता तेन गदया विहता भगवत्करात् ॥ विघूर्णिताऽपतद्रेजे तदद्भुतमिवाभवत् ॥ ३ ॥ स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम् ॥ मानयन् स मृधे धर्मं विष्वक्सेनं प्रकोपयन् ॥ ४ ॥ गदायामपविद्धायां हाहाकारे विनिर्गते ॥ मानयामास तद्धर्मं सुनाभं चास्मरद्विभुः ॥ ५॥ तं व्यग्रचक्रं दितिपुत्राधमेन स्वपार्षदमुख्येन विषज्जमानम् ॥ चित्रा वाचोऽतद्विदां खेचराणां तत्रास्मासन् स्वस्ति तेऽमुं जहीति ॥ ६ ॥ स तं निशाम्यात्तरथाङ्गमग्रतो व्यवस्थितं पद्मपलाशलोचनम् ॥ विलोक्य चामर्षपरिप्लुतेन्द्रियो रुषा स्वदन्तच्छदमादशच्छ्वसन् ॥ ७ ॥

॥ १ ॥ ततोऽग्रे स्थितं दैत्यं हरिर्गदया जघान ॥ २ ॥ तदा दैत्येन स्वगदया हता भगवद्गदा हस्तात् । तदद्भुतमिवाभवत् ॥ ३ ॥ तदा प्राप्तावसरो दैत्यो युद्धे धर्मं मानयन् निरायुधं हरिं न प्राहरत् ॥४॥ हस्ताद् गदायां पतितायां हाहाकारो बभूव । ततो भगवान् चक्रं सस्मार ॥५॥ तदा खेचराणां देवानां वाचस्ते स्वस्तीति दैत्यं जहीति च बभूवुः ॥६॥ स दैत्यो धृतचक्रमग्रे स्थितं हरिं दृष्ट्वा क्रोधेन व्याकुलेन्द्रियः ॥७॥

१ व्यग्रं ससंभ्रमम् । २ विशेषेण सङ्गमाप्नुवन्तम् । ३ 'तत्र स्म' इ० पा० ।

चक्षुर्भ्यां दहन्निव पश्यन् हतोऽसि हतोऽसीत्युक्त्वा गदया हरिं जघान ॥ ८ ॥ भगवान् तां गदां वामपादेन शत्रोः पश्यतः प्राहरत् ॥ ९ ॥
हे दैत्य ! यतस्त्वं जेतुमिच्छसि ततः आयुधं गृहाण इत्युक्तो दैत्यो भूयो गदया प्राहरत् ॥१०॥ भगवानापतन्तीं तां वीक्ष्य लीलया जग्राह
॥ ११ ॥ एवं स्वपौरुषे नष्टे दैत्यो हरिणा दीयमानां गदां नैच्छत् ॥ १२ ॥ ततो दैत्यस्त्रिशिखं शूलं हरिं प्रति चिक्षेप ॥ १३ ॥

करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव ॥ अभिप्लुत्य स्वगदया हतोऽसीत्याहनद्धरिम् ॥ ८ ॥ पदा सव्येन तां साधो भगवान्यज्ञसूकरः ॥ लीलया मिषतः शत्रोः प्राहरद्वातरंहसम् ॥९॥ आह चायुधमाधत्स्व घटस्व त्वं जिगीषसि ॥ इत्युक्तः स तदा भूतस्ताडयन्व्यनदद्भृशम् ॥ १० ॥ तां स आपततीं वीक्ष्य भगवान्समवस्थितः ॥ जग्राह लीलया प्राप्तां गरुत्मानिव पन्नगीम् ॥११॥ स्वपौरुषे प्रतिहते हतमानो महासुरः ॥ नैच्छद्गदां दीयमानां हरिणा विगतप्रभः ॥ १२ ॥ जग्राह त्रिशिखं शूलं ज्वलज्ज्वलनलोलुपम् ॥ यज्ञाय धृतरूपाय विप्रायाभिचरन्यथा ॥ १३ ॥ तदोजसा दैत्यमहाभटार्पितं चकासदन्तःख उदीर्णदीधिति ॥ चक्रेण चिच्छेद निशातनेमिना हरिर्यथा तार्क्ष्यपतत्रमुज्झितम् ॥ १४ ॥ वृक्णे स्वशूले बहुधाऽरिणा हरेः प्रत्येत्य विस्तीर्णमुरो विभूतिमत् ॥ प्रवृद्धरोषः स कठोरमुष्टिना नदन्प्रहत्यान्तरधीयतासुरः ॥ १५ ॥ तेनेत्थमाहतः क्षत्तर्भगवानादिसूकरः ॥ नाकम्पत मनाक् क्वापि स्रजा हत इव द्विपः ॥ १६ ॥ अथोरुधा सृजन्मायां योगमायेश्वरे हरौ ॥ यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् ॥ १७ ॥ प्रववुर्वायवश्चण्डास्तमः पांसवमैरयन् ॥ दिग्भ्यो निपेतुर्ग्रावाणः क्षेपणैः प्रहिता इव ॥ १८ ॥

हरिराकाशे प्रकाशमानं शूलं स्वचक्रेण चिच्छेद ॥ १४ ॥ पुनर्दैत्यः क्रुद्धः सन् दृढमुष्टिना हरेर्वक्षः प्रहृत्यान्तरधीयत ॥ १५ ॥ तेन प्रहारेण भगवानीषदपि नाकम्पत ॥ १६ ॥ अथ दैत्यो योगमायेश्वरे हरावुरुधा मायां ससर्ज यां दृष्ट्वा लोकाः प्रलयं मेनिरे ॥ १७ ॥ प्रचण्डा वायवो वबुः । दिग्भ्यो ग्रावाणः पेतुः ॥ १८ ॥

१ वायुवेगाम् । २ जगतः प्रलयम् ।

अभ्रसमूहैर्नष्टभगणा द्यौरासीत् । मेघाः केशासृग्विण्मूत्रास्थीनि ववृषुः ॥१९॥ गिरयो नानायुधानि क्षिपन्तस्तथा नग्नाः यातुधान्यश्चादृश्यन्त ॥ २० ॥ तथा यक्षरक्षोभिश्छिन्धि मारयेत्येवं वाचः उत्सृष्टाः ॥ २१ ॥ तदा भगवान् सुदर्शनास्त्रेण सर्वमाया अनाशयत् ॥ २२ ॥ तदा दितेर्हृदि कम्पो बभूव । स्तनाद् रुधिरं सुस्रुवे ॥२३॥ दैत्यः स्वमायासु नष्टासु पुनः केशवं प्राप्य मुष्टिभिर्जघान ॥२४॥ तदा भगवान् स्वमुष्टिना

द्यौर्नष्टभगणाऽभ्रौघैःसविद्युत्स्तनयित्नुभिः ॥ वर्षद्भिः पूयकेशासृग्विण्मूत्रास्थीनि चासकृत् ॥१९॥ गिरयः प्रत्यदृश्यन्त नानायुधमुचोऽनघ ॥ दिग्वाससो यातुधान्यः शूलिन्यो मुक्तमूर्धजाः ॥ २० ॥ बहुभिर्यक्षरक्षोभिः पत्त्यश्वरथकुञ्जरैः ॥ आततायिभिरुत्सृष्टा हिंसावाचोऽतिवैशसाः ॥ २१ ॥ प्रादुष्कृतानां मायानामासुरीणां विनाशयत्[1] ॥ सुदर्शनास्त्रं भगवान् प्रायुङ्क्त दयितं त्रिपात् ॥२२॥ तदा दितेः समभवत्सहसा हृदि वेपथुः ॥ स्मरन्त्या भर्तुरादेशं स्तनाच्चासृक् प्रसुस्रुवे ॥ २३ ॥ विनष्टासु स्वमायासु भूयश्चाव्रज्य केशवम् ॥ रुषोपगूहमानोऽमुं ददृशेऽवस्थितं बहिः ॥ २४ ॥ तं मुष्टिभिर्विनिघ्नन्तं वज्रसारैरधोक्षजः ॥ करेण कर्णमूलेऽहन् यथा त्वाष्ट्रं मरुत्पतिः ॥२५॥ स आहतो विश्वजिता ह्यवज्ञया परिभ्रमद्गात्र उदस्तलोचनः ॥ विशीर्णबाह्वङ्घ्रिशिरोरुहोऽपतद्यथा नगेन्द्रो लुलितो नभस्वता ॥ २६ ॥ क्षितौ शयानं तमकुण्ठवर्चसं करालदंष्ट्रं परिदष्टदच्छदम् ॥ अजादयो वीक्ष्य शशंसुरागता अहो इमां को नु लभेत संस्थितिम् ॥२७॥ यं योगिनो योगसमाधिना रहो ध्यायन्ति लिंगादसतो मुमुक्षवः ॥ तस्यैष दैत्यापसदः पदा हतो मुखं प्रपश्यंस्तनुमुत्ससर्ज ह ॥ २८ ॥ एतौ तौ पार्षदावस्य शापाद्यातावसद्गतिम् ॥ पुनः कतिपयैः स्थानं प्रपत्स्येते ह जन्मभिः ॥ २९ ॥

तस्य कर्णमूले जघान ॥२५॥ तेन प्रहारेण भ्रमद्गात्रो निर्गतलोचनो विशीर्णबाह्वङ्घ्रिशिरोरुहो दैत्यो भूमौ पपात ॥ २६ ॥ तदा ब्रह्मादयो देवास्तत्रैत्य क्षितौ पतितं दैत्यं वीक्ष्य शशंसुः । अहो इमं मृत्युं को लभेत ॥ २७ ॥ अहो अस्य भाग्यं किं वर्णनीयं यं योगिनो योगसमाधिना ध्यायन्ति तस्य मुखं प्रपश्यन् तनुं विससर्ज ॥ २८ ॥ एतौ शापादसद्गतिं यातौ । पुनस्त्रिभिर्जन्मभिः स्वस्थानं प्रपत्स्येते ॥ २९ ॥

१ विनाशयत् नाशकर्तृ शत्रन्तमेतत् । 'न लोकाव्यया' इति षष्ठीनिषेधादार्षमिति भावः । 'विनाशयन्' इति बालबोधिनीकारसंमतपाठे भगवद्विशेषणं ज्ञेयम् ।

देवा ऊचुः ॥ हे हरे! अखिलयज्ञतन्तवे ते नमः जगतां मर्मभेत्ताऽयं हतः॥ एतत् समीचीनं जातम् ॥३०॥ मैत्रेय उवाच ॥ एवमादिसूकरोऽसह्य-
विक्रमं हिरण्याक्षं हत्वाऽन्तर्हितः ॥३१॥ हे विदुर ! हरिर्यैन प्रकारेण हिरण्याक्षं जघान तस्य चरितं ते कथितम् ॥ ३२ ॥ सूत उवाच ॥ हे
शौनक ! मैत्रेयाख्यातां हरिकथां श्रुत्वा विदुरः आनन्दं लेभे ॥ ३३ ॥ अन्येषां भक्तानां कथां श्रुत्वा हर्षो भवेत् किं पुनरीश्वरस्य ॥ ३४ ॥ यो

देवा ऊचुः ॥ नमो नमस्तेऽखिलयज्ञतन्तवे स्थितौ गृहीतामलसत्त्वमूर्तये ॥ दिष्ट्या हतोऽयं जगतामरुंतुदस्त्वत्पादभ-
क्त्या वयमीश निर्वृताः ॥ ३० ॥ मैत्रेय उवाच ॥ एवं हिरण्याक्षमसह्यविक्रमं स सादयित्वा हरिरादिसूकरः ॥ जगाम
लोकं स्वमखंडितोत्सवं समीडितः पुष्करविष्टरादिभिः ॥ ३१ ॥ मया यथाऽनूक्तमवादि ते हरेः कृतावतारस्य सुमित्र
चेष्टितम् ॥ यथा हिरण्याक्ष उदारविक्रमो महामृधे क्रीडनवन्निराकृतः ॥३२॥ सूत उवाच ॥ इति कौषारवाख्यातामा-
श्रुत्य भगवत्कथाम् ॥ क्षत्ताऽऽनन्दं परं लेभे महाभागवतो द्विज ॥३३॥ अन्येषां पुण्यश्लोकानामुद्दामयशसां सताम् ॥
उपश्रुत्य भवेन्मोदः श्रीवत्साङ्कस्य किं पुनः ॥३४॥ यो गजेन्द्रं झषग्रस्तं ध्यायन्तं चरणाम्बुजम् ॥ क्रोशन्तीनां करेणूनां
कृच्छ्रतोऽमोचयद् द्रुतम् ॥ ३५ ॥ तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ॥ कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः
॥३६॥ यो वै हिरण्याक्षवधं महाद्भुतं विक्रीडितं कारणसूकरात्मनः ॥ शृणोति गायत्यनुमोदतेऽञ्जसा विमुच्यते ब्रह्म-
वधादपि द्विजाः ॥३७॥ एतन्महापुण्यमलं पवित्रं धन्यं यशस्यं पदमायुराशिषाम् ॥ प्राणेन्द्रियाणां युधि शौर्यवर्धनं
नारायणोऽन्ते गतिरङ्ग शृण्वताम् ॥३८॥ इति श्रीभा०म०तृतीय० हिरण्याक्षवधवर्णनं नाम एकोनविंशोऽध्यायः ॥१९॥

दुःखतो गजेन्द्रं मोचयामास ॥३५॥ सुखाराध्यं तं कृतज्ञः को न सेवेत ॥ ३६ ॥ इदमाख्यानं यः शृणोति श्रावयेत् स ब्रह्मवधादपि मुच्यते
॥३७॥ एतत् महापुण्यं धन्यं यशस्यं शृण्वतामन्ते नारायणः स्वगतिं ददाति ॥३८॥ इति श्रीभा० चू० तृतीय० एकोनविंशोऽध्यायः॥१९॥

१ अङ्ग हे शौनक ।

विंशे वराहजन्मादिर्व्यवधानादथादितः ॥ सर्गोऽनुस्मार्यते वक्तुमन्वयं प्रस्तुतं मनोः ॥१॥ शौनक उवाच ॥ मनुर्महीं स्थानं प्राप्य प्राणिनः कैरुपायैः सृष्टवान् ॥ १ ॥ विदुरः कृष्णस्यैकान्तिकः सुहृद् व्यासान्महिम्ना न न्यूनः यतः स सर्वात्मना कृष्णं श्रितः ॥ २ ॥ ३ ॥ एवंविधो विदुरो गङ्गाद्वारे स्थितं मैत्रेयं किं पप्रच्छ ॥४॥ तयोः संवदतोः प्रवृत्ताः याः हरिकथास्ताः नः कीर्तय। रसज्ञो हरिलीलामृतं पिबन् को नु

शौनक उवाच ॥ महीं प्रतिष्ठामध्यस्य सौते स्वायम्भुवो मनुः ॥ कान्यन्वतिष्ठद्द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥ क्षत्ता महाभागवतः कृष्णस्यैकान्तिकः सुहृत् ॥ यस्तत्याजाग्रजं कृष्णे सापत्यमघवानिति ॥ २ ॥ द्वैपायनादनवरो महित्वे तस्य देहजः ॥ सर्वात्मना श्रितः कृष्णं तत्परांश्चाप्यनुव्रतः ॥ ३ ॥ किमन्वपृच्छन्मैत्रेयं विरजास्तीर्थसेवया ॥ उपगम्य कुशावर्त आसीनं तत्त्ववित्तमम् ॥४॥ तयोः संवदतोः सूत प्रवृत्ता ह्यमलाः कथाः ॥ आपो गाङ्गा इवाघघ्नीर्हरेः पादाम्बुजाश्रयाः ॥५॥ ता नः कीर्तय भद्रं ते कीर्तन्योदारकर्मणः ॥ रसज्ञः को नु तृप्येत हरिलीलामृतं पिबन् ॥ ॥६॥ एवमुग्रश्रवाः पृष्ट ऋषिभिर्नैमिषायनैः ॥ भगवत्यर्पिताध्यात्मस्तानाह श्रूयतामिति ॥ ७ ॥ सूत उवाच ॥ हरेर्धृतक्रोडतनोः स्वमायया निशम्य गोरुद्धरणं रसातलात् ॥ लीलां हिरण्याक्षमवज्ञया हतं संजातहर्षो मुनिमाह भारतः ॥ ॥ ८ ॥ विदुर उवाच ॥ प्रजापतिपतिः सृष्ट्वा प्रजासर्गे प्रजापतीन् ॥ किमारभत मे ब्रह्मन्प्रब्रूह्यव्यक्तमार्गवित् ॥ ९ ॥ ये मरीच्यादयो विप्रा यस्तु स्वायंभुवोः मनुः ॥ ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥ १० ॥ सद्वितीयाः किमसृजन् स्वतन्त्रा उत कर्मसु ॥ आहोस्वित्संहताः सर्व इदं स्म समकल्पयन् ॥ ११ ॥

तृप्येत ॥ ५ ॥६॥ एवं शौनकेन पृष्टः सूतस्तं प्रोवाच ॥७॥ हे शौनक ! आदिवराहस्य चरितं श्रुत्वा जातहर्षो विदुरो मैत्रेयं प्राह ॥८॥ विदुर उवाच। ब्रह्मा मरीच्यादीन् सृष्ट्वा किं प्रारेभे॥९॥किंच ये मरीच्यादयो मनुश्च ते सभार्या वा भार्यारहिता वा इदं कथमुत्पादयामासुः॥१०॥११॥

१ हे सूतपुत्र उग्रश्रवः। २ ईश्वरे लीनानां मार्गाय सृष्टये। ३ धृतराष्ट्रम्। ४ कीर्तन्यं कीर्तनार्हम्। ५ परस्परापेक्षाः।

मैत्रेय उवाच। भगवतो जातक्षोभं यत् प्रधानं तस्माद् महानासीत्॥१२॥स त्रिधा। तस्मादहंकारः। तस्माच्चतुर्विंशतिः तत्त्वानि॥१३॥तान्येकैकशः स्रष्टुमसमर्थानि परस्परं मिलित्वा हैममण्डं ससृजुः॥१४॥तदण्डं सहस्रवर्षं जले स्थितम्॥१५॥तस्य विराड्रूपस्य नाभिपद्माद् ब्रह्मा भूत्वा नामरूपादिक्रमेण लोकसंस्थां निर्ममे ॥१६॥१७॥ आदौ स (ब्रह्मा) स्वच्छाययाऽधिष्ठितः सन् पञ्चविधां अविद्यां ससर्ज ॥१८॥ तां तनुं तत्याज सा

मैत्रेय उवाच ॥ दैवेन दुर्वितर्क्येण परेणानिमिषेण च ॥ जातक्षोभाद्भगवतो महानासीद् गुणत्रयात् ॥ १२ ॥ रजःप्रधानान्महतस्त्रिलिंगो दैवचोदितात् ॥ जातः ससर्ज भूतादिर्वियदादीनि पञ्चशः ॥ १३ ॥ तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम् ॥ संहत्य दैवयोगेन हैममण्डमवासृजन् ॥ १४ ॥ सोऽशयिष्टाब्धिसलिले आण्डकोशो निरात्मकः ॥ साग्रं वै वर्षसाहस्रमन्वावात्सीत्तमीश्वरः ॥१५॥ तस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति ॥ सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् ॥ १६ ॥ सोऽनुविष्टो भगवता यः शेते सलिलाशये ॥ लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥१७॥ ससर्ज च्छायायाऽविद्या पञ्चपर्वाणमग्रतः ॥ तामिस्रमन्धतामिस्रं तमो मोहो महातमः ॥१८॥ विससर्जात्मनःकायं नाभिनन्दंस्तमोमयम् ॥ जगृहुर्यक्षरक्षांसि रात्रिं क्षुत्तृट्समुद्भवाम् ॥ १९ ॥ क्षुत्तृड्भ्यामुपसृष्टास्ते तं जग्धुमभिदुद्रुवुः ॥ मा रक्षतैनं जक्षध्वमित्यूचुः क्षुत्तृडर्दिताः ॥ २० ॥ देवस्तानाह संविग्नो मा मां जक्षत रक्षत ॥ अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ ॥२१॥ देवताः प्रभया या या दीव्यन्प्रमुखतोसृजत् ॥ ते अहार्षुर्देवयन्तो विसृष्टां तां प्रभामहः ॥ २२ ॥ देवो देवाञ्जघनतः सृजति स्मातिलोलुपान् ॥ त एनं लोलुपतया मैथुनायाभिपेदिरे ॥ २३ ॥

रात्रिर्बभूव तां यक्षरक्षांसि ! जगृहुः ॥ १९ ॥ यक्षरक्षांसि क्षुत्तृडर्दितानि ब्रह्माणं मारक्षतेत्येकेऽन्ये तु भक्षयतेति जगदुः॥२०॥ ब्रह्मा भीतः सन् तानाह । हे यक्षरक्षांसि ! यूयं मे प्रजाः जाताः स्थ । अतो मां मा भक्षयत । किं तु रक्षत । तत्र ये जक्षध्वमित्यूचुस्ते यक्षाः। ये तु मा रक्षतेति ते राक्षसाः॥२१॥ततो ब्रह्मा स्वप्रभया देवान् ससर्ज। तेन त्यक्ता प्रभा स दिवसो जातः । तं देवाः जगृहुः॥२२॥ ब्रह्मा जघनादसुरान् ससर्ज। यदा

१ जीवादृष्टेन । २ प्रकृत्यधिष्ठात्रा महापुरुषेण । ३ कालेन । ४ महाभूतादीनि । ५ 'दिव्यन्' इ० पा० । ६ सृष्टा देवाः । पुंस्त्वेन् निर्देशोऽपि या इत्यनेन संबन्धः । ७ असन्धिस्त्वत्वार्षः ।

ते मैथुनाय प्राप्तास्तदा ब्रह्मा भीतः पलाय्य प्रपन्नार्तिहरं हरिं शरणं गत्वोवाच ॥२३॥२४॥२५॥ हे प्रभो ! अहं तवाज्ञया प्रजाः असृजम् । ताः
मां मैथुनेन धर्षयितुं प्रारभन्ते ॥ २६ ॥ त्वमेको लोकानां क्लेशनाशनः क्लेशदश्च ॥ २७ ॥ एवं श्रुत्वा हरिस्तां तनुं त्यजेति ब्रह्माणं जगाद ।
तदा ब्रह्मा तां तत्याज ॥२८॥ सा सायन्तनी सन्ध्या बभूव । तां क्वणच्चरणाम्भोजां मदविह्वललोचनां सुनासां सुदतीं स्नेहलीलावलोकनां

ततो हसन् स भगवानसुरैर्निरपत्रपैः ॥ अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ॥ २४ ॥ स उपव्रज्य वरदं प्रपन्ना-
तिंहरं हरिम् ॥ अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥ पाहि मां परमात्मंस्ते प्रेषणेनासृजं प्रजाः ॥ ता इमा
यभितुं पापा उपक्रामन्ति मां प्रभो ॥ २६ ॥ त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः ॥ त्वमेकः क्लेशदस्तेषाम-
नासन्नपदां तव ॥ २७ ॥ सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ॥ विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह ॥
॥ २८ ॥ तां क्वणच्चरणाम्भोजां मदविह्वललोचनाम् ॥ काञ्चीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २९ ॥ अन्योन्या-
श्लेषयोत्तुङ्गनिरन्तरपयोधराम् ॥ सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम् ॥३०॥ गूहन्तीं व्रीडयाऽऽत्मानं नीला-
लकवरूथिनीम् ॥ उपलभ्यासुरा धर्म सर्वे संमुमुहुः स्त्रियम् ॥ ३१ ॥ अहो धैर्यमहो रूपमहो अस्य नवं वयः ॥ मध्ये
कामयमानानामकामेव विसर्पति ॥३२॥ वितर्कयन्तो बहुधा तां सन्ध्यां प्रमदाकृतिम् ॥ अभिसंभाव्य विश्रम्भात्पर्यपृ-
च्छन्कुमेधसः ॥ ३३ ॥ काऽसि कस्यासि रम्भोरु को वाऽर्थस्तेऽत्र भामिनि ॥ रूपद्रविणपण्येन दुर्भगान्नो विबाधसे
॥ ३४ ॥ या वा काचित्त्वमबले दिष्ट्या संदर्शनं तव ॥ उत्सुनोषीक्षमाणानां कन्दुकक्रीडया मनः ॥ ३५ ॥

दृष्ट्वा तां स्त्रियं मत्वा सर्वेऽसुराः मुमुहुराहुश्च ॥ २९ ॥ ३० ॥ ३१ ॥ अहो अस्याः रूपम् । अहो धैर्यम् । अहो नवं वयः ॥ ३२ ॥ इति
बहुधा वितर्कयन्तः स्त्र्याकृतिं तां सन्ध्यां पप्रच्छुः ॥ ३३ ॥ हे रम्भोरु ! त्वं का कस्यासि अत्र ते को वाऽर्थः ॥ ३४ ॥ अस्तु जातिकुला-
दिप्रश्नेन किं हे अबले ! यत् तव दर्शनं जातं तद् दिष्ट्या । त्वं कन्दुकक्रीडया मनोऽस्माकं विमथ्नासि ॥ ३५ ॥

१ भक्तेच्छानुरूपमात्मानं दर्शयतीति तथा । २ असंदिग्धमात्मदर्शनं परचित्तज्ञानं यस्य सः। ३ हे विदुर। ४ सत्कृत्य । ५ रूपमेव द्रविणमनर्घ्यं वस्तु तेन तवसमर्पणेन ।

हे शालिनि ! तव पादपद्ममेकत्र स्थिरं न भवति कन्दुकक्रीडया तव कृशा कटिः श्राम्यति ॥ ३६ ॥ इति मूढधियोऽसुरास्तां सायन्तनीं सन्ध्यां स्त्रियं मत्वा जगृहुः ॥३७॥ ब्रह्मा प्रहस्य कान्त्या गन्धर्वाप्सरसां गणान् ससर्ज ॥३८॥ तेन त्यक्ता तनुर्ज्योत्स्ना बभूव । तां विश्वावसुपुरोगमाः जगृहुः ॥ ३९ ॥ ब्रह्मा स्वालस्येन भूतपिशाचान् ससर्ज । नग्नान् मुक्तकेशान् तान् वीक्ष्य दृशौ मीलयामास ॥ ४० ॥ तेन

नैकत्र ते जयति शालिनि पादपद्मं घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम् ॥ मध्यं विषीदति बृहत्स्तनभारभीतं शान्तेव दृष्टिरमला सुशिखासमूहः ॥३६॥ इति सायन्तनीं संध्यामसुराः प्रमदायतीम् ॥ प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥ प्रहस्य भावगम्भीरं जिघ्रन्त्यात्मानमात्मना ॥ कान्त्या ससर्ज भगवान् गन्धर्वाप्सरसां गणान् ॥ ३८ ॥ विससर्ज तनुं तां वै ज्योत्स्नां कान्तिमतीं प्रियाम् ॥ त एव चाददुः प्रीत्या विश्वावसुपुरोगमाः ॥ ३९ ॥ सृष्ट्वा भूतपिशाचांश्च भगवानात्मतन्द्रिणा ॥ दिग्वाससो मुक्तकेशान् वीक्ष्य चामीलयद् दृशौ ॥ ४० ॥ जगृहुस्तद्विसृष्टां तां जृम्भृणाख्यां तनुं प्रभोः ॥ निद्रामिन्द्रियविक्लेदो यया भूतेषु दृश्यते ॥ येनोच्छिष्टान्धर्षयन्ति तमुन्मादं प्रचक्षते * ॥४१॥ ऊर्जस्वन्तं मन्यमान आत्मानं भगवानजः ॥ साध्यान्गणान्पितृगणान्परोक्षेणासृजत्प्रभुः ॥ ४२ ॥ तमात्मसर्गं तत्कायं पितरः प्रतिपेदिरे ॥ साध्येभ्यश्च पितृभ्यश्च कवयो यद्वितन्वते ॥ ४३ ॥ सिद्धान्विद्याधरांश्चैव तिरोधानेन सोऽसृजत् ॥ तेभ्योऽददात्तमात्मानमन्तर्धानाख्यमद्भुतम् ॥ ४४ ॥ स किन्नरान्किंपुरुषान्प्रत्यात्म्येनासृजत्प्रभुः ॥ मानयन्नात्मनाऽऽत्मानमात्माभासं विलोकयन् ॥ ४५ ॥

त्यक्तांजृम्भृणाख्यां तनुं ते जगृहुः यया जनेषु निद्रेन्द्रियस्रावश्च दृश्यते ॥ ४१ ॥ ब्रह्मा स्वबलेनादृश्यरूपेण साध्यान् पितृगणांश्च ससर्ज । ते तां जगृहुः ॥ ४२ ॥ कर्मकोविदाः येभ्यः साध्यपितृगणेभ्यः श्राद्धादिना हव्यं कव्यं च ददति ॥ ४३ ॥ ब्रह्माऽन्तर्धानशक्त्या सिद्धान् विद्याधरांश्च ससर्ज । ते तां जगृहुः ॥ ४४ ॥ ब्रह्मा प्रतिबिम्बेन किन्नरान् किं पुरुषान् ससर्ज ॥ ४५ ॥

---

* उन्मादेनैव जीवानां महान्क्लेशः प्रजायते । इत्यधिकः पाठः। १ शरीरम् । २ प्रतिबिम्बम् ।

ते मिथुनीभूय तमेव गायन्तस्तां तनुं जगृहुः ॥४६॥ बहुचिन्तया शयानो ब्रह्मा क्रोधाद् वपुरुत्ससर्ज । तदा देहात् ये केशाः गलितास्तेऽहयः
पादाद्याकुञ्चनतः सर्पाः नागां जाताः ॥ ४७ ॥ ४८ ॥ अथ ब्रह्मैकदाऽऽत्मानं कृतकृत्यं मन्यमानो मनसा मनून् ससर्ज ॥४९॥ तेभ्यः स्वां
पौरुषीं तनुं ददौ । तदा ते ब्रह्माणं प्रशशंसुः ॥ ५० ॥ हे ब्रह्मन् ! अस्मिन् सर्गे यज्ञादिक्रियाः प्रतिष्ठिता वयं सहैवान्नं भक्षयामहे ॥५१॥
एकदा ब्रह्मा तपोयोगसमाधिभिर्ऋषीन् ससर्ज ॥ ५२ ॥ तेभ्यः एकैकशः समाधियोगतपआदिस्वदेहस्यांशं ददौ ॥ ५३ ॥ इति श्रीभा० चू०

देहेन वै भोगवता ते तु तज्जगृहु रूपं त्यक्तं यत्परमेष्ठिना ॥ मिथुनीभूय गायन्तस्तमेवोषसि कर्मभिः ॥ ४६ ॥ शयानो बहुचिन्तया ॥ सर्गेऽनुपचिते क्रोधादुत्ससर्ज ह तद्वपुः ॥ ४७ ॥ येऽहीयन्तामुतः केशा अहयस्तेऽङ्ग जज्ञिरे ॥ सर्पाः प्रसर्पतः क्रूरा नागा भोगोरुकन्धराः ॥ ४८ ॥ स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः ॥ तदा मनून्ससर्जान्ते मनसा लोकभावनान् ॥ ४९ ॥ तेभ्यः सोऽत्यसृजत्स्वीयं पुरं पुरुषमात्मवान् ॥ तान्दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥ अहो एतज्जगत्स्रष्टः सुकृतं बत ते कृतम् ॥ प्रतिष्ठिताः क्रिया यस्मिन्साकमन्नमदामहे ॥ ५१ ॥ तपसा विद्यया युक्तो योगेन सुसमाधिना ॥ ऋषीनृषिर्हृषीकेशः ससर्जाभिमताः प्रजाः ॥ ५२ ॥ तेभ्यश्चैकैकशः स्वस्य देहस्यांशमदादजः ॥ यत्तत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ॥ ५३ ॥ इति श्रीभा० म० तृतीयस्कन्धे सर्गवर्णनं नाम विंशतितमोऽध्यायः॥२०॥विदुर उवाच ॥ स्वायंभुवस्य च मनोर्वंशः परमसंमतः ॥ कथ्यतां भगवन्यत्र मैथुनेनैधिरे प्रजाः ॥१॥ प्रियव्रतोत्तानपादौ सुतौ स्वायम्भुवस्य वै ॥ यथा धर्मं जुगुपतुः सप्तद्वीपवतीं महीम् ॥ २ ॥ तस्य वै दुहिता ब्रह्मन्देवहूतीति विश्रुता ॥ पत्नी प्रजापतेरुक्ता कर्दमस्य त्वयाऽनघ ॥ ३ ॥

तृती० विंशोऽध्यायः ॥ २० ॥ एकविंशे तपोविद्यातोषितेन तु विष्णुना ॥ कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ १ ॥ विदुर उवाच ॥
स्वायंभुवस्य मनोर्वंशः कथ्यतां यत्र मैथुनेन प्रजा एधामासुः ॥१॥ तस्य प्रियव्रतोत्तानपादौ द्वौ पुत्रौ सप्तद्वीपवतीं महीं धर्मं च ररक्षतुः
॥ २ ॥ तस्य दुहिता देवहूतिः। सा कर्दमस्य पत्नी त्वयोक्ता ॥ ३ ॥

१ 'यथत्' इति पा० ।

तस्यां स कर्दमः कति पुत्रानुत्पादयामास ॥४॥ आकूत्यां रुचिः प्रसूत्यां च दक्षो यथा सृष्टिं चक्रतुस्तद्वद ॥५॥ मैत्रेय उवाच । ब्रह्मणा प्रजाः सृजेत्युक्तः कर्दमः सरस्वत्यां दशसहस्रवर्षाणि भक्त्या हरिं ध्यायन् तपस्तेपे ॥६॥ ततस्तस्मिन् तपसि पूजाप्रकारेण हरिं प्रपेदे ॥७॥ भगवान् कृतयुगे प्रसन्नः सन् तस्य प्रत्यक्षो बभूव ॥ ८ ॥ कर्दमः सूर्याभं विरजोऽम्बरं किरीटिनं कुण्डलिनं शङ्खचक्रगदाधरं गरुडारूढं गगने

तस्यां स वै महायोगी युक्तायां योगलक्षणैः ॥ ससर्ज कतिधा वीर्यं तन्मे शुश्रूषवे वद ॥ ४ ॥ रुचिर्यो भगवान्ब्रह्मन् दक्षो वा ब्रह्मणः सुतः ॥ यथा ससर्ज भूतानि लब्ध्वा भार्यां च मानवीम् ॥ ५ ॥ मैत्रेय उवाच ॥ प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः ॥ सरस्वत्यां तपस्तेपे सहस्राणां समा दश ॥६॥ ततः समाधियुक्तेन क्रियायोगेन कर्दमः ॥ संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम् ॥ तावत्प्रसन्नो भगवान्पुष्कराक्षः कृते युगे ॥ ७ ॥ दर्शयामास तं क्षत्तः शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥ स तं विरजमर्काभं सितपद्मोत्पलस्रजम् ॥ स्निग्धनीलालकव्रातवक्त्राब्जं विरजोऽम्बरम् ॥ ९ ॥ किरीटिनं कुण्डलिनं शंखचक्रगदाधरम् ॥ श्वेतोत्पलक्रीडनकं मनस्स्पर्शस्मितेक्षणम् ॥ १० ॥ विन्यस्तचरणाम्भोजमंसदेशे गरुत्मतः ॥ दृष्ट्वा खेऽवस्थितं वक्षश्श्रियं कौस्तुभकन्धरम् ॥ ११ ॥ जातहर्षोऽपतन्मूर्ध्ना क्षितौ लब्धमनोरथः ॥ गीर्भिस्त्वभ्यगृणात्प्रीतिस्वभावात्मा कृताञ्जलिः ॥ १२ ॥ ऋषिरुवाच ॥ जुष्टं बताद्याखिलसत्त्वराशेः सांसिद्ध्यमक्ष्णोस्तव दर्शनान्नः ॥ यद्दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः ॥ १३ ॥ ये मायया ते हतमेधसस्त्वत्पादारविन्दं भवसिन्धुपोतम् ॥ उपासते कामलवाय तेषां रासीश कामान्निरयेऽपि ये स्युः ॥ १४ ॥ तथा स चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम् ॥ उपेयिवान्मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य ॥ १५ ॥

स्थितं हरिं दृष्ट्वा ॥९॥१०॥११॥ प्राप्तमनोरथः क्षितौ मूर्ध्ना पतन् कृताञ्जलिस्तुष्टाव ॥१२॥ कर्दम उवाच ॥ हे भगवन् ! तव दर्शनान्मे नयनयोः साफल्यं जातम्॥१३॥ये कामार्थं ते चरणारविन्दं भजन्ति ते मूढा एव॥१४॥तथाऽपि स्त्रीकामोऽहं तव कामपूरकं चरणं नमामि॥१५॥

१ दायकम् । २ शब्दैकगम्यम् । ३ 'विरजाम्बरम्' इ० पा० । ४ मनोहरम् । ५ प्रीतिरेव स्वभावो यस्य सआत्मा मनो यस्य ।

हे अधीश विशुद्धधर्ममूर्ते ! ऋणत्रयदूरीकरणार्थं कालात्मने तुभ्यं बलिसमर्पणाय च भार्यामिच्छामि ॥ १६ ॥ ये लोकाननादृत्य तव चरणरूपमातपत्रं श्रितास्ते कालभयं न गणयन्ति ॥ १७ ॥ हे ईश ! तव यत् कालचक्रं तत् जगदाकृष्य धावदपि त्वद्भक्तानामायुराकृष्य धावन्न भवति ॥१८॥ हे हरे ! स्वयं त्वमेक एव सन्नपि योगमाययेदं विश्वं सृजसि पासि ग्रसिष्यसे ॥१९॥ हे अधीश ! त्वं नो भजतां शब्दादि-

प्रजापतेस्ते वचसाऽधीश तन्त्या लोकः किलायं कामहतोऽनुबद्धः ॥ अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम् ॥ १६ ॥ लोकांश्च लोकानुगतान्पशूंश्च हित्वा श्रितास्ते चरणातपत्रम् ॥ परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः ॥ १७ ॥ न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व ॥ षण्नेम्यनन्तच्छदि यत्त्रिणाभि करालस्रोतो जगदाच्छिद्य धावत् ॥ १८ ॥ एकः स्वयं सञ्जगतः सिसृक्षया द्वितीययाऽऽत्मन्नधि योगमायया ॥ सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगवान्स्वशक्तिभिः ॥ १९ ॥ नैतद्बताधीश पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम् ॥ अनुग्रहायास्त्वपि यर्हि मायया लसत्तुलस्या तनुवा विलक्षितः ॥ २० ॥ तं त्वाऽनुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम् ॥ नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम् ॥ २१ ॥ मैत्रेय उवाच ॥ इत्यव्यलीकं प्रणतोऽब्जनाभस्तमाबभाषे वचसाऽमृतेन ॥ सुपर्णपक्षोपरि रोचमानः प्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः ॥ २२ ॥ श्रीभगवानुवाच ॥ विदित्वा तव चैत्त्यं मे पुरैव समयोजि तत् ॥ यदर्थमात्मनियमैस्त्वयैवाहं समर्चितः ॥ २३ ॥ न वै जातु मृषैव स्यात्प्रजाध्यक्ष मदर्हणम् ॥ भवद्विधेष्वतितरां मयि संगृभितात्मनाम् ॥ २४ ॥

विषयसुखं तवाप्रियमप्यस्मदनुग्रहाय मायया विस्तारयसि ॥२०॥ तं त्वां सततं नमामि ॥२१॥ मैत्रेय उवाच । इति श्रुत्वा भगवान् सुधामय्या वाण्या तं बभाषे॥२२॥श्रीभगवानुवाच। हे कर्दम ! तवेच्छां ज्ञात्वैतत् पुरैव मया समयोजि ॥२३॥ हे प्रजाध्यक्ष ! मदर्हणं मृषा न स्यात्॥२४॥

१ अजरं ब्रह्म तस्मिन्नक्षे भ्रमणशीलं संवत्सरात्मककालचक्रं तस्य मासाः अराः दिवसाः पर्वाणि ऋतवो नेमयः क्षणलवादयः पत्राणि पत्राकाराः धारा त्रीणि चातुर्मास्यानि नाभयः । २ त्वयि इत्यपि पाठः । ३ एकाग्रीकृतचित्तानाम् ।

ब्रह्मपुत्रो यो मनुर्ब्रह्मावर्तं वसन् सप्तार्णवां महीं शास्ति ॥२५॥ स मनुः शतरूपया भार्यया सह त्वां दिदृक्षुः परश्व इह समायास्यति ॥ २६॥ ततो वयश्शीलगुणान्वितां पतिं मृगयन्तीं स्वां कन्यां ते दास्यति ॥ २७ ॥ हे ब्रह्मन् ! सा राजकन्या त्वामाशु कामं सेविष्यते ॥ २८॥ ततस्त्वत्तस्तस्यां नव कन्या भविष्यन्ति । ऋषयस्तव कन्यासु सृष्टिं करिष्यन्ति ॥२९॥ त्वं च मयि समर्पितसर्वकर्मफलो मां प्राप्स्यसे

प्रजापतिसुतः सम्राण्मनुर्विख्यातमङ्गलः ॥ ब्रह्मावर्तं योऽधिवसञ्छास्ति सप्तार्णवां महीम् ॥ २५ ॥ स चेह विप्र राजर्षिर्महिष्या शतरूपया ॥ आयास्यति दिदृक्षुस्त्वां परश्वो धर्मकोविदः ॥ २६ ॥ आत्मजामसितापाङ्गीं वयश्शीलगुणान्विताम् ॥ मृगयन्तीं पतिं दास्यत्यनुरूपाय ते प्रभो ॥२७॥ समाहितं ते हृदयं यत्रेमान्परिवत्सरान् ॥ सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति ॥२८॥ या त आत्मभृतं वीर्यं नवधा प्रसविष्यति ॥ वीर्ये त्वदीये ऋषय आधास्यन्त्यञ्जसाऽऽत्मनः ॥२९॥ त्वं च सम्यगनुष्ठाय निदेशं म उशत्तमः ॥ मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे ॥ ३० ॥ कृत्वा दयां च जीवेषु दत्त्वा चाभयमात्मवान् ॥ मय्यात्मानं सह जगद्द्रक्ष्यस्यात्मनि चापि माम् ॥ ३१ ॥ सहाहं स्वांशकलया त्वद्वीर्येण महामुने ॥ तवक्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् ॥३२॥ मैत्रेय उवाच ॥ एवं तमनुभाष्याथ भगवान्प्रत्यगक्षजः ॥ जगाम बिन्दुसरसः सरस्वत्यापरिश्रितात् ॥ ३३ ॥ निरीक्षितस्तस्य ययावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ॥ आकर्णयन्पत्ररथेन्द्रपक्षैरुच्चारितं स्तोममुदीर्णसाम ॥ ३४ ॥ अथ संप्रस्थिते शुक्ले कर्दमो भगवानृषिः ॥ आस्ते स्म बिन्दुसरसि तं कालं प्रतिपालयन् ॥ ३५ ॥ मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् ॥ आरोप्य स्वां दुहितरं सभार्यः पर्यटन्महीम् ॥ ३६ ॥

॥३०॥ मय्यात्मानं जगच्च सहैकीभूतं द्रक्ष्यसि ॥ ३१ ॥ अहं कलया त्वद्वीर्येण तव क्षेत्रे देवहूत्यां भूत्वा तत्त्वसंहितां कथयिष्ये ॥ ३२ ॥ मैत्रेय उवाच ॥ इत्युक्त्वा भगवान् तस्य पश्यतो गरुडस्य पक्षैरुच्चारितं साम शृण्वन् बिन्दुसरसो जगाम ॥३३॥ ॥३४॥ अथ कर्दमो बिन्दुसरोवरे तं कालं प्रतीक्षमाणस्तस्थौ ॥ ३५ ॥ तदा मनुः पत्नीकन्याभ्यां सह सौवर्णपरिकरं रथमास्थाय महीं पर्यटन् ॥ ३६ ॥

भगवान् यद्दिनमादिशत् तस्मिन् दिने बिन्दुसरोवरसमीपे कर्दमस्याश्रमं जगाम ॥३७॥ तं वर्णयति । यस्मिन् भगवतो नेत्रात् कर्दमकृपया अश्रुबिन्दवो न्यपतन् ॥३८॥ तत् सरस्वत्या वेष्टितं बिन्दुसरोवरं नाम । पुनः कथंभूतं पुण्यद्रुमलताजालैर्युक्तं पुण्यामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥ पुण्यद्रुमादिसमूहैर्युक्तं सर्वर्तुफलपुष्पाढ्यम् ॥ ४० ॥ उन्मत्तपक्षिगणैर्नादितं मत्तमयूरैः कृतनित्यसंभ्रमम् ॥ ४१ ॥ कदम्बचम्पका-

तस्मिन्सुधन्वन्नहनि भगवान्यत्समादिशत् ॥ उपायादाश्रमपदं मुनेः शान्तव्रतस्य तत् ॥ ३७ ॥ यस्मिन्भगवतो नेत्रा-न्न्यपतन्नश्रुबिन्दवः ॥ कृपया संपरीतस्य प्रपन्नेऽर्पितया भृशम् ॥ ३८ ॥ तद्वै बिन्दुसरो नाम सरस्वत्या परिप्लुतम् ॥ पुण्यं शिवामृतजलं महर्षिगणसेवितम् ॥ ३९ ॥ पुण्यद्रुमलताजालैः कूजत्पुण्यमृगद्विजैः ॥ सर्वर्तुफलपुष्पाढ्यं वन-राजिश्रियाऽन्वितम् ॥ ४० ॥ मत्तद्विजगणैर्घुष्टं मत्तभ्रमरविभ्रमम् ॥ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ॥ ४१ ॥ कदम्बचम्पकाशोककरञ्जबकुलाशनैः ॥ कुन्दमन्दारकुटजैश्चूतपोतैरलंकृतम् ॥ ४२ ॥ कारण्डवैः प्लवैर्हंसैः कुररैर्जल-कुक्कुटैः ॥ सारसैश्चक्रवाकैश्च चकोरैर्वल्गुकूजितम् ॥ ४३ ॥ तथैव हरिणैः क्रोडैः श्वाविद्गवयकुञ्जरैः ॥ गोपुच्छै-र्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ॥४४॥ प्रविश्य तत्तीर्थवरमादिराजः सहात्मजः ॥ ददर्श मुनिमासीनं तस्मिन्हुतहुता-शनम् ॥ ४५ ॥ विद्योतमानं वपुषा तपस्युग्रयुजा चिरम् ॥ नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात् ॥ ४६ ॥ तद्व्याहृतामृतकलापीयूषश्रवणेन च ॥ * प्रांशुं पद्मपलाशाक्षं जटिलं चीरवाससम् ॥ उपसंसृत्य मलिनं यथाऽर्हणम-संस्कृतम् ॥ ४७ ॥ अथोटजमुपायान्तं नृदेवं प्रणतं पुरः ॥ सपर्यया प्रत्यगृह्णात्प्रतिनन्द्यानुरूपया ॥ ४८ ॥



शोकबकुलकुन्दमन्दाराम्रपनसादिभिः समन्वितम् ॥ ४२ ॥ कारण्डवहंससारसचक्रवाकादिभिः शब्दितम् ॥ ४३ ॥ तथा हरिणसूकर-शल्लकसिंहमर्कटनकुलादिभिः संवेष्टितम् ॥ ४४ ॥ एतादृशमाश्रमं सरोवरं च दृष्ट्वा तत्रासीनं मुनिं ददर्श ॥४५॥ तं कीदृशमित्याह । चिरं तपस्तप्यमानमपि भगवता स्वनेत्राभ्यामवलोकनात् नातिकृशम् ॥ ४६ ॥ प्रांशुं कमलनेत्रं जटिलं चीरवाससं मलिनमुग्रतपसा प्रकाश-मानं दृष्ट्वा मनुस्तत्समीपं जगाम ॥ ४७ ॥ अथ कर्दमः पर्णकुटीमायान्तं पुरः प्रणतमाशीर्भिः समभिनन्द्य सपर्यया सत्कृतवान् ॥ ४८ ॥

* "योऽर्तिप्रियं वचो ब्रूते स वै मोक्षं व्रजेन्नर" इत्यधिकः पाठः ।

ततो मुनिर्भगवदादेशं स्मरन् मनुं जगाद ॥ ४९ ॥ हे देव ! तवागमनं सतां रक्षणायासतां वधाय । त्वं हरेः पालिनी शक्तिः ॥ ५० ॥ यः सूर्यचन्द्रादीनां रूपाणि धत्ते तस्मै विष्णुरूपाय ते नमः ॥५१॥ त्वं रथमास्थाय महत्या सेनया सह यदा भुवो मण्डलं न पर्यटसि तदैव वर्णाश्रमधर्माः अचिराद्दस्युभिर्नश्यन्ति ॥ ५२ ॥५३॥५४॥ लोलुपैर्नृभिरधर्मश्च वृद्धिं प्राप्येत । त्वयि शयाने सति दस्युग्रस्तोऽयं लोको विनङ्क्ष्यति ॥५५॥ हे वीर ! त्वां पृच्छे त्वं यदर्थमिहागतो वयं तद्धर्षेण स्वीकुर्महे ॥५६॥ इति श्रीभा० चू० तृ० एकविंशतितमोऽध्यायः ॥२१॥ द्वाविंशे कर्दमायादाद्य-

गृहीतार्हणमासीनं संयतं प्रीणयन्मुनिः ॥ स्मरन् भगवदादेशमित्याह श्लक्ष्णया गिरा ॥ ४९ ॥ नूनं चंक्रमणं देव सतां संरक्षणाय ते ॥ वधाय चासतां यत्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥ योऽर्केन्द्वग्नीन्द्रवायूनां यमधर्मप्रचेतसाम् ॥ रूपाणि स्थान आधत्से तस्मै शुक्लाय ते नमः ॥ ५१ ॥ न यदा रथमास्थाय जैत्रं मणिगणार्पितम् ॥ विस्फूर्जच्चण्ड-कोदण्डो रथेन त्रासयन्नघान्[1] ॥ ५२ ॥ स्वसैन्यचरणक्षुण्णं वेपयन् मण्डलं भुवः ॥ विकर्षन्बृहतीं सेनां पर्यटस्यंशुमानिव ॥ ५३ ॥ तदैव सेतवः सर्वे वर्णाश्रमनिबन्धनाः ॥ भगवद्रचिता राजन्भिद्येरन्बत दस्युभिः ॥ ५४ ॥ अधर्मश्च समेधेत लोलुपैर्व्यङ्कुशैर्नृभिः ॥ शयाने त्वयि लोकोऽयं दस्युग्रस्तो विनङ्क्ष्यति ॥ ५५ ॥ अथापि पृच्छे त्वां वीर यदर्थं त्वमिहागतः ॥ तद्वयं निर्व्यलीकेन प्रतिपद्यामहे हृदा ॥ ५६ ॥ इति श्रीभा० म० तृतीय० स्वपुत्रीस्वायम्भुवमनुकर्दम-समागमवर्णनं नाम एकविंशतितमोऽध्यायः ॥ २१ ॥ मैत्रेय उवाच ॥ एवमाविष्कृताशेषगुणकर्मोदयो मुनिम् ॥ सव्रीड इव तं सम्राडुपारतमुवाच ह ॥१॥ मनुरुवाच ॥ ब्रह्माऽसृजत् स्वमुखतो युष्मानात्मपरीप्सया ॥ छन्दोमयस्तपोविद्या योगयुक्तानलम्पटान् ॥२॥ तत्त्राणायासृजच्चास्मान्दोःसहस्रात् सहस्रपात् ॥ हृदयं तस्य हि ब्रह्म क्षत्रमङ्गं प्रचक्षते ॥३॥

थादिष्टं हि विष्णुना ॥ मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥१॥ मैत्रेय उवाच । एवं गदित्वा विरतं मुनिं मनुरुवाच ॥१॥ मनुरुवाच ॥ मुने ! ब्रह्मा वेदप्रवर्त्तनेच्छया युष्मान् ब्राह्मणान् मुखतः ससर्ज ॥२॥ तेषां पालनाय बाहुतोऽस्मान् ससर्ज । अतस्तस्य हृदयं ब्रह्म क्षत्रमङ्गमिति वदन्ति ॥३॥

१ दस्यून् ।

अतोऽन्योन्यं ब्रह्म क्षत्रं च सर्वात्मको देव एव रक्षति स्म ॥४॥ हे देव ! तव दर्शनात् मे सर्वसंशयाश्छिन्नाः यतस्त्वं रिरक्षिषोर्धर्ममात्थ ॥५॥ अतोऽन्योन्यं ब्रह्म क्षत्रं च सर्वात्मको देव एव रक्षति स्म ॥४॥ हे देव ! तव दर्शनात् मे सर्वसंशयाश्छिन्नाः यतस्त्वं रिरक्षिषोर्धर्ममात्थ ॥५॥

हे देव ! ... दिष्ट्या पवित्रं त्वत्पादरजो मे शिरसा स्पृष्टम् ॥६॥ हे मुने ! दिष्ट्या त्वयाऽनुशासनादिरूप एवानुग्रहः कृतः ॥ ७ ॥ अतस्त्वं मे विज्ञापनं कृपया श्रोतुमर्हसि॥८॥प्रियव्रतोत्तानपदोः स्वसा मे कन्येयं वयश्शीलगुणादिभिर्योग्यं पतिमिच्छन्ती॥९॥नारदात् तव गुणादीन् श्रुत्वा त्वयि कृतनिश्चया जाता॥१०॥हे द्विजश्रेष्ठ ! मया श्रद्धयाऽऽनीतां गृहस्थाश्रमकर्मसु योग्यां तां स्वीकुरु ॥ ११ ॥ स्वतः प्राप्तस्य त्यागो विरक्तस्यापि

अतो ह्यन्योन्यमात्मानं ब्रह्मक्षत्रं च रक्षतः ॥ रक्षति स्माव्ययो देवः स यः सदसदात्मकः ॥४॥ तव संदर्शनादेव च्छिन्ना मे सर्वसंशयाः ॥ यत्स्वयं भगवान्प्रीत्या धर्ममाह रिरक्षिषोः ॥५॥ दिष्ट्या मे भगवान्दृष्टो दुर्दर्शो योऽकृतात्मनाम् ॥ दिष्ट्या पादरजः स्पृष्टं शीर्ष्णा मे भवतः शिवम् ॥ ६ ॥ दिष्ट्या त्वयाऽनुशिष्टोऽहं कृतश्चानुग्रहो महान् ॥ अपावृतैः कर्णरन्ध्रैर्जुष्टा दिष्ट्योशतीर्गिरः ॥ ७ ॥ स भवान्दुहितृस्नेहपरिक्लिष्टात्मनो मम ॥ श्रोतुमर्हसि दीनस्य श्रावितं कृपया मुने ॥ ८ ॥ प्रियव्रतोत्तानपदोः स्वसेयं दुहिता मम ॥ अन्विच्छन्ती[1] पतिं युक्तं वयश्शील[2]गुणादिभिः ॥ ९ ॥ यदा तु भवतः शीलश्रुतरूपवयोगुणान् ॥ अशृणोन्नारदादेषा त्वय्यासीत्कृतनिश्चया ॥ १० ॥ तत्प्रतीच्छ द्विजाग्र्येमां श्रद्धयोपहृतां[3] मया ॥ सर्वात्मनाऽनुरूपां ते गृहमेधिषु कर्मसु ॥ ११ ॥ उद्यतस्य हि कामस्य प्रतिवादो न शस्यते ॥ अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः ॥ १२ ॥ य उद्यतमनादृत्य कीनाशमभियाचते ॥ क्षीयते तद्यशः स्फीतं मानश्चावज्ञया हतः ॥१३॥ अहं त्वाऽशृणवं विद्वन्विवाहार्थं समुद्यतम् ॥ अतस्त्वमुपकुर्वाणः प्रत्तां प्रतिगृहाण मे ॥१४॥ ऋषिरुवाच ॥ बाढमुद्वोढुकामोऽहमप्रत्ता च तवात्मजा ॥ आवयोरनुरूपोऽसावाद्यो वैवाहिको विधिः ॥ १५ ॥



नोचितः किं पुनः कामे सक्तस्य ॥१२॥ यः प्राप्तमनादृत्य पुनः कृपणं प्रति याचते तस्य यशो मानश्च क्षीयते ॥१३॥ त्वं च परिणेतुकाम इत्यशृणवम् अत एनां गृहाण ॥१४॥कर्दम उवाच । अहं परिणेतुकाम इति त्वदुक्तं सत्यम् । अत आवयोः समानो वैवाहिको विधिर्भूयात्॥१५॥

१ 'अन्विच्छति' इ० पा० । २ 'वयो' इति पाठः । ३ 'उपाहृताम्' इति पाठः ।

अङ्गकान्त्या श्रियं क्षिपतीमिव ते कन्यां को नाद्रियेत॥१६॥अहो! क्वणदङ्घ्रिशोभां हर्म्यपृष्ठे विक्रीडतीं यां विलोक्य विश्वावसुर्मोहेन विमानात् पपात ॥ १७ ॥ स्त्रीणां भूषणभूतां स्वयं प्राप्तां बुधः को नानुमन्येत ॥१८॥ अतो यावत् प्रजोत्पत्तिर्भवेत् तावद् गार्हस्थ्यं स्वीकरिष्ये ततः पारमहंस्यान् धर्मानुपास्ये ॥१९॥ किंच भगवता ऋणत्रयदूरीकरणानन्तरं संन्यास एव मादृशानां विहितः ॥२०॥ मैत्रेय उवाच ॥ मुनिरेव-

कामः स भूयान्नरदेव तस्याःपुत्र्याः समाम्नायविधौ प्रतीतः ॥ क एव ते तनयां नाद्रियेत स्वयाऽङ्गकान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥ यां हर्म्यपृष्ठे क्वणदङ्घ्रिशोभां विक्रीडतीं कन्दुकविह्वलाक्षीम् ॥ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्य संमोहविमूढचेताः ॥ १७ ॥ तां प्रार्थयन्तीं ललनाललाममसेवितश्रीचरणैरदृष्टाम् ॥ वत्सां मनोरुच्चपदः स्वसारं को नानुमन्येत बुधोऽभियाताम् ॥ १८ ॥ अतो भजिष्ये समयेन साध्वीं यावत्तेजो बिभृयादात्मनो मे ॥ अतो धर्मान्पारमहंस्यमुख्याञ्छुक्लप्रोक्तान्बहु मन्येऽविहिंस्रान् ॥ १९ ॥ यतोऽभवद्विश्वमिदं विचित्रं संस्थास्यते यत्र च वाऽवतिष्ठते ॥ प्रजापतीनां पतिरेष मह्यं परं प्रमाणं भगवाननन्तः ॥ २० ॥ मैत्रेय उवाच ॥ स उग्रधन्वन्नियदेवाबभाष आसीच्च तूष्णीमरविन्दनाभम् ॥ धियोपगृह्णन्स्मितशोभितेन मुखेन चेतो लुलुभे देवहूत्याः ॥ २१ ॥ सोऽनु ज्ञात्वा व्यवसितं महिष्या दुहितुः स्फुटम् ॥ तस्मै गुणगणाढ्याय ददौ तुल्यां प्रहर्षितः ॥ २२ ॥ शतरूपा महाराज्ञी पारिबर्हान्महाधनान् ॥ दम्पत्योः पर्यदात्प्रीत्या भूषावासःपरिच्छदान् ॥ २३ ॥ प्रत्तां दुहितरं सम्राट् सदृक्षाय गतव्यथः ॥ उपगुह्य च बाहुभ्यामौत्कण्ठ्योन्मथिताशयः ॥२४॥ अशक्नुवंस्तद्विरहं मुञ्चन्बाष्पकलां मुहुः ॥ आसिञ्चदम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः ॥ २५ ॥

मुक्त्वा तूष्णीं बभूव। देवहूत्याश्चेतो मुनेर्मुखं दृष्ट्वा लुलुभे॥२१॥तदा मनुर्दुहितुर्महिष्याश्च निश्चयं ज्ञात्वा गुणगणाढ्याय कर्दमाय तुल्यां कन्यां दत्त्वा मुमुदे ॥२२॥ राज्ञी शतरूपा दम्पत्योर्वस्त्रभूषणगृहोपस्कराणि पारिबर्हांश्च ददौ ॥२३॥ मनुर्दत्तां कन्यां बाहुभ्यामालिङ्ग्य क्षुभितान्तःकरणो बभूव ॥ २४ ॥ स तस्याः वियोगं सोढुमक्षमो हे अम्ब ! हे वत्से ! इति ब्रुवन् नेत्रोदैस्तस्याः केशान् सिषेच ॥ २५ ॥

१ 'तेजस्याः' इ० पा० । २ 'स्वयैव कान्त्या' इ० पा० । ३ संचिरार्थः ।

ततो मुनिमामन्त्र्य सभार्यः सहानुगो रथमारुह्य सरस्वतीतीरस्थऋषीणामाश्रमसंपदः पश्यन् स्वपुरं ययौ ॥ २६ ॥ २७ ॥ तदा प्रजाः आगतं मनुं ज्ञात्वा गीतवादित्रैः संमुखं ययुः ॥ २८ ॥ मनुस्तैः सह बर्हिष्मतीं नाम पुरीं जगाम । यत्राङ्गं विधुन्वतो वाराहस्य रोमाणि न्यपतन् ॥ २९ ॥ ते केशाः कुशा आसन् । ऋषयो यै राक्षसादीन् जित्वा विष्णुमीजिरे ॥ ३० ॥ मनुः कुशकाशमयमासनमास्तीर्य यज्ञपुरुषमयजत् ॥ ३१ ॥ ॥ २६ ॥ उभयोर्ऋषिकुल्यायाः

आमन्त्र्य तं मुनिवरमनुज्ञातः सहानुगः ॥ प्रतस्थे रथमारुह्य सभार्यः स्वपुरं नृपः ॥ २६ ॥ उभयोर्ऋषिकुल्यायाः सरस्वत्याः सुरोधसोः ॥ ऋषीणामुपशान्तानां पश्यन्नाश्रमसंपदः ॥ २७ ॥ तमायान्तमभिप्रेत्य ब्रह्मावर्तात्प्रजाः[1] पतिम् ॥ गीतसंस्तुतिवादित्रैः प्रत्युदीयुः प्रहर्षिताः ॥ २८ ॥ बर्हिष्मती नाम पुरी सर्वसंपत्समन्विता ॥ न्यपतन्यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ २९ ॥ कुशाः काशास्त एवासञ्छश्वद्धरितवर्चसः ऋषयो यैः पराभाव्य यज्ञघ्नान्यज्ञमीजिरे ॥ ३० ॥ कुशकाशमयं बर्हिरास्तीर्य भगवान्मनुः ॥ अयजद्यज्ञपुरुषं लब्ध्वा स्थानं यतो भुवम् ॥ ३१ ॥ बर्हिष्मतीं नाम विभुर्यां निर्विश्य समावसत् ॥ तस्यां प्रविष्टो भवनं तापत्रयविनाशनम् ॥ सभार्यः सप्रजः कामान्बुभुजेऽन्याविरोधतः ॥ ३२ ॥ संगीयमानसत्कीर्तिः सस्त्रीभिः सुरगायकैः ॥ प्रत्यूषेष्वनुबद्धेन हृदा शृण्वन्हरेः कथाः * ॥ ३३ ॥ निष्णातं योगमायासु मुनिं स्वायंभुवं मनुम् ॥ यदा भ्रंशयितुं भोगा न शेकुर्भगवत्परम् ॥ ३४ ॥ अयातयामास्तस्यासन्यामाः स्वान्तरयापनाः ॥ शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ ३५ ॥ स एवं स्वान्तरं निन्ये युगानामेकसप्ततिम् ॥ वासुदेवप्रसङ्गेन परिभूतगतित्रयः ॥ ३६ ॥ शारीरा मानसा दिव्या वैयासे[3] ये च मानुषाः ॥ भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥

तस्यां पुर्यां प्रविश्य स्वभवनं प्रविष्टः सन् भोगान् बुभुजे ॥ ३२ ॥ उषसि सुरगायकैः संकीर्त्यमानोऽपि स्वयं हरेरेव कथाः शृण्वन् भोगान् बुभुजे ॥ ३३ ॥ ते भोगाः योगमायासु निपुणं मनुं भ्रंशयितुं न शेकुः ॥ ३४ ॥ विष्णोः कथाः शृण्वतो ब्रुवतस्तस्य यामाः गतसाराः नासन् ॥ ३५ ॥ स वासुदेवप्रसङ्गेन युगानामेकसप्ततिं कालं निन्ये ॥ ३६ ॥ शारीरमानसादिक्लेशाः हरिसंश्रयं नरं न बाधन्ते ॥ ३७ ॥

१ प्रजापतिम्' इ० * ''कलौ कथाश्रवणतस्तरन्ति भववारिधिम्'' इत्यधिकः पाठः । २ जाग्रवादि । ३ हे विदुर ।

यो मुनिभिः पृष्टः सन् नानाविधान् धर्मान् प्राह॥३८॥तस्यादिराजस्य चरितं ते कथितम् । अथ देवहूत्याः प्रभावं शृणु॥३९॥इति श्रीभा० चू० तृती० द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे तपोयोगनिर्मिते सर्वसंपदि । विमाने कामगे चित्रा तयो रतिरुदीर्यते ॥१॥ मैत्रेय उवाच । सा देवहूतिः पितृभ्यां गमने कृते सति पति मनोवृत्तं जानती शौचेन गौरवेण दमेन शुश्रूषया मधुरवाण्या च पतिं पर्यचरत् ॥१॥२॥ कपटद्वेषलो-

यः पृष्टो मुनिभिः प्राह धर्मान् नानाविधान् शुभान् ॥ नृणां वर्णाश्रमाणां च सर्वभूतहितः सदा ॥ ३८ ॥ एतत्त आदि-राजस्य मनोश्चरितमद्भुतम् ॥ वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥ ३९ ॥ इति श्रीभा० म० तृती० सपत्नीकस्वा-यम्भुवमनोः प्रत्यागमनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ मैत्रेय उवाच ॥ पितृभ्यां प्रस्थिते साध्वी पतिमिङ्गितको-विदा ॥ नित्यं पर्यचरत् प्रीत्या भवानीव भवं प्रभुम् ॥ १ ॥ विश्रम्भेणात्मशौचेन गौरवेण दमेन च ॥ शुश्रूषया सौहृ-देन वाचा मधुरया च भोः ॥ २ ॥ विसृज्य कामं दम्भं च द्वेषं लोभमघं मदम् ॥ अप्रमत्तोद्यता नित्यं तेजीयांसम-तोषयत् ॥ ३ ॥ स वै देवर्षिवर्यस्तां मानवीं समनुव्रताम् ॥ दैवाद्गरीयसः पत्युराशासानां महाशिषः ॥४॥ कालेन भूयसा क्षामां कर्शितां व्रतचर्यया ॥ प्रेमगद्गदया वाचा पीडितः कृपयाऽब्रवीत् ॥५॥ कर्दम उवाच ॥ तुष्टोऽहमद्य तव मानवि-मानदायाः शुश्रूषया परमया परया च भक्त्या ॥ यो देहिनामयमतीव सुहृत् स्वदेहो नावेक्षितः समुचितः क्षपितुं मदर्थे ॥ ६ ॥ ये मे स्वधर्मनिरतस्य तपस्समाधिविद्यात्मयोगविजिता भगवत्प्रसादाः ॥ तानेव ते मदनुसेवनया-ऽवरुद्धान् दृष्टिं प्रपश्य वितराम्यभयानशोकान् ॥ ७ ॥ अन्ये पुनर्भगवतो भ्रुव उद्विजृम्भविभ्रंशितार्थरचनाः किमुरु-क्रमस्य ॥ सिद्धाऽसि भुङ्क्ष्व विभवान्निजधर्मदोहान् दिव्यान्नरैर्दुरधिगान्नृपविक्रियाभिः ॥ ८ ॥

भादीन् विसृज्य तं तोषयामास ॥३॥ एवं बहुकाले गते सति दैवमन्यथाकर्तुं समर्थः कृपापूर्णः ऋषिस्तां व्रताचरणेन कृशां समनुव्रतां जगाद ॥४॥५॥ हे मानवि ! तव शुश्रूषया भक्त्या च तुष्टोऽस्मि यतः प्रियोऽपि देहो मदर्थे न गणितः॥६॥मया तपस्समाधियोगेन ये भगवत्प्रसादाः संपादिताः ते मम सेवया त्वयाऽपि वशीकृताः । अतस्ते दिव्यां दृष्टिं वितरामि यया दृष्ट्या त्वं सर्वं पश्यसि ॥७॥ त्वं पातिव्रत्येन सिद्धाऽसि

अतोऽन्यैर्दुष्प्रापान् दिव्यान् भोगान् भुङ्क्ष्व ॥ ८ ॥ एवं ब्रुवाणं सर्वयोगमायायाः उपासनासु निपुणं पतिं वीक्ष्य सलज्जितहास्यावलोकनेन वदति स्म ॥ ९ ॥ देवहूतिरुवाच । हे भर्तः ! त्वय्येतत् सर्वं सिद्धमेव । तदहं जानामि । अतो यस्त्वया समयो निश्चितः स सकृद् भूयात् ॥ १० ॥ हे ईश ! रन्तुमिच्छया मया देहः कर्शितः । स देहो यथा रतिसमर्थो भवेत् तथा कुरु । किंच क्रीडायोग्यं भवनं संपादय ॥११॥

एवं ब्रुवाणमबलाऽखिलयोगमायाविद्याविचक्षणमवेक्ष्य गताधिरासीत् ॥ संप्रश्रयप्रणयविह्वलया गिरेषद्व्रीडावलोक-विलसद्धसिताननाऽऽह ॥ ९ ॥ देवहूतिरुवाच ॥ राद्धं बत द्विजवृषैतदमोघयोगमायाधिपे त्वयि विभो तदवैमि भर्तः ॥ यस्तेऽभ्यधायि समयः सकृदङ्गसंगो भूयाद्गरीयसि गुणः प्रसवः सतीनाम् ॥ १० ॥ तत्रेतिकृत्यमुपशिक्ष यथोपदेशं येनैष मे कर्शितोऽतिरिंसयाऽऽत्मा ॥ सिध्येत ते कृतमनोभवधर्षिताया दीनस्तदीश भवनं सदृशं विचक्ष्व ॥ ११ ॥ मैत्रेय उवाच ॥ प्रियायाः प्रियमन्विच्छन्कर्दमो योगमास्थितः ॥ विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत् ॥१२॥ सर्व-कामदुघं दिव्यं सर्वरत्नसमन्वितम् ॥ सर्वर्द्ध्युपचयोदर्कं मणिस्तम्भैरुपस्कृतम् ॥ १३ ॥ दिव्योपकरणोपेतं सर्वकाल-सुखावहम् ॥ पट्टिकाभिः पताकाभिर्विचित्राभिरलंकृतम् ॥ १४ ॥ स्रग्भिर्विचित्रमाल्याभिर्मञ्जुसिञ्जत्षडङ्घ्रिभिः ॥ दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥ उपर्युपरि विन्यस्तनिलयेषु पृथक्पृथक् ॥ क्षिप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ १६ ॥ तत्र तत्र विनिक्षिप्तनानाशिल्पोपशोभितम् ॥ महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ॥ १७ ॥ द्वाःसु विद्रुमदेहल्या भातं वज्रकपाटवत् ॥ शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिश्रितम् ॥ १८ ॥



मैत्रेय उवाच ॥ कर्दमः प्रियायाः प्रियमन्विच्छन् योगबलेन तर्ह्येव कामगं विमानमचीकरत् ॥१२॥ कथंभूतं तत् । सर्वकामदुघं मणिस्तम्भैः शोभितम् ॥१३॥ सर्वकालसुखावहं विचित्रध्वजपताकादिभिः समलंकृतम् ॥१४॥ विचित्रपुष्पमालाभिर्दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् ॥ १५ ॥ उपर्युपरि रचितगृहेषु शय्याभिः पर्यङ्कव्यजनासनैः पृथक् पृथक् कमनीयम् ॥ १६ ॥ तत्र तत्र मरकतस्थल्या विद्रुमवेदिभिश्च जुष्टम् ॥ १७ ॥ द्वारेषु विद्रुमनिर्मितदेहल्या वज्रखचितकपाटैश्च शोभितम् ॥ १८ ॥

वज्रभित्तिषु विचित्रवितानैर्हैमतोरणैर्जुष्टम् ॥ १९ ॥ हंसपारावतयूथैस्तत्र तत्र कूजितम् ॥ २० ॥ क्रीडास्थानशयनस्थानोपभोगस्थानप्राङ्गणादिभिः शोभितम् ॥ २१ ॥ यस्मिन् विमाने इन्द्रादिलोकपालैः प्रार्थनार्हा सर्वैव संपत्तिरासीत् ईदृग् गृहं दृष्ट्वा मलिनदेहत्वात् सा प्रीतमनानासीत् । तदा तस्याश्चित्तज्ञः कर्दम आह ॥ २२ ॥ हे भीरु ! अस्मिन् बिन्दुसरोवरे निमज्ज्य विमानमारुह ॥ २३ ॥ मलिनं वस्त्रं वेणीभूतान् मूर्धजांश्च बिभ्रती सा तद्वचः श्रुत्वा ॥ २४ ॥ मलिनाङ्गी कृशस्तनी सा सरस्वतीमध्यस्थं सर आविवेश ॥ २५ ॥ सा तत्र निमग्ना

चक्षुष्मत्पद्मरागाढ्यैर्वज्रभित्तिषु निर्मितैः ॥ जुष्टं विचित्रवैतानैर्महार्हैर्हेमतोरणैः ॥ १९ ॥ हंसपारावतव्रातैस्तत्र तत्र निकूजितम् ॥ कृत्रिमान्मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥ विहारस्थानविश्रामसंवेशप्राङ्गणाजिरैः ॥ यथोपजोषं रचितैर्विस्मापनमिवात्मनः ॥ २१ ॥ ईदृग्गृहं तत्पश्यन्तीं नातिप्रीतेन चेतसा ॥ सर्वभूताशयाभिज्ञः प्रावोचत्कर्दमः स्वयम् ॥ २२ ॥ निमज्ज्यास्मिन्ह्रदे भीरु विमानमिदमारुह ॥ इदं शुक्लकृतं तीर्थमाशिषां यापकं नृणाम् ॥ ॥२३॥ सा तद्भर्तुः समादाय वचः कुवलयेक्षणा ॥ सरजं बिभ्रती वासो वेणीभूतांश्च मूर्धजान् ॥२४॥ अङ्गं च मलपङ्केन संछन्नं शबलस्तनम् ॥ आविवेश सरस्वत्याः सरः शिवजलाशयम् ॥ २५ ॥ साऽन्तःसरसि वेश्मस्थाः शतानि दश कन्यकाः ॥ सर्वाः किशोरवयसो ददर्शोत्पलगन्धयः ॥ २६ ॥ तां दृष्ट्वा सहसोत्थाय प्रोचुः प्राञ्जलयः स्त्रियः ॥ वयं कर्मकरीस्तुभ्यं शाधि नः करवाम किम् ॥ २७ ॥ स्नानेन तां महार्हेण स्नापयित्वा मनस्विनीम् ॥ दुकूले निर्मले नूत्ने ददुरस्यै च मानद ॥ २८ ॥ भूषणानि परार्ध्यानि वरीयांसि द्युमन्ति च ॥ अन्नं सर्वगुणोपेतं पानं चैवामृतासवम् ॥ २९ ॥ अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् ॥ विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥

सती तदैव कमलगन्धीः किशोरवयसः सहस्रं कन्या ददर्श ॥ २६ ॥ ताः देवहूतिं प्राप्य प्राञ्जलयः ऊचुः । वयं तव दास्यस्त्वं नः आज्ञां कुरु ॥ २७ ॥ इत्युक्त्वा तैलादिमर्दनेन तां स्नापयित्वा निर्मले दुकूले अमौल्यभूषणानि सर्वगुणोपेतमन्नममृतमिव पानं च ददुः ॥ २८ ॥ २९ ॥ अथ देवहूतिरादर्शे स्वात्मानं विरजाम्बरं कन्याभिर्बहुमानितम् ॥ ३० ॥

कृतशिरःस्नानं सर्वाभरणभूषितं वलयिनं काञ्चननूपुरम् ॥३१॥ बहुरत्नखचितया काञ्चन्या काञ्च्याऽमौल्यहारेण च भूषितम्॥३२॥ सुन्दरदन्तभ्रूकटाक्षनेत्रैरलकैश्च शोभमानं मुखं ददर्श ॥३३॥ यदा पतिं सस्मार तदा यत्र पतिस्तत्रैव स्वयमपि दासीभिः सहास्ते ॥ ३४ ॥ तदा सा-ऽऽत्मानं तस्य योगमायाप्रभावं च दृष्ट्वेदं किमिति संशयं प्राप ॥ ३५ ॥ स कर्दमः कृतमङ्गलस्नानां शोभायमानां प्रावृतरुचिरस्तनीं सुवस्त्र-

स्नातं कृतशिरस्नानं सर्वाभरणभूषितम् ॥ निष्कग्रीवं वलयिनं कूजत्काञ्चननूपुरम् ॥३१॥ श्रोण्योरध्यस्तया काञ्च्या काञ्चन्या बहुरत्नया ॥ हारेण च महार्हेण रुचकेन च भूषितम् ॥ ३२ ॥ सुदता सुभ्रुवा श्लक्ष्णस्निग्धापांगेन चक्षुषा ॥ पद्मकोशस्पृधा नीलैरलकैश्च लसन्मुखम् ॥ ३३ ॥ यदा सस्मार ऋषभमृषीणां दयितं पतिम् ॥ तत्र चास्ते सह स्त्रीभिर्यत्रास्ते स प्रजापतिः ॥ ३४ ॥ भर्तुः पुरस्तादात्मानं स्त्रीसहस्रवृतं तदा ॥ निशाम्य तद्योगगतिं संशयं प्रत्यपद्यत ॥ ३५ ॥ स तां कृतमलस्नानां विभ्राजन्तीमपूर्ववत् ॥ आत्मनो बिभ्रतीं रूपं संवीतरुचिरस्तनीम् ॥ ३६ ॥ विद्याधरीसहस्रेण सेव्यमानां सुवाससम् ॥ जातभावो विमानं तदारोहयदमित्रहन् ॥३७॥ तस्मिन्नलुप्तमहिमा प्रियया-ऽनुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने ॥ बभ्राज उत्कचकुमुद्गणवानपीच्यस्ताराभिरावृत इवोडुपतिर्नभःस्थः ॥ ३८॥ तेनाष्टलोकपविहारकुलाचलेन्द्रद्रोणीस्वनङ्गसखमारुतसौभगासु ॥ सिद्धैर्नुतो द्युधुनिपातशिवस्वनासु रेमे चिरं धनदवल्ललनावरूथी ॥ ३९ ॥ वैश्रम्भके सुरसने नन्दने पुष्पभद्रके ॥ मानसे चैत्ररथ्ये च स रेमे रामया रतः ॥४०॥ भ्राजिष्णुना विमानेन कामगेन महीयसा ॥ वैमानिकानत्यशेत चरँल्लोकान्यथाऽनिलः ॥ ४१ ॥

धरां विद्याधरीसहस्रेण सेव्यमानां तां दृष्ट्वा तया सह विमानमारुरोह ॥ ३६ ॥ ३७ ॥ तदा विमाने कर्दमः स्त्रिया दासीभिश्च सह खे चन्द्र इव रराज ॥३८॥ स तेन विमानेन मेरोर्दरीषु सिद्धैः स्तुतो धनदवत् क्रीडन् ॥ ३९ ॥ वैश्रम्भकसुरसननन्दनपुष्पभद्रकचैत्ररथ्यादिदेवोद्यानेषु भार्यया सह रेमे ॥ ४० ॥ कामगेन विमानेन वैमानिकानतिक्रम्य लोकान् व्यचरत् ॥ ४१ ॥

यैर्भगवच्चरणः आश्रितस्तेषां किं दुर्लभम् ॥ ४२ ॥एवं पत्न्यै भूगोलं सर्वं दर्शयित्वा पुनः स्वाश्रमं प्राप्य ॥४३॥ तस्यां नवधा वीर्यमादधे ॥ ४४ ॥ देवहूतिरुत्कृष्टां शय्यामाश्रित्य पतिसङ्गेन गतकालं नाबुध्यत ॥ ४५ ॥ एवं दम्पत्योः रममाणयोः शतवर्षाणि क्षणवद् व्यतीयुः ॥ ४६ ॥ मुनिस्तस्याः बह्वपत्यसंकल्पं जानन् नवधा वीर्यमाधत्त ॥ ४७ ॥ सा सद्यश्चारुसर्वाङ्गीर्नव कन्याः सुषुवे ॥ ४८ ॥ सैकदा पतिं

किं दुरापादनं तेषां पुंसामुद्दामचेतसाम् । यैराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ४२ ॥ प्रेक्षयित्वा भुवो गोलं पत्न्यै यावान्स्वसंस्थया । बह्वाश्चर्यं महायोगी स्वाश्रमाय न्यवर्तत ॥४३॥ विभज्य नवधाऽऽत्मानं मानवीं सुरतोत्सुकाम् । रामां निरमयन्रेमे वर्षपूगान्मुहूर्तवत् ॥ ४४ ॥ तस्मिन्विमान उत्कृष्टां शय्यां रतिकरीं श्रिता । न चाबुध्यत तं कालं पत्याऽपीच्येन संगता ॥ ४५ ॥ एवं योगानुभावेन दम्पत्यो रममाणयोः । शतं व्यतीयुः शरदः कामलालसयोर्मनाक् ॥ ४६ ॥ तस्यामाधत्त रेतस्तां भावयन्नात्मनाऽऽत्मवित् । नोधा विधाय रूपं स्वं सर्वसंकल्पविद्विभुः ॥ ४७ ॥ अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः । सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः ॥ ४८ ॥ पतिं सा प्रव्रजिष्यन्तं तदाऽऽलक्ष्योशती सती । स्मयमाना विक्लवेन हृदयेन विदूयता ॥ ४९ ॥ लिखन्त्यधोमुखी भूमिं पदा नखमणिश्रिया । उवाच ललितां वाचं निरुध्याश्रुकलां शनैः ॥ ५० ॥ देवहूतिरुवाच । सर्वं तद्भगवान्मह्यमुपोवाह प्रतिश्रुतम् । अथापि मे प्रपन्नाया अभयं दातुमर्हसि ॥ ५१ ॥ ब्रह्मन्दुहितृभिस्तुभ्यं विमृग्याः पतयः समाः । कश्चित्स्यान्मे विशोकाय त्वयि प्रव्रजिते वनम् ॥ ५२ ॥ एतावताऽलं कालेन व्यतिक्रान्तेन मे प्रभो । इन्द्रियार्थप्रसङ्गेन परित्यक्तपरात्मनः ॥ ५३ ॥

प्रव्रजिष्यन्तं दृष्ट्वा बहिर्विस्मयमानाऽन्तस्तु व्याकुलहृदया ॥ ४९ ॥ अधोमुख्यश्रुकलां मुञ्चती सती पतिं जगाद ॥५०॥ हे मुने ! त्वया यत् प्रतिश्रुतं तत् संपादितम् । अथापि त्वं शरणागतायाः मेऽभयं दातुमर्हसि ॥५१॥ हे ब्रह्मन् ! त्वयि वनं प्रव्रजिते सति मे विशोकाय ब्रह्मवित् पुत्रोऽस्तु त्वया कन्यानां पतयो विमृग्याः ॥ ५२ ॥ हे प्रभो ! विषयप्रसङ्गेन कालेनैतावताऽलम् ॥ ५३ ॥

तव सामर्थ्यमजानन्त्या मया त्वयि विषयार्थं सङ्गः कृतः।स सङ्गो मेऽभयायास्तु॥५४॥ कुतः अज्ञानेनापि साधुषु कृतः सङ्गो मोक्षाय कल्पते ॥५५॥ यस्य कर्म धर्माय वैराग्याय हरिसेवार्थं च न भवेत् स जीवन्नपि मृतः॥५६॥अहं भगवन्मायया वञ्चिताऽस्मि यतो मुक्तिदं त्वां पतिं प्राप्य बन्धनात् मोक्तुमिच्छां न कृतवती॥५७॥इति श्रीभा० चू० तृती० त्रयोविंशोऽध्याय॥२३॥ चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः।

इन्द्रियार्थेषु सजन्त्या प्रसङ्गस्त्वयि मे कृतः ॥ अजानन्त्या परं भावं तथाऽप्यस्त्वभयाय मे ॥ ५४ ॥ सङ्गो यः संसृतेर्हेतुरसत्सु विहितो धिया ॥ स एव साधुषु कृतो निस्सङ्गत्वाय कल्पते ॥ ५५ ॥ नेह यत्कर्म धर्माय न विरागाय कल्पते ॥ न तीर्थपदसेवायै जीवन्नपि मृतो हि सः ॥५६ ॥ साऽहं भगवतो नूनं वञ्चिता मायया दृढम् ॥ यत्त्वां विमुक्तिदं प्राप्य न मुमुक्षेय बन्धनात् ॥ ५७ ॥ इति श्रीभा० म० तृ० कर्दमस्य नवकन्योत्पत्तिवर्णनं नाम त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ मैत्रेय उवाच ॥ निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः ॥ दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥ ऋषिरुवाच ॥ मा खिदो राजपुत्रीत्थमात्मानं प्रत्यनिन्दिते ॥ भगवांस्तेऽक्षरो गर्भमदूरात्संप्रपत्स्यते ॥ २ ॥ धृतव्रताऽसि भद्रं ते दमेन नियमेन च ॥ तपोद्रविणदानैश्च श्रद्धया चेश्वरं भज ॥ ३ ॥ स त्वयाऽऽराधितः शुक्लो वितन्वन्मामकं यशः ॥ छेत्ता ते हृदयग्रन्थिमौदर्यो ब्रह्मभावनः ॥ ४ ॥ मैत्रेय उवाच ॥ देवहूत्यपि संदेशं गौरवेण प्रजापतेः ॥ सम्यक् श्रद्धाय पुरुषं कूटस्थमभजद्गुरुम् ॥५॥ तस्यां बहुतिथे काले भगवान्मधुसूदनः ॥ कार्दमं वीर्यमापन्नो यज्ञेऽग्निरिव दारुणि ॥ ६ ॥ अवादयंस्तदा व्योम्नि वादित्राणि घनाघनाः ॥ गायन्ति तं स्म गन्धर्वा नृत्यन्त्यप्सरसो मुदा ॥ ७ ॥

प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥१॥ मैत्रेय उवाच ॥ दयालुः कर्दमः खिन्नां तां विलोक्य भगवदुक्तं स्मरन् वदति स्म ॥१॥ कर्दम उवाच ॥ हे राजपुत्रि ! त्वं खेदं मा कार्षीः भगवान् ते गर्भं शीघ्रं प्राप्स्यति ॥ २ ॥ अतो यमनियमतपोदानादिभिरीश्वर भज ॥३॥ स ते हृदयग्रन्थिच्छेत्ता भविष्यति ॥४॥ मैत्रेय उवाच । देवहूतिरपि तद्वाक्यं श्रुत्वा श्रद्धया हरिं भेजे॥५॥ भगवान् बहुतरे कालेऽतिक्रान्ते कार्दमं वीर्यं प्राप्तः सन् तस्यां दारुणि वह्निरिव जज्ञे ॥६॥ तदा व्योम्नि घनाघनाः वादित्राणि वादयामासुः गन्धर्वाः जगुः, अप्सरसो ननृतुः ॥७॥

देवाः पुष्पवृष्टिं चक्रुः ॥ दिशः प्रसेदुः ॥८॥ तदा ब्रह्मा सांख्यशास्त्रप्रवर्तनाय जातं भगवन्तं ज्ञात्वा मरीच्यादिभिःसह कर्दमाश्रमं प्राप्य॥९॥ ॥१०॥ तस्य चिकीर्षितं पूजयन् कर्दमं जगाद ॥११॥ ब्रह्मोवाच ॥ हे पुत्र ! मम वचः सम्यग् गृहीतं त्वया ॥ १२ ॥ पितरि पुत्रैरेताव-त्येव शुश्रूषा कार्या गुरोर्वचो गौरवेण बाढमित्यनुमन्येतेति यत् ॥ १३ ॥ इमाः कन्याः एतेभ्य ऋषिभ्यस्त्वं देहि ॥ ताः अनेकधा सर्गं वर्धयि-

पेतुः सुमनसो दिव्याः खेचरैरपवर्जिताः॥प्रसेदुश्च दिशः सर्वा अम्भांसि च मनांसि च ॥८॥ तत्कर्दमाश्रमपदं सरस्वत्या परिश्रितम् ॥ स्वयंभूः साकमृषिभिर्मरीच्यादिभिरभ्ययात् ॥ ९॥ भगवन्तं परंब्रह्म सत्त्वेनांशेन शत्रुहन् ॥ तत्त्वसंख्यान विज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १०॥ सभाजयन् विशुद्धेन चेतसा तच्चिकीर्षितम् ॥ प्रहृष्यमाणैरसुभिः कर्दमं चेद-मभ्यधात् ॥ ११ ॥ ब्रह्मोवाच ॥ त्वया मेऽपचितिस्तात कल्पिता निर्व्यलीकतः ॥ यन्मे संजगृहे वाक्यं भवान्मानद मानयन् ॥ १२ ॥ एतावत्येव शुश्रूषा कार्या पितरि पुत्रकैः ॥ बाढमित्यनुमन्येत गौरवेण गुरोर्वचः ॥ १३ ॥ इमा दुहितरः सभ्य तव वत्स सुमध्यमाः ॥ सर्गमेतं प्रभावैः स्वैर्बृंहयिष्यन्त्यनेकधा ॥ १४ ॥ अतस्त्वमृषिमुख्येभ्यो यथा शीलं यथारुचि ॥ आत्मजाः परिदेह्यद्य विस्तृणीहि यशो भुवि ॥ १५ ॥ वेदाहमाद्यं पुरुषमवतीर्णं स्वमायया ॥ भूतानां शेवधिं देहं बिभ्राणं कपिलं मुने ॥ १६ ॥ ज्ञानविज्ञानयोगेन कर्मणामुद्धरञ्जटाः ॥ हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥ एष मानवि ते गर्भं प्रविष्टः कैटभार्दनः ॥ अविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति ॥ १८ ॥ अयं सिद्धगणाधीशः सांख्याचार्यैः सुसंमतः ॥ लोके कपिल इत्याख्यां गन्ता ते कीर्तिवर्धनः ॥ १९ ॥

ष्यन्ति । तेन तव यशो भुवि विस्तरिष्यति ॥१४॥१५॥ आद्यं पुरुषं कपिलं तव देहेंऽशेनावतीर्णं वेद्मि ॥१६॥ स ज्ञानविज्ञानवियोगेन कर्मणां वासनाः उत्पाटयिष्यति ॥१७॥ अथ हे मानवि ! कैटभारिस्ते गर्भं प्रविष्टः । अयं तवाविद्यासंशयग्रन्थिं छित्त्वा गां विचरिष्यति ॥ १८ ॥ अयं सिद्धगणाधीशो लोके कपिल इति नाम प्राप्स्यति ॥ १९ ॥

---

१ पूजा ।

इत्युक्त्वा ब्रह्मा कुमारैर्नारदेन च सह सत्यलोकं ययौ ॥ २० ॥ ब्रह्मणि गते सति कर्दमः स्वकन्याः विश्वसृजां ददौ ॥ २१ ॥ मरीचये कलां कन्याम् अत्रयेऽनसूयाम् अङ्गिरसे श्रद्धां पुलस्त्याय हविर्भुवम् ॥२२॥ पुलहाय गतिं क्रतवे क्रियां भृगवे ख्यातिं वसिष्ठायारुन्धतीम् ॥२३॥ अथर्वणे शान्तिं ददौ। ततः कृतोद्वाहान् तान् संतोषितवान् ॥२४॥ ततः ऋषयस्तमामन्त्र्य सस्त्रीकाः स्वं स्वमाश्रमं ययुः ॥२५॥ कर्दमो भग-



मैत्रेय उवाच ॥ तावाश्वस्य जगत्स्रष्टा कुमारैः सह नारदः ॥ हंसो हंसेन यानेन त्रिधाम परमं ययौ ॥ २० ॥ गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः ॥ यथोदितः स्वदुहितॄः प्रादाद्विश्वसृजां ततः ॥२१॥ मरीचये कलां प्रादादनसूया-मथात्रये ॥ श्रद्धामङ्गिरसेऽयच्छत्पुलस्त्याय हविर्भुवम् ॥ २२ ॥ पुलहाय गतिं युक्तां क्रतवे च क्रियां सतीम् ॥ ख्यातिं च भृगवेऽयच्छद्वसिष्ठायाप्यरुन्धतीम् ॥ २३ ॥ अथर्वणेऽददाच्छान्तिं यया यज्ञो वितन्यते ॥ विप्रर्षभान्कृतोद्वाहान्स-दारान्समलालयत् ॥ २४ ॥ ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम् ॥ प्रातिष्ठन्नन्दिमापन्नाः स्वं स्वमाश्रम-मण्डलम् ॥२५॥ स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् ॥ विविक्त उपसंगम्य प्रणम्य समभाषत ॥२६॥ अहो पापच्य-मानानां निरये स्वैरमङ्गलैः ॥ कालेन भूयसा नूनं प्रसीदन्तीह देवताः ॥ २७ ॥ बहुजन्मविपक्वेन सम्यग्योगसमा-धिना ॥ द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥ २८ ॥ स एव भगवानद्य हेलनं नगणय्य नः ॥ गृहेषु जातो ग्राम्या-णां यः स्वानां पक्षपोषणः ॥२९॥ स्वीयं वाक्यमृतं कर्तुमवतीर्णोऽसि मे गृहे ॥ चिकीर्षुर्भगवान् ज्ञानं भक्तानां मान-वर्धनः ॥ ३० ॥ तान्येव तेऽभिरूपाणि रूपाणि भगवंस्तव ॥ यानि यानि च रोचन्ते स्वजनानामरूपिणः ॥ ३१ ॥



वन्तमवतीर्णं ज्ञात्वैकान्ते संगम्य प्रणम्य बभाषे ॥२६॥ अहो संसारे स्वपातकैः नितरां पच्यमानानां देवताः बहुकालेन प्रसीदन्ति ॥२७॥ सर्वे योगिनो योगसमाधिना त्वां द्रष्टुं यतन्ते ॥२८॥ स त्वं लघुत्वमस्माकं न गणयित्वा स्ववाक्यं सत्यं कर्तुमस्माकं गृहेषु जातः ॥ २९ ॥ ॥ ३० ॥ हे भगवन् ! तव चतुर्भुजादिरूपाणि तथा मनुष्यादिरूपाणि च यानि रोचन्ते तान्येव शोभनानि भवन्ति ॥ ३१ ॥

तं त्वां ज्ञानिभिः स्तुतमैश्वर्यादिभिः पूर्णं शरणं प्रपद्ये ॥३२॥ किंच परमेश्वरं प्रकृत्यादिरूपं स्वच्छन्दशक्तिं कपिलं त्वां नमस्करोमि ॥३३॥ इतस्त्वां हृदि कृत्वा पूर्णमनोरथः सर्वं त्यक्त्वा संन्यासं गृहीत्वा गां विचरिष्ये ॥ ३४ ॥ श्रीभगवानुवाच । हे मुने ! मया तुभ्यं यत् कथितं तत् सत्यं कर्तुं जन्म स्वीकृतम् ॥ ३५ ॥ एतन्मे जन्म लोके तत्त्वानां प्रसंख्यानाय ॥ ३६ ॥ हे मुने ! एष ज्ञानमार्गः कालेन नष्टः तं

तं सूरिभिस्तत्त्वबुभुत्सयाऽद्धा सदाऽभिवादार्हणपादपीठम् ॥ ऐश्वर्यवैराग्ययशोऽवबोधवीर्यश्रिया पूर्तमहं प्रपद्ये ॥३२॥ परं प्रधानं पुरुषं महान्तं कालं कविं त्रिवृतं लोकपालम् ॥ आत्मानुभूत्याऽनुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥ आस्माभिपृच्छेऽद्य पतिं प्रजानां त्वयाऽवतीर्णार्ण उताप्तकामः ॥ परिव्रजत्पदवीमास्थितोऽहं चरिष्ये त्वां हृदि युञ्जन्विशोकः ॥३४॥ श्रीभगवानुवाच ॥ मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके ॥अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥३५॥ एतन्मे जन्म लोकेऽस्मिन्मुमुक्षूणां दुराशयात् ॥ प्रसंख्यानाय तत्त्वानां संमतायात्मदर्शने ॥३६॥ एष आत्मपथोऽव्यक्तो नष्टः कालेन भूयसा ॥ तं प्रवर्तयितुं देहमिमं विद्धि मया भृतम् ॥३७॥ गच्छ कामं मयाऽऽपृष्टो मयि संन्यस्तकर्मणा ॥ जित्वा सुदुर्जयं मृत्युममृतत्वाय मां भज ॥३८॥ मामात्मानं स्वयं ज्योतिःसर्वभूतगुहाशयम् ॥ आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥३९॥ मात्रे आध्यात्मिकीं विद्यां शमनीं सर्वकर्मणाम् ॥ वितरिष्ये यया चासौ भयं चातितरिष्यति ॥४०॥ मैत्रेय उवाच ॥ एवं समुदितस्तेन कपिलेन प्रजापतिः ॥ दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह ॥४१॥ व्रतं स आस्थितो मौनमात्मैकशरणो मुनिः ॥ निस्संगो व्यचरत्क्षोणीमनग्निरनिकेतनः ॥४२॥

प्रवर्तयितुमिमं देहं धृतं विद्धि ॥३७॥ हे ऋषे ! मयाऽनुज्ञातस्त्वं यथेच्छं गच्छ । परंतु मोक्षार्थं मां भज ततः आत्मनि मामीक्षमाणो मोक्षं प्राप्स्यसि ॥३८॥३९॥ अहं मात्रे विद्यां वितरिष्ये यया माता भवाब्धिं तरिष्यति ॥४०॥ मैत्रेय उवाच ॥ एवं कपिलेनोक्तः सन् स मुनिस्तं प्रदक्षिणीकृत्य वनं गत्वा ॥ ४१ ॥ मुनीनां व्रतमास्थितो निस्सङ्गो महीं व्यचरत् ॥ ४२ ॥

१ 'त्वाम्' इ० पा० । २ अहंकाररूपम् । ३ यत्किञ्चिदभि पृच्छामीत्यर्थः ।

निरहंकृतिर्निर्द्वन्द्वः प्रशान्तधीरेकभक्त्या ब्रह्मणि मनो युञ्जन् ॥४३॥४४॥ वासुदेवे भगवति भक्तिं कुर्वन् मुक्तबन्धनः ॥४५॥ सर्वभूतेषु स्थितं भगवन्तं पश्यन्निच्छाद्वेषरहितः कालेन भगवद्गतिं प्राप ॥४६॥४७॥ इति श्रीभा० चू० तृतीये० चतुर्विंशोऽध्यायः ॥ २४ ॥ पञ्चविंशे जनन्य-स्तु पृष्टो बन्धविमोचनम्। आदावाह परं भक्तिलक्षणं कपिलः सुतः॥१॥कपिलेनार्पिता मात्रे गूढभावनियन्त्रिता। योगमाणिक्यमञ्जूषा स्फुट-

मनो ब्रह्मणि युञ्जानो यत्तत्सदसतः परम् ॥ गुणावभासे विगुण एकभक्त्याऽनुभाविते ॥ ४३ ॥ निरहंकृतिर्निर्ममश्च नि-र्द्वन्द्वः समदृक् स्वदृक् ॥ प्रत्यक्प्रशान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥४४॥ वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ॥ परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ॥४५॥ आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ॥ अपश्यत्सर्वभूतानि भगव-त्यपि चात्मनि ॥ ४६ ॥ इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ॥ भगवद्भक्तियुक्तेन प्राप्ता भागवती गतिः ॥ ४७ ॥ इति श्रीभा० म० तृती० कापिले कपिलावतारवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ शौनक उवाच ॥ कपिलस्तत्त्वसं-ख्याता भगवानात्ममायया ॥ जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम् ॥ १ ॥ न ह्यस्य वर्ष्मणः पुंसां वरिम्णः सर्वयो-गिनाम् ॥ विश्रुतौ श्रुतदेवस्य भूरि तृप्यन्ति मेऽसवः ॥ २ ॥ यद्यद्विधत्ते भगवान्स्वच्छन्दात्माऽऽत्ममायया ॥ तानि मे श्रद्दधानस्य कीर्तन्यान्यनुकीर्तय ॥ ३ ॥ सूत उवाच ॥ द्वैपायनसखस्त्वेवं मैत्रेयो भगवांस्तथा ॥ प्राहेदं विदुरं प्रीत आन्वीक्षिक्यां प्रचोदितः ॥ ४ ॥ मैत्रेय उवाच ॥ पितरि प्रस्थितेऽरण्यं मातुः प्रियचिकीर्षया ॥ तस्मिन् बिन्दुसरे ऽवात्सीद्भगवान्कपिलः किल ॥ ५ ॥

मुद्घाटचतेऽधुना ॥२॥ शौनक उवाच ॥ हे सूत ! आत्मतत्त्वज्ञापनार्थं भगवान् कपिलो जातः ॥१॥ सर्वयोगिनां मध्ये श्रेष्ठस्य तस्य कीर्तौ ममेन्द्रियाणि न तृप्यन्ति ॥२॥ अतः स यद्यत् कर्म करोति तानि कर्माणि कीर्तय ॥ ३ ॥ सूत उवाच ॥ एवमेव प्रेरितो मैत्रेयः प्रीतः सन् विदुरं जगाद ॥ ४ ॥ मैत्रेय उवाच ॥ अरण्यं पितरि गते सति कपिलो मातुः प्रियचिकीर्षया तस्मिन् बिन्दुसरोवरेऽवात्सीत् ॥ ५ ॥

१ अभिमुखा । २ प्रवर्णेति यावत् । प्रतीचो जीवस्यात्मनि । ३ लब्ध आत्मा चित्तं येन । ४ वृद्धस्योत्तमस्येत्यर्थः ।

देवहूतिर्ब्रह्मणो वचः स्मरन्ती स्वसुतं जगाद ॥६॥ हे भूमन् ! विषयाभिलाषेण श्रान्ताऽस्मि येनान्धं तमः प्राप्ता ॥७॥ तस्य तमसः पारगं त्वमेव सच्चक्षुर्मयाऽद्य लब्धम् ॥८॥ यः पुंसामाद्यः ईश्वरः स भगवान् सूर्य इवोदितः ॥९॥ अतो हे देव ! अहं ममेति देहे यो मोहस्तं दूरीकर्तुं त्वमर्हसि ॥ १० ॥ प्रकृतेः पुरुषस्य च जिज्ञासया त्वां शरणं गता सती नमामि ॥ ११ ॥ मैत्रेय उवाच ॥ इति स्वमातुः पुंसामप-

तमासीनमकर्माणं तत्त्वमार्गाग्रदर्शनम् ॥ स्वसुतं देवहूत्याह धातुः संस्मरती वचः ॥ ६ ॥ देवहूतिरुवाच ॥ निर्विण्णा नितरां भूमन्नसदिन्द्रियतर्षणात् ॥ येन संभाव्यमानेन प्रपन्नाऽन्धं तमः प्रभो ॥७॥ तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम् ॥ सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ ८ ॥ य आद्यो भगवान् पुंसामीश्वरो वै भवान् किल ॥ लोकस्य तमसाऽन्धस्य चक्षुः सूर्य इवोदितः ॥९॥ अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि ॥ योऽवग्रहोऽहं ममेतीत्यतस्मिन्योजितस्त्वया ॥ १० ॥ तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् ॥ जिज्ञासयाऽहं प्रकृतेः पुरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥ मैत्रेय उवाच ॥ इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् ॥ धियाऽभिनन्द्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः॥१२॥श्रीभगवानुवाच॥ योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ॥ अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ॥१३॥ तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे ॥ ऋषीणां श्रोतुकामानां योगं सर्वाङ्गनैपुणम् ॥ १४ ॥ चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ॥ गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५ ॥ अहंममाभिमानोत्थैः कामलोभादिभिर्मलैः ॥ वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥ १६ ॥

वर्गवर्धनं वचो निशम्य सतां गतिर्भगवान् बभाषे ॥१२॥ कपिल उवाच ॥ हे मातः ! आत्मनिष्ठो योगः पुंसां निश्श्रेयसाय मतः ॥ १३ ॥ हे अनघे ! पुरा अहम् ऋषीणां यमवोचं तं योगं ते वक्ष्यामि ॥ १४ ॥ अहो ! पुंसां चेतो विषयेषु सक्तं बन्धाय भवति ईश्वरे सक्तं मुक्तये भवति ॥ १५ ॥ अहं ममेत्याद्यभिमानोत्थैः कामलोभादिभिर्मलैः रहितं यदा मनो भवति ॥ १६ ॥

१ आग्रहः । २ सर्वाङ्गानां नैपुण्यमैकाग्र्यं यस्मिंस्तम् ।

तदा ज्ञानवैराग्ययुक्तेन भक्तियोगेनात्मानं प्रकृतिं च पश्यति ॥ १७ ॥ १८ ॥ अखिलात्मनि भक्त्या विना योगिनां ब्रह्मसिद्धयेऽन्यः शिवः पन्थाः न॥१९॥कवयः प्रसङ्गमात्मनोऽजरं पाशं विदुः स एव साधुषु कृतश्चेत् मोक्षद्वारमुद्घाटितं विदुः॥२०॥ साधूनां लक्षणमाह। साधवः कारुणिकाः सर्वसुहृदोऽशत्रवः शान्ताः मयि भक्तिं कुर्वाणाः मत्कृते त्यक्तस्वजनबान्धवाः मत्कथा शृण्वन्तः कथयन्तो ये तान् विविधतापा न व्यथयन्ति ॥२१॥२२॥२३॥ हे साध्वि ! एते साधवः साधुषु सङ्गः प्रार्थ्यः ॥२४॥ साधुमुखात् मत्कथाश्रवणेन श्रद्धा रतिर्भक्तिश्च भवति ॥ २५ ॥ भक्त्या पुमानैहिकामुष्मिकाद् विरक्तो भूत्वोद्योगयुक्तः सन् चित्तस्य ग्रहणे योगमार्गैर्यतिष्यते ॥२६॥ सज्ज्ञानवैराग्ययुक्तेन योगेन भक्त्या चेहैव देहे मां प्राप्नोति ॥ २७ ॥ देवहूतिरुवाच ॥ त्वयि योग्या भक्तिः का यया तव रूपं प्राप्स्यामि ॥ २८ ॥

ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना ॥ परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥१८॥ न युज्यमानया भक्त्या भगवत्यखिलात्मनि ॥ सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥१९॥ प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ॥ स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥२०॥ तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ॥ अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥ २१ ॥ मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ॥ मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥२२॥ मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ॥ तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥ २३ ॥ त एते साधवः साध्वि सर्वसङ्गविवर्जिताः ॥ सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ २४ ॥ सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः ॥ तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥२५॥ भक्त्या पुमाञ्जातविराग ऐन्द्रियाद्दृष्टश्रुतान्मद्रचनानुचिन्तया ॥ चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥ २६ ॥ असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन ॥ योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥ २७ ॥ देवहूतिरुवाच ॥ काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा ॥ यया पदं ते निर्वाणमञ्जसाऽन्वाश्नवा अहम् ॥ २८ ॥

हे मोक्षात्मन्! त्वयोदितो योगश्च कीदृशः कति चाङ्गानि ॥२९॥ तन्मे वद। यथा योषिदहं भवदनुग्रहात् श्रमं विना बुध्येय तथा प्रसादं कुरु ॥३०॥ मैत्रेय उवाच ॥ एवं मातुः प्रयोजनं ज्ञात्वा जातस्नेहः कपिलः सांख्यं भक्तिवितानं योगं च प्रोवाच ॥३१॥ कपिल उवाच ॥ हरौ सर्वेन्द्रियाणां या वृत्तिः सा भक्तिः। सा मुक्तेरपि श्रेष्ठा। सा लिङ्गदेहं क्षपयति। यथा जठराग्निर्भुक्तमन्नं जरयति ॥३२॥३३॥ केचित्

यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः॥ कीदृशः कति चाङ्गानि यतस्तत्त्वावबोधनम्॥ २९ ॥ तदेतन्मे विजानीहि यथाऽहं मन्दधीर्हरे॥ सुखं बुध्येय दुर्बोधं योषा भवदनुग्रहात्॥ ३०॥ मैत्रेय उवाच॥ विदित्वाऽर्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाऽभिजातः॥ तत्त्वाम्नायं यत्प्रवदन्ति सांख्यं प्रोवाच वै भक्तिवितानयोगम्॥ ॥ ३१ ॥ श्रीभगवानुवाच॥ देवानां गुणलिङ्गानामानुश्रविककर्मणाम्॥ सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥३२॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी॥ जरयत्याशु या कोशं निगीर्णमनलो यथा॥ ३३ ॥ नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः॥ येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि ॥ ३४ ॥ पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि॥ रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति॥ ३५॥ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः॥ हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते॥ ३६ ॥ अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टाङ्गमनुप्रवृत्तम्॥ श्रियं भागवतीं वाऽस्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके॥ ३७॥

मत्पादसेवाभिरताः मुक्तिं न स्पृहयन्ति। तेऽन्योन्यं मिलित्वा मम पराक्रमान् वर्णयन्ति ॥३४॥ ते मे रुचिराणि रूपाणि पश्यन्ति। स्पृहणीयां वाचं वदन्ति ॥३५॥ मम सुन्दरावयवैर्हृतचित्तान् तान् पुरुषानिच्छाहीनानपि भक्तिर्मुक्तिं प्रापयति ॥३६॥ ते भक्ताः अणिमाद्यष्टाङ्गैश्वर्यं सत्यलोकाधिगतां भोगसंपत्तिं यद्यपि न स्पृहयन्ति तथापि वैकुण्ठे प्राप्नुवन्त्येव ॥ ३७॥

---

१ द्योतनात्मकानामिन्द्रियाणाम्। २ गुणद्योतकानाम्।

एवं सर्वभावेन मां ये भजन्ति तान् मदीयं कालचक्रं न ग्रसति ॥ ३८ ॥ ये इमं लोकममुं लोकं स्त्रीपुत्रधनपशुगृहादींश्च विसृज्य विश्वतोमुखं मां भजन्ति तान् मृत्योः सकाशात् पारये ॥ ३९ ॥ ४० ॥ तेषां प्रधानपुरुषेश्वरात् मत्तो विनाऽन्यत्र भयं न निवर्तते ॥ ४१ ॥ हे मातः ! मद्भयात् वायुर्वाति सूर्यस्तपतीन्द्रो वर्षत्यग्निर्दहति मृत्युश्चरति ॥ ४२ ॥ योगिनो भक्तियोगेन क्षेमाय मे पादमूलं प्रविशन्ति ॥ ४३ ॥ भक्तियोगेन मयि मनसः स्थिरीकरणमेतावानेव लोकेऽस्मिन् पुंसां निश्श्रेयसोदयः ॥४४॥ इति श्रीभा० चू० तृती० पञ्चविंशतितमोऽध्यायः

न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ॥ येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥ इमं लोकं तथैवामुमात्मानमुभयायिनम् ॥ आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ ३९ ॥ विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम् ॥ भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥४०॥ नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात ॥ आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥४१॥ मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ॥ वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ॥ ४२ ॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ॥ क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥ ४३ ॥ एतावानेव लोकेऽस्मिन्पुंसां निश्श्रेयसोदयः ॥ तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ ४४ ॥ इति श्रीभा० म० तृती० कपिलोपाख्याने भक्तिलक्षणवर्णनं नाम पञ्चविंशतितमोऽध्यायः ॥२५॥ श्रीभागवानुवाच ॥ अथ ते संप्रवक्ष्यामि तत्त्वानां लक्षणं पृथक् ॥ यद्विदित्वा विमुच्येत पुरुषः प्राकृतैर्गुणैः ॥१॥ ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ॥ यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥२॥ अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ॥ प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥



॥ २६ ॥ षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ॥ सांख्येन सर्वभावानां जन्म लक्षणभेदतः ॥१॥ धात्रा पुत्राय यत्प्रोक्तं क्षत्रे मित्रासुतेन यत्। मात्रे सांख्यं तदध्यात्मं प्राधान्येनाह तत्त्ववित् ॥ २ ॥ कपिल उवाच हे मातः ! तुभ्यं तत्त्वानां लक्षणं मोक्षदं ज्ञानं च वर्णये, यज्ज्ञात्वा पुरुषः प्रकृतैर्गुणैर्मुच्यते ॥ १ ॥ २ ॥ पुरुषोऽनादिर्गुणः प्रकृतेः परो येन विश्वं प्रकाशते ॥ ३ ॥

१ धनानि । २ प्रतिलोमस्फूर्तियंस्य ।

तत्र प्रकृतावविवेकेन जीवस्य संसारप्रकारमाह । स एव गुणमयीं लीलया प्राप्तां दैवीं प्रकृतिं यदृच्छया प्रपेदे ॥ ४ ॥ ततो गुणैर्विचित्राः प्रजाः सृजतीं तां प्रकृतिं विलोक्यात्मानं विस्मृतवान् ॥ ५ ॥ प्रकृतेर्गुणैः कर्मसु क्रियमाणेषु प्रकृत्यध्यासेन कर्तृत्वमात्मनि मन्यते ॥ ६ ॥ एतदेवास्य संसृतिर्बन्धो मायाकृतं पारतन्त्र्यं च ॥ ७ ॥ देहेन्द्रियदेवतावर्गाणां कारणं प्रकृतिं विदुः । सुखदुःखानां भोक्तृत्वे कारणं पुरुषं विदुः ॥ ८ ॥ देवहूतिरुवाच । हे कपिल ! अस्य विश्वस्य कारणयोः प्रकृतिपुरुषयोर्लक्षणं ब्रूहि ॥९॥ श्रीभगवानुवाच ॥ हे मातः ! त्रिगुण-

स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ॥ यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥४॥ गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ॥ विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया[1] ॥ ५ ॥ एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ॥ कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥६॥ तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् ॥ भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥७॥ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ॥ भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥८॥ देवहूतिरुवाच ॥ प्रकृतेः पुरुषस्यापि लक्षणं पुरुषोत्तम ॥ ब्रूहि कारणयोरस्य सदसच्च यदात्मकम् ॥ ९ ॥ श्रीभगवानुवाच ॥ यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ॥ प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ १० ॥ पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ॥ एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥ ११ ॥ महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः ॥ तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ १२ ॥ इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः ॥ वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ १३ ॥ मनो बुद्धिरहंकारश्चित्तमित्यन्तरात्मकम् ॥ चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १४ ॥

मव्यक्तं यत् प्रधानं तदेव प्रकृतिं प्राहुः ॥ १० ॥ एतानि चतुर्विंशतिस्तत्त्वानि यस्मिन् सन्ति तं गणं प्राधानिकं ब्रह्मविदो विदुः ॥ ११ ॥ एतानि कानि । भ्वादिपञ्चमहाभूतानि गन्धादिपञ्चतन्मात्राणि कर्णौ त्वक्दृक् जिह्वा नासिका वाक्करौ चरणौ मेढ्रं गुदमिति दशेन्द्रियाणि मनोबुद्ध्यहंकार चित्तमित्यन्तःकरणस्य चत्वारो भेदाः । एवं चतुर्विंशतितत्त्वानि ॥ १२ ॥ १३ ॥ १४ ॥

---

१ ज्ञानमावृणोति या तया ।

हे मातः ! सगुणस्य ब्रह्मणः सन्निवेशः एतावानेव संख्यातः । यस्तु कालः स पञ्चविंशकः ॥१५॥ एके तु भगवतोऽस्य विक्रमं कालं वदन्ति । तं द्वेधा लक्षयति यतः प्रकृतिं प्राप्तस्य भयं भवति ॥१६॥ हे मानवि ! एषेश्वरस्य चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥१७॥ यः सर्वप्राणिनामन्तः पुरुषरूपेण वर्तते स भगवान् ॥ १८ ॥ अथ तत्त्वानां समुत्पत्तिलक्षणान्याह । आदौ परः पुमान् मायायां चिच्छक्तिमाधत्त तदा सा प्रकृतिः प्रकाशबहुलं महत्तत्त्वं सुषुवे ॥१९॥ स महान् स्वस्मिन् सूक्ष्मरूपेण स्थितं विश्वं प्रकाशयन् प्रलयकालिकं तमः पपौ

एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह ॥ सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥१५॥ प्रभावं पौरुषं प्राहुः
कालमेके यतो भयम् ॥ अहंकारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥१६॥ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ॥ चेष्टा
यतः स भगवान्काल इत्युपलक्षितः ॥ १७॥ अन्तः पुरुषरूपेण कालरूपेण यो बहिः ॥ समन्वेत्येष सत्त्वानां भगवाना-
त्ममायया ॥ १८ ॥ दैवात्क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् ॥ आधत्त वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम्
॥ १९ ॥ विश्वमात्मगतं व्यञ्जन्कूटस्थो जगदङ्कुरः ॥ स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः ॥२०॥ यत्तत्सत्त्वगुणं
स्वच्छं शान्तं भगवतः पदम् ॥ यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥२१॥ स्वच्छत्वमविकारित्वं शान्तत्वमिति
चेतसः ॥ वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा ॥ २२ ॥ महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसंभवात् ॥ क्रियाशक्तिर-
हंकारस्त्रिविधः समपद्यत ॥ २३ ॥ वैकारिकस्तैजसश्च तामसश्च यतो भवः ॥ मनसश्चेन्द्रियाणां च भूतानां महतामपि
॥ २४ ॥ सहस्रशिरसं साक्षाद्यमनन्तं प्रचक्षते ॥ संकर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् ॥ २५ ॥



॥२०॥ तत् महत्तत्त्वं भगवतः प्राप्तिस्थानम् ॥ तस्यैवाधिभूतरूपेण महानिति संज्ञा अध्यात्मरूपेण चित्तमिति उपास्यरूपेण वासुदेव इति ॥ २१ ॥ स्वच्छत्वमविकारित्वं शान्तत्वमिति चित्तस्य लक्षणम् ॥ २२ ॥ ततो विकुर्वाणान्महत्तत्त्वात् सात्त्विको राजस्तामसा इति त्रिविधोऽहंकारो बभूव ॥ २३ ॥ यस्मात् मनइन्द्रियभूतानां समुत्पत्तिः ॥ २४ ॥ यमहंकारं भूतेन्द्रियमनोमयं संकर्षणाख्यं प्रचक्षते ॥२५॥

देवतेन्द्रियभूतरूपेणाहंकारस्य लक्षणं स्यात् ॥२६॥ विकुर्वाणात् सात्त्विकाहंकारात् संकल्पविकल्पात्मकं मनस्तत्त्वं जज्ञे ॥२७॥ यन्मनस्तत्त्वमिन्द्रियाणामीश्वरमनिरुद्धाख्यं विदुः ॥२८॥ राजसाहंकाराद् बुद्धितत्त्वं बभूव यस्मात्संशयो मिथ्याज्ञानं निश्चयः स्मृतिरित्यादि भवति ॥२९॥३०॥ राजसाहंकाराद् दशेन्द्रियाणि बभूवुः । प्राणस्य क्रियाशक्तिः बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥ तामसाहंकारात् शब्दमात्रं नभो

कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ॥ शान्तघोरविमूढत्वमिति वा स्यादहंकृतेः ॥ २६ ॥ वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत ॥ यत्संकल्पविकल्पाभ्यां वर्तते कामसंभवः ॥ २७ ॥ यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ॥ शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः ॥ २८ ॥ तैजसात्तु विकुर्वाणाद् बुद्धितत्त्वमभूत्सति ॥ द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः ॥ २९ ॥ संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ॥ स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ ३० ॥ तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः ॥ प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३१ ॥ तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् ॥ शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं च शब्दगम् ॥ ३२ ॥ अथाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च ॥ तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥ ३३ ॥ भूतानां छिद्रदातृत्वं बहिरन्तरमेव च ॥ प्राणेन्द्रियात्मधिष्ण्यत्वं च नभसो वृत्तिलक्षणम् ॥ ३४ ॥ नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः ॥ स्पर्शोऽभवत्ततो वायुस्त्वक्स्पर्शस्य च संग्रहः ॥ ३५ ॥ मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ॥ एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥ ३६ ॥ चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ॥ सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३७ ॥

बभूव ॥३२॥ अर्थवाचकत्वं कुडचान्तरितस्य वक्तुर्ज्ञापकत्वं सूक्ष्मत्वं शब्दस्य लक्षणम् ॥३३॥ भूतानामवकाशदातृत्वं नाडचादिच्छिद्ररूपेण मनः प्राणादीनामाश्रयत्वं नभसो लक्षणम् ॥ ३४ ॥ शब्दमात्रात् नभसः स्पर्शो बभूव ततो वायुः ॥ ३५ ॥ मृदुकठिनशैत्योष्णत्वादिकं स्पर्शतो ज्ञायते ॥ ३६ ॥ वृक्षशाखादेश्चालनं तृणादेर्मेलनं गन्धस्य घ्राणं प्रति संयोग इत्यादि वायोर्लक्षणम् ॥ ३७ ॥

द्रव्यस्याकारणत्वं नीलपीतादेरुद्घाटकत्वमित्यादि तेजसो लक्षणम्॥३९॥ प्रकाशनं तण्डुलादेः
वायोः सकाशाद् रूपमात्रं तेजो बभूव ॥३८॥ रूपमात्रात् तेजसो विकुर्वाणाद् रसमात्रं जलं बभूव । तस्माद् रसग्राहिणी जिह्वा बभूव
पचनं शीतनाशनं द्रव्यशोषणादि तेजसो वृत्तयः ॥४०॥ ॥४२॥ आर्द्रीकरणं मृदादेः पिण्डीकरणं तृप्तिदातृत्वं
॥४१॥ एको रसः संसर्गिद्रव्याणां विकारेण कषायमधुरतिक्तकटूवम्लाद्यनेकधा विभिद्यते ॥४२॥ ॥४४॥एको गंधो मिश्रगन्धदुर्गन्ध-
जीवनं तृषादुःखनिवारणादि जलस्य वृत्तयः॥४३॥रसमात्रादम्भसो विकुर्वाणाद्गन्धवती पृथ्वी! ततो घ्राणम्॥४४॥

वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् ॥ समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् ॥३८॥ द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेवच ॥ तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥३९॥ द्योतनं पचनं पानमदनं हिममर्दनम् ॥ तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च ॥४०॥ रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात् ॥ रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः ॥४१॥ कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा ॥ भौतिकानां विकारेण रस एको विभिद्यते ॥ ४२ ॥ क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम् ॥ तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४३ ॥ रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात् ॥ गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः ॥ ४४ ॥ करम्भपूतिसौरभ्यशान्तोदग्रादिभिः पृथक् ॥ द्रव्यावयववैषम्याद्गन्ध एको विभिद्यते ॥ ४५ ॥ भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ॥ सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४६ ॥ नभोगुणविशेषोऽर्थो यस्य तच्छ्रोत्रमुच्यते ॥ वायोर्गुण विशेषोऽर्थो यस्य तत्स्पर्शनं विदुः ॥ ४७ ॥ तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते ॥ अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः ॥ भूमेर्गुणविशेषोऽर्थो यस्य स घ्राण उच्यते ॥ ४८ ॥

सुगंधकर्पूरलशुनादिभिरनेकधा भिद्यते॥४५॥हरेःप्रतिमादिरूपेण साकारतापादनं भूतानां स्थानं जलादीनां धारकत्वं पृथिव्याःलक्षणम् ॥४६॥
आकाशस्य विशेषगुणःश्रोत्रम्। वायोर्विशेषगुणःस्पर्शनम्॥४७॥तेजसो विशेषगुणश्चक्षुः॥अम्भसो विशेषगुणो जिह्वा भूमेर्विशेषगुणो घ्राणम्॥४८॥

१ द्रव्यस्य संनिवेशः स एव संनिवेशो यस्य तत्परिणामतया प्रतीतिरित्यर्थः ।

कारणस्य शब्दादिधर्मो वाय्वादौ कारणसंबन्धाद् दृश्यते ॥४९॥ एतानि महदादीनि सप्त तत्त्वानि यदाऽमिलित्वा स्थितानि तदेश्वरस्तेषु प्राविशत् ॥५०॥ ततः ईश्वरेण क्षोभितेभ्यस्तत्त्वेभ्योऽचेतनमण्डमुत्थितम् । ततो विराट्पुरुषः उदतिष्ठत् ॥५१॥ एतदण्डं भगवतो रूपं यत्रेयं लोकस्थितिः ॥५२॥ ततो विराट्पुरुषोऽण्डादौदासीन्यं त्यक्त्वाऽण्डमधिष्ठायाण्डे बहूनि छिद्राणि चकार ॥५३॥ तदेवाह विराट्पुरुषस्यादौ मुखं निरभिद्यत । तत्र वाण्या सहाग्निः प्राविशत् । ततो नासे निरभिद्येताम् । तत्र घ्राणेन सह वायुः प्राविशत् ॥५४॥ ततोऽक्षिणी निरभि-

परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात् ॥ अतो विशेषो भावानां भूमावेवोपलक्ष्यते ॥ ४९ ॥ एतान्यसंहत्य यदा महदादीनि सप्त वै ॥ कालकर्मगुणोपेतो जगदादिरुपाविशत् ॥ ५० ॥ ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् ॥ उत्थितं पुरुषो यस्मादुदतिष्ठदसौ विराट् ॥ ५१ ॥ एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः ॥ तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः ॥ यत्र लोकवितानोऽयं रूपं भगवतो हरेः ॥ ५२ ॥ हिरण्मयादण्डकोशादुत्थाय सलिलेशयात् ॥ तमाविश्य महादेवो बहुधा निर्बिभेद खम् ॥ ५३ ॥ निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् ॥ वाण्या वह्निरथो नासे प्राणोऽतो घ्राण एतयोः ॥ ५४ ॥ घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः ॥ तस्मात्सूर्यो न्यभिद्येतां कर्णौ श्रोत्रं ततो दिशः ॥ ५५ ॥ निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः ॥ तत ओषधयश्चासञ्छिश्नं निर्बिभिदे ततः ॥ ५६ ॥ रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् ॥ गुदादपानोऽपानाच्च मृत्युर्लोकभयंकरः ॥ ५७ ॥ हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् ॥ पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ५८ ॥

द्येताम् । तत्र चक्षुषा सूर्यः प्राविशत् । ततः कर्णौ निरभिद्येताम् । ततः श्रोत्रेण सह दिशः प्राविशन्॥५५॥अथ तस्य त्वग् निरभिद्यत । ततो रोमश्मश्र्वादयः तेभ्य औषधयः आसन्॥५६॥ ततः लिङ्गं समुत्पन्नम् । तत्र रेतसा सहापः प्राविशत् । ततो गुदं निरभिद्यत । तत्रापानवायुना सह मृत्युः प्राविशत् ॥५७॥ ततो हस्तौ जातौ तत्र बलेन सहेन्द्रः प्राविशत् । ततोऽस्य पादौ जातौ । तत्र गत्या सह हरिः प्राविशत्॥५८॥

अस्य नाड्यो जाताः । तेषु रक्तेन सह नद्यः प्राविशन् । तत उदरं जातम् । तत्र क्षुत्तृड्भ्यां सह समुद्रः प्राविशत् ॥५९॥ अथास्य हृदयं समुत्पन्नम् । तत्र मनोबुद्ध्यहंकारचित्तैः सह चन्द्रब्रह्मरुद्रक्षेत्रज्ञाः प्राविशन्॥६०॥अथोत्थिताः एते देवाः विराट्पुरुषमुत्थापयितुं नाशकन्। तदा पुनस्तमुत्थापयितुं क्रमात् स्वस्वच्छिद्राणि विविशुः । तदेवाह । वह्निर्वाचा सह मुखं प्रविवेश तदा विराड् नोदतिष्ठत् ॥६१॥ ततो वायुर्घ्राणेन नासिके प्रवि० नोद० । सूर्यश्चक्षुषा सहाक्षिणी प्र० नोद० ॥६२॥ दिशः श्रोत्रेण सह कर्णौ प्र० नोद० । ओषध्यो रोमभिस्त्वचं प्र० नोद०

नाड्योऽस्य निरभिद्यन्त ताभ्यो लोहितमाभृतम् ॥ नद्यस्ततः समभवन्नुदरं निरभिद्यत ॥ क्षुत्पिपासे ततः स्यातां समुद्रस्त्वेतयोरभूत् ॥ ५९ ॥ अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ॥ मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरां पतिः ॥ अहंकारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ॥ ६० ॥ एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् ॥ पुनराविविशुः खानि तमुत्थापयितुं क्रमात् ॥ वह्निर्वाचा मुखं भेजे नोदतिष्ठत्तदा विराट् ॥६१॥ घ्राणेन नासिके वायुर्नोदतिष्ठत्तदा विराट् ॥ अक्षिणी चक्षुषाऽऽदित्यो नोदतिष्ठत्तदा विराट् ॥६२॥ श्रोत्रेण कर्णौ च दिशो नोदतिष्ठत्तदा विराट् ॥ त्वचं रोमभिरोषध्यो नोदतिष्ठत्तदा विराट् ॥६३॥ रेतसा शिश्नमापस्तु नोदतिष्ठत्तदा विराट् ॥ गुदं मृत्युरपानेन नोदतिष्ठत्तदा विराट् ॥६४॥ हस्ताविन्द्रो बलेनैव नोदतिष्ठत्तदा विराट् ॥ विष्णुर्गत्यैव चरणौ नोदतिष्ठत्तदा विराट् ॥६५॥ नाडीर्नद्यो लोहितेन नोदतिष्ठत्तदा विराट् ॥ क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्तदा विराट् ॥६६॥ हृदयं मनसा चन्द्रो नोदतिष्ठत्तदा विराट् ॥ बुद्ध्या ब्रह्माऽपि हृदयं नोदतिष्ठत्तदा विराट् ॥ रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदा विराट् ॥ ६७ ॥



॥६३॥आपो रेतसा सह शिश्नं प्र० नोद० । मृत्युरपानवायुना सह गुदं प्र० नोद०॥६४॥इन्द्रो बलेन सह हस्तौ प्र० नोद० । विष्णुर्गत्या सह चरणौ प्र० नोद० ॥६५॥ नद्यो रक्तेन सह नाडीः प्र० नोद० । समुद्रः क्षुत्तृड्भ्यां सहोदरं प्र० नोद० ॥६६॥ चन्द्रो मनसा सह हृदयं प्र० नोद० ब्रह्माऽपि बुद्ध्या सह हृदयं प्र० तदाऽपि विराड् नोदतिष्ठत् । रुद्रोऽप्यहंकारेण सह हृदयं प्र० तदाऽपि विराड् नोदतिष्ठत् ॥ ६७ ॥

क्षेत्रज्ञश्चित्तेन सह यदा हृदयं प्राविशत् तदैव विराट् पुरुषः सलिलादुदतिष्ठत् ॥ ६८ ॥ यथा प्राणेन्द्रियमनोधियः सुप्तं पुरुषं येन विनोत्थापयितुं न समर्थाः ॥६९॥ तं क्षेत्रज्ञं भक्त्या ज्ञानेनात्मनि कार्यकारणसंघाते विचार्य चिन्तयेत् ॥७०॥ इति श्रीभा० चू० तृती० षड्विंशोऽध्यायः ॥ २६ ॥ सप्तविंशे यतः सम्यग् बहुसाधनयोगतः । पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ १ ॥ श्रीकपिल उवाच । पुरुषो देहस्थोऽपि देहकृतैः सुखदुःखादिगुणैर्न लिप्यते अविकारात् । क इव जलार्क इव ॥ १ ॥ स एव प्रकृतेर्गुणेषु सक्तो भूत्वा कर्ताऽस्मीति मन्यते

चित्तेन हृदयं चैत्त्यः क्षेत्रज्ञः प्राविशद्यदा ॥ विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥६८॥ यथा प्रसुप्तं पुरुषं प्राणेन्द्रियमनोधियः ॥ प्रभवन्ति विना येन नोत्थापयितुमोजसा ॥६९॥ तमस्मिन्प्रत्यगात्मानं धिया योगप्रवृत्तया ॥ भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत् ॥७०॥ इति श्रीभा० म० तृतीय० कापिले तत्त्वसमाम्नाये षड्विंशोऽध्यायः ॥ २६ ॥ श्रीभगवानुवाच ॥ प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः ॥ अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥१॥ स एष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ॥ अहंक्रियाविमूढात्मा कर्ताऽस्मीत्यभिमन्यते ॥ २ ॥ तेन संसारपदवीमवशोऽभ्येत्य निर्वृतः ॥ प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥३॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥४॥ अत एव शनैश्चित्तं प्रसक्तमसतां पथि ॥ भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम् ॥५॥ यमादिभिर्योगपथैरभ्यसेच्छ्रद्धयाऽन्वितः ॥ मयि भावेन सत्येन मत्कथाश्रवणेन च ॥ ६ ॥ सर्वभूतसमत्वेन निर्वैरेणाप्रसङ्गतः ॥ ब्रह्मचर्येण मौनेन स्वधर्मेण बलीयसा ॥ ७ ॥

॥ २ ॥ तेन प्रकृतिसङ्गतैः कर्मदोषैर्देवतिर्यङ्नरादियोनिषु संसारं प्राप्नोति ॥३॥ अविद्यमानेऽप्यर्थे जीवस्य संसृतिर्न निवर्तते ॥४॥ अत एवासतां पथि सक्तं चित्तं भक्तियोगेन वैराग्येण च शनैर्वशं नयेत् ॥ ५ ॥ यमादियोगमार्गैर्मयि यो भावेन मत्कथाश्रवणेन ॥ ६ ॥ सर्वभूतसमत्वेन निर्वैरेण सङ्गत्यागेन मौनेन ॥ ७ ॥

एतैर्निवृत्तावस्थात्रयश्चक्षुषा यदृच्छालाभसंतुष्टेन मितभोजनेनैकान्तसेवनेन शान्त्या करुणया ॥ ८ ॥ सानुबन्धे देहे ममतात्यागेन ॥ ९ ॥ एतैर्निवृत्तावस्थात्रयश्चक्षुषा सूर्यमिव शुद्धमात्मानं पश्यन् निरुपाधिकं परिपूर्णं ब्रह्म प्राप्नोति ॥१०॥११॥ किंच यथा भित्त्यादौ स्थलाभासेन प्रथमं जलस्थः आभासो दृश्यते यथा च जलस्थाभासेन दिवि स्थितः सूर्यो लक्ष्यते ॥१२॥ एवं देहेन्द्रियमनोभिरवच्छिन्नैरात्मबिम्बैरहंकारः सदाभासेन लक्षितः ॥ अहंकारेण च परमार्थज्ञप्तिरूपः आत्मा ॥१३॥ हे मातः ! भूतेन्द्रियमनआदिषु निद्रया लीनेषु सत्सु यस्तत्र सदा विनिद्रो निरहंक्रियः॥१४॥

यदृच्छयोपलब्धेन संतुष्टो मितभुङ्मुनिः ॥ विविक्तशरणःशान्तो मैत्रः करुण आत्मवान् ॥८॥ सानुबन्धे च देहेऽस्मि-न्नकुर्वन्नसदाग्रहम् ॥ ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥९॥ निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ॥ उपलभ्या-त्मनाऽऽत्मानं चक्षुषेवार्कमात्मदृक् ॥ १० ॥ मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते ॥ सतो बन्धुमसच्चक्षुः सर्वानुस्यूतम-द्वयम् ॥११॥ यथा जलस्थ आभासः स्थलस्थेनावदृश्यते ॥ स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः ॥१२॥ एवं त्रिवृदहंकारो भूतेन्द्रियमनोमयैः ॥ स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १३ ॥ भूतसूक्ष्मेन्द्रिमनोबुद्ध्या-दिष्विह निद्रया ॥ लीनेष्वसति यस्तत्र निर्निद्रो निरहंक्रियः ॥१४॥ मन्यमानस्तदाऽऽत्मानमनष्टो नष्टवन्मृषा ॥ नष्टे ऽहंकरणे द्रष्टा नष्टवित्त इवातुरः ॥ १५ ॥ एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते ॥ साहंकारस्य द्रव्यस्य योऽवस्थानम-नुग्रहः ॥ १६ ॥ देवहूतिरुवाच ॥ पुरुषं प्रकृतिर्ब्रह्मन्नविमुञ्चति कर्हिचित ॥ अन्योन्यापाश्रयत्वाच्च नित्यत्वादनयोः प्रभो ॥१७॥ यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः ॥ अपां रसस्य च यथा तथा बुद्धेः परस्य च ॥ १८ ॥

किंच अहंकारे नष्टे सति स्वयमनष्टोऽपि मृषैवात्मानं नष्टवन्मन्यमानो यथा नष्टवित्तो विवशो नष्टवद् भवति ॥ १५ ॥ एवं विचार्यात्मानं प्रतिपद्यते ॥ १६ ॥ देवहूतिरुवाच ॥ हे कपिल ! अन्योन्याश्रयत्वात् प्रकृतिः पुरुषं न मुञ्चति ॥ १७ ॥ यथा गन्धस्य भूमेश्च पृथग्भेदो न एवं प्रकृतिपुरुषयोरपि ॥ १८ ॥

तस्मात् प्रकृतेर्गुणै कर्तुः कर्मबन्धो भवति। अतस्तयोः पृथग्भेदः कथं भवतीति वद ॥१९॥ क्वचित् तत्त्वविचारेण निवृत्तप्रायस्यापि संसारभयस्य पुनरुद्भवो दृश्यते। तत् किम् ॥ २० ॥ श्रीकपिल उवाच। निष्कामधर्मेण तीव्रभक्त्या ॥ २१ ॥ ज्ञानेन वैराग्येण योगादिना च ॥२२॥ एतैरुपायैरहर्निशं दह्यमाना पुरुषस्य प्रकृतिः शनैरन्तर्हिता भवति ॥२३॥ भुक्तभोगा सा प्रकृतिः स्वे महिम्नि स्थितस्येश्वरस्या-

अकर्तुः कर्मबन्धोऽयं पुरुषस्य यदाश्रयः ॥ गुणेषु सत्सु प्रकृतेः कैवल्यं तेष्वतः कथम् ॥ १९ ॥ क्वचित्तत्त्वावमर्शेन निवृत्तं भयमुल्बणम् ॥ अनिवृत्तनिमित्तत्वात्पुनः प्रत्यवतिष्ठते॥२०॥श्रीभगवानुवाच ॥ अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना ॥ तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम् ॥ २१ ॥ ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ॥ तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥ २२ ॥ प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ॥ तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥ २३ ॥ भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः ॥ नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥२४॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥२५॥ एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् ॥ युञ्जतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ २६ ॥ यदैवमध्यात्मरतः कालेन बहुजन्मना ॥ सर्वत्र जातवैराग्य आब्रह्मभुवनान्मुनिः ॥ २७ ॥ मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा ॥ निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् ॥ २८ ॥ प्राप्नोतीहाञ्जसा धीरः स्वदृशा छिन्नसंशयः ॥ यद्गत्वा[1] न निवर्तेत योगी लिङ्गाद्विनिर्गमे[2] ॥ २९ ॥ यदा न योगोपचितासु चेतो मायासु सिद्धस्य विषज्जतेऽङ्ग ॥ अनन्यहेतुष्वथ मे गतिः स्यादात्यन्तिकी यत्र न मृत्युहासः ॥ ३० ॥ इति श्रीभा० म० तृती० कापिले मोक्षरीतिवर्णनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

शुभं न धत्ते ॥ २४ ॥ यथा जाग्रतः स्वप्नः संस्कारवशेन स्फुरन्नपि मोहाय न कल्पते ॥ २५ ॥ एवं विदिततत्त्वस्य मयि मानसं युञ्जतः प्रकृतिरपकारं न कुरुते ॥ २६ ॥ विदितात्मतत्त्वो मद्भक्तः सर्वत्र जातवैराग्यः छिन्नसंशयः कैवल्याख्यं मत्स्थानं प्राप्नोति ॥ २७ ॥ २८ ॥ ॥ २९ ॥ यत्र मृत्युगर्वो न तामात्यन्तिकीं गतिं प्राप्नोति ॥ ३० ॥ इति श्रीभा० चू० तृतीये० सप्तविंशतितमोऽध्यायः ॥ २७ ॥

१ 'यज्ज्ञात्वा' इ० पा० । २ लिङ्गशरीरनाशे सतीत्यर्थः।

अष्टाविंशे ततोऽष्टाङ्गयोगेन ध्यानशोभिना । सर्वोपाधिविनिर्मुक्तंस्वरूपज्ञानमीर्यते॥१॥भक्तिं संक्षेपतः प्रोच्य सांख्यमाख्याय विस्तृतम्। अथाह वैष्णवं योगमष्टाङ्गं कपिलो हरिः ॥२॥श्रीभगवानुवाच ॥ हे मातः ! तव योगस्य लक्षणं वक्ष्ये शृणु । योगस्तु द्विविधः सबीजो निर्बीजश्च । तत्र गीतोक्तनिर्बीजस्य दुष्करत्वात् सबीजयोगस्य लक्षणं वक्ष्ये येन प्रसन्नं मनः सत्पथं याति ॥१॥ शक्त्या स्वधर्माचरणं विधर्माच्च निवर्तनम् । दैवाल्लब्धेन संतोष आत्मविदां चरणार्चनम् ॥२॥ त्रैवर्गिकधर्मान्निवृत्तिः मोक्षधर्मे रतिः मितं शुद्धं भोजनमेकान्तसेवनम् ॥३॥ अहिंसा सत्यम्

श्रीभगवानुवाच ॥ योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे ॥ मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥ स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ॥ दैवाल्लब्धेन संतोष आत्मविच्चरणार्चनम् ॥ २ ॥ ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा ॥ मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥ ३ ॥ अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ॥ ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम् ॥ ४ ॥ मौनं सदासनजयः स्थैर्यं प्राणजयः शनैः ॥ प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥ ५ ॥ स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ॥ वैकुण्ठलीलाभिध्यानं समाधानं तथाऽऽत्मनः ॥ ६ ॥ एतैरन्यैश्च पथिभिर्मनो दुष्टमसत्पथम् ॥ बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥ ७ ॥ शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ॥ तस्मिन्स्वस्ति समासीन ऋजुकायः समभ्यसेत् ॥ ८ ॥ प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ॥ प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम् ॥ ९ ॥ मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः ॥ वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥ १० ॥

अस्तेयं यावदर्थपरिग्रहो ब्रह्मचर्यं तपः शौचं स्वाध्यायः पुरुषार्चनम्॥४॥ मौनमासनजयः स्थैर्यं प्राणजयो विषयेभ्य इन्द्रियाणामाकर्षणम् ॥५॥ मूलाधारादीनां मध्ये एकस्मिन् देशे मनसा सह प्राणधारणम् ॥६॥ इत्यादियमनियमाद्युपायैर्मनो बुद्ध्या युञ्जीत ॥७॥ ततःशुचौ देशे आसने स्थित्वा ऋजुकायः ॥८॥ पूरककुम्भकरेचकैः प्राणमार्गं संशोध्य चित्तं स्थिरीकुर्यात् ॥९॥ तदा जितश्वासस्य योगिनो मनः शुद्धं स्यात् ॥१०॥

प्राणायामैर्वातश्लेष्मादिदोषान् धारणया पापमिन्द्रियाकर्षणेन ध्यानेन विषयसंसर्गान् क्रोधादिदोषान् दहेत् ॥११॥ यदा मनः स्थिरं जातं तदा स्वनासाग्रावलोकनो योगी भगवतो मूर्तिं ध्यायेत् ॥१२॥ कथंभूतं रूपम्। प्रसन्नवदनमरुणलोचनं श्यामं शङ्खचक्रगदाधरम् ॥१३॥ पीताम्बरधरं श्रीवत्सवक्षसं ग्रीवायां कौस्तुभधरम् ॥ १४ ॥ वनमालया व्याप्तममूल्यहारवलयकिरीटाङ्गदनूपुरैः शोभितम् ॥ १५ ॥ भक्तानां हृत्कमले

प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषान् ॥ प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ११ ॥ यदा मनः स्वं विरजं योगेन सुसमाहितम् ॥ काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः ॥ १२ ॥ प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् ॥ नीलोत्पलदलश्यामं शङ्खचक्रगदाधरम् ॥ १३ ॥ लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥ १४ ॥ मत्तद्विरेफकलया परीतं वनमालया ॥ परार्ध्यहारवलयकिरीटाङ्गदनूपुरम् ॥ १५ ॥ काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् ॥ दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ १६ ॥ अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् ॥ सन्तं वयसि कैशोरे भक्तानुग्रहकातरम् ॥ १७ ॥ कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् ॥ ध्यायेद्देवं समग्रांगं यावन्न च्यवते मनः ॥ १८ ॥ स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ॥ प्रेक्षणीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥१९॥ तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ॥ विलक्ष्यैकत्र संयुञ्ज्यादङ्गे भगवतो मुनिः ॥ २० ॥ संचिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ॥ उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ॥ २१ ॥ यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् ॥ ध्यातुर्मनश्शमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम् ॥ २२ ॥

स्थितं शान्तम् ॥ १६ ॥ अतिसुन्दरदर्शनं सर्वलोकनमस्कृतं पुण्यश्लोकयशस्करमेतादृशं श्रीकृष्णं यावन्मनो न च्यवते तावत् समग्राङ्गं ध्यायेत् ॥ १७ ॥ १८ ॥ स्थितं व्रजन्तमासीनं शयानं वा तं ध्यायेत् ॥१९॥ एवं सर्वावयवसंयुतं हरिं ध्यात्वा ततः एकैकाङ्गं ध्यायेत् ॥२०॥ तत्र पादादिध्यानम्। आदौ वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यं भगवतश्चरणारविन्दं ध्यायेत् ॥ २१ ॥ यत्पादक्षालनेन सरित्प्रवरा गंगा निर्गता यां शिरसि धृत्वा शिवोऽधिकं सुखं प्राप ॥ २२ ॥

ततः सुरवन्दितया लक्ष्म्योर्वोर्निधाय संलालितं जानुद्वयं ध्यायेत् ॥ २३ ॥ गरुडस्कन्धोपरि शोभमानावुरू आगुल्फलम्बायमानपीताम्बरेण काञ्च्या च शोभितं नितम्बं ध्यायेत् ॥२४॥ अमुष्य हरेः सर्वविश्वाधिष्ठाने उदरे स्थितं नाभिह्रदं ध्यायेत । यत्र हृदि ब्रह्मणो धिष्ण्यं लोकपद्मं बभूव ॥ २५ ॥ ततः श्रेष्ठस्य भगवतो लक्ष्म्या अधिवासं वक्षः कौस्तुभभूषितं कण्ठं च मनसा ध्यायेत् ॥२६॥ अधिश्रितलोकपालान् बाहून्

जानुद्वयं जलजलोचनया जनन्या लक्ष्म्याऽखिलस्य सुरवन्दितया विधातुः ॥ ऊर्वोर्निधाय करपल्लवरोचिषा यत्सं-
लालितं हृदि विभोरभवस्य कुर्यात् ॥ २३ ॥ उरू सुपर्णभुजयोरधिशोभमानावोजोनिधी अतसिकाकुसुमावभा-
सौ ॥ व्यालम्बिपीतवरवाससि वर्तमानकाञ्चीकलापपरिरम्भिनितम्बबिम्बम् ॥ २४ ॥ नाभिह्रदं भुवनकोशगुहोदरस्थं
यत्रात्मयोनिधिषणाखिललोकपद्मम् ॥ व्यूढं [1]हरिन्मणिवृषस्तनयोरमुष्य ध्यायेद्द्वयं विशदहारमयूखगौरम् ॥ २५ ॥
वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम् ॥ कण्ठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्म-
नस्यखिललोकनमस्कृतस्य ॥ २६ ॥ बाहूँश्च मन्दरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ॥ संचिन्त-
येद्दशशतारमसह्यतेजः शङ्खं च तत्करसरोरुहराजहंसम् ॥ २७ ॥ कौमोदकीं भगवतो दयितां स्मरेत दिग्धा-
मरातिभटशोणितकर्दमेन ॥ मालां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥ २८ ॥ भृत्या-
नुकम्पितधियेह गृहीतमूर्तेः संचिन्तयेद्भगवतो वदनारविन्दम् ॥ यद्विस्फुरन्मकरकुण्डलवल्गितेन विद्योतितामल-
कपोलमुदारनासम् ॥ २९ ॥ यच्छ्रीनिकेतमलिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुन्तलवृन्दजुष्टम् ॥ मीनद्व-
याश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतन्द्रित [2]उल्लसद्भ्रु ॥ ३० ॥

सहस्रारं चक्रं शङ्खं च चिन्तयेत् ॥ २७ ॥ युद्धे शत्रुशोणितकर्दमेन लिप्तां गदां कण्ठे मालां कौस्तुभं च स्मरेत् ॥ २८ ॥ ततो मकराकार-
कुण्डलप्रचलनेन प्रकाशितकपोलं हरेर्वदनारविन्दं चिन्तयेत् ॥ २९ ॥ ततः कुटिलकुन्तलवृन्दजुष्टमुल्लसद्भ्रु कमलनेत्रं ध्यायेत् ॥ ३० ॥

१ हरिन्मणिवृषौ मरकताविव स्तनौ ययोः । २ उज्ज्वलाङ्गवान् ।

ततो विपुलप्रसादं तापत्रयोपशमनं विलोकनम् ॥३१॥ अखिलशोकाश्रुसागरशोषणमत्युदारं मदनस्यापि संमोहनाय रचितं भ्रूमण्डलम् ॥३२॥ अधरोष्ठकान्त्याऽरुणदन्तपंक्ति तादृशं विष्णोः रूपं स्वहृदि ध्यायन् तस्मिन् चित्तं न चालयेत् ॥३३॥ एवं स्वहृदयाकाशे ध्यात्वा तेन हरौ प्राप्तभावो भक्त्या द्रवद्धृदयो हर्षात् पुलकाङ्किताङ्गः आनन्दसंप्लवे निमग्नः सन् ध्यातृध्येयविभागशून्यकमखण्डमात्मानं य ईक्षते स सुखदुःखा-

तस्यावलोकमधिकं कृपयाऽतिघोरतापत्रयोपशमनाय विसृष्टमक्ष्णोः ॥ स्निग्धस्मितानुगुणितं विपुलप्रसादं ध्यायेच्चिरं विपुलभावनया गुहायाम् ॥ ३१ ॥ हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ॥ संमोहनाय रचितं निजमाययाऽस्य भ्रूमण्डलं मुनिकृते मकरध्वजस्य ॥ ३२ ॥ ध्यानायनं प्रहसितं बहुलाधरोष्ठभासाऽरुणायिततनुद्विजकुन्दपङ्क्ति ॥ ध्यायेत्स्वदेहकुहरेऽवसितस्य विष्णोर्भक्त्याऽऽर्द्रयाऽर्पितमना न पृथग् दिदृक्षेत् ॥३३॥ एवं हरौ भगवति प्रतिलब्धभावो भक्त्या द्रवद्धृदय उत्पुलकः प्रमोदात् ॥ औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि चित्तबडिशं शनकैर्वियुङ्क्ते ॥३४॥ मुक्ताश्रयं यर्हि निर्विषयं विरक्तं निर्वाणमृच्छति मनः सहसा यथाऽर्चिः ॥ आत्मानमत्र पुरुषोऽव्यवधानमेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३५ ॥ सोऽप्येतया चरमया मनसो निवृत्त्या तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये ॥ हेतुत्वमप्यसति कर्तरि दुःखयोर्यत्स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः ॥३६॥ देहं च तं न चरमः स्थितमुत्थितं वा सिद्धो विपश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३७ ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३८ ॥

दिकं सर्वमहंकारनिष्ठं पश्यति ॥३४॥३५॥३६॥ एवं कृते सति देहाद्युपाधिनिर्मुक्तो भूत्वा जीवन्मुक्तो भवति । किंच स्वदेहं स्थितमुत्थितं गतं प्राप्तं वा न पश्यति ॥३७॥ किं च सेन्द्रियो जीवोऽपि पूर्वसंस्कारवशेन गच्छन् यावत् स्वारम्भकं कर्म तावज्जीवत्येव ॥ ३८ ॥

---

१ मत्स्यवेधनमिवोपायभूतम् । २ यथार्चिः आश्रयविषयापगमे महाभूतज्योतीरूपेण परिणमते तथा । ३ परिकृतम् इ० पा० ।

यथा पुत्रात् वित्ताच्च मर्त्यः पृथक् दृश्यते तथाऽऽत्माऽपि देहाद् भिन्नः ॥३९॥ यथा ज्वलत्काष्ठात् स्वसंभवात् धूमाद्वाऽपि तद्दाहकः प्रकाशक-श्चाग्निः पृथगेव ॥४०॥ एवं भूतेन्द्रियान्तःकरणात् जीवसंज्ञितात् प्रधानाद् ब्रह्मसंज्ञितः आत्मा पृथक्॥४१॥ एवमुपाधितः पृथक्त्वमुक्त्वा तस्यै-क्यमाह। सर्वभूतेषु आत्मानं सर्वभूतान्यात्मनि चानन्यभावेन पश्येत्॥४२॥यथा स्वयोनिषु काष्ठेष्वग्निर्नानारूपो दृश्यते॥४३॥दुर्विभाव्यामिमां जीवप्रकृतिं तत्प्रसादेनैव जित्वा वर्तते स स्वरूपेणावतिष्ठते ॥४४॥ श्रीभा० चू० तृती० अष्टाविंशोऽध्यायः ॥२८॥ एकोनत्रिंशके भक्तियो-

यथा पुत्राच्च वित्ताच्च पृथङ्मर्त्यः प्रतीयते ॥ अप्यात्मत्वेनाभिमताद्देहादेः पुरुषस्तथा ॥ ३९ ॥ यथोल्मुकाद्विस्फु-लिङ्गाद्धूमाद्वाऽपि स्वसंभवात ॥ अप्यात्मत्वेनाभिमतात्तदग्निः पृथगुल्मुकात् ॥ ४० ॥ भूतेन्द्रियान्तःकरणात प्रधाना जीवसंज्ञितात् ॥ आत्मा तथा पृथग्द्रष्टा भगवान् ब्रह्मसंज्ञितः ॥ ४१ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ ईक्षेतानन्यभावेन भूतेष्विव तदात्मताम् ॥ ४२ ॥ स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते ॥ योनीनां गुणवैष-म्यात्तथाऽऽत्मा प्रकृतौ स्थितः ॥ ४३ ॥ तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् ॥ दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥ ४४ ॥ इति श्रीभा० म० तृती० कापिले साधनानुष्ठानं नामाष्टाविंशतितमोऽध्यायः ॥ २८ ॥

देवहूतिरुवाच ॥ लक्षणं महदादीनां प्रकृतेः पुरुषस्य च ॥ स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम् ॥ १ ॥ यथा सांख्येषु कथितं यन्मूलं तत्प्रचक्षते ॥ भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥ २ ॥ विरागो येन पुरुषो भग-वन्सर्वतो भवेत् ॥ आचक्ष्व जीवलोकस्य विविधा लोकसंसृतीः ॥ ३ ॥ कालस्येश्वररूपस्य परेषां च परस्य ते ॥ स्वरूपं बत कुर्वन्ति यद्धेतोः कुशलं जनाः ॥ ४ ॥

गस्तु बहुधोच्यते ॥ कालस्य च बलं घोरा संसृतिश्च विरक्तये ॥१॥ देवहूतिरुवाच । हे भगवन् ! प्रकृतेः पुरुषस्य महदादीनां च यथा लक्षणं कथितम् ॥१॥ तथा भक्तियोगस्य मार्गं विस्तरेण वद ॥२॥ जीवस्य विविधा संसृतीः कथय । येनाख्यानेन विरागो भवेत् ॥३॥ ईश्वररूपस्य कालस्य तव स्वरूपं वद ॥ ४ ॥

हे कपिल ! संसारे पतितस्याज्ञजनस्य प्रबोधाय त्वं योगभास्करः आविर्भूतोऽसि ॥ ५ ॥ मैत्रेय उवाच ॥ विदुर ! इति मातुर्वचः श्रुत्वा प्रीतस्तामाह ॥ ६ ॥ कपिल उवाच ॥ हे भामिनि ! भक्तियोगो बहुविधः ॥७॥ स यथा हिंसादिकं संकल्प्य भेदवशो मयि भक्तिं करोति स तामसः ॥ ८ ॥ यशऐश्वर्यादिविषयान् संकल्प्य मां पूजयेत् स राजसः ॥ ९ ॥ पापक्षयार्थं कर्म कृत्वेश्वरे कर्मार्पणं करोति स सात्त्विकः ॥ १० ॥ एवं श्रवणकीर्तनादिभेदैनैकाशीतिभेदाः भवन्ति ॥११॥ निर्गुणा भक्तिस्तु फलानुसंधानशून्यैकैव । सा का । या मद्गुणश्रुतिमात्रेण

लोकस्य मिथ्याभिमतेरचक्षुषश्चिरं प्रसुप्तस्य तमस्यनाश्रये ॥ श्रान्तस्य कर्मस्वनुविद्धया धिया त्वमाविरासीः किल योगभास्करः ॥५॥ मैत्रेय उवाच ॥ इति मातुर्वचः श्लक्ष्णं प्रतिनन्द्य महामुनिः ॥ आबभाषे कुरुश्रेष्ठ प्रीतस्तां करुणार्दितः ॥६॥ ॥ श्रीभगवानुवाच ॥ भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ॥ स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥७॥ अभिसंधाय यद्धिंसां दम्भं मात्सर्यमेव वा ॥ संरम्भी भिन्नदृग् भावं मयि कुर्यात्स तामसः ॥८॥ विषयानभिसंधाय यश ऐश्वर्यमेव वा ॥ अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥९॥ कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ॥ यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥१०॥ मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ॥ मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥११॥ लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥१२॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥१३॥ स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ॥ येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥१४॥ निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ॥ क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥१५॥ मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ॥ भूतेषु मद्भावनया सत्त्वेनासंगमेन च ॥१६॥

मयि पुरुषोत्तमे निरन्तरा मनोगतिः ॥ १२ ॥ तां भक्तिं कुर्वन्तो जनाः मत्सेवनं विना सालोक्यसामीप्यादिमुक्तिं दीयमानामपि न गृह्णन्ति ॥ १३ ॥ स आत्यन्तिको भक्तियोगस्त उक्तः येन गुणत्रयं हित्वा जीवो ब्रह्मत्वाय कल्पते ॥१४॥ अथ निर्गुणभक्तेः साधनान्याह स्वधर्मेण क्रियायोगेन ॥ १५ ॥ मत्प्रतिमादिदर्शनस्पर्शनपूजास्तुत्यभिवन्दनैर्भूतेषु मद्भावनया वैराग्येण ॥ १६ ॥

महतां बहुमानेन दीनानामनुकम्पयाऽऽत्मतुल्येषु मैत्र्या यमेन नियमेन॥१७॥वेदान्तश्रवणात् मे नामसंकीर्तनादार्जवेन निरहंक्रियया १८॥एतैरुपायै भक्तस्य शुद्धं चित्तं मामेति॥१९॥यथा वायुयोगात् गन्धो घ्राणं प्राप्नोति तथा योगरतस्य चेतः आत्मानं प्राप्नोति॥२०॥सर्वभूतेषु सदास्थितमीश्वरं मां हित्वा यः प्रतिमां भजते स मौढ्यात् भस्मन्येव जुहोति२१॥२२किंच परकाये आत्मरूपं मां द्विषतो भिन्नदर्शिनो भूतेषु बद्धवैरस्य मनःशांति

आध्यात्मिकानुश्रवणान्नाम- संकीर्तनाच्च मे ॥ आर्जवेनार्यसङ्गेन निरहंक्रियया तथा ॥ १८ ॥ मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः ॥ पुरुषस्याञ्ज- साऽभ्येति श्रुतमात्रगुणं हि माम् ॥१९॥ यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् ॥ एवं योगरतं चेत आत्मान- मविकारि यत् ॥ २० ॥ अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ॥ तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥२१॥ यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ॥ हित्वाऽर्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ २२ ॥ द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ॥ भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥ २३ ॥ अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे ॥ नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ॥ २४ ॥ अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् ॥ यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥२५॥ आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ॥ तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥ २६ ॥ अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ॥ अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥ २७ ॥ जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे ॥ ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥ २८ ॥ तत्रापि स्पर्श- वेदिभ्यः प्रवरा रसवेदिनः ॥ तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥ २९ ॥

न गच्छति॥२३॥भूतादिनिन्दकस्य भूरिद्रव्यपूजयाऽहं न तुष्ये॥२४॥यावत् स्वहृदि सर्वभूतेषु च स्थितं मां न वेद तावदर्चादौ मामर्चयेत्॥२५॥ य आत्मनःपरस्य स्वल्पमपि भेदं पश्यति तस्य मृत्यु भयं करोमि ॥२६॥ यदा तु सर्वत्र स्थितं मां जानीयात् तदा तु सर्वत्र स्थितं मां पूजयेत् ॥२७॥ तथापि यथोत्तरं श्रेष्ठाः अचेतनेभ्यः सजीवाः श्रेष्ठाः। तेभ्यो ज्ञानेन्द्रियवृत्तियुक्ताः वृक्षाः ॥२८॥ तेभ्यो मत्स्यादयः तेभ्यो भ्रमरादयः। ततः

सर्पादयः॥२९॥ तेभ्यः काकादयः ततोऽपदाः। तेभ्यो बहुपदाः। तेभ्यश्चतुष्पादः। तेभ्यो मनुष्याः श्रेष्ठाः ॥ ३० ॥ मनुष्येषु चतुर्वर्णाः श्रेष्ठाः। वर्णेषु ब्राह्मणाः। तेषु वेदज्ञः। ततोऽर्थज्ञः ॥ ३१ ॥ अर्थज्ञात् मीमांसकः। ततो मुक्तसङ्गः॥ ३२ ॥ मुक्तसङ्गात् मय्यर्पिताशेषक्रियार्थात्मा श्रेष्ठः। तस्मादन्यं श्रेष्ठं न पश्यामि ॥ ३३ ॥ सर्वभूतेष्वीश्वरो जीवकलया प्रविष्ट इति मत्वा मनसा सर्वभूतानि प्रणमेत् ॥३४॥ हे मानवि !

रूपभेदविदस्तत्र ततश्चोभयतोदतः[1] ॥ तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात् ॥ ३० ॥ ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः ॥ ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥ ३१ ॥ अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत् ॥ मुक्तसङ्गस्ततो भूयानदोग्धा[2] धर्ममात्मनः ॥ ३२ ॥ तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः ॥ मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ॥ न पश्यामि परं भूतमकर्तुः समदर्शनात् ॥ ३३ ॥ * मनसैतानि भूतानि प्रणमेद्बहु-मानयन् ॥ ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥३४॥ भक्तियोगश्च योगश्च मया मानव्युदीरितः ॥ ययोरेकत-रेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥ एतद्भगवतो रूपं ब्रह्मणः परमात्मनः ॥ परं प्रधानं पुरुषं दैवं कर्म विचेष्टितम् ॥ ३६ ॥ रूपभेदास्पदं दिव्यं काल इत्यभिधीयते ॥ भूतानां महदादीनां यतो भिन्नदृशां भयम् ॥ ३७ ॥ योऽन्तः प्रविश्य भूतानि भूतैरत्त्यखिलाश्रयः ॥ स विष्णवाख्योऽधियज्ञोऽसौ कालः कलयतां प्रभुः ॥ ३८ ॥ न चास्य कश्चि-द्दयितो न द्वेष्यो न च बान्धवः ॥ आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥

मया भक्तियोगो योगश्च ते कथितः ययोरेकतरेणैव पुरुषः परमेश्वरं व्रजेत् ॥३५॥ एतत् प्रधानपुरुषात्मकं परमात्मनो भगवतो रूपम् ॥ ३६ ॥ तद्रूपं काल इत्यभिधीयते यतः स्वस्वजात्यभिमानिनां जीवानां भयं भवति ॥३७॥ विष्णवाख्यो यः कालोऽन्तः प्रविश्य भूतैर्भूतानि संहरति ॥ ३८ ॥ यस्य कालस्य कश्चित् प्रियो द्वेष्यो न, अप्रमत्तोऽसौ प्रमत्तं जनमाविशति ॥ ३९ ॥

---

१ उभयतो दन्ताः येषां ते । २ निष्कामः । * "समदर्शिनरा नित्यं वैकुण्ठं तं व्रजन्ति ते ।" इत्यधिकः पाठः ।

यतो यद्भयाद्वातो वाति सूर्यस्तपतीन्द्रो वर्षति ॥४०॥ यद्भयाद्वनस्पतयो लताः औषधयः स्वे स्वे काले पुष्पाणि फलानि गृह्णन्ति ॥ ४१ ॥ भीताःसरितः स्रवन्ति, समुद्रो मर्यादां न त्यजति। अग्निर्दीप्यते भूर्न मज्जति ॥ ४२ ॥ नभो यस्याज्ञया सप्तावरणवेष्टितं स्वदेहं लोकत्वेन विस्तारयति ॥४३॥ ब्रह्मादयो यद्भयात् प्रतियुगं विश्वस्य सर्गादिषु प्रवर्तन्ते ॥४४॥ एवंभूतोऽनन्तः कालः सर्वेषामन्तकरः सन् जनं जनेन जनयति मृत्युना अन्तकमपि मारयति ॥ ४५ ॥ इति श्रीभागवतचूर्णिकायां तृतीयस्कन्धे एकोनत्रिंशोऽध्यायः ॥२९॥ त्रिंशे तु कायकान्ता-

यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् ॥ यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥४०॥ यद्वनस्पतयो भीता लताश्चौषधिभिः सह ॥ स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥ ४१ ॥ स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ॥ अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥४२॥ नभो ददाति श्वसतां पदं यन्नियमाददः ॥ लोकं स्वदेहं तनुते महान् सप्तभिरावृतम् ॥ ४३ ॥ गुणाभिमानिनो देवाः सर्गादिष्वस्य यद्भयात् ॥ वर्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥४४॥ सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः॥ जनं जनेन जनयन्मारयन्मृत्युनाऽन्तकम् ॥४५॥

इति श्रीभा० म० तृती० बहुविधभक्तियोगवर्णनं नाम एकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ कपिल उवाच ॥ तस्यैतस्य जनो नूनं नायं वेदोरुविक्रमम् ॥ काल्यमानोऽपि बलिनो वायोरिव घनावलिः॥१॥ यं यमर्थमुपादत्ते दुःखेन सुखहेतवे ॥तं तं धुनोति भगवान्पुमान् शोचति यत्कृते॥२॥ यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मतिः॥ध्रुवाणि मन्यते मोहाद् गृहक्षेत्रवसूनि च ॥३॥ जन्तुर्वै भव एतस्मिन्यां यां योनिमनुव्रजेत् ॥ तस्यां तस्यां स लभते निर्वृतिं न विरज्यते॥४॥



दिलालनाकुलचेतसाम् ॥ कामिनां तामसी पापादधोगतिरुदीर्यते ॥१॥ कपिल उवाच ॥ तस्यानन्तस्य कालस्य विक्रमं कोऽपि न वेद। यथा विचाल्यमानाऽपि मेघपङ्क्तिर्वायुविक्रमं न वेद ॥ १ ॥ नरः सुखहेतवेप्रयत्नेन यं यमर्थं संपादयति तं तं कालो विनाशयति ॥ २ ॥ अयं दुर्मतिर्जनोऽध्रुवस्य देहस्य ध्रुवत्वं मन्यते। गृहक्षेत्रद्रव्याणां च स्थिरत्वं मन्यते॥ ३ ॥ अस्मिन् संसारे जन्तुर्यां यां योनिं व्रजेत् तस्यां तस्यां सुखं मन्यते विरक्तो न भवति ॥ ४ ॥

नरकस्थोऽपि देहं त्यक्तुं नेच्छति तत्रापि सुखं मन्यते ॥५ ॥ किंच आत्मजायापुत्रगृहपशुद्रविणबन्धुषु प्रसृतमनोरथो जनः कृतार्थोऽस्मीति मन्यते ॥ ६ ॥ निरन्तरं तेषां पोषणचिन्तया पातकानि कुरुते ॥७॥ रहसि स्त्रीसंभोगादिसुखेन शिशूनां कलभाषणेन सुखं मन्यते ॥ ८ ॥ कपटधर्मेषु दुःखप्रधानेषु गृहेषु दुःखप्रतीकारं कुर्वन् सुखवत् मन्यते ॥९॥ येषां पोषणेनाधो याति तानर्थैर्हिंसया च पुष्णाति ॥१०॥ किंच

नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति ॥ नारक्यां निर्वृतौ सत्यां देवमायाविमोहितः ॥ ५ ॥ आत्मजायासुतागारपशुद्रविणबन्धुषु ॥ निरूढमूलहृदय आत्मानं बहु मन्यते ॥ ६ ॥ संदह्यमानसर्वाङ्ग एषामुद्वहनाधिना ॥ करोत्यविरतं मूढो दुरितानि दुराशयः ॥७॥ आक्षिप्तात्मेन्द्रियः स्त्रीणामसतीनां च मायया ॥ रहो रचितयाऽऽलापैः शिशूनां कलभाषिणाम् ॥ ८ ॥ गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः ॥ कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥ अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ॥ पुष्णाति येषां पोषेण शेषभुग्यात्यधः स्वयम् ॥ १० ॥ वार्तायां लुप्यमानायामारब्धायां पुनः पुनः ॥ लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम् ॥ ११ ॥ कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः ॥ श्रिया विहीनः कृपणो ध्यायन् श्वसिति मूढधीः ॥१२॥ एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा॥ नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥ १३ ॥ तत्राप्यजातनिर्वेदो म्रियमाणः स्वयंभृतैः ॥ जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ १४ ॥ आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन् ॥ आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टितः ॥ १५ ॥ वायुनोत्क्रमतोत्तारकफसंरुद्धनाडिकः ॥ कासश्वासकृतायासः कण्ठे घुरघुरायते ॥ १६ ॥

जीविकायां लुप्यमानायामशक्तः सन् परार्थे स्पृहां कुरुते ॥११॥ ततः कुटुम्बपोषणेऽसमर्थो द्रव्यहीनः श्वसिति ॥१२॥ एवं स्वपोषणेऽसमर्थं तं तत्कलत्रादयो नाद्रियन्ते कृषीवला वृद्धबलीवर्दमिव ॥ १३ ॥ तत्राप्यजातनिर्वेदो जरया प्राप्तवैरूप्यो मरणाभिमुखः ॥ १४ ॥ अपमानेन समीपे प्रक्षिप्तमन्नादि श्ववेव भुञ्जानो रोगी निराहारः स्वल्पचेष्टितः सन् गृहे आस्ते ॥ १५ ॥ वायुना बहिर्गतनेत्रोऽन्तः कासश्वासकृतायासः कफेन संरुद्धनाडीमार्गः कण्ठे घुरघुरशब्दं करोति ॥ १६ ॥

तदा कालपाशं गतः शोचद्भिःस्वजनबन्धुभिर्वेष्टितो हे बन्धो तातेत्याहूयमानोऽपि गुरुवेदनया न ब्रूते ॥ १७ ॥ किंतु स्वानां रुदतां सतां म्रियते ॥ १८ ॥ स तदा भीमौ यमदूतौ दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं मुञ्चति ॥१९॥ ततस्तौ तं यातनादेहे निरुद्धगले पाशैर्बद्ध्वा दीर्घं मार्गं नयतः इह राजभटाः दण्ड्यं यथा ॥ २० ॥ ततो दूतयोस्तर्जनैर्भिन्नहृदयः पथि श्वभिर्भक्ष्यमाणः स्वाघं स्मरन् ॥ २१ ॥ क्षुत्तृट्परीतः सूर्यदवानलवायुभिस्तप्तः पृष्ठे कशया ताडितस्तप्तवालुके पथि निराश्रमोदकेऽशक्तोऽपि चलति॥२२॥तत्र तत्र पतन् श्रान्तो मूर्च्छितः पुनरुत्थितः

एवं कुटुम्बभरणे शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ॥ वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७॥ एवं कुटुम्बभरणे

शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः ॥ वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ १७॥ एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रियः॥ म्रियते रुदतां स्वानामुरुवेदनयाऽस्तधीः ॥१८॥ यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ॥ स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुञ्चति ॥१९॥ यातनादेह आवृत्य पाशैर्बद्ध्वा गले बलात् ॥ नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥२०॥ तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ॥ पथि श्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनुस्मरन् ॥२१॥ क्षुत्तृट्परीतोऽर्कदवानलानिलैः संतप्यमानः पथि तप्तवालुके ॥ कृच्छ्रेण पृष्ठे कशया च ताडितश्चलत्यशक्तोऽपि निराश्रमोदके ॥२२॥ तत्र तत्र पतञ्छ्रान्तो मूर्छितः पुनरुत्थितः ॥ यथा पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥ योजनानां सहस्राणि नवतिं नव चाध्वनः ॥ त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥ २४ ॥ आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ॥ आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपिवा ॥२५॥ जीवतश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने ॥ सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥ २६ ॥ कृन्तनं चावयवशो गजादिभ्यो भिदापनम् ॥ पातनं गिरिशृंगेभ्यो रोधनं चाम्बुगर्तयोः ॥ २७ ॥ यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः॥ भुङ्क्ते नरो वा नारी वा मिथः संगेन निर्मिताः ॥२८॥

एवं यमसदनं द्वाभ्यां त्रिभिर्वा मुहूर्तैर्नवनवतिसहस्र (९९०००) योजनानि नीतः सन् यातनाः प्राप्नोति ॥ २३ ॥ २४ ॥ तत्र यमलोके स्वगात्राणां ज्वलनं स्वमांसभक्षणम् ॥ २५ ॥ श्वगृध्रैरन्त्राभ्युद्धारं दशद्भिः सर्पवृश्चिकादिभिः पीडाम् ॥ २६ ॥ अवयवानां छेदनं गिरिशृंगेभ्यः पातनं जलगर्तयोः रोधनम् ॥ २७ ॥ तामिस्ररौरवाद्याः नरकयातनाः नरो वा नारी वा मिथः संगेन भुङ्क्ते ॥ २८ ॥

हे मातः ! नरकः स्वर्गश्चात्रैव । तत्रत्यं सुखदुःखादि चात्रापि दृश्यते ॥२९॥ एवं कुटुम्बं स्वदेहं च पुष्णन्नन्ते तदुभयं विसृज्येदृशं तत्फलं भुङ्क्ते ॥३०॥ स एको भूतद्रोहेण पोषितं स्थूलं कलेवरमिह हित्वा नरकं प्राप्येश्वरेण प्रापितं कुटुम्बपोषणस्य पापं भुङ्क्ते ॥३१॥३२॥यः केवलेनाधर्मेण कुटुम्बं पोषयति स नरकस्य चरमं स्थानमन्धतामिस्रं याति ॥ ३३ ॥ हे मातः ! मनुष्यदेहस्य प्राप्तेरर्वाग् यावत्यो यातनाः श्वसूकरकीटादियोनयश्च ताः क्रमेण भुक्त्वा भोगेन क्षीणपापः शुचिः सन् पुनर्नरदेहं प्राप्नोति ॥ ३४ ॥ इति श्रीभा० चू० तृ० त्रिंशोऽध्यायः

अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ॥ यातना वै नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥ एवं कुटुम्बं बिभ्राण उदरम्भर एव वा ॥ विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥३०॥ एकः प्रपद्यते ध्वान्तं हित्वेदं स्वकलेवरम् ॥ कुशलेतरपाथेयो भूतद्रोहेण यद् भृतम् ॥ ३१ ॥ दैवेनासादितं तस्य शमलं निरये पुमान् ॥ भुङ्क्ते कुटुम्बपोषस्य हृतवित्त इवातुरः ॥ ३२ ॥ केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुकः ॥ याति जीवोऽन्धतामिस्रं चरमं तमसः पदम् ॥ ३३ ॥ अधस्तान्नरलोकस्य यावतीर्यातनादयः ॥ क्रमशः समनुक्रम्य पुनरत्राव्रजेच्छुचिः ॥ ३४ ॥ इति श्रीभा० म० तृतीय० कापिले कर्मविपाको नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥ श्रीभगवानुवाच ॥ कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये ॥ स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ १ ॥ कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ॥ दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम् ॥ २ ॥ मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः ॥ नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः ॥ ३ ॥

॥३०॥ एकत्रिंशे विमिश्रैस्तु पुण्यपापैरिहान्तरा ॥ मनुष्ययोनिसंप्राप्तिर्वर्ण्यते राजसी गतिः ॥१॥ श्रीकपिल उवाच ॥ जन्तुर्देहप्राप्तये दैवनेत्रेण कर्मणा पुंसो रेतःकणाश्रयःस्त्रिया उदरं प्रविष्टो भवति॥१॥ततःएकरात्रेण शुक्रशोणितमिश्रितं भवति। पञ्चरात्रेण बुद्बुदम् । दशाहेन बदरीफलसदृशम् । ततः पेशी अण्डं वा॥२॥मासेन शिरः द्विमासेन हस्तपादाद्यङ्गानां विभागः । त्रिभिर्नखरोमास्थिचर्माणि लिङ्गच्छिद्राणि च ॥३॥

---

१ 'अध्वानम्' इत्यपि पाठः । २ दैवमीश्वरः नेतृ प्रवर्तकं यस्य तेन ।

भ्राम्यति ॥४॥ जन्तुर्मातुर्भक्षितान्नपानाद्यैर्वर्धमानो विण्मूत्रगर्ते शेते ॥ ५ ॥ तत्र कृमिभिः क्षतसर्वाङ्गो मूर्च्छां प्राप्नोति ॥ ६ ॥ मातृभुक्तैः कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिः सर्वाङ्गेषु जातवेदनः ॥ ७ ॥ जरायुणा बद्धः कुण्डलीभूतपृष्ठग्रीवः कुक्षौ शिरः कृत्वाऽऽस्ते ॥८॥ पञ्जरे शुक इव तत्र स्वाङ्गचेष्टायामसमर्थः पूर्वकर्मवशाल्लब्धस्मृतिर्जन्मशतोद्भवं कर्म स्मरन् सुखं न प्राप्नोति ॥९॥ ततः सप्तममासादारभ्य लब्धबोधोऽपि सूतिकावातैर्वेपितः एकत्र नास्ते ॥ १० ॥ ततः

चतुर्भिः सप्त धातवः । पञ्चभिः क्षुत्तृडुद्भवः । षड्भिर्जरायुणा वेष्टितो दक्षिणे कुक्षौ

कुक्षौ भ्राम्यति दक्षिणे ॥ ४ ॥ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमते ॥ शेते विण्मूत्रयोर्गर्ते स जन्तुर्जन्तुसंभवे ॥५॥ कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात् प्रतिक्षणम् ॥ मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ ६ ॥ कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ॥ मातृभुक्तैरुपस्पृष्टः सर्वांगोत्थितवेदनः ॥७॥ उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः ॥ आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥८॥ अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे ॥ तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम् ॥ स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विन्दते ॥९॥ * आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः ॥ नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः॥१०॥ नाथमान ऋषिर्भीतःसप्तवध्रिः कृताञ्जलिः ॥ स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥११॥ जन्तुरुवाच ॥ तस्योपसन्नमवितुं जगदिच्छयाऽऽत्तनानातनोर्भुवि चलच्चरणारविन्दम् ॥ सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी ॥ गतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥ यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम् ॥ आस्ते विशुद्धमविकारमखण्डबोधमातप्यमानहृदयेऽवसितं नमामि ॥ १३ ॥

कृताञ्जलिः सन् येनोदरे अर्पितस्तं वाण्या स्तौति ॥ ११ ॥ जीव आह । येनेदृशी गतिर्दर्शिता तं शरणं व्रजामि ॥ १२ ॥ ननु कोऽसौ यं शरणं व्रजसि को वा तव तस्य च विशेषः तत्राह । अत्र मातुर्देहे भूतेन्द्रियाशयमयीं मायां समाश्रित्य कर्मभिर्बद्ध इव य आस्ते सोऽहम्, यस्तु निरुपाधिरविकारोऽत्रैवास्ते तं नमामि ॥ १३ ॥

* गर्भवाससमं दुःखं न भूतं न भविष्यति । इत्यधिकः पाठः । १ सप्त वध्रयो बन्धनभूता धातवो यस्य ।

यः पञ्चभूतरचिते देहे मिथ्यैव च्छन्नो वस्तुतोऽसङ्गः सोऽहं प्रकृतिपुरुषयोर्नियन्तारं वन्दे ॥१४॥ ननु ज्ञानेनायं बन्धो निवर्तिष्यते किं परमेश्वरवन्दनेन ? तत्राह । यन्मायया नष्टस्मृतिः संसारमार्गकृतक्लेशेन चरन् जीवः ईश्वरानुग्रहं विना कया युक्त्या निजस्वरूपं भजेत । अतः ईश्वरप्रसादं विना ज्ञानाभावात् स एव सेव्यः ॥ १५ ॥ सर्वान्तर्यामी यो मयि त्रैकालिकं ज्ञानं दधौ तमीशं वयं तापत्रयोपशमनाय भजेम

यः पञ्चभूतरचित रहितः शरीरे छन्नो यथेन्द्रियगुणार्थचिदात्मकोऽहम् ॥ तेनाविकुण्ठमहिमानमृषिं तमेनं वन्दे परं प्रकृतिपूरुषयोःपुमांसम् ॥१४॥ यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन् सांसारिके पथि चरंस्तदभिश्रमेण ॥ नष्टस्मृतिः पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमन्तरेण ॥१५॥ ज्ञानं यदेतददधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ॥ तं जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १६ ॥ देह्यन्यदेहविवरे जठराग्निनाऽसृग्विण्मूत्रकूपपतितो भृशतप्तदेहः ॥ इच्छन्नितो विवसितुं गणयन् स्वमासान् निर्वास्यते कृपणधीर्भगवन् कदा नु ॥ १७ ॥ येनेदृशीं गतिमसौ दशमास्य ईश संग्राहितः पुरुदयेन भवादृशेन ॥ स्वेनैव तुष्यितु कृतेन स दीननाथः को नाम तत्प्रति विनाऽञ्जलिमस्य कुर्यात् ॥ १८ ॥ पश्यत्ययं धिषणया ननु सप्तवध्रिः शारीरके दमशरीर्यपरः स्वदेहे ॥ यत्सृष्टयाऽऽसं तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्त्यमिव प्रतीतम् ॥ १९ ॥ सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे ॥ यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत ॥ २० ॥

॥ १६ ॥ अथ स्वदुःखं विज्ञापयन्नाह ॥ हे भगवन् ! अत्र मातुर्जठराग्निना तप्तदेहो रक्तविण्मूत्रकूपे पतितः स्वमासान् गणयन् विवरान्निर्गन्तुमिच्छामि । अतस्त्वं बहिः कदा निर्वास्यसि ॥१७॥ य ईदृशं ज्ञानं मे ददौ स स्वकृतेनैव स्वयं तुष्यतु यतोऽञ्जलिमात्रं विना तत्कृतोपकारे प्रत्युपकारं कः कुर्यात्॥१८॥ अहं पुनर्यत्सृष्टबुद्ध्या यद्दत्तज्ञानेन शमदमादियुक्तशरीरवानभवं तं पुरुषं वहिर्हृदि च पश्यामि ॥१९॥ हे विभो ! बहुदुःखयुक्ते गर्भे वसन्नप्यहं गर्भाद्बहिर्गन्तुं नेच्छामि । कुतः अन्धकूपप्राये बहिरागतं प्राणिनं तव माया व्याप्नोति ॥ २० ॥

१ छन्दोभङ्गस्त्वार्षः ।

अतोऽत्रैव सर्वं कर्मफलं भुक्त्वा हृदयं प्रापितौ विष्णुपादौ धृत्वाऽऽत्मानमुद्धरिष्ये ॥ २१ ॥ कपिल उवाच ॥ एवं जीवः स्तुवन् वर्तते । तं दशममासि प्राप्ते सूतिकावायुः प्रसूत्यै सद्यो जन्तुमवाङ्मुखं क्षिपति ॥ २२ ॥ ततस्तेनाधः क्षिप्तः सन्नवाक्छिरः कृत्वा कृच्छ्रेण विनिष्क्रा-मति ॥ २३ ॥ तदा भुवि रक्तमूत्रे पतितो विपरीतां गतिं प्राप्तो ज्ञाने गते रोदिति ॥ २४ ॥ किंच तस्याभिप्रायमविदुषो मात्रादयो बाले स्तन्यार्थं रुदति सति व्यथां प्रकल्प्य निम्बरसपानं कारयन्ति स्तन्यपानं च कारयन्ति ॥२५॥ मत्कुणादियुक्ते मलिनपर्यङ्के शायितोऽङ्गानां

तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनैव ॥ भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भवि-ष्यदुपसादितविष्णुपादः ॥ २१ ॥ कपिल उवाच ॥ एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः ॥ सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ २२ ॥ तेनावसृष्टः सहसा कृत्वाऽवाक्छिर आतुरः ॥ विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हत-स्मृतिः ॥२३॥ पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते ॥ रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥ २४ ॥ परच्छ-न्दं न विदुषा पुष्यमाणो जनेन सः ॥ अनभिप्रेतमापन्नः प्रत्याख्यातुमनीश्वरः ॥ २५ ॥ शायितोऽशुचिपर्यङ्के जन्तुः स्वेदजदूषिते ॥ नेशः कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २६ ॥ तुदन्त्यामत्वचं दंशा मशका मत्कुणादयः ॥ रुदन्तं विगतज्ञानं कृमयः कृमिकं यथा ॥ इत्येवं शैशवं भुक्त्वा दुःखं पौगण्डमेव च ॥२७॥ अलब्धाभीप्सितोऽज्ञानादि-द्धमन्युः शुचाऽर्पितः ॥ सह देहेन मानेन वर्धमानेन मन्युना ॥ करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥२८॥ भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत् ॥ अहं ममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ २९ ॥ तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ॥ योऽनुयाति ददत् क्लेशमविद्याकर्मबन्धनः ॥ ३० ॥

कण्डूयनेऽसमर्थः सन् रोदिति ॥२६॥ मत्कुणमशकादयस्तं तुदन्ति । एवं पञ्चवर्षात्मकं शैशवं दशवर्षात्मकं पौगण्डदुःखं च भुक्त्वा तारुण्यं प्राप्नोति यत्र पौगण्डेऽध्ययनादिदुःखम् ॥ २७ ॥ तारुण्यदुःखमाह । इच्छितार्थस्यालाभात् शोकेन व्याप्तो दीप्तमन्युरभिमानेनात्मनाशाय विरोधं करोति ॥२८॥ पञ्चभूतात्मके देहेऽहं ममेति मतिं करोति ॥२९॥ देहार्थं कर्म करोति येन कर्मणा बद्धो देहः पुनः पुनः संसृतिं याति ॥३०॥

यदि जन्तुः शिश्नोदरकृतोद्यमैरसत्पथि रमते स पूर्ववत् नरकं विशति ॥ ३१ ॥ सङ्गात् सत्यशौचदयामौनशमदमादयः क्षयं यान्ति॥३२॥ अशान्तेषु मूढेषु योषितां क्रीडामृगवदधीनेषु सङ्गं न कुर्यात्॥३३॥यथा स्त्रीसङ्गान्मोहो बन्धश्च भवति तथाऽन्यसङ्गतो न ॥३४॥ अहो ब्रह्मा स्वकन्यां दृष्ट्वा मोहितः तदा मृगरूपां सतीं स्वयं मृगाकारः सन्नधावत् ॥३५॥ अतः स्त्रीमय्या मायया नारायणमृषिं विना कः पुमान् मोहं न प्राप्नुयात् ॥३६॥ हे मातः स्त्रीरूपायाः मे मायायाः बलं पश्य या दिग्विजयिनः शूरानपि केवलं भ्रूकटाक्षेण पदाक्रान्तान् करोति॥३७॥

यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः ॥ आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३१ ॥ सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ॥ शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ॥ ३२ ॥ तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु ॥ सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च ॥ ३३ ॥ तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः ॥ योषित्संगाद्यथा पुंसो यथा तत्सङ्गिसंगतः ॥३४॥ प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः ॥ रोहिद्भूतां सोऽन्वधावदृक्षरूपी हतत्रपः ॥३५॥ तत्सृष्टसृष्टसृष्टेषु कोऽन्वखण्डितधीः पुमान् ॥ ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ ॥३६॥ बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ॥ या करोति पदाक्रान्तान्भ्रूविजृम्भेण केवलम् ॥ ३७ ॥ संगं न कुर्यात् प्रमदासु जातु योगस्य पारं परमारुरुक्षुः ॥ मत्सेवया[1] प्रतिलब्धात्मलाभो वदन्ति या निरयद्वारमस्य ॥ ३८ ॥ योपयाति शनैर्माया योषिद्देवविनिर्मिता ॥ तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ३९ ॥ यां मन्यते पतिं मोहान्मन्मायामृषभायतीम्॥ स्त्रीत्वं स्त्रीसङ्गतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ ४० ॥ तामात्मनो विजानीयात् पत्यपत्यगृहात्मकम् ॥ देवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ ४१ ॥

अतो योगं कुर्वन् कदाचिदपि प्रमदासु सङ्गं न कुर्यात् ॥ ३८ ॥ शुश्रूषादिमिषेणोपयाति या स्त्रीरूपा माया तां मृत्युरूपां पश्येत् । पशोस्तृणैश्छादितं कूपमिव ॥३९॥ जीवः पूर्वजन्मनि स्वयं पुमानन्तकाले स्त्रीध्यानेन स्त्रीत्वं प्राप्तः सन् पुरुषवदाचरन्तीं मन्मायां मोहात् वित्तापत्यगृहप्रदं पतिं मन्यते ॥ ४० ॥ तदा तां पुरुषरूपां मायां मृत्युं विद्यात् । यथा लुब्धकगायनेन पूर्वं मोहितस्यापि मृगस्यान्ते मृत्युः ॥४१॥

[1] 'सत्सेवया' इ० पा० ।

जीवो लिंगदेहेन लोकान्तरं व्रजन् निरन्तरं कर्माणि करोति ॥४२॥ जीवस्य जन्ममरणसंभवमाह । सूक्ष्मभूतेन्द्रियमनोमयो लिंगदेहः । भोगायतनं स्थूलदेहः । तयोः कार्यायोग्यता जीवस्य मरणम् । तयोराविर्भावस्तु जन्म ॥ ४३ ॥ किंच स्थूलशरीरस्य द्रव्येक्षायां यदाऽयोग्यता तन्मरणम्; यदा चेदमेवाहमित्यभिमानेन स्थूलशरीर दर्शनं सोत्पत्तिः ॥ ४४ ॥ अत्र दृष्टान्तः-नेत्रगोलकादेः रूपादिदर्शनं आवरणदोषेण यदाऽयोग्यता भवति तदैव चक्षुषः इन्द्रियस्याप्ययोग्यता । यदा स्थानचक्षुषोरयोग्यता दैव द्रष्टुर्जीवस्य द्रष्टृत्वायोग्यता ॥४५॥ तस्मात् हे मातः ! मरणात् त्रासो न कार्यः ! जीवने दैन्यं न कार्यम् । धीरो जीवगतिं बुद्ध्वा मुक्तसंगश्चरेत् । जीवस्य जन्ममरणादि न ॥ ४६ ॥

देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ॥ भुञ्जान एव कर्माणि करोत्यविरतं पुमान्॥४२॥जीवस्यानुगतो देहो भूतेन्द्रियमनोमयः ॥ तन्निरोधोऽस्य मरणमाविर्भावस्तु संभवः॥४३॥द्रव्योपलब्धिस्थानस्य द्रव्येक्षाऽयोग्यता यदा ॥ तत्पञ्चत्वमहंमानादुत्पत्तिर्द्रव्यदर्शनम् ॥४४॥ यथाऽक्ष्णोर्द्रव्यावयवदर्शनायोग्यता यदा ॥ तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वायोग्यताऽनयोः॥४५॥तस्मान्न कार्यः संत्रासो न कार्पण्यं न संभ्रमः॥बुद्ध्या जीवगतिं धीरो मुक्तसङ्गश्चरेदिह ॥४६॥ सम्यग्दर्शनया बुद्ध्या योगवैराग्ययुक्तया ॥ मायाविरचिते लोके चरेन्न्यस्य कलेवरम्॥४७॥इति श्रीभा० म० तृतीय० कापिले जीवगतिवर्णनं नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ कपिल उवाच ॥ अथ यो गृहमेधीयान् धर्मानेवावसन् गृहे ॥ काममर्थं च धर्मान्स्वान् दोग्धि भूयः पिपर्ति तान् ॥ १ ॥ स चापि भगवद्धर्मान् काममूढः पराङ्मुखः ॥ यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयाऽन्वितः ॥ २ ॥ तच्छ्रद्धयाऽऽक्रान्तमतिः पितृदेवव्रतः पुमान् ॥ गत्वा चान्द्रमसं लोकं सोमपाः पुनरेष्यति ॥३॥ यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः ॥ तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥

तस्माज्ज्ञानवैराग्ययुक्तबुद्ध्या मायारचिते लोके देहासक्तिं त्यक्त्वा विचरेत्॥ ४७ ॥ इति श्रीभा० चू० तृती० एकत्रिंशोऽध्यायः ॥ ३१ ॥ द्वात्रिंशे सात्त्विकैर्धर्मैरूर्ध्वां गतिरुदीर्यते । तत्त्वज्ञानविहीनस्य ततश्च पुनरागतिः॥१॥कपिल उवाच । अथ गृहे स्वधर्मानेवाचरन् यो वर्तते स पुनर्धर्मकामान् करोति ॥ १ ॥ किंच स भगवद्धर्मान् त्यक्त्वा श्रद्धया यज्ञैर्देवान् पितॄन् यजन् चान्द्रमसं लोकं गत्वा पुनरत्रैष्यति ॥ २ ॥ ३ ॥ ते चान्द्रमसादिलोका अपि यदा हरिः अहीन्द्रशय्यायां शेते तदा लयं यान्ति ॥ ४ ॥

येऽनासक्ताः ईश्वरे समर्पितकर्माणः शुद्धचेतसः ॥५॥ निवृत्तधर्मनिरता निरहंकाराः सन्तस्ते सूर्यद्वारेण परिपूर्णं पुरुषं यान्ति ॥६।७॥ तद्द्विपरार्धावसान यः प्रलयस्तावद्ब्रह्मलोकमध्यासते ॥८॥ यदा ब्रह्मा पञ्चविंशतितत्त्वैर्युक्तं ब्रह्माण्डं संहर्तुमिच्छुः सन् द्विपरार्धकालं प्रविशति तदा द्विपरार्धाख्यः प्रलयो भवति ॥९॥ ते योगिनो ब्रह्मलोके स्थित्वा पूर्वोक्तप्रलयान्ते ब्रह्मणा सह मोक्षं यान्ति ॥१०॥ हे भामिनि ! सर्वभूतानां हृत्पद्मस्थितं परमात्मानं भक्त्या शरणं व्रज ॥११॥ एवं भगवद्भक्तानां निरन्तरमेव तत्प्राप्तिः। भेदेनोपासने तु ब्रह्मादयोऽपि पुनरावर्तन्ते तत्राह—स्थिरचराणां यः आद्यो

ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे ॥ निस्सङ्गा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥ ५ ॥ निवृत्तिधर्मनिरता निर्ममा निरहंकृताः ॥ स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥ ६ ॥ सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् ॥ परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥ ७ ॥ द्विपरार्धावसाने यः प्रलयो ब्रह्मणस्तु ते ॥ तावदध्यासते लोकं परस्य परचिन्तकाः ॥ ८ ॥ क्ष्माम्भोऽनलानिलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतं प्रतिसंजिहीर्षुः ॥ अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं पराख्यमनुभूय परः स्वयंभूः ॥ ९ ॥ एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ॥ तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥ अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् ॥ श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ ११ ॥ आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः ॥ योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥ १२ ॥ भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा ॥ कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभः ॥ १३ ॥ स संसृत्य पुनः काले कालेनेश्वरमूर्तिना ॥ जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥ १४ ॥ ऐश्वर्यं पारमेष्ठ्यं च तेऽपि धर्मविनिर्मितम् ॥ निषेव्य पुनरायान्ति गुणव्यतिकरे सति ॥ १५ ॥ ये त्विहासक्तमनसः कर्मसु श्रद्धयाऽन्विताः ॥ कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः ॥ १६ ॥

ब्रह्मा सोऽपि मरीच्यादिभिर्योगेश्वरादिभिश्च सह निष्कामेनापि कर्मणा कर्तृत्वाभिमानेन गुणव्यतिकरे जाते यथापूर्वं प्रजायते ॥१२॥१३॥१४॥ मरीच्यादयोऽपि स्वकर्मनिर्मितमैश्वर्यं निषेव्य गुणव्यतिकरे जाते पुनः स्वस्वाधिकारे यान्ति ॥१५॥ ये इह कर्मासक्तमनसः सन्तः काम्यानि नित्यानि च सर्वकर्माणि कुर्वन्ति ते पितृलोकं व्रजन्ति ॥ १६ ॥

येऽजितेन्द्रियाः गृहेषु सक्तचित्ताः अनुदिनं पितॄन् यजन्ति ॥१७॥ ये च हरेः कथायां विमुखास्त्रैवर्गिका असद्गाथाः शृण्वन्ति कीटाः पुरीषभक्षणमिव तेऽर्यम्णो दक्षिणमार्गेण पितृलोकं व्रजन्ति ॥१८॥१९॥२०॥ ततस्ते पुण्यक्षयात् पुनरिमं लोकं पतन्ति ॥२१॥ तस्मात् हे मातः ! त्वं सर्वभावेन भक्त्या परमेष्ठिनं भजस्व ॥२२॥ वासुदेवे कृतो भक्तियोगो वैराग्यं ज्ञानं च जनयति ॥२३॥ यदा भक्तस्य चित्तं भगवति निश्चलं

रजसा कुण्ठमनसः कामात्मानोऽजितेन्द्रियाः ॥ पितॄन्यजन्त्यनुदिनं गृहेष्वभिरताशयाः ॥ १७ ॥ त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः ॥ कथायां कथनीयोरुविक्रमस्य मधुद्विषः ॥ १८ ॥ नूनं दैवेन विहता ये चाच्युतकथासुधाम् ॥ हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः ॥ १९ ॥ दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति ते ॥ प्रजामनु प्रजायन्ते श्मशानान्तक्रियाकृतः ॥२०॥ ततस्ते क्षीणसुकृताःपुनर्लोकमिमं सति ॥पतंति विवशा दैवैः सद्यो विभ्रंशितोदयाः॥२१॥ तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम्॥ तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजम् ॥२२॥ वासुदेवे भगवति भक्तियोगः प्रयोजितः ॥ जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥२३॥ यदाऽस्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः ॥ न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत ॥२४॥ स तदैवात्मनाऽऽत्मानं निस्सङ्गं समदर्शनम् ॥ हेयोपादेयरहितमारूढं पदमीक्षते॥२५॥ ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ॥ दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥२६॥ एतावानेव योगेन समग्रेणेह योगिनः॥युज्यतेऽभिमतो ह्यर्थो यदसंगस्तु कृत्स्नशः ॥२७॥ ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् ॥ अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा॥२८॥यथा महानहंरूपस्त्रिवृत्[1] पञ्चविधः[2] स्वराट्[3] ॥ एकादशविधस्तस्य वपुरण्डं जगद्यतः ॥२९॥



सदिन्द्रियवृत्तिभिरर्थेषु वैषम्यं न गृह्णाति तदाऽऽत्मना स्वप्रकाशमात्मानमीक्षते ॥२४॥२५॥ किंच दृश्यद्रष्टृकरणरूपेण भगवान् पृथक् प्रतीयते वस्तुतो ज्ञानमात्रेणैकः ॥२६॥ संपूर्णयोगेन योगिजनस्य प्रपञ्चसङ्गत्याग एव योगफलं प्राप्यते ॥२७॥ इन्द्रियैः शब्दाद्यर्थरूपेण निर्गुणं ज्ञानरूपं ब्रह्मैव भाति न त्वर्थतस्तमात् पृथक् ॥ २८ ॥ यथाऽहंकारेन्द्रियत्रिगुणादिकैर्महत्तत्त्वमेव भाति न तु महत्तत्त्वादहंकारादयः पृथक् ॥ २९ ॥

१ गुणरूपेण त्रिविधः । २ भूतरूपेण । ३ इन्द्रियरूपेण ।

एतत् ब्रह्म निस्सङ्गः पुरुषो योगाभ्यासेन भक्त्या च परिपश्यति ॥ ३० ॥ हे पूज्ये ! इति एतत् ब्रह्मदर्शनं ते कथितम्, येन प्रकृतिपुरुषयो-स्तत्त्वं ज्ञाते॥३१॥नैर्गुण्येन ज्ञानयोगेन मन्निष्ठेन भक्तियोगेन वा हरिरेव प्राप्यते । तयोर्द्वयोरप्येकः एवार्थः ॥३२॥ यथैकः क्षीरादिपदार्थश्चक्षुषा शुक्लो रसनेन मधुर इति स्पर्शनेन शीत इति नाना प्रतीयते एवमेको भगवान् शास्त्रमार्गैर्नाना प्रतीयते॥३३॥शास्त्रमार्गानाह । क्रियायज्ञदानतपः

एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ॥ समाहितात्मा निस्सङ्गो विरक्त्या परिपश्यति ॥३०॥ इत्येतत्कथितं गुर्वि ज्ञानं तद् ब्रह्मदर्शनम्॥येनानुबुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ॥३१॥ ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः॥ द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥ ३२ ॥ यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ॥ एको नानेयते तद्वद्भग-वाञ्छास्त्रवर्त्मभिः ॥ ३३ ॥ क्रियया क्रतुभिर्दानैस्तपःस्वाध्यायमर्शनैः ॥ आत्मेन्द्रियजयेनापि संन्यासेन च कर्मणाम् ॥३४॥ योगेन विविधाङ्गेन भक्तियोगेन चैव हि ॥ धर्मेणोभयचिह्नेन यः प्रवृत्तिनिवृत्तिमान् ॥ ३५ ॥ आत्मतत्त्वाव-बोधेन वैराग्येण दृढेन च ॥ ईयते भगवानेभिः सगुणो निर्गुणःस्वदृक् ॥ ३६ ॥ प्रावोचं भक्तियोगस्य स्वरूपं ते चतु-र्विधम् ॥ कालस्य चाव्यक्तगतेर्योऽन्तर्धावति जन्तुषु ॥ ३७ ॥ जीवस्य संसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥ यास्वङ्ग-प्रविशन्नात्मा न वेद गतिमात्मनः ॥ ३८ ॥ नैतत् खलायोपदिशेन्नाविनीताय कर्हिचित् ॥ न स्तब्धाय न भिन्नाय नैव धर्मध्वजाय च ॥ ३९ ॥ न लोलुपायोपदिशेन्न गृहारूढचेतसे ॥ नाभक्ताय च मे जातु न मद्भक्तद्विषामपि॥४०॥ श्रद्दधानाय भक्ताय विनीतायानसूयवे ॥ भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ ४१ ॥

स्वाध्यायादिभिर्योगेन सकामनिष्कामधर्मेण भक्तियोगेन वैराग्येण चेत्येभिर्मार्गैर्हरिः सगुणो निर्गुणः प्रतीयते॥३४॥३५॥३६॥ हे मातः! भक्ति-योगस्य स्वरूपं कालस्य गतिं जीवस्य बह्वीःसंसृतीस्तत्त्वसंख्यानं वैराग्यं ज्ञानं च कथितम् ॥३७॥३८॥इदं खलायानम्राय स्तब्धाय दुराचाराय दाम्भिकाय लोभिनेऽभक्ताय मद्भक्तद्विषां च नोपदिशेत् ॥ ३९ ॥ ४० ॥ श्रद्दधानाय भक्ताय नम्राय भूतेषु कृतमैत्राय मत्सेवारताय ॥४१॥

विरक्ताय शान्तचित्ताय शुचये इदं समुपदिशेत् ॥४२ ॥ हे अम्ब ! यः पुरुषः श्रद्धयेदं शृणुयात् यो वाऽभिधत्ते स मत्पदवीं प्राप्नोति ॥ ४३ ॥ इति श्रीभा० चू० तृतीय० द्वात्रिंशोऽध्यायः॥३२॥त्रयस्त्रिंशे तु तस्यैव कपिलस्योपदेशतः ॥ ज्ञानभावेन तन्मातुर्जीवन्मुक्तिरुदीर्यते ॥१॥ मैत्रेय उवाच ॥ एवं कपिलस्य जनयित्री कर्दमस्य स्त्री देवहूतिर्गतमोहा सती ज्ञानप्रवर्तकं कपिलं प्रणम्य तुष्टाव ॥१॥ देवहूतिरुवाच । भगवन् ! तव जठरात् जातो ब्रह्माऽपि तव वपुः केवलं दध्यौ नतु दृष्टवान् ॥ २ ॥ स भवानेव विश्वस्योत्पत्त्यादिकं करोति ॥ ३ ॥ यस्योदरे एतत् विश्व-

बहिर्जातविरागाय शान्तचित्ताय दीयताम् ॥ निर्मत्सराय शुचये यस्याहं प्रेयसां प्रियः ॥ ४२ ॥ य इदं शृणुयादम्ब श्रद्धया पुरुषः सकृत् ॥ यो वाऽभिधत्ते मच्चित्तः स ह्येति पदवीं च मे ॥४३॥ इति श्रीभा० म० तृतीयस्कन्धे कापिले संपूर्णवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ मैत्रेय उवाच ॥ एवं निशम्य कपिलस्य वचो जनित्री सा कर्दमस्य दयिता किल देवहूतिः ॥ विस्रस्तमोहपटला तमभिप्रणम्य तुष्टाव तत्त्वविषयाङ्कितसिद्धिभूमिम् ॥ १ ॥ देवहूतिरुवाच ॥ अथाप्यजोऽन्तः सलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते ॥ गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥ स एव विश्वस्य भवान्विधत्ते गुणप्रवाहेण विभक्तवीर्यः ॥ सर्गाद्यनीहोऽवितथाभिसंधिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः ॥ ३ ॥ स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत् ॥ विश्वं युगान्ते वटपत्रएकः शेते स्म मायाशिशुरङ्घ्रिपानः ॥४॥ त्वं देहतन्त्रप्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये ॥ यथाऽवतारास्तव सूकरादयस्तथाऽयमप्यात्मपथोपलब्धये ॥५॥ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ॥ श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नु दर्शनात् ॥ ६ ॥

मासीत् यस्त्वं युगान्ते मायाशिशुः पादांगुष्ठं पिबन्नेको वटपत्रपुटे शेषे स्म सोऽजस्त्वं मया जठरेण कथं धृतः॥४॥त्वं दुष्टानां नाशाय भक्तानां समृद्धये देहं स्वीकरोषि यथा तव सूकरादयोऽवतारास्तथा ज्ञानमार्गप्रदर्शनायायमपि ॥५॥ भगवन् ! त्वन्नामश्रवणकीर्तनादिभिः श्वपचोऽपि सद्यो यज्ञार्थं योग्यो भवति । अतः कृतार्थाऽस्मि ॥ ६ ॥

१ 'यत्' इ० पा०।

किंच तव नाम यस्य जिह्वाग्रे वर्तते स श्वपचोऽपि गरीयान् । ये आर्यास्तव नाम गृणन्ति त एव तपोहोमतीर्थस्नानादि कृतवन्तः॥७॥ अहं तं ब्रह्मरूपं वेदगर्भं विष्णुं कपिलं त्वां वन्दे ॥८॥ मैत्रेय उवाच । एवं स्तुतः कपिलो गम्भीरवाण्या मातरं प्राह॥९॥कपिलदेव उवाच ॥ हे मातः । मयोक्तेन मार्गेण त्वं शीघ्रं जीवन्मुक्तिं प्राप्स्यसि ॥ १० ॥ ब्रह्मवादिभिः सेवितं मे एतत् मतं श्रद्धत्स्व येन मां प्राप्स्यसि ॥ ११ ॥ मैत्रेय

अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ॥ तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥७॥ तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम् ॥ स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम् ॥८॥ मैत्रेय उवाच ॥ ईडितो भगवानेवं कपिलाख्यःपरः पुमान् ॥ वाचा विक्लवयेत्याह मातरं मातृवत्सलः॥९॥ ॥ कपिल उवाच ॥ मार्गेणानेन मातस्ते सुसेव्येनोदितेन मे ॥ आस्थितेन परां काष्ठामचिरादवरोत्स्यसि ॥१०॥ श्रद्धत्स्वैतन्मतं मह्यं जुष्टं यद् ब्रह्मवादिभिः ॥ येन मामभवं याया मृत्युमृच्छन्त्यतद्विदः ॥ ११ ॥ मैत्रेय उवाच ॥ इति प्रदर्श्य भगवान् सतीं तामात्मनो गतिम् ॥ स्वमात्रा ब्रह्मवादिन्या कपिलोऽनुमतो ययौ ॥१२॥ सा चापि तनयोक्तेन योगादेशेन योगयुक् ॥ तस्मिन्नाश्रम आपीडे सरस्वत्याः समाहितः ॥ १३ ॥ अभीक्ष्णावगाहकपिशाञ्जटिलान् कुटिलालकान् ॥ आत्मानं चोग्रतपसा बिभ्रती चीरिणं कृशम् ॥१४॥ प्रजापतेः कर्दमस्य तपोयोगविजृम्भितम् ॥ स्वगार्हस्थ्यमनौपम्यं प्रार्थ्यं वैमानिकैरपि ॥१५॥ पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ॥ आसनानि च हैमानि सुस्पर्शास्तरणानि च॥१६॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नप्रदीपा आभान्ति ललनारत्नसंयुताः ॥१७॥

उवाच ॥ भगवान् तामात्मनो गतिं प्रदर्श्य ब्रह्मवादिन्या तयाऽनुज्ञातो ययौ ॥१२॥ सा कपिलोक्तेन मार्गेण तस्मिन्नाश्रमे ॥१३॥ त्रिकालस्नानेन तपसा कृशमात्मानं बिभ्रती ॥ १४ ॥ कर्दमस्य तां विमानसंपत्तिं हित्वा निस्स्पृहा बभूव ॥ १५ ॥ संपत्तिं वर्णयति । यत्र मृदुशुभ्राः शय्याः हैमान्यासनानि ॥ १६ ॥ स्वच्छस्फटिककुड्येषु स्त्रीरत्नसंयुताः रत्नप्रदीपाः आभान्ति ॥ १७ ॥

१ प्रत्याहृते मनसि ।

यत्र देववृक्षैः रम्यं कूजद्विहंगमिथुनमुद्यानम् ॥ १८ ॥ यत्रोद्याने प्रविष्टां देवहूतिं देवानुचराः जगुः॥१९॥एवं संपत्तिं त्यक्त्वा पुत्रवियोगातुरा सती किंचिच्छोकव्याकुलं मुखं चकार ॥ २० ॥ कर्दमे वनं गते पुत्रवियोगातुरा ज्ञाततत्त्वाऽपि नष्टे वत्से गौरिव दीना सती ॥२१॥ तमेव सा कपिलं हरिं ध्यायन्ती तादृशे गृहे निस्स्पृहा बभूव ॥२२॥ ततः स्वसुतोक्तं भगवद्रूपं ध्यायन्ती॥२३॥ भक्तियोगेन वैराग्येण ज्ञानेन ॥२४॥

गृहोद्यानं कुसुमितै रम्यं बह्वमरद्रुमैः ॥ कूजद्विहङ्गमिथुनं गायन्मत्तमधुव्रतम् ॥ १८ ॥ यत्र प्रविष्टमात्मानं विबुधानुचरा जगुः ॥ वाप्यामुत्पलगन्धिन्यां कर्दमेनोपलालितम् ॥१९॥ हित्वा तदीप्सिततममप्याखण्डलयोषिताम् ॥ किंचिचकार वदनं पुत्रविश्लेषणातुरा ॥ २० ॥ वनं प्रव्रजिते पत्यावपत्यविरहातुरा ॥ ज्ञाततत्त्वाऽप्यभून्नष्टे वत्से गौरिव वत्सला ॥२१॥ तमेव ध्यायति देवमपत्यं कपिलं हरिम् ॥ बभूवाचिरतो वत्स निस्स्पृहा तादृशे गृहे ॥ २२ ॥ ध्यायन्ती भगवद्रूपं यदाह ध्यानगोचरम् ॥ सुतः प्रसन्नवदनं समस्तव्यस्तचिन्तया ॥ २३ ॥ भक्तिप्रवाहयोगेन वैराग्येण बलीयसा ॥ युक्तानुष्ठानजातेन ज्ञानेन ब्रह्महेतुना ॥ २४ ॥ विशुद्धेन तदाऽऽत्मानमात्मना विश्वतोमुखम् ॥ स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ २५ ॥ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवापत्तित्वात् क्षीणक्लेशाऽऽप्तनिर्वृतिः ॥ २६ ॥ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ न सस्मार तदाऽऽत्मानं स्वप्ने दृष्टमिवोत्थितः ॥ २७ ॥ तद्देहः परतः पोष्योऽप्यकृशश्चाध्यसंभवात् ॥ बभौ मलैरवच्छन्नः सधूम इव पावकः ॥ २८ ॥ स्वाङ्गं तपोयोगमयं मुक्तकेशं गताम्बरम् ॥ दैवगुप्तं न बुबुधे वासुदेवप्रविष्टधीः ॥ २९ ॥ एवं सा कपिलोक्तेन मार्गेणाचिरतः परम् ॥ आत्मानं ब्रह्मनिर्वाणं भगवन्तमवाप ह ॥ ३० ॥

शुद्धेन मनसाऽऽत्मानं च सर्वगतं ध्यायन्ती ॥२५॥ ब्रह्मरूपे भगवति कृतमतिः क्षीणक्लेशाः ॥२६॥ विवृत्तगुणभ्रमा स्वदेहं न सस्मार ॥२७॥ तस्या देहः कर्दमसृष्टविद्याधरीभिः पोष्यो मलैरवच्छन्नोऽपि सधूमः पावक इव बभौ ॥ २८ ॥ वासुदेवे प्रविष्टधीः सती मुक्तकेशं गताम्बरं स्वांगं न बुबुधे ॥ २९ ॥ एवं सा कपिलोक्तमार्गेण नित्यमुक्तं भगवन्तं प्राप ॥ ३० ॥

हे विदुर ! यत्र सा सिद्धिं प्राप्ता तत् त्रैलोक्यविश्रुतं नाम्ना सिद्धपदमासीत् ॥३१॥ तस्याः शरीरं सिद्धिदा नाम नदी बभूव ॥ ३२॥ कपिलोऽपि मातरमामन्त्र्य पितुराश्रमात् प्रागुदीचीं दिशं ययौ ॥३३॥ सिद्धचारणगन्धर्वादिभिः स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥३४॥ सांख्याचार्यैरभिष्टुतस्त्रयाणां लोकानां शान्त्यै योगमास्थायास्ते ॥३५॥ हे विदुर ! कपिलस्य देवहूत्याश्च पवित्रः संवादस्ते कथितः ॥३६॥

तद्वीरासीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ॥ नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥ तस्यास्तद्योगविधुतमार्त्यं मर्त्यमभूत्सरित् ॥ स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धिसेविता ॥३२॥ कपिलोऽपि महायोगी भगवान् पितुराश्रमात् ॥ मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥ सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥ स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥ आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुतः ॥ त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥ ३५ ॥ एतन्निगदितं तात यत्पृष्टोऽहं तवानघ ॥ कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ॥ ३६ ॥ य इदमनुशृणोति योऽभिधत्ते कपिलमुनेर्मतमात्मयोगगुह्यम् ॥ भगवति कृतधीः सुपर्णकेतावुपलभते भगवत्पदारविंदम् ॥ ३७॥ इति श्रीभागवते महापुराणे तृतीयस्कन्धे कपिलोपाख्याने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

यः कपिलमतं शृणोति श्रावयति वा स भगवति कृतधीर्भगवत्पदारविन्दं प्राप्नोति ॥ ३७ ॥ इति श्रीभागवतचूर्णिकायां तृतीयस्कन्धे कपिलचरितं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

समाप्तोऽयं तृतीयः स्कन्धः ॥ ३ ॥

---

इदं पुस्तकं क्षेमराज श्रीकृष्णदास श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गल्ली खम्बाटा लैन ) स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् ) मुद्रणागारेऽङ्कयित्वा प्रकाशितम् ।

## अथ सचूर्णिके श्रीमद्भागवते चतुर्थस्कन्धः प्रारभ्यते

# चतुर्थस्कंधः


अत्रिऋषि-
पृथुराजा-
विदुर-
मैत्रेय-
आकुती-
रुद्र
ऋषि-
प्रसूति-
दक्षादि
वीरभद्र-
यज्ञ-
पुण्यजन
प्राचीनबर्हि-
नारद-

श्रीकृष्णायनमः ॥ अथैकत्रिंशताऽध्यायैर्विसर्गस्तुर्य ईर्यते ॥ विसर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिः कृतः॥१॥तत्रतु प्रथमेऽध्याये मनुकन्यान्वयाः पृथक् ॥ वर्ण्यन्ते यत्र यज्ञादिमूर्तिभिः प्रभवो हरेः ॥२॥ मैत्रेय उवाच ॥ हे विदुर! स्वायंभुवमनोः शतरूपायां भार्यायाम् आकूतिः१, देवहूतिः२, प्रसूतिः ३, इति तिस्र कन्याः जज्ञिरे ॥१॥ मनू रुचये पुत्रिकाधर्मेणाकूतिं प्रादात् ॥२॥ तस्यां रुचिर्मिथुनमजीजनत् ॥३॥ तत्र यः पुरुषः स यज्ञ इति संज्ञया विष्णोरवतारः । या स्त्री सा दक्षिणानाम्नी लक्ष्म्याः अंशभूता ॥४॥ मनुस्तं यज्ञं गृहे निनाय ॥५॥ यज्ञो दक्षिणामुदवहत् ।

श्रीकृष्णाय नमः ॥ मैत्रेय उवाच ॥ मनोस्तु[1] शतरूपायां तिस्रः कन्याश्च[2] जज्ञिरे ॥ आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ॥ १ ॥ आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः ॥ पुत्रिकाधर्ममाश्रित्य[3] शतरूपानुमोदितः ॥ २ ॥ प्रजापतिः स भगवान्रुचिस्तस्यामजीजनत् ॥ मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना[4] ॥ ३ ॥ यस्तयोः पुरुषः साक्षाद्विष्णुर्यज्ञस्वरूपधृक् ॥ या स्त्री सा दक्षिणा भूतेरंशभूताऽनपायिनी ॥ ४ ॥ आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम् ॥ स्वायंभुवो मुदा युक्तो रुचिर्जग्राह दक्षिणाम् ॥ ५ ॥ तां कामयानां भगवानुवाह यजुषां[5] पतिः ॥ तुष्टायां तोषमापन्नोऽजनयद्द्वादशात्मजान् ॥ ६ ॥ तोषः प्रतोषः संतोषः भद्रः शान्तिरिडस्पतिः ॥ इध्मः कविर्विभुः स्वह्नः सुदेवो रोचनो द्विषट् ॥७॥ तुषिता नाम ते देवा आसन्स्वायंभुवान्तरे ॥ मरीचिमिश्रा ऋषयो यज्ञः सुरगणेश्वरः ॥८॥ प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ ॥ तत्पुत्रनप्तृणामनुवृत्तं तदन्तरम् ॥९॥

तस्यां द्वादशः पुत्रान् जनयामास ॥६॥ ते च तोषः प्रतोषः संतोषो भद्रः शान्तिरिडस्पतिरिध्मः कविर्विभुः स्वह्नः सुदेवो रोचनः इति द्वादश ॥७॥ ते स्वायंभुवान्तरे हविर्भुजस्तुषिता नाम देवा आसन् तत्र मरीच्यादय ऋषयो यज्ञो हरेरवतारः । स एवेन्द्रः ॥८॥ प्रियव्रतोत्तानपादौ मनुपुत्रौ तत्पुत्रपौत्रादीनां वंशैः पालितं तन्मन्वन्तरम् ॥ ९ ॥

---

१ तुशब्दादन्यतोऽपि पुत्रलाभः सूचितः । २ चकाराद् द्वौ पुत्रौ च प्रियव्रतोत्तानपादौ । ३ "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥" इति भाषाबन्धेन कन्यादानं पुत्रिकाधर्मः । ४ ईश्वरध्यानेन । ५ यजुषां मन्त्राणां वा पतिर्विष्णुः ।

तथा कर्दमाय देवहूतिं प्रादात् । तच्चरितं तृतीयस्कन्धे उक्तम् ॥१०॥ तथा ब्रह्मपुत्राय दक्षाय प्रसूतिं ददौ यत्सर्गस्त्रिलोक्यां विस्तृतः॥११॥
अतः परं कर्दमस्य नवकन्यानां वंशं शृणु ॥१२॥ मरीचेः पत्नी कला कश्यपं पूर्णिमानं च सुषुवे ययोर्वंशेन जगत् पूरितम् ॥१३॥ कश्यप-
वंशं षष्ठे वक्ष्ये । पूर्णिमा विरजं विश्वगं देवकुल्यां कन्यां च सुषुवे या जन्मान्तरे गंगा बभूव ॥१४॥ अत्रेः पत्नी नाम्नाऽनसूया त्रीन् दत्तदु-
र्वासस्सोमान् विष्णुरुद्रब्रह्मांशान् पुत्रान् जज्ञे॥१५॥विदुर उवाच ॥ अत्रेर्गृहे ईशाः किं कर्तुमिच्छवो जाता एतद् वद ॥१६॥ मैत्रेय उवाच ॥

देवहूतिमदात्तात कर्दमायात्मजां मनुः ॥ तत्संबन्धि श्रुतप्रायं भवता गदतो मम ॥ १० ॥ दक्षाय ब्रह्मपुत्राय प्रसूतिं
भगवान्मनुः ॥ प्रायच्छद्यत्कृतः सर्गस्त्रिलोक्यां विततो महान् ॥ ११ ॥ याः कर्दमसुताः प्रोक्ता नव ब्रह्मर्षिपत्नयः ॥
तासां प्रसूतिप्रसवं प्रोच्यमानं निबोध मे ॥ १२ ॥ पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा ॥ कश्यपं पूर्णिमानं च
ययोरापूरितं जगत् ॥ १३ ॥ पूर्णिमासूत विरजं विश्वगं च परंतप ॥ देवकुल्यां हरेः पादशौचाद्याऽभूत्सरिद्दिवः
॥ १४ ॥ अत्रेः पत्न्यनसूया त्रीञ्जज्ञे सुयशसः सुतान् ॥ दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान् ॥ १५ ॥ विदुर उवा-
च ॥ अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहेतवः ॥ किंचिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो ॥१६॥ मैत्रेय उवाच ॥
ब्रह्मणा नोदितः सृष्टावत्रिर्ब्रह्मविदां वरः ॥ सह पत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः ॥ १७ ॥ तस्मिन्प्रसूनस्त-
बकपलाशाशोककानने ॥ वार्भिः स्रवद्भिरुद्घुष्टे निर्विन्ध्यायाः समन्ततः ॥ १८ ॥ प्राणायामेन संयम्य मनो वर्षशतं
मुनिः ॥ अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः ॥ १९ ॥ शरणं तं प्रपद्येऽहं य एव जगदीश्वरः ॥ प्रजामात्मसमां
मह्यं प्रयच्छत्विति चिन्तयन् ॥ २० ॥

ब्रह्मणा सृष्टिं कर्तुं प्रेरितोऽत्रिः पत्न्या ऋक्षाख्यं कुलाद्रिं प्राप्य ॥१७॥ तत्र पलाशाशोकवृक्षमण्डिते निर्विन्ध्यानामनद्याः जलैर्नादिते वने ॥१८॥
एकेन पदा तिष्ठन् वर्षशतं वायुभोजनः प्राणायामेन मनो नियम्य तपसि स्थितः सन् इदमाह ॥१९॥ यः ईश्वरोऽस्ति स मे स्वतुल्यां प्रजां
यच्छतु इति तं शरणं प्राप ॥ २० ॥

१ विष्णुरुद्रब्रह्मणामंशैः संभूतान् । २ शीतोष्णबाधाहीनः ।

ततो मुनेर्मूर्ध्नो निर्गतेन योगाग्निना तप्यमानं त्रिलोकं दृष्ट्वा ॥२१॥ ते त्रयो देवाः अत्रेराश्रमं ययुः ॥२२॥ तदाऽत्रिस्तेषां सन्निधिना प्रकाशितमनाः सन्॥२३॥ तान् वृषहंसगरुडरूढान् त्रिशूलकमण्डलुचक्रधरान् कृपावलोकनेन सहास्यवदनेन प्रसन्नत्वेन ज्ञापितान् त्रीन् दृष्ट्वा प्रणम्य पूजयामास। ततस्तेषां तेजसा हते नेत्रे निमील्य ॥ २४ ॥२५॥ कृताञ्जलिर्मधुरवाण्या तुष्टाव ॥२६॥ अत्रिरुवाच। हे देवाः। युष्मान् प्रण-

तप्यमानं त्रिभुवनं प्राणायामैधसाऽग्निना ॥ निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः ॥ २१ ॥ अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः ॥ वितायमानयशसस्तदाश्रमपदं ययुः ॥ २२ ॥ तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः ॥ उत्तिष्ठन्नेकपादेन ददृशे विबुधर्षभान् ॥ २३ ॥ प्रणम्य दण्डवद्भूमावुपतस्थेऽर्हणाञ्जलिः ॥ वृषहंससुपर्णस्थान्स्वैस्स्वैश्चिह्नैश्च चिह्नितान् ॥२४॥ कृपावलोकेन हसद्वदनेनोपलम्भितान् ॥ तद्रोचिषा प्रतिहते निमील्य मुनिरक्षिणी ॥ २५ ॥ चेतस्तत्प्रवणं युञ्जन्नस्तावीत्संहताञ्जलिः ॥ श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः ॥ २६ ॥ अत्रिरुवाच ॥ विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः ॥ ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्तेभ्यः क एव भवतां म इहोपहूतः ॥ २७ ॥ एको मयेह भगवान्विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम् ॥ अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिह विस्मयो मे ॥ २८ ॥ मैत्रेय उवाच ॥ इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः ॥ प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो ॥ २९ ॥

तोऽस्मि। मयैक एवाहूतः स क इति भवद्भिरेव कथनीयः ॥ २७ ॥ किंच मया पुत्रोत्पत्त्या एकश्चित्तीकृतः मनसो दूराः यूयं त्रयः कथमत्रागताः ॥ २८ ॥ मैत्रेय उवाच ॥ इति अत्रेर्वचः श्रुत्वा त्रयस्ते प्रहस्योचुः ॥ २९ ॥

---

१ प्रणायाम एधः संदीपकं यस्य तेन। २ उत्कर्षेण तिष्ठन्। ३ कृपयाऽवलोको यस्मिंस्तेन। ४ उपचारैः। 'विबुधप्रधानैः' इत्यपि पाठः। ५ चित्तेनैक्यं नीतः।

हे अत्रे ! यदेकं तत्त्वं त्वं ध्यायसि त एव वयं त्रयः प्राप्ताः । अस्मद्दर्शनमन्यथा न ॥३०॥ अतोऽस्मदंशभूतास्ते पुत्राः भविष्यन्ति ॥३१॥ एवं वरं दत्त्वा ताभ्यां पूजिता देवाः जग्मुः॥३२॥ततो ब्रह्मणोंऽशेन सोमो विष्णोरंशेन दत्तः शिवांशेन दुर्वासा बभूव॥३३॥ब्रह्मणस्तृतीयपुत्रस्याङ्गिरसः पत्नी श्रद्धानाम्नी सिनीवाली कुहूः राकाऽनुमतिरिति चतस्रः कन्याः असूत ॥३४॥ अङ्गिरसः उतथ्यो बृहस्पतिरिति द्वौ पुत्रौ ॥३५॥

देवा ऊचुः ॥ यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा ॥ सत्संकल्पस्य ते ब्रह्मन्यद्वै ध्यायति ते वयम् ॥ ३० ॥ अथास्मदंशभूतास्त आत्मजा लोकविश्रुताः ॥ भवितारोऽङ्ग भद्रं ते विस्रप्स्यन्ति च ते यशः ॥ ३१ ॥ एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः ॥ सभाजितास्तयोः सम्यग्दम्पत्योर्मिषतोस्ततः ॥ ३२ ॥ सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् ॥ दुर्वासाः शंकरस्यांशो निबोधाङ्गिरसः प्रजाः ॥३३॥ श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः ॥ सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा ॥ ३४ ॥ तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषेऽन्तरे ॥ उतथ्यो भगवान्साक्षाद् ब्रह्मिष्ठश्च बृहस्पतिः ॥३५॥ पुलस्त्योऽजनयत्पत्न्यामगस्त्यं च हविर्भुवि ॥ सोऽन्यजन्मनि दह्राग्निर्विश्रवाश्च महातपाः ॥३६॥ तस्य यक्षपतिर्देवः कुबेरस्त्विडविडासुतः ॥ रावणः कुम्भकर्णश्च तथाऽन्यस्यां विभीषणः ॥ ३७ ॥ पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान् ॥ कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते ॥ ३८ ॥ क्रतोरपि क्रिया भार्या वालखिल्यानसूयत ॥ ऋषीन्षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा ॥ ३९ ॥ ऊर्जायां जज्ञिरे पुत्रा वसिष्ठस्य परंतप ॥ चित्रकेतुप्रधानास्ते सप्त ब्रह्मर्षयोऽमलाः ॥ ४० ॥

चतुर्थः पुलस्त्यो हविर्भुवि भार्यायामगस्त्यं विश्रवसं च जनयामास ॥३६॥ विश्रवा इडविडायां कुबेरं केशिन्यां रावणं कुम्भकर्णं विभीषणं च जनयामास ॥३७॥ पञ्चमः पुलहो गत्यां भार्यायां कर्मश्रेष्ठं वरीयांसं सहिष्णुं चाजनयत् ॥३८॥ षष्ठः क्रतुः क्रियाभार्यायां षष्टिसहस्राणि वालखिल्यान् ऋषीन् जनयामास ॥ ३९ ॥ वसिष्ठः ऊर्जायां सप्त पुत्रानजनयत् ॥ ४० ॥

१ तत्स्थानात् ।

चित्रकेतुः सुरोचिर्विरजाः मित्रः उल्बणो वसुभृद्यानो द्युमांश्चेति ॥४१॥ अथर्वा चित्त्यां पत्न्यां धृतव्रतं दध्यश्चं चाजनयत् ॥४२॥ भृगुः ख्यात्यां भार्यायां धातृविधातारौ श्रियं कन्यां चाजनयत् ॥४३॥ मेरुरायतिं नियतिं च कन्ये धातृविधात्रोर्ददौ । धाताऽऽयत्यां मृकण्डमजनयत् । मृकण्डात् मार्कण्डेयः । विधाता नियत्यां प्राणमजनयत् ॥४४॥ प्राणाद् वेदशिराः । भृगोरन्यपुत्रः कविः ॥ कवेरुशनाः ॥४५॥ हे विदुर ! एषा ते कर्दमकन्यासंततिः कथिता । सा शृण्वतः पापं हरति ॥४६॥ ब्रह्मपुत्रो दक्षः प्रसूत्यां षोडश कन्याः अजनयत् ॥ ४७ ॥ तासु त्रयोदश धर्माय

चित्रकेतुः सुरोचिश्च विरजा मित्र एव च ॥ उल्बणो वसुभृद्यानो द्युमाञ्छक्त्यादयोऽपरे ॥ ४१ ॥ चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम् ॥ दध्यञ्चमश्वशिरसं भृगोर्वंशं निबोध मे ॥४२॥ भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् ॥ धातारं च विधातारं श्रियं च भगवत्पराम् ॥ ४३ ॥ आयतिं नियतिं चैव सुते मेरुस्तयोरदात् ॥ ताभ्यां तयोरभवतां मृकण्डः प्राण एव च ॥ ४४ ॥ मार्कण्डेयो मृकण्डस्य प्राणाद्वेदशिरा मुनिः ॥ कविश्च भार्गवो यस्य भगवानुशना सुतः ॥ ४५ ॥ त एते मुनयः क्षत्तर्लोकान् सर्गैरभावयन् ॥ एष कर्दमदौहित्रसंतानः कथितस्तव ॥ शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः ॥ ४६ ॥ प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः ॥ तस्यां ससर्ज दुहितॄः षोडशामललोचनाः ॥ ४७ ॥ त्रयोदशादाद्धर्माय तथैकामग्नये विभुः ॥ पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे ॥ ४८ ॥ श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः ॥ बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः ॥ ४९ ॥ श्रद्धाऽसूत शुभं मैत्री प्रसादमभयं दया ॥ शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत ॥ ५० ॥ योगं क्रियोन्नतिर्दर्पमर्थं बुद्धिरसूयत ॥ मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम् ॥ ५१ ॥

एकामग्नये एकां पितृभ्यः एकां शिवाय ॥४८॥ अथ धर्मपत्नीनामानि शृणु । श्रद्धा १ मैत्री २ दया ३ शान्तिः ४ तुष्टिः ५ पुष्टिः ६ क्रिया ७ उन्नतिः ८ बुद्धि ९ मेधा १० तितिक्षा ११ ह्रीः १२ मूर्तिः १३ इति ॥४९॥ श्रद्धा धर्मस्त्री शुभं पुत्रं प्रासूत । मैत्री प्रासादम् । दया अभयम् । शान्तिः सुखम् । तुष्टिः मुदम् । पुष्टिः स्मयम् ॥५०॥ क्रिया योगम् । उन्नतिर्दर्पम् । बुद्धिरर्थम् मेधा स्मृतिम् । तितिक्षा क्षेमम् । ह्रीः प्रश्रयम् ॥ ५१ ॥

मूर्तिर्नरनारायणावृषी प्रासूत ययोर्जन्मनीदं विश्वमानन्दं प्राप ॥ ५२ ॥ तदा वाद्यानि वादयांचक्रिरे पुष्पवृष्टयः पेतुः ॥ ५३ ॥ मुनयस्तुष्टुवुः गन्धर्वादयो जगुः । देव्यो ननृतुः । ब्रह्मादयस्तुष्टुवुः ॥५४॥ हे ईश ! यः स्वमायया यस्मिन्नात्मनि विश्वं रचितवान् यश्च तमात्मानं धर्मगृहे प्रकटितवान् तस्मै पुरुषाय नमः ॥ ५५ ॥ सोऽयमस्मान् दयावलोकनेन पश्यतु ॥ ५६ ॥ एवं देवैः स्तुतौ गन्धमादनपर्वतं ययतुः ॥ ५७ ॥

मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी ॥ ययोर्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतम् ॥ ५२ ॥ मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः ॥ दिव्यवाद्यन्त तूर्याणि पेतुः कुसुमवृष्टयः ॥ ५३ ॥ मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिन्नराः ॥ नृत्यन्ति स्म स्त्रियो देव्य आसीत् परममङ्गलम् ॥ देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ॥ ५४ ॥ देवा ऊचुः ॥ यो मायया विरचितं निजयाऽऽत्मनीदं खे रूपभेदमिव तत्प्रतिचक्षणाय ॥ एतेन धर्मसदने ऋषिमूर्तिनाऽद्य प्रादुश्चकार पुरुषाय नमः परस्मै ॥ ५५ ॥ सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान् सत्त्वेन नः सुरगणाननुमेयतत्त्वः ॥ दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपतारविन्दम् ॥ ५६ ॥ एवं सुरगणैस्तात भगवन्तावभिष्टुतौ ॥ लब्धावलोकैर्ययतुरर्चितौ गन्धमादनम् ॥ ५७ ॥ ताविमौ वै भगवतो हरेरंशाविहागतौ ॥ भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥ ५८ ॥ स्वाहाभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् ॥ पावकं पवमानं च शुचिं च हुतभोजनम् ॥ ५९ ॥ तेभ्योऽग्नयः समभवंश्चत्वारिंशच्च पञ्च च ॥ त एवैकोनपञ्चाशत् साकं पितृपितामहैः ॥ ६० ॥



तौ हरेरंशाविह भुवो भारनाशाय कृष्णार्जुनौ जातौ ॥५८॥ अग्निः स्वाहायां पावकं पवमानं शुचिं चाजनयत् ॥५९॥ तेभ्यस्त्रिभ्यः पञ्चचत्वारिंशत् ( ४५ ) अग्नयो जाताः । एवं सर्वे त्रयः पितरः एकः पितामहः तैः सहैकोनपञ्चाशत् ( ४९ ) बभूवुः ॥ ६० ॥

१ गन्धर्वनगरमिव । २ तस्यात्मनः प्रकाशाय । ३ रूपेणेति शेषः । ४ ऋषेर्मूर्तिराकारो यस्मिंस्तेन । ५ आत्मानमिति शेषः । ६ तिरस्कुर्वता विलोकनेनेत्यन्वयः । ७ यदूद्वहः कृष्णः, कुरूद्वहोऽर्जुनश्च ।

ब्रह्मवादिभिर्वैदिककर्मणि येषां नामभिरिष्टयः क्रियन्ते॥६१॥अग्निष्वात्ताः बर्हिषदाद्याः स्वधायां भार्यायां वयुनां धारिणीं च द्वे कन्ये प्रासुवत । ते द्वे कन्ये ब्रह्मवादिन्यौ जाते ॥६२॥६३॥ शिवस्य पत्नी सती तु पुत्रं न लेभे ॥६४॥यतो दक्षकोपादप्रौढैव योगेन देहं जहौ ॥ ६५ ॥ इति श्रीभागवत चू० चतुर्थस्कन्धे प्रथमोऽध्यायः ॥१॥ द्वितीये प्रथमाध्यायोपक्षिप्तभवदक्षयोः ॥ विद्वेषो वर्ण्यते हेतुर्विश्वसृग्यज्ञसंभवः ॥१॥ विदुर

वैतानिके कर्मणि यन्नामभिर्ब्रह्मवादिभिः ॥ आग्नेय्य इष्टयो यज्ञे निरूप्यन्तेऽग्नयस्तु ते ॥ ६१ ॥ अग्निष्वात्ता बर्हिषदः सौम्याः पितर आज्यपाः ॥ साग्नयोऽनग्नयस्तेषां पत्नी दाक्षायणी स्वधा ॥६२॥ तेभ्यो दधार कन्ये द्वे वयुनां धारिणीं स्वधा ॥ उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे॥६३॥ भवस्य पत्नी तु सती भवं देवमनुव्रता ॥ आत्मनः सदृशं पुत्रं न लेभे गुणशीलतः॥६४॥पितर्यप्रतिरूपे स्वे भवायानागसे रुषा ॥ अप्रौढैवात्मनाऽऽत्मानमजहाद्योगसंयुता ॥६५॥ इति श्रीभा० म० चतुर्थस्कन्धे मनुकन्यान्वये नरनारायणावतारवर्णनं नाम प्रथमोऽध्यायः ॥१॥ विदुर उवाच ॥ भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः ॥ विद्वेषमकरोत् कस्मादनादृत्यात्मजां सतीम्॥१॥कस्तं चराचरगुरुं निर्वैरं शान्तविग्रहम् ॥ आत्मारामं कथं द्वेष्टि जगतो दैवतं महत्॥२॥एतदाख्याहि मे ब्रह्मन् जामातुः श्वशुरस्य च॥ विद्वेषस्तु यतः प्राणांस्तत्यजे दुस्त्यजान् सती॥३॥ मैत्रेय उवाच ॥ पुरा विश्वसृजां सत्रे समेताः परमर्षयः ॥ तथाऽमरगणाः सर्वे सानुगा मुनयोऽग्नयः ॥४॥ तत्र प्रविष्टमृषयो दृष्ट्वाऽर्कमिव रोचिषा ॥ भ्राजमानं वितिमिरं कुर्वन्तं तन्महत्सदः ॥ ५ ॥ उदतिष्ठन् सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः ॥ ऋते विरिञ्चिं शर्वं च तद्भासाऽऽक्षिप्तचेतसः ॥ ६ ॥

उवाच ॥ हे मैत्रेय ! शीलवतां श्रेष्ठे शिवे दक्षः स्वकन्यामनादृत्य कस्मात् द्वेषमकरोत् ॥१॥दक्षश्चराचरगुरुं निर्वैरं शिवं प्रति कुतो द्वेष्टि ॥२॥ हे मैत्रेय ! जामातुः श्वशुरस्य च द्वेषे किं कारणं यतः सती प्राणान् जहौ तद्वद ॥३॥ मैत्रेय उवाच । पुरा विश्वसृजां यज्ञे ऋषयो देवाः अग्नयः आगताः ॥ ४ ॥ तत्सभायां तेजसा सूर्यमिव दक्षमागतं दृष्ट्वा ब्रह्माणं शिवं च विना ते सर्वे उदतिष्ठन् ॥ ५ ॥ ६ ॥

---

१ 'निरुप्यन्त, इ० पा० । २ सोमपाः । ३ येषामग्नौकरणमस्ति ते साग्नयः तद्रहितास्त्वनग्नयः । ४ प्रतिकूले । ५ दक्षमिति शेषः ।

चू० अ० २

भा० च० ॥९॥

तदा सर्वैः सत्कृतो दक्षो ब्रह्माणं नत्वा तदाज्ञया निषसाद ॥७॥ ततोऽनुत्थितं शिवं दृष्ट्वा चक्षुर्भ्यां दहन्निव वीक्ष्य जगाद ॥८॥ हे सभासदः ! अज्ञानात् मत्सराच्च न ब्रुवतो वाक्यं श्रूयताम् ॥९॥ अयं तु लोकपालानां यशोघ्नो निर्लज्जो येन सत्पथस्त्यक्तः ॥१०॥ एष मे शिष्यतां प्राप्तः यतो विप्राग्निसमक्षं मृगनेत्रायाः मे पुत्र्याः पाणिं मर्कटलोचनोऽयं जग्राह ॥११॥ अयं प्रत्युत्थाननमनयोग्ये मयि वाण्याऽपि सत्कारं

सदसस्पतिभिर्दक्षो भगवान् साधुसत्कृतः ॥ अजं लोकगुरुं नत्वा निषसाद तदाज्ञया ॥७॥ प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत् तदनादृतः ॥ उवाच वामं चक्षुर्भ्यामभिवीक्ष्य दहन्निव ॥ ८ ॥ श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः ॥ साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात् ॥ ९ ॥ अयं तु लोकपालानां यशोघ्नो निरपत्रपः ॥ सद्भिराचरितः पन्था येन स्तब्धेन दूषितः ॥ १० ॥ एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत् ॥ पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत् ॥ ११ ॥ गृहीत्वा मृगशावाक्ष्याः पाणिं मर्कटलोचनः ॥ प्रत्युत्थानाभिवादार्हे वाचाऽप्यकृत नोचितम् ॥ १२ ॥ लुप्तक्रियायाशुचयेऽमानिने भिन्नसेतवे ॥ अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम् ॥ १३ ॥ प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः ॥ अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन् ॥ १४ ॥ चिताभस्मकृतस्नानः प्रेतस्रङ्न्रस्थिभूषणः ॥ शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः ॥ * पतिं प्रमथभूतानां तमोमात्रात्मकात्मनाम् ॥१५॥ तस्मा उन्मादनाथाय नष्टशौचाय दुर्हृदे ॥ दत्ता बत मया साध्वी चोदिते परमेष्ठिना ॥ १६ ॥

॥९॥

नाकरोत् ॥ १२ ॥अशुचये क्रियाभ्रष्टायास्मै शूद्राय वेदमिव कन्यां प्रादाम् ॥ १३ ॥ अयं श्मशानेषु भूतप्रेतगणैःसह नग्नः उन्मत्तवत् हसन् रुदन् पर्यटति ॥ १४ ॥ चिताभस्मकृतस्नानो मुण्डमालाधरोऽस्थिभूषणः शिवोऽप्यशिवो भूतादीनां पतिः ॥ १५ ॥ एवंभूताय दुष्टचित्तायोन्मादनाथाय ब्रह्मणा प्रेरितेन मया साध्वी दत्ता ॥ १६ ॥

---

१ वक्रं यथा स्यात्तथा । २ वेदलक्षणाम् ३ विकीर्णकेशः । ४ शिव इति नाममात्रं यस्य सः । * त्रिपुण्ड्रधृक् त्रिशूली च त्रिनेत्रः सर्पभूषणः । इति अधिकः पाठः ।

मैत्रेय उवाच ॥ एवं दक्षो विनिन्द्य क्रुद्धः सन् शिवं शशाप ॥ १७ ॥ अयं यज्ञे देवैः सह भागं न लभतां यतो देवगणाधमः ॥ १८ ॥ दक्षः सर्वैर्निषिध्यमानोऽपि शिवाय शापं दत्त्वा स्वगृहं ययौ ॥१९॥ तदा नन्दीश्वरो दक्षाय ये च तन्निन्दामन्वमोदन्त तेभ्यः शापान् ददौ ॥ २० ॥ यो भगवते द्रुह्यति स परमार्थतो विमुखो भवेत् ॥२१॥ अयं दक्षो गृहेषु सक्तो नित्यं कर्म करोति॥२२॥अतः स्त्रीकामोऽस्तु यः आत्मगतिं न

मैत्रेय उवाच ॥ विनिन्द्यैवं स गिरिशमप्रतीपमवस्थितम् ॥ दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे ॥१७॥ अयं तु देवयजन इन्द्रोपेन्द्रादिभिर्भवः ॥ सह भागं न लभतां देवैर्देवगणाधमः ॥ १८ ॥ निषिध्यमानः स सदस्यमुख्यैर्दक्षो गिरित्राय विसृज्य शापम् ॥ तस्माद्विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम् ॥ १९ ॥ विज्ञाय शापं गिरिशानुगाग्रणीर्नन्दीश्वरो रोषकषायदूषितः ॥ दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥ ॥ २० ॥ य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि ॥ द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥ २१ ॥ गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया ॥ कर्मतन्त्रं वितनुते वेदवादविपन्नधीः ॥ २२ ॥ बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः ॥ स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात् ॥ २३ ॥ विद्याबुद्धिरविद्यायां कर्ममय्यामसौ जडः ॥ संसरन्त्विह ये चामुमनु शर्वावमानिनम् ॥ २४ ॥ गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा ॥ मथ्ना चोन्मथितात्मानः संमुह्यन्तु हरद्विषः ॥ २५ ॥ सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः ॥ वित्तदेहेन्द्रियारामा याचका विचरन्त्विह ॥ २६ ॥ तस्यैवं वदतः शापं श्रुत्वा द्विजकुलाय वै ॥ भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् ॥ २७ ॥

वेद तस्मादयं पशुतुल्यो बस्तमुखो भवतु ॥ २३ ॥ अयमविद्यायां विद्याबुद्धिरस्तु । ये च दक्षमनुवर्तन्ते ते जन्ममरणादियातनामनुभवन्तु ॥ २४ ॥ हरद्विषः पुष्पिण्याः गिरः प्ररोचनेन उन्मथितमनसः कर्मसु रक्ता भवन्तु ॥ २५ ॥ ये दक्षमनुसृताः ब्राह्मणास्ते विद्यातपोव्रतयुक्ता अपि सर्वभक्षाः सन्तः इह याचका विचरन्तु ॥ २६ ॥ एवं द्विजकुलाय दत्तं शापं श्रुत्वा भृगुस्तं शशाप ॥ २७ ॥

---

१ दक्षशरीरं श्रेष्ठं मत्वा । २ वेदे येऽर्थवादास्चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिवादास्तैर्विनष्टा धीर्यस्य सः । ३ देहादिः परः ।

ये शिवव्रतधरास्ते पाखण्डिनो भवन्तु ॥२८॥ किंच नष्टशौचा जटाभस्मास्थिधारिणः शिवदीक्षायां प्रविशन्तु॥२९॥ किंच यूयं वेदं ब्राह्मणांश्च निन्दथ अतः पाखण्डं श्रिताः भवत॥३०॥ यं पूर्वं ऋषयः आश्रितवन्तः यस्मिन् जनार्दनो मूलम् ॥३१॥ तं शुद्धं वेदं विगर्ह्य पाखण्डं यात, यत्र भूतराड् देवता ॥३२॥ मैत्रेय उवाच॥ततः शिवो भृगुवाक्यं श्रुत्वा खिन्न इव सानुगो निश्चक्राम ॥३३॥ ते विश्वसृजः सहस्रपरिवत्सरान्

भवव्रतधरा ये च ये च तान् समनुव्रताः ॥ पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः[1] ॥ २८ ॥ नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः ॥ विशन्तु शिवदीक्षायां यत्र दैवं[2] सुरासवम्[3] ॥ २९ ॥ ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिन्दथ ॥ सेतुं विधारणं पुंसामतः पाखण्डमाश्रिताः ॥ ३० ॥ एष एव हि लोकानां शिवः पन्थाः सनातनः ॥ यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥ ३१ ॥ तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम् ॥ विगर्ह्य यात पाखण्डं दैवं वो यत्र भूतराट् ॥ ३२ ॥ मैत्रेय उवाच ॥ तस्यैवं ददतः शापं भृगोः स भगवान् भवः ॥ निश्चक्राम ततः किंचिद्विमना इव सानुगः ॥ ३३ ॥ तेऽपि विश्वसृजः सत्रं सहस्रपरिवत्सरान् ॥ संविधाय महेष्वास[4] यत्रेज्य ऋषभो हरिः ॥ ३४ ॥ आप्लुत्यावभृथं यत्र गङ्गायमुनयाऽन्विता ॥ विरजेनात्मना सर्वे स्वं स्वं धाम ययुस्ततः ॥ ३५ ॥ इति श्रीभागवते म० चतुर्थस्कन्धे दक्षशापोनाम द्वितीयोऽध्यायः ॥ २ ॥ मैत्रेय उवाच ॥ सदा विद्विषतोरेवं कालो वै ध्रियमाणयोः ॥ जामातुः श्वशुरस्यापि सुमहानतिचक्रमे ॥ १ ॥ यदाऽभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना ॥ प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् ॥ २ ॥

यज्ञं कृत्वा ॥३४॥ प्रयागे अवभृथस्नानं कृत्वा सर्वे स्वं धाम ययुः ॥३५॥ इति श्रीभा० म० चू० चतुर्थस्कन्धे द्वितीयोऽध्यायः ॥२॥ तृतीये तु सती तातयज्ञोत्सवदिदृक्षया । गमिष्यन्ती महेशेन वारिता नीतिहेतुभिः ॥ १ ॥ मैत्रेय उवाच । हे विदुर ! सदा जामातुः श्वशुरस्यापि द्विषतोः सतोर्महान् कालो जगाम ॥ १ ॥ यदा ब्रह्मणा प्रजापतीनामाधिपत्ये दक्षोऽभिषिक्तस्तदा तस्यातिगर्वो जातः ॥ २ ॥

१ प्रतिकूलाः । २ पूज्य देवतावत् । ३ सुरा माध्वी पैष्टी गौडी च, आसवं तालादिमद्यम् । ४ हे विदुर ।

स एकदा वाजपेयेनेष्ट्वा सेश्वरान् तिरस्कृत्य बृहस्पतिसवं नाम क्रतुं प्रारेभे ॥३॥ तस्मिन् यज्ञे सर्वा देवर्षिपितृदेवताः सपत्नीकाः आययुः॥४॥ सती नभसि खेचराणां प्रजल्पतां सतां पितृयज्ञमहोत्सवं श्रुत्वा ॥ ५ ॥ विमानैर्देवस्त्रियः स्वलंकृत्य व्रजन्तीर्दृष्ट्वा हर्षेण शिवं बभाषे ॥६॥७॥ सत्युवाच । हे शिव ! साम्प्रतं ते श्वशुरस्य गृहे यज्ञमहोत्सवः आरब्धः किल । तत्र देवाः व्रजन्ति॥८॥ किंच सभर्तृका मम भगिन्यस्तत्र गमि-

इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च ॥ बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ॥३॥ तस्मिन्ब्रह्मर्षयः सर्वे देवर्षिपितृदे-
वताः ॥ आसन् कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः ॥ ४ ॥ तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम् ॥ सती दाक्षा-
यणी देवी पितुर्यज्ञमहोत्सवम् ॥ ५ ॥ व्रजन्तीः सर्वतो दिग्भ्य उपदेववरस्त्रियः ॥ विमानयानाः सप्रेष्ठा निष्ककण्ठीः
सुवाससः ॥६॥ दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुण्डलाः ॥ पतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत ॥ ७ ॥ सत्यु-
वाच ॥ प्रजापतेस्ते श्वशुरस्य साम्प्रतं निर्यापितो यज्ञमहोत्सवः किल ॥ वयं च तत्राभिसराम वाम ते यद्यर्थिताऽमी
विबुधा व्रजन्ति हि ॥८॥ तस्मिन् भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यन्ति सुहृद्दिदृक्षवः ॥ अहं च तस्मिन् भवता-
ऽभिकामये सहोपनीतं परिबर्हमर्हितुम् ॥ ९ ॥ तत्र स्वसॄर्मे ननु भर्तृसंमिता मातृष्वसॄः क्लिन्नधियं च मातरम् ॥ द्रक्ष्ये
चिरोत्कण्ठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम् ॥ १० ॥ त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति
गुणत्रयात्मकम् ॥ तथाऽप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षेऽभव मे भवक्षितिम् ॥ ११ ॥ पश्य प्रयान्तीरभवान्ययो-
षितोऽप्यलंकृताः कान्तसखा वरूथशः ॥ यासां व्रजद्भिः शितिकण्ठ मण्डितं नभो विमानैः कलहंसपाण्डुभिः ॥१२॥

ष्यन्ति । पश्य पश्य । अहं च भवता सह तत्र गत्वाऽलंकारादिकं स्वीकर्तुमिच्छामि ॥९॥ तत्र बहुकालतो मातृभगिन्यादीन् दिदृक्षे । हे मृड ! ऋषिभिः प्रवर्तमानं यज्ञध्वजं दिदृक्षे ॥१०॥ हे भगवन् ! त्वय्येतदाश्चर्यं न तथाऽपि योषिदहं तव स्वरूपं न वेद्मि । अतो जन्मभूमिं द्रष्टुमिच्छामि ॥११॥ हे अभव ! अन्ययोषितः संबन्धरहिता अपि सभर्तृकाः प्रयान्तीः पश्य । यासां विमानैर्नभो व्याप्तम् ॥ १२ ॥

---

१ प्रवर्तितः । २ स्नेहार्द्रचित्ताम् । ३ गुणत्रयात्मकमाश्चर्यमेतद्विश्वं त्वयि । अत एव तवाश्चर्यजनकं नेत्यर्थः ।

पितृगृहे कौतुकं श्रुत्वा गन्तुमिच्छा कथं न स्यात् । भर्तुर्गुरोः पितुश्च गृहमनाहूता अपि यान्ति॥१३॥ तस्माद् भवान् मे वाञ्छितं कर्तुमर्हति । त्वया सह गन्तुं मे प्रसीद ॥१४॥ शुक उवाच । शिवः एवं सतीवाक्यं श्रुत्वा विश्वसृजां समक्षतो दक्षो यदाह तत् स्मरन् जगाद ॥१५॥ शिव उवाच । शोभने ! संबन्धिष्वनाहूता अपि गच्छन्तीति यत् त्वयोक्तं तद् योग्यमेव । तथाऽपि तेऽहंकारेण मदेन क्रोधेन च दोषदृष्टयो न भवन्ति

कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेङ्गते ॥ अनाहुता अप्यभियन्ति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम् ॥१३॥ तन्मे प्रसीदेदममर्त्य वाञ्छितं कर्तुं भवान् कारुणिको बतार्हति ॥ त्वयाऽऽत्मनोऽर्धेऽहमदभ्रचक्षुषा निरूपिता माऽनुगृहाण याचितः ॥ १४ ॥ ऋषिरुवाच ॥ एवं गिरित्रः प्रिययाऽभिभाषितः प्रत्यभ्यधत्त प्रहसन् सुहृत्प्रियः ॥ संस्मारितो मर्मभिदः कुवागिषून् यानाह को विश्वसृजां समक्षतः ॥१५॥ श्रीभगवानुवाच ॥ त्वयोदितं शोभनमेव शोभने अनाहुता अप्यभियन्ति बन्धुषु ॥ ते यद्यनुत्पादितदोषदृष्टयो बलीयसाऽनात्म्यमदेन मन्युना ॥ १६ ॥ विद्यातपोवित्तवपुर्वयःकुलैः सतां गुणैः षड्भिरसत्तमेतरैः ॥ स्मृतौ हतायां भृतमानदुर्दृशः स्तब्धा न पश्यन्ति हि धाम भूयसाम् ॥ १७ ॥नैतादृशानां स्वजनव्यपेक्षया गृहान् प्रतीयादनवस्थितात्मनाम् ॥ येऽभ्यागतान् वक्रधियाऽभिचक्षते आरोपितभ्रूभिरमर्षणाक्षिभिः ॥ १८ ॥ तथाऽरिभिर्न व्यथते शिलीमुखैः शेतेऽर्दिताङ्गो हृदयेन दूयता ॥ स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ १९ ॥ व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियाऽऽत्मजानामसि सुभ्रु संमता ॥ अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात् कः परितप्यते यतः ॥ २० ॥

चेत् तर्हि गन्तव्यम् ॥१६॥ विद्यातपोवित्तवपुर्वयःकुलैर्यें गर्विष्ठास्ते श्रेष्ठानां तेजो न पश्यन्ति ॥ १७ ॥ एवंभूतानां तेषां स्वजनसङ्गेच्छा न येऽभ्यागतान् वक्रधिया पश्यन्ति तद्गृहान् न गन्तव्यम् ॥१८॥ वक्रधियां स्वानां दुर्भाषणैर्मर्मताडितो दिवानिशं यथा तप्यति तथा बाणैर्न व्यथते ॥१९॥ त्वं दक्षकन्यानां मध्ये मान्याऽसि । अथापि पितुर्मानं न लप्स्यसे यतो ममाश्रयात् दक्षस्त्वयि परितप्यते ॥ २० ॥

१ अनल्पज्ञानेन । २ देहादावभिमानेन । ३ चेति शेषः । ४ गुणैर्हेतुभिरुपेता अपि । ५ अरिभिः शिलीमुखैरर्दिताङ्ग इत्यन्वयः ।

मनसा दुःखितेन्द्रियो दक्षो निरहंकारिणां पुण्यकीर्त्यादिभिरेषां पदं प्राप्तुमशक्तः सन् परं द्वेष्टि ॥२१॥ हे सुमध्यमे ! प्रत्युत्थानादिकं जनैर्मिथो यद् विधीयते तत् प्राज्ञैः कायिकव्यापारायोगादन्तर्यामिदृष्ट्या वासुदेवाय विधीयते॥२२॥मया तस्मिन् सत्त्वे वासुदेवो नमस्कारेण सेव्यते॥२३॥ दक्षः सर्वत्र व्याप्तं हरिं न जानाति। तस्मात् त्वया पिताऽपि न निरीक्ष्यः। यः पूर्वं यज्ञगतं मां निरपराधं दुर्वचोभिस्तिरस्कृतवान्॥२४॥हे देवि!

पापच्यमानेन हृदाऽऽतुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् ॥ अकल्प एषामधिरोढुमञ्जसा पदं परं द्वेष्टि यथाऽसुरा हरिम् ॥२१॥ प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे ॥ प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥२२॥ सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ॥ सत्त्वे च तस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे मनसा विधीयते ॥ २३ ॥ तत्ते निरीक्ष्यो न पिताऽपि देहकृद्दक्षो मम द्विट् तदनुव्रतांश्च ये ॥ यो विश्वसृग्यज्ञगतं वरोरु मामनागसं दुर्वचसाऽकरोत्तिरः ॥ २४ ॥ यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति ॥ संभावितस्य स्वजनात् पराभवो यदा स सद्यो मरणाय कल्पते ॥ २५ ॥ इति श्रीभा० महापु० चतुर्थ० उमारुद्रसंवादे तृतीयोऽध्यायः ॥ ३ ॥ मैत्रेय उवाच ॥ एतावदुक्त्वा विरराम शंकरः पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन् ॥ सुहृद्दिदृक्षुः परिशङ्किता भवान्निष्क्रामती निर्विशती द्विधाऽऽस सा ॥ १ ॥ सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद्रुदत्यश्रुकलातिविह्वला ॥ भवं भवान्यप्रतिपूरुषं रुषा प्रधक्ष्यतीवैक्षत जातवेपथुः ॥ २ ॥

मद्वचोऽतिक्रम्य यदि गच्छसि तर्हि तव भद्रं न। संभावितस्याकीर्तिर्मरणाय कल्पते॥२५॥इति श्रीभागवतचू० चतुर्थे०तृतीयोऽध्यायः॥३॥चतुर्थे तु पतिं हित्वा गता पित्राऽवमानिता। रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते॥१॥मैत्रेय उवाच। शंकरः उभयत्र पत्न्या अङ्गनाशं ज्ञात्वा इत्युक्त्वा च विरराम। सा सुहृदो दिदृक्षुर्निष्क्रामती निर्विशती द्विधा बभूव॥१॥ सा स्नेहाद् रुदती विह्वला सती शिवं रुषा भस्मीकरिष्यन्तीवैक्षत॥२॥

१ जीव । २ यस्मिन् । ३ प्रतीयते । ४ नमसेति पाठान्तरम् । ५ अनुज्ञाने बलान्निवारणे च । ६ समपुरुषान्तररहितम् ।

ततः सती विनिःश्वस्य तं विहाय पित्रोर्गृहं जगाम ॥३॥ तदैकां शीघ्रं गच्छतीं सतीं शिवानुचराः सहस्रशो वृषेन्द्रसहिताः मणिमन्मदादयोऽन्वगच्छन् ॥ ४ ॥ तदा तत्क्रीडासाधनसारिकाकन्दुकदर्पणादीन् प्रगृह्य श्वेतच्छत्रादिभिस्तां वृषेन्द्रमारोप्य शोभिताः सन्तो ययुः ॥ ५ ॥ ततो देवर्षिभिर्व्याप्तं वेदघोषनादितं यज्ञस्थानं समाविशत् ॥ ६ ॥ तदा तत्रागतां तां सतीं दक्षभयाद् भगिनीर्जननीं च विना कश्चन नादृत-

ततो विनिश्श्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा ॥ पित्रोरगात् स्त्रैणविमूढधीर्गृहान् प्रेम्णाऽऽत्मनो योऽर्धमदात् सतां प्रियः ॥ ३ ॥ तामन्वगच्छन् द्रुतविक्रमां सतीमेकां त्रिनेत्रानुचराः सहस्रशः ॥ सपार्षदयक्षा मणिमन्मदादयः पुरोवृषेन्द्रास्तरसा गतव्यथाः ॥ ४ ॥ तां सारिकाकन्दुकदर्पणाम्बुजश्वेतातपत्रव्यजनस्रगादिभिः ॥ गीतायनैर्दुन्दुभिशङ्खवेणुभिर्वृषेन्द्रमारोप्य विटङ्किता ययुः ॥ ५ ॥ आब्रह्मघोषोर्जितयज्ञवैशसं विप्रर्षिजुष्टं विबुधैश्च सर्वशः ॥ मृद्दार्वयःकाञ्चनदर्भचर्मभिर्निसृष्टभाण्डं यजनं समाविशत् ॥ ६ ॥ तामागतां तत्र न कश्चनाद्रियद्विमानितां यज्ञकृतो भयाज्जनः ॥ ऋते स्वसॄर्वै जननीं च सादराः प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा ॥ ७ ॥ सौदर्यसंप्रश्नसमर्थवार्तया मात्रा च मातृष्वसृभिश्च सादरम् ॥ दत्तां सपर्यां वरमासनं च सा नादत्त पित्राऽप्रतिनन्दिता सती ॥ ८ ॥ अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ ॥ अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा ॥ ९ ॥ जगर्ह साऽमर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् ॥ स्वतेजसा भूतगणान् समुत्थितान् निगृह्य देवी जगतोऽभिश्रृण्वतः ॥१०॥ श्रीदेव्युवाच ॥ न यस्य लोकेऽस्त्यतिशायनः प्रियस्तथाऽप्रियो देहभृतां प्रियात्मनः ॥ तस्मिन् समस्तात्मनि मुक्तवैरके ऋते भवन्तं कतमः प्रतीपयेत् ॥ ११ ॥

वान् ॥ ७ ॥ ततो मातृष्वस्रादिभिः सादरं दत्तां पूजां सा न जग्राह ॥ ८ ॥ तं यज्ञमरुद्रभागं वीक्ष्य लोकान् धक्ष्यन्तीव चुकोप ॥९॥ तदा कर्ममार्गाभ्यासोपजातगर्वं दक्षं विनिन्द्य तस्य दक्षस्य वधायोत्थितान् स्वगणान्निवार्य सर्वेषां शृण्वतां जगाद ॥१०॥ श्रीदेव्युवाच ॥ अहो ! यस्य लोके प्रियोऽप्रियश्च न, तस्मिन् शिवे त्वां विना कः प्रतिकूलमाचरेत् ॥ ११ ॥

भवादृशाः परेषां गुणेषु दोषानेव गृह्णन्ति, न तु गुणान्। केचित्साधवस्तु गुणेषु गुणान्दोषेषु दोषान्गृह्णन्ति केचित् परगुणपरमाणून्पर्वती कुर्वन्ति ते महत्तमाः तेषु त्वमघं पश्यसि ॥१२॥ किंच दुष्टेषु सर्वदा महतां निन्दा। एतदाश्चर्यं न ॥१३॥ यस्य द्व्यक्षरं शिवेति नाम सकृदुच्चारितं सत् शीघ्रं पापं हन्ति तं शिवममंगलस्त्वं द्वेक्षि ॥१४॥ यस्य पादपद्मं ब्रह्मानन्दरसार्थिभिः सेवितं तस्मिन् त्वं द्रुह्यसि॥१५॥किंच श्मशाने जटाः

दोषान् परेषां हि गुणेष्वसाधवो गृह्णन्ति केचिन्न भवादृशा द्विज ॥ गुणांश्च फल्गून् बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम् ॥ १२ ॥ नाश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिन्दा कुणपात्मवादिषु[1] ॥ सेर्ष्यं महापूरुषपादपांसुभिर्निरस्त तेजस्सु तदेव शोभनम् ॥ १३ ॥ यदद्व्यक्षरं नाम गिरेरितं नृणां सकृत् प्रसङ्गादघमाशु हन्ति तत्॥ पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः ॥ १४ ॥ यत्पादपद्मं महतां मनोलिभिर्निषेवितं ब्रह्मरसासवार्थिभिः ॥ लोकस्य यद्वर्षति चाशिषोऽर्थिनस्तस्मै भवान् द्रुह्यति विश्वबन्धवे ॥ १५ ॥ किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाश्श्मशाने ॥ तन्माल्यभस्मनृकपाल्यवसत्[2] पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥ १६ ॥ कर्णौ पिधाय निरयाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने[4] ॥ छिन्द्यात् प्रसह्य रुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स धर्मः ॥ १७ ॥ अतस्तवोत्पन्नमिदं कलेवरं न धारयिष्ये शितिकण्ठगर्हिणः ॥ जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते ॥ १८ ॥ न वेदवादाननुवर्तते मतिः स्व एव लोके रमतो महामुनेः ॥ तथा गतिर्देवमनुष्ययोः पृथक् स्व एव धर्मे न परं क्षिपेत् स्थितः ॥ १९ ॥

अवकीर्य क्रीडतस्तस्य धारितं भस्मादि ब्रह्मादयो दधति ॥१६॥ यदा सभायां धर्मरक्षकः ईशो निन्द्यते तदा कर्णौ पिधाय निर्गच्छेत्। समर्थश्चेत् जिह्वां छित्त्वा स्वयमपि प्राणान् त्यजेदिति धर्मः॥१७॥अतः शिवनिन्दकात् त्वत्तः उत्पन्नं देहं न धारयिष्ये भक्षितान्नस्य वमनं विना न पुंसः शुद्धिः ॥ १८ ॥ स्वात्मन्येव रममाणस्य मुनेर्मतिर्विधिनिषेधरूपान् वेदवादान् प्रति न प्रवर्तते ॥ १९ ॥

१ जडशरीरमेवात्मेति वादिषु। २ तस्य श्मशानस्य माला भस्मादि यस्यास्ति सः। ३ मर्तुं मारयितुं वाऽशक्तः। ४ असृणिभिरङ्कुशैः।

किंच ब्रह्मणि शिवे प्रवृत्तं निवृत्तं च कर्म किंचिदपि न प्राप्नोति॥२०॥हे पितः ! अस्मदाश्रिता अणिमादिसिद्धयो युष्माकं न सन्ति ॥२१॥ हे दक्ष ! कुजनस्य तव संबन्धात् मम लज्जा भवति ॥ अतो यो महतां विप्रियकर्ता तस्मात् यज्जन्म तद् धिक् ॥२२॥ किंच विनोदेनापि शिवो हे दाक्षायणीति त्वत्संबन्धवाचकं नाम कदा गृह्णाति तदा दुःखितचित्ता भवामि । तस्मात् निश्चितमिमं देहं त्यक्ष्यामि॥२३॥ मैत्रेय उवाच॥

कर्म प्रवृत्तं च निवृत्तमप्यृतं वेदे विविच्योभयलिङ्गमाश्रितम् ॥ विरोधि तद्योगपदैककर्तरि द्वयं तथा ब्रह्मणि कर्म नर्च्छति ॥ २० ॥ मा वः पदव्यः पितरस्मदास्थिता या यज्ञशालासु न धूमवर्त्मभिः ॥ तदन्नतृप्तैरसुभृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः ॥ २१ ॥ नैतेन देहेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना ॥ व्रीडा ममाभूत् कुजनप्रसङ्गतस्तज्जन्म धिग्यो महतामवद्यकृत् ॥ २२ ॥ गोत्रं त्वदीयं भगवान् वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः ॥ व्यपेतनर्मस्मितमाशु तद्ध्यहं व्युत्स्रक्ष्य एतत् कुणपं त्वदङ्गजम् ॥ २३ ॥ मैत्रेय उवाच ॥ इत्यध्वरे दक्षमनूद्य शत्रुहन् क्षिताबुदीचीं निषसाद शान्तवाक् ॥ स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्य दृग्योगपथं समाविशत् ॥ २४ ॥ कृत्वा समानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः ॥ शनैर्हृदि स्थाप्य धियोरसि स्थितं कण्ठाद् भ्रुवोर्मध्यमनिन्दिताऽनयत् ॥ २५ ॥ एवं स्वदेहं महतां महीयसा मुहुः समारोपितमङ्कमादरात् ॥ जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम् ॥ २६ ॥

सती यज्ञे दक्षं प्रत्येवमुक्त्वा गृहीतमौनोत्तरमुखी सती योगमार्गं प्राविशत् ॥ २४ ॥ आदौ प्राणापानौ नाभिचक्रे समौ कृत्वा ततः उदानवायुमुत्थाप्य ततो हृदयादिष्वानीय भ्रुवोर्मध्यं निनाय ॥२५॥ एवं देहं त्यक्तुमिच्छन्ती सा गात्रेषु वाय्वग्निधारणां दधार ॥ २६ ॥



---

१ अग्निहोत्रादि । २ शमादि । ३ व्यवस्थाप्य । ४ उभयं रागवैराग्यलक्षणं लिङ्गं चिह्नमधिकारिविशेषणं यस्मिन् । ५ उभयकर्म । ६ न युज्यते उभयकर्माकरणे न दोषः । ७ अग्निभिश्च युज्यन्त इत्यर्थः । ८ अव्यक्तहेतवः इच्छामात्रप्रभवत्वात् । ९ नाम । १० गतं क्रीडास्मितं यथा स्यात्तथा । ११ दृशम् । १२ सहेति शेषः । १३ खरेणेत्यर्थः ।

ततो भर्तुश्चरणाम्बुजं ध्यायन्ती सद्यः समाधिजाग्निना देहं ददाह ॥ २७ ॥ तदा खे भुवि च महान् हाहाकारो बभूव सर्वे ऊचुश्च । केन सती प्रकोपिता ॥ २८ ॥ अहो यस्य चराचरं प्रजास्तस्य दौर्जन्यं पश्यत । सती येनावमानिता सती प्राणान् जहौ ॥२९॥ अयं शिवद्वेषी महतीं दुष्कीर्तिं प्राप्स्यति यतो मरणायोद्यतां स्वां सुतां न निवारितवान् ॥३०॥ ततः सत्याः देहत्यागं दृष्ट्वा शिवगणाः धृतायुधाः दक्षं हन्तुमुदतिष्ठन् ॥ ३१ ॥ तेषां वेगं दृष्ट्वा भृगुर्यज्ञघ्नघ्नेन मन्त्रेण दक्षिणाग्नौ जुहाव ॥३२॥ तदा ऋभवो नाम देवाः सहस्रशः उत्पन्नाः॥३३॥तदा ज्वलि-

ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम् ॥ ददर्श देहं हतकल्मषा सती सद्यः प्रजज्वाल समाधिजाग्निना ॥ २७ ॥ तत्पश्यतां खे भुवि चाद्भुतं महद्धाहेति वादः सुमहानजायत ॥ हन्त प्रिया दैवतमस्य देवी जहावसून्केन सती प्रकोपिता ॥ २८ ॥ अहो अनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य चराचरं प्रजाः ॥ जहावसून् यद्विमतात्मजा सती मनस्विनी मानमभीक्ष्णमर्हति ॥ २९ ॥ सोऽयं दुर्मर्षहृदयो ब्रह्मध्रुक् च लोकेऽपकीर्तिं महतीमवाप्स्यति ॥ यदङ्गजां स्वां पुरुषद्विड्उद्यतां न प्रत्यषेधन्मृतयेऽपराधतः ॥ ३० ॥ वदत्येवं जने सत्या दृष्ट्वाऽसुत्यागमद्भुतम् ॥ दक्षं तत्पार्षदा हन्तुमुदतिष्ठन्नुदायुधाः ॥३१॥ तेषामापततां वेगं निशाम्य भगवान्भृगुः ॥ यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ॥ ३२ ॥ अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा ॥ ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ॥ ३३ ॥ तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः ॥ हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ॥ ३४ ॥ इति श्रीभाग० म० चतुर्थ० सतीदेहोत्सर्गो नाम चतुर्थोऽध्यायः ॥ ४ ॥ मैत्रेय उवाच ॥ भवो भवान्या निधनं प्रजापतेरसत्कृताया अवगम्य नारदात् ॥ स्वपार्षदसैन्यं च तदध्वरर्भुभिर्विद्रावितं क्रोधमपारमादधे ॥ १ ॥

तकाष्ठायुधैस्तैर्हन्यमानाः शिवानुचराः दिशो दुद्रुवुः ॥इतिश्रीभा० म० चू० चतु० चतुर्थोऽध्यायः॥४॥पञ्चमे तु सतीदेहत्यागमाकर्ण्य शंकरः ॥ वीरभद्रं रुषोत्पाद्य तेन दक्षमघातयत् ॥ १ ॥ मैत्रेय उवाच ॥ हे विदुर ! शिवो दक्षेणावमानितायाः भवान्याः निधनं नारदात् श्रुत्वा स्वसैन्यं पलायितं च श्रुत्वा क्रुद्धः ॥ १ ॥

१ पूज्यतमस्य । २ दक्षेण । ३ शिवद्वेषी ४ शिवानुचराः ५ देदीप्यमानैः ।

जटामुत्कृत्य सहसोत्थितः सन् तां भुवि विससर्ज ॥ २ ॥ ततो जटायाः सकाशात् कृष्णवर्णः सहस्रबाहुः त्रिसूर्यनेत्रःकालदंष्ट्रोऽनेकायुधधरः शरीरेण स्वर्गं स्पृशन् वीरभद्रः उत्पन्नः ॥३॥ ततः किं करोमीति ब्रुवन्तं वीरभद्रं शिव आह । हे वीरभद्रः ! त्वं मेंऽशोऽसि । अतो मद्गणानां त्वं मुख्यः सन् सयज्ञं दक्षं जहि ॥४॥ तदा वीरभद्रः शिवं परिक्रम्य नदद्भी रुद्रपार्षदैः महान्तकान्तकं शूलं समुद्यम्य यज्ञं जगाम ॥५॥६॥

क्रुद्धस्सुदष्टौष्ठपुटः स धूर्जटिर्जटां तडिद्वह्निसटोग्ररोचिषम् ॥ उत्कृत्य रुद्रः सहसोत्थितो हसन्गम्भीरनादो विससर्ज तां भुवि ॥ २ ॥ ततोऽतिकायस्तनुवा स्पृशन् दिवं सहस्रबाहुर्घनरुक् त्रिसूर्यदृक् ॥ करालदंष्ट्रो ज्वलदग्निमूर्धजः कपालमाली विविधोद्यतायुधः ॥३॥ तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान्भूतनाथः ॥ दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्रभटांशको मे ॥४॥ आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम् ॥ मेने तदाऽऽत्मानमसङ्गरंहसा महीयसां तात सहः सहिष्णुम् ॥५॥ अन्वीयमानः सह रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत्सुभैरवम् ॥ उद्यम्य शूलं जगदन्तकान्तकं स प्राद्रवद्घोषणभूषणाङ्घ्रिः ॥६॥ अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् ॥ तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ॥ ७ ॥ वाता न वान्ति नहि सन्ति दस्यवः प्राचीनबर्हिर्जीवति होग्रदण्डः ॥ गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते ॥८॥ प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यैष तस्य ॥ यत्पश्यन्तीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागाम् ॥९॥ यस्त्वन्तकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेन्द्रः ॥ वितत्य नृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक् ॥ १० ॥

तदा ऋत्विजो यजमानः सदस्याः उत्तरस्यां दिशि रेणुं वीक्ष्यैतत् किमिति चिन्तयामासुः ॥ ७ ॥ किंच वाताः न वान्ति । चौराः न सन्ति गावो न शीघ्रं नीयन्ते । एवं सति रजः कुतः अधुना लोकः किं प्रलयाय कल्पते ॥८॥ तदा दक्षपत्न्याद्याः स्त्रियः सत्या अपमानस्येदं फलमिति जगदुः ॥ ९ ॥ यः प्रलये: विकीर्णजटाकलापः शूलाग्रे प्रोतितदिग्गजेन्द्रो हर्षेण नृत्यति ॥ १० ॥



१ उत्पाटय । २ घनश्यामः । ३ अप्रतिघातवेगेन । ४ तदानींतनो राजा । ५ अवज्ञातवान् ।

तमसह्यतेजसं कोपयतो ब्रह्मणोऽपि किं स्वस्ति स्यात् न स्यात् अन्यस्य का कथा ॥ ११ ॥ मखे जनेनैवमुच्यमाने तदा सहस्रशः उत्पाताः उत्पेतुः ॥ १२ ॥ तावदनेकरूपैरुदायुधैः रुद्रानुचरैर्यज्ञोऽवारुध्यत ॥ १३ ॥ केचित् प्राग्वंशं बभञ्जुः । अपरे पत्नीशालाम् । अन्ये आग्नीध्रशालां तथा यजमानगृहम् ॥ १४ ॥ केचित् यज्ञपात्राणि बभञ्जुः । केचिदग्नीन्नाशयामासुः । केचित् कुण्डेषु मूत्रयामासुः केचित् मेखलाः

अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या ॥ करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥ बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मखे महात्मनः ॥ उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् ॥ १२ ॥ तावत्स रुद्रानुचरैर्मखो महान्नानायुधैर्वामनकैरुदायुधैः ॥ पिङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत ॥ १३ ॥ केचिद्बभञ्जुः प्राग्वंशं पत्नीशालां तथापरे ॥ सदं आग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ॥ कुण्डेष्वमूत्रयन् केचिद्बिभिदुर्वेदिमेखलाः ॥ १५ ॥ अबाधन्त मुनीनन्य एके पत्नीरतर्जयन् ॥ अपरे जगृहुर्देवान् प्रत्यासन्नान्पलायितान् ॥ १६ ॥ भृगुं बबन्ध मणिमान् वीरभद्रः प्रजापतिम् ॥ चण्डीशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥ १७ ॥ सर्वं एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ॥ तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान् भवः ॥ भृगोर्लुलुञ्चे सदसि योऽहसत् श्मश्रु दर्शयन् ॥ १९ ॥

बिभिदुः ॥ १५ ॥ अन्ये मुनीन् बबाधिरे । एके पत्नीस्तर्जयामासुः । अपरे पलायितान् देवान् जगृहुः ॥१६॥ मणिमान् भृगुं बबन्ध वीरभद्रो दक्षम् । चण्डीशः पूषणम् । नन्दी भगम् ॥ १७ ॥ सर्वे ऋत्विजः सदस्याः देवाः पाषाणैरर्द्यमानाः दुद्रुवुः ॥ १८ ॥ वीरभद्रो जुह्वतो भृगोः श्मश्रूण्युत्पाटितवान् ॥ १९ ॥

---

१ यज्ञशालायाः पूर्वपश्चिमस्तम्भयोरर्पितं पूर्वपश्चिमायतं काष्ठम् । २ यज्ञशालायाः पश्चिमतः पत्नीशालाम् । ३ यज्ञशालाया पुरतः स्थित्तं सदः मण्डपम् ४ सदसः पुरो हविर्धानम् । तस्योत्तरत आग्नीध्रशालाम् । ५ तद्विहारं यजमानगृहम् । ६ महानसं पाकभोजनशालाम् ।

भर्गं भुवि पातयित्वा तस्य नेत्रे उद्धृतवान् ॥ २० ॥ पूष्णो दन्तान् पातयामास यो रुद्रे निन्द्यमाने दन्तान् दर्शयन् जहास ॥२१॥ वीरभद्रो दक्षशिरः खड्गेन छिन्दन्नपि समुद्धर्तुं नाशकत् ॥ २२ ॥ तदा मन्त्रसहितैः शस्त्रैरभिन्नत्वचं दक्षं दृष्ट्वा सविस्मयः सन् चिरं ध्यात्वा ॥ २३ ॥ पशुवत्कण्ठपीडनादिना दक्षशिरः आहरत् ॥ २४ ॥ तदा शिवगणानां साधुवादोऽभूत । ब्राह्मणादयः शोकं चक्रुः ॥ २५ ॥ वीरभद्रो दक्षिणाग्नौ तच्छिरो हुत्वा देवयजनं दग्ध्वा कैलासं ययौ ॥ २५ ॥ इति श्रीभा० म० चू० चतुर्थे० पञ्चमोऽध्यायः ॥ ५ ॥ षष्ठे तु देवसंघेन सह गत्वा भवं

भगस्य नेत्रे भगवान् पातितस्य रुषा भुवि ॥ उज्जहार सदःस्थोऽक्ष्णा यः शपन्तमसूसुचत् ॥ २० ॥ पूष्णश्चापातयद्दन्तान् कालिङ्गस्य यथा बलः ॥ शप्यमाने गरिमणि योऽहसद्दर्शयन् दतः ॥ २१ ॥ आक्रम्योरसि दक्षस्य शितधारेण हेतिना ॥ छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यम्बकस्तदा ॥ २२ ॥ शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः ॥ विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ २३ ॥ दृष्ट्वा संज्ञपनं योगं पशूनां स पतिर्मखे ॥ यजमानपशोः कस्य कायात्तेनाहरच्छिरः ॥ २४ ॥ साधुवादस्तदा तेषां कर्म तत्तस्य शंसताम् ॥ भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः ॥ २५ ॥ जुहावैतच्छिरस्तस्मिन् दक्षिणाग्नावमर्षितः ॥ तद्देवयजनं दग्ध्वा प्रातिष्ठद्गुह्यकालयम् ॥ २६ ॥ इति श्रीभा० म० चतु० वीरभद्रेण दक्षयज्ञविध्वंसनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ मैत्रेय उवाच ॥ अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः ॥ शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः ॥ १ ॥ उच्छिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्या भयाकुलाः ॥ स्वयंभुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् ॥२॥ उपलभ्य पुरैवैतद्भगवानब्जसंभवः ॥ नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ॥ ३ ॥ तदाकर्ण्य विभुःप्राह तेजीयसि कृतागसि ॥ क्षेमाय तत्र सा भूयान्न प्रायेण बुभूषताम् ॥ ४ ॥

विधिः । सान्त्वयामास दक्षादिजीवितार्द्यर्थमादरात् ॥ १ ॥ मैत्रेय उवाच ॥ हे विदुर ! अथ सर्वे देवगणाः रुद्रसैन्यैः पराजिताः शूलपट्टिशादिभिश्छिन्नसर्वाङ्गाः भयाकुलाः ब्रह्मणे नमस्कृत्य न्यवेदयन् ॥ १ ॥ २ ॥ पूर्वमिदं भावि ज्ञात्वा ब्रह्मा विष्णुश्च दक्षयज्ञं न जग्मतुः ॥ ३ ॥ ब्रह्मा देवानां वाक्यं श्रुत्वा प्राह । हे देवा ! तेजीयस्यपराधः क्षेमाय न स्यात् ॥ ४ ॥

१ बुभूषा अपराधित्वेन भवनेच्छा । २ अपराधित्वेन भवनमिच्छताम् ।

यूयं कृतापराधाः यतस्तद्भागं लुप्तवन्तः । अतस्तत्पादौ प्रगृह्य क्षिप्रं प्रसादयध्वम् ॥ ५ ॥ यज्ञस्य पुनः संधानं प्रार्थयमानाः सन्तो यूयं यस्मिन् कुपिते सति सपालो लोको नश्येत् तं शिवं क्षमापयध्वम् ॥६॥ अहमिन्द्राद्याश्च तद्वीर्यबलप्रमाणं न विद्मः ॥७॥ इत्युक्त्वा ब्रह्मा देवर्षिपितृप्रजेशैः सह कैलासं ययौ ॥ ८ ॥ अथ कैलासं वर्णयति । योगसिद्धैः सेवितं गन्धर्वकिन्नरादिभिर्वृतम् ॥ ९ ॥ अनेकमणिमयशृङ्गैर्युतम्

अथापि यूयं कृतकिल्बिषा भवं ये बर्हिषो भागभाजं परादुः ॥ प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्मम् ॥५॥ आशासाना जीवितमध्वरस्य लोकः सपालः कुपिते न यस्मिन् ॥ तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः ॥६॥ नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् ॥ विदुः प्रमाणं बलवीर्ययोर्वा यस्यात्मतन्त्रस्य क उपायं विधित्सेत् ॥७॥ स इत्थमादिश्य सुरानजस्तैः समन्वितः पितृभिः सप्रजेशैः ॥ ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥८॥ जन्मौषधितपोमन्त्रयोगसिद्धैर्नरेतरैः ॥ जुष्टं किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा ॥९॥ नानामणिमयैः शृंगैर्नानाधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः ॥ १० ॥ नानामलप्रस्रवणैर्नानाकन्दरसानुभिः ॥ रमणं विहरन्तीनां रमणैः सिद्धयोषिताम् ॥ ११ ॥ मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम् ॥ प्लावितै रक्तकण्ठानां कूजितैश्च पतत्रिणाम् ॥ १२ ॥ आह्वयन्तमिवोद्धस्तैर्द्विजान् कामदुघैर्द्रुमैः ॥ व्रजन्तमिव मातंगैर्गृणन्तमिव निर्झरैः ॥१३॥ मन्दारैः पारिजातैश्च सरलैश्चोपशोभितम् ॥ तमालैः शालतालैश्च कोविदारासनार्जुनैः ॥१४॥ चूतैः कदम्बैर्नीपैश्च नागपुन्नागचम्पकैः ॥ पाटलाशोकबकुलैः कुन्दैः कुरबकैरपि ॥ १५ ॥ स्वर्णार्णशतपत्रैश्च वीरेणुक[1]जातिभिः ॥ कुब्जकैर्मल्लिकाभिश्च माधवीभिश्च मण्डितम् ॥ पनसोदुम्बराश्वत्थप्लक्षन्यग्रोधहिंगुभिः ॥ १६ ॥

अनेकद्रुमलताभिर्व्याप्तं नानामृगपक्षिभिर्व्याप्तम् ॥१०॥ रमणैः सह क्रीडन्तीनां सिद्धयोषितां रतिप्रदम् ॥ ११ ॥ मयूरशब्दैर्नादितं भ्रमरैर्मूर्च्छितं कोकिलानां स्वरैरन्यपक्षिणां कूजितैश्च ॥ १२ ॥ उच्चशाखाद्रुमैः पक्षिणः आह्वयन्तमिव लक्षितम् ॥ १३ ॥ मन्दारैः पारिजातैस्तमालैरर्जुनैः ॥ १४ ॥ कदम्बैः पुन्नागैश्चम्पकैरशोकबकुलैः शोभितम् ॥ १५ ॥ मल्लिकाभिर्माधवीभिः पनसैरुदुम्बरैः पिप्पलैर्वटैः ॥ १६ ॥

१ "वररेणुक" इ० पा० ।

पूगैर्जम्बुभिः खजूरादिभिः ॥ १७ ॥ अन्यैर्वृक्षजातिभिश्च मण्डितं कुमुदोत्पलकह्लारादिसमृद्धिभिः ॥ १८ ॥ सरोवरेषु शब्दितं पक्षिवृन्दैः शोभितम् ॥१९॥ किंच मृगवानरवराहसिंहऋक्षन्याघ्रगोमहिष्यादिभिः सेवितम् ॥२०॥ एवमनेकदिव्यकौतुकैर्युक्तं वीक्ष्य देवाद्याः विस्मयं प्रापुः ॥२१॥ तत्र गिरावलकां पुरीं सौगन्धिकं वनं च ॥२२॥ पुराद् बाह्यतो नन्दाऽलकनन्देति द्वे सरितौ ददृशुः ॥ २३ ॥ ययोः प्रविश्य पुंसः सिञ्चन्त्यः

भूर्जैरोषधिभिः पूगै राजपूगैश्च जम्बुभिः ॥ खर्जूराम्रातकाम्राद्यैः प्रियालमधुकेङ्गुदैः ॥ १७ ॥ द्रुमजातिभिरन्यैश्च राजितं वेणुकीचकैः ॥ कुमुदोत्पलकह्लारशतपत्रवनर्द्धिभिः ॥ १८ ॥ नलिनीषु कलं कूजत्खगवृन्दोपशोभितम् ॥ मृगैः शाखामृगैः क्रोडैर्मृगेन्द्रैर्ऋक्षशल्यकैः ॥ १९ ॥ गवयैर्नाभिर्भिन्यघ्रैर्निर्जुष्टं महिषादिभिः ॥ * कदलीषण्डसंरुद्धनलिनीपुलिनश्रियम् ॥ २० ॥ पर्यस्तं नन्दया सत्या स्नानपुण्यतरोदया ॥ विलोक्य भूतेशगिरिं विबुधा विस्मयं ययुः ॥ २१ ॥ ददृशुस्तत्र ते रम्यामलकां नाम वै पुरीम् ॥ वनं सौगन्धिकं चापि यत्र तन्नामपङ्कजम् ॥ २२ ॥ नन्दा चालकनन्दा च सरितौ बाह्यतः पुरः ॥ तीर्थपादपदाम्भोजरजसाऽतीव पावने ॥ २३ ॥ ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः ॥ क्रीडन्ति पुंसः सिञ्चन्त्यो विगाह्य रतिकर्शिताः ॥ २४ ॥ ययोस्तत्स्नानविभ्रष्टनवकुङ्कुमपिञ्जरम् ॥ वितृषोऽपि पिबन्त्यम्भः पाययन्तो गजा गजीः ॥ २५ ॥ तारहेममहारत्नविमानशतसङ्कुलाम् ॥ जुष्टां पुण्यजनस्त्रीभिर्यथा खं सतडिद्घनम् ॥ २६ ॥ हित्वा यक्षेश्वरपुरीं वनं सौगन्धिकं च तत् ॥ द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः ॥ २७ ॥ रक्तकण्ठखगानीकस्वरमण्डितषट्पदम् ॥ कलहंसकुलप्रेष्ठं खरदण्डजलाशयम् ॥ २८ ॥

सुरस्त्रियः क्रीडन्ति ॥ २४ ॥ ययोर्नद्योर्जलं विगततृषोऽपि गजाः पिबन्ति ॥ २५ ॥ रौप्यसुवर्णरत्नमयविमानशतैर्व्याप्ताम् ॥ २६ ॥ एतादृशीं कुबेरपुरीं हित्वा सौगन्धिकं वनं ददृशुः ॥ कथंभूतं वनं कामदुघैर्वृक्षैः सुखकरम् ॥ २७ ॥ रक्तकण्ठखगस्वरैश्च मंडितं कमलयुक्तं जलाशयम् ॥ २८ ॥



१ 'शरभैः' इ० पा० । * कर्णान्त्रैकपदाश्वास्यैर्निर्जुष्टं वृकनाभिभिः इत्यधिकः पाठः । २ परिवेष्टितम् । ३ गङ्गया । ४ भवान्याः ।

वनहस्तिघर्षितहरिचन्दनवृक्षसंबन्धिवायुना पुण्यजनस्त्रीणां मनसः उन्मादकम् ॥ २९ ॥ यत्र वैदूर्यकृतसोपानाः वाप्यः । एवं वनं दृष्ट्वा ततः समीपे वटं ददृशुः ॥३०॥ तस्य योजनशतमुच्छ्रायः पञ्चसप्ततियोजनप्रमाणशाखाभिः सर्वतो विस्तृतः ॥३१॥ तत्रासीनमन्तकतुल्यं शिवं ददृशुः ॥३२॥ कथंभूतं शिवम् । सनन्दनाद्यैर्महासिद्धैः कुबेरेण चोपास्यमानम् ॥३३॥ विद्यातपोयोगानां प्रवर्तकद्वारं विश्वसुहृदम् ॥३४॥ भस्मदण्ड-

वनकुञ्जरसंघृष्टहरिचन्दनवायुना ॥ अधिपुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः ॥ २९ ॥ वैदूर्यकृतसोपाना वाप्य उत्पलमालिनीः ॥ प्राप्तं किंपुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम् ॥ ३० ॥ स योजनशतोत्सेधः पादोनविटपायतः ॥ पर्यक्कृताचलच्छायो निर्नीडस्तापवर्जितः ॥ ३१ ॥ तस्मिन् महायोगमये मुमुक्षुशरणं सुराः ददृशुः शिवमासीनं त्यक्तामर्षमिवान्तकम् ॥३२॥ सनन्दनाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम् ॥ उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥ ३३ ॥ विद्यातपोयोगपथमास्थितं तमधीश्वरम् ॥ चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम् ॥ ३४ ॥ लिङ्गं च तापसाभीष्टं भस्मदण्डजटाजिनम् ॥ अंगेन संध्याभ्ररुचा चन्द्रलेखां च बिभ्रतम् ॥ ३५ ॥ उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम् ॥ नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् ॥ ३६ ॥ कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि ॥ बाहुप्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया ॥ ३७ ॥ तं ब्रह्मनिर्वाणसमाधिमाश्रितं व्युपाश्रितं गिरिशं योगकक्षाम् ॥ सलोकपाला मुनयो मनूनामाद्यं मनुं प्राञ्जलयः प्रणेमुः ॥३८॥ स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवन्दिताङ्घ्रिः ॥ उत्थाय चक्रे शिरसाऽभिवन्दनमर्हत्तमः कस्य यथैव विष्णुः ॥ ३९ ॥

जटाजिनधरं चन्द्रलेखायुतम् ॥ ३५ ॥ दर्भासने स्थितं सतां शृण्वतां नारदाय ब्रह्मज्ञानं प्रवोचन्तम् ॥ ३६ ॥ वीरासने तर्कमुद्रयाऽऽसीनम् ॥ ३७ ॥ मनूनामाद्यं शिवम् दृष्ट्वा लोकपालाः मुनयश्च प्राञ्जलयः प्रणेमुः ॥ ३८ ॥ शिवो ब्रह्माणं दृष्ट्वोत्थाय शिरसा प्रणामं चक्रे ॥ ३९ ॥

---

१ कुलायरहितः । २ कश्यपस्य । ३ वामनमूर्तिः ।

तदा ये शिवमनुवर्तन्ते तेऽपि तस्मै नमश्चक्रुः ततो ब्रह्मा प्रहसन् शिवं जगाद ॥४०॥ ब्रह्मोवाच ॥ हे भगवन् ! अहं त्वां विश्वस्येशं जाने । त्वमखण्डं ब्रह्मासि ॥४१॥ हे भगवन्! त्वमेव शिवशक्तिस्वरूपयोः क्रीडन् विश्वं सृजसि पालयसि भक्षयसि॥४२॥लोके वेदमार्गस्त्वयैव स्थापितः॥४३॥ हे मङ्गल! त्वंशुभकर्मकर्तॄणां नराणां स्वर्गं मोक्षं च ददासि। अशुभकर्मकर्तॄणां नरकं ददासि। तस्मिन् कथं विपर्ययः स्यात् ॥४४॥

तथाऽपरे सिद्धगणा महर्षिभिर्ये वै समन्तादनु नीललोहितम् ॥ नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ॥ ४० ॥ ब्रह्मोवाच ॥ जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः ॥ शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥४१॥ त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः ॥ विश्वं सृजसि पात्स्यसि क्रीडन्नूर्णपटो यथा ॥ ४२ ॥ त्वमेव धर्मार्थदुघाभिपत्तये दक्षेण सूत्रेण ससर्जिथाध्वरम् ॥ त्वयैव लोकेऽवसिताश्च सेतवो यान् ब्राह्मणाः श्रद्दधते धृतव्रताः ॥४३॥ त्वं कर्मणां मङ्गलमंगलानां कर्तुः स्म लोके तनुषे स्वः परं वा ॥ अमंगलानां च तमिस्रमुल्बणं विपर्ययःकेन तदेव कस्यचित् ॥ ४४ ॥ न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव ॥ भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोऽभिभवेद्यथा पशुम् ॥४५॥ पृथग्धियः कर्मदृशो दुराशयाः परोदयेनार्पितहृद्रुजोऽनिशम् ॥ परान् दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान्मा वधीद्दैत्यवधान् भवद्विधः ॥४६॥ यस्मिन् यदा पुष्करनाभमायया दुरन्तया स्पृष्टधियः पृथग्दृशः॥ कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृते क्रमम् ॥४७॥ भवांस्तु पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः समस्तदृक् ॥ तया हतात्मस्वनुकर्मचेतःस्वनुग्रहं कर्तुमिहार्हसि प्रभो ॥ ४८ ॥ कुर्वध्वरस्योद्धरणं हतस्य भोस्त्वयाऽसमाप्तस्य मनो प्रजापतेः ॥ न यत्र भागं तव भागिनो ददुः कुयज्विनो येन मखो निनीयते ॥ ४९ ॥

त्वच्चरणार्पितात्मनां साधूनां रोषो नाभिभवेत् तव तु कुतः ॥ ४५ ॥ अतो ये पृथग्धियो दुष्टाशयास्तान् भवद्विधः साधुर्न हन्यात् ॥४६॥ यस्मिन् देशे यदा काले मोहितचित्ताः पृथग्दृशो भवन्ति तत्रापराधे भवादृशाः साधवो दयामेव कुर्वन्ति॥४७॥ अतः कर्मासक्तचित्तेषु सापराधेषु प्रसादमस्मासु कर्तुमर्हसि॥४८॥त्वयाहतस्य यज्ञस्योद्धारं कुरु यत्र दुष्टयाज्ञिकाः भागिनोऽपि तव भागं न ददुः येन त्वया यज्ञः फलं नीयते॥४९॥

अयं यजमानो जीवतात्। भगोऽक्षिणी प्रपद्येत। भृगोः श्मश्रूणि रोहन्तु। पूष्णो दन्ताः भवन्तु ॥५०॥ आयुधपाषाणादिभिर्भग्नगात्राणां देवाना-मृत्विजां च भवदनुग्रहादारोग्यमस्तु ॥ ५१ ॥ हे शिव ! यो यज्ञावशिष्टोऽर्थः स तव भागोऽस्तु। हे यज्ञहन् ! अद्य तव भागेन यज्ञः संपद्यताम् ॥ ५२ ॥ इति श्रीभा० चू० चतुर्थे० षष्ठोऽध्यायः ॥ ६ ॥ सप्तमे विष्णुरुद्भूतः स्तुतो दक्षभवादिभिः। यज्ञं प्रवर्तयामास दक्षेणेति निरूप्यते ॥१॥ मैत्रेय उवाच ॥ हे विदुर ! इति ब्रह्मणा प्रार्थितः शिवः प्रहस्य श्रूयतामिति जगाद ॥ १॥ शिव उवाच ॥ हे ब्रह्मन् ! मायाभिभूतानामज्ञानाम-

जीवताद्यजमानोऽयं प्रपद्येताक्षिणी भगः ॥ भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत् ॥ ५० ॥ देवानां भग्नगा-त्राणामृत्विजां चायुधाश्मभिः ॥ भवताऽनुगृहीतानामाशु मन्योऽस्त्वनातुरम् ॥ ५१ ॥ एष ते रुद्र भागोऽस्तु यदुच्छि-ष्टोऽध्वरस्य वै ॥ यज्ञस्ते रुद्रभागेन कल्पतामद्य यज्ञहन् ॥ ५२ ॥ इति श्रीभा ० म० चतुर्थ० रुद्रसान्त्वनं नाम षष्ठो ऽध्यायः ॥ ६ ॥ मैत्रेय उवाच ॥ इत्यजेनानुनीतेन भवेन परितुष्यता ॥ अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति ॥ १ ॥ श्रीमहादेव उवाच ॥ नाघं प्रजेश बालानां वर्णये नानुचिन्तये ॥ देवमायाभिभूतानां दण्डस्तत्र धृतो मया ॥ २ ॥ प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः ॥ मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः ॥ ३ ॥ पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् ॥ देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ॥ ४ ॥ बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः ॥ भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भवेत् ॥ ५ ॥ मैत्रेय उवाच ॥ तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् ॥ परितुष्टात्मभिस्तात साधु साध्वित्यथाब्रुवन् ॥ ६ ॥ ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः ॥ भूयस्तद्देवयजनं समीढ्वद्वेधसो ययुः ॥ ७ ॥

पराघं न वर्णये ॥ तत्र मया दण्डो धृतः ॥ २ ॥ अस्तु, दग्धशिरसो दक्षस्याजमुखं शिरो भवतु। भगो मित्रस्य चक्षुषा पश्यतु ॥३॥ पूषापिष्टभुग् यजमानदन्तैर्भक्षयतु। देवाः यथापूर्वं भवन्तु ॥ ४ ॥ नष्टाङ्गानामश्विनोः बाहुभ्यां कृताः बाहवो भवन्तु। भृगुस्त्वजश्मश्रुर्भवेत् ॥५॥ मैत्रेय उवाच। इति शिवोक्तं श्रुत्वा सर्वे साध्विति जगदुः ॥ ६ ॥ ततः सहर्षयो देवाः ब्रह्मशिवसहिताः यज्ञस्थानं ययुः ॥ ७ ॥

१ आर्ष इटोऽकारः।

यथा शिव आह तथैव ते चक्रुः। सवनीयपशोः शिरो दक्षकायेन संदधुः॥८॥ तदा रुद्रेण वीक्षितो दक्षः सद्यः सुप्त इवोत्तस्थौ ॥९॥ अथाग्रतः शिवं दृष्ट्वा स्वच्छान्तःकरणो बभूव॥१०॥ शिवस्तुत्यै कृतधीर्दक्षो मृतां कन्यां स्मरन्॥११॥ प्रेमविह्वलितो निष्कपटेन भावेन शिवं तुष्टाव ॥१२॥ दक्ष उवाच ॥ हे भगवन्! त्वया मयि दण्डो न धृतः, किं त्वनुग्रह एव दण्डरूपः कृतः॥१३॥ हे ईश! त्वमात्मतत्त्वं ज्ञातुं ब्रह्मा भूत्वा ब्राह्मणान्

विधाय कार्त्स्न्येन च तद्यदाह भगवान् भवः ॥ संदधुः कस्य कायेन सवनीयपशोः शिरः ॥ ८ ॥ संधीयमाने शिरसि दक्षो रुद्राभिवीक्षितः ॥ सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ॥ ९ ॥ तदा वृषध्वजद्वेषकलिलात्मा प्रजापतिः ॥ शिवावलोकादभवच्छरद्ध्रद इवामलः ॥ १० ॥ भवस्तवाय कृतधीर्नाशक्नोदनुरागतः ॥ औत्कण्ठ्याद्बाष्पकलया संपरेतां सुतां स्मरन् ॥ ११ ॥ कृच्छ्रात्संस्तभ्य च मनः प्रेमविह्वलितस्सुधीः ॥ शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः ॥१२॥ दक्ष उवाच ॥ भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः॥ न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥ विद्यातपोव्रतधरान्मुखतः स्म विप्रान्ब्रह्माऽऽत्मतत्त्वमवितुं प्रथमं त्वमस्राक्॥ तद्ब्राह्मणान् परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥ योऽसौ मयाऽविदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखैरगणय्य तन्माम् ॥ अर्वाक् पतन्तमर्हत्तमनिन्दयाऽपाद्दृष्ट्याऽऽर्द्रया स भगवान् स्वकृतेन तुष्येत् ॥१५॥ मैत्रेय उवाच ॥ क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमन्त्रितः ॥ कर्म संतानयामास सोपाध्यायर्त्विगग्निभिः ॥ १६ ॥ वैष्णवं यज्ञसंतत्यै त्रिकपालं द्विजोत्तमाः ॥ पुरोडाशं निरवपन् वीरसंसर्गशुद्धये ॥ ॥ १७ ॥ अध्वर्युणाऽऽत्तहविषा यजमानो विशांपते ॥ धिया विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः ॥ १८ ॥

सस्रष्ट। तान् सर्वविपत्सु पासि ॥ १४ ॥ यो भगवानज्ञानेन मया सभायां दुरुक्तैः क्षिप्तस्तत् विस्मृत्य निन्दयाधः पतन्तं मां ररक्ष ॥१५॥ मैत्रेय उवाच ॥ एवं शिवं क्षमाप्य ब्रह्माज्ञया दक्षः ऋत्विगादिभिः कर्म प्रवर्तयामास ॥ १६ ॥ तथा वीरभद्रसंसर्गशुद्धये यज्ञसंतत्यै वैष्णवं त्रिकपालं पुरोडाशं निरवपन् ॥ १७ ॥ ततो यजमानेन ध्यातः सन् हरिः प्रादुरभूत् ॥ १८ ॥

कथंभूतो हरिः ? स्वतेजसा तपां तेजस्तिरस्कुर्वन् गरुडेन समीपं प्रापितः ॥१९॥ श्यामः किरीटकुण्डलयुतः शंखचक्रगदापद्मासिचर्मधरः॥२०॥ वक्षसि श्रितलक्ष्मीर्वनमाली छत्रचामरव्यजनैः शोभमानः ॥ २१ ॥ एतादृशं प्राप्तं हरिं दृष्ट्वा ब्रह्मेन्द्रशिवनायकाः सर्वे देवाद्याः प्रणेमुः ॥ २२ ॥ ततस्ते तन्महिम्ना क्षुभितचित्ताः कृताञ्जलयो यथामति हरिं तुष्टुवुः ॥२३॥२४॥ तत्रादौ दक्षो यज्ञेश्वरं विष्णुमुत्तमार्हणैः पूजयित्वा स्तुवन् शरणं

तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश ॥ मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवाजिना[1] ॥ १९ ॥ श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमण्डितकुण्डलास्यः ॥ कम्ब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः[2] ॥ २० ॥ वक्षस्यधिश्रितवधूर्वनमाल्युदारहासावलोककलया रमयंश्च विश्वम् ॥ पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरि रज्यमानः ॥२१॥ तमुपागतमालक्ष्य सर्वे सुरगणादयः ॥ प्रणेमुः सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥२२॥ तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः ॥ मूर्ध्ना धृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ २३ ॥ अप्यर्वाग्वृत्तयो यस्य महि[3] त्वात्मभुवादयः ॥ यथामति गृणन्ति स्म कृतानुग्रहविग्रहम् ॥ २४ ॥ दक्षो गृहीतार्हणसादनोत्तमं यज्ञेश्वरं विश्वसृजां परं गुरुम् ॥ सुनन्दनन्दाद्यनुगैर्वृतं मुदा गृणन् प्रपेदे प्रयतः कृताञ्जलिः ॥ २५ ॥ दक्ष उवाच ॥ शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् ॥ तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्यामास्ते भवानपरिशुद्ध इवात्मतन्त्रः ॥ २६ ॥ ऋत्विज ऊचुः ॥ तत्त्वं न ते वयमनञ्जनं[4] रुद्रशापात् कर्मण्यवग्रहधियो भगवन् विदामः ॥ धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं[5] ज्ञातं यदर्थमधिदैवं[6]मदो व्यवस्थाः[7] ॥ २७ ॥

जगाम ॥ २५ ॥ दक्ष उवाच । हे भगवन् । भवान् मायामभिभूय स्वतन्त्रः सन् तया मायया पुरुषत्वं प्राप्य तस्यां मायायां तिष्ठन् रागादिमानिव भासि ॥ २६ ॥ ऋत्विज ऊचुः ॥ हे हरे ! वयं कर्मणि दुराग्रहधियः सन्तस्तव तत्त्वं न विद्मः ॥ २७ ॥

१ स्तोत्रे बृहद्रथान्तरे वाजौ पक्षौ तद्वता । २ कर्णिकारवृक्ष इव शोभमानः । ३ महिमानं प्रति । ४ उपाधिशून्य । ५ त्रयीप्रतिपाद्यम् । ६ इन्द्राद्यधिदेवरूपम् । ७ गृहीतवानसि, व्यवस्थयेति पाठान्तरम् ।

सदस्या ऊचुः ॥ हे आश्रयप्रद ! अयम् अज्ञसमूहः संसारमार्गे वर्तमानः कामेन पीडितः सन् त्वत्पादरूपं निवासं कदा यास्यति ॥२८॥ रुद्र उवाच । हे वरद ! त्वयि प्रविष्टचित्तं मां लोको यदि सदाचारभ्रष्टं वदति तथाऽपि त्वदनुग्रहेण तत् न गणये ॥ २९ ॥ भृगुरुवाच । हे विष्णो ! ब्रह्मादयो मायया गतबोधाः सन्तस्तव तत्त्वं न जानन्ति स त्वं प्रसीद ॥ ३० ॥ ब्रह्मोवाच असौ पुरुष इन्द्रियैरेतत् तव रूपं न पश्यति माया-

सदस्या ऊचुः ॥ उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गेन्तकोग्रव्यालान्विष्टे विषयमृगतृष्णात्मगेहोरुभारः ॥ द्वन्द्वश्वभ्रे खल-मृगभये शोकदावेऽज्ञसार्थः पादौ कस्ते शरणद कदा याति कामोपसृष्टः ॥ २८ ॥ रुद्र उवाच ॥ वरद वराङ्घ्रावा-शिषेहाखिलार्थे ह्यपि मुनिभिरसक्तैरादरेणाहर्णीये ॥ यदि रचितधियं माऽविद्यलोकोऽपविद्धं जपति न गणये तत्त्व-त्परानुग्रहेण ॥ २९ ॥ भृगुरुवाच ॥ यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्तः ॥ नात्मन्-श्रितं तव विदन्त्यधुनाऽपि तत्त्वं सोऽयं प्रसीदतु भवान् प्रणतात्मबन्धुः ॥ ३० ॥ ब्रह्मोवाच ॥ नैतत् स्वरूपं भव-तोऽसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ॥ ज्ञानस्य चार्थस्य गुणस्य चाश्रयो मायामयाद् व्यतिरिक्तो यतस्त्वम् ॥ ॥ ३१ ॥ इन्द्र उवाच ॥ इदमप्यच्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम् ॥ सुरविद्विट्क्षपणैरुदायुधैर्भुजदण्डै-रुपपन्नमष्टभिः ॥३२॥ पत्न्य ऊचुः ॥ यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाऽद्य दक्षकोपात् ॥ तं नस्त्वं शवशयनाभशान्तमेधं यज्ञात्मन् नलिनरुचा दृशा पुनीहि ॥ ३३ ॥ ऋषय ऊचुः ॥ अनन्वितं ते भगवन् विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे ॥ विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्ततीं भवान् ॥ ३४ ॥

मयात् त्वं व्यतिरिक्तोऽसि ॥ ३१ ॥ इन्द्र उवाच ॥ हे हरे । इदमष्टभिर्भुजदण्डैर्युक्तं वपुर्योग्यमेव ॥३२॥ ऋत्विजां पत्न्यः स्तुवन्ति । अयं यज्ञस्तव यजनाय सृष्टः स शिवेन नाशितः तं यज्ञं दृशा पवित्रं कुरु ॥३३॥ ऋषय ऊचुः ॥ हे विष्णो ! त्वं कर्मानुतिष्ठसि न तु लिप्यसे । अन्ये संपत्त्यर्थं लक्ष्मीं भजन्ति । त्वं तु स्वयमागतां तां नाद्रियसे ॥ ३४ ॥

१ सुखदुःखादिरूपगर्तपूर्णे । २ श्मशानसदृशं शान्तोत्सवं च ।

सिद्धा ऊचुः ॥ अयं नो मनोगजस्त्वत्कथामृतनद्यां प्रविष्टः सन् संसारतापं न स्मरति । त्वत्कथामृतात् न निर्गच्छति च ॥ ३५ ॥ यजमान्युवाच ॥ हे श्रीनिवास ! तव स्वागतम् । तुभ्यं नमः । अस्मान् पाहि ॥३६॥ लोकपाला ऊचुः ॥ शुद्धसत्त्वानां त्वं शुद्धतत्त्वमूर्तिर्भासि नास्माकम्, अतो नो धिक् ॥३७॥ योगेश्वरा ऊचुः ॥ हे प्रभो ! यस्त्वय्यात्मनः पृथक्त्वं नेक्षेत ततोऽन्यस्तव प्रियो नास्ति । अथापि भक्त्या भजतोऽनु-

सिद्धा ऊचुः ॥ अयं त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः ॥ तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसंपन्नवन्नः[1] ॥३५॥ यजमान्युवाच ॥ स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास श्रिया कान्तया त्राहि नः ॥ त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथापूरुषः ॥ ३६ ॥ लोकपाला ऊचुः ॥ दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्द्रष्टा दृश्यते येन दृश्यम् ॥ माया ह्येषा भवदीया हि भूमन् यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः ॥ ३७ ॥ योगेश्वरा ऊचुः ॥ प्रेयान् नतेऽन्योऽस्त्यमुतस्त्वयि प्रभो विश्वात्मनीक्षेन्न पृथग्य आत्मनः ॥ अथापि भक्त्येश तयोपधावतामनन्यवृत्त्याऽनुगृहाण वत्सल ॥ ३८ ॥ जगदुद्भवस्थितिलयेषु दैवतो बहुभिद्यमानगुणयाऽऽत्ममायया ॥ रचितात्मभेदमतये स्वसंस्थया विनिवर्तितभ्रमगुणात्मने नमः ॥ ३९ ॥ ब्रह्मोवाच ॥ नमस्ते श्रितसत्त्वाय धर्मादीनां च सूतये ॥ निर्गुणाय च यत्काष्ठां[2] नाहं वेदापरेऽपि च ॥ ४० ॥ अग्निरुवाच ॥ यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहे स्वध्वर आज्यसिक्तम् ॥ तं यज्ञियं पञ्चविधं[3] च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ॥ ॥ ४१ ॥ देवा ऊचुः ॥ पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन् सलिल उरगेन्द्राधिशयने ॥ पुमान् शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः स एवाद्याक्ष्णोर्यः पथि चरसि भृत्यानवसि नः ॥ ४२ ॥

गृहाण ॥३८॥ स्वमाययास्वरूपे रचितब्रह्मादिभेदमतये तस्मै नमः ॥३९॥ ब्रह्मोवाच ॥ धर्मादीनां भक्तेश्च फलदात्रे तुभ्यं नमः ॥४०॥ अग्निरुवाच ॥ यत्तेजसा प्रदीप्ततेजाः सन् हव्यं वहामि तं यज्ञमूर्तिं नतोऽस्मि ॥४१॥ देवाः ऊचुः ॥ यस्त्वं प्रलये विश्वं संहृत्य शयनं करोषि स एव त्वं प्रत्यक्षोऽसि ॥४२॥

१ ब्रह्मैक्यं प्राप्त इव । २ तत्त्वम् । ३ स एव यज्ञः पंचविधः– अग्निहोत्रम्, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमश्चेति ।

गन्धर्वा ऊचुः ॥ हे देव ! एते मरीच्यादयो देवाश्च यस्यांशांशा ब्रह्माण्डं यस्य क्रीडोपकरणं तस्मै ते नमस्करवाम ॥ ४३ ॥ विद्याधरा ऊचुः ॥ त्वन्मायया ऽस्मिन् देहे ममाहमिति कृत्वा दुर्मतिः पुत्राद्यैर्दुःखितोपि मौनं न त्यजति । त्वत्कथामृतसेवकस्तु त्यजति ॥ ४४ ॥ ब्राह्मणा ऊचुः॥हे ईश ! यज्ञो हविरग्निर्मन्त्रः समिधो दर्भाः पात्राणि सदस्यादयश्च त्वमेव ॥ ४५ ॥ त्वं वराहः सन् दंष्ट्रया पृथ्वीं रसातलात् समुद्धृ-

गन्धर्वा ऊचुः ॥ अंशांशस्ते देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः ॥ क्रीडाभाण्डं विश्वमिदं यस्य च भूमंस्तस्मै नित्यं नाथ नमस्ते करवाम ॥ ४३ ॥ विद्याधरा ऊचुः ॥ त्वन्मायया ऽर्थमभिपद्य कलेवरे ऽस्मिन् कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः ॥ क्षिप्तो ऽप्यसद्विषयलालस आत्ममोहं युष्मत्कथामृतनिषेवक उद्व्युदस्येत्[1] ॥ ४४ ॥ ब्राह्मणा ऊचुः ॥ त्वं क्रतुस्त्वं हविस्त्वं हुताशः स्वयं त्वं हि मन्त्रः समिद्दर्भपात्राणि च ॥ त्वं सदस्यर्त्विजो दम्पती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥ ४५ ॥ त्वं पुरा गां रसाया महासूकरो दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा ॥ स्तूयमानो नदँल्लीलया योगिभिर्व्युज्जहर्थ त्रयीगात्र यज्ञक्रतुः ॥ ४६ ॥ स प्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम् ॥ कीर्त्यमाने नृभिर्नाम्नि यज्ञेश ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः ॥ ४७ ॥ मैत्रेय उवाच ॥ इति दक्षः कविर्यज्ञं भद्र रुद्रावमर्शितम् ॥ कीर्त्यमाने हृषीकेशे संनिन्ये यज्ञभावने ॥ ४८ ॥ भगवान् स्वेन भावेन सर्वात्मा सर्वभागभुक् ॥ दक्षं बभाष आभाष्य प्रीयमाण इवानघ ॥ ४९ ॥ श्रीभगवानुवाच ॥ अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ॥ आत्मेश्वर उपद्रष्टा स्वयंदृग[2]विशेषणः[3] ॥ ५० ॥ आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज ॥ सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ ५१ ॥

तवान् ॥ ४६ ॥ तव दर्शनमिच्छतां नस्त्वं प्रसीद । तुभ्यं नमोऽस्तु ॥ ४७ ॥ मैत्रेय उवाच ॥ एवं कीर्त्यमाने हरौ दक्षो यज्ञं प्रवर्तयामास ॥ ४८ ॥ भगवान् सर्वात्मा सर्वभागभुग् दक्षं बभाषे ॥ ४९ ॥ श्रीभगवानुवाच ॥ अहं ब्रह्मा च शिवश्च जगतः परं कारणम् ॥ ५० ॥ आत्मेश्वरो मायामाश्रित्य विश्वं सृजन् रक्षन् हरन् क्रियोचितां संज्ञां धारयामि ॥ ५१ ॥

१ उच्चैस्त्यजेत् । २ स्वयंप्रकाशः । ३ निरुपाधिः ।

एवंभूते मयि ब्रह्मरुद्रौ भूतानि च भेदेन यः पश्यति सोऽज्ञः ॥५२॥ मत्परो भूतेषु पारक्यबुद्धिं न कुरुते, यथा नरः स्वाङ्गेषु शिरोहस्तपादादिषु पारक्यबुद्धिं न कुरुते ॥ ५३ ॥ सर्वत्रैक्येन यः पश्यति स शान्तिं प्राप्नोति ॥ ५४ ॥ मैत्रेय उवाच ॥ एवं भगवताऽऽदिष्टो दक्षः स्वेन यज्ञेन हरिं पूजयित्वा ॥५५॥ यज्ञावशिष्टेन रुद्रं चार्चित्वा यज्ञं समाप्यावभृथस्नानं चक्रे ॥५६॥ ततो देवाद्याः धर्मे दक्षस्य मतिं दत्त्वा स्वर्गं ययुः ॥५७॥

तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि ॥ ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति ॥ ५२ ॥ यथा पुमान्न स्वाङ्गेषु शिरः पाण्यादिषु क्वचित् ॥ पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः ॥५३॥ त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ॥ सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥ ५४ ॥ मैत्रेय उवाच ॥ एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम् ॥ अर्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ॥ ५५ ॥ रुद्रं च स्वेन भागेन ह्युपाधावत् समाहितः ॥ कर्मणोदवसानेन[1] सोमपानितरानपि ॥ उदवस्य[2] सहर्त्विग्भिः सस्नाववभृथं ततः ॥ ५६ ॥ तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे ॥ धर्म एव मतिं दत्त्वा त्रिदशास्ते दिवं ययुः ॥५७॥ एवं दाक्षायणी हित्वा सती पूर्वकलेवरम् ॥ जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम ॥ ५८ ॥ तमेव दयितं भूय आवृङ्क्ते पतिमम्बिका ॥ अनन्यभावैकगतिं शक्तिः सुप्तेव पूरुषम् ॥ ॥ ५९ ॥ एतद्भगवतः शंभोः कर्म दक्षाध्वरद्रुहः ॥ श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ॥ ६० ॥इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम् ॥ यो नित्यदाऽऽकर्ण्य नरोऽनुकीर्तयेद् धुनोत्यघं कौरव भक्तिभावतः ॥ ६१ ॥

इति श्रीभागवते महापुराणे चतुर्थस्कन्धे दक्षयज्ञे सर्वदेवकृतस्तुतिवर्णनं नामसप्तमोऽध्यायः ॥ ७ ॥

एवं दक्षकन्या सती पूर्वदेहं हित्वा हिमवतो मेनायां जज्ञे इति शुश्रुम ॥ ५८ ॥ अम्बिका भूयस्तमेव पतिं भजते स्म ॥ ५९ ॥ एतत् दक्षयज्ञद्रुहः शम्भोः कर्म बृहस्पतेः शिष्यादुद्धवात् मया श्रुतम् ॥ ६० ॥ हे विदुर ! इदं पवित्रं शिवचेष्टितं यशस्यमायुष्करं यः शृणुयाद्वा कीर्तयेद्वा सोऽघं धुनोति ॥ ६१ ॥ इति श्रीभागवते चूर्णिकायां चतुर्थस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

[1] उदवसानं समाप्तिकरम् । [2] कर्म समाप्य ।

दक्षकन्यान्वये प्राप्ता दक्षयज्ञकथोदिता। मनुपुत्रान्वये प्राप्ता ध्रुवचर्याऽथ पञ्चभिः ॥१॥ अष्टमे गुरुदारोक्तिरोषमत्सरतः पुरात् । निर्गतेन ध्रुवेणाह तपसा तोषणं हरेः ॥ २ ॥ मैत्रेय उवाच ॥ सनकाद्याः नारदश्च ऋभुर्हंसोऽरुणिर्यतिरेते नैष्ठिकाः । अतो गृहाश्रमं न चक्रुः ॥१॥ ब्रह्मणः पृष्ठात् जातस्याधर्मस्य वंशं शृणु । अधर्मो मृषाभार्यायां दम्भं मायां चाजनयत् । तन्मिथुनमपुत्रो निर्ऋतिर्जगृहे ॥२॥ तयोर्लोभः शठता । ताभ्यां क्रोधो हिंसा । ताभ्यां कलिर्दुरुक्तिश्च ॥३॥ ताभ्यां भयं मृत्युश्च । ताभ्यां यातना निरयश्च ॥४॥ इममधर्मवंशं त्रिः श्रुत्वैतेषां त्यागद्वारा मलं

मैत्रेय उवाच ॥ सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः ॥ नैते गृहान् ब्रह्मसुता ह्यावसन्नूर्ध्वरेतसः ॥१॥ मृषाऽधर्मस्य भार्याऽऽसीद्दम्भं मायां च शत्रुहन् ॥ असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः ॥२॥ तयोः समभवल्लोभो निकृतिश्च महामते ॥ ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः ॥३॥ दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम ॥ तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥४॥ * संग्रहेण मयाऽऽख्यातः प्रतिसर्गस्तवानघ ॥ त्रिः श्रुत्वैतत् पुमान् पुण्यं विधुनोत्यात्मनो मलम् ॥५॥ अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह ॥ स्वायंभुवस्यापि मनोर्हरेरंशांशजन्मनः ॥६॥ प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ ॥ वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥ ७ ॥ जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः ॥ सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥ ८ ॥ एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन् ॥ उत्तमं नारुरुक्षन्तं ध्रुवं राजाऽभ्यनन्दत ॥ ९ ॥ तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम् ॥ सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥ १० ॥ न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति ॥ न गृहीतो मया यत्त्वं कुक्षावपि नृपात्मजः ॥ ११ ॥

हित्वा पुण्यं प्राप्नोति ॥५॥ अथ स्वायंभुवमनो पुण्यवंशं कीर्तये ॥६॥ मनोः प्रियव्रतोत्तानपादौ द्वौ पुत्रौ ॥७॥ तत्रोत्तानपादस्य सुनीतिः सुरुचिर्द्वे स्त्रियौ । सुरुचिः पत्युः प्रिया, यत्सुतो ध्रुवः सा न प्रिया ॥८॥ एकदा राजा सुरुचेः पुत्रमुत्तमसंज्ञकमङ्कमारोप्य लालयन् ध्रुवमङ्कमारोढुमिच्छन्तं नाभ्यनन्दत् ॥ ९॥ तदा सुरुचिस्तथाऽङ्कारोहणं कुर्वन्तं ध्रुवं दृष्ट्वा राज्ञः शृण्वतो गर्विता सतीर्ष्यासहितं जगाद ॥१०॥ हे वत्स ! त्वं नृपतेरासनमारोढुं नार्हसि यतस्त्वं मया कुक्षौ न धृतः ॥ ११ ॥



* "एते ह्यधर्मवृक्षस्य वंशाः संसृतिहेतवः ॥ श्रेयस्कामो सेवेत नितरामाश्रमोत्तमी ॥" इत्यधिकः पाठः ॥

भवानन्यस्त्रीगर्भसंभवमात्मानं नूनं न वेद यतस्त्वं बालोऽसि ॥ १२ ॥ अतः एवं मनोरथश्चेत् तपसा हरिमाराध्य तत्कृपया मे गर्भं आत्मानं साधय ॥ १३ ॥ मैत्रेय उवाच ॥ एवं सपत्नमातुर्दुरुक्तबाणैर्विद्धः सर्प इव श्वसन् पश्यन्तं मौनीभूतं पितरं हित्वा रुदन् मातुः समीपं जगाम ॥१४॥ सुनीतिः सपत्न्या वाक्यं निशम्य निश्श्वसन्तं रुदन्तं बालमङ्के कृत्वा ॥१५॥ धैर्यं त्यक्त्वा शोकेन विललाप। सपत्न्याः वाक्यं स्मरन्ती

बालोऽसि बत नात्मानमन्यस्त्रीगर्भसंभृतम् ॥ नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः ॥ १२ ॥ तपसाऽऽराध्य पुरुषं तस्यैवानुग्रहेण मे ॥ गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम् ॥ १३ ॥ मैत्रेय उवाच ॥ मातुः सपत्न्याः सुदुरुक्तिविद्धः श्वसन् रुषा दण्डहतो यथाऽहिः ॥ हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन् सकाशम् ॥ १४ ॥ तं निःश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदुह्य बालम् ॥ निशम्य तत्पौरमुखान्नितान्तं सा विव्यथे यद्गदितं सपत्न्याः ॥ १५ ॥ सोत्सृज्य धैर्यं विललाप शोकदावाग्निना दावलतेव बाला ॥ वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह ॥ १६ ॥ दीर्घं श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला ॥ माऽमङ्गलं तात परेष्वमंस्था भुङ्क्ते जनो यत् परदुःखदस्तत् ॥ १७ ॥ सत्यं सुरुच्याऽभिहितं भवान्मे यद्दुर्भगाया उदरे गृहीतः ॥ स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम् ॥ १८ ॥ आतिष्ठ तत्तात विमत्सरस्त्वमुक्तं समात्राऽपि यदव्यलीकम् ॥ आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा ॥ १९ ॥ यस्याङ्घ्रिपद्मं परिचर्य विश्वविभावनायात्तगुणाभिपत्तेः ॥ अजोऽध्यतिष्ठत् खलु पारमेष्ठ्यं पदं जितात्मश्वसनाभिवन्द्यम् ॥ २० ॥

जगाद च ॥ १६ ॥ हे तात ! अपराधं परेषु मा मंस्थाः यतो यः परेभ्यो दुःखं ददाति स परदत्तमेव दुःखं भुङ्क्ते ॥१७॥ हे बाल ! राजा मां भार्यां वक्तुं लज्जते । त्वं दुर्भगायाः ममोदरे जातः इति सुरुच्याः वाक्यं सत्यम् ॥ १८ ॥ यदि राज्यासनमिच्छसि तर्हि भगवन्तमाराधय ॥ १९ ॥ ब्रह्मा यस्य पादपद्मं निषेव्य पारमेष्ठ्यं पदं लेभे ॥ २० ॥

तथा वः पितामहो मनुः सर्वान्तर्यामिदृष्टचा भूरिदक्षिणैर्यज्ञैरिष्ट्वा स्वर्गादिसुखं लेभे ॥२१॥ हे वत्स ! तमेवेश्वरं मनसि कृत्वा भजस्व ॥२२॥
हरेर्विनाऽन्यं दुःखच्छिदं न पश्यामि ॥२३॥ मैत्रेय उवाच ॥ एवं मातुर्वचः श्रुत्वा ध्रुवः पितुः पुरान्निर्जगाम ॥२४॥ नारदो ध्रुवचिकीर्षितं ज्ञात्वा
तत्रागत्य तं पाणिना मूर्ध्नि स्पृष्ट्वा जगाद ॥ २५ ॥ अहो क्षत्रियाणां प्रभावं पश्यत । बालोऽप्ययं मातुरसद्वचो हृदि करोति ॥ २६ ॥ नारद

तथा मनुर्वो भगवान् पितामहो यमेकमत्या पुरुदक्षिणैर्मखैः ॥ इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापव-
र्ग्यम् ॥२१॥ तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ॥ अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य
भजस्व पूरुषम् ॥ २२ ॥ नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि कञ्चन ॥ यो मृग्यते हस्तगृहीतप-
द्मया श्रियेतरैरंग विमृग्यमाणया ॥ २३ ॥ मैत्रेय उवाच ॥ एवं संजल्पितं मातुराकर्ण्यार्थागमं वचः ॥ संनियम्या-
त्मनाऽऽत्मानं निश्चक्राम पितुः पुरात् ॥ २४ ॥ नारदस्तदुपाकर्ण्य ज्ञात्वा तस्य चिकीर्षितम् ॥ स्पृष्ट्वा मूर्धन्यघघ्नेन
पाणिना प्राह विस्मितः ॥२५॥ अहो तेजः क्षत्त्रियाणां मानभङ्गममृष्यताम् ॥ बालोऽप्ययं हृदा धत्ते यत्समातुरसद्वचः
॥ २६ ॥ नारद उवाच ॥ नाधुनाऽप्यवमानं ते सम्मानं वाऽपि पुत्रक ॥ लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु ॥ २७ ॥
विकल्पे विद्यमानेऽपि न ह्यसंतोषहेतवः ॥ पुंसो मोहमृते भिन्ना यल्लोके निजकर्मभिः ॥२८॥ परितुष्येत्ततस्तात तावन्मात्रेण
पूरुषः ॥ दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः ॥२९॥ अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि ॥ यत्प्रसादं स वै पुंसां दुरा-
राध्यो मतो मम ॥३०॥ मुनयः पदवीं यस्य निस्संगेनोरुजन्मभिः ॥ न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥३१॥

उवाच ॥ हे पुत्रक ! अस्मिन् वयसि तव मानापमानौ न स्तः ॥ २७ ॥ पुरुषस्य सुखं दुःखं निजकर्मभिरेव भवति ॥ २८ ॥ ईश्वरानुकूल्यं
विनोद्यमाः फलहेतवो न अतः संतोषमेव कुर्यात् ॥ २९ ॥ हे ध्रुव ! मातृपदेशं कर्तुमिच्छसि तर्हि स ईशो दुराराध्यः ॥ ३० ॥ यस्य मार्गं
मुनयस्तीव्रयोगेन बहुजन्मभिर्मृगयन्तोऽपि न विदुः ॥ ३१ ॥

१ मानापमानविचारे ।

अतो निवर्ततताम् । तव विचारो निष्फलः ॥३२॥ यस्य दैवं यथा तथा आत्मानं तोषयन् क्षेमं प्राप्नोति ॥३३॥ गुणाधिकं दृष्ट्वा प्रीतिं कुर्यात् नेर्ष्याम् । गुणहीनं दृष्ट्वा कृपामिच्छेत् न तिरस्कारम् । अतो दुरुक्तं मनसि मा कुरु ॥ ३४ ॥ ध्रुव उवाच ॥ हे नारद ! भवता सुखदुःखहतात्मनां पुंसामयं मार्गो दर्शितः ॥ ३५ ॥ अथापि स सुरुच्या दुर्वचोबाणैर्भिन्ने मम हृदि न तिष्ठति ॥३६॥ त्रिभुवनेषु श्रेष्ठमन्यैरनधिष्ठितं पद-

अतो निवर्ततामेष निर्बन्धस्तव निष्फलः ॥ यतिष्यति भवान् काले श्रेयसां समुपस्थिते ॥ ३२ ॥ यस्य यद्दैवविहितं स तेन सुखदुःखयोः ॥ आत्मानं तोषयन्देही तमसः पारमृच्छति ॥ ३३ ॥ गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् ॥ मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते ॥ ३४ ॥ ध्रुव उवाच ॥ सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ॥ दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥ ३५ ॥ अथापि मेऽविनीतस्य क्षात्त्रं घोरमुपेयुषः ॥ सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥३६॥ पदं त्रिभुवनोत्कृष्टं जिगीषोः साधुवर्त्म मे ॥ ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥३७॥ नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः ॥ वितुदन्नटते वीणां हितार्थं जगतोऽर्कवत् ॥३८॥ मैत्रेय उवाच ॥ इत्युदाहृतमाकर्ण्य भागवान् नारदस्तथा ॥ प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया ॥३९॥ नारद उवाच ॥ जनन्याऽभिहितःपन्था स वै निःश्रेयसस्य ते ॥ भगवान् वासुदेवस्तं भज तत्प्रवणात्मना॥४०॥ धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेयआत्मनः ॥ एकमेव हरेस्तत्र कारणं पादसेवनम् ॥४१॥ तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि ॥ पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः ॥४२॥ स्नात्वाऽनुसवनं तस्मिन्कालिन्द्याः सलिले शिवे ॥ कृत्वोचितानि निवसन्नात्मनः कल्पितासनः ॥ ४३ ॥

मिच्छतो ममोपायं ब्रूहि ॥ ३७ ॥ भवान् लोकानां हितायार्कवदटति ॥ ३८ ॥ मैत्रेय उवाच । इत्याकर्ण्य नारदः प्रीतः सन् तं जगाद ॥ ३९ ॥ नारद उवाच ॥ हे बाल ! तव जनन्या यदुक्तं स एव मार्गः । तस्माद् वासुदेवं भज ॥ ४० ॥ धर्मार्थकाममोक्षं य इच्छेत् स एकं हरिं सेवेत ॥ ४१ ॥ हे तात ! यमुनायास्तटे मधुवने गत्वा ॥ ४२ ॥ तत्र यमुनाजले त्रिकालं स्नात्वाऽऽसने स्थित्वा यमनियमादीन् कृत्वा ॥ ४३ ॥

प्राणायामेन मनोमलं हित्वा मनसा हरिं ध्यायेत् ॥ ४४ ॥ कथंभूतं हरिम् । प्रसादाभिमुखं प्रसन्नवदनेक्षणं सुनासभ्रूकपोलम् ॥ ४५ ॥ तरुणं रमणीयाङ्गं सुखकरं शरणाश्रयम् ॥ ४६ ॥ श्रीवत्साङ्कं घनश्यामं वनमालिनं चतुर्भुजं शङ्खचक्रगदापद्मधरम् ॥ ४७ ॥ किरीटकुण्डलकेयूर कौस्तुभधरं पीताम्बरम् । ॥४८॥ लसत्काञ्चननूपुरं दर्शनीयतमं मनोनयनहर्षकरम् ॥ ४९ ॥ स्वभक्तानां मनसि स्थितम् ॥५०॥ एतादृशं वरद-

प्राणायामेन त्रिवृता[1] प्राणेन्द्रियमनोमलम् ॥ शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम् ॥ ४४ ॥ प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम् ॥ सुनासं सुभ्रुवं चारुकपोलं सुरसुन्दरम् ॥४५॥ तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम् ॥ प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम् ॥ ४६ ॥ श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम् ॥ शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ॥४७॥ किरीटिनं कुण्डलिनं केयूर[2]वनमालिनम् ॥ कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् ॥४८॥ काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम् ॥ दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ ४९ ॥ पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम् ॥ हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ॥ ५० ॥ स्मयमानमभिध्यायेत् सानुरागावलोकनम् ॥ नियतेनैकभूतेन मनसा वरदर्षभम् ॥ ५१ ॥ एवं भगवतो रूपं सुभद्रं ध्यायतो मनः ॥ निर्वृत्त्या परया तूर्णं संपन्नं न निवर्तते ॥५२॥ जप्यश्च परमो गुह्यः श्रूयतां मे नृपात्मज ॥ यं सप्तरात्रं प्रपठन्पुमान् पश्यति खेचरान् ॥५३॥ "ॐ नमो भगवते वासुदेवाय" ॥ मन्त्रेणानेन देवस्य कुर्याद् द्रव्यमयीं बुधः ॥ सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित् ॥ ५४ ॥ सलिलैः शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः ॥ शस्ताङ्कुरांशुकैश्चार्चेत्तुलस्या प्रियया प्रभुम् ॥ ५५ ॥

र्षभं हरिमेकाग्रचित्तेन ध्यायेत् ॥ ५१ ॥ एवं ध्यानं कुर्वतः पुंसो मनोऽन्यत्र न सज्जते ॥५२ ॥ हे ध्रुव ! जप्यमन्त्रश्च श्रूयतां यं सप्तरात्रं प्रपठन् पुमान् खेचरान् पश्यति ॥ ५३ ॥ ॐ नमो भगवते वासुदेवाय ॥ अनेन मन्त्रेण वन्यैः पुष्पमूलफलादिभिस्तुलस्या च हरेः कालोचितद्रव्यमयीं पूजां कुर्यात् ॥ ५४ ॥ ५५ ॥

१ पूरककुम्भकरेचकात्मकेन । २ 'बलयान्वितम्' इ० पा० ।

धृतचित्तो मितवन्यभुक् मुनिर्द्रव्यमयीं पूजां संपाद्य भूजलादिषु हरिं पूजयेत् ॥५६॥ ततः उत्तमश्लोकस्यावतारचरितानि चिन्तयेत् ॥५७॥ हरेर्यावत्यः पूजास्ताः द्वादशाक्षरेणैव कुर्यात् ॥५८॥ एवं कायमनोवाग्भिः पूजितो भगवान् पुंसामीप्सितं मनोरथं ददाति ॥ ५९ ॥ ६० ॥ हे ध्रुव ! इन्द्रियरतौ विरक्तः सन् भक्तियोगेन मुक्त्यर्थं हरिं भजेत् ॥६१॥ एवं नारदवचः श्रुत्वा ध्रुवस्तं प्रणम्य मधुवनं ययौ ॥ ६२ ॥ ध्रुवे तपोवनं गते

लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु चार्चयेत् ॥ आभृतात्मा मुनिः शान्तो यतवाङ्मितवन्यभुक् ॥५६॥ स्वेच्छावतारचरितैरचिन्त्यनिजमायया ॥ करिष्यत्युत्तमश्लोकस्तद्ध्यायेद्धृदयंगमम् ॥५७॥ परिचर्या भगवतो यावत्यः पूर्वसेविताः ॥ ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्तये ॥५८॥ एवं कायेन मनसा वचसा च मनोगतम् ॥ परिचर्यमाणो भगवान् भक्तिमत्परिचर्यया ॥५९॥ पुंसाममायिनां सम्यग्भजतां भाववर्धनः ॥ श्रेयो दिशत्यभिमतं यद्धर्मादिषु देहिनाम् ॥ ६० ॥ विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा ॥ तं निरन्तरभावेन भजेताद्धा विमुक्तये ॥ ६१ ॥ इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः ॥ ययौ मधुवनं पुण्यं हरेश्चरणचर्चितम् ॥ ६२ ॥ तपोवनं गते तस्मिन् प्रविष्टोऽन्तःपुरं मुनिः ॥ अर्हितार्हणको राज्ञा सुखासीन उवाच तम् ॥ ६३ ॥ नारद उवाच ॥ राजन् किं ध्यायसे दीर्घं मुखेन परिशुष्यता ॥ किं वा न रिष्यते कामो धर्मो वाऽर्थेन संयुतः ॥ ६४ ॥ राजोवाच ॥ सुतो मे बालको ब्रह्मन् स्त्रैणेनाकरुणात्मना ॥ निर्वासितः पञ्चवर्षः सह मात्रा महान् कविः ॥६५॥ अप्यनाथं वने ब्रह्मन् मा स्मादन्त्यर्भकं वृकाः ॥ श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् ॥६६॥ अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय ॥ योऽङ्कं प्रेम्णाऽऽरुरुक्षन्तं नाभ्यनन्दमसत्तमः ॥ ६७ ॥ नारद उवाच ॥ मा मा शुचः स्वतनयं देवगुप्तं विशांपते ॥ तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत् ॥ ६८ ॥

सति नारदः उत्तानपादं गत्वा पुत्रशोकातुरं राजानं जगाद ॥६३॥ नारद उवाच ॥ हे राजन् ! शुष्यन्मुखेन दीर्घं किं ध्यायसे ॥६४॥ राजोवाच ॥ हे ब्रह्मन् ! मया पञ्चवर्षो बालो मात्रा सह निर्वासितः ॥६५॥ हे नारद ! वने तं श्रान्तं क्षुधितं शयानं वृकादयः किं न खादन्ति ॥६६॥ अहो ! स्त्रीजितस्य मे दौरात्म्यं पश्य ! प्रेम्णाऽङ्कमारुरुक्षन्तं तं नाभ्यनन्दम् ॥६७॥ नारद उवाच ॥ हे राजन् ! श्रीहरिणा रक्षितं पुत्रं मा शुचः ।

यस्य यशो विश्वं व्याप्नोति ॥६८॥ तव पुत्रो देवैरपि कर्तुमशक्यं कर्म कृत्वाऽचिरात् एष्यति ॥६९॥ मैत्रेय उवाच ॥ इति नारदेनोक्तं श्रुत्वा राजा राज्यलक्ष्मीमनादृत्य पुत्रमेव चिन्तयामास ॥ ७० ॥ ततो ध्रुवो मधुवनं गत्वा तां रात्रिमुपोष्य नारदोक्तमंत्रेण हरिं पूजयामास ॥७१॥ ततस्त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनो हरिं पूजयन् मासं निन्ये ॥७२॥ षष्ठे षष्ठे दिने गलिततृणपर्णादिभिः कृतान्नो द्वितीयं मासं निन्ये

सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः ॥ एष्यत्यचिरतो राजन् यशो विपुलयंस्तव ॥ ६९ ॥ मैत्रेय उवाच ॥ इति देवर्षिणा प्रोक्तं विश्रुत्य जगतीपतिः ॥ राजलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥७०॥ तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम् ॥ समाहितः पर्यचरदृष्यादेशेन पूरुषम् ॥ ७१ ॥ त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः ॥ आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन् हरिम् ॥ ७२ ॥ द्वितीयं च तथा मासं षष्ठे षष्ठेऽर्भको दिने ॥ तृणपर्णादिभिः शीर्णैः कृतान्नोऽभ्यर्चयद्विभुम् ॥७३ ॥ तृतीयं चानयन्मासं नवमे नवमेऽहनि ॥ अब्भक्ष उत्तमश्लोकमुपाधावत् समाधिना ॥७४॥ चतुर्थमपि वै मासं द्वादशे द्वादशेऽहनि ॥ वायुभक्षो जितश्वासो ध्यायन् देवमधारयत् ॥ ७५ ॥ पञ्चमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः ॥ ध्यायन् ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ॥ ७६ ॥ सर्वतो मन आकृष्य हृदि भूतेन्द्रियाशयम् ॥ ध्यायन् भगवतो रूपं नाद्राक्षीत् किंचनापरम् ॥ ७७ ॥ आधारं महदादीनां प्रधानपुरुषेश्वरम् ॥ ब्रह्म धारयमाणस्य त्रयो लोकाश्चकम्पिरे ॥ ७८ ॥ यदैकपादेन स पार्थिवार्भकस्तस्थौ तदङ्गुष्ठनिपीडिता मही ॥ ननाम तत्रार्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥ ७९ ॥

॥७३॥तथा नवमे नवमेऽहनि जलभक्षः समाधिना हरिं ध्यायन् तृतीयं मासं निन्ये॥७४॥द्वादशे द्वादशेऽहनि वायुभक्षो जितश्वासो देवं ध्यायन् चतुर्थं मासं निन्ये ॥७५॥ पञ्चमे मासि जितश्वासः एकपादेन पर्वत इव स्थित्वा ॥७६॥ सर्वतो मन आकृष्य ब्रह्म ध्यायन् किंचिदन्यन्नाद्राक्षीत् ॥७७॥ एवं ब्रह्म धारयमाणस्य सतस्त्रयो लोकाश्चकम्पिरे ॥७८॥ यदा स एकपादेन तस्थौ तदा तदंगुष्ठनिपीडिता मही ननाम ॥ ७९ ॥

तस्य श्वासनिरोधेन विश्वस्य प्राणनिरोधो जातः । तदा सर्वे देवाद्याः भीताः सन्तो हरिं शरणं गत्वोचुः ॥ ८० ॥ देवाः ऊचुः । हे भगवन् ! सर्वस्य प्राणनिरोधं वयं न जानीमः ! अतो वृजिनान्मोक्षं विधेहि ॥८१॥ श्रीभगवानुवाच । हे देवाः ! मां भैष्ट । यस्मात् वः प्राणनिरोधो जातः तं बालं तपसो निवर्तयिष्ये यूयं स्वस्थानं यात ॥८२॥ इति श्रीभा० म० चू० चतुर्थ० अष्टमोऽध्यायः ॥८॥ नवमे तु हरिं स्तुत्वा लब्ध्वा तस्माद्वरं ध्रुवः । प्रत्यागत्याकरोद्राज्यं पित्रा दत्तमितीर्यते ॥ १ ॥ मैत्रेय उवाच । देवाः भगवद्वाक्यात् निर्भया भूत्वा स्वर्गं ययुः । हरिरपि

तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया ॥ लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ॥८०॥ देवा ऊचुः ॥ नैवं विदामो भगवन् प्राणरोधं चराचरस्याखिलसत्त्वधाम्नः ॥ विधेहि तन्नो वृजिनाद्विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम् ॥८१॥ श्रीभगवानुवाच ॥ मा भैष्ट बालं तपसो दुरत्ययान्निवर्तयिष्ये प्रतियात स्वधाम ॥ यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि संगतात्मा ॥८२॥ इति श्रीभा० म० चतुर्थ० ध्रुवोपाख्याने मधुवनसमागमनवर्णनं नामाष्टमोऽध्यायः ॥८॥ मैत्रेय उवाच ॥ त एवमुच्छिन्नभया उरुक्रमे कृतावनामाः प्रययुस्त्रिविष्टपम् ॥ सहस्रशीर्षाऽपि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षया गतः ॥ १ ॥ स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम् ॥ तिरोहितं सहसैवोपलक्ष्य बहिःस्थितं तदवस्थं ददर्श ॥२॥ तद्दर्शनेनागतसाध्वसः क्षिताववन्दताङ्गं विनमय्य दण्डवत् ॥ दृग्भ्यां प्रपश्यन्प्रपिबन्निवार्भकश्चुम्बन्निवास्येन भुजैरिवाश्लिषन् ॥ ३ ॥ स तं विविक्षन्तमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः ॥ कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥४॥ स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः ॥ तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षितिः ॥५॥

गरुडमारुह्य मधुवनं ययौ ॥ १ ॥ ध्रुवो हृदिस्थं हरिमन्तर्हितं दृष्ट्वा सावधानो बहिः स्थितं दृष्ट्वा ॥ २ ॥ तद्दर्शनेन जातसंभ्रमो दृग्भ्यां प्रपिबन्निव पश्यन् भूमौ दण्डवत् ननाम ॥ ३ ॥ ततो हरिः स्वगुणान् वक्तुमिच्छन्तं ज्ञात्वा तस्य कपोले शङ्खेन पस्पर्श ॥ ४ ॥ तदा स शङ्खस्पर्शमात्रेणोत्पन्नज्ञानस्तं तुष्टाव ॥ ५ ॥

ध्रुव उवाच॥यस्त्वमन्तः प्रविश्य मम सुप्तां वाचमन्यांश्चेन्द्रियादीन् संजीवयसि तस्मै तुभ्यं नमः॥६॥ हे भगवन्! त्वमेको माययेदं सृष्ट्वा तदनुप्रविश्य नानाविधो भासि॥७॥ हे हरे! त्वद्दत्तज्ञानेन त्वां शरणंप्राप्तो ब्रह्मेदं विश्वं ददर्श! अतो मुक्तानामपि शरणं त्वां ये न भजन्ति ते कृतघ्नाः॥८॥ किंचजन्ममरणनाशहेतुं त्वां ये कामाद्यर्थं भजन्ति ते नूनं ततोऽपिमूढाः॥९॥ हे नाथ! तव पादपद्मध्यानात् कथाश्रवणेन च या निर्वृतिः स्यात् सा

ध्रुव उवाच ॥ योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना ॥ अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥ ६ ॥ एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम् ॥ सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि ॥ ७ ॥ त्वद्दत्तया वयुनयेदमचष्ट विश्वं सुप्तः प्रबुद्ध इव नाथ भवत्प्रपन्नः ॥ तस्यापवर्ग्यशरणं तव पादमूलं विस्मर्यते कृतविदा कथमार्तबन्धो ॥ ८ ॥ नूनं विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ॥ अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम् ॥ ९ ॥ या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ॥ सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्किं त्वन्तकासिलुलितात् पततां विमानात् ॥ १० ॥ भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त महताममलाशयानाम् ॥ येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ११ ॥ ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः ॥ ये त्वब्जनाभ भवदीयपदारविन्दसौगन्धलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥ तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिः परिचितं सदसद्विशेषम् ॥ रूपं स्थविष्ठमज ते महदाद्यनेकं नातः परं परम वेद्मि न यत्र वादः ॥ १३ ॥

स्वकीय आनन्दरूपेऽपि न भवति॥१०॥अतो हे हरे! तव भक्तिंकुर्वतां साधूनां प्रसंगो मम भूयात् येन भवाब्धिं तरिष्ये॥११॥येत्वच्चरणकमलसुगंधेन लुब्धहृदयास्तेऽपि प्रियं देहंपुत्रादींश्च न स्मरन्ति ॥१२॥ हे अज तव विराड्रूपं केवलं वेद्मि ब्रह्मरूपं न वेद्मि यत्र शब्दव्यापारो नैवास्ति ॥१३॥

१ कुणपतुल्येन देहेन । २ भयावहम् । ३ अदो मर्त्यमनु सम्बद्धाः । ४ सन्तोऽसन्तश्च विशेषाः यत्र ।

यः कल्पान्ते इदं संहृत्य शेषोत्संगे शेते। यस्य नाभिकमलाद् ब्रह्मा भवति तस्मै प्रणतोऽस्मि ॥१४॥ हे ईश ! नित्यमुक्तः शुद्धः इत्यादिभूतस्त्वं पालने विष्णुः ॥१५॥ यस्मिन् विद्यादयो विविधशक्तयोऽकस्मादुद्भवन्ति तमानन्दमात्रमविकारं शरणं प्राप्तोऽस्मि ॥१६॥ हे भगवन्! सकामानपि संसारभयात् त्वं रक्षस्येव ॥१७॥ मैत्रेय उवाच॥ एवं स्तुतिं श्रुत्वा प्रीतो हरिरिदमाह॥१८॥ श्रीभगवानुवाच। हे ध्रुव! तवेच्छां वेद्मि तद्ददामि ते

कल्पान्त एतदखिलं जठरेण गृह्णञ्छेते पुमान्स्वदृगनन्तसखस्तदंके ॥ यन्नाभिसिन्धुरुहकाञ्चनलोकपद्मगर्भे द्युमान्भगवते प्रणतोऽस्मि तस्मै ॥१४॥ त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ॥ यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥ १५ ॥ यस्मिन्विरुद्धगतयो ह्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्यात्॥ तद्ब्रह्म विश्वभवमेकमनन्तमाद्यमानन्दमात्रमविकारमहं प्रपद्ये ॥१६॥ सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथाऽनुभजतः पुरुषार्थमूर्तेः॥ अप्येवमार्य भगवान्परिपाति दीनान्वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १७ ॥ मैत्रेय उवाच ॥ अथाभिष्टुत एवं वै सत्संकल्पेन धीमता ॥ भृत्यानुरक्तो भगवान्प्रतिनन्द्येदमब्रवीत् ॥ १८ ॥ श्रीभगवानुवाच ॥ वेदाहं ते व्यवसितं हृदि राजन्यबालक ॥ तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ॥१९॥ नान्यैरधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुवक्षिति ॥ यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥ २० ॥ मेढ्यां गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम् ॥ धर्मोऽग्निः कश्यपः शक्रो मुनयो ये वनौकसः ॥ चरन्ति दक्षिणीकृत्य भ्रमन्तो यत्सतारकाः ॥२१॥ * प्रस्थिते तु वनं पित्रा दत्त्वा गां धर्मसंश्रयः ॥ षट्त्रिंशद्वर्षसाहस्रं रक्षिता मण्डलं भुवः ॥२२॥

भद्रम्।१९।यत्र ग्रहनक्षत्रताराणां चक्रम्॥२०॥धान्याक्रमणाय भ्राम्यमाणानांपशूनां बन्धनस्तम्भे वृषसमूहवद्बद्धम्। यत्र धर्माग्निकश्यपादयो मुनयः प्रदक्षिणीकृत्य चरन्ति तद्ध्रुवपदं तवास्तु॥२१॥तुभ्यं पृथ्वीं दत्त्वा तव पितरि वनं गते सति षट्त्रिंशद्वर्षसाहस्रं(३६०००)राज्यं करिष्यसि॥२२॥

---

१ यन्नाधिष्ठितः । २ तव पादपद्ममाशीः । ३ त्वमेव पुरुषार्थं इति बुद्ध्या । ४ नवप्रसूता गौरिव । ५ अवान्तरकल्पवासिनां परस्तादपि लोकत्रयनाशेऽप्यनस्वरम् । * सर्वेषामभवत्सिद्धो ध्रुवोत्तानपदः सुतः । इत्यधिकः कुत्रचित् ।

त्वद्भ्रातरि मृगयायां नष्टे सति तन्माता सुरुचिस्तं मृगयन्ती दावाग्निं प्रवेक्ष्यति ॥ २३ ॥ त्वं यज्ञैर्मामिष्ट्वा भुवो भोगान् भुक्त्वाऽन्ते मां स्मरिष्यसि॥२४॥ततः ऋषिभ्य उपरिष्टात् सर्वलोकनमस्कृतं ध्रुवं मत्स्थानं गमिष्यसि॥२५॥मैत्रेय उवाच॥इत्युक्त्वा भगवान् स्वधाम जगाम॥२६॥ ध्रुवोऽपि मनोरथं प्राप्य नातिप्रीतमनाः सन् पुरं जगाम।२७। विदुर उवाच॥हे मुने! ध्रुवो हरेः पदं लब्ध्वाऽप्यात्मानमप्राप्तमनोरथमिव कथं मेने।२८।

त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः ॥ अन्वेषन्ती वनं माता दावाग्निं सा प्रवेक्ष्यति ॥ २३ ॥ इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः ॥ भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि ॥ २४ ॥ ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् ॥ उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते गतः ॥ २५ ॥ मैत्रेय उवाच ॥ इत्यर्चितः स भगवानतिदिश्यात्मनः पदम् ॥ बालस्य पश्यतो धाम स्वमगाद्गरुडध्वजः ॥ २६ ॥ सोऽपि संकल्पजं विष्णोः पादसेवोपसादितम् ॥ प्राप्य संकल्पनिर्वाणं नातिप्रीतोऽभ्यगात्पुरम् ॥ २७ ॥ विदुर उवाच ॥ सुदुर्लभं यत्परमं पदं हरेर्मायाविनस्तच्चरणार्चनार्चितम् ॥ लब्ध्वाऽप्यसिद्धार्थमिवैकजन्मना कथं स्वमात्मानममन्यतार्थवित् ॥ २८ ॥ मैत्रेय उवाच ॥ मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान्स्मरन् ॥ नैच्छन्मुक्तिपतेर्मुक्तिं तस्मात्तापमुपेयिवान् ॥ २९ ॥ ध्रुव उवाच ॥ समाधिनानेकभवेन यत्पदं विदुः सनन्दादय ऊर्ध्वरेतसः ॥ मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापगतः पृथङ्मतिः ॥ ३० ॥ अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत ॥ भवच्छिदः पादमूलं गत्वा याचे यदन्तवत् ॥ ३१ ॥ मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः ॥ यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः ॥३२॥ दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् ॥ तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥

मैत्रेयउवाच॥सपत्नमातुर्वाग्बाणैर्विद्धो ध्रुवस्तान् वाग्बाणान् स्मरन् सन् मुक्तिं नैच्छत् तस्मात् तापं प्राप्तः।२९।ध्रुवउवाच॥सनकादयो बहुजन्मभिर्यत्पदं विदुः तत्पदं षण्मासैरहं प्राप्यापगतः।३०। अहो मन्दभाग्यस्य मेऽज्ञानं पश्यत। भवच्छिदः पादमूलं गत्वा यन्नाशवत् तद्याचे।३१। नारदवचो न गृह्णतो मे मतिः देवैर्दूषिता॥३२॥दैवीं मायामाश्रित्य द्वितीयेऽसत्यपि भ्रातैव भ्रातृव्यः शत्रुरिति दृष्ट्या सृष्टेन हृदयशोकेन तापमनुभवामि॥३३॥

ईश्वरमाराध्य मयैतद्राज्यादि व्यर्थं प्रार्थितम्। अहं निर्दैवो भवच्छिदं हरिं भवं याचे॥३४॥ अहो निजानन्दं ददतो हरेः सकाशात् मया मानो याचितः ॥३५॥ मैत्रेय उवाच ॥ हे विदुर! त्वादृशाः हरिदास्यं विनाऽन्यत् न वाञ्छन्ति ॥३६॥ अथोत्तानपादो मृत्वाऽऽगतं श्रुत्वा यथा तथा आयान्तं पुत्रं श्रुत्वा विश्वासं न चकार ॥ ३७ ॥ ततो नारदोक्तं स्मृत्वा विश्वासेन वार्त्ताहर्तुर्हारं ददौ ॥ ३८ ॥ ततः ससुवर्णष-

मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि ॥ प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ॥ भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ॥ ३४ ॥ *स्वाराज्यं यच्छतो मौढ्यान्मानो मे भिक्षितो बत ॥ ईश्वरात्क्षीणपुण्येन फलीकारानिवाधनः ॥३५॥ मैत्रेय उवाच ॥ न वै मुकुन्दस्य पदारविन्दयो रजोजुषस्तात भवादृशा जनाः ॥ वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो यदृच्छया लब्धमनस्समृद्धयः ॥ ३६ ॥ आकर्ण्यात्मजमायान्तं संपरेत्य यथाऽऽगतम् ॥ राजा न श्रद्दधे भद्रमभद्रस्य कुतो मम ॥३७॥ श्रद्धाय वाक्यं देवर्षेर्हर्षवेगेन धर्षितः ॥ वार्ताहर्तुरतिप्रीतो हारं प्रादान्महाधनम् ॥ ३८ ॥ सदश्वं रथमारुह्य कार्तस्वरपरिष्कृतम् ॥ ब्राह्मणैः कुलवृद्धैश्च पर्यस्तोऽमात्यबन्धुभिः ॥ ३९ ॥ शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः ॥ निश्चक्राम पुरात्तूर्णमात्मजाभीक्षणोत्सुकः ॥ ४० ॥ सुनीतिः सुरुचिश्चास्य महिष्यौ रुक्मभूषिते ॥ आरुह्य शिबिकां सार्धमुत्तमेनाभिजग्मतुः ॥ ४१ ॥ तं दृष्ट्वोपवनाभ्याश आयान्तं तरसा रथात् ॥ अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वलः ॥४२॥ परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः श्वसन् ॥ विष्वक्सेनाङ्घ्रिसंस्पर्शहताशेषाघबन्धनम् ॥ ४३ ॥ अथाजिघ्रन्मुहुर्मूर्ध्नि शीतैर्नयनवारिभिः ॥ स्नापयामास तनयं जातोद्दाममनोरथः ॥ ४४ ॥

रिच्छदं रथमारुह्य ब्राह्मणैः कुलवृद्धैरमात्यबन्धुभिः सह ॥ ३९ ॥ शङ्खदुन्दुभिनादेन पुत्रावलोकनेच्छुः सम्मुखं जगाम ॥४०॥ तथा सुरुचिः सुनीतिश्चोत्तमेन सह शिबिकामारुह्य जग्मतुः ॥ ४१ ॥ ततो नगरसमीपे ध्रुवं दृष्ट्वा राजा रथात्तूर्णमवप्लुत्य ॥४२॥ प्रेमविह्वलस्तं दोर्भ्यां गृहीत्वा आलिङ्गयामास ॥ ४३ ॥ ततो मूर्ध्नि घ्रात्वा प्राप्तमनोरथः प्रेमाश्रुभिः पुत्रं स्नापयामास ॥ ४४ ॥

* भाग्यं फलति सर्वत्र न विद्या न तपः फलम् ॥ इ० पा० ।

अथ ध्रुवः पितुः पादौ ननाम मातरौ च ॥ ४५ ॥ सुरुचिः समुत्थाप्यालिङ्ग्य बाष्पगद्गदवाण्या जीवेत्याशीर्वादं ददौ ॥ ४६ ॥ भगवान्
मैत्र्यादिगुणैर्यस्य प्रसन्नस्तस्मै सर्वभूतानि नमन्ति ॥ ४७ ॥ उत्तमो ध्रुवश्चान्योन्यं प्रेमविह्वलावालिलिङ्गतुः ॥ ४८ ॥ ततः सुनीतिः प्रियं
सुतमालिङ्ग्य दुःखं जहौ ॥ ४९ ॥ तस्याःस्तनाभ्यां पयः सुस्राव ॥ ५० ॥ ततो जनाः सुनीतिं प्रशशंसुः । हे सुनीते ! चिरं नष्टः पुत्रः प्राप्तः ।

अभिवन्द्य पितुः पादावाशीर्भिश्चाभिमन्त्रितः ॥ ननाम मातरौ[1] शीर्ष्णा सत्कृतः सज्जनाग्रणीः ॥४५॥ सुरुचिस्तं समु-
त्थाप्य पादावनतमर्भकम् ॥ परिष्वज्याह जीवेति बाष्पगद्गदया गिरा ॥ ४६ ॥ यस्य प्रसन्नो भगवान्गुणैर्मैत्र्यादि-
भिर्हरिः ॥ तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ ४७ ॥ उत्तमश्च ध्रुवश्चोभावन्योऽन्यं प्रेमविह्वलौ ॥ अङ्ग-
सङ्गादुत्पुलकावस्रौघं मुहुरूहतुः ॥ ४८ ॥ सुनीतिरस्य जननी प्राणेभ्योऽपि प्रियं सुतम् ॥ उपगुह्य जहावाधिं तदङ्गस्प-
र्शनिर्वृता ॥ ४९ ॥ पयः स्तनाभ्यां सुस्राव नेत्रजैः सलिलैः शिवैः ॥ तदाऽभिषिच्यमानाभ्यां वीर वीरसुवो मुहुः ॥
॥ ५० ॥ तां शशंसुर्नरा राज्ञीं दिष्ट्या ते पुत्र आर्तिहा ॥ प्रतिलब्धश्चिरं नष्टो रक्षिता मण्डलं भुवः ॥५१॥ अभ्यर्चि-
तस्त्वया नूनं भगवान्प्रणतार्त्तिहा ॥ यदनुध्यायिनो वीरा मृत्युं जिग्युः सुदुर्जयम् ॥ ५२ ॥ लाल्यमानं जनैरेवं ध्रुवं
सभ्रातरं नृपः ॥ आरोप्य करिणीं हृष्टः स्तूयमानोऽविशत्पुरम् ॥५३॥ तत्र तत्रोपसंक्लृप्तैर्लसन्मकरतोरणैः ॥ सवृन्दैः
कदलीस्तम्भैः पूगपोतैश्च[2] तद्विधैः ॥ ५४ ॥ चूतपल्लववासस्स्रङ्मुक्तादामविलम्बिभिः ॥ उपस्कृतं प्रतिद्वारमपां कुम्भैः
सदीपकैः ॥ ५५ ॥ प्राकारैर्गोपुरागारैः शातकुम्भपरिच्छदैः ॥ सर्वतोऽलंकृतं श्रीमद्विमानशिखरद्युभिः ॥ ५६ ॥

एतद् दिष्ट्या ॥५१॥ किंच त्वया भगवान् पूजितः ॥ ५२ ॥ नृपो ध्रुवं हस्तिनीं प्रत्यारोप्यानेकशोभाढ्यं नगरं प्राविशत् ॥ ५३ ॥ नगरं
वर्णयति कथंभूतं पुरं सफलैः कदलीस्तम्भतोरणैर्लघुपूगवृक्षैः शोभितम् ॥ ५४ ॥ आम्रपत्रवस्त्रपुष्पमुक्तादामविलम्बिभिर्जलकुम्भैः सदीपैः
प्रतिद्वारमुपस्कृतम् ॥ ५५ ॥ प्राकारैर्गोपुरागारैः सर्वतः समलंकृतम् ॥ ५६ ॥

१ 'मातरम्' इ० पा० । २ पोता अल्पवृक्षाः ।

संमार्जितचत्वररथ्याट्टमार्गं लाजाक्षतपुष्पफलादिभिर्युतम्॥५७॥तत्र तत्र पुरस्त्रियः पथि ध्रुवं प्रति सर्षपाक्षतदध्यम्बुदूर्वापुष्पफलैः प्रविकिरन्त्यः सत्यः॥५८॥आशिषो ददुः। ध्रुवस्तत्सुन्दरगीतानि शृण्वन् पितुर्गृहं प्राविशत्॥५९॥ स तस्मिन् भवनोत्तमे पित्रा लालितो दिवि देववत् न्यवसत् ॥६०॥ गृहं वर्णयति। यत्र पयः फेनसदृशाः शय्याः सुवर्णमयाः उपस्कराः ॥६१॥ यत्र स्फटिककुडचेषु स्त्रीरत्नयुक्ताः मणिप्रदीपाः शोभन्ते ॥ ॥६२॥ यत्र विचित्रदेववृक्षैर्गायन्मत्तभ्रमरैः शोभितान्युद्यानानि ६३॥यत्र वैडूर्यमणिसोपाना हंसकारण्डवकुलैर्व्याप्ताः वाप्यश्च सन्ति॥६४॥उत्ता-

मृष्टचत्वररथ्याट्टमार्गं चन्दनचर्चितम् ॥ लाजाक्षतैः पुष्पफलैस्तण्डुलैर्बलिभिर्युतम् ॥५७॥ ध्रुवाय पथि दृष्टाय तत्र तत्र पुरस्त्रियः ॥ सिद्धार्थाक्षतदध्यम्बुदूर्वापुष्पफलानि च ॥५८॥ उपजह्रुः प्रयुञ्जाना वात्सल्यादाशिषः सतीः ॥ शृण्वंस्तद्वल्गुगीतानि प्राविशद्भवनं पितुः ॥ ५९ ॥ महामणिव्रातमये स तस्मिन्भवनोत्तमे ॥ लालितो नितरां पित्रा न्यवसद्दिवि देववत् ॥६०॥ पयः फेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ॥ आसनानि महार्हाणि यत्र रौक्मा उपस्कराः ॥ ॥ ६१ ॥ यत्र स्फटिककुडचेषु महामारकतेषु च ॥ मणिप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ ६२ ॥ उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः ॥ कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ ६३ ॥ वाप्यो वैडूर्यसोपानाः पद्मोत्पलकुमुद्वतीः ॥ हंसकारण्डवकुलैर्जुष्टाश्चक्राह्वसारसैः ॥ ६४ ॥ उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् ॥ श्रुत्वा दृष्ट्वाऽद्भुततमं प्रपेदे विस्मयं परम् ॥६५॥ वीक्ष्योढवयसं तं च प्रकृतीनां च संमतम् ॥ अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ॥६६॥ आत्मानं च प्रवयसमाकलय्य विशांपतिः ॥ वनं विरक्तः प्रातिष्ठद्विमृशन्नात्मनो गतिम् ॥६७॥ इति श्रीभा० म० च० ध्रुवोपाख्याने नवमोऽध्यायः ॥९॥ मैत्रेय उवाच ॥ प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः ॥ उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ ॥१॥

नपादः पुत्रस्य प्रतापं श्रुत्वा दृष्ट्वा च परं विस्मयं प्राप॥६५॥ततः स प्राप्तयौवनं प्रजानां मान्यं ध्रुवं दृष्ट्वा भुवः पतिं चक्रे॥६६॥स्वयं वृद्धो विरक्तः सन् वनं जगाम ॥६७॥ इति श्रीभा० चू० चतुर्थ नवमोऽध्यायः ॥९॥ दशमे भ्रातृहन्तॄणां यक्षाणामकरोद्वधम् । एक एवालकां गत्वा तस्य विक्रम उच्यते ॥ १ ॥ मैत्रेय उवाच ॥ ध्रुवः शिशुमारस्य प्रजापतेर्भ्रमिं नाम कन्यां परिणिनाय । तत्सुतौ कल्पवत्सरावास्ताम् ॥ १ ॥

१ शिशमारेति ऋग्वेदे पाठः ।

द्वितीयायां वायोः पुत्र्यामिलायामुत्कलं पुत्रं जनयामास ॥२॥ अकृतविवाहः उत्तमस्तु हिमाद्रौ मृगयार्थं गतः तत्र यक्षेण हतः । तन्माताऽपि तं मृगयन्ती दावाग्निना मृता ॥ ३ ॥ ध्रुवो भ्रातृवधं श्रुत्वा क्रोधयुक्तो रथमास्थायोत्तरदिशं गत्वा यक्षभूतादिव्याप्तामलकां दृष्ट्वा ॥४॥५॥ खं दिशश्च नादयन् शङ्खं दध्मौ । तच्छब्देन यक्षस्त्रियोऽत्रसन् ॥ ६ ॥ ततो यक्षास्तं निनादं श्रुत्वोदायुधाः अभिपेतुः ॥ ७ ॥ ध्रुवः आपततस्तान्



इलायामपि भार्यायां वायोः पुत्र्यां महाबलः ॥ पुत्रमुत्कलनामानं योषिद्रत्नमजीजनत् ॥ २ ॥ उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा ॥ हतः पुण्यजनेनाद्रौ तन्माताऽस्य गतिं गता ॥३॥ ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचाऽर्पितः ॥ जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम् ॥ ४ ॥ गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम् ॥ ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसंकुलाम् ॥५॥ दध्मौ शङ्खं बृहद्बाहुः खं दिशश्चानुनादयन् ॥ येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन्भृशम् ॥६॥ ततो निष्क्रम्य बलिन उपदेवमहाभटाः ॥ असहन्तस्तं निनादमभिपेतुरुदायुधाः ॥७॥ स तानापततो वीर उग्रधन्वा महारथः ॥ एकैकं युगपत्सर्वानहन् बाणैस्त्रिभिस्त्रिभिः ॥ ८ ॥ ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि ॥ मत्वा निरस्तमात्मानमाशंसन्कर्म तस्य तत् ॥ ९ ॥ तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगाः ॥ शरैरविध्यन्युगपद्द्विगुणं प्रचिकीर्षवः ॥ १० ॥ ततः परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः ॥ शक्त्यृष्टिभिर्भुशुण्डीभिश्चित्रवाजैः शरैरपि ॥ ११ ॥ अभ्यवर्षन्प्रकुपिताः सरथं सहसारथिम् ॥ इच्छन्तस्तत्प्रतीकर्तुमयुतानि त्रयोदश ॥ १२ ॥ औत्तानपादिः स तदा शस्त्रवर्षेण भूरिणा ॥ न उपादृश्यत च्छन्न आसारेण यथा गिरिः ॥ १३ ॥

त्रयोदशयुतानि ( १३०००० ) यक्षानेकैकं त्रिभिस्त्रिभिर्बाणैर्युगपल्ललाटे जघान ॥ ८ ॥ तदा ते आत्मानं पराजितं मत्वा ध्रुवस्य तत् कर्म तुष्टुवुः ॥ ९ ॥ तेऽपि यक्षाः द्विगुणबाणैर्ध्रुवं विविधुः ॥ १० ॥ ततः परिघनिस्त्रिंशप्रासशूलपरश्वधादिभिस्ते त्रयोदशायुतसंख्यकाः सरथं ध्रुवं प्रति ववृषुः ॥ ११ ॥ १२ ॥ ततो ध्रुवस्तेषां शस्त्रवर्षेण नादृश्यत वर्षधाराभिः पर्वत इव ॥ १३ ॥

१ स्त्रीमनोहरं, कन्यारत्नं चेति वा ।

तदा सिद्धानां पश्यतां हाहाकारो बभूव । अहो अयं सूर्यतुल्यो मानवो यक्षजनरूपे समुद्रे मग्नः ॥ १४॥ तथा युधि राक्षसेषु नदत्सु सत्सु नीहारात् सूर्य इव ध्रुवरथः उदतिष्ठत् ॥१५॥ ततो ध्रुवो धनुर्विस्फूर्जयन् तेषामस्त्रौघं बाणैः चूर्णयामास ॥ १६ ॥ ध्रुवमुक्ता बाणाः रक्षसां कवचानि भित्त्वा कायानाविविशुः ॥ १७ ॥ बाणैश्छिद्यमानानां रक्षसां शिरोभिरूरुभिर्वलयवल्गुभिर्दोर्भिर्हारकेयूरमुकुटकुण्डलैरुष्णीषैश्चास्तृता रणभूः

हाहाकारस्तदैवासीत्सिद्धानां दिवि पश्यताम् ॥ हतोऽयं मानवः सूर्यो मग्नः पुण्यजनार्णवे ॥ १४ ॥ नदत्सु यातुधानेषु जयकाशिष्वथो मृधे ॥ उदतिष्ठद्रथस्तस्य नीहारादिव भास्करः ॥ १५ ॥ धनुर्विस्फूर्जयन्दिव्यं द्विषतां खेदमुद्वहन् ॥ अस्त्रौघं व्यधमद्बाणैर्घनानीकमिवानिलः ॥ १६ ॥ तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम् ॥ कायानाविविशुस्तिग्मा गिरीनशनयो यथा ॥ १७ ॥ भल्लैः संच्छिद्यमानानां शिरोभिश्चारुकुण्डलैः ॥ ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः ॥ १८ ॥ हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः ॥ आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः ॥ १९ ॥ हतावशिष्टा इतरे रणाजिराद्रक्षोगणाः क्षत्रियवर्यसायकैः ॥ प्रायो विवृक्णावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव ॥ २० ॥ अपश्यमानः स तदाऽऽततायिनं महामृधे कंचन मानवोत्तमः ॥ पुरीं दिदृक्षन्नपि नाविशद्द्विषां न मायिनां वेद चिकीर्षितं जनः ॥ २१ ॥ इति ब्रुवंश्चित्ररथः स्वसारथिं यत्तः परेषां प्रतियोगशङ्कितः ॥ शुश्राव शब्दं जलधेरिवेरितं नभस्वतो दिक्षु रजोऽन्वदृश्यत ॥२२॥ क्षणेनाच्छादितं व्योम घनानीकेन सर्वतः ॥ विस्फुरत्तडिता दिक्षु त्रासयत्स्तनयित्नुना ॥ २३ ॥

रराज ॥ १८ ॥ १९ ॥ हतावशिष्टाः यक्षाः प्रायो ध्रुवबाणैश्छिन्नावयवाः दुद्रुवुः ॥२०॥ ध्रुवो युधि कञ्चन शस्त्रपाणिं न पश्यन् पुरीं दिदृक्षमाणोऽपि नाविशत् ॥ २१ ॥ ध्रुवः स्वसारथिं जनो मायिनां चिकीर्षितं न वेदेति ब्रुवन् शत्रूणां पुनरुद्योगात् शङ्कितो जातः ॥ तदैव तेऽदृश्याः भूत्वा आसुरीर्मायाः ससृजुः । तदेवाह । आदौ रजो ददृशे ॥ २२ ॥ मेघसमुदायेन व्योम सर्वतः आच्छादितम् ॥ २३ ॥

१ जयप्रकाशकेषु । २ संछिन्नावयवाः । ३ 'यत्तः' इ० पा० ।

मेघाः रुधिरपूयविण्मूत्रमेदसो ववृषुः । अस्याग्रतो गगनात् कबन्धाः निपेतुः ॥ २४ ॥ गदापरिघनिस्त्रिंशमुसलपाषाणाश्च पेतुः ॥ २५ ॥ सर्प-
व्याघ्रगजसिंहादयोऽभ्यधावन् ॥२६॥ समुद्रः ऊर्मिभिर्भुवं प्लावयन्निव ददृशे ॥ २७ ॥ एवं ते यक्षाः मायया भयंकरानुत्पातान् ससृजुः ॥२८॥
तदा मुनयः एतज्ज्ञात्वा तत्रागत्य ध्रुवस्य कल्याणमिच्छन्तः आहुः ॥२९॥ मुनय ऊचुः ॥ हे औत्तानपादे ! भगवान् शार्ङ्गधन्वा तव शत्रून्

ववृषू रुधिरौघासृक्पूयविण्मूत्रमेदसः ॥ निपेतुर्गगनादस्य कबन्धान्यग्रतोऽनघ ॥ २४ ॥ ततः खेऽदृश्यत गिरिर्निपेतुः
सर्वतोदिशम् ॥ गदापरिघनिस्त्रिंशमुसलाः साश्मवर्षिणः ॥ २५ ॥ अहयोऽशनिनिश्श्वासा वमन्तोऽग्निं रुषाक्षिभिः ॥
अभ्यधावन्गजा मत्ताः सिंहव्याघ्राश्च यूथशः ॥ २६ ॥ समुद्र ऊर्मिभिर्भीमः प्लावयन्सर्वतो भुवम् ॥ आससाद महा-
ह्रादः कल्पान्त इव भीषणः ॥ २७ ॥ एवंविधान्यनेकानि त्रासनान्यमनस्विनाम् ॥ ससृजुस्तिग्मगतय आसुर्या माय-
याऽसुराः ॥ २८ ॥ ध्रुवे प्रयुक्तामसुरैस्तां मायामतिदुस्तराम् ॥ निशाम्य तस्य मुनयः शमाशंसन्समागताः ॥ २९ ॥
मुनय ऊचुः ॥ औत्तानपादे भगवांस्तव शार्ङ्गधन्वा देवः क्षिणोत्ववनतार्तिहरो विपक्षान् ॥ यन्नामधेयमभिधाय
निशम्य चाद्धा लोकोऽञ्जसा तरति दुस्तरमङ्ग मृत्युम् ॥३०॥ इति श्रीभा० म० चतुर्थ० ध्रुवोपाख्याने दशमोऽध्यायः
॥ १० ॥ मैत्रेय उवाच ॥ निशम्य गदतामेवमृषीणां धनुषि ध्रुवः ॥ संदधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम् ॥ १ ॥
संधीयमान एतस्मिन्माया गुह्यकनिर्मिताः ॥ क्षिप्रं विनेशुर्विदुर क्लेशा ज्ञानोदये यथा ॥ २ ॥ तस्यार्षमस्त्रं धनुषि प्रयु-
ञ्जतः सुवर्णपुङ्खाः कलहंसवाससः ॥ विनिस्सृता निर्विविशुर्द्विषद्बलं यथा वनं भीमरवाः शिखण्डिनः ॥ ३ ॥



नाशयतु लोको यन्नामोच्चारेण दुस्तरं मृत्युं तरति ॥ ३० ॥ इति श्रीभा० चू० चतु० दशमोऽध्यायः ॥ १० ॥ एकादशे तु यक्षाणां क्षयं दृष्ट्वा मनुः
स्वयम् । आगत्य वारयामास ध्रुवं तत्त्वोपदेशतः ॥१॥ मैत्रेय उवाच ॥ एवं वदतामृषीणां वाचं निशम्य ध्रुवो धनुषि नारायणास्त्रं संदधे ॥ १ ॥
अस्त्रे संधीयमाने गुह्यकनिर्मिताः माया यथा ज्ञानोदये क्लेशास्तथा विनेशुः ॥ २ ॥ नारायणास्त्रतो बाणाः निर्गत्य शत्रुसैन्यं विविशुः ॥३॥

१ अशनिवन्निश्श्वासो येषां ते । २ ऋषेर्नारायणादुद्भूतम् । ३ पुङ्खाः मूलप्रान्ताः । ४ कलहंसानां वासांसि पक्षाः येषां ते ।

तदा युधि बाणैरुपद्रुताः यक्षाः कुपिताः सन्तो ध्रुवमभ्यधावन् ॥४॥ ध्रुवस्तु बाणैर्यक्षान् छिन्नबाहूरुशिरोधरोदरान् कृत्वा परलोकं निनाय॥५॥ ध्रुवेण हन्यमानान् यक्षान् वीक्ष्य तदा मनुः ऋषिभिः सहैत्य ध्रुवं जगाद ॥ ६ ॥ मनुरुवाच । हे वत्स ! पाप्मना तमोद्वारेण क्रोधेनालम् । येन निरपराधान् यक्षानवधीः ॥७॥ एतत् सद्भिर्निन्दितं कर्मास्मत्कुलोचितं न । उपदेवानां वध आरब्धः इदं न न्याय्यम् ॥८॥ नन्वेकस्यापराधेन

तैस्तिग्मधारैः प्रधने शिलीमुखैरितस्ततः पुण्यजना उपद्रुताः ॥ तमभ्यधावन्कुपिता उदायुधाः सुपर्णमुन्नद्धफणा इवाहयः ॥ ४ ॥ स तान् पृषत्कैरभिधावतो मृधे निकृत्तबाहूरुशिरोधरोदरान् ॥ निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः ॥ ५ ॥ तान्हन्यमानानभिवीक्ष्य गुह्यकाननागसश्चित्ररथेन भूरिशः ॥ औत्तानपादिं कृपया पितामहो मनुर्जगादोपगतः सहर्षिभिः ॥ ६ ॥ मनुरुवाच ॥ अलं वत्सातिरोषेण तमोद्वारेण पाप्मना ॥ येन पुण्यजना-नेतानवधीस्त्वमनागसः ॥ ७ ॥ नास्मत्कुलोचितं तात कर्मैतत्सद्विगर्हितम् ॥ वधो यदुपदेवानामारब्धस्तेऽकृतैन-साम् ॥८॥ नन्वेकस्यापराधेन प्रसङ्गाद्बहवो हताः ॥ भ्रातुर्वधाभितप्तेन त्वयाऽङ्ग भ्रातृवत्सल ॥ ९ ॥ नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम् ॥ यदात्मानं पराग्गृह्य पशुवद्भूतवैशसम् ॥ १० ॥ सर्वभूतात्मभावेन भूतावासं हरिं भवान् ॥ आराध्याप दुराराध्यं विष्णोस्तत्परमं पदम् ॥ ११ ॥ स त्वं हरेरनुध्यातस्तत्पुंसामपि संमतः ॥ कथं त्ववद्यं कृतवाननुशिक्षन्सतां व्रतम् ॥ १२ ॥ तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु ॥ समत्वेन च सर्वात्मा भगवान्संप्र-सीदति ॥ १३ ॥ संप्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः ॥ विमुक्तो जीवनिर्मुक्तो ब्रह्मनिर्वाणमृच्छति ॥ १४ ॥

प्रसङ्गात् त्वया बहवो हताः ॥ ९ ॥ अयं साधूनां मार्गो न ॥१०॥ भवान् दुराराध्यं हरिमाराध्य विष्णोः परमं पदं लब्ध्वा ॥११॥ साधूनां व्रतं शिक्षमाणः कथं निन्द्यं कृतवानसि ॥१२॥ महत्सु तितिक्षया नीचेषु दयया समेषु मैत्र्या भगवान् प्रसीदति ॥१३॥ भगवति प्रसन्ने सति पुरुषः प्राकृतैर्गुणैर्मुक्तो ब्रह्मसुखं प्राप्नोति ॥ १४ ॥

१ युद्धे । २ उच्छ्रितफणाः । ३ संन्यासिनः । ४ पराग्भूतं देहमात्मानं गृहीत्वा ।

पञ्चभूतैर्देहाद्याकारेण परिणामं प्राप्तैः स्त्रीपुरुषौ भवतः। तयोर्मैथुनादन्ययोः स्त्रीपुरुषयोः संभूतिः॥१५॥ एवं भगवन्मायया सृष्टिचक्रं प्रवर्तते॥१६॥ ईश्वरस्तु निमित्तमात्रं यस्मिन् निमित्ते सति विश्वं वर्तते ॥१७॥ स भगवानकर्तैव करोति अहन्तैदं निहन्ति । तस्य कालशक्तिरचिन्त्या ॥१८॥ स जनेन जनं जनयन् मृत्युना मृत्युं मारयन् स्वयं त्वनन्तोऽनादिश्च ॥१९॥ अस्य स्वःपरःपक्षो न प्रजाः धावन्तं तमनुधावन्ति वायुं धावन्त-

भूतैः पञ्चभिरारब्धैर्योषित्पुरुष एव हि ॥ तयोर्व्यवायात्संभूतिर्योषित्पुरुषयोरिह ॥ १५ ॥ एवं प्रवर्तते सर्गः स्थितिः संयम एव च ॥ गुणव्यतिकराद्राजन्मायया परमात्मनः ॥ १६ ॥ निमित्तमात्रं तत्रासीन्निर्गुणः पुरुषर्षभः ॥ व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् ॥ १७ ॥ स खल्विदं भगवान्कालशक्त्या गुणप्रवाहेण विभक्तवीर्यः ॥ करोत्यकर्तैव निहन्त्यहन्ता चेष्टा विभूम्नः खलु दुर्विभाव्या ॥ १८ ॥ सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ॥ जनं जनेन जनयन्मारयन्मृत्युनाऽन्तकम् ॥ १९ ॥ न वै स्वपक्षोऽस्य विपक्ष एव वा परस्य मृत्योर्विशतः समं प्रजाः ॥ तं धावमानमनुधावन्त्यनीशा यथा रजांस्यनिलं भूतसंघाः ॥ २० ॥ आयुषोऽपचयं जन्तोस्तथैवोपचयं विभुः ॥ उभाभ्यां रहितः स्वस्थो दुःस्थस्य विदधात्यसौ ॥ २१ ॥ केचित्कर्म वदन्त्येनं स्वभावमपरे नृप ॥ एके कालं परे दैवं पुंसः काममुतापरे ॥ २२ ॥ अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च ॥ न वै चिकीर्षितं तात को वेदाथ स्वसंभवम् ॥२३॥ न चैते पुत्रक भ्रातुर्हन्तारो धनदानुगाः ॥ विसर्गादानयोस्तात पुंसो दैवं हि कारणम् ॥ २४ ॥

मनुरजांसीव ॥ २० ॥ असौ कर्माधीनस्य जन्तोरकालमृत्युतः कालमृत्युतश्च रक्षां विदधाति । स्वयं द्वाभ्यां रहितः ॥२१॥ तमीश्वरं केचित् कर्म केचित् स्वभावं केचित् कालं केचित् कामं वदन्ति ॥ २२ ॥ तस्याव्यक्तस्य चिकीर्षितं कोऽपि न वेद ॥ २३ हे पुत्र ! एते यक्षास्तव भ्रातुर्हन्तारो न । मृत्युजन्मनोरीश्वर एव कारणम् ॥ २४ ॥



१ अयस्कान्ते निमित्ते सतीति शेषः ।

स एव विश्वं स्वमायया सृजत्यवति हन्ति तथाऽपि गुणकर्मभिर्न सज्जते ॥ २५ ॥ २६ ॥ तस्मात् हे पुत्र ! तमेवं हरिं सर्वात्मना शरणं गच्छ ॥ २७ ॥ यः पञ्चवर्षस्त्वं वनं गत्वा तपसा हरिमाराध्य लोकत्रयमूर्ध्नि पदं लब्धवानसि ॥ २८ ॥ तमेव मनसि स्थितं परमात्मानं विलोकय ॥ २९ ॥ तस्मिन्ननन्ते भगवति भक्तिं विधायाविद्याग्रन्थिं विभेत्स्यसि ॥ ३० ॥ हे ध्रुव ! श्रेयसां घातकरं क्रोधं विद्यया नियच्छ औषधेन

स एव विश्वं सृजति स एवावति हन्ति च ॥ अथापि ह्यनहंकारान्नाज्यते गुणकर्मभिः ॥२५॥ एष भूतानि भूतात्मा भूतेशो भूतभावनः ॥ स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च ॥२६॥ तमेव मृत्युममृतं तात दैवं सर्वात्मनोपेहि जगत्परायणम् ॥ यस्मै बलिं विश्वसृजो हरन्ति गावो यथा वै नसि दामयन्त्रिताः॥२७॥यः पञ्चवर्षो जननीं त्वं विहाय मातुः सपत्न्या वचसा भिन्नमर्मा ॥ वनं गतस्तपसा प्रत्यगक्षमाराध्य लेभे मूर्ध्नि पदं त्रिलोक्याः ॥ २८ ॥ तमेनमङ्गात्मनि मुक्तविग्रहे व्यपाश्रितं निर्गुणमेकमक्षरम् ॥ आत्मानमन्विच्छ विमुक्त मात्मदृक् यस्मिन्निदम्भेदमसत्प्रतीयते ॥ २९ ॥ त्वं प्रत्यगात्मनि तदा भगवत्यनन्त आनन्दमात्र उपसन्नसमस्तशक्तौ ॥ भक्तिं विधाय परमां शनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढम् ॥ ३० ॥ संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् ॥ श्रुतेन भूयसा राजन्नगदेन यथाऽऽमयम् ॥ ३१ ॥ येनोपसृष्टात्पुरुषाल्लोक उद्विजते भृशम् ॥ न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः ॥३२॥ हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतम् ॥ यज्जघ्निवान्पुण्यजनान्भ्रातृघ्नानित्यमर्षितः ॥ ३३ ॥ तं प्रसादय वत्साशु सन्नत्या प्रश्रयोक्तिभिः ॥ न यावन्महतां तेजः कुलं नोऽभिभविष्यति ॥३४॥ एवं स्वायंभुवः पौत्रमनुशास्य मनुर्ध्रुवम् ॥ तेनाभिवन्दितः साकमृषिभिः स्वपुरं ययौ ॥ ३५ ॥ इति श्रीभा० म० चतु० एकादशोऽध्यायः ॥ ११ ॥

यथा रोगम् ॥ ३१ ॥ येन क्रोधेन व्याप्तात् पुरुषात् लोको भृशमुद्विजते अतो बुधस्तद्वशं न गच्छेत् ॥ ३२ ॥ त्वया शिवसखस्य कुबेरस्यापमानः कृतः ॥ ३३ ॥ अतो नम्रत्वेन तं प्रसादय यावत् महतां तेजो नः कुलं नाभिभवेत् तावत् ॥३४॥ हे विदुर ! मनुरेवं पौत्रमनुशास्य ऋषिभिः सह स्वपुरं ययौ ॥३५॥ इति श्रीभा० चू० चतुर्थस्कन्धे ध्रुवोपाख्याने मनुना तत्त्वोपदेशेन यक्षवधनिवारणं नाम एकादशोऽध्यायः ॥ ११ ॥

१ इदम्भेदम् अयं भेदो यस्मिस्तवसद्विदवम् ।

द्वादशे धनदेनाभिनन्दितः पुरमागतः। यज्ञैरिष्ट्वा हरेः स्थानमारुरोहेति कीर्त्यते ॥ १ ॥ मैत्रेय उवाच ॥ कुबेरो ध्रुवं वधात् निवृत्तं ज्ञात्वा यक्षादिभिः स्तूयमानस्तत्रागत्य ध्रुवं जगाद ॥ १ ॥ कुबेर उवाच ॥ हे क्षत्रियपुत्र! अहं तुष्टोऽस्मि यतस्त्वं मन्वादेशात् वैरं त्यक्तवान् ॥२॥ भवान् यक्षान् नावधीत् न यक्षास्तव भ्रातरम्, किंतु काल एव सर्वेषां मृत्युजन्मनोः प्रभुः ॥ ३ ॥ पुरुषस्याहं त्वमिति धीर्मृषा यया बन्धविपर्ययौ

मैत्रेय उवाच ॥ ध्रुवं निवृत्तं प्रतिबुद्ध्य वैशसादपेतमन्युं भगवान् धनेश्वरः ॥ तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत्कृताञ्जलिम् ॥ १ ॥ धनद उवाच ॥ भोभो क्षत्रियदायाद परितुष्टोऽस्मि तेऽनघ ॥ यस्त्वं पितामहादेशाद्वैरं दुस्त्यजमत्यजः ॥२॥ न भवानवधीद्यक्षान्न यक्षा भ्रातरं तव ॥ काल एव हि भूतानां प्रभुरप्ययभावयोः ॥ ३ ॥ अहं त्वमित्यपार्था धीरज्ञानात्पुरुषस्य हि ॥ स्वाप्नीवाभात्यतद्ध्यानाद्यया बन्धविपर्ययौ ॥ ४ ॥ तद्गच्छ ध्रुव भद्रं ते भगवन्तमधोक्षजम् ॥ सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम् ॥ ५ ॥ भजस्व भजनीयाङ्घ्रिमभवाय भवच्छिदम् ॥ युक्तं विरहितं शक्त्या गुणमय्याऽऽत्ममायया ॥ ६ ॥ वृणीहि कामं नृप यन्मनोगतं मत्तस्त्वमौत्तानपदेऽविशंकितः ॥ वरं वरार्होऽम्बुजनाभपादयोरनन्तरं त्वां वयमङ्ग शुश्रुम ॥७॥ मैत्रेय उवाच ॥ स राजराजेन वराय चोदितो ध्रुवो महाभागवतो महामतिः ॥ हरौ स वव्रेऽचलितां स्मृतिं यया तरत्ययत्नेन दुरत्ययं तमः ॥८॥ तस्य प्रीतेन मनसा तां दत्त्वैडविडस्ततः ॥ पश्यतोऽन्तर्दधे सोऽपि स्वपुरं प्रत्यपद्यत ॥९॥ अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः ॥ द्रव्यक्रियादेवतानां कर्म कर्मफलप्रदम् ॥१०॥ सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् ॥ ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम् ॥ ११ ॥



भवतः ॥ ४ ॥ हे ध्रुव ! अतस्त्वं गच्छ ॥५॥ त्वं भवच्छिदं हरिं भजस्व ॥ ६ ॥ हे ध्रुव मत्तो वरं वरय ॥ ७॥ मैत्रेय उवाच॥ हे विदुर ! तदा ध्रुवो हरावचलां स्मृतिं वव्रे यया तमस्तरति ॥ ८ ॥ कुबेरः प्रीतेन मनसा तथेत्युक्त्वाऽन्तर्दधे। ध्रुवोऽपि स्वपुरं ययौ ॥ ९ ॥ अथ ध्रुवो भूरिदक्षिणैर्यज्ञैर्हरिमयजत् ॥ १० ॥ हरौ भक्तिं कुर्वन् सर्वभूतेष्वात्मनि च स्थितं विभुं ददर्श ॥ ११ ॥

---

१ दुःखादिः। २ 'यतः' इ० पा०। ३ अनिकटमेकान्तलीनम्। ४ 'एडविडासुतः' इ० पा०।

प्रजा एवं शीलसंपन्नं ब्रह्मण्यं तं पितृवत् मेनिरे ॥१२॥ स क्षितिमण्डलं षट्त्रिंशद्वर्षसहस्राणि (३६०००) शशास । एवमनेकयज्ञैर्बहुकालं नीत्वा सुखदुःखादिभोगाभोगैः पुण्यपापक्षयं कुर्वन् ॥ १३ ॥ एवं बहुकालं त्रिवर्गसाधकं नीत्वेदं विश्वमात्मनि मायारचितं मन्यमानः पुत्राय राज्यं दत्त्वा ॥१४॥१५॥ स्वयं देहपुत्रकलत्रसुहृदादीन् कोशराज्यादीन् सर्वान् नाशवंतो विचिन्त्य बदरिकाश्रमं ययौ॥१६॥ तत्र स्नात्वाऽऽसनं बद्ध्वा

तमेवं शीलसंपन्नं ब्रह्मण्यं दीनवत्सलम् ॥ गोप्तारं धर्मसेतूनां मेनिरे पितरं प्रजाः ॥ १२ ॥ षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमण्डलम् ॥ भोगैः पुण्यक्षयं कुर्वन्नभोगैरशुभक्षयम् ॥१३॥ एवं बहुसवं कालं महात्माऽविचलेन्द्रियः ॥ त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृपासनम् ॥१४॥ मन्यमान इदं विश्वं मायारचितमात्मनि ॥अविद्यारचितं स्वप्नं गन्धर्वनगरोपमम्॥ ॥१५॥ आत्मस्त्र्यपत्यसुहृदो बलमृद्धकोशमन्तःपुरं परिविहारभुवश्च रम्याः ॥ भूमण्डलं जलधिमेखलमाकलय्य कालोपसृष्टमिति स प्रययौ विशालाम् ॥१६॥ तस्यां विशुद्धकरणः शिववार्विगाह्य बद्ध्वाऽऽसनं जितमरुन्मनसाऽऽहृताक्षः ॥ स्थूले दधार भगवत्प्रतिरूप एतद्ध्यायंस्तदव्यवहितो व्यसृजत्समाधौ ॥ १७ ॥ भक्तिं हरौ भगवति प्रवहन्नजस्रमानन्दबाष्पकलया मुहुरर्द्यमानः ॥ विक्लिद्यमानहृदयः पुलकाञ्चिताङ्गो नात्मानमस्मरदसाविति मुक्तलिङ्गः[1] ॥ १८ ॥ स ददर्श विमानाग्र्यं नभसोऽवतरद्ध्रुवः ॥ विभ्राजयद्दश दिशो राकापतिमिवोदितम् ॥१९॥ तत्रानुदेवप्रवरौ चतुर्भुजौ श्यामौ किशोरावरुणाम्बुजेक्षणौ ॥ स्थिताववष्टभ्य गदां सुवाससौ किरीटहाराङ्गदचारुकुण्डलौ ॥२०॥ विज्ञाय तावुत्तमगायकिङ्करावभ्युत्थितः साध्वसविस्मृतक्रमः ॥ ननाम नामानि गृणन्मधुद्विषः पार्षत्प्रधानाविति संहताञ्जलिः ॥२१॥

जितमनाः सन् स्थूले विराड्रूपे मनो दधार ॥१७॥ एवं निरन्तरं हरौ भक्तिं कुर्वन्नात्मानं न सस्मार ॥१८॥ ततो ध्रुवः आकाशादवतरद्विमानं ददर्श ॥ १९ ॥ तस्मिन् विमाने स्थितौ चतुर्भुजौ श्यामौ किरीटहाराङ्गदचारुकुण्डलौ सुनन्दनन्दौ दृष्ट्वा ॥ २० ॥ उत्तमश्लोकस्य हरेः पार्षदाविति मत्वा शीघ्रमुत्थाय ननाम ॥ २१ ॥

---

१ त्यक्तशरीराभिमानः ।

तदा सुनन्दनन्दौ तं कृष्णपादाभिनिविष्टचेतसं बद्धाञ्जलिं जगदतुः ॥२२॥ सुनन्दनन्दावूचतुः । हे राजन् ! तव भद्रं यस्त्वं पञ्चवर्षो देवं तपसा तर्पितवान् ॥२३॥ तस्य हरेः पार्षदौ त्वां भगवत्पदं नेतुं प्राप्तौ विद्धि ॥२४॥ हे तात ! त्वया दुर्जयं विष्णुपदं जितं यत् सप्तर्षयोऽपि केवलमधः स्थिताः पश्यन्ति ॥२५॥ अतो जगद्वन्द्यं विष्णोः पदं प्राप्नुहि ॥ २६ ॥ हे आयुष्मन् ! भगवता प्रेषितमेतद्विमानमधिरोढुं त्वमर्हसि ॥२७॥

तं कृष्णपादाभिनिविष्टचेतसं बद्धाञ्जलिं प्रश्रयनम्रकन्धरम् ॥ सुनन्दनन्दावुपसृत्य सस्मितं प्रत्यूचतुः पुष्करनाभसंमतौ ॥ २२ ॥ सुनन्दनन्दावूचतुः ॥ भो भो राजन्सुभद्रं ते वाचं नोऽवहितः शृणु ॥ यः पञ्चवर्षस्तपसा भवान्देवमतीतृपत् ॥ २३ ॥ तस्याखिलजगद्धातुरावां देवस्य शार्ङ्गिणः ॥ पार्षदाविह संप्राप्तौ नेतुं त्वां भगवत्पदम् ॥ २४ ॥ सुदुर्जयं विष्णुपदं जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम् ॥ आतिष्ठ तच्चन्द्रदिवाकरादयो ग्रहर्क्षताराः परियन्ति दक्षिणम् ॥ २५ ॥ अनास्थितं ते पितृभिरन्यैरप्यङ्ग कर्हिचित् ॥ आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥२६॥ एतद्विमानप्रवरमुत्तमश्लोकमौलिना ॥ उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि ॥२७॥ मैत्रेय उवाच ॥ निशम्य वैकुण्ठनियोज्यमुख्ययोर्मधुच्युतं[१] वाचमुरुक्रमप्रियः ॥ कृताभिषेकः कृतनित्यमङ्गलो मुनीन्प्रणम्याशिषमभ्यवादयत् ॥ २८ ॥ परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवन्द्य च ॥ इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम् ॥२९॥ तदोत्तानपदः पुत्रो ददर्शान्तकमागतम् ॥ मृत्योर्मूर्ध्नि पदं दत्त्वा आरुरोहाद्भुतं गृहम् ॥ ३० ॥ तदा दुन्दुभयो नेदुर्मृदङ्गपणवादयः ॥ गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः ॥ ३१ ॥

मैत्रेय उवाच । ध्रुवः एवं श्रुत्वा मुनीन् प्रणम्य ॥ २८ ॥ विमानं तौ च नमस्कृत्य प्रकाशबहुलं रूपं धारयन् तदारोढुमैच्छत् ॥२९॥ तदा मृत्युमागतं दृष्ट्वा मृत्युरागत्य जगाद । हे महाराज ! मामङ्गीकुरु ॥ ध्रुव उवाच ॥ हे मृत्यो ! तव स्वागतं क्षणं तिष्ठ । एवमुक्त्वा ध्रुवो विष्णोः स्मरणं कृत्वा मृत्योर्मूर्ध्नि पदं दत्वा विमानमारुरोह ॥ ३० ॥ तदा स्वर्गे दुन्दुभिमृदङ्गादयो नेदुः ॥ गन्धर्वा जगुः । पुष्पवृष्टयः पेतुः ॥३१॥

१ 'च्युताम्' इ० पा० ।

स स्वर्लोकं गच्छन् दीनां मातरं हित्वा स्वर्गं यास्यामीति जननीं सस्मार ॥३२॥ तदा विष्णुपार्षदावग्रे विमानेन गच्छन्तीं सुनीतिं दर्शयामासतुः ॥३३॥ स्वर्गमार्गे स्तुवद्भिर्देवैः पुष्पैर्विकीर्यमाणो ग्रहान् मुनींश्च समतिक्रम्य विष्णोः पदं जगाम ॥ ३४ ॥ ३५ ॥ यस्य पदस्य कान्त्या त्रयो लोका भ्राजन्ते । ये जन्तुषु निष्कृपास्ते तत्पदं नाव्रजन् ॥३६॥ ये शान्ताः समदृशस्तेऽञ्जसा तत्पदं यान्ति ॥३७॥ इति ध्रुवस्त्रयाणां

स च स्वर्लोकमारोक्ष्यन् सुनीतिं जननीं ध्रुवः ॥ अन्वस्मरदगं हित्वा दीनां यास्ये त्रिविष्टपम् ॥३२॥ इति व्यवसितं तस्य व्यवसाय सुरोत्तमौ ॥ दर्शयामासतुर्देवीं पुरो यानेन गच्छतीम् ॥३३॥ तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः ॥ अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३४ ॥ त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि ॥ परस्ताद्यद्ध्रुवगतिर्विष्णोः पदमथाभ्यगात् ॥३५॥ यद्भ्राजमानं स्वरुचैव सर्वतो लोकास्त्रयो ह्यनु विभ्राजन्त एते ॥ यन्नाव्रजञ्जन्तुषु येऽननुग्रहा व्रजन्ति भद्राणि चरन्ति येऽनिशम्॥३६॥शान्ताःसमदृशःशुद्धाःसर्वभूतानुरञ्जनाः ॥ यान्त्यञ्जसाऽच्युतपदमच्युतप्रियबान्धवाः ॥३७॥ इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः ॥ अभूत्त्रयाणां लोकानां चूडामणिरिवामलः ॥३८॥ गम्भीरवेगोऽनिमिषं ज्योतिषां चक्रमाहितम् ॥ यस्मिन्भ्रमति कौरव्य मेढ्यामिव गवां गणः ॥३९॥ महिमानं विलोक्यास्य नारदो भगवानृषिः ॥ आतोद्यं वितुदञ्श्लोकान्सत्रेऽगायत्प्रचेतसाम् ॥४०॥ नारद उवाच ॥ नूनं सुनीतेः पतिदेवतायास्तपःप्रभावस्य सुतस्य तां गतिम् ॥ दृष्ट्वाऽभ्युपायानपि वेदवादिनो नैवाधिगन्तुं प्रभवन्ति किं नृपाः ॥४१॥ यः पञ्चवर्षो गुरुदारवाक्छरैर्भिन्नेन यातो हृदयेन दूयता ॥ वनं मदादेशकरोऽजितं प्रभुं जिगाय तद्भक्तगुणैः पराजितम् ॥४२॥

लोकानां चूडामणिरिव जातः ॥३८॥ हे विदुर ! यस्मिन् पदेऽनिमिषं ज्योतिश्चक्रं भ्रमति ॥ ३९ ॥ नारदो ध्रुवप्रभावं विलोक्य प्रचेतसां यज्ञे त्रीन् श्लोकान् जगौ ॥ ४० ॥ नारद उवाच ॥ नूनं सुनीतेः पुत्रस्य ध्रुवस्य विक्रममधिगन्तुं योगिनोऽपि नैव प्रभवन्ति किं पुनर्नृपाः ॥ ४१ ॥ यः पञ्चवर्षः सुरुच्या वाग्बाणेन विद्धः वनं गतः सन् हरिं जितवान् ॥ ४२ ॥

१ दुर्गमम् । २ धान्याक्रमणाय भ्राम्यमाणानां पशूनां बन्धनस्तम्भे । ३ वीणादिकं चतुर्विधं वाद्यम् । ४ वादयन् । ५ भगवद्धर्मान् ।

ध्रुवस्याधिरूढं पदं भुवि सर्वः क्षत्रियो बहुवर्षैरप्यारोढुमसमर्थः ॥४३॥ मैत्रेय उवाच। हे विदुर! त्वया यत् पृष्टं तद् ध्रुवस्य चरितं कथितम् ॥४४॥ इदं धन्यं यशस्यमायुष्यं स्वर्ग्यं पापनाशकम् ॥४५॥ एतत् श्रुत्वा भगवति भक्तिः यया क्लेशक्षयश्च भवति ॥ ४६ ॥ यस्मिन् चरिते महत्त्वमिच्छतां महत्त्वप्राप्तिस्थानं श्रोतुः शीलादयो गुणाश्च भवन्ति ॥ ४७ ॥ प्रातः सायं विप्राणां सभायां पौर्णमास्याममावास्यायां द्वादश्यां

यः क्षत्रबन्धुर्भुवि तस्याधिरूढमन्वारुरुक्षेदपि वर्षपूगैः ॥ षट्पञ्चवर्षो यदहोभिरल्पैः प्रसाद्य वैकुण्ठमवाप तत्पदम् ॥४३॥ मैत्रेय उवाच ॥ एतत्तेऽभिहितं सर्वं यत्पृष्टोऽहमिह त्वया ॥ ध्रुवस्योद्दामयशश्चरितं संमतं सताम् ॥ ४४ ॥ धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् ॥ स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ४५ ॥ श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टितम् ॥ भवेद्भक्तिर्भगवति यया स्यात्क्लेशसंक्षयः ॥ ४६ ॥ महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः ॥ यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ४७ ॥ प्रयतः कीर्तयेत्प्रातः समवाये द्विजन्मनाम् ॥ सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥४८॥ पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथवा ॥ दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि च ॥ ४९ ॥ श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः ॥ नेच्छंस्तत्रात्मनाऽऽत्मानं संतुष्ट इति सिद्ध्यति ॥ ५० ॥ ज्ञानमज्ञाततत्त्वाय यो दद्यात्सत्पथेऽमृतम् ॥ कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ५१ ॥ इदं मया तेऽभिहितं कुरूद्वह ध्रुवस्य विख्यातविशुद्धकर्मणः ॥ हित्वाऽर्भकः क्रीडनकानि मातुर्गृहं च विष्णुं शरणं यो जगाम ॥५२॥ इति श्रीभागवते महापुराणे चतुर्थस्कन्धे ध्रुवोपाख्यानं नाम द्वादशोऽध्यायः ॥ १२ ॥

श्रवणे दिनक्षये व्यतीपाते संक्रान्तावर्कदिनेऽपि वा ध्रुवचरितं यः कीर्तयेत् ॥ ४८ ॥ ४९ ॥ य श्रावयेत् वा स सिद्धिं प्राप्नोति ॥ ५० ॥ किंच यो भगवन्मार्गेऽज्ञाततत्त्वाय ज्ञानं दद्यात् तस्य देवाः अनुग्रहं कुर्वन्ति ॥ ५१ ॥ इदं ध्रुवस्याख्यानं कथितम् । यो बालः क्रीडनकानि मातुर्गृहं च हित्वा विष्णुं शरणं जगाम ॥ ५२ ॥ इति श्रीभागवते चूर्णिकायां चतुर्थस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥



१ आरोहणसंभावनाऽपि दुर्लभा किमुतारोहणम् । २ मनःप्रसादजनकम् ।

एवं पञ्चभिरध्यायैर्ध्रुवचर्याऽनुवर्णिता । अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते ॥१॥ तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये । अङ्गो वेनपिता पुत्रक्रौर्याद् गत इतीर्यते ॥ २ ॥ सूत उवाच ॥ हे शौनक ! मैत्रेयात् ध्रुवचरितं श्रुत्वा भगवद्भक्त्या पूर्णो विदुरः पप्रच्छ ॥ १ ॥ विदुर उवाच ॥ हे मैत्रेय ! ते प्रचेतसः के कस्य वंशे जाताः कुत्र सत्रमासते ॥ २ ॥ नारदं महाभागवतं मन्ये येन हरेः पूजाविधिः प्रोक्तः ॥ ३ ॥ प्रचेतोभिः पूज्यमानो भगवान् नारदेन वर्णितः ॥ ४ ॥ तत्र यज्ञे नारदेन याः भगवत्कथाः वर्णिताः ताः सर्वा नः कथय ॥ ५ ॥ मैत्रेय उवाच ॥ ध्रुव-

सूत उवाच ॥ निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम् ॥ प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥१॥ विदुर उवाच ॥ के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत ॥ कस्यान्ववाये प्रख्याताःकुत्र वा सत्रमासते ॥ २ ॥ मन्ये महाभागवतं नारदं देवदर्शनम् ॥ येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥ स्वधर्मशीलैः पुरुषैर्भगवान्यज्ञपूरुषः ॥ इज्यमानो भक्तिमता नारदेनेरितः किल ॥ ४ ॥ यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः ॥ मह्यं शुश्रूषवे ब्रह्मन्कार्त्स्न्येनाचष्टुमर्हसि ॥ ५ ॥ मैत्रेय उवाच ॥ ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम् ॥ सार्वभौमश्रियं नैच्छदधिराजासनं पितुः ॥ ६ ॥ स जन्मनोपशान्तात्मा निस्सङ्गः समदर्शनः ॥ ददर्श लोके विततमात्मानं लोकमात्मनि ॥ ७ ॥ आत्मानं ब्रह्म निर्वाणं प्रत्यस्तमितविग्रहम्[१] ॥ अवबोधरसैकात्म्यमानन्दमनुसंततम् ॥ ८ ॥ अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ॥ स्वरूपमवरुन्धानो नात्मनोऽन्यं तदैक्षत ॥ ९ ॥ जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः[२] ॥ लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥ १० ॥ मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः ॥ वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥ ११ ॥

स्यैलायां जातः उत्कलः पुत्रः पितरि वनं गते राज्यं नैच्छत् । ब्रह्मनिष्ठत्वात् ॥ ६ ॥ स जन्मतः शान्तो निस्सङ्गः समदर्शनो बभूव ॥ ७ ॥ योगाग्निना दग्धकर्ममलाशयस्स्वरूपभूतं ब्रह्म जानन्नात्मनोऽन्यं नैक्षत ॥ ८ ॥ ९ ॥ किञ्च जडान्धबधिरोन्मत्तमूकाकृतिः स बालानां लक्षितः ॥ १० ॥ तदा वृद्धा मन्त्रिणस्तं राज्येऽयोग्यं मत्वा भ्रमेः सुतं कनिष्ठं वत्सरं नाम भूपतिं चक्रुः ॥ ११ ॥

१ विग्रहो भेदः । २ न तेषां जडादीनामिव मतिर्यस्य सः ।

॥१२॥ वत्सरज्येष्ठपुत्रस्य पुष्पार्णे- ...

६ ॥१२॥ वत्सरज्येष्ठपुत्रस्य पुष्पार्ण-

वत्सरः स्ववींथ्यां भार्यायां षट् पुत्रानजनयत्। पुष्पार्णम् १ तिग्मकेतुम् २ इषम् ३ ऊर्जम् ४ वसुम् ५ जयम् ६ ॥१२॥ वत्सरज्येष्ठपुत्रस्य पुष्पार्णस्य प्रभा दोषा च द्वे भार्ये। तत्र प्रभायास्त्रयः पुत्राः प्रातर्मध्यंदिनं सायमिति॥ १३॥ दोषायास्तु प्रदोषो निशीथो व्युष्ट इति त्रयः। व्युष्टात् पुष्करिण्यां सर्वतेजाः पुत्रो जातः॥ १४॥ स सर्वतेजाः आकूत्यां पत्न्यां चक्षुस्संज्ञं मनुं सुतमजनयत्। मनोर्नड्वलायामेकादशपुत्राः॥ १५॥ पुरुः १ कुत्सः २ त्रितः ३ द्युम्नः ४ सत्यवान् ५ धृतव्रतः ६ अग्निष्टोमः ७ अतीरात्र ८ प्रद्युम्नः ९ शिबिः १० उल्मुकः ११ इति॥ १६॥ उल्मुकात् पुष्करिण्यां षट्पुत्राः अङ्गः १

स्ववींथिर्वत्सरस्येष्टा भार्याऽसूत षडात्मजान् ॥ पुष्पार्णं तिग्मकेतुं च इषमूर्जं वसुं जयम् ॥ १२ ॥ पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः ॥ प्रातर्मध्यंदिनं सायमिति ह्यासन्प्रभासुताः ॥१३॥ प्रदोषो निशिथो व्युष्ट इति दोषासुतास्त्रयः॥ व्युष्टः सुतं पुष्करिण्यां सर्वतेजसमादधे ॥ १४ ॥ स चक्षुस्सुतमाकूत्यां पत्न्यां मनुमवाप ह ॥ मनोरसूत महिषी विरजान्नड्वला सुतान् ॥१५॥ पुरुं कुत्सं त्रितं द्युम्नं सत्यवन्तं धृतव्रतम् ॥ अग्निष्टोममतीरात्रं प्रद्युम्नं शिबिमुल्मुकम् ॥१६॥ उल्मुकोऽजनयत्पुत्रान्पुष्करिण्यां षडुत्तमान् ॥ अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ॥ १७ ॥ सुनीथाऽङ्गस्य या पत्नी सुषुवे वेनमुल्बणम् ॥ यद्दौश्शील्यात्स राजर्षिर्निर्विण्णो निरगात्पुरात् ॥१८॥ यमङ्ग शेपुः कुपिता वाग्वज्रा मुनयः किल ॥ गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥१९॥ अराजके तदा लोके दस्युभिः पीडिताः प्रजाः ॥ जातो नारायणांशेन पृथुराद्यः क्षितीश्वरः ॥२०॥ विदुर उवाच ॥ तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः ॥ राज्ञः कथमभूद्दुष्टा प्रजा यद्विमना ययौ ॥२१॥ किं वांऽहो वेनमुद्दिश्य ब्रह्मदण्डमयूयुजन् ॥ दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥२२॥

सुमनाः २ ख्यातिः ३ क्रतुः ४ अङ्गिराः ५ गय ६ इति॥ १७॥ तत्रांगस्य पत्नी मृत्युकन्या सुनीथा नाम। सा वेनं सुषुवे यद्दौश्शील्यात् निर्विण्णोऽङ्गः पुरात् निरगात् ॥ १८ ॥ यं वेनं मुनयः शेपुः। गतप्राणस्य तस्य दक्षिणं करं मुनयो ममन्थुः ॥ १९ ॥ तदा नारायणांशः पृथुर्जातः ॥२०॥ विदुर उवाच ॥ साधोरङ्गस्य दुष्टा प्रजा कथं बभूव यस्माद् वनं स गतवान् ॥ २१ ॥ धर्मकोविदाः मुनयो राज्ञे कथं शापं ददुः ॥ २२ ॥

१ पापम् ।

किंच प्रजापालः पापवानपि प्रजाभिर्नावज्ञेयः ॥ २३ ॥ एतद् वेनचेष्टितं मह्यमाख्याहि । यतस्त्वं सर्वज्ञोऽसि ॥ २४ ॥ मैत्रेय उवाच ॥ एकदा सोऽङ्गो राजा अश्वमेधं चकार । यदा यज्ञे ऋषिभिराहूताः देवाः नाजग्मुः ॥ २५ ॥ तदा विस्मिताः ऋत्विजोऽङ्गं जगदुः । हे अङ्ग ! त्वया हवींषि श्रद्धया संपादितानि हूयमानानि देवताः न गृह्णन्ति ॥ २६ ॥ २७ ॥ तस्य कारणं वयं न विद्मः ॥ २८ ॥ मैत्रेय उवाच ॥ अङ्गो

नावध्येयः प्रजापालः प्रजाभिरघवानपि ॥ यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥ एतदाख्याहि मे ब्रह्मन्सुनीथात्मजचेष्टितम् ॥ श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥ मैत्रेय उवाच ॥ अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम् ॥ नाजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥ तमूचुर्विस्मितास्तत्र यजमानमथर्त्विजः ॥ हवींषि हूयमानानि न ते गृह्णन्ति देवताः ॥ २६ ॥ राजन्हवींष्यदुष्टानि श्रद्धयाऽऽसादितानि ते ॥ छन्दांस्ययातयामानि योजितानि धृतव्रतैः ॥ २७ ॥ न विदामेह देवानां हेलनं वयमण्वपि ॥ यन्न गृह्णन्ति भागान्स्वान्ये देवाः कर्मसाक्षिणः ॥ २८ ॥ मैत्रेय उवाच ॥ अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः ॥ तत्प्रष्टुं व्यसृजद्वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥ नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह ॥ सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ॥३०॥ सदसस्पतय ऊचुः ॥ नरदेवेह भवतो नाघं तावन्मनाक्स्थितम् ॥ अस्त्येकं प्राक्तनमघं यदिहेदृक्त्वमप्रजः ॥३१॥ तथा साधय भद्रं ते आत्मानं सुप्रजं नृप ॥ इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥ तथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः ॥ यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥

द्विजवचः श्रुत्वा खिन्नः सन् सदस्यान् पप्रच्छ ॥ २९ ॥ हे सदस्याः ! देवाः कुतो नायान्ति भागान् कुतो न गृह्णन्ति मया किमपराद्धं तद् ब्रूत ॥ ३० ॥ सदसस्पतय ऊचुः ॥ हे राजन् । तव प्राक्तनमघमस्ति यतस्त्वमप्रजोऽसि ॥ ३१ ॥ अतो यथा पुत्रः स्यात् तथा साधय । भगवान् पुत्रकामेष्ट्येष्टश्चेत् तव पुत्रं दास्यति ॥ ३२ ॥ तदा देवाः भागं ग्रहीष्यन्ति । यतोऽपत्याय हरिर्वृतः स्यात् ॥ ३३ ॥

१ अगतवीर्याणि । २ प्रयुक्तानि ।

जनो यान्यान् कामानिच्छति तांस्तान् हरिर्दद्यात् ॥ ३४ ॥ इति निश्चित्य विप्राः राज्ञः पुत्रोत्पत्तये विष्णवे पुरोडाशं निरवपन् ॥ ३५ ॥
सा तत् तदाऽग्नेः सकाशात् स्वर्णपात्रे पायसमादाय पुरुषः उत्तस्थौ ॥ ३६ ॥ राजा विप्राज्ञया पायसं गृहीत्वा तद् घ्रात्वा पत्न्यै ददौ ॥३७॥
प्राश्य गर्भं दधार । पूर्णे गर्भकाले पुत्रं सुषुवे ॥ ३८ ॥ स बालो मातामहं मृत्युमनुव्रतः । तेनाधार्मिको जातः ॥ ३९ ॥ तस्य मृगघातादि

इति व्यवसिता तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामयते जनः ॥ आराधितो यथैवैषां तथा पुंसां फलोदयः ॥ ३४ ॥
विप्रास्तस्य राज्ञः प्रजातये ॥ पुरोडाशं निरवपञ्छिपिविष्टाय विष्णवे ॥ ३५ ॥ तस्मात्पुरुष उत्तस्थौ हेममाल्यमला-
म्बरः ॥ हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ॥ ३६ ॥ स विप्रानुमतो राजा गृहीत्वाञ्जलिनौदनम् ॥ अवघ्राय
मुदा युक्तः प्रादात्पत्न्या उदारधीः ॥ ३७ ॥ सा तत्पुंसवनं राज्ञी प्राश्यतौ पत्युरादधे ॥ गर्भं काल उपावृत्ते कुमारं
सुषुवेऽप्रजा ॥ ३८ ॥ स बाल एव पुरुषो मातामहमनुव्रतः ॥ अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ॥ ३९ ॥ स
शरासनमुद्यम्य मृगयुर्वनगोचरः ॥ हन्ति साधून्मृगान्दीनान्वेनोऽसावित्यरौज्जनः ॥ ४० ॥ आक्रीडे क्रीडतो बाला-
न्वयस्यानतिदारुणः ॥ प्रसह्य निरनुक्रोशः पशुमारममारयत् ॥ ४१ ॥ तं विचक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः ॥ यदा
न शासितुं कल्पो भृशमासीत्सुदुर्मनाः ॥ ४२ ॥ प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः ॥ कदपत्यभृतं दुःखं
ये न विन्दन्ति दुर्भरम् ॥ ४३ ॥ यतः पापीयसी कीर्तिरधर्मश्च महान्नृणाम् ॥ यतो विरोधः सर्वेषां यत आधिरनन्तकः
॥ ४४ ॥ कस्तं प्रजापदेशं वै मोहबन्धनमात्मनः ॥ पण्डितो बहु मन्येत यदर्थाः क्लेशदा गृहाः ॥ ४५ ॥

रौद्रं कर्म दृष्ट्वा जनोऽयं वेन आगच्छतीति चुक्रोश ॥ ४० ॥ स वेनः क्रीडाकाले वयस्यान् बालान् पशूनिव मारयामास ॥ ४१ ॥ राजा दुष्टं
पुत्रं वीक्ष्य तस्य शिक्षां कर्तुमसमर्थः सन् जगाद ॥ ४२ ॥ अहो ये जनाः कुपुत्रजं दुःखं न जानन्ति तैर्हरिः पूजितः ॥ ४३ ॥ येन दुष्टपुत्रेण
दुष्कीर्तिरधर्मो विरोधः आधिश्च भवति ॥ ४४ ॥ पुत्रो नामात्मनो मोहबन्धनं यन्निमित्ताः दुःखदाः गृहाः भवन्ति ॥ ४५ ॥

१ शिपिषु पशुषु यज्ञरूपेण । २ 'अप्रजाः' इ० पा० ।

सत्पुत्राद् दुष्टपुत्रं श्रेष्ठं मन्ये । यतो मर्त्यो गृहाद् वैराग्यं प्राप्नोति ॥४६॥ एवं नृपः खिन्नः सन् मध्यरात्रे उत्थाय स्वभार्यां त्यक्त्वा गृहात् पलायितः॥४७॥ प्रातः पुरोहितामात्यसुहृद्गणादयः अन्वेषणं चक्रुः॥४८॥ ततस्तमलब्ध्वा पुरीं गत्वा रुदन्तो राज्ञोऽप्राप्तिमृषिभ्यो न्यवेदयन् ॥४९॥ इति श्रीभागवते चू० चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशे तु दुष्पुत्रभयादङ्गे गते द्विजैः । अभिषिक्तस्य वेनस्य रोषात्तैर्वध

कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात् ॥ निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः ॥४६॥ एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयोदयात् ॥ अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम् ॥ ४७ ॥ विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः॥ विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयो-गिनः ॥ ४८ ॥ अलक्षयन्तः पदवीं प्रजापतेर्हतोद्यमाः प्रत्युपसृत्य ते पुरीम् ॥ ऋषीन्समेतानभिवन्द्य साश्रवो न्यवेद-यन्पौरवभर्तृविप्लवम् ॥ ४९ ॥ इति श्रीभागव० म० चतुर्थ० वेनसुतदुःखादङ्गनृपवनप्रवेशो नाम त्रयोदशोऽध्यायः ॥ १३ ॥ मैत्रेय उवाच ॥ भृग्वादयस्ते मुनयो लोकानां क्षेमदर्शिनः ॥ गोप्तर्यसति नृणां पश्यन्तः पशुसा-म्यताम् ॥ १ ॥ वीरमातरमाहूय सुनीथां ब्रह्मवादिनः ॥ प्रकृत्यसंमतं वेनमभ्यषिञ्चन्पतिं भुवः ॥ २ ॥ श्रुत्वा नृपास-नगतं वेनमत्युग्रशासनम् ॥ निलिल्युर्दस्यवः सर्वे सर्पत्रस्ता इवाखवः ॥ ३ ॥ स आरूढनृपस्थान उन्नद्धोऽष्टविभू-तिभिः ॥ अवमेने महाभागान्स्तब्धः संभावितः स्वतः ॥ ४ ॥ एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः ॥ पर्यट-न्रथमास्थाय कम्पयन्निव रोदसी ॥ ५ ॥

उच्यते ॥ १ ॥ मैत्रेय उवाच ॥ ततः प्रजानां क्षेमचिन्तकाः भृग्वादयो नृणां रक्षणकर्तुरभावं दृष्ट्वा प्रजानाशं पश्यन्तः ॥ १ ॥ दुष्टमपि वेनं राज्येऽभ्यषिञ्चन् ॥ २ ॥ तदा सर्वे चौराः राजासनगतं वेनं श्रुत्वा गुप्ताः बभूवुः ॥ ३ ॥ स राज्यलक्ष्म्या मत्तः सन् साधूनामपमानं चक्रे ॥४॥ कदाचित् रथमास्थाय द्यावापृथिव्यौ कम्पयन्निव पृथिव्यां भ्रमन् ॥ ५ ॥

१ महतामुदयानां विभूतीनामुदयो यस्मिंस्तस्मात् ।

भेरीघोषेण न यष्टव्यं न दातव्यं न होतव्यमिति धर्मं न्यवारयत् ॥६॥ तदा मुनयो मन्त्रिणश्च वेनस्य दुर्वृत्तं वीक्ष्य परस्परं जगदुः ॥७॥ अहो
राजतस्करयोर्लोकस्य महद्दुःखं प्राप्तम् ॥ ८ ॥ अस्माभिरराजकभयादेष राजा कृतः तथाऽपि भयं विद्यते ॥ ९ ॥ यथा सर्पस्य क्षीरेण पोषणं
पोषकस्याप्यनर्थदं भवति । एवं प्रकृत्यैव खलो वेनः ॥ १० ॥ एष पालको भूत्वा प्रजाः हन्ति तथाऽपि सान्त्वयेम । तेन पातकं न स्पृशेत्

न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् ॥ इति न्यवारयद्धर्मं भेरीघोषेण सर्वशः ॥ ६ ॥ वेनस्यावेक्ष्य मुनयो
दुर्वृत्तस्य विचेष्टितम् ॥ विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ॥ ७ ॥ अहो उभयतः प्राप्तं लोकस्य व्यसनं
महत् ॥ दारुण्युभयतो दीप्ते इव तस्करपालयोः ॥ ८ ॥ अराजकभयादेष कृतो राजाऽतदर्हणः ॥ ततोऽप्यासीद्भयं
त्वद्य कथं स्यात्स्वस्ति देहिनाम् ॥ ९ ॥ अहेरिव पयःपोषः पोषकस्याप्यनर्थभृत् ॥ वेनः प्रकृत्यैव खलः सुनीथागर्भ-
संभवः ॥ १० ॥ निरूपितः प्रजापालः स जिघांसति वै प्रजाः ॥ तथाऽपि सान्त्वयेमामुं नास्मांस्तत्पातकं स्पृशेत्
॥११॥ तद्विद्वद्भिरसद्वृत्तो वेनोऽस्माभिः कृतो नृपः ॥ सान्त्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् ॥१२॥ लोकधि-
क्कारसंदग्धं दहिष्यामः स्वतेजसा ॥ एवमध्यवसायैनं मुनयो गूढमन्यवः ॥ उपव्रज्याब्रुवन्वेनं सान्त्वयित्वा च सामभिः
* ॥ १३ ॥ मुनय ऊचुः ॥ नृपवर्य निबोधैतद्यत्ते विज्ञापयाम भोः ॥ आयुःश्रीबलकीर्तीनां तव तात विवर्धनम्
॥ १४ ॥ धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः ॥ लोकान्विशोकान्वितरत्यथानन्त्यमसङ्गिनाम् ॥ १५ ॥ स ते
मा विनशेद्वीर प्रजानां क्षेमलक्षणः ॥ यस्मिन्विनष्टे नृपतिरैश्वर्यादवरोहति ॥ १६ ॥

॥११॥ यदि सन्त्वितोऽपि स न श्रोष्यति ॥ १२ ॥ तर्हि स्वतेजसा तं दग्धं करिष्यामः इति निश्चत्य मुनयो वेनं गत्वोचुः ॥ १३ ॥ मुनय
ऊचुः । हे नृप ! यद् विज्ञापयामहे तन्निबोध । तत् तवायुश्श्रीबलकीर्तीनां वृद्धिकरम् ॥ १४ ॥ वाङ्मनसादिभिराचरितो धर्मो विशोकान्
लोकान् मोक्षं च विस्तारयति ॥ १५ ॥ हे वीर ! धर्मे नष्टे राजा ऐश्वर्याद् भ्रश्यति ॥ १६ ॥

१ सत्रमास्थिताः समुदिता इत्यर्थः । २ ज्वलिते । * मुनयो धर्मनिरताः सर्वलोकहिते रताः इत्यधिकः पाठः ।

नृपश्चौरादिभ्यः प्रजा रक्षन्निहप्रेत्य च सुखं प्राप्नोति ॥ १७ ॥ यस्यराज्ये जनैः स्वस्वधर्मेण भगवानिज्यते ॥ १८ ॥ तस्य राज्ञो विश्वात्मा भगवान् तुष्यति ॥ १९ ॥ तस्मिन् तुष्टेऽप्राप्यं किम् ॥ २० ॥ हे राजन् ! अतस्त्वं यज्ञैस्तमिष्ट्वा राज्यं पालयितुमर्हसि ॥ २१ ॥ हे वीर यज्ञेन तुष्टाः देवास्त्वद्देशे वाञ्छितं दिशन्ति । तद्धेलनं कर्तुं नार्हसि ॥ २२ ॥ वेन उवाच । हे मुनयः ! यूयं बालिशाः अधर्मे धर्ममानिनः । ये वृत्तिदं पतिं मां हित्वा जारं पतिमुपासते ॥ २३ ॥ येभूपरूपिण-

राजन्नसाध्वमात्येभ्यश्चौरादिभ्यः प्रजा नृपः ॥ रक्षन्यथा बलिं गृह्णन्निह प्रेत्य च मोदते ॥ १७ ॥ यस्य राष्ट्रे पुरे चैव भगवान्यज्ञपूरुषः ॥ इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमान्वितैः ॥ १८ ॥ तस्य राज्ञो महाभाग भगवान्भूतभावनः ॥ परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ १९ ॥ तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे ॥ लोकाः सपाला ह्येतस्मै हरन्ति बलिमादृताः ॥ २० ॥ तं सर्वलोकामरयज्ञसंग्रहं[1] त्रयीमयं द्रव्यमयं तपोमयम् ॥ यज्ञैर्विचित्रैर्यजतो भवाय ते राजन्स्वदेशाननुरोद्धुमर्हसि ॥ २१ ॥ यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः ॥ स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर चेष्टितुम् ॥ २२ ॥ वेन उवाच ॥ बालिशा बत यूयं वा अधर्मे धर्ममानिनः ॥ ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते ॥ २३ ॥ अवजानन्त्यमी मूढा भूपरूपिणमीश्वरम् ॥ नानुविन्दन्ति ते भद्रमिह लोके परत्र च ॥ २४ ॥ को यज्ञपुरुषो नाम यत्र वो भक्तिरीदृशी ॥ भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् ॥ २५ ॥ विष्णुर्विरिञ्चो गिरिश इन्द्रो वायुर्यमो रविः ॥ पर्जन्यो धनदः सोमः क्षितिरग्निरपां पतिः ॥ २६ ॥ एते चान्ये च विबुधाः प्रभवो वरशापयोः ॥ देहे भवन्ति नृपतेः सर्वदेवमयो नृपः ॥ २७ ॥ तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ॥ बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक्पुमान् ॥ २८ ॥

मीश्वरं न जानन्ति ते इहपरत्र च क्षेमं न विन्दन्ति ॥ २४ ॥ हे मुनयः ! यज्ञपुरुषो नाम कः । यत्र वः ईदृशी भक्तिः ॥ २५ ॥ अहो विष्णुर्ब्रह्मा शिवः इन्द्रो वायुर्यमादयः सर्वे नृपस्य देहे वसन्ति ॥ २६ ॥ २७ ॥ तस्माद् हे विप्राः ! गतमत्सरा कर्मभिर्मां यजध्वं बलिं च मह्यमर्पयत यदन्यः आराध्यः कः ॥ २८ ॥

---

[1] संग्रहं नियन्तारम् ।

मैत्रेय उवाच ॥ पापीयान् वेनः ऋषिवचो न मेने ॥ २९ ॥ हे विदुर ! तदा तेनापमानिताः मुनयस्तस्मै चुक्रुधुः ॥ ३० ॥ अहो प्रकृतिदारुणः एष हन्यताम् हन्यताम् । असौ जीवन् जगद् भस्मसात् कुरुते ॥३१॥ अयं राज्यं नार्हति यतो यज्ञपतिं विष्णुं निन्दति ॥३२॥ वेनमेकं विना विष्णुं को निन्देत् ॥ ३३ ॥ एवं निश्चित्य प्राप्तमन्यवो मुनयो हुंकारैर्वेनं जघ्नुः ॥ ३४ ॥ ततः स्वाश्रमं जग्मुः ततः सुनीथा पुत्रदेहं विद्यायोगेन

मैत्रेय उवाच ॥ इत्थं विपर्ययमतिः[1] पापीयानुत्पथं गतः ॥ अनुनीयमानस्तद्याञ्चां न चक्रे भ्रष्टमङ्गलः ॥ २९ ॥ इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना ॥ भग्नायां भव्ययाञ्चायां तस्मै विदुर चुक्रुधुः ॥ ३० ॥ हन्यतां हन्यतामेष पापः प्रकृतिदारुणः॥जीवञ्जगदसावाशु कुरुते भस्मसाद्ध्रुवम् ॥३१॥ नायमर्हत्यसद्वृत्तो नरदेववरासनम् ॥ योऽधियज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३२ ॥ को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् ॥ प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनः ॥३३॥ इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः ॥ निजघ्नुर्हुंकृतैर्वेनं हतमच्युतनिन्दया ॥३४॥ ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम् ॥ सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३५ ॥ एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुताः ॥ हुत्वाऽग्नीन्सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥३६॥ वीक्ष्योत्थितान्महोत्पातानाहुर्लोकभयंकरान् ॥ अप्यभद्रमनाथाया दस्युभ्यो न भवेद्भुवः ॥ ३७ ॥ एवं मृशन्त ऋषयो धावतां सर्वतोदिशम् ॥ पांसुः समुत्थितो भूरिश्चौराणामपि लुम्पताम् ॥३८॥ तदुपद्रवमाज्ञाय लोकस्य वसु लुम्पताम् ॥ भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ३९ ॥



ररक्ष ॥ ३५ ॥ ततो बहुकालेनैकदा ऋषयः सरस्वतीतीरे स्थिताः सन्तः सत्कथाश्चक्रुः ॥ ३६ ॥ तदा लोकभयंकरान् महोत्पातान् वीक्ष्य भुवोऽभद्रं न भवेत् किम् ॥ ३७ ॥ एवं विचारयन्तः स्थिताः । तदा सर्वतोदिशं धावतां चौराणां रजः समुत्थितम् ॥३८॥ तदा धनं लुम्पतामन्योन्यं जिघांसतां च तेषामुपद्रवं विज्ञाय ॥ ३९ ॥

---

[1] भ्रष्टमतिः ।

तथा चौरप्रायमराजकं हीनसत्त्वं देशं ज्ञात्वा लुम्पतो लोकान् न वारयामासुः ॥४०॥ समदृक् शान्तो ब्राह्मणोऽपि दीनानामुपेक्षको भवेत् तर्हि तस्य तपः स्रवति ॥४१॥ अहो अयमङ्गस्य वंशो नाशं प्राप्तुं नार्हति ॥ ४२ ॥ ऋषयः एवं निश्चित्य राजभवनं गत्वा मृतवेनदेहस्योरुं ममन्थुः ॥४३॥ तस्मात् काककृष्णो ह्रस्वाङ्गो महाहनुर्लघुपादबाहुः रक्ताक्षस्ताम्रमूर्धजः पुरुषः प्रादुरभूत् ॥४४॥ तं किं करोमीति वादिनं निषीदेति जगदुः । स निषादो बभूव ॥ ४५ ॥ तस्या वंश्याः गिरिकाननाश्रयाः नैषादाः जाताः । यतोऽसौ वेनस्य पापमहरत् ॥४६॥ इति श्रीभा० चू०

चौरप्रायं जनपदं हीनसत्त्वमराजकम् ॥ लोकान्नावारयञ्छक्ता अपि तद्दोषदर्शिनः ॥ ४० ॥ ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः ॥ स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथा ॥ ४१ ॥ नाङ्गस्य वंशो राजर्षेरेष संस्थातुमर्हति ॥ अमोघवीर्या हि नृपा वंशेऽस्मिन्केशवाश्रयाः ॥ ४२ ॥ विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः ॥ ममन्थुरूरुं तरसा तत्रासीद्बाहुको नरः ॥ ४३ ॥ काककृष्णोऽतिह्रस्वांगो ह्रस्वबाहुर्महाहनुः ॥ ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥४४॥ तं तु तेऽवनतं दीनं किं करोमीति वादिनम् ॥ निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥४५॥ तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः ॥ येनाहरज्जायमानो वेनकल्मषमुल्बणम् ॥ ४६ ॥ इति श्रीभागवते म० चतुर्थस्कन्धे पृथूपाख्याने निषादोत्पत्तिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ मैत्रेय उवाच ॥ अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः ॥ बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥१॥ तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ॥ ऊचुः परमसंतुष्टा विदित्वा भगवत्कलाम् ॥२॥ ऋषय ऊचुः ॥ एष विष्णोर्भगवतः कला भुवनपालिनी ॥ इयं च लक्ष्म्याः संभूतिः पुरुषस्यानपायिनी ॥ ३ ॥ अयं तु प्रथमो राज्ञां पुमान्प्रथयिता यशः ॥ पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः ॥ ४ ॥

चतु० चतुर्दशोऽध्यायः ॥ १४ ॥ ततः पञ्चदशे विप्रैर्मन्थनाद्वेनबाहुतः ॥ जातस्य तु पृथोरुक्तमभिषेकार्हणादिकम् ॥१॥ मैत्रेय उवाच ॥ अथ विप्रैः पुनस्तस्य बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥ तद्दृष्ट्वा भगवत्कलेति ज्ञात्वा संतुष्टा ऊचुः ॥ २ ॥ ऋषय ऊचुः ॥ एष पुमान् साक्षात् विष्णोः कला । येयं कन्या लक्ष्म्याः कला ॥ ३ ॥ अयं राज्ञां प्रथमः पृथुर्नामः राजा भविष्यति ॥ ४ ॥

इयं कन्या पृथोः पत्नी नाम्ना चार्चिर्भविष्यति ॥५॥ अयं लोकरक्षकः साक्षात् हरेरंशो जातः । इयं च तत्परा श्रीरनुजज्ञे ॥६॥ मैत्रेय उवाच॥ स्वर्गे शङ्खमृदङ्गदुन्दुभयो नेदुः । तत्र सर्वे देवर्षिब्र-
विप्राः एवं तं प्रशंसन्ति स्म । गन्धर्वाः जगुः सिद्धाः पुष्पवृष्टिं चक्रुः । अप्सरसो ननृतुः ॥७॥ पादयोः पद्मचिह्नं च दृष्ट्वा हरेः कलां मेने ॥१०॥ ब्राह्मणैस्तस्या-
ह्माद्याःययुः ॥८॥ ब्रह्मा पृथोर्दक्षिणे हस्ते गदाभृतश्चिह्नं रेखात्मकं चक्रम् ॥९॥

इयं च सुदती देवी गुणभूषणभूषणा ॥ अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥ ५ ॥ एष साक्षाद्धरेरंशो जातो लोकरि-
रक्षया ॥ इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥६॥ मैत्रेय उवाच ॥ प्रशंसन्ति स्म तं विप्रा गन्धर्वप्रवरा जगुः ॥
मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति स्वःस्त्रियः ॥ ७ ॥ शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि ॥ तत्र सर्व उपाजग्मु-
र्देवर्षिपितृणां गणाः ॥८॥ ब्रह्मा जगद्गुरुर्देवः सहासृत्य सुरेश्वरैः ॥ वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥९॥
पादयोररविन्दं च तं वै मेने हरेः कलाम् ॥ यस्याप्रतिहतं चक्रमंशः स परमेष्ठिनः ॥१०॥ तस्याभिषेक आरब्धो ब्राह्मणै-
र्ब्रह्मवादिभिः ॥ आभिषेचनिकान्यस्मा आजह्रुः सर्वतो जनाः ॥११॥ सरित्समुद्रा गिरयो नागा गावः खगा मृगाः ॥
द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम् ॥ १२॥ सोऽभिषिक्तो महाराजः सुवासाः साध्वलंकृतः ॥ पत्न्यार्चिषाऽलं-
कृतया विरेजेऽग्निरिवापरः ॥ १३ ॥ तस्मै जहार धनदो हैमं वीर वरासनम् ॥ वरुणः सलिलस्रावमातपत्रं शशिप्र-
भम् ॥ १४ ॥ वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम् ॥ इन्द्रः किरीटमुत्कृष्टं दण्डं संयमनं यमः ॥ १५ ॥ ब्रह्मा
ब्रह्ममयं वर्म भारती हारमुत्तमम् ॥ हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम् ॥ १६ ॥

ऽभिषेके आरब्धे सति जना अभिषेकवस्तून्याजह्रुः ॥११॥ सरित्समुद्रगिरयः स्वर्गपृथिव्यादयः उपायनान्यानिन्युः ॥१२॥ सोऽभिषिक्तः सुवासाः साध्वलंकृतः पृथुः पत्न्या सहाग्निरिव शुशुभे ॥ १३ ॥ तस्मै कुबेरः सौवर्णं सिंहासनं ददौ । वरुणः श्वेतच्छत्रम् ॥१४॥ वायुर्द्वे व्यजने । धर्मः कीर्तिमयीं मालाम् । इन्द्रो मुकुटम् । यमो दण्डम् ॥ १५ ॥ ब्रह्मा कवचम् । सरस्वती हारम् । हरिश्चक्रम् । लक्ष्मीः संपदम् ॥ १६ ॥

१ भर्तृत्वेन भजन्ती ।

रुद्रोऽसिम्। अम्बिका चर्म। सोमोऽश्वान्। त्वष्टा रथम्॥१७॥ अग्निश्चापम्। सूर्यो बाणान्। भूः पादुके। द्यौः पुष्पमालाम्॥१८॥ खेचरा नाटकं गीतं वादित्रमन्तर्धानं च। आशिषः ऋषयः समुद्रः शङ्खम्॥१९॥ सिन्धवः पर्वताः नद्यो रथमार्गं ददुः। सूतमागधबन्दिनस्तं स्तोतुमुपतस्थिरे॥२०॥ तदा प्रतापवान् पृथुः प्रहसन् तानिदमब्रवीत्॥२१॥ पृथुरुवाच॥ हे सूताद्याः! अधुनाऽस्पष्टगुणस्य मम किं स्तोतुमिच्छथ॥२२॥ स्तव्यस्तु भगवान्

दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाऽम्बिका॥ सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम्॥ १७॥ अग्निराजगवं चापं सूर्यो रश्मिमयानिषून्॥ भूः पादुके योगमय्यौ द्यौः पुष्पावलिमन्वहम्॥ १८॥ नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः॥ ऋषयश्चाशिषः सत्याः समुद्रः शङ्खमात्मजम्॥ १९॥ सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः॥ सूतोऽथ मागधो बन्दी तं स्तोतुमुपतस्थिरे॥ २०॥ स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान्॥ मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत्॥ २१॥ पृथुरुवाच॥ भो सूत हे मागध सौम्य बन्दिँल्लोकेऽधुनाऽस्पष्टगुणस्य मे स्यात्॥ किमाश्रयो मे स्तव एष योज्यतां मा मय्यभूवन्वितथा गिरो वः॥ २२॥ तस्मात्परोक्षेऽस्मदुपश्रुतान्यलं करिष्यथ स्तोत्रमपीच्यवाचः॥ सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः॥२३॥ महद्गुणानात्मनि कर्तुमीशः कः स्तावकैः स्तावयतेऽसतोऽपि॥ तेऽस्याभविष्यन्निति विप्रलब्धो जनावहासं कुमतिर्न वेद॥ २४॥ प्रभवो ह्यात्मनः स्तोत्रं जुगुप्सन्त्यपि विश्रुताः॥ ह्रीमन्तः परमोदाराः पौरुषं वा विगर्हितम्॥ २५॥

उत्तमश्लोक एव। तस्मात् कालान्तरे स्पष्टगुणे मयि जाते मे स्तुतिं करिष्यथ॥ २३॥ महतां गुणानात्मनि सम्पादयितुं समर्थोऽप्यविद्यमानान् गुणान् सम्भावनामात्रेण कः स्तावयते॥ २४॥ किंच ह्रीमन्तः उदाराः उचितामप्यात्मस्तुतिं न सहन्ते॥ २५॥

---

१ दश चन्द्राकाराणि बिम्बानि कोशे यस्य तमसिम्। २ अतिसुन्दरम्। ३ अजशृङ्गनिर्मितम्। ४ पादस्पर्शमात्रेणाभीष्टदेशप्रापिके। ५ यशांसि प्रति। ६ मधुरवाचः। स्तावकसम्बोधनमिदम्। ७ अयंशास्त्राभ्यासादिकमकरिष्यत्तर्ह्यस्य ते विद्यादयो गुणाः अभविष्यन्निति क्रियातिपत्त्या।

अधुना लोके वयं वरिष्ठैः कर्मभिरविदिताः अतो बालकवत् कथं गापयिष्यामः ॥२६॥ इति श्रीभा०चू० चतुर्थ० पञ्चदशोऽध्यायः॥१५॥ षोडशे सर्वलोकेशैः सत्कृतं भार्यया युतम् । मुनिप्रयुक्ताः सूताद्याः स्तुवन्ति स्मेति वर्ण्यते॥१॥ मैत्रेय उवाच ॥ हे विदुर ! इति ब्रुवाणं नृपतिं मुनिप्रेरिता: गायकास्तुष्टुवुः ॥१॥ हे देववर्य ! तव महिमानुवर्णने वयं न समर्थाः । तव यशसि ब्रह्मादीनामपि धियो बभ्रमुः ॥२॥ तथापि हरेरंशस्य तव मुनिप्रेरिताः सन्तो वयं कर्माणि विस्तारयामः ॥३॥ एष धर्मभृतां श्रेष्ठो धर्ममर्यादागोप्ता दुष्टानां शास्ता भविष्यति॥४॥ सर्वलोकपालानां तेजः स्वदेहे बिभर्ति ॥५॥ काले द्रव्यं गृह्णाति काले मुञ्चति सूर्यवत् ॥६॥ भूतानां निरन्तरं करुणः क्षमया भूरिव ॥७॥ इन्द्रेऽवर्षति सति दुःखिताः प्रजाः स्वयं वृष्टिं कृत्वा रक्षिष्यति ॥ ८ ॥ वदनचन्द्रेण लोकं चन्द्रवत् सुखयति ॥ ९ ॥ अप्रकटितमार्गो रक्षितवित्तो वरुण इव ॥ १० ॥

वयं त्वविदिता लोके सूताद्यापि वरीमभिः ॥ कर्मभिः कथमात्मानं गापयिष्याम बालवत् ॥२६॥ इति श्रीभा० म० चतु० पृथोरवतारवर्णनं नाम पञ्चदशोऽध्यायः ॥१५॥ मैत्रेय उवाच ॥ इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः ॥ तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया ॥१॥ नालं वयं ते महिमानुवर्णने यो देववर्योऽवततार मायया ॥ वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः ॥२॥ अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः ॥ यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महि ॥३॥ एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन् ॥ गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम् ॥४॥ एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः ॥ काले काले यथाभागं लोकयोरुभयोर्हितम् ॥५॥ वसु काल उपादत्ते काले चायं विमुञ्चति ॥ समः सर्वेषु भूतेषु प्रतपन्सूर्यवद्विभुः ॥६॥ तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि ॥ भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान् ॥७॥ देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः ॥ कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत् ॥८॥ आप्याययत्यसौ लोकं वदनामृतमूर्तिना ॥ सानुरागावलोकेन विशदस्मितचारुणा ॥ ९ ॥ अव्यक्तवर्त्मैष निगूढकार्यो गम्भीरवेधा उपगुप्तवित्तः ॥ अनन्तमाहात्म्यगुणैकधामा पृथुः प्रचेता इव संवृतात्मा ॥ १० ॥



१ गम्भीरं परैरज्ञातं यथा तथा विधत्ते इति गम्भीरवेधा । गम्भीरमेधाः इति पाठान्तरम् । २ अनन्तमाहात्म्यः गुणैकधामा विष्णुर्यस्मिन्सः ।

शत्रोर्मनसाऽपि प्राप्तुमशक्यः शत्रुभिः सोढुमशक्योऽग्निरिव ॥ ११ ॥ भूतानामन्तर्बहिर्व्यापकत्वेन वायुवत् वर्तिष्यते ॥ १२ ॥ एष द्विषां पुत्रमदण्ड्यं न दण्डयति दण्ड्यमात्मजमपि दण्डयति ॥ १३ ॥ अस्य मानसोत्तरपर्वतपर्यन्तमप्रतिहतं चक्रं वर्तते ॥१४॥ अयमात्मचरितैर्लोकं रञ्जयिष्यति ॥ १५ ॥ अयं दृढव्रतः सत्यसन्धो वृद्धसेवकः भूतानां शरण्यः ॥१६॥ अयं परस्त्रीषु मातृभक्तिः सतां किंकरः ॥ १७ ॥

दुरासदो दुर्विषह आसन्नोऽपि विदूरवत् ॥ नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११ ॥ अन्तर्बहिश्च भूतानां पश्यन्कर्माणि चारणैः ॥ उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२ ॥ नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि ॥ दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३ ॥ अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् ॥ वर्तते भगवानर्को यावत्तपति गोगणैः ॥१४॥ रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः ॥ अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥ १५ ॥ दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः ॥ शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ ॥ मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः ॥ प्रजासु पितृवत्स्निग्धः किंकरो ब्रह्मवादिनाम् ॥ १७ ॥ देहिनामात्मवत्प्रेष्ठः सुहृदां नन्दिवर्धनः ॥ मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु ॥१८॥ अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयाऽवतीर्णः ॥ यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमपि प्रतीतम् ॥१९॥ अयं भुवो मण्डलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः ॥ आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथाऽर्कः ॥ २० ॥ अस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यन्ति सलोकपालाः ॥ मंस्यन्त एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उद्धरन्त्यः ॥ २१ ॥

देहिनामात्मवत्प्रियः असाधुषु दण्डपाणिरिव ॥ १८ ॥ अयं तु साक्षात् भगवान् कूटस्थः आत्मा कलयाऽवतीर्णः ॥ १९ ॥ आत्तचापोऽयं रथमास्थायौदयाद्रेरस्ताद्रिपर्यन्तं भूमण्डलं पालयन् पर्यटिष्यति ॥ २० ॥ सलोकपालाः नृपाः अस्मै बलिं दास्यन्ति ॥ २१ ॥

---

१ आज्ञा सेना वा । २ सुखवर्धनः ।

अधिराजोऽयं गोरूपां महीं दुदुहे । स्वधनुष्कोट्याऽद्रीन् भिन्दन् पृथ्वीं समां चकार ॥ २२ ॥ यदा धनुर्विस्फूर्जयन् क्ष्मां चचार तदा दुष्टा दिशि दिशि गुप्ताः बभूवुः ॥२३॥ एष सरस्वतीतीरे शतमश्वमेधान् करिष्यति । चरमेऽश्वमेध इन्द्रोऽश्वहरणं करिष्यति ॥ २४ ॥ एष स्वगृहे प्राप्तं सनत्कुमारमाराध्य विमलं ज्ञानं प्राप्स्यति ॥ २५ ॥ तत्र तत्र विष्णवाश्रिताः गाथाः श्रोष्यति ॥ २६ ॥ किंच दिशो विजित्य स्वतेजसोत्पादितलोकशल्यो देवदैत्यैरुपगीयमानो भुवः पतिर्भविता ॥ २७ ॥ इति श्रीभागवते० चू० चतुर्थस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ ततः

अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम् ॥ यो लीलयाऽद्रीन्स्वशरासकोट्या भिन्दन्समां गामकरोद्यथेन्द्रः ॥२२॥ विस्फूर्जयन्नाजगवं धनुः स्वयं यदाऽचरत्क्ष्मामविषह्यमाजौ ॥ तदा निलिल्युर्दिशि दिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २३ ॥ एषोऽश्वमेधाञ्छतमाजहार सरस्वती प्रादुरभावि यत्र ॥अहार्षीद्यस्य हयं पुरन्दरः शतक्रतुश्चरमे वर्तमाने ॥ २४ ॥ एष स्वसद्मोपवने समेत्य सनत्कुमारं भगवन्तमेकम् ॥ आराध्य भक्त्याऽलभतामलं तज्ज्ञानं यतो ब्रह्म परं विदन्ति ॥ २५ ॥ तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः ॥ श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः ॥ २६ ॥ दिशो विजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः ॥ सुरासुरेन्द्रैरुपगीयमानमहानुभावो भविता पतिर्भुवः ॥२७॥ इति श्रीभा० म० चतुर्थ० सूतादिस्तोत्रवर्णनं नाम षोडशोऽध्यायः ॥१६॥ मैत्रेय उवाच ॥ एवं स भगवान्वैन्यः ख्यापितो गुणकर्मभिः ॥ छन्दयामास तान्कामैः प्रतिपूज्याभिनन्द्य च ॥ १ ॥ ब्राह्मणप्रमुखान्वर्णान्भृत्यामात्यपुरोधसः ॥ पौराञ्जानपदाञ्छ्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥ विदुर उवाच ॥ कस्माद्दधार गोरूपं धरित्री बहुरूपिणी ॥ यां दुदोह पृथुस्तत्र को वत्सो दोहनं च किम् ॥ ३ ॥

सप्तदशे लोकक्षुधः प्रशमयन्पृथुः ॥ ग्रस्तबीजां महीं हन्तुं यत्तो भीत्या तया स्तुतः ॥ १ ॥ मैत्रेय उवाच ॥ एवं गुणकर्मभिः ख्यातः पृथुः सूतमागधादीन् ब्राह्मणांश्च भृत्यामात्यपुरोधसः सर्वान् यथाकामैस्तोषितवान् ॥ १ ॥ २ ॥ विदुर उवाच ॥ धरित्री गोरूपं कस्माद् दधार ? यां पृथुर्दुदोह । तत्र वत्सः कः दोहनं किम् ॥ ३ ॥

पृथुना भूः कथं समा कृता । इन्द्रस्तस्य हयं कुतो जहार ॥४॥ स सनत्कुमारात् ज्ञानं लब्ध्वा कां गतिं गतः ॥५॥ एतदन्यच्च पृथोः कथाश्रयं भक्ताय मे वक्तुमर्हसि ॥६॥७॥ सूत उवाच ॥ हे शौनक ! एवं भगवत्कथां प्रति विदुरेण प्रेरितो मैत्रेय आह ॥८॥ मैत्रेय उवाच ॥ यदा विप्रै-रभिषिक्तः पृथुस्तदा निरन्ने क्षितिमण्डले सति क्षुत्क्षामाः प्रजा एत्य पृथुं जगदुः ॥९॥ हे राजन् ! वयं जठराग्निना तप्तास्त्वां शरणं याताः॥१०॥

प्रकृत्या विषमा देवी कृता तेन समा कथम् ॥ तस्य मेध्यं हयं देवः कस्य हेतोरपाहरत् ॥ ४ ॥ सनत्कुमाराद्भगवतो ब्रह्मन्ब्रह्मविदुत्तमात् ॥ लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥ यच्चान्यदपि कृष्णस्य भवान्भगवतः प्रभोः ॥ श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥६॥ भक्ताय मेऽनुरक्ताय तव चाधोक्षजस्य च ॥ वक्तुमर्हसि योऽदुह्यद्वै-न्यरूपेण गामिमाम् ॥ ७ ॥ सूत उवाच ॥ चोदितो विदुरेणैवं वासुदेवकथां प्रति ॥ प्रशस्य तं प्रीतमना मैत्रेयः प्रत्य-भाषत ॥ ८ ॥ मैत्रेय उवाच ॥ यदाऽभिषिक्तः पृथुरङ्ग विप्रैरामन्त्रितो जनतायाश्च पालः ॥ प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पतिमभ्यवोचन् ॥ ९ ॥ वयं राजञ्जाठरेणाभितप्ता यथाऽग्निना कोटरस्थेन वृक्षाः ॥ त्वामद्य याताः शरणं शरण्यं यः साधितो वृत्तिकरः पतिर्नः ॥ १० ॥ तन्नो भवानीहतु रातवेऽन्नं क्षुधार्दितानां नरदेव देव ॥ यावन्न-नङ्क्ष्यामह उज्झितोर्जा वार्तापतिस्त्वं किल लोकपालः ॥११॥ मैत्रेय उवाच ॥ पृथुः प्रजानां करुणं निशम्य परिदेवितम् ॥ दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत ॥१२॥ इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः ॥ संदधे विशिखं भूमेः क्रुद्ध-स्त्रिपुरहा यथा ॥१३॥ प्रवेपमाना धरणी निशाम्योदायुधं च तम् ॥ गौः सत्यपाद्रवद्भीता मृगीव मृगयुद्रुता ॥ १४ ॥

अतो भवान् क्षुधार्तानां नोऽन्नं दातुं यत्नं करोतु ॥ ११ ॥ मैत्रेय उवाच ॥ पृथुः प्रजानां दीनां वाचं निशम्य दीर्घं दध्यौ ॥१२॥ ततस्तासां दुःखनिमित्तं ज्ञात्वा क्रुद्धो भूमिं हन्तुं धनुषि बाणं संदधे ॥१३॥ तदा कम्पमाना गोरूपा पृथ्वी धृतायुधं पृथुं दृष्ट्वा भीता पलायामास ॥१४॥

---

१ अपरोक्षज्ञानसहितम् । २ यशः । ३ सुष्ठु श्रवो यस्य तस्य । ४ विप्रैः मन्थनेन संपादितः । ५ अन्नविरहिताः । ६ वार्ता जीविका ।

रक्तलोचनः पृथुर्यत्र यत्र सा पलायते तत्र तत्र तामन्वधावत् ॥१५॥ सा त्रैलोक्यं भ्रान्त्वा तत्र तत्र पृष्ठतो वैन्यं ददर्श ॥१६॥ कुत्रापि त्रातारं न लेभे तदा पृथुं जगाद ॥१७॥ हे धर्मज्ञ ! हे शरणागतवत्सल ! मां त्राहि भवान् भूतानां पालने स्थितः ॥१८॥ स त्वं निष्पापां स्त्रियं मां कथं हनिष्यसि ॥१९॥ किंच जनः कृतागस्स्वपि स्त्रीषु न प्रहरति । भवद्विधाः किमुत ॥२०॥ हे वैन्य ! दृढां नौकारूपां मां हत्वा प्रजाः आत्मानं च

तामन्वधावत्तद्वैन्यः कुपितोऽत्यरुणेक्षणः ॥ शरं धनुषि संधाय यत्र यत्र पलायते ॥ १५ ॥ सा दिशो विदिशो देवी रोदसी चान्तरं तयोः ॥ धावन्ती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥१६॥ लोके नाविन्दत त्राणं वैन्यान्मृत्योरिव प्रजाः ॥ त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १७ ॥ उवाच च महाभागं धर्मज्ञापन्नवत्सल ॥ त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् ॥ १८ ॥ स त्वं जिघांससे कस्माद्दीनामकृतकिल्बिषाम् ॥ अहनिष्यत्कथं योषां धर्मज्ञ इति यो मतः॥१९॥ प्रहरन्ति न वै स्त्रीषु कृतागस्स्वपि जन्तवः॥ किमुत त्वद्विधा राजन्करुणा दीनवत्सलाः ॥२०॥ मां विपाट्याजरां नावं यत्र विश्वं प्रतिष्ठितम् ॥ आत्मानं च प्रजाश्चेमाः कथमम्भसि धास्यसि॥२१॥ पृथुरुवाच॥ वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम् ॥ भागं बर्हिषि या वृङ्क्ते न तनोषि च नो वसु ॥२२॥ यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः ॥ तस्यामेवं हि दुष्टायां दण्डो नात्र न शस्यते ॥२३॥ त्वं खल्वोषधिबीजानि प्राक्सृष्टानि स्वयंभुवा ॥ न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥ २४ ॥ अमूषां क्षुत्परीतानामार्तानां परिदेवितम् ॥ शमयिष्यामि मद्बाणैर्भिन्नायास्तव मेदसा ॥ २५ ॥ पुमान्योषिदुत क्लीब आत्मसंभावनोऽधमः ॥ भूतेषु निरनुक्रोशो नृपाणां तद्वधोऽवधः ॥ २६ ॥

जले कथं धारयिष्यसि ॥२१॥ पृथुरुवाच ॥ हे वसुधे ! मच्छासनपराङ्मुखीं त्वां वधिष्यामि ॥२२॥ नित्यं गोरूपेण तृणं भक्षयसि दुग्धं न स्रवसि । तस्यां दुष्टायां दण्डः शस्यते ॥ २३ ॥ ब्रह्मणा पूर्वं सृष्टान्योषधिबीजानि त्वया ग्रसितानि त्वं न मुञ्चसि ॥ २४ ॥ प्रजानां क्षुधं मद्बाणैर्विद्धायास्तव मांसेन शमयिष्यामि ॥ २५ ॥ भूतेषु पुरुषः स्त्री वा नपुंसकोऽपि दुष्टश्चेत्तर्हि नृपाणां तस्य वधोऽवध एव ॥ २६ ॥

त्वां तिलशो हत्वा योगबलेन प्रजाः धारयिष्यामि ॥ २७ ॥ एवं क्रोधमूर्तिं बिभ्रतं पृथुं कम्पमाना मही प्राह ॥ २८ ॥ धरोवाच ॥ परपुरुषाय मायया॒ऽऽचरितघोरादितनवे तस्मै नमः ॥२९॥ येन विधात्रा जीवानां स्थानमहं निर्मिता स एव मां हन्तुमुपस्थितः । अतोऽन्यं कं शरणं व्रजामि

त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः ॥ आत्मयोगबलेनेमा धारयिष्याम्यहं प्रजाः ॥ २७ ॥ एवं मन्यु मयीं मूर्तिं कृतान्तमिव बिभ्रतम् ॥ प्रणता प्राञ्जलिः प्राह मही संजातवेपथुः ॥ २८ ॥ धरोवाच ॥ नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने ॥ नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥ येनाहमात्मायतनं विनिर्मिता धात्रा यतोऽयं गुणसर्गसंग्रहः ॥ स एव मां हन्तुमुदायुधः स्वराडुपस्थितोऽन्यं शरणं कमाश्रये ॥ ३० ॥ य एतदादावसृजच्चराचरं स्वमायया॒ऽऽत्माश्रयया॒ऽवितर्क्यया ॥ तयैव सोऽयं किल गोप्तुमुद्यतः कथं नु मां धर्मपरो जिघांसति ॥३१॥ नूनं बतेशस्य समीहितं जनैस्तन्मायया दुर्जयया॒ऽकृतात्मभिः ॥ न लक्ष्यते यस्त्वकरोदकारयद्योऽनेक एकः परतश्च ईश्वरः ॥ ३२ ॥ सर्गादि योऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतना-त्मभिः ॥ तस्मै समुन्नद्धनिरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे ॥३३॥ स वै भवानात्मविनिर्मितं जगद्भूतेन्द्रियान्तः-करणात्मकं विभो ॥ संस्थापयिष्यन्नज मां रसातलादभ्युज्जहाराम्भस आदिसूकरः ॥ ३४ ॥

॥ ३० ॥ यः आदाविदं चराचरं ससर्ज स एव धर्मपरो भवान् कथं मां जिघांसति ॥ ३१ ॥ नूनमीश्वरस्य कर्तव्यं जनैर्न लक्ष्यते ॥ ३२ ॥ यो जगतः सर्गादि करोति पुरुषाय नमः ॥ ३३ ॥ हे अज ! त्वं पुरा रसातलाद् वराहरूपेण मामुज्जहर्थ ॥ ३४ ॥

---

१ निरस्ता द्रव्यक्रियाकारकेषु अधिभूताध्यात्माधिदेवेषु विभ्रमोऽहंकारस्तन्निमित्तोर्मयो रागद्वेषादयो यस्मिंस्तस्मै । २ यस्याम् । ३ अण्डजादिचतुर्विधभूतग्रामस्य धारणम् । ४ स्वतन्त्रः । ५ जीवविषयिण्या । ६ विक्षिप्तचित्तैः । ७ ब्रह्माणमिति शेषः । ८ ब्रह्मणः चराचरमितिशेषः । ९ परतो मायया॒ऽनेकः । १० क्रमेण महाभूतेन्द्रियदेहबुद्ध्यहंकाररूपस्वशक्तिभिः । ११ उत्कटाधीनशक्तये ।

स एव वराहो जले नौकारूपायां मयि स्थिताः प्रजाः रक्षितुमद्य पृथुरूपो जातः स त्वं दुग्धनिमित्तं मां जिघांससि ॥ ३५ ॥ तव चरितं केनापि न ज्ञायते । अतस्ते नमोऽस्तु ॥ ३६ ॥ इति श्रीभा० चू० चतुर्थ० सप्तदशोऽध्यायः ॥ १७ ॥ अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः । पृथ्वादिभिस्तु सा दुग्धा स्वं स्वं दुग्धमितीर्यते ॥१॥ मैत्रेय उवाच ॥ हे विदुर ! एवं मही पृथुं स्तुत्वा भीता सती पुनराह ॥ १ ॥ हे राजन् ! क्रोधं



अपामुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल ॥ स वीरमूर्तिः समभूद्धराधरो यो मां पयस्युग्रशरो जिघांससि ॥ ३५ ॥ नूनं जनैरीहितमीश्वराणामस्मद्विधस्तद्गुणसर्गमायया ॥ न ज्ञायते मोहितचित्तवर्त्मभिस्तेभ्यो नमो वीरयशस्करेभ्यः ॥ ३६ ॥ इति श्री भा० म० चतुर्थ० पृथूपाख्याने धरित्रीनिग्रहो नाम सप्तदशोऽध्यायः ॥ १७ ॥ मैत्रेय उवाच ॥ इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम् ॥ पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना ॥ १ ॥ सन्नियच्छाभिभो मन्युं निबोध श्रावितं च मे ॥ सर्वतः सारमादत्ते यथा मधुकरो बुधः ॥ २ ॥ अस्मिँल्लोकेऽथवाऽमुष्मिन्मुनिभिस्तत्त्वदर्शिभिः ॥ दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये ॥ ३ ॥ तानातिष्ठति यः सम्यगुपायान्पूर्वदर्शितान् ॥ अवरः श्रद्धयोपेत उपायांन्विन्दतेऽञ्जसा ॥ ४ ॥ ताननादृत्य यो विद्वानर्थानारभते स्वयम् ॥ तस्य व्यभिचरन्त्यर्था आरब्धाश्च पुनः पुनः ॥ ५ ॥ पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशांपते ॥ भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः ॥६॥ अपालिताऽनादृता च भवद्भिर्लोकपालकैः ॥ चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः ॥७॥ नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा ॥ तत्र योगेन दृष्टेन भवानादातुमर्हति ॥ ८ ॥



शमय । मम विज्ञापनं निबोध ॥ २ ॥ पूर्वं तत्त्वदर्शिभिर्ये उपायाः दृष्टा प्रयुक्ताश्च ॥ ३ ॥ तान् यः आतिष्ठति स श्रेयः प्राप्नोति ॥ ४ ॥ यस्ताननादृत्यार्थान् प्रारभते तस्यार्थाः न सिध्यन्ति ॥ ५ ॥ पुरा ब्रह्मणौषधयः सृष्टास्ताः दुष्टराजन्यैर्भुज्यमानाः दृष्टाः ॥६॥ लोके चोरभूते सति यज्ञार्थं ताः ओषधीरग्रसम् ॥ ७ ॥ ताः बहुकालेन मयि क्षीणाः जाताः भवान् योगेन ग्रहीतुमर्हति ॥ ८ ॥

१ वीराणां जितेन्द्रियाणाम् । २ 'उपेयान्' पा०।

हे वीर ! दोहनार्थं वत्सं दोहनपात्रम् ॥९॥ दोग्धारं च कल्पय। यदि भवानन्नं वाञ्छति ॥१०॥ तर्हि मां समां कुरु यथा मयि मेघोदकं स्थिरं स्यात् ॥११॥ इति भूवचः श्रुत्वा पृथुः प्रीतः सन् मनुं वत्सं कृत्वा स्वहस्ते स्वयमौषधीर्दुदोह ॥१२॥ तथाऽन्ये च पृथुवशीकृतां तां यथाकामं दुदुहुः ॥१३॥ ऋषयो बृहस्पतिं वत्सं कृत्वेन्द्रियरूपपात्रे पृथ्वीं वेदमयं दोहं दुदुहुः॥१४॥ देवाः इन्द्रं वत्सं कृत्वा सुवर्णपात्रेऽमृतं वीर्यमोजो बलं च दुदुहुः

वत्सं कल्पय मे वीर येनाहं वत्सला तव ॥ धोक्ष्ये क्षीरमयान्कामाननुरूपं च दोहनम् ॥ ९ ॥ दोग्धारं च महाबाहो भूतानां भूतभावन ॥ अन्नमीप्सितमूर्जस्वद्भगवान्वाञ्छते यदि ॥ १० ॥ समां च कुरु मां राजन्देववृष्टं यथा पयः ॥ अपर्त्तावपि भद्रं ते उपावर्तेत मे विभो ॥ ११ ॥ इति प्रियं हितं वाक्यं भुव आदाय भूपतिः ॥ वत्सं कृत्वा मनुं पाणाव-दुहत्सकलौषधीः ॥१२॥ तथा परे च सर्वत्र सारमाददते बुधाः ॥ ततोऽन्ये च यथाकामं दुदुहुः पृथुभाविताम् ॥ १३ ॥ ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम ॥ वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥ १४ ॥ कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ॥ हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः ॥ १५ ॥ दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् ॥ विधाया-दूदुहन्क्षीरमयःपात्रे सुरासवम् ॥ १६ ॥ गन्धर्वाप्सरसोऽधुक्षन्पात्रे पद्ममये पयः ॥ वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु-सौभगम् ॥ १७ ॥ वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत ॥ आमपात्रे महाभागाः श्रद्धया श्राद्धदेवताः ॥ १८ ॥ प्रकल्प्य वत्सं कपिलं सिद्धाः संकल्पनामयीम् ॥ सिद्धिं नभसि विद्यां च ये च विद्याधरादयः ॥ १९ ॥ अन्ये च मायिनो मायामन्तर्द्धानाद्भुतात्मनाम् ॥ मयं प्रकल्प्य वत्सं ते दुदुहुर्धारणामयीम् ॥ २० ॥ यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः ॥ भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥

॥१५॥ दैत्याः प्रह्लादं वत्सं कृत्वा लोहपात्रे सुरां दुदुहुः ॥ १६ ॥ गन्धर्वाप्सरसो विश्वावसुं वत्सं कृत्वा पद्मपात्रे वाङ्माधुर्यं सौन्दर्यं च दुदुहुः ॥ १७ ॥ पितरोऽर्यमणं वत्सं कृत्वा अपक्वमृन्मये पितॄणामन्नं दुदुहुः ॥१८॥ कपिलं वत्सं कृत्वा सिद्धा अणिमादिसिद्धिं विद्याधरादयश्च खेचर-त्वादिरूपां विद्यां दुदुहुः ॥१९॥ मायिनो मयासुरं वत्सं कृत्वा संकल्पमात्रप्रभवां दुदुहुः॥ २० ॥ यक्षरक्षोभूतपिशाचाः रुद्रं वत्सं कृत्वा कपाल-

पात्रे रक्तं दुदुहुः ॥ २१ ॥ सर्पनागाद्यास्तक्षकं वत्सं कृत्वा मुखपात्रे विषं दुदुहुः ॥ २२ ॥ पशवो नन्दिनं वत्सं कृत्वा अरण्यपात्रे तृणं दुदुहुः व्याघ्रादयः सिंहं वत्सं कृत्वा स्वे कलेवरे मांसं दुदुहुः । पक्षिणो गरुडं वत्सं कृत्वा स्वपात्रे कीटफलादि दुदुहुः ॥ २३ ॥ २४ ॥ वनस्पतयो वटं वत्सं कृत्वा स्वदेहे रसमयं पयो दुदुहुः । पर्वता हिमालयं वत्सं कृत्वा स्वशिखरेषु स्वर्णगैरिकादिधातून् दुदुहुः ॥२५॥ एवं सर्वे स्वे स्वे पात्रे

तथाऽहयो दन्दशूकाः सर्पा नागाश्च तक्षकम् ॥ विधाय वत्सं दुदुहुर्बिलपात्रे विषं पयः ॥२२॥ पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम् ॥ अरण्यपात्रे चाधुक्षन्मृगेन्द्रेण च दंष्ट्रिणः ॥ २३ ॥ क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे कलेवरे ॥ सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४॥ वटवत्सा वनस्पतयः पृथग्रसमयं पयः ॥ गिरयो हिमवद्वत्सा नानाधातून्स्वसानुषु ॥ २५ ॥ सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक्पयः ॥ सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ २६ ॥ एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः ॥ दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ॥ २७ ॥ ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः ॥ दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः ॥२८॥ चूर्णयन्स्वधनुष्कोटचा गिरिकूटानि राजराट् ॥ भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः ॥ २९ ॥ अथास्मिन्भगवान्वैन्यः प्रजानां वृत्तिदः पिता ॥ निवासान्कल्पयांचक्रे तत्रतत्र यथार्हतः ॥३०॥ ग्रामान्पुरः पत्तनानि दुर्गाणि विविधानि च ॥ घोषान्व्रजान्सशिबिरानाकरान्खेटखर्वटान् ॥३१॥ प्राक्पृथोरिह नैवैषा पुरग्रामादिकल्पना ॥ यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः ॥ ३२ ॥

इति श्रीभागवते म० चतुर्थस्कन्धे पृथूपाख्याने पृथिवीदोहनवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥



पृथक् पृथक् पयः कामदुघां पृथिवीं दुदुहुः ॥ २६ ॥ एवं पात्रवत्सादिभेदेन क्षीरभेदो जातः ॥ २७ ॥ ततः प्रीतः पृथुर्भूमिं दुहितृत्वे चकार ॥२८॥ स्वधनुष्कोटचा गिरिशृङ्गाणि चूर्णयन् भूमण्डलं प्रायः समं चक्रे ॥२९॥ अथ जनानां यथायोग्यं निवासस्थानं चक्रे॥३०॥ ग्रामान् पुरः पत्तनानि दुर्गाणि घोषान् व्रजान् सेनानिवासस्थानं खेटखर्वटान् चक्रे ॥३१॥ पृथिव्यां पृथोः पूर्वं पुरग्रामादिकल्पना नासीत् । ततो भयरहिताः प्रजाः यथासुखं वसन्ति स्म ॥ ३२ ॥ इति श्रीभागव० चू० चतुर्थ० अष्टादशोऽध्यायः ॥ १८ ॥

१ वत्सभूतेनेत्यर्थः । २ पृथुवशीकृताम् । ३ औदकपार्वतादीनि । ४ आभीरानेतासान् । ५ गोनिवासान् । ६ स्वर्णादिस्थानानि । ७ कर्षकग्रामान् । ८ पर्वतप्रान्तग्रामान् ।

ऊनविंशेऽश्वमेधाङ्गहयापहरणात् पृथोः। इन्द्रं हन्तुं प्रवृत्तस्य धात्रा वारणमुच्यते॥१॥मैत्रेय उवाच ॥ अथैकदा पृथुर्ब्रह्मावर्ते यत्र प्राची सरस्वती तत्र शताश्वमेधानां संकल्पं चकार ॥१॥ तदेन्द्रः पृथोर्यज्ञमहोत्सवं न सेहे ॥२॥ यत्र ब्रह्मशिवाभ्यां सहितो यज्ञपतिर्हरिः प्रत्यक्षं ददृशे ॥३॥४॥ यत्र च गन्धर्वमुन्यप्सरसो विद्याधरदैत्यदानवगुह्यकादयः सुनन्दनन्दप्रमुखाः ॥५॥ कपिलनारददत्तसनकादयश्चाययुः ॥६॥ यस्मिन् यज्ञे भूमिः

मैत्रेय उवाच ॥ अथादीक्षत राजा तु हयमेधशतेन सः ॥ ब्रह्मावर्ते[1] मनोः क्षेत्रे यत्र प्राची सरस्वती ॥ १ ॥ तदभिप्रेत्य भगवान्कर्मातिशयमात्मनः ॥ शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् ॥ २ ॥ यत्र यज्ञपतिः साक्षाद्भगवान्हरिरीश्वरः ॥ अन्वभूयत सर्वात्मा सर्वलोकगुरुः प्रभुः ॥३॥ अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः ॥ उपगीयमानो गन्धर्वैर्मुनिभिश्चाप्सरोगणैः ॥४॥ सिद्धा विद्याधरा दैत्या दानवा गुह्यकादयः ॥ सुनन्दनन्दप्रमुखाः पार्षदप्रवरा हरेः ॥५॥ कपिलो नारदो दत्तो योगेशाः सनकादयः ॥ तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः ॥६॥ यत्र धर्मदुघा भूमिः सर्वकामदुघा सती ॥ दोग्धि स्माभीप्सितानर्थान्यजमानस्य भारत ॥ ७ ॥ ऊहुः सर्वरसान्नद्यः क्षीरदध्यन्नगोरसान् ॥ तरवो भूरिवर्ष्माणः[2] प्रासूयन्त मधुच्युतः ॥ ८ ॥ सिन्धवो रत्ननिकरान् गिरयोऽन्नं चतुर्विधम् ॥ उपायनमुपाजह्रुः सर्वे लोकास्सपालकाः ॥९॥ इति चाधोक्षजेशस्य पृथोस्तु परमोदयम् ॥ असूयन्भगवानिन्द्रः प्रतिघातमचीकरत् ॥ १० ॥ चरमेणाश्वमेधेन यजमाने यजुष्पतिम् ॥ वैन्ये यज्ञपशुं स्पर्द्धन्नपोवाह तिरोहितः ॥ ११ ॥ तमत्रिर्भगवानैक्षत्त्वरमाणं विहायसा ॥ आमुक्तमिव[3] पाखण्डं योऽधर्मे धर्मविभ्रमः[4] ॥ १२ ॥

पृथोः सर्वकामदुघाऽऽसीत् ॥७॥ नद्यः क्षीरदध्यन्नगोरसान् वहन्ति स्म । वृक्षाः फलानि प्रासूयन्त ॥ ८ ॥ समुद्राः रत्नानि पर्वताश्चतुर्विधमन्नं ददुः । सर्वे लोकपालाः उपायनान्यानिन्युः ॥ ९ ॥ इन्द्रः एवं पृथुप्रभावमसहमानः सन् विघ्नं चकार ॥ १० ॥ तदेवाह । इन्द्रश्चरमेऽश्वमेधे-पाखण्डवेषं कृत्वाऽश्वं जहार ॥ ११ ॥ तदाऽऽकाशेन धावन्तमिन्द्रमत्रिः प्रैक्षत ॥ १२ ॥

---

१ सरस्वतीदृषद्वत्योरन्तर्गते देशे । २ विस्तृतशरीराः । ३ आमुक्तं वर्मितं-पाखण्डं वेषं कवचमिव धारयन्तमित्यर्थः । ४ धर्मं इति विभ्रमो यस्मात्तम् ।

तदाऽत्रिणा प्रेरितः पृथुपुत्रस्तमन्वधावत् । तिष्ठतिष्ठेति जगाद च ॥१३॥ तं जटिलं भस्मना च च्छन्नं दृष्ट्वाऽयं धार्मिक इति बुद्ध्वा बाणं नामुञ्चत् ॥१४॥ अत्रिर्वधात् निवृत्तं तं दृष्ट्वा हे तातेमं यज्ञविघ्नकरमिन्द्रं जहीति जगाद ॥१५॥ ततः पृथुपुत्रः क्रुद्धः सन् पुनरिन्द्रं प्रति अन्वद्रवत् ॥१६॥ तदेन्द्रोऽश्वं तद्रूपं च हित्वाऽन्तर्हितः । स वीरोऽश्वमानीय यज्ञं ययौ ॥१७॥ तदा ऋषयस्तस्याद्भुतं कर्म वीक्ष्य विजिताश्व इति नाम ददुः ॥१८॥

अत्रिणा चोदितो हन्तुं पृथुपुत्रो महारथः ॥ अन्वधावत संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥१३॥ तं तादृशाकृतिं वीक्ष्य मेने धर्मं शरीरिणम् ॥ जटिलंभस्मनाच्छन्नं तस्मै बाणं न मुञ्चति ॥ १४ ॥ वधान्निवृत्तं तं भूयो हन्तवेऽत्रिरचोदयत् ॥ जहि यज्ञहनं तात महेन्द्रं विबुधाधमम् ॥ १५ ॥ एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा ॥ अन्वद्रवदभिक्रुद्धो रावणं गृध्रराडिव ॥ १६ ॥ सोऽश्वं रूपं च तद्धित्वा तस्मा अन्तर्हितः स्वराट् ॥ वीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ॥१७॥ तत्तस्य चाद्भुतं कर्म विचक्ष्य परमर्षयः ॥ नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ॥ १८ ॥ उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः ॥ चषालयूपतश्छन्नो हिरण्यरशनं विभुः ॥ १९ ॥ अत्रिः संदर्शयामास त्वरमाणं विहायसा ॥ कपालखट्वाङ्गधरं वीरो नैनमबाधत ॥२०॥ अत्रिणा चोदितस्तस्मै संदधे विशिखं रुषा ॥ सोऽश्वं रूपं च तद्धित्वा तस्थावन्तर्हितः स्वराट् ॥ २१ ॥ वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत् ॥ तदवद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः ॥ २२ ॥ यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया ॥ तानि पापस्य खण्डानि लिंगं खण्डमिहोच्यते ॥ २३ ॥

पुनरिन्द्रस्तमश्वं हिरण्यरशनासहितं स्तम्भाग्राद् जहार ॥१९॥ तदाऽत्रिः कपालखट्वाङ्गधरं तं दर्शयामास वीरः एवं तं वीक्ष्य नाबाधत ॥२०॥ पुनरत्रिणा प्रेरितः स रुषा तस्मै बाणं संदधे । इन्द्रोऽश्वं तद्रूपं च हित्वांऽतर्हितः ॥२१॥ वीरोऽश्वं गृहीत्वा पितुर्यज्ञं जगाम । इन्द्रोऽश्वं हर्तुमिच्छया यानि यानि रूपाणि जगृहे तानि तानि पापस्य खण्डानि ज्ञानदुर्बलाः जगृहुः ॥ २२ ॥ २३ ॥

---

१ हन्तुम् । २ जटायुरिव सीतामोक्षार्थम् । ३ चषालो यूपाग्रे निक्षिप्तः काष्ठकटकस्तद्युक्ताद्यूपात् । ४ पाखण्डशब्दनिरुक्तिरियम् । पापस्य खण्डानीत्यपि पाठः ।

एवं बहुवारमिन्द्रगृहीतत्यक्तेषु पाखण्डेषु नृणां बुद्धिरभवत्॥२४॥ जैनबौद्धकापालादिषूपधर्मेष्वयं धर्म एवेति नृणां प्रायेण बुद्धिः सज्जते॥२५॥ तदा कुपितः पृथुरिन्द्रं हन्तुं बाणमाददे ॥ २६ ॥ तदा ऋत्विजो निवारयामासुः । हे पृथो ! अस्मिन् यज्ञे पशोरन्यस्य वधो योग्यो न ॥ २७ ॥ वयं मन्त्रैस्तवैर्यज्ञनाशकं होष्यामः॥२८॥ इत्युक्त्वा ऋत्विजः स्रुग्घस्तान् जुह्वतः प्रति ब्रह्माऽऽगत्य न्यषेधत॥२९॥ हे ऋत्विजः ! भगवत्तनुरू-

एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया ॥ तद्गृहीतविसृष्टेषु पाखण्डेषु मतिर्नृणाम् ॥ २४ ॥ धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु ॥ प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५ ॥ तदभिज्ञाय भगवान्पृथुः पृथुपराक्रमः ॥ इन्द्राय कुपितो बाणमादत्तोद्यतकार्मुकः ॥ २६ ॥ तमृत्विजः शक्रवधाभिसंधितं विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसम् ॥ निवारयामासुरहो महामते न युज्यतेऽत्रान्यवधः प्रचोदितात् ॥ २७ ॥ वयं मरुत्वन्तमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा हतत्विषम् ॥ अयातयामोपहवैरनन्तरं प्रसह्य राजञ्जुहवाम तेऽहितम् ॥ २८ ॥ इत्यामन्त्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा ॥ स्रुग्घस्ताञ्जुह्वतोऽभ्येत्य स्वयंभूः प्रत्यषेधत ॥ २९ ॥ न वध्यो भवतामिन्द्रो यद्यज्ञो भगवत्तनुः ॥ यं जिघांसथ यज्ञेन यस्येष्टास्तनवः सुराः ॥ ३० ॥ तदिदं पश्यत महद्धर्मव्यतिकरं द्विजाः ॥ इन्द्रेणानुष्ठितं राज्ञः कर्मैतद्विजिघांसता ॥ ३१ ॥ पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः ॥ अलं ते क्रतुभिः स्विष्टैर्यद्भवान्मोक्षधर्मवित् ॥ ३२ ॥ नैवात्मने महेन्द्राय रोषमाहर्तुमर्हसि ॥ उभावपि हि भद्रं त उत्तमश्लोकविग्रहौ ॥ ३३ ॥

पेन्द्रो वधयोग्यो न॥३०॥ हे द्विजाः कर्मजिघांसयेन्द्रेण कृतं पाखण्डपथरूपं महान्तमन्यायं पश्यत॥३१॥ पृथोरेकोनशतक्रतवो भवन्तु ॥ पृथुं प्रत्याह । हे नृप ! यज्ञैरलं भवान् मोक्षधर्मवित् ॥ ३२ ॥ इन्द्राय क्रोधं कर्तुं नार्हसि यतः उभावपि हरेरंशौ ॥ ३३ ॥

---

१ गृहीत्वा पश्चात्त्यक्तेषु । २ आपाततो रम्येषु । ३ अगतवीर्यैराह्वानमन्त्रैः । ४ अधर्मः पाखण्डम् । बलीयसा सख्यफलमिदं यदिन्द्रेण कृता पाखण्डान्निवृत्तिरतस्तेन सह सख्यमेव योग्यमित्याशयः ।

हे नृप ! यज्ञविघ्ने चिन्तां मा कृथाः ॥३४॥ एष क्रतुर्विरमतु यत्र धर्मव्यतिकरः ॥३५॥ इन्द्रनिर्मितैः पाखण्डैर्जनाः अधर्मं प्राप्नुवन्ति ॥३६॥ त्वं तु धर्मरक्षार्थं विष्णुकलयाऽवतीर्णोऽसि ॥ ३७॥ अतो हे प्रभो ! स त्वं विश्वसृजां संकल्पं पूरय । पाखण्डमार्गं जहि ॥३८॥ मैत्रेय उवाच॥तदा पृथुर्ब्रह्मवाक्यं श्रुत्वा यज्ञाग्रहं हित्वेन्द्रेण स्नेहं कर्तुमैच्छत् ॥३९॥ ततोऽवभृथस्नानं चकार। देवतास्तस्मै वरान् ददुः ॥४०॥ प्राप्तदक्षिणाःविप्रा

माऽस्मिन्महाराज कृथाः स्म चिन्तां निशामयास्मद्वच आदृतात्मा ॥ यद्ध्यायतो दैवहतं नु कर्तुं मनोऽतिरुष्टं विशते तमोऽन्धम् ॥ ३४ ॥ क्रतुर्विरमतामेष देवेषु दुरवग्रहः ॥ धर्मव्यतिकरो यत्र पाखण्डैरिन्द्रनिर्मितैः ॥३५॥ एभिरिन्द्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम्॥ ह्रियमाणं विचक्ष्वैनं यस्ते यज्ञध्रुगश्वमुट् ॥३६॥ भवान्परित्रातुमिहावतीर्णो धर्मं जनानां समयानुरूपम् ॥ वेनापचारादवलुप्तमद्य तद्देहतो विष्णुकलाऽसि वैन्य ॥३७॥ स त्वं विमृश्यास्य भवं प्रजापतेः संकल्पनं विश्वसृजां पिपीपृहि ॥ ऐन्द्रीं च मायामुपधर्ममातरं प्रचण्डपाखण्डपथं जहि प्रभो ॥ ३८ ॥ मैत्रेय उवाच ॥ इत्थं स लोकगुरुणा समादिष्टो विशांपतिः ॥ तथा च कृत्वा वात्सल्यं मघोनाऽपि च संदधे ॥३९॥ कृतावभृथस्नानाय पृथवे भूरिकर्मणे ॥ वरान्ददुस्ते वरदा ये तद्बर्हिषि तर्पिताः ॥४०॥ विप्राः सत्याशिषस्तुष्टाः श्रद्धयालब्धदक्षिणाः ॥ आशिषो युयुजुः क्षत्तरादिराजाय सत्कृताः ॥ ४१ ॥ त्वयाऽऽहूता महाबाहो सर्व एव समागताः ॥ पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः ॥ ४२ ॥ दत्ताशीर्वचनाः सर्वे पूजिताः पृथुना च ते ॥ स्वं स्वं स्थानं ययुर्हृष्टाः शंसन्तो यज्ञमुत्तमम् ॥ ॥ ४३ ॥ इति श्रीभा० म० चतुर्थ० इन्द्रकृतपाखण्डमार्गवर्णनं नाम एकोनविंशोऽध्यायः ॥ १९ ॥ मैत्रेय उवाच ॥ भगवानपि वैकुण्ठः साकं मघवता विभुः ॥ यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक्तमभाषत ॥ १ ॥

आशिषो ददुः ॥४१॥ हे महाबाहो ! त्वया वयमाहूताः सर्वे समागताः दानमानाभ्यां पूजिताः सर्वे संसृष्टाः॥४२॥पृथुना पूजिताः सन्तस्तस्मै आशिषो दत्त्वा पितृदेवादयः स्वं स्वं स्थानं ययुः ॥ ४३ ॥ इति श्रीभा० चू० चतुर्थ० एकोनविंशोऽध्यायः ॥ १९॥ विंशे तु विष्णुना साक्षात् पृथोर्यज्ञेऽनुशासनम् ॥ वरदानप्रसङ्गेन प्रीतिश्चान्योन्यमीर्यते ॥१॥ मैत्रेय उवाच ॥ भगवान् वैकुण्ठः इन्द्रेण सह तुष्टः सन् पृथुं बभाषे ॥१॥

१ दैवहतं कर्म कर्तुं ध्यायतो मन इत्यन्वयः । २ शान्तिशून्यमिति यावत् । ३ जगतः । ४ उद्भवम् ।

श्रीभगवानुवाच ॥ हे राजन् ! एष इन्द्रस्तव यज्ञभंगं चकार तं क्षन्तुमर्हसि ॥ २ ॥ लोके साधवः अनात्मनो देहस्याभिमानेन भूतेभ्यो न द्रुह्यन्ति ॥ ३ ॥ त्वादृशाः देवमायया यदि मुह्यन्ति तर्हि दीर्घया वृद्धसेवया श्रम एव जातः ॥ ४ ॥ अतो मायोत्पन्ने शरीरे गृहे पुत्रे द्रविणे वा बुधः को ममतां कुर्यात् ॥ ५ ॥ ६ ॥ आत्मा त्वेकः शुद्धः । तं स्वस्मिन् स्थितं पुरुषं यो वेद स देहस्थोऽपि तद्गुणैर्न लिप्यते ॥ ७ ॥ ८ ॥ यो

श्रीभगवानुवाच ॥ एष तेऽकारषीद्भङ्गं हयमेधशतस्य ह ॥ क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि ॥ २ ॥ सुधियः साधवो लोके नरदेव नरोत्तमाः ॥ नाभिद्रुह्यन्ति भूतेभ्यो यर्हि नात्मा कलेवरम् ॥३॥ पुरुषा यदि मुह्यन्ति त्वादृशा देव मायया ॥ श्रम एव परं जातो दीर्घया वृद्धसेवया ॥ ४ ॥ अतः कायमिमं विद्वानविद्याकामकर्मभिः ॥ आरब्ध इति नैवास्मिन्प्रतिबुद्धोऽनुषज्जते ॥ ५ ॥ असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे ॥ अपत्ये द्रविणे वाऽपि कः कुर्यान्ममतां बुधः ॥६॥ एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ॥ सर्वगोऽनावृतः साक्षी निरात्माऽऽत्मनः परः ॥७॥ य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः ॥ नाज्यते प्रकृतिस्थोऽपि तद्गुणैः स मयि स्थितः ॥८॥ यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयाऽन्वितः ॥ भजते शनकैस्तस्य मनो राजन्प्रसीदति ॥९॥ परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः ॥ शान्तिं मे समवस्थानं ब्रह्मकैवल्यमश्नुते ॥ १० ॥ उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ॥ कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥ ११ ॥ भिन्नस्य लिङ्गस्य गुणप्रवाहो द्रव्यक्रियाकारकचेतनात्मनः ॥ दृष्टासु संपत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदाः ॥ १२ ॥

निष्कामेन स्वधर्मेण नित्यं भक्त्या मां भजते तस्य मनः शनैः शान्तिं लभते । स मोक्षं प्राप्नोति ॥ ९ ॥ १० ॥ यः उदासीनमिव देहेन्द्रियादीनामध्यक्षमिव स्थितमात्मानं वेद स सुखं प्राप्नोति ॥ ११ ॥ ये मयि बद्धसौहृदास्ते संपत्सु विपत्सु च न विक्रियन्ते ॥ १२ ॥

१ सम्यगौदासीन्येनावस्थानम् । २ देहस्य । ३ संसारः ।

अतस्त्वं सुखदुःखयोः समः सन् निखिललोकरक्षणं कुरु ॥ १३ ॥ राज्ञः प्रजापालनमेव श्रेयः । यतः परलोके स प्रजाकृतसुकृतात् षष्ठमंशं हरति । अपालनात् पापं हरति ॥ १४ ॥ अतो हे पृथो ! पृथिव्याः रक्षणं कुर्वन् सन् स्वल्पकालेन गृहागतान् सनकादीन् द्रक्ष्यसि ॥ १५ ॥ अहं वशीकृतचित्तेन यथा सुलभस्तथा यज्ञादिभिर्न । अतः कंचिद् वरं वृणीष्व ॥ १६ ॥ मैत्रेय उवाच । हे विदुर ! पृथुर्लोकगुरोराज्ञां शिरसा

समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेन्द्रियाशयः ॥ मयोपक्लृप्ता[1]खिललोकसंयुतो विधत्स्व वीराखिललोकरक्षणम् ॥१३॥ श्रेयः प्रजापालनमेव राज्ञो यत्साम्पराये सुकृतात्षष्ठमंशम् ॥ हर्ताऽन्यथा[2] हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति ॥ १४ ॥ एवं द्विजाग्र्यानुमतानुवृत्तधर्मप्रधानोऽन्यतमोऽविताऽस्याः ॥ ह्रस्वेन कालेन गृहोपयातान्द्रष्टासि सिद्धाननुरक्तलोकः ॥१५॥ वरं च मत्कंचन मानवेन्द्र वृणीष्व तेऽहं गुणशीलयन्त्रितः ॥ नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यत्समचित्तवर्ती ॥ १६ ॥ मैत्रेय उवाच ॥ स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित् ॥ अनुशासित आदेशं शिरसा जगृहे हरेः ॥१७॥ स्पृशन्तं पादयोः प्रेम्णा व्रीडितं स्वेन कर्मणा ॥ शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥१८॥ भगवानथ विश्वात्मा पृथुनोपहृतार्हणः ॥ समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥१९॥ प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः ॥ पश्यन्पद्मपलाशाक्षो न प्रतस्थे सुहृत्सताम् ॥२०॥ स आदिराजो रचिताञ्जलिर्हरिं विलोकितुं नाशकदश्रुलोचनः ॥ न किंचनोवाच स बाष्पविक्लवो हृदोपगुह्यामुमधादवस्थितः ॥२१॥ अथावमृज्याश्रुकला विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम् ॥ तदा स्पृशन्तं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरङ्गविद्विषः ॥ २२ ॥

जगृहे ॥ १७ ॥ ततः स्वकर्मणा लज्जितं पादयोः स्पृशन्तमिन्द्रं परिष्वज्य द्वेषं विससर्ज ॥१८॥ पृथुना कृतार्हणो भगवान् प्रस्थानाभिमुखोपि पृथुं पश्यन् विलम्बितः सन् प्रयाणं न कृतवान् ॥ १९ ॥ २० ॥ स पृथुर्भगवता वरार्थं प्रेरितो हरिमालिङ्ग्य प्रेमाश्रुलोचनो हरिं द्रष्टुं नाशकत् ॥ २१ ॥ अथाश्रूणि विमृज्य गरुडस्कन्धे न्यस्तहस्तं विलोकयन् जगाद ॥ २२ ॥

१ उपक्लृप्ताः संपादिताः अखिललोका अमात्यादयस्तैः संयुतः । २ प्रजाभिरिति शेषः ।

पृथुरुवाच ॥ हे प्रभो ! वरदेश्वरात् त्वत्तो ज्ञानी सन् बन्धकान् वरान् कथं वृणीते ॥ २३ ॥ हे कैवल्यपते ! यत्र तव यशः श्रवणादिसुखं नास्ति तादृशं कैवल्यमपि न कामये अतस्तव यशश्श्रवणार्थमयुतकर्णान् देहि । एष एव मे वरोऽस्तु ॥ २४ ॥ त्वच्चरणकमलसंबन्धी वायुः कुयोगिनामात्मज्ञानं विस्तारयति । अतोऽस्माकमन्यैर्वरैरलम् ॥२५॥ हे मङ्गलकीर्ते ! तव शिवं यशः साधुसंगमे यः सकृदपि शृणोति स गुणज्ञः पशुं

पृथुरुवाच ॥ वरान्विभो त्वद्वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम् ॥ ये नारकाणामपि सन्ति देहिनां तानीश कैवल्यपते वृणे न च ॥ २३ ॥ न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः ॥ महत्तमान्तर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः ॥ २४ ॥ स उत्तमश्लोकमहन्मुखच्युतो भवत्पदाम्भोजसुधाकणानिलः ॥ स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥२५॥ यशः शिवं सुश्रव आर्यसंगमे यदृच्छया चोपशृणोति ते सकृत् ॥ कथं गुणज्ञो विरमेद्विना पशुं श्रीर्यत्प्रवव्रे गुणसंग्रहेच्छया ॥ २६ ॥ अथो भजे त्वाऽखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः ॥ अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः ॥२७॥ जगज्जनन्यां जगदीश वैशसं स्यादेव यत्कर्मणि नः समीहितम् ॥ करोति फल्ग्वप्युरु दीनवत्सलः स्व एव धिष्ण्येऽभिरतस्य किं तया ॥२८॥ भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् ॥ भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥ २९ ॥ मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजन्तमात्थ यत् ॥ वाचा नु तन्त्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः ॥ ३० ॥

विना कथं विरमेत् ॥ २६ ॥ अहं लक्ष्मीरिव ते चरणाम्बुजं भजे । तत्र लक्ष्म्या मम च कलिर्मा भूत् ॥२७॥ हे जगदीश ! भक्तसमर्पितं स्वल्पमपि त्वं बहु करोषि ॥२८॥ हे ईश ! साधवो ज्ञानं प्राप्ता अपि त्वां भजन्ति । त्वत्स्मरणात् विनाऽन्यत् तेषां फलं न विद्मः ॥ २९ ॥ हे ईश ! वरं वृणीष्वेति तव गिरं जगन्मोहिनीं मन्ये । अहो तव वाक्तन्त्या यदि जनोऽबद्धः स्यात् तर्हि पुनःपुनः फलैर्मोहितः सन् कर्म कथं करोति ॥३०॥

१ हृदयान्मुखद्वारेण निर्गतः । २ तानो मनोविस्तारः । ३ लक्ष्म्याम् । ४ विरोधः । ५ यस्याः कर्मणि । ६ स्वरूपे ।

हे दीनवत्सल ! यथा पिता बालहितं चरेत् तथा नो हितं कर्तुं त्वमेवार्हसि ॥ ३१ ॥ मैत्रेय उवाच ॥ इति पृथुना स्तुतो भगवान् जगाद हे नृप ! मयि ते भक्तिरस्तु ॥३२॥ हे नृपते ! मयाऽऽदिष्टं त्वं कुरु । मदाज्ञाकरो लोकः सर्वत्र सुखं प्राप्नोति ॥३३॥ मैत्रेय उवाच ॥ एवं हरिः पृथोर्वचः प्रतिनन्द्य तेन पूजितो गन्तुं मतिं चक्रे ॥ ३४ ॥ ततो राज्ञा संमानिताः सर्वे देवर्षिपितृगन्धर्वसिद्धचारणादयः स्वं स्वं स्थानं

त्वन्माययाऽद्धा जन ईश खण्डितो यदन्यदाशास्त ऋतात्मनोऽबुधः ॥ यथा चरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितम् ॥३१॥ मैत्रेय उवाच ॥ इत्यादिराजेन नुतः स विश्वदृक्तमाह राजन्मयि भक्तिरस्तु ते ॥ दिष्ट्येदृशी धीर्मयि ते कृता यया मायां मदीयां तरति स्म दुस्त्यजाम् ॥ ३२ ॥ तत्त्वं कुरु मयाऽऽदिष्टमप्रमत्तः प्रजापते ॥ मदादेशकरो लोकः सर्वत्राप्नोति शोभनम् ॥ ३३ ॥ मैत्रेय उवाच ॥ इति वैन्यस्य राजर्षेः प्रतिनन्द्यार्थवद्वचः ॥ पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम् ॥३४॥ देवर्षिपितृगन्धर्वसिद्धचारणपन्नगाः ॥ किन्नराप्सरसो मर्त्याः खगाभूतान्यनेकशः ॥३५॥ यज्ञेश्वरधिया राज्ञा वाग्वित्ताञ्जलिभक्तितः ॥ सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३६ ॥ भगवानपि राजर्षेः सोपाध्यायस्य चाच्युतः ॥ हरन्निव मनोऽमुष्य स्वधाम प्रत्यपद्यत ॥ ३७ ॥ अदृष्टाय[1] नमस्कृत्य नृपः संदर्शितात्मने ॥ अव्यक्ताय[2] च देवानां देवाय स्वपुरं ययौ ॥३८॥ इति श्रीभा० म० चतुर्थ० श्रीविष्णुना पृथोर्यज्ञेऽनुशासनवर्णनं नाम विंशोऽध्यायः ॥२०॥ मैत्रेय उवाच ॥ मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः ॥ महासुरभिभिर्धूपैर्मण्डितं तत्र तत्र वै ॥ १ ॥ चन्दनागुरुतोयार्द्ररथ्याचत्वरमार्गवत् ॥ पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिभिरर्चितम्[3] ॥२॥

ययुः ॥ ३५ ॥ ३६ ॥ भगवानपीन्द्रेण साकं स्वधाम प्रत्यगात् ॥ ३७ ॥ पृथुर्देवदेवाय नमस्कृत्य स्वपुरं ययौ ॥ ३८ ॥ इति श्रीभागवते चू० चतुर्थ० विंशोऽध्यायः ॥२०॥ एकविंशे तु पृथुना प्रजानामनुशासनम् । महासत्रे सुरादीनां महासदसि वर्ण्यते ॥१॥ मैत्रेय उवाच ॥ हे विदुर ! कथंभूतं पुरं मौक्तिकैः पुष्पमालाभिः स्वर्णतोरणैर्धूपदीपैस्तत्र तत्र शोभितम् ॥ १ ॥ चन्दनागुरुपुष्पाक्षतयवांकुरलाजैरर्चितम् ॥२॥



१ दृष्टिपथमतिक्रान्ताय । २ वस्तुतोऽव्यक्ताय । ३ हरितयवैरंकुरैर्वा ।

कदलीस्तम्भैः पूगवृक्षैर्वृक्षपल्लवमालाभिः शोभितम् ॥३॥ एतादृशे पुरे प्रवेशसमये प्रजाः कन्याश्च दध्यादिमंगलवस्तूनि गृहीत्वाऽभिमुखं जग्मुः ॥४॥ तत्र शङ्खादिवाद्यघोषेण सर्वैः स्तूयमानः पृथुरनेकसम्पद्भिर्युक्तं स्वभवनं विवेश ॥५॥ तत्र तत्र जनैः पूजितः स्वयं तांस्तान् पूजयामास ॥ ६ ॥ स परं सिंहासनमारुह्यानेककर्माणि कुर्वन् महीं शशास ॥ ७ ॥ सूत उवाच ॥ हे शौनक ! विदुरः पृथोर्यशो गृणन्तं मैत्रेय संमानयन्

सवृन्तैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम् ॥ तरुपल्लवमालाभिः सर्वतः समलंकृतम् ॥३॥ प्रजास्तं दीपबलिभिः संभृताशेषमङ्गलैः॥ अभीयुर्मृष्टकन्याश्च मृष्टकुण्डलमण्डिताः ॥ ४ ॥ शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् ॥ विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥ पूजितः पूजयामास तत्र तत्र महायशाः ॥ पौराञ्जानपदांस्तांस्तान्प्रीतः प्रियवरप्रदः ॥ ६ ॥ स एवमादीन्यनवद्यचेष्टितः कर्माणि भूयांसि महान्महत्तमः ॥ कुर्वञ्छशासावनिमण्डलं यशः स्फीतं निधायारुरुहे परं पदम् ॥ ७ ॥ सूत उवाच ॥ तदादिराजस्य यशो विजृम्भितं गुणैरशेषैर्गुणवत्सभाजितम् ॥ क्षत्ता महाभागवतः सदस्पते कौषारविं प्राह गृणन्तमर्चयन् ॥ ८ ॥ विदुर उवाच ॥ सोऽभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्हणः ॥ बिभ्रच्च वैष्णवं तेजो बाह्वोर्याभ्यां दुदोह गाम् ॥९॥ को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः ॥ लोकाः सपाला उपजीवन्ति काममद्यापि तन्मे वद कर्म शुद्धम् ॥ १० ॥ मैत्रेय उवाच ॥ गङ्गायमुनयोर्नद्योरन्तराक्षेत्रमावसन् ॥ आरब्धानेव बुभुजे भोगान्पुण्यजिहासया ॥ ११ ॥ सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक् ॥ अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः ॥ १२ ॥

भूयः पप्रच्छ ॥८॥ विदुर उवाच ॥ विप्रैरभिषिक्तः पृथुः किं चकार ॥९॥ अस्य कीर्तिं को न शृणुयात् । सर्वे नृपाः अद्यापि यत्पराक्रमोच्छिष्टमाचरन्ति तस्य शुद्धं कर्म वद ॥१०॥ मैत्रेय उवाच ॥ पृथुर्गंगायमुनयोर्मध्येऽन्तर्वेद्यां वसन् पुण्यक्षयेच्छया भोगान् बुभुजे ॥११॥ सप्तद्वीपेष्वेक एव दण्डधरः सन् ब्राह्मणकुलं वैष्णवं च विनाऽन्यत्रास्खलिताज्ञः आसीत् ॥ १२ ॥

---

१ पुष्पफलयुक्तैः । 'वृन्तं प्रसवबंधनम्' इत्यमरः । २ 'स्त्रियः' इ० पा० । ३ 'हरेः' इ० पा० । ४ 'श्रुत्वा' इ० पा० ।

एकदा तत्र तस्य महायज्ञदीक्षाऽऽसीत् तत्र देवानां ब्रह्मर्षीणां समाजो बभूव ॥ १३ ॥ तत्समाजे ताराणां चंद्र इव पृथुः उत्थितः ॥ १४ ॥ कथंभूतः पृथुः उन्नतः आजानुबाहुर्गौरः कमलनेत्रः सुस्मितमुखः ॥ १५ ॥ विस्तीर्णवक्षास्त्रिवलियुक्तोदरो निम्ननाभिः ॥१६॥ स्निग्धमूर्धजस्त्रि-रेखाङ्कितकन्धरः ॥ १७ ॥ पीताम्बरधरः कृष्णाजिनधरो दर्भहस्तः ॥ १८ ॥ एतादृशः पृथुरुत्थाय समन्ततः सर्वान् विलोकयन् सर्वेषामुप-

एकदाऽऽसीन्महासत्रदीक्षा तत्र दिवौकसाम् ॥ समाजो ब्रह्मर्षीणां च राजर्षीणां च सत्तम ॥ १३ ॥ तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः ॥ उत्थितः सदसो मध्ये ताराणामुडुराडिव ॥ १४ ॥ प्रांशुः पीनायतभुजो गौरः कञ्जारुणेक्षणः ॥ सुनासः सुमुखः सौम्यः पीनांसः सुद्विजस्मितः ॥ १५ ॥ व्यूढवक्षा बृहच्छ्रोणिर्वलिवल्गुदलोदरः ॥ आवर्तनाभिरोजस्वी काञ्चनोरुरुदग्रपात् ॥ १६ ॥ सूक्ष्मवक्रासितस्निग्धमूर्धजः कम्बुकन्धरः ॥ महाधने दुकूलाग्र्ये परिधायोपवीय च ॥ ॥ १७ ॥ व्यञ्जिताशेषगात्रश्रीर्नियमे न्यस्तभूषणः ॥ कृष्णाजिनधरः श्रीमान्कुशपाणिः कृतोचितः ॥ १८ ॥ शिशिरः स्निग्धताराक्षः समैक्षत समन्ततः ॥ ऊचिवानिदमुर्वीशः सदः संहर्षयन्निव ॥ १९ ॥ चारु चित्रपदं श्लक्ष्णं मृष्टं गूढम-विक्लवम् ॥ सर्वेषामुपकारार्थं तदा अनुवदन्निव ॥२०॥ राजोवाच ॥ सभ्याः शृणुत भद्रं वः साधवो य इहागताः ॥ सत्सु जिज्ञासुभिर्धर्ममावेद्यं स्वमनीषितम् ॥ २१ ॥ अहं दण्डधरो राजा प्रजानामिह योजितः ॥ रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक् ॥ २२ ॥ तस्य मे तदनुष्ठानाद्यानाहुर्ब्रह्मवादिनः ॥ लोकाः स्युः कामसंदोहा यस्य तुष्यति दिष्टदृक् ॥२३॥ य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन् ॥ प्रजानां शमलं भुङ्क्ते भगं च स्वं जहाति सः ॥ २४ ॥

कारार्थमनुवदन्निव गूढार्थं जगाद ॥ १९ ॥ २० ॥ पृथुरुवाच ॥ हे सभ्याः ! युष्माकं भद्रं धर्मजिज्ञासुभिः पुंभिः सत्सु स्वमनीषितं वक्तव्यम् ॥२१॥ अहं प्रजानां दण्डधर इह राजा योजितः ॥ २२ ॥ ब्रह्मवादिनो यदाहुस्तद् राज्ञाऽऽचरितं चेत् तस्य लोकाः कामदुघाः स्युः ॥२३॥ यः प्रजाः धर्मेऽशिक्षयन् करं गृह्णाति स प्रजानां पापं भुंक्ते ॥ २४ ॥

१ वलिभिस्तिसृभिर्वल्गु सुन्दरं दलवदश्वोऽप्रमदवत्यपत्रमिव उपरि विस्तृतमधस्तात्संकुचितमुदरं यस्य । २ उन्नताग्रौ पादौ यस्य । ३ कम्बुवत्त्रिरेखांकिता कन्धरा यस्य । ४ निमित्ते । ५ त्यक्तभूषणः । ६ इदमर्धं चाधिकमुपलभ्यते कस्मिंश्चित्प्राचीनपुस्तके । ७ प्राक्कर्मसाक्षीश्वरः ।

हे प्रजाः ! स्वधर्ममेवाधोक्षजधिया कुरुत । तर्हि मेऽनुग्रहः कृतो भवेत् ॥ २५ ॥ हे देवाद्याः ! यूयं तदनुमोदध्वम् । कर्तुः शास्तुरनुज्ञातुः फलं तुल्यं भवति ॥ २६ ॥ हे देवाः यज्ञपतिर्नामेश्वरः केषांचिन्मतेऽस्ति । इहामुत्र च भोगस्थानानि शरीराणि क्वचिल्लक्ष्यन्ते ॥ २७ ॥ मनोरुत्तानपादस्य ध्रुवस्य प्रियव्रतस्यांगस्य ॥ २८ ॥ अजस्य शिवस्य प्रह्लादस्य बलेश्चेदृशानामन्येषां च धर्मं मोहितान् शोच्यान् वेनादीन् विनेश्वरेण कृत्यमस्ति ॥ २९ ॥३०॥ तपस्विनो भगवत्पादसेवयाऽशेषजन्मसंचितं बुद्धेर्मलं त्यजन्ति ॥३१॥ येन भगवच्चरणाश्रयः कृतः स क्लेशवहां संसृतिं न प्रपद्यते ॥ ३२ ॥ यूयं निष्कपटाः सन्तो मनोवचः कायगुणैस्तमेवेश्वरं भजत ॥ ३३ ॥

तत्प्रजा भर्तृपिण्डार्थं स्वार्थसेवानसूयवः ॥ कुरुताधोक्षजधियस्तर्हि मेऽनुग्रहः कृतः ॥ २५ ॥ यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः ॥ कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम् ॥ २६ ॥ अस्ति यज्ञपतिर्नाम केषांचिदर्हसत्तमाः ॥ इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः क्वचिद्भुवः ॥ २७ ॥ मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः ॥ प्रियव्रतस्य राजर्षेरङ्गस्यास्मत्पितुः पितुः ॥ २८ ॥ ईदृशानामथान्येषामजस्य च भवस्य च ॥ प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृता ॥ २९ ॥ दौहित्रादीनृते मृत्योः शोच्यान्धर्मविमोहितान् ॥ वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना ॥ ॥ ३० ॥ यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः ॥ सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिस्सृता सरित् ॥ ३१ ॥ विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्यवान् ॥ यदङ्घ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते ॥ ३२ ॥ तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः ॥ अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धयः ॥ ३३ ॥

---

१ अवश्यं कर्मफलदात्रा भाव्यमिति तेषां मतम् । २ वर्गोऽत्र धर्मार्थकामाः । ३ असंगो वैराग्यं तेन विज्ञानस्य विशेषः साक्षात्कारस्तदेव वीर्यं यस्य सः । ४ अध्यापनादिभिः । ५ यथाधिकारमवसिता निश्चिता समाप्ता वाऽर्थसिद्धिर्येषां ते ।

असावीश्वरः शुद्धोऽगुणोऽपि सन् कर्ममार्गेऽनेकगुणो यज्ञः संपद्यते। यज्ञो वै विष्णुरिति श्रुतेः ॥ ३४ ॥ एष विभुः परमानन्दोऽपि शरीरे विषयाकारां बुद्धिं प्राप्य क्रियाफलत्वेन प्रतीयते ॥ ३५ ॥ अहो इमे मामकाः निरन्तरं भूतले हरिं यजन्ति ते ममानुग्रहं कुर्वंति ॥ ३६ ॥ अथ ब्राह्मणभक्तिं विधत्ते। महत् समृद्धिमत् राजकुलस्य तेजो ब्रह्मकुले प्रभावं न करोतु ॥ ३७ ॥ अहो! हरिर्यच्चरणाभिवन्दनात् स्थिरां लक्ष्मीं यशश्च प्राप ॥ ३८ ॥ विप्रसेवया हरिस्तुष्यति। अतस्तदेव ब्रह्मकुलं निषेव्यताम् ॥३९॥ यतो ब्रह्मकुलस्य नित्यं सेवया पुमान् ज्ञानाभ्यासं विनाऽपि मोक्षं लभेत ॥ ४० ॥ अनन्तो ब्राह्मणमुखे हुतं यथाऽश्नाति तथाऽग्नौ हुतं न ॥ ४१ ॥

संपद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनः स्वरूपतः ॥ ३४ ॥

असावेिहानेकगुणोऽगुणोऽध्वरः पृथग्विधद्रव्यगुणक्रियोक्तिभिः ॥

प्रधानकालाशयधर्मसंग्रहे शरीर एष प्रतिपद्य चेतनाम्। क्रियाफलत्वेन विभुर्विभाव्यते यथाऽनलो दारुषु तद्गुणात्मकः ॥ ३५ ॥

अहो ममामी वितरन्त्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम्। स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितले दृढव्रताः ॥ ३६ ॥

मा जातु तेजः प्रभवेन्महर्द्धिभिस्तितिक्षया तपसा विद्यया च। देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुलाद्द्विजानाम् ॥ ३७ ॥

ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवन्दनात्। अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः ॥ ३८ ॥

यत्सेवयाऽशेषगुहाशयः स्वराट् विप्रप्रियस्तुष्यति काममीश्वरः। तदेव तद्धर्मपरैर्विनीतैः सर्वात्मना ब्रह्मकुलं निषेव्यताम् ॥ ३९ ॥

पुमाँल्लभेतानतिवेलमात्मनः प्रसीदतोऽत्यन्तशमं स्वतः स्वयम्। यन्नित्यसंबन्धनिषेवया ततः परं किमत्रास्ति मुखं हविर्भुजाम् ॥४०॥

अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः। न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगुः ॥ ४१ ॥



१ द्रव्यादीन्यष्टौ यज्ञांगानि–द्रव्यं व्रीह्यादि–गुणाःशुक्लादयः–क्रियाः अजघातादयः उक्तयो मंत्राः–अर्थोऽङ्गसाध्यः उपकारः– लिंग पदार्थानां शक्तिः– नाम ज्योतिष्टोमादि । २ चित्तात् । ३ यस्य ब्रह्मकुलस्य । ४ देवानाम् । ५ इन्द्रादिनामभिः । ६ रहिते । ७ परमहंसगम्यश्चासौ परितो न गच्छन्ति गावो वाचो यस्यैतादृशश्च ।

ये नित्यं समाधिना ब्रह्म बिभ्रति ॥४२॥ तेषां पादरेणुं किरीटेन धारयामि ॥४३॥ एवं श्रेष्ठं ब्रह्मकुलं तथा गवां कुलं तथा जनार्दनश्च मह्यं प्रसीदताम् ॥४४॥ मैत्रेय उवाच ॥ एवं ब्रुवाणं पृथुं पितृदेवद्विजातयः ॥ सर्वे साधुवादेन तुष्टुवुः ॥४५॥ पुत्रेण लोकान् जयति इति सत्यवती श्रुतिः । वेनो ब्रह्मदण्डहतोऽपि नरकं त्वत्तोऽत्यतरत् ॥४६॥ हिरण्यकशिपुरपि प्रह्लादस्य प्रतापात् तमस्ततार ॥ ४७ ॥ हे वीर ! यस्य तव हरावीदृशी भक्तिः

यद्ब्रह्म नित्यं विरजं सनातनं श्रद्धातपोमङ्गलमौनसंयमैः ॥ समाधिना बिभ्रति हार्थदृष्टये यत्रेदमादर्श इवावभासते ॥४२॥ तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीटमायुः ॥ यं नित्यदा बिभ्रति आशु पापं नश्यत्यमुं सर्वगुणा भजन्ति ॥ ४३ ॥ गुणायनं शीलधनं कृतज्ञं वृद्धाश्रयं संवृणुतेऽनु संपदः ॥ प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम् ॥ ४४ ॥ मैत्रेय उवाच ॥ इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः ॥ तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः ॥ ४५ ॥ पुत्रेण जयते लोकानिति सत्यवती श्रुतिः ॥ ब्रह्मदण्डहतः पापो यद्वेनोऽत्यतरत्तमः ॥ ४६ ॥ हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ॥ विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः ॥ ४७ ॥ वीरवर्य पितः पृथ्व्याः समाः संजीव शाश्वतीः ॥ यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि ॥४८॥ अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुन्दनाथाः ॥ य उत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्ति ॥४९॥ नात्यद्भुतमिदं नाथ तवाजीव्यानुशासनम् ॥ प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥५०॥ अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो ॥ भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दैवसंज्ञितैः ॥५१॥ नमो विवृद्धसत्त्वाय पुरुषाय महीयसे ॥ यो ब्रह्मक्षत्रमाविश्य बिभर्तीदं स्वतेजसा ॥ ५२ ॥ इति श्रीभा० म० चतु० एकविंशोऽध्यायः ॥२१॥ मैत्रेय उवाच ॥ जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् ॥ तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः ॥१॥

स त्वं बहुवर्षाणि जीव ॥४८॥ अहो वयमद्य त्वया नाथेन सनाथाः स्मः ॥४९॥ हे नाथ ! सेवकानां तव सम्यगनुशासनमद्भुतं न यतो महतामेष स्वभाव एव ॥५०॥ अद्य त्वया तमसः पारो दर्शितः ॥५१॥ अतो विवृद्धसत्त्वाय तस्मै ते नमोऽस्तु ॥५२॥ इति श्रीभा० चू० चतु० एकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात् ॥ सनत्कुमारो भगवानुपादिशदितीर्यते ॥ १ ॥ मैत्रेय उवाच ॥ हे विदुर ! एवं पृथुं प्रति

१ "पितः" इ० पा० ।

जनेषु कथयत्सु सत्सु तत्र चत्वारः सूर्यवर्चसः सनकादयो मुनयः आकाशादाजग्मुः ॥ १ ॥ ततः पृथुराकाशादवतरतस्तान् ददर्श ॥ २ ॥ तद्दर्शनात् प्राप्तप्राण इव ससदस्यः पृथुरुत्थाय ॥ ३ ॥ नम्रकन्धरोऽर्हणैर्विधिवत् पूजां चक्रे ॥४॥ ततस्तत्पादशौचजलं मूर्ध्नि दधार ॥५॥ ततोऽग्नीनिव सुवर्णासने स्थितान् तान् प्रीतः आह ॥ ६ ॥ पृथुरुवाच ॥ हे मुनयः ! मया किमाचरितम् ? यद् युष्माकं दर्शनं योगिनामपि

तांस्तु सिद्धेश्वरान् राजा व्योम्नोऽवतरतोऽर्चिषा ॥ लोकानपापान् कुर्वत्या सानुगोऽचष्ट लक्षितान् ॥ २ ॥ तद्दर्शनोद्ग-
तान्प्राणान् प्रत्यादित्सुरिवोत्थितः ॥ ससदस्यानुगो वैन्य इन्द्रियेशो गुणानिव ॥३॥ गौरवाद्यन्त्रितः सभ्यः प्रश्रयानत-
कन्धरः ॥ विधिवत्पूजयांचक्रे गृहीताध्यर्हणासनान् ॥ ४ ॥ तत्पादशौचसलिलैर्मार्जितालकबन्धनः ॥ तत्र शीलवतां वृ-
त्तमाचरन् मानयन्निव ॥ ५ ॥ हाटकासन आसीनान् स्वधिष्ण्येष्विव पावकान् ॥ श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्र-
जान् ॥ ६ ॥ पृथुरुवाच ॥अहो आचरितं किं मे मङ्गलं मङ्गलायनाः ॥ यस्य वो दर्शनं ह्यासीद्दुर्दर्शानां च योगिभिः
॥७॥ किं तस्य दुर्लभतरमिह लोके परत्र च ॥ यस्य विप्राःप्रसीदन्ति शिवो विष्णुश्च सानुगः ॥८॥ नैव लक्ष्यते लोको
लोकान् पर्यटतोऽपि यान् ॥ यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः॥९॥अधनाअपिते धन्याः साधवो गृहमेधिनः ॥
यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरावराः ॥१०॥ व्यालालयद्रुमा वैतेऽप्यरिक्ताखिलसंपदः ॥ यद्गृहास्तीर्थपादीयपादती-
र्थविवर्जिताः ॥११॥ स्वागतं वो द्विजश्रेष्ठा यद् व्रतानि मुमुक्षवः ॥ चरन्ति श्रद्धया धीरा बाला एव बृहन्ति च ॥१२॥

दुर्लभं तन्मे प्राप्तम् ॥ ७ ॥ विप्राः यस्य प्रसीदन्ति तस्य शिवो विष्णुश्च प्रसीदति ॥ ८ ॥ लोको लोकान् पर्यटतोऽपि यान् नैव लक्ष-
यते ॥ ९ ॥ येषां गृहे भवादृशाः पूज्यन्ते तेऽधना अपि धन्याः ॥ १० ॥ भवादृशपादतीर्थवर्जिताः ये गृहास्ते सर्पनिवासस्थानसदृशाः
ज्ञातव्याः ॥ ११ ॥ हे मुनयः ! युष्माकं स्वागतं यतो बाला एव यूयं व्रतानि चरथ ॥ १२ ॥

१ सनकादय इति ज्ञापितान् । २ जीवः । ३ गन्धादीन् । ४ वशीकृतः । ५ भवस्याग्रजत्वेन मान्यान् । ६ महदादयो वा । ७ अर्हैर्वरणीयाः अम्बुतृणभूमयः ईश्वरः स्वामी अवराः भृत्याश्च येषु ते ।
८ तीर्थपादीयाः भगवद्भक्ताः ।

हे नाथ! दुःखसंसारे स्वकर्मभिः पतितानां नः कुशलं कच्चित् ॥ १३ ॥ भवत्सु कुशलप्रश्नो न योग्यः यत्र कुशलाकुशलवृत्तयो न ॥ १४ ॥ अस्मिन् भवे क्षेमं केन भवेत् तद् युष्मान् पृच्छामि ॥ १५ ॥ यतो भक्तानामनुग्रहाय सिद्धरूपी नित्यं चरति ॥१६॥ मैत्रेय उवाच ॥ हे विदुर! पृथोः श्रोत्रप्रियं वाक्यं श्रुत्वा कुमारो जगाद ॥ १७ ॥ सनत्कुमार उवाच ॥ हे महाराज! त्वया साधु पृष्टं साधूनां संगमः उभयोर्मान्यः

कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम् ॥ व्यसनावाप एतस्मिन् पतितानां स्वकर्मभिः ॥ १३ ॥ भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते ॥ कुशलाकुशला यत्र न सन्ति मतिवृत्तयः ॥ १४ ॥ तदहं कृतविस्रम्भः सुहृदो वस्तपस्विनाम् ॥ संपृच्छे भव एतस्मिन् क्षेमः केनाञ्जसा भवेत् ॥ १५ ॥ व्यक्तमात्मवतामात्मा भगवानात्मभावनः ॥ स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥ मैत्रेय उवाच ॥ पृथोस्तत् सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ॥ स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥ सनत्कुमार उवाच ॥ साधु पृष्टं महाराज सर्वभूतहितात्मना ॥ भवता विदुषा चापि साधूनां मतिरीदृशी ॥१८॥ संगमः खलु साधूनामुभयेषां च संमतः ॥ यत्संभाषणसंप्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥ अस्त्येव राजन् भवतो मधुद्विषः पादारविन्दस्य गुणानुवादने ॥ रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः ॥ २० ॥ शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यग्विमृशेषु हेतुः ॥ असङ्ग आत्मव्यतिरिक्त आत्मनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥ सा श्रद्धया भगवद्धर्मचर्चया जिज्ञासयाऽऽध्यात्मिकयोगनिष्ठया ॥ योगेश्वरोपासनया च नित्यं पुण्यश्रवः कथया पुण्यया च ॥ २२ ॥

॥ १८ ॥ १९ ॥ हे राजन्! हरेर्गुणानुश्रवणे भवतो या प्रीतिः सा मनोमलं धुनोति ॥२०॥ शास्त्रेषु नृणामियानेवार्थः क्षेमाय निश्चितः ॥२१॥ वैराग्येण श्रद्धया भगवद्धर्मचर्चया भगवत्कथया ॥ २२ ॥

---

१ इन्द्रियार्थाः अर्थाः विषयास्तान् ये विदन्ति तेषाम् । २ व्यसनानुप्यन्ते यस्मिंस्तस्मिन्संसारे । ३ निश्चितम् । ४ इमां पृथ्वीम् । ५ वक्तृणां श्रोतृणां च । ६ दृढा । ७ धातुरागवदनिवर्त्यम् । ८ सम्यग्विचारवत्सु ।

अर्थकामाद्यपरिग्रहेणासेवनेन ॥२३॥ अहिंसया भगवच्चरितामृतसेवनेन यमनियमादिना द्वन्द्वसहनेन ॥२४॥ हरिगुणाभिधाने निर्गुणे ब्रह्मणि तत्कालं रतिः स्यात् ॥ २५ ॥ यदा ब्रह्मणि प्रीतो भवति पुमान् ज्ञानवैराग्यवेगेन पञ्चभूतप्रधानं जीवस्य हृदयं दहति ॥२६॥ ततो दग्धहृदयो-

अर्थेन्द्रियारामसगोष्ठ्यतृष्णया तत्संमतानामपरिग्रहेण च ॥ विविक्तरुच्यां परितोष आत्मन् विना हरेर्गुणपीयूषपानात् ॥ २३ ॥ अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना ॥ यमैरकामैर्नियमैश्चाप्यनिन्दया निरीहया द्वन्द्वतितिक्षया च ॥ २४ ॥ हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेन विजृम्भमाणया ॥ भक्त्या ह्यसङ्गः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ २५ ॥ यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान् ज्ञानविरागरंहसा ॥ दहत्यवीर्यं हृदयं जीवकोशं पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥ दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे ॥ परात्मनोर्यद्व्यवधानं पुरस्तात् स्वप्ने यथा पुरुषस्तद्विनाशे ॥ २७ ॥ आत्मानमिन्द्रियार्थं च परं यदुभयोरपि ॥ सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा ॥ २८ ॥ निमित्ते सति सर्वत्र जलादावपि पूरुषः ॥ आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ॥ २९ ॥ इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः ॥ चेतनां हरते बुद्धेः स्तम्बस्तोयमिव ह्रदात् ॥ ३० ॥

पाधिर्नरः आत्मनोऽन्तर्बहिः किमपि न पश्यति ॥२७॥ जीवो दृश्यद्रष्टारं जाग्रत्स्वप्नयोः पश्यति सुषुप्तौ न ॥२८॥ यथा लोके जलदर्पणादिभेदे आत्मनो द्वे रूपे पश्यति जलाद्यभावे न ॥ २९ ॥ पुंसां मनः इन्द्रियैर्विषयासक्तिं प्राप्य बुद्धेर्विचारसामर्थ्यं हरति ॥ ३० ॥

---

१ अर्थारामास्तामसाः इन्द्रियारामाः राजसास्तैः सह गोष्ठ्यामतृष्णया । २ अर्थकामानाम् । ३ विजने रुच्या । ४ आत्मनि । ५ हरिगुणपीयूषपाने सति पूर्वोक्तौ रुचिपरितोषौ न कार्यौ । ६ अग्र्यं सीधुश्रेष्ठममृतम् । ७ शीतोष्णादि द्वन्द्वम् । ८ हरिभक्तकर्णालंकारभूतगुणाभिधानेन । ९ कार्यकारणरूपे । १० आचार्यानुग्रहवान् । ११ पुनः प्ररोहक्षमं यथा न भवति तथा । १२ गुणाः कर्तृत्वादयः । १३ बहिर्घटादौ अन्तः सुखदुःखादौ । १४ परो दृश्यः आत्मा द्रष्टा तयोः १५ । व्यवधानविनाशेस्वप्नविनाशेऽपि । १६ आत्मेन्द्रियसम्बन्धहेतुमहंकारम् । १७ प्रतिबिम्बस्य । १८ तीरजः कुशादिस्तम्बः ।

विचारसामर्थ्यं नष्टे स्मृतिर्नश्यति स्मृतिक्षये ज्ञानभ्रंशमात्मनाशं प्राहुः ॥ ३१ ॥ आत्मनाशे स्वार्थनाशः । अतः पुंसः परतरः स्वार्थनाशो न ॥ ३२ ॥ ततो ज्ञानविज्ञानात् भ्रंशित स्थावरतां याति ॥ ३३ ॥ अतः संसारं तितीर्षुर्नरो धर्मादिवर्गनाशकं कर्हिचित् सङ्गं न कुर्यात् ॥ ३४ ॥ तत्रापि त्रैवर्ग्यात् मोक्ष एवात्यन्तिकोऽर्थः ॥ ३५ ॥ ब्रह्मादयोऽस्मदादयश्च गुणक्षोभादनु भवन्ति तेषां क्षेमं न ॥ ३६ ॥ तस्मात्

भ्रश्यत्यनुस्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये ॥ तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः ॥ ३१ ॥ नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः ॥ यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ॥३२॥ अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् ॥ भ्रंशितो ज्ञानविज्ञानाद्येनाविशति मुख्यताम् ॥३३॥ न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीरिषुः ॥ धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम् ॥ ३४ ॥ तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते ॥ त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः ॥३५॥ परेऽवरे च ये भावा गुणव्यतिकरादनु ॥ न तेषां विद्यते क्षेममीशविध्वंसिताशिषाम् ॥३६॥ तत त्वं नरेन्द्र जगतामथ तस्थुषां च देहेन्द्रियासुधिषणात्मभिरावृतानाम् ॥ यः क्षेत्रवित्तपतया हृदि विष्वगाविः प्रत्यक्चकास्ति भगवांस्तमवेहि सोऽस्मि ॥३७॥ यस्मिन्निदं सदसदात्मतया विभाति माया विवेकविधुति स्रजिवाऽहिबुद्धिः ॥ तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥३८॥ यत्पादपङ्कजपलाशविलासभक्त्या कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः ॥ तद्वन्न रिक्तमतयो यतयोऽपि रुद्धस्रोतोगणास्तमरणं भज वासुदेवम् ॥ ३९ ॥ कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीरषन्ति ॥ तत् त्वं हरेर्भगवतो भजनीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥४०॥

हे राजन् ! चराचराणां हृदि यः प्रकाशते स एवाहमस्मीति जानीहि ॥३७॥ यस्मिन् विश्वं कार्यकारणभावेन मायैव भाति तं प्रपद्ये ॥३८॥ साधवो यत्पादभक्त्या हृदयग्रन्थिं छिन्दन्ति तं वासुदेवं भज ॥ ३९ ॥ त्वं हरेरङ्घ्रिं नौकां कृत्वा भवार्णवमुत्तर ॥ ४० ॥

१ यमधिकृत्य । २ स्वेनैव यो व्यतिक्रमोऽपह्नवस्तस्मात् । ३ क्षेत्रविदं जीवं तपति तत्तया । ४ विष्वक् सर्वतः । ५ आविः प्रत्यक्षः । ६ प्रत्यक् प्रतिलोमम् । ७ विवेकेन निराकृतिर्यस्य तत् । ८ कर्मभिर्मलिना प्रकृतिर्येन । ९ स्रोतोगणा इन्द्रियवर्गाः । १० न प्लवस्तरणहेतुरीट् ईशो येषां तेषाम् । ११ दुस्तरार्णवम् । यद्वा दुस्तरोदकरूपव्यसनम् ।

मैत्रेय उवाच ॥ एवं ब्रह्मपुत्रेण दर्शितात्मगतिः स उवाच ॥४१॥ पृथुरुवाच, पूर्वमेव हरिणा मेऽनुग्रहः कृतः । तं संपादयितुं यूयं प्राप्ताः ॥४२॥ तत् भवद्भिः संपादितम् ॥ युष्मभ्यं गुरुदक्षिणार्थं किं ददे ॥४३॥ तथाऽपि प्राणाः दाराः पुत्राः सपरिच्छदाः गृहा राज्यं सैन्यं मही कोश इति सर्वं भवतां निवेदितम् ॥ ४४ ॥ वेदशास्त्रवित् सैनापत्यं राज्यं दण्डनेतृत्वादींश्चार्हति ॥ ४५ ॥ ब्राह्मणः स्वमेव भुङ्क्ते स्वमेव ददाति तस्यानुग्रहेण

मैत्रेय उवाच ॥ स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा ॥ दर्शितात्मगतिः सम्यक् प्रशस्योवाच तं नृपः ॥ ४१ ॥ राजोवाच ॥ कृतो मेऽनुग्रहः पूर्वं हरिणाऽऽर्त्तानुकम्पिना ॥ तमापादयितुं ब्रह्मन् भगवन् यूयमागताः ॥ ४२ ॥ निष्पादितं[1] च कात्स्न्र्येन भगवद्भिर्घृणालुभिः ॥ साधूच्छिष्टं हि मे सर्वमात्मना सह किं ददे ॥४३॥ प्राणा दाराः सुता ब्रह्मन् गृहाश्च सपरिच्छदाः ॥ राज्यं बलं मही कोश इति सर्वं निवेदितम् ॥४४॥ सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ॥ सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति[2] ॥४५॥ स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ॥ तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः ॥ ॥४६॥ यैरीदृशी भगवतो गतिरात्मवाद एकान्ततो निगमिभिः प्रतिपादिता नः ॥ तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्यं को नाम तत् प्रतिकरोति विनोदपात्रम्[3] ॥४७॥ मैत्रेय उवाच ॥ त आत्मयोगपतय आदिराजेन पूजिताः ॥ शीलं तदीयं शंसन्तः खेऽभूवन् मिषतां नृणाम् ॥ ४८ ॥ वैन्यस्तु धुर्यो महतां संस्थित्याऽध्यात्मशिक्षया ॥ आप्तकाममिवात्मानं मेने आत्मन्यवस्थितः ॥ ४९ ॥ कर्माणि च यथाकालं यथादेशं यथाबलम् ॥ यथोचितं यथावित्तमकरोद् ब्रह्मसात्कृतम् ॥ ५० ॥



क्षत्रियादयः केवलमन्नं भुञ्जते न तु दाने स्वतन्त्राः ॥४६॥ यैरध्यात्मविचारे ईदृशी भगवतो गतिः संपादिता तेषां प्रत्युपकारं कः करोति ॥४७॥ मैत्रेय उवाच ॥ आदिराजेन पूजिताः सनकादयस्तं प्रशंसन्तः आकाशमार्गेण गताः ॥ ४८ ॥ वैन्योऽध्यात्मशिक्षयाऽऽत्मनि स्थितः सन् प्राप्तमनोरथमिवात्मानं मेने ॥४९॥ स यथाकालं यथादेशं यथोचितं ब्रह्मण्यर्पितं यथा भवति तथा कर्माणि चकार ॥ ५० ॥

१ "निष्पादितः" इ० पा० । २ वेदविद्भिः । ३ उदपात्रमञ्जलिं विना । यद्वा उपहासास्पदं प्रत्युपकारे प्रवृत्तो भवेदित्यर्थः ।

कर्मफलम् ब्रह्मणि समर्प्यात्मानं प्रकृतेः परं मन्यमानो गृहे वर्तमानोऽपीन्द्रियार्थेषु नासज्जत ॥५१॥५२॥ एवं ज्ञानयोगेन कर्माणि कुर्वन्नर्चिर्नाम्भार्यायां पञ्च पुत्रान् जनयामास ॥ ५३ ॥ विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकमेवं पुत्रानुत्पाद्य सर्वलोकपालानां पृथक्पृथक् गुणानेको दधार ॥ ५४ ॥ स मनोवाग्वृत्तिभिः प्रजा अरञ्जयत् ॥ ५५ ॥ किंच यः पृथुर्धनग्रहणत्यागयोः सूर्यवत् निरहंकारः ॥ ५६ ॥ अग्निरिव

फलं ब्रह्मणि विन्यस्य निर्विषङ्गः समाहितः ॥ कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥५१॥ गृहेषु वर्तमानोऽपि स साम्राज्यश्रियाऽन्वितः ॥ नासज्जतेन्द्रियार्थेषु निरहंमतिरर्कवत् ॥ ५२ ॥ एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् ॥ पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसंमतान् ॥५३॥ विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम् ॥ सर्वेषां लोकपालानां दधारैकः पृथुर्गुणान् ॥५४॥ गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ॥ मनोवाग्वृत्तिभिः सौम्यैर्गुणैः संरञ्जयन् प्रजाः ॥ ५५ ॥ राजेत्यधान्नामधेयं सोमराज इवापरः ॥ सूर्यवद्विसृजन् गृह्णन् प्रतपंश्च भुवो वसु ॥ ५६ ॥ दुर्धर्षस्तेजसेवाग्निर्महेन्द्र इव दुर्जयः ॥ तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम् ॥५७॥ वर्षति स्म यथाकामं पर्जन्य इव तर्पयन् ॥ समुद्र इव दुर्बोधः सत्त्वेनाचलराडिव ॥५८॥ धर्मराडिव शिक्षायामाश्चर्ये हिमवानिव ॥ कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा ॥ ५९ ॥ मातरिश्वेव सर्वात्मा बलेन सहसौजसा ॥ अविषह्यतया देवो भगवान् भूतराडिव ॥ ६० ॥ कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव ॥ वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः ॥६१॥ बृहस्पतिर्ब्रह्मवादे आत्मवत्त्वे स्वयं हरिः॥भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु ॥ ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे ॥६२॥

दुर्धर्षः इन्द्र इव दुर्जयः । क्षमया भूरिव अभीष्टदः स्वर्ग इव ॥ ५७ ॥ पर्जन्य इव यथाकामं तर्पयन् समुद्र इव दुर्बोधः धैर्येण मेरुवत् ॥५८॥ शिक्षायां यमवत् । कुबेर इव धनी । वरुण इव गुप्तार्थः ॥५९॥ वायुरिव सर्वत्र गमनशक्तिः श्रीरुद्र इवाविषह्यः ॥६०॥ सौन्दर्ये काम इव । सिंह इव मनस्वी । प्रभुत्वे ब्रह्मेव ॥ ६१ ॥ ब्रह्मवादे बृहस्पतिरिव । गोगुरुविप्रादिष्वात्मनैव तुल्यः ॥ ६२ ॥

१ रक्षणाय ।

एवं राजा त्रैलोक्ये सतां कर्णरन्ध्रेषु राम इव प्रविष्टः आसीत् ॥६३॥ इति श्रीभागव० चू० चतुर्थ० द्वाविंशोऽध्यायः ॥२२॥ त्रयोविंशे सभार्यस्य वने नित्यसमाधितः। विमानमधिरुह्याथ वैकुण्ठगतिरीर्यते॥१॥ मैत्रेय उवाच ॥ हे विदुर ! वैन्यः एकदाऽऽत्मानं वृद्धं दृष्ट्वा जगाद ॥ १ ॥ अहं यदर्थमिह जातः स सर्गो मया वर्धितः ईश्वरादेशो निष्पादितः ॥ २ ॥ इति विचार्य पुत्रेषु राज्यं कृत्वा प्रजासु विमनस्सु सतीषु सदारस्तपो-

कीर्त्योर्ध्वगीतया पुंभिस्त्रैलोक्ये तत्र तत्र ह ॥ प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ॥६३॥ इति श्रीभा० म चतु० पृथूपाख्याने सनत्कुमारेण परमाध्यात्मोपदेशो नाम द्वाविंशोऽध्यायः ॥ २२ ॥ मैत्रेय उवाच ॥ दृष्ट्वाऽऽत्मानं प्रवय-समेकदा वैन्यं आत्मवान् ॥ आत्मना वर्धिताशेषस्वानुसर्गः प्रजापतिः ॥ १ ॥ जगतस्तस्थुषश्चापि वृत्तिदो धर्मभृत् सताम् ॥ निष्पादितेश्वरादेशो यदर्थमिह जज्ञिवान् ॥ २ ॥ आत्मजेष्वात्मजां न्यस्य विरहाद्रुदतीमिव ॥ प्रजासु विम-नस्स्वेकः सदारोऽगात्तपोवनम् ॥ ३ ॥ तत्राप्यदाभ्यनियमो वैखानससुसंमते ॥ आरब्ध उग्रतपसि यथा स्वविजये पुरा ॥४॥ कन्दमूलफलाहारः शुष्कपर्णाशनः क्वचित् ॥ अब्भक्षः कतिचित् पक्षान् वायुभक्षस्ततः परम् ॥ ५ ॥ ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषाण्मुनिः ॥ आकण्ठमग्नः शिशिर उदके स्थण्डिलेशयः ॥ ६ ॥ तितिक्षुर्यतवाग्दान्त ऊर्ध्व-रेता जितानिलः॥आरिराधयिषुः कृष्णमचरत् तप उत्तमम् ॥ ७ ॥ तेन क्रमानुसिद्धेन ध्वस्तकर्माऽमलाशयः ॥ प्राणा-यामैः संनिरुद्धषड्वर्गश्छिन्नबन्धनः ॥ ८ ॥ सनत्कुमारो भगवान् यदाहाध्यात्मिकं परम् ॥ योगं तेनैव पुरुषमभजत् पुरुषर्षभः ॥ ९ ॥ भगवद्धर्मिणः साधोः श्रद्धया यततः सदा ॥ भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत् ॥ १० ॥

वनं जगाम ॥३॥ तत्र वानप्रस्थानां संमतं तपः आरब्धवान् ॥४॥ कंचित् कालं कन्दमूलफलशुष्कपर्णाहारः क्वचिदब्भक्षः क्वचित् वायुभक्षः ॥५॥ ततः परं ग्रीष्मे पञ्चतपाः, वर्षासु पर्जन्यसहः शीतकाले उदके आकण्ठमग्नः ॥ ६ ॥ जितप्राणः कृष्णमाराधयन् परं तपः आचरत् ॥ ७ ॥ तेन तपसा ध्वस्तकर्माऽमलाशयश्छिन्नबन्धनः ॥ ८ ॥ सनत्कुमारोपदिष्टयोगेन पुरुषं भेजे ॥ ९ ॥ तदा तस्य ब्रह्मणि महती भक्तिर्जाता ॥ १० ॥

१ तृतीयेऽगादित्यनेनान्वयः । २ अनुसर्गोऽन्नादिसर्गो ग्रामादिसर्गश्च । ३ पृथ्वीम् । ४ अप्रतिहतनियमः । ५ बन्धनानि वासनाः ।

तया ज्ञानं वैराग्यं च बभूव । तेन जीवकोशं चिच्छेद ॥ ११ ॥ यो यावद् भगवत्कथासु रतिं न कुर्यात् तावद् योगगतिभिर्यातः प्रमत्तो भवति ॥१२॥ एवं स पृथुरात्मन्यात्मानं संयोज्य काले ब्रह्मभूतः देहं तत्याज ॥ १३ ॥ देहत्यागप्रकारमाह । पार्ष्णिभ्यां गुदं प्रपीड्य मूलाधारात् शनैर्वायुमाकृष्य नाभ्यां स्थापयित्वा ततो हृदुरः कण्ठभ्रूमध्येषु स्थापयित्वा ॥१४॥ ततस्तं वायुं क्रमेण ब्रह्मरन्ध्रे आवेश्य सिद्ध्यादिषु निस्स्पृहः

तस्यानया भगवतः परिकर्मशुद्धसत्त्वात्मनस्तदनुसंस्मरणानुपूर्त्या ॥ ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संश-यपदं[1] निजजीवकोशम् ॥ ११ ॥ छिन्नान्यधीर[2]धिगतात्मगतिर्निरीहस्तत्तत्यजेऽच्छिनदिदं वयुनेन[3] येन ॥ तावन्न योग-गतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात् ॥ १२ ॥ एवं स वीरप्रवरः संयोज्यात्मानमात्मनि ॥ ब्रह्म-भूतो दृढं काले तत्याज स्वं कलेवरम् ॥ १३ ॥ संपीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयन् शनैः ॥ नाभ्यां कोष्ठेष्वव-स्थाप्य हृदुरःकण्ठशीर्षणि ॥ १४ ॥ उत्सर्पयंस्तु तं मूर्ध्नि क्रमेणावेश्य निस्स्पृहः ॥ वायुं वायो क्षितौ कायं तेजस्ते-जस्ययूयुजत् ॥१५॥ खान्याकाशे द्रवं तोये यथास्थानं विभागशः ॥ क्षितिमम्भसि तत्तेजस्यदो वायौ नभस्यमुम् ॥१६॥ इन्द्रियेषु मनस्तानि तन्मात्रेषु यथोद्भवम् ॥ भूतादिनाऽमून्युत्क्षिप्य महत्यात्मनि संदधे ॥१७॥ तं सर्वगुण[4]विन्यासं जीवे मायामये[5] न्यधात् ॥ तं चानुशयमात्मस्थमसावनुशयी[6] पुमान् ॥ ज्ञानवैराग्यवीर्येण स्वरूपस्थोऽजहात् प्रभुः ॥ १८ ॥ * अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम् ॥ सुकुमार्यतदर्हा च यत् पद्भ्यां स्पर्शनं भुवः ॥ १९ ॥

सन् तं वायुं वायावेकीकृतवान् । तथा कायं क्षितौ तेजस्तेजस्येकीकृतवान् ॥ १५ ॥ तथेन्द्रियच्छिद्राण्याकाशे रसांशं जले प्रविलाप्य क्षितिं जले जलं तेजसि तेजो वायौ वायुमाकाशे ॥ १६ ॥ खमिन्द्रियेषु तानि शब्दादिविषयेषु तान् महत्तत्त्वे ॥ १७ ॥ तं जीवे स जीवो ब्रह्मणि स्थितः सन् पृथुर्देहं जहौ ॥ १८ ॥ हे विदुर ! अर्चिर्नाम्नी सुकुमारी तत्पत्नी पत्युरनु पद्भ्यां वनं गत्वा ॥ १९ ॥

१ हृदयग्रंथि संशयानामसंभावनादीनां पदम् । २ अन्यधीर्देहात्मबुद्धिः । ३ वयुनं ज्ञानम् । ४ सर्वेषां गुणानां कार्याणां विन्यासो यस्मिंस्तं महान्तम् । ५ मायोपाधिम् । ६ पूर्वमुपाधिमान् जीवोऽसौ पृथुः । *''प्रभु-भूतः प्रसन्नात्मा वैकुण्ठमधिगच्छति ॥'' इत्यधिकः पाठः ।

भर्तुः शुश्रूषया भूमिशयनकन्दमूलादिभक्षणजं दुःखं नाविन्दत ॥ २० ॥ सा पतिदेहं मृत्युं प्राप्तं दृष्ट्वा किंचिद् विलप्य पर्वतशिखरे चितामारोप्य ॥२१॥ तत्कालोचितं कर्म विधाय स्नात्वा भर्तुरुदकं दत्त्वा स्वर्गस्थान् देवान् नत्वा वह्निं त्रिः प्रदक्षिणीकृत्य भर्तृपादौ ध्यायन्ती वह्निं विवेश ॥ २२ ॥ तदा सहस्रशो देवपत्न्यस्तुष्टुवुः ॥ २३ ॥ मन्दराचलसानुनि पुष्पवृष्टिं कुर्वत्यः सत्यो देववाद्येषु नदत्सु परस्परं जगदुः

अतीव भर्तुर्व्रतधर्मनिष्ठया शुश्रूषया चारषदेहयात्रया । नाविन्दतार्तिं परिकर्शिताऽपि सा प्रेयस्करस्पर्शनमाननिर्वृतिः ॥ २० ॥ देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः ॥ आलक्ष्य किंचिच्च विलप्य सा सती चितामथारोपयदद्रिसानुनि ॥ २१ ॥ विधाय कृत्यं ह्रदिनीजलाप्लुता दत्त्वोदकं भर्तुरुदारकर्मणः ॥ नत्वा दिविस्थांस्त्रिदशांस्त्रिः परीत्य विवेश वह्निं ध्यायती भर्तृपादौ ॥२२॥ विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् ॥ तुष्टुवुर्वरदा देवैर्देवपत्न्यः सहस्रशः ॥ २३ ॥ कुर्वत्यः कुसुमासारं तस्मिन् मन्दरसानुनि ॥ नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥२४॥ देव्य ऊचुः ॥ अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् ॥ सर्वात्मना पतिं भेजे यज्ञेशं श्रीर्वधूरिव ॥ २५ ॥ सैषा नूनं व्रजत्यूर्ध्वमनु वैन्यं पतिं सती ॥ पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥२६॥ तेषां दुरापं किं त्वन्यन्मर्त्यानां भगवत्पदम् ॥ भुवि लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥ २७ ॥ स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि ॥ लब्ध्वाऽपवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ २८ ॥ मैत्रेय उवाच ॥ स्तुवन्तीष्वमरस्त्रीषु पतिलोकं गता वधूः ॥ यं वा आत्मविदां धुर्यो वैन्यः प्रापाच्युताशयः ॥ २९ ॥

॥ २४ ॥ देव्य ऊचुः ॥ ॥ अहो! इयं वधूर्धन्या यतः सर्वात्मना पतिं सेवते ॥२५॥ किंच याऽस्मानतीत्य पत्या सहोर्ध्वं व्रजति ॥२६॥ भुवि ये चञ्चलायुषोऽपि भगवत्पदं साधयन्ति तेषामन्यद् देवादिपदं किं दुर्लभम् ॥२७॥ यो मोक्षसाधनं मनुष्यदेहं प्राप्य विषयेषु सज्जते तं धिक् ॥ २८ ॥ मैत्रेय उवाच ॥ एवं देवस्त्रीषु स्तुवतीषु साऽर्चिः पतिलोकं गता, पृथुर्भगवद्रूपतां प्राप ॥ २९ ॥

१ आर्षया वृत्त्या । २ प्रेयसः करेण स्पर्शनं मानं च ताभ्यां निर्वृतिर्यस्याः । ३ नम्रहितोपि पाठः ।

इत्थं पृथोश्चरितं कथितम् ॥ ३० ॥ इदं पुण्यं यः पठेत् शृणुयात् श्रावयेद् वा स पृथोः पदवीं प्राप्नुयात् ॥३१॥ ब्राह्मणः पठन् तेजस्वी भवेत् क्षत्रियो जगतीपतिः। वैश्यो विट्पतिः। शूद्रः श्रेष्ठतामियात् ॥३२॥ नरो नार्यथवेदं त्रिवारं शृण्वन् पुत्रं धनं च प्राप्नोति ॥३३॥ मूर्खः पंडितो भवेत्। इदं स्वस्त्ययनं सर्वाशुभनिवारणम् ॥३४॥ धन्यं यशस्यमायुष्यं चतुर्वर्गसिद्धिदम् ॥३५॥ विजयाभिमुखो राजेदं श्रुत्वा यान् प्रति याति ते तस्मै मानं कुर्वन्ति ॥ ३६ ॥ असङ्गो हरौ भक्तिं कुर्वन् भगवन्माहात्म्यसूचकं पृथुचरितं शृण्वन् श्रावयन् पठन् वा पृथुगतिं प्राप्नुयात् ॥ ३७ ॥ इदं

इत्थंभूतानुभावोऽसौ पृथुः पृथुपराक्रमः ॥ कीर्तितं तस्य चरितमुद्दामचरितस्य ते ॥ ३० ॥ य इदं सुमहत्पुण्यं श्रद्धयाऽवहितः पठेत् ॥ श्रावयेच्छृणुयाद्वाऽपि स पृथोः पदवीमियात् ॥ ३१ ॥ ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो जगतीपतिः ॥ वैश्यः पठन् विट्पतिः स्याच्छूद्रः सत्तमतामियात् ॥ ३२ ॥ त्रिःकृत्व इदमाकर्ण्य नरो नार्यथवाऽऽदृता ॥ अप्रजः सुप्रजतमो निर्धनो धनवत्तमः ॥ ३३ ॥ अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ॥ इदं स्वस्त्ययनं पुंसाममङ्गल्यनिवारणम् ॥ ३४ ॥ धन्यं यशस्यमायुष्यं स्वर्ग्यं कलिमलापहम् ॥ धर्मार्थकाममोक्षाणां सम्यक् सिद्धिमभीप्सुभिः ॥ ३५ ॥ श्रद्धयैतदनुश्राव्यं चतुर्णां कारणं परम् ॥ * विजयाभिमुखो राजा श्रुत्वैतदनुयाति यान् ॥ बलिं तस्मै हरन्त्यग्रे राजानः पृथवे यथा ॥ ३६ ॥ मुक्तान्यसङ्गो भगवत्यमलां भक्तिमुद्वहन् ॥ वैन्यस्य चरितं पुण्यं शृणुयाच्छ्रावयेत् पठेत् ॥३७॥ वैचित्रवीर्याभिहितं महन्माहात्म्यसूचकम् ॥ अस्मिन् कृतमतिर्मर्त्यः पार्थवीं गतिमाप्नुयात् ॥३८॥ अनुदिनमिदमादरेण शृण्वन् पृथुचरितं प्रथयन् विमुक्तसङ्गः ॥ भगवति भवसिन्धुपोतपादे स च निपुणां लभते रतिं मनुष्यः ॥ ३९ ॥ इति श्रीभा० महा० चतुर्थ० पृथुचरित्रसमाप्तिवर्णनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

मैत्रेय उवाच ॥ विजिताश्वोऽधिराजाऽऽसीत् पृथुपुत्रः पृथुश्रवाः ॥ यवीयेभ्योऽददात् काष्ठा भ्रातृभ्यो भ्रातृवत्सलः ॥१॥

पृथुचरितं प्रतिदिनं भक्त्या शृण्वन् भगवति रतिं लभते ॥ ३८ ॥ इति श्रीभागव० चू० चतुर्थ० त्रयोविंशोऽध्यायः ॥२३॥ समाप्तं पृथूपाख्यानम् ॥ एकादशभिरध्यायैः पृथोश्चरितमीरितम् ॥ प्रचेतसामथाष्टाभिस्तन्मध्ये पञ्चभिः पितुः ॥ १ ॥ चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः ॥ प्रचेतसां जनिस्तेभ्यो रुद्रगीतं च वर्ण्यते ॥२॥ मैत्रेय उवाच ॥ हे विदुर ! पृथुपुत्रो विजिताश्वो राज्ये स्थित्वा कनिष्ठभ्रातृभ्यो दिशो ददौ ॥१॥

१ 'स भगवत्तमः' इ० पा०। * "परमेश्वरस्य वैकुण्ठप्रापकं मोक्षदायकम्।" इत्यधिकः पाठः।

हर्यक्षाय प्राचीं धूम्रकेशाय दक्षिणां वृकाय पश्चिमां द्रविणाय उत्तरां दिशं ददौ ॥२॥ विजिताश्वः इन्द्रादन्तर्धानविद्यां लब्ध्वाऽन्तर्धाननामा बभूव ततः स शिखण्डिन्याम् ॥३॥ पावकः पवमानः शुचिरिति पुत्रत्रयं जनयामास । तेऽग्नय एव वशिष्ठशापादुत्पन्नाः पुनस्तेऽग्नित्वं प्राप्ताः । स एव विजिताश्वो नभस्वत्यामन्यस्यां भार्यायां हविर्धानं जनयामास ॥४॥५॥ स हविर्धानो राजवृत्तिं दारुणां मत्वा दीर्घयज्ञमिषेण राजवृत्तिं त्यक्त्वा

हर्यक्षायादिशत् प्राचीं धूम्रकेशाय दक्षिणाम् ॥ प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः ॥ २ ॥ अन्तर्धानगतिं शक्रा-
ल्लब्ध्वाऽन्तर्धानसंज्ञितः ॥ अपत्यत्रयमाधत्त शिखण्डिन्यां सुसंमतम् ॥ ३ ॥ पावकः पवमानश्च शुचिरित्यग्नयः पुरा ॥
वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः ॥४॥ अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत ॥ य इन्द्रमश्वहर्तारं विद्वानपि न
जघ्निवान् ॥५॥ राज्ञां वृत्तिं करादानदण्डशुल्कादिदारुणाम् ॥ मन्यमानो दीर्घसत्रव्याजेन विससर्ज ह ॥६॥ तत्रापि हंसं
पुरुषं परमात्मानमात्मदृक् ॥ यजंस्तल्लोकतामाप कुशलेन समाधिना ॥ ७ ॥ हविर्धानाद्धविर्धानी विदुरासूत षट्
सुतान् ॥ बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम् ॥ ८ ॥ बर्हिषत् सुमहाभागो हाविर्धानिः प्रजापतिः ॥ क्रियाकाण्डेषु
निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥ यस्येदं देवयजनमनुयज्ञं वितन्वतः ॥ प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥
॥ १० ॥ सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् ॥ यां वीक्ष्य चारुसर्वाङ्गीं किशोरीं समलंकृताम् ॥ परिक्रमन्तीमुद्वाहे
चकमेऽग्निः शुकीमिव ॥११॥ * विबुधासुरगन्धर्वमुनिसिद्धनरोरगाः ॥ विजिताः सूर्यया दिक्षु क्वणयन्त्यैव नूपुरैः ॥१२॥

हरिं यजन् तल्लोकं प्राप ॥६॥७॥ हविर्धानात् हविर्धान्यां षट् पुत्राः जाताः । बर्हिषत् १ गयः २ शुक्लः ३ कृष्णः ४ सत्यः ५ जितव्रतः ६ ॥८॥ तत्र बर्हिषत् कर्मकाण्डेषु कुशलः प्राचीनाग्रकुशैर्येन भूमिरास्तृता तेन तस्य प्राचीनबर्हिरिति नाम जातम् ॥९॥ १० ॥ स समुद्रकन्यां शतद्रुतिमुपयेमे । उद्वाहे प्रदक्षिणं कुर्वतीं यामग्निरियेष ॥ ११ ॥ किंच नवोढया तया देवासुरगन्धर्वादयो विजिताः ॥ १२ ॥



१ पुरा किल सप्तर्षिभार्याक्षिप्तहृदयमग्निं तद्भार्या स्वाहानाम्नी सप्तर्षिभार्यारूपधारिणी सती रमयामास । तत्रेतश्च शुकीरूपेण शरस्तम्बे निधायागच्छदिति व्याख्यायते । * इतःपरम् "सप्तर्षि भार्याभ्रान्त्याऽग्निः स्वाहायां चाप्यरीरमत्" इत्यधिकः पाठः ।

प्राचीनबर्हिस्तस्यां शतद्रुत्यां प्रचेतसस्तुल्यनामाचारान् दश पुत्रान् जनयामास ॥१३॥ ते च दश प्रचेतसः पित्रा प्रजासर्गे कृताज्ञाः सन्तस्त समुद्रं प्रविश्य दशवर्षसहस्राणि पथि दृष्टेन शिवेन यदुक्तं तद् ध्यायन्तो जपन्तो हरिमर्चयामासुः॥१४॥१५॥विदुर उवाच।हे मुने! प्रचेतसां शिवेन सह यथा संगमः आसीत् शिवो यदाह च तद् वद ॥ १६ ॥ नृणां शिवसमागमो दुर्लभः ॥१७॥ यो हरः शक्त्या सह लोकपालनाय चरति

प्राचीनबर्हिषः पुत्रा शतद्रुत्यां दशाभवन् ॥ तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः ॥ १३ ॥ पित्राऽऽदिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् ॥ दशवर्षसहस्राणि तपसाऽऽर्चंस्तपस्पतिम् ॥ १४ ॥ यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता ॥ तद्ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ॥ १५ ॥ विदुर उवाच ॥ प्रचेतसां गिरित्रेण यथाऽऽसीत्पथिसंगमः ॥ यदुताह हरः प्रीतस्तन्नो ब्रह्मन्वदार्थवत् ॥ १६ ॥ संगमः खलु विप्रर्षे शिवेनेह शरीरिणाम् ॥ दुर्लभो मुनयो दध्युरसङ्गाद्यमभीप्सितम् ॥१७॥ आत्मारामोऽपि यस्त्वस्य लोककल्पस्य राधसे ॥ शक्त्या युक्तो विचरति घोरया भगवान्भवः ॥ १८ ॥ मैत्रेय उवाच ॥ प्रचेतसः पितुर्वाक्यं शिरसाऽऽदाय साधवः ॥ दिशं प्रतीचीं प्रयुस्तपस्यादृतचेतसः ॥ १९ ॥ समुद्रमुपविस्तीर्णमपश्यन्सुमहत्सरः ॥ महन्मन इव स्वच्छं प्रसन्नसलिलाशयम् ॥ २० ॥ नीलरक्तोत्पलाम्भोजकह्लारेन्दीवराकरम् ॥ हंससारसचक्राह्वकारण्डवनिकूजितम् ॥ २१ ॥ मत्तभ्रमरसौस्वर्यहृष्टरोमलताङ्घ्रिपम् ॥ पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥ तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम् ॥ विसिस्म्यू राजपुत्रास्ते मृदङ्गपणवाद्यनु ॥ २३ ॥

॥ १८ ॥ मैत्रेय उवाच ॥ ते प्रचेतसः पितुर्वाक्यं शिरसा गृहीत्वा तपः कर्तुं पश्चिमदिशि समुद्रं ययुः ॥ १९ ॥ समुद्रवत् विस्तीर्णमेकं सरोवरं ददृशुः ॥ २० ॥ कथंभूतं सरोवरम् । नीलरक्तादिकमलैर्युक्तं हंससारसचक्रवाकादिभिः शब्दितम् ॥ २१ ॥ उन्मत्तभ्रमरशब्देन वृक्षलताभिः शोभितम् ॥ २२ ॥ तत्र दिव्यं गायनं श्रुत्वा विस्मयं प्रापुः ॥ २३ ॥

१ दध्युरेव न प्रापुरित्यर्थः । २ हृष्टरोमाणो लताङ्घ्रिपा यस्मिन् तम् ।

तत्रैव तस्मात् सरसो निष्क्रामन्तं देवप्रवरं सानुचरं प्रसादसुमुखं त्रिलोचनं शिवं वीक्ष्य तं जातानन्दाः प्रणेमुः ॥२४॥२५॥ प्रपन्नार्तिहरः शिवः प्रीतः सन् धर्मज्ञान् तान् जगाद ॥ २६ ॥ शिव उवाच । हे बर्हिषदः पुत्राः ! युष्माकं चिकीर्षितं विदितम् । युष्माकमनुग्रहाय मया दर्शनं कृतम् ॥ २७ ॥ यो वासुदेवं प्रपन्नः स मे प्रियः ॥२८॥ स्वधर्मनिष्ठः पुमान् शतजन्मभिर्ब्रह्माणं याति ॥ ततो माम् । ततः परं वैष्णवं पदम्



तत्रैव सरसस्तस्मान्निष्क्रामन्तं सहानुगम् ॥ उपगीयमानममरप्रवरं विबुधानुगैः ॥२४॥ तप्तहेमनिकायाभं शितिकण्ठं त्रिलोचनम् ॥ प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥२५॥ स तान्प्रपन्नार्तिहरो भगवान्धर्मवत्सलः ॥ धर्मज्ञाञ्छीलसंपन्नान्प्रीतः प्रीतानुवाच ह ॥ २६ ॥ श्रीरुद्र उवाच ॥ यूयं वेदिषदः पुत्रा विदितं वश्चिकीर्षितम् ॥ अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम् ॥ २७ ॥ यः परं रंहसः साक्षात् त्रिगुणाज्जीवसंज्ञितात् ॥ भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे ॥ २८ ॥ स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चितामेति ततः परं हि माम् ॥ अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाऽहं विबुधाः कलात्यये ॥२९॥ अथ भागवता यूयं प्रियाः स्थ भगवान्यथा ॥ न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥ इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् ॥ निःश्रेयसकरं चापि श्रूयतां तद्वदामि वः ॥ ३१ ॥ मैत्रेय उवाच ॥ इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः ॥ बद्धाञ्जलीन्राजपुत्रान्नारायणपरो वचः ॥ ३२ ॥ श्रीरुद्र उवाच ॥ जितं त आत्मविद्धुर्य स्वस्तये स्वस्तिरस्तु मे ॥ भवता राधसा राद्धं सर्वस्मा आत्मने नमः ॥ ३३ ॥ नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने ॥ वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ३४ ॥



॥ २९ ॥ यूयं भगवत्प्रियाः । अतो मे प्रियाः स्थ ॥ ३० ॥ अथेदं स्तोत्रं मया वक्ष्यमाणं श्रूयताम् ॥ ३१ ॥ इत्युक्त्वा शिवो बद्धाञ्जलीन् तानाह ॥ ३२ ॥ रुद्र उवाच ॥ हे भगवन् तवोत्कर्षः आत्मविदामानन्दलाभाय । अतो मे आनन्दसत्ताऽस्तु । त्वं परमानन्दरूपेण नित्यं स्थितः ॥ ३३ ॥ अतः एवंभूताय कमलनाभाय वासुदेवाय शान्ताय ॥ ३४ ॥

१ सूक्ष्मात् । २ प्रधानात् । ३ पुरुषात् । ४ प्रपंचातीतम् ।

संकर्षणाय विश्वप्रबोधाय प्रद्युम्नाय ते नमः ॥ ३५ ॥ अनिरुद्धाय सूर्याय पूर्णाय ॥ ३६ ॥ स्वर्गमोक्षद्वाराय हिरण्यवीर्याय ते नमोऽस्तु ॥३७॥ पितृदेवानामन्नरूपाय सोमरूपाय जलरूपाय ॥ ३८ ॥ पृथ्वीरूपाय विराड्देहाय ॥ ३९ ॥ आकाशाय महाभूतरूपाय स्वर्गाय ॥ ४० ॥ प्रवृत्ताय निवृत्ताय अधर्मविपाकाय ॥ ४१ ॥ सर्वकर्मफलदात्रे सर्वज्ञाय कृष्णाय सांख्ययोगेश्वराय नमः ॥ ४२ ॥ शक्तित्रयसमेताय रुद्राय

संकर्षणाय सूक्ष्माय दुरन्तायान्तकाय च ॥ नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥३५॥ नमो नमोऽनिरुद्धाय हृषी-केशेन्द्रियात्मने ॥ नमः परमहंसाय पूर्णाय निभृतात्मने ॥३६॥ स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः ॥ नमो हिर-ण्यवीर्याय चातुर्होत्राय तन्तवे ॥३७॥ नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे ॥ तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥ सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे ॥ नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥ ३९ ॥ अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने ॥ नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥४०॥ प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे ॥ नमोऽधर्मविपाकाय मृत्यवे दुःखदाय च ॥ ४१ ॥ नमस्त आशिषामीश मनवे कारणात्मने ॥ नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ॥ पुरुषाय पुराणाय सांख्ययोगेश्वराय च ॥४२॥ शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने ॥ चेतआ-कूतिरूपाय नमो वाचोविभूतये ॥ ४३ ॥ दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् ॥ रूपं प्रियतमं स्वानां सर्वे-न्द्रियगुणाञ्जनम् ॥ ४४ ॥ स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम् ॥ चार्वायतचतुर्बाहुं सुजातरुचिराननम् ॥ ४५ ॥ पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् ॥ सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ॥ ४६ ॥

ज्ञानक्रियारूपाय ब्रह्मणे नमः ॥ ४३ ॥ एवं नमस्कृत्य दर्शनं प्रार्थयते । हे ईश ! दिदृक्षूणां स्वभक्तानां नस्तव प्रियतमं रूपं दर्शय ॥४४॥ कथं-भूतं रूपम् । घनश्यामं सुन्दरदीर्घचतुर्बाहुं रुचिराननम् ॥ ४५ ॥ कमलनेत्रं सुन्दरभ्रूनासिकं सुकपोलम् ॥ ४६ ॥

१ तेजसा विश्वव्यापिने । २ वृद्धिक्षयशून्याय । ३ शुद्धान्तःकरणवासाय । ४ अग्निरूपाय । ५ चातुर्होत्रविस्तारकाय । ६ आदिरूपाय । ७ अर्थज्ञापकाय शब्दगुणत्वात् । ८ वाचो विविधभूतिः सृष्टिर्य-स्मात् तस्मै । ९ सर्वेन्द्रियविषयविषयिरूपम् ।

केशैः शोभितं पीताम्बरकुन्तलयुतम् ॥४७॥ मुकुटवलयहारनूपुरादिभिः शोभितं शङ्खचक्रगदापद्ममालाधरम् ॥४८॥ कौस्तुभग्रीवं श्रिया विराजमानवक्षःस्थलम् ॥४९॥ अश्वत्थपत्रसदृशोदरं निम्ननाभिम् ॥५०॥ स्वर्णमयमेखलाधरं समानसुन्दरोरुजङ्घादिकम् ॥५१॥ हे गुरो ! अज्ञानं विधुन्वता पदा उपलक्षितं त्वद्रूपं नः प्रदर्शय ॥५२॥ आत्मशुद्धिमिच्छतामेतद्रूपं ध्येयम् ॥ ५३ ॥ सर्वदेहिनां दुर्लभो भवान् भक्तिमतां लभ्यः ॥ ५४ ॥

प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम् ॥ लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ॥४७॥ स्फुरत्किरीटवलयहारनूपुरमेखलम् ॥ शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ॥ ४८ ॥ सिंहस्कन्धत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम् ॥ श्रियाऽनपायिन्याऽऽक्षिप्तनिकषाश्मोरसोल्लसत् ॥ ४९ ॥ पूररेचकसंविग्नवलिवल्गुदलोदरम् ॥ प्रतिसंक्रामयद्विश्वं नाभ्याऽऽवर्तगभीरया ॥५०॥ श्यामश्रोण्याऽधिरोचिष्णुदुकूलस्वर्णमेखलम् ॥ समचार्वङ्घ्रिजङ्घोरु निम्नजानु सुदर्शनम् ॥५१॥ पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता ॥ प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ॥ ५२ ॥ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ॥ यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥ भवान्भक्तिमतां लभ्यो दुर्लभः सर्वदेहिनाम् ॥ स्वाराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः ॥ ५४ ॥ तं दुराराध्यमाराध्य सतामपि दुरापया ॥ एकान्तभक्त्या को वाञ्छेत्पादमूलं विना बहिः ॥ ५५ ॥ यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ॥ विश्वं विध्वंसयन्वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ५६ ॥ क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् ॥ भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५७ ॥ अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिःस्नानविधूतपाप्मनाम् ॥ भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्संगमोऽनुग्रह एष नस्तव ॥ ५८ ॥

अतः एकान्तभक्त्या त्वामाराध्य स्वर्गादिसुखं को वाञ्छेत् ॥५५॥ यत्पादमूलशरणं प्रति कालो ममायं वश इति मानं न करोति ॥५६॥ भगवत्सङ्गिसङ्गस्य क्षणार्धेनापि स्वर्गादिकं न तुलयामहे ॥५७॥ अतो हे भगवन् ! तव भक्तानां संगमोऽस्माकं स्यात् । एष एव तवानुग्रहः ॥ ५८ ॥

१ स्वर्गे राज्यं यस्य तस्यापि । २ अन्यत् । ३ राज्यादिसुखानि ।

यदा चित्तं भक्तियोगेन शुद्धं सत् बाह्यार्थविक्षिप्तं न भवति तदा मुनिस्तव तत्त्वं पश्यति ॥ ५९ ॥ यस्मिन् तत्त्वे इदं विश्वं प्रकाशते ॥ ६० ॥ यो माययेदं सृजत्यवत्यत्ति तं त्वां भेदरहितं जानीमः ॥ ६१ ॥ ये योगिनः क्रियादिभिस्त्वां पूजयन्ति त एव ज्ञानिनः ॥ ६२ ॥ त्वमेकः आद्यो मायाशक्तिः । यया मायाशक्त्या रजस्सत्त्वादयः उत्पद्यन्ते ॥ ६३ ॥ हे ईश ! त्वं शक्त्या सृष्टं चतुर्विधं पुरं स्वांशेन प्रविष्टः ।

न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् ॥ यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम् ॥ ५९ ॥ यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् ॥ तत्त्वं ब्रह्म परंज्योतिराकाशमिव विस्तृतम् ॥ ६० ॥ यो माययेदं पुरुरूपयाऽसृजद्बिभर्ति भूयः क्षपयत्यविक्रियः ॥ यद्भेदबुद्धिः सदिवात्मदुस्स्थया तमात्मतन्त्रं भगवन्प्रतीमहि ॥६१॥ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये ॥ भूतेन्द्रियान्तःकरणोपलक्षितं वेदे च तन्त्रे च त एव कोविदाः ॥६२॥ त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजस्सत्त्वतमो विभिद्यते ॥ महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ६३ ॥ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन ॥ अथो विदुस्तं पुरुषं सन्तमन्तर्भुङ्क्ते हृषीकैर्मधु सारघं यः ॥ ६४ ॥ स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः ॥ भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्यः ॥६५॥ प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ॥ त्वमप्रमत्तः सहसाऽभिपद्यते क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ६६ ॥ कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानव्ययमानकेतनः ॥ विशङ्कयाऽस्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश ॥ ६७ ॥

अतस्त्वां पुरीषु शयनात् पुरुषं विदुः ॥६४॥ स कालवाहनस्त्वं भूतैर्भूतानि संहरसि ॥ ६५ ॥ कालरूपस्त्वं प्रमत्तं कामुकं ग्रससि सर्पो मूषकमिव ॥ ६६ ॥ अतस्तव चरणकमलं कस्त्यजेत् यद् ब्रह्मादयोऽर्चन्ति स्म ॥ ६७ ॥

१ यद् यया मायया । २ आत्मनि त्वयि स्वकार्यं कर्तुंसमर्थया । ३ साकारं रूपम् । ४ आगमेऽपि । ५ रजआदेः । ६ जरायुजाण्डजस्वेदजोद्भिज्जभेदेन । ७ इन्द्रियैः । ८ माक्षिकमधुवत् क्षुल्लकं विषयसुखम् । ९ क्षुधा ओष्ठप्रान्तौ जिह्वया स्पृशन् । १० तवावमानेन व्ययमानं शरीरं यस्य सः । ११ दृढविश्वासेनेति यावत् ।

हे ब्रह्मन् ! विश्वं रुद्रभयेन ध्वस्तम् । अतो नो भयरहिता गतिस्त्वम् ॥६८॥ हे प्रचेतसः ! भगवति कृतमनसःसर्वभूतेष्वात्मनि च स्थितं हरिं पूजयन्तो ध्यायन्तो गृणन्तश्चेदं जपत ॥ ६९ ॥ ७० ॥ यूयमिदं स्तोत्रं समाहितधियोऽभ्यसत ॥७१॥ पुराऽस्माकं भृग्वादीनां च ब्रह्मेदमेव जगाद ॥ ७२ ॥ ततो ब्रह्मणा प्रजासर्गे प्रेरिता वयमनेन स्तोत्रेण विविधाः प्रजाः सृष्टवन्तः॥७३॥ अथेदं नित्यं यो जपेत् सोऽचिरात् श्रेयः

अथ त्वमसि नो ब्रह्मन्परमात्मन्विपश्चिताम् ॥ विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः ॥ ६८ ॥ इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः ॥ स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥ ६९ ॥ तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ॥ पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥ ७० ॥ योगादेशमुपासाद्य धारयन्तो मुनिव्रताः ॥ समाहितधियः सर्व एतदभ्यसतादृताः ॥ ७१ ॥ इदमाह पुराऽस्माकं भगवान्विश्वसृक्पतिः ॥ भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥ ७२ ॥ ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः ॥ अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ॥ ७३ ॥ अथेदं नित्यदा युक्तो जपन्नवहितः पुमान् ॥ अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥ ७४ ॥ श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम् ॥ सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥ ७५ ॥ य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् ॥ अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥ ७६ ॥ विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरम् ॥ मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥७७॥ इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयाऽन्वितः ॥ शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥७८॥ गीतं मयेदं नरदेवनन्दनाः परस्य पुंसः परमात्मनः स्तवम् ॥ जपन्त एकाग्रधियस्तपो महच्चरध्वमन्ते तत आप्स्यथेप्सितम् ॥ ७९ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कन्धे रुद्रगीतं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

प्राप्नुयात् ॥ ७४ ॥ सर्वश्रेयसां यज्ज्ञानं श्रेष्ठं तस्माल्लभ्यते ॥ ७५ ॥ यः इदं मद्गीतं पठति स हरिमाराधयति ॥ ७६ ॥ पुरुषो यद्यदिच्छति तदस्मादमद्गीतात् सर्वं विन्दते ॥ ७७ ॥ यः प्रातरुत्थाय श्रद्धया शृणुयात् श्रावयेद्वा सर्वकर्मबन्धनैर्मुच्यते ॥ ७८ ॥ हे राजपुत्राः हे प्रचेतसः मद्गीतं जपन्तो महत्तपश्चरध्वम् । ततोऽन्ते ईप्सितं प्राप्स्यथ ॥ ७९ ॥ इति श्रीभागवते चूर्णिकायां चतुर्थस्कन्धे चतुर्विंशोऽध्यायः ॥२४॥

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी ॥ प्राचीनबर्हिषेऽध्यात्मं पारोक्ष्येणाह पञ्चभिः ॥ १ ॥ पुरञ्जनकथाव्याजात् पञ्चविंशे तु नारदः ॥ आत्मनो बुद्धिसङ्गेन विविधामाह संसृतिम् ॥२॥ प्रचेतःसु तपस्तीव्रं तप्यमानेषु नारदः ॥ पुरञ्जनकथाकूटं प्राह प्राचीनबर्हिषे ॥ ३ ॥ मैत्रेय उवाच ॥ हे विदुर ! भगवान् शिवः एवं संदिश्य प्रचेतोभिः पूजितः सन् तत्रैवान्तर्दधे ॥१॥ ततः प्रचेतसो रुद्रगीतं जपन्तो जले प्रविश्य वर्षाणामयुतं तपस्तेपुः ॥ २ ॥ एवं प्रचेतसां कथामसमाप्यैव तत्पितुर्वृत्तान्तमाह । हे विदुर ! प्राचीनबर्हिषं कर्मसु सक्तं दृष्ट्वा कृपालुर्नारद एत्य तं

मैत्रेय उवाच ॥ इति संदिश्य भगवान्बार्हिषदैरभिपूजितः ॥ पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥ रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः ॥ जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥ प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम् ॥ नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत् ॥३॥ श्रेयस्त्वं कतमद्राजन्कर्मणाऽऽत्मन ईहसे ॥ दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ॥ ४ ॥ राजोवाच ॥ न जानामि महाभाग परं कर्मापविद्धधीः ॥ ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥ गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः ॥ न परं विन्दते मूढो भ्राम्यन्संसारवर्त्मसु[1] ॥६॥ नारद उवाच ॥ भोभो प्रजापते राजन्पशून्पश्य त्वयाऽध्वरे ॥ संज्ञापिताञ्जीवसंघान्निर्घृणेन सहस्रशः ॥ ७ ॥ एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव ॥ संपरेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥८॥ अत्र ते कथयिष्येऽमुमितिहासं पुरातनम् ॥ पुरञ्जनस्य चरितं निबोध गदतो मम ॥ ९ ॥

प्राबोधयत् ॥३॥ नारद उवाच ॥ हे राजन् ! इह कर्मणा श्रेयः इच्छसि । तत् मोक्षरूपं श्रेयः कर्मणा न भवति ॥ ४ ॥ प्राचीनबर्हिरुवाच हे महाभाग ! कर्मापविद्धधीः श्रेयो न जानामि । अतो मे ज्ञानं ब्रूहि ॥ ५ ॥ मूढः संसारमार्गेषु भ्राम्यन् सन् परं श्रेयो न विंदते ॥ ६ ॥ नारद उवाच ॥ हे राजन् ! यज्ञादिषु यान् पशून् मारितवानसि[2] ॥ ७ ॥ ते त्वयि मृते सति लोहमयैः कूटैस्त्वां परलोके छिंदन्ति ॥ ८ ॥ एतद्विषये तव पुरञ्जनसंज्ञकराजचरितरूपमितिहासं कथयिष्यामि । त्वं शृणु ॥ ९ ॥

१ 'कूटमार्गेषु' इ० पा० । २ मारितान् ।

हे राजन् ! कश्चित्-पुरञ्जनो नाम राजाऽऽसीत् । यस्याविज्ञातनामा सखाऽसीत् ॥ १० ॥ स राजा पुरं मृगयन् भूतले बभ्राम ॥ ११ ॥ भूतले यावत्यः पुरस्ताः सर्वाः स साधु न मेने ॥ १२ ॥ ततः स एकदा भूतलं भ्रमन् हिमवतो दक्षिणभागे नवद्वारैर्युक्तां पुरं ददर्श ॥१३॥ कथंभूतां पुरम् । प्राकारोपवनादितोरणैः स्वर्णरौप्यलोहमयशिखरयुक्तैर्गृहैश्च व्याप्ताम् ॥ १४ ॥ नीलस्फटिकवैडूर्यादिभिर्विरचितहर्म्यस्थलीम् ॥ १५ ॥



आसीत्पुरञ्जनो नाम राजा राजन्बृहच्छ्रवाः ॥ तस्याविज्ञातनामाऽऽसीत्सखाऽविज्ञातचेष्टितः ॥ १० ॥ सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः ॥ नानुरूपं यदाऽविन्ददभूत्स विमना इव ॥ ११ ॥ न साधु मेने ताः सर्वा भूतले यावतीः पुरः ॥ कामान्कामयमानोऽसौ तस्य तस्योपपत्तये ॥ १२ ॥ स एकदा हिमवतो दक्षिणेष्वथ सानुषु ॥ ददर्श नवभिर्द्वार्भिः पुरीं लक्षितलक्षणाम् ॥ १३ ॥ प्राकारोपवनाट्टालपरिखैरक्षतोरणः ॥ स्वर्णरौप्यायसैः शृङ्गैः सङ्कुलां सर्वतो गृहैः ॥ १४ ॥ नीलस्फटिकवैडूर्यमुक्तामरकतारुणैः ॥ क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव ॥१५॥ सभाचत्वररथ्याभिराक्रीडायतनापणैः ॥ चैत्यध्वजपताकाभिर्युक्तां विद्रुमवेदिभिः ॥१६॥ पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले ॥ नदद्विहङ्गालिकुलकोलाहलजलाशये ॥ १७ ॥ हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना ॥ चलत्प्रवालविटपनलिनीतटसंपदि ॥ १८ ॥ नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः ॥ आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ १९ ॥ यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम् ॥ भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ॥ २० ॥ पञ्चशीर्षाहिना गुप्तां प्रतीहारेण सर्वतः ॥ अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् ॥ २१ ॥



सभाचत्वररथ्यादिमार्गैर्ध्वजपताकादिभिश्च युक्ताम् ॥१६॥ पुरीबाह्योपवने प्रमदोत्तमां ददर्श । कथंभूते उपवने । दिव्यवृक्षलताकुले ॥ १७ ॥ पुष्पसम्बन्धिवायुना चञ्चलवृक्षसमृद्धियुक्ते ॥१८॥ विद्यमानानामपि नानारण्यमृगसिंहादीनां यत्र बाधा नासीत् ॥ १९ ॥ एवंभूते उपवने एकां स्त्रियमेकैकशतनायकैर्दशभृत्यैः सहायान्तीम् ॥ २० ॥ पञ्चशीर्षाहिना रक्षितां भर्तारमिच्छन्तीं षोडशवार्षिकीम् ॥ २१ ॥

१ अक्षाणि गवाक्षाः ।

सुनासां सुदतीं सुमुखां कुण्डलाधराम् ॥२२॥ सुश्रोणीं श्यामां नूपुरयुक्तपद्भ्यां चलन्तीम् ॥२३॥ समवर्तुलस्तनौ लज्जया वस्त्रेणाच्छादयन्तीम् ॥२४॥ एतादृशीं दृष्ट्वा पुरञ्जनः संमुह्य तां जगाद ॥२५॥ हे कमलपत्राक्षि ! त्वं कस्यासि कुतः प्राप्ताऽसि इदमुपवनं दृष्ट्वा किं कर्तुमिच्छसि ॥ २६ ॥ एतेऽनुवर्तिनः एकादश महासेवकाः के । एताः स्त्रियः काः ॥ २७ ॥ त्वं भवानी रमा सरस्वती वाऽसि किम् ॥ २८ ॥

सुनासां सुदतीं बालां सुकपोलां वराननाम् ॥ समविन्यस्तकर्णाभ्यां[1] बिभ्रतीं कुण्डलश्रियम् ॥ २२ ॥ पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम् ॥ पद्भ्यां क्वणद्भ्यां चलतीं नूपुरैर्देवतामिव ॥ २३ ॥स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ ॥ वस्त्रान्तेन निगूहन्तीं व्रीडया गजगामिनीम् ॥ २४ ॥ तामाह ललितं वीरः सव्रीडस्मितशोभनाम् ॥ स्निग्धेनापाङ्गपुङ्खेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा ॥ २५ ॥ का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति ॥ इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे ॥२६॥ क एतेऽनुपथा ये ते एकादश महाभटाः ॥ एता वा ललनाः सुभ्रूः कोऽयं तेऽहिः पुरस्सरः ॥ २७ ॥ त्वं ह्रीर्भवान्यस्यथ वाग्रमा पतिं विचिन्वती किं मुनिवद्रहो वने ॥ त्वदङ्घ्रिकामाप्तसमस्तकामं[2] क्व पद्मकोशः पतितः कराग्रात् ॥ २८ ॥ नासां वरोर्वन्यतमा भुविस्पृक्पुरीमिमां वीरवरेण[3] साकम् ॥ अर्हस्य लङ्कर्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा ॥ २९ ॥ यदेष मांऽपाङ्गविखण्डितेन्द्रियं[5] सव्रीडभावस्मितविभ्रमद्भ्रुवा ॥ त्वयोपसृष्टो भगवान्मनोभवः प्रबाधतेऽथानुगृहाण शोभने ॥ ३० ॥ तदाननं सुभ्रु सुतारलोचनं व्यालम्बिनीलालकवृन्दसंवृतम् ॥ उन्नीय मे दर्शय वल्गुवाचकं यद्व्रीडया नाभिमुखं शुचिस्मिते ॥ ३१ ॥

हे वरोरु ! आसां मध्ये त्वमन्यतमाऽपि न संभवसि । यतस्त्वं भुविस्पृक् । देवताः भुवं न स्पृशन्ति ॥ २९ ॥ हे शोभने ! त्वया प्रेरितः कामो मां बाधते । तस्मादनुगृहाण ॥ ३० ॥ हे सुन्दरि ! सुन्दरभ्रूलोचनं तव मुखं दर्शय ॥ ३१ ॥

---

१ समं रचिताभ्यां कर्णाभ्याम् । २ त्वदङ्घ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तं पतिम् । ३ मया । ४ 'ते' इ० पा० । ५ इन्द्रियं मनः ।

नारद उवाच ॥ इत्थं याचमानं पुरञ्जनं साऽभ्यनन्दत् । साऽपि तं दृष्ट्वा मोहिता सती प्राह ॥३२॥ हे पुरुषर्षभ ! मम तव च कर्तारं गोत्रं नाम च येन कृतं तं न विद्मः ॥३३॥ येन चेयं पुरी निर्मिता तं चापि वयं न विद्मः ॥३४॥ एते नराः नार्यश्च मम सखायः सन्ति मयि सुप्तायामयं नागः पुरीं पालयन् जागर्ति ॥३५॥ हे नृप ! त्वमत्रागतोऽसि । एतन्मे दिष्ट्या । त्वं यान् विषयानिच्छसि तान् संपादयिष्यामि ॥३६॥ हे विभो !

नारद उवाच ॥ इत्थं पुरञ्जनं नारी याचमानमधीरवत् ॥ अभ्यनन्दत तं वीरं हसन्ती वीरमोहिता ॥ ३२ ॥ न विदाम वयं सम्यक् कर्तारं पुरुषर्षभ ॥ आत्मनश्च परस्यापि गोत्रं नाम च यत्कृतम् ॥ ३३ ॥ इहाद्य सन्तमात्मानं न विदाम ततः परम् ॥ येनेयं निर्मिता वीर पुरी शरणमात्मनः ॥ ३४ ॥ एते सखायः सख्यो मे नरा नार्यश्च मानद ॥ सुप्तायां मयि जागर्ति नागोऽयं पालयन्पुरीम् ॥३५॥ दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान्कामानभीप्ससे ॥ उद्वहिष्यामि तांस्तेऽहं स्वबन्धुभिररिंदम ॥ ३६ ॥ इमां त्वमधितिष्ठस्व पुरीं नवमुखीं विभो ॥ मयोपनीतान्गृह्णानः कामभोगाञ्छतं समाः ॥ ३७ ॥ कं नु त्वदन्यं रमये ह्यरतिज्ञमकोविदम् ॥ असम्परायाभिमुखमश्वस्तनविदं पशुम् ॥ ३८ ॥ धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः ॥ लोका विशोका विरजा यान्न केवलिनो विदुः ॥ ॥ ३९ ॥ पितृदेवर्षिमर्त्यानां भूतानामात्मनश्च ह ॥ क्षेम्यं वदन्ति शरणं भवेऽस्मिन्यद्गृहाश्रमः ॥ ४० ॥ का नाम वीर विख्यातं वदान्यं प्रियदर्शनम् ॥ न वृणीत प्रियं प्राप्तं मादृशी त्वादृशं पतिम् ॥ ४१ ॥ कस्या मनस्ते भुवि भोगिभोगयोः स्त्रिया न सज्जेद्भुजयोर्महाभुज ॥योऽनाथवर्गाधिमलं घृणोद्धतस्मितावलोकेन चरत्यपोहितुम् ॥४२॥

मया सह कामभोगान् शतं समाः इमां पुरीमाश्रित्य भुङ्क्ष्व ॥३७॥ हे वीर ! परलोकचिन्ताशून्यं त्वत्तोऽन्यं कं नु रमये ॥३८॥ अत्र गृहस्थाश्रमे धर्मार्थकाममोक्षान् पुत्रसुखादींश्च यतयो न विदुः ॥ ३९ ॥ अस्मिन् भवे पितृदेवर्षिमनुष्यादीनां गृहाश्रम इति यत् तदेव क्षेमार्हं वदन्ति ॥४०॥ हे वीर ! प्रियदर्शनं त्वादृशं पतिं प्राप्तं मादृशी का न वृणीत ॥४१॥ हे महाभुज ! तव भुजयोः कस्याः स्त्रियाः मनो न सज्जेत् ॥४२॥

१ नैष्ठिकम् । २ श्वः इदं कर्तव्यमिति लोकचिन्ताशून्यम् । ३ सर्पदेहाकारयोः ।

नारद उवाच ॥ हे प्राचीनबर्हि ! एवं तौ दम्पती निश्चित्य पुरीं प्रविश्य वर्षशतं मुमुदाते ॥ ४३ ॥ तत्र तत्र गायकैर्ललितं गीयमानः क्रीडन् स्त्रीभिर्निदाघे नदीं प्राविशत् ॥४४॥ यस्याः पुर्याः सप्तोपरि द्वाराणि द्वे अधः ॥ ४५ ॥ तत्र पञ्च पूर्वतः । द्वे दक्षिणोत्तरे । पश्चिमे द्वे ॥ ४६ ॥ तत्र खद्योताऽऽविर्मुखीति द्वारद्वयेन विभ्राजितं जनपदं याति ॥ ४७ ॥ नलिनीनालिनीति द्वारद्वयेन सौरभं जनपदं याति ॥ ४८ ॥ एकेन

नारद उवाच ॥ इति तौ दम्पती तत्र समुद्य समयं मिथः ॥ तां प्रविश्य पुरीं राजन्मुमुदाते शतं समाः ॥४३॥ उपगीयमानो ललितं तत्र तत्र च गायकैः ॥ क्रीडन् परिवृतः स्त्रीभिर्ह्रदिनीमाविशच्छुचौ ॥ ४४ ॥ सप्तोपरि कृता द्वारः पुरस्तस्यास्तु द्वे अधः ॥ पृथग्विषयगत्यर्थं तस्यां यः कश्चनेश्वरः[1] ॥४५॥ पञ्च द्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा ॥ पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये ॥ ४६ ॥ खद्योताऽऽविर्मुखी च प्राग्द्वारावेकत्र निर्मिते ॥ विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ॥४७॥ नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते ॥ अवधूतसखस्ताभ्यां विषयं याति सौरभम् ॥ ४८ ॥ मुख्या नाम पुरस्ताद्द्वास्तयाऽऽपणबहूदनौ ॥ विषयौ याति पुरराड् रसज्ञविपणान्वितः ॥ ४९ ॥ पितृहूर्नृप पुर्या द्वार्दक्षिणेन पुरञ्जनः ॥ राष्ट्रं दक्षिणपञ्चालं याति श्रुतधरान्वितः ॥५०॥ देवहूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः ॥ राष्ट्रमुत्तरपञ्चालं याति श्रुतधरान्वितः ॥५१॥ आसुरी नाम पश्चाद् द्वास्तया याति पुरञ्जनः ॥ ग्रामकं नाम विषयं दुर्मदेन समन्वितः ॥ ५२ ॥ निर्ऋतिर्नाम पश्चाद्द्वास्तया याति पुरञ्जनः ॥ वैशसं नाम विषयं लुब्धकेन समन्वितः ॥५३॥ अन्धावमीषां पौराणां निर्वाक्पेशस्कृतावुभौ ॥ अक्षण्वतामधिपतिस्ताभ्यां याति करोति च ॥ ५४ ॥

मुख्यद्वारेणापणबहूदनौ जनपदौ याति ॥४९॥ पितृहूर्नाम दक्षिणद्वारं तेन दक्षिणपञ्चालं ज० ॥ ५० ॥ देवहूर्नामोत्तरद्वारं तेनोत्तरपञ्चालं ज० ॥ ५१ ॥ आसुरीनाम्नैकेनाधोद्वारेण ग्रामकं ज० ॥ ५२ ॥ अपरेण निर्ऋतिनाम्ना पश्चाद् द्वारेण वैशसं ज० ॥५३॥ पुर्यास्तत्र पौराणां मध्ये निर्वाक्पेशस्कृतौ द्वावन्धौ सेवकौ तयोरेकेन यात्यन्यतरेण करोति ॥ ५४ ॥

[1] आत्मनोऽनियतत्वात्सम्यग्विज्ञानाच्च यः कश्चनेति ।

पुरञ्जनो विषूचीनसमन्वितोऽन्तःपुरे गतः सन् मोहं प्रसादं हर्षं वा प्राप्नोति ॥५५॥ एवं पुरञ्जनः कर्मासक्तः सन् स्त्री यथा करोति तथाऽनुवर्तते ॥ ५६ ॥ क्वचित् तस्यां मदिरां पिबन्त्यां स्वयं पिबति ॥ ५७ ॥ क्वचित् गायन्त्यां गायति । क्वचित् रुदन्त्यां रुदति । हसन्त्यां हसति ॥५८॥ क्वचिद् धावन्त्यां धावति । तिष्ठन्त्यां तिष्ठति ॥५९॥ क्वचित् शृण्वन्त्यां शृणोति । पश्यन्त्यां पश्यति ॥ ६० ॥ क्वचित् शोचन्त्यां

स यर्ह्यन्तःपुरगतो विषूचीनं समन्वितः॥ मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५५ ॥ एवं कर्मसु संयुक्तः कामात्मा वञ्चितोऽबुधः॥महिषी यद्यदीहेत तत्तदेवान्ववर्तत॥५६॥ क्वचित् पिबन्त्यां पिबति मदिरां मदविह्वलः॥ अश्नन्त्यां क्वचिदश्नाति जक्षत्यां सह जक्षति ॥५७॥ क्वचिद्गायति गायन्त्यां रुदन्त्यां रुदति क्वचित् ॥ क्वचिद्धसन्त्यां हसति जल्पन्त्यामनुजल्पति ॥५८॥क्वचिद्धावति धावन्त्यां तिष्ठन्त्यामनुतिष्ठति॥ अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ॥५९॥ क्वचिच्छृणोति शृण्वन्त्यां पश्यन्त्यामनुपश्यति॥क्वचिज्जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित् ॥६०॥ क्वचिच्च शोचतीं जायामनुशोचति दीनवत् ॥ अनुहृष्यति हृष्यन्त्यां मुदितामनुमोदते ॥६१॥ विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः॥ नेच्छन्ननुकरोत्यज्ञः क्लैब्यात्क्रीडामृगो यथा ॥६२॥ इति श्रीभा० चतुर्थे० पुरञ्जनपुरञ्जनीरमणचरित्रवर्णनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ नारद उवाच ॥ स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम् ॥ द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम् ॥१॥ एकरश्म्येकदमनमेकनीडं द्विकूबरम् ॥ पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम् ॥ २ ॥

शोचति। हृष्यन्त्यां हृष्यति ॥६१॥ एवं महिष्या वञ्चितः क्रीडामृग इवानुकरोति ॥६२॥ इति श्रीभागवतचू० चतुर्थस्कन्धे पञ्चविंशोऽध्यायः ॥२५॥ षड्विंशे मृगयाव्याजात् स्वप्नजागरणोक्तितः ॥ सद्बुद्धिस्त्यागयोगाभ्यां संसृतिः सा प्रपञ्च्यते ॥ १ ॥ नारद उवाच ॥ एकदा स राजैकादशचमूनाथो धनुर्बाणान् प्रगृह्य पञ्चाश्वं द्विचक्रमेकाक्षं त्रिध्वजं पञ्चबन्धनम् एकरश्मिमेकसूतं पञ्चगतिप्रकारम् ॥ १ ॥ २ ॥

१ आसीनाम् । २ सर्वथा प्रकृत्या वञ्चितः । ३ तृतीये अगादित्यनेनाऽन्वयः । ४ द्वे ईषे दण्डिके यस्य तम् । ५ वन्धुरं वन्धनम् । ६ नीडं रथिनः उपवेशनस्थानम् । ७ कूबरो युगवन्धनस्थानम् । ८ रक्षार्थ चर्माद्यावरणम् ।

हैमोपस्करं रथमास्थाय पञ्चप्रस्थं वनं प्रविश्य ॥३॥ विवेकवतीं स्त्रियं गृहे विहाय मृगयां चचार ॥४॥ ततः स बाणैर्वनगोचरान् जघान ॥५॥ किंच राजा प्रख्यातश्राद्धादिष्वेव वने पशून् हन्यात् न नित्यश्राद्धादिषु ॥६॥ यः एवं नियतं कर्म करोति स न लिप्यते ॥ ७ ॥ यो नियमोल्लङ्घनेन कर्म करोति स बध्यते ॥८॥ अथ पुरञ्जनस्य बाणैर्हतानां मृगाणां नाशो बभूव ॥९॥ ततो मृगयायां शशान् वराहान् महिषान् गव-

हैमोपस्करमारुह्य स्वर्णवर्माऽक्षयेषुधिः ॥ एकादशचमूनाथः पञ्चप्रस्थमगाद्वनम् ॥ ३ ॥ चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः ॥ विहाय जायामतदर्हां मृगव्यसनलालसः ॥ ४ ॥ आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः ॥ न्यहनन्निशितैर्बाणैर्वनेषु वनगोचरान् ॥ ५ ॥ तीर्थेषु प्रतिदृष्टेषु राजा मेध्यान्पशून्वने ॥ यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥ य एवं कर्म नियतं विद्वान्कुर्वीत मानवः ॥ कर्मणा तेन राजेन्द्र ज्ञानेन न स लिप्यते ॥ ७ ॥ अन्यथा कर्म कुर्वाणो मानारूढो निबध्यते ॥ गुणप्रवाहे पतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥ तत्र निर्भिन्नगात्राणां चित्रवाजैः शिलीमुखैः ॥ विप्लवोऽभूद् दुःखितानां दुस्सहः करुणात्मनाम् ॥ ९ ॥ शशान् वराहान् महिषान् गवयान् रुरुशल्यकान् ॥ मेध्यानन्यांश्च विविधान् विनिघ्नन् श्रममध्यगात् ॥ १० ॥ ततः क्षुत्तृट्परिश्रान्तो निवृत्तो गृहमेयिवान् ॥ कृतस्नानोचिताहारः संविवेश गतक्लमः ॥ ११ ॥ आत्मानमर्हयाञ्चक्रे धूपलेपस्रगादिभिः ॥ साध्वलङ्कृतसर्वाङ्गो महिष्यामादधे मनः ॥ १२ ॥ तृप्तो हृष्टः सुदृप्तश्च कन्दर्पाकृष्टमानसः ॥ न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥ अन्तःपुरस्त्रियोऽपृच्छद्विमना इव वेदिषत् ॥ अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा ॥ न तथैतर्हि रोचन्ते गृहेषु गृहसंपदः ॥ १४ ॥

यादीनन्यांश्च मारयन् ॥१०॥ क्षुत्तृड्भ्यां श्रान्तो वनान्निवृत्य गृहं प्राप्य स्नानोपहारादिकं कृत्वा शय्यां श्रितः ॥११॥ ततः स्रक्चन्दनादिभिरात्मानं भूषयन् कामेन व्याप्तो गृहिणीं सस्मार ॥१२॥१३॥ तदा तामदृष्ट्वा दासीः पप्रच्छ । हे दास्यः ! पुरेव गृहसंपदो नाद्य रोचन्ते ॥ १४ ॥

१ प्रस्थः सानुः । २ वाजः पक्षः । ३ हे प्राचीनर्बाहः ।

यदि माता पत्नी वा न स्यात् तर्हि चक्रादिहीने रथ इव गृहे कः आसीत ॥१५॥ किंच या दुःखार्णवान्मामुद्धरते सा ललना क्वास्ति ॥ १६ ॥ एवं श्रुत्वा दास्य ऊचुः । हे नरनाथ ! तव प्रिया यद्व्यवस्यति तद् वयं न जानीमः । भूतले शयानां तां पश्य ॥ १७ ॥ नारद उवाच ॥ तदा पुरञ्जनः स्वमहिषीं निरीक्ष्य तत्सङ्गेन व्याकुलतां प्राप्य ॥ १८ ॥ तां सान्त्वयित्वा तस्याः पादौ स्पृष्ट्वा तामुत्सङ्ग आरोप्योवाच ॥ १९ ॥

यदि न स्याद् गृहे माता पत्नी वा पतिदेवता ॥ व्यङ्गे रथ इव प्राज्ञः को नामासीत दीनवत् ॥१५॥ * क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे ॥ या मामुद्धरते प्रज्ञां दीपयन्ती पदे पदे ॥ १६ ॥ रामा ऊचुः ॥ नरनाथ न जानीमस्त्वत्प्रिया यद् व्यवस्यति ॥ भूतले निरवस्तारे[1] शयानां पश्य शत्रुहन् ॥ १७ ॥ नारद उवाच ॥ पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां[2] भुवि ॥ तत्सङ्गोन्मथितज्ञानो वैक्लव्यं परमं ययौ ॥ १८ ॥ सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता ॥ प्रेयस्याः स्नेहसंरम्भलिङ्गमात्मनि नाभ्यगात् ॥ १९ ॥ अनुनिन्येऽथ शनकैर्वीरोऽनुनयकोविदः ॥ पस्पर्श पादयुगलमाह चोत्सङ्गलालिताम् ॥ २० ॥ पुरञ्जन उवाच ॥ नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे ॥ कृतागस्स्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते ॥२१॥ परमोऽनुग्रहो दण्डो भृत्येषु प्रभुणार्पितः ॥ बालो[3] न वेद तत् तन्वि बंधुकृत्यं[4]ममर्षणः ॥ २२ ॥ सा त्वं मुखं सुदति सुभ्र्वनुरागभारव्रीडाविलम्बविलसद्धसितावलोकम् ॥ नीलालकालिभिरुपस्कृतमुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् ॥ २३ ॥ तस्मिन् दधे दममहं तव वीरपत्नि योऽन्यत्र भूसुरकुलात् कृतकिल्बिषस्तम् ॥ पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामन्यत्र वै मुररिपोरितरत्र दासात् ॥ २४ ॥

॥ २० ॥ पुरञ्जन उवाच । हे सुभ्रूः ! अकृतपुण्याः खलु ते भृत्या येषु कृतापराधेष्वपि प्रभवः शिक्षाप्रयोजनं दण्डं न प्रयुञ्जते ॥२१॥ प्रभुणा भृत्येषु कृतो दण्डः परमोऽनुग्रहः ॥२२॥ हे सुदति ! वल्गुवाक्यं हास्यावलोकयुतं त्वन्मुखं मां दर्शय ॥२३॥ हे भार्ये ! ये तव कृतापराधास्तेषु ब्राह्मणहरिभक्ताभ्यामन्यत्र दण्डं करोमि ॥ २४ ॥



* "मदीयं नित्यं मोहयन्ती पदे पदे।" इत्यधिकः पाठः। १ आस्तरणरहिते । २ त्यक्तदेहावरणाम् । ३ अज्ञाः । ४ शिक्षाकरणम् । ५ 'सुष्ठु' इ० पा० ।

इतः पूर्वं त्वन्मुखं मया वितिलकं न दृष्टम् ॥ इदानीमेवैवं कुतो जातम् ॥२५॥ तस्मात् कृतापराधस्य त्वामपृष्ट्वा मृगयां गतस्य मे प्रसीद । अहो स्त्रीवशगतं त्यक्तधैर्यं पुरुषं कामुका स्त्री कर्तुं योग्येऽथ का न भजेत् ॥ २६ ॥ इति श्रीभागव० चू० चतुर्थ० षड्विंशोऽध्यायः ॥२६॥ सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मनः ॥ कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥१॥ नारद उवाच ॥ हे प्राचीनबर्हिः । इत्थं पुरञ्जनी पुरञ्जनं

वक्त्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्टमपेतरागम् ॥ पश्ये स्तनावपि शुचोपहतौ सुजातौ बिम्बाधरं विगतकुंकुमपङ्कराागम् ॥ २५ ॥ तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य ॥ का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्नमुशती न भजेत कृत्ये ॥ २६ ॥ इति श्रीभा० म० चतुर्थ० पुरञ्जनोपाख्याने षड्विंशोऽध्यायः ॥२६॥ नारद उवाच ॥ इत्थं पुरञ्जनं सम्यग् वशमानीय विभ्रमैः ॥ पुरञ्जनी महाराज रेमे रमयती पतिम् ॥१॥स राजा महिषीं राजन् सुस्नातां रुचिराननाम् ॥ कृतस्वस्त्ययनां तृप्तामभ्यनन्ददुपागताम् ॥ २ ॥ तयोपगूढः परिरब्धकन्धरो रहोऽनुमन्त्रैरपकृष्टचेतनः ॥ न कालरंहो बुबुधे दुरत्ययं दिवा निशेति प्रमदापरिग्रहः ॥ ३ ॥ शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधिः ॥ तामेव वीरो मनुते परं यतस्तमोभिभूतो न निजं परं च यत् ॥ ४ ॥ तयैवं रममाणस्य कामकश्मलचेतसः ॥ क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः ॥ ५ ॥

विभ्रमैर्वशमानीय पतिं रमयन्ती रेमे ॥१॥ स पुरञ्जनः सुस्नातां स्वलंकृतां रुचिराननामागतां तां दृष्ट्वा ननन्द ॥ २ ॥ सः तयाऽऽलिङ्गितकण्ठः एकान्तगुह्यभाषणैर्गतविवेकः स्त्रीपरिग्रहः सन् दिवारात्रिरूपमायुर्नाशं न बुबुधे ॥ ३ ॥ स तया पराभवं प्राप्तः सन् स्वस्वरूपं ब्रह्म तत्साधनं ज्ञानं च न सस्मार ॥४॥ एवं तया सह रममाणस्य नवं वयः क्षणार्धमिव व्यतिक्रान्तम् ॥ ५ ॥

---

१ देवो देवनं क्रीडा तां राति ददातीति तं कान्तम् । २ पौंस्नं धैर्यम् । ३ कामयमाना । ४ स्वस्त्ययनं मंगलम् । ५ प्रमदैव ज्ञानसाधनम् । ६ उपधिरुपधानम् ।

पुरञ्जनः पुरञ्जन्यामेकादशशतपुत्रान् (११००) जनयामास तदाऽऽयुषोऽर्धं बभूव ॥६॥ तस्य दशोत्तरशतं (११०) दुहितरो मातापितृयशस्कर्यो बभूवुः ॥ ७ ॥ स पुरञ्जनस्तेषां तासां च विवाहान् विदधे ॥ ८ ॥ ततः पुत्राणामेकैकस्य शतं शतं पुत्राः अभवन् । यैः पुरञ्जनवंशो वृद्धिं गतः ॥९॥ एवं स पुत्रपौत्रादिषु बद्धः ॥ १० ॥ स पुरञ्जनो दीक्षां गृहीत्वा घोरैः पशुमारकैर्यज्ञैर्देवादीनीजे यथा भवान् ॥ ११ ॥ एवं कुटुम्बासक्त-

तस्यामजनयत् पुत्रान् पुरञ्जन्यां पुरञ्जनः ॥ शतान्येकादश विराडायुषोऽर्धमथात्यगात् ॥६॥ दुहितॄर्दशोत्तरशतं पितृमातृयशस्करीः ॥ शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते ॥७॥ स पञ्चालपतिः पुत्रान् पितृवंशविवर्धनान् ॥ दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ॥८॥ पुत्राणां चाभवन्पुत्रा एकैकस्य शतं शतम् ॥ यैर्वै पौरञ्जनो वंशः पञ्चालेषु समेधितः ॥९॥ तेषु तद्रिक्थहारेषु गृहकोशानुजीविषु ॥ निरूढेन ममत्वेन विषयेष्वन्वबध्यत ॥१०॥ ईजे च क्रतुभिर्घोरैर्दीक्षितः पशुमारकैः ॥ देवान् पितॄन् भूतपतीन् नानाकामो यथा भवान् ॥ ११ ॥ युक्तेष्वेवं प्रमत्तस्य कुटुम्बासक्तचेतसः ॥ आससाद स वै कालो योऽप्रियः प्रिययोषिताम् ॥१२॥ चण्डवेग इति ख्यातो गन्धर्वाधिपतिर्नृप ॥ गन्धर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥१३॥ गन्धर्व्यस्तादृशीरस्य मैथुन्यश्च सितासिताः ॥ परिवृत्त्या विलुम्पन्ति सर्वकामविनिर्मिताम् ॥ १४ ॥ ते चण्डवेगानुचराः पुरञ्जनपुरं यदा ॥ हर्तुमारेभिरे तत्र प्रत्यषेधत् प्रजागरः ॥ १५ ॥ स सप्तभिः शतैरेको विंशत्या च शतं समाः ॥ पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली ॥ १६ ॥

स्य सतो जरारूपः कालः आजगाम ॥ १२ ॥ चण्डवेगो नाम गन्धर्वाधिपतिः । तस्य षष्ट्युत्तरशतत्रयं (३६०) सेवका गन्धर्वाः । तावत्यः (३६०) श्वेतकृष्णाः गन्धर्व्यो दास्यः ॥१३॥१४॥ एवं स एकः चण्डवेगः स विंशतिसप्तशत ( ७२० ) सैन्यरूपैरनुचरैर्युक्तः पुरञ्जनपुरं हर्तुं प्रारेभे ॥ १५ ॥ तदा तैः साकं पञ्चशीर्षा प्रजागरः शतं समा युयुधे ॥ १६ ॥



---

१ विराट् सम्राट् । २ तेषां रिक्थहाराः पुत्रादयः । ३ गन्धर्वैर्मिथुनीभूय स्थिताः ।

स बले क्षीयमाणे परां चिन्तां प्राप ॥१७॥ स पुरञ्जनः पुर्यां स्वपार्षदैरानीतं बलिं गृह्णन् स्त्रीजितो भयं नालोचितवान् ॥ १८ ॥ हे राजन् ! एतस्मिन् काले कालस्य कदाचित् कन्या पतिमिच्छन्ती त्रिलोकीं बभ्राम । तां कश्चन नैच्छत् ॥१९॥ साऽऽत्मनो दौर्भाग्येन दुर्भगेति लोके विख्याता ॥२०॥ कदाचित् साऽटमाना मां पथि दृष्ट्वा वरीतुमैच्छत् ॥२१॥ तदा मया प्रत्याख्याता मे शापं ददौ । हे मुने ! त्वमेकत्र स्थातुं

क्षीयमाणे स्वसंबन्धे एकस्मिन् बहुभिर्युधा ॥ चिन्तां परां जगामार्तः सराष्ट्रपुरबान्धवः ॥१७॥ स एव पुर्यां मधुभुक् पञ्चालेषु स्वपार्षदैः ॥उपनीतं बलिं गृह्णन् स्त्रीजितो नाविदद् भयम् ॥१८॥ कालस्य दुहिता काचित्त्रिलोकीं वरमिच्छती ॥ पर्यटन्ती न बर्हिष्मन्[1] प्रत्यनन्दत कश्चन ॥ १९ ॥ दौर्भाग्येनात्मनो लोके विश्रुता दुर्भगेति सा ॥ या तुष्टा राजर्षये तु वृताऽदात् पूरवे वरम् ॥ २० ॥ कदाचिदटमाना सा ब्रह्मलोकान्महीं गतम् ॥ वव्रे बृहद्व्रतं[2] मां तु जानती काममोहिता ॥ २१ ॥ मयि संरभ्य विपुलमदाच्छापं सुदुस्सहम् ॥ स्थातुमर्हसि नैकत्र मद्याच्ञाविमुखो मुने ॥ २२ ॥ ततो विहतसंकल्पा कन्यका यवनेश्वरम् ॥ मयोपदिष्टमासाद्य वव्रे नाम्ना भयं पतिम् ॥ २३ ॥ ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम् ॥ संकल्पस्त्वयि भूतानां कृतः किल न रिष्यति ॥ २४ ॥ द्वाविमावनुशोचन्ति बालावसदवग्रहौ ॥ यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥२५॥ अथो भजस्व मां भद्र भजन्तीं मे दयां कुरु ॥ एतावान् पौरुषो धर्मो यदार्ताननुकम्पते ॥२६॥ कालकन्योदिता वाचो निशम्य यवनेश्वरः ॥ चिकीर्षुर्देवगुह्यं स सस्मितां तामभाषत ॥२७॥

नार्हसि ॥ २२ ॥ तदा मया प्रेरिता सा भयं नाम पतिं वव्रे ॥ २३ ॥ तदेवाह । हे वीर ! त्वमीप्सितं पतिं वृणे । भूतानां कृतः संकल्पस्त्वयि न नश्यति ॥२४॥ किंच यो याच्यमानं न ददाति यश्च दीयमानं न गृह्णाति तौ द्वौ दृष्ट्वा सन्तः शोचन्ति ॥ २५ ॥ अतो हे भद्र ! भजन्तीं मां भजस्व ॥ २६ ॥ तदा स यवनेश्वरो भयनामा कालकन्याया वचः श्रुत्वा सस्मितां तां बभाषे ॥ २७ ॥

१ हे प्राचीनर्बहिः । २ नैष्ठिकम् ।

हे कालकन्ये ! मया ज्ञानदृष्ट्या तुभ्यमयं लोकः पतिर्निरूपितः । त्वामभद्रेति मत्वा कश्चिज्जनो नाभिनन्दति ॥२८॥ अतस्त्वं मे सेनया सह याहि । प्रजानाशं करिष्यसि ॥२९॥ अयं प्रज्वारो मम भ्राता । त्वं च मे भगिनी भव । उभाभ्यां सह लोकेऽप्रकटः सन् विचरामि ॥३०॥ इति श्रीभागव० चू० चतुर्थ० सप्तविंशोऽध्यायः ॥२७॥ अष्टाविंशे तु वैदर्भ्याख्यानेन स्त्रीविचिन्तया । स्त्रीत्वं प्राप्तस्य दैवेन कदाचिन्मुक्तिरुच्यते ॥१॥



मया निरूपितस्तुभ्यं पतिरात्मसमाधिना ॥ नाभिनन्दति लोकोऽयं त्वामभद्रामसंमताम् ॥ २८ ॥ त्वमव्यक्तगतिर्भुङ्क्ष्व लोकं कर्मविनिर्मितम् ॥ याहि मे पृतनायुक्ता प्रजानाशं प्रणेष्यसि ॥ २९ ॥ प्रज्वारोऽयं मम भ्राता त्वं च मे भगिनी भव ॥ चराम्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः ॥ ३० ॥ इति श्रीभा० म० चतु० पुरञ्जनोपाख्याने कालकन्योपाख्यानं नाम सप्तविंशोऽध्यायः ॥२७॥ नारद उवाच ॥ सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः ॥ प्रज्वारकालकन्याभ्यां विचेरुरवनीमिमाम् ॥ १ ॥ त एकदा तु रभसा पुरञ्जनपुरीं नृप ॥ रुरुधुर्भौमभोगाढ्यां जरत्पन्नगपालिताम् ॥ २ ॥ कालकन्याऽपि बुभुजे पुरञ्जनपुरं बलात् ॥ ययाऽभिभूतः पुरुषः सद्यो निस्सारतामियात् ॥३॥ तयोपभुज्यमानां वै यवनाः सर्वतोदिशम् ॥ द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम् ॥ ४ ॥ तस्यां प्रपीड्यमानायामभिमानी पुरञ्जनः ॥ अवापोरुविधांस्तापान् कुटुम्बी ममताकुलः ॥ ५ ॥ कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः ॥ नष्टप्रज्ञो हृतैश्वर्यो गन्धर्वयवनैर्बलात् ॥ ६ ॥ विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूलाननादृतान् ॥ पुत्रान् पौत्रानुगामात्यान् जायां च गतसौहृदाम् ॥ ७ ॥



नारद उवाच ॥ हे बर्हिष्मन् ! यवनेश्वरस्य सैनिकाः प्रज्वारकालकन्याभ्यां सह भूमिं विचरन्तः सन्तः ॥१॥ एकदा जरत्पन्नगपालितां पुरञ्जनपुरीं रुरुधुः ॥२॥ तत्र कालकन्या तस्य पुरं बुभुजे ॥३॥ यवनाः द्वारैः प्रविश्य तामार्दयन् ॥४॥ ततोऽभिमानी पुरञ्जनो बहुविधान् तापान् प्राप ॥५॥ स कालकन्ययोपगूढो नष्टश्रीर्गन्धर्वयवनैर्हृतैश्वर्यः ॥ ६ ॥ विशीर्णां स्वपुरीमादरमकुर्वाणान् पुत्रपौत्रादीन् गतप्रीतिं भार्यां च वीक्ष्य ॥ ७ ॥

कालकन्यया ग्रस्तमात्मानं च दृष्ट्वा तत्प्रतीकारं न लेभे ॥ ८ ॥ ततः पुरञ्जनो निस्सारान् कामान् पुत्रादीन् लालयन् गन्धर्वयवनैर्वेष्टितां कालकन्योपमर्दितां पुरीं त्यक्तुमुपचक्रमे ॥९॥१०॥ तदा प्रज्वारो भयनाम्नो भ्रातुः प्रियचिकीर्षया तां पुरीं ददाह ॥ ११ ॥ पुर्यां दह्यमानायां सपौरः पुत्रादिसहितः पुरञ्जनो दुःखं प्राप ॥ १२॥ यवनोपरुद्धायतनः पुरपालः कालकन्यया ग्रस्तां पुरीं रक्षितुं न शेके । ततो गन्तु-

आत्मानं कन्यया ग्रस्तं पञ्चालानरिदूषितान् ॥ दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम् ॥ ८ ॥ कामानभिलषन् दीनो यातयामांश्च कन्यया ॥ विगतात्मगतिस्नेहः पुत्रदारांश्च लालयन् ॥ ९ ॥ गन्धर्वयवनाक्रान्तां कालकन्योपमर्दिताम् ॥ हातुं प्रचक्रमे राजा तां पुरीमनिकामतः ॥ १० ॥ भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ॥ ददाह तां पुरीं कृत्स्नां भ्रातुः प्रियचिकीर्षया ॥११॥ तस्यां संदह्यमानायां सपौरः सपरिच्छदः ॥ कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः ॥१२॥ यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया ॥ पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥ न शेके सोऽवितुं तत्र पुरुकृच्छ्रोरुवेपथुः ॥ गन्तुमैच्छत् ततो वृक्षकोटरादिव सानलात् ॥ १४ ॥ शिथिलावयवो यर्हि गन्धर्वैर्हृतपौरुषः ॥ यवनैररिभी राजन्नुपरुद्धो रुरोद ह ॥ १५ ॥ दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् ॥ स्वत्वावशिष्टं यत् किंचिद् गृहकोशपरिच्छदम् ॥ १६ ॥ अहंममेति स्वीकृत्य गृहेषु कुमतिर्गृही ॥ दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥१७॥ लोकान्तरं गतवति मय्यनाथा कुटुम्बिनी ॥ वर्तिष्यते कथं त्वेषा बालकाननुशोचती ॥१८॥ न मय्यनाशिते भुङ्क्ते नास्नाते स्नाति मत्परा ॥ मयि रुष्टे सुसंत्रस्ता भर्त्सिते यतवाग्भयात् ॥ १९ ॥

मैच्छत् ॥ १३ ॥ १४ ॥ शिथिलावयवो राजा यवनैः रुद्धः सन् घुरघुरध्वनिं चकार ॥ १५ ॥ स सर्वमहं ममेति स्वीकृत्य पुरीवियोगकाले स्त्रीपुत्रकन्यादीन् दध्यौ ॥१६॥ १७ ॥ तत्र स्त्रीध्यानमाह । अहो मयि लोकान्तरं गते सति गतनाथैषा कथं वर्तिष्यते ॥ १८ ॥ एषा मय्य-भुक्ते सति न भुङ्क्ते मयि रुष्टे संत्रस्ता भवति ॥ १९ ॥

---

१ अनिच्छयाऽपि । २ भृत्यवर्गसहितः । ३ कुटुम्बेन सह दीव्यतीति । ४ पुत्रपौत्रादिसहितः । ५ जामयः स्नुषा । ६ स्वत्वमात्रेणावशिष्टं भोगस्तु प्रागेव क्षीण इति भावः ।

मयि देशान्तरं गते गृहस्थधर्ममपि कथमनुवर्तयिष्यति ॥ २० ॥ किंच एते दीनाः पुत्राः कन्याश्च मयि गते कथं वर्तिष्यन्ते ॥ २१ ॥ हे बर्हिष्मन्! एवं बुद्धया शोचन्तं पुरञ्जनं ग्रहीतुं भयनामा प्राप ॥२२॥ ततो यदैषः यवनैः स्वस्थानं नीयमानस्तदाऽनुपथाः शोचन्तोऽभ्यद्रवन् ॥ २३ ॥ यदा भुजङ्गमः पुरीं विहाय गतस्तदा पुरी विशीर्णा जाता ॥ २४ ॥ स पुरञ्जनो बलीयसा यवनेन विकृष्यमाणोऽज्ञानाविष्टः

प्रबोधयति मामज्ञं व्युषिते शोककर्शिता ॥ वर्त्मैतद् गृहमेधीयं वीरसूरपि नेष्यति ॥ २० ॥ कथं नु दारका दीना दारकीर्वा परायणाः ॥ वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥ एवं कृपणया बुद्धया शोचन्तमतदर्हणम् ॥ ग्रहीतुं कृतधीरेनं भयनामाऽभ्यपद्यत ॥ २२ ॥ पशुवद् यवनैरेष नीयमानः स्वकं क्षयम् ॥ अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः ॥ २३ ॥ पुरीं विहायोपगत उपरुद्धो भुजङ्गमः ॥ यदा तमेवानु पुरी विशीर्णा प्रकृतिं गता ॥ २४ ॥ विकृष्यमाणः प्रसभं यवनेन बलीयसा ॥ नाविन्दत् तमसाऽऽविष्टः सखायं सुहृदं पुरः ॥ २५ ॥ तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना ॥ कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तोऽमीवमस्य तत् ॥ २६ ॥ अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः॥ शाश्वतीरनुभूयार्तिं प्रमदासङ्गदूषितः ॥ २७ ॥ तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा ॥ अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥ उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः ॥ युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः ॥ ॥ २९ ॥ तस्यां स जनयांचक्र आत्मजामसितेक्षणाम् ॥ यवीयसः सप्त सुतान् सप्तद्रविडभूभृतः ॥ ३० ॥

सन् पूर्वसखं न सस्मार ॥ २५ ॥ तेन यज्ञे ये हताः पशवस्ते कुठारमयैः शृङ्गैस्तं चिच्छिदुः ॥ २६ ॥ स स्त्रीसङ्गदूषितः शाश्वतीः समाः अनन्तपारे तमसि मग्नो दुःखमनुभूय ॥२७॥ तामेव मनसा ध्यायन् पश्चात् विदर्भराजस्य कन्या बभूव ॥ २८ ॥ तां मलयध्वजः पाण्ड्यो युधि राजन्यान् विजित्य परिणिन्ये ॥ २९ ॥ स तस्यां सप्त पुत्रान् कन्यां चैकां जनयामास ॥ ३० ॥



१ पापम् ।

तेषां सप्तानामर्बुदमेकैकस्य पुत्राः अभवन् ॥ ३१ ॥ तां मलयध्वजकन्यामगस्त्यः उपयेमे । तस्यां दृढच्युतो मुनिर्जातः । तस्येध्मवाहः पुत्रोऽभूत् ॥३२॥ स मलयध्वजः पुत्रेभ्यो भूमिं विभज्य कृष्णमाराधयितुं कुलाचलं जगाम ॥३३॥ तदा वैदर्भी गृहपुत्रादीन् हित्वा पतिमनुजगाम ॥ ३४ ॥ ततो मलयध्वजस्तत्र ताम्रपर्ण्यादिनदीजलैर्मनोमलं क्षालयन् ॥ ३५ ॥ कन्दबीजमूलफलपुष्पादिभिः कृताहारस्तपश्चचार ॥ ३६ ॥

एकैकस्याभवत्तेषां राजन्नर्बुदमर्बुदम् ॥ भोक्ष्यते यद्वंशधरैर्मही मन्वन्तरं परम्[1] ॥ ३१ ॥ अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम् ॥ यस्यां दृढच्युतो जात इध्मवाहात्मजो मुनिः ॥ ३२ ॥ विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः ॥ आरिराधयिषुः कृष्णं स जगाम कुलाचलम् ॥३३॥ हित्वा गृहान् सुतान् भोगान् वैदर्भी मदिरेक्षणा ॥ अन्वधावत पाण्ड्येशं ज्योत्स्नेव रजनीकरम् ॥ ३४ ॥ तत्र चन्द्रवसा नाम ताम्रपर्णी वटोदका ॥ तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो[2] मृजन् ॥ ३५ ॥ कन्दाष्टिभिर्[3]मूलफलैः पुष्पपर्णैस्तृणोदकैः ॥ वर्तमानः शनैर्गात्रकर्षणं तप आस्थितः ॥ ॥ ३६ ॥ शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये ॥ सुखदुःखे इति द्वन्द्वान्यजयत समदर्शनः ॥ ३७ ॥ तपसा विद्यया पक्वकषायो नियमैर्यमैः ॥ युयुजे ब्रह्मण्यात्मानं विजिताक्षानिलाशयः[4] ॥ ३८ ॥ आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थिरः ॥ वासुदेवे भगवति नान्यद्वेदोद्वहन् रतिम् ॥ ३९ ॥ स व्यापकतया[5]ऽऽत्मानं व्यतिरिक्ततया[6]ऽऽत्मनि ॥ विद्वान् स्वप्न इवामर्शसाक्षिणं विरराम ह ॥ ४० ॥ साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप ॥ विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम् ॥ ४१ ॥

स शीतोष्णक्षुत्तृट्सुखदुःखादिद्वन्द्वानि ॥३७॥ तपसा दग्धकामादिवासनो ब्रह्मण्यात्मानं युयुजे ॥३८॥ स भगवति रतिं कुर्वन् दिव्यवर्षशतमेकत्र वृक्ष इव स्थिर आस्ते स्म ॥३९॥ एवं वर्तमानः स आत्मन्यात्मानं विद्वानन्यस्माद् विरराम ॥४०॥ स हरिरूपेण गुरुणोक्तेन ज्ञानेन ॥४१॥

---

१ मन्वन्तरं ततः परं च । २ अन्तर्बहिश्च । ३ अष्टिर्बीजम् । ४ विजितेन्द्रियप्राणचित्तः । ५ देहादिप्रकाशकत्वेन । ६ देहादिव्यतिरिक्ततया ।

ब्रह्मण्यात्मानमात्मनि ब्रह्म वीक्षमाणः ईक्षां विहायास्मात् विरराम ॥ ४२ ॥ अथ वैदर्भी भोगान् हित्वा प्रेम्णा धर्मज्ञं पतिं पर्यचरत् ॥ ४३ ॥ सा चीरवासाः व्रतेन कृशा पत्युः समीपे बभौ ॥४४॥ सा यदा पतिमुपरतमजानती तदा यथापूर्वं सिषेवे ॥४५॥ ततः सा पत्युः पादं सेवमाना सती यदा पादे ऊष्माणं नापश्यत् तदोद्विग्नहृदयाऽऽसीत् ॥४६॥ ततो वैदर्भी शोचन्ती सती वने सुस्वरं रुरोद जगाद च ॥ ४७ ॥ हे राजर्षे !

परे ब्रह्मणि चात्मानं परं ब्रह्म तथाऽऽत्मनि ॥ वीक्षमाणो विहायेक्षामस्माद्[1]उपरराम ह ॥ ४२ ॥ पतिं परमधर्मज्ञं वैदर्भी मलयध्वजम् ॥ प्रेम्णा पर्यचरद्धित्वा भोगान् सा पतिदेवता ॥ ४३ ॥ चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा ॥ बभावुपपतिं शान्ता शिखा शान्तमिवानलम् ॥ ४४ ॥ अजानती प्रियतमं यदोपरतमङ्गना ॥ सुस्थिरासनमासाद्य यथापूर्वमुपाचरत ॥ ४५ ॥ यदा नोपालभेताङ्घ्रावूष्माणं पत्युरर्चती ॥ आसीत् संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥ आत्मानं शोचती दीनमबन्धुं विक्लवाऽश्रुभिः ॥ स्तनावासिच्य विपिने सुस्वरं प्ररुरोद सा ॥ ४७ ॥ उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम् ॥ दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्यतीं पातुमर्हसि ॥ ४८ ॥ एवं विलपती बाला विपिनेऽनुगता पतिम् ॥ पतिता पादयोर्भर्तू रुदन्त्यश्रूण्यवर्तयत् ॥ ४९ ॥ चितिं दारुमयीं चित्वा तस्यां पत्युः कलेवरम् ॥ आदीप्य चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥ तत्र पूर्वतरः कश्चित् सखा ब्राह्मण आत्मवान् ॥ सान्त्वयन् वल्गुना साम्ना तामाह रुदतीं प्रभो ॥ ५१ ॥ ब्राह्मण उवाच ॥ का त्वं कस्यासि को वाऽयं शयानो यस्य शोचसि ॥ जानासि किं सखायं मां येनाग्रे[3] विचचर्थ[4] ह ॥ ५२ ॥

उत्तिष्ठोत्तिष्ठ दस्युभ्यो बिभ्यतीं महीं पातुमर्हसि ॥४८॥ एवं विलप्याश्रूणि विमृज्य ॥४९॥ दारुमयीं चितिं रचयित्वा तस्योपरि पतिदेहं निधायाग्निं प्रदीप्यान्तः प्रवेष्टुं मनो दधे ॥५०॥ तदा पूर्वतरः कश्चित् सखा ब्राह्मणरूपेण तत्रागत्य तां बोधयामास ॥५१॥ ब्राह्मण उवाच ॥ त्वं का अयं तव को यं शोचसि । मां सखायं जानासि किम् ॥ ५२ ॥

१ अहमेव ब्रह्मेत्यात्मनि ब्रह्मव्यतीहारेणेक्षमाणः । व्यवधायकमीक्षणमेव । २ अस्मात्संसारात् । ३ अग्रे सृष्टेः पूर्वम् । ४ विचचर्थ सख्यसुखमन्वभेवः ।

हे सखे ! मां हित्वा भौमसुखं भोक्तृत्वं गतः स त्वं मां स्मरसि किम् ॥ ५३ ॥ हे आर्य ! त्वमहं च मानससरसि स्थितौ हंसौ द्वौ पक्षिणौ जातौ ॥ ५४ ॥ हे बन्धो ! स त्वं मां विहाय गतः महीं विचरन् स्त्रिया निर्मितं पुरमद्राक्षीः ॥५५॥ कथंभूतं पुरम् । पञ्चोपवनं नवद्वारमेकपालं त्रिप्राकारं षड्वणिजं पञ्चहट्टं स्त्रीस्वामिकम् ॥ ५६ ॥ पूर्वोक्तश्लोकस्यार्थमाह । इन्द्रियार्थाः उपवनानि द्वारः प्राणच्छिद्राणि अन्नजलतेजांसि

अपि स्मरसि चात्मानमविज्ञातसखं सखे ॥ हित्वा मां पदमन्विच्छन् भौमभोगरतो गतः ॥ ५३ ॥ हंसावहं च त्वं चार्य सखायौ मानसायनौ ॥ अभूतामन्तरा वौकः सहस्रपरिवत्सरान् ॥५४॥ स त्वं विहाय मां बन्धो गतो ग्राम्यमतिर्महीम् ॥ विचरन् पुरमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥ पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् ॥ षट्कुलं पञ्चविपणं पञ्चप्रकृति स्त्रीधवम् ॥५६॥ पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो ॥ तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः ॥५७॥ विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया ॥ शक्त्यधीशः पुमांस्त्वत्र प्रविष्टो नावबुध्यते ॥ ५८ ॥ तस्मिंस्त्वं रामया स्पृष्टो रममाणोऽश्रुतस्मृतिः ॥ तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं प्रभो ॥५९॥ न त्वं विदर्भदुहिता नायं वीरः सुहृत् तव ॥ न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया ॥ ६० ॥ माया ह्येषा मया सृष्टा यत् पुमांसं स्त्रियं सतीम् ॥ मन्यसे नोभयं यद्वै हंसौ पश्यावयोर्गतिम् ॥ ६१ ॥

कोष्ठानि कुलं नामेन्द्रियसंग्रहः ॥ ५७ ॥ विपणः क्रियाशक्तिः । यस्या उपादानं पञ्च भूतानि । यत्र शक्त्यधीशः पुमान् प्रविष्टः आत्मानं न विबुध्यते ॥ ५८ ॥ तस्मिन् पुरे स्त्रिया रममाणस्तत्सङ्गात् पापीयसीं दशां प्राप्तः ॥ ५९ ॥ न त्वं विदर्भदुहिता नायं ते पतिर्न त्वं पुरञ्जनो यः पुरञ्जन्या नवमुखे पुरे रुद्धः इयं माया मया सृष्टा । आवां हंसावावयोर्गतिं पश्य ॥ ६० ॥ ६१ ॥

---

१ पुंस्त्वनिर्देशः पूर्वजन्मपुंस्त्वस्मरणाय । २ गृहं विनैव । ३ एकः प्राणः पालो यस्मिन् तत् । ४ ज्ञानेन्द्रियमनांसि षट् । ५ अनेन पञ्च कर्मेन्द्रियाणि लक्षितानि । ६ भूतान्येवाव्यया प्रकृतिरुपादानं यस्य स पुमान् । ७ स्त्रीवश इत्यर्थः । ८ अभिभूतः । ९ न विद्यते श्रुते ब्रह्मत्वे स्मृतिर्यस्य सः । १० शुद्धौ । ११ वक्ष्यमाणस्वरूपाम् ।

अहं भवान् त्वं चाहमेव विचक्ष्व ॥६२॥ यथाऽऽदर्शे पुरुषं आत्मानं द्विधेक्षते तथैवावयोरन्तरम् ॥६३॥ एवं मानसो हंसो हंसेन प्रतिबोधितः सन् पूर्वनष्टां स्मृतिं प्राप ॥६४॥ नारद उवाच ॥ हे बर्हिष्मन् । एतदध्यात्मं तव पारोक्ष्येण मया प्रदर्शितम् ॥ यस्मादीश्वरः परोक्षप्रियोऽस्ति साक्षादात्मज्ञानकथनेन तव चेतसि कथा नायाति॥अत एवमुक्तम् ॥६५॥ इति श्रीभा०चू०चतु०अष्टाविंशोऽध्यायः ॥२८॥ऊनत्रिंशे परोक्षार्थ-

अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः ॥ न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥६२॥ यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ॥ द्विधाभूतमवेक्षेत तथैवान्तरमावयोः ॥६३॥ एवं स मानसो हंसो हंसेन प्रतिबोधितः ॥ स्वस्थस्तद्व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥६४॥ बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ॥ यत्परोक्षप्रियो देवो भगवान्विश्वभावनः ॥६५॥ इति श्रीभाग० महा० चतुर्थ० पुरं० स्त्रीचिन्तया स्त्रीत्वमाप्तस्य पुरञ्जनस्य देवेन मुक्तिवर्णनं नाम अष्टाविंशतितमोऽध्यायः ॥२८॥ प्राचीनबर्हिरुवाच ॥ भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते ॥ कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥ नारद उवाच ॥ पुरुषं पुरञ्जनं विद्याद्यद्व्यनक्त्यात्मनः पुरम् ॥ एकद्वित्रिचतुष्पादं बहुपादमपादकम् ॥ २ ॥ योऽविज्ञाताहृतस्तस्य पुरुषस्य सखेश्वरः ॥ यन्न विज्ञायते पुंभिर्नामभिर्वा क्रियागुणैः ॥ ३ ॥ यदा जिघृक्षुः पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान् ॥ नवद्वारं द्विहस्ताङ्घ्रि तत्रामनुत साध्विति ॥ ४ ॥ बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम् ॥ यामधिष्ठाय देहेऽस्मिन्पुमान्भुङ्क्तेऽक्षभिर्गुणान् ॥ ५ ॥

व्याख्यानेनोपसंहृतम् ॥स्त्रीसङ्गतो भवस्त्वीशसङ्गान्मुक्तिरिति स्फुटम् ॥१॥ प्राचीनबर्हिरुवाच ॥ हे भगवन् ! वयं कर्ममोहितास्तव वचः सम्यग् न विद्मः ज्ञानिनो जानन्ति । अतः स्पष्टतया वद ॥ १ ॥ नारद उवाच ॥ एकद्वित्रिचतुष्पादकं बहुपादकमपादकं पुरञ्जनं जीवं विद्यात् ॥२॥ अस्याविज्ञातं सखायमीश्वरं जानीयात॥३॥ शरणं नाम भोगायतनं नवद्वारं द्विहस्ताङ्घ्रि देहं विद्यात्॥४॥ विवेकवतीं बुद्धिं प्रमदां जानीहि॥५॥

१ अन्तरम् । २ क्षेत्रज्ञः । ३ परमात्मना । ४ आत्मनि स्थितः । ५ ईश्वरवियोगेन । ६ स्वकर्मणा पुरं जनयतीति । ७ प्रकटीकरोति । ८ अविज्ञातशब्देनोक्तः । ९ पुरीषु मध्ये । १० इंद्रियैः ।

तस्याः सखायो ज्ञानकर्मेन्द्रियाणि याः सख्यस्ताः इन्द्रियवृत्तयः ॥६॥ बृहद्बलं मनः । पञ्चालाः पञ्चविषयाः । यत् नवद्वारयुक्तं नगरं तत् मनुष्यशरीरं विद्धि ॥७॥ अक्षिणी नासिके कर्णौ मुखमिति सप्तोर्ध्वद्वाराणि । शिश्नगुदे अधोद्वारे विद्धि ॥८॥ तत्राक्षिणी नासिके मुखमिति पञ्चाग्रद्वाराणि । दक्षिणद्वारं दक्षिणकर्णम् उत्तरमुत्तरकर्णं विद्धि ॥९॥ पश्चिमद्वारौ गुदशिश्नौ । खद्योताऽऽविर्मुखी द्वे नेत्रे । ताभ्यां पुरञ्जनः

सखाय इन्द्रियगणा ज्ञानं कर्म च यत्कृतम् ॥ सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः[1] ॥६॥ बृहद्बलं मनो विद्यादुभयेन्द्रियनायकम् ॥ पञ्चालाः पञ्च विषया यन्मध्ये नवखं पुरम् ॥७॥ अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति ॥ द्वे द्वे द्वारौ बहिर्याति यस्तदिन्द्रियसंयुतः[2] ॥८॥ अक्षिणी नासिके आस्यमिति पञ्च पुरः कृताः ॥ दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ॥९॥ पश्चिमे इत्यधोद्वारौ गुदं शिश्नमिहोच्यते ॥ खद्योताऽऽविर्मुखी चात्र नेत्रे चैकत्र निर्मिते ॥ रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ॥ १० ॥ नलिनी नालिनी नासे गन्धः सौरभ उच्यते ॥ घ्राणोऽवधूतो[3] मुख्याऽऽस्यं विपणो वाग्रसविद्रसः[4] ॥ ११ ॥ आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् ॥ पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥१२॥ प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञितम् ॥ पितृयानं देवयानं श्रोत्राच्छ्रुतधराद् व्रजेत् ॥ १३ ॥ आसुरी मेढ्रमर्वाग्द्वार्व्यवायो ग्रामिणां[5] रतिः ॥ उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ॥ १४ ॥

पश्यति ॥ १० ॥ नलिनी नालिनीति द्वे नासिकाद्वारे । मुख्येत्यास्यम् । विपणो वागिन्द्रियम् ॥ ११ ॥ अत्र व्यवहारः आपणो भाषणम् पितृहूर्दक्षिणः कर्णः । देवहूरुत्तरः कर्णः ॥१२॥ प्रवृत्तं निवृत्तं शास्त्रं पञ्चालसंज्ञितं जानीहि ॥१३॥ आसुरीद्वारमुपस्थः निर्ऋतिद्वारं गुदम् ॥१४॥

---

१ पञ्चवृत्तित्वात्पञ्चशीर्षाहितुल्यत्वम् । पञ्चविंशाध्यायोक्ते २७ तमश्लोके महाभट इत्यस्य व्याख्यानम् । २ २५ तमाध्यायोक्ते ४७ तमश्लोके द्युमत्सख इत्याद्यस्यार्थः । आत्मा ताभिर्द्वार्भिर्बहिरायाति । ३ अवधूतो वायुस्तेन सहैकस्थानत्वाद् घ्राणोऽवधूतः । ४ रसनेन्द्रियमित्यर्थः । ५ २५ तमाध्यायोक्त ५२ तमश्लोकोक्तग्रामकमित्यस्यानुवादः ।

अन्धचतुष्टय द्वौ करौ पादौ ॥ १५ ॥ अन्तःपुरं हृदयम्, विषूचिर्मनः। तत्र मोहादिकं प्राप्नोति ॥ १६ ॥ यथा बुद्धिः स्वप्नादिषु विक्रियते तथा जीवः ॥१७॥ उक्तो यो रथस्तं देहं पञ्चाश्वाः ज्ञानेन्द्रियाणि पुण्यपापे चक्रे विद्धि ॥ १८ ॥ मनो रश्मिः। बुद्धिः सूतः। हृदयं नीडः ॥१९॥ एवंभूतो रथस्थो जीवो मृगतृष्णां धावति। एकादशेन्द्रियाणि चमूः। चण्डवेगः संवत्सरात्मकः कालः ॥ २० ॥ तस्यानुचराः गन्ध-

वैशसं नरकं पायुर्लुब्धकोऽन्धौ तु मे शृणु ॥ हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ॥१५॥ अन्तःपुरं च हृदयं विषूचिर्मन उच्यते ॥ तत्र मोहं प्रसादं वा हर्षं प्राप्नोति तद्गुणैः ॥ १६ ॥ यथा यथा विक्रियते गुणाक्तो विकरोति वा ॥ तथा तथोपद्रष्टाऽऽत्मा तद्वृत्तीरनुकार्यते ॥ १७ ॥ देहो रथस्त्विन्द्रियाश्वः संवत्सररयो गतिः ॥ द्विकर्मचक्रस्त्रिगुण-ध्वजः पञ्चासुबन्धुरः ॥ १८ ॥ मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः ॥ पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः ॥ १९ ॥ आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ॥ एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् ॥ संवत्सरश्चण्ड-वेगः कालो येनोपलक्षितः ॥ २० ॥ तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः ॥ हरन्त्यायुः परिक्रान्त्या षष्ट्यु-त्तरशतत्रयम् ॥ २१ ॥ कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति ॥ स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ २२ ॥ आधयो व्याधयस्तस्य सैनिका यवनाश्चराः ॥ भूतोपसर्गाशुरयः प्रज्वारो द्विविधो ज्वरः ॥ २३ ॥ एवं बहुविधैर्दुःखैर्दैवभूतात्मसंभवैः ॥ क्लिश्यमानः शतं वर्षं देहे देही तमोवृतः ॥ २४ ॥ प्राणेन्द्रियमनोधर्मानात्मन्य-ध्यस्य निर्गुणः ॥ शेते कामलवान्ध्यायन्ममाहमिति कर्मकृत् ॥ २५ ॥



र्वास्ते दिवसाः (३६०)॥ तेषां पत्न्यो गन्धर्व्यस्ताः शुक्लकृष्णरात्रयः (३६०) एते सर्वे आयुर्हरन्ति ॥२१॥ कालकन्या जरा मृत्युः क्षयाय तां साहाय्याय जगृहे ॥२२॥ तस्य सेनाः आधयो व्याधयः। प्रज्वारो द्विविधज्वरः ॥२३॥ इत्यादि सर्वं ज्ञातव्यम्। एवं बहुविधैर्दैवभूतात्मसंभ-वैर्दुःखैर्जीवोऽज्ञानावृतो देहे शतवर्षाणि क्लिश्यमानः ॥२४॥ ममाहमिति कर्मकृत् कामलेशान् ध्यायन् शेते ॥ २५ ॥

१ सत्त्वरजस्तमोभिः। २. २५ तमाध्यायगत ५६ तमश्लोकोक्तमहिषीत्यादेरर्थः। ३ बुद्धिवृत्तीदर्शनस्पर्शनाद्याः। ४ बन्धुराणि बन्धनानि। ५ पञ्चेन्द्रियैः सूनाविनोदमिव विषयसेवांकरोतीति। ६ भ्रमणेन।

यदाऽऽत्मानमीश्वरं न जानाति तदा प्रकृतेर्गुणेषु सज्जते ॥ २६ ॥ ततो गुणाभिमानी स सत्त्वरजस्तमोमयानि कर्माणि कुर्वन् तत्तत्सदृशान् लोकान् प्राप्नोति ॥२७।२८॥ क्वचित् पुमान् क्वचित् स्त्री क्वचिन्नपुंसकं देवमनुष्यादिरूपो वा भवति ॥२९॥ यथा क्षुत्तृट्पीडितः श्वा गृहं चरन् ताडनं भक्षणं वा प्राप्नोति ॥३०॥ तथा कामव्याप्तो जीवः उच्चावचदेहान् भ्रमन् दिष्टं फलं भुङ्क्ते ॥३१॥ दैवभूतादिदुःखेषु जीवस्यैकतरेणापि

यदाऽऽत्मानमविज्ञाय भगवन्तं परं गुरुम् ॥ पुरुषस्तु विषज्जेत गुणेषु प्रकृतेः स्वदृक् ॥ २६ ॥ गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः ॥ शुक्लं कृष्णं लोहितं वा यथा कर्माभिजायते ॥ २७ ॥ शुक्लात्प्रकाशभूयिष्ठाँल्लोकानाप्नोति कर्हिचित् ॥ दुःखोदर्कान् क्रियायासांस्तमश्शोकोत्कटान्क्वचित् ॥ २८ ॥ क्वचित्पुमान्क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः ॥ देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवः ॥२९॥ क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ॥ चरन्विन्दति यद्दिष्टं दण्डमोदनमेव वा ॥३०॥ तथा कामाशयो जीव उच्चावचपथा भ्रमन् ॥ उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥ ३१ ॥ दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु ॥ जीवस्य न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया ॥ ३२ ॥ यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन् ॥ तं स्कन्धेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ॥ ३३ ॥ नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम् ॥ द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ ३४ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा ॥ ३५ ॥ अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा ॥ संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ ॥ ३६ ॥

दुखःवियोगो न तत्तदुपायः स्याच्चेत् तर्हि दुःखरूप एव ॥३२॥ अत्र दृष्टान्तः । यथा पुरुषोऽतिभारं शिरसा वहन् ततः स्कन्धेन धत्ते तद्वत् ॥३३॥ कर्मणामुपायः केवलं कर्म न यतो द्वयमप्यज्ञानेन प्राप्तम् ॥३४॥ अर्थेऽविद्यमानेऽपि संसृतिर्न निवर्तते ॥३५॥ तस्मादात्मनोऽज्ञानात् संसृतिर्भवति तन्नाशस्तु वासुदेवभक्त्यैव भवति ॥ ३६ ॥

१ स्वप्रकाशस्यभावोपि । २ दैवोपात्तम् । ३ उपाधिभूतेन ।

वासुदेवे भगवति भक्तियोगो वैराग्यं ज्ञानं च जनयिष्यति ॥३७॥ स भक्तियोगोऽच्युतकथाः शृण्वतः श्रद्दधानस्य स्यात् ॥३८॥ भक्तियोगेन स्वच्छान्तःकरणाः भागवताः साधवो यत्र भवन्ति ॥३९॥ तत्र साधूनां मुखात् निर्गतं कथामृतं ये कर्णैः पिबन्ति तेषां शोकमोहादयो नश्यंति ॥४०॥ एतैरुपद्रुतो यः स हरिकथामृतनिधौ प्रीतिं न करोति ॥ ४१ ॥ किंच ब्रह्मा शिवो मनुर्दक्षादयः सनकादयो मरीचिरत्रिरङ्गिरसादयोऽहं

वासुदेवे भगवति भक्तियोगः समाहितः ॥ सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ॥ ३७ ॥ सोऽचिरादेव राजर्षे स्यादच्युतकथाश्रयः ॥ शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३८ ॥ यत्र भागवता राजन्साधवो विशदाशयाः ॥ भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ॥ ३९ ॥ तस्मिन्महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति ॥ ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥ ४० ॥ एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ॥ न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ ४१ ॥ प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः ॥ दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४२ ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥ ४३ ॥ अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः ॥ पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमेश्वरम् ॥ ४४ ॥ शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ॥ मन्त्रलिंगैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४५ ॥ यदा यमनुगृह्णाति भगवानात्मभावितः ॥ स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥४६॥ तस्मात्कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु ॥ माऽर्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥४७॥ स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः ॥ आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ४८ ॥



भृगुर्वसिष्ठ एते सर्वेऽद्यापि तपोविद्यासमाधिभिर्यं पश्यन्तोऽपि न पश्यंति ॥४२॥४३॥४४॥ अतिविस्तरे वेदे वर्तमानाः कर्म भजन्तः ईश्वरं न विदुः ॥४५॥ यदा हरिर्यमनुगृह्णाति तदा स लोके कर्ममार्गे च निष्ठितां मतिं त्यजति ॥४६॥ तस्मात् हे बर्हिष्मन् ! कर्मसु दृष्टिं मा कृथाः ॥४७॥ अवेदतत्त्वज्ञाः ये कर्मपरं वेदमाहुस्ते आत्मतत्त्वं वेदतात्पर्यं न विदुः ॥ ४८ ॥

१ अहं नारदोऽन्ते येषां ते। २ परमार्थत्वेन प्रकाशमानेषु। ३ अस्पृष्टं वस्तु यैः तेषु।

हे राजन् ! त्वं पूर्वाग्रदर्भैः सर्वभूमण्डलमास्तीर्य पशुवधादहं यज्वेत्यहंकारी सन् कर्म विद्यास्वरूपं च न वेत्सि । हरितोषं यत् तदेव कर्म ॥४९॥ हरिः सर्वदेहभृतामात्मेश्वरः॥५०॥प्रियतमश्च । तस्मिन्नण्वपि भयं नेति यो वेद स एव विद्वान्॥५१॥नारद उवाच ॥ हे नृप ! एवं भवतः प्रश्नः कथितः । अन्यच्च गुह्यं वदामि शृणु ॥ ५२ ॥ हे राजन् ! इमं मृगं पुष्पवाटिकायां सक्तं पृष्ठे लुब्धकमग्रे वृकानविगणय्य स्त्रिया सह रममाणं

आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम् ॥ स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम् ॥ तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ॥४९॥ ❋ हरिर्देहभृतामात्मा स्वयंप्रकृतिरीश्वरः ॥ तत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥५०॥ स वै प्रियतमश्चात्मा यतो न भयमण्वपि ॥ इति वेद स वै विद्वान्यो विद्वान्स गुरुर्हरिः ॥५१॥ नारद उवाच ॥ प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ ॥ अत्र मे वदतो गुह्यं निशामय सुनिश्चितम् ॥ ५२ ॥ क्षुद्रंचरं सुमनसां शरणे मिथित्वा रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम् ॥ अग्रे वृकानसुतृपोऽविगणय्य यान्तं पृष्ठे मृगं मृगय लुब्धकबाणभिन्नम् ॥५३॥ (दण्डकम्) सुमनस्सधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्यकर्मविपाकजं कामसुखलवं जैह्वयौपस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रान्तान्काललवविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तःशरेण यमिह पराविध्यति तमिममात्मानमहो राजन्भिन्नहृदयं द्रष्टुमर्हसीति ॥५४॥ स त्वं विचक्ष्य मृगचेष्टितमात्मनोऽन्तश्चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते ॥ जह्यङ्गनाश्रममसत्तमयूथगाथं प्रीणीहि हंसशरणं विरम क्रमेण ॥ ५५ ॥

पश्य ॥ ५३ ॥ मृगोपमं जीवं वर्णयति । हे राजन् ! स्त्रीणामाश्रमे स्त्रीभिः सहकाम्यकर्मविपाकजं जैह्वयौपस्थ्यादिकामसुखलवं विचिन्वन्तमग्रे आयुर्हरतोऽहोरात्रानविगणय्य पृष्ठतस्ताडयन्तं कालं चाविगणय्य विहरन्तं भिन्नहृदयं जीवं द्रष्टुमर्हसि ॥ ५४ ॥ एवं मृगचेष्टितं विचार्यान्तर्हृदि चित्तमाकृष्य चित्ते बहिर्वृत्तिं नियच्छ । गृहाश्रमं त्यक्त्वेश्वरं शरणं गत्वा सर्वतो विरम ॥ ५५ ॥

* तद्वर्णं तत्कुलं श्रेष्ठं तदाश्रमशुभं भवेत् । इत्यधिकः पाठः । १ अल्पगतिम् । २ मिथः परस्परं स्त्रिया सह मिलित्वा । ३ कर्णयोर्धुनीमिव बहिर्वृत्तिम् । ४ असत्तमानां यूथानां गाथाः यस्मिन् तम् ।

प्राचीनबर्हिरुवाच ॥ हे नारद ! भवान् यदभाषत तद् मया श्रुतम् । त्वयोक्तमेतत्तत्त्वमुपाध्यायाः न जानन्ति । यदि विदुस्तर्हि किं न ब्रूयुः ॥ ५६ ॥ अतः उपाध्यायगतः संशयस्त्वया छिन्नः । अत्र तु कश्चित् संशयो वर्तते ॥५७॥ संशयमाह । हे नारद ! नरो येन देहेन कर्माण्यारभते तं देहं त्यक्त्वा परलोकेऽन्यदेहेनोपभुक्तानि प्राप्नोति॥५८॥इति ज्ञानिनां वादस्तत्रतत्र दृश्यते॥५९॥नारद उवाच ॥ हे नृप ! येनैव मनः प्रधानेन लिङ्गदेहेनेह कर्मारभते तेनैव देहेनामुत्र भुङ्क्ते॥६०॥स्वप्ने यथा पुरुषः शयानमिमं जाग्रद्देहं श्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वा मनसि

प्राचीनबर्हिरुवाच ॥ श्रुतमन्वीक्षितं ब्रह्मन्भगवान्यदभाषत ॥ नैतज्जानन्त्युपाध्यायाः किं न ब्रूयुर्विदुर्यदि ॥५६॥ संशयोऽत्र तु मे विप्र संछिन्नस्तत्कृतो महान् ॥ ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥५७॥कर्माण्यारभते येन पुमानिह विहाय तम् ॥ अमुत्रान्येन देहेन जुष्टानि स यदश्नुते ॥५८॥ इति वेदविदां वादः श्रूयते तत्र तत्र ह ॥ कर्म यत्क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥५९॥ नारद उवाच ॥ येनैवारभते कर्म तेनैवामुत्र तत्पुमान् ॥ भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वयम् ॥६०॥ शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा ॥ कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६१ ॥ ममैते मनसा यद्यदसावहमिति ब्रुवन्॥ गृह्णीयात्तत्पुमान्राद्धं कर्म येन पुनर्भवः ॥६२॥ यथाऽनुमीयते चित्तमुभयैरिन्द्रियेहितैः ॥ एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥६३॥ नानुभूतं क्व चानेन देहेनादृष्टमश्रुतम् ॥ कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥६४॥ तेनास्य तादृशं राजँल्लिङ्गिनो देहसंभवम् ॥ श्रद्धत्स्वाननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति ॥६५॥

संस्काररूपेणाहितं भुङ्क्ते तथा लोकान्तरेऽपि ॥ ६१ ॥ ममैते पुत्रादयोऽसावहमिति ब्रुवन् मनसा देहात् सिद्धं कर्म गृह्णीयात् येन कर्मणा पुनर्भवो भवति ॥ ६२ ॥ ज्ञानकर्मेन्द्रियचेष्टितैर्यथा चित्तमनुमीयते तथा चित्तवृत्तिभिः प्राग्देहजं कर्म लक्ष्यते ॥ ६३ ॥ वर्त्तमानदेहेन कुत्रचिदप्यनुपभुक्तमदृष्टमश्रुतं च यद्रूपं स्वप्नमनोरथादिषु लभ्यते तज्जीवस्य पूर्वदेहसंभवं मन्यस्व ॥ ६४ ॥ ६५ ॥



१ वेदोक्तम् । २ अनन्तरक्षण एवादृश्यं सन्न प्रकाशते ।

किंच मन एव मनुष्यस्य भूतविरूपाणि शंसति ॥ ६६ ॥ यथाऽत्रादृष्टमश्रुतं क्वचित् मनसि दृश्यते । तद्दर्शनं देशकालक्रियाश्रयमनुमन्तव्यम्॥६७॥सर्वे इन्द्रियगोचराः क्रमानुरोधेन मनस्यायान्ति यान्ति च॥६८॥मनसि सत्त्वैकनिष्ठे सति विश्वमिदं संयोगमिव प्राप्य भासते । चन्द्रे संयोगं प्राप्य राहुरिव ॥ ६९ ॥ यावत् बुद्धिमनइन्द्रियसमूहस्तावत् ममेति भावो जीवे न छिन्नो भवति ॥ ७० ॥ सुषुप्तिमूर्छोपतापेष्वहमिति ज्ञानं न प्रकाशते ॥ ७१ ॥ तरुणस्य यदैकादशेन्द्रियैः स्फुटं लिङ्गं दृश्यते तदा गर्भे बाल्येऽपि प्राणायननामसम्पूर्णत्वात् न

मन एव मनुष्यस्य पूर्वरूपाणि शंसति ॥ भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ ६६ ॥ अदृष्टमश्रुतं चात्र क्वचिन्मनसि दृश्यते॥ यथा तथाऽनुमन्तव्यं देशकालक्रियाश्रयम्॥६७॥ सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः ॥ आयान्ति वर्गशो यान्ति सर्वे समनसो जनाः ॥ ६८ ॥ सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि ॥ तमश्चन्द्रमसीवेदमुपरज्यावभासते ॥६९॥ नाहं ममेति भावोऽयं पुरुषे व्यवधीयते ॥ यावद् बुद्धिमनोऽक्षार्थगुणव्यूहो ह्यनादिमान् ॥ ७० ॥ सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः ॥ नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ॥ ७१॥ गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा ॥ लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथा ॥७२॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ७३ ॥ एवं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तृतम् ॥ एष चेतनया युक्तो जीव इत्यभिधीयते ॥७४॥ अनेन पुरुषो देहानुपादत्ते विमुञ्चति ॥ हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥ ७५ ॥

दृश्यते यथाऽमावास्यायां चन्द्रमसो रूपम् ॥७२॥ अर्थेऽविद्यमानेऽपि जन्म मरणं च न निवर्तते । यथा विषयान् ध्यायतः स्वप्नेऽनर्थागमः ॥७३॥ एवं पञ्चतन्मात्रात्मकं षोडशविकारात्मना विस्तृतं त्रिगुणं लिङ्गशरीरं कथ्यते । तस्मिन् शरीरे चेतनया युक्तो जीवः इति कथ्यते ॥ ७४ ॥ जीवोऽनेन लिङ्गदेहेन देहान् गृह्णाति मुञ्चति हर्षशोकादिकं च विन्दति ॥ ७५ ॥

१ व्यूहः परिणामो लिङ्गम् । २ उपतापः इष्टवियोगादिदुःखम् । ३ प्राणायनमिन्द्रियम् ।

यथा तृणजलूका पूर्वंतृणमत्यक्त्वा परं याति तथा जनो म्रियमाणोऽपि प्राग्देहाभिमतिं न त्यजति ॥ ७६ ॥ हे राजन् ! भूतानां मन एव बन्धमोक्षयोः कारणम् ॥ ७७ ॥ तदा जीवः इन्द्रियैरुपभुक्तान् ध्यायन्नसकृत कर्माणि संपादयते। तदाऽविद्यायां सत्यां जीवस्य कर्मणि बन्धो भवति ॥ ७८ ॥ अतो विश्वं तदात्मकं पश्यन् सर्वात्मना हरिं भज ॥७९॥ मैत्रेय उवाच ॥ हे विदुर ! भगवान् नारदः प्राचीनबर्हिषे जीवेश्वरयोर्गतिं प्रदर्श्यामन्त्य सिद्धलोकं जगाम ॥ ८० ॥ राजा प्रजारक्षणेपुत्रानादिश्य कपिलाश्रमं गत्वा ॥ ८१ ॥ तत्र भक्त्या गोविन्द-

यथा तृणजलूकेयं नापयात्यपयाति च ॥ न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ॥७६॥ यावदन्यं न विन्देत व्यवधानेन कर्मणाम् ॥ मन एव मनुष्येन्द्र भूतानां भवभावनम् ॥ ७७ ॥ यदाऽक्षैश्चरितान्ध्यायन्कर्माण्याचिनुतेऽसकृत् ॥ सति कर्मण्यविद्यायां बन्धः कर्मण्यनात्मनः ॥ ७८ ॥ अतस्तदपवादार्थं भज सर्वात्मना हरिम् ॥ पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥ ७९ ॥ मैत्रेय उवाच ॥ भागवतमुख्यो भगवान्नारदो हंसयोर्गतिम् ॥ प्रदर्श्य ह्यमुमामन्त्र्य सिद्धलोकं ततोऽगमत् ॥८०॥ प्राचीनबर्हीं राजर्षिः प्रजासर्गाभिरक्षणे ॥ आदिश्य पुत्रानगमत्तपसे कपिलाश्रमम् ॥८१॥ तत्रैकाग्रमना वीरो गोविन्दचरणाम्बुजम् ॥ विमुक्तसङ्गोऽनुभजन्भक्त्या ॥ तत्साम्यतामगात् ॥८२॥ एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ ॥ यः श्रावयेद्यः शृणुयात्स लिङ्गेन विमुच्यते ॥८३॥ एतन्मुकुन्दयशसा भुवनं पुनानं देवर्षिवर्यमुखनिस्सृतमात्मशौचम् ॥ यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं नास्मिन्भवे भ्रमति मुक्तसमस्तबन्धः ॥८४॥ अध्यात्मपारोक्ष्यमिदं मयाऽधिगतमद्भुतम् ॥ एवं स्त्रियाऽऽश्रमः पुंसश्छिन्नोऽमुत्र च संशयः ॥८५॥ इति श्रीभागवते महापुराणे चतुर्थस्कन्धे प्राचीनबर्हिर्नारदसंवादे कर्मनिन्दाध्यात्मज्ञानयोर्वर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

चरणाम्बुजं भजन् तत्साम्यतामगात् ॥८२॥ एतत् यः शृणुयात् श्रावयेद्वा स लिङ्गशरीरेण मुच्यते ॥ ८३ ॥ किंच एतत् देवर्षिवर्यमुखनिस्सृतं भगवद्यशोयुक्तं यः पठेत् स मुक्तबन्धः सन् संसारे पुनर्न भ्रमति ॥ ॥ ८४ ॥ हे विदुर ! मयेदमध्यात्मपारोक्ष्यं प्राप्तम्। एवं पुनरमुत्र कर्मफलभोगः कथमिति संशयः छिन्नः ॥ ८५ ॥ इति श्रीभागव० महा० चू० चतुर्थ० एकोनत्रिंशोऽध्यायः ॥ २९ ॥

१ पूर्वंतृणमपरित्यज्यैव तृणान्तरधारणेन। २ स्त्रीवुद्धिस्तत्सहितस्याश्रमोऽहंकारः।

प्रसङ्गात् पञ्चभिः प्रोक्तं वृत्तं प्राचीनबर्हिषः । वर्ण्यते च पुनर्द्वाभ्यां प्रस्तुतं तत् प्रचेतसाम्॥१॥तत्र त्रिंशे तपस्तुष्टादीशाल्लब्धवरास्ततः॥आगत्य वार्क्षीमुद्वाह्य राज्यं चक्रुरितीर्यते॥२॥विदुर उवाच॥हे ब्रह्मन्! बर्हिषःपुत्राः दश प्रचेतसस्त्वया ये पूर्वं कथितास्ते रुद्रगीतेन हरिं संतोष्य कां सिद्धिं प्रापुः ॥ १ ॥ ते यदृच्छया शिवं प्राप्य शिवेनानुगृहीताः सन्तो नूनं मोक्षं प्रापुरेव । तत्पूर्वं किं प्रापुः ॥२॥ मैत्रेय उवाच ॥ ते प्रचेतसः समुद्रे

विदुर उवाच ॥ ये त्वयाऽभिहिता ब्रह्मन्सुताः प्राचीनबर्हिषः ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥ १ ॥ किं बार्हस्पत्येह परत्र वाऽथ कैवल्यनाथप्रियपार्श्ववर्तिनः ॥ आसाद्य देवं गिरिशं यदृच्छया प्रापुः परं नूनमथ प्रचेतसः ॥ ॥२॥ मैत्रेय उवाच ॥ प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः ॥ जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥३॥ दशवर्षसहस्रान्ते पुरुषस्तु सनातनः ॥ तेषामाविरभूत्कृच्छ्रं शान्तेन शमयन्रुचा ॥ ४ ॥ सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः ॥ पीतवासा मणिग्रीवः कुर्वन्वितिमिरा दिशः ॥ ५ ॥ काशिष्णुना कनककर्णविभूषणेन भ्राजत्कपोलवदनो विलसत्किरीटः ॥ अष्टायुधैरनुचरैर्मुनिभिः सुरेन्द्रैरासेवितो गरुडकिन्नरगीतकीर्तिः ॥ ६ ॥ पीनायताष्टभुजमण्डलमध्यलक्ष्म्या स्पर्धच्छ्रिया[1] परिवृतो वनमालयाऽऽद्यः ॥ बर्हिष्मतः पुरुष आह सुतान्प्रपन्नान्पर्जन्यनादरुतया सघृणावलोकः ॥ ७ ॥ श्रीभगवानुवाच ॥ वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः ॥ सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः ॥ ८ ॥ योऽनुस्मरति संध्यायां युष्माननुदिनं नरः ॥ तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम् ॥ ९ ॥

स्थित्वा जपयज्ञेन परमात्मानं तोषयामासुः॥३॥ततो भगवान् दशवर्षसहस्रान्ते स्वतेजसा तेषां क्लेशं शमयन्॥४॥ गरुडारूढः पीतवासाः मणिग्रीवः ॥५॥ विलसत्किरीटोऽष्टायुधैर्मुनिभिश्च सेवितः ॥६॥ अष्टभुजो वनमालया परिवृतः आद्यः पुरुषः आविर्भूय प्राह॥७॥ श्रीभगवानुवाच॥हे नृपनन्दनाः! युष्माकं भद्रं वरं वृणीध्वं बन्धूनां सौहृदं दृष्ट्वा तुष्टोऽस्मि॥८॥यः सन्ध्यायां नित्यं युष्मान् स्मरति भ्रातृषु साम्यं भविष्यति॥९॥

[1] लक्ष्म्या स्पर्धमाना श्रीर्यस्याः सा तया ।

ये तु मां सायंप्रातः रुद्रगीतेन स्तुवन्ति तेभ्यस्तेषामभीष्टं सद्बुद्धिं च दास्ये॥१०॥यूयं पितुराज्ञां कृतवन्तः। अतो वः कीर्तिर्लोकान् व्याप्स्यति ॥११॥ युष्माकमेको विश्रुतः पुत्रो भविता यः आत्मसंतानेन त्रिलोकीं पूरयिष्यति ॥१२॥ किंच कण्डोः ऋषेः सकाशात् प्रम्लोचायामप्सरसि कन्यां वृक्षाः जगृहुः ॥१३॥ ततः सोमो रुदत्यास्तस्या मुखेऽमृतवर्षिणीं तर्जनीं निदधे ॥१४॥ तां यूयमुद्वहत। मा चिरयत॥१५॥किंच अपृथ-

ये तु मां रुद्रगीतेन सायंप्रातः समाहिताः ॥ स्तुवन्त्यहं कामवरान्दास्ये प्रज्ञां च शोभनाम् ॥ १० ॥ यद्यूयं पितुरादेशमग्रहीष्ट मुदाऽन्विताः ॥ अथो व उशती कीर्तिर्लोकाननुभविष्यति ॥ ११ ॥ भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः ॥ य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति ॥ १२ ॥ कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना ॥ तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः ॥ १३ ॥ क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् ॥ देशिनीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥ प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तता ॥ तत्र कन्यां वरारोहां तामुद्वहत मा चिरम् ॥ १५ ॥ अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा ॥ अपृथग्धर्मशीलेयं भूयात्पत्न्यर्पिताशया ॥ १६ ॥ दिव्यवर्षसहस्राणां सहस्रमहतौजसः ॥ भौमान्भोक्ष्यथ भोगान्वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥ अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः ॥ उपयास्यथ मद्धाम निर्विद्य निरयादतः ॥ १८ ॥ गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् ॥ मद्वार्तायातयामानां न बन्धाय गृहा मताः ॥ १९ ॥ नव्यवद्धृदये यज्ज्ञो ब्रह्मैतद्ब्रह्मवादिभिः ॥ न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥ २० ॥

ग्धर्मशीलानां सर्वेषां वोऽपृथग्धर्मशीलेयमेका पत्नी भूयात् ॥१६॥ तया सह दिव्यवर्षसहस्राणां सहस्रं १०००००० भौमान् दिव्यांश्च भोगान् मदनुग्रहात् भोक्ष्यथ ॥१७॥ ततो मयि भक्तिं कृत्वा मां यास्यथ ॥१८॥ गृहेष्वपि स्थितानां मद्वार्तया गतकालानां पुंसां गृहधर्माः बन्धाय न भवन्ति ॥१९॥ ये मां प्राप्तास्ते मोहहर्षशोकान् न प्राप्नुवन्ति ॥ २० ॥



१ अव्यङ्गः। २ त्यक्ताम्। ३ अर्पितो युष्मास्वाशयो यया सा। ४ दग्धकामादिमलं आशयो येषां ते। ५ नूतनवत् हृदये प्रविशामि। ६ यत् यस्मात्कथाश्रवणात्। ७ ज्ञः सर्वज्ञः अहम्। ८ प्रवक्तृभिः निमित्तभूतैः। ९ यतः यं माम्।

मैत्रेय उवाच ॥ एवं भगवद्वाक्यं श्रुत्वा प्रचेतसः प्राञ्जलयो हरिं तुष्टुवुः ॥ २१ ॥ प्रचेतस ऊचुः ॥ क्लेशविनाशनाय मनोवचसोरगोचराय नमो नमः ॥२२॥ शुद्धाय शान्ताय ब्रह्मविष्णुरुद्रमूर्तये ॥२३॥ विशुद्धसत्त्वरूपाय वासुदेवाय कृष्णाय ॥२४॥ कमलनाभाय कमलमालिने नमः ॥२५॥पीताम्बरधराय सर्वभूतनिवासाय तुभ्यं नमः ॥२६॥ हे जगत्पते ! भवता सर्वक्लेशसंक्षयं रूपं प्रकटितम् । अतोऽस्माकमयमेवानुग्रहः

मैत्रेय उवाच ॥ एवं ब्रुवाणं पुरुषार्थभाजनं जनार्दनं प्राञ्जलयः प्रचेतसः ॥ तद्दर्शनध्वस्ततमोरजोमला गिराऽगृणन्गद्गदया सुहृत्तमम् ॥ २१ ॥ प्रचेतस ऊचुः ॥ नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय[1] ॥ मनोवचोवेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने[2] नमः ॥ २२ ॥ शुद्धाय शान्ताय नमः स्वनिष्ठया मनस्यपार्थं विलसद्द्वयाय[3] ॥ नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय[4] ॥ २३ ॥ नमो विशुद्धसत्त्वाय हरये हरिमेधसे[5] ॥ वासुदेवाय कृष्णाय प्रभवे सर्वसात्त्वताम् ॥२४॥ नमः कमलनाभाय नमः कमलमालिने ॥ नमः कमलपादाय नमस्ते कमलेक्षण ॥ २५ ॥ नमः कमलकिञ्जल्कपिशङ्गामलवाससे ॥ सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे ॥ २६ ॥ रूपं भगवता त्वेतदशेषक्लेशसंक्षयम् ॥ आविष्कृतं नः क्लिष्टानां किमन्यदनुकम्पितम् ॥२७॥ एतावदेव प्रभुभिर्भाव्यं दीनेषु वत्सलैः ॥ यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धन ॥२८॥ येनोपशान्तिर्भूतानां क्षुल्लकानामपीहताम् ॥ अन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः ॥ २९ ॥ असावेव वरोऽस्माकमीप्सितो जगतः पते ॥ प्रसन्नो भगवान्येषामपवर्गगुरुर्गतिः ॥ ३० ॥

॥२७॥ हे अमङ्गलनाशन ! अस्मदीयाः एते इत्यनुस्मरणमात्र दीनवत्सलैः समर्थैः कार्यम् । त्वया तु रूपमपि दर्शितम् ॥२८॥ हे ईश ! सर्वभूतानां हृदये स्थितो भवानस्माकमभिप्रायं न वेद किम् ॥२९॥ हे जगत्पते ! त्वत्प्रसादो यो जातः अयमेवास्माकं वरः इष्टः ॥ ३० ॥

---

१ वेदैः सकलसाधनत्वेन निरूपिताः गुणाः नामानि च यस्य तस्मै । २ अतीन्द्रियाय । ३ मनसि निमित्तभूते व्यर्थमेव । ४ स्फुरितं द्वयं यस्मिन् तस्मै । ५ विग्रहाः ब्रह्मादिमूर्तयः । ६ संसारहारिज्ञानं यस्य तस्मै ।

हे नाथ ! अन्यं वरं वृणीमहे ॥३१॥ यथा भ्रमरः पारिजाते प्राप्तेऽन्यवृक्षं न सेवते तथा वयं त्वच्चरणं प्राप्य किं वृणीमहि ॥ ३२ ॥ तथाऽपीह कर्मभिर्यावद् भ्रमामस्तावत् त्वद्भक्तानां सङ्गः जन्मनि जन्मन्यस्तु॥३३॥भगवत्सङ्गिसङ्गस्य लवेन समं स्वर्गं मोक्षमपि न तुलयाम॥३४॥यत्र सत्सङ्गे स्वच्छकथाः सन्ति यत्कथाभ्यो भूतेषु वैराभावो भवति ॥ ३५ ॥ यत्कथासु साक्षान्नारायणो मुनिभिः स्तूयते ॥३६॥ तेषां समागमः

वरं वृणीमहेऽथापि नाथ त्वत्परतः परात् ॥ न ह्यन्तस्त्वद्विभूतीनां सोऽनन्त इति गीयसे ॥ ३१ ॥ पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यं न सेवते ॥ त्वदङ्घ्रिमूलमासाद्य साक्षात्किं किं वृणीमहि ॥ ३२ ॥ यावत्ते मायया स्पृष्टा भ्रमाम इह कर्मभिः ॥ तावद्भवत्प्रसङ्गानां संगः स्यान्नो भवे भवे ॥ ३३ ॥ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ॥ भगवत्संगिसंगस्य मर्त्यानां किमुताशिषः ॥ ३४ ॥ यत्रेडयन्ते कथा मृष्टास्तृष्णायाः प्रशमो यतः ॥ निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ ३५ ॥ यत्र नारायणः साक्षाद्भगवान्न्यासिनां गतिः ॥ संस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः ॥३६॥ तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ॥ भीतस्य किं न रोचेत तावकानां समागमः ॥ ३७ ॥ वयं तु साक्षाद्भगवन्भवस्य प्रियस्य सख्युः क्षणसंगमेन ॥ सुदुश्चिकित्स्यस्य भवस्य मृत्योर्भिषक्तमं त्वाऽद्य गतिं गताः स्मः ॥ ३८ ॥ यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदाऽनुवृत्त्या ॥ आर्या नताः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनसूययैव ॥ ३९ ॥ यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु ॥ सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ॥ ४० ॥ मनुः स्वयंभूर्भगवान्भवश्च येऽन्ये तपोज्ञानविशुद्धसत्त्वाः ॥ अदृष्टपारा अपि यन्महिम्नः स्तुवन्त्यथो त्वाऽऽत्मसमं गृणीमः ॥ ४१ ॥

संसारात् भीतस्य किं न रोचेत ॥३७॥ अहो वयं शिवस्य क्षणसंगेन मृत्युरोगघ्नं त्वां वैद्यं प्राप्ताः स्मः ॥३८॥ किंच यद्यत् नः स्वधीतं गुरुविप्रवृद्धाः प्रसादितास्तपः सुतप्तं तत् सर्वं तव सन्तोषायास्तु ॥ ३९ ॥ ४० ॥ मनुब्रह्मशिवादयस्तकादृष्टपारास्त्वां स्तुवन्ति ॥ ४१ ॥

१ निरन्नानाम् । २ बहुकालम् ।

अतः शुद्धाय श्रीवासुदेवाय तुभ्यं नमः ॥४२॥ मैत्रेय उवाच ॥ इति प्रचेतोभिरभिरष्टुतो हरिस्तथाऽस्त्वित्युक्त्वा स्वधाम ययौ ॥४३॥ ततः प्रचेतसः समुद्रजलात् बहिर्निर्गत्य द्रुमैर्व्याप्तां महीं वीक्ष्य ॥४४॥ मुखतोऽग्निमारुतावुत्पाद्य वृक्षान् दग्धुमारेभिरे ॥४५॥ तदा ब्रह्मा दह्यमानान् वृक्षान् वीक्ष्य तत्रैत्य ॥४६॥ वृक्षेभ्यः कन्यां गृहीत्वा क्रोधशान्त्यै तेभ्यो ददौ ॥४७॥ ते प्रचेतसो ब्रह्माज्ञया वार्क्षीनाम्नीं कन्यामुपयेमिरे ।

नमः समाय शुद्धाय पुरुषाय पराय च ॥ वासुदेवाय सत्त्वाय तुभ्यं भगवते नमः ॥ ४२ ॥ मैत्रेय उवाच ॥ इति प्रचेतोभिरभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः ॥ अनिच्छतां यानमतृप्तचक्षुषां ययौ स्वधामानपवर्गवीर्यः ॥४३॥ अथ निर्याय सलिलात्प्रचेतस उदन्वतः ॥ वीक्ष्याकुप्यन्द्रुमैश्छन्नां गां गां रोद्धुमिवोच्छ्रितैः ॥४४॥ ततोऽग्निमारुतौ राजन्नमुञ्चन्मुखतो रुषा ॥ महीं निर्वीरुधं कर्तुं संवर्तक इवात्यये ॥ ४५ ॥ भस्मसात्क्रियमाणांस्तान्द्रुमान्वीक्ष्य पितामहः ॥ आगतः शमयामास पुत्रान्बर्हिष्मतो नयैः ॥४६॥ तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा ॥ उज्जह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयंभुवा ॥ ४७ ॥ ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे ॥ यस्यां महदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥ चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते ॥ यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥ ४९ ॥ यो जायमानः सर्वेषां तेजस्तेजस्विनां रुचा ॥ स्वयोपादत्त दाक्ष्याच्च कर्मणां दक्षमब्रुवन् ॥ ५० ॥ तं प्रजासर्गरक्षायामनादिरभिषिच्य च ॥ युयोज युयुजेऽन्यांश्च स वै सर्वप्रजापतीन् ॥ ५१ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कन्धे प्रचेतसां गृहे दक्षोत्पत्तिवर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

तस्या दक्षो ब्रह्मपुत्रः शिवापमानात् क्षत्रियवंशे पुनर्जातः ॥४८॥ यश्चाक्षुषमन्वन्तरे प्राप्ते पूर्वदेहे कालेन नष्टे सति भगवता प्रेरितः सन् प्रजाः ससर्ज स दक्ष इति प्रसिद्धः ॥ ४९ ॥ किंच यो जायमानः सन् सर्वतेजस्विनां तेजः स्वतेजसाऽऽच्छादितवान् । यं च कर्मदाक्ष्यात् दक्षं जगदुः ॥५०॥ तं दक्षं यथाकालं प्रजासर्गरक्षायां ब्रह्माऽभ्यषेचयत् ॥५१॥ इति श्रीभागवते चूर्णिकायां चतुर्थस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

---

१ अजनयोनिजो ब्रह्मपुत्रः ।

एकत्रिंशे सुते दक्षे धुरं न्यस्य वने सताम् ॥ नारदोक्तेन मार्गेण मुक्तिरुक्ता प्रचेतसाम् ॥ १ ॥ मैत्रेय उवाच ॥ दिव्यवर्षसहस्राणां सहस्रस्यान्ते उत्पन्नविज्ञानास्ते प्रचेतसोऽधोक्षजभाषितं स्मरन्तः पुत्रे भार्यां समर्प्य गृहात् निर्गत्य ॥ १ ॥ पश्चिमदिशि समुद्रतटे यत्र जाजलिर्नाम ऋषिः सिद्धो बभूव तत्र गत्वाऽऽत्मविमर्शेन कृतसंकल्पाः बभूवुः ॥२॥ तान् परब्रह्मणि योजितात्मनो ज्ञात्वा नारदो ययौ ॥३॥ ते प्रचेतसः आगतं नारदं दृष्ट्वोत्थाय

मैत्रेय उवाच ॥ तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् ॥ स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन्गृहात् ॥ १ ॥ दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा ॥ प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः ॥ २ ॥ तान्निर्जितप्राणमनोवचोदृशो जितासनाञ्छान्तसमानविग्रहान् ॥ परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः ॥ ३ ॥ तमागतं त उत्थाय प्रणिपत्याभिनन्द्य च ॥ पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ॥ ४ ॥ प्रचेतस ऊचुः ॥ स्वागतं ते सुरर्षेऽद्य दिष्टया नो दर्शनं गतः ॥ तव चंक्रमणं ब्रह्मन्नभयाय यथा रवेः ॥५॥ यदादिष्टं भगवता शिवेनाधोक्षजेन च ॥ तद् गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो ॥६॥ तन्नः प्रद्योतयाध्यात्मज्ञानं तत्त्वार्थदर्शनम् ॥ येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम् ॥ ७ ॥ मैत्रेय उवाच ॥ इति प्रचेतसां पृष्टो भगवान्नारदो मुनिः ॥ भगवत्युत्तमश्लोक आविष्टात्माऽब्रवीन्नृपान् ॥ ८ ॥ नारद उवाच ॥ तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ॥ नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः ॥ ९ ॥

प्रणम्य पूजयित्वोचुः ॥४॥ प्रचेतस ऊचुः । हे सुरर्षे ! तुभ्यं स्वागतं तव चंक्रमणं सर्वेषामभयाय ॥५॥ हे मुने ! पूर्वं भगवता शिवेन च यदात्मतत्त्वं कथितं तत गृहेषु सक्तानां नः प्रायो विस्मृतम् ॥६॥ अतस्तदध्यात्मज्ञानं नः प्रकाशय येन भवाब्धिं तरिष्यामः ॥७॥ मैत्रेय उवाच ॥ एवं प्रचेतोभिः पृष्टो नारदस्तानाह ॥८॥ नारद उवाच ॥ हे प्रचेतसः ! येन हरिः सेव्यते तज्जन्म तानि कर्माणि तदेव मनस्तदेवायुः ॥ ९ ॥



१ तेष्वात्मेति बुद्धिर्यस्मिन् तेन ।

इह शौक्लसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिः किम् ॥१०॥ अहो श्रुतेन तपसा निपुणबुद्ध्या ॥११॥ योगेन सांख्येन त्यागेनान्यैः श्रेयोभिश्च किं यत्रात्मप्रदो हरिर्न ॥१२॥ अहो सर्वेषामपि भूतानां हरिरात्मदः प्रियः ॥ १३ ॥ यथा तरोर्मूलनिषेचनेन स्कन्धशाखाद्यास्तृप्यन्ति तथाऽच्युतेज्यया सर्वदेवतानामर्चनं भवति ॥ १४ ॥ यथा जलानि सूर्यात् वर्षाकाले उद्भवन्ति ग्रीष्मे तस्मिन्नेव प्रविशन्ति तथा हरौ चेतनात्मकः

किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः ॥ कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥१०॥ श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः ॥ बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ ११ ॥ किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि ॥ किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥१२॥ श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थतः ॥ सर्वेषामपि भूतानां हरिरात्माऽऽत्मदः प्रियः ॥ १३ ॥ यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ॥ प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ १४ ॥ यथैव सूर्यात्प्रभवन्ति वारः पुनश्च तस्मिन्प्रविशन्ति काले ॥ भूतानि भूमौ स्थिरजङ्गमानि तथा हरावेव गुणप्रवाहः ॥ १५ ॥ एतत्पदं तज्जगदात्मनः परं सकृद्विभातं सवितुर्यथा प्रभा ॥ यथाऽसवो जाग्रति सुप्तशक्तयो द्रव्यक्रियाज्ञानभिदाभ्रमात्ययः ॥ १६ ॥ यथा नभस्यभ्रतमःप्रकाशा भवन्ति भूपा न भवन्त्यनुक्रमात् ॥ एवं परे ब्रह्मणि शक्तयस्त्वमू रजस्तमस्सत्त्वमिति प्रवाहः ॥ १७ ॥ तेनैकमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् ॥ स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा * ॥ १८ ॥

प्रपञ्चः ॥ १५ ॥ किंच एतद् विश्वं विष्णोः परं पदं ततः उत्पन्नत्वात् ततः पृथङ् न ॥ १६ ॥ यथा नभसि मेघतमःप्रकाशा भवन्ति न भवन्ति एवं ब्रह्मणि शक्तयः उद्भवन्ति लीयन्ते ॥ १७ ॥ अतः सर्वात्मानमीश्वरमात्मैकभावेन भजध्वम् ॥ १८ ॥

---

१ शुक्लसंबन्धि जन्म शुद्धमातापितृशुक्लाभ्यामुत्पत्तिः— सावित्रमुपनयनेन जन्म—याज्ञिकं दीक्षा । २ विबुधानामिव दीर्घायुषा । ३ राधः पाटवम् । ४ द्रव्यादीनां त्रिविधाहंकारकार्याणां तन्निमित्तस्यभिदाभ्रमस्य चात्ययो यस्मात्सः । * निरस्तसंकल्पविकल्पमद्वयं ह्वयात्मवादे परमात्मलम्भनम् । अनादिमध्यान्तमजलनिर्वृतिं संज्ञप्तिमात्रं भजथामुया दृशा ॥ इत्यधिकः पाठः ।

सर्वभूतेषु दयया येन केन संतुष्ट्या सर्वेन्द्रियोपशान्त्या च हरिस्तुष्यति ॥ १९ ॥ हरिर्भक्ताधीनत्वमवगच्छन् सतां मनसि सदैव तिष्ठति नापयाति ॥ २० ॥ ये शास्त्रधनादिमदैः साधुषु तिरस्कारं कुर्वन्ति तेषां पूजामपि हरिर्न गृह्णाति ॥ २१ ॥ सकामान् नरेन्द्रान् देवानपि यो नानुवर्तते यतः स स्वेनैव पूर्णः स्वभक्तानुरक्त एव । एवंभूतं तं कस्त्यजेत् ॥ २२ ॥ मैत्रेय उवाच ॥ इति तान् श्रावयित्वा नारदो ब्रह्मलोकं

दयया सर्वभूतेषु संतुष्टया येन केन वा ॥ सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ १९ ॥ अपहतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः ॥ निजजनवशगत्वमात्मनोऽयं न सरति छिद्रवदक्षरः सतां हि ॥२०॥ न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः ॥ श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिंचनेषु सत्सु ॥२१॥ श्रियमनुचरतीं तदर्थिनश्च द्विपदपतीन्विबुधांश्च यत्स्वपूर्णः ॥ न भजति निजभृत्यवर्गतन्त्रः कथममुमुद्विसृजेत्पुमान्कृतज्ञः ॥ २२ ॥ मैत्रेय उवाच ॥ इति प्रचेतसो राजन्नन्याश्च भगवत्कथाः ॥ श्रावयित्वा ब्रह्मलोकं ययौ स्वायंभुवो मुनिः ॥२३॥ तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम् ॥ हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः ॥२४॥ एतत्तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान् ॥ प्रचेतसां नारदस्य संवादं हरिकीर्तनम् ॥ २५ ॥ श्रीशुक उवाच ॥ य एष उत्तानपदो मानवस्यानुवर्णितः ॥ वंशः प्रियव्रतस्यापि निबोध नृपसत्तम ॥ २६ ॥ यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ॥ भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात्पदम् ॥ २७ ॥

ययौ ॥ २३ ॥ तेऽपि प्रचेतसो नारदवचः श्रुत्वा हरिपदं ध्यायन्तस्तद्गतिं ययुः ॥ २४ ॥ हे विदुर ! यत् त्वं मां पृष्टवान् तत् ते प्रचेतसां नारदस्य संवादरूपं मयाऽऽख्यानं हरिकीर्तनरूपं कथितम् ॥ २५ ॥ श्रीशुक उवाच ॥ हे परीक्षित् ! एवं तुभ्यमुत्तानपदो वंशो वर्णितः ॥ इतः प्रियव्रतवंशं श्रुणु ॥ २६ ॥ यः प्रियव्रतो नारदादात्मविद्यां प्राप्य परं पदं जगाम ॥ २७ ॥

१ एषणाः कामाः । २ उपहूतः सन्निधापितः । ३ हृदाकाशवत् नापयाति । ४ अधनाश्च ते आत्मधनाश्च तेषां प्रियः ।

विदुर इमां मैत्रेयवर्णितां हरिसत्कथां श्रुत्वा भक्त्या हरेश्चरणं हृदा दधार। मुनेश्चरणं मूर्ध्ना धृत्वा पुनरपि जगाद ॥ २८ ॥ विदुर उवाच ॥ हे महायोगिन्! करुणात्मना भवता तमसः पारो दर्शितः ॥ २९ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा विदुरो मैत्रेयमामन्त्र्य स्वज्ञातीनां दिदृक्षया

इमां तु कौषारविणोपवर्णितां क्षत्ता निशम्याजितवादसत्कथाम् ॥ प्रवृद्धभावोऽश्रुकलाकुलो मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः ॥ २८ ॥ विदुर उवाच ॥ सोऽयमद्य महायोगिन्भवता करुणात्मना ॥ दर्शितस्तमसः पारो यत्राकिंचनगो-हरिः ॥ २९ ॥ श्रीशुक उवाच ॥ इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम् ॥ स्वानां दिदृक्षुःप्रययौ ज्ञातीनां निर्वृताशयः ॥३०॥ एतद्यःश्रृणुयाद्राजन्राज्ञां हर्यर्पितात्मनाम् ॥ आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात् ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां चतुर्थस्कधे प्राचेतसोपाख्यानं नामैक-त्रिंशोऽध्यायः ॥ ३१ ॥

हस्तिनापुरं ययौ ॥ ३० ॥ हे राजन्! एतद् यः शृणुयात् स आयुर्धनं यशो मङ्गलमैश्वर्यं च प्राप्नुयात् ॥ ३१ ॥ इति श्रीमद्भागवते महा-पुराणे चूर्णिकायां चतुर्थस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

समाप्तोऽयं चतुर्थः स्कन्धः ॥ ४ ॥

---

१ निरस्तोपाधीन्स्वभक्तान्प्रति गच्छतीति तथा। २ प्रसन्नहृदयः।

---

इदं पुस्तकं क्षेमराज-श्रीकृष्णदास श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गल्ली खम्बाटा लैन ) स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणागारेऽङ्कयित्वा प्रकाशितम्।

## पंचमस्कंधः



शुक
परीक्षित
राजाप्रियव्रत
नारद
ब्रह्मा
नाभि
विष्णु
ऋषि
पुष्कर
दधि
शाक
क्षीर
क्रौंच
घृत
कुश
सुरा
शाल्मली
इक्षु
प्लक्ष
जम्बु
मेरु
रहूगणराजा
जडभरत
भरत
चोर
भरत
हरिण

श्रीकृष्णाय नमः ॥ षड्विंशत्याऽधुनाऽध्यायैः पञ्चमे स्थानमीर्यते ॥ तत्र तु प्रथमेऽध्याये ज्ञानिनो राज्यनिर्वृतिः ॥ पुनश्च ज्ञाननिष्ठेति प्रियव्रतकथाऽद्भुता ॥ १ ॥ राजोवाच ॥ मुने ! भागवतः आत्मारामः प्रियव्रतो गृहे कथं रेमे ? यन्मूलः कर्मबन्धः ॥ १ ॥ मुक्तसङ्गानां तादृशानां पुंसां गृहेषु प्रवेशो भवितुं नार्हति ॥ २ ॥ हे विप्रर्षे ! महतां कुटुम्बे स्पृहा मतिश्च न भवति ॥ ३ ॥ किंच स्त्रीपुत्रादिषु सक्तस्य मोक्षः

ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ प्रियव्रतो भागवत आत्मारामः कथं मुने ॥ गृहेऽरमत यन्मूलःकर्मबन्धः पराभवः ॥ १ ॥ न नूनं मुक्तसङ्गानां तादृशानां द्विजर्षभ ॥ गृहेष्वभिनिवेशोऽयं पुंसां भवितुमर्हति ॥ २ ॥ महतां खलु विप्रर्षे उत्तमश्लोकपादयोः ॥ छायानिर्वृतचित्तानां न कुटुम्बे स्पृहा मतिः ॥ ३ ॥ संशयोऽयं महान्ब्रह्मन्दारागारसुतादिषु ॥ सक्तस्य यत्सिद्धिरभूत्कृष्णे च मतिरच्युता ॥ ४ ॥ श्रीशुक उवाच ॥ बाढमुक्तं भगवत उत्तमश्लोकस्य श्रीमच्चरणारविन्दमकरन्दरस आवेशितचेतसो भागवतपरमहंसदयितकथां किंचिदन्तरायविहतां स्वां शिवतमां पदवीं न प्रायेण हिन्वन्ति ॥ ५ ॥ यर्हि वाव ह राजन्स राजपुत्रः प्रियव्रतः परमभागवतो नारदस्य चरणोपसेवयाऽञ्जसाऽवगतपरमार्थसतत्त्वो ब्रह्मसत्रेण दीक्षिष्यमाणोऽवनितलपरिपालनायाम्नातप्रवरगुणगणैकान्तभाजनतया स्वपित्रोपामन्त्रितो भगवति वासुदेव एवाव्यवधानसमाधियोगेन समावेशितसकलकारकक्रियाकलापो नैवाभ्यनन्दत् ॥ यद्यपि तदप्रत्याम्नातव्यं तदधिकरणे आत्मनोऽन्यस्मादसतोऽपि पराभवमन्वीक्षमाणः ॥ ६ ॥

कृष्णे मतिश्च कथम् ॥ ४ ॥ श्रीशुक उवाच ॥ भगवच्चरणे प्रवेशितचेतसो ये ते विघ्नेन विहता अपि भगवत्कथां स्वमार्गं न त्यजन्ति ॥ ५ ॥ हे राजन् ! स प्रियव्रतो मन्दराचलद्रोण्यां नारदस्य चरणोपसेवया ज्ञानं प्राप्तः सन् स्वपित्रा मनुना राज्यं शाधीति बोधितोऽपि राज्याधिकारात् स्वपराभवं मन्यमानो राज्यं नैच्छत् ॥ ६ ॥

---

१ स्वरूपतिरस्कारः । २ प्रियकथाम् । ३ 'विहताम्' इ० पा० । ४ यर्हि यदा । ५ परमार्थसतत्त्वम् आत्मयाथात्म्यम् । ६ आत्मध्यानेन । ७ आम्नाताः राजनीत्युक्ताः । ८ एकान्तं नियतम् । ९ कारकमिन्त्रियम् । १० पित्रोपतं न प्रत्याख्येयम् । ११ मिथ्याभूतादपि ।

तदा भगवान् ब्रह्मदेवो मरीच्यादिभिः सह सत्यलोकादवतीर्य ॥७॥ चन्द्र इव प्रकाशमानः पथि सिद्धगन्धर्वादिभिः स्तूयमानो गन्धमादनदरीं प्रकाशयन्नाजगाम ॥ ८ ॥ तदा हंसस्थं ब्रह्माणं दृष्ट्वा मनुप्रियव्रताभ्यां सह नारदः कृताञ्जलिः सहसैवोत्थाय स्तुत्या तं तुष्टाव ॥ ९ ॥ ब्रह्माऽपि सदयहासावलोकः सन् प्रियव्रतं जगाद ॥१०॥ ब्रह्मोवाच ॥ हे तात ! सत्यं ब्रवीमि । अप्रमेयं देवं दोषारोपेण द्रष्टुं नार्हसि । अहं शिवस्ते तातः

अथ ह भगवानादिदेव एतस्य गुणविसर्गस्य परिबृंहणानुध्यानव्यवसितसकलजगदभिप्राय आत्मयोनिरखिलनिगमनिजगणपरिवेष्टितः स्वभवनादवततार ॥७॥ स तत्र तत्र गगनतले उडुपतिरिव विमानावलिभिरनुपथममरपरिवृढैरभिपूज्यमानः पथि पथि च वरूथशः सिद्धगन्धर्वसाध्यचारणमुनिगणैरुपगीयमानो गन्धमादनद्रोणीमवभासयन्नुपससर्प ॥८॥ तत्र ह वा एवं देवर्षिर्हंसयानेन पितरं भगवन्तं हिरण्यगर्भमुपलभमानःसहसैवोत्थायार्हणेन सह पितापुत्राभ्यामवहिताञ्जलिरुपतस्थे ॥ ९ ॥ भगवानपि भारत तदुपनीतार्हणः सूक्तवाकेनातितरामुदितगुणगणावतारसुजयः प्रियव्रतमादिपुरुषस्तं सदयहासावलोक इति होवाच ॥ १० ॥ ब्रह्मोवाच ॥ निबोध तातेदमृतं ब्रवीमि माऽसूयितुं देवमर्हस्यप्रमेयम् ॥ वयं भवस्ते तत एष महर्षिर्वहाम सर्वे विवशा यस्य दिष्टम् ॥११॥ न तस्य कश्चित्तपसा विद्यया वा न योगवीर्येण मनीषया वा ॥ नैवार्थधर्मैः परतः स्वतो वा कृतं विहन्तुं तनुभृद्विभूयात् ॥ १२ ॥ भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदा भयाय ॥ सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनताऽङ्ग धत्ते ॥ १३ ॥



एष नारदः एते सर्वे पराधीनाः यस्याज्ञां वहामः ॥ ११ ॥ कश्चिज्जीवस्तपोविद्यायोगबुद्धिबलादिभिस्तस्य निर्मितमन्यथा कर्तुं न समर्थः ॥ १२ ॥ हे प्रियव्रत ! जीवसमूहो जन्ममरणाद्यर्थं सुखदुःखाय चेश्वरेण दत्तं देहयोगं सदा धत्ते ॥ १३ ॥

---

१ ह प्रसिद्धौ । २ समृद्धिः । ३ मूर्तिमद्भिर्वेदैः । ४ गणशः । ५ हंसयानेन उपलक्षणेन । ६ शोभनवाचा । ७ सुजयाः उत्कर्षाश्च यस्य सः । ८ सामादिबुद्धिबलेन ।

किंच सर्वे वयं यस्या वेदलक्षणायां तन्त्यां गुणकर्मदामभिर्बद्धाः सन्तस्तदिच्छया कर्म कुर्मः ॥ १४ ॥ गुणकर्मसङ्गाद् भगवता दत्तं सुख दुखं वा स्वीकुर्मः ॥ १५ ॥ अभिमानशून्यो मुक्तोऽपि यावत् प्रारब्धकर्म तावत् स्वदेहं बिभर्ति ॥ १६ ॥ अजितेन्द्रियस्य वनेष्वपि संसारः स्यात् । यतः षट्शत्रुसहितः आस्ते । जितेन्द्रियस्य गृहाश्रमो रागादिदोषं न करोति ॥ १७ ॥ यथा लोके नरो दुर्गाश्रयेण शत्रून्

यद्वाचि तन्त्यां गुणकर्मदामभिः सुदुस्तरैर्वत्स वयं सुयोजिताः ॥ सर्वे वहामो बलिमीश्वराय प्रोता नसीव द्विपदे चतुष्पदः ॥ १४ ॥ ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग दुःखं सुखं वा गुणकर्मसंगात् ॥ आस्थाय तत्तद्यदयुङ्क्त नाथश्चक्षुष्मताऽन्धा इव नीयमानाः ॥ १५ ॥ मुक्तोऽपि तावद्बिभृयात्स्वदेहमारब्धमश्नन्नभिमानशून्यः ॥ यथाऽनुभूतं प्रतियातनिद्रः किं त्वन्यदेहाय गुणान्न वृङ्क्ते ॥ १६ ॥ भयं प्रमत्तस्य वनेष्वपि स्याद्यतः स आस्ते सहषट्सपत्नः ॥ जितेंद्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किं नु करोत्यवद्यम् ॥ १७ ॥ यः षट् सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम् ॥ अत्येति दुर्गाश्रित ऊर्जितारीन्क्षीणेषु कामं विचरेद्विपश्चित् ॥१८॥ त्वं त्वब्जनाभाङ्घ्रिसरोजकोशदुर्गाश्रितो निर्जितषट्सपत्नः॥ भुङ्क्ष्वेह भोगान्पुरुषातिदिष्टान्विमुक्तसङ्गः प्रकृतिं भजस्व ॥ १९ ॥ श्रीशुक उवाच ॥ इति समभिहितो महाभागवतो भगवतस्त्रिभुवनगुरोरनुशासनमात्मनो लघुतयाऽवनतशिरोधरो बाढमिति सबहुमानमुवाह ॥ २० ॥ भगवानपि मनुना यथावदुपकल्पितापचितिः प्रियव्रतनारदयोरविषममभिसमीक्षमाणयोरात्मसमवस्थानमवाङ्मनसं क्षयमव्यवहृतं प्रवर्तयन्नगमत् ॥ २१ ॥

जित्वा पश्चात् क्षीणेष्वरिषु दुर्गं वाऽन्यत्र वर्तते एवं गृहेषु स्थित्वा षडिन्द्रियाणि जित्वा पश्चात् गृहे वने वा विचरेत् ॥ १८ ॥ हे प्रियव्रत ! त्वं तु कृष्णचरणारविन्दरूपं दुर्गं श्रितो मनआदीन् जित्वेह भोगान् भुङ्क्ष्व पश्चात् मुक्तसंगः सन् स्वरूपं भज ॥ १९ ॥ श्रीशुक उवाच ॥ प्रियव्रतो ब्रह्मणः शिक्षितं स्वीचकार ॥ २० ॥ ब्रह्माऽपि प्रियव्रतनारदयोः समीक्षमाणयोः सतोरन्तर्हितवान् ॥ २१ ॥

१ यत्तिर्यंगादिलक्षणं देहं योजितवान् । २ भजते । ३ सम्यगवस्थानम् । ४ निवासम् । ५ व्यवहारातीतं स्वरूपं चिन्तयन्नन्तर्हित इत्यर्थः ।

मनुर्नारदाज्ञया तं राज्येऽभिषिच्य भोगेच्छायाः उपरतोऽभूत् ॥२२॥ प्रियव्रतो भगवच्चरणयोः मनोः निवेश्य महीं शशास ॥ २३ ॥ अथ विश्व-कर्मणः प्रजापतेर्बर्हिष्मतीं नाम कन्यामुपयेमे । स तस्यामात्मसमानशीलगुणकर्मरूपान् दश पुत्रानूर्जस्वतीं नाम कन्यां च जनयामास ॥ २४ ॥ तानाह आग्नीध्रः १, इध्मजिह्वः २, यज्ञबाहुः ३, महावीरः ४, हिरण्यरेताः ५, घृतपृष्ठः ६, सवनः ७, मेधातिथिः ८, वीतिहोत्रः ९,

मनुरपि परेणैवं प्रतिसंधितमनोरथः सुरर्षिवरानुमतेनात्मजमखिलधरामण्डलस्थितिगुप्तये आस्थाप्य स्वयमतिविषमविषयविषजलाशयाशाया उपरराम ॥ २२ ॥ इति ह वाव स जगतीपतिरीश्वरेच्छयाऽधिनिवेशितकर्माधिकारोऽखिलजगद्बन्धध्वंसनपरानुभावस्य भगवत आदिपुरुषस्याङ्घ्रियुगलानवरतध्यानानुभावेन परिरन्धितकषायाशयोऽवदातोऽपि मानवर्धनो महतां महीतलमनुशशास ॥२३॥ अथ च दुहितरं प्रजापतेर्विश्वकर्मण उपयेमे बर्हिष्मतीं नाम॥ तस्यामु ह वाव आत्मजानात्मसमानशीलगुणकर्मरूपवीर्योदारान्दश भावयांबभूव कन्यां च यवीयसीमूर्जस्वतीं नाम ॥ २४ ॥ आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति सर्व एवाग्निनामानः ॥ २५ ॥ एतेषां कविर्महावीरः सवन इति त्रय आसन्नूर्ध्वरेतसः ॥ त आत्मविद्यायामर्भभावादारभ्य कृतपरिचयाः पारमहंस्यमेवाश्रममभजन् ॥ २६ ॥ तस्मिन्नु ह वा उपशमशीलाः परमर्षयः सकलजीवनिकायावासस्य भगवतो वासुदेवस्य भीतानां शरणभूतस्य श्रीमच्चरणारविन्दाविरतस्मरणाविगलितपरमभक्तियोगानुभावेन परिभावितान्तर्हृदयाधिगते भगवति सर्वेषां भूतानामात्मभूते प्रत्यगात्मन्येवात्मनस्तादात्म्यमविशेषेण समीयुः ॥ २७ ॥

कविः १०॥ एते सर्वे एवाग्निनामानः ॥ २५ ॥ एषां मध्ये कविः १ महावीरः २ सवनः ३ इति त्रयो ब्रह्मचारिणः सन्तो बाल्यादारभ्य पारमहंस्यमाश्रममसेवन्त ॥ २६ ॥ ते परमर्षयस्तस्मिन्नेवाश्रमे ब्रह्म प्रापुः ॥ २७ ॥

---

१ प्रलृणा । २ संपादितः । ३ पञ्चरागादिः । ४ शोधितहृदये प्रतीते । ५ विशेषो देहाद्युपाधिस्तदपोहेन ।

अन्यस्यां भार्यायां प्रियव्रतात् उत्तमः १ तामसः २ रैवतः ३ इति त्रयः पुत्राः । ते मन्वन्तराधिपतयः आसन् ॥२८॥ एवं पुत्रानुत्पाद्य भार्यया सह राज्यभोगान् सेवमानः ११०००००००० एकादश दशकोटिवर्षाणि महीं बुभुजे ॥ २९ ॥ भगवान् सूर्यो मेरुं प्रदक्षिणीकुर्वन् लोकालोकाचलपर्यन्तमर्धेन प्रकाशयति । एवं रात्रिंदिवविभागं करोति । एवं वीक्ष्य तां रात्रिमपि दिनं करिष्यामीति भगवदुपासनाबलः प्रियव्रतः

अन्यस्यामपि जायायां त्रयः पुत्रा आसन् ॥ उत्तमस्तामसो रैवत इति मन्वन्तराधिपतयः ॥ २८ ॥ एवमुपशमायनेषु स्वतनयेष्वथ जगतीपतिर्जगतीमर्बुदान्येकादश परिवत्सराणामव्याहताखिलपुरुषकारसारसंभृतदोर्दण्डयुगलापीडितमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षो बर्हिष्मत्याश्चानुदिनमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिः पराभूयमानविवेक इवानवबुध्यमान इव महामना बुभुजे ॥ २९ ॥ यावदवभासयति सुरगिरिमनुपरिक्रामन्भगवानादित्यो वसुधातलमर्धेनैव प्रतपत्यर्धेनावच्छादयति तदा हि भगवदुपासनोपचितातिपुरुषप्रभावस्तदनभिनन्दन्समजवेन रथेन ज्योतिर्मयेन रजनीमपि दिनं करिष्यामीति सप्तकृत्वस्तरणिमनुपर्यक्रामद्द्वितीय इव पतङ्गः ॥ ३० ॥ ये वा उ ह तद्रथचरणनेमिकृतपरिखास्ते सप्त सिन्धव आसन् यत एव कृताः सप्त भुवो द्वीपाः ॥ ३१ ॥ जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करसंज्ञाः तेषां परिमाणं पूर्वस्मात्पूर्वस्माद्उत्तरोत्तरं यथासंख्यं द्विगुणमानेन बहिः समन्तत उपक्लृप्ताः ॥ ३२ ॥

समवेगेन तेजोमयेन रथेन सप्तवारं सूर्यमन्वधावद् द्वितीयः सूर्य इव ॥ ३० ॥ एतद्रथचक्राग्रेण कृताः गर्तास्ते सप्त सिन्धवः आसन् । तदन्तरस्थाः भुवः सप्तः द्वीपाः ॥३१॥ जम्बू १, प्लक्षः २, शाल्मलि ३, कुश ४, क्रौञ्च ५, शाक ६, पुष्करा ७, ख्याः पूर्वद्वीपाद्द्विगुणमानेनोत्तरोत्तरं बभूवुः ॥३२॥

१ संभृतौपूर्णौ । २ अभ्युत्थानादिलीला । ३ स्त्रीस्वाभाविकविलासः । ४ संकुचिताः । ५ क्ष्वेल्यादीनि परिहासवाक्यादीनि । ६ सिन्धुभ्यो बहिः ।

तथाक्षारोद १,इक्षुरसोद २,सुरोद ३,घृतोद ४, क्षीरोद ५, दधिमण्डोद ६,शुद्धोदाः ७,एते सप्त समुद्राः प्रतिद्वीपं द्वीपसममानेन परिखा इवासन्। स प्रियव्रतः सप्तद्वीपेष्वाग्नीध्रादीन् सप्त पुत्रानधिपतीन् चक्रे ॥ ३३ ॥ ऊर्जस्वतीं कन्यां शुक्राय ददौ यस्यां देवयानी नाम कन्या जाता ॥ ३४ ॥ कृष्णाङ्घ्रिरजसा जितषड्गुणानां पुंसां मध्ये एवंविधः पुरुषार्थो न चित्रम्। यतोऽन्त्यजोऽपि यन्नाम सकृदुच्चारयेत् स सद्यः संसारं

क्षारोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमण्डोदशुद्धोदाः सप्तः जलधयः सप्तद्वीपपरिखा इवाभ्यन्तरद्वीपसमाना एकैकश्येन यथानुपूर्वं सप्तस्वपि बहिर्द्वीपेषु पृथक् परित उपकल्पिताः ॥ तेषु जम्ब्वादिषु बर्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान् यथासंख्येनैकैकस्मिन्नेकमेवाधिपतिं विदधे ॥ ३३ ॥ दुहितरं चोर्जस्वतीं नामोशनसे प्रायच्छद्यस्यामासीद्देवयानी नाम काव्यसुता ॥३४॥ नैवंविधः पुरुषकार उरुक्रमस्य पुंसां तदंघ्रिरजसा जितषड्गुणानाम् ॥ चित्रं विदूरविगतः सकृदाददीत यन्नामधेयमधुना स जहाति बन्धम् ॥ ३५ ॥ स एवमपरिमितबलपराक्रम एकदा तु देवर्षिचरणानुशयनानुपतितगुणविसर्गसंसर्गेणानिर्वृतमिवात्मानं मन्यमान आत्मनिर्वेद इदमाह ॥ ३६ ॥ अहो असाध्वनुष्ठितं यदभिनिवेशितोऽहमिन्द्रियैरविद्यारचितविषमविषयान्धकूपे ॥ तदलमलममुष्या वनिताया विनोदमृगं मां धिग् धिगिति गर्हयांचकार ॥ ३७ ॥ परदेवतायाः प्रसादाधिगतात्मप्रत्यवमर्शेनानुवृत्तेभ्यः पुत्रेभ्य इमां यथादायं विभज्य भुक्तभोगां च महिषीं मृतकमिव सहमहाविभूतिमपहाय स्वयं निहितनिर्वेदो हृदि गृहीतहरिविहारानुभावो भगवतो नारदस्य पदवीं पुनरेवानुससार ॥ ३८ ॥

जहाति ॥३५॥ एवमपरिमितबलपराक्रमो विरक्तः सन् जगाद ॥ ३६ ॥ अहो मयाऽसाधु चरितम्। वनितायाः क्रीडामृगं मां धिग् धिगिति गर्हयांचकार ॥ ३७ ॥ एवं विरक्तो भूत्वा पुत्रेभ्यो राज्यं विभज्य महिषीं च त्यक्त्वा नारदोपदिष्टं मार्गं पुनरेव स्वीचकार ॥ ३८॥

१ अनुशयनमुपसत्ति । २ गुणविसर्गः राज्यादिप्रपंचः । ३ हरेः । ४ प्रत्यवमर्शो विवेकः ।

प्रियव्रतकृतं कर्मेश्वरं विनाऽन्य कः कुर्यात् यः सप्त समुद्रान् भूतानां सुखाय भूसंस्थानं च चक्रे ॥३९॥४०॥ पातालस्वर्गमर्त्यलोकानां वैभवं निरयतुल्यं मत्वा साधुप्रियः पुनर्भगवतो भक्तिं चकार ॥ ४१ ॥ इति श्रीभागवतचूर्णिकायां पञ्चमस्कन्धे भुवनकोशे प्रियव्रतविजयो नाम प्रथमोऽध्यायः ॥ १ ॥ द्वितीये प्रोक्तमाग्नीध्रचरित्रं स्त्रैणसंमतम् ॥ पत्न्यां हि पूर्वचित्त्यां यो नाभिमुख्यानजीजनत् ॥ १ ॥ अस्मिन् वंशे

तस्य ह वा एते श्लोकाः ॥ प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वरम् ॥ यो नेमिनिम्नैरकरोच्छायां घ्नन्सप्त वारिधीन् ॥ ३९ ॥ भूसंस्थानं कृतं येन सरिद्गिरिवनादिभिः ॥ सीमा च भूतनिर्वृत्त्यै द्वीपे द्वीपे विभागशः ॥ ४० ॥ भौमं दिव्यं मानुषं च महित्वं कर्मयोगजम् ॥ यश्चक्रे निरयौपम्यं पुरुषानुजनप्रियः ॥ ४१ ॥ इति श्रीभागवते महापुराणे पञ्चमस्कन्धे भुवनकोशे प्रियव्रतविजयो नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ एवं पितरि संप्रवृत्ते तदनुशासने वर्तमान आग्नीध्रो जम्बूद्वीपौकसः प्रजा औरसवद्धर्मावेक्षमाणः पर्यगोपायत् ॥१॥ स च कदाचित् पितृलोककामः सुरवरवनिताक्रीडाचलद्रोण्यां भगवन्तं विश्वसृजां पतिमाभृतपरिचर्योपकरण आत्मैकाग्र्येण तपस्वी आराधयांबभूव ॥२॥ तदुपलभ्य भगवानादिपुरुषः सदसि गायन्तीं पूर्वचित्तिं नामाप्सरसमभियापयामास ॥ ३ ॥ सा च तदाश्रमोपवनमतिरमणीयं विविधनिबिडविटपिविटपनिकरसंश्लिष्टपुरटलतारूढस्थलविहङ्गममिथुनैः प्रोच्यमानश्रुतिभिः प्रतिबोध्यमानसलिलकुक्कुटकारण्डवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ॥ ४ ॥

प्रसिद्धोऽयमाग्नीध्रः स्त्रैणपुंगवः ॥ विहसन्निव तस्येदं चरितं मुनिरब्रवीत् ॥२॥ श्रीशुक उवाच ॥ एवं पितरि संप्रवृत्ते सति राजाऽऽग्नीध्रो जम्बूदीपस्थाः प्रजाः पुत्रवत् पालयामास ॥१॥ स कदाचित् पुत्रकामो मन्दराचलगुहायां ब्रह्माणमाराधयामास ॥ २ ॥ ब्रह्मा तज्ज्ञात्वा स्वसभायां गायन्तीं पूर्वचित्तिमप्सरसं संभोगार्थं प्रेषयामास ॥३॥ सा चानेकवृक्षलतारूढमयूराणां स्वरैः प्रतिबोध्यमानजलकुक्कुटकारण्डवादिभिर्विचित्रं रमणीयं तदाश्रमोपवनं प्राप्य बभ्राम ॥ ४ ॥

१ तमश्छायांघ्नन् रजनीं दिनं कुर्वन् । २ विष्णुभक्तप्रियः । ३ पुरटलताः स्वर्णलताः ।

तदा तस्या अनुपदं खणखणायमानचरणाभरणस्वनं श्रुत्वा राजा नेत्रे किंचिदुन्मील्य तां ददर्श ॥५॥ कथंभूतां ताम्। भ्रमरीमिव पुष्पाण्युपजिघ्रन्तीं स्वगतविहारविनयावलोकनादिभिर्नृणां मनसि कामस्य प्रवेशद्वारं कुर्वतीम् ॥६॥ राजा तदवलोकनेन कामवशं गतः सन् जडवदुवाच ॥ ७ ॥ हे सखे ! त्वं काऽसि । अस्मिन् गिरौ किं चिकीर्षसि । किं देवमायाऽसि । मृगतुल्यान् विषयिणो वशीकर्तुं धनुषी धारयसि किम्

तस्याः सुललितगमनपदविन्यासगतिविलासायाश्चानुपदं खणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्य नरदेवकुमारः समाधियोगेनाऽऽमीलितनयननलिनमुकुलयुगलमीषद्विकचय्य व्यचष्ट ॥ ५ ॥ तामेवाविदूरे मधुकरीमिव सुमनस उपजिघ्रन्तीं दिविजमनुजमनोनयनाह्लाददुघैर्गतिविहारव्रीडाविनयावलोकसुस्वराक्षरावयवैर्मनसि नृणां कुसुमायुधस्य विदधतीं विवरम् ॥६॥ निजमुखविगलितामृतासवसहासभाषणामोदमदान्धमधुकरनिकरोपरोधेन द्रुतपदविन्यासेन वल्गुस्पन्दनस्तनकलशकबरभाररशनां देवीं तदवलोकनेन विवृतावसरस्य भगवतो मकरध्वजस्य वशमुपनीतो जडवदिति होवाच ॥७॥ का त्वं चिकीर्षसि च किं मुनिवर्य शैले मायाऽसि कापि भगवत्परदेवतायाः ॥ विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किं वा मृगान् मृगयसे विपिने प्रमत्तान् ॥८॥ बाणाविमौ भगवतः शतपत्रपत्रौ शान्तावपुङ्खरुचिरावतितिग्मदन्तौ ॥ कस्मै युयुङ्क्षसि वने विचरन्न विद्मः क्षेमाय नो जडधियां तव विक्रमोऽस्तु ॥ ९ ॥ शिष्या इमे भगवतः परितः पठन्ति गायन्ति साम सरहस्यमजस्रमीशम् ॥ युष्मच्छिखाविलुलिताः सुमनोभिवृष्टीः सर्वे भजन्त्यृषिगणा इव वेदशाखाः ॥ १० ॥

॥ ८ ॥ वने विचरन् तीक्ष्णौ कटाक्षबाणौ प्रयोक्तुमिच्छसीति न विद्मः ॥ ९ ॥ इमे भ्रमरास्तव समन्ताद्भागे गायन्ति तव केशगलितानि पुष्पाणि सेवन्ते च ॥ १० ॥



---

१ अवयवाः नेत्रादयः । २ किंचिच्चलिताः स्तनावयो यस्यास्ताम् । ३ जाड्यात्पुंस्त्वेन निर्देशः । ४ शतपत्रे नेत्रकमले एव पिच्छानि ययोस्तौ ।

तव चरणनूपुरयोः शब्दं शृणुमः । हे सखे ! नितम्बस्य सुन्दरमण्डले कदम्बपुष्पकान्तिः क्व लब्धा ॥ ११ ॥ तव स्तनयोः किं पूर्णमस्ति यत्र मे दृष्टिः संलग्नाऽस्ति । तव स्तने केशरकर्दमः कुतः येन कर्दमेन ममाश्रमं सुगन्धयुक्तं करोषि ॥ १२ ॥ हे सुहृत्तम ! मम तावकं लोकं दर्शय यत्रस्थो जनः उरसैवं मनः क्षोभकावपूर्वावयवौ बिभर्ति ॥ १३ ॥ हे सखे ! तव देहस्याहारः को वा येनाहारेण सुगन्ध आयाति ॥ १४ ॥ किंच त्वद्धस्त-

वाचं परं चरणपञ्जरतित्तिरीणां ब्रह्मन्नरूपमुखरां शृणवाम तुभ्यम् ॥ लब्धा कदम्बरुचिरङ्कविटङ्कबिम्बे यस्यामलातपरिधिः क्व च वल्कलं ते ॥ ११ ॥ किं संभृतं रुचिरयोर्द्विज शृङ्गयोस्ते मध्ये कृशो वहसि यत्र दृशिः श्रिता मे ॥ पङ्कोऽरुणः सुरभिरात्मविषाण ईदृग्येनाश्रमं सुभग मे सुरभीकरोषि ॥ १२ ॥ लोकं प्रदर्शय सुहृत्तम तावकं मे यत्रत्य इत्थमुरसाऽवयवावपूर्वौ ॥ अस्मद्विधस्य मन उन्नयनौ बिभर्ति बह्वद्भुतं सरसराससुधादि वक्त्रे ॥ १३ ॥ का वाऽऽत्मवृत्तिरदनाद्धविरङ्ग वाति विष्णोःकलाऽस्यनिमिषोन्मकरौ च कर्णौ ॥ उद्विग्नमीनयुगलं द्विजपङ्क्तिशोचिरासन्नभृङ्गनिकरं सर इन्मुखं ते ॥ १४ ॥ योऽसौ त्वया करसरोजहतः पतंगो दिक्षु भ्रमन् भ्रमत एजयतेऽक्षिणी मे ॥ मुक्तं न ते स्मरसि वक्रजटावरूथं कष्टोऽनिलो हरति लम्पट एष नीवीम् ॥ १५ ॥ रूपं तपोधन तपश्चरतां तपोघ्नं ह्येतत्तु केन तपसा भवतोपलब्धम् ॥ चर्तुं तपोऽर्हसि मया सह मित्र मह्यं किं वा प्रसीदति स वै भवभावनो मे ॥ १६ ॥ न त्वां त्यजामि दयितं द्विजदेवदत्तं यस्मिन् मनो दृगपि नो न वियाति लग्नम् ॥ मां चारुशृङ्ग्यर्हसि नेतुमनुव्रतं ते चित्तं यतः प्रतिसरन्तु शिवाः सचिव्यः ॥ १७ ॥

ताडितः कन्दुको दिक्षु भ्रमन् भ्रमच्चित्तस्य मेऽक्षिणी चञ्चलतां नयति । वायुर्वस्त्रं हरति तन्न स्मरसि किम् ॥ १५ ॥ तपश्चरतां तपोघ्नमिदं रूपं केन तपसा लब्धम् । हे मित्र ! मया सह तपश्चरितुं त्वमर्हसि ॥ १६ ॥ ब्रह्मणा दत्तं त्वां न त्यजामि ।

१ नूपुरगतरत्नानाम् । २ अदृष्टवक्तृकामतिप्रकटां च । ३ कान्तिमण्डलम् । ४ पीतपरिधानवस्त्रस्य नितम्बकान्तित्वेन ग्रहणात्पृच्छेयम् । ५ मधुरालापविलासाधरामृतादि । ६ रत्नमयत्वात् अनिमिषौ उल्लसन्तौ मकरौ कुण्डले ययोस्तौ । ७ मीनद्विजभृङ्गाः क्रमेण नयनदन्तकेशाभिप्रायाः मुखस्य सरस्साम्ये हेतुः । ८ इव । ९ समूहम् । १० धूर्तः । ११ विवर्तते । १२ प्रदक्षिणं कुर्वन्तु । १३ सख्यः ।

हे चारुशृङ्गि ! यत्र ते मनस्तत्र मां नेतुमर्हसि ॥१७॥ श्रीशुक उवाच ॥ एवं स्त्रीप्रार्थनायां कुशलः स तस्याः संमानं चक्रे ॥१८॥ अप्सराश्च तस्याग्नीध्रस्य बुद्धिशीलरूपवयःश्रियौदार्येण च मोहिता सती तेन सहायुतवर्षाणि १००००००००० भौमस्वर्गभोगान् बुभुजे ॥ १९ ॥ तस्यामाग्नीध्रो नाभि १, किंपुरुष २, हरिवर्ष ३, इलावृत ४, रम्यक ५, हिरण्मय ६, कुरु ७, भद्राश्व ८, केतुमाल ९, संज्ञान् नव पुत्रान् जनयामास। सा प्रतिवर्षं नव पुत्रान् प्रसूय तं त्यक्त्वा ब्रह्माणं ययौ ॥२०॥ ते पुत्राः पित्रा यथाविभागं दत्तानि स्वनामभिः ख्यातानि जम्बूद्वीपस्य

श्रीशुक उवाच ॥ इति ललनानुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूं विबुधमतिरधि सभाजयामास ॥ १८ ॥ सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येण पराक्षिप्तमनास्तेन सहायुतायुतपरिवत्सरोपलक्षणं कालं जम्बूद्वीपपतिना भौमस्वर्गभोगान् बुभुजे ॥ १९ ॥ तस्यामुह वा आत्मजान् स राजवर आग्नीध्रो नाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान् नव पुत्रानजनयत् ॥ सा सूत्वाऽथ सुतान् नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे॥२०॥ आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्ता आत्मतुल्यनामानि यथाभागं जम्बूद्वीपवर्षाणि बुभुजुः ॥ २१ ॥ आग्नीध्रो राजाऽतृप्तः कामानामप्सरसमेवानुदिनमधिमन्यमानस्तस्याः सलोकतां श्रुतिभिरवारुन्ध यत्र पितरो मादयन्ते ॥ २२ ॥ संपरेते पितरि नव भ्रातरो मेरुदुहितॄर्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लतां रम्यां श्यामां नारीं भद्रां देववीतिमिति संज्ञा नवोदवहन् ॥ २३ ॥

इतिश्रीभागवते महापुराणे पञ्चमस्कधे आग्नीध्रचरितवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥



नवखण्डानि बुभुजुः ॥ २१ ॥ आग्नीध्रोऽपि तस्यामतृप्तः सन् तामेव ध्यायन् तल्लोकं मृतः प्राप ॥२२॥ एवं पितरि संपरेते सति नव भ्रातरो मेरुकन्यां मेरुदेवीं १, प्रतिरूपाम् २, उग्रदंष्ट्रीं ३, लतां ४, रम्यां ५, श्यामां ६, नारीं ७, भद्रां ८, देववीतिम् ९, इति नव परिणीतवन्तः॥ ॥ २३ ॥ इति श्रीभागवते चूर्णिकायां पञ्चम० द्वितीयोऽध्यायः ॥ २ ॥

१ स्वभावेनैव । २ संहननं दृढाङ्गत्वम् । ३ वेदोक्तकर्मभिः । ४ मोदन्ते ।

तृतीये चरितं नाभेः परं मङ्गलमीर्यते ॥ यस्य यज्ञे प्रतीतः सन् पुत्रोऽभूदृषभो हरिः ॥१॥ श्रीशुक उवाच ॥ आग्नीध्रपुत्रो नाभिः पुत्रकामः सन् मेरुदेव्या पत्न्या सह यज्ञपुरुषं यज्ञेनायजत ॥१॥ तत्र यज्ञे श्रद्धया शुद्धभावेन सम्यग्यजमानस्य तस्य सतो दयया सर्वालंकारयुक्तो भगवान्

श्रीशुक उवाच ॥ नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्माऽयजत ॥ १ ॥ तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं निजजनाभिप्रेतार्थविधित्सया गृहीतहृदयो हृदयंगमं मनोनयनानन्दनावयवाभिराममाविश्चकार ॥ २ ॥ अथ ह तमाविष्कृतभुजयुगलद्वयं हिरण्मयं पुरुषविशेषं कपिशकौशेयाम्बरधरमुरसि विलसच्छ्रीवत्सललामं दरवरवनरुहवनमालाऽच्छूर्यमृतमणिगदादिभिरुपलक्षितम् ॥ ३ ॥ स्फुटकिरणप्रवरमणिमयमुकुटकुण्डलकटककटिसूत्रहारकेयूरनूपुराद्यङ्गभूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधना इवोत्तमधनमुपलभ्य सबहुमानमर्हणेनावनतशीर्षाण उपतस्थुः ॥ ४ ॥ ऋत्विज ऊचुः ॥ अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमो नमः इत्येतावत्सदुपशिक्षितं कोऽर्हति पुमान् प्रकृतिगुणव्यतिकरमतिरनीश ईश्वरस्य परस्य प्रकृतिपुरुषयोरर्वाक्तनाभिर्नामरूपाकृतिभी रूपनिरूपणम् ॥ ५ ॥

प्रादुर्बभूव ॥२॥ तदा चतुर्भुजं तेजोमयं कौशेयाम्बरधरमुरसि विलसच्छ्रीवत्सचिह्नशङ्खचक्रगदादिभिः शोभितम् ॥३॥ मुकुटकुण्डलकटककटिसूत्रहारकेयूरनूपुराद्यङ्गभूषणभूषितं हरिं दृष्ट्वा सर्वे ऋत्विगादयो नम्राः सन्तस्तं पूजयित्वा तुष्टुवुः ॥४॥ ऋषय ऊचुः । हे पूर्ण! त्वत्सेवकानामस्माकं

---

१ कर्मविशेषेषु । २ शोभनदेहः । ३ स्वतंत्रम् । ४ शंखश्रेष्ठः । ५ वनरुहं पद्मम् । ६ अच्छूरि चक्रम् । ७ कौस्तुभः । ८ भृत्यानाम् । ९ संसारमग्नमतिः । १० त्वामस्पृशन्तीभिः । ११ अयं भावः तव स्वरूपस्य परमार्थतो ज्ञानमस्मत्सामर्थ्यातीतमतोऽस्मदर्हणं नमो नम इत्येतन्मात्रात्मकमेवेति ।

तवार्हणं नमो नम इत्येव सद्भिः शिक्षितम् । हे ईश ! तव गुणैकदेशकथनादृते स्वरूपवर्णनं कर्तुं को नाम पुमान् शक्नोति ॥५॥६॥ हे भगवन् ! भक्तार्पितजलपल्लवतुलसीदूर्वाङ्कुरैः संपादितया पूजया त्वं तुष्यसि॥७॥ अन्यथा त्वनेकाङ्गसमृद्धेन यागेनापि तवापेक्षितमर्थं नैव पश्यामः ॥८॥ हे नाथ ! साक्षात् सकलपुरुषार्थस्वरूपस्य तवाराधनमात्रं सकामानामस्माकमेवोपपद्यते न तव ॥९॥ हे ईश ! स्वकल्याणं बालिशानां करुणया मोक्षाख्यं स्वमहिमानं संपादयिष्यन् स्वयमपि सापेक्ष इव दृष्टोऽसि ॥१०॥ अर्हत्तम ! यद्यपि त्वं वरान् दातुमाविर्भूतोऽसि तथाऽपि

सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ॥ ६ ॥ परिजनानुरागविरचितशबलसंशब्दसलिलसितकिसलयतुलसिकादूर्वाङ्कुरैरपि संभृतया सपर्यया किल परम परितुष्यसि ॥ ७ ॥ अथानयाऽपि न भवत इज्ययोरुभारभरया समुचितमर्थमिहोपलभामहे ॥ ८ ॥ आत्मन एवानुसवनमञ्जसा व्यतिरेकेण बोभूयमानाशेषपुरुषार्थस्वरूपस्य किं तु नाथाशिष आशासानानामेतदभिसंराधनमात्रं भवितुमर्हति ॥ ९ ॥ तद्यथा बालिशानां स्वयमात्मनः श्रेय परमविदुषां परम परमपुरुष प्रकर्षकरुणया स्वमहिमानं चापवर्गाख्यमुपकल्पयिष्यन् स्वयं नापचित एवेतरवदिहोपलक्षितः ॥ १० ॥ अथायमेव वरो ह्यर्हत्तम यर्हि बर्हिषि राजर्षेर्वरदर्षभो भवान्निजपुरुषेक्षणविषय आसीत् ॥ ११ ॥ असंगनिशितज्ञानानलविधूताशेषमलानां भवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरिगुणितगुणगणपरममङ्गलायनगुणगणकथनोऽसि ॥ १२ ॥ अथ कथंचित्स्खलनक्षुत्पतनजृम्भणदुरवस्थानादिषु विवशानां नः स्मरणाय ज्वरमरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्तु ॥ १३ ॥



त्वद्दर्शनमेवास्माकं वरोऽस्ति ॥ ११ ॥ हे भगवन् ! त्वद्गुणकथनं शुभकरं वैराग्यसंपन्नानां मुनीनाम् ॥ १२ ॥ हे हरे ! स्खलनक्षुत्पतनजृम्भणज्वरमरणदुरवस्थानादिषु पराधीनानां त्वां स्मर्तुमशक्तानां नः सकलदुःखनाशकानि तव नामान्यस्मद्वाण्यां प्रकटीभवन्तु ॥ १३ ॥

१ पापम् । २ गद्गदवाक्षरस्तुतयः । ३ स्वतः । ४ सर्वदा । ५ अपूजितः । ६ यज्ञे । ७ परिगुणिता अभ्यस्ताः । ८ मङ्गलास्पदं गुणगणकथनं यस्य सः ।

अन्यच्च प्रार्थयामहे अयं राजर्षिर्भवादृशीं प्रजामिच्छति तां संपादय ॥१४॥ अलक्षितमार्गया तव मायया को न जितः । विषयवैगैरनावेष्टित-प्रकृतिः को वा । न कोऽपि॥ १५॥ हे बहुकार्यकारिन् ! अल्पकार्याय त्वं यस्मादिह समाहूतोऽसि तत्र मन्दानां नो योऽपराधस्तं सोढुमर्हसि ॥ १६॥ एवं गद्यात्मस्तोत्रेण स्तुतः सन् हरिराह॥ १७॥श्रीभगवानुवाच । हे ऋषयः ! भवद्भिरसुलभं वरं याचितोऽस्मि । ब्रह्मवाक्यं मिथ्या भवितुं नार्हति । अतोऽहं

किं चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भगवन्तमुपधावति प्रजायां-मर्थप्रत्ययो धनदमिवाधनः फलीकरणम् ॥ १४ ॥ को वा इह तेऽपराजितोऽपराजितया माययाऽनवसितपदव्याऽना-वृतमतिर्विषयविषरयानावृतप्रकृतिरनुपासितमहच्चरणः ॥ १५ ॥ यदु ह वाव तव पुनरदभ्रकर्तरिह समाहूतस्तत्रार्थधियां मन्दानां नस्तद्यद् देवहेलनं देवदेवार्हसि साम्येन सर्वान् प्रति वोढुमविदुषाम् ॥१६॥ श्रीशुक उवाच ॥ इति निगदेना-भिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभिवादिताभिवन्दितचरणः सदयमिदमाह ॥ १७ ॥ भगवानुवाच ॥ अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्य आत्मजो मया सदृशो भूयादिति ममाहमेवा-भिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद् द्विजदेवकुलम् ॥ १८ ॥ तत आग्नी-ध्रीयेंऽशकलयाऽवतरिष्यामि आत्मतुल्यमनुपलभमानः ॥ १९ ॥ श्रीशुक उवाच ॥ इति निशामयन्त्यां मेरुदेव्याः पतिमभिधायान्तर्दधे भगवान् ॥ २० ॥ बर्हिषि तस्मिन्नेव विष्णुदत्त भगवान् परमर्षिभिः प्रसादितो नाभेः प्रियचि-कीर्षया तदवरोधायने मेरुदेव्यां धर्मान् दर्शयितुकामो वातरशनानां श्रमणानामृषीणामूर्ध्वमन्थिनां शुक्लया तनुवा-ऽवतार ॥ २१ ॥ इति श्रीभा० म० पञ्चम० तृतीयोऽध्यायः ॥ ३ ॥

कलया नाभिराजस्य पुत्रत्वेनावतरिष्यामि ॥१८॥१९॥ इत्युक्त्वा भगवानन्तर्दधे ॥ २० ॥ हे राजन् ! ततो नाभेः प्रियचिकीर्षया दिग्वाससां तपस्विनां नैष्ठिकब्रह्मचारिणां धर्मान् दर्शयितुं मेरुदेव्यां सत्त्वमूर्त्या भगवानवततार ॥२१॥ इति श्रीभाग० चू० पञ्चम० तृतीयोऽध्यायः ॥३॥

१ प्रजायामेव पुरुषार्थं इति प्रत्ययो यस्य सः । २ तुषकणादिकम् । आशासानः इत्यनुवर्तनीयम् । ३ साम्येनेत्यत्र सम्बन्धः । ४ अवज्ञानम् । ५ सर्वान्प्रति तव साम्येन हेतुना सोढुम् । ६ देवश्रेष्ठः । ७ वर्षधरैः नाम्यभिवादितैः राजर्त्विग्भिः । ८ अद्वितीयत्वात् । ९ कैवल्याद्धेतोः । १० पश्यन्त्याम् । ११ हे परीक्षित् । १२ नाभ्यान्तः पुरे ।

चतुर्थादित्रिभिः प्रोक्तमृषभस्येहितं महत् ॥ लोकार्थं येन सत्कर्म नैष्कर्म्यं च निदर्शितम् ॥१॥ चतुर्थे शतपुत्रस्य राज्यं तस्योपवर्ण्यते ॥ यस्य राज्ये जनः सर्वः सन्तोषामृतनिर्वृतः ॥२॥ श्रीशुक उवाच ॥ अथोत्पत्त्यैव तं भगवल्लक्षणयुतं ज्ञात्वाऽमात्यादयो ब्राह्मणाश्चायं नो राजाऽस्त्विवतीच्छां चक्रुः ॥१॥ पिता सुयशसा वीर्यशौर्यादिगुणैः श्रेष्ठत्वात् तस्या ऋषभ इति नाम चक्रे ॥२॥ तदा स्पर्द्धमानः इन्द्रस्तस्मिन् खंडे न ववर्ष तदा ऋषभदेवः प्रह-



श्रीशुक उवाच ॥ अथ ह तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां जगृधुः ॥१॥ तस्य ह वा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन च ओजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां च पिता ऋषभ इतीदं नाम चकार ॥२॥ तस्य हीन्द्रः स्पर्धमानो भगवान्वर्षे न ववर्ष ॥ तदवधार्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्षमजनाभं नामाभ्यवर्षत् ॥ ३ ॥ नाभिस्तु यथाभिलषितं सुप्रजस्त्वमवरुध्यातिप्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकसधर्मं भगवन्तं पुराणपुरुषं मायाविलसितमतिर्वत्स तातेति सानुरागमुपलालयन्परां निर्वृतिमुपगतः ॥ ४ ॥ विदितानुरागमापौरप्रकृति जनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनःकालेन तन्महिमानमवाप ॥५॥ यस्यह-पाण्डवेय श्लोकावुदाहरन्ति॥को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान् ॥ अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा ॥६॥



स्य स्वयोगबलेनाजनाभे स्वखण्डे वृष्टिं चकार ॥३॥ नाभिः स्वेच्छया गृहीतमनुष्यदेहं हरिं सुपुत्रं प्राप्य प्रेमविह्वलो गद्गदवाण्या हे वत्स ! तातेति लालयन् परं हर्षं प्राप ॥४॥ ततः स्वपुत्रे सर्वेषां प्रीतिं दृष्ट्वा धर्मरक्षणार्थमृषभदेवं राज्येऽभिषिच्य ब्राह्मणानामुत्सङ्गे निधाय स्वयं पत्न्या सह बदरिकाश्रमं गत्वा नरनारायणं सेवमानः कालेन मुक्तिं प्राप ॥५॥ एवं नाभेः प्रसिद्धं कर्म कः पुमानाचरेत् यस्य शुद्धकर्मणा हरिः पुत्रत्वं प्राप्तः ॥६॥

१ देहेन । २ बृहन्तः श्लोकाः पद्यानि कवीनां यस्मिन्विषये तेन महायशसा वा देहेनेत्यन्वयः ।

नाभिं विना ब्रह्मण्योऽन्यः कुतः  यस्य यज्ञे विप्राः मन्त्रबलेनेश्वरं दर्शयामासुः॥७॥अथ भगवान् ऋषभदेवो लोकशिक्षार्थं गुरुगृहे ब्रह्मचर्यादिधर्मं कृत्वा गुर्वनुज्ञया गृहधर्मान् शिक्षयन् जयन्त्यां शतं पुत्रान् जनयामास ॥८॥ येषां मध्ये महायोगी ज्येष्ठो भरतः आसीत् येनेदं वर्षं भारतमिति कथयन्ति ॥९॥ तमनु कुशावर्तः १,इलावर्तः२, ब्रह्मावर्तः ३, मलयः ४, केतुः ५, भद्रसेनः ६, इन्द्रस्पृक् ७, विदर्भः ८, कीकटः ९, इति नव नवतिषु मुख्याः ॥१०॥ कविः १, हरिः २, अन्तरिक्षः ३, प्रबुद्धः ४, पिप्पलायनः ५, आविर्होत्रः ६, द्रुमिलः ७, चमसः ८, करभाजनः ९,एते नव महा भागवताः। एतेषां चरितमेकादशे वक्ष्यते ॥११॥ एकाशीतिमिताः ८१ पितुरादेशकराःकनिष्ठाः कर्मविशुद्धाः ब्राह्मणा बभूवुः ॥ १२ ॥ अथ भगवान् ऋषभो गृहस्थधर्मं शिक्षयन् स्वयं गृहस्थाश्रमं चकार ॥ १३ ॥

ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मंगलपूजिताः ॥ यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा ॥ ७ ॥ अथ ह भगवानृषभदेवः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभयलक्षणं कर्म समाम्नायाम्नातमभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास ॥ ८ ॥ येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद् येनेदं वर्षं भारतमिति व्यपदिशन्ति ॥ ९ ॥ तमनु कुशावर्त इलावर्तो ब्रह्मवर्तो मलयः केतुर्भद्रसेन इन्द्रस्पृक् विदर्भः कीकट इति नवतिप्रधानाः ॥ १० ॥ कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ॥ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजन इति भगवतधर्मदर्शनां नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं वसुदेवनारदसंवादमुपशमायनमुपरिष्टाद्वर्णयिष्यामः ॥ ११ ॥ यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महाशालीनां महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः ॥ १२ ॥ भगवानृषभसंज्ञ आत्मतन्त्रः स्वयं नित्यनिवृत्तानर्थपरम्परः केवलानन्दानुभव ईश्वर एव विपरीतवत्कर्माण्यारंभमाणः कालेनानुगतं धर्ममाचरणेनोपशिक्षयन्नतद्विदां सम उपशान्तो मैत्रः कारुणिको धर्मार्थयशःप्रजानन्दामृतावरोधेन गृहेषु लोकं नियमयत् ॥ १३ ॥

१ दक्षिणाभिः पूजिता । २ दर्शनाः प्रदर्शकाः । ३ अतिविनीताः । ४ शुद्धः । ५ अनीश्वर इव । ६ उत्पन्नम् । ७ संग्रहेण ।

चू० अ० ५

भा० पं० ॥९॥

यद्यत् श्रेष्ठ आचरति लोकः तदनुवर्तते ॥१४॥ सकलधर्मं वेदरहस्यं यद्यपि स्वेनैव विदितं तथाऽपि ब्राह्मणैर्दर्शितमार्गेण महीं शशास ॥१५॥ स सर्वैर्यज्ञैः शतवारमीश्वरमीजे ॥१६॥ यस्य राज्ये कश्चन पुरुष आत्मतोऽन्यस्मात्किमपि न वाञ्छति। अन्यदीयं नेक्षतेऽपि ॥ १७ ॥ स ऋषभः कदाचित् पृथिव्यां भ्रमन् ब्रह्मावर्तं गतः सन् ब्रह्मर्षिश्रेष्ठसभायां प्रजानां शृण्वतीनां ज्ञानिनोऽपि पुत्रान् प्रजानामनुशासनार्थं शिक्षयन्

यद्यच्छीर्षण्यां[1]चरितं तत्तदनुवर्तते लोकः ॥ १४ ॥ यद्यपि स्वविदितं सकलधर्मं ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास ॥ १५ ॥ द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शतकृत्वः इयाज ॥ १६ ॥ भगवतर्षभेण परिरक्ष्यमाण एतस्मिन्वर्षे न कश्चन पुरुषो वाञ्छत्यविद्यमानमिवात्मनोऽन्यस्मात्कथंचन किमपि कर्हिचिदवेक्षते भर्तर्य[2]नुसवनं[3] विजृम्भितस्नेहातिशयमन्तरेण[4] ॥ १७ ॥ स कदाचिदटमानो भगवानृषभो ब्रह्मावर्तं गतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयन्तीनामात्मजानवहितात्मनः प्रश्रयप्रणयभरसुयन्त्रितानप्युपशिक्षयन्निति होवाच ॥ १८ ॥ इति श्रीभागवते महा० पञ्चमस्कन्धे ऋषभदेवानुचरिते चतुर्थोऽध्यायः ॥ ४ ॥ ऋषभ उवाच ॥ नायं देहो देहभाजां नृलोके कष्टन्कामान[5]र्हते[6] विड्भुजां ये ॥ तपो दिव्यं पुत्रका येन सत्त्वं शुध्येद्यस्माद्ब्रह्मसौख्यं[7] त्वनन्तम् ॥ १ ॥

॥९॥

जगाद ॥ १८ ॥ इति श्रीभागवते चू० पञ्चम० चतुर्थोऽध्यायः ॥ ४ ॥ पञ्चमे मोक्षधर्मोपदेशैः पुत्रानुशासनम्। उक्तं पारमहंस्यं च तस्य द्वन्द्वतितिक्षया ॥ १ ॥ ऋषभ उवाच। हे पुत्रकाः। देहधारिणां देहो विड्भुजामिव विषयभोगार्थं न तर्हि दिव्यं तपः कर्तुं क्षमोऽस्ति येन तपसाऽनन्तं ब्रह्मसुखं भवति ॥ १ ॥

---

१ शीर्षण्यः श्रेष्ठः। २ भर्तरि ऋषभे। ३ अनुसवनं सर्वदा। ४ अन्तरेण विना। ५ कामाः विड्भुजामपि सन्तीत्यन्वयः। ६ अर्हन्ते इत्यनुवर्तनीयम्। ७ शुद्धात्सत्त्वात्।

किञ्च महत्सेवां मुक्तेर्द्वारं वदन्ति, विषयिणां सङ्गं संसारस्य द्वारमाहुः । महतां लक्षणमाह । ये समचित्ताः शान्ताः सर्वसुहृदो गतमन्यवः ॥२॥ देहाभिमानिजनेषु च न प्रीतियुक्ताः । एवंभूताः महान्तः ॥३॥ अथ लोके यदेन्द्रियप्रीतये विषयसामग्री सम्पद्यते तदा प्रमत्तः सन् पापं करोति पापाद् देहो दुःखदो भवति ॥ ४ ॥ यावदात्मतत्त्वं न ज्ञातं तावदज्ञानकृतपराभवो भवति । यावत् क्रियास्तावद् मनः कर्मस्वभावं स्यात्

महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् ॥ महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥ २ ॥ ये वा मयीशे कृतसौहृदार्था जनेषु देहंभरवार्तिकेषु ॥ गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता याव-दर्थाश्च लोके ॥ ३ ॥ नूनं प्रमत्तः कुरुते विकर्म यदिन्द्रियप्रीतय आपृणोति ॥ न साधु मन्ये यत आत्मनोऽय-मसन्नपि क्लेशद आस देहः ॥ ४ ॥ पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ॥ यावत्क्रियास्ताव-दिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥ ५ ॥ एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययाऽऽत्मन्युपधीयमाने ॥ प्रीति न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ ६ ॥ यदा न पश्यत्ययथागुणेहां स्वार्थे प्रमत्तः सहसा विप-श्चित् ॥ गतस्मृतिर्विन्दति तत्र तापानासाद्य मैथुन्यमगारमज्ञः ॥ ७ ॥ पुंसः स्त्रिया मिथुनीभावमेनं तयोर्मिथो हृदय-ग्रन्थिमाहुः ॥ अतो गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहं ममेति ॥ ८ ॥ यदा मनो हृदयग्रन्थिरस्य कर्मानु-बद्धो दृढ आश्लथेत ॥ तदा जनः संपरिवर्ततेऽस्मान्मुक्तः परं यात्यतिहाय हेतुम् ॥ ९ ॥

येन शरीरबन्धो भवति ॥५॥ यावद् वासुदेवे प्रीतिं न करोति तावद् देहेन न मुच्यते ॥६॥ यदा च प्रमत्तः सन्निन्द्रियचेष्टां मिथ्या न पश्यति तदा स्वरूपस्मृतिशून्यः सन् मैथुनसुखं गृहं प्राप्य तापान् विन्दति ॥७॥ स्त्रीपुंसयोर्मिथुनीभावं हृदयग्रन्थिमाहुः ॥ ८ ॥ यदा चास्य दृढो हृदयग्रन्थिर्ज्ञानेन शिथिलो भवति तदा स्त्रीपुंसरूपमिथुनीभावाद् निवर्तते ततोऽहंकारं हित्वा मुक्तसङ्गः सन् परं पदं याति ॥ ९ ॥

१ रातिमित्रं धनं वा । २ यावदर्थमेवार्थो येषां ते देहनिर्वाहाधिकस्पृहाशून्याः । ३ पुरुषमिति शेषः । ४ आच्छाद्यमाने । ५ मिथुनीभावात् ।

हंसे गुरौ मयि भक्त्या द्वन्द्वतितिक्षया परलोकेऽपि दुःखानुसंधानेनात्मजिज्ञासया तपसा काम्यकर्मत्यागेन ॥ १० ॥ मदर्पणकर्मभिर्मत्कथया साधुसङ्गेन मद्गुणकीर्तनेन ॥ ११ ॥ प्राणेन्द्रियमनोजयेनाध्यात्मशास्त्राभ्यासेन ब्रह्मचर्येण ॥ १२ ॥ सर्वत्र मद्भावनया योगेनान्यैश्च साधनैरहंकारं निरस्य ॥ १३ ॥ अतोऽप्रमत्तः सन् हृदयग्रन्थिं दूरीकृत्य साधनादुपरमेत ॥ १४ ॥ ॥ मल्लोककामः पिता गुरुर्नृपो वा कर्ममूढान् पुत्रान् शिष्यान्

हंसे गुरौ मयि भक्त्याऽनुवृत्त्या वितृष्णया द्वन्द्वतितिक्षया च ॥ सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या ॥ १० ॥ मत्कर्मभिर्मत्कथया च नित्यं मद्देवसङ्गाद् गुणकीर्तनान्मे ॥ निर्वैरसाम्योपशमेन पुत्रा जिहासया देहगेहात्मबुद्धेः ॥ ११ ॥ अध्यात्मयोगेन विविक्तसेवया प्राणेन्द्रियात्माभिजयेन सध्र्यक् ॥ सच्छ्रद्धया ब्रह्मचर्येण शश्वदसंप्रमादेन यमेन वाचाम् ॥ १२ ॥ सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन ॥ योगेन धृत्युद्यमसत्त्वयुक्तो लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम् ॥ १३ ॥ कर्माशयं हृदयग्रन्थिबन्धमविद्ययाऽऽसादितमप्रमत्तः ॥ अनेन योगेन यथोपदेशं सम्यग् व्यपोह्योपरमेत योगात् ॥ १४ ॥ पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा मल्लोककामो मदनुग्रहार्थः ॥ इत्थं विमन्युरनुशिष्यादतज्ज्ञान्न योजयेत्कर्मसु कर्ममूढान् ॥ कं योजयन्मनुजोऽर्थं लभेत निपातयन्नष्टदृशं हि गर्ते ॥ १५ ॥ ❀ लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान्समीहेत निकामकामः ॥ अन्योन्यवैरः सुखलेशहेतोरनन्तदुःखं च न वेद मूढः ॥ १६ ॥ कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामन्तरे वर्तमानम् ॥ दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथाऽन्धम् ॥ १७ ॥ गुरुर्न स स्यात्स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात् ॥ दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेतमृत्युम् ॥ १८ ॥



प्रजाश्च कर्मसु न योजयेत् । मनुजः काम्यकर्मसु पुरुषं योजयन् संसारकूपे पातयति ॥ १५ ॥ स्वश्रेयसि नष्टदृष्टिर्लोकः सुखार्थमर्थानिच्छति दुःखं न वेद ॥ १६ ॥ तमीदृशं कुबुद्धिं दृष्ट्वा पुनस्तत्रैव कस्तं प्रवर्तयेत् । न कोऽपि ॥ १७ ॥ यो भक्तिमार्गोपदेशेन संसारात् नरं

१ तत्परतया । २ देहगेहयोरहं ममेति बुद्धिः । ३ सम्यगति सर्वेण सम्बन्धः 'सध्र्यक्' इ० पा० । ४ अनुभवपर्यन्ते । ५ अहंकाररूपमुपाधिम् । ६ कर्माधिष्ठानम् । ७ शिष्यादीन् कर्मसु । * 'एवं' नराणां विषयस्पृहा च निपातयन्निरये त्वन्धकूपे इत्यधिकः पाठः । ८ अतिशयेन कामो यस्य । ९ मृत्युः संसाररूपः ।

न मोचयेत् स गुरुः स्वजनः पिता माता पतिश्च न स्यात् ॥ १८ ॥ इदं मनुष्याकारं शरीरं मदिच्छाविलसितं न त्वहं प्राकृतो मनुष्यः॥१९॥ तस्मात् हे पुत्राः ! यूयं सर्वे ईर्ष्यां हित्वा ज्येष्ठं भरतं भजध्वम् । तद्भजनेनैव मे शुश्रूषा प्रजापालनं च स्यात् ॥२०॥ किंच स्थावरजङ्गमप्राणिषु गन्धर्वादयः श्रेष्ठाः ॥ २१ ॥ तेभ्यो देवास्तेभ्यो दक्षादयः । तेषां मध्ये शिवः । शिवाद् ब्रह्मा । तस्मादहम् । मत्तो ब्राह्मणाः श्रेष्ठाः

इदं शरीरं मम दुर्विभाव्यं सत्त्वं हि मे हृदयं यत्र धर्मः ॥ पृष्ठे कृतो मे यदधर्म आराद्दतो हि मामृषभं प्राहुरार्याः ॥ ॥ १९ ॥ तस्माद्भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सनाभम् ॥ अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ॥ २० ॥ भूतेषु वीरुद्भ्य उदुत्तमा ये सरीसृपास्तेषु सबोधनिष्ठाः ॥ ततो मनुष्याः प्रमथास्ततोऽपि गन्धर्वसिद्धा विबुधानुगा ये ॥ २१ ॥ देवासुरेभ्यो मघवत्प्रधाना दक्षादयो ब्रह्मसुतास्तु तेषाम् ॥ भवः परः सोऽथ विरिञ्चिवीर्यः स मत्परोऽहं द्विजदेवदेवः ॥२२॥ न ब्राह्मणैस्तुलये भूतमन्यत्पश्यामि विप्राः किमतः परं तु ॥ यस्मिन्नृभिः प्रहुतं श्रद्धयाऽहमश्नामि कामं न तथाऽग्निहोत्रे ॥२३॥ धृता तनूरुशती मे पुराणी येनेह सत्त्वं परमं पवित्रम् ॥ शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षाऽनुभवश्च यत्र ॥ २४ ॥ मत्तोऽप्यनन्तात्परतः परस्मात्स्वर्गापवर्गाधिपतेर्न किंचित् ॥ येषां किमु स्यादितरेण तेषामकिंचनानां मयि भक्तिभाजाम् ॥ २५ ॥ सर्वाणि मद्धिष्ण्यतया भवद्भिश्चराणि भूतानि सुता ध्रुवाणि ॥ संभावितव्यानि पदे पदे वो विविक्तदृग्भिस्तदुहार्हणं मे ॥ २६ ॥

॥ २२ ॥ ब्राह्मणतुल्यमन्यं न पश्यामि यस्य मुखे हुतं यथाऽहमश्नामि तथाऽग्निहोत्रे न ॥ २३ ॥ येन ब्राह्मणेनेह लोके वेदाख्या मे मूर्तिर्धृता यस्मिन् सत्त्वादयोऽष्टौ गुणाः सन्तिः ॥ २४ ॥ द्विजानां मत्तोऽपि किंचित् प्रार्थनीयं नास्ति । तेषां राज्यादिना किम् ॥२५॥ किंच सर्वभूतेषु मद्भावना कार्या । एतदेव ममार्हणम् ॥ २६ ॥

---

१ पृष्ठेकृतः उत्सारितः । २ दूरात् । ३ शुद्धभावेन । ४ सहोदरम् । ५ उदुच्चैरुत्तमाः । ६ निष्ठा स्थितिः । सबोधनिष्ठा पश्वादयः । ७ भूतप्रेतादयः । ८ देवाः असुरेभ्य इति पदच्छेदः । ९ देवासुराणाम् । १० विरिञ्चिजनितः ।

पुमानेवमर्हणेन विना कालपाशादात्मानं विमोक्तुं न समर्थो भवेत् ॥२७॥ श्रीशुक उवाच ॥ एवम् ऋषभाख्यो भगवान् पुत्राननुशास्य मुनीनां पारमहंस्यधर्मशिक्षयन् भरतं राज्येऽभिषिच्यात्मन्यग्निं समारोप्य देहमात्रावशेषितः उन्मत्त इव नग्नो ब्रह्मावर्तात् प्रवव्राज॥२८॥ जडान्धमूक-

मनोवचोदृक्करणेहितस्य साक्षात्कृतं मे परिबर्हणं हि ॥ विना पुमान्येन महाविमोहात्कृतान्तपाशान्न विमोक्तुमीशेत् ॥ २७ ॥ श्रीशुक उवाच ॥ एवमनुशास्यात्मजान्स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवानृषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज ॥ २८ ॥ जडान्धमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीं बभूव ॥ २९ ॥ तत्र तत्र पुरग्रामाकरखेटखर्वटवाटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपथमवनिचरापसदैः परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जनताडनावमेहनष्ठीवनग्रावशकृद्रजःप्रक्षेपपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान एतस्मिन्देहोपलक्षणे सदपदेश उभयानुभवस्वरूपेण स्वमहिमावस्थानेनासमारोपिताहंममाभिमानत्वादविखण्डितमनाः पृथिवीमेकचरः परिबभ्राम ॥ ३० ॥

बधिरपिशाचवदवधूतवेषो जनैरभिभाष्यमाणोऽपि तूष्णीं बभूव ॥२९॥ तत्र तत्र पुरग्रामखर्वटादिषु दुर्जनैर्भयजननप्रहारोपरि मूत्रणश्लेष्मक्षेपपाषाणविष्ठाधूलिप्रक्षेपाधोवायुत्यागादिभिः पीडितोऽपि देहे ममतां हित्वा स्थिरमनाः सन् पृथ्वीं बभ्राम ॥ ३० ॥



---

१ करणानि मनआदिव्यतिरिक्तेन्द्रियाणि । २ पूजनमेव साक्षात्कृतं फलं तस्येत्यर्थः । ३ कृषीवलग्रामः । ४ पुष्पादिवाटिका । ५ सेनानिवासः । ६ गोस्थानम् । ७ गोनिवासः । ८ मार्गे मार्गे । ९ दुर्जनैः । १० मिथ्यासंनिवेशे । ११ अलीकसत्वे । १२ उभयं सदसच्च ।

अपि च अतिसुकुमारसुन्दरसर्वावयवैः स्मितवदनमहोत्सवेन च पुरस्त्रीणां मनसि कामं समुद्दीपयन् जनानां ग्रहेण गृहीतवत् ददृशे ॥ ३१ ॥ तत आजगरीं वृत्तिं श्रितः शयान एवाश्नाति खादति पिबति मूत्रयति पुरीषमुत्सृजति पुरीषे विलुण्ठन् तेनैव लिप्तदेहः आस्ते ॥ ३२ ॥ तस्य पुरीषसुगन्धो दशयोजनप्रदेशं समन्तात् सुवासयति ॥ ३३ ॥ एवं गोमृगकाकचर्यया व्रजन् तिष्ठन्नासीनः शयानः पिबति खादति मेहति

अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृतिसुन्दरस्वभावहाससुमुखो नवनलिनदलायमानशिशिरतारारुणायतनयनरुचिरः सदृशसुभगकपोलकर्णकण्ठनासो विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरासनमुपदधानः परागवलम्बमानकुटिलजटिलकपिशकेशभूरिभारोऽवधूतमलिननिजशरीरेण ग्रहगृहीत इवादृश्यत ॥ ३१ ॥ यर्हि वाव स भगवाँल्लोकमिमं योगस्याद्धा प्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्म बीभत्सितमिति व्रतमाजगरमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हदति स्म चेष्टमान उच्चरित आदिग्धोद्देशः ॥ ३२ ॥ तस्य ह यः पुरीषसुरभिसौगन्ध्यवायुस्तं देशं दशयोजनं समन्तात्सुरभिं चकार ॥ ३३ ॥ एवं गोमृगकाकचर्यया व्रजस्तिष्ठन्नासीनः शयानः काकमृगगोचरितः पिबति खादत्यवमेहति स्म ॥ ३४ ॥ इति नानायोगचर्याचरणो भगवान्कैवल्यपतिर्ऋषभोऽविरतपरममहानन्दानुभव आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेव आत्मनोऽव्यवधानान्तरोदरभावेन सिद्धसमस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेशदूरग्रहणादीनि यदृच्छयोपगतानि नाञ्जसा नृप हृदयेनाभ्यनन्दत् ॥ ३५ ॥ इति श्रीभागवते महापुराणे पञ्चमस्कन्धे ऋषभदेवानुचरिते पञ्चमोऽध्यायः ॥ ५ ॥

॥ ३४ ॥ एवं नानायोगचर्याचरणो भगवान् ऋषभो वासुदेवेः आत्मनोऽभेदेन स्थितः सन् मध्ये यदृच्छया प्राप्तानि खेचरत्वमनोवेगान्तर्धानपरकायप्रवेशदूरदर्शनादियोगैश्वर्याणि मनसाऽपि नैच्छत् ॥ ३५ ॥ इति श्रीभागव० चू० पञ्चम० पञ्चमोऽध्यायः ॥ ५ ॥

१ शिशिरतारे तापहारिकनीनिके । २ पराक्पुरतः । ३ अनादृतम् । ४ पश्यन् । ५ परकृतस्य प्रतिकूलाचरणम् । ६ अव्यवधानेनाभेदेन अन्तरोदरभावेन अन्तरा मध्येऽविद्यमानो देहोपाधिर्यस्मिंस्तेन ।

षष्ठे लीनाभिमानस्य देहत्यागक्रमाभिधा ॥ प्रदहन्तं दवाग्निं यः पश्यन्नपि न पश्यति ॥१॥ राजोवाच ॥ भगवन् ! आत्मारामाणां योगिनां यदृच्छया प्राप्तानि योगैश्वर्याणि क्लेशदानि न भवन्ति। एवं सति ऋषभः कुतो नागृह्णात् तद्वद ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! भवता सत्यमुक्तम् अथापि ज्ञानिनो मनसो विश्वासं न कुर्वन्ति ॥२॥ अस्य विश्वासात् बहुकालसञ्चितं तपः स्रवति॥३॥ कृतविश्वासस्य योगिनो मनः कामा-

राजोवाच ॥ न नूनं भगवत आत्मारामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि ॥ १ ॥ ऋषिरुवाच ॥ सत्यमुक्तं किं त्विह वा एकेन मनसोऽद्धा विश्रम्भमनवस्थानस्य शठकिरात इव संगच्छन्ते ॥ २ ॥ तथा चोक्तम् ॥ न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते ॥ यद्विश्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम् ॥ ३ ॥ नित्यं ददाति कामस्य च्छिद्रं तमनु येऽरयः ॥ योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ ४ ॥ कामो मन्युर्मदो लोभः शोकमोहभयादयः ॥ कर्मबन्धश्च यन्मूलः स्वीकुर्यात्को नु तद् बुधः ॥ ५ ॥ अथैवमखिललोकपालललामोऽपि विलक्षणैर्जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावो योगिनां साम्परायविधिमनुशिक्षयन्स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तरभावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥ ६ ॥ तस्य ह वा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावासनया देह इमां जगतीमभिमानाभासेन सङ्क्रममाणः ॥ ७ ॥

दीनामवकाशं दत्त्वा योगिनं भ्रंशयति। यथा कृतविश्वासस्य पत्युः पुंश्चली स्त्री जाराणामवकाशं दत्त्वा पतिं घातयति ॥४॥ तथा हि कामक्रोधमदलोभादयो मनसो निमित्तात् भवन्ति। एवंभूतं मनः स्वाधीनं जातं को मन्येत ॥५॥ अथ सर्वलोकपालश्रेष्ठो भगवान् ऋषभदेवो योगिनां देहत्यागप्रकारं दर्शयन् स्वकलेवरं त्यक्तुमिच्छुः शान्तो बभूव ॥ ६ ॥ त्यक्तेऽप्यभिमाने किंचिदभिमानाभासेन तस्य देहः प्रावर्तत ॥ ७ ॥



१ ईरितमुद्दीप्तम्। २ अवभर्जितं दग्धम्। ३ चञ्चलस्य। ४ शठकिराते यथा। मृगाः इति शेषः। ५ समर्थानामपि सौभरिप्रभृतीनामिदम्। ६ तेषां चेति शेषः। ७ मनसा सह मैत्रं विश्रम्भः। ८ ध्यातृध्येयभावरहितम्। ९ अभेदेन। १० नष्टविषयानुषङ्गः।

स ऋषभः कोङ्कवेङ्ककुटकान् देशान् यदृच्छया प्राप्तः सन् कुटकपर्वतस्योपवने मुखे कृताश्मकवलः उन्मत्त इव मुक्तकेशो नग्न एव विचचार॥८॥ अथ वायुवेगेन कम्पितवेणूनां संघर्षणेनोग्रदावानलस्तद् वनं सर्वतो ग्रसन् ऋषभेण सह वनं ददाह ॥ ९ ॥ अथ ऋषभानुचरितं श्रुत्वा कोङ्कवेङ्कादिदेशानामर्हन्नाम राजा स्वधर्मं त्यक्त्वा कुपथपाखण्डं स्वबुद्ध्या संप्रवर्तयिष्यति॥१०॥ येन पाखण्डेन देवमायामोहिताः स्नानाचमनशौच-

कोङ्कवेङ्ककुटकान्दक्षिणकर्णाटकान्देशान्यदृच्छयोपगतः कुटकाचलोपवन आस्यकृताश्मकवल उन्माद इव मुक्तमूर्धजोऽसंवीत एव विचचार ॥८॥ अथ समीरवेगविधूतवेणुविकर्षणजातोग्रदावानलस्तद्वनमालेलिहानः सह तेन ददाह ॥ ९ ॥ यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजार्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः संप्रवर्तयिष्यते ॥ १० ॥ येन ह वाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्नानाचमनाशौचकेशोल्लुञ्चनादीनि कलिनाधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति ॥ ११ ॥ ते च ह्यर्वाक्तनया निजलोकयात्रयान्धपरम्परयाऽऽश्वस्तास्तमस्यन्धे स्वयमेव प्रपतिष्यन्ति ॥१२॥ अयमवतारो रजसोपप्लुतकैवल्योपशिक्षणार्थः ॥ तस्यानुगुणाञ्श्लोकान्गायन्ति ॥१३॥ अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत् ॥ गायन्ति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवन्ति ॥ १४ ॥

विहीनाः केशोल्लुञ्चनास्तद्देशीया जनाः अधर्मेण वेदब्राह्मणयज्ञपुरुषादिविदूषका भविष्यन्ति ॥ ११ ॥ ते जनाः अन्धपरम्परया स्वेच्छाकृतप्रवृत्त्या नरके पतिष्यन्ति ॥१२॥ अयमवतारो रजोगुणव्याप्तजनानां मोक्षमार्गशिक्षणार्थः । तस्य गुणान् गायन्ति ॥१३॥ अहो ! सप्तसमुद्रवत्या भुवो द्वीपेषु सर्वखण्डेषु च भारतं खण्डमधिपुण्यं यत्रत्य जनाः हरेर्ऋषभाद्यवतारयुक्तानि कर्माणि गायन्ति ॥ १४ ॥

---

१ सर्वतो प्रसमानः । २ अपसदाः निकृष्टाः । ३ स्वविधिना नियोगो यस्मिन् । ४ अवेदमूलया । ५ रजोव्याप्तानां मोक्षमार्गनिरूपणार्थः ।

अहो प्रियव्रतस्य वंशो यशसा शुद्धः यस्य वंशे धृतावतारः पुरुषो मोक्षधर्मं चचार ॥ १५ ॥ अपरो योगी ऋषभस्य मार्गं को गच्छेत् न कोऽपि ॥ १६ ॥ एवं परमगुरोर्ऋषभाख्यस्य चरितं सर्वपातकहरं परममङ्गलायनं कथयितुः श्रोतॄणां च वासुदेवे भक्तिर्भवति ॥ १७ ॥ यस्यां

अहो नु वंशो यशसाऽवदातः प्रैयव्रतो यत्र पुमान्पुराणः ॥ कृतावतारः पुरुषः स आद्यश्चचार धर्मं यदकर्महेतुम् ॥ १५ ॥ को न्वस्य काष्ठामपरोऽनुगच्छेन्मनोरथेनाप्यभवस्य योगी ॥ यो योगमायाः स्पृहयत्युदस्ता ह्यसत्तया येन कृतप्रयत्नाः ॥ १६ ॥ इति ह स्म सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धाचरितमीरितं पुंसां समस्तदुश्चरिताभिहरणं परममहामङ्गलायनमिदमनुश्रद्धयोपचितयाऽनुशृणोत्याश्रावयति वाऽवहितो भगवति तस्मिन्वासुदेव एकान्ततो भक्तिरनयोरपि समनुवर्तते ॥ १७ ॥ यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसार-परितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः ॥ १८ ॥ राजन्पतिर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किंकरो वः ॥ अस्त्वेवमङ्ग भगवान्भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ॥ १९ ॥ नित्यानुभूतनिजलाभनिवृत्ततृष्णः श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः ॥ लोकस्य यः करुणयाऽभयमात्मलोकमाख्यान्नमो भगवते ऋषभाय तस्मै ॥२०॥ इति श्रीभागव० म० पञ्चम० ऋषभदेवानुचरितं नाम षष्ठोऽध्यायः ॥ ६ ॥

भक्त्यां कवयः स्वात्मानं रात्रिंदिवं स्नापयन्तो मोक्षसुखं नैवाद्रियन्ते ॥ १८ ॥ हे राजन् ! मुकुन्दो भजतां मुक्तिं कदाचिद् ददाति भक्तिं न ॥ १९ ॥ य ऋषभः करुणया लोकस्यात्मरूपं कथितवान् तस्मै नमोऽस्तु ॥ २० ॥ इति श्रीभागव० चू० पञ्चम० ऋषभदेवानुचरितं नाम षष्ठोऽध्यायः ॥ ६ ॥



१ यो योगी । २ अवस्तुत्वेन येन ऋषभेण निरस्ताः । ३ कृतः प्रयत्नो यासु ताः । ४ श्रोतृश्रावयित्रोः । ५ पाण्डवानाम् । ६ निजरूपमेव लाभः । ७ अतत् मिथ्यार्थः देहाद्यर्थमनोरथेन । ८ श्रेयसि सुप्तेत्यन्वयः ।

अध्यायानां त्रयेणैवमृषभाख्यानमीरितम् ॥ अष्टभिर्भरताख्यानमतः प्रस्तूयतेऽमृतम् ॥ १ ॥ सप्तमे भरतो राज्ये चिरं यज्ञैर्हरिं यजन् ॥ आरब्ध-कर्मनिर्वाणे हरिक्षेत्रेऽभजद्धरिम् ॥२॥ श्रीशुक उवाच ॥ भरतस्तु महाभागवतो यदा स्वपित्रा ऋषभेण पृथ्वीपालनाय योजितः तदा तस्याज्ञापरो भूत्वा विश्वरूपकन्यां पञ्चजनीमुपयेमे ॥१॥ तस्यां स्वसदृशान् पञ्च पुत्रान् जनयामास ॥२॥ सुमतिं १, राष्ट्रभृतं २, सुदर्शनम् ३, आवरणं ४,

श्रीशुक उवाच ॥ भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय संचिन्तितः तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे ॥१॥ तस्यामु ह वा आत्मजान्कार्त्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि ॥ २ ॥ सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति ॥ अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशंति ॥ ३ ॥ स बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वे स्वे कर्मणि वर्तमानाःप्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत ॥४॥ ईजे च भगवंतं यज्ञक्रतुरूपं क्रतुभिरुच्चावचैः श्रद्धयाऽऽहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना ॥५॥ संप्रचरत्सु नानायागेषु विरचितांगक्रियेष्वपूर्वं यत्तत् क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिंगानां मन्त्राणामर्थनियामकतया साक्षात्कर्त्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान्पुरुषावयवेष्वभ्यध्यायत ॥ ६ ॥

धूम्रकेतुम् ५ इति । किंच यस्य नाम्ना पूर्वमजनाभखण्डं सद् भारतमिति कथयन्ति ॥३॥ एवं भूतो राजा भरतः स्वधर्मनिष्ठाः प्रजा पितृवत् पालयामास ॥ ४ ॥ स यज्ञेश्वरं हरिमग्निहोत्रादिभिः सर्वैर्यज्ञैर्निष्कामत्वेनेजे ॥५॥ किंच एवं प्रवर्तमानेषु यागेषु यदपूर्वं क्रियाफलं तद् भगवति चिन्तयन् यज्ञभाजः सूर्यादिदेवान् भगवतश्चक्षुराद्यवयवेषु दध्यौ ॥ ६ ॥

---

१ भूतादिरहंकारः । २ अग्निहोत्रादयो द्विविधाः प्रकृतयः सकलाङ्गयुक्ताः विकृतयो विकलाङ्गाश्चेति । ३ तदानीमेव सूक्ष्मत्वेनोत्पन्नं फलं कालान्तरे फलोत्पादिका कर्मशक्तिर्वा । ४ लिङ्गानां प्रकाशकानाम् । ५ अर्थाः इन्द्रादयस्तेषां नियामकतया । ६ कषाया रागादयः । ७ सूर्यादीन् । ८ पुरुषावयवत्वेनाचिन्तयत् ।

एवं वर्तमानस्य वासुदेवे भगवति भक्तिः प्रतिदिनं वृद्धिं जगाम॥७॥एवमयुतसहस्रवर्षपर्यन्तं राज्यं भुक्त्वा पुत्रेभ्यो यथाविभागं धनं विभज्य स्वयं सर्वसंपत्तिं विहाय स्वगृहात् पुलहाश्रमं हरिक्षेत्रं जगाम॥ यत्र हरिरद्यापि तत्रत्यभक्तानां सान्निध्यं ददाति॥ ८॥ यत्राश्रमे उभयतटे

एवं कर्मविशुद्ध्या विशुद्धसत्त्वस्यान्तर्हृदयाकाशशरीरे[1] ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभवनमालाऽरिदरगदादिभिरुपलक्षिते निजपुरुषहृल्लिखितेनात्मनि[2] पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरया अजायत ॥ ७ ॥ एवं वर्षायुतसहस्रपर्यंतावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं[3] स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात्स्वनिकेतात्पुलहाश्रमं प्रवव्राज ॥ यत्र ह वाव भगवान्हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन संनिधाप्यत इच्छारूपेण ॥ ८ ॥ यत्राश्रमपदान्युभयतो नाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति ॥ ९ ॥ तस्मिन् वाव किल स एकलः[4] पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त[5] उपरतविषयाभिलाष उपभृतोपशमः परां निर्वृतिमवाप ॥ १० ॥ तयेत्थमविरतपुरुषपरिचर्यया भगवति प्रवर्धमानानुरागभरद्रुतहृदयशैथिल्यः[6] प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयन एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीरहृदयह्रदावगाढधिषणस्तामपि[7] क्रियमाणां भगवत्सपर्यां न सस्मार ॥ ११ ॥

शालिग्रामशिलाभिः पूर्णा गण्डकी सरिच्छ्रेष्ठा सर्वतः पवित्रीकरोति ॥ ९ ॥ तत्राश्रमेऽनेकपुष्पतुलसीजलैः कन्दमूलफलोपहारैश्च भगवत्पूजां कुर्वन् परां निर्वृतिं प्राप॥१०॥ एवं पूजाभक्तियोगेन शिथिलहृदयः परमानन्दमग्नः प्रेम्णा बाष्पपूर्णनयनः क्रियमाणां पूजामपि न सस्मार॥११॥



---

१ आकाशमेव शरीरं यस्य तस्मिन् । २ नारदादिहृदयेषु लिखितवन्निश्चलतया स्थितेन । ३ कर्त्री । ४ एकः । ५ शुद्धः । ६ द्रवीभूते हृदये शैथिल्यमनुपमो यस्य सः । ७ परिप्लुतः सर्वतो व्याप्तः गम्भीरे हृदयह्रदेऽवगाढा धिषणा यस्य सः ।

इत्थं धृत भगवद्व्रतः कृष्णमृगचर्म वासास्त्रिकालस्नानेनार्द्राः धूम्राश्च याः वक्रजटास्तासां कलापेन रोचमानो भरतः सूर्ये उदिते सति हिरण्मयं पुरुषं ध्यायन् जगाद ॥१२॥ सूर्यस्य सर्वकर्मफलदं जगदुत्पत्तिस्थितिसंहारकरं तेजः प्रति वयं शरणं व्रजामः ॥ १३ ॥ इति श्रीभागवते चू० पञ्चम० भरतचरिते सप्तमोऽध्यायः ॥ अष्टमे भजतो विष्णुं तस्य कर्मान्तरायतः ॥ एणरक्षाप्रसक्तस्य जातमेणत्वमीर्यते ॥१॥ कृपयाऽपि कृतः सङ्गः

इत्थं धृतभगवद्व्रत ऐणेयाजिनवाससाऽनुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च विरोचमानः सूर्यर्चा भगवन्तं हिरण्मयं पुरुषमुज्जिहाने सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदु होवाच ॥ १२ ॥ परोरजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान ॥ सुरेतसाऽदः पुनराविश्य चष्टे हंसं गृध्राणं नृषद्रिङ्गिरामिमः ॥ १३ ॥ इति श्रीभागवते महा० पञ्चमस्कन्धे भरतोपाख्याने भगवत्परिचर्यायां सप्तमोऽध्यायः ॥ ७ ॥ श्रीशुक उवाच ॥ एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्त उपविवेश तत्र तदा राजन्हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम ॥ तया पेपीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयंकर उदपतत् ॥ १ ॥ तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगततृषा भयात्सहसैवोच्चक्राम ॥ २ ॥

पतनायैव योगिनः ॥ इति प्रदर्शयन्नाह भरतस्यैणपोषणम् ॥२॥ श्रीशुक उवाच हे । राजन् ! एकदा भरतो गण्डक्यां नद्यां स्नानादिनित्यनैमित्तिकविधिं कृत्वा प्रणवं जपन् मुहूर्तत्रयं नद्यास्तीरमुपविवेश । तदा तत्रैका हरिणी गर्भिणी पिपासया जलसमीपे आजगाम । तया पेपीयमाने उदके तदैव समीपे सिंहस्य भयंकरः शब्दो बभूव ॥ १ ॥ तं श्रुत्वा हरिणी सिंहभयेन परिभ्रान्तनेत्राऽगततृषा सहसैव नदीमुल्लङ्घितवती ॥२॥

---

१ सूर्यप्रकाशिकया ऋचा । २ रजसः प्रकृतेः परं सत्त्वात्मकम् । ३ जातं वेदो धनं यस्मात्तत् । ४ इदं विश्वं जजान ससर्ज । ५ चिच्छक्त्या । ६ विश्वम् । ७ हंसं जीवं गृध्राणं काङ्क्षन्तम् । ८ नृषु सीदत्युपाधितया तिष्ठतीति नृषद् बुद्धिस्तस्यां रिङ्गः रिङ्गणं रातीति नृषद्रिङ्गिराम् ।

तदा गर्भवत्यास्तस्याः उड्डयनसमये योनिनिर्गतो गर्भः प्रवाहे निपतात। तद्दुःखेनातुरा सती कस्यांचित् पर्वतगुहायां गत्वा निपपात मृत्युं प्राप च ॥३॥ ततस्तं हरिणबालं प्रवाहेणोह्यमानं वीक्ष्य राजर्षिर्भरतो मृतमातृक इति मत्वा कृपया स्वाश्रमं निनाय ॥ ४ ॥ तस्मिन् बालके स्वीय इत्यभिमानेनानुदिनं तत्पालनपोषणचुम्बनादिना हरिपूजानियमाः सर्वे शनैःशनैरुत्सन्ना बभूवुः ॥५॥ अयं हरिणबालकः स्वबन्धुवर्जितो

तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो योनिनिर्गतो गर्भः स्रोतसि निपपात ॥ तत्प्रसवोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्यांचिद्दर्यां कृष्णसारसती निपपाताथ च ममार ॥ ३ ॥ तं त्वेणकुणकं कृपणं स्रोतसाऽनूह्यमानमभिवीक्ष्यापविद्धं बन्धुरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत् ॥ ४ ॥ तस्य ह वा एणकुणक उच्चैरेतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनलालनप्रीणनानुध्यानेनात्मनियमाः सह-यमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ५ ॥ अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातापितरौ भ्रातृज्ञातीन्यौथिकांश्चैवोपेयाय नान्यं कंचन वेद मय्यतिविश्रब्धश्च ॥ अत एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमनसूयुनाऽनुष्ठेयं शरण्योपेक्षादोषविदुषा ॥ ६ ॥ नूनं ह्यार्याः साधव उपशमनशीलाः कृपणसुहृद एवंविधार्थे स्वानर्थानपि गुरुतरानुपेक्षन्ते ॥ ७ ॥ इति कृतानुषङ्ग आसनशयनाटनस्थानाशनादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत् ॥ ८ ॥ कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणो वृकसालावृकादिभ्यो भयमाशंसमानो यदा सह हरिणकुणकेन वनं समाविशति ॥ ९ ॥

मामेव मातापित्रादिबुद्ध्या प्राप्तः अतोऽवश्यं मयाऽस्य पोषणपालनादिकं कार्यम् ॥६॥ नूनमार्याः कृपणसुहृदः एवंविधेर्थे स्वार्थानप्युपेक्षन्ते ॥ ७ ॥ एवमासनशयनाटनस्थानाशनादिषु मृगबालेन सह स्नेहानुबद्धहृदयः आसीत् ॥ ८ ॥ यदा कुशपुष्पसमिदाद्यानेतुमिच्छन् भरतो वृकादिभ्यो भयं शङ्कमानो भवति तदा मृगेण सह वनं प्रविशति ॥ ९ ॥

१ ईश्वररथचरणः कालचक्रम् । २ एतन्निमित्तं मे स्वार्थो भ्रश्यतीति स्वार्थदृष्टिमकुर्वता । ३ अनुषङ्गः आसक्तिः । ४ सालावृकाः श्वानः ।

मार्गे मुग्धभावेन सक्तं स्कन्धेनोद्वहति । एवमुत्सङ्गे निधाय लालयन् परमं हर्षं प्राप ॥ १० ॥ कदाचित् निर्वर्त्यमानायां क्रियायामन्तरा-लेषूत्थायोत्थाय यदा बालं पश्यति तदा हे वत्स ! ते स्वस्ति भूयात् एवमाशिषं ददाति॥ ११॥ एवं तस्मिन् सक्ते सति स हरिणबालकः किञ्चि-त्प्रौढः सन् पलाय्य गतः । तदा हरिणवियोगेन विह्वलहृदयसंतापो मोहं प्राप्तः सन् जगाद ॥ १२॥ अयं मृगबालको निर्भाग्यस्य ममापराधान् न

तदा पथिषु च मुग्धभावेन तत्र तत्र विषक्तमतिप्रणयभरहृदयः कार्पण्यात्स्कन्धेनोद्वहति ॥ एवमुत्संग उरसि चाधा-योपलालयन्मुदं परमामवाप ॥ १० ॥ क्रियायां निर्वर्त्यमानायामन्तरालेष्वुत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्षपतिः प्रकृतिस्थेन मनसा तस्मा आशिष आशास्ते स्वस्ति स्याद् वत्स ते सर्वतः इति ॥ ११ ॥ अन्यदा भृशमुद्विग्नमना नष्टद्रविण इव कृपणः सकरुणमतितर्षेण हरिणकुणकविरहविह्वलहृदयसंतापस्तमेवानुशोचन्किल कश्मलं महदभिरम्भित इति होवाच ॥ १२ ॥ अपि बत स वै कृपण एणबालको मृतहरिणीसुत अहो ममानार्यस्य शठकिरातमतेकृतसुकृतस्य कृतविश्रम्भ आत्मप्रत्ययेन तदविगणयन्सुजन इवागमिष्यति किम् ॥ १३ ॥ अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरन्तं देवगुप्तं द्रक्ष्यामि ॥ १४ ॥ अपि च न वृकः सालावृकोऽन्यतमो वा नैकचर एकचरो वा भक्षयति ॥ १५ ॥ निम्लोचति ह भगवान्सकलजगत्क्षेमोदयस्त्रय्यात्माऽद्यापि मम न मृग-वधून्यासं आगच्छति ॥ १६ ॥ अपिस्विदकृतसुकृतमागत्य मां सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्श-नीयनिजमृगदारकविनोदैरसन्तोषं स्वानामपनुदन् ॥ १७ ॥

गणयन्नेष्यति किम् ॥ १३ ॥ किंच अस्मिन्नाश्रमे कोमलतृणानि चरन्तं देवरक्षितं द्रक्ष्यामि किम् ॥ १४ ॥ अपि च एनं वृकादयो न भक्षयि-ष्यन्ति किम् ॥ १५ ॥ अस्मिन् सूर्येऽस्तं गच्छत्यपि मे मृगबालो नागच्छत् ॥ १६ ॥ किंच हरिणराजकुमारोऽत्रागत्य स्वबालचेष्टितैर्मां सुखयिष्यति किम् ॥ १७ ॥

---

१ भरतः । २ स्वस्थेन । ३ मोहं प्रापितः सन् । ४ आत्मौपम्येन स्वचित्तशुद्धया कृतविश्वासः । ५ वेदात्मा । ६ हरिण्यर्पितो निक्षेपः ।

अहो क्रीडायां मृदुशृङ्गाग्रेण मां घर्षयति ॥१८॥ स्थापितहविषि दर्भे दन्ताकर्षणादिना दूषिते सति मया हुंकृतः सन् स्तब्ध इवास्ते ॥१९॥ एवं बहुधा विलप्योत्थाय पर्णकुटयाः बहिर्निर्गत्य तत्खुराङ्कितमहीं वीक्ष्य जगाद ।अहो अनया पृथ्व्या किं तपः आचरितं यस्मात् यद्वियोगेन



क्ष्वेलिकायां मां मृषासमाधिनाऽऽमीलितदृशं प्रेमसंरम्भेण चकितचकित आगत्य पृषदपरुषविषाणाग्रेण लुठति ॥ १८ ॥ आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीतः सपद्युपरतरास ऋषिकुमारवदवहितकरण-कलाप आस्ते ॥ १९ ॥ किं वा अरे आचरितं तपस्तपस्विन्याऽनया यदियमवनिः सविनयकृष्णसारतनयतनुतर-सुभगशिवतमाखरखुरपदपंक्तिभिर्द्रविणविधुरातुरस्य कृपणस्य मम द्रविणपदवीं सूचयन्त्यात्मानं च सर्वतः कृतकौतुकं द्विजानां स्वर्गापवर्गकामानां देवयजनं करोति ॥ २० ॥ अपिस्विदसौ भगवानुडुपतिरेनं मृगपतिभया-न्मृतमातरं मृगबालकं स्वाश्रमपरिभ्रष्टमनुकम्पया कृपणजनवत्सलः परिपाति ॥ २१ ॥ किं वाऽऽत्मजविश्लेषज्वर-दवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनीकं मामुपसृतमृगीतनयं शिशिरशान्तानुरागगुणितनिजवदनसलि-लामृतमयगभस्तिभिः स्वधयतीति च ॥ २२ ॥

दुःखितस्य मम तत्पादन्यासैस्तन्मार्गं दर्शयति ॥ २० ॥ तावदुदिते चन्द्रे मृगं दृष्ट्वा स्वमृगत्वं सम्भावयन् जगाद । अहो असौ चन्द्रः एवं हरिणबालकं कृपणजनवत्सलः सन् पालयति किम् ॥ २१ ॥ किंच तद्वियोगदह्यमानहृदयं मां प्रति चन्द्रः स्वशीतलकिरणैरमृतं सिञ्चति किम् ॥ २२ ॥



---

१ पृषज्जर्लाबंदुस्तद्वदपरुषम् । २ रासः क्रीडा । ३ पदपङ्क्तिभिश्चिह्नितम् । ४ यज्ञभूमिम् यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधतेति स्मृतेः । ५ उपसृतः अनुगतो मृगीतनयो येन तम् । मय्य नुरागेण गुणितं पुनः पुनः । ६ स्रवत् सलिलमेवामृतमय्यः गभस्तयस्तैः—लोके हि मन्त्रवादिनो वदनसलिलैस्तापं शमयन्तीति प्रसिद्धिः । ७ शान्तिं गमयति ।

एवमघटमानमनोरथो व्याकुलहृदयः प्रारब्धकर्मणा भगवदाराधनधर्माद् भ्रंशितो जातः। अन्यथा जात्यन्तरे कथं सङ्गः स्यात्। एवं तस्य पालनपोषणादिनाऽऽत्मचिन्तामकुर्वतो भरतस्य स कालः प्राप्तः॥२३॥ तत्समयेऽपि स्वपुत्रमिव पार्श्ववर्तिनं शोचन्तं वीक्ष्य मृगे आवेशितमनाः मनुष्यदेहं हित्वा मृगशरीरं प्राप। पूर्वजन्मनः स्मृतिर्भगवदाराधनात् तस्य न नष्टा ॥२४॥ एवमात्मनो मृगरूपप्राप्तिकारणं ज्ञात्वा तप्यमानो

एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशितः सः योगतापसो भगवदाराधनलक्षणाच्च कथमितरथा जात्यन्तर एणकुणक आसङ्गः॥ साक्षान्निःश्रेयसप्रतिपक्षतया प्राक्परित्यक्त-दुस्त्यजहृदयाभिजातस्य तस्यैवमन्तरायविहतयोगारम्भणस्य राजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीण नलालनानुषङ्गेणाविगणयत आत्मानमहिरिवाखुबिलं दुरतिक्रमः कालः करालरभस आपद्यत ॥ २३ ॥ तदानीमपि-पार्श्ववर्तिनमात्मजमिवानुशोचन्तमभिवीक्षमाणो मृग एवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कले-वरं मृतमनु न मृतजन्मानुस्मृतिरितरवन्मृगशरीरमवाप ॥ २४ ॥ तत्रापि ह वा आत्मनो मृगत्वकारणं भगवदारा-धनसमीहानुभावेनानुस्मृत्य भृशमनुतप्यमान आह ॥ २५ ॥ अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्त-सङ्गस्य विविक्तपुण्यारण्यशरणस्यात्मवत आत्मनि सर्वेषामात्मनां भगवति वासुदेवे तदनुश्रवणमननसंकीर्तनारा-धनानुस्मरणाभियोगेनाशून्यसकलयामेन कालेन समावेशितं समाहितं कार्त्स्न्येन मनस्तत्तु पुनर्ममाबुधस्यारान्मृ-गसुतमनुपरिसुस्राव ॥ २६ ॥ इत्येवं निगूढनिर्वेदो विसृज्य मृगीमातरं पुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितं शालग्रामं पुलस्त्यपुलहाश्रमं कालञ्जरात्प्रत्याजगाम ॥ २७ ॥

भरतः आह ॥ २५ ॥ अहो कष्टम् मृगसंगेन भगवदाराधनात् भ्रष्टोऽहम् ॥२६॥ इत्यादिप्राप्तवैराग्यो मृगीमातरं विसृज्य पुनः कालञ्जरपर्वतात् पुलस्त्याश्रमं जगाम ॥ २७ ॥

---

१ हृदयाभिजाताः औरसाः । २ तीव्रवेगः । ३ धीराणाम् । ४ विविक्तं पुण्यारण्यं शरणं यस्य तस्य । ५ शालवृक्षोपलक्षितं ग्रामम् । ६ यत्र हरिणो जातस्तस्मात्कालञ्जराख्यात्पर्वतात् ।

तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाद् भीतः एक एव शुष्कपर्णादि भक्षयन् कालेनार्धोदकस्थं मृगशरीरं तत्याज ॥ २८ ॥ इति श्रीभागव०चू० पञ्चम० अष्टमोऽध्यायः॥८॥ नवमे जडविप्रत्वे तस्य रागाद्यभावतः । भद्रकालीपशुत्वेऽपि निर्विकारत्वमीर्यते ॥ १ ॥ पितुः प्राप्तात्मविज्ञानो भरतो मृगतां गतः। प्रारब्धकर्मयोगेन तदन्ते जडविप्रताम्॥२॥ श्रीशुक उवाच ॥ अथ कस्यचिदंगिरोगोत्रोत्पन्नस्यात्मज्ञानानन्दयुक्तस्य द्विजस्य



तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः शुष्कपर्णतृणवीरुधा वर्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज ॥ २८ ॥ इति श्रीभागव० महा० पञ्चम० भरतोपाख्याने मनुष्यदेहत्यागपूर्वकमृगशरीरप्राप्तिवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ अथ कस्यचिद्द्विजवरस्याङ्गिरःप्रवरस्य शमदमतपस्स्वाध्यायाध्ययनत्यागसंतोषतितिक्षाप्रश्रयविद्यानसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्या अङ्गजा बभूवुः ॥ मिथुनं च यवीयस्यां भार्यायाम् ॥ १ ॥ यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः ॥२॥ तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो भगवतः [1]कर्मबन्धविध्वंसनश्रवणस्मरणगुणविवरणचरणारविन्दयुगलं मनसा विदधदात्मनः प्रतिघातमाशङ्कमानो भगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडान्धबधिरस्वरूपेण दर्शयामास लोकस्य ॥ ३ ॥ तस्यापि ह वा आत्मजस्य विप्रः पुत्रस्नेहानुबद्धमना आसमावर्तनात्संस्कारान्यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन्कर्मनियमाननभिप्रेतानपि समशिक्षयद् अनुशिष्टेन हि भाव्यं पितुः पुत्रेणेति ॥ ४ ॥

ज्येष्ठपत्न्यां नव पुत्रा बभूवुः । कनिष्ठभार्यायां कन्यापुत्रौ जातौ ॥१॥ यस्तत्र पुमान् तं परमभागवतं त्यक्तमृगशरीरं चरमेण शरीरेण विप्रत्वं गतमाहुः ॥२॥ तत्र विप्रजन्मन्यपि स्वजनसंगाद् भीतः सन् भगवच्चरणाम्बुजं ध्यायन् जडान्धबधिर इवात्मानं दर्शयामास ॥ ३ ॥ पिता भरतस्योपनयनान्तान् संस्कारान् कृत्वा शौचाचमनादिनियमान् शिक्षयामास ॥ ४ ॥

---

१ कर्मबन्धविध्वंसनं स्मरणगुणविवरणं तस्य यस्य चरणयुगलम् । २ भरतस्येति शेषः ।

भरतोपि पितुः शिक्षाऽऽग्रहनिवृत्तयेऽसमीचीनमिव तान् करोति स्म । पिता पुनर्वेदादीनध्यापयिष्यन् चतुरो मासान् सावित्रीमधीयमानमपि पुत्रमप्राप्तमिव ददर्श ॥ ५ ॥ एवमप्राप्तमनोरथो भरतस्य पिता कालेन मृतः ॥६॥ ततः कनिष्ठपत्नी सपत्न्यां स्वकन्यापुत्रौ कृत्वा पतिलोकं गता । एवं पितरि मृते सति नव भ्रातरो भरतप्रभावमजानन्तोऽयं जड इति निश्चयं कृत्वा तस्य शिक्षणाद् विरेमुः ॥ ७ ॥ स च द्विपदपशु-

सचापि तदु ह पितृसन्निधावेवासध्रीचीनमिव स्म करोति छन्दांस्यध्यापयिष्यन्सह व्याहृतिभिः सप्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवासन्तिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास ॥ ५ ॥ एवं स्वतनुज आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणककर्माण्यनभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य स्वयं तावदनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृह एव प्रमत्त उपसंहृतः ॥ ६ ॥ अथ यवीयसी द्विजसती स्वगर्भजातं मिथुनं सपत्न्यामुपन्यस्य स्वयमनुसंस्थया पतिलोकमगात् ॥ पितर्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न परविद्यायां जडमतिरिति भ्रातुरनुशासननिर्बन्धान्न्यवृत्सन्त ॥७॥ सच प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्माणि च स कार्यमाणः परेच्छया करोति विष्टितो वेतनतो वा याञ्चया यदृच्छया वोपसादितमल्पं बहुमिष्टं कदन्नं वाऽभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम् ॥ ८ ॥ नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगमः सुखदुःखयोर्द्वन्द्वनिमित्तयोरसंभावितदेहाभिमानः ॥ ९ ॥

भिर्यदाऽभिभाष्यमाणस्तदा तदनुरूपाणि प्रभाषते । किंच मिष्टान्नं कदन्नं वा भुङ्क्ते ॥ ८ ॥ यतो मानापमानादिद्वन्द्वनिमित्तयोः सुखदुःखयोरकृतदेहाभिमानः ॥ ९ ॥

---

१ चैत्रादींश्चतुरो मासान् । २ मासचतुष्टयेनापि पुत्रस्य स्वरानुपूर्व्यादियुक्तं व्याहृत्यादि नागतमित्यर्थः । ३ आत्मभूते स्वतनुजे आत्मा वै पुत्रनामासीति श्रुतेः । ४ औपकुर्वाणकर्माणि सावधिकब्रह्मचर्यव्रतसम्बंधीनि । ५ अनादृतान्यपि । ६ निर्वर्तितुमैच्छन् । ७ नित्यनिवृत्तनिमित्तः उत्पादकशून्यः स्वसिद्धोऽभिव्यञ्जकशून्यः केवलानन्दरूपः आत्मा तस्य लाभः स एवाहमिति ज्ञानं तस्य प्राप्तिर्यस्य सः । ८ असंभावितोऽकृतः ।

कुवस्त्रखण्डैर्वेष्टितकटिः शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पुष्टः कठिनावयवः स्नानादिरहितः स मलिनोपवीतेन ब्रह्मबन्धुरिति संज्ञयाऽज्ञजनैरव-मतः सन् विचचार ॥१०॥ यदा भ्रातृभिः शालिक्षेत्रकर्दमविलोडनादावाहारप्रलोभे योजितः सन् तदपि करोति तथाऽप्यत्र कर्दमस्य प्रक्षेपे इदं क्षेत्रं समं भवेदित उद्धरणे विषमं स्यात् इति न वेद । किंच भ्रातृभिर्दत्तं कणतिलकिट्टतुषकीटदुष्टमाषदग्धान्नादिकममृतवद् भक्षयति॥११॥अथ कदाचित्

शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिलसंवेशनानुन्मर्दनामज्जनरजसा महामणिरिवानभिव्य-क्तब्रह्मवर्चसः कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरितिब्रह्मबन्धुरिति संज्ञया अतज्ज्ञजनावमतो विचचार ॥ १० ॥ यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि करोति किं तु न समविषम-न्यूनमधिकमिति वेद कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृतवदभ्यवहरति ॥११॥ अथ कदाचित्क-श्चिद् वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः ॥ १२ ॥ तस्य ह दैवमुक्तस्य पशोः पदवीं तदनुचराः परिधा-वन्तो निशि निशीथसमये तमसाऽऽवृतायामनधिगतपशव आकस्मिकेन विधिना केदारान्वीरासनेन मृगवराहा-दिभ्यः संरक्षमाणमङ्गिरःप्रवरसुतमपश्यन् ॥ १३ ॥ अथ त एतमनवद्यलक्षणमवमृश्य भर्तृकर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चण्डिकागृहमुपनिन्युर्मुदा विकसितवदनाः ॥ १४ ॥ अथ पणयस्तं स्वविधिनाऽभिषिच्याहतेन वाससा-ऽऽच्छाद्य भूषणालेपस्रक्तिलकादिभिरुपस्कृतं भुक्तवन्तं धूपदीपमाल्यलाजकिसलयाङ्कुरफलोपहारोपेतया वैश-ससंस्थया महता गीतस्तुतिमृदङ्गपणवघोषेण च पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः ॥ १५ ॥

चोरराजः पुत्रकामः सन् भद्रकाल्यै पुरुषपशुमालब्धुं प्रवृत्तः॥१२॥ ततो बलिदानकाले पलायितस्य पशोः पदवीं मृगयन्तस्तद्दूताः अर्धरात्रसमये पलायितं तं न प्राप्य क्षेत्ररक्षणे स्थितं जडभरतं दृष्ट्वा॥१३॥ रशनया बद्ध्वा हर्षेण चण्डिकागृहं निन्युः॥१४॥ अथ चोरास्तं स्वविधिना स्नापयित्वा वस्त्रभूषणलेपनमालातिलकादिभिरलंकृतं भुक्तवन्तं पुरुषपशुं महापूजया पूजितायाः भद्रकाल्याः अग्रे मृदङ्गादिघोषेण सहोपवेशयामासुः॥१५॥

१ देवनिर्मितप्रकारेण । २ अहतं नूतनम् । ३ हिंसाविधानेन ।

अथ चोरराजपुरोहितः पुरुषपशोः रक्तेन भद्रकालीं यक्ष्यमाणः शिरश्छेत्तुं तन्मन्त्राभिमन्त्रितं तीक्ष्णं खड्गमाददे॥१६॥ इति तेषां दुष्टानां दारुणं कर्म दृष्ट्वा ब्रह्मभूतस्य ब्राह्मणस्य वधमयोग्यं मन्यमाना भद्रकाली तेजोमयेन वपुषा सहसैव प्रतिमां हित्वा बहिर्निर्गत्य ॥ १७ ॥ क्रोधेन रक्त-लोचना भयानकवदना सती तद्धस्तात् खड्गं प्रगृह्य महानादं कृत्वा पापिष्ठानां सर्वचोराणां शिरांसि छित्त्वा तेषामत्युष्णं रक्तं स्वगणैः सह

अथ वृषलराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदभिमन्त्रितमसिमतिकरालनिशितमुपाददे ॥ १६ ॥ इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरजउत्सिक्तमनसां भगवत्कलावीरकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्मातिदारुणं यद् ब्रह्मभूतस्य साक्षाद्ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यननुमतमालम्भनं तदुपलभ्य ब्रह्मतेजसा अतिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाट सैव देवी भद्रकाली ॥ ॥ १७ ॥ भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाऽऽटोपातिभयानकवदना हन्तुकामेवेदं महाट्टहासमतिसंरम्भेण विमुञ्चती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्णशीर्ष्णां गलात् स्रवन्तमसृगासवमत्युष्णं सह गणेन निपीयातिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त च विजहार च शिरःकन्दुकलीलया ॥१८॥ एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलति॥१९॥न वा एतद्विष्णुदत्त महदद्भुतं यदसंभ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्तदेहाद्यात्मभावसुदृढहृदयग्रन्थीनां सर्वसत्त्वसुहृदात्मनां ॥ निर्वैराणां साक्षाद्भगवता अनिमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैः परिरक्ष्यमाणानां तत्पादमूलमकुतश्चिद्भयमुपसृतानां भागवतपरमहंसानाम् ॥ ॥ २० ॥ इति श्रीभागवते महापुराणे पञ्चमस्कन्धे जडभरतोपाख्याने बलिदानान्मुक्तिवर्णनं नाम नवमोऽध्यायः ॥९॥

पीत्वा तेषां मस्तकैः स्वपार्षदगणैः सह कन्दुकलीलया ननर्त विजहार च ॥ १८ ॥ हे नृप ! एवं महत्सु कृतोऽपराधः आत्मने फलति ॥१९॥ तस्मात् निर्भयं विष्णुपदं श्रितान् हन्तुं कः समर्थो भवेत् ॥२०॥ इति श्रीभागवते चूर्णिकायां पञ्चमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

१ भगवत्कलायुक्तं ब्राह्मणानां कुलम् । २ आपत्कालेऽपि । ३ अमर्षः वपुषो दाहनम् । ४ रोषोऽपराधासहनम् । ५ आटोपः संभ्रमः । ६ महत्स्वभिचाररूपोऽतिक्रमोऽपराधः । ७ कालचक्ररूपवरायुधेन । ८ अन्तर्यामितया प्रवर्त्यमानैर्भद्रकाल्यादिरूपैः ।

दशमे क्षिपता राज्ञा शिबिकां स्वां वहन्मुनिः ॥ स्वदुर्वादानुवादेन विज्ञायाशु प्रसादितः ॥ १ ॥ एवंभूताविकारित्वमज्ञसर्वज्ञयोः समम् ॥ इति सर्वज्ञतासिद्ध्यै रहूगणकथेरणम् ॥२॥ श्रीशुक उवाच ॥ अथ सिन्धुसौवीरदेशयोः राज्ञस्तत्त्वजिज्ञासया कपिलाश्रमं गच्छतो रहूगणस्येक्षुमती नद्यास्तटे शिबिकावाहपुरुषान्वेषणसमये दैवयोगेन प्राप्तः स द्विजवरः एष पीवा वृषखरवत् भारं वोढुं समर्थः इति पूर्वं बलात् गृहीतैः सह धृतः

श्रीशुक उवाच ॥ अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना[1] शिबिकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननाङ्गो गोखरवद्धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स महानुभावः ॥ १ ॥ यदा हि द्विजवरस्येषुमात्रावलोकानुगतेर्न[2] समाहिता[3] पुरुषगतिस्तदा विषमगतां शिबिकां रहूगण उपधार्य पुरुषानधिवहत आह ॥ हे वोढारः साध्वतिक्रमत किमिति विषममुह्यते यानमिति ॥ २ ॥ अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्योपायतुरीयाच्छंकितमनसस्तं[4] विज्ञापयांबभूवुः ॥ ३ ॥ न वयं नरदेव प्रमत्ता भवन्नियमानुपथाः[5] साध्वेव वहामः ॥ अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमु ह वयं पारयाम इति ॥ ४ ॥ सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां भवितुमर्हतीति निश्चित्य निशम्य कृपणवचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसाऽऽवृतमतिराह ॥ ५ ॥

सन् शिबिकामुवाह ॥ १ ॥ द्विजस्येतस्ततः शुद्धभूम्यवलोकनेन गच्छतः सतः किंचिद्विषमगतां शिबिकां ज्ञात्वा रहूगण आह । हे वोढारः ! साधु गच्छत यानं विषमं किं नीयते ॥२॥ अथ राज्ञो वचः श्रुत्वा ते ऊचुः ॥३॥ हे नरदेव ! वयं साध्वेव वहामः । अयमधुना नियुक्तोऽपि द्रुतं न व्रजति । अनेन सह वोढुं न शक्नुमः ॥ ४ ॥ इति श्रुत्वा राजैकस्य दोषः सर्वेषां सांसर्गिकाणां भवितुमर्हतीति निश्चित्योत्थितमन्युः सन् तं जगाद ॥ ५ ॥



---

१ शिबिकावाहकानां कुलस्य नायेन । २ इषुमात्र प्रदेशस्यानु पश्चाद्या गतिस्तस्या हेतोः । ३ एकरूपा । ४ दण्डात् । ५ त्वच्छासनानुवर्तिनः ।

अहो कष्टम् । हे भ्रातः । निश्चितं श्रान्तोऽसि यतो दीर्घं मार्गमेक एव प्रापितवान् । त्वं नातिपीवा वृद्धत्वेनोपद्रुतोऽसि । एवं वक्रोक्त्योपहसितोऽपि पूर्ववत् शिबिकामुवाह ॥ ६ ॥ अथ पुनर्विषमगतायां कुपितो रहूगणः उवाच । अरे किमिदं त्वं जीवन्मृतो मां कदर्थीकृत्य चरसि अतो यम इव ते शासनं करोमि ॥७॥ इत्यादि श्रुत्वा राज्ञा तिरस्कृतो ब्राह्मणो योगेश्वरचर्यायां निपुणो गतगर्वः सन् प्रत्याह ॥८॥ जडभरत उवाच ॥

अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रान्तो दीर्घमध्वानमेक एव ऊहिवान् सुचिरं नातिपीवा संहननाङ्गो जरसा चोपद्रुतो भवान् सखे नो एवापर एते संघट्टिन इति बहुविप्रलब्धोऽप्यविद्यया विहितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनि संस्थानविशेषेऽहंममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पूर्ववदुवाह ॥ ६ ॥ अथ पुनःस्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः ॥ किमिदमरे त्वं जीवन्मृतो मां कदर्थीकृत्य भर्तृशासनमतिचरसि प्रमत्तस्य च ते करोमि चिकित्सां दण्डपाणिरिव जनताया यथा प्रकृतिं स्वां भजिष्यस इति ॥ ७ ॥ एवं बह्वबद्धमपि भाषमाणं नरदेवाभिमानं रजसा तमसाऽनुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ॥ ८ ॥ ब्राह्मण उवाच ॥ त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद्यदि वीर भारः ॥ गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति राशौ न विदां प्रवादः ॥ ९ ॥ स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च ॥ निद्रा रतिर्मन्युरहंमदः शुचो देहेन जातस्य हि मे न सन्ति ॥ १० ॥

हे राजन् ! त्वयोदितं सर्वं सत्यम् । हे वीर ! यदि ! कश्चिद् भारः स्यात् स हि वोढुर्देहस्य न मम । यतो देहाभिमानशून्योऽहम् ॥ ९ ॥ किंच स्थूलत्वं कृशत्वं व्याधयः क्षुत्तृडादि जीवन्मृतत्वादि च देहस्यैव मम न ॥ १० ॥

---

१ सहचराः । २ अविद्यया रचिताः द्रव्याणि महाभूतानि गुणाः इन्द्रियाणि कर्माणि पुण्यपापानि आशयोऽन्तःकरणमित्येते यस्मिंस्तथाभूते । ३ अप्रमत्तताम् । ४ जडादिवदाचरणेन नात्यन्तं व्युत्पन्नोपचिता मतिर्यस्य तम् । ५ देहे । ६ देहाभिमानेन सह ।

यदुक्तं भर्तृशासनमुल्लङ्घयसि तत्राह । हे राजन् ! स्वाम्यसेवकत्वभावो यदि ध्रुवः स्यात् तर्हि तव शासनं सत्यम् । यदि तु तव राज्यभ्रंशो मम च राज्यं स्यात् तदा सर्वमेतद् विपरीतं स्यात् ॥ ११ ॥ राज्यभृत्यादिभेदबुद्धेरवकाशं व्यवहारं विनाऽन्यं न पश्यामि । अथापि तवायमभिमानश्चेत् तर्ह्याज्ञां कुरु ॥ १२ ॥ उन्मत्तजडवत् स्वस्वरूपं प्राप्तस्य मे भवता शिक्षितेन पिष्टपेषणवद् व्यर्थेन किम् ॥ १३ ॥ श्रीशुक

जीवन्मृतत्वं नियमेन राजन्नाद्यन्तवद्यद्विकृतस्य दृष्टम् ॥ स्वस्वाम्यभावो ध्रुव ईडय यत्र तर्ह्युच्यतेऽसौ विधिकृत्ययोगः ॥ ११ ॥ विशेषबुद्धेर्विवरं मनाक् च पश्यामि यन्न व्यवहारतोऽन्यत् ॥ क ईश्वरस्तत्र किमीशितव्यं तथाऽपि राजन् करवाम किं ते ॥ १२ ॥ उन्मत्तमत्तजडवत् स्वसंस्थां गतस्य मे वीर चिकित्सितेन ॥ अर्थः कियान्भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः ॥ १३ ॥ श्रीशुक उवाच ॥ एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर उपशमशील उपरतानात्म्यनिमित्त उपभोगेन कर्मारब्धं व्यपनयन्राजयानमपि तथोवाह ॥ १४ ॥ स चापि पाण्डवेय सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक् श्रद्धयाऽधिकृताधिकारस्तद् धृदयग्रन्थिविमोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थसंमतं त्वरयाऽवरुह्य शिरसा पादमूलमुपसृतः क्षमापयन् विगतनृपदेवस्मय उवाच ॥१५॥ कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः ॥ कस्यासि कुत्रत्य इहापि कस्मात् क्षेमाय नश्चेदसि नोत शुक्लः ॥ १६ ॥

उवाच ॥ हे नृप ! एवं प्रत्युत्तरं दत्त्वा प्रारब्धकर्मक्षयं कुर्वन् राजशिबिकामपि वहति स्म॥१४॥ तदा स रहूगणस्तद्हृदयग्रन्थिभेदकं बहुयोगग्रन्थसंमतं द्विजवचः श्रुत्वा त्वरया शिबिकाया उत्तीर्य शिरसा पादमूलं प्राप्य क्षमापयन् विगतगर्वः उवाच ॥ १५॥ हे ब्रह्मन् ! दत्तात्रेयादीनां मध्ये त्वं कतमोऽवधूतः इह कस्माद् हेतोः प्राप्तः ॥ १६ ॥



---

१ उचितो भवति । २ विधिनियोग कृत्यं कर्म । ३ उपरतमनात्म्ये देहात्मत्वे निमित्तमविद्या यस्य सः । ४ उपवीतम् । ५ उत वितर्के । ६ कपिलो मुनिः ।

अहमिन्द्रस्य वज्रात् शिवस्य शूलात् यमस्य दण्डात् तथा न बिभेमि यथा ब्रह्मकुलस्यापमानात् बिभेमि॥१७॥ तस्मात् त्वं कः । यतो गुप्त-विज्ञानरूपप्रभावोऽसङ्गो जडवत् विचरसि ॥ १८ ॥ अहं चेह संसारे यत् शरणं तत् किमिति प्रष्टुं कपिलं प्रति प्रवृत्तोऽस्मि ॥ १९ ॥ स एव भवान् लोकनिरीक्षणार्थं किं स्विदेवं विचरति । अन्धबुद्धिर्योगेश्वराणां गतिं कथं पश्येत् ॥२०॥ यदुक्तं मम श्रमो नास्तीति तत्राह । हे द्विज ! भवान् भारवहनादिना श्रान्तः इति मिथ्याऽपि सत्यं मन्ये । यथा मिथ्याघटादिनोदकानयनादि मिथ्याऽप्यर्थकारित्वात् सत्यं तथा ॥२१॥

नाहं विशङ्के सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दण्डात् ॥ नाग्न्यर्कसोमानिलवित्तपास्त्राच्छङ्के भृशं ब्रह्मकुलावमानात् ॥ १७ ॥ तद्ब्रूह्यसङ्गो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः ॥ वचांसि योगग्रथितानि साधो न नः क्षमं ते मनसाऽपि भेत्तुम् ॥१८॥ अहं च योगेश्वरमात्मतत्त्वविदां मुनीनां परमं गुरुं वै ॥ प्रष्टुं प्रवृत्तः किमिहारणं तत् साक्षाद्धरिं ज्ञानकलावतीर्णम् ॥ १९ ॥ स वै भवाँल्लोकनिरीक्षणार्थमव्यक्तलिङ्गो विचरत्यपिस्वित् ॥ योगेश्वराणां गतिमन्धबुद्धिः कथं विचक्षीत गृहानुबन्धः ॥२०॥ दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गन्तुर्भवतश्चानुमन्ये ॥ यथाऽसतोदानयनाद्यभावात् समूल इष्टो व्यवहारमार्गः ॥ २१ ॥ स्थाल्यग्नितापात् पयसोऽभितापस्तत्तापतस्तण्डुलगर्भरन्धिः ॥ देहेन्द्रियास्वाशयसन्निकर्षात्तत्संसृतिः पुरुषस्यानुरोधात् ॥ २२ ॥ शास्ताऽनुगोप्ता नृपतिः प्रजानां यः किंकरो वै न पिनष्टि पिष्टम् ॥ स्वधर्ममाराधनमच्युतस्य यदीहमानो विजहात्यघौघम् ॥ २३ ॥

उपाधिधर्माः मे वस्तुतो न सन्तीत्युक्तं तत्राह । स्थाल्याः अग्निना तापात् तन्मध्यवर्तिनः क्षीरस्य तापः । तस्य तापात् तण्डुलानां बहिर्भागस्य ततस्तद्गर्भस्य च पाको भवति । एवं निदाघादिना देहे तप्ते इन्द्रियाणां तापः । ततः प्राणस्य । ततो मनसः । ततस्तन्निमित्ताः संसृतिः पुरुषस्य भवति ॥ २२ ॥ योऽच्युतस्य सेवकः सोऽहं शास्ताऽहं गोप्तेत्यभिमानं न करोति ॥ २३ ॥

---

१ वित्तः कुबेरः । २ आत्मौपम्येनानुमानं करोमि । ३ असता घटेन । ४ सप्रमाणः । ५ असवः प्राणाः आशयो मनः । ६ सन्निकर्षनिमित्ता संसृतिः । ७ उपाधिधर्मानुवृत्तेः । ८ अच्युतस्येति शेषः । ९निष्फलंकर्म न करोति ।

अतो हे द्विज ! भवान् राजेत्यभिमानेन तुच्छकृतभवादृशस्य मे कृपां करोतु । यथाऽहं सतामपमानरूपपापात् तरिष्यामि ॥२४॥ यद्यपि
तव मानापमानविक्रिया नास्ति । तथाऽपि महतामपमानाद् मादृशो विनङ्क्षयति ॥ २५ ॥ इति श्रीभागवते० चू० पञ्चम० दशमोऽध्यायः
॥ १० ॥ एकादशे तु संपृष्टो रहूगणमहीभृता ॥ उपादिशन् परं ज्ञानं स योगीति निगद्यते ॥१॥ ब्राह्मण उवाच ॥ हे राजन् । त्वमविद्वानपि
ज्ञानीव वादान् वदसि । अतस्त्वं ज्ञानिनां मध्ये श्रेष्ठो न भवसि । यतो लौकिकव्यवहारं त्वं सत्यं जानासि । ज्ञानिनस्तु मिथ्यात्वेन जानन्ति

तन्मे भवान्नरदेवाभिमानमदेन तुच्छीकृतसत्तमस्य ॥ कृषीष्ट मैत्रीदृशमार्तबन्धो यथा तरे सदवध्यानमंहः ॥२४॥ न
विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि ॥ महद्विमानात् स्वकृताद्धि मादृक् नङ्क्ष्यत्यदूरादपि शूल-
पाणिः ॥२५॥ इति श्रीभागव० महापु० रहूगणजडभरतसंवादो नाम दशमोऽध्यायः ॥ १० ॥ ब्राह्मण उवाच ॥ अको-
विदः कोविदवादवादान्वदस्यथो नातिविदां वरिष्ठः ॥ न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति ॥ १ ॥
तथैव राजन्नुरुगार्हमेधवितानविद्योरुविजृम्भितेषु ॥ न वेदवादेषु हि तत्त्ववादः प्रायेण शुद्धो नु चकास्ति साधुः ॥
॥ २ ॥ न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् ॥ स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेया-
नुमितं स्वयं स्यात् ॥ ३ ॥ यावन्मनो रजसा पूरुषस्य सत्त्वेन वा तमसा वाऽनुरुद्धम् ॥ चेतोभिराकूतिभिरातनोति
निरङ्कुशं कुशलं चेतरं वा ॥४॥ स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा ॥ बिभ्रत्पृथङ्नामभि-
रूपभेदमन्तर्बहिष्ट्वं च पुरैस्तनोति ॥ ५ ॥

॥ १ ॥ हे राजन् ! गृहमेधादिकर्मसंबन्धिवेदवादेषु परमार्थो नैव प्रकाशते ॥ २ ॥ श्रेष्ठा अपि वेदान्तवाचो नरस्य यथायोग्यं तत्त्वज्ञानाय न
बभूवुः ॥३॥ यावत् पुरुषस्य मनः सुखदुःखात्मकं कर्म दशेन्द्रियैर्विस्तारयति तावत् विषयोपरक्तं सद्गुणप्रवाहेण देहानुत्पादयति ॥ ४ ॥ ५ ॥

१ शूलपाणिरिव अतिसमर्थोऽपि । २ गृहसंबन्धिनः । ३ हिंसादिशून्यः । ४ रागादिशून्यः । ५स्वप्नदृष्टान्तेनेति यावत् । ६ हेयत्वेनानुमितम् । ७ ज्ञानेन्द्रियैः । ८ बाह्येन्द्रियैः । ९ धर्मम् । १० अधर्मम् । ११ मनः
पदवाच्यः । आत्मशब्दविशेषणत्वेन पुंस्त्वम् । १२ वासनायुक्त आत्मा । १३ गुणैश्चाल्यमानः । १४षोडशकलासु भूतेन्द्रियरूपासु मुख्यः । १५ अदीर्घत्वमार्षम् । १६ देहैः ।

कालोपपन्नं सुखं च सृजति ॥ ६ ॥ मनो यावन्मायां श्रयते तावद् व्यवहारः सदा प्रकाशते ॥ ७ ॥ तस्मात् जन्तोर्मनो गुणानुरक्तं व्यसनाय भवति निर्गुणं क्षेमाय । यथा दीपो घृतवर्तिमश्नन् सधूमाः शिखाः भजति घृतक्षये स्वरूपं भजति तद्वत् ॥ ८ ॥ पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाण्यभिमानश्चेति मनसः एकादश वृत्तयः आसन् ॥९॥ गन्धादयः पञ्च ज्ञानेन्द्रियविषयाः गतिसंभोगादयः पञ्च कर्मेन्द्रियविषयाः

दुःखं सुखं व्यतिरिक्तं च तीव्रं कालोपपन्नं फलमाव्यनक्ति॥आलिङ्ग्य मायारचितान्तरात्मा स्वदेहिनं संसृतिचक्रकूटः ॥६॥ तावानयं व्यवहारःसदाविः क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः ॥ तस्मान्मनो लिङ्गमदो वदन्ति गुणागुणत्वस्य परावरस्य ॥ ७ ॥ गुणानुरक्तं व्यसनाय जन्तोःक्षेमाय नैर्गुण्यमथो मनः स्यात् ॥ यथा प्रदीपो घृतवर्तिमश्नञ्छिखाः सधूमा भजति ह्यन्यदा स्वम् ॥ ८ ॥ पदं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेऽन्यत्र तत्त्वम् ॥ * एकादशासन्मनसो हि वृत्तय आकूतयः पञ्च धियोऽभिमानः ॥९॥ मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीर भूमीः ॥ गन्धाकृतिःस्पर्शरसश्रवांसि विसर्गरत्यर्त्यभिजल्पशिल्पाः ॥ १० ॥ एकादशं स्वीकरणं ममेति शय्यामहं द्वादशमेक आहुः ॥ द्रव्यस्वभावाशयकर्मकालैरेकादशामी मनसो विकाराः ॥ सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतो न मिथो न स्वतः स्युः ॥ ११ ॥ क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचितस्य नित्याः ॥ आविर्हिताः क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥ १२ ॥

तेषां मनःआश्रयः ॥ १० ॥ किंच द्रव्यादिभिर्मनसो विकाराः सहस्रशो भवन्ति । एते चेश्वरान्नान्यतः ॥ ११ ॥ अवस्थात्रयसाक्षी क्षेत्रज्ञो जाग्रत्स्वप्नयोः प्रादुर्भूताः सुप्तावन्तर्हिता मनसो विभूतीः पश्यति ॥ १२ ॥

---

१ मोहम् । २ अन्तरात्मा जीवोपाधिः । ३ संसृतिचक्रे कूटयति छलयतीति तथा । ४ मनोनिबन्धनःसंसारः । ५ आविः प्रकाशमानः । ६ साक्ष्यो दृश्यः । ७ जाग्रत्स्वप्नस्वरूपः । ८ कारणम् । ९ गुणाभिमानित्वं तद्राहित्यं तदेव परमवरं च । * तत्त्वं परं ब्रह्म वदन्ति विज्ञा ब्रह्मात्मभावेनचरन्त्यनिर्वृताः । इत्यधिकः पाठः । १० क्रियाकाराः । ११ ज्ञानाकाराः । । १२ शरीरम् । १३ विषयान् । १४ रतिः संभोगः संयोगः । १५ स्वीक्रियत इति स्वीकरणम् । १६ शय्यासंज्ञाम् । तत्र हि जीवोऽहंकारेण सह शेते । १७ अहमहंकारम् । १८ द्रव्यस्वभावाशयकर्मकालैः विषयपरिणामहेतुसंस्कारादृष्टक्षोभकैः ।

क्षेत्रज्ञो द्विविधः त्वम्पदार्थो जीवः तत्पदार्थ ईश्वरः । ईश्वरस्तु स्वयंज्योतिः सर्वजीवनियन्ताऽस्ति ॥ १३ ॥ यथा वायुः स्थावरजङ्गमानामा-
त्मस्वरूपेण प्रविष्टोऽस्ति तथा क्षेत्रज्ञो भगवान् विश्वं प्रविष्टः ॥ १४ ॥ हे नरेन्द्र ! देही यावदेतां मायां त्यक्त्वाऽऽत्मतत्त्वं न वेद तावदिह
भ्रमति ॥ १५ ॥ किंच आत्मनः उपाधिभूतं संसारतापानां क्षेत्रमिदं मनः इति यावद् जीवो न वेद तावद् भ्रमति ॥ १६ ॥ तस्माद् हे रहू-
गण ! एनमात्मघातकरं मनोरूपं शत्रुं गुरोर्हरेश्चरणोपासनास्त्रेण घातय ॥ १७ ॥ इति श्रीभागवते चू० पञ्चम० एकादशोऽध्यायः ॥ ११ ॥

क्षेत्रज्ञ आत्मा पुरुषः[1] पुराणः[2] साक्षात्[3]स्वयंज्योतिरजः परेशः ॥ नारायणो भगवान्वासुदेवः स्वमाययाऽऽत्मन्यवधीय-
मानः[4] ॥ १३ ॥ यथाऽनिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईशेत् ॥ एवं परो भगवान्वासुदेवः क्षेत्रज्ञ आत्मेद-
मनुप्रविष्टः ॥ १४ ॥ न यावदेतां तनुभृन्नरेन्द्र विधूय मायां वयुनोदयेन ॥ विमुक्तसङ्गो जितषट्सपत्नो वेदात्मतत्त्वं
भ्रमतीह तावत् ॥ १५ ॥ न यावदेतन्मन आत्मलिङ्गं संसारतापावपनं जनस्य ॥ यच्छोकमोहामयरागलोभवैरानु-
बन्धं ममतां विधत्ते ॥ १६ ॥ भ्रातृव्यमेनं तददभ्रवीर्यमुपेक्षयाऽध्येधितमप्रमत्तः ॥ गुरोर्हरेश्चरणोपासनास्त्रो जहि
व्यलीकं स्वयमात्ममोषम् इति श्रीभागव० म० पञ्च० जडभरतोपाख्याने रहूगणाय मनोविजयवर्णनं नाम
एकादशोऽध्यायः ॥ ११ ॥ रहूगण उवाच ॥ नमो नमः कारण[6]विग्रहाय स्वरूपतुच्छीकृतविग्रहाय ॥ नमोऽवधूतद्विज-
बन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम् ॥ १ ॥ ज्वरामयार्तस्य यथाऽगदं सन्निदाघदग्धस्य यथा हिमाम्भः ॥ कुदेह-
मानाहिविदष्टदृष्टेर्ब्रह्मन्वचस्तेऽमृतमौषधं मे ॥ २ ॥



द्वादशे पुनरापृष्टः संदेहेन महीभृता । स योगी सर्वसंदेहानपानुदिदितीर्यते ॥१॥ रहूगण वाच । हे भगवन् ! कारणविग्रहाय नमः ॥ हे अवधूत !
अलक्षितद्विजवेषेण गुप्तपरमानन्दानुभवायेश्वररूपाय ते नमः ॥ १ ॥ अहो रोगार्तस्य यथा स्वाद्वौषधमुष्णतप्तस्य यथा शीतोदकं तथा
देहाभिमान एव सर्पस्तेन दष्टस्य मे ते वचः अमृततुल्यमौषधं भवति ॥ २ ॥

---

१ पूर्णः । २ जगत्कारणभूतः । ३ अपरोक्षः । ४ अवस्थाप्यमानस्तन्नियन्तृत्वेन वर्तमानः । ५ संप्रवृद्धम् । ६ कारणमीश्वरस्तस्यैव लोकसंरक्षणार्थो विग्रहो देहो यस्य तस्मै ।

अतोऽध्यात्मयोगग्रथितं दुर्बोधं तव भाषणं मम यथा सुबोधं स्यात् तथा कथय ॥३॥ हे योगेश ! क्रियाफलं दृश्यमानमपि व्यवहारमूलं तत्त्वज्ञानाय योग्यं न भवतीति यद् भवान् वदति तस्मिन् मे मनो भ्रमति ॥४॥ ब्राह्मण उवाच ॥ हे पार्थिव ! अयं जनः पृथिव्यां चलन्नपि सर्वोऽपि पृथ्वीविकारो यथा नामभेदेनाङ्घ्रिगुल्फजङ्घाजानूरुवक्षःस्थलस्कन्धम् ॥५॥ स्कन्धे काष्ठमयी शिबिका तस्यामहं राजा जनस्य

तस्माद्भवन्तं मम संशयार्थं प्रक्ष्यामि पश्चादधुना सुबोधम् ॥ अध्यात्मयोगग्रथितं तवोक्तमाख्याहि कौतूहलचेतसो मे ॥३॥ यदाह योगेश्वर दृश्यमानं क्रियाफलं सद्व्यवहारमूलम् ॥ न ह्यञ्जसा तत्त्वविमर्शनाय भवानमुष्मिन् भ्रमते मनो मे ॥४॥ ब्राह्मण उवाच ॥ अयं जनो नाम चलन् पृथिव्यां यः पार्थिवः पार्थिव कस्य हेतोः ॥ तस्यापि चाङ्घ्र्योरधिगुल्फजङ्घाजानूरुमध्योरशिरोधरांसाः ॥ ५ ॥ अंसेऽधिदार्वी शिबिका च यस्यां सौवीरराजेत्यपदेश आस्ते ॥ यस्मिन् भवान्रूढनिजाभिमानो राजाऽस्मि सिन्धुष्विति दुर्मदान्धः ॥ ६ ॥ शोच्यानिमांस्त्वमधिकष्टदीनान् विष्ट्या निगृह्णन्निरनुग्रहोऽसि ॥ जनस्य गोप्ताऽस्मि विकत्थमानो न शोभसे वृद्धसभासु धृष्टः ॥ ७ ॥ यदा क्षितावेव चराचरस्य विदाम निष्ठां प्रभवं च नित्यम् ॥ तन्नामतोऽन्यद्व्यवहारमूलं निरूप्यतां सत्क्रिययानुमेयम् ॥ ८ ॥ एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात्परमाणवो ये ॥ अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः ॥ ९ ॥ एवं कृशं स्थूलमणुर्बृहद्यदसच्च सज्जीवमजीवमन्यत् ॥ द्रव्यस्वभावाशयकालकर्मनाम्नाऽजयाऽवेहि कृतं द्वितीयम् ॥ १० ॥

गोप्ताऽस्मि ॥६॥ इति त्वं कत्थमानो ज्ञानिनां समूहे धृष्टो न शोभसे ॥ ७ ॥ कुतः ? चराचरस्योत्पत्तिर्नाशश्च पृथिव्यामेवास्ति ॥ ८ ॥ सा पृथ्वी परमाणुरूपा । ते परमाणवो भगवन्मायया कल्पिताः ॥९॥ एवं कृशस्थूलादिद्रव्यस्वभावादि सर्वं प्रपञ्चजातं भेदरूपं कृतम् ॥ १० ॥

१ कस्माच्चित्कारणात् । २ उपर्युपरि । ३ मिथ्यात्वेन । ४ असत्सु परमाणुषु लयात् । ५ येषां समूहेन विशेषः कृतः तेषां समूहः पृथ्वीबुद्ध्यालम्बनम् ।

तस्माद् व्यवहाररूपं सर्वं मिथ्या । सत्यं तु ज्ञानं यद्वासुदेवमिति कवयो वदन्ति ॥ ११ ॥ हे रहूगण ! एतद् ज्ञानं पुरुषस्तपसा वेदाभ्यासादिना च न प्राप्नोति । तत्तु महत्सङ्गेन प्राप्यते ॥ १२ ॥ ततो वासुदेवे भक्तिर्भवति ॥ १३ ॥ हे राजन् ! पुरा भरतो नाम राजाऽऽसम् । ईश्वराराधनं कुर्वाणो मृगसङ्गात् मृगोऽभवम् ॥१४॥ मृगदेहेऽपि कृष्णार्चनप्रभावात् मम स्मृतिर्न गता । अतो जनसङ्गात् विशङ्कमानो गुप्तश्चरामि

ज्ञानं विशुद्धं परमार्थमेकमनन्तरं त्वबहिर्ब्रह्म सत्यम् ॥ प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ति ॥ ॥११॥ रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा ॥ न च्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोभिषेकम् ॥ १२ ॥ यत्रोत्तमश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः ॥ निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतिं सतीं यच्छति वासुदेवे ॥ १३ ॥ अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसङ्गबन्धः ॥ आराधनं भगवत ईहमानो मृगोऽभवं मृगसङ्गाद्धतार्थः ॥ १४ ॥ सा मां स्मृतिर्मृगदेहेऽपि वीर कृष्णार्चनप्रभवा नो जहाति ॥ अथो अहं जनसङ्गादसङ्गो विशङ्कमानोऽविवृतश्चरामि ॥ १५ ॥ तस्मान्नरोऽसङ्गसुसङ्गजातज्ञानासिनेहैव विवृक्णमोहः ॥ हरिं तदीहाकथनश्रुतिभ्यां लब्धस्मृतिर्यात्यतिपारमध्वनः ॥ १६ ॥ इति श्रीभागवते महापुराणे पञ्चमस्कन्धे ब्राह्मणरहूगणसंवादे श्रीभगवत्कथास्वरूपनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥ ब्राह्मण उवाच ॥ दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमस्सत्त्वविभक्तकर्मदृक् ॥ स एष सार्थोऽर्थपरः परिभ्रमन् भवाटवीं याति न शर्म विन्दति ॥ १ ॥

॥१५॥ तस्मान्नरः सत्सङ्गलब्धज्ञानासिना छिन्नमोहो जन्ममरणादिरूपसंसारमार्गस्य पारं याति ॥ १६ ॥ इति श्रीभागवते म० चू० पञ्चम० द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशेऽविरक्ताय वृथा तत्त्वनिरूपणम् ॥ इति वैराग्यदार्ढ्याय भवाटव्युपवर्ण्यते ॥१॥ ब्राह्मण उवाच ॥ हे रहूगण ! अयं जीवसमूहो मायया दुस्तरे प्रवृत्तिमार्गे निवेशितः सुखार्थेच्छया भवाटवीं याति ॥ १ ॥



---

१ बाह्याभ्यन्तरशून्यम् । २ ग्राम्यकथानां विघातो यस्मात् सः । ३ रजस्तमस्सत्त्वैर्विभक्तानि कर्माणि कार्यतया पश्यतीति ।

यस्यां भवाटव्यां षड् दस्यवो बलात् सार्थस्य धनं लुम्पन्ति । किंच यस्यां शृगालतुल्याः दारापत्यादयः प्रमत्तं सार्थे स्थितं नरमितस्ततः आकर्षन्ति । यथा वृकाः मेषम् ॥ २ ॥ तत्र मार्गे मक्षिकाभिर्मशकैश्चोपद्रुतः क्वचिद् गन्धर्वपुरं पश्यति क्वचित् पिशाचं पश्यति ॥ ३ ॥ कदाचित् भयादटव्यां धावति क्वचित् चक्रवातोत्थितरजोव्याप्तनेत्रो दिशो न जानाति ॥ ४ ॥ क्वचिदुलूकशब्दैर्व्यथितमनाः क्षुधार्दितः सन्

यस्यामिमे षण्नरदेव दस्यवः सार्थं विलुम्पन्ति कुनायकं बलात् ॥ गोमायवो यत्र हरन्ति सार्थिकं प्रमत्तमाविश्य यथोरणं वृकाः ॥२॥ प्रभूतवीरुत्तृणगुल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः॥ क्वचिच्च गन्धर्वपुरं प्रपश्यति क्वचित् क्वचिच्चाशुरयोल्मुकग्रहम् ॥ ३ ॥ निवासतोयद्रविणात्मबुद्धिस्ततस्ततो धावति भो अटव्याम्॥क्वचिच्च वात्योत्थितपांसुधूम्रा दिशो न जानाति रजस्वलाक्षः ॥४॥ अदृश्यझिल्लीस्वनकर्णशूल उलूकवाग्भिर्व्यथितान्तरात्मा ॥ अपुण्यवृक्षाञ्छ्रयते क्षुधार्दितो मरीचितोयान्यभिधावति क्वचित् ॥ ५ ॥ क्वचिद्वितोयाः सरितोऽभियाति परस्परं चाऽऽलषते निरन्धः ॥ आसाद्य दावं क्वचिदग्नितप्तो निर्विद्यते क्व च यक्षैर्हृतासुः ॥ ६ ॥ शूरैर्हृतस्वः क्व च निर्विषण्णचेताः शोचन् विमुह्यन्नुपयाति कश्मलम् ॥ क्वचिच्च गन्धर्वपुरं प्रविष्टः प्रमोदते निर्वृतवन्मुहूर्तम् ॥ ७ ॥

मृगजलानि धावति ॥५॥ क्वचित् जलहीनाः सरितः प्रति गच्छति । दावानलं प्राप्याग्निना तप्तः सन् खेदं प्राप्नोति ॥६॥ क्वचित् शूरैर्हृतधनः शोचन् सन् मूर्च्छां प्राप्नोति क्वचिद् गन्धर्वपुरं प्रविश्य मोदते ॥ ७ ॥

---

१ कुत्सितो नायको बुद्धिरूपसारथिर्यस्य तम् । २ वीरुदादिभिः काम्यकर्मभिः गह्वरे दुष्प्रवेशे । ३ खलाभिप्रायमिदम् । ४ गन्धर्वपुरवदसदपि सद्बुद्ध्या देहादिकं पश्यतीत्यर्थः । ५ उल्मुकाकारो ग्रहपिशाचस्तत्तुल्यं सुवर्णमुपादेयतया पश्यतीति । ६ निवासादिष्वात्मा स्वभावो यस्याः सा बुद्धिर्यस्य सः । ७ वात्या स्त्रीरूपा । ८ स्वकर्मसाक्षिभूताः दिग्देवता । ९ परोक्षमप्रियवक्तारो झिल्लीतुल्याःप्रत्यक्षमप्रियवक्तारः उलूकतुल्याः । १० येषां छायाऽपि पापहेतुस्तेऽपुण्यवृक्षास्तत्तुल्याः अधार्मिकाः । ११ मिथ्यात्वेनज्ञातानपि विषयान् । १२ पाखण्डरूपाः । १३ दायादादिभ्यः वाञ्छति । १४ अन्नाधि इति शेषः । १५ निरन्नः । १६ गृहरूपम् । १७ राजादिरूपैः । १८ मनोरथोपगतपितृपुत्रादिसमाजम् ।

क्वचित् कण्टकादिभिर्विद्धाङ्घ्रिः सन् पर्वतमारोढुमिच्छुर्विमना इवास्ते ॥ ८ ॥ क्वचिदजगरेण गिलितः सन् किंचिद् न जानाति । क्वचित् सर्पैर्दष्टः सन् कूपे पतति ॥ ९ ॥ क्वचित् क्षुद्ररसान् विचिन्वन् मक्षिकाभिस्ताडितो व्यथितो भवति ॥ १० ॥ क्वचित् शीतातपवातवर्षाणामुपायं कर्तुमसमर्थः आस्ते । क्वचिद् मिथः क्रयविक्रयादिनाऽत्यल्पमपि गृह्णन् धनवञ्चनाद् द्वेषमिच्छति ॥ ११ ॥ क्वचित् क्षीणधनः शय्या-

चलन्क्वचित् कण्टकशर्कराङ्घ्रिर्नगारुरुक्षुर्विमना इवास्ते ॥ पदेपदेऽभ्यन्तरवह्निनाऽर्दितः कौटुम्बिकः क्रुद्ध्यति वै जनाय ॥८॥ क्वचिन्निगीर्णोऽजगराहिना जनो नावैति किंचिद्विपिनेऽपविद्धः॥ दष्टः स्म शेते क्व च दन्दशूकैरन्धोऽन्धकूपे पतितस्तमिस्रे ॥ ९ ॥ कर्हि स्म चित् क्षुद्ररसान् विचिन्वंस्तन्मक्षिकाभिर्व्यथितो विमानः॥तत्रातिकृच्छ्रात्प्रतिलब्धमानो बलाद्विलुम्पन्त्यथ तं ततोऽन्ये ॥१०॥ क्वचिच्च शीतातपवातवर्षप्रतिक्रियां कर्तुमनीश आस्ते ॥ क्वचिन्मिथो विपणन् यच्च किंचिद्विद्वेषमृच्छत्युत वित्तशाठ्यात् ॥ ११ ॥ क्वचित्क्वचित् क्षीणधनस्तु तस्मिन्त्र शय्यासनस्थानविहारहीनः ॥ याचन् परादप्रतिलब्धकामः पारक्यदृष्टिर्लभतेऽवमानम् ॥ १२ ॥ अन्योन्यवित्तव्यतिषङ्गवृद्धवैरानुबन्धो विवहन् मिथश्च ॥अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन् विपन्नः ॥ १३ ॥ तांस्तान् विपन्नान् स हि तत्र तत्र विहाय जातं परिगृह्य सार्थः ॥ आवर्ततेऽद्यापि न कश्चिदत्र वीराध्वनः पारमुपैति योगम् ॥ १४ ॥ मनस्विनो निर्जितदिग्गजेन्द्रा ममेति सर्वे भुवि बद्धवैराः ॥ मृधे शयीरन् न तु तद्व्रजन्ति यन्न्यस्तदण्डो गतवैरोऽभियाति ॥ १५ ॥

सनादिहीनः सन् याञ्चां कृत्वा तच्छय्यादिकमप्राप्यापमानं प्राप्नोति ॥१२॥ एवं बहुभिः श्रमैर्मृतप्रायो भवति ॥१३॥ किंच स प्रवासी तान् मृतान् तत्र तत्र हित्वा जातं जातं परिगृह्य विहरन् सन्नद्यापि नावर्तते ॥ १४ ॥ किंच शूराः इह ममेयं भूरिति बद्धवैराः सन्तो युद्धे म्रियन्ते न तु विष्णुपदं व्रजन्ति ॥ १५ ॥

१ अन्तरायरूपाः कण्टकाः । २ महाकर्म प्रारिप्सुः । ३ जठराग्निना । ४ निद्रारूपेण । ५ त्यक्तः । ६ दुर्जनरूपैः । ७ मोहे । ८ परयोषावीन् । ९ योषास्वामिभिः । १० प्राप्तयोषादिः । ११ व्यतिषङ्गविनिमयः । १२ विवाहादिसंबन्धं कुर्वन् ।

अथ पुनर्भवाटवीं वर्णयति । अयं सार्थः क्वचित् सिंहसमूहाद् भीतः सन् बककङ्कगृध्रैः सह सख्यं करोति ॥१६॥ ततस्तैर्वञ्चितः सन् हंसकुलं प्रविशति । तत्रापि तस्य शीलमप्रियं पश्यन् वानरान् प्रति गच्छति । ततस्तज्जातिक्रीडया विस्मृतजीवितावधिर्भवति ॥ १७ ॥ क्वचित् वने चरन् गिरिगुहायां पतन् तत्रस्थगजभयाद्वल्लीं गृहीत्वा स्थितो भवति ॥१८॥ एवं मायया प्रवेशितो मार्गे भ्रमन् परमपुरुषार्थमद्यापि न वेद

प्रसज्जति क्वापि लताभुजाश्रयस्तदाश्रयाव्यक्तपदद्विजस्पृहः ॥ क्वचित् कदाचिद्धरिचक्रतस्त्रसन् सख्यं विधत्ते बककंकगृध्रैः ॥ १६ ॥ तैर्वञ्चितो हंसकुलं समाविशन् न रोचयन् शीलमुपैति वानरान् ॥ तज्जातिरासेन सुनिर्वृतेन्द्रियः परस्परोद्वीक्षणविस्मृतावधिः ॥ १७ ॥ द्रुमेषु रंस्यन् सुतदारवत्सलो व्यवायदीनो विवशः स्वबन्धने ॥ क्वचित् प्रमादाद्गिरिकन्दरे पतन् वल्लीं गृहीत्वा गजभीत आस्थितः ॥१८॥ अतः कथंचित् स विमुक्त आपदः पुनश्च सार्थं प्रविशत्यरिन्दम ॥ अध्वन्यमुष्मिन्नजया निवेशितो भ्रमञ्जनोऽद्यापि न वेद कश्चन ॥ १९ ॥ रहूगण त्वमपि ह्यध्वनोऽस्य संन्यस्तदण्डः कृतभूतमैत्रः ॥ असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तरातिपारम् ॥ २० ॥ राजोवाच ॥ अहो नृजन्माखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् ॥ न यद्धृषीकेशयशः कृतात्मनां महात्मनां वः प्रचुरः समागमः ॥ २१ ॥

॥ १९ ॥ हे रहूगण ! त्वमपि सर्वभूतमैत्रो न्यस्तदण्डः सन् हरिसेवया तीक्ष्णं ज्ञानखड्गं गृहीत्वाऽस्य मार्गस्य पारं याहि ॥ २० ॥ रहूगण उवाच ॥ अहो अखिलजन्मसु मध्ये नृजन्मैव श्रेष्ठम् । देवादिजन्मना तु किम् । नृजन्मनि तु सत्समागमो भवति ॥ २१ ॥

---

१ आसक्तिं करोति । २ स्त्रीभुजाश्रयः । ३ स्त्र्याश्रयाः कलभाषिणः पक्षितुल्याः ये बालास्तेषु स्पृहा यस्य सः । ४ सिंहसमूहतुल्यकालचक्रात् । ५ पाखण्डरूपैः । ६ ब्राह्मणकुलम् । ७ भ्रष्टाचारान् शूद्रान् । ८ वानरजातिक्रीडया स्त्रिया मिथुनीभूय परस्परमुखोद्वीक्षणेन विस्मृतोजीविताावधिर्मरणकालो येन सः । ९ द्रुमवत्केवलदृष्टार्थेषु गृहेषु । १० सुरतेच्छया कृपणः । ११ प्राचीनं कर्म । १२ गजोऽत्र मृत्युः । १३ परमपुरुषार्थमित्यर्थः । १४ कृतः शोधितः ।

तेन समागमेन भगवच्चरणयोरमला भक्तिरुत्पद्यते। अहो! तव मुहूर्तमात्रसङ्गात् ममाविवेकोनष्टः ॥२२॥ किंच ब्रह्मविदः केन रूपेण विचरन्ति इत्यजानन् सर्वान् नमस्यति। महद्भ्यः शिशुभ्यो युवभ्यो बटुभ्यो येऽवधूतवेषाः ब्राह्मणास्तेभ्योनमः ॥२३॥ श्रीशुक उवाच॥ हे परीक्षित्! एवं जडभरतः करुणया रहूगणाय तत्त्वमुपदिश्य तेन वन्दितचरणः पृथ्वीं विचचार ॥२४॥ रहूगणोऽपि साधुसङ्गाल्लब्धतत्त्वज्ञानोऽज्ञानेनात्मन्या-

न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला ॥ मौहूर्तिकाद्यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतो-
ऽविवेकः ॥ २२ ॥ नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आ बटुभ्यः ॥ ये ब्राह्मणा गामवधूतलिङ्गाश्च-
रन्ति तेभ्यः शिवमस्तु राज्ञाम् ॥ २३ ॥ श्रीशुक उवाच इत्येवमुत्तरामातः स वै ब्रह्मर्षिसुतः सिन्धुपतय आत्मसतत्त्वं
विगणयतः परानुभावः परमकारुणिकतयोपदिश्य रहूगणेन सकरुणमभिवन्दितचरण आपूर्णार्णव इव निभृत-
करणोर्म्याशयो[1] धरणिमिमां विचचार ॥ २४ ॥ सौवीरपतिरपि सुजनसमवगतपरमात्मसतत्त्व आत्मन्यविद्या-
ध्यारोपितां च देहात्ममतिं विससर्ज ॥ एवं हि नृप भगवदाश्रिताश्रितानुभावः ॥ २५ ॥ राजोवाच ॥ यो ह वा इह
बहुविदा महाभागवत त्वयाऽभिहितः परोक्षेण वचसा जीवलोकभवाध्वा स ह्यार्यमनीषया कल्पितविषयो नाञ्जसा-
ऽव्युत्पन्नलोकसमधिगमः ॥ अथ तदेवैतद्दुरवगमं समवेतानुकल्पेन[2] निर्दिश्यतामिति ॥ २६ ॥ इति श्रीभागव०
महापु० पञ्चम० भवाटव्युपवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥



रोपितां देहात्मबुद्धिं विससर्ज। एवं हे नृप! भगवदाश्रितानुभावो ज्ञातव्यः ॥२५॥ परीक्षिदुवाच॥ हे शुक! त्वया लोकस्य संसारमार्गो वनवा-सदृष्टान्तेन कथितः सः सर्वेषां बोधाय प्रत्यक्षेण निर्दिश्यताम् ॥२६॥ इति श्रीभागवते चूर्णिकायां पञ्चमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

---

१ शान्ताः करणानामूर्मयो यस्मिन् स आशयो यस्य सः। २ प्रस्तुते तत्तदर्थकल्पनेन। 'समवेतानुकूल्येन' इ० पा०।

चतुर्दशे भवारण्यरूपकव्याकृतिः कृता ॥ प्रस्तुते तस्य गोमायुमशकाद्यर्थकल्पनम् ॥ १ ॥ श्रीशुक उवाच ॥ यः एषः जीवलोको विष्णोर्मायया भवाटवीं गतः सन् संसारतापोपशमनं भक्तिमार्गं न प्राप्नोति यस्यां भवाटव्यां षडिन्द्रियनामानः कर्मणा दस्यव एव सन्ति ॥ १ ॥ तद् यथा। पुरुषस्य यत्किंचिद्भगवदाराधनलक्षणधर्मकारणं धनं तद्दर्शनस्पर्शनश्रवणास्वादनावघ्राणैर्विषयभोगेन षट् चौराः हरन्ति

स होवाच ॥ य एष देहात्ममानिनां सत्त्वादिगुणविशेषविकल्पितकुशलाकुशलसमवहारविनिर्मितविविधदेहावलिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन षडिन्द्रियवर्गेण तस्मिन् दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोकोऽयं यथा वणिक्सार्थोऽर्थपरः स्वदेहनिष्पादितकर्मानुभवः श्मशानवदशिवतमायां संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहस्तत्तापोपशमनीं हरिगुरुचरणारविन्दमधुकरानुपदवीमवरुन्धे ॥ यस्यामु ह वा एते षडिन्द्रियनामानः कर्मणा दस्यव एव ते ॥ १ ॥ तद् यथा पुरुषस्य धनं यत्किंचिद्धर्मौपयिकं बहुकृच्छ्राधिगतं साक्षात् परमपुरुषाराधनलक्षणो योऽसौ धर्मस्तं तु साम्परायं उदाहरन्ति ॥ तद् धर्म्यं धनं दर्शनस्पर्शश्रवणास्वादनावघ्राणसंकल्पव्यवसायगृहग्राम्योपभोगेन कुनाथस्याजितात्मनो यथा सार्थस्य तथाऽजितात्मनो विलुम्पन्ति ॥ २ ॥ अथ च यत्र कौटुम्बिका दारापत्यादयो नाम्ना कर्मणा वृकसृगाला एवानिच्छतोऽपि कदर्यस्य कुटुम्बिन उरणकवत् संरक्ष्यमाणं मिषतोऽपि हरन्ति॥ ३ ॥ यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धबीजं क्षेत्रं पुनरेवावपनकाले गुल्मतृणवीरुद्भिर्गह्वरमिव भवति ॥ एवमेव गृहाश्रमः कर्मक्षेत्रं यस्मिन् न हि कर्माण्युत्सीदन्ति यदयं कामकरण्ड एष आवसथः ॥ ४ ॥

॥ २ ॥ अथ च स्त्रीपुत्रादयः कर्मणा श्वानः शृगाला एव लुब्धस्य कुटुम्बिनो रक्ष्यमाणमपि सर्वस्वं हरन्ति ॥ ३ ॥ यथा प्रतिसंवत्सरं कृष्यमाणमपि क्षेत्रं गुल्मतृणादिभिर्गह्वरं भवति एवमेव गृहाश्रमः कर्मक्षेत्रं यस्मिन् कर्माणि न क्षीयन्ते ॥ ४ ॥

---

१ विभिन्नम्। २ विफलाः बहुप्रतियोगाः बहुविघ्नाश्च ईहाश्चेष्टा यस्य सः। ३ धर्मकारणम्। ४ परलोकार्थमिति शेषः। ५ संकल्पव्यवसायो अन्तःकरणस्य वृत्तीः।

अत्र वासनानामक्षीणत्वात् संसारे गतः सन् मक्षिकामशकतुल्यैर्नीचमनुष्यैः पीड्यमानो मनसा गन्धर्वतुल्यं परलोकं सत्यतया मिथ्यादृष्टिः सन् पश्यति ॥ ५ ॥ क्वचित् भक्षणपानादिषु लुब्धः सन् मृगजलतुल्यान् विषयान् प्रतिधावति ॥ ६ ॥ क्वचित् संपूर्णदोषस्थानं सुवर्णं ग्रहीतुमिच्छति यथा शीतातुरो वनेऽग्निवज्जाज्वल्यमानं पिशाचमग्निबुद्ध्या धावन्नपि तं न प्राप्नोति। कथंचित् प्राप्तश्चेत् तर्हि तेन भक्षितः सन् म्रियते। एवं सुवर्णमनुधा-

तत्र गतो दंशमशकसमापसदैर्मनुजैः शलभशकुन्ततस्करमूषकादिभिरुपरुध्यमानबहिःप्राणः क्वचित् परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसाऽनुपपन्नार्थं नरलोकं गन्धर्वनगरमुपपन्नमिति मिथ्यादृष्टिरनुपश्यति ॥५॥ तत्र च क्वचिदातपोदकनिभान् विषयानुपधावति पानभोजनव्यवायादिव्यसनलोलुपः ॥६॥ क्वचिच्चाशेषदोषनिषदनं पुरीषविशेषं तद्वर्णगुणनिर्मितमतिः सुवर्णमुपादित्सत्यग्निकामकातर इवोल्मुकपिशाचम् ॥ ७ ॥ अथ कदाचिन्निवासपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेश एतस्यां संसाराटव्यामितस्ततः परिधावति ॥ ८ ॥ क्वचिच्च वात्यौपम्यया प्रमदयाऽऽरोहमारोपितस्तत्कालरजसा रजनीभूत इवासाधुमर्यादो रजस्वलाक्षो दिग्देवता अतिरजस्वलमतिर्न विजानाति ॥ ९ ॥ क्वचित् सकृदवगतविषयवैतथ्यः स्वयं पराभिध्यानेन विभ्रंशितस्मृतिस्तयैव मरीचितोयप्रायांस्तानेवाभिधावति ॥ १० ॥ क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं प्रत्यक्षं परोक्षं वा रिपुराजकुलनिर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः ॥ ११ ॥ स यदा दुग्धपूर्वसुकृतस्तदा कारस्करकाकतुण्डाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थशून्यद्रविणान् जीवन्मृतान् स्वयं जीवन् म्रियमाण उपधावति ॥ १२ ॥

वति ॥७॥ कदाचित् निवासस्थानजलद्रव्यादिषु प्रविष्टचित्तः एतस्यां संसाराटव्यां धावति ॥८॥ कदाचित् स्त्रियाः उत्सङ्गे शिरः आधाय तात्कालिकप्रीत्याऽऽच्छादितमतिर्मर्यादातिक्रमसाक्षिभूताः देवताः न जानाति ॥९॥ क्वचित् देहाभिमानेन भ्रंशितमतिर्मृगजलतुल्यान् विषयान् धावति ॥ १० ॥ क्वचित् शत्रूणां राजकुलस्य च तिरस्कृतेन व्यथितकर्णमूलहृदयो भवति ॥ ११ ॥ क्वचित् कण्टकवृक्षलताविषकूपतुल्यान् जीवन्मृतान् नरान् प्रति धावति ॥ १२ ॥

१ अग्निर्विष्ठाम्। २ तद्वर्णगुणो रजोगुणः। ३ बुधमननुभूतम्। ४ वृष्टावृष्टप्रयोजनशून्यधनान्।

क्वचिदसतां प्रसङ्गाद् वञ्चितमतिर्जलहीननदीगर्तपाततुल्यमिह परत्र च दुःखदं पाखण्डं याति ॥१३॥ यदाऽऽत्मनेऽन्नं न प्राप्नोति तदा पितृपुत्रान् बाधते ॥१४॥ क्वचित् दावानलतुल्यं गृहं प्राप्य शोकाग्निना दह्यमानो वैराग्यं प्राप्नोति ॥१५॥ क्वचित् कालेन कोपं नीतं यद्राजकुलं तेनाहृतधनरूपप्राणो मृतक इवास्ते ॥१६॥ क्वचिन्मनोरथेन प्राप्तं पितृधनाद्यसदपि सदिति मत्वाऽनुभवं गृह्णाति ॥१७॥ क्वचिद् गृहाश्रमे कर्मप्रेरणा-

एकदाऽसत्प्रसङ्गान्निकृतमतिर्व्युदकस्रोतःस्खलनवदुभयतोऽपि दुःखदं पाखण्डमभियाति ॥१३॥ यदा तु परबाधयाऽन्ध आत्मने नोपनमति तदा हि पितृपुत्रबर्हिष्मतः पितृपुत्रान् वा स खलु भक्षयति ॥१४॥ क्वचिदासाद्य गृहं दाववत्प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं निर्वेदमुपगच्छति ॥ १५ ॥ क्वचित् कालविषमितराजकुलरक्षसाऽपहृतप्रियतमधनासुः प्रमृतक इव विगतजीवलक्षण आस्ते ॥ १६ ॥ कदाचिन्मनोरथोपगतपितृपितामहाद्यसत् सदिति स्वप्ननिर्वृतिलक्षणमनुभवति ॥१७॥ क्वचिद् गृहाश्रमकर्मचोदनातिभरगिरिमारुरुक्षमाणो लोकव्यसनकर्शितमनाः कण्टकशर्कराक्षेत्रं प्रविशन्निव सीदति ॥१८॥ क्वचिच्च दुस्सहेन कायाभ्यंतरवह्निना गृहीतसारः स्वकुटुम्बाय क्रुध्यति ॥१९॥ स एव पुनर्निद्राजगरगृहीतोऽन्धे तमसि मग्नः शून्यारण्य इव शेते नान्यत् किंचन वेद शव इवापविद्धः ॥२०॥ कदाचिद् भग्नमानदंष्ट्रो दुर्जनदन्दशूकैरलब्धनिद्राक्षणो व्यथितहृदयेनानुक्षीयमाणविज्ञानोऽन्धकूपेऽन्धवत् पतति ॥ २१ ॥ कर्हि स्मचित काममधुलवान् विचिन्वन् यदा परदारपरद्रव्याण्यवरुन्धानो राज्ञा स्वामिभिर्वा निहतः पतत्यपारे निरये ॥२२॥

रूपमतिविस्तारपर्वतमारोढुमिच्छन् कण्टकशर्कराक्षेत्रं प्रविष्ट इव दुःखं प्राप्नोति ॥१८॥ क्वचिच्च दुःसहेन कायाभ्यन्तरवह्निना क्षीणबलः स्वकुटुम्बाय क्रुध्यति ॥१९॥ स एव नरो निद्राजगरेण गृहीतः शून्यारण्य इव शेते नान्यत् किंचन वेद ॥२०॥ कदाचित् दुर्जनैर्भग्नगर्वोऽन्धकूपेऽन्धवत् पतति ॥ २१ ॥ क्वचिद् विषयान् विचिन्वन् यदापरदारपरद्रव्याणि वाञ्छति तदा राज्ञा तत्स्वामिभिर्वा ताडितः सन्निरये पतति ॥ २२ ॥

---

१ पितुः पुत्राणां वा कुशादितृणमात्रमपि येषु पश्यति तान् । २ मान एव दंष्ट्रा यस्य ।

तस्मात् प्रवृत्तिमार्गम् आत्मनो जन्मक्षेत्रं कर्मोदाहरन्ति॥२३॥ यदि बन्धाद् मुक्तो भवति तर्हि तस्मात् देवदत्तो हरति तस्मात् विष्णुमित्रः॥२४॥ क्वचित् शीतवाताद्यनेकाधिदैविकादिदुःखानां निवारणेऽसमर्थोदुरन्तचिन्तया खेदातुर आस्ते॥२५॥ क्वचित् मिथः क्रयविक्रयादि कुर्वन् यत्किंचिद् धनमन्येभ्यः काकिणिकामात्रं ततो न्यूनं वाऽपहरन् विद्वेषं गच्छति॥२६॥ अस्मिन् संसारमार्गे इमे सुखदुःखद्वेषभयाभिमानादिजन्ममरणा-

अथ च तस्माद्‌भयथाऽपि हि कर्मास्मिन्नात्मनः संसारावपनमुदाहरंति ॥ २३ ॥ मुक्तस्ततो यदि बंधाद्देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनवस्थितिः ॥२४॥ क्वचिच्च शीतवाताद्यनेकाधिदैविकभौतिकात्मीयानां दशानां प्रतिनिवारणेऽकल्पो दुरन्तचिंतया विषण्ण आस्ते ॥ २५ ॥ क्वचिन्मिथो व्यवहरन् यत्किंचिद् धनमन्येभ्यो वा काकिणिकामात्रमपहरन् यत्किंचिद् वा विद्वेषमेति वित्तशाठ्यात् ॥२६॥ अध्वन्यमुष्मिन्निम उपसर्गास्तथा सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः ॥ २७ ॥ क्वापि देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेकविज्ञानो यद्विहारगृहारम्भाकुलहृदयस्तदाश्रयावसक्तसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्माऽपारेऽन्धे तमसि प्रहिणोति ॥ २८ ॥ कदाचिदीश्वरस्य भगवतो विष्णोश्चक्रात् परमाण्वादिद्विपरार्धापवर्गकालोपलक्षणात् परिवर्तितेन वयसा रंहसा हरत आब्रह्मतृणस्तम्बादीनां भूतानामनिमिषतो मिषतां वित्रस्तहृदयस्तमेवेश्वरं कालचक्रं निजायुधं साक्षाद् भगवन्तं यज्ञपुरुषमनादृत्य पाखण्डदेवताः कङ्कगृध्रबककवटप्राया आर्यसमयपरिहृताः सांकेत्येनाभिधत्ते ॥ २९ ॥

दयः क्लेशाः सन्ति॥२७॥ कदाचित् देवमायया स्त्रियाऽऽलिङ्गितो गतविवेकविज्ञानः स्त्रीपुत्रादीनां भाषणैर्व्याकुलहृदयः आत्मानं तमसि प्रक्षिपति ॥२८॥ क्वचिद् भगवतो विष्णोः कालचक्रात् भीतहृदयस्तमेव यज्ञपुरुषमनादृत्य कङ्कगृध्रबकतुल्याः पाखण्डदेवता मुख्यतया सेवते॥२९॥

१ इह परत्र च। २ निमेषमकुर्वतोऽप्रमत्तस्येत्यर्थः। ३ मूलप्रमाणरहितेन।

यदा पाखण्डिभिर्वञ्चितस्तदा ब्रह्मकुलं समावसन् तेषां श्रौतादिकर्मानुष्ठानेन भगवदाराधनमेव शीलं तदप्रियं कुर्वन् शूद्रकुलं सेवते। यस्य शूद्रस्य मिथुनीभावः उदरभरणं च व्यापारः ॥३०॥ शूद्रकुलेऽपि प्रतिबन्धरहितः स्वेच्छया क्रीडन् सन् विस्मृतमृत्युकालावधिर्भवति ॥३१॥ क्वचित् द्रुमेषु वानरवत् सार्थेषु गृहेषु रंस्यन् मिथुनोत्सवो भवति॥३२॥ एवं मार्गेऽवरुन्धानो मृत्युगजभयाद् गिरिगुहाप्राये रागादिसंकटे पतति॥३३॥ क्वचित् शीतवाताद्यनेकदुःखानां निवारणेऽसमर्थः सन् विषयेषु खेदातुरः आस्ते ॥ ३४ ॥ क्वचिद् मिथः क्रयविक्रयादि कुर्वन् वित्तशाठ्येन

यदा पाखण्डिभिरात्मवञ्चितैस्तैरुरुवञ्चितो ब्रह्मकुलं समावसंस्तेषां शीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठानेन भगवतो यज्ञपुरुषस्य आराधनमेव तदरोचयञ्छूद्रकुलं भजते निगमाचारेऽशुद्धितो यस्य मिथुनीभावः कुटुम्बभरणं यथा वानरजातेः ॥ ३० ॥ तत्रापि निरवरोधः स्वैरेण विहरन्नतिकृपणबुद्धिरन्योन्यमुखनिरीक्षणादिना ग्राम्यकर्मणैव विस्मृतकालावधिः ॥ ३१ ॥ क्वचित द्रुमवदैहिकार्थेषु * रंस्यन् यथा वानरः सुतदारवत्सलो व्यवायक्षणः ॥ ३२ ॥ एवमध्वन्यवरुन्धानो मृत्युगजभयात्तमसि गिरिकन्दरप्राये ॥ ३३ ॥ क्वचिच्छीतवाताद्यनेकदैविकभौतिकात्मीयानां दुःखानां प्रतिनिवारणे अकल्पो दुरन्तविषयविषण्ण आस्ते ॥ ३४ ॥ क्वचिन्मिथो व्यवहरन् यत्किञ्चिद्धनमुपयाति वित्तशाठ्येन ॥ ३५ ॥ क्वचित् क्षीणधनः शय्यासनाशनाद्युपभोगविहीनो यावदप्रतिलब्धमनोरथोपगतादानेऽवसितमतिस्ततस्ततोऽवमानादीनि जनादपि लभते ॥ ३६ ॥ एवं वित्तव्यतिषङ्गविवृद्धवैरानुबन्धोऽपि पूर्ववासनया मिथ उद्वहत्यथापवहति ॥ ३७ ॥ एतस्मिन् संसाराध्वनि नानाक्लेशोपसर्गबाधित आपन्नविपन्नो यत्र यस्तमु ह वावेतरस्तत्र विसृज्य जातं जातमुपादाय शोचन् मुह्यन् बिभ्यद् विवदन् क्रन्दन् संहृष्यन्गायन्नह्यमानः साधुवर्जितो नैवावर्ततेऽद्यापि यत आरब्ध एष नरलोकसार्थो यमध्वनः पारमुपदिशन्ति ॥ ३८ ॥

किंचिद् धनं प्राप्नोति ॥ ३५ ॥ क्वचिद् क्षीणधनः शय्यासनाद्युपभोगविहीनो वाञ्छितार्थग्रहणे निश्चितमतिः सन् ततस्ततो जनादपमानादि लभते ॥३६॥ एवं वित्तव्यवहारेण विवृद्धवैरानुबन्धोऽपि पूर्ववासनया पुनर्विवाहादिसम्बन्धं करोति ॥३७॥ एतस्मिन् संसारमार्गे यः आपदं प्राप्तो विनष्टो वा तं विसृज्य जातं जातं स्वीकृत्य शोचन् मुह्यन् क्रन्दन् संहृष्यन्नद्यापि नावर्तते ॥ ३८ ॥

* 'गृहेषु' इत्यधिकः पाठः।

तत्र हेतुः। ते एतद् योगानुशासनं न जानन्ति। मुनयस्तु सम्यग् जानन्ति ॥३९॥ ये वै राजर्षयस्ते भूम्यर्थे विरोधं कृत्वाऽन्ते तां विसृज्य स्वयं मृता नरकदुःखमनुभूय पुनरिहायान्ति। एवं स्वर्गगतोऽपि सार्थं नरलोकमेव याति ॥४०॥ हे राजन्! ऋषभदेवपुत्रस्य भरतस्य मार्गमन्यः कोऽपि नृपो गन्तुं न शक्नोति गरुडस्य मार्गं मक्षिकेव ॥४१॥ यस्तरुणोऽपि स्त्रीपुत्रसुहृद्राज्यादि सर्वं जहौ ॥४२॥ किंच यो राजपुत्रःस्व-

यदिदं योगानुशासनं न वा एतदवरुन्धते यन्न्यस्तदंडा मुनय उपशमशीला उपरतात्मानः समवगच्छन्ति ॥ ३९ ॥
यदपि दिगिभजयिनो यज्विनो ये वै राजर्षयः किं तु परं मृधे शयीरन् ॥ अस्यामेव ममेयमिति कृतवैरानुबन्धा यान्ति
विसृज्य स्वयमुपसंहृताः ॥ कर्मवल्लीमवलम्ब्य तत आपदः कथंचिन्नरकाद् विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो
नरलोकसार्थमुपयाति एवमुपरिगतोऽपि ॥ ४० ॥ तस्येदमुपगायन्ति ॥ आर्षभस्येह राजर्षेर्मनसाऽपि महात्मनः ॥
नानुवर्त्मार्हति नृपो मक्षिकेव गरुत्मतः ॥४१॥ यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदिस्पृशः ॥ जहो युवैव मलव-
दुत्तमश्लोकलालसः ॥ ४२ ॥ यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् ॥
नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः ॥४३॥ यज्ञाय धर्मपतये विधिनैपुणाय योगाय
सांख्यशिरसे प्रकृतीश्वराय ॥ नारायणाय हरये नम इत्युदारं हास्यन् मृगत्वमपि यः समुदाजहार ॥ ४४ ॥ य
इदं भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्यापवर्ग्यं वा
ऽनुशृणोत्याख्यास्यति अभिनन्दति च सर्वा एवाशिष आत्मन् आशास्ते न काञ्चन परत इति ॥ ४५ ॥ इति
श्रीभागवते महा० पञ्चमस्कन्धे भरतोपाख्याने ब्राह्मणरहूगणसंवादे पारोक्ष्यविवरणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥



जनधनदारादीन् नैच्छत् तत् तस्य योग्यमेव यतो हरिसेवानुरक्तमनसां महतां मोक्षोऽपि तुच्छ एव किं पुनरेते ॥४३॥ यो भरतो मृगदेहमपि त्यक्ष्यन् यज्ञाय नारायणाय हरये नमः इति सम्यगुच्चारितवान् ॥४४॥ इदं राजर्षेर्भरतस्य चरितं स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्याप-वर्ग्यं यः श्रृणोति श्रावयति स सर्वा आशिषः प्राप्नोति ॥ ४५ ॥ इति श्रीभागवते चूर्णिकायां पञ्चमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

१ 'सर्वात्मनि' इ० पा०।

एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम् ॥ ततः पञ्चदशे तस्य कीर्त्यन्ते वंशजा नृपाः ॥ १ ॥ श्रीशुक उवाच ॥ भरतस्य सुमतिर्नाम पुत्रः यं सुमतिमृषभ-पदवीमनुवर्तमानं दृष्ट्वा केचिद् पाखण्डिनोऽयं बुद्धोऽवतीर्ण इति मंस्यन्ते। पाखण्डमार्गं च कलौ कल्पयिष्यन्ति ॥ १ ॥ तस्माद् सुमतेर्वृद्धसेनायां देवताजिन्नाम पुत्रः ॥ २ ॥ ततः आसुर्यां देवद्युम्नः। तस्मात् धेनुमत्यां परमेष्ठी। ततः सुवर्चलायां प्रतीहः ॥ ३ ॥ प्रतीहाद् सुवर्चलायां प्रतिहर्ता १,

श्रीशुक उवाच ॥ भरतस्यात्मज सुमतिर्नामाभिहितो यमु ह वाव केचित्पाखण्डिन ऋषभपदवीमनुवर्तमानं चानार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयस्या कलौ कल्पयिष्यन्ति ॥ १ ॥ तस्माद् वृद्धसेनायां देवताजिन्नाम पुत्रोऽभवत् ॥ २ ॥ अथासुर्यां तत्तनयो देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी तस्य सुवर्चलायां प्रतीह उपजातः ॥ ॥ ३ ॥ य आत्मविद्यामाख्याय स्वयं संशुद्धो महापुरुषमनुसस्मार ॥ प्रतीहात्सुवर्चलायां प्रतिहर्त्रादयस्त्रय आसन्निज्याकोविदाः सूनवः ॥ प्रतिहर्तुः स्तुत्यामजभूमानावजनिषाताम् ॥ ४ ॥ भूम्न ऋषिकुल्यायामुद्गीथः ततः प्रस्तावो देवकुल्यायाम् ॥ प्रस्तावान्नियुत्सायां हृदयज आसीद्विभुः ॥ विभो रत्यां च पृथुषेणस्तस्मान्नक्त आकूत्यां जज्ञे ॥ नक्ताद्द्रुतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत साक्षाद्भगवतो विष्णोर्जगद्रिरक्षिषया गृहीतसत्त्वस्य कलात्मवत्त्वादिलक्षणेन महापुरुषतां प्राप्तः ॥ ५ ॥ स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिना च भगवति महापुरुषे परावरे ब्रह्मणि सर्वात्मनाऽर्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयाऽऽपादित-भगवद्भक्तियोगेन चाभीक्ष्णशः परिभावितातिशुद्धमतिरुपरतानात्म्य आत्मनि स्वयमुपलभ्यमानब्रह्मात्मानुभवोऽपि निरभिमान एवावनिमजूगुपत ॥ तस्येमां गाथां पाण्डवेय पुराविद उपगायन्ति ॥ ६ ॥

प्रस्तोता २, उद्गाता ३, इति त्रयः पुत्रा आसन्। प्रतिहर्तुः स्तुत्यामजभूमानौ जातौ ॥ ४ ॥ ऋषिकुल्यायाः भूम्नः उद्गीथः। उद्गीथात् देवकुल्यायां प्रस्तावः ॥ प्रस्तावात् नियुत्सायां विभुः। विभोः रत्यां पृथुषेणः। पृथुषेणादाकूत्यां नक्तः नक्ताद् द्रुत्यां गयो नाम भगवदंशः ॥ स महापुरुषतां प्राप्तः ॥ ५ ॥ स गयो भगवति समर्पितेन प्रजापालनपोषणेनेज्यादिधर्मेण भक्तियोगेन च शुद्धमतिर्निरभिमान एव पृथिवीं पालयामास। पुराविदस्तस्येमां गाथां

१ 'सर्वात्मनि' इ० पा०।

गायन्ति ॥६॥ कर्मभिर्गयं कोऽनुकरोति । न कोऽपि ॥७॥ यं दक्षकन्याः अभ्यषिञ्चन् पृथ्वी यत्प्रजानां कामान् दुदुहे ॥८॥ युधि बाणैः पूजिताः नृपाः यस्य बलिं ददुः । विप्रा धर्मफलानां षष्ठांशं लोकान्तरेऽर्पयामासुः ॥९॥ यस्य यज्ञं यज्ञेशो भगवान् भक्तियोगेन समर्पितमिज्याफलं प्रत्यक्षतः स्वीकृतवान् ॥१०॥ यस्य हरेः प्रीणनाद्देवमनुष्यादयः प्रीयेरन् स हरिर्गयस्य यज्ञे तृप्तोऽस्मीति प्रत्यक्षं प्रीतिं दर्शितवान् ॥११॥ गयाद्

गयं नृपः कःप्रतियाति कर्मभिर्यज्वाऽभिमानी बहुविद्धर्मगोप्ता ॥ समागतश्रीः सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते ॥ ७ ॥ यमभ्यषिञ्चत्परया मुदा सतीः सत्याशिषो दक्षकन्याः सरिद्भिः ॥ यस्य प्रजानां दुदुहे धराऽऽशिषो निराशिषो गुणवत्सस्नुतोधाः ॥ ८ ॥ छन्दांस्यकामस्य च यस्य कामान् दुदूहुराजह्रुरथो बलिं नृपाः ॥ प्रत्यञ्चिता युधि धर्मेण विप्रा यदाशिषां षष्ठमंशं परेत्य ॥ ९ ॥ यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसोमपीथे ॥ श्रद्धा विशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार ॥ १० ॥ यत्प्रीणनाद्बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिञ्चात् ॥ प्रीयेत सद्यः स ह विश्वजीवः प्रीतः स्वयं प्रीतिमगाद्गयस्य ॥११॥ गयाद् गयन्त्यां चित्ररथः सुगतिरवरोधन इति त्रयः पुत्रा बभूवुः ॥ चित्ररथादूर्णायां सम्राडजनिष्ट ॥ १२ ॥ तत उत्कलायां मरीचिः ॥ मरीचेर्बिन्दुमत्यां बिन्दुमानुदपद्यत ॥ तस्मात् सरघायां मधुनामाऽभवत् ॥ मधोः सुमनसि वीरव्रतः ॥ ततो भोजायां मन्थुप्रमन्थू जज्ञाते ॥ मन्थोः सत्यायां भौवनः ततो दूषणायां त्वष्टाऽजनिष्ट ॥ त्वष्टुर्विरोचनायां विरजः ॥ विरजस्य शतजित्प्रवरं पुत्रशतं कन्या च विषूच्यां किल जातम् ॥ १३ ॥

गयन्त्यां चित्ररथः १, सुगतिः २, अवरोधनः ३, इति त्रयः पुत्राः । चित्ररथादूर्णायां सम्राट् बभूव ॥ १२ ॥ तस्मादुत्कलायां मरीचिः । मरीचेर्बिन्दुमत्यां बिन्दुमान् तस्मात् सरघायां मधुः । मधोः सुमनसि वीरव्रतः । वीरव्रतात् भोजायां मन्थुप्रमन्थू द्वौ । मन्थोः सत्यां भौवनः । भौवनाद् दूषणायां त्वष्टा । त्वष्टुर्विरोचनायां विरजात् विषूच्यां शतजिन्मुख्यं पुत्रशतमेका कन्या च जाता ॥ १३ ॥

१ सत्यः । २ श्रद्धामंत्रीत्यादयः ।

चरमो विरजः इमं प्रियव्रतवंशं कीर्त्या भूषितवान् ॥१४॥ इति श्रीभागव० चू० पञ्चम० पञ्चदशोऽध्यायः ॥ १५ ॥ पूर्वोक्तद्वीपसिन्ध्वादिमान-चिह्नस्वरूपतः॥स्पष्टं प्रवक्तुमारब्धा पञ्चाध्यायी ततः परम्॥१॥ षोडशेऽधास्तथा चोर्ध्वं परितः सन्निवेशतः। मेरोः स्थितिर्महीकञ्जकर्णिका चोपवर्ण्यते ॥२॥ प्रियव्रतचरित्रोक्ताऽनुक्ता द्वीपादिकल्पना ॥ तद्विशेषविजिज्ञासुः कथान्ते परिपृच्छति ॥३॥ राजोवाच ॥ हे शुक ! त्वया पूर्वं प्रियव्रतचरिते भूमण्डलायामविशेषः उक्तः। कियत्पर्यन्तं तदाह ! यावत् सूर्यस्तपति तथा नक्षत्रगणैः सह चन्द्रमा दृश्यते तावत् ॥१॥ तत्रापि हे भग-

तत्रायं श्लोकः ॥ प्रैयव्रतं वंशमिमं विरजश्चरमोद्भवः ॥ अकरोदत्यलं कीर्त्या विष्णुः सुरगणं यथा ॥१४॥ इति श्रीभागव० म० पञ्चम० प्रियव्रतवंशानुकीर्तनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ राजोवाच ॥ उक्तस्त्वया भूमण्डलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चन्द्रमा वा सह दृश्यते ॥ १ ॥ तत्रापि प्रियव्रतरथचरणपरिखातैः सप्तभिः सप्त सिन्धव उपक्लृप्ताः ॥ यत एतस्याः सप्तद्वीपविशेषविकल्पस्त्वया भगवन् खलु सूचितः ॥ एतदेवाखिलमहं मानतो लक्षणतश्च सर्वं विजिज्ञासामि ॥ २ ॥ भगवतो गुणमये स्थूलरूप आवेशितं मनो ह्यगुणेऽपि सूक्ष्मतम आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुं तदु हैतद् गुरोऽर्हस्यनुवर्णयितुमिति ॥ ३ ॥ ऋषिरुवाच ॥ न वै महाराज भगवतो मायागुणविभूतेः काष्ठां मनसा वचसा वाऽधिगन्तुमलं विबुधायुषाऽपि पुरुषस्तस्मात् प्राधान्येनैव भूगोलकविशेषं नामरूपमानलक्षणतो व्याख्यास्यामः ॥ ४ ॥ यो वाऽयं जम्बूद्वीपः कुवलयकमलकोशाभ्यन्तरकोशो नियुतयोजनविशालः समवर्तुलो यथा पुष्करपत्रम् ॥ ५ ॥

वन् ! प्रियव्रतरथचरणपरिखातैः सप्त समुद्राः कल्पिताः येभ्यः सिन्धुभ्यः एतस्याः भुवः सप्तद्वीपविशेषस्त्वया संक्षेपतः कथितः। एतत् सर्वं प्रमाणतो लक्षणतश्च ज्ञातुमिच्छामि ॥२॥ यतो भगवतः स्थूलरूपे आवेशितं मनः सूक्ष्मे रूपे आवेशितुं योग्यं भवति। तस्मात् हे गुरो ! एतत् वर्णयितुमर्हसि ॥३॥ शुक उवाच ॥ हे महाराज! मायागुणविभूतेर्भगवतोऽन्तं पुरुषो देवायुषाऽपि प्राप्तुं न समर्थः।अतः प्राधान्येन भूगोलविशेष-नामलक्षणतः कथयिष्यामः ॥४॥ योऽयं जम्बूद्वीपो लक्षयोजनविस्तीर्णः समो वर्तुलो वलयाकारः। एतत्परिमाणेन क्षारसमुद्रेण वेष्टितः ॥५॥

यस्मिन् द्वीपे नव खण्डानि नवसहस्रयोजनविस्तृतानि । अत्राष्ट मर्यादागिरयः ॥६॥ मध्य इलावृतं नाम खण्डम् । तस्या मध्ये लक्षयोजनोच्चः कमलकर्णिकासदृशः सौवर्णो मेरुः स्थितः ॥ ७ ॥ स मेरुर्मूर्धनि द्वात्रिंशत्सहस्रयोजनविस्तृतो मूले षोडशसहस्रयोजनविततः अन्तर्भूम्यां षोडशसहस्रयोजनैः प्रविष्टः भूमेरुपरि चतुरशीतिसहस्रयोजनप्रमाणो दृश्यते । एवं लक्षयोजनोच्चः इलावृतस्योत्तरोत्तरतो नीलःश्वेतःशृङ्गवानिति त्रयः पर्वताः । एते रम्यकहिरण्मयकुरुखण्डानां मर्यादापर्वताः । ते दशसहस्रयोजनोच्चाः द्विसहस्रयोजनविततः ॥८॥ एवमिलावृतस्य दक्षि-

यस्मिन् नव वर्षाणि नवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति ॥ ६ ॥ एषां मध्ये इला-वृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य ॥ ७ ॥ मूर्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रं तावताऽन्तर्भूम्यां प्रविष्टः ॥ उत्तरो-त्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रं पृथव एकैकशः पूर्वस्मात्पूर्वस्मादुत्तर उत्तरो दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति ॥ ८ ॥ एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभार-तानां यथासंख्यम् ॥९॥ तथैवेलावृतमपरेण पूर्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः ॥१०॥ केतुमालभद्राश्वयोः सीमानं विदधाते ॥ ११ ॥ मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इति अयुतयोजनविस्तारोन्नाहा-मेरोश्चतुर्दिशमवष्टम्भगिरय उपक्लृप्ताः ॥ १२ ॥

णतो निषधो हेमकूटो हिमालयो हरिवर्षकिंपुरुषभारतखण्डानां मर्यादाचलाः । एते गिरयः समुद्रावधयः । अपरं च अयुतयोजनोच्चाः द्विसहस्र-योजनविततः ॥ ९ ॥ इलावृतस्य पूर्वं गन्धमादनो भद्राश्वखण्डस्य मर्यादागिरिः । पश्चिमे माल्यवान् केतुमालखण्डस्य सीमाचलः ॥ ॥ १० ॥ ११ ॥ मेरोश्चतुर्दिक्षु मन्दरमेरुमन्दरसुपार्श्वकुमुदा इति चत्वारोऽवष्टम्भपर्वताः दशसहस्रयोजनविस्ताराः उच्चाश्च ॥ १२ ॥

१ पूर्वतो दीर्घाः । २ दशांशादीषदधिको योंऽशः तेन ।

येषु चतुर्षु पर्वतेषु चूतजम्बूकदम्बवटाः एकादशशतयोजनोच्चाः शतयोजनविस्ताराः सन्ति ॥ १३ ॥ तेषु ह्रदाश्चत्वारः पयोमध्विक्षुरस-स्वच्छजलाः सन्ति यदुपस्पर्शिनः उपदेवगणाः योगिनामैश्वर्याणि धारयन्ति ॥ १४ ॥ तत्र देवोद्यानानि नन्दनं चैत्ररथं वैभ्राजकं सर्वतो-भद्रमिति चत्वारि ॥ १५ ॥ येषु देवादयः स्त्रीभिः सह विहरन्ति ॥ १६ ॥ मन्दरपर्वतोत्सङ्गे आम्रवृक्षस्य शिरसो गिरिशिखरवत् स्थूलानि

चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्वतकेतव इवाधिसहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः ॥ १३ ॥ ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजला यदुपस्पर्शिन उपदेवगणा योगैश्वर्याणि स्वाभाविकानि भरतर्षभ धारयन्ति ॥१४॥ देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति ॥१५॥ येष्वमरपरिवृढाः सह सुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरन्ति ॥१६॥ मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति ॥ १७ ॥ तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति ॥१८॥ यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति ॥ १९ ॥ एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बूनाम नदी मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं यावदिलावृतमुपस्यन्दयति ॥२०॥ तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानुविध्यमाना वाय्वर्कसंयोगविपाकेन सदाऽमरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति ॥२१॥

स्वादूनि फलानि पतन्ति ॥ १७ ॥ तेषां फलानां गलितरसेनारुणोदा नाम नदी पूर्वेणेलावृतं स्नपयति ॥ १८ ॥ यस्याः रसपानतः पार्वतीदासीनां देहसुगन्धवातो दशयोजनं समन्ताद् वासयति ॥ १९ ॥ एवं मेरुमन्दरपर्वतोत्सङ्गे जम्बूवृक्षफलानि हस्तिदेहसादृशानि पतन्ति । तद्रसेन जम्बूनाम नदी दक्षिणेनेलावृतं व्याप्य वहति ॥ २० ॥ तस्यास्तटमृत्तिका जाम्बूनदं नाम सुवर्णं भवति ॥ २१ ॥

१ तावत्प्रमाणा विटपविततिर्येषां ते ।

तत् सुवर्णं देवादयः स्त्रीभिः सह मुकुटवलयाद्यलंकाररूपेण धारयन्ति ॥ २२ एवं पश्चिमे सुपार्श्वपर्वते कदम्बकोटरेभ्यो निस्सृतपञ्चमधुधाराः पश्चिमेनेलावृतखण्डं यान्ति॥२३॥यद्रससेविनां मुखवायुः शतयोजनं सुवासयति॥२४॥एवमुत्तरे कुमुदपर्वतोत्सङ्गे वटस्य स्कंधेभ्यो दधिमधुघृत- पयोगुडान्नादिवस्त्रशय्यासनाभरणादयः सर्वे एव कामदुघाः नदाः पतन्तः सन्तः उत्तरेणेलावृतं यान्ति॥२५॥नदसेविनीनां प्रजानां वलीपलितक्लेश-



यदु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेण खलु धारयन्ति ॥२२॥ यस्तु महाकदम्बः सुपार्श्वनिरूढो यास्तस्य कोटरेभ्यो विनिस्सृताः पञ्चायामपरिणाहाः पञ्च मधुधाराः सुपार्श्वशिखरात् पतन्त्यो-ऽपरेणात्मानमिलावृत्तमनुमोदयन्ति ॥ २३ ॥ या ह्युपयुञ्जानानां मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनुवा-सयति ॥ २४ ॥ एवं कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य स्कन्धेभ्यो नीचीनाः पयोदधिमधुघृतगुडान्ना-द्यम्बरशय्यासनाभरणादयः सर्व एव कामदुघा नदाः कुमुदाग्रात् पतन्तस्तमुत्तरेणेलावृतमुपयोजयन्ति ॥ २५ ॥ यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्ता-पविशेषा भवन्ति ॥ यावज्जीवं सुखं निरतिशयमेव ॥ २६ ॥ कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिशिरपतङ्गरु-चकनिषधशिनीवासकपिलशङ्खवैडूर्यजारुधिहंसर्षभनागकालञ्जरनारदादयो विंशतिगिरयो मेरोः कर्णिकाया इव केसरभूता मूलदेशे परित उपक्लृप्ताः ॥ २७ ॥ जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विस-हस्रं पृथुतुङ्गौ भवतः ॥ एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ ॥ एवमुत्तरतस्त्रिशृङ्गमकरौ अष्टाभिरेतैः परिस्तृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः ॥ २८ ॥



स्वेददौर्गन्ध्यजरामृत्युशीतोष्णादयो न भवन्ति॥२६॥एवं कुरङ्गः कुररः कुसुम्भो वैकङ्कस्त्रिकूटः शिशिरः पतङ्गः रुचको निषधः शिनीवासः कपिल-शङ्खो वैडूर्यो जारुधिर्हंसः ऋषभो नागः कालञ्जरो नारदः आदि येषां ते! एते विंशति पर्वताः मेरोर्मूले स्थापिताः ॥२७॥ मेरोः परितोऽष्टौ पर्वताः जठरदेवकूटौ पूर्वस्याम्।पवनपारियात्रौ पश्चिमतः।कैलासकरवीरौ दक्षिणतः। त्रिशृङ्गमकरावुत्तरतः।एवंभूतो मेरुः। एतैरष्टभिरग्निरिव चकास्ति॥२८॥

मेरोर्मूर्धनि मध्ये सौवर्णी दशसहस्रयोजना चतुरस्रा ब्रह्मपुरी यां शातकौम्भीं वदन्ति ॥ २९ ॥ तां परितोऽष्टाविन्द्रादिलोकपालानां पुर्यस्ताः सार्धं द्विसहस्रयोजनपरिमिताः सन्ति ॥३०॥ इति श्रीभागवत० चू० पञ्चम० षोडशोऽध्यायः ॥१६॥ ततः सप्तदशे गङ्गागमनं तच्चतुर्दिशम् ॥ इलावृते च रुद्रेण संकर्षणनिषेवणम् ॥१॥ श्रीशुक उवाच ॥ अथ विष्णोः श्रीवामनस्य वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तः

मेरोर्मूर्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं वदंति ॥ २९ ॥ तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयभागेन पुरोऽष्टावुपक्लृताः ॥ ३० ॥ इति श्रीभागव० म० पञ्च० भुवनकोशवर्णनं नामषोडशोऽध्यायः ॥ १६ ॥ श्रीशुक उवाच ॥ तत्र भगवतः साक्षाद्यज्ञलिंगस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताखिलजगदघमलापहोपस्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोऽभिधीयमानाऽतिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्द्धन्यवततार ॥ १ ॥ यत् तत् विष्णुपदमाहुः ॥ यत्र ह वाव वीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविन्दोदकमिति यामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेन दृढं क्लिद्यमानान्तर्हृदय औत्कंठ्यविवशामीलितलोचनयुगलकुड्मलविगलितामलबाष्पकलयाऽभिव्यज्यमानरोमपुलककुलकोधुनाऽपि परमादरेण शिरसा बिभर्ति ॥२॥ ततः सप्त ऋषयस्तत्प्रभावाभिज्ञा यां ननु तपस आत्यन्तिकी सिद्धिरेतावती भगवति सर्वात्मनि वासुदेवेऽनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतां मुमुक्षव इव सबहुमानमद्यापि जटाजूटैरुद्वहन्ति ॥ ३ ॥

प्रविष्टा या बाह्यजलधारा भगवच्चरणस्पर्शात् सर्वपापहरा सा बहुकालेन ध्रुवमण्डलेऽवततार ॥ १ ॥ यां भगवत्पदीं वदन्ति । अहो ध्रुवोऽपि परमभागवतो भगवद्भक्तियोगेन क्लिद्यमानान्तर्हृदयः सन् यां गङ्गां शिरसा बिभर्ति ॥ २ ॥ ततः सप्त ऋषयस्तत्प्रभावज्ञाः भगवति वासुदेवे निरन्तरभक्तियोगलाभेन त्यक्तान्यपुरुषार्थाः सन्तो मुक्तिमिव यामद्यापि जटाजूटैर्बिभ्रति ॥ ३ ॥

ततः सा चन्द्रमण्डलं व्याप्य ब्रह्मसदने पतिता सती तत्र चतुर्धा जाता। सीता १ अलकनन्दा २ चक्षुः ३ भद्रा ४ इति ॥ ४ ॥ ५ ॥ तत्र सीता ब्रह्मसदनात् केसराचलादिपर्वतेभ्यः पतन्तो गन्धमादनमूर्धनि पतित्वा भद्राश्वखण्डं गत्वा पूर्वसमुद्रं प्रविशति ॥ ६ ॥ एवं चक्षुः सा माल्यवतः शिखरात् पतन्ती केतुमालखण्डं गत्वा पश्चिमसमुद्रं प्रविशति ॥ ७ ॥ भद्रा च ब्रह्मसदनात् पतिता कुमुदनीलश्वेतशृङ्गवत्पर्वतानां

ततोऽनेकसहस्रकोटिविमानानीकसंकुलदेवयानेनावतरन्तीन्दुमण्डलमावार्य ब्रह्मसदने निपतति ॥ ४ ॥ तत्र चतुर्धा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्यन्दन्ती नदनदीपतिमेवाभिनिविशति ॥ सीताऽलकनन्दा चक्षुर्भद्रेति ॥ ५ ॥ सीता तु ब्रह्मसदनात् केसराचलादिगिरिशिखरेभ्योऽधोधः प्रस्रवन्ती गन्धमादनमूर्धसु पतित्वा अन्तरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशति ॥ ६ ॥ एवं माल्यवच्छिखरान्निष्पतन्ती ततोऽनुपरतवेगा केतुमालमभि चक्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति ॥७॥ भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद्गिरिशिखरमतिहाय शृंगवतः शृङ्गादवस्यन्दमाना उत्तरांस्तु कुरूनभित उदीच्यां दिशि जलधिमभिप्रविशति ॥ ८ ॥ तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य हेमकूटात् हैमकूटान्यतिरभसतररंहसा लुठयन्ती भारतमभिवर्षं दक्षिणस्यां दिशि जलधिमभिप्रविशति ॥ ९ ॥ यस्यां स्नानार्थं पानार्थं चागच्छतः पुंसः पदे पदेऽश्वमेधराजसूयादीनां फलं न दुर्लभमिति ॥ अन्ये च नदा नद्यश्च वर्षे वर्षे सन्ति बहुशो मेर्वादिगिरिदुहितरः शतशः ॥१०॥ तत्रापि भारतमेव वर्षं कर्मक्षेत्रमन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशन्ति ॥ ११ ॥

शृङ्गाण्यतिक्रम्य कुरून् गत्वोत्तरसमुद्रं प्रविशति ॥८॥ एवमलकनन्दा ब्रह्मसदनात् पतन्ती बहुगिरिकूटानतिक्रम्य भारतखण्डं गत्वा दक्षिणसमुद्रं प्रविशति ॥९॥ यस्यां स्नानार्थमागच्छतः पुंसः पदे पदेऽश्वमेधराजसूयादीनां फलं न दुर्लभमिति। अन्ये च नदाः नद्यश्च खण्डे खण्डे बहुशःसन्ति ॥ १० ॥ तत्रादि भारतमेव खण्डं कर्मक्षेत्रम्। अन्यानि खण्डानि स्वर्गिणां पुण्यशेषस्योपभोगस्थानानि भौमस्वर्गपदानि कथयन्ति ॥ ११ ॥

तत्रापि भारतखण्डं विनाऽन्यखण्डे नागायुतबलानां पुरुषाणां परमायुरयुतवर्षाणि । तत्र त्रेतायुगसमः कालो वर्तते ॥१२॥ यत्र देवादयः स्वैः स्वैर्गणनायकैः कृतमहोपचाराः सन्तः कुसुमस्तबकफलादीनां समृद्ध्या नम्रशाखैर्वृक्षैः शोभमानवनेष्वाश्रमायतनेषु वर्षगिरिद्रोणीषु च तथा राजहंसजलकुक्कुटकारण्डवसारसचक्रवाकादिभिरुपकूजितेषु निर्मलजलाशयेषु च सुललितसुन्दरीणां कामेन क्षुभितैर्विलासादिभिराकृष्ट-

एषु पुरुषाणामयुतं पुरुषायुर्वर्षाणां देवकल्पानां नागायुतप्राणानां वज्रसंहननबलवयोमोदप्रमुदितमुदितमहासौरतमिथुन-व्यवायापवर्गवर्षधृतैकगर्भकलत्राणां तत्र तु त्रेतायुगसमः कालो वर्तते ॥ १२ ॥ यत्र ह देवपतयः स्वैः स्वैर्गणनाय-कैर्विहितमहार्हणाः सर्वर्तुकुसुमस्तबकफलकिसलयश्रियाऽऽनम्यमानविटपलताविटपिभिरुपशुम्भमानरुचिरकानना-श्रमायतनवर्षगिरिद्रोणीषु तथा चामलजलाशयेषु विकचविविधनववनरुहामोदमुदितराजहंसजलकुक्कुटकारण्डव-सारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु जलक्रीडाभिर्विचित्रविनोदैः सुललितसुरसुन्दरीणां काम-कलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयः स्वैरं विहरन्ति ॥ १३ ॥ नवस्वपि वर्षेषु भगवान् नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाऽद्यापि सन्निधीयते ॥ १४ ॥ इलावृते तु भगवान् भव एक एव पुमान् न ह्यन्यस्तत्रापरो निर्विशति भवान्याः शापनिमित्तज्ञः ॥ यत् प्रवेक्ष्यतः स्त्रीभावस्तत् पश्चाद् वक्ष्यामि ॥ १५ ॥ भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः संकर्षणसंज्ञा-मात्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति ॥ १६ ॥

मनोदृष्टयः स्वैरं विहरन्ति ॥ १३ ॥ नवस्वपि खण्डेषु भगवान् नारायणः पुरुषाणामनुग्रहाय स्वमूर्तिसमूहेन संनिहितो भवति ॥१४॥ इलावृत-खण्डे त्वेक एव पुमान् शिवो भवान्या सह विहरति । यत्र प्रविशतः पुरुषस्य स्त्रीत्वं जायते । तन्नवमस्कन्धे वक्ष्यामि ॥ १५ ॥ भवान्या दास्योऽर्बुदसहस्रमिताः सन्ति ताभिर्युक्तः शिवो विष्णोस्तुरीयां संकर्षणसंज्ञां मूर्तिं सेवते । इदं स्तौति ॥ १६ ॥

१ व्यवायापवर्गे संभोगावसाने एकवर्षशेषे आयुषि धृतः एकोगर्भो यैस्तादृशानि कलत्राणि येषां तेषाम् ।

शिव उवाच॥ ॐ नमोभगवते महापुरुषायानन्ताय नम इति मन्त्रं जपति॥१७॥ हे भजनीय! भक्तानां भयापहं भक्तेषु प्रकटितस्वरूपं त्वां भजे
॥१८॥यस्य दृष्टिर्विषयैरण्वपि न लिप्यते तं को न आद्रियेत ॥१९॥ हे ईश ! असद्दृशो नरस्य त्वं स्वमायया मत्त इव भयंकरः प्रतिभासि॥२०॥
मुनयो यमनन्तं गदन्ति यो मूर्धसहस्रस्थानेषु किंचिदेकफणायां स्थितं भूमण्डलं सर्षपमिव न वेद तस्मै नमः॥२१॥ किंच यत्संभवो ब्रह्मा तस्माद्

श्रीभगवानुवाच ॥ ॐ नमो भगवते महापुरुषाय सर्वगुणसंख्यानायानन्तायाव्यक्ताय नम इति ॥ १७ ॥ भजे भज-
न्यारणपादपङ्कजं भगस्य[1] कृत्स्नस्य परं परायणम् ॥ भक्तेष्वलंभावितभूतभावनं[2] भवापहं त्वा भवभावमीश्वरम् ॥१८॥ न
यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ॥ ईशे[3] यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगी-
षुरात्मनः ॥ १९ ॥ असद्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः ॥ न नागवध्वोऽर्हणं[4] ईशिरे ह्रिया
यत्पादयोः स्पर्शनधर्षितेन्द्रियाः[5] ॥ २० ॥ यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनन्तमृषयः ॥ न वेद
सिद्धार्थमिव क्वचित् स्थितं भूमण्डलं मूर्धसहस्रधामसु ॥ २१ ॥ यस्याद्य आसीद्गुणविग्रहो[6] महान् विज्ञानधिष्ण्यो
भगवानजः किल ॥ यत्संभवोऽहं त्रिवृता स्वतेजसा वैकारिकं तामसमैन्द्रियं सृजे ॥ २२ ॥ एते वयं यस्य वशे महा-
त्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः ॥ महानहं वैकृततामसेन्द्रियाः सृजाम सर्वे यदनुग्रहादिदम् ॥ २३ ॥ यन्नि-
र्मितां कर्ह्यपि कर्मपर्वणीं[7] मायां जनोऽयं गुणसर्गमोहितः ॥ न वेद निस्तारणयोगमञ्जसा तस्मै नमस्ते विलयोदयात्मने
॥२४॥ इति श्रीभागवते महापुराणे पञ्चमस्कन्धे इलावृतखण्डे भगवत्संकर्षणवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

ब्रह्मणः संभूतोऽहं रुद्रस्त्रिगुणेन देवभूतेन्द्रियवर्गं सृजामि ॥ २२ ॥ वयं महदादयः पूर्वोक्ता वर्गाश्च सर्वे यस्यानुग्रहाद् ब्रह्माण्डं सृजामः ॥२३॥
जनोः यन्निर्मितां मायां न वेद तस्मै विलयोदयस्वरूपाय नमः ॥२४॥ इति श्रीभागवते चूर्णिकायां पञ्चमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

१ ऐश्वर्यस्य । २ अलमित्यर्थं भावितं प्रकटितं भूतभावनं स्वरूपं येन तम् । ३ ईशनाय । नियमनाय । निरीक्षणे हेतुरयम् ४ भुजाद्यर्हणे । ५ पादार्चने यस्य पादयोः स्पर्शनेन धर्षितं मनो यासां ताः । ६ गुणनिमित्तो महानाम विग्रहः । ७ कर्माण्येव पर्वाणि ग्रन्थयस्ताश्रयतीति ताम् ।

अष्टादशे ततो मेरोः पूर्वादिक्रमतस्त्रिषु ॥ त्रिषु चोत्तरवर्षेषु सेव्यसेवकवर्णनम् ॥ १ ॥ श्रीशुक उवाच ॥ तथा च भद्राश्वखण्डे भद्रश्रवा नाम धर्मपुत्रः तत्सेवकमुख्याश्च भगवतो हयग्रीवमूर्तिं सेवन्ते ॥ इदं जपन्ति ॥ १ ॥ भद्रश्रवस ऊचुः ॥ नमो भगवते धर्मायात्मविशोधनाय नम इति ॥ २ ॥ अहो भगवद्विचेष्टितं विचित्रं यद् जनो बालं वृद्धं मृतं दग्ध्वा स्वयं तदुभयधनैर्जीवितुमिच्छति ॥ ३ ॥ कवयः इदं विश्वं नश्वरं

श्रीशुक उवाच ॥ तथा च भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्ववर्षे साक्षाद्भगवतो वासुदेवस्य प्रियां तनूं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणन्त उपधावन्ति ॥ १ ॥ भद्रश्रवस ऊचुः ॥ ॐनमो भगवते धर्मायात्मविशोधनाय नम इति ॥२॥ अहो विचित्रं भगद्विचेष्टितं घ्नन्तं जनोऽयं हि मिषन्न पश्यति ॥ ध्यायन्नसद् यर्हि विकर्म सेवितुं निर्हृत्य पुत्रं पितरं जिजीविषुः ॥ ३ ॥ वदन्ति विश्वं कवयः स्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः ॥ तथाऽपि मुह्यन्ति तवाज मायया सुविस्मितं कृत्यमजं नतोऽस्मि तम् ॥४॥ विश्वोद्भवस्थाननिरोधकर्म ते ह्यकर्तुरंगीकृतमप्यपावृतः ॥ युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मनि व्यतिरिक्ते च वस्तुतः ॥ ५ ॥ वेदान् युगान्ते तमसा तिरस्कृतान् रसातलाद्यो नृतुरंगविग्रहः ॥ प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्तेऽवितथेहिताय ते ॥६॥ इति ॥ हरिवर्षे चापि भगवान् नरहरिरूपेणास्ते तद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्ये ॥ तद्दयितं रूपं महापुरुषगुणभाजनो महाभागवतो दैत्यदानवकुलतीर्थीकरणशीलाचरितः प्रह्लादोऽव्यवधानानन्यभक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते इदं चोदाहरति ॥ ७ ॥ ॐ नमो भगवते नरसिंहाय नमस्तेजस्तेजसे ॥ आविराविर्भव वज्रनखवज्रदंष्ट्र कर्माशयान् रन्धय रन्धय तमो ग्रस ग्रस ॐ स्वाहा अभयमभयमात्मनि भूयिष्ठाः ॐ क्ष्रौम् ॥ ८ ॥

वदन्ति तथाऽपि हे अज ! तव मायया मुह्यन्ति ॥ ४ ॥ किंच देवेन जगदुत्पत्त्यादि कर्माकर्तुरपि तवाङ्गीकृतं तच्चित्रं न ॥ ५ ॥ यो युगान्ते दैत्येन नीतान् वेदान् रसातलादानीय ब्रह्मणे ददौ तस्मै सत्यसंकल्पाय नमस्यन्ति स्तुतिं कुर्वन्ति ॥६॥ अथ हरिवर्षे भगवान् नरहरिरूपेणास्ते। तं प्रह्लादस्तद्वर्षपुरुषैः सह भक्तियोगेनोपास्ते । ॐ नमो भगवते नृसिंहायेत्यादिमन्त्रं जपति ॥ ७ ॥ ८ ॥

१ मिषन्पश्यन् । २ पापम् । ३ भूयाः ।

हे नृसिंह ! विश्वस्य स्वस्त्यस्तु । क्रूरत्वं खलस्त्यजतु । त्वयि प्रविशतां मतिर्नः ॥९॥ अस्माकं सङ्गो गृहदारादिषु मा स्यात् । भगवद्भक्तेषु भवतु ॥ १० ॥ यद्भक्तसङ्गात् प्राप्तं हरिलीलामृतं पुंसां मनोमलं हरति तत् कोन सेवेत ॥ ११ ॥ यस्य भगवति भक्तिर्भवति तस्य गृहे सर्वे देवाः धर्मज्ञानादिभिः सह नित्यं वसन्ति ॥ १२ ॥ मत्स्यानां जलमिव सर्वदेहिनामात्मा हरिरेव ॥ १३ ॥ तस्माद् गृहं हित्वा नृसिंह-

स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया ॥ मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी ॥ ९ ॥ माऽगारदारात्मजवित्तबन्धुषु सङ्गो यदि स्याद्भगवत्प्रियेषु नः ॥ यः प्राणवृत्त्या परितुष्ट आत्मवान् सिद्ध्यत्यदूरान्न तथेन्द्रियप्रियः ॥ १० ॥ यत्संगलब्धं निजवीर्यवैभवं तीर्थं मुहुः संस्पृशतां हि मानसम् ॥ हरत्यजोऽन्तः श्रुतिभिर्गतोऽङ्गजं को वै न सेवेत मुकुन्दविक्रमम् ॥ ११ ॥ यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुराः ॥ हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः ॥ १२ ॥ हरिर्हि साक्षाद् भगवाञ्छरीरिणामात्मा झषाणामिव तोयमीप्सितम् ॥ हित्वा महांस्तं यदि सज्जते गृहे तदा महत्त्वं वयसा दम्पतीनाम् ॥ ॥ १३ ॥ तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ॥ हित्वा गृहं संसृतिचक्रवालं नृसिंहपादं भजताऽकुतोभयमिति ॥ १४ ॥ केतुमालेऽपि भगवान् कामदेवस्वरूपेण लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां पुत्राणां तद्वर्षपतीनां पुरुषायुषाऽहोरात्रपरिसंख्यानानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरान्ते विनिपतन्ति ॥ १५ ॥ अतीव सुललितगतिविलासविलसितरुचिरहासलेशावलोकलीलया किंचिदुत्तम्भितसुन्दरभ्रूमण्डलसुभगवदनारविन्दश्रिया रमां रमयन्निन्द्रियाणि रमयते ॥ १६ ॥

पादं भजतेति स्तुतिं करोति ॥ १४ ॥ अथ केतुमालखण्डे भगवान् कामदेवरूपेणास्ते । स कामदेवो रात्रिदिवसाभिमानिदेवतानां लक्ष्म्याश्च प्रियचिकीर्षया स्वस्य सुन्दरहास्यावलोकनादिभिः रमां रमयन् स्वेन्द्रियाणि रमयते ॥ १५ ॥ १६ ॥

१ तीर्थान्तराणि त्वङ्गजमेव मलं हरन्तीति भावः । २ निष्कामा । ३ असति विषयसुखे बहिर्धावतः । ४ दुहितॄणाम् ।

तं कामदेवं देव्युपास्ते ॥ १७ ॥ ॐ ह्रां ह्रीं ह्रूं ॐ नमो भगवते हृषीकेशायेत्यादिमन्त्रं जपति स्तौति च ॥ १८ ॥ हे हृषीकेश ! स्त्रियस्त्वां व्रतैराराध्यान्यं पतिमिच्छन्ति तद् व्यर्थम् ॥ १९ ॥ यतोऽभयं भवति स एव पतिः प्रार्थ्यः । एवंभूतस्त्वमेव ॥२०॥ या स्त्री निष्कामा तव पादसरोरुहपूजनमेव कामयेत् सा सर्वान् कामान् प्राप्नोति । या फलेच्छयाऽर्चति सैकमेव फलं प्राप्नोति ॥ २१ ॥ ब्रह्मशिवादयो मत्प्राप्तये

तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमादेवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेताऽहस्सु च तद्भर्तृभिरुपास्ते ॥ इदं चोदाहरति ॥ १७ ॥ ॐ ह्रां ह्रीं ह्रूं ॐ नमो भगवते हृषीकेशाय सर्वगुणविशेषैर्विलक्षितात्मन आकूतीनां चित्तीनां चेतसां विशेषाणां चाधिपतये षोडशकलाय छन्दोमयायान्नमयामृतमयाय सर्वमयाय सहसे ओजसे बलाय कान्ताय कामाय नमस्ते उभयत्र भूयात् ॥१८॥ स्त्रियो व्रतैस्त्वां हृषीकेश्वरं स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यम् ॥ तासां न ते वै परिपान्त्यपत्यं प्रियं धनायूंषि यतोऽस्वतन्त्राः ॥ १९ ॥ स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनम् ॥ स एक एवेतरथा मिथो भयं नैवात्मलाभादधिमन्यते परम् ॥२०॥ या तस्य ते पादसरोरुहार्हणं निकामयेत्साऽखिलकामलम्पटा ॥ तदेव रासीप्सितमीप्सितोऽर्चितो यद्भग्नयाच्ञा भगवन् प्रतप्यते ॥२१॥ मत्प्राप्तयेऽजेशसुरासुरादयस्तप्यन्त उग्रं तप ऐन्द्रियेधियः ॥ ऋते भवत्पादपरायणान्न मां विदन्त्यहं त्वद्धृदया यतोऽजित ॥ २२॥ स त्वं ममाप्यच्युतशीर्ष्णि वन्दितं कराम्बुजं यत्त्वदधायि सात्वताम् ॥ बिभर्षि मां लक्ष्म वरेण्यमायया क ईश्वरस्येहितमूहितुं विभुः इति ॥ २३ ॥ रम्यके च भगवतः प्रियतमं मात्स्यमवताररूपं तद्वर्षपुरुषस्य मनोः प्राक् प्रदर्शितम् ॥ स इदानीमपि महता भक्तियोगेनाराधयति इदं चोदाहरति ॥ २४ ॥

तपः कुर्वन्ति तथापि त्वद्भक्तान् विना ते मां न विन्दन्ति ॥ २२ ॥ हे ईश्वर ! तवेच्छां ज्ञातुं कः समर्थः । स त्वं मम शीर्ष्णि कराम्बुजं स्थापय ॥ २३ ॥ रम्यकखण्डे मत्स्यरूपेण भगवानास्ते तं वैवस्वतमनुराराधयति ॥ २४ ॥

---

१ क्रियाणाम् । २ ज्ञानानाम् । ३ एकादशेन्द्रियपञ्चविषयलक्षणाः षोडश कलाः यस्य तस्मै । ४ इन्द्रियसुखबद्धहृदयाः । ५ निषेद्धोति शेषः । ६ त्वया । ७ मामुरसि लक्ष्म विभर्षि भक्तशिरसि कराम्बुजाधानमिति चित्रम् ।

ॐ नमो भगवते मुख्यतमाय नमः इत्यादिमन्त्रं जपति ॥२५॥ मनुरुवाच ॥ भगवन् ! यः इदं विश्वं ब्राह्मणादिनाम्ना नियमितवान् स त्वम् ॥२६॥ इन्द्रादयस्त्वां हित्वा यतन्तोऽपि स्थावरजङ्गमं पातुं न शेकुः ॥२७॥ भवान् युगान्तार्णवे इमां पृथ्वीं मया रक्षितवान् तस्मै मत्स्याय नम इति स्तौति ॥२८॥ तथा हिरण्मयखण्डे भगवान् कूर्मरूपेणास्ते त पितृगणाधिपतिरर्यमोपास्ते ॥२९॥ ॐ नमो भगवतेऽकूपाराय सर्वसत्त्व-

ॐ नमो भगवते मुख्यतमाय नमः सत्त्वाय प्राणायौजसे सहसे बलाय महामत्स्याय नमः । इति ॥ २५ ॥ अन्तर्बहिश्चाखिललोकपालकैरदृष्टरूपो विचरस्युरुस्वनः ॥ स ईश्वरस्त्वं य इदं वशे नयन् नाम्ना यथा दारुमयीं नरः स्त्रियम् ॥ २६ ॥ यं लोकपालाः किल मत्सरज्वरा हित्वा यतन्तोऽपि पृथक् समेत्य च ॥ पातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपं स्थाणु यदत्र दृश्यते ॥ २७ ॥ भवान् युगान्तार्णव ऊर्मिमालिनि क्षोणीमिमामोषधिवीरुधां निधिम् ॥ मया सहोरु क्रमतेऽज ओजसा तस्मै जगत्प्राणगणात्मने नमः इति ॥ २८ ॥ हिरण्मयेऽपि भगवान् निवसति कूर्मतनुं बिभ्राणस्तस्य तत्प्रियतमां तनुमर्यमा सह वर्षपुरुषैः पितृगणाधिपतिरुपधावति ॥ मन्त्रमिमं चानुजपति ॥ २९ ॥ ॐ नमो भगवते अकूपाराय सर्वसत्त्वगुणविशेषणाय नोपलक्षितस्थानाय नमो वर्ष्मणे नमो भूम्ने नमो नमोऽवस्थानाय नमस्ते ॥ ३० ॥ यद्रूपमेतन्निजमाययार्पितमर्थस्वरूपं बहुरूपरूपितम् ॥ संख्या न यस्यास्त्ययथोपलम्भनात् तस्मै नमस्ते व्यपदेशरूपिणे ॥ ३१ ॥ जरायुजं स्वेदजमण्डजोद्भिदं चराचरं देवर्षिपितृभूतमैन्द्रियम् ॥ द्यौः खं क्षितिः शैलसरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेय एकः ॥ ३२ ॥ यस्मिन्नसंख्येयविशेषनामरूपाकृतौ कविभिः कल्पितेयम् संख्या यया तत्त्वदृशाऽपनीयते तस्मै नमः सांख्यनिदर्शनाय ते । इति ॥ ३३ ॥

गुणविशेषणायेत्यादिमन्त्रं जपति ॥ ३० ॥ अर्यमोवाच ॥ हे ईश ! यस्य तवैतद्रूपं निजमायया प्रकाशितं तस्मै नमः ॥३१॥ इदं सर्वं चराचरं त्वद्व्यतिरिक्तं नास्ति ॥ ३२ ॥ यस्मिन् त्वयि कविभिरिदं नामरूपभेदेन बहुधा कल्पितम् ॥ तत्त्वदृष्ट्या त्वेकमेव । एवंभूताय

१ धृत्वेत्याध्याहार्यम् । २ विचरति । ३ जगत्प्राणगणनियन्त्रे । ४ कूर्माय । ५ सर्वे सत्त्वगुणाः विशेषणं यस्य तस्मै । ६ कालानवच्छिन्नाय वर्षीयसे । ७ दृश्यं पृथ्व्यादिरूपं यस्यैव रूपं यतः पृथक् नास्ति । ८ रूपितं निरूपितम् । ९ अयथा मिथ्या । १० अनिरुक्तप्रपञ्चाकाराय ।

तुभ्यं नम इति स्तौति ॥३३॥ तथोत्तरेषु कुरुखण्डेषु भगवान् वराहरूपेणास्ते। पृथ्वी देवी भक्त्योपास्ते ॥३४॥ ॐ नमो भगवते मन्त्रतत्त्वलिङ्गाय यज्ञक्रतुरूपाय नमः इत्यादिमन्त्रं जपति ॥३५॥ पृथ्व्युवाच ॥ हे हरे! यस्य तव स्वरूपं कवयो ज्ञातुमिच्छन्ति ॥३६॥ विषयेन्द्रियादिमायागुणैर्व-स्तुनिरीक्षितात्मने ज्ञानिभिर्निरस्तमायाकृतये तुभ्यं नमः ॥३७॥ माया यस्येप्सितं स्वगुणैः करोति ॥ ३८ ॥ किंच युद्धे हिरण्याक्षं मथित्वा

उत्तरेषु च कुरुषु भगवान् यज्ञपुरुषः कृतवराहरूप आस्ते ॥ तं तु देवी हैषा भूः सह कुरुभिरस्खलितभक्तियोगेनो-पधावति ॥ इमां च परमामुपनिषदमावर्तयति ॥ ३४ ॥ ॐ नमो भगवते मन्त्रतत्त्वलिङ्गाय[1] यज्ञक्रतवे महाध्वराव-यवाय[2] महापुरुषाय नमः कर्मशुक्लाय त्रियुगाय[3] नमस्ते ॥ ३५ ॥ यस्य स्वरूपं कवयो विपश्चितो गुणेषु[4] दारुष्विव जातवेदसम् ॥ मथ्नन्ति मथ्ना[5] मनसा[6] दिदृक्षवो गूढं क्रियार्थैर्नम[7] ईरितात्मने ॥ ३६ ॥ द्रव्यक्रियाहेत्वयनेशकर्तृ-भिर्मायागुणैर्वस्तुनिरीक्षितात्मने[8] ॥ अन्वीक्षयाऽङ्गातिशयात्मबुद्धिभिर्निरस्तमायाकृतये[9] नमो नमः ॥ ३७ ॥ करोति विश्वस्थितिसंयमोदयं यस्येप्सितं नेप्सितमीक्षितैर्गुणैः[10] ॥ माया यथाऽयो भ्रमते तदाश्रयं ग्राव्णो[11] नमस्ते गुणकर्मसा-क्षिणे ॥ ३८ ॥ प्रमथ्य दैत्यं प्रतिवारणं मृधे यो मां रसाया जगदादिसूकरः ॥ कृत्वाऽग्रदंष्ट्रे निरगादुदन्वतः क्रीड-न्निवेभः प्रणताऽस्मि तं विभुमिति ॥३९॥ इति श्रीभाग० म० पञ्चम० भुवनकोशवर्णनं नामाष्टादशोऽध्यायः ॥१८॥

श्रीशुक उवाच ॥ किंपुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामंश्रीरामं तच्चरणसन्निकर्षाभिरतः परम-भागवतो हनुमान् सह किंपुरुषैरविरतभक्तिरुपास्ते ॥ १ ॥

मां दंष्ट्राग्रे धृत्वा रसातलाद् यो निरगात् तं वराहं प्रणमामि ॥ ३९ ॥ इति श्रीभागव० चू० पञ्चम० अष्टादशोऽध्यायः ॥१८॥ ऊनविंशे किंपुरुषे भारते चोपवर्ण्यते ॥ सेव्यसेवकभावश्च भारतश्रेष्ठ्यमेव च ॥ १ ॥ श्रीशुक उवाच ॥ अथ किंपुरुषे खण्डे भगवान् रामचन्द्ररूपेणास्ते

१ मंत्रैस्तत्त्वेन लिंग्यत इति तस्मै । २ यज्ञाः अयूपाः । क्रतवः सयूपाः । ३ कृतयुगे यज्ञाभावात् कलौ छन्नत्वाद्वा । ४ देहेन्द्रियादिषु । ५ विचिन्वन्ति । ६ विवेकसाधनेन । ७ कर्मभिस्तत्फलैश्च । ८ विषयेन्द्रियव्यापार-देवतादेहकलाऽहंकारैः । ९ अङ्गैर्यमनियमादिभिरतिशयितात्मा निश्चयवती बुद्धिर्येषां तैः । १० जीवार्थमीप्सितं स्वार्थं तु नेप्सितम् । ११ अयस्कान्तान्निमित्तात् ।

तं किंपुरुषे सह हनुमानुपास्ते ॥१॥ अन्यैर्गीयमानां रामकथां शृणोति । स्वयं च ॐ नमो भगवते उत्तमश्लोकायेत्यादिमन्त्रं जपति ॥२॥३॥ हनुमानुवाच ॥ एवं वेदान्तेषु प्रसिद्धं त्वामहं प्रपद्ये ॥४॥ भगवतो मनुष्यावतारस्तु रावणवधायैव न। इह संसारे स्त्रीसङ्गादिकृतं दुःखं दुर्वारमिति मनुष्याणां शिक्षार्थं च ॥ ५ ॥ स रामस्त्रिलोक्यां क्वापि न सक्तः यतो ज्ञानिनामात्मा सुहृत्तमश्च । अतः स्त्रीकृतं मोहं न प्राप्नुयात्

आर्ष्टिषेणेन सह गन्धर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपशृणोति स्वयं चेदं गायति ॥ २ ॥ ॐ नमो भगवत उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मन उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नमः इति ॥ ३ ॥ यत्तद्विशुद्धानुभवमात्रमेकं स्वतेजसा ध्वस्तगुणव्यवस्थम् ॥ प्रत्यक् प्रशान्तं सुधियोपलम्भनं ह्यनामरूपं निरहं प्रपद्ये ॥ ४ ॥ मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ॥ कुतोऽन्यथा स्याद्रमतः स्व आत्मनः सीताकृतानि व्यसनानीश्वरस्य ॥ ५ ॥ न वै स आत्माऽऽत्मवतां सुहृत्तमः सक्तस्त्रिलोक्यां भगवान् वासुदेवः ॥ न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि विहातुमर्हति ॥ ६ ॥ न जन्म नूनं महतो न सौभगं न वाङ् न बुद्धिर्नाकृतिस्तोषहेतुः ॥ तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये बत लक्ष्मणाग्रजः ॥७॥ सुरोऽसुरो वाऽप्यथ वा नरोऽनरः सर्वात्मना यः सुकृतज्ञमुत्तमम् ॥ भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत् कोसलान् दिवमिति ॥८॥ भारतेऽपि वर्षे भगवान् नरनारायणाख्य आकल्पान्तमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमो परमात्मोपलम्भनमनुग्रहायात्मवतामनुकम्पया तपोऽव्यक्तगतिश्चरति ॥ ९ ॥



लक्ष्मणं च त्यक्तुं नार्हति ॥ ६ ॥ अहो लक्ष्मणस्याग्रजोऽपि वनचरान् नः सखित्वे कृतवान् ॥७॥ किंच अयोध्यावासिनो जनान् यः स्वर्गं निनाय तं मनुष्याकृतिं रामं भजे इत्यादि स्तौति ॥८॥ तथा भारतेऽपि खण्डे नरनारायणाख्यः आस्ते। आत्मवतामनुग्रहाय तपश्चरति ॥९॥

---

१ संयतचित्ताय। २ अनुसृतलोकाय । ३ साधुत्वप्रसिद्धिनिर्धारणस्थानाय। ४ दृश्यादन्यत् ।

तं भगवान् नारदो भारतीभिः प्रजाभिः सह भक्तिभावेन सेवते ॥१०॥ ॐनमो भगवते उपशमशीलाय निरहंकाराय नमः इत्यादिमन्त्रं जपति ॥११॥ नारद उवाच ॥ यो विश्वस्य सर्गादिषु कर्ताऽपि कर्तेति न मन्यते । देहगतोऽपि क्षुधादिभिर्न पीड्यते तस्मै नमः॥ १२ ॥ हे योगेश्वर ! अन्तकाले पुमान् त्वयि भक्त्या मनो धारयेत् इति यत् तदेव ब्रह्मा योगनैपुण्यं जगाद॥१३॥यथा मूर्खः स्त्रीपुत्रादिप्रपञ्चनिर्वाहं चिन्तयन् देह-

तं भगवान् नारदो वर्णाश्रमवतीभिर्भारतीभिः प्रजाभिर्भगवत्प्रोक्ताभ्यां सांख्ययोगाभ्यां भगवदनुभावोपवर्णनं सावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरति ॥ इदं चाभिगृणाति ॥१०॥ ॐ नमो भगवते उपशमशीलायोपरतानात्म्याय नमोऽकिंचनवित्ताय ऋषिऋषभाय नरनारायणाय परमहंसपरमगुरव आत्मारामाधिपतये नमोनम इति ॥११॥ गायति चेदम् कर्ताऽस्य सर्गादिषु यो न बध्यते न हन्यते देहगतोऽपि दैहिकैः ॥ द्रष्टुर्न दृग् यस्य गुणैर्विदूष्यते तस्मै नमोऽसक्तविविक्तसाक्षिणे ॥ १२ ॥ इदं हि योगेश्वर योगनैपुणं हिरण्यगर्भोभगवान् जगाद यत् ॥ यदन्तकाले त्वयि निर्गुणे मनो भक्त्यादधीतोज्झितदुष्कलेवरः ॥ १३ ॥ यथैहिकामुष्मिककामलम्पटः सुतेषु दारेषु धनेषु चिन्तयन् ॥ शङ्केत विद्वान् कुकलेवरात्ययाद् यस्तस्य यत्नः श्रम एव केवलम् ॥ १४ ॥ तन्नः प्रभो त्वं कुकलेवरार्पितां त्वन्माययाऽहंममतामधोक्षज ॥ भिन्द्याम येनाशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः स्वभावजम् ॥ इति ॥१५॥ भारतेऽप्यस्मिन् वर्षे सरिच्छैलाः सन्ति बहवो मलयो मङ्गलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेङ्कटो महेन्द्रो वारिधारो विन्ध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलो गोकामुख इन्द्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलाः ॥ तेषां नितम्बप्रभवा नदा नद्यश्च संत्यसंख्याताः ॥ १६ ॥

स्य मृत्योः शङ्केत तथा विद्वानपि सन् यः शङ्केत तस्य यत्नः श्रम एव ॥१४॥ हे प्रभो ! त्वयि नो योगं विधेहि येन योगेन ममतां शीघ्रं त्यजेम इत्यादि स्तौति ॥१५॥ अस्मिन् भारतखण्डे बहवः सरिच्छैलाः सन्ति । ते च--मलयः १, मङ्गलप्रस्थः २, मैनाकः ३, त्रिकूटः ४, ऋषभः ५, कूटकः ६, कोल्लकः ७, सह्यः ८, देवगिरिः ९, ऋष्यमूकः १०, श्रीशैलः ११, वेङ्कटः १२, महेन्द्रः १३, वारिधारः १४, विन्ध्यः १५, शुक्ति-

मान् १६, ऋक्षगिरिः १७, पारियात्रः १८, द्रोणः १९, चित्रकूटः २०, गोवर्धनः २१७ रैवतकः २२, ककुभः २३, नीलः २४, गोकामुखः २५, इन्द्रकीलः २६, कामगिरिः २७ इति । अन्ये शतसहस्रशः शैलाः । तेषां तटेभ्यः उत्पन्नाः नदाः नद्यश्चासंख्याताः ॥१६॥ यासामापो भारतीः प्रजाः पुनन्ति ॥१७॥ तत्र महानद्यः—चन्द्रवशा १, ताम्रपर्णी २, अवटोदा ३, कृतमाला ४, वैहायसी ५, कावेरी ६, वेणी ७, पयस्विनी ८, शर्करावर्ता ९, तुङ्गभद्रा १०, कृष्णा ११, वेण्या १२, भीमरथी १३, गोदावरी १४, निर्विन्ध्या १५, पयोष्णी १६, तापी १७,

एतासामपो भारत्यः प्रजा नामभिरेव पुनन्तीनामात्मना चोपस्पृशन्ति ॥ १७ ॥ चन्द्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुङ्गभद्रा कृष्णा वेण्या भीमरथी गोदावरी निर्विन्ध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती सिन्धुः अन्धः शोणश्च नदौ महानदी वेदस्मृतिरृषिकुल्या त्रिसामा कौशिकी मन्दाकिनी यमुना सरस्वती दृषद्वती गोमती सरयू रोधस्वती सप्तवती सुषोमा शतद्रूश्चन्द्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः ॥ १८ ॥ अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्यः आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयन्ते यथावर्णविधानमपवर्गश्चापि भवति ॥ १९ ॥ योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसंगः ॥ २० ॥

रेवा १८, सुरसा १९, नर्मदा २०, चर्मण्वती २१, सिन्धुः २२, अन्धशोणौ नदौ, महानदी २३, वेदस्मृतिः २४, ऋषिकुल्या २५, त्रिसामा २६, कौशिकी २७, मन्दाकिनी २८, यमुना २९, सरस्वती ३०, दृषद्वती ३१, गोमती ३२, सरयूः ३३, रोधस्वती ३४, सप्तवती ३५, सुषोमा ३६, शतद्रूः ३७, चन्द्रभागा ३८, मरुद्वृधा ३९, वितस्ता ४०, असिक्नी ४१, विश्वा ४२, इति ॥१८॥ अस्मिन् वर्षे जनैः कृतकर्मणा स्वर्गमानुषनरकगतयो मोक्षश्च भवति ॥१९॥ स मोक्षो यदाऽविद्याग्रन्थिच्छेदनद्वारेण विष्णुभक्तप्रसंगो भवति तदा भवति ॥ २० ॥



१ आत्मभवरागादिरहिते । २ वाचामगोचरे । ३ अनाधारे ।

स्वर्गे देवा एतद् गायन्ति अहो एभिर्जनैः किं सुकृतं कृतम् । एषां हरिः स्वयं प्रसन्नो भवति ॥ २१ ॥ दुष्करैर्यज्ञदानतपआदिभिस्तुच्छस्वर्गप्राप्त्या किम् यत्र नारायणपादस्मृतिर्न ॥ २२ ॥ कल्पायुषामपि पुनर्भवाद् भारते वर्षे तत्र क्षणायुर्वरं यतः क्षणात् सर्वं त्यक्त्वा हरेः पदं याति ॥ ॥ २३ ॥ अयमिन्द्रलोकोऽपि न सेव्यतां यत्र विष्णुकथास्तद्भक्ताश्च न ॥२४॥ भारते मनुष्यजन्म प्राप्य ये मोक्षाय न यतेरन् ते बन्धनं

एतदेव हि देवा गायन्ति ॥ अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ॥ यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥२१॥ किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना ॥ न यत्र नारायणपादपङ्कजस्मृतिः प्रमुष्टाऽतिशयेन्द्रियोत्सवात् ॥ २२ ॥ कल्पायुषां स्थानजयात् पुनर्भवात् क्षणायुषां भारतभूजयो वरम् ॥ क्षणेन मर्त्येन कृतं मनस्विनः संन्यस्य संयान्त्यभयं पदं हरेः ॥ २३ ॥ न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः ॥ न यत्र यज्ञेशमखा महोत्सवा सुरेशलोकोऽपि न वै स सेव्यताम् ॥ २४ ॥ प्राप्ता नृजातिं त्विह ये च जन्तवो ज्ञानक्रियाद्रव्यकलापसंभृताम् ॥ नवै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यान्ति बन्धनम् ॥ २५ ॥ यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमन्त्रवस्तुतः ॥ एकः पृथङ्नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥२६॥ सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत् पुनरर्थिता यतः ॥ स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥ २७ ॥ यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ॥ तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति ॥ २८ ॥ *

यान्ति ॥२५॥ अहो भारतवासिनां भाग्यं यैर्यज्ञे इन्द्रादिपृथङ्नामभिराहुतो हरिः स्वयं पूर्णोऽपि भागं गृह्णाति॥२६॥किंच निष्कामानां कामपूरकं स्वपादपद्मं स्वयमेव संपादयति ॥ २७ ॥ स्वर्गसुखावशेषितं पुण्यं चेत् तर्हि भारतखण्डे जन्मास्तु यत्र हरिर्भजतां शं तनोति ॥ २८ ॥

---

१ 'अपुनर्मृताय' इ० पा० । २ वनौकसः पक्षिणो लुब्धकान्मुक्ता अपि यदि पुनस्तस्मिन्नेव वृक्षे प्रमत्ताःविहरन्ति तर्हि बध्यन्ते यथा तद्वत् । ३ अर्थिनः— सन्नर्थितमेव ददात्यनर्थितस्तु सर्वान्कामान्ददातीति भावः । * अतोऽपि देवा इच्छन्ति जन्म भारतभूतले ॥ सचेतुं सुमहत्पुण्यमक्षय्यममलं शुभम् ॥१॥ कदा वयं हि लप्स्यामो जन्म भारतभूतले ॥ कदा पुण्येन महता प्राप्स्यामः परमं पदम् ॥२॥ दानैर्वा विविधैर्यज्ञैस्तपोभिर्वाऽप्यधिशायिनम् ॥ पूजयित्वा कदा यामो यद्वै पश्यन्ति सूरयः ॥३॥ हरिकीर्तनशीलो वा तद्भक्तानां प्रियोऽपि वा ॥ शुश्रूषुर्वाऽपि महतां स वन्द्योऽस्माभिरुत्तमः ॥४॥ वेदार्थ श्रवणे बुद्धि पुराणश्रवणे तथा ॥ सत्संगेऽपि हि यस्यास्ति स वन्द्योऽस्माभिरुत्तमः ॥ ५ ॥ सम्प्राप्य भारते जन्म सत्कर्मसु पराङ्मुखः ॥ पीयूषकलशं हित्वा विषभाण्डं स इच्छति ॥६॥ वासुदेवार्चनं हित्वा दुष्कर्माणि करोति यः ॥ कामधेनुमतिक्रम्य अर्कक्षीरं स इच्छति ॥७॥ एवं भारतभभागं प्रशंसन्ति दिवौकसः ॥ तं प्राप्य विषयासक्तास्ते मूष्टा मायया हरेः ॥ ८ ॥

श्रीशुक उवाच ॥ हे राजन् ! जम्बूद्वीपस्याष्टावुपद्वीपाः सगरात्मजैरश्वान्वेषणे पृथ्वीं खनद्भिः कल्पिताः ॥२९॥ ते च यथा--स्वर्णप्रस्थः १, चन्द्रशुक्लः २, आवर्तनः ३, रमणकः ४, मन्दरहरिणः ५, पाञ्चजन्यः ६, सिंहलः ७, लङ्का ८ इति ॥ ३० ॥ हे नृप ! एवं तव जम्बूद्वीपवर्ष-विभागो यथोपदेशं वर्णितः ॥ ३१ ॥ इति श्रीभागवते चू० पञ्चमस्कन्धे एकोनविंशतितमोऽध्यायः ॥ १९ ॥ विंशे प्लक्षादिषड्द्वीपस्थितिमाह सहार्णवैः ॥ लोकालोकस्थितिश्चान्तर्बहिर्भागादिमानतः ॥१॥ श्रीशुक उवाच ॥ अतः परं प्लक्षादिद्वीपानां प्रमाणलक्षणसंस्थानतो वर्षविभागो

श्रीशुक उवाच ॥ जम्बूद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशन्ति सगरात्मजैरश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् ॥२९॥ तद् यथा स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्तनो रमणको मन्दरहरिणः पाञ्चजन्यः सिंहलो लङ्केति ॥ ३० ॥ एवं तव भारतोत्तम जम्बूद्वीपवर्षविभागो यथोपदेशमुपवर्णित इति ॥ ३१ ॥ इति श्रीभा० म० पञ्चम० जम्बूद्वीपवर्णनं नामैकोनविंशतितमोऽध्यायः ॥ १९ ॥ श्रीशुक उवाच ॥ अतः परं प्लक्षादीनां प्रमाणलक्षण-संस्थानतो वर्षविभाग उपवर्ण्यते ॥ १ ॥ जम्बूद्वीपोऽयं यावत्प्रमाणविस्तारस्तावता क्षारोदधिना परिवेष्टितो यथा मेरुर्जम्ब्वाख्येन लवणोदधिरपि ततो द्विगुणविशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिखाबाह्योपवनेन प्लक्षो जम्बू-प्रमाणो द्वीपाख्याकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते सप्तजिह्वस्तस्याधिपतिः प्रियव्रतात्मजः इध्मजिह्वः एवं द्वीपं सप्तवर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम ॥ २ ॥ शिवं यवयसं सुभद्रं शान्तं क्षेममममृतमभयमिति वर्षाणि तेषु गिरयो नद्यश्च सप्तैवाभिज्ञाताः ॥ ३ ॥



वर्ण्यते ॥ १ ॥ अयं जम्बूद्वीपो लक्षयोजनपरिमाणः क्षाररससमुद्रेण वेष्टितः एवंपूर्वस्मादुत्तरोत्तराः द्विगुणाः । अतः परं द्वीलक्षयोजनमितः प्लक्ष-द्वीपः । तावन्मानेनेक्षुरससमुद्रेण वेष्टितः । तत्रापि द्वीपनामकरो जम्बूप्रमाणः प्लक्षः । तत्र हिरण्मयोऽग्निस्तिष्ठति । तद्द्वीपाधिपतिः प्रियव्रत-पुत्रः इध्मजिह्वः । स स्वद्वीपखण्डानि सप्तधा विभज्य खण्डनामभ्यः पुत्रेभ्यो ददौ स्वयं च योगेनोपरराम ॥ २ ॥ खंडनामानि शिवं १, यव-यसं २, सुभद्रं, ३, शान्तं ४, क्षेमम् ५, अमृतम् ६ अभयम् ७ इति सप्तखंडानि । तेषु खंडेषु गिरयो नद्यश्च सप्तैव ॥ ३ ॥

मणिकूटः, वज्रकूटः २, इन्द्रसेनः ३, ज्योतिष्मान् ४, सुपर्णः ५ हिरण्यष्ठीवः ६, मेघमाल ७ इति सप्त गिरयः। अथ सप्त महानद्यः--अरुणा १, नृम्णा २, आङ्गिरसी ३, सावित्री ४, सुप्रभाता ५, ऋतम्भरा ६, सत्यम्भरा ७ इति। यासां जलस्पर्शेन विधूतरजस्तमसो हंसादयश्चत्वारो वर्णाः सहस्रायुषः। ते त्रय्या विद्यया सूर्यरूपं हरिं भजन्ते ॥४॥ प्रत्नस्य विष्णोः रूपं च सत्यस्येत्यादिमन्त्रं जपन्ति ॥ ५ ॥ प्लक्षादिपञ्चद्वीपेषु पुरुषाणां सर्वेषामौत्तिकी सिद्धिर्वर्तते ॥६॥ अतः परं शाल्मलो द्वीपः चतुर्लक्षयोजनविशालः तावन्मानेन सुरोदेन वेष्टितः॥७॥ यत्र शाल्मलीवृक्षोऽस्ति द्वीपनामकरः

मणिकूटो वज्रकूटो इन्द्रसेनो ज्योतिष्मान् सुपर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः ॥ अरुणा नृम्णाऽऽङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरा इति महानद्यः ॥ यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसंदर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते ॥ ४ ॥ प्रत्नस्य विष्णो रूपं च सत्यस्यर्तस्य ब्रह्मणः ॥ अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति ॥ ५ ॥ प्लक्षादिषु पञ्चसु पुरुषाणामायुरिन्द्रियमोजः सहो बलं बुद्धिर्विक्रम इति सर्वेषामौत्पत्तिकी सिद्धिरविशेषेण वर्तते ॥ ६ ॥ प्लक्षः स्वमानेनेक्षुरसोदेनावृतो यथा तथा द्वीपोऽपि शाल्मलो द्विगुणविशालः समानेन सुरोदेनावृतः परिवृङ्क्ते ॥ ७ ॥ यत्र ह वै शाल्मलीप्लक्षायामा यस्यां वाव किल निलयमाहुर्भगवतश्छन्दस्तुतः पतत्रिराजस्य ॥ सा द्वीपहूतये उपलक्ष्यते ॥ ८ ॥ तद्द्वीपाधिपतिपतिः प्रियव्रतात्मजो यज्ञबाहुः स्वसुतेभ्यस्सप्तभ्यस्तन्नामानि सप्तवर्षाणि व्यभजत् ॥ सुरोचनं सौमनस्यं रमणकं देववर्षं पारिभद्रमाप्यायनमविज्ञातमिति ॥ ९ ॥ तेषु वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः स्वरसः शतशृङ्गो वामदेवः कुन्दो मुकुन्दः पुष्पवर्षः सहस्रश्रुतिरिति अनुमतिः सिनीवाली सरस्वती कुहू रजनी नन्दा राकेति ॥ १० ॥

यस्मिन् द्वीपे गरुडस्य स्थानमाहुः ॥८॥ तद्द्वीपपतिः प्रियव्रतपुत्रो यज्ञबाहुः स्वं द्वीपं सप्तधा कृत्वा पुत्रेभ्यो ददौ। खण्डपुत्रनामानि--सुरोचनं १, सौमनस्यं २, रमणकं ३, देववर्षं ४, पारिभद्रम् ५, आप्यायनम् ६, अविज्ञातम् ७ इति॥९॥ तत्र सप्त पर्वताः--स्वरसः १, शतशृङ्गः २, वामदेवः ३ कुन्दः ४, मुकुन्दः ५, पुष्पवर्षः ६, सहस्रश्रुतिः ७ इति। नद्यश्च सप्त--अनुमतिः १, सिनीवाली २, सरस्वती ३, कुहूः ४, रजनी ५, नन्दा ६, राका ७ इति ॥१०॥

तद्वर्षपुरुषा:--श्रुतधरः १, वीर्यधरः २, वसुन्धरः ३, इषन्धरः ४ भगवन्तं सोमं वेदेन यजन्ते ॥११॥ इदं जपन्ति स्वरश्मिभिःकृष्णशुक्लयोः पितृदेवेभ्योऽन्नं विभजन् सोमो नो राजास्तु ॥ १२ ॥ ततः सुरोदाद् बहिः कुशद्वीपः अष्टलक्षयोजनस्तावता घृतसमुद्रेण वेष्टितः तत्र द्वीप नामकरः कुशस्तम्बोऽस्ति ॥१३॥ यत्र द्वीपपतिः प्रियव्रतपुत्रो हिरण्यरेताः स्वं द्वीपं सप्तधा कृत्वा पुत्रेभ्यो दत्त्वा स्वयं तपः आतिष्ठत ॥१४॥ खण्डपुत्रनामानि--वसुः १, वसुदानः २, दृढरुचिः ३, नाभिगुप्तः ४, स्तुत्यव्रतः ५, विविक्तः ६, वामदेव ७ इति । तत्र सीमागिरयः सप्त--

तद्वर्षपुरुषाः श्रुतधरवीर्यधरवसुन्धरेषन्धरसंज्ञा भगवन्तं देवमयं सोममात्मानं वेदेन यजन्ते ॥ ११ ॥ स्वगोभिः पितृदेवेभ्यो विभजन् कृष्णशुक्लयोः ॥ प्रजानां सर्वासां राजाऽन्धः सोमो न आस्त्विति ॥ १२ ॥ एवं सुरोदाद्बहिस्तद् द्विगुणस्वमानेनावृतो घृतोदेन यथा पूर्वः कुशद्वीपो यस्मिन् कुशस्तम्बो देवकृतस्तद्द्वीपाख्याकरो ज्वलन इवापरः स्वशष्परोचिषा दिशो विराजयति ॥ १३ ॥ तद्द्वीपपतिः प्रैयव्रतो राजा हिरण्यरेता नाम स्वं द्वीपं सप्तभ्यः स्वपुत्रेभ्यो यथाभागं विभज्य स्वयं तप आतिष्ठत ॥ १४ ॥ वसुवसुदानदृढरुचिनाभिगुप्तस्तुत्यव्रतविविक्तवामदेवनामभ्यः ॥ तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः सप्त सप्तैव चक्रश्चतुश्शृङ्गः कपिलश्चित्रकूटो देवानीक ऊर्ध्वरोमा द्रविण इति॥१५॥ रसकुल्या मधुकुल्या मित्रविन्दा श्रुतविन्दा वेदगर्भा घृतच्युता मन्त्रमालेति यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसंज्ञा भगवन्तं जातवेदसरूपिणं कर्मकौशलेन यजन्ते ॥ १६ ॥ परस्य ब्रह्मणः साक्षाज्जातवेदोऽसि हव्यवाट् ॥ देवानां पुरुषाङ्गानां यज्ञेन पुरुषं यजेति ॥ १७ ॥



चक्रः १, चतुःशृंगः २, कपिलः ३, चित्रकूटः ४, देवानीकः ५, ऊर्ध्वरोमा ६, द्रविणः ७ इति ॥१५॥ सप्त महानद्यश्च—रसकुल्या १, मधुकुल्या २, मित्रविन्दा ३, श्रुतविन्दा ४, वेदगर्भा ५, घृतच्युता ६, मन्त्रमाला ७ इति । तत्र कुशलः १, कोविदः २, अभियुक्तः ३, कुलकः ४ इति चत्वारो वर्णाः । तेऽग्निरूपं देवं यजन्ते ॥ १६ ॥ परस्य ब्रह्मणः साक्षादित्यादिमन्त्रं जपन्ति ॥ १७ ॥

ततो घृतोदाद् बहिः षोडशलक्षयोजनः क्रौञ्चद्वीपः तावता क्षीरसमुद्रेण वेष्टितः यत्र द्वीपनामकरः क्रौञ्चपर्वतोऽस्ति ॥१८॥ यः क्रौञ्चः स्कन्दस्यायुधेन पीडितोऽपि क्षीरोदेन सिच्यमानो वरुणेन रक्षितो निर्भयो बभूव ॥१९॥ तद्द्वीपेऽपि प्रियव्रतपुत्रो घृतपृष्ठः स्वं दीपं सप्तधा विभज्य पुत्रेभ्यो दत्त्वा स्वयं हरेश्चरणारविन्दं जगाम ॥२०॥ तत्खण्डपुत्रनामानि--आमः १, मधुरुहः २, मेघपृष्ठः ३, सुधामा ४, भ्राजिष्ठः ५, लोहि-

तथा घृतोदाद् बहिः क्रौञ्चद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परितः उपक्लृप्तो वृतो यथा कुशद्वीपो घृतोदेन यस्मिन् क्रौञ्चो नाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते ॥ १८ ॥ योऽसौ गुहप्रहरणोन्मथितनितम्बकुञ्जोऽपि क्षीरोदेनासिच्यमानो भगवता वरुणेनाभिगुप्तो विभयो बभूव ॥ १९ ॥ तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्रनामसु सप्त रिक्थादान् वर्षपान् निवेश्य स्वयं भगवान् भगवतः परमकल्याणयशस आत्मभूतस्य हरेश्चरणारविन्दमुपजगाम ॥ २० ॥ आमो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितार्णो वनस्पतिरिति घृतपृष्ठसुताः ॥ तेषां वर्षगिरयः सप्त सप्तैव नद्यश्चाभिख्याताः शुक्लो वर्धमानो भोजन उपबर्हणो नन्दो नन्दनः सर्वभद्र इति ॥ २१ ॥ अभया अमृतौघा आर्यका तीर्थवती वृत्तिरूपवती पवित्रवती शुक्लेति ॥ यासामम्भः पवित्रममलमुपयुञ्जानाः पुरुषऋषभद्रविणदेवकसंज्ञा वर्षपुरुषा आपोमयं देवमपां पूर्णेनाञ्जलिना यजन्ते ॥ २२ ॥
आपः पुरुषवीर्याः स्थ पुनन्तीर्भूर्भुवस्स्वः ता नः पुनीतामीवघ्नीः स्पृशतामात्मना भुवः । इति ॥ २३ ॥

तार्णः ६, वनस्पतिः ७ इति । तत्र सप्त सीमागिरयः--शुक्लः १, वर्धमानः २, भोजनः ३, उपबर्हणः ४, नन्दः ५, नन्दनः ६, सर्वभद्रः ७, इति ॥२१॥ अथ सप्त नद्यः--अभया १, अमृतौघा २, आर्यका ३, तीर्थवती ४, वृत्तिरूपवती ५, पवित्रवती ६, शुक्ला ७ इति । तत्र चतुर्वर्णाः--पुरुषः १, ऋषभः २, द्रविणः ३, देवकः ४ इति । ते च सदा वरुणं देवमञ्जलिना यजन्ते ॥२२॥ आपः पुरुषवीर्याः स्थेत्यादिमन्त्रं जपन्ति ॥ २३ ॥

१ ईश्वराल्लब्धसामर्थ्याः । २ भूरादींस्त्रींल्लोकान । ३ पापहंत्र्यः । ४ शरीराणि ।

ततः क्षीरोदाद् बहिः शाकद्वीपः। स द्वात्रिंशल्लक्षयोजनः तावन्मानेन दधिसमुद्रेण वेष्टितः यत्र द्वीपनामकरः शाकवृक्षोऽस्ति ॥२४॥ तत्रापि प्रियव्रत-पुत्रो मेधातिथिः स्वं द्वीपं सप्तधा कृत्वा द्वीपनामभ्यः पुत्रेभ्यो ददौ । ते च पुरोजवः १, मनोजवः २, पवमानः ३, धूम्रानीकः ४, चित्र-रेफः ५, बहुरूपः ६, विश्वधारः ७ इति ॥ २५ ॥ तत्र सीमापर्वताः । ईशानः १, उरुशृङ्गः २, बलभद्र- ३, शतकेसरः ४ सहस्रस्रोतः ५,

एवं परस्तात् क्षीरोदात् परित उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन च दधिमण्डोदेन परीतः यस्मिन् शाको नाम महीरुहःस्वक्षेत्रव्यपदेशको यस्य ह महासुरभिगन्धस्तं द्वीपमनुवासयति ॥ २४ ॥ तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः सोऽपि विभज्य सप्त वर्षाणि पुत्रनामानि तेषु स्वात्मजान् पुरोजवमनोजवपव-मानधूम्रानीकचित्ररेफबहुरूपविश्वधारसंज्ञान् विधाय्या ( प्या ) धिपतीन् स्वयं भगवत्यनन्त आवेशितमति-स्तपोवनं प्रविवेश ॥ २५ ॥ एतेषां वर्षमर्यादागिरयो नद्यश्च सप्त सप्तैव ॥ ईशान उरुशृङ्गो बलभद्रः शतकेसरः सहस्रस्रोतो देवपालो महानस इति ॥ २६ ॥ अनघाऽऽयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी सहस्रश्रुतिर्निजधृति-रिति ॥ २७ ॥ तद्वर्षे पुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं वाय्वात्मकं प्राणायामविधूतरजस्तमसः परमसमाधिना यजन्ते ॥ २८ ॥ अन्तः प्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः ॥ अन्तर्यामीश्वरः साक्षात् पातु नो यद्वशे स्फुटम् ॥ २९ ॥

देवपालः ६, महानसः ७ ॥ २६ ॥ तथा सप्त नद्यः--अनघा १, आयुर्दा २, उभयसृष्टिः ३, अपराजिता ४, पञ्चपदी ५, सहस्रश्रुतिः ६, निज धृतिः ७ इति ॥ २७ ॥ तद्वर्षे चतुर्वर्णपुरुषाः--ऋतव्रतः १, सत्यव्रतः २, दानव्रत, ३, अनुव्रतः ४ इति । ते वाय्वात्मकं भगवन्तं समाधिना यजन्ते ॥ २८ ॥ अन्तः प्रविश्येत्यादिमन्त्रं जपन्ति ॥ २९ ॥



१ प्राणादिवर्त्तिभिः ।

ततो दधिसमुद्राद् बहिः पुष्करद्वीपश्चतुष्षष्टिलक्षयोजनः तावता स्वादुसमुद्रेण परिवृतः तत्र बृहत्पुष्करं ब्रह्मणः आसनं कल्पितम्॥तद्द्वीपमध्ये मानसोत्तरनामैकः पर्वतोऽयुतयोजनोच्चः यत्र चतसृषु दिक्ष्विन्द्रादीनां चतस्रः पुर्यः सन्ति । तदुपरि सूर्यरथचक्रं भ्रमति ॥ ३० ॥ तद्द्वीपपतिः प्रियव्रतपुत्रो वीतिहोत्रः स्वं द्वीपं द्विधा विभज्य रमणकधातकिनामभ्यां पुत्राभ्यां ददौ । स्वयं च भगवत्कर्मशील आस्ते ॥ ३१ ॥ तद्वर्ष-

एवमेव दधिमण्डोदात् परतः पुष्करद्वीपस्ततो द्विगुणायामः समन्तत उपकल्पितः समानेन स्वादूदकेन समुद्रेण बहिरावृतो यस्मिन् बृहत्पुष्करं ज्वलनशिखामलकनकपत्रायुतायुतं भगवतः कमलासनस्याध्यासनं परिकल्पितं तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनवर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रायायामो यत्र तु चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनां यदुपरिष्टात् सूर्यरथस्य मेरुं परिभ्रमतः संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां परिभ्रमति ॥ ३० ॥ तद्द्वीपस्याप्यधिपतिः प्रैयव्रतो वीतिहोत्रो नामैतस्यात्मजौ रमणकधातकिनामानौ वर्षपती नियुज्य स स्वयं पूर्वजवद्भगवत्कर्मशील एवास्ते ॥ ३१ ॥ तद्वर्षपुरुषा भगवन्तं ब्रह्मरूपिणं सकर्मकेनं कर्मणाऽऽराधयन्ति ॥ इदं चोदाहरंति ॥ ३२ ॥ एतत् कर्ममयं लिंगं ब्रह्मलिंगं जनोऽर्चयेत् । एकान्तमद्वयं शान्तं तस्मै भगवते नमः ॥ ३३ ॥ इति ॥ ऋषिरुवाच ॥ ततः परस्ताल्लोकालोकनामाऽचलो लोकालोकयोरन्तराले परित उपक्षिप्तः ॥ ३४ ॥ यावन्मानसोत्तरमेर्वोरन्तरं तावती भूमिः काञ्चन्यन्याऽऽदर्शतलोपमा ॥ यस्यां प्रहितः पदार्थो न कथंचित् पुनः प्रत्युपलभ्यते तस्मात् सर्वसत्त्वपरिहृताऽऽसीत् ॥ ३५ ॥

पुरुषाः ब्रह्मरूपं देवं यजन्ते ॥३२॥ एतत्कर्ममयं लिंगमित्यादिमन्त्रं जपन्ति ॥३३॥ श्रीशुक उवाच ॥ ततः शुद्धसमुद्राद् बहिर्लोकालोकनामा पर्वतः ॥ ३४ ॥ यावन्मानसोत्तरमेर्वोरन्तरमेककोटिसार्धसप्तलक्षमिता तावती भूमिः शुद्धोदात् पराऽस्ति । तत्र प्राणिनोऽपि सन्ति । ततः आदर्शतलोपमा काञ्चनी भूः सैकोनचत्वारिंशल्लक्षोत्तरकोटयष्टकमिता प्राणिवर्जिता ज्ञेया । तस्यां निक्षिप्तः पदार्थः पुनर्न प्राप्यते ॥ ३५ ॥

१ 'इत्यास्ते' इ० पा० । २ ब्रह्मसालोक्यादिसाधनेन । ३ कर्मफलरूपम् । ४ ब्रह्मलिङ्ग्यते यस्मात् । ५ एकस्मिन्परमेश्वर एव अन्तो निष्ठा यस्य तम् ।

ततो लोकालोकपर्वतः । स लोकत्रयस्य मर्यादारूपः ईश्वरेण नियोजितः । तेन प्रतिबन्धकेन सूर्यादिज्योतिर्गणानां गभस्तयोऽर्वाचीनाः । ध्रुव-पदादप्युच्छ्रितोऽयम् ॥ ३६ ॥ ३७ ॥ स च मेरोरेकतः सार्धद्वादशकोटिमितोऽन्यतश्च तावान् ॥ ३८ ॥ तदुपरि चतसृषु दिक्षु द्विरदपतयो दिग्गजाः ऋषभः १, पुष्करचूडः २, वामनः ३, अपराजितः ४, इति । एते लोकस्थितिहेतवः सन्ति ॥ ३९ ॥ तस्मिन् लोकालोकपर्वते

लोकालोक इति समाख्या यदनेनाचलेन लोकालोकस्यान्तर्वर्तिनाऽवस्थाप्यते ॥३६॥ स लोकत्रयान्ते परित ईश्वरेण विहितो यस्मात् सूर्यादीनां ध्रुवापवर्गाणां[1] ज्योतिर्गणानां गभस्तयोऽर्वाचीनांस्त्रीँल्लोकानावितन्वाना न कदाचित् पराचीना भवितुमुत्सहन्ते तावदुन्नहनायामः[2] ॥ ३७ ॥ एतावाँल्लोकविन्यासो मानलक्षणसंस्थाभिर्विचिन्तितः कविभिः ॥ स तु पञ्चाशत्कोटिश्चगणितस्य भूगोलस्य तुरीयभागोऽयं लोकालोकाचलः ॥ ३८ ॥ तदुपरिष्टाच्चतसृष्वाशास्वात्म-योनिनाऽखिलजगद्गुरुणाऽधिनिवेशिता ये द्विरदपतय ऋषभः पुष्करचूडो वामनोऽपराजित इति सकललोकस्थिति-हेतवः ॥ ३९ ॥ तेषां स्वविभूतीनां लोकपालानां च विविधवीर्योपबृंहणाय भगवान् परममहापुरुषो महाविभूतिपति-रन्तर्याम्यात्मनो विशुद्धसत्त्वं धर्मज्ञानवैराग्यैश्वर्याद्यष्टमहासिद्ध्युपलक्षणं विष्वक्सेनादिभिःस्वपार्षदप्रवरैःपरिवारितो निजवरायुधोपशोभितैर्निजभुजदण्डैः संधारयमाणस्तस्मिन् गिरिवरे समन्तात् सकललोकस्वस्तय आस्ते ॥ ४० ॥ आकल्पमेवं वेषं गत एष भगवानात्मयोगमायया विरचितविविधलोकयात्रागोपीथायेति ॥४१॥ योऽन्तर्विस्तार एतेन ह्यलोकपरिमाणं च व्याख्यातं यद् बहिर्लोकालोकाचलात् ॥ ततः परस्ताद् योगेश्वरगतिं विशुद्धामुदाहरन्ति ॥४२॥

तेषां दिग्गजानामिन्द्रादीनां च विविधवीर्यरचनायै लोकरक्षणाय च कल्पपर्यन्तं भगवानास्ते ॥ ४० ॥ एतेन ह्यलोकपरिमाणं च व्याख्या-तम् । ततो लोकालोकाचलाद्वा परतो योगेश्वराणां विशुद्धां गतिं द्विजपुत्रानयनेऽर्जुनस्य श्रीकृष्णेन दर्शितां कथयन्ति ॥ ४१ ॥ ४२ ॥



१ ध्रुवोऽपवर्गोऽन्तो येषां तेषाम् । २ तावानुच्छ्रायस्तदनुरूपः आयामश्च यस्य सः ।

अण्डमध्यगतः सूर्यः द्यावाभूम्योर्यद् मध्यस्थानं तत्सर्वतः पञ्चविंशतिकोट्यः ॥४३॥ एष सूर्योऽण्डेऽचेतने सति वैराजरूपेण यस्मात् प्रविष्टोऽतो मार्तण्ड इति नाम ॥ ४४ ॥ सूर्येणैव दिशः खं द्यौर्महि भोगमोक्षौ नरकपातालादयो विभज्यन्ते ॥ ४५ ॥ देवतिर्यङ्मनुष्याणां सर्वजीवानां सूर्य एवात्मा ॥ ४६ ॥ इति श्रीभागव० चू० पञ्चम० भुवनकोशवर्णनं नाम विंशोऽध्यायः ॥२०॥ एवमध्यायविंशत्या भूमर्यादा निरूपिता ॥ अतः परं द्युमर्यादापालनं त्रिभिरुच्यते ॥ १ ॥ एकविंशे रवेः कालचक्रेण भ्रमतोऽन्वहम् ॥ स्वगत्या राशिसंचारैर्लोकयात्रा निरूप्यते ॥२॥

अण्डमध्यगतः सूर्यो द्यावाभूम्योर्यदन्तरम् ॥ सूर्याण्डगोलयोर्मध्ये कोट्यः स्युः पञ्चविंशतिः ॥ ४३ ॥ मृतेऽण्ड एष एतस्मिन् यदभूत् ततो मार्तण्ड इति व्यपदेशः ॥ हिरण्यगर्भ इति यद्धिरण्याण्डसमुद्भवः ॥ ४४ ॥ सूर्येण हि विभज्यन्ते दिशः खं द्यौर्मही भिदा ॥ स्वर्गापवर्गौ नरका रसौकांसि च सर्वशः ॥ ४५ ॥ देवतिर्यङ्मनुष्याणां सरीसृपसवीरुधाम् ॥ सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः ॥ ४६ ॥ इति श्रीभाग० महा० पञ्चम० भुवनकोशवर्णने समुद्रद्वीपवर्षसन्निवेशपरिमाणलक्षणं नाम विंशतितमोऽध्यायः ॥ २० ॥ श्रीशुक उवाच ॥ एतावानेव भूवलयस्य सन्निवेशः प्रमाणलक्षणतो व्याख्यातः ॥ एतेन हि दिवो मण्डलमानं तद्विद उपदिशन्ति ॥ १ ॥ यथा द्विदलयोर्निष्पावादीनाम् ॥ ते अन्तरेणान्तरिक्षं तदुभयसंधितम् ॥ २ ॥ यन्मध्यगतो भगवांस्तपतां पतिस्तपन आतपेन त्रिलोकीं प्रतपत्यवभासयत्यात्मभासा ॥ स एष उदगयनदक्षिणायनवैषुवतसंज्ञाभिर्मान्द्यशैघ्र्यसमानाभिर्गतिभिरारोहणावरोहणसमानस्थानेषु यथासवनमभिपद्यमानो मकरादिषु राशिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ॥ ३ ॥

श्रीशुक उवाच ॥ हे नृप ! एतत् प्रमाणं भूगोलमानं कथितम् । तद्वद् दिवो मण्डलमानं ज्ञानिनः कथयन्ति ॥ १ ॥ यथा द्विदलयोर्निष्पावादीनाम् । ताभ्यामुभयतः संलग्नमन्तरिक्षम् ॥ २ ॥ ब्रह्माण्डमध्यगतः सूर्यस्त्रिलोकीं प्रकाशयति तपति च । सौम्ययाम्यायनविषुवसंज्ञाभिर्मान्द्यशैघ्र्यसमानगतिभिरुच्चनीचसमस्थानेषु प्राप्तः सन् मकरादिराशिष्वहोरात्राणि दीर्घह्रस्वसमानतया विधत्ते ॥ ३ ॥

तत्र यदा मेषतुलयोर्वर्तते तदा दिनरात्रयः समानाः भवन्ति। यदा वृषभादिपञ्चराशिषु चरति तदा दिनानि वर्धन्ते। मासि मासि रात्रिष्वेकैका घटिका ह्रसति च ॥४॥ यदा वृश्चिकादिपञ्चराशिषु भ्रमति तदा दिनानि न्यूनानि रात्रयोऽधिकाः भवन्ति॥५॥ दक्षिणायनेऽहानि वर्धन्ते। उत्तरायणे रात्रयश्च॥६॥ किंच मेरोः पूर्वतो मानसोत्तरपर्वतो देवधानी नामैन्द्री पुरी वर्तते। दक्षिणतः संयमिनीनाम यमपुरी। पश्चिमे निम्लोचनी नाम वरुण-पुरी। उत्तरे विभावरी नाम कुबेरपुरी। तासु पुरीषु क्रमेणोदयमध्याह्नास्तमयनिशीथानि कथयन्ति ॥७॥ मेरुस्थितजनानां तु सदैव मध्याह्नः।

यदा मेषतुलयोर्वर्तते तदाऽहोरात्राणि समानानि भवन्ति यदा वृषभादिषु पञ्चसु च राशिषु चरति तदाऽहान्येव वर्धन्ते ह्रसति च मासि मास्येकैका घटिका रात्रिषु ॥४॥ यदा वृश्चिकादिषु पञ्चसु वर्तते तदाऽहोरात्राणि विपर्ययाणि भवन्ति ॥५॥ यावद्दक्षिणायनमहानि वर्धन्ते यावदुदगयनं रात्रयः ॥ ६ ॥ एवं नवकोट्य एकपञ्चाशल्लक्षाणि योजनानां मानसोत्तरगिरिपरिवर्तनस्योपदिशन्ति ॥ तस्मिन्नैन्द्रीं पुरीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमिनीं नाम पश्चाद्वारुणीं निम्लोचनीं नाम उत्तरतः सौम्यां विभावरीं नाम तासूदयमध्याह्नास्तमयनिशीथानीति भूतानां प्रवृत्ति-निवृत्तिनिमित्तानि समयविशेषेण मेरोश्चतुर्दिशम् ॥७॥ तत्रत्यानां दिवसमध्यं गत एव सदाऽऽदित्यस्तपति सव्येना-चलं दक्षिणेन करोति ॥ ८ ॥ यत्रोदेति तस्य हैष समानसूत्रनिपाते निम्लोचति यत्र क्वचन स्यन्देनाभितपति तस्य हैष समानसूत्रनिपाते प्रस्वापयति तत्र गतं न पश्यन्ति ये तं समनुपश्येरन् ॥ ९ ॥ यदा चैन्द्र्याः पुर्याः प्रचलते पञ्च-दशघटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्द्धद्वादशलक्षाणि साधिकानि चोपयाति ॥१०॥ एवं ततो वारुणीं सौम्यामैन्द्रीं च पुनस्तथाऽन्ये च ग्रहाः सोमादयो नक्षत्रैः सह ज्योतिश्चक्रे समभ्युद्यन्ति सह वा निम्लोचन्ति ॥११॥

किंच नक्षत्राभिमुखतया स्वगत्या मेरुं वामतः कुर्वन्नपि चक्रगतिवशात् प्रत्यहं दक्षिणतः करोति ॥ ८ ॥ यत्रोदेति तस्य सूत्रनिपातेऽस्तं याति यत्र मध्याह्नं करोति तत्समानसूत्रनिपातेऽर्धरात्रं करोति ॥ ९ ॥ यदेन्द्रपुर्याः प्रचलति सूर्यस्तदा पञ्चदशघटिकाभिः संयमिनीं २३७७५००० योजनानि याति ॥ १० ॥ एवं वारुणीं सौम्यां पुनरैन्द्रीं च तथाऽन्ये चन्द्रादिग्रहा नक्षत्रैः सह ज्योतिश्चक्रे उद्यन्ति यान्ति चास्तम् ॥ ११ ॥

एवं सूर्यरथो मुहूर्तेनाष्टशताधिकचतुस्त्रिंशल्लक्षयोजनानि चतसृषु पुरीषु भ्रमति॥१२॥यस्यैकं चक्रं संवत्सरात्मकं समामनन्ति तस्य रथस्याक्षो मेरोर्मूर्धनि कृतोत्तरभागो मानसोत्तरे कृतेतरभागः यत्र प्रोतं रविरथचक्रं तैलयन्त्रवत् मानसोत्तरगिरौ परिभ्रमति ॥ १३ ॥ तस्मिन्नक्षे कृतमूलो द्वितीयाक्षः । स सार्धसप्तत्रिंशत्सहस्राधिकोनचत्वारिंशल्लक्षयोजनसंमितः तैलयन्त्राक्षवद् ध्रुवे कृतोपरिभागोऽस्ति ॥ १४ ॥ रथोपवेशस्थानं तु षट्त्रिंशल्लक्षयोजनदीर्घं नवलक्षयोजनविशालम्। तावान् रविरथयुगः यत्र सप्त हयाश्छन्दोनामानः सूर्यं वहन्ति॥१५॥यत्र रथे सूर्याग्रेऽरुणः

एवं मुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते पुरीषु ॥ १२ ॥ यस्यैकं चक्रं द्वादशारं षण्नेमि त्रिणाभि[1] संवत्सरात्मकं समामनन्ति तस्याक्षो मेरोर्मूर्धनि कृतोत्तरभागो मानसोत्तरे कृतेतरभागो यत्र प्रोतं रविरथचक्रं तैलयन्त्रचक्रवद् भ्रमन्मानसोत्तरगिरौ परिभ्रमति ॥ १३ ॥ तस्मिन्नक्षे कृतमूलो द्वितीयोऽक्षस्तुर्यमानेन संमितस्तैलयन्त्राक्षवद् ध्रुवे कृतोपरिभागः ॥ १४ ॥ रथनीडस्तु षट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्तावान् रविरथयुगो यत्र हयाश्छन्दोनामानः सप्तारुणयोजिता वहन्ति देवमादित्यम् ॥१५॥ पुरस्तात् सवितुररुणः पश्चाच्च नियुक्तः सौत्ये कर्मणि किलास्ते ॥१६॥ यथा वालखिल्या ऋषयोऽङ्गुष्ठपर्वमात्राः षष्टिसहस्राणि पुरतः सूर्यं सूक्तवाकाय नियुक्ताः संस्तुवंति ॥१७॥ तथाऽन्ये च ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चतुर्दश मासि मासि भगवन्तं सूर्यमात्मानं नानानामानं पृथङ्नानानामानः पृथक्कर्मभिर्द्वन्द्वश उपासते ॥ १८ ॥ लक्षोत्तरं सार्धनवकोटियोजनपरिमण्डलं भूवलयस्य क्षणेन सगव्यूत्युत्तरं द्विसहस्रयोजनानि स भुङ्क्ते ॥१९॥ इति श्रीभा० म० प० ज्योतिश्चक्रसूर्यरथमण्डलवर्णनं नामैकविंशतितमोऽध्यायः ॥ २१ ॥

सारथिः ॥ १६ ॥ यथाऽङ्गुष्ठपर्वमात्रा वालखिल्याः ऋषयः षष्टिसहस्राणि पुरतः सूर्यं स्तुवन्ति ॥ १७ ॥ तथाऽन्ये मुनिगन्धर्वाप्सरसो नागाः यक्षराक्षसदेवाः सप्त गणाः मासि मासि सूर्यमुपासते ॥ १८ ॥ एवमेकपञ्चाशल्लक्षाधिकनवकोटियोजनं भूमण्डलम् । तस्य मण्डलेन क्षणेन स सूर्यो द्विक्रोशाधिकद्विसहस्रयोजनानि भुङ्क्ते ॥ १९ ॥ इति श्रीभागव० चू० पञ्चम० एकविंशोऽध्यायः ॥ २१ ॥

१ तिस्रः चातुर्मास्यात्मिकाः नाभयो यस्य तत् ।

द्वाविंशे सोमशुक्रादेः स्थानमाहोत्तरोत्तरम् । तत्तद्गत्यनुसारेण इष्टानिष्टं तथा नृणाम् ॥१॥ राजोवाच । हे ब्रह्मन् ! यदेतद् भगवतः सूर्यस्य मेरुं ध्रुवं च प्रदक्षिणं परिक्रामतो राशीनां संमुखप्रदक्षिणं च वर्णितं तद् वयं कथं जानीमः ॥१॥ श्रीशुक उवाच ॥ यथा कुलालचक्रेण भ्रमता सह भ्रमतां पिपीलिकादीनामन्यैव गतिः एवं कालचक्रेण भ्रमतां तदाश्रयाणां सूर्यादिग्रहाणां गतिरन्यैव दृश्यते ॥२॥ स एव सूर्यो नारायणो वेद-

राजोवाच ॥ यदेतद्भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रामतो राशीनामभिमुखं प्रचलितं चाप्रदक्षिणं भगवतोपवर्णितममुष्य वयं कथमनुमिमीमहीति ॥१॥ स होवाच ॥ यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशांतरेष्वप्युपलभ्यमानत्वात् ॥ एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं च प्रदक्षिणेन परिधावता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वात् ॥२॥ स एष भगवानादिपुरुष एव साक्षान्नारायणो लोकानां स्वस्तय आत्मानं त्रयीमयं कर्मविशुद्धिनिमित्तं कविभिरपि च वेदेन विजिज्ञास्यमानो द्वादशधा विभज्य षट्सु वसन्तादिषु ऋतुषु यथोपजोषमृतुगुणान् विदधाति ॥३॥ तमेतमिह पुरुषास्त्रय्या विद्यया वर्णाश्रमाचारानुपथा उच्चावचैः कर्मभिराम्नातैर्योगवितानैश्च श्रद्धया यजन्तोऽञ्जसा श्रेयः समधिगच्छन्ति ॥ ४ ॥ अथ स एष आत्मा लोकानां द्यावापृथिव्योरन्तरेण नभोवलयस्य कालचक्रगतो द्वादशमासान् भुङ्क्ते राशिसंज्ञान् संवत्सरावयवान् मासः पक्षद्वयं दिवानक्तं चेति सपादर्क्षद्वयमुपदिशन्ति यावता षष्ठमंशं भुञ्जीत स वै ऋतुरित्युपदिश्यते संवत्सरावयवः ॥ ५ ॥

रूपो द्वादशधा भूत्वा लोकानां स्वस्तये ऋतुगुणान् विदधाति॥३॥ जनास्तं त्रय्या विद्यया वर्णाश्रमाचारपराः श्रद्धया यजन्तः श्रेयांसि प्राप्नुवन्ति ॥४॥ स च द्यावापृथिवीमध्यस्थकालचक्रगतः सूर्यो यावतः द्वादश मासान् भुङ्क्ते । पक्षद्वयं मासश्चान्द्रमानेन । सपादमहानक्षत्रद्वयं मासः सौरमानेन । अहोरात्रं पित्र्येणेति कथयन्ति । यावता राशिद्वयं भुञ्जीत स ऋतुः ॥ ५ ॥

१ यथाकर्मभोगम् ।

यावताऽर्धं भुङ्क्ते तदयनं कथ्यते । अयनद्वयं संवत्सरः ॥६॥ यावता नभोमण्डलं सम्पूर्णत्वेन भुञ्जीत तं कालं संवत्सरं परिवत्सरमिडावत्सर-मनुवत्सरं वत्सरमिति वदन्ति ॥ ७ ॥ ततः सूर्योपरि चंद्रः लक्षयोजनतः उपलभ्यमानः सूर्यस्य वत्सरभुक्तिं सपादनक्षत्राभ्यां पक्षभुक्तिं दिनेनैव शीघ्रगमनो भुङ्क्ते ॥ ८ ॥ अथ पूर्यमाणकलाभिः शुक्लपक्षेण देवानां क्षीयमाणकलाभिः कृष्णपक्षेण पितॄणां दिनरात्राणि कुर्वन् प्रति-

अथ च यावताऽर्धेन नभोवीथ्यां प्रचरति तं कालमयनमाचक्षते ॥ ६ ॥ अथ च यावन्नभोमण्डलं सह द्यावापृथिव्यो-र्मण्डलाभ्यां कार्त्स्न्येन सह भुञ्जीत तं कालं संवत्सरं परिवत्सरमिडावत्सरमनुवत्सरं वत्सरमिति भानोर्मान्द्यशै-घ्र्यसमगतिभिः समामनन्ति ॥७॥ एवं चन्द्रमा अर्कगभस्तिभ्य उपरिष्टाल्लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सर-भुक्तिं पक्षाभ्यां मासभुक्तिं सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारी द्रुततरगमनो भुङ्क्ते ॥८॥ अथ चापूर्यमाणाभिश्च कलाभिरमराणां क्षीयमाणाभिश्च कलाभिः पितॄणामहोरात्राणि पूर्वपक्षापरपक्षाभ्यां वितन्वानः सर्वजीवनिवहप्राणो जीवश्चैकमेकं नक्षत्रं त्रिंशता मुहूर्तैर्भुङ्क्ते ॥९॥ य एष षोडशकलः पुरुषो भगवान् मनोमयोऽन्नमयोऽमृतमयो देवपि-तृमनुष्यभूतपशुपक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात् सर्वमय इति वर्णयन्ति ॥ १० ॥ तत उपरिष्टात् त्रिलक्षयो-जनतो नक्षत्राणि मेरुं दक्षिणेनैव कालायन ईश्वरयोजितानि सहाभिजिताऽष्टाविंशतिः ॥ ११ ॥ तत उपरिष्टादुशना द्विलक्षयोजनत उपलभ्यते पुरतः पश्चात् सहैव वाऽर्कस्य शैघ्र्यमान्द्यसाम्याभिर्गतिभिरर्कवच्चरति लोकानां नित्य-दाऽनुकूल एव प्रायेण वर्षयन् चारेणानुमीयते स वृष्टिविष्टम्भग्रहोपशमनः ॥ १२ ॥

नक्षत्रं षष्टिघटिकाभिर्भुङ्क्ते ॥ ९ ॥ य एष भगवान् चन्द्रोऽन्नमयोऽमृतमयो देवादिपिपीलिकान्तानां रक्षणशीलत्वात् सर्वमय इति वर्णयन्ति ॥ १० ॥ तदुपरि त्रिलक्षयोजनान्तरे नक्षत्राणि ॥ ११ ॥ ततः ऊर्ध्वं द्विलक्षयोजनान्तरे शुक्रमण्डलम् । सोऽर्कस्याग्रे पश्चात् सहैव वा चरति लोकानां नित्यदाऽनुकूलः । किंच वृष्टिस्तम्भकर्तारं ग्रहं चोपशमयति ॥ १२ ॥

१ क्रमस्य नक्षत्राद्यतिक्रमेण ।

तत ऊर्ध्वं द्विलक्षयोजनान्तरे बुधमण्डलम्। स बहुधा लोकानां शुभकृत् सूर्यस्याग्रे पश्चात् सहैव वा चरति। यदा सूर्याद् वियुज्येत तदाऽनावृष्ट्यादिभयं सूचयते ॥१३॥ तत उपरिष्टात् द्विलक्षयोजने भौमो बहुधा दुःखदः ॥१४॥ तत ऊर्ध्वं द्विलक्षयोजने भगवान् बृहस्पतिर्बहुधा ब्राह्मणकुलस्यानुकूलः। एकैकस्मिन् राशौ यदि न वक्रस्तर्हि संवत्सरं चरति ॥१५॥ ततो द्विलक्षयोजने शनैश्चरः प्रतिराशौ त्रिंशन्मासान् भुङ्क्ते स प्रायः

उशनसा बुधो व्याख्यातः ॥ तत उपरिष्टाद् द्विलक्षयोजनतो बुधः सोमसुत उपलभ्यमानः प्रायेण शुभकृद्यदाऽर्काद् व्यतिरिच्येत तदाऽतिवाताभ्रप्रायानावृष्ट्यादिभयमाशंसते ॥ १३ ॥ अत ऊर्ध्वमङ्गारकोऽपि योजनलक्षद्वितय उपलभ्यमानस्त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन् द्वादशानुभुङ्क्ते यदि न वक्रेणाभिवर्तते प्रायेणाशुभग्रहोऽघशंसः ॥ १४ ॥ तत उपरिष्टाद् द्विलक्षयोजनान्तरगतो भगवान् बृहस्पतिरेकैकस्मिन् राशौ परिवत्सरं चरति यदि न वक्रः स्यात् प्रायेणानुकूलो ब्राह्मणकुलस्य ॥ १५ ॥ तत उपरिष्टाद् योजनलक्षद्वयात् प्रतीयमानः शनैश्चर एकैकस्मिन् राशौ त्रिंशन्मासान् विलम्बमानः सर्वानेवानुपर्येति तावद्भिरनुवत्सरैः प्रायेण हि सर्वेषामशान्तिकरः ॥ १६ ॥ तत उत्तरस्मादृषय एकादशलक्षयोजनान्तर उपलक्ष्यन्ते य एव लोकानां शमनुभावयन्तो भगवतो विष्णोर्यत् परमं पदं प्रदक्षिणं प्रक्रमन्ति ॥१७॥ इति श्रीभागव० म० पञ्चम० ज्योतिश्चक्रवर्णनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीशुक उवाच ॥ अथ तस्मात् परतस्त्रयोदशलक्षयोजनान्तरतो यत् तद् विष्णोः परमं पदमभिवदन्ति यत्र ह महाभागवतो ध्रुव औत्तानपादिरग्निनेन्द्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः सबहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीविनामाजीव्य उपास्ते ॥ तस्येहानुभाव उपवर्णितः ॥ १ ॥

सर्वेषामशान्तिकरः ॥१६॥ ततः उपर्येकादशलक्षयोजनान्तरे सप्त ऋषयः लोकानां शमिच्छन्तो भगवतो विष्णोः परं पदं प्रदक्षिणं प्रक्रमन्ति ॥१७॥ इति श्रीभागवते चू० पञ्चम० द्वाविंशोऽध्यायः ॥२२॥ त्रयोविंशे ध्रुवस्थानं ज्योतिश्चक्रश्रियं ततः। शिशुमारस्वरूपेण हरेश्च स्थितिरुच्यते ॥१॥ श्रीशुक उवाच। अथ ऋषिमण्डलादुपरि त्रयो दशलक्षयोजनान्तरे विष्णोः परमं पदं वदन्ति यत्र महाभागवतो ध्रुवः। तत्प्रतापः पूर्वं कथितः ॥ १ ॥



१ 'शिशुमारचक्रम्' मुद्रितमस्ति दृश्यताम्।

स चक्रेण भ्राम्यमाणानां ग्रहनक्षत्रादीनां वृक्ष इवाश्रयः ॥ २ ॥ तथा ते ग्रहनक्षत्रादयः कालचक्रयोजिताः वायुना प्रेर्यमाणास्तत् पदं परितो भ्रमन्ति । यथा च नभसि वायुवशाः मेघाः पक्षिणश्च भ्रमन्ते अधो न पतंति एवं प्रकृतिपुरुषानुग्रहेण ज्योतिर्गणाः कर्मनिर्मितगतयो भुवि न पतंति ॥ ३ ॥ एतज्ज्योतिश्चक्रं शिशुमारसंस्थानेन वासुदेवस्य योगधारणायां स्थितमिति केचिद् वर्णयंति ॥४॥ यस्य शिशुमारस्याधश्शिरसः

स हि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानां स्थाणुरिवावष्टम्भ ईश्वरेण विहितः शश्वदवभासते ॥ यथा मेढीस्तम्भ आक्रमणपशवः संयोजितास्त्रिभिस्त्रिभिः सवनैर्यथास्थानं मण्डलानि चरन्ति॥२॥एवं भगणा ग्रहादय एतस्मिन्नन्तर्बहिर्योगेन कालचक्रे आयोजिता ध्रुवमेवावलम्ब्य वायुनोदीर्यमाणा आकल्पान्तं परिचङ्क्रमन्ति ॥ नभसि यथा मेघाःश्येनादयो वायुवशाः कर्मसारथयः परिवर्तन्ते एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्मनिर्मितगतयो भुवि न पतन्ति ॥ ३ ॥ केचनैतज्ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ति ॥ ४ ॥ यस्य पुच्छाग्रेऽवाक्शिरसः कुण्डलीभूतदेहस्य ध्रुव उपकल्पितः ॥तस्य लाङ्गूले प्रजापतिरग्निरिन्द्रो धर्म इति॥ पुच्छमूले धाता विधाता च कटयां सप्तर्षयः॥ तस्य दक्षिणावर्तकुण्डलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे तु नक्षत्राण्युपकल्पयन्ति दक्षिणायनानि तु सव्ये ॥ यथा शिशुमारस्य कुण्डलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसंख्या भवन्ति पृष्ठे त्वजवीथी आकाशगङ्गा चोदरतः ॥ ५ ॥ पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषे च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोर्यथासंख्यं श्रवणपूर्वाषाढे दक्षिणवामयोर्लोचनयोर्धनिष्ठा मूलं च दक्षिणवामयोः कर्णयोः मघादीन्यष्ट नक्षत्राणि दक्षिणायनानि वामपार्श्ववङ्क्रिषु युञ्जीत ॥ तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्ववङ्क्रिषु प्रातिलोम्येन प्रयुञ्जीत ॥ शतभिषाज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यसेत् ॥ ६ ॥

कुण्डलीभूतदेहस्य पुच्छाग्रे ध्रुवः। अग्रस्याधः प्रजापतिधर्माग्नीन्द्राः । पुच्छमूले धाता विधाता च। कटयां सप्त ऋषयः। दक्षिणपार्श्वेऽभिजिदादि चतुर्दश नक्षत्राणि । वामपार्श्वे पुष्यादिचतुर्दशनक्षत्राणि । पृष्ठेऽजवीथी ! उदरे आकाशगङ्गा ॥ ५ ॥ पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योः

आर्द्राश्लेषे दक्षिणवामयोः पादयोः। अभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोः। श्रवणपूर्वाषाढे दक्षिणवामयोर्नेत्रयोः धनिष्ठामूले दक्षिण-वामयोः कर्णयोः। मघादीन्यष्ट नक्षत्राणि वामपार्श्वास्थिषु। तथैव मृगशीर्षादीनि नक्षत्राणि दक्षिणपार्श्वास्थिषु प्रातिलोम्येन युञ्जीत शतभि-षाज्येष्ठे दक्षिणवामयोः स्कन्धयोः॥ ६॥ उत्तराहनावगस्तिः। अधराहनौ नक्षत्ररूपो यमः। मुखे मङ्गलः। उपस्थे शनिः। ककुदि बृह-स्पतिः। वक्षसि सूर्यः। हृदये नारायणः। मनसि चन्द्रः। नाभ्यां शुक्रः। स्तनयोरश्विनौ। प्राणापानयोर्बुधः। गले राहुः सर्वाङ्गेषु केतवः। रोमसु सर्वे तारागणाः॥७॥ एतद् भगवतः सर्वदेवतामयं रूपं प्रतिदिनं संध्यायां मौनयुक्तो निरीक्षन्नुपतिष्ठेत। नमो ज्योतिर्लोकाय कालाय-

उत्तराहनावगस्तिरधराहनौ यमो मुखेषु चाङ्गारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारा-यणो मनसि चन्द्रो नाभ्यामुशना स्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गले केतवः सर्वाङ्गेषु रोमसु सर्वे तारागणाः ॥ ७॥ एतदु हैव भगवतो विष्णोः सर्वदेवतामयं रूपमहरहः संध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत॥ नमो ज्योतिर्लोकाय कालायनायानिमिषां पतये महापुरुषायाभिधीमहीति॥ ग्रहर्क्षतारामयमाधिदैविकं पापापहं मन्त्रकृतां त्रिकालम्॥ नमस्यतः स्मरतो वा त्रिकालं नश्येत तत्कालजमाशु पापम्॥ ८॥ इति श्रीभागवते म० पञ्चम० शिशुमारसंस्थानं नाम त्रयोविंशतितमोऽध्यायः॥ २३॥ श्रीशुक उवाच॥ अधस्तात सवितुर्योजना-युते स्वर्भानुर्नक्षत्रवच्चरतीत्येके[1]॥ योऽसावमरत्वं ग्रहत्वं चालभत भगवदनुकम्पया स्वयमसुरापसदः सैंहिकेयो ह्यतदर्हः॥ तस्य तात जन्मकर्माणि चोपरिष्टाद् वक्ष्यामः॥ १॥

नायानिमिषां पतये महापुरुषाय अभिधीमहीति। तं शिशुमारं नमस्कारं कुर्वतो वा त्रिकालं स्मरतो वा नरस्य पापं नश्येत्॥८॥ इति श्रीभागवते चू० पञ्चम० त्रयोविंशोऽध्यायः॥ २३॥ एवं त्रिभिर्द्युमर्यादापालनं वर्णितं तथा। अधोभुवनमर्यादापालनं त्रिभिरुच्यते॥ १॥ चतुर्विंशे रवे-रर्वाक् स्वर्भान्वादिस्थितिः क्रमात्। अतलादिबिलस्वर्गमर्यादाः सप्त वर्णिताः॥ २॥ श्रीशुक उवाच॥ सूर्यस्याधस्तादयुतयोजने राहुः योऽसौ भगवदनुग्रहादमरत्वं ग्रहत्वं च लेभे। तज्जन्म कर्माणि च वक्ष्यामः॥ १॥

१ पूर्वोक्तमंत्रं जपताम्।

अथ सूर्यमण्डलमयुतयोजनं कथ्यते। चन्द्रस्य द्वादशसहस्रम्। राहोस्त्रयोदशसहस्रम्। यः पर्वणि पूर्ववैरेण सूर्याचन्द्रमसौ प्रतिधावति ॥२॥ तयोः रक्षणार्थं भगवत्प्रयुक्तचक्रस्य तेजसा भीतः सन् निवर्तते तद् ग्रहणमिति लोकाः वदन्ति ॥३॥ ततोऽधस्तात् सिद्धचारणादीनां स्थानानि ॥४॥ ततोऽधस्ताद् यक्षरक्षः पिशाचादीनां क्रीडास्थानमन्तरिक्षं यावन्मेघाः भ्रमते यावद् वायुर्वाति॥५॥ ततोऽधः शतयोजनान्तरे इयं पृथ्वी। यदु-

यददस्तरणेर्मण्डलं प्रतपतस्तद्विस्तरो योजनायुतमाचक्षते द्वादशसहस्रं सोमस्य त्रयोदशसहस्रं राहोर्यः पर्वणि तद्व्यवधानकृद् वैरानुबन्धः सूर्याचन्द्रमसावभिधावति ॥ २ ॥ तन्निशम्योभयत्रापि भगवता रक्षणाय प्रयुक्तं सुदर्शनं नाम भागवतं दयितमस्त्रं तत्तेजसा दुर्विषहं मुहुः परिवर्तमानमभ्यवस्थितो मुहूर्तमुद्विजमानश्चकितहृदय आरादेव निवर्तते तदुपरागमिति वदन्ति लोकाः ॥ ३ ॥ ततोऽधस्तात् सिद्धचारणविद्याधरणां सदनानि तावन्मात्र एव ॥४॥ ततोऽधस्तात् यक्षरक्षःपिशाचप्रेतभूतगणानां विहाराजिरमन्तरिक्षं यावद् वायुः प्रवाति यावन्मेघा उपलभ्यन्ते ॥५॥ ततोऽधस्ताच्छतयोजनान्तर इयं पृथिवी यावद्धंसभासश्येनसुपर्णादयः पतत्रिप्रवरा उत्पतन्तीति ॥ ६ ॥ उपवर्णितं भूमेर्यथासंनिवेशावस्थानमवनेरप्यधस्तात् सप्तभूविवरा एकैकशो योजनायुतान्तरेणायामविस्तारेणोपक्लृप्ताः ॥ अतलं १ वितलं २ सुतलं ३ तलातलं ४ महातलं ५ रसातलं ६ पातालम् ७ इति ॥ ७ ॥ एतेषु हि बिलस्वर्गेषु स्वर्गादप्यधिककामभोगैश्वर्यानन्दविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडविहारेषु दैत्यदानवकाद्रवेया नित्यप्रमुदितानुरक्तकलत्रापत्यबन्धुसुहृदनुचरा गृहपतय ईश्वरादप्यप्रतिहतकामा मायाविनोदा निवसंति ॥ ८ ॥

परि यावत् हंसश्येनादिपक्षिणः उत्पतन्ति तावद् भूर्लोकः॥६॥भूमेः संनिवेशावस्थानं वर्णितम्। अथ भूमेरधस्ताद् सप्त भूविवराणि एकैकशोऽयुत-योजनान्तरेणायामविस्तारेण स्थापितानि। तद्यथा। अतलं १, वितलं २, सुतलं ३, तलातलं ४, महातलं ५, रसातलं६, पातालम् ७ इति॥७॥ एषु बिलस्वर्गेषु स्वर्गादप्यधिककामभोगैश्वर्यानन्दविभूतिभिः समृद्धभवनोद्यानाक्रीडविहारेषु दैत्यदानवकाद्रवेयाः नित्यं हर्षिताः वसन्ति ॥८॥

येषु बिलेषु मायाविना मयेन निर्मिता मणिघटितविचित्रभवनप्राकारगोपुरसभादिभिरलंकृताः पुरः प्रकाशन्ते ॥ ९ ॥ येषूद्यानानि च पुष्पफलाढ्यवृक्षलतानां तथा विमलजलपूर्णानेकपक्षियुक्तानां जलाशयानां च श्रीभिः स्वर्गलोकश्रियोऽतिशयितानि चकासति ॥१०॥ यत्राहोरात्रादिभयं च नास्ति सूर्याद्यभावात् ॥११॥ यत्र सर्पशिरोमणयः सर्वैऽन्धकारं बाधन्ते ॥ १२ ॥ यत्र वसतां दिव्यौषधिरसरसायनान्नपानस्ना-

येषु महाराज मयेन मायाविना विनिर्मिताः पुरो नानामणिप्रवरप्रवेकविरचितविचित्रभवनप्राकारगोपुरसभाचैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैः समलंकृताश्चकासति ॥ ९ ॥ उद्यानानि चातितरां मनइंद्रियानंदिभिः कुसुमफलस्तवकसुभगकिसलयावनतरुचिरविटपविटपिनां लताङ्गालिङ्गितानां श्रीभिः समिथुनविविधविहङ्गमजलाशयानाममलजलपूर्णानां झषकुलोल्लङ्घनक्षुभितनीरनीरजकुमुदकुवलयकह्लारनीलोत्पललोहितशतपत्रादिवनेषु कृतनिकेतनानामेकविहाराकुलमधुरविविधस्वनादिभिरिन्द्रियोत्सवैरमरलोकश्रियमतिशयितानि ॥ १० ॥ यत्र ह वाव न भयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते ॥ ॥ ११ ॥ यत्र हि महाहिप्रवरशिरोमणयः सर्वे तमः प्रबान्धते ॥ १२ ॥ न वा एतेषु वसतां दिव्यौषधिरसरसायनान्नपानस्नानादिभिराधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यदौर्गन्ध्यस्वेदक्लमग्लानिरिति वयोऽवस्थाश्च भवन्ति ॥ १३ ॥ नहि तेषां कल्याणानां प्रभवति कुतश्चन मृत्युर्विना भगवत्तेजसश्चक्रापदेशात् ॥ १४ ॥ यस्मिन् प्रविष्टेऽसुरवधूनां प्रायः पुंसवनानि भयादेव स्रवंति पतंति च ॥ १५ ॥

नादिभिराधयो व्याधयो जरादयो वयोऽवस्थाः मृत्युश्च न भवति विना सुदर्शनात् ॥ १३ ॥ १४ ॥ यस्मिन् चक्रे प्रविष्टेऽसुरवधूनां गर्भाः स्रवंति पतन्ति च ॥ १५ ॥

अथातले मयपुत्रो बलो नाम निवसति यस्य जृम्भमाणस्य मुखतस्त्रयः स्त्रीगणा उत्पन्नाः स्वैरिण्यः कामिन्यः पुंश्चल्य इति । ताः बिलायनं प्रविष्टं पुरुषं हाटकाख्यरसेन भोगसमर्थं कृत्वा रमयन्ति । अयुतमहागजबलः पुरुषो यस्मिन् सिद्धोऽहमीश्वरोऽहमिति मन्यमानो मदान्ध इव कत्थते ॥ १६ ॥ ततोऽतलादधोऽयुतयोजनान्तरे वितले स्वगणावृतो हाटकेश्वरो भवान्या सहास्ते । तयोर्वीर्यतः प्रवृत्ता

अथातले मयपुत्रोऽसुरो बलो निवसति येन ह वा इह सृष्टाः षण्णवतिर्मायाः काश्चनाद्यापि मायाविनो धारयन्ति ॥ यस्य च जृम्भमाणस्य मुखतस्त्रयः स्त्रीगणा उदपद्यन्त स्वैरिण्यः कामिन्यः पुंश्चल्य इति ॥ या वै बिलायनं प्रविष्टं पुरुषं रसेन हाटकाख्येन साधयित्वा स्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिः स्वैरं किल रमयन्ति यस्मिन्नुपयुक्ते पुरुष ईश्वरोऽहं सिद्धोऽहमिति अयुतमहागजबल आत्मानमभिमन्यमानः कत्थते मदान्ध इव ॥१६॥ ततोऽधस्ताद् वितले हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूत आस्ते ॥ यतःप्रवृत्ता सरित्प्रवरा हाटकीनाम भवयोर्वीर्येण ॥ यत्र चित्रभानुर्मातरिश्वना समिध्यमान ओजसा पिबति ॥ तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं भूषणेनासुरेन्द्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयन्ति ॥ १७ ॥ ततोऽधस्तात् सुतल उदारश्रवाः पुण्यश्लोको विरोचनात्मजो बलिर्भगवता महेन्द्रस्य प्रियं चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा बटुवामनरूपेण पराक्षिप्तस्वलोकत्रयो भगवदनुकम्पयैव पुनः प्रवेशित इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाऽभिजुष्टः स्वधर्मेणाराधयंस्तमेव भगवन्तमाराधनीयमपगतसाध्वस आस्तेऽधुनाऽपि ॥ १८ ॥

हाटकी नाम नदी । तद्रेतोभूतमुदकमग्निर्वायुना दीप्तः सन् पिबति तेन फूत्कृत्य त्यक्तं तद् हाटकाख्यं सुवर्णं भवति । तत् पुरुषाः स्त्रीभिः सह धारयन्ति ॥१७॥ ततो वितलादधः सुतले पुण्यश्लोको विरोचनपुत्रः श्रीवामनेन हृतलोकत्रयः श्रियाऽभिजुष्टः स्वधर्मेण हरिमाराधयन् सन् बलिर्वसति ॥ १८ ॥

वासुदेवे पात्रे प्राप्ते सति प्रतिपादितस्य मोक्षहेतुत्वादेतत् सुतलैश्वर्यं भूदानस्य फलं न भवति ॥ १९ ॥ पुरुषो यस्य हरेः सकृन्नाम गृणन् कर्मबन्धं त्यजति ॥ २० ॥ तस्मिन् हरौ समर्पितभूदानस्येदं फलं न ॥ २१ ॥ भवानमुं बलिं नैवानुगृहीतवान् यतो भगवत्स्मृति-नाशकमैश्वर्यमेव ददौ ॥ २२ ॥ किंच भगवता याच्ञाच्छलेन हृतसर्वार्थो वरुणपाशैर्बद्धः सुतले प्रक्षिप्तोऽपि सन् बलिरुवाच ॥ २३ ॥

नो एवैतत्साक्षात्कारो भूमिदानस्य यत् तद्भगवत्यशेषजीवनिकायानां जीवभूतात्मभूते परमात्मनि वासुदेवे तीर्थतमे सर्वजीवनियन्तर्यात्मारामे पात्र उपपन्ने परया श्रद्धया परमादरसमाहितमनसा संप्रतिपादितस्य साक्षादपवर्गद्वारस्य यद्बिलनिलयैश्वर्यम् ॥ १९ ॥ यस्य ह वाव क्षुतपतनप्रस्खलनादिषु विवशः सकृन्नामाभिगृणन् पुरुषः कर्मबन्धनमञ्जसा विधुनोति ॥ यस्य हैव प्रतिबाधनं मुमुक्षवोऽन्यथैवोपलभन्ते ॥ २० ॥ तद्भक्तानामात्मवतां सर्वेषामात्मन्यात्मद आत्मतयैव ॥२१॥ न वै भगवान् नूनममुष्यानुजग्राह ॥ यदुत पुनरात्मानुस्मृतिमोषणं मायामय भोगैश्वर्यमेवातनुतेति ॥ २२ ॥ यद्भगवताऽनधिगतान्योपायेन याच्ञाच्छलेनापहृतस्वशरीरावशेषितलोकत्रयो वरुणपाशैश्च सम्प्रति मुक्तो गिरिदर्यां चापविद्ध इति होवाच ॥ २३ ॥ नूनं बतायं भगवानर्थेषु न निष्णातो योऽसाविन्द्रो यस्य सचिवो मन्त्राय वृत एकान्ततो बृहस्पतिस्तमतिहाय स्वयमुपेन्द्रेणात्मानमयाचत ॥ आत्मनश्चाशिषो नो एव तद्दास्यमतिगम्भीरवयसः कालस्य मन्वन्तरपरिवृतं कियल्लोकत्रयमिदम् ॥२४॥ यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तु स्वपित्र्यं यदुताकुतोभयं पदं दीयमानं भगवतः परमिति भगवतोपरते खलु स्वपितरि ॥२५॥

अहो ! यस्य बृहस्पतिः सहायः सोऽपि पुरुषार्थेषु न निपुणः यतो बृहस्पतिं विहाय वामनद्वारेण मां लोकत्रयं ययाचे ॥ २४ ॥ अस्मत्पितामहः प्रह्लादो हरेर्दास्यमेव वव्रे न राज्यम् ॥ २५ ॥

१ तस्य । २ यस्य कर्मबन्धस्य बाधनार्थं योगसांख्याविश्लेशाननुभवन्तीत्यर्थः । ३ तस्मिन्भक्तानाम् । ४ आत्मतयैव समर्पितस्य भूदानस्य फलं नेत्यर्थः । ५ तमुपेन्द्रम् । ६ भगवता दीयमानमपि भगवतःपरमन्यदिति कृत्वा न जग्राह ।

तस्य हरेर्मार्गे रागान्धः को वा गन्तुमर्हति ॥ २६ ॥ अथ बलेश्चरितमष्टमस्कन्धे विस्तरेण कथयिष्ये । यस्य द्वारि नारायणो गदापाणिः स्थितः । येन नारायणेन द्वारि विशन् रावणः पादाङ्गुष्ठेनोच्चाटितः ॥ २७ ॥ सुतलादधोऽयुतयोजनान्तरे तलातले महादेवेन रक्षितो गत-सुदर्शनभयो मयो नाम दानव आस्ते ॥२८॥ ततोऽधो महातले काद्रवेयसर्पाणां क्रोधवशो नाम गणः ते कुहकतक्षककालियप्रधानाः गरुडाद्

तस्य महानुभावस्यानुपथममृजितकषायः को वाऽस्मद्विधः परिहीणभगवदनुग्रह उपजिगमिषतीति ॥ २६ ॥ अथ तस्यानुचरितमुपरिष्टाद् विस्तरिष्यते यस्य भगवान् स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते निज जनानुकम्पितहृदयो येनाङ्गुष्ठेन पदा दशकन्धरो योजनायुतायुतं दिग्विजय उच्चाटितः ॥ २७ ॥ ततोऽधस्तात् तलातले मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता पुरारिणा त्रिलोकीशं चिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादा-ल्लब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते ॥ २८ ॥ ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशो नाम गणः कुहकतक्षककालियसुषेणादिप्रधाना महाभोगवन्तः पतत्रि-राजाधिपतेः पुरुषवाहादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्कुटुम्बसङ्गेन क्वचित् प्रमत्ता विहरन्ति ॥ २९ ॥ ततोऽधस्ताद्रसातले दैतेया दानवाः पणयो नाम निवातकवचाः कालेया हिरण्यपुरवासिन इति विबुधप्रत्यनीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकानुभावस्य हरेरेव तेजसा प्रतिहतबलावलेपा बिलेशया इव वसन्ति ये वै सरमयेन्द्रदूत्या वाग्भिर्मन्त्रवर्णाभिरिन्द्राद् बिभ्यति ॥ ३० ॥

भीताः क्वचित् प्रमत्ताः सन्तः स्त्रीपुत्रादिसङ्गेन विहरन्ति ॥ २९ ॥ ततोऽधो रसातले दैतेयाः दानवाः पणयो निवातकवचाः सन्ति । ते च सरमानाम्न्येन्द्रदूत्योक्ताभिर्वाग्भिरिन्द्राद् बिभ्यति ॥ ३० ॥

---

१ देवशत्रवः । २ एवं हि वैदिकमाख्यानम् । पणिभिरसुरैर्निगूढां गामन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितां संधिमिच्छन्तः पणयः प्राहुः किमिच्छन्ती सरमेत्यादि । सा च संधिमन्विच्छन्तीन्नस्तुतिपूर्वकं तान्प्रतिपुरुषमाह । हता इंद्रेण पणयः शयध्वमित्यादि । तच्छ्रुत्वा बिभ्यतीति ।

ततो रसातलादधः पाताले नागाः वासुकिशङ्खकुलिकश्वेतधनञ्जयशङ्खचूडादयो निवसन्ति । तेषां फणासु स्थिताः मणयः पातालान्धकारं नाशयन्ति ॥३१॥ इति श्रीभागव० चू० चतुर्विंशोऽध्यायः ॥ २४ ॥ पञ्चविंशे ततोऽधस्तादाह शेषस्य संस्थितिम् । संजिहीर्षोरिदं काले यत्र रुद्रसमुद्भवः ॥१॥ श्रीशुक उवाच ॥ अथ पातालस्य मूलप्रदेशे त्रिंशत्सहस्रयोजनान्तरे भगवत्कलाऽनन्तः आस्ते । भक्ताः यं चतुर्व्यूहोपासने



ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकमहाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति ॥ येषामु ह वै पञ्चसप्तदशशतसहस्रशीर्षाणां फणासु विरचिता महामणयो रोचिष्णवः पातालविवरतिमिरनिकरं स्वरोचिषा विधमन्ति ॥ ३१ ॥ इति श्रीभागवते म० पञ्चम० अतलादिबिलवर्णनं नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥ श्रीशुक उवाच ॥ तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्याताऽनन्त इति सात्त्वतीया द्रष्टृदृश्ययोः संकर्षणमहमित्यभिमानलक्षणं यं संकर्षणमित्याचक्षते ॥ १ ॥ यस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षाणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते ॥ २ ॥ यस्य ह वा इदं कालेनोपसंजिहीर्षतोऽमर्षविरचितरुचिरभ्रमद्भ्रुवोरन्तरेण सांकर्षणो नाम रुद्र एकादशव्यूहस्त्र्यक्षस्त्रिशिखं शूलमुत्तम्भयन्नुदतिष्ठत् ॥ ३ ॥ यस्याङ्घ्रिकमलयुगलारुणविशदनखमणिखण्डमण्डलेष्वहिपतयः सह सात्त्वतर्षभैरेकान्तभक्तियोगेनावनमन्तः स्ववदनानि परिस्फुरत्कुण्डलप्रभामण्डलमण्डितगण्डस्थलान्यतिमनोहराणि प्रमुदितमनसः खलु विलोकयन्ति ॥ ४ ॥



संकर्षणमिति कत्थन्ते ॥ १ ॥ यस्य मूर्धनि भूमण्डलं सर्षप इव लक्ष्यते ॥ २ ॥ विश्वं संहर्तुर्यस्य भ्रूमध्यतः सांकर्षणो नाम रुद्रस्त्रिनेत्रस्त्रिशूलमुत्तम्भयन्नुदतिष्ठत् ॥ ३ ॥ यस्य चरणकमलनखमण्डलमणिषु नमन्तो नागपतयः स्ववदनानि विलोकयन्ति ॥ ४ ॥

---

१ सात्त्वततन्त्रनिष्ठाः । २ सम्यक्कर्षणमेकीकरणं येन तम् ।

किंच नागराजकुमार्यो यस्य वदनारविन्दं सव्रीडं पश्यन्ति ॥ ५ ॥ स भगवान् संहृतक्रोधः सन् लोकानां स्वस्तय आस्ते ॥ ६ ॥ स च देव दैत्यसिद्धगन्धर्वादिभिर्ध्यायमानः एककुण्डलो नवतुलसिकायाः सुगन्धमधुरसेन माद्यन्मधुकराणां मधुरगीतेन शोभितां स्वां वनमालां वैज-

यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वङ्गवलयविलसितविशदविपुलधवलसुभगरुचिरभुजरजतस्त-म्भेष्वगुरुचन्दनकुंकुमपङ्कानुलेपेनावलिम्पमानास्तदभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरा-गमदमुदितमदविघूर्णितारुणकरुणावलोकनयनवदनारविन्दं सव्रीडं किल विलोकयन्ति ॥ ५ ॥ स एव भगवा-ननन्तोऽनन्तगुणार्णव आदिदेव उपसंहृतामर्षरोषवेगो लोकानां स्वस्तय आस्ते ॥ ६ ॥ ध्यायमानः सुरासुरोरग-सिद्धगन्धर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृतविह्वललोचनः सुललितमुखरिकामृतेनाप्यायमानः स्वपार्षद-विबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेन माद्यन्मधुकरव्रातमधुरगीतश्रियं वैजयन्तीं स्वां वन-मालां नीलवासा एककुण्डलो हलककुदि कृतसुभगसुन्दरभुजो भगवान् माहेन्द्रो वारणेन्द्र इव काञ्चनीं कक्षामुदार-लीलो बिभर्ति ॥ ७ ॥ य एष एवमनुश्रुतो ध्यायमानो मुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयं हृदय-ग्रन्थिं सत्त्वरजस्तमोमयमन्तर्हृदयं गत आशु निर्भिनत्ति तस्यानुभावान् भगवान् स्वायंभुवो नारदः सह तुम्बुरुणा सभायां ब्रह्मणः संश्लोकयामास ॥८॥ उत्पत्तिस्थितिलयहेतवोऽस्य कल्पाः सत्त्वाद्याः प्रकृतिगुणा यदीक्षयाऽऽसन् ॥ यद्रूपं ध्रुवमकृतं यदेकमात्मन् नानाऽधात् कथमु ह वेद तस्य वर्त्म ॥ ९ ॥ मूर्तिं नः पुरुकृपया बभार सत्त्वं संशुद्धं सदसदिह विभाति यत्र ॥ यल्लीलां मृगपतिराददेऽनवद्यामादातुं स्वजनमनांस्युदारवीर्यः ॥ १० ॥

यन्तीं च बिभर्ति ॥ ७ ॥ तस्यानुभावान् नारदस्तुम्बुरुणा सह ब्रह्मसभायां वर्णयामास ॥ ८ ॥ किंच जगदुत्पत्त्यादिहेतवः सत्त्वादिगुणाः यस्येक्षया स्वस्वकार्ये समर्थाः आसन् ॥ ९ ॥ यत्र विश्वं सदसद् विभाति स भक्तानां कृपया सत्त्वमूर्तिं दधार ॥ १० ॥

१ भुजा एव रजतस्तम्भाः । २ वस्त्रम् । ३ अनादि । ४ आत्मनि । ५ नानाकायप्रपञ्चमधात् । ६ मृगपतिरिवोदारवीर्यः । मृग्यन्ते इति मृगाः कामप्रदास्तेषां पतिर्वा ।

यस्य नाम श्रुतं कीर्तितं सद् नृणां पापं हन्ति ॥११॥ यस्य मूर्धनि स्थापितो भूगोलः तस्य वीर्याणि सहस्रजिह्वोऽपि को गणयेत् ॥ १२ ॥ एवं प्रभावो भगवान् रसातलस्य मूले स्थितः सन् विश्वपालनाय भूमिं बिभर्ति ॥१३॥ हे राजन् ! एवं यथाकर्मनिर्मिताः उच्चावचाः गतयो वर्णिताः ॥ १४ ॥ अन्यत् किं कथयामः ॥ १५ ॥ इति श्रीभागव० चू० पञ्चम० पातालवर्णनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ षड्विंशे तु

यन्नाम श्रुतमनुकीर्तयेदकस्मादार्तो वा यदि पतितः प्रलम्भनाद्वा ॥ हन्त्यंहः सपदि नृणामशेषमन्यं कं शेषाद्भगवत आश्रयेन्मुमुक्षुः ॥ ११ ॥ मूर्धन्यर्पितमणुवत् सहस्रमूर्धो भूगोलं सगिरिसरित्समुद्रसत्त्वम् ॥ आनन्त्यादनिमितविक्रमस्य भूम्नः को वीर्याण्यधिगणयेत् सहस्रजिह्वः॥१२॥एवंप्रभावो भगवाननन्तो दुरन्तवीर्योरुगुणानुभावः ॥ मूले रसायाः स्थित आत्मतन्त्रो यो लीलया क्ष्मां स्थितये बिभर्ति ॥ १३ ॥ एता ह्येवेह नृभिरुपगन्तव्या गतयो यथाकर्मनिर्मिता यथोपदेशमनुवर्णिताः कामान् कामयमानैः ॥ १४ ॥ एतावतीर्हि राजन् पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशा यथाप्रश्नं व्याचख्ये किमन्यत् कथयाम इति ॥१५॥इति श्रीभागवते महा० पञ्चमस्कन्धे पातालवर्णने शेषमहाराजस्वरूपवर्णनं नाम पञ्चविंशतितमोऽध्यायः ॥ २५ ॥ राजोवाच ॥ महर्षे एतद् वैचित्र्यं लोकस्य कथमिति ॥१॥ ऋषिरुवाच ॥ त्रिगुणत्वात् कर्तुः श्रद्धयाः कर्मगतयः पृथग्विधाः सर्वा एक सर्वस्य तारतम्येन भवन्ति ॥२॥ अथेदानीं प्रतिषिद्धलक्षणस्याधर्मस्य तथैव कर्तुः श्रद्धाया वैसादृश्यात् कर्मफलं विसदृशं भवति या ह्यनाद्यविद्यया कृतकामानां तत्परिणामलक्षणाः सृतयः सहस्रशः प्रवृत्ता तासां प्राचुर्येणानुवर्णयिष्यामः ॥ ३ ॥



ततोऽधस्तान्नरकस्थितिरुच्यते ॥ पापिनो यत्र दह्यन्ते यमदूतैर्यथायथम् ॥ १ ॥ राजोवाच ॥ हे महर्षे ! एतद् लोकस्य वैचित्र्यं कथम् ॥ १ ॥ श्रीशुक उवाच ॥ नृप ! कर्तुस्त्रिगुणत्वात् श्रद्धया भिन्ना एव कर्मगतयः सर्वा एव सर्वेषां श्रद्धातारतम्येन भवन्ति ॥ २ ॥ अविद्याकृतकामपरिणामलक्षणाः नरकाः सहस्रशः प्रवृत्ताः । तान् वर्णयिष्यामः ॥ ३ ॥

१ परिहासात् । २ प्रतिषिद्धे निषेध एव लक्षणं यस्य तस्य ।

राजोवाच। हे भगवन् ! नरकाः नाम किं देशविशेषास्त्रिलोक्याः बहिर्वा मध्ये वा सन्ति तत् कथ्यताम् ॥४॥ श्रीशुक उवाच ॥ जगत्याः अन्तराले दिशि दक्षिणस्यां भूमेरधस्तात् जलादुपरि नरकाः सन्ति ॥५॥ यत्र भगवान् पितृराजो यमो मृतजन्तूनां कर्मानुरूपं दण्डं करोति। अथ तान-ष्टाविंशतिनरकान् नामरूपलक्षणतः कथयामि शृणु। तामिस्रः १, अन्धतामिस्रः २, रौरवः ३, महारौरवः ४, कुम्भीपाकः ५, कालसूत्रम् ६, असिपत्रवनम् ७, सूकरमुखम् ८, अन्धकूपः ९, कृमिभोजनः १०, संदंशः ११, तप्तसूर्मिः १२, वज्रकण्टकशाल्मली १३, वैतरणी १४,

राजोवाच ॥ नरका नाम भगवन् किं देशविशेषा अथवा बहिस्त्रिलोक्या आहोस्विदन्तराल इति ॥ ४ ॥ ऋषिरु-वाच ॥ अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद् भूमेरुपरिष्टाच्च जलाद् यस्मामग्निष्वात्तादयः पितृ-गणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना निवसन्ति ॥ ५ ॥ यत्र ह वाव भगवान् पितृराजो वैवस्वतःस्वविषयं प्रापितेषु स्वपुरुषैर्जन्तुषु संपरेतेषु यथाकर्मावद्यं दोषमेवानुल्लङ्घितभगवच्छासनः सगणो दमं धारयति ॥ तत्र हैके नरकानेकविंशतिं गणयन्ति ॥ अथ तांस्ते राजन् नामरूपलक्षणतोऽनुक्रमिष्यामः ॥ तामि-स्रोऽन्धतामिस्रो रौरवो महारौरवः कुम्भीपाकः कालसूत्रमसिपत्रवनं सूकरमुखमन्धकूपः कृमिभोजनः संदंशस्तप्त-सूर्मिर्वज्रकण्टकशाल्मली वैतरणी पूयोदः प्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयःपानमिति ॥ किंच क्षारकर्दमो रक्षोगणभोजनः शूलप्रोतो दन्दशूकः अवटनिरोधनः पर्यावर्तनः सूचीमुखमित्यष्टाविंशतिनरका-विविधयातनाभूमयः ॥ ६ ॥ तत्र यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकै-स्तामिस्रे नरके बलान्निपात्यते ॥ अनशनानुदपानदण्डताडनसंतर्जनादिभिर्यातनाभिर्यात्यमानो जन्तुर्यत्र कश्मल-मासादित एकदैव मूर्च्छामुपयाति तामिस्रप्राये ॥ ७ ॥

पूयोदः १५, प्राणरोधः १६, विशसनम् १७, लालाभक्षः १८, सारमेयादनम् १९, अवीचिः २०, अयःपानम् २१, क्षारकर्दमः २२, रक्षोगण-भोजनः २३ः शूलप्रोतः २४, दन्दशूकः २५, अवटनिरोधः २६, पर्यावर्तनः २७, सूचीमुखः २८ इति नरकाः सन्ति ॥ ६ ॥ तत्र यः परद्रव्य पुत्रकलत्राणि हरति स दूतैः पाशबद्धस्तामिस्रे नरके निपात्यते ! अनशनाज्जलपानताडनादिभिर्दुःखं याति ॥ ७ ॥

यः पुरुषं वञ्चयित्वा दारादीनुपभुङ्क्ते सोऽन्धतामिस्रे पतति। यत्र यातनायां स्थितो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति ॥८॥ यस्तु ममेदमहमिति मत्वा भूतद्रोहेण स्वकुटुम्बमेव पुष्णाति स रौरवे निपतति ॥९॥ यथा ये तेन हिंसिताः जन्तवस्त एव परलोके रुरवो भूत्वा तं खादन्ति ॥१०॥ यः केवलं देहंभरः स महारौरवे निपतति। तत्र क्रव्यादाः नाम रुरवस्तस्य मांसं खादन्ति ॥११॥ यस्तु सजीवान् पशून् पक्षिणो वा पचति तं

एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं दारादीनुपयुङ्क्ते ॥ यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं तमुपदिशन्ति ॥ ८ ॥ यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं स्वकुटुम्बमेवानुदिनं प्रपुष्णाति स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति ॥९॥ ये त्विह यथैवामुना विहिंसिता जन्तवः परत्र यमयातनामुपगतं त एव रुरवो भूत्वा तथा तमेव विहिंसन्ति तस्माद् रौरवमित्याहुः॥ रुरुरिति सर्पादतिक्रूरसत्त्वस्यापदेशः ॥ १० ॥ एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति यः केवलं देहंभरः ॥ ११ ॥ यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणत उपरन्धयति तमपकरुणं पुरुषादैरपि विगर्हितममुत्र यमानुचराः कुम्भीपाके तप्ततैले उपरन्धयन्ति ॥ १२ ॥ यस्त्विह पितृविप्रब्रह्मध्रुक् स कालसूत्रसंज्ञके नरकेऽयुतयोजनपरिमण्डले ताम्रमये तप्तखले उपर्यधस्तादग्न्यर्काभ्यामतितप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्यमानान्तर्बहिश्शरीर आस्ते शेते चेष्टतेऽवतिष्ठति परिधावति च यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि ॥ १३ ॥ यस्त्विह वै निजवेदपथादनापद्यपगतः पाखण्डं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरन्ति तत्र हासावितस्ततो धावमान उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वाङ्गो हा हतोऽस्मीति तया परमया वेदनया मूर्च्छितः पदे पदे निपतति स्वधर्महा पाखण्डानुगतं फलं भुङ्क्ते ॥ १४ ॥



परलोके यमदूतास्तप्ततैले कुम्भीपाकनामनरके रन्धयन्ति ॥१२॥ यश्च पितृविप्रध्रुक् स तप्तताम्रमये समदेशे कालसूत्राख्ये पतति। तत्र क्षुत्पिपासाभ्यां दह्यमानः पशुरोमसमसंख्यासहस्रवर्षाणि निवसति ॥१३॥ यस्तु स्ववेदमार्गं त्यक्त्वा पाखण्डं श्रितः तं दूताः असिपत्रवनं प्रवेश्य कशया प्रहरन्ति असिपत्रैश्छिद्यमानसर्वांगो हा हतोऽस्मीति वेदनया तत्र मूर्च्छितः पदे पदे निपतति। स्वधर्मत्यागी पाखण्डमार्गफलं भुङ्क्ते ॥१४॥

यस्तु राजा राजसेवको वा अदण्ड्यं दण्डे ब्राह्मणे शरीरदण्डं वा करोति स सूकरमुखे निपतति । तत्रेक्षुदण्डवत् निष्पिष्यमाणावयवः क्वचिन्मूर्छितो दुखं प्राप्नोति ॥ १५ ॥ यश्चेश्वरकल्पितवृत्तीनां भूतानां व्यथां करोति सोऽन्धकूपे पतति । तत्र तैः पशुपक्षिमृगसर्पवृश्चिकमशकयूकामत्कुणमक्षिकादिभिः पीड्यमानो दुःखं प्राप्नोति ॥१६॥ अकृतपञ्चमहायज्ञो यो भुङ्क्ते स कृमिकुण्डे कृमिभूतः कृमिभिर्भक्ष्यमाणः कृमि-

यस्त्विह वै राजा राजपुरुषो वा अदण्ड्ये दण्डं प्रणयति ब्राह्मणे वा शरीरदण्डं स पापीयान् नरकेऽमुत्र सूकरमुखे निपतति तत्रातिबलैर्विनिष्पिष्यमाणावयवो यथैवेहेक्षुखण्ड आर्तस्वरेण स्वनयन् क्वचिन्मूर्च्छितः कश्मलमुपगतो यथैवेहादृष्टदोषा उपरुद्धाः ॥ १५ ॥ यस्त्विह वै भूतानामीश्वरोपकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथो व्यथामाचरति स परत्रान्धकूपे तदभिद्रोहेण निपतति ॥ तत्र हासौ तैर्जन्तुभिः पशुमृगपक्षिसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्ये के चाभिद्रुग्धास्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः ॥१६॥ यस्त्विह वा असंविभज्याश्नाति यत्किंचनोपनतमनिर्मितपञ्चयज्ञो वायससंस्तुतः स परत्र कृमिभोजने नरकाधमे निपतति तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते ॥ १७ ॥ यस्त्विह वै स्तेयेन बलाद् वा हिरण्यरत्नादीनि ब्राह्मणस्य वाऽपहरति अन्यस्य वाऽनापदि पुरुषस्तममुत्र राजन् यमपुरुषा अयस्मयैरग्निपिण्डैः संदंशैस्त्वचि निष्कुषन्ति ॥ १८ ॥ यस्त्विह वा अगम्यां स्त्रियमगम्यं वा पुरुषं योषिदभिगच्छति तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषरूपया सूर्म्या ॥ १९ ॥

भोजनो भवति॥१७॥यस्तु चौर्येण बलात्कारेण वा द्विजस्यान्यस्य वा सुवर्णरत्नादीनि हरति स संदंशे पतति यत्र तं लोहमयैः संदंशैश्छिन्दन्ति ॥१८॥ अगम्यां स्त्रियं यः पुरुषो गच्छति स्त्री वा अगम्यं पुरुषं तौ कशया ताडितौ तप्तसूर्मिनामनरके तप्तलोहमय्यां प्रतिमायां बध्येते॥१९॥

---

१ वायसैः समत्वेन वर्णितः । २ यावत्तत्पातकम् । ३ अकृतप्रायश्चित्तम् ।

यस्तु पश्वादिषु गमनं करोति तं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति ॥२०॥ ये तु राजन्याः राजपुरुषाः वा धर्ममार्गान् भिन्दन्ति ते विष्ठा-मूत्रपूयशोणितकेशनखास्थिमेदोमांसवाहिन्यां वैतरण्यां पतन्ति॥२१॥ ये तु शूद्रीपतयो नष्टशौचाचाराः पशुचर्यां चरन्ति ते प्रेत्य विण्मूत्रश्लेष्म-मलपूर्णसमुद्रे पतन्ति। तदेव खादन्ति॥२२॥ अश्वगर्दभपतयो मृगयाविहाराः अतीर्थे ये मृगान् घ्नन्ति तान् दूताः प्राणरोधबाणैर्विध्यन्ति ॥२३॥

यस्त्विह वै सर्वाभिगमस्तममुत्र निरये वर्तमानं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति ॥२०॥ ये त्विह वै राजन्या राजपुरुषा वा अपाखण्डा धर्मसेतून् भिन्दन्ति ते संपरेत्य वैतरण्यां निपतन्ति भिन्नमर्यादास्तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानाश्चासुभिरुह्यमानाः स्वाघेन कर्मपाकमनुस्मरन्त उपतप्यन्तो विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यन्ते ॥२१॥ ये त्विह वै वृषलीपतयो नष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरन्ति ते चापि प्रेत्य पूयविण्मूत्रश्लेष्ममलपूर्णार्णवे निपतन्ति तदेवातिबीभत्सितमश्नन्ति ॥ २२ ॥ ये त्विह वै श्वगर्दभपतयो ब्राह्मणादयो मृगयाविहारा अतीर्थे च मृगान् निघ्नन्ति तानपि संपरेताँल्लक्ष्यभूतान् यमपुरुषा इषुभिर्विध्यन्ति ॥ २३ ॥ ये त्विह वै दाम्भिका दम्भयज्ञेषु पशून् विशसन्ति तानमुष्मिँल्लोके वैशसे नरके पतितान् निरयपतयो यातयित्वा विशसन्ति ॥ २४ ॥ यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पाययति काममोहितस्तं पापकृतममुत्र रेतःकुल्यायां पातयित्वा रेतः संपाययन्ति ॥२५॥ ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजानो राजभटा वा तांश्चापि हि परेत्य यमदूता वज्रदंष्ट्राः श्वानः सप्त शतानि विंशतिश्च सरभसं खादन्ति ॥ २६ ॥



ये दाम्भिकाः दम्भयज्ञेषु पशून् पातयन्ति तान् वैशसनामनरके दूताः घातयन्ति ॥२४॥ यस्तु सवर्णां भार्यां द्विजो रेतः पाययति तं लालाभक्षे नरके निपात्य रेतः पाययन्ति ॥ २५ ॥ ये तु चोररूपाः राजानो राजदूताः वा ग्रामादीन् लुण्ठन्ति तान् वज्रदंष्ट्राः विंशत्युत्तरसप्तशतश्वानः (७२०) खादन्ति ॥ २६ ॥

यस्तु साक्ष्ये मिथ्या वदति सोऽवीचिनामनरके योजनशतोच्छ्रायाद् गिरिमस्तकान्निपात्यते ॥ २७ ॥ यो विप्रो राजन्यो वैश्यो वा तद्भार्या वा प्रमादतः सुरां पिबति तानयःपाननामनरके निपात्य तेषां मुखे वह्निना द्रवीभूतं लोहरसं निषिञ्चन्ति ॥ २८ ॥ यः आत्मसंभावनेन जन्मतपोविद्यावर्णाश्रमवतः श्रेष्ठान् न बहु मन्येत स क्षारकर्दमे निपतति यातनाश्च भुङ्क्ते ॥ २९ ॥ ये पुरुषाः इह पुरुषमेधेन भैरवादीन् यजन्ते

यस्त्विह वा अनृतं वदति साक्ष्ये द्रव्यविनिमये दाने वा कथंचित् स वै प्रेत्य नरकेऽवीचिमत्यधश्शिरा निरवकाशे योजनशतोच्छ्रायाद् गिरिमूर्ध्नः संपात्यते यत्र जलमिव स्थलमश्मपृष्ठमवभासते तदवीचिमत् तिलशो विशीर्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति ॥ २७ ॥ यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुरां व्रतस्थोऽपि वा पिबति प्रमादतस्तेषां निरयं नीतानामुरसि पदाऽऽक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति ॥ २८ ॥ अथ च यस्त्विह वा आत्मसंभावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहु मन्येत स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरा निपातितो दुरन्ता यातना ह्यश्नुते ॥ २९ ॥ ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून् खादन्ति तांश्च ते पशव इव निहता यमसदने यातयन्तो रक्षोगणाः सौनिका इव स्वधितिनाऽवदायासृक् पिबन्ति नृत्यन्ति च गायंति च हृष्यमाणा यथेह पुरुषाः ॥ ३० ॥ ये त्विह वा अनागसोऽरण्ये ग्रामे वा वैश्रम्भिकैरुपसृतानुपविश्रम्भय्य जिजीविषून् शूलसूत्रादिषूपप्रोतान् क्रीडनकतया घातयन्ति तेऽपि च प्रेत्य यमयातनासु शूलादिषु प्रोतात्मानः क्षुत्तृड्भ्यां वाऽभिहताः कङ्कवटादिभिश्चेतस्ततस्तिग्मतुण्डैराहन्यमाना आत्मशमलं स्मरन्ति ॥ ३१ ॥

याः कामरूपाः स्त्रियो नृपशून् खादन्ति तान् परलोके तैर्नाशिताः पशवो रक्षोगणा भूत्वा शस्त्रेण छित्वा तद्रक्तं पिबन्ति नृत्यन्ति च ॥३०॥ य इह निरपराधान् पशून् विपिने ग्रामे वा विश्वास्य शूलसूत्रादिषु प्रोतान् घातयन्ति ते प्रेत्य शूलादिषु प्रोताः कङ्कवटादिभिः प्रतुद्यमानाः स्वपापं स्मरन्ति ॥ ३१ ॥

ये भूतानि त्रासयन्ति ते दन्दशूकनामनरके निपतन्ति यत्र पञ्चमुखाः सप्तमुखाः सर्पाः मूषकानिव तान् ग्रसन्ति ॥३२॥ ये गृहादिषु भूतानि रुन्धन्ति तान् परलोकेऽवटनिरोधनामनरके सविषवह्निना धूमेन निरुन्धन्ति ॥३३॥ योऽतिथीनभ्यागतान् वक्रदृष्ट्या निरीक्षते तस्य नेत्रे वज्र-



ये त्विह वै भूतान्युद्वेजयन्ति नरा उल्बणस्वभावा यथा दन्दशूकास्तेऽपि प्रेत्य नरके दन्दशूकाख्ये निपतन्ति यत्र नृप दन्दशूकाः पञ्चमुखाः सप्तमुखा उपसृत्य ग्रसन्ति यथा बिलेशयान् ॥ ३२ ॥ ये त्विह वा अन्धावटकुशूल गुहादिषु भूतानि निरुन्धन्ति तथाऽमुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन निरुन्धन्ति ॥ ३३ ॥ यस्त्विह वा अतिथीनभ्यागतान् वा गृहपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते तस्य वाऽपि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्राः कङ्ककाकवटादयः प्रसह्योरुबलादुत्पाटयन्ति ॥ ३४ ॥ यस्त्विह वा आढ्याभिमतिरहंकृतिस्तिर्यक् प्रेक्षणः सर्वतोऽभिविशङ्की अर्थव्ययनाशचिन्तया परिशुष्यमाणहृदयवदनो निर्वृत्तिमनवगतो ग्रह इवार्थमभिरक्षति स चापि प्रेत्य तदुत्पादनोत्कर्षणसंरक्षणशमलग्रहः सूचीमुखे नरके निपतति यत्र ह वित्तग्रहं पापपुरुषं धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रैः परिवयन्ति ॥३५॥ एवंविधा नरका यमालये संति शतशः सहस्रशः ॥ तेषु सर्वेषु च सर्व एवाधर्मवर्तिनो ये केचिदिहोदिता अनुदिताश्चावनिपते पर्यायेण विशंति तथैव धर्मानुवर्तिन इतरत्र ॥ इह तु पुनर्भवे त उभयशेषाभ्यां निविशंति ॥ निवृत्तिलक्षमार्ग आदावेव व्याख्यातः एतावनेवाण्डकोशो यश्चतुर्दशधा पुराणेषु विकल्पित उपगीयते यत् तद्भगवतो नारायणस्य साक्षान्महापुरुषस्य स्थविष्ठंरूपमात्ममायागुणमयमनुवर्णित-मादृतः पठति शृणोति श्रावयति स उपगेयं भगवतः परमात्मनोऽग्राह्यमपि श्रद्धाभक्तिविशुद्धबुद्धिर्वेद ॥ ३६ ॥

तुण्डाः गृध्राः कङ्ककाकवटादयः पर्यावर्तननामनरके बलात् समुत्पाटयन्ति ॥३४॥ यो धनगर्वितो मानी द्रव्यनाशचिन्तया शुष्यद्वदनहृदयो ग्रह इव धनं रक्षति स प्रेत्य सूचीमुखनामनरके पतति यत्र दूतास्तमङ्गेषु सूत्रैर्बध्नन्ति ॥ ३५ ॥ हे नृप ! एवंविधाः नरकाः यमालये सन्ति ।

तेषु पापकृतो यथाकर्म प्रविशन्ति । धार्मिकास्तु स्वर्गादौ प्रविशन्ति । धर्माधर्मशेषाभ्यां मर्त्यलोके प्रविशन्ति । निवृत्तिमार्गो द्वितीयस्कन्धे कथितः । एतावानेवाण्डकोशः पुराणेषु चतुर्दशधा विकल्पेन गीयते । एतद्भगवतः स्थूलं मायामयं रूपं यः आदरेण पठति शृणोति श्रावयति स भक्त्या विशुद्धबुद्धिः परमं वेत्ति ॥ ३६ ॥ यत्नशीलो नरो भगवतः स्थूले रूपे निर्जितं मनो बुद्ध्या शनैः सूक्ष्मे रूपे नयेत्

श्रुत्वा स्थूलं तथा सूक्ष्मं रूपं भगवतो यतिः ॥ स्थूले निर्जितमात्मानं शनैः सूक्ष्मे धिया नयेत् इति ॥ ३७ ॥ भूद्वीपवर्षसरिदद्रिनभस्समुद्रपातालदिङ्नरकभागणलोकसंस्था ॥ गीता मया तव नृपाद्भुतमीश्वरस्य स्थूलं वपुः सकलजीवनिकायधाम ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे अष्टादशसाहस्र्यां संहितायां वैयासिक्यां नरकानुवर्णनं नाम षड्विंशतितमोऽध्यायः ॥२६॥ हरिः ॐ ॥ समाप्तोऽयं पञ्चमस्कन्धः ॥

॥ ३७ ॥ हे नृप ! भूद्वीपखण्डनदीपर्वताकाशसमुद्रपातालदिङ्नरकज्योतिश्चक्रसंस्था मया तुभ्यं कथिता । ईश्वरस्य स्थूलं रूपमिदं ते वर्णितम् ॥ ३८ ॥ इति श्रीभागवते महा० चूर्णिकायां पञ्चमस्कन्धे नरकवर्णनं नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

इदं पुस्तकं क्षेमराज–श्रीकृष्णदास श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गल्ली खम्बाटा लैन ) स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् ) मुद्रणागारेऽङ्कयित्वा प्रकाशितम् ।



परीक्षिदि
शुक
यमदूत
विष्णुदूत
अजामिल
विष्णुदूत
विश्वरूप
देव
वृत्रासुर
इंद्र
स्त्रिया
अंगिरा
नारद
चित्रकेतु
मृतपुत्र
शंकर
चित्रकेतु
विमाता
इंद्र
दिति

श्रीगणेशाय नमः ॥ अध्यायैकोनविंशत्या षष्ठे पोषणमुच्यते॥ अतिलङ्घितमर्यादभक्तरक्षणलक्षणम् ॥ १ ॥ तत्रादौ प्रथमे विष्णोर्दूतैः पातकि-
मोचने ॥ तत्पापख्यापनायोक्तं याम्यैर्धर्मादिलक्षणम् ॥२॥ राजोवाच ॥ हे ब्रह्मन् ! भवता क्रमेणादौ निवृत्तिमार्गः कथितः येन मार्गेण ब्रह्मणा
सह मोक्षो भवति ॥१॥ पुनर्गुणसर्गभोगार्थं देहारम्भमार्गः प्रवृत्तिलक्षणः कथितः॥२॥ अधर्मलक्षणाः नानानरकाश्च वर्णिताः ॥३॥ प्रियव्रतो-

श्रीगणेशाय नमः ॥ ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ निवृत्तिमार्गः कथित आदौ भगवता यथा ॥ क्रम-
योगोपलब्धेन ब्रह्मणा यदसंसृतिः ॥ १ ॥ प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने ॥ योऽसावलीनप्रकृतेर्गुणसर्गः पुनः
पुनः ॥ २ ॥ अधर्मलक्षणा नानानरकाश्चानुवर्णिताः ॥ मन्वन्तरश्च व्याख्यात आद्यः स्वायंभुवो यतः ॥ ३ ॥ प्रिय
व्रतोत्तानपदोर्वंशस्तच्चरितानि च ॥ द्वीपवर्षसमुद्राद्रिनद्युद्यानवनस्पतीन् ॥ ४ ॥ धरामण्डलसंस्थानं भागलक्षण-
मानतः ॥ ज्योतिषां विवराणां च यथेदमसृजद्विभुः ॥ ५ ॥ अधुनेह महाभाग यथैव नरकान्नरः ॥ नानोग्रयातनान्नेया-
त्तन्मे व्याख्यातुमर्हसि ॥ ६ ॥ श्रीशुक उवाच ॥ न चेदिहैवापचितिं यथांऽहसः कृतस्य कुर्यान्मनउक्तिपाणिभिः ॥
ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्तिता मे भवतस्तिग्मयातनाः ॥ ७ ॥ तस्मात् पुरैवाश्विह पापनिष्कृतौ यतेत
मृत्योरविपद्यताऽऽत्मना ॥ दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित् ॥ ८ ॥

त्तानपदोर्वंशः । तच्चरितानि द्वीपखंडसमुद्रान् पर्वतान् उद्यानानि वनस्पतीन् ॥४॥ स्थानविभागलक्षणमानतो भूमंडलं ग्रहादीनां पातालादीनां च
लक्षणं यथा विभुः ससर्ज तथा त्वत्तः श्रुतम् ॥५॥ अधुना नरः उग्रयातनान् नरकान् येन न गच्छेत् तन्मे वद ॥६॥ श्रीशुक उवाच॥ इह मनो
वाक्कायैः कृतस्य पापस्य मन्वादिभिरुक्तं प्रायश्चित्तं न करोति स नरके पतति । तस्मात् पापनाशाय मृत्योः पूर्वमेव प्रायश्चित्तं कुर्यात् ॥७॥८॥

१ वैश्वानरं यातीत्यादिना द्वितीयस्कन्धे । २ यथावत् । ३ क्रमेण योगोर्ऽचिरादिप्राप्तिस्तेनोपलब्धो ब्रह्मा तेन । ४ येन मार्गेण । ५ 'दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजन्ति ते' इत्यादिना तृतीय स्कन्धे । ६ त्रैगुण्यं स्वर्गादिसुखं विषयो यस्य सः । ७ निरन्तराध्याये पञ्चमस्यान्ते । ८ चतुर्थस्यादौ । ९ यस्मिन् । १० पञ्चम-स्कन्धे ।

राजोवाच ॥ नरकपातहेतुत्वात् पापमात्मनोऽहितं जनान् प्रायश्चित्ते कृते भूयः पापं करोति ॥ ९ ॥ कदाचित् पापात् निवर्तते । पुनः पापे कृते प्रायश्चित्तं व्यर्थम् । तत्तु कुञ्जरशौचवत् मन्ये ॥ १० ॥ श्रीशुक उवाच ॥ हे राजन् ! सत्यमुक्तम् । अनधिकारित्वात् कर्मणा पापस्य समूलं नाशो न । प्रायश्चित्तं तु ज्ञानमेव ॥११॥ हे राजन् ! पथ्यमेवान्नं भुञ्जतो यथा व्याधयो न बाधन्ते तथा नियमादिकर्ता शनैस्तत्त्वज्ञानाय समर्थो भवति ॥ १२ ॥ केचित् तपसा ब्रह्मचर्येण शमेन दमेन त्यागशौचाभ्याम् ॥ १३ ॥ धर्मज्ञाः देहवाग्बुद्धिजं पापं नाशयन्ति

**राजोवाच ॥ दृष्टश्रुताभ्यां[1] यत् पापं जानन्नप्यात्मनोऽहितम् ॥ करोति भूयो विवशः प्रायश्चित्तमथो[2] कथम् ॥९॥ क्वचिन्निवर्ततेऽभद्रात क्वचिच्चरति तत्पुनः ॥ प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवत् ॥ १० ॥ श्रीशुक उवाच ॥ कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते ॥ अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम् ॥ ११ ॥ नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि ॥ एवं नियमकृद्राजञ्छनैः क्षेमाय कल्पते ॥ १२ ॥ तपसा ब्रह्मचर्येण शमेन च दमेन च ॥ त्यागेन सत्यशौचाभ्यां यमेन नियमेन च ॥ १३ ॥ देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयाऽन्विताः ॥ क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः ॥ १४ ॥ केचित्केवलया भक्त्या वासुदेवपरायणाः ॥ अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ १५ ॥ न तथा ह्यघवान् राजन् पूयेत तप आदिभिः ॥ यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥१६॥ सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः ॥ सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १७ ॥ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ॥ न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः ॥ १८ ॥**



अनलो वेणुमिव ॥ १४ ॥ केचित् केवलया भक्त्या संपूर्णं पापं नाशयन्ति भास्करो नीहारमिव ॥ १५ ॥ कृष्णार्पितप्राणः साधुसेवया यथा पूयेत तथा तपआदिभिर्न ॥१६॥ यत्र नारायणपरायणः साधवः तत्राघवान् पूयेत ॥ १७ ॥ आचरितानि प्रायश्चित्तानि नारायण पराङ्मुखं न पुनन्ति आपगाः सुरापूर्णं कुम्भमिव ॥ १८ ॥

---

१ दृष्टं राजदण्डादि श्रुतं नरकादि । २ अतः ।

यैः कृष्णपादारविन्दयोः सकृत् मनो निवेशितं ते पूताः सन्तः स्वप्नेऽपि यमं तद्भटांश्च न पश्यन्ति ॥ १९ ॥ अस्योपरि विष्णुयमयो-र्दूतानां संवादरूपमितिहासं शृणु ॥२०॥ पुरा कान्यकुब्जनगरेऽजामिलनामा कश्चिद् द्विजो दास्याः सङ्गेन दूषितो नष्टाचार आसीत् ॥२१॥ स द्यूतचौर्यादिनिन्दितवृत्त्या कुटुम्बं पुपोष ॥२२॥ एवं दास्याः सुतान् लालयतः सतः अष्टाशीतिवर्षात्मक आयुष्यकालो गतः ॥ २३ ॥

सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह ॥ न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः[1] ॥ १९ ॥ अत्र चोदाहरन्तीममितिहासं पुरातनम् ॥ दूतानां विष्णुयमयोः संवादस्तं निबोध मे ॥ २० ॥ कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः ॥ नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥ २१ ॥ बन्द्यक्ष-कैतवैश्चौर्यैर्गर्हितां वृत्तिमास्थितः[2] ॥ बिभ्रत् कुटुम्बमशुचिर्यातयामास देहिनः ॥ २२ ॥ एवं निवसतस्तस्य लाल-यानस्य तत्सुतान् ॥ कालोऽत्यागान्महान् राजन्नष्टाशीत्यायुषः समाः ॥ २३ ॥ तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः ॥ बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ २४ ॥ स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ॥ निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम् ॥ २५ ॥ भुञ्जानः प्रपिबन् खादन् बालकस्नेहयंत्रितः ॥ भोजयन् पाययन् मूढो न वेदागतमन्तकम् ॥ २६ ॥ स एवं वर्तमानोऽज्ञो मृत्युकाल उपस्थिते ॥ मतिं चकार तनये बाले नारायणाह्वये ॥ २७ ॥ स पाशहस्तांस्त्रीन् दृष्ट्वा पुरुषान् भृशदारुणान् ॥ वक्रतुण्डानूर्ध्वरोम्ण आत्मानं नेतुमाग-तान् ॥२८॥ दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ॥ प्लावितेन[3] स्वरेणोच्चैराजुहावाकुलेन्द्रियः ॥ २९ ॥

तस्य दश पुत्राः । तेषां कनिष्ठो नारायणो नाम्ना ॥ २४ ॥ वृद्धस्तस्य कलभाषणादिक्रीडाः वीक्ष्य परं हर्षमवाप ॥ २५ ॥ भोजनपाना-दिना बद्धस्नेहः कालमागतं न वेद ॥२६॥ एवं मृत्युकाले प्राप्ते सति नारायणे बाले बुद्धिं चकार ॥ २७ ॥ आत्मानं नेतुमागतान् भयान-कान् त्रीन् पुरुषान् दृष्ट्वा ॥ २८ ॥ व्याकुलेन्द्रियो भीतः सन्नुच्चस्वरेण नारायणेति[4] बालमाजुहाव ॥ २९ ॥

---

१ कृतप्रायश्चित्ताः । २ बन्दीग्रहेण धनिकान् बन्धने निक्षिप्य तेभ्यो धनाकर्षणेन । ३ प्लुतत्वं नीतेन । ४ नारायणायेति आजुहावेति केचिट्टीकाकृतो वर्णयन्ति ।

तदा म्रियमाणस्य हरिकीर्तनं निशम्य सहसा विष्णुपार्षदाः एत्य ॥३०॥ हृदयादजामिलमाकर्षतो यमदूतान् वारयामासुः ॥३१॥ तदा यमदूतास्तान् दृष्ट्वा जगदुः। धर्मराजस्य शासनं प्रतिषेद्धारो यूयं के ॥३२॥ कुतः आयाताः किं देवाः वा सिद्धाः ॥३३॥ सर्वे पद्मनेत्राः पीतवाससः किरीटकुण्डलिनः॥३४॥ शङ्खचक्रगदापद्मधारिणश्चतुर्भुजाः ॥३५॥ स्वतेजसा दिशां तमो दूरीकुर्वन्तो नःकिमर्थं निषेधथ ॥३६॥ शुक उवाच ॥



निशम्य म्रियमाणस्य ब्रुवतो हरिकीर्तनम् ॥ भर्तुर्नाम महाराज पार्षदाः सहसाऽऽपतन् ॥३०॥ विकर्षतोऽन्तर्हृदयाद् दासीपतिमजामिलम् ॥ यमप्रेष्यान् विष्णुदूता वारयामासुरोजसा ॥ ३१ ॥ ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरस्सराः ॥ के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम् ॥ ३२ ॥ कस्य वा कुत आयाताः कस्मादस्य निषेधथ ॥ किं देवा उपदेवा वा यूयं किं सिद्धसंत्तमाः ॥ ३३ ॥ सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः ॥ किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः ॥ ३४ ॥ सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः ॥ धनुर्निषङ्गासिगदाशंखचक्राम्बुजश्रियः ॥ ३५ ॥ दिशो वितिमिरालोकाः कुर्वंतः स्वेन रोचिषा ॥ किमर्थं धर्मपालस्य किंकरान् नो निषेधथ ॥ ३६ ॥ श्रीशुक उवाच ॥ इत्युक्ते यमदूतैस्तैर्वासुदेवोक्तकारिणः ॥ तान् प्रत्यूचुः प्रहस्येदं मेघनिर्ह्रादया गिरा ॥ ३७ ॥ विष्णुदूता ऊचुः ॥ यूयं वै धर्मराजस्य यदि निर्देशकारिणः ॥ ब्रूत धर्मस्य नस्तत्त्वं यच्च धर्मस्य लक्षणम् ॥ ३८ ॥ कथंस्विद् ध्रियते दण्डः किं वाऽस्य स्थानमीप्सितम् ॥ दण्ड्याः किं कारिणः सर्वे आहोस्वित् कतिचिन्नृणाम् ॥ ३९ ॥ यमदूताः ऊचुः ॥ वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ वेदो नारायणः साक्षात् स्वयंभूरितिशुश्रुम ॥ ४० ॥



यमदूतैरेवमुक्ते सति ते प्रहस्य मधुरवाण्या तानूचुः ॥३७॥ यूयं धर्मराजस्य यदि किंकराः तर्हि धर्मस्य तत्त्वं ब्रूत ॥३८॥ अस्य कोऽपराधः। किं स्थानं योजितम्! अहो सर्वे दण्ड्याः किम्॥३९॥इत्याकर्ण्य यमदूता ऊचुः॥ वेदप्रेरितो धर्मः।तद्विपर्ययोऽधर्मः वेदो नारायणः इति शुश्रुम॥४०॥

१ कर्मिणः। २ श्रुतमिव भाति इत्यर्थः।

येन स्वस्वरूपे रजस्सत्त्वतमोमया वर्णाश्रमादयो रच्यन्ते ॥४१॥ सूर्यः १, अग्निः २, आकाशः ३, वायुः ४, गावः ५, सोमः ६, सन्ध्या ७, अहः ८, रात्रिः ९, दिशः १०, जलम् ११, पृथ्वी १२, कालः १३, स्वयं धर्मः १४ एते देहिनः साक्षिणः ॥ ४२ ॥ एतैरधर्मो ज्ञातः सन् दण्डो युज्यते । सर्वे कर्मानुरोधेन दण्डमर्हन्ति ॥४३॥ किंच देहवान् कर्म विना कोऽपि न । अतस्तेषां कर्मिणां पापस्यावश्यंभावित्वात् ते

ये स्वधामन्यमी भावा रजस्सत्त्वतमोमयाः ॥ गुणनामक्रियारूपैर्विभाव्यन्ते यथातथम् ॥ ४१ ॥ सूर्योऽग्निः खं मरुद्-गावः सोमः संध्याऽहनी दिशः ॥ कं कुः कालो धर्म इति ह्येते दैह्यस्य साक्षिणः ॥ ४२ ॥ एतैरधर्मो विज्ञातः स्थानं दण्डस्य युज्यते ॥ सर्वे कर्मानुरोधेन दण्डमर्हन्ति कारिणः ॥ ४३ ॥ संभवन्ति हि भद्राणि विपरीतानि चानघाः ॥ कारिणां गुणसङ्गोऽस्ति देहवान् ह्यकर्मकृत् ॥ ४४ ॥ येन यावान् यथा धर्मोऽधर्मो वेह समीहितः ॥ स एव तत्फलं भुङ्क्ते तथा तावदमुत्र वै ॥ ४५ ॥ यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते ॥ भूतेषु गुणवैचित्र्यात्तथाऽन्यत्रानुमीयते ॥ ॥ ४६ ॥ वर्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा ॥ एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनम् ॥ ४७ ॥ मन-मेव पुरे देवपूर्वरूपं विपश्यति ॥ अनुमीमांसतेऽपूर्वं मनसा भगवानजः ॥ ४८ ॥ यथाऽज्ञस्तमसा युक्त उपास्ते व्यक्त-मेव हि ॥ न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा ॥ ४९ ॥

सर्वे दण्डयोग्याः ॥४४॥ अतोऽधर्मेण दण्डं धर्मेण सुखं भुङ्क्ते ॥४५॥ हे देवप्रवराः ! इह जन्मनि कर्मणां सुखदुःखमिश्रत्वेन त्रैविध्यं भूतेषु गुणवैचित्र्यात् यथा लभ्यते तथा जन्मान्तरेऽनुमीयते ॥ ४६ ॥ धर्माधर्मौ भूतभाविजन्मनोः फलं दर्शयतः ॥ ४७ ॥ असौ यमोऽन्तर्यामी तेन जीवस्य धर्माधर्मयुक्तं पूर्वरूपं पश्यति ॥४८॥ अज्ञो जीवो जन्मना नष्टस्मृतिः सन् पूर्वापरं न वेद ॥ ४९ ॥

---

१ स्वस्वरूपे । २ गुणाः शान्तत्वादयः नामानि ब्रह्मादयः क्रियाश्चाध्ययनाद्या रूपाणि वर्णाश्रमादीनि । ३ अभद्राणि । ४ भूतभविष्ययोर्वसन्ताद्योः । ५ वसन्तादिः ६ संयमिन्यां देहे वा । ७ अनन्तरम् ।

जीवः षोडशोपाध्यन्तर्गतोऽपि ज्ञानकर्मेन्द्रियमनोविषयान् प्राप्नोति ॥५०॥ लिङ्गशरीरं जीवे हर्षशोकभयार्तिदां संसृतिं धत्ते ॥ ५१ ॥ देही संसारे मुह्यन् निर्गमोपायं न जानाति ॥ ५२ ॥ अवशो जीवः स्वाभाविकगुणैः कर्म कार्यते ॥ ५३ ॥ जीवस्य पूर्वकर्मवशेन व्यक्ताव्यक्तरूपं स्थूलं सूक्ष्मं च शरीरं भवति ॥५४॥ जीवस्य प्रकृतिसङ्गेन विपर्ययो भवति । ईश्वरभजनात् मोक्षः ॥५५॥ अयं श्रुतसंपन्नः सत्यवान् मन्त्र-

पञ्चभिः कुरुते स्वार्थान् पञ्च वेदाथ पञ्चभिः ॥ एकस्तु षोडशेन त्रीन् स्वयं सप्तदशोऽश्नुते ॥ ५० ॥ तदेतत् षोडश-कलं लिङ्गं शक्तित्रयं महत् ॥ धत्तेऽनुसंसृतिं पुंसि हर्षशोकभयार्तिदाम् ॥५१॥ देहज्ञोऽजितषड्वर्गो नेच्छन् कर्माणि कार्यते ॥ कोशकार इवात्मानं कर्मणाऽऽच्छाद्य मुह्यति ॥ ५२ ॥ न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥ कार्यते ह्यवशः कर्म गुणैः स्वाभाविकैर्बलात् ॥ ५३ ॥ लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत ॥ यथायोनि यथाबीजं स्वभावेन बलीयसा ॥ ५४ ॥ एष प्रकृतिसङ्गेन पुरुषस्य विपर्ययः ॥ आसीत् स एव न चिराद्दीशसङ्गाद्वि-लीयते ॥ ५५ ॥ अयं हि श्रुतसंपन्नः शीलवृत्तगुणालयः ॥ धृतव्रतो मृदुर्दान्तः सत्यवान्मन्त्रविच्छुचिः ॥ ५६ ॥ गुर्वग्न्यतिथिवृद्धानां शुश्रूषुर्निरहंकृतः ॥ सर्वभूतसुहृत्साधुर्मितवागनसूयकः ॥ ५७ ॥ एकदाऽसौ वनं यातः पितृ-संदेशकृद्द्विजः ॥ आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ॥ ५८ ॥ ददर्श कामिनं कंचिच्छूद्रं सह भुजिष्यया ॥ पीत्वा च मधु मैरेयं मदाघूर्णितनेत्रया ॥ ५९ ॥ मत्तया विश्लथन्नीव्या व्यपेतं निरपत्रपम् ॥ क्रीडन्तमनुगायन्तं हसन्तमनयाऽन्तिके ॥ ६० ॥ दृष्ट्वा तां कामलिप्तेन बाहुना परिरम्भिताम् ॥ जगाम हृच्छयवशं सहसैव विमो-हितः ॥ ६१ ॥ स्तम्भयन्नात्मनाऽऽत्मानं यावत्सत्त्वं यथाश्रुतम् ॥ न शशाक समाधातुं मनो मदनवेपितम् ॥ ६२ ॥

वित् शुचिः ॥५६॥ अहंकाररहितो गुर्वग्न्यतिथिवृद्धानां सेवकः ॥५७॥ एकदा पित्राज्ञया वनं गत्वा फलपुष्पसमित्कुशान् गृहीत्वा परावृत्तः ॥५८॥ तदा मार्गे कंचित् मदिरापानेन मत्तया शूद्रया नग्नया क्रीडन्तं शूद्रं ददर्श ॥ ५९ ॥ तया सह गायन्तं क्रीडन्तम् ॥ ६० ॥ बाहुना ऽऽलिङ्गितां तां च दृष्ट्वा काममोहितः सन् ॥६१॥ ज्ञानेनात्मानं स्तम्भयन्नपि मदनवेपितं मनो वशीकर्तुं न समर्थो बभूव ॥ ६२ ॥

१ मनसा । २ अनादि । ३ अदृष्टम् । ४ मातृसदृशम् । ५ पितृसदृशम् । ६ परमेश्वरभजनात् । ७ धृतानि व्रतानि येन सः । ८ ज्ञातम् ।

कामेन व्याप्तस्तामेव ध्यायन् स्वधर्माद् भ्रष्टः ॥६३॥ ततस्तां गृहीत्वा पित्रादिद्रव्येण वशमानीय ॥ ६४ ॥ सतीं नवयौवनां स्वभार्यां त्यक्त्वा ॥ ६५ ॥ चौर्यादिना धनमानीय तस्याः कुटुम्बं पुपोष ॥६६॥ असौ शास्त्राचारं समुल्लङ्घ्य पापं कृतवान् ॥ ६७ ॥ अतो दण्डपाणेः समीपं नेष्यामः यत्र दण्डेन शुध्यति ॥ ६८ ॥ इति श्रीभागवते० चू० षष्ठस्कन्धेऽजामिलोपाख्याने प्रथमोऽध्यायः ॥ १ ॥ द्वितीये वैष्णववैर्याम्यान्नाम्नामाहात्म्यमद्भुतम् ॥ श्रावयित्वा द्विजो विष्णोर्लोकं नीत इतीर्यते ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! नीतिचतुराः विष्णुदूताः यमदूतवाक्यं श्रुत्वा तानाहुः ॥ विष्णुदूता ऊचुः । अहो कष्टं धर्मसभामधर्मः स्पृशति । अपापेषु दण्डो वृथा स्यात् ॥२॥ ये प्रजानां पितृवत् पालकाः तेषु यदि वैषम्यं स्यात् तर्हि प्रजाः कं शरणं यान्ति ॥ ३ ॥ श्रेष्ठो यद्यदाचरति तत् प्रमाणं लोकः कुरुते ॥ ४ ॥

तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः ॥ तामेव मनसा ध्यायन् स्वधर्माद् विरराम ह ॥ ६३ ॥ तामेव तोषयामास पित्र्येणार्थेन यावता ॥ ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा ॥ ६४ ॥ विप्रां स्वभार्यामप्रौढां कुले महति लम्भिताम्[1] ॥ विससर्जाचिरात् पापः स्वैरिण्याऽपाङ्गविद्धधीः[2] ॥ ६५ ॥ यतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम् ॥ बभारास्याः कुटुम्बिन्याः कुटुम्बं मन्दधीरयम् ॥ ६६ ॥ यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यर्गर्हितः ॥ अवर्तत चिरं कालमघायुरशुचिर्मलात् ॥ ६७ ॥ तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम्[3] ॥ नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुध्यति ॥ ६८ ॥ इति श्रीभागवते म० षष्ठस्कन्धे अजामिलोपाख्याने प्रथमोऽध्यायः ॥ १ ॥

श्रीशुक उवाच ॥ एवं ते भगवद्दूता यमदूताभिभाषितम् ॥ उपधार्याथ तान् राजन् प्रत्याहुर्नयकोविदाः ॥ १ ॥ विष्णुदूता ऊचुः ॥ अहो कष्टं धर्मदृशामधर्मः स्पृशते सभाम् ॥ यत्रादण्ड्येष्वपापेषु दण्डो यैर्ध्रियते वृथा ॥ २ ॥ प्रजानां पितरो ये च शास्तारः साधवः समाः ॥ यदि स्यात्तेषु वैषम्यं कं यान्ति शरणं प्रजाः ॥ ३ ॥ यद्यदाचरति श्रेयानितरस्तत्तदीहते ॥ स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ४ ॥

१ परिणीताम् । २ कटाक्षैर्विद्धा धीर्यस्य सः ३ अकृतप्रायश्चित्तम् ।

लोको यस्याङ्के शिरः आधाय स्वस्थः शयनं करोति स्वयं धर्माधर्मौ न वेद यथा पशुः ॥ ५ ॥ अर्पितात्मानं सुप्तं द्रोग्धुं कथमर्हति ॥ ६ ॥ अयं तु हरेर्नामोच्चारितवान् । अतः कोटिजन्मनां पापं नाशितम् ॥ ७ ॥ यदा नारायणायेति जगाद तदा सम्पूर्णपापनाशनं स्यात् ॥ ८ ॥ स्तेनः सुरापो मित्रधुक् ब्रह्महा गुरुतल्पगः स्त्रीराजपितृगोहन्ताऽन्येऽपि पातकिनः ॥ ९ ॥ सर्वेषां पापिनां नामोच्चारणमेव श्रेष्ठं प्रायश्चि-

यस्याङ्के शिर आधाय लोकः स्वपिति निर्वृतः ॥ स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥५॥ स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम् ॥ विस्रम्भणीयो भूतानां सघृणो द्रोग्धुमर्हति ॥ ६ ॥ अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ॥ यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ७ ॥ एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् ॥ यदा नारायणायेति जगाद चतुरक्षरम् ॥८॥ स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः ॥ स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥९॥ सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ॥ नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १० ॥ न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुध्यत्यघवान् व्रतादिभिः ॥ यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकम् ॥ ११ ॥ नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे ॥ तत्कर्म निर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः ॥ १२ ॥ अथैनं माऽपनयत कृताशेषाघनिष्कृतम् ॥ यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥१३॥ साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ॥ वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥ पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः ॥ हरिरित्यवशेनाह पुमान् नार्हति यातनाम् ॥ १५ ॥

त्तम् ॥ १० ॥ यथा विष्णोर्नाम्ना शुध्यति तथा मन्वाद्युक्तैः प्रायश्चित्तैर्न ॥ ११ ॥ अतः पापनाशमिच्छतां हरेर्नामोच्चारणमेव प्रायश्चित्तम् ॥ ॥ १२ ॥ अतः कृतप्रायश्चित्तं मा नयत ॥ १३ ॥ पुत्रादौ सङ्केतितया हास्येन हेलनेन वा वैकुण्ठनामग्रहणं सर्वपापहरं विदुः ॥ १४ ॥ प्रासादेभ्यः पतितो भग्नगात्रः सर्पादिभिर्दष्टो ज्वरादिना तप्तो यः पुमान् हरिरिति वदति स यातनां नार्हति ॥ १५ ॥



१ अघवतः । २ आ ईषदाभासमात्रम् । नारायणेत्यपेक्षयाऽधिकमिति यावत् । ३ नारायण आयआगच्छ । नारायण इतीति पाठान्तरं दृश्यते तदा असन्धिरार्षः । ४ चित्तशोधकः । ५ संपूर्णमुच्चारितवान् । ६ गीतलिपिपूर्त्यर्थं कृतम् ।

मन्वादिभिर्गुरुलघुपापानां प्रायश्चित्तानि कथितानि ॥ १६ ॥ तैस्तपोदानजपादिभिः पापान्येव नश्यन्ति न वासना । सा तु हरिकीर्तनादिना नश्यति ॥१७॥ अज्ञानात् ज्ञानाद् वा कीर्तितं हरिनाम पुंसः पापं दहेत् अनलः काष्ठानि यथा ॥१८॥ यथा ज्ञातमज्ञातं वौषधं भक्षितं चेदारोग्यं करोति एवं नामात्मको मन्त्रोऽपि ॥१९॥ श्रीशुक उवाच । त एवं भगवद्धर्मं निर्णीय विप्रं याम्यपाशात् निर्मुच्य मृत्योर्मोचयामासुः ॥ २० ॥

गुरूणां च लघूनां च गुरूणि च लघूनि च ॥ प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः ॥१६॥ तैस्तान्यघानि पूयन्ते तपोदानजपादिभिः ॥ नाधर्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥ १७ ॥ अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् ॥ संकीर्तितमघं पुंसो दहेदेधो यथाऽनलः ॥ १८ ॥ यथाऽगदं वीर्यतममुपयुक्तं यदृच्छया ॥ अजानतोऽप्यात्मगुणं कुर्यान्मन्त्रोऽप्युदाहृतः ॥१९॥ * श्रीशुक उवाच ॥ त एवं सुविनिर्णीय धर्मं भागवतं नृप ॥ तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् ॥२०॥ इति प्रत्युदिता याम्या दूता यात्वा यमान्तिके ॥ यमराज्ञे यथा सर्वमाचचक्षुररिन्दम ॥२१॥ द्विजः पाशाद् विनिर्मुक्तो गतभीः प्रकृतिं गतः ॥ ववन्दे शिरसा विष्णोः किंकरान् दर्शनोत्सवः ॥२२॥ तं विवक्षुमभिप्रेत्य महापुरुषकिंकराः॥ सहसा पश्यतस्तस्य तत्रान्तर्दधिरेऽनघ ॥ २३ ॥ अजामिलोऽप्यथाकर्ण्य दूतानां यमकृष्णयोः॥ धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम् ॥२४॥ भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः ॥ अनुतापो महानासीत् स्मरतोऽशुभमात्मनः ॥ २५ ॥ अहो मे परमं कष्टमभूदविजितात्मनः ॥ येन विप्लावितं ब्रह्म वृषल्यां जायताऽऽत्मना ॥२६ धिङ् मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् ॥ हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥२७॥

तदा यमदूताः यमान्तिके गत्वा तस्मै सर्वं न्यवेदयन् ॥ २१ ॥ द्विजः पाशात् मुक्तो विष्णुपार्षदान् ववन्दे ॥ २२ ॥ ते तं वक्तुमिच्छन्तं ज्ञात्वाऽन्तर्दधिरे ॥२३॥ अजामिलस्तयोर्भगवदाश्रयं संवादं श्रुत्वा ॥२४॥ आत्मनः पापं स्मरन् पश्चात्तापयुक्तः आत्मानं निनिन्द ॥२५॥ अहो मया ब्रह्मतेजो वृषल्यां विप्लावितम् ॥ २६ ॥ सद्भिर्दूषितं कर्म कृतम् । सतीं बालां स्त्रीं हित्वा वृषल्यां सक्तोऽहम् । मां धिक् ॥ २७ ॥

* पति वः पृच्छत भटा धर्मेऽस्मिन्यदि संशयः ॥ स वेद परमं गुह्यं धर्मस्य भगवान्यमः ॥ इत्यधिकः पाठः ॥

अहो मया वृद्धौ मातापितरौ त्यक्तौ नीचवदाचरितम् ॥२८॥ सोऽहं नरके पतिष्यामि ॥२९॥ मया किं स्वप्नो दृष्टः। अहो ये मां व्यकर्षन् ते क्व गताः ॥३०॥ ये च नीयमानं मां व्यमोचयन् ते सिद्धाः क्व गताः ॥३१॥ दुर्भगस्य मे तेषां दर्शनं कुतः ॥ ३२ ॥ शूद्रपतेर्वैकुण्ठनामग्रहणं वक्तुं जिह्वा योग्या किम् ॥३३॥ अहं क्वाशुचिः। नारायणेति नामग्रहणं क्व ॥३४॥ सोऽहं वृषल्या ग्रस्तं देहं मोचयिष्ये। भूयो नरके न मज्जये ॥३५॥

वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ ॥ अहो मयाऽधुना त्यक्तावकृतज्ञेन नीचवत् ॥२८॥ सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे ॥ धर्मघ्नाः कामिनो यत्र विन्दन्ति यमयातनाः ॥२९॥ किमिदं स्वप्न आहोस्वित साक्षाद् दृष्टमिहाद्भुतम् ॥ क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ॥ ३० ॥ अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः ॥ व्यमोचयन् नीयमानं बद्ध्वा पाशैरधो भुवः ॥३१॥ अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ॥ भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥ ३२ ॥ अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ॥ वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ ३३ ॥ क्व चाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ॥ क्व च नारायणेत्येतद् भगवन्नाम मङ्गलम् ॥३४॥ सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः ॥ यथा न भूय आत्मानमन्धे तमसि मज्जये ॥३५॥ विमुच्य तमिमं बन्धमविद्याकामकर्मजम्॥ सर्वभूतसुहृच्छान्तो मैत्रः करुण आत्मवान् ॥ ३६ ॥ मोचये ग्रस्तमात्मानं योषिन्मय्याऽऽत्ममायया ॥ विक्रीडितो ययैवाहं क्रीडामृग इवाधमः ॥ ३७ ॥ ममाहमिति देहादौ हित्वा मिथ्याऽर्थधीर्मतिम् ॥ धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः ॥३८॥ इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु ॥ गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः ॥३९॥ श्रीशुक उवाच ॥ स तस्मिन् देवसदन आसीनो योगमाश्रितः ॥ प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि ॥ ४० ॥

अविद्याकामकर्मजं बन्धं विमुच्य ॥ ३६ ॥ तस्याः मायया क्रीडामृग इव मोहितोऽहं मोचये ॥ ३७ ॥ ममाहमिति मतिं हित्वा भगवति मनो धारयिष्ये ॥३८॥ एवं सत्सङ्गेन प्राप्तज्ञानः सन् गङ्गाद्वारं ययौ ॥३९॥ श्रीशुक उवाच । स तस्मिन् देवसदने आसीनो योगं श्रितः ॥४०॥

गुणेभ्यो मनः आकृष्य ब्रह्मणि युयुजे ॥ ४१ ॥ ततस्तनुत्यागसमये भूयो विष्णुदूतान् दृष्ट्वा शिरसा ननाम ॥ ४२ ॥ ततो गङ्गायां कलेवरं हित्वा तेषां दर्शनेन दिव्यस्वरूपं धारयन् सन् ॥ ४३ ॥ तैः सह विमानमारुह्य वैकुण्ठं ययौ ॥ ४४ ॥ एवं त्यक्तसर्वधर्मोऽपि भगवन्नाम गृणन् सद्यो मुक्तः ॥ ४५ ॥ ततो मुक्तिमिच्छतां नामोच्चारणं विना बन्धनाशकं न ॥ ४६ ॥ यः इममितिहासं भक्त्या शृणुयाद् वा कीर्तयेद्

ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना ॥ युयुजे भगवद्धाम्नि ब्रह्मण्यनुभवात्मनि ॥ ४१ ॥ यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः ॥ उपलभ्योपलब्धान्प्राग् ववन्दे शिरसा द्विजः ॥४२॥ हित्वा कलेवरं तीर्थे गङ्गायां दर्शनादनु ॥ सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम् ॥ ४३ ॥ साकं विहायसा विप्रो महापुरुषकिंकरैः ॥ हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ॥ ४४ ॥ एवं स विप्लावितसर्वधर्मा दास्याः पतिः पतितो गर्ह्यकर्मणा ॥ निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥४५॥ नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात् ॥ न यत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥४६॥ य एवं परमं गुह्यमितिहासमघापहम् ॥ शृणुयाच्छ्रद्धया युक्तो यश्च भक्त्यानुकीर्तयेत् ॥ ४७ ॥ न वै स नरकं याति नेक्षितो यमकिंकरैः ॥ यद्यप्यमङ्गलो मर्त्यो विष्णुलोके महीयते ॥ ४८ ॥ म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् ॥ अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन् ॥४९॥ इति श्रीभागवते महा० षष्ठस्कन्धेऽजामिलोपाख्याने भगवन्नाममाहात्म्यं नाम द्वितीयोऽध्यायः ॥२॥ राजोवाच ॥ निशम्य देवः स्वभटोपवर्णितं प्रत्याह किं तान्प्रति धर्मराजः ॥ एवं हताज्ञो विहतान्मुरारेर्नैदेशिकैर्यस्य वशे जनोऽयम् ॥१॥

वा ॥४७॥ स नरकं न याति विष्णुलोकं गच्छति ॥ ४८ ॥ म्रियमाणोऽजामिलः पुत्रोपचारितं नाम गृणन् परं पदं जगाम किं पुनः श्रद्धया ॥ ४९ ॥ इति श्रीभागवते चू० षष्ठ० द्वितीयोऽध्यायः ॥ २ ॥ तृतीये तु यमेनापि वैष्णवोत्कर्षवर्णनैः ॥ सान्त्वयित्वा स्वदूतांस्ते वैष्णवे किंकरीकृताः ॥ १ ॥ राजोवाच । यमः स्वदूतवर्णितं निशम्य तान् प्रति किं जगाद ॥ १ ॥

१ निश्चलबुद्धिः । २ भगवद्धाम्नि । ३ प्रायश्चित्तान्तरम् ।

हे मुने ! यमस्य दण्डभंगः कुतश्च पूर्वं न श्रुतः । एनं लोकसंशयं छिन्धि ॥ २ ॥ श्रीशुक उवाच । हे राजन् भगवद्दूतैर्दूरीकृताः यमसेवकाः यमं विज्ञापयामासुः ॥ ३ ॥ यमदूता ऊचुः ॥ हे प्रभो ! जीवलोकस्य शास्तारः कति सन्ति ॥४॥ यदि लोके दण्डधारिणो बहवः स्युः तर्हि कस्य सुखदुःखे न स्याताम् ॥ ५ ॥ बहुशास्तृत्वे सत्यपि ते तवाधीनाः सन्ति इति भाति ॥६॥ अतः सर्वभूतानां शास्ता त्वमेव ॥७॥ इदानीं

यमस्य देवस्य न दण्डभङ्गः कुतश्चनर्षे श्रुतपूर्व आसीत् ॥ एतन्मुने वृश्चति लोकसंशयं न हि त्वदन्य इति मे विनिश्चितम् ॥ २ ॥ श्रीशुक उवाच ॥ भगवत्पुरुषै राजन्याम्याः प्रतिहतोद्यमाः ॥ पतिं विज्ञापयामासुर्यमं संयमिनीपतिम् ॥३॥ यमदूता ऊचुः ॥ कति सन्तीह शास्तारो जीवलोकस्य वै प्रभो ॥ त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः ॥४॥ यदि स्युर्बहवो लोके शास्तारो दण्डधारिणः ॥ कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव वा ॥ ५ ॥ किं तु शास्तृबहुत्वे स्याद्बहूनामिह कर्मिणाम् ॥ शास्तृत्वमुपचारो हि यथामण्डलवर्तिनाम् ॥ ६ ॥ अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः ॥ शास्ता दण्डधरो नृणां शुभाशुभविवेचनः ॥७॥ तस्य ते विहितो दण्डो न लोके वर्ततेऽधुना ॥ चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलम्भिता ॥८॥ नीयमानं तवादेशादस्माभिर्यातनागृहान् ॥ व्यमोचयन्पातकिनं छित्त्वा पाशान्प्रसह्य ते ॥ ९ ॥ तांस्ते वेदितुमिच्छामो यदि नो मन्यसे क्षमम् ॥ नारायणेत्यभिहिते मा भैरित्याययुर्द्रुतम् ॥ १० ॥ श्रीशुक उवाच ॥ इति देवः स आपृष्टः प्रजासंयमनो यमः ॥ प्रीतः स्वदूतान्प्रत्याह स्मरन्पादाम्बुजं हरेः ॥ ११ ॥

चतुर्भिः सिद्धैस्तवाज्ञा भग्ना ॥ ८ ॥ ते पाशान् छित्त्वा नीयमानं पातकिनं व्यमोचयन् ॥ ९ ॥ पातकिना नारायणेत्युक्ते सति ते मा भैरिति वदन्तः शीघ्रमागताः । ते के एतज्ज्ञातुमिच्छामः ॥१०॥ श्रीशुक उवाच ॥ इति दूतैः पृष्टः सन् यमो हरेः पादाम्बुजं स्मरन् तानाह ॥११॥



---

१ त्रिविधम् । २ शास्तृबहुत्वे बाधमाह । तेषां विप्रतिपत्तौ ते उभे सुखदुःखे कस्य स्यातां न कस्यापि ।तेषामैकमत्ये च ते उभे अपि कस्य वा न स्यातां सर्वस्यापि स्यातामिति । ३ यथा चक्रवर्तिन एव मुख्यं शास्तृत्वम् मण्डलवर्तिनामुपचारमात्रम् ॥

यम उवाच॥हे दूताः ! भूतानां स्थितिजन्मनाशकरो मदन्य ईश्वरोऽस्ति ॥ १२ ॥ यो ब्राह्मणादिजनान् नामतन्त्या बध्नाति तस्य विचारं केऽपि न जानन्ति ॥१३॥ अहं निर्ऋतिर्भवो वायुः ॥१४ अन्ये च भृग्वादयो यस्य चेष्टितं न विदुः ॥१५॥ ये मायामोहिताः सन्तो मनसेन्द्रियैर्यं न जानन्ति स मदन्यः ईश्वर ॥ १६ ॥ तस्य हरेर्दूतास्तद्रूपाः सन्तो विचरन्ति ॥ १७ ॥ ते विष्णुभक्तान् सर्वसंकटाद रक्षन्ति ॥१८॥

यम उवाच ॥ परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद्यत्र विश्वम् ॥ यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकः ॥ १२ ॥ यो नामभिर्वाचि जनान्निजायां बध्नाति तन्त्यामिव दामभिर्गाः ॥ यस्मै बलिं त इमे नामकर्मनिर्बन्धबद्धाश्चकिता वहन्ति ॥१३॥ अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चिः ॥ आदित्यविश्वे वसवोऽथ साध्या मरुद्गणाः रुद्रगणाः ससिद्धाः ॥१४॥ अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ॥ यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ १५ ॥ यं वै न गोभिर्मनसाऽसुभिर्वा हृदा गिरा वाऽसुभृतो विचक्षते ॥ आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम् ॥१६॥ तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः ॥ प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः ॥ ॥ १७ ॥ भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि ॥ रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥ १८ ॥ धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ॥ न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणादयः ॥ १९ ॥ स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः ॥ प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ २० ॥ द्वादशैते विजानीमो धर्मं भागवतं भटाः ॥ गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते ॥ २१ ॥

भगवत्प्रणीतं धर्मं देवादयो न विदुः मनुष्याः कुतः ॥ १९ ॥ ब्रह्मा नारदः कपिलः प्रह्लादो भीष्मः शुक इत्यादयो वयम् ॥२०॥ एते गुह्यं भगवद्धर्मं ज्ञात्वा मोक्षसुखं भुञ्जते ॥ २१ ॥

---

१ अहं तु जङ्गमानां मध्ये पापिनां नराणामेवेति भावः । २ ब्रह्मादितः । ३ ब्राह्मणादिनामभिः । ४ नामकर्मभिर्वृढबन्धसाधनैः । ५ इन्द्रियैः । ६ आकृतयो यथा चक्षुर्न जानन्ति । ७ आकृतीनां प्रकाशकम् । ८ तस्यैव रूपं गुणाः प्रभावादयः स्वभावो भक्तवात्सल्यादिः येषां ते ।

अस्मिँल्लोके नामग्रहणमेव परो धर्मः ॥२२॥ हे पुत्रकाः ! हरेर्नामोच्चारणमाहात्म्यं पश्यत अजामिलोऽपि यन्नाम्ना पाशान्मुक्तः ॥२३॥ पुंसां पापक्षयाय भगवतो गुणकर्मनामकीर्तनमेव। अजामिलोऽपि नारायणेति नाम पुत्रोपचारितमुच्चारयन् मुक्तिं प्राप॥२४॥ मन्वादयो मोहिताः सन्तो नामकीर्तनं न जानन्तः पापनाशाय कृच्छ्रादिव्रतानि कथयन्ति। यथा वैद्याः मृतसंजीवनौषधं न जानन्तो रोगनाशाय कटुनिम्बा-

एतावानेव लोकेऽस्मिन्पुंसां धर्मः पर स्मृतः ॥ भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ २२ ॥ नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ॥ अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥ २३ ॥ एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् ॥ विक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ ॥ २४ ॥ प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययाऽलम् ॥ त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥ एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम् ॥ ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पातकं तदपि हन्त्युरुगायवादः ॥ २६ ॥ ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ॥ तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्नैषां वयं न च वयः प्रभवाम दण्डे ॥ २७ ॥ तानानयध्वमसतो विमुखान्मुकुन्दपादारविन्दमकरन्दरसादजस्रम् ॥ निष्किंचनैः परमहंसकुलैरसज्ञैर्जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ॥२८॥ * जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च नस्मरति तच्चरणारविन्दम् ॥ कृष्णाय नो नमति यच्छिर एकदाऽपि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥

दीन् कथयन्ति ॥ २५ ॥ ज्ञानिनः एवं विमृश्य भगवति भक्तियोगं कुर्वन्ति ते मे दण्डं नार्हन्ति ॥ २६ ॥ ये भगवन्तं प्रपन्नाः तान् हरिर्गदया रक्षति। अतस्तेषां समीपे मा गच्छत ॥ २७ ॥ ये हरेः पादारविन्दविमुखाः गृहे बद्धतृष्णास्तान् दुष्टानानयध्वम् ॥ २८ ॥ यस्य जिह्वा हरेर्नाम न वक्ति चेतस्तं न ध्यायति शिरः कृष्णाय न नमति तानानयध्वम् ॥ २९ ॥

१ वेदेषु । २ मधुरं यथा स्यात्तथा पुष्पितायामर्थवादैर्युक्तायाम् । ३ कालोऽपि । * स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर भगवत्कथाप्रमत्तान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ इत्यधिकः पाठः ।

अस्मद्दूतैर्यदन्याय्यं कृतं तद् भगवान् क्षम्यताम् । तस्मै पुरुषाय नमः ॥ ३० ॥ श्रीशुक उवाच ॥ हे नृप । विष्णोर्नामसंकीर्तनं महापातकानामपि नाशकं विद्धि ॥ ३१ ॥ यथा भक्त्या मनः शुध्येत तथा व्रतादिभिर्न ॥ ३२ ॥ यस्य मनो भगवति संलग्नं तस्य मनः पुनः संसारे न रमते ॥ ३३ ॥ हे नृप ! दूता एवं यमगदितं श्रुत्वा तद्दिनतो भक्तजनं द्रष्टुं बिभ्यति स्म ॥३४॥ इममितिहासं मलयाचले आसीनोऽगस्त्यो

तत्क्षम्यतां च भगवान्पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः ॥ स्वानामहो न विदुषां रचिताञ्जलीनां क्षान्तिर्गरीयसि नमः पुरुषाय भूम्ने ॥३०॥ श्रीशुक उवाच ॥ तस्मात्संकीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ॥ महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतिम् ॥ ३१ ॥ शृण्वतां गृणतां वीर्याण्युद्दामानि हरेर्मुहुः ॥ यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः ॥ ३२ ॥ कृष्णाङ्घ्रिपद्ममधुलिण् न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेषु ॥ अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव रजः पुनः स्यात् ॥ ३३ ॥ इत्थं स्वभर्तृगदितं भगवन्महित्वं संस्मृत्य विस्मितधियो यमकिंकरास्ते ॥ नैवाच्युताश्रयजनं प्रति शङ्कमाना द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ॥ ३४ ॥ इतिहासमिमं गुह्यं भगवान्कुम्भसंभवः ॥ कथयामास मलय आसीनो हरिमर्चयन् ॥३५॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे अजामिलोपाख्याने यमेन स्वभटान् प्रति भगवद्भक्तिनाममाहात्म्यवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥ राजोवाच ॥ देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ॥ सामासिकस्त्वया प्रोक्तो यस्तु स्वायंभुवेऽन्तरे ॥ १ ॥ तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन्यथा ॥ अनुसर्गं यया शक्त्या ससर्ज भगवान्परः ॥ २ ॥ सूत उवाच ॥ इति संप्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ॥ प्रतिनन्द्य महायोगी जगाद मुनिसत्तमः ॥ ३ ॥

हरिं पूजयन् कथयामास स तुभ्यं वर्णितः ॥३५॥ इति श्रीभागवते चू० षष्ठ० तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे तु प्रजासृष्ट्या रूपजन्मविवक्षया ॥ प्रचेतस्सुतदक्षस्य वंशस्तावत् प्रतन्यते ॥ १ ॥ राजोवाच ॥ देवासुरनृणां नागानां मृगपक्षिणां सर्गस्त्वया संक्षेपेण स्वायंभुवमन्वन्तरे उक्तः ॥ १ ॥ अधुना विस्तरेणानुसर्गं श्रोतुमिच्छामि ॥ २ ॥ सूत उवाच ॥ राज्ञः प्रश्नमाकर्ण्य मुनिर्जगाद ॥ ३ ॥

१ अज्ञानाम्

श्रीशुक उवाच ॥ हे नृप ! यदा दश प्रचेतसः पुत्राः समुद्रात् निर्गताः सन्तो द्रुमैर्व्याप्तां पृथ्वीं ददृशुः ॥४॥ तदा द्रुमान् दग्धुं मुखतो वायुमग्निं च ससृजुः ॥ ५ ॥ तदा दह्यमानान् वृक्षान् दृष्ट्वा सोमस्तत्रैत्य तानुवाच ॥ ६ ॥ हे महाभागाः ! यूयं प्रजानां पतयः । अतो द्रुमान् दग्धुं योग्याः न ॥७॥ अहो ! हरिर्वनस्पतीनोषधीः प्रजानामन्नं च ससर्ज ॥ ८ ॥ चराणामन्नं फलतृणादयः । हस्तयुक्तानां पश्वाद्याः । द्विपदानां

श्रीशुक उवाच ॥ यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ॥ अन्तस्समुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥ द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः ॥ मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥५॥ ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ॥ राजोवाच महान्सोमो मन्युं प्रशमयन्निव ॥ ६ ॥ मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ ॥ विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥ अहो प्रजापतिपतिर्भगवान्हरिरव्ययः ॥ वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः ॥८॥ अन्नं चराणामचरा ह्यपदः पादचारिणाम् ॥ अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥ यूयं च पित्राऽन्वादिष्टा देवदेवेन चानघाः ॥ प्रजासर्गाय हि कथं वृक्षान्निदग्धुमर्हथ ॥ १० ॥ आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ॥ पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥ तोकानां पितरौ बन्धुर्दृशः पक्ष्म स्त्रियाः पतिः ॥ पतिः प्रजानां भिक्षूणां गृह्यज्ञानां बुधः सुहृत् ॥१२॥ अन्तर्देहेषु भूतानामात्माऽऽस्ते हरिरीश्वरः ॥ सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥ १३ ॥ यः समुत्पतितं देह आकाशान्मन्युमुल्बणम् ॥ आत्मजिज्ञासया यच्छेत्स गुणानतिवर्तते ॥ १४ ॥ अलं दग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः ॥ वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥

मेषाद्याः ॥९॥ यूयं प्रजासर्गाय पित्रा कृताज्ञाः सन्तः कथं वृक्षान् दग्धुमर्हथ ॥ १० ॥ अतः पूर्वजानां मार्गमातिष्ठत ॥ ११ ॥ बालानां पितरौ बन्धुः स्त्रीणां पतिः सुहृत् । मूर्खाणां बोधकर्ता सुहृत् ॥१२॥ हरिर्भूतानामन्तर्देहेष्वास्ते ॥ १३ ॥ एवं देहोत्पत्तिं ज्ञात्वा क्रोधं नियच्छेत् ॥ १४ ॥ दग्धद्रुमेषु शेषाणां युष्माकं च शिवमस्तु । एषा वार्क्षी नाम कन्या पत्नीत्वे प्रतिगृह्यताम् ॥ १५ ॥

१ ऊर्जं भक्ष्यम्, इषमन्नम् । २ आकस्मिकम् । ३ वृक्षैःपालिता ।

इत्यामन्त्र्य कन्यां दत्त्वा सोमो ययौ । ते विधिनोपयेमिरे ॥ १६ ॥ तेभ्यस्तस्यां दक्षो बभूव ॥ १७ ॥ अथ दक्षो यथा भूतानि ससर्ज तथा मत्तः शृणु ॥ १८ ॥ स दक्षः पूर्वं देवासुरमनुष्यादीन् मनसैव ससर्ज ॥ १९ ॥ यदा प्रजावृद्धिर्न जाता तदा विन्ध्याचलं गत्वा ॥ २० ॥ तत्राघमर्षणतीर्थे स्नात्वा तपसा हरिं तोषयन् सन् ॥ २१ ॥ हंसगुह्याख्येन स्तोत्रेण हरिं तुष्टाव ॥२२॥ दक्ष उवाच ॥ पराय जीवमाययोर्नि-

इत्यामन्त्र्य वरारोहां कन्यामाप्सरसीं नृप ॥ सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे ॥१६॥ तेभ्यस्तस्यां समभवद्दक्षःप्राचेतसः किल ॥ यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ १७ ॥ यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ॥ रेतसा मनसा चैव तन्ममावहितः शृणु ॥१८॥ मनसैवासृजत्पूर्वं प्रजापतिरिमाः प्रजाः ॥ देवासुरमनुष्यादीन्नभस्स्थलजलौकसः ॥१९॥ तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ॥ विन्ध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः ॥ २० ॥ तत्राघमर्षणं नाम तीर्थं पापहरं परम् ॥ उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम् ॥ २१ ॥ अस्तौषीद्धंसगुह्येन भगवन्तमधोक्षजम् ॥ तुभ्यं तदभिधास्यामि कस्यातुष्यद्यतो हरिः ॥२२॥ प्रजापतिरुवाच ॥ नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबन्धवे ॥ अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानाय दधे स्वयंभुवे ॥ २३ ॥ न यस्य सख्यं पुरुषोऽवैति सख्युः सखा वसन्संवसतः पुरेऽस्मिन् ॥ गुणो यथा गुणिनो व्यक्तदृष्टेस्तस्मै महेशाय नमस्करोमि ॥२४॥ देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ॥ सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥२५॥

मित्तस्य च नियन्त्रे जीवैरदृष्टस्वरूपाय स्वप्रकाशाय नमः ॥ २३ ॥ जीवोऽस्मिन् देहे वसन्नपि स्वपार्श्वे वसतो यस्य सख्यं न जानाति तस्मै महेशाय नमस्करोमि ॥ २४ ॥ अयं जीवः स्वस्वरूपमिन्द्रियवर्गं च तत् त्रयं वेत्ति तथाऽपि यं वेद तमनन्तं स्तौमि ॥ २५ ॥

१ प्रजापतेः । २ मानातीताय । ३ विषयो विषयिणः इन्द्रियादेः सख्यं प्रकाशकत्वं यथा न याति ।

यः केवलं स्वरूपज्ञानेन प्रकाशते तस्मै हंसाय नमः ॥ २६ ॥ ज्ञानिनो हृदि प्रविष्टं यं ध्यायन्ति स नः प्रसीदताम् ॥ २७ ॥ अशेषमायाया निषेधेन निर्वाणसुखेऽनुभवो यस्य स विश्वरूपो नः प्रसीदताम् ॥ २८ ॥ वचसोक्तं बुद्ध्यादिभिर्निरूपितं यत् तद् यस्य स्वरूपं न भवति

यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतिसंप्रमोषात् ॥ य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः ॥२६॥ मनीषिणोऽन्तर्हृदि संनिवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ॥ वह्निं यथा दारुणि पाञ्चदश्यं मनीषया निष्कर्षति गूढम् ॥ २७ ॥ स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ॥ स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥ यद्यन्निरुक्तं वचसा निरूपितं धियाऽक्षभिर्वा मनसा वोत यस्य ॥ मा भूत्स्वरूपं गुणरूपं हि तत् स वै गुणापायविसर्गलक्षणः ॥ २९ ॥ यस्मिन्यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्यते च ॥ परावरेषां परमं प्राक्प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥ ३० ॥ यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति ॥ कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥ ३१ ॥ अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः अवेक्षितं किंचन योगसांख्ययोः समं परं ह्यनुकूलं बृहत्तत् ॥ ३२ ॥

तस्मै नमः ॥ २९ ॥ परावरेषां प्राक् प्रसिद्धः एको यस्तस्मै नमः ॥३०॥ यस्य शक्तयो वदतां वादिनां मायामोहं कुर्वन्ति तस्मै नमः ॥३१॥ यस्य रूपे पादादिकमस्ति नास्तीति विधिनिषेधौ तयोः परं तं नमस्करोमि ॥ ३२ ॥



---

१ नामरूपे रूप्येते येन तथाभूतस्य । २ दृष्टं दर्शनं संप्रमोषो नाशः । ३ प्रकृतिपुरुषमहदहंकारपञ्चतन्मात्राख्याभिः । ४ त्रिगुणात्मभिः । ५ पञ्चदशसामिधेनीमन्त्रैः प्रकाश्यम् । ६ अनिर्वचनीया आत्मनि शक्तिर्माया यस्य सः । ७ "गुणरूपं हि तत्तत्स वै" इति पाठान्तरम् । ८ गुणानामपायविसर्गाभ्यां लक्ष्यत इति । ९ योगसांख्ययोर्विसंवादं निरूपयन्ब्रह्म लक्षयति । उपास्ये विराजितं पातालं पादादिकमस्तीति योगमतम् । नास्तीतिसांख्यमतम् । योगसांख्ययोः सममवर्तमानमवेक्षितं परं विधिप्रतिषेधयोरविषयोऽविषयसङ्गावकल्पनाऽनुकूलं विवादास्पदं ब्रह्मेति ।

यो नामरूपरहितोऽपि भजतां केवलमनुग्रहार्थं नामरूपाणि धत्ते स मह्यं प्रसीदतु ॥ ३३ ॥ य उपासनाज्ञानमार्गैरुपास्यते स मे मनोरथं करोतु ॥ ३४ ॥ श्रीशुक उवाच ॥ एवं स्तुतो भक्तवत्सलो भगवान् प्रादुरासीत् ॥ ३५ ॥ गरुडारूढः प्रलम्बाष्टभुजः शङ्खचक्रासिचर्मधनुष्पाशगदाधरः ॥ ३६ ॥ घनश्यामः पीतवासाः प्रसन्नवदनेक्षणः ॥ ३७ ॥ किरीटकुण्डलादिभिर्भूषितः ॥ ३८ ॥ नारदनन्दाद्यैर्वेष्टितः त्रैलोक्यमोहनं

योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः ॥ नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदतु ॥३३॥ यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति ॥ यथाऽनिलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतान्मनोरथम् ॥३४॥ श्रीशुक उवाच ॥ इति स्तुतः संस्तुवतः स तस्मिन्नघमर्षणे ॥ आविरासीत्कुरुश्रेष्ठ भगवान्भक्तवत्सलः ॥ ३५ ॥ कृतपादः सुपर्णांसे प्रलम्बाष्टमहाभुजः ॥ चक्रशंखासिचर्मेषुधनुष्पाशगदाधरः ॥ ३६ ॥ पीतवासा घनश्यामः प्रसन्नवदनेक्षणः ॥ वनमालानिवीताङ्गो लसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥ महाकिरीटकटकः स्फुरन्मकरकुण्डलः ॥ काञ्च्यङ्गुलीयवलयनूपुराङ्गदभूषितः ॥ ३८ ॥ त्रैलोक्यमोहनं रूपं बिभ्रत्त्रिभुवनेश्वरः ॥ वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः ॥ ३९ ॥ स्तूयमानोऽनुगायद्भिः सिद्धगन्धर्वचारणैः ॥ रूपं तन्महदाश्चर्यं विचक्ष्यागतसाध्वसः ॥४०॥ ननाम दण्डवद्भूमौ प्रहृष्टात्मा प्रजापतिः ॥ न किंचनोचारयितुमशकत्तीव्रया मुदा ॥ ४१ ॥ आपूरितमनोद्वारैर्ह्रदिन्य इव निर्झरैः॥ * तं तथाऽवनतं भक्तं प्रजाकामं प्रजापतिम् ॥ चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥ ४२ ॥ श्रीभगवानुवाच ॥ प्राचेतस महाभाग संसिद्धस्तपसा भवान् ॥ यच्छ्रद्धयामत्परया मयि भावं परं गतः ॥ ४३ ॥ प्रीतोऽहं ते प्रजानाथ यत्तेऽस्योद्बृंहणं तपः ॥ ममैष कामो भूतानां यद्भूयासुर्विभूतयः ॥ ४४ ॥

रूपं बिभ्रत् ॥३९॥ गन्धर्वादिभिः प्रगीयमानं रूपं वीक्ष्य ॥४०॥ दक्षो हृष्टमनाः भूमौ ननाम ॥४१॥ तथा भगवान् प्रजाकामं दक्षं जगाद ॥ ४२ ॥ श्रीभगवानुवाच । हे प्राचेतस ! तपसा भवान् सिद्धः ॥ ४३ ॥ अतस्तुभ्यं प्रीतोऽस्मि ॥ ४४ ॥

---

१ तत्तद्वासनानुसारेण । २ 'नूपुरादिविभूषितः' इ० पा० । * स्तोत्रस्य फलमायातस्तं वन्दे पुरुषोत्तमम् । इत्यधिकः पाठः । ३ विश्वस्य वृद्धिकरम् ।

ब्रह्मा भवो मनवः एताः मम विभूतयः ॥४५॥ तपो मे हृदयम् । विद्या तनुः । धर्मः आत्मा । देवाः मे प्राणाः ॥ ४६ ॥ सर्वत्र चैतन्यमात्रो ऽहमेव ॥४७॥ मयि मायागुणतो गुणमयं ब्रह्माण्डम् । मत्तो ब्रह्मा बभूव ॥ ४८ ॥ यदा सर्गकर्मणि ब्रह्मा स्वयमसमर्थमिव मेने ॥ ४९ ॥ तदा मया तप तपेत्युक्तः सन् तपसा युष्मान् ससर्ज ॥५०॥ हे दक्ष ! पञ्चजनस्य प्रजापतेर्दुहिता याऽसिक्नीनाम्न्यस्ति तां पत्नीत्वे प्रतिगृहाण॥५१॥



ब्रह्मा भवो भवन्तश्च मनवो विबुधेश्वराः ॥ विभूतयो मम ह्येता भूतानां भूतिहेतवः ॥४५॥ तपो मे हृदयं ब्रह्मंस्तनु-र्विद्या क्रियाऽऽकृतिः ॥ अङ्गानि क्रतवो जाता धर्म आत्माऽसवः सुराः ॥ ४६ ॥ अहमेवासमेवाग्रे नान्यत्किंचान्तरं बहिः ॥ संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ॥ ४७ ॥ मय्यनन्तगुणेऽनन्ते गुणतो गुणविग्रहः ॥ यदासीत्तत एवाद्य स्वयंभूः समभूदजः ॥ ४८ ॥ स वै यदा महादेवो मम वीर्योपबृंहितः ॥ मेनेऽखिलमिवात्मानमुद्यतः सर्गकर्मणि ॥४९॥ अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम् ॥ नव विश्वसृजो युष्मान्येनादावसृजद्विभुः ॥ ५० ॥ एषा पञ्चजन-स्यांग दुहिता वै प्रजापतेः ॥ असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ॥ ५१ ॥ मिथुनव्यवायधर्मस्त्वं प्रजासर्ग-मिमं पुनः ॥ मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥५२ ॥ त्वत्तोधस्तात्प्रजाः सर्वा मिथुनीभूय मायया ॥ मदी-यया भविष्यन्ति हरिष्यन्ति च मे बलिम् ॥ ५३ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा मिषतस्तस्य भगवान्विश्वभावनः ॥ स्वप्नोपलब्धार्थ इव तत्रैवान्तर्दधे हरिः ॥५४॥ इति श्रीभागवते म० षष्ठ० दक्षोत्पत्त्यादिवर्णनं नाम चतुर्थोऽध्यायः ॥ ॥ ४ ॥ छ ॥ श्रीशुक उवाच ॥ तस्यां स पाञ्चजन्यां वै विष्णुमायोपबृंहितः ॥ हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः ॥१॥



त्वं तस्यां मैथुनधर्मेण भूरिशः प्रजाः भावयिष्यसि ॥ ५२ ॥ त्वत्तोऽधः प्रजाः मन्मायया मैथुनधर्मेणैव भविष्यन्ति ॥ ५३ ॥ इत्युक्त्वा भगवानन्तर्दधे ॥ ५४ ॥ इति श्रीभागवते चू० षष्ठ० चतुर्थोऽध्यायः ॥ ४ ॥ पञ्चमे नारदेनाथ वाचःकूटैस्तु नाशितान् ॥ सुतानाकर्ण्य दक्षोऽमुं शशापेति निरूप्यते ॥१॥ श्रीशुक उवाच ॥ स दक्षस्तस्यां हर्यश्वसंज्ञानयुतं १०००० पुत्रान् जनयामास ॥ १ ॥

हे नृप! ते समवृत्तयः प्रजासर्गे पित्रा आदिष्टाः प्रतीचीं दिशं ययुः ॥ २ ॥ तत्र नारायणसरसि ॥ ३ ॥ स्नानादेव गतमलाशयाः सन्तः ॥ ४ ॥ प्रजाविवृद्धये उग्रं तपस्तेपिरे । नारदस्तत्रैत्य तानुवाच ॥५॥ हे हर्यश्वाः ! भुवोऽन्तं न दृष्ट्वा यूयं बालबुद्ध्या प्रजाः कथं स्रक्ष्यथ॥६॥ तथैकपुरुषं राष्ट्रम् अदृष्टनिर्गमं बिलं बहुरूपां स्त्रियम् ॥७॥ पुंश्चलीपतिं पुरुषम् उभयतोवाहां नदीं पञ्चविंशतेर्गृहं चित्रकथं हंसं स्वतन्त्रभ्रमण-

अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप ॥ पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २॥ तत्र नारायणसरस्तीर्थं सिन्धुसमुद्रयोः संगमो यत्र सुमहन्मुनिसिद्धनिषेवितम् ॥३॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥४॥ तेपिरे तप एवोग्रं पित्रादेशेन यन्त्रिताः ॥ प्रजाविवृद्धये यत्तान्देवर्षिस्तान्ददर्श ह ॥५॥ उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः ॥ अदृष्ट्वान्तं भुवो यूयं बालिशा बत पालकाः ॥ ६ ॥ तथैकपुरुषं राष्ट्रं बिलं चादृष्टनिर्गमम् ॥ बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥ ७ ॥ नदीमुभयतोवाहां पञ्चपञ्चाद्भुतं गृहम् क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयं भ्रमिम् ॥ ८ ॥ कथं स्वपितुरादेशमविद्वांसो विपश्चितः ॥ अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ॥ ९ ॥ श्रीशुक उवाच ॥ तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया ॥ वाचःकूटं तु देवर्षेः स्वयं विममृशुर्धिया ॥ १० ॥ भूः क्षेत्रं जीवसंज्ञं यदनादि निजबन्धनम् ॥ अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥ ११ ॥ एक एवेश्वरस्तुर्यो भगवान्स्वाश्रयः परः ॥ तमदृष्ट्वाऽभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ १२ ॥

स्वभावं च ॥८॥ विपश्चितः स्वपितुरादेशं च न विज्ञाय कथं सर्गं करिष्यथ ॥९॥ श्रीशुक उवाच ॥ हर्यश्वाः वाचःकूटं निशम्य धिया विचारयामासुः ॥१०॥ लिङ्गशरीरनाशमदृष्ट्वाऽसत्कर्मभिः किं भवेत् ॥११॥ एक एव भगवानाश्रयः सर्वसाक्षी तमदृष्ट्वाऽसत्कर्मभिः किं भवेत्॥१२॥

---

१ एकाचारस्वभावाः। २ अतिविस्तीर्णम्। ३ एकः पुरुषो यस्मिन् तत्। ४ द्वितीयान्तानां राष्ट्रादिभ्रम्यन्तानामदृष्ट्वेत्यनेन सम्बन्धः ५ क्षुरैः पविभिश्च निर्मितमतितीक्ष्णमित्यर्थः ६ स्वतन्त्रम्। ७ लिङ्गशरीरम्। ८ आत्मनो बन्धनम्। ९ मोक्षानुपयोगिभिः। १० ईश्वरासमर्पितैः।

पातालमिव तज्ज्योतीरूपं ब्रह्म। यत्र गत्वा न निवर्तेत तमदृष्ट्वाऽसत्कर्मभिः किम् ॥ १३ ॥ रजआदिगुणैर्युक्तबुद्धेर्विवेकमदृ० अ० ॥ १४ ॥ बुद्धिसङ्गभ्रंशितैश्वर्यं संसरन्तं जीवमज्ञात्वा अ० ॥ १५ ॥ उत्पन्ननाशकरीं मायामदृ० अ० ॥ १६ ॥ पञ्चविंशतितत्त्वानां यः आश्रयस्तं न



पुमान्नैवैति यद्गत्वा बिलसर्गं गतो यथा ॥ प्रत्यग्धामाऽविद् इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥ नानारूपाऽऽत्मनो बुद्धिः स्वैरिणीव गुणान्विता ॥ तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥ तत्सङ्गभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् ॥ तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥१५॥ सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिताम् ॥ मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत् ॥ १६ ॥ पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणम् ॥ अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥१७॥ ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १८ ॥ कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत् ॥ स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ॥ कथं तदनुरूपाय गुणविश्रम्भ्युपक्रमेत् ॥ २० ॥ इति व्यवसिता राजन्हर्यश्वा एकचेतसः ॥ प्रययुस्तं परिक्रम्य पन्थानमनिवर्तनम् ॥ २१ ॥ स्वरब्रह्मणि निर्भातहृषीकेशपदाम्बुजे ॥ अखण्डं चित्तमावेश्य लोकाननुचरन्मुनिः ॥ २२ ॥

जानतः अ० ॥ १७ ॥ ईश्वरप्रतिपादकं शास्त्रं बन्धमोक्षानुदर्शनमज्ञात्वा अ० ॥ १८ ॥ कालचक्रं भ्रमणात्मकं जगदाकर्षकमज्ञात्वा अ० ॥ १९ ॥ शास्त्ररूपपितुरादेशमात्मबन्धनं न वेद सः ॥ २० ॥ एकचेतसस्ते एवं विचार्य नारदं परिक्रम्यापुनरावृत्तिं मार्गं ययुः ॥ २१ ॥ नारदो वीणां क्वणयन् हरिं ध्यायन् विचचार ॥ २२ ॥



१ नश्वरस्वर्गादिसाधनैः। २ अशान्तैः। ३ अजानतः। ४ बुद्ध्यविवेकप्राप्तैः। ५ वेलाकूलं प्रवाहपतितानां निर्गमस्थानं तपोविद्यादि तस्यान्ते समीपे वेगितां निर्गमप्रतिबन्धाय क्रोधाहंकारादिभिः कृतवेगाम्। ६ मायिकैः। ७ मिथ्यास्वातन्त्र्यकृतैः। ८ बहिर्मुखैः। ९ फलस्य नित्यबुद्ध्या काम्यकर्मानुष्ठाने वैगुण्यबाहुल्यात् असद्भिः। १० द्वितीयजन्महेतोः। ११ विवृत्यनुरूपाय। १२ गुणमय प्रकृतिमार्गं विश्वासवान् ॥

ततो दक्षो नारदात् पुत्राणां नाशं निशम्य सुप्रजस्त्वं शोचन् दुःखी बभूव॥२३॥ पुनर्ब्रह्मणा सान्त्वितो दक्षः शबलाश्वसंज्ञान् सहस्रं पुत्रान् जनयामास ॥२४॥ तेऽपि प्रजासर्गे पित्राऽऽदिष्टाः सन्तो नारायणसरः आजग्मुः ॥२५॥ ते तत्र सरसि स्नात्वा ब्रह्म जपन्तस्तपस्तेपुः ॥२६॥ अब्भक्षाः वायुभोजनाश्च सन्तो हरिं पूजयन्तः इमं मन्त्रं जपन्ति ॥२७॥ ॐ नमो नारायणायेत्यादि॥२८॥ हे नृप ! तानपि नारदः एत्य पूर्ववत्कूटान्यु-

नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ॥ अन्वतप्यत कः शोचन् सुप्रजस्त्वं शुचां पदम् ॥ २३ ॥ स भूयः पाञ्चजन्यायामजेन परिसान्त्वितः ॥ पुत्रानजनयद्दक्षः शबलाश्वान् सहस्रशः ॥ २४ ॥ तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ॥ नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः ॥ २५ ॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ जपन्तो ब्रह्म परमं तेपुस्तत्र महत्तपः ॥ २६ ॥ अब्भक्षाः कतिचिन्मासान् कतिचिद् वायुभोजनाः ॥ आराधयन्मन्त्रमिममभ्यस्यन्त इडस्पतिम् ॥ २७ ॥ ॐ नमो नारायणाय पुरुषाय महात्मने ॥ विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥ इति तानपि राजेन्द्र प्रतिसर्गधियो मुनिः ॥ उपेत्य नारदः प्राह वाचः कूटानि पूर्ववत् ॥ २९ ॥ दाक्षायणाः संशृणुत गदतो निगमं मम ॥ अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः ॥ ३० ॥ भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ॥ स पुण्यबन्धुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥ एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ॥ तेऽपि चान्वगमन् मार्गं भ्रातॄणामेव मारिष ॥ ३२ ॥ सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ॥ नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥ ३३ ॥ एतस्मिन् काल उत्पातान् बहून् पश्यन् प्रजापतिः ॥ पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ ३४ ॥

वाच ॥२९॥ हे शबलाश्वाः। भ्रातॄणां पदवीं विलोकयत ॥३०॥ यो भ्रातृवर्त्मानुगच्छति स मरुद्भिः सह मोदते॥३१॥ एवमुक्त्वा नारदो ययौ ते भ्रातॄणां मार्गं जग्मुः ॥३२॥ अद्यापि न निवर्तन्ते ॥३३॥ एतस्मिन् काले दक्षो बहूनुत्पातान् पश्यन् पूर्ववत् नारदकृतं पुत्रनाशं शुश्राव॥३४॥

१ उपदेशम्। २ समीचीनम्। ३ प्रत्यग्वृत्तिलभ्यम्। ४ गताः।

ततः क्रोधेन स्फुरिताधरो दक्षः आगतं नारदं जगाद ॥ ३५ ॥ अहो असाधो। त्वया साधुरूपेण बालानां भिक्षोर्मार्गो दर्शितः ॥ ३६ ॥ त्रिभिर्ऋणैरमुक्तानामुभयोर्लोकयोर्विघातः कृतः ॥३७॥ एवं त्वं निर्दयो बालानां मतिभित् निर्लज्जः सन् हरेः पार्षदमध्ये कथं चरसि ॥३८॥ त्वां विना साधवो भूतानुग्रहपराः ॥३९॥ पुंसां स्नेहपाशदूरीकरणं विना वैराग्यं मृषा ॥४०॥ यथा नरो विषयोद्भवं सुखदुःखानुभवं ज्ञात्वा

चुक्रोध नारदायासौ पुत्रशोकविमूर्च्छितः ॥ देवर्षिमुपलभ्याह रोषाद्विस्फुरिताधरः ॥३५॥ दक्ष उवाच ॥ अहो असाधो साधूनां साधुलिङ्गेन नस्त्वया ॥ असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥ ऋणैस्त्रिभिरमुक्तानाममीमां-सितकर्मणाम् ॥ विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥ एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः ॥ पार्षदमध्ये चरसि यशोहा निरपत्रपः ॥३८॥ ननु भागवता नित्यं भूतानुग्रहकातराः ॥ ऋते त्वां सौहृदघ्नं व वैरंकर-मवैरिणाम् ॥३९॥ नेत्थं पुंसां विरागः स्यात् त्वया केवलिना मृषा ॥ मन्यसे यद्युपशमं स्नेहपाशनिकृन्तनम् ॥ ४० ॥ नानुभूय न जानाति पुमान् विषयतीक्ष्णताम् ॥ निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥ यन्नस्त्वंकर्म संधानां साधूनां गृहमेधिनाम् ॥ कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥४२॥ तन्तुकृन्तन यन्नस्त्वमभद्रमचरः पुनः ॥ तस्माल्लोकेषु ते मूढ न भवेद् भ्रमतः पदम् ॥ ४३ ॥ श्रीशुक उवाच ॥ प्रतिजग्राह तद्बाढं नारदः साधुसंमतः ॥ एतावान् साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे दक्षकृतनारदशापो नाम पञ्चमोऽध्यायः ॥ ५ ॥



पश्चाद् वैराग्यं प्राप्नोति तथा तदनुभवं न ज्ञात्वा परबोधेन न ॥ ४१ ॥ त्वयाऽस्माकमप्रियं कृतम् ॥ ४२ ॥ त्वया वंशच्छेदः कृतः। अतो लोके भ्रमतस्ते पदं स्थिरं न भवेत् ॥ ४३ ॥ श्रीशुक उवाच ॥ नारदः प्रतिशप्तुं समर्थोऽपि तच्छापं जगृहे ॥ ४४ ॥ इति श्रीभागवते चूर्णि-कायां षष्ठस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

१ जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् भवति। ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः इत्युक्तप्रकारैः।

षष्ठे दक्षेण सृष्टायां कन्याषष्ट्यां प्रकीर्तितः । पृथग्वंशो यतो जातो विश्वरूपो दितेः सुतात् ॥ १ ॥ श्रीशुक उवाच ॥ हे नृप ! ततो ब्रह्मणा सान्त्वितो दक्षः षष्टिं कन्याः जनयामास ॥१॥ तत्र धर्माय दश १०, कश्यपाय त्रयोदश १३, चन्द्राय सप्तविंशतिः २७, भूतायद्वे २, अङ्गिरसे द्वे २, कृशाश्वाय द्वे २, तार्क्ष्येति नामान्तरं प्राप्ताय कश्यपाय चतस्रः ४ ॥२॥ यासां प्रसवैस्त्रयो लोकाः आपूरिताः ॥३॥ धर्मपत्नीनामानि--भानुः १, लम्बा २, ककुप् ३, जामिः ४, विश्वा ५, साध्या ६, मरुत्वती ७, वसुः ८, मुहूर्ता ९, संकल्पा १० इति । तासां पुत्रपौत्रान् शृणु ॥४॥ भानोर्देव-

श्रीशुक उवाच ॥ ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयंभुवा ॥ षष्टिं संजनयामास दुहितॄः पितृवत्सलाः ॥१॥ दश-धर्माय कायेन्दोर्द्विषट् त्रिणव दत्तवान् ॥ भूताङ्गिरः कृशाश्वेभ्यो द्वे द्वे तार्क्ष्याय चापराः ॥२॥ नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ॥ यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः ॥३॥ भानुर्लम्बा ककुब्जामिर्विश्वा साध्या मरुत्वती ॥ वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः सुताञ्छृणु ॥४॥ भानोस्तु देवऋषभ इन्द्रसेनस्ततो नृप ॥ विद्योत आसील्लम्बायास्ततश्च स्तनयित्नवः ॥५॥ ककुभः संकटस्तस्यकीकटस्तनयो यतः ॥ भुवो दुर्गाणि जामेयः स्वर्गो नन्दिस्ततोऽभवत् ॥ ६ ॥ विश्वेदेवास्तु विश्वाया अप्रजांस्तान् प्रचक्षते ॥ साध्यो गणस्तु साध्यायाअर्थसिद्धिस्तु तत्सुतः ॥७॥ मरुत्वांश्च जयन्तश्च मरुत्वत्या बभूवतुः ॥ जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः ॥८॥ मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे ॥ ये वै फलं प्रयच्छन्ति भूतानां स्वस्वकालजम् ॥९॥ संकल्पायाश्च संकल्पः कामः संकल्पजः स्मृतः ॥ वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥१०॥ द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः ॥ द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥११॥

ऋषभः । तस्येन्द्रसेनः । लम्बायाः विद्योतः । तस्य स्तनयित्नवः ॥५॥ ककुभः संकटः । तस्य कीकटः । ततो दुर्गाभिमानिनो देवाः । जाम्याः स्वर्गः । ततो नन्दिः ॥६॥ विश्वायाः विश्वेदेवाः । तेऽप्रजाः । साध्यायाः साध्यो गणः । ततोऽर्थसिद्धिः ॥ ७ ॥ मरुत्वत्या मरुत्वान् जयन्तश्च यमुपेंद्रं विदुः ॥८॥ मुहूर्तायाः मौहूर्तिकाः देवगणाः ॥ ९ ॥ संकल्पायाः संकल्पः । ततः कामः । वसोरष्टौ वसवः । तेषां नामानि ॥ १० ॥ द्रोणः १, प्राणः २, ध्रुवः ३, अर्कः ४, अग्निः ५, दोषः ६, वसुः ७, विभावसुः ८ । तेषां वंशाः द्रोणस्याभिमत्यां हर्षशोकभयादयः आसन् ॥११॥

प्राणस्योर्जस्वत्यां सहः आयुः पुरोजवः । ध्रुवस्य धरण्यां विविधाः पुरः पुराणि ॥ १२ ॥ अर्कस्य वासनायां तर्षादयः । अग्नेर्वसोर्धारायां द्रविणकादयः ॥१३॥ अन्यस्यां कृत्तिकायां स्कन्दः । तस्य विशाखादयः । दोषस्य शर्वर्यां शिशुमारः ॥१४॥ आङ्गिरस्यां वसोर्विश्वकर्मा । तस्य चाक्षुषो मनुः । ततो विश्वे साध्याः ॥ १५ ॥ विभावसोरुषायां व्युष्टो रोचिरातपः इति । आतपाद् दिवसो जातः ॥ १६ ॥ भूतस्य सरूपायां रैवतः १, अजः २, भवः ३, भीमः ४, वामः ५, उग्रः ६, वृषाकपिः ७, अजैकपात् ८, अहिर्बुध्न्यः ९, बहुरूपः १०, महान् ११,

प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ॥ ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः ॥ १२ ॥ अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ॥ अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥ स्कन्दश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ॥ दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला ॥१४॥ वसोराङ्गिरसोपुत्रो विश्वकर्मा कृतीपतिः ॥ ततो मनुश्चाक्षुषोऽभूद्विश्वे साध्या मनोः सुताः ॥ १५ ॥ विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ॥ पञ्चयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥ सरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ॥ १७ ॥ अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ॥ रुद्रस्य पार्षदाश्चान्ये प्रेतभूतविनायकाः ॥ १८ ॥ प्रजापतेरंगिरसः स्वधा पत्नी पितॄनथ ॥ अथर्वाङ्गिरसं वेदं पुत्रत्वे चाकरोत् सती ॥ १९ ॥ कृशाश्वोऽर्चिषि भार्यायां धूम्रकेशमजीजनत् ॥ धिषणायां वेदशिरा देवलं वयुनं मनुम् ॥ २० ॥ तार्क्ष्यस्य विनता कद्रूः पतंगी यामिनी इति ॥ पतङ्ग्यसूत पतगान् यामिनी शलभानथ ॥ २१ ॥ सुपर्णाऽसूत गरुडं साक्षाद्यज्ञेशवाहनम् ॥ सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥

॥१७॥ अन्यस्यां भार्यायां भूतविनायकप्रेतादयः । ते एकादश रुद्राणां पार्षदाः आसन् ॥१८॥ अङ्गिरसः स्वधापत्न्यां पितरः । अन्यस्यां सत्यामथर्वाङ्गिराः नाम वेदो जातः ॥ १९ ॥ कृशाश्वस्यार्चिषि धूम्रकेशः । अन्यस्यां धिषणायां देवलः १, वयुनः, २, मनुः ३ एते जाताः ॥ २० ॥ तार्क्ष्यस्य विनतायां गरुडोऽरुणश्च । कद्रूसंज्ञायां नागाः पतङ्ग्यां पक्षिणः । यामिन्यां शलभाः ॥ २१ ॥ २२ ॥

चन्द्रस्य कृत्तिकादयः स्त्रियः। दक्षशापात् क्षयरोगी चानपत्यश्च। स दक्षं प्रसाद्य कलाः लेभे न पुत्रान्॥२३॥ कश्यपपत्नीनामानि शृणु याभ्यो जगदुत्पन्नम्॥२४॥ अदितिः १, दितिः २, दनुः ३, काष्ठा ४, अरिष्टा५, सुरसा ६, इला७, मुनिः ८, क्रोधवशा९, ताम्रा १०, सुरभिः ११, सरमा १२, तिमिः १३॥२५॥ तिमेर्यादोगणाः। सरमायाः श्वापदाः। सुरभेर्महिषादयो द्विशफाः॥२६॥ ताम्राया गृध्राद्याः। मुनेरप्सरोगणाः। क्रोधवशाया दन्दशूकादिसर्पाः॥२७॥ इलायाः वृक्षाः। सुरसायाः राक्षसाः। अरिष्टाया गन्धर्वाः। काष्ठायाः अश्वाद्याः एकशफाः॥२८॥ दनोरेकषष्टिः सुताः।

कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारत॥ दक्षशापात् सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः॥ पुनः प्रसाद्य तं सोमः कला लेभे क्षये र्दिताः[1]॥ २३॥ शृणु नामानि लोकानां मातॄणां शंकराणि च॥ अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्॥२४॥ अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला॥ मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः॥२५॥ तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः॥ सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप॥ २६॥ ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः॥ दन्दशूकादयः सर्पा राजन् क्रोधवशात्मजाः॥२७॥ इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः॥ अरिष्टायाश्च गन्धर्वाः काष्ठाया द्विशफेतराः॥२८॥ सुता दनोरेकषष्टिस्तेषां प्राधानिकाञ्शृणु॥ द्विमूर्धा शम्बरोऽरिष्टो हयग्रीवो विभावसुः॥२९॥ अयोमुखः शङ्कुशिराःस्वर्भानुः कपिलोऽरुणः॥ पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः॥३०॥ धूम्रकेशो[2] विरूपाक्षो विप्रचित्तिश्च दुर्जयः॥ स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल॥३१॥ वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली॥ वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः॥उपदानवी हयशिरा पुलोमाकालका तथा॥३२॥

मुख्यास्तु द्विमूर्धा १, शम्बरः २, अरिष्टः ३, हयग्रीवः ४, विभावसुः ५॥२९॥ अयोमुखः ६, शङ्कुशिराः ७, स्वर्भानुः ८, कपिलः ९, अरुणः १०, पुलोमा ११, वृषपर्वा १२, एकचक्रः १३, अनुतापनः १४॥३०॥ धूम्रकेशः १५, विरूपाक्षः १६, विप्रचित्तिः १७, दुर्जयः १८ इति। स्वर्भानोः सुप्रभां कन्यां नमुचिरुवाह। वृषपर्वणः शर्मिष्ठां ययातिः॥ ३१॥ दनोः पुत्रो वैश्वानरः। तस्य कन्या उपदानवी १, हयशिरा २, पुलोमा ३, कालका ४॥३२॥

---

१ कृष्णपक्षे खण्डिताः। 'क्षयंधिताः' इ० पा०। २ 'धूमकेशः' इ० पा०।

हिरण्याक्षः उपदानवीं क्रतुर्हयशिरां ब्रह्मप्रेरितः कश्यपः पुलोमां कालकां चोवाह ॥ ३३ ॥ ताभ्यां षष्टिसहस्राणि युद्धशालिनो दानवाः आसन् अर्जुनः स्वर्गगतः सन् तान् जघान ॥ ३४ ॥ विप्रचित्तिः सिंहिकायां राहुज्येष्ठं केतुशतं, यो ग्रहत्वं प्राप ॥ ३५ ॥ अथादितेर्वंशं शृणु । यत्र नारायणोंऽशेनावातरत्॥३६॥अदितेः पुत्रा द्वादश । विवस्वान् १, अर्यमा २, पूषा ३, त्वष्टा ४, सविता ५, भगः ६, धाता ७, विधाता ८, वरुणः ९, मित्रः १०, शक्रः ११, उरुक्रमः १२ ॥३७॥ तत्र विवस्वतः पत्नी संज्ञा श्राद्धदेवं मनुं यमं यमुनां च सुषुवे । सा तुरगी भूत्वा ।

उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ॥ पुलोमां कालकां च द्वे वैश्वानरसुते तु कः ॥ उपयेमेऽथ भगवान् कश्यपो ब्रह्मचोदितः ॥३३॥ पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ॥ तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ॥ जघान स्वर्गतो राजन्नेक इन्द्रप्रियंकरः ॥ ३४ ॥ * विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् ॥ राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः ॥३५॥ अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ॥ यत्र नारायणो देवःस्वांशेनावातरद् विभुः ॥ ३६ ॥ विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ॥ धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥ ३७ ॥ विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम् ॥ मिथुनं च महाभागा यमं देवं यमीं तथा ॥ स वै भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि ॥ ३८ ॥ छाया शनैश्चरं लेभे सावर्णिं च मनुं ततः ॥ कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥ ३९ ॥ अर्य्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ॥ यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥ ४० ॥ पूषाऽनपत्यः पिष्टादो भग्नदन्तोऽभवत् पुरा ॥ योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥४१॥ त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका ॥ सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४२ ॥ तं वव्रिरे सुरगणा दौहित्रं द्विषतामपि ॥ विमतेन परित्यक्ता गुरुणाऽऽङ्गिरसेन यत् ॥ ४३ ॥ इति श्रीभाग ० म० षष्ठ० दक्षकन्यावंशवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

ऽश्विनीकुमारौ सुषुवे ॥३८॥ पुनः सैव छाया शनैश्चरं सावर्णिं मनुं तपतीं कन्यां च सुषुवे या संवरणं वव्रे ॥ ३९ ॥ अर्य्यम्णो मातृकायां मनुष्याः आसन् ॥४०॥ पूषा पिष्टभुगनपत्यः ॥४१॥ त्वष्टुः रचनायां संनिवेशो विश्वरूपश्च जज्ञे ॥४२॥ बृहस्पतिना त्यक्ताः देवाः द्विषतां दौहित्रमपि विश्वरूपं पौरोहित्याय वव्रिरे ॥ ४३ ॥ इति श्रीभागवते चू० षष्ठ० षष्ठोऽध्यायः ॥ ६ ॥

* "दितेः सुतौ हिरण्याक्षो हिरण्यकशिपुस्तथा ॥ कन्या च सिंहिका नाम बभूव कुरुसत्तम ॥" इत्यधिकः पाठः ।

सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतः सुरैः॥ गुरुणा संपरित्यक्तैः पौरोहित्यमथाकरोत् ॥१॥ राजोवाच॥ हे ब्रह्मन्! बृहस्पतिः कस्माद् देवान् त्यक्तवान् एतद् वद ॥१॥ श्रीशुक उवाच ॥ इन्द्रस्त्रिभुवनैश्वर्यमदेन मत्तो मरुद्भिः सिद्धचारणगन्धर्वैर्विद्याधराप्सरोभिः संवेष्टितः ॥२॥३॥४॥ सिंहासने स्थितः ॥५॥ छत्रचामरैर्युतः इन्द्राण्या विराजमानः सन् ॥६॥७॥ सभागतं बृहस्पतिं पश्यन्नपि नोत्थानेनाभ्यनन्दत् ॥८॥ तदा

राजोवाच ॥ कस्य हेतोः परित्यक्ता आचार्येणात्मनः सुराः ॥ एतदाचक्ष्व भगवञ्छिष्याणामक्रमं गुरौ ॥ १ ॥ श्रीशुक उवाच ॥ इन्द्रस्त्रिभुवनैश्वर्यमदोल्लङ्घितसत्पथः ॥ मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ॥२॥ विश्वैर्देवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ॥ सिद्धचारणगन्धर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥ विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ॥ निषेव्यमाणो मघवान् स्तूयमानश्च भारत ॥ ४ ॥ उपगीयमानो ललितमास्थानाध्यासनास्थितः ॥ पाण्डुरेणातपत्रेण चन्द्रमण्डलचारुणा ॥ ५ ॥ युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ॥ विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥ स यदा परमाचार्यं देवानामात्मनश्च ह ॥ नाभ्यनन्दत संप्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥ वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ॥ सोच्चचालासनादिन्द्रः पश्यन्नपि सभागतम् ॥ ८ ॥ ततो निर्गत्य सहसा कविराङ्गिरसः प्रभुः ॥ आययौ स्वगृहं तूष्णीं विद्वाञ्छ्रीमदविक्रियाम् ॥ ९ ॥ तर्ह्येव प्रतिबुध्येन्द्रो गुरुहेलनमात्मनः ॥ गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥ अहो बत मयाऽसाधु कृतं वै दभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥ को गृध्येत् पण्डितो लक्ष्मीं त्रिविष्टपपतेरपि ॥ ययाऽहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥१२॥ ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कंचन ॥ प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥

गुरुर्मदेन व्याप्तमिन्द्रं दृष्ट्वा गृहमाययौ ॥९॥ ततः इन्द्रो गुरोरपमानं ज्ञात्वा सदसि स्वं निन्दयन्नाह ॥१०॥ अहो! ऐश्वर्यमत्तेन मया सदसि गुरुस्तिरस्कृतः ॥११॥ धिङ् मां ममैश्वर्यं च योऽहमासुरं भावं श्रितः। राज्ञाऽऽसनात् नोत्थातव्यमिति ये वदन्ति ते धर्मं न विदुः ॥ १२॥१३॥

ये कुपथदेष्टॄणां वचनं श्रद्दध्युः तेऽधः पतन्ति ॥ १४ ॥ अतो गुरुं प्रसादयिष्ये ॥१५॥ एवं चिन्तयतः सतो बृहस्पतिरात्ममाययाऽन्तर्धानं गतः ॥१६॥ इन्द्रो देवैः सह गुरुमप्राप्य शर्म न लेभे ॥१७॥ तत श्रुत्वा सर्वे दैत्याः शुक्रमाश्रित्य देवान् प्रति योद्धुमुद्योगं चक्रुः ॥ १८ ॥ तदा तेषां बाणैर्भिन्नाङ्गा सेन्द्राः देवा ब्रह्माणं शरणं जग्मुः ॥१९॥ ब्रह्मा तान् दुःखितान् दृष्ट्वा जगाद ॥ २० ॥ अहो देवाः ! भवद्भिरैश्वर्याद्

तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ॥ ये श्रद्दध्युर्वचस्ते वै मज्जन्त्यश्मप्लवा इव ॥ १४ ॥ अथाहममराचार्यमगाधधिषणं द्विजम् ॥ प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥ एवं चिन्तयतस्तस्य मघोनो भगवान् गृहात् ॥ बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥ गुरोर्नाधिगतः संज्ञां परीक्षन् भगवान् स्वराट् ॥ ध्यायन् धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥ १७ ॥ तच्छ्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम् ॥ देवान् प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥१८॥ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुबाहवः ॥ ब्रह्माणं शरणं जग्मुः सहेन्द्रा नतकन्धराः ॥ १९ ॥ तांस्तथाऽभ्यर्दितान् वीक्ष्य भगवानात्मभूरजः ॥ कृपया परया देव उवाच परिसान्त्वयन् ॥ २० ॥ ब्रह्मोवाच ॥ अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत् ॥ ब्रह्मिष्ठं ब्राह्मणं दान्तमैश्वर्यान्नाभ्यनन्दत ॥२१॥ तस्यायमनयस्यासीत् परेभ्यो वः पराभवः ॥ प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत् सुराः ॥ २२ ॥ मघवन् द्विषतः पश्य प्रक्षीणान् गुर्वतिक्रमात् ॥ सम्प्रत्युपचितान् भूयः काव्यमाराध्य भक्तितः ॥ आददीरन् निलयनं ममापि भृगुदेवताः * ॥२३॥ त्रिविष्टपं किं गणयंत्यभेद्यमन्त्रा भृगूणामनुशिक्षितार्थाः ॥ न विप्रगोविन्दगवीश्वराणां भवन्त्यभद्राणि नरेश्वराणाम् ॥ २४ ॥ तद् विश्वरूपंभजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवन्तम् ॥ सभाजितोऽर्थान् स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥

गुरुस्तिरस्कृतः । अतो महदभद्रं कृतम् ॥२१॥ यतः शत्रुभ्यो वः पराभवः आसीत् ॥ २२ ॥ हे मघवन् ! गुर्वतिक्रमं पश्य । तव शत्रवो भक्त्या शुक्रमाराध्य ॥ २३ ॥ स्वर्गमपि ग्रहीष्यन्ति ॥ २४ ॥ तस्मादाशु विश्वरूपं भजत । स भवदर्थान् विधास्यते ॥ २५ ॥

* "गुरोः प्रसादमासाद्य न किंचित् दुर्लभं नृणाम् ॥" इत्यधिकः पाठः । १ विप्रादयः ईश्वराः अनुग्राहकाः येषां तेषाम् । २ असुरपक्षपातम् ।

श्रीशुक उवाच ॥ एवं ब्रह्मवचः श्रुत्वा विश्वरूपं गत्वा ॥२६॥ देवा ऊचुः ॥ हे तात ! वयमतिथयः प्राप्ताः । अस्माकं कामः संपाद्यताम् ॥२७॥ पुत्राणां पितृशुश्रूषणं परो धर्मः ॥ २८॥ यतो गुरुर्वेदस्य मूर्तिः पिता ब्रह्मणो मूर्तिः भ्रातेन्द्रस्य मूर्तिः । माता क्षितेर्मूर्तिः॥२९॥ भगिनी दयायाः मूर्तिः । अतिथिर्धर्मस्य मूर्तिः । सर्वभूतानि श्रीविष्णोर्मूर्तिः ॥३०॥ अतो नः पितॄणां दुःखं तपसा नाशयन् सन्नाज्ञां कर्तुमर्हसि॥३१॥त्वामु-

श्रीशुक उवाच॥ त एवमुदिता राजन् ब्रह्मणा विगतज्वराः ॥ ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥ देवा ऊचुः ॥ वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ॥ कामः संपाद्यतां तात पितॄणां समयोचितः ॥ २७ ॥ पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ॥ अपि पुत्रवतां ब्रह्मन् किमुत ब्रह्मचारिणाम् ॥ २८ ॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥ भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात् क्षितेस्तनुः ॥ २९ ॥ दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् ॥ अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३० ॥ तस्मात् पितॄणामार्तानामार्तिं परपराभवम् ॥ तपसाऽपनयंस्तात संदेशं कर्तुमर्हसि ॥३१॥ वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ॥ यथाऽञ्जसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥ न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् ॥ छन्दोभ्योऽन्यत्र न ब्रह्मन् वयो ज्यैष्ठ्यस्य कारणम् ॥ ३३ ॥ ऋषिरुवाच ॥ अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ॥ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥ ३४ ॥ विश्वरूप उवाच ॥ विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् ॥ कथं नु मद्विधो नाथा लोकेशैरभियाचितम् ॥ प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ॥ ३५ ॥ अकिञ्चनानां हि धनं शिलोञ्छनं तेनेह निर्वर्तितसाधुसत्क्रियः ॥ कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ॥ ३६ ॥

पाध्यायं वृणीमहे तव तेजसा शत्रून् जेष्यामः ॥३२॥ कार्येषु कनिष्ठवन्दनं न निन्दन्ति मन्त्रेभ्योऽन्यत्र वयो ज्यैष्ठ्यस्य कारणं न तु मन्त्रेषु, अतो मन्त्रदानेनत्वमेव ज्येष्ठो भविष्यसि॥३३॥ एवं देवैः पौरोहित्ये प्रार्थितो विश्वरूपस्तानाह ॥३४॥ विश्वरूप उवाच ॥ हे देवाः ! स्वपुण्यनाशकं पौरोहित्यं युष्मत्प्रार्थनया करिष्यामि ॥ ३५ ॥ दुर्मतिर्धनेच्छया तत् कर्तुं हृष्यति । संतुष्टो निर्धनोऽपि धर्ममाचरति ॥ ३६ ॥

१ पूर्वसंचितब्रह्मवर्चसो व्ययकरम् ।

तथाऽपि भवतां प्रार्थितं प्राणैरर्थैश्च साधये॥ ३७ ॥ श्रीशुक उवाच ॥ विश्वरूपः एवं प्रतिज्ञाय पौरोहित्यं चक्रे ॥ ३८ ॥ शुक्रविद्यया रक्षितां दैत्यश्रियं वैष्णव्या विद्ययाऽऽकृष्येन्द्राय ददौ ॥३९॥ इन्द्रो यया रक्षितः सन् दैत्यसेना जिग्ये विश्वरूपस्तामिन्द्रायाह ॥४०॥ इति श्रीभाग० चू० षष्ठस्कंधे सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् । इन्द्राय प्राह येनेन्द्रो गुप्तो दैत्यानथाजयत् ॥ १ ॥ राजो-

तथाऽपि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत्॥ भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३७ ॥ श्रीशुक उवाच ॥ तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ॥ पौरोहित्यं वृतश्चक्रे परमेण समाधिना ॥ ३८ ॥ सुरद्विषां श्रियं गुप्ता-मौशनस्याऽपि विद्यया ॥ आच्छिद्यादान्महेन्द्राय वैष्णव्या विद्यया विभुः ॥ ३९ ॥ यया गुप्तः सहस्राक्षो जिग्ये-ऽसुरचमूर्विभुः ॥ तां प्राह स महेन्द्राय विश्वरूप उदारधीः ॥ ४० ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे पौरोहित्या-येन्द्रादिकृतं विश्वरूपवरणं नाम सप्तमोऽध्यायः ॥ ७ ॥ राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाऽऽतता-यिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ॥ नाराय-णाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ॥ कृतस्वा-ङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥ नारायणमयं वर्म सन्नह्येद् भय आगते ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥ मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ॐ नमो नारायणायेति विपर्ययमथापि वा ॥६॥



वाच । इन्द्रो यया शत्रून् निर्जित्य त्रैलोक्यलक्ष्मीं बुभुजे ॥१॥ हे शुक ! तद् नारायणकवचं मे आख्याहि ॥ २ ॥ श्रीशुक उवाच ॥ विश्व-रूपः इन्द्राय यत् कवचं जगाद तत् शृणु ॥३॥ विश्वरूप उवाच ॥ हस्तपादं प्रक्षाल्याचम्योदङ्मुखो वाग्यतोऽष्टाक्षरद्वादशाक्षरमन्त्राभ्याम-ङ्गन्यासं करन्यासं च कृत्वा ॥ ४ ॥ कवचं धारयेत् ॐ नमो नारायणायेति पादाद्यष्टाङ्गेषु क्रमेण न्यसेत् ॥ ५ ॥ ६ ॥

१ विपर्ययं यथा भवत्येवं शिरआदि पादान्तं वा न्यसेत् । उत्पत्तिन्यासं संहारन्यासं वा कुर्यादित्यर्थः ।

ॐ नमो भगवते वासुदेवायेत्येवमङ्गुष्ठपर्वसु करन्यासं कुर्यात् ॥ ७ ॥ विष्णवे नम इति हृदयादिषु विन्यसेत् ॥८॥९॥ ततः ईश्वरं ध्यात्वा कवचं जपेत् ॥ १० ॥ भगवान् गरुडारूढोऽष्टबाहुः सर्वरक्षां करोतु ॥ ११ ॥ मत्स्यमूर्तिर्जलेषु मां रक्षतु । वामनः स्थलेषु । त्रिविक्रमः खे ॥ १२ ॥ नृसिंहः संकटादिस्थाने । वराहो मार्गे ॥ १३ ॥ परशुरामो गिरिशिखरे । रामचन्द्रः प्रवासे ॥१४॥ नारायणो जारणादिप्रयोगात् ।

करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ॥ प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥ ७ ॥ न्यसेद् हृदयमोंकारं विकारमनु मूर्धनि ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखयाऽऽदिशेत् ॥ वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ ८ ॥ मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद् बुधः ॥ सविसर्गं फडन्तं तत् सर्वदिक्षु विनिर्दिशेत् ॥ ॐ विष्णवे नमः फट् इति ॥ ९ ॥ आत्मानं परमं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ॥ विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥१०॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ॥ दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ ११ ॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥ स्थलेषु मायाबटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १२ ॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ॥ विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥१३॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद् भरताग्रजोऽस्मान् ॥ १४ ॥ मामुग्रधर्मादखिलात् प्रमादान्नारायणः पातु नरश्च हासात् ॥ दत्तस्त्वयोगादथ योगनाथः पायाद् गुणेशः कपिलः कर्मबन्धात् ॥ १५ ॥ सनत्कुमारोऽवतु कामदेवाद् हयशीर्षा मां पथि देवहेलनात् ॥ देवर्षिवर्यः पुरुषार्चनान्तरात् कूर्मो हरिर्मां निरयादशेषात् ॥ १६ ॥ धन्वन्तरिर्भगवान् पात्वपथ्याद् द्वन्द्वाद् भयादृषभो निर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनान्ताद् बलो गणात् क्रोधवशादहीन्द्रः ॥ १७ ॥

नरो गर्वात् । दत्तो योगभ्रंशात् । कपिलः कर्मबन्धात् ॥ १५ ॥ सनत्कुमारो मदनात् । हयशीर्षा मार्गे देवापमानात् कूर्मो निरयात् ॥१६॥ धन्वन्तरिः कुभोजनात् । ऋषभो द्वन्द्वभयात् । यज्ञो जनापवादात् । बलभद्रः कालात् । शेषः सर्पगणात् ॥ १७ ॥

व्यासोऽज्ञानात् । बुद्धः पाखण्डगणात् । कल्किः कलिकालमलात् ॥१८॥ केशवो गदया प्रातः ॥ गोविन्दः सार्धयामे । विष्णुर्मध्यन्दिने ॥१९॥ मधुहाऽपराह्णे । माधवः सायम् । हृषीकेशः प्रदोषे । पद्मनाभोऽर्धरात्रे ॥ २० ॥ ईशोऽपररात्रे । जनार्दनः उषःकाले । दामोदरोऽनुसन्ध्यम् । विश्वेश्वरः प्रभाते ॥ २१ ॥ हे चक्र ! मम रिपुसैन्यं दन्दग्धि दन्दग्धि ॥ २२ ॥ हे गदे ! यक्षभूतपिशाचाद्यरीन् चूर्णय चूर्णय ॥ २३ ॥ हे शङ्ख ! ब्रह्मराक्षसादीन् विद्रावय विद्रावय ॥२४॥ हे खड्ग ! ममारिसैन्यं तिग्मधारया छिन्धि छिन्धि । हे चर्मन् ! द्विषां चक्षूंषि छादय हर ॥ ॥ २५ ॥ ग्रहेभ्यः सर्वेभ्यो व्याघ्रादिभ्यश्च यद् भयं तत् ॥ २६ ॥ भगवन्नामकीर्तनात् सद्यः क्षयं यातु ॥ २७ ॥

द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखण्डगणात् प्रमादात् ॥ कल्किः कलेः कालमलात् प्रपातु धर्मावनायोरुकृतावतारः ॥ १८ ॥ मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गवमात्तवेणुः ॥ नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ १९ ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ॥ दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २० ॥ श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ॥ दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः ॥ २१ ॥ चक्रं युगान्तानलतिग्मनेमि भ्रमत् समन्ताद् भगवत्प्रयुक्तम् ॥ दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २२ ॥ गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियाऽसि ॥ कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २३ ॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥ २४ ॥ त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिन्धि ॥ चक्षूंषि चर्मञ्छतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥ २५ ॥ यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥ २६ ॥ सर्वाण्येतानि भवन्नामरूपास्त्रकीर्तनात् ॥ प्रयान्तु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः ॥ २७ ॥

१ सङ्गवमभिव्याप्य । २ शुष्कतृणम् । ३ अघवताम् । ४ इष्टव्याघातकाः ।

गरुडः सर्वदुःखेभ्यो रक्षतु ॥२८॥ सर्वापद्भ्यो हरेर्नाम । पार्षदाः बुद्धीन्द्रियमनः प्राणान् ॥ २९ ॥ सर्वे उपद्रवाः नामस्मरणेन नाशं यान्तु ॥ ॥३०॥ हरिर्मायियाऽऽयुधदेहाख्याः धत्ते ॥३१॥ सर्वरूपैर्हरिः सदा पातु ॥३२॥ विदिक्षु दिक्षु सर्वत्र नारसिंहः पातु ॥३३॥ हे इन्द्र ! नारायणाख्यं वर्म ते आख्यातं येन शत्रून् जेष्यसि ॥३४॥ एतद् धारयमाणो यं यं चक्षुषा पश्यति स सद्यो मुच्यते ॥ ३५ ॥ विद्यां धारयतः कुतश्चिद्

गरुडो भगवान्स्तोत्रस्तोभश्छन्दोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २८ ॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ॥ बुद्धीन्द्रियमनःप्राणान्पान्तु पार्षदभूषणाः ॥ २९ ॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् ॥ सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३० ॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ॥ भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३१ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान्हरिः ॥ पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३२ ॥ विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः ॥ प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३३ ॥ मघवन्निदमाख्यातं वर्म नारायणात्मकम् ॥ विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥ ३४ ॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ॥ पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३५ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ॥ राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥ ३६ ॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन्द्विजः ॥ योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ३७ ॥ तस्योपरि विमानेन गन्धर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३८ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः ॥ स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥३९॥

भयं न भवेत् ॥३६॥ पुरा कश्चित् कौशिको द्विजः इमां विद्यां धारयन् मरुदेशे स्वांगं जहौ ॥३७॥ एकदा तस्योपरि चित्ररथो गन्धर्वो विमानेन ययौ ॥ ३८ ॥ स सद्यः सविमानो गगनाद् न्यपतत् । पुनर्वालखिल्यवचनादस्थीन्यादाय सरस्वत्यां प्रक्षिप्य स्नात्वा स्वधाम ययौ ॥ ३९ ॥

१ मूर्तामूर्तं च यत्तत्सर्वं जगत् । २ भेदरहितः ।

श्रीशुक उवाच ॥ य इदं शृणुयाद् धारयति च च सर्वतो भयात् मुच्यते॥४०॥इन्द्रो विश्वरूपाद् विद्यामेतां प्राप्य मृधेऽसुरान् जित्वा त्रैलोक्य-लक्ष्मीं बुभुजे ॥४१॥ इति श्रीभागवते चू० षष्ठ अष्टमोऽध्यायः ॥८॥ नवमे विश्वरूपे तु हते शक्रेण कोपतः ॥ त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवै-र्हरेः स्तुतिः ॥१॥ श्रीशुक उवाच ॥ विश्वरूपस्य सोमपीथं सुरापीथमन्नादमिति त्रीणि शिरांसि ॥१॥ स एकदा यज्ञे देवेभ्यः प्रत्यक्षं हविर्भागं

श्रीशुक उवाच ॥ य इदं शृणुयात्काले यो धारयति चादृतः ॥ तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥४०॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४१ ॥ इति श्रीभागवते महा० षष्ठ० नारायणवर्मकथनं नामाष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ तस्यासन्विश्वरूपस्य शिरांसि त्रीणि भारत ॥ सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥ स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः ॥ अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ॥ २ ॥ स एव हि ददौ भागं परोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागं मातृस्नेहवशानुगः ॥ ३ ॥ तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः ॥ आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥ ४ ॥ सोमपीथं तु यत्तस्य शिर आसीत्कपिञ्जलः ॥ कलविङ्कः सुरापीथमन्नादं यत्स तित्तिरिः ॥ ५ ॥ ब्रह्महत्यामञ्जलिना जग्राह यद-पीश्वरः ॥ संवत्सरान्ते तदघं भूतानां स विशुद्धये ॥ भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ ६ ॥ भूमिस्तुरीयं जग्राह खातपूरवरेण[1] वै ॥ ईरिणं[2] ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ ७ ॥ तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः ॥ तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ ८ ॥

ददौ ॥२॥ मातृस्नेहेन दैत्येभ्यो गुप्तं भागं ददौ ॥३॥ इन्द्रः एवं तस्य कापट्यं ज्ञात्वा खड्गेन शीर्षाणि चिच्छेद ॥४॥ तत्र सोमपीथात् कपिञ्जल पक्षी सुरापीथात् कलविङ्कः अन्नादात् तित्तिरिः ॥५॥ इन्द्रस्तद्वधेन ब्रह्महत्यामञ्जलिना जग्राह । संवत्सरान्ते आत्मशुद्धये ब्रह्महत्यां चतुर्धा विभज्य भूम्यम्बुद्रुमयोषिद्भ्यो ददौ ॥ ६ ॥ तत्र भूमिः खातपूरवरेण ॥ ७ ॥ द्रुमाः अग्रच्छेदेन पुनः प्ररोहं गमिष्यथेति वरेण ॥ ८ ॥

१ खातस्य पूरणरूपेण वरेण । यदि खातपूरणं स्वत एव भविष्यति तर्हि ग्रहिष्यामीति भाषाबन्धेन । २ ईरणमूषरम् ।

स्त्रियः सगर्भत्वेऽपि संभोगक्षमत्ववरेण ॥९॥ आपः क्षीरादिमिश्रत्वेनाधिकं स्यादिति वरेण फेनरूपमलं जगृहुः ॥ १० ॥ ततस्त्वष्टा पुत्रनाशं श्रुत्वेन्द्रशत्रो विवर्धस्वेति मन्त्रेण होमं चकार ॥ ११ ॥ अत्र दक्षिणाग्नेः कृतान्त इव घोरदर्शनः पुरुषः उत्थितः ॥१२॥ तं प्रतिदिनं वर्धमानं भयंकरं दग्धशैलसदृशम् ॥१३॥ तप्तताम्रशिखाश्मश्रुम् ॥१४॥ शूलं गृहीत्वा पदा महीं कम्पयन्तम् ॥१५॥ जिह्वया ऋक्षाणि लिहन्तं भुवन-

शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ॥ रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते ॥ ९ ॥ द्रव्यभूयोवरेणापस्तु-रीयं जगृहुर्मलम् ॥ तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥ १० ॥ हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे ॥ इन्द्र-शत्रो विवर्धस्व मा चिरं जहि विद्विषम् ॥११॥ अथान्वाहार्यपचनादुत्थितो घोरदर्शनः ॥ कृतान्त इव लोकानां युगा-न्तसमये यथा ॥ १२ ॥ विष्वग्विवर्धमानं तमिषुमात्रं दिने दिने ॥ दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्चसम् ॥ १३ ॥ तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥ १४ ॥ देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी ॥ नृत्य-न्तमुन्नदन्तं च चालयन्तं पदा महीम् ॥ १५ ॥ दरीगम्भीरवक्त्रेण पिबता च नभस्तलम् ॥ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् ॥१६॥ महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः ॥ वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥१७॥ येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ॥ स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १८ ॥ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ॥ स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः ॥ १९ ॥ ततस्ते विस्मिताः सर्वे विषण्णा-ग्रस्ततेजसः ॥ प्रत्यञ्चमादिपुरुषमुपतस्थुः समाहिताः ॥ २० ॥ देवा ऊचुः ॥ वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः ॥ हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नः ॥ २१ ॥

त्रयं ग्रसता मुखेन जृम्भमाणं दृष्ट्वा त्रस्ताः सन्तो लोकाः दुद्रुवुः ॥ १६ ॥ १७ ॥ येनेमे लोकाः व्याप्ताः स वृत्रः इति प्रोक्तः ॥१८॥ इन्द्राद्या देवाः स्वैः शस्त्रास्त्रैर्निजघ्नुः । वृत्रस्तानि शस्त्रास्त्राणि जग्रास ॥ १९ ॥ तदा देवाः खिन्नाः सन्तो हरिं तुष्टुवुः ॥२०॥ देवा ऊचुः ॥ हे भग-वन् ! वयं ब्रह्मादयो यस्मै बलिं हराम यस्मात् कालोऽपि बिभेति सोऽस्माकं रक्षकोऽस्तु ॥ २१ ॥

---

१ यावत्प्रसवं गर्भानुपघातं संभोगवरेण । २ यस्मिन् द्रव्ये क्षीरादावापो मिश्राः भवेयुस्तस्याधिकं स्यादिति वरेण । ३ अन्तर्यामिणम् ।

यः ईश्वरं विनाऽन्यं शरणं गच्छति सोऽज्ञः यथा शुनः पुच्छेन समुद्रं तर्तुमिच्छति ॥ २२ ॥ यो मत्स्यरूपी भूत्वा सत्यव्रतं ररक्ष सोऽस्मान् रक्षिष्यति ॥२३॥ यः पुरा प्रलयोदके ब्रह्माणं तारयामास सोऽद्य नस्तारकोऽस्तु ॥२४॥ यः ईशः स्वमायया नः ससर्ज ॥२५॥ य शत्रुभिरर्द्य-मानान् नो नानावतारेण युगे युगे पाति ॥२६॥ तमात्मदैवतं शरणं व्रजेम । स ईश्वरो नः शं विधास्यति ॥२७॥ श्रीशुक उवाच । हे नृप !

अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् ॥ विनोपसर्पत्यपरं हि बालिशः श्वलाङ्गुलेनातितितर्ति सिन्धुम् ॥२२॥ यस्योरुशृंगे जगतीं स्वनावं मनुर्यथाऽऽबध्य ततार दुर्गम् ॥ स एव नस्त्वाष्ट्रभयाद्दुरन्तात्त्राताऽऽश्रितान्वारिचरोऽपि नूनम् ॥ २३ ॥ पुरा स्वयंभूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले ॥ एकोऽरविन्दात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः ॥२४॥ य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम् ॥ वयं न यस्यापि पुरः समीहतः पश्याम लिंगं पृथगीशमानिनः ॥ २५ ॥ यो नः सपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषु नित्य एव ॥ कृतावतारस्तनुभिः स्वमायया कृत्वाऽऽत्मसात्पाति युगे युगे च ॥ २६ ॥ तमेव देवं वयमात्मदैवतं परं प्रधानंपुरुषं विश्वमन्यम् ॥ व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥२७॥ श्रीशुक उवाच ॥ इति तेषां महाराज सुराणामुपतिष्ठताम् ॥ प्रतीच्यां दिश्यभूदाविः शङ्खचक्रगदाधरः ॥२८॥ आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्रशरदम्बुरुहेक्षणम् ॥ २९ ॥ दृष्ट्वा तमवनौ सर्वं ईक्षणाह्लादविक्लवाः ॥ दण्डवत्पतिता राजञ्छनैरुत्थाय तुष्टुवुः ॥ ३० ॥ देवा ऊचुः ॥ नमस्ते यज्ञवीर्याय वयसे उत ते नमः ॥ नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ॥३१॥



तेषां वचः आकर्ण्य शङ्खचक्रगदाधरो हरिः प्रादुर्भूतः ॥ २८ ॥ तदा देवाः षोडशपार्षदैः सेवितं तं दृष्ट्वा भुवि दण्डवत् पतिताः सन्तः शनैः समुत्थाय तुष्टुवुः ॥ २९ ॥ ३० ॥ देवा ऊचुः ॥ स्वर्गादिफलजननाय सामर्थ्यं यस्य तस्मै नमः ॥ ३१ ॥

---

१ पृथ्वीरूपाम् । २ पूर्वमेवान्तर्यामितया । ३ पृथक् पृथगीशाः इत्यभिमानिनः । ४ सुनन्दादिभिः । ५ तत्फलपरिच्छेदककालात्मने । ६ दैत्येष्वस्तं चक्रं येन तस्मै । ७ शोभनबहुनाम्ने ।

हे धातः ! तव निर्गुणस्वरूपमर्वाचीनः को वेदितुमर्हति । अतः केशव ! ते नमोऽस्तु ॥ ३२ ॥ हे भगवन् ! नारायण सर्वेश्वर लक्ष्मीनाथ ते नमोऽस्तु ॥३३॥ हे भगवन् ! तवायं क्रीडायोगो दुर्ज्ञेयः, यतस्त्वं निर्गुणोऽपि विश्वं मायया सृजसि पासि हरसि ॥ ३४ ॥ अथ भवान्

यत्ते गतीनां तिसृणामीशितुः परमं पदम् ॥ नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ॥ ३२ ॥ ॐ नमस्तेऽस्तु भगवन्नारायण वासुदेवादिपुरुष महापुरुषमहानुभाव परममङ्गल परमकल्याण परमकारुणिक केवल जगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगेन समाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् ॥ ३३ ॥ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि ॥ ३४ ॥ अथ तत्र भवान्किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशलं फलमुपाददाति आहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदास्त इति ह वाव न विदाम ॥ ३५ ॥ नहि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल-एवात्ममायामन्तर्धाय को नु अर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥

देवदत्तवत् पारतन्त्र्येण शुभाशुभयोः फलं स्वीकरोति किं वाऽऽत्मारामः सन् केवलं साक्षितया वर्तते तद् वयं न विद्मः ॥ ३५ ॥ हे हरे ! अपरिगणितगुणगणे भगवति त्वयि कोऽर्थो दुर्घट इव भवति । न कोऽपि ॥ ३६ ॥

---

१ त्रिगुणात्मिकानां परमं निर्गुणस्वरूपम् । २ परिभावितः सुशीलितः परिस्फुटः पारमहंस्यधर्मो भगवद्भजने तेनोद्घटितं तमोरूपं कपाटं यस्मिन्तस्मिन्द्वारभूते चित्ते अपावृते प्रकटे आत्मलोके प्रत्यग्रूपे । ३ निराश्रयः । ४ अनवेक्षितास्मत्सहायः । ५ अप्रच्युतचिच्छक्तिः । ६ अर्वाचीनाः वस्तुस्वरूपासंस्पर्शिनो विकल्पवितर्कादयः येषु शास्त्रेषु तैः कलिलं व्याकुलमन्तःकरणमाश्रयो यस्य तेन दुराग्रहेण वादिनाम् । अत्र एवं वा एवं वेति विकल्पः । किमत्र युक्तमिति वितर्कः । इत्थमेवेति विचारः । तदनुग्राहकाः प्रमाणाभासाः । ७ विवादागोचरे । ८ मायामयः संसारः । ९ वस्तुतस्तु कर्तृत्वं नास्तीति न विरोधः ।

किंच समविषममतीनामनुग्रहादिकं त्वन्मायया त्वयि स्फुरति ॥ ३७ ॥ स एव नानारूपेण सर्वगुणविषयाणां प्रकाशैर्लक्षितः सर्वान्तर्या-मित्वात् जीवस्यापि प्रकाशकः ॥ ३८ ॥ हे मधुमथन ! परमभक्ताः ये ते त्वयि निर्वृतमनसः सन्तस्त्वत्पदाम्बुजसेवां कथं विसृजन्ति ॥३९॥

समविषममतीनां मतमनुसरसि यथा रज्जुखण्डः सर्पादिधियाम् ॥ ३७ ॥ स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥ ३८ ॥ अथ ह वाव तव महिमाऽमृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्ट-श्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरन्तरं निर्वृत-मनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपर्यावर्तः ॥ ३९ ॥ त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दण्डं दण्डधर दधर्थ ॥ एवमेनमपि भगवञ्जहि त्वाष्ट्रमुत यदि मन्यसे ॥ ४० ॥ अस्माकं तावकानां तव नतानां तत ततामह तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां स्वलिङ्गविवरणेनात्मसात्कृतानामनुकम्पानुरञ्जितविश-दरुचिरशिशिरस्मितावलोकेन विगलितमधुरमुखरसामृतकलया चान्तस्तापमनघार्हसि शमयितुम् ॥ ४१ ॥

हे त्रिविक्रम ! दैत्याः दानवास्तवैव विभूतयोऽपि तासामयमुद्यमकालो न भवति इति मत्वा दण्डं दधर्थ । एवं त्वाष्ट्रं जहि यदि मन्यसे ॥ ४० प्रथमं तावत् त्वदीयानामस्माकं तापं शमयितुमर्हसि ॥ ४१ ॥

---

१ सर्वजीवान्तर्यामित्वात् । २ आत्मा त्वमेव प्रियः सुहृच्च येषां ते । स्वात्मप्रियसुहृदः' इ० पा० । ३ त्रिभुवनं आत्मा (स्वरूपं) यस्य सः-तस्य संबुद्धिः । ४ त्रिलोकनायक । ५ पितः । 'तात' इ० पा० । ६ पितामह एवमेव कुत्रचित् पाठः । ७ अनुबद्धो हृदये निगडो येषां तेषाम् । ८ स्वरूपप्रकटनेन ।

हे भगवन् ! सर्वसाक्षिणः परमात्मनस्तव किं विज्ञापनम् । अस्मदभिप्रायस्तु त्वया ज्ञात एव ॥४२॥ अतस्तव चरणकमलच्छायां यत्काममुद्दिश्य प्राप्ताः वयं तत् कार्यं स्वयमेव संपादय ॥ ४३ ॥ हे कृष्ण ! येन तेजोऽस्त्रायुधानि च ग्रस्तानि नस्तं वृत्रं जहि ॥ ४४ ॥ शुद्धाय

अथ भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामन्तर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च यथादेशकालदेहावस्थानविशेषं तदुपादानोपलम्भकतयानुभवतः सर्वप्रत्ययसाक्षिण आकाशशरीरस्य साक्षात्परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद्विस्फुलिङ्गादिभिरिव हिरण्यरेतसः ॥ ४२ ॥ अत एव स्वयं तदुकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः ॥ ४३ ॥ अथो ईश जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयम् ॥ ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च ॥ ४४ ॥ हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय ॥ सत्संग्रहाय भवपान्थनिजाश्रमाप्तावन्ते परीष्टगतये हरये नमस्ते ॥ ४५ ॥ श्रीशुक उवाच ॥ अथैवमीडितो राजन्सादरं त्रिदशैर्हरिः ॥ स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः ॥ ॥ ४६ ॥ श्रीभगवानुवाच ॥ प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया ॥ आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ४७ ॥ किं दुरापं मयि प्रीते तथाऽपि विबुधर्षभाः ॥ मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित् ॥४८॥ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् ॥ तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः ॥ ४९ ॥

बुद्ध्यादिसाक्षिणे सदाऽऽनन्दरूपाय दुःखहराय हरये ते नमः ॥ ४५ ॥ श्रीशुक उवाच ॥ एवं देवैः स्तुतो हरिस्तानुवाच ॥ ४६ ॥ ४७ ॥ श्रीभगवानुवाच ॥ मयि प्रीते सति दुरापं किमस्ति ॥ ४८ ॥ कृपणो विषयान् वाञ्छन् स्वस्य श्रेयो न वेद ॥ ४९ ॥

---

१ प्रत्यगात्माऽन्तर्यामी । २ तेषामुपादानस्योपलम्भकतया । ३ आकाशवदलिप्तं शरीरं यस्य तस्य । ४ हृदयाकाशनिकेताय । ५ अनादये । ६ परितः सर्वतः पूजिता गतिर्यस्य तस्मै ।

विद्वान् प्रवृत्तिमार्गं मूढाय न वक्ति यथा वैद्यो रोगिणेऽपथ्यं न ददाति ॥ ५० ॥ हे इन्द्र ! दधीचिमृषिं गत्वा तस्य शरीरं याचस्व । मा चिरम् ॥५१॥ सोऽश्वशिरसा प्रोक्तत्वादश्वशिरो नाम ब्रह्माश्विनीकुमाराभ्यामुपदिदेश ॥५२॥ स दधीचिर्मदात्मकं कवचं त्वष्ट्रे प्रादात् । त्वष्टा विश्वरूपाय यस्मात् त्वं धृतवानसि ॥ ५३ ॥ अतोऽश्विभ्यां सह याचितः सन् स स्वांगानि युष्मभ्यं दास्यति । तदस्थिभिर्विश्वकर्मविनि-

स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि ॥ न राति रोगिणोऽपथ्यं वाञ्छतो हि भिषक्तमः ॥५०॥ मघवन्यात भद्रं वो दध्यञ्चमृषिसत्तमम् ॥ विद्याव्रततपस्सारं गात्रं याचत मा चिरम् ॥ ५१ ॥ स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्मनिष्कलम् ॥ यद्वा अश्वशिरो नाम तयोरमरतां व्यधात् ॥ ५२ ॥ दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माभेद्य मदात्मकम् ॥ विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः ॥ ५३ ॥ युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽङ्गानि दास्यति ॥ ततस्तैरा-युधश्रेष्ठो विश्वकर्मविनिर्मितः ॥ ५४ ॥ येन वृत्रशिरो हर्ता मत्तेजउपबृंहितः ॥ तस्मिन्विनिहते यूयं तेजोऽस्त्रायुध-संपदः ॥ भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च मत्परान् ॥ ५५ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे वृत्रवधा-र्थमिन्द्राद्युक्तभगवत्स्तोत्रं नाम नवमोऽध्यायः ॥ ९ ॥

र्मित आयुधश्रेष्ठो वज्रो भविष्यति ॥ ५४ ॥ मत्तेजोयुक्तवज्रेण वृत्रशिरो हरिष्यसि ततो भूयस्तेजोऽस्त्रायुधसंपदः प्राप्स्यथ । मत्परान् केऽपि न हिंसन्ति ॥ ५५ ॥ इति श्रीभागवते चू० षष्ठ० नवमोऽध्यायः ॥ ९ ॥



---

१ ज्ञातवान् । २ एवमत्र प्रसिद्धा कथा—एकदाऽश्विनीकुमारौ प्रवर्ग्यब्रह्मविद्ययोर्निपुणं दध्यञ्चमेत्य नौ विद्यां देहीत्यूचतुः । तदा स उवाच । अद्याहं कर्मणि स्थितः पश्चाद् वक्ष्याम्यधुना गच्छतम् । ततस्तयोर्निर्गतयोरि-न्द्रस्तत्रैत्य मुनिं जगाद । हे मुने ! अश्विनौ यदि विद्यां ब्रवीषि तर्हि ते शिरश्छिन्द्यां नात्र संदेहः इत्युक्त्वा ययौ । इन्द्रे गते तौ पुनस्तत्रैत्य द्विजं जगदतुः । ततो द्विजमुखादिन्द्रगदितं निशम्योचतुः । हे मुने । एवं तर्हि तव शिरश्छित्वाऽश्वम-स्तकं संधास्यावः ततो नौ विद्यां ब्रूहि, ततः इन्द्रेण त्वच्छिरसि छिन्ने सति पुनः पूर्वमस्तकं त्वयि संधाय निजां दक्षिणां दत्त्वा गमिष्यावः एवं श्रुत्वा दधीचिरश्वशिरसा तयोः प्रवर्ग्यं ब्रह्मविद्यां चोवाचेति । ३ जीवन्मुक्तत्वम् ।

दशमे केशवादिष्टदध्यङ्ङस्थिजवज्रधृक् । इन्द्रोऽयुध्यत वृत्रेण सासुरेण सनिर्जरः ॥ १ ॥ श्रीशुक उवाच ॥ एवमिन्द्रं समादिश्य भगवानन्तर्दधे ॥१॥ ततो देवैर्याचितो दधीचिः प्रहसन्नुवाच ॥ २ ॥ हे देवाः ! यूयं शरीरिणां मृत्युदुःखं न जानीथ ॥ ३ ॥ देहिनां देहः सुतरां प्रियः । अतो भिक्षमाणाय विष्णवेऽपि देहं दातुं कः उत्सहेत ॥ ४ ॥ देवा ऊचुः ॥ हे ब्रह्मन् ! भूतानुकम्पिनां भवद्विधानां पुंसां दुस्त्यजं किम् ॥ ५ ॥ ननु स्वार्थपरो लोकः परसंकटं न वेद । यदि वेद तर्हि न याचेत ॥ ६ ॥ दधीचिरुवाच ॥ हे देवाः ! धर्मं श्रोतुमिच्छया

श्रीशुक उवाच ॥ इन्द्रमेवं समादिश्य भगवान्विश्वभावनः ॥ पश्यतामनिमेषाणां तत्रैवान्तर्दधे हरिः ॥१॥ तथाऽभियाचितो देवैर्ऋषिराथर्वणो महान् ॥ मोदमान उवाचेदं प्रहसन्निव भारत ॥२॥ अपि वृन्दारका यूयं न जानीथ शरीरिणाम् ॥ संस्थायां यस्त्वभिद्रोहो दुस्सहश्चेतनापहः ॥३॥ जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः ॥ क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥४॥ देवा ऊचुः ॥ किं नु तद्दुस्त्यजं ब्रह्मन्पुंसां भूतानुकम्पिनाम् ॥ भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥५॥ ननु स्वार्थपरो लोको न वेद परसंकटम् ॥ यदि वेद न याचेत नेति नाह यदीश्वरः ॥६॥ दधीचिरुवाच ॥ धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः ॥ एष वः प्रियमात्मानं त्यजन्तं संत्यजाम्यहम् ॥ ७ ॥ योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान् ॥ ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥८॥ एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः ॥ यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति ॥९॥ अहो दैन्यमहो कष्टं पारक्यैः क्षणभंगुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ॥१०॥ श्रीशुक उवाच ॥ एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुम् ॥ परे भगवति ब्रह्मण्यात्मानं सन्नयञ्जहौ ॥११॥ यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबन्धनः ॥ आस्थितः परमं योगं न देहं बुबुधे गतम् ॥ १२ ॥

मया युष्मान् प्रति कथितम् । अतः त्यजन्तं देहं त्यजामि ॥ ७ ॥ योऽध्रुवेण देहेन यशो धर्मं न साधयेत् स शोकयोग्यः ॥८॥ यो भूतानां शोकेन शोचति हर्षेण हृष्यति तस्य स एव धर्मः ॥ ९ ॥ यैर्देहादिभिर्यदि परोपकारो न साध्यते तर्हि तैः किम् ॥ १० ॥ श्रीशुक उवाच ॥ एवमुक्त्वा दधीचिर्भगवति मनो योजयन् देहं जहौ ॥ ११ ॥ स योगमास्थितः सन् देहं गतं न बुबुधे ॥ १२ ॥

अथेन्द्रस्तदस्थिभिर्विश्वकर्मणा कृतं वज्रं गृहीत्वा ॥ १३ ॥ देवैर्वृतो गजेंद्रे स्थितो मुनिगणैः स्तुतः सन् त्रैलोक्यं हर्षयन् सन् ॥ १४ ॥ वृत्रं हन्तुं दुद्राव ॥ १५ ॥ तदा त्रेतामुखे नर्मदायां देवासुरयोर्दारुणः संग्रामो बभूव ॥ १६ ॥ रुद्रैर्वसुभिरादित्यैर्मरुद्भिः ॥ १७ ॥ एभिः सह वज्रधरं दृष्ट्वा वृत्रपुरस्सराः दैत्याः नासहन्त ॥ १८ ॥ ते के । नमुचिः शम्बरः अनर्वा द्विमूर्धा ऋषभः अम्बरो हयग्रीवो विप्रचित्तिः ॥१९॥

अथेन्द्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा ॥ मुनेः शुक्तिभिरुत्सिक्तो भगवत्तेजसाऽन्वितः ॥१३॥ वृतो देवगणैः सर्वैर्गजेन्द्रोपर्यशोभत ॥ स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥ १४ ॥ वृत्रमभ्यद्रवच्छेत्तुमसुरानीकयूथपैः ॥ पर्यस्तमोजसा राजन्क्रुद्धो रुद्र इवान्तकम् ॥१५॥ ततः सुराणामसुरै रणः परमदारुणः ॥ त्रेतामुखे नर्मदायामभवत्प्रथमे युगे ॥१६॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः ॥ मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥१७॥ दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वमायया ॥ नामृष्यन्नसुरा राजन्मृधे वृत्रपुरस्सराः ॥१८॥ नमुचिः शम्बरोऽनर्वा द्विमूर्धा ऋषभोऽम्बरः ॥ हयग्रीवः शङ्कुशिरा विप्रचित्तिरयोमुखः ॥१९॥ पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः ॥ दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ॥२०॥ * सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः ॥ प्रतिषिध्येन्द्रसेनाग्र्यं मृत्योरपि दुरासदम् ॥ २१ ॥ अभ्यर्दयन्नसंभ्रान्ताः सिंहनादेन दुर्मदाः ॥ गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः ॥२२॥ शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुण्डिभिः ॥ सर्वतोऽवाकिरञ्छस्त्रैरस्त्रैश्च विबुधर्षभान् ॥ २३ ॥ न तेऽदृश्यन्त संछन्नाः शरजालैः समन्ततः ॥ पुंखानुपुंखपतितैर्ज्योतींषीव नभो घनैः ॥ २४ ॥ न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान् ॥ छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा ॥ २५ ॥

पुलोमा वृषपर्वा प्रहेतिर्हेतिः दैत्यदानवयक्षरक्षांसि ॥ २० ॥ सुमाल्यादयः सर्वे इन्द्रसेनाग्र्यं प्रतिषिध्य ॥ २१ ॥ सिंहनादेनाभ्यर्दयन् ॥ कैरित्याह । गदापरिघबाणैः प्रासमुद्गरतोमरैः ॥ २२ ॥ शूलैः परशुभिः खड्गैश्च सर्वतो देवान् प्रतिच्छादयामासुः ॥ २३ ॥ तदा शरजालैश्छादिताः देवाः नादृश्यन्त ॥ २४ ॥ ततो देवैर्दैत्यानां शस्त्रौघाः सहस्रधा छिन्नाः ॥ २५ ॥



१ 'स्वया श्रिया' इ० पा० ।* इल्वलः पल्वलश्चैव दन्दशूको वृषध्वजः ॥ कालनाभमहानाभौ भूतसंतापनो वृकः ॥ इत्यधिकः पाठः ॥

तदा क्षीणास्त्रशस्त्रौघाः दैत्याः गिरिश्रृङ्गद्रुमैः पाषाणैश्च ववृषुः । तदा देवाः पूर्ववत् तान् चिच्छिदुः ॥२६॥ दैत्याः शस्त्रास्त्रवृक्षपाषाणादिभिरक्षतान् देवान् दृष्ट्वा तत्रसुः ॥२७॥ तेषामुद्योगाः कृष्णानुकूलेषु देवेषु निष्फलाः अभवन् ॥२८॥ दैत्याः एवं वीक्ष्य संग्रामे स्वपतिं त्यक्त्वा पलायनं चक्रिरे ॥२९॥ तदा वृत्रः पलायमानान् दैत्यान् वीक्ष्य बभाषे ॥३०॥ हे विप्रचित्ते ! हे नमुचे ! हे शम्बरादयः कालोचितं मद्वचः श्रृणुध्वम्

अथ क्षीणास्त्रशस्त्रौघा गिरिश्रृङ्गद्रुमोपलैः ॥ अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥ २६ ॥ तानक्षतान्स्वस्तिमतो निशाम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः ॥ द्रुमैर्दृषद्भिर्विविधाद्रिशृंगैरविक्षतांस्तत्रसुरिन्द्रसैनिकान् ॥ २७ ॥ सर्वे प्रयासा अभवन्विमोघाः कृताकृता देवगणेषु दैत्यैः ॥ कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥ ॥ २८ ॥ ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ॥ पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः ॥ २९ ॥ वृत्रोऽसुरांस्ताननुगान्मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ॥ पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥ ३० ॥ कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ॥ हे विप्रचित्ते नमुचे पुलोमन्मयानर्वञ्छम्बर मे श्रृणुध्वम् ॥ ३१ ॥ जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ॥ लोके यशश्चाथ ततो यदि ह्यमुं मृत्युं वरं को न वृणीत युक्तम् ॥ ३२ ॥ द्वौ संमताविह मृत्यू दुरापौ यद्ब्रह्मसंधारणया जितासुः ॥ कलेवरं योगरतो विजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३३ ॥ इति श्रीभागवते महा० षष्ठ० वृत्रेन्द्रयुद्धं नाम दशमोऽध्यायः ॥ १० ॥

॥ ३१ ॥ जातस्य मृत्युः सर्वतो ध्रुव एव यस्य प्रतिक्रिया न । अतो लोके यशस्करं मृत्युं को नेच्छेत् ॥३२॥ इहलोके शास्त्रसंमतौ द्वौ मृत्यू । योगेन देहत्यागः १, युद्धे संमुखं मरणम् २ । एवं मृतौ द्वावपि स्वर्गतौ भवतः ॥३३॥ इति श्रीभागवते चूर्णिकायां षष्ठस्कन्धे दशमोऽध्यायः॥१०॥

---

१ अंकल्पाप्यः । २ आत्तः परैर्गृहीतः सारो धैर्यं येषां ते ।

एकादशे तु वृत्रस्य युद्ध्यमानस्य वज्रिणा ॥ भक्तिज्ञानबलोदर्काश्चित्रा वाचोऽनुवर्णिताः ॥१॥ श्रीशुक उवाच ॥ हे नृप ! एवं पलायनपराः दैत्याः धर्मयुक्तं वृत्रवचो नागृह्णन् ॥१॥ कालानुकूलैर्देवैर्द्राव्यमाणामनाथवत् सेनाम् ॥२॥ दृष्ट्वा क्रोधेन तप्तो वृत्रो देवान् निर्भर्त्सयन् जगाद ॥ ३ ॥ वृत्र उवाच ॥ हे देवाः शूराणां भीतवधः श्रेष्ठो न । स्वर्ग्यो यशस्करश्च न ॥ ४ ॥ हे क्षुद्राः ! युद्धे यदि वः श्रद्धा तर्हि मेऽग्रे क्षणं तिष्ठत॥५॥

श्रीशुक उवाच ॥ त एवं शंसतो धर्मं वचः पत्युरचेतसः ॥ नैवागृह्णन्भयत्रस्ताः पलायनपरा नृप ॥ १ ॥ विशीर्यमाणां पृतनामासुरीमसुरर्षभः ॥ कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत् ॥ २ ॥ दृष्ट्वाऽतप्यत संक्रुद्ध इन्द्रशत्रुरमर्षितः ॥ तान्निवार्यौजसा राजन्निर्भर्त्स्येदमुवाच ह ॥३॥ वृत्र उवाच ॥ किं व उच्चरितैर्मातुर्धावद्भिः पृष्ठतो हतैः ॥ न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम् ॥४॥ यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका हृदि ॥ अग्रे तिष्ठत मात्रं मे न चेद्ग्राम्य-सुखे स्पृहा ॥५॥ एवं सुरगणान्क्रुद्धो भीषयन्वपुषा रिपून् ॥ व्यनदत्सुमहाप्राणो येन लोका विचेतसः ॥ ६ ॥ तेन देव-गणाः सर्वे वृत्रविस्फोटनेन वै ॥ निपेतुर्मूर्छिता भूमौ यथैवाशनिना हताः ॥७॥ ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरङ्गदुर्मदः ॥ गां कम्पयन्नुद्यतशूल ओजसा नालं वनं यूथपतिर्यथोन्मदः ॥८॥ विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते महागदाम् । चिक्षेप तामापततीं सुदुस्सहां जग्राह वामेन करेण लीलया॥९॥ स इंद्रशत्रुः कुपितो भृशं तया महेंद्रवाहं गदयोग्रविक्रमः ॥ जघान कुम्भस्थल उन्नदन्मृधे तत्कर्म सर्वे समपूजयन्नृप ॥ १० ॥ ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा ॥ अपासरद्भिन्नमुखः सहेन्द्रो वमन्नसृक्सप्तधनुर्भृशार्तः ॥ ११ ॥

एवं क्रुद्धः सन् देवान् स्वदेहेन भीषयन् ननाद ॥ ६ ॥ तदा वृत्रशब्देन सर्वे देवगणाः भूमौ निपेतुः ॥ ७ ॥ वृत्रः शूलं गृहीत्वा पद्भ्यां देवसैन्यं ममर्द ॥ ८ ॥ तद् विलोक्य क्रुद्धः इंद्रः स्वशत्रवे गदां चिक्षेप तदा वृत्रः आयान्तीं दुस्सहां गदां वामकरेण गृहीत्वा ॥९॥ तयैव गदयैरावतस्य गण्डस्थले जघान तत् कर्म सर्वे समपूजयन् ॥१०॥ ऐरावतो वृत्रगदया पीडितो रुधिरं वमन् सप्तधनुष्प्रमाणं देशं दूरमपासरत् ॥ ११ ॥



१ 'प्रस्ताः' इ० पा० ।

इन्द्रोऽमृतस्त्राविहस्तस्पर्शेन गतव्यथः सन् पुनर्युद्धायावतस्थे ॥ १२ ॥ वृत्रो भ्रातृहणं वज्रायुधं दृष्ट्वोवाच ॥ १३ ॥ हे इन्द्र ! त्वं ब्रह्महा गुरुहा भ्रातृहा च । अतोऽद्य त्वां हत्वा भ्रातृऋणाद् मुक्तो भवामि ॥ १४ ॥ हे इन्द्र ! त्वं स्वर्गकामः पशोरिव नोऽग्रजस्य शिरांसि चकर्तिथ ॥ १५ ॥ अतो निन्द्यकर्मणा ह्री-श्रीदयादिभिः रहितं मच्छूलभिन्नहृदयं त्वां गृध्राः भक्षयिष्यन्ति ॥ १६ ॥ अन्ये ये देवाः शस्त्रैर्मह्यं प्रहरन्ति तैः त्रिशूलेन भिन्नगलैः भैरवादीन्

न सन्नवाहाय विषण्णचेतसे प्रायुङ्क्त भूयः स गदां महात्मा ॥ इन्द्रोऽमृतस्यन्दिकराभिमर्शवीतव्यथः क्षतवाहोऽव-तस्थे ॥ १२ ॥ स तं नृपेन्द्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य ॥ स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसञ्जगाद ॥ १३ ॥ वृत्र उवाच ॥ दिष्ट्या भवान् मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च ॥ दिष्ट्याऽनृ-णोऽद्याहमसत्तम त्वया मच्छूलनिर्भिन्नदृषद्धृदाऽचिरात् ॥ १४ ॥ यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य ॥ विश्रभ्य खड्गेन शिरांस्यवृश्चत पशोरिवाकरुणः स्वर्गकामः ॥ १५ ॥ ह्रीश्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम् ॥ कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृष्टवह्निं समदन्ति गृध्राः ॥ १६ ॥ अन्येऽनु ये त्वेह नृशंसमज्ञा ये ह्युद्यतास्त्राः प्रहरन्ति मह्यम् ॥ तैर्भूतनाथान् सगणान् निशातत्रिशूलनिर्भिन्नगलैर्यजामि ॥ १७ ॥ अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्यैव शिरो यदीह ॥ तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये ॥ १८ ॥ सुरेश कस्मान्न हिनोषि वज्रं पुरः स्थिते वैरिणि मय्यमोघम् ॥ मा संशयिष्ठा न गदेव वज्रं स्यान्निष्फलं कृपणार्थेव याच्ञा ॥ १९ ॥ न त्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः ॥ तेनैव शत्रुं जहि विष्णु-यन्त्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः ॥ २० ॥

यजामि ॥ १७ ॥ हे इन्द्र ! यदि त्वं वज्रेण मे शिरो हरिष्यसि तर्हि देहेन भूतानां बलिं विधाय परं पदं प्राप्स्यामि ॥ १८ ॥ हे सुरेश ! ममोपरि वज्रं कस्मान्न क्षिपसि । पूर्वं गदेव वज्रं निष्फलं न स्यात् ॥ १९ ॥ कस्मात् ? अयं वज्रो हरेस्तेजसा दधीचेस्तपसा च तीक्ष्णीकृतः । अतस्तेनैव शत्रुं जहि । यत्र हरिस्तत्र विजयः ॥ २० ॥

अहं संकर्षणचरणारविन्दे मनः प्रवेश्य त्वद्ग्रहतः सन् योगिनां गतिं यास्यामि ॥ २१ ॥ हरिः स्वभक्तानां स्वर्गादिसंपदो न ददाति यतः संपद्भ्यो द्वेषादयो भवन्ति ॥ २२ ॥ अतोऽस्मत्पतिः स्वभक्तस्य त्रिवर्गविषयो यः श्रमस्तस्य नाशं करोति ॥ २३ ॥ एवमुक्त्वा हरिं प्रार्थयते। हे हरे ! अहं तव दासानुदासो भूयो भविष्यामि । मम मनस्तव गुणान् स्मरतु वाक् कीर्तयतु कायस्तव कर्म करोतु ॥ २४ ॥ हे ईश्वर ! त्वां विना स्वर्गादिब्रह्मलोकं नेच्छामि ॥ २५ ॥ यथा क्षुधार्ताः अजातपक्षाः खगाः मातरं द्रष्टुमिच्छन्ति तथा मे मनस्त्वां द्रष्टुमिच्छति

अहं समाधाय मनो यथाऽऽह संकर्षणस्तच्चरणारविन्दे ॥ त्वद्ग्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यमविद्ध-लोकः ॥ २१ ॥ पुंसां किलैकान्तधियां स्वकानां याः संपदो दिवि भूमौ रसायाम् ॥ न राति यद् द्वेष उद्वेग-आधिर्मदः कलिर्व्यसनं संप्रयासः ॥२२॥ त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ॥ ततोऽनुमेयो भगव-त्प्रसादो यो दुर्लभोऽकिंचनगोचरोऽन्यैः॥२३॥अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ॥ मनः स्मरेतासु-पतेर्गुणांस्ते गृणीत वाक् कर्म करोतु कायः ॥ २४ ॥ न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धिरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥ २५ ॥ अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्स-तराः क्षुधार्ताः ॥ प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥ २६ ॥ ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ॥ त्वन्माययाऽऽत्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ २७ ॥ इति श्रीभागवते म० षष्ठ० वृत्रकृतभगवत्स्तुतिर्नामैकादशोऽध्यायः ॥ ११ ॥ ऋषिरुवाच ॥ एवं जिहासुर्नृप देहमाजौ मृत्युं वरं विजयान्मन्यमानः ॥ शूलं प्रगृह्याभ्यपतत् सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु ॥ १ ॥

॥ २६ ॥ संसारचक्रे भ्रमतो मे तव भक्तेष्वेव सख्यं भूयात् । पुत्रदारगृहादिषु मे चित्तस्यासक्तिर्मा भूत् ॥ २७॥ इति श्रीभा० चू० षष्ठ० एकादशोऽध्यायः ॥ ११ ॥ द्वादशेऽतिविषण्णेन स्वयमुत्साहितेन तु ॥ महेन्द्रेण महायुद्धे वृत्रस्य वध ईर्यते ॥१॥ श्रीशुक उवाच ॥ हे नृप ! एवं युद्धे वृत्रो विजयात् मृत्युं श्रेष्ठं मन्यमानः शूलं प्रगृह्येन्द्रं प्रति जगाम ॥ १ ॥

१ त्यक्तदेहः। २ रसातले।

ततः कठोरजिह्वं शूलं भ्रामयित्वा हे पाप ! हतोऽसि इति वदन् प्राक्षिपत् ॥ २ ॥ इन्द्रस्तद् वीक्ष्य शूलं तद्दक्षिणभुजं च वज्रेण चिच्छेद ॥ ३ ॥ तदा छिन्नैकभुजो वृत्रः परिघेण देवेन्द्रमैरावतं च हनौ तताड । तदेन्द्रहस्ताद् वज्रं पपात ॥ ४ ॥ वृत्रस्य तत् कर्म सर्वेऽपूजयन् । इन्द्रस्य संकटं वीक्ष्य देवाश्चुक्रुशुः ॥५॥ इन्द्रः पतितं वज्रं लज्जया पुनर्न जगृहे । तद् विलोक्य वृत्र आह । हे इन्द्र ! वज्रं गृहाण । तेन मां जहि

ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसाऽसुरेन्द्रः ॥ क्षिप्त्वा महेन्द्राय विनद्य वीरो हतोऽसि पापेति रुषा जगाद ॥२॥ ख आपतत्तद्विचलद् ग्रहोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः ॥ वज्रेण वज्री शतपर्वणाऽच्छिनद्भुजं च तस्योरगराजभोगम् ॥ ३ ॥ छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम् ॥ हनौ तताडेन्द्रमथामरेभं वज्रं च हस्तान्न्यपतन्मघोनः ॥ ४ ॥ वृत्रस्य कर्मातिमहाद्भुतं तत् सुरासुराश्चारणसिद्धसङ्घाः ॥ अपूजयंस्तत् पुरुहूत-संकटं निरीक्ष्य हाहेति विचुक्रुशुर्भृशम् ॥५॥ इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः ॥ तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ६ ॥ युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनाम् ॥ विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ७ ॥ लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे ॥ द्विजा इव शिंचा बद्धाः स काल इह कारणम् ॥८॥ ओजः सहो बलं प्राणममृतं मृत्युरेव च ॥ तमज्ञाय जनो हेतुमात्मानं मन्यते जडम् ॥९॥ यथा दारुमयी नारी यथा यन्त्रमयो मृगः ॥ एवं भूतानि मघवन्नीशतन्त्राणि विद्धि भोः ॥ १० ॥ पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः ॥ शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहात् ॥ ११ ॥ अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ॥ भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयम् ॥ १२ ॥

॥ ६ ॥ अयं खेदकालो न जयापजयावीश्वराधीनौ स्तः ॥ ७ ॥ लोकाः यस्य वश्याः सन्तश्चेष्टन्ते स कालो जयादौ कारणम् ॥ ८ ॥ जनो बलमृत्युप्राणादीनां कालं हेतुमविज्ञाय जडं हेतुं मन्यते ॥ ९ ॥ हे मघवन् ! यथा काष्ठमयी स्त्री एवं भूतानि ईश्वराधीनानि विद्धि ॥१०॥ भूतेन्द्रियाशयाः यदनुग्रहं विना स्वकार्यं कर्तुं न शक्नुवन्ति ॥ ११ ॥ एवमज्ञः पुमानीश्वरं स्वाधीनं मन्यते ॥ १२ ॥

१ जालेन ।

जयकाले पुरुषस्यायुः श्रीः कीर्त्यादयो भवन्ति। पराजयकाले विपरीतम् ॥ १३ ॥ तस्माद् जयपराजययोर्मृत्युजीवितयोश्च सुखदुःखाभ्यां समः स्यात् ॥ १४ ॥ यः सत्त्वादिगुणरहितं सर्वसाक्षिणमात्मानं वेद स न बध्यते ॥ १५ ॥ हे शक्र ! मृधे तव प्राणजिहीर्षया स्थितं मां पश्य ॥ १६ ॥ हे इन्द्र ! अयं प्राणपणः समरः। अत्र जयाजयौ न ज्ञायेते ॥ १७ ॥ श्रीशुक उवाच ॥ इन्द्रो वृत्रवचः श्रुत्वा निष्कपटं तं

आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः ॥ भवन्त्येव हि तत्काले यथाऽनिच्छोर्विपर्ययाः ॥ १३ ॥ तस्मादकीर्ति-यशसोर्जयापजययोरपि ॥ समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा ॥१४॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ तत्र साक्षिणमात्मानं यो वेद न स बध्यते॥१५॥पश्य मां निर्जितं शक्र वृक्णायुधभुजं मृधे॥ घटमानं यथाशक्ति तव प्राणजिहीर्षया॥१६॥ प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः॥ अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः ॥ १७ ॥ श्रीशुक उवाच ॥ इन्द्रो वृत्रवचःश्रुत्वा गतालीकमपूजयत् ॥ गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः ॥१८॥ इन्द्र उवाच ॥ अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी ॥ भक्तःसर्वात्मनाऽऽत्मानं सुहृदं जगदीश्वरम् ॥१९॥ भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीम् ॥ यद्विहायासुरं भावं महापुरुषतां गतः ॥ २० ॥ खल्विदं महदाश्चर्यं यद्रजःप्रकृतेस्तव ॥ वासुदेवे भगवति सत्त्वात्मनि दृढा मतिः ॥२१॥ यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे ॥ विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥ २२ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृप ॥ युयुधाते महावीर्याविन्द्रवृत्रौ युधांपती ॥ २३ ॥ आविध्य परिघं वृत्रः कार्ष्णायसमरिंदमः ॥ इन्द्राय प्राहिणोद्घोरं वामहस्तेन मारिष ॥ २४ ॥

संपूज्य गृहीतवज्रः प्रहसन्नाह ॥ १८ ॥ अहो दानव ! सिद्धोऽसि त्वं हरिभक्तोऽसि ॥ १९ ॥ भवान् वैष्णवीं मायामतार्षीत् यत एवं ते भगवति भक्तिरस्ति ॥ २० ॥ रजःप्रकृतेस्तवेश्वरे दृढा भक्तिरित्याश्चर्यम् ॥ २१ ॥ यस्येश्वरे रतिस्तस्य किमन्यैः ॥ २२ ॥ श्रीशुक उवाच ॥ एवमन्योन्यं ब्रुवाणाविन्द्रवृत्रौ युयुधाते ॥ २३ ॥ वृत्रः परिघेणेन्द्रं ताडयामास ॥ २४ ॥

१ अकीर्त्यादयः। २ गर्तादिगतोदकैः।

इन्द्रो वज्रेण परिघं वामकरं च तस्य चिच्छेद ॥ २५॥ तदा छिन्नहस्तो वृत्रोऽधरोष्ठं भूमावूर्ध्वोष्ठं दिवि च कृत्वा गम्भीरवक्त्रेण ॥ २६॥ २७॥ दंष्ट्राभिर्जगत्त्रयं ग्रसन्निव ॥ २८॥ ऐरावतेन सह वज्रिणं जग्रास ॥ २९॥ अजगरेण गजमिव वृत्रेण ग्रस्तमिन्द्रं दृष्ट्वा देवाः ॥ ३०॥ महर्षयश्च कष्टमिति चुक्रुशुः। इन्द्रस्तस्योदरं गतोऽपि विद्यायोगबलेन न ममार ॥ ३१॥ स वज्रेण तत्कुक्षिं भित्त्वा निष्क्रम्य तस्य शिरश्चिच्छेद॥३२॥

स तु वृत्रस्य परिघं करं च करभोपमम् ॥ चिच्छेद युगपद्देवो वज्रेण शतपर्वणा ॥ २५॥ दोर्भ्यामुत्कृत्तमूलाभ्यां बभौ रक्तस्रवोऽसुरः॥ छिन्नपक्षो यथा गोत्रः खाद्भ्रष्टो वज्रिणा हतः॥ २६॥ कृत्वाऽधरां हनुं भूमौ दैत्यो दिव्युत्तरां हनुम्॥ नभो गम्भीरवक्त्रेण लेलिहोल्बणजिह्वया ॥ २७॥ दंष्ट्राभिः कालकल्पाभिर्ग्रसन्निव जगत्त्रयम्॥ अतिमात्रमहाकाय आक्षिपंस्तरसा गिरीन्॥ २८॥ गिरिराट् पादचारीव पद्भ्यां निर्जरयन् महीम्॥ जग्रास स समासाद्य वज्रिणं सहवाहनम्॥ २९॥ महाप्राणो महावीर्यो महासर्प इव द्विपम्॥ वृत्रग्रस्तं तमालक्ष्य सप्रजा पतयः सुराः॥ ३०॥ हा कष्टमिति निर्विण्णाश्चुक्रुशुः समहर्षयः॥ निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरं गतः॥ महापुरुषसन्नद्धो योग-मायाबलेन च ॥ ३१॥ भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः॥ उच्चकर्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा ॥ ३२॥ वज्रस्तु तत्कन्धरमाशुवेगः कृन्तन् समन्तात् परिवर्तमानः॥ न्यपातयत्तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये ॥ ३३॥ तदा च खे दुन्दुभयो विनेदुर्गन्धर्वसिद्धाः समहर्षिसंघाः॥ वार्त्रघ्नलिंगैस्तमभिष्टुवाना मन्त्रैर्मुदा कुसुमैरभ्यवर्षन्॥ ३४॥ वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिंदम ॥ पश्यतां सर्वलोकानामलोकं समपद्यत ॥ ३५॥

इति श्रीभागवते म० षष्ठ० वृत्रवधो नाम द्वादशोऽध्यायः॥ १२॥

सवज्रः इन्द्रः परमवेगवान् सन् वर्षेणैकेन वृत्रशिरो न्यपातयत् ॥३३॥ तदा खे दुन्दुभयो नेदुः गन्धर्वादयः पुष्पैरवाकिरन् ॥ ३४॥ वृत्रदेहाद् निर्गतमात्मज्योतिः सर्वेषां पश्यतां भगवन्तं समपद्यत ॥३५॥ इति भागवते चूर्णिकायां षष्ठस्कन्धे द्वादशोऽध्यायः॥ १२॥

१ चालयन्। २ नारायणेन कवचरूपेण दंशितः।

त्रयोदशे तु वृत्रस्य ब्रह्महत्यामहाभयात् ॥ चिरं नष्टोऽवितः शक्रो विष्णुनेति निरूप्यते॥१॥ श्रीशुक उवाच ॥ हे नृप! वृत्रे हते सति इन्द्रं विना सर्वलोकाः सुखिनो जाताः ॥ १ ॥ ब्रह्मादयो देवाः स्वाश्रमं जग्मुः ॥ २ ॥ राजोवाच ॥ अहो ! जितशत्रोरिन्द्रस्य दुःखं कथमभूत् तन्नो वद ॥ ३ ॥ श्रीशुक उवाच ॥ सर्वे देवाः वृत्राद् भीतास्तद्वधायेन्द्रं प्रार्थयन् ॥४॥ इंद्र उवाच ॥ हे देवाः ! विश्वरूपवधोद्भवां हत्यां स्त्रीभूजलद्रुमेभ्यो

श्रीशुक उवाच ॥ वृत्रे हते त्रयो लोका विना शक्रेण भूरिद ॥ सपाला ह्यभवन् सद्यो विज्वरा निर्वृतेन्द्रियाः ॥ १ ॥ देवर्षिपितृभूतानि दैत्या देवानुगाः स्वयम् ॥ प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेन्द्रादयस्ततः ॥ २ ॥ राजोवाच ॥ इन्द्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने ॥ येनासन् सुखिनो देवा हरेर्दुःखं कुतोऽभवत् ॥ ३ ॥ श्रीशुक उवाच ॥ वृत्रविक्रमसंविग्नाः सर्वे देवाः सहर्षिभिः ॥ तद्वधायार्थयन्निन्द्रं नैच्छद्भीतो बृहद्वधात् ॥ ४ ॥ इन्द्र उवाच ॥ स्त्रीभूजलद्रुमैरेनो विश्वरूपवधोद्भवम् ॥ विभक्तमनुगृह्णद्भिर्वृत्रहत्यां क्व माज्म्र्यहम् ॥ ५ ॥ श्रीशुक उवाच ॥ ऋषयस्तदुपाकर्ण्य महेन्द्रमिदमब्रुवन् ॥ याजयिष्याम भद्रं ते हयमेधेन मा स्म भैः ॥ ६ ॥ हयमेधेन पुरुषं परमात्मानमीश्वरम् ॥ इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात् ॥ ७ ॥ ब्रह्महा पितृहा गोघ्नो मातृहाऽऽचार्यहाऽघवान् ॥ श्वादः पुल्कसको वापि शुध्येरन् यस्य कीर्तनात् ॥ ८ ॥ तमश्वमेधेन महामखेन श्रद्धान्वितोऽस्माभिरनुष्ठितेन ॥ हत्वाऽपि सब्रह्म चराचरं त्वं न लिप्यसे किं खलनिग्रहेण ॥ ९ ॥ श्रीशुक उवाच ॥ एवं संचोदितो विप्रैर्मरुत्वानहनद्रिपुम् ॥ ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥ १० ॥

विभज्य दत्तवान् । अधुना वृत्रहत्यां क्व मार्जयामि ॥५॥ श्रीशुक उवाच ॥ देवाः इन्द्रवचः श्रुत्वोचुः । हे इंद्र ! हयमेधेन त्वां याजयिष्यामः मा भैषीः ॥६॥ हयमेधेन नारायणमिष्ट्वा जगद्वधादपि मोक्ष्यसे ॥७॥ ब्रह्महा गोघ्नो मातृहाऽऽचार्यहा यस्य नामसंकीर्तनात् शुद्ध्येरन् ॥ ॥८॥ हयमेधेन चराचरं हत्वाऽपि त्वं न लिप्यसे। खलनिग्रहेण किम् ॥ ९ ॥ श्रीशुक उवाच ॥ एवं विप्राज्ञया वृत्रं जघान तदैव ब्रह्महत्येन्द्रमाससाद ॥१०॥

१ ब्राह्मणवधात् ।

इन्द्रो ब्रह्महत्यया तापं प्राप ॥ ११ ॥ चाण्डालीमिव रुधिरयुक्तवस्त्रां क्षयरोगव्याप्तां दुर्गन्धेन मार्गं दूषयन्तीं तिष्ठ तिष्ठेति—भाषिणीं पश्चाद् धावन्तीं विलोक्य ॥ १२ ॥ १३ ॥ सर्वाः दिशो गतः सन् मानसं सरोवरं प्रविष्टः ॥ १४ ॥ तत्र पुष्करनालतन्तून् प्रविश्यालब्धभोगो

तयेन्द्रः स्मासहत्तापं निर्वृतिर्नामुमाविशत् ॥ ह्रीमन्तं वाच्यतां प्राप्तं सुखयन्त्यपि नो गुणाः ॥ ११ ॥ तां ददर्शानुधावन्तीं चाण्डालीमिव रूपिणीम् ॥ जरया वेपमानांगीं यक्ष्मग्रस्तामसृक्पटाम् ॥ १२ ॥ विकीर्य पलितान् केशांस्तिष्ठ तिष्ठेति भाषिणीम् ॥ मीनगन्ध्यसुगन्धेन कुर्वन्तीं मार्गदूषणम् ॥ १३ ॥ नभो गतो दिशः सर्वाः सहस्राक्षो विशांपते ॥ प्रागुदीचीं दिशं तूर्णं प्रविष्टो नृप मानसम् ॥ १४ ॥ स आवसत् पुष्करनालतन्तूनलब्धभोगो यदिहाग्निदूतः ॥ वर्षाणि साहस्रमलक्षितोऽन्तः संचिन्तयन् ब्रह्मवधाद्विमोक्षम् ॥ १५ ॥ तावत् त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभावः ॥ स संपदैश्वर्यमदान्धबुद्धिर्नीतस्तिरश्चांगतिमिन्द्रपत्न्यां ॥ १६ ॥ ततो गतो ब्रह्मगिरोपहूत ऋतंभरध्याननिवारिताघः ॥ पापस्तु दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्यां ॥ १७ ॥ तं च ब्रह्मर्षयोऽभ्येत्यहयमेधेन भारत ॥ यथावद्दीक्षयांचक्रुः पुरुषाराधनेन ह ॥ १८ ॥

ब्रह्मवधात् मोक्षं चिन्तयन वर्षसहस्रमुवास ॥ १५ ॥ तावद् विद्यायोगबलेन नहुषः स्वर्गं शशास । स संपदैश्वर्यमदान्धबुद्धिरिन्द्राण्याऽजगरत्वं नीतः ॥ १६ ॥ इन्द्रः पुनर्ब्राह्मणैरुपहूतः सन् स्वर्गं प्राप्तः ॥ १७ ॥ अथ ब्रह्मर्षयस्तत्रैत्येन्द्राय दीक्षां दत्त्वा ॥ १८ ॥

---

१ धैर्यादयः । २ क्षयरोगव्याप्ताम् । ३ मीनस्येव गन्धो यस्यासोः श्वासवायोर्गन्धेन । ४ अलब्धभोगत्वे हेतुरग्निमुखा वै देवाः इति श्रुत्यर्थः । ५ एवं ह्याख्यायते । नहुषः फिल कदाचिदिन्द्राणीं जगाद । हे इन्द्राणि ! इन्द्रोऽहं मां भज । तद्वचो निशम्य सा बृहस्पतेर्मतं गृहीत्वा नहुषं जगाद। ब्राह्मणवाह्यशिविकामारुह्यागतं त्वां सेविष्ये इत्युक्त्वाऽगस्त्यादीन् शिविकां वाहयामास। तदा शीघ्रं सर्प सर्पेत्यागस्त्यं पदापस्पर्श, तेन कुपितेन सर्पो भवेति शप्तो नहुषो महासर्पोऽजगरोऽभूदिति । ६ ऋतंभरः सत्यपालको हरिः । ७ ब्रह्मवधजः । ८ प्रागुदीच्यां दिशि स्थितेन श्रीरुद्रेणावितं रक्षितम् । ९ मानससरः स्थित कमलवासिन्यालक्ष्म्येत्यर्थः ।

हयमेधं कारयित्वा ब्रह्मवधात् मोचयामासुः ॥ १९ ॥ २० ॥ इन्द्रो मरीचिमुख्यैर्यथोदितेनाश्वमेधेन यज्ञपतिमिष्ट्वा विधूतपापो बभूव ॥ २१ ॥ इदमाख्यानं महेन्द्रमोक्षं भक्तजनानुवर्णनं सर्वपापानां क्षालनम् ॥ २२ ॥ पर्वणि पर्वणि ये पठेयुः ये शृण्वन्ति तेषां धन्यं यशस्यं रिपुञ्जय-मायुष्यदं च भवति ॥ २३ ॥ इति श्रीभागवते चू० षष्ठ० त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे तु सहसा कृच्छ्रलब्धे सुते मृते॥ चित्रकेतोरति-

अथेज्यमाने पुरुषे सर्वदेवमयात्मनि ॥ अश्वमेधे महेन्द्रेण वितते ब्रह्मवादिभिः ॥ १९ ॥ स वै त्वाष्ट्रवधो भूयानपि पापचयो नृप ॥ नीतस्तेनैव शून्याय नीहार इव भानुना ॥ २० ॥ स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः ॥ इष्ट्वाऽधियज्ञं पुरुषं पुराणमिन्द्रो महानास विधूतपापः ॥ २१ ॥ इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम् ॥ भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेन्द्रमोक्षं विजयं मरुत्वतः ॥ २२ ॥ पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्यथो पर्वणि पर्वणीन्द्रियम् ॥ धन्यं यशस्यं निखिलाघमोचनं रिपुञ्जयं स्वस्त्ययनं तथाऽऽयुषम् ॥ २३ ॥ इति श्रीभागवते म० षष्ठ० इन्द्राश्वमेधवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ परीक्षिदुवाच ॥ रजस्तमस्स्वभावस्य ब्रह्मन् वृत्रस्य पाप्मनः ॥ नारायणे भगवति कथमासीद्दृढा मतिः ॥१॥ देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम् ॥ भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥ २ ॥ रजोभिः समसंख्याताः पार्थिवैरिह जन्तवः ॥ तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥ ३ ॥ प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम ॥ मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिद्ध्यति ॥ ४ ॥ मुक्तानामपि सिद्धानां नारायणपरायणः ॥ सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥ ५ ॥ वृत्रस्तु स कथं पापः सर्वलोकोपतापनः ॥ इत्थं दृढमतिः कृष्ण आसीत् संग्राम उल्बणे ॥ ६ ॥



स्नेहादतिशोको निरूप्यते ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन्! रजस्तमःस्वभावस्य वृत्रस्य भगवति दृढा मतिः कथमासीत् ॥ १ ॥ देवादीनामपि मुकुन्दचरणे भक्तिर्बहुधा न जायते ॥ २ ॥ इह जीवाः अनन्ताः सन्ति । तेषां मध्ये केचन धर्मं कुर्वन्ति ॥ ३ ॥ तेषां मध्येऽपि केचन मुमुक्षवः। तेष्वपि कश्चित् सङ्गात् मुच्यते॥४॥ मुक्तानामपि कश्चित् नारायणपरो दुर्लभः ॥५॥ एवं सति वृत्रः पापिष्ठः सन् कृष्णे दृढमतिः कथम् ॥६॥

१ नाशं प्राप्ताय । २ भक्तेरुच्छ्र्या यस्मिन् । ३ तत्त्वं जानाति ।

अत्र नः संशयोऽस्ति तं छिन्धि ॥७॥ सूत उवाच ॥ राज्ञः प्रश्नं श्रुत्वा शुक आह ॥ ८ ॥ श्रीशुक उवाच ॥ हे राजन् ! व्यासनारददेवल-मुखान्मया श्रुतमितिहासं शृणु ॥ ९ ॥ शूरसेनदेशेषु कश्चित् चित्रकेतुर्नाम्ना सार्वभौमो राजाऽऽसीत् ॥ १० ॥ तस्यैककोटिर्भार्याः आसन्। तासु राजा सन्ततिं न लेभे ॥ ११॥ रूपौदार्यैश्वर्यादिभिः संपन्नस्यापि वन्ध्यापतेश्चिन्ताऽभूत् ॥ १२ ॥ तस्य सर्वाः स्त्रियः संपदश्च

अत्र नः संशयो भूयान् श्रोतुं कौतूहलं प्रभो ॥ यः पौरुषेण समरे सहस्राक्षमतोषयत् ॥ ॥ ७ ॥ सूत उवाच ॥ परी-क्षितोऽथ संप्रश्नं भगवान् बादरायणिः ॥ निशम्य श्रद्दधानस्य प्रतिनन्द्य वचोऽब्रवीत् ॥ ८ ॥ श्रीशुक उवाच ॥ शृणु-ष्वावहितो राजन्नितिहासमिमं यथा ॥ श्रुतं द्वैपायनमुखान्नारदाद्देवलादपि ॥ ९ ॥ आसीद्राजा सार्वभौमश्शूर-सेनेषु वै नृप ॥ चित्रकेतुरिति ख्यातो यस्यासीत् कामधुङ् मही ॥ १० ॥ तस्य भार्यासहस्राणां सहस्राणि दशा-भवन् ॥ सान्तानिकश्चापि नृपो न लेभे तासु सन्ततिम् ॥ ११ ॥ रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः ॥ संपन्नस्य गुणैः सर्वैश्चिन्ता वन्ध्यापतेरभूत् ॥ १२ ॥ न तस्य संपदः सर्वा महिष्यो वामलोचनाः ॥ सार्वभौमस्य भूश्चेयम-भूवन् प्रीतिहेतवः ॥ १३ ॥ तस्यैकदा तु भवनमङ्गिरा भगवानृषिः ॥ लोकाननुचरन्नेतानुपागच्छद्यदृच्छया ॥ १४ ॥ तं पूजयित्वा विधिवत्प्रत्युत्थानार्हणादिभिः ॥ कृतातिथ्यमुपासीदत्सुखासीनं समाहितः ॥ १५ ॥ महर्षिस्तमुपा-सीनं प्रश्रयावनतं क्षितौ ॥ प्रतिपूज्य महाराजं समाभाष्येदमब्रवीत् ॥ १६ ॥ अङ्गिरा उवाच ॥ अपि तेऽनामयं स्वस्ति प्रकृतीनां तथाऽऽत्मनः ॥ यथा प्रकृतिभिर्गुप्तः पुमान् राजाऽपि सप्तभिः ॥ १७ ॥

प्रीतिहेतवो नाभवन् ॥ १३ ॥ एकदा तस्य गृहे यदृच्छयाऽङ्गिराः ऋषिराजगाम ॥ १४ ॥ तदा राजा तमर्हणैः पूजयित्वा ॥ १५॥ प्रणम्य कृताञ्जलिरवतस्थे। तदाऽङ्गिरा उवाच ॥ १६ ॥ हे राजन् ! अमात्यादिसप्ताङ्गं सुखमास्ते किम् ॥ १७ ॥

१ पुत्रोत्पादनसमर्थोऽपि। २ स्वाम्यमात्यो जनपदा दुर्गद्रविणसंचयाः। दण्डो मित्रं च तस्यैताः सप्त प्रकृतयो मताः ॥'' जीवोऽपि महदाद्याभिः सप्तभिः प्रकृतिभिर्नित्यं गुप्तो भवति।

राजा प्रधानादिषु राज्यं निधाय राज्यसुखं प्राप्नोति ॥ १८ ॥ हे नृप ? तव दारादयो वशवर्तिनः सन्ति किम् ॥ १९ ॥ यस्य मनो वशी-
भूतं तस्य सर्वे वशगा भवन्ति ॥ २० ॥ चिन्तया शुष्कमुखं त्वां लक्षये ॥ २१ ॥ एवं मुनेर्वाक्यं निशम्य प्रजाकामो राजोवाच ॥ २२ ॥
हे मुने ! तव किमपि नाविदितम् ॥ २३ ॥ तथाऽपि पृच्छतस्तवाज्ञया वक्ष्ये ॥ २४ ॥ लोकपालैः प्रार्थ्याः संपदः सन्ति ताः अप्रजं मां न

**आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात् ॥ राजा तथा प्रकृतयो नरदेवाहिताधयः ॥ १८ ॥ अपि दाराः प्रजामात्या भृत्याः श्रेण्योऽथ मन्त्रिणः ॥ पौरा जानपदा भूपा आत्मजा वशवर्तिनः ॥ १९ ॥ यस्यात्माऽनुवशश्चेत् स्यात् सर्वे तद्वशगा इमे ॥ लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः ॥ २० ॥ आत्मनः प्रीयते नात्मा परतः स्वत एव वा ॥ लक्षयेऽलब्धकामं त्वां चिन्तया शबलं मुखम् ॥ २१ ॥ एवं विकल्पितो राजन् विदुषा मुनिनाऽपि सः ॥ प्रश्रयावनतोऽभ्याह प्रजाकामस्ततो मुनिम् ॥ २२ ॥ चित्रकेतुरुवाच ॥ भगवन् किं न विदितं तपोज्ञानसमाधिभिः ॥ योगिनां ध्वस्तपापानां बहिरन्तश्शरीरिषु ॥ २३ ॥ तथाऽपि पृच्छतो ब्रूयां ब्रह्मन्नात्मनि चिन्तितम् ॥ भवतो विदुषश्चापि चोदितस्त्वदनुज्ञया ॥ २४ ॥ लोकपालैरपि प्रार्थ्याः साम्राज्यैश्वर्यसंपदः ॥ न नन्दयन्त्यप्रजं मां क्षुत्तृट्कामिवापरे ॥ २५ ॥ ततः पाहि महाभाग पूर्वैः सह गतं तमः ॥ यथा तरेम दुस्तारं प्रजया तद् विधेहि नः ॥ २६ ॥ श्रीशुक उवाच ॥ इत्यर्थितः स भगवान् कृपालुर्ब्रह्मणः सुतः ॥ श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारमयजद्द्विजः ॥ २७ ॥ ज्येष्ठा श्रेष्ठा च या राज्ञो महिषीणां च भारत ॥ नाम्ना कृतद्युतिस्तस्यै यज्ञोच्छिष्टमदाद्द्विजः ॥ २८ ॥**

॥२९॥

सुखयन्ति ॥ २५ ॥ अतः पूर्वजैः सह यथा नरकं तरेम तथा विधेहि ॥ २६ ॥ श्रीशुक उवाच ॥ एवं राजा प्रार्थितो मुनिश्चरुं श्रपयित्वा
त्वष्टारमयजत् ॥ २७ ॥ ततो यज्ञोच्छिष्टं गृहीत्वा सर्वस्त्रीणां ज्येष्ठायै कृतद्युतिनाम्न्यै ददौ ॥ २८ ॥

---

१ निहितनिक्षेपाः समृद्धाः कृताः । २ विविधकल्पनापूर्वकं पृष्टः । ३ स्रक्चन्दनादयः । ४ 'विभुः' इ० पा० ।

मुनिस्तं जगाद । हे राजन्! हर्षशोकप्रदः एकः पुत्रस्तव भविष्यति इत्युक्त्वा स ययौ ॥२९॥ सा चरुप्राशनात् चित्रकेतोर्गर्भं दधार ॥३०॥ तस्याः गर्भः प्रतिदिनं शुक्ले चन्द्र इव ववृधे॥३१॥अथ काले प्राप्ते कुमारो जज्ञे ॥३२॥तदा हृष्टो राजा स्नातो विप्रैर्जातकं कारयित्वा॥३३॥ तेभ्यो हिरण्यं ग्रामान् गजान् धेनूनां षडर्बुदानि च ददौ ॥३४॥ अन्येषां पर्जन्य इव कामं ववर्ष ॥३५॥ ततो दिने दिने मातापित्रोः स्नेहः

अथाह नृपतिं राजन् भवितैकस्तवात्मजः ॥ हर्षशोकप्रदस्तुभ्यमिति ब्रह्मसुतो ययौ ॥ २९ ॥ साऽपि तत्प्राशनादेव चित्रकेतोरधारयत् ॥ गर्भं कृतद्युतिर्देवी कृत्तिकाऽग्नेरिवात्मजम् ॥ ३० ॥ तस्या अनुदिनं गर्भः शुक्लपक्ष इवोडुपः ॥ ववृधे शूरसेनेशतेजसा शनकैर्नृप ॥ ३१ ॥ अथ काल उपावृत्ते कुमारः समजायत ॥ जनयञ्छूरसेनानां शृण्वतां परमां मुदम् ॥ ३२ ॥ हृष्टो राजा कुमारस्य स्नातः शुचिरलंकृतः ॥ वाचयित्वाऽऽशिषो विप्रैः कारयामास जात-कर्म ॥ ३३ ॥ तेभ्यो हिरण्यं रजतं वासांस्याभरणानि च ॥ ग्रामान् हयान् गजान् प्रादाद्धेनूनामर्बुदानि षट् ॥ ३४ ॥ ववर्ष काममन्येषां पर्जन्य इव देहिनाम् ॥ धन्यं यशस्यमायुष्यं कुमारस्य महामनाः ॥ ३५ ॥ कृच्छ्रलब्धेऽथ राजर्षेस्त-नयेऽनुदिनं पितुः ॥ यथा निस्स्वस्य कृच्छ्राप्ते धने स्नेहोऽन्ववर्द्धत ॥ ३६ ॥ मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः ॥ कृतद्युतेः सपत्नीनां प्रजाकामज्वरोऽभवत् ॥ ३७ ॥ चित्रकेतोरतिप्रीतिर्यथा दारे प्रजावति ॥ न तथाऽन्येषु संजज्ञे बालं लालयतोऽन्वहम् ॥ ३८ ॥ ताः पर्यतप्यन्नात्मानं गर्हयन्त्योऽभ्यसूयया ॥ आनपत्येन दुःखेन राज्ञोऽनादरणेन च ॥ ३९ ॥ धिगप्रजां स्त्रियं पापां पत्युश्चागृहसंमताम् ॥ सुप्रजाभिः सपत्नीभिर्दासीमिव तिरस्कृताम् ॥ ४० ॥ दासीनां को नु सन्तापः स्वामिनः परिचर्यया ॥ अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगाः ॥ ४१ ॥

पुत्रे ववृधे ॥३६॥ अन्यासां सपत्नीनां प्रजाकामरूपस्तापो बभूव ॥३७॥ कृतद्युतौ चित्रकेतोः परमा प्रीतिः अन्यासु न ॥ ३८ ॥ ताः राज्ञोऽनादरेणात्मानं निन्दयामासुः ॥२९॥ अहो ! अप्रजां राज्ञा दासीवत् तिरस्कृतां स्त्रियं धिक् ॥४०॥ अलब्धमानाः वयं दुर्भगाः ॥४१॥

१ वयं दुर्भगाः दासीत्वं प्रापिताः ।

एवं सपत्न्याः पुत्रसंपत्तिं वीक्ष्य पुत्रे द्वेषं कुर्वत्यः सत्यः ॥४२॥ दुष्टबुद्ध्या कुमाराय गरं ददुः ॥४३॥ कृतद्युतिः सपत्नीनां कर्म न जानन्ती बालः सुप्त एवेति निरीक्ष्य गृहकर्म कारयामास ॥ ४४ ॥ बालं बहुकालं शयानं वीक्ष्य पुत्रमानयेति धात्रीं प्रेषयत्?॥ ४५ ॥ सा शयानमुपव्रज्योत्तारलोचनं मृतं बालं दृष्ट्वा हा ! हताऽस्मीति शब्दं कृत्वा भुवि पपात ॥ ४६ ॥ तस्या रोदनं श्रुत्वा त्वरया तत्रैत्य मृतं पुत्रं वीक्ष्य

एवं संदह्यमानानां सपत्न्याः पुत्रसंपदा ॥ राज्ञोऽसंमतवृत्तीनां विद्वेषो बलवानभूत् ॥ ४२ ॥ विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः ॥ गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति ॥ ४३ ॥ कृतद्युतिरजानन्ती सपत्नीनामघं महत् ॥ सुप्त एवेति संचिन्त्य निरीक्ष्य व्यचरद्गृहे ॥ ४४ ॥ शयानं सुचिरं बालमुपधार्य मनीषिणी ॥ पुत्रमानय मे भद्रे इति धात्रीमचोदयत् ॥ ४५ ॥ सा शयानमुपव्रज्य दृष्ट्वा चोत्तारलोचनम् ॥ प्राणेन्द्रियात्मभिस्त्यक्तं हताऽस्मीत्यपद्भुवि ॥ ४६ ॥ तस्यास्तदाकर्ण्य भृशातुरं स्वरं घ्नन्त्याः कराभ्यामुर उच्चकैरपि ॥ प्रविश्य राज्ञी त्वरयाऽऽत्मजान्तिकं ददर्श बालं सहसा मृतं सुतम् ॥ ४७ ॥ पपात भूमौ परिवृद्धया शुचा मुमोह विभ्रष्टशिरोरुहाम्बरा ॥ ४८ ॥ ततो नृपान्तःपुरवर्तिनो जना नराश्च नार्यश्च निशम्य रोदनम् ॥ आगत्य तुल्यव्यसनाः सुदुःखितास्ताश्च व्यलीकं रुरुदुः कृतागसः ॥ ४९ ॥ श्रुत्वा मृतं पुत्रमलक्षितान्तकं विनष्टदृष्टिः प्रपतन्स्खलन् पथि ॥ स्नेहानुबन्धैधितया शुचा भृशं विमूर्च्छितोऽनुप्रकृतिर्द्विजैर्वृतः ॥ ५० ॥ पपात बालस्य स पादमूले मृतस्य विस्रस्तशिरोरुहाम्बरः ॥ दीर्घं श्वसन् वाष्पकलोपरोधतो निरुद्धकण्ठो न शशाक भाषितुम् ॥ ५१ ॥ पतिं निरीक्ष्योरुशुचार्पितं तदा मृतं च बालं सुतमेकसन्ततिम् ॥ जनस्य राज्ञी प्रकृतेश्च हृद्रुजं सती दधाना विललाप चित्रधा ॥ ५२ ॥

॥४७॥ शोकेन मुक्तकेशा सती भूमौ पपात ॥ ४८ ॥ ततोऽन्तःपुरवर्तिनो नरा नार्यश्च रुरुदुः । सपत्न्यश्च कापट्येन तुल्यदुःखिताः सत्यो रुरुदुः । नृपः पुत्रं मृतं श्रुत्वा स्नेहानुबद्धो नष्टदृष्टिश्च पदे पदे प्रपतन् ॥४९ ॥ ५० ॥ तत्रागत्य बालस्य पादमूले पतित्वा शोकाश्रुलोचनो रुद्धकण्ठो दीर्घं श्वसन भाषितुं न शशाक ॥ ५१ ॥ ततः कृतद्युतिः शोकव्याप्तं पतिं मृतं पुत्रं च वीक्ष्य ॥ ५२ ॥

केशान् विकीर्य पाणिनोरः शिरो घ्नन्ती सती कुररीव सुस्वरेण चित्रधा रुरोद ॥५३॥ अहो विधातः! त्वं बालःयतो वृद्धे जीवति बाले मृते तव सृष्टिर्नष्टा स्यात्। अयं च क्रमो न। त्वं केवलं शत्रुरसि ॥५४॥ हे विधातः! यद्येवं कृतं तर्हि स्नेहपाशः कथं न छिन्नः॥ तस्मिन् छिन्ने सत्येवं दुःखं दृष्ट्वा कश्चिदपि पुत्रादिस्नेहं न करिष्यति॥५५॥ हे पुत्र! कृपणां मां त्यक्तुं नार्हसि॥शोकतप्तं पितरं पश्य। अकरुणेन यमेन नीतस्त्वं भूयो

स्तनद्वयं कुङ्कुमगन्धमण्डितं निषिञ्चती साञ्जनबाष्पबिन्दुभिः॥ विकीर्य केशान्विगलत्स्रजःसुतं शुशोच चित्रंकुररीव सुस्वरम् ॥ ५३ ॥ अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्ट्यप्रतिरूपमीहसे ॥ परेऽनुजीवत्यपरस्य या मृतिर्विपर्ययश्चेत्त्वमसि ध्रुवः परः॥ ५४ ॥ नहि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदाऽऽत्मकर्मभिः ॥ यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते तमिमं विवृश्चसि ॥ ५५ ॥ त्वं तात नार्हसि मां कृपणामनाथां त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम् ॥ अञ्जस्तरेम भवताऽप्रजदुस्तरं यद् ध्वान्तं न याह्यकरुणेन यमेन दूरम् ॥ ५६ ॥ उत्तिष्ठ तात त इमे शिशवो वयस्यास्त्वामाह्वयन्ति नृपनन्दन संविहर्तुम् ॥ सुप्तश्चिरं ह्यशनया च भवान्परीतो भुङ्क्ष्व स्तनं पिब शुचो हर नः स्वकानाम् ॥ ५७ ॥ नाहं तनूज ददृशे हतमङ्गला ते मुग्धस्मितं मुदितवीक्षणमाननाब्जम् ॥ किं वा गतोऽस्यपुनरन्वयमन्यलोकं नीतोऽघृणेन न शृणोमि कला गिरस्ते ॥ ५८ ॥ श्रीशुक उवाच ॥ विलपन्त्या मृतं पुत्रमिति चित्रविलापनैः ॥ चित्रकेतुर्भृशं तप्तो मुक्तकण्ठो रुरोद ह ॥ ५९ ॥ तयोर्विलपतोः सर्वे दम्पत्योस्तदनुव्रताः ॥ रुरुदुः स्म नरा नार्यः सर्वमासीदचेतनम् ॥ ६० ॥

नागमिष्यसि किम् ॥५६॥ हे तात! उत्तिष्ठोत्तिष्ठ। इमे ते वयस्याः बालाः त्वां क्रीडितुमाह्वयन्ति॥ हे नृपनन्दन! क्षुधार्तस्त्वं भुङ्क्ष्व मे स्तनं पिब स्वकानां शोकं हर ॥५७॥ हे पुत्र! अहं तव सहास्यं मुखं नापश्यम्। कलाः गिरो न शृणोमि। तर्हि पुनरागमनं न भविष्यति तथा गतोऽसि किम् ॥५८॥ श्रीशुक उवाच॥ पुत्रं विलपन्त्या स्त्रिया सह चित्रकेतुर्भृशं रुरोद ॥५९॥ एवं दम्पत्योर्विलपतोः सर्वे जनाः रुरुदुः ॥ ६० ॥

१ सहेति शेषः।

एवं वर्तमानं ज्ञात्वा सनारदोऽङ्गिराः आजगाम ॥६१॥ इति श्रीभागवते चू० षष्ठ० चतुर्दशोऽध्यायः ॥१४॥ ततः पञ्चदशे चित्रकेतोः शोकाप-
नोदनम् ॥ कृतं तत्त्वोपदेशेन नारदेनाङ्गिरोयुजा ॥१॥ श्रीशुक उवाच ॥ मृतबालकसमीपे शोकव्याप्तं पतितं राजानं बोधयन्तौ नारदाङ्गिरसा-
वूचतुः ॥ १ ॥ हे राजेन्द्र ! त्वं यं शोचसि अयं ते कः, ये पूर्वजन्मनि पित्रादयस्ते इह जन्मनि पुत्रादयो भवन्ति ॥ २ ॥ यथा नदीवेगेन
वालुकाः संयान्ति प्रयान्ति तथा कालवेगेन जीवा अपि ॥ ३ ॥ यथा धानानां जन्यजनकत्वेऽपि पितृपुत्रभावो नास्ति एवं जीवस्यापि ।

एवं कश्मलमापन्नं नष्टसंज्ञमनायकम् ॥ ज्ञात्वाऽङ्गिरा नाम मुनिराजगाम सनारदः ॥ ६१ ॥ इति श्रीभागवते म० षष्ठ
चित्रकेतोर्मृतपुत्रशोको नामा चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीशुक उवाच ॥ ऊचतुर्मृतकोपान्ते पतितं मृतकोपमम् ॥ शोका-
भिभूतं राजानं बोधयन्तौ सदुक्तिभिः ॥ १ ॥ कोऽयं स्यात्तव राजेन्द्र भवान्यमनुशोचति ॥ त्वं चास्य कतमः सृष्टौ
पुरेदानीमतः परम् ॥२॥ यथा प्रयान्ति संयान्ति स्रोतोवेगेन वालुकाः ॥ संयुज्यन्ते वियुज्यन्ते तथा कालेन देहिनः ॥३॥
यथा धानासु वै धाना भवन्ति न भवन्ति च ॥ एवं भूतेषु भूतानि चोदितानीशमायया ॥४॥ वयं च त्वं च ये चेमे तुल्य-
कालाश्चराचराः ॥ जन्ममृत्योर्यथा पश्चात्प्राङ्नैवमधुनाऽपि भोः ॥ ५ ॥ भूतैर्भूतानि भूतेशः सृजत्यवति हन्त्यजः ॥
आत्मसृष्टैरस्वतन्त्रैरनपेक्षोऽपि बालवत् ॥ ६ ॥ देहेन देहिनो राजन्देहाद्देहोऽभिजायते ॥ बीजादेव यथा बीजं देह्यर्थ
इव शाश्वतः ॥ ७ ॥ देहदेहिविभागोऽयमविवेककृतः पुरा ॥ जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः * ॥ ८ ॥
श्रीशुक उवाच ॥ एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः ॥ प्रमृज्य पाणिना वक्त्रमाधिम्लानमभाषत ॥ ९ ॥

अतः शोको न कार्यः ॥ ४ ॥ इमे चराचराः वयं च त्वं च जन्मनः प्राक् मृत्योः पश्चाच्च यथा न सन्ति तद्वदधुनाऽपि ॥ ५ ॥ भगवान्
भूतैर्भूतानि लीलया सृजति पाति संहरति ॥ ६ ॥ हे राजन् देहाद् देहो जायते । यथा बीजाद् बीजम् ॥ ७ ॥ जीवस्तु शाश्वत एव पुत्र
पित्रादिभेदोऽज्ञानेन कृतः । अतः शोकं मा कुरु ॥ ८ ॥ श्रीशुक उवाच ॥ एवं ताभ्यामाश्वासितो राजा पाणिना मुखं प्रमृज्योवाच ॥९॥



१ देही शाश्वतो भूम्यादिरर्थवत् । * ''नानात्वं जन्म नाशश्च क्षयो वृद्धिः क्रियाफलम् । द्रष्टुश्च भान्त्यतद्धर्मा यथाऽग्नेर्दारुविक्रिया ॥ १ ॥ त इमे देहसंयोगादात्मन्याभान्त्यसद्ग्रहात् । स्वप्ने यथा तथा नान्यद् ध्यायेत्सर्व भयाभयम् ॥२॥ प्रसुप्तस्यानहंमानान्न घोरा भाति संसृतिः । जीवतोऽपि यथा तद्वद्वियुक्तस्यानहंकृतेः ॥३॥ तस्मादन्यन्मनोमात्रं जह्यहंममतातमः ॥ वासुदेवे भगवति मनो धेह्यात्मनीश्वरे ॥४॥ इत्यधिकः पाठः ॥

राजोवाच ॥ युवां ज्ञानसंपन्नौ कौ ॥१०॥ भगवद्भक्ता ब्राह्मणाः मादृशामज्ञानां बोधाय भूमौ चरन्ति ॥११॥ ते च–कुमारः १, नारदः २, ऋभुः ३, अङ्गिराः ४, देवलः ५, असितः ६, अपान्तरतमः ७, व्यासः ८, मार्कण्डेयः ९, गौतमः १० ॥१२॥ वसिष्ठः ११, रामः १२, कपिलः १३, बादरायणिः १४, दुर्वासाः १५, याज्ञवल्क्यः १६, जातूकर्ण्यः १७, आरुणिः १८ ॥१३॥ रोमशः १९, च्यवनः २०, दत्तात्रेयः २१, आसुरिः २२, पतञ्जलिः २३, वेदशिराः २४, बोढ्यः २५, पञ्चशिराः २६, ॥१४॥ हिरण्यनाभः २७, कौशल्यः २८, श्रुतदेवः २९, ऋतध्वजः ३० एते सिद्धेशाः ज्ञानहेतवश्चरन्ति ॥१५॥

राजोवाच ॥ कौ युवां ज्ञानसंपन्नौ महिष्ठौ च महीयसाम् ॥ अवधूतेन वेषेण गूढाविह समागतौ ॥१०॥ चरन्ति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः ॥ मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिङ्गिनः ॥ ११ ॥ कुमारो नारद ऋभुरङ्गिरा-देवलोऽसितः ॥ अपान्तरतमो व्यासो मार्कण्डेयोऽथ गौतमः ॥ १२ ॥ वसिष्ठो भगवान्रामः कपिलो बादरायणिः ॥ दुर्वासा याज्ञवल्क्यश्च जातूकर्ण्यस्तथाऽऽरुणिः ॥ १३ ॥ रोमशश्च्यवनो दत्त आसुरिः सपतञ्जलिः ॥ ऋषिर्वेदशिरा बोढ्यो मुनिः पञ्चशिरास्तथा ॥ १४ ॥ हिरण्यनाभः कौसल्यः श्रुतदेव ऋतध्वजः ॥ एते परे च सिद्धेशाश्चरन्ति ज्ञानहेतवः ॥ १५ ॥ तस्माद्युवां ग्राम्यपशोर्मम मूढधियः प्रभू ॥ अन्धे तमसि मग्नस्य ज्ञानदीप उदीर्यताम् ॥ १६ ॥ अङ्गिरा उवाच ॥ अहं ते पुत्रकामस्य पुत्रदोऽस्म्यंगिरा नृप ॥ एष ब्रह्मसुतः साक्षान्नारदो भगवानृषिः ॥ १७ ॥ इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे ॥ अतदर्हमनुस्मृत्य महापुरुषगोचरम् ॥ १८ ॥ अनुग्रहाय भवतः प्राप्तावावामिह प्रभो ॥ ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हति ॥ १९ ॥ तदैव ते परं ज्ञानं ददामि गृहमागतः ॥ ज्ञात्वाऽन्याभिनिवेशं ते पुत्रमेव ददावहम् ॥ २० ॥ अधुना पुत्रिणां तापो भवतैवानुभूयते ॥ एवं दारा गृहा रायो विविधैश्वर्यसंपदः ॥२१॥

युवयोरेष्वेवान्तर्गतत्वम् । अतो ज्ञानदीपः उदीर्यताम् ॥ १६ ॥ अङ्गिरा उवाच ॥ हे नृप! पुत्रकामस्य ते पुत्रदः अहमङ्गिराः अस्मि । अयं तु नारदः ॥१७॥ पुत्रशोके मग्नं हरिभक्तं त्वां ज्ञात्वा ॥१८॥ भवतोऽनुग्रहाय समागतौ। अतः शोचितुं नार्हति ॥१९॥ अहं पूर्वमेव ते ज्ञानोपदेशार्थं प्राप्तः । तदा तेऽन्याभिनिवेशं ज्ञात्वा पुत्रमेवादाम् ॥ २० ॥ अधुना पुत्रवतां यस्तापः स त्वयाऽनुभूयते । एवं दाराद्यैश्वर्यसंपदः ॥ २१ ॥

महीराज्यकोशभृत्यादयो नाशवन्तो ज्ञातव्याः ॥ २२ ॥ हे शूरसेन ! सर्वे शोकमोहभयार्तिदाः मनःसाध्या यतः पुंसो नानाकर्माणि बभूवुः॥ ॥ २३ ॥ २४ ॥ जीवस्य द्रव्यज्ञानक्रियात्मकोऽयं देहो विविधान् क्लेशान् करोति ॥२५॥ अतः स्वस्थेन मनसाऽऽत्मतत्त्वं विचार्य द्वैते स्थिर-विश्वासं त्यज । उपशममाश्रय ॥ २६ ॥ नारद उवाच ॥ हे राजन् ! मत्तः एतां मन्त्रोपनिषदं गृहाण, यां धारयन् सप्तरात्रात् संकर्षणं विभुं द्रक्ष्यसि ॥२७॥ शिवादयो यत्पादमूलं प्राप्य ममाहमिति भ्रमं विसृज्य स्थानं प्रापुः तथा भवानपि नचिरात् ज्ञानं प्राप्स्यति ॥२८॥ इति



शब्दादयश्च विषयाश्चला राज्यविभूतयः ॥ मही राज्यं बलं कोशो भृत्यामात्याः सुहृज्जनाः ॥ २२ ॥ सर्वेऽपि शूर-सेनेमे शोकमोहभयार्तिदाः ॥ गन्धर्वनगरप्रख्याः स्वप्नमायामनोरथाः ॥ २३ ॥ दृश्यमाना विनाऽर्थेन न दृश्यन्ते मनोभवाः ॥ कर्मभिर्ध्यायतो नानाकर्माणि मनसोऽभवन् ॥२४॥ अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः ॥ देहिनो विविधक्लेशसंतापकृदुदाहृतः ॥ २५ ॥ तस्मात्स्वस्थेन मनसा विमृश्य गतिमात्मनः ॥ द्वैते ध्रुवार्थविश्रम्भं त्यजोप-शममाविश ॥ २६ ॥ नारद उवाच ॥ एतां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम ॥ यां धारयन्सप्तरात्राद् द्रष्टा सङ्कर्षणं प्रभुम् ॥ २७ ॥ यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे शर्वादयो भ्रममिमं द्वितयं विसृज्य ॥ सद्यस्तदीयमतुलानधिकं महित्वं प्रापुर्भवानपि परं न चिराद्रुपैति ॥ २८॥ इति श्री भागवते म० षष्ठ० पुत्रशोकातुरचित्रकेतोर्ज्ञानोपदेशो नाम पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीशुक उवाच ॥ अथ देवऋषी राजन्संपरेतं नृपात्मजम् ॥ दर्शयित्वेति होवाच ज्ञातीना-मनुशोचताम् ॥ १ ॥ नारद उवाच ॥ जीवात्मन्पश्य भद्रं ते मातरं पितरं च ते ॥ सुहृदो बान्धवांस्तप्ताञ्शुचा त्वत्कृ-तया भृशम् ॥ २ ॥ कलेवरं स्वमाविश्य शेषमायुः सुहृद्वृतः ॥ भुङ्क्ष्व भोगान्पितृप्रत्तानधितिष्ठ नृपासनम् ॥ ३ ॥



श्रीभागवते चू० षष्ठ० पञ्चदशोऽध्यायः ॥ १५ ॥ षोडशे तत्सुतोक्त्यैव विशोकीकृत्य तं नृपम् । आदिदेश महाविद्यां नारदः शेषतोषिणीम् ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! नारदो ज्ञातीनां मध्ये मृतं बालं जीवयित्वोवाच ॥ १ ॥ हे जीवात्मन् ! मातरं पितरं शोचतः सुहृदश्च पश्य पश्य ॥ २ ॥ शेषायुष्येण स्वं कलेवरमाविश्य भोगान् भुञ्जन् नृपासनमधितिष्ठ ॥ ३ ॥

१ 'शूरसेनेश' इ० पा० ।

जीव उवाच ॥ कर्मभिर्दैवतिर्यङ्नृयोनिषु भ्राम्यमाणस्य मे कस्मिन् जन्मनि मातरः पितरोऽमी अभवन् ॥ ४ ॥ शत्रुमित्रोदासीनाः मिथः सर्वेषां क्रमेण भवन्ति ॥५॥ यथा क्रयविक्रयादिषु सुवर्णं भ्रमति तथा कर्मणा जीवो भ्रमति ॥ ६ ॥ यावद् देहस्य संबन्धस्तावद् ममत्वम् ॥ ७ ॥ जीवः पित्रादिसंबन्धं प्राप्तोऽपि स संबन्धोऽनित्यः ॥८॥ जीवोऽव्ययः सर्वेन्द्रियसाक्षी ॥९॥ अस्य प्रियाप्रियौ न। हिताहितकर्तॄणां

जीव उवाच ॥ कस्मिञ्जन्मन्यमी मह्यं पितरो मातरोऽभवन् ॥ कर्मभिर्भ्राम्यमाणस्य देवतिर्यङ्नृयोनिषु ॥ ४ ॥ बन्धुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः ॥ सर्व एव हि सर्वेषां भवन्ति क्रमशो मिथः ॥ ५ ॥ यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः ॥ पर्यटन्ति नरेष्वेवं जीवो योनिषु कर्तृषु ॥ ६ ॥ नित्यस्यार्थस्य संबन्धो ह्यनित्यो दृश्यते नृषु ॥ यावद्यस्य हि संबन्धो ममत्वं तावदेव हि ॥ ७ ॥ एवं योनिगतो जीवः स नित्यो निरहंकृतः ॥ यावद्यत्रोपलभ्येत तावत्स्वत्वं हि तस्य तत् ॥ ८ ॥ एष नित्योऽव्ययः सूक्ष्म एष सर्वाश्रयः स्वदृक् ॥ आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ॥ ९ ॥ नह्यस्यातिप्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ॥ एकः सर्वधियां द्रष्टा कर्तॄणां गुणदोषयोः ॥१०॥ नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम् ॥ उदासीनवदासीनः परावरदृगीश्वरः ॥ ११ ॥ श्रीशुक उवाच ॥ इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा ॥ विस्मिता मुमुचुः शोकं छित्त्वाऽऽत्मस्नेहशृङ्खलाम् ॥ १२ ॥ निर्हृत्य ज्ञातयो देहं तथा कृत्वोचिताःक्रियाः ॥ तत्यजुर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदम् ॥ १३ ॥ बालघ्न्यो व्रीडितास्तत्र बालहत्याहतप्रभाः ॥ बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितम् ॥ यमुनायां महाराज स्मरन्त्यो द्विजभाषितम् ॥ १४ ॥

मित्रादीनां याः विचित्राः बुद्धयः तासां साक्षी ॥१०॥ एवं भूतस्य मम युष्माकं संबन्धो न। शोकं मा कुरुत ॥११॥ श्रीशुक उवाच ॥ जीवः इत्युक्त्वाऽन्तर्हितः। तदा सर्वे स्नेहं त्यक्त्वा ॥ १२॥ तत् कलेवरं दग्ध्वा क्रियाश्च कृत्वा शोकमोहौ तत्यजुः ॥ १३ ॥ तत्र बालघ्न्यः स्त्रियो ब्राह्मणैर्दर्शितं बालहत्याव्रतं यमुनायां चक्रुः ॥ १४ ॥

---

१ व्यवहर्तृषु पक्षे जनकेषु।

ततश्चित्रकेतुर्द्विजोक्तिभिः प्राप्तज्ञानः सन् गृहान्धकूपात् निष्क्रम्य ॥ १५ ॥ कालिन्द्यां स्नात्वा तर्पणादि कृत्वा ब्रह्मपुत्राववन्दत ॥१६॥ तदा प्रपन्नाय तस्मै नारदः एतां विद्यां प्रोवाच ॥ १७ ॥ भगवते वासुदेवाय प्रद्युम्नायानिरुद्धाय संकर्षणाय च नमोऽस्तु ॥ १८ ॥ आत्मारामाय परमानन्दमूर्तये नमः ॥ १९ ॥ हृषीकेशाय विश्वमूर्तये नमः ॥ २० ॥ इन्द्रियेषु शान्तेषु यः प्रकाशते स सदसत्परोऽस्मान् रक्षतु ॥ २१ ॥

स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः ॥ गृहान्धकूपान्निष्क्रान्तः सरःपङ्कादिव द्विपः ॥ १५ ॥ कालिन्द्यां विधिवत्स्नात्वा कृतपुण्यजलक्रियः ॥ मौनेन संयतप्राणो ब्रह्मपुत्राववन्दत ॥ १६ ॥ अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने ॥ भगवान्नारदः प्रीतो विद्यामेतामुवाच ह ॥ १७ ॥ ॐ नमस्तुभ्यं भगवते वासुदेवाय धीमहि ॥ प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥ १८ ॥ नमो विज्ञानमात्राय परमानन्दमूर्तये ॥ आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये ॥ १९ ॥ आत्मानन्दानुभूत्यैव न्यस्तशक्त्यूर्मये नमः ॥ हृषीकेशाय महते नमस्ते विश्वमूर्तये ॥ २० ॥ वचस्युपरतेऽप्राप्य य एको मनसा सह ॥ अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः ॥ २१ ॥ यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते ॥ मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥ २२ ॥ यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः ॥ अन्तर्बहिश्च विततं व्योमवत्तं नतोऽस्म्यहम् ॥ २३ ॥ देहेन्द्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरन्ति कर्मसु ॥ नैवान्यदा लोहमिवाप्रतप्तं स्थानेषु तद्द्रष्ट्रपदेशमेति ॥ २४ ॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविन्दयुगल परम परमेष्ठिन्नमस्ते ॥ २५ ॥

यस्मिन् जगत् तिष्ठति यतः उत्पद्यते नश्यति च तस्मै नमः ॥२२॥ बुद्ध्यादयो यं न विदुः तं हरिं नतोऽस्मि ॥ २३ ॥ देहेन्द्रियमनआदयो यस्य चैतन्येन स्वस्वकर्मसु प्रचरन्ति तस्मै नमः ॥२४॥ ॐ नमो भगवते महापुरुषाय महाविभूतिपतये नमोऽस्तु ॥ २५ ॥

१ ध्यायेम मनसा नमस्यामेत्यर्थः । २ निवृत्ता द्वैतदृष्टिर्यस्मात् तस्मै । ३ निरस्ताः मायानिमित्ता रागद्वेषादयो येन तस्मै । ४ वच इति सर्वेन्द्रियोपलक्षणम् । ५ सुषुप्तिमूर्च्छादौ । ६ स्थानेषु जाग्रदादिषु । ७ द्रष्टृसंज्ञं जीवमपि तदेवैति जानाति न तु जीवस्तज्जानातीत्यर्थः ।

श्रीशुक उवाच ॥ नारदो भक्तायैतां विद्यामादिश्याङ्गिरसा सह ब्रह्मलोकं ययौ ॥२६॥ चित्रकेतुरब्भक्षः सन् नारदोक्तां विद्यां सप्ताहं धारयामास ॥२७॥ ततः सप्तरात्रान्ते तया विद्याधराधिपत्यं लेभे ॥२८॥ ततः कतिपयैर्दिवसैर्मनोगत्या शेषस्य चरणान्तिकं जगाम ॥ २९ ॥ तत्र मृणालगौरं नीलाम्बरं किरीटकेयूरकटिसूत्रकङ्कणैर्युतं सिद्धेश्वरैर्वेष्टितं प्रभुं ददर्श ॥३०॥तद्दर्शनेन गतकिल्बिषो हृष्टरोमा प्रेमाश्रुलोचनश्चित्रकेतु-

श्रीशुक उवाच ॥ भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः ॥ ययावङ्गिरसा साकं धाम स्वायंभुवं प्रभो ॥ २६ ॥ चित्रकेतुस्तु विद्यां तां यथा नारदभाषिताम् ॥ धारयामास सप्ताहमब्भक्षः सुसमाहितः ॥२७॥ ततश्च सप्तरात्रान्ते विद्यया धार्यमाणया ॥ विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृप ॥ २८ ॥ ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः ॥ जगाम देवदेवस्य शेषस्य चरणान्तिकम् ॥२९॥ मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटिसूत्रकङ्कणम् ॥ प्रसन्नवक्त्रारुणलोचनं तं ददर्श सिद्धेश्वरमण्डलैः प्रभुम् ॥ ३० ॥ तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वच्छामलान्तःकरणोऽभ्ययान्मुनिः ॥ प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमाऽनमदादिपूरुषम् ॥ ३१ ॥ स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेहयन्मुहुः ॥ प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत्तं प्रसमीडितुं चिरम् ॥ ३२ ॥ ततः समाधाय मनो मनीषया बभाष एतत्प्रतिलब्धवागसौ ॥ नियम्य सर्वेन्द्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम् ॥ ३३ ॥ चित्रकेतुरुवाच ॥ अजित जितः सममतिभिः साधुभिर्भवाञ्जितात्मभिर्भवता ॥ विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः ॥ ३४ ॥ तव विभवः खलु भगवञ्जगदुदयस्थितिलयादीनि ॥ विश्वसृजस्तेंऽशांशास्तत्र मृषा स्पर्धन्ते पृथगभिमत्या ॥ ३५ ॥

र्भक्त्या नत्वा ॥३१॥ प्रेमव्याप्तस्तस्य स्तवनं कर्तुं न शशाक ॥३२॥ ततो मनः स्थिरं कृत्वा जगद्गुरुं तुष्टाव ॥३३॥ चित्रकेतुरुवाच ॥ हे अजित! भवान् भक्तैर्जितोऽसि । त्वं भक्तानात्मसमान् करोषि ॥ ३४ ॥ हे ईश ! जगतः उत्पत्तिस्थितिलयादीनि तवैव विभवोऽस्ति ॥३५॥

---

१ शात्वतशास्त्रविग्रहो यस्य तम् ।

आद्यन्तमध्यरहितः सूक्ष्मं मूलकारणं त्वमेव ॥३६॥ हे भगवन् ! अयमाण्डकोशः क्षित्यादिभिः सप्तावरणैः संवेष्टितः सन् त्वयि परमाणुवत् परिभ्रमति । तस्मात् त्वमनन्तोऽसि ॥३७॥ ये नरपशवस्त्वां विहाय तव विभूतीरुपासते तेषां मनोरथाः नश्यन्ति ॥ ३८ ॥ विषयकामेनापि

परमाणुपरममहतोस्त्वमाद्यन्तान्तरवर्ती त्रयविधुरः ॥ आदावन्तेऽपि च सत्त्वानां यद् ध्रुवं तदेवान्तरालेऽपि ॥ ३६ ॥ क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैराण्डकोशः ॥ यत्र पतत्यणुकल्पः सहाण्डकोटिकोटिभिस्तदनन्तः ॥ ॥ ३७ ॥ विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् ॥ तेषामाशिष ईश तदनु विनश्यन्ति यथा राज-कुलम् ॥ ३८ ॥ कामधियस्त्वयि रचिता न परम रोहन्ति यथा करम्भबीजानि ॥ ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि ॥ ३९ ॥ जितमजित तदा भवता यदाऽऽह भागवतं धर्ममनवद्यम् ॥ निष्किंचना ये मुनय आत्मा-रामा यमुपासतेऽपवर्गाय ॥ ४० ॥ विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति च यदन्यत्र ॥ विषमधिया रचितो यः स ह्यविशुद्धः क्षयिष्णुरधर्मबहुलः ॥ ४१ ॥ कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण ॥ स्वद्रोहात्तव कोपः परसंपीडया च तथाऽधर्मः ॥ ४२ ॥ न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः ॥ स्थिरचरसत्त्व-कदम्बेष्वपृथग्धियो यमुपासते त्वाऽऽर्याः ॥ ४३ ॥ नहि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः ॥ यन्नाम-सकृच्छ्रवणात्पुल्कसकोऽपि विमुच्यते संसारात् ॥ ४४ ॥

कृता त्वत्सेवा मोक्षफलैव भवति ॥३९॥ हे अजित ! सनकादयो मोक्षाय त्वामुपासते॥४०॥यद्भगवद्धर्मे विषमा मतिर्न ॥४१॥स्वपरद्रोहात् कः क्षेमाय कल्पते ॥४२॥ ज्ञानिनस्त्वद्धर्मान् सेवन्ते । त्वां चोपासते ॥४३॥ हे भगवन् ! त्वद्दर्शनात् नृणां पापक्षयः ॥४४॥



१ परमाणुः सूक्ष्ममूलकारणम् । परममहदन्तिमं कार्यम् । तयोरादावन्ते मध्ये च वर्तितुं शीलं यस्य सः । २ आदिमध्यान्तशून्यः । ३ पूर्वोक्तहेतुः । सत्त्वेन प्रतीतानां कार्याणामादावन्तेऽपि यद् ध्रुवं तदेवान्तरालेऽपि ध्रुवमन-पायि सुवर्णादिवत् । ४ पूर्वस्मात्पूर्वस्माद् दशगुणमुत्तरोत्तरैरावृतः । ५ इंद्रादीन् । ६ राजकुलनाशमनु तत्सेवकानाम् । ७ भर्जितवीजानि । ८ जीवस्य । ९ अत्यन्तकायक्लेशात् । उक्तं च गीतासु—'कर्षयन्तः शरीरस्थं भूतग्राम-मचेतसः । मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान्' इति । १० स्थावरजंगमप्राणिसमूहेषु ।

हे भगवन् ! अधुना तव दर्शनेन कृतार्थोऽस्मि । नारदोपदेशो मिथ्या कथं भवति ॥ ४५ ॥ जनैः सर्वान्तर्यामिणस्तव किं प्रार्थितव्यम् ॥ ४६ ॥ अतः कुयोगिनां दुर्दर्शाय परमहंसाय नमः ॥ ४७ ॥ यस्य मूर्धनि भूमंडलं सर्षपायति तस्मै ते सहस्रमूर्ध्ने नमः॥ ४८॥ श्रीशुक उवाच ॥ एवं स्तुतोऽनन्तो विद्याधरपतिं जगाद ॥ ४९ ॥ श्रीभगवानुवाच ॥ हे राजन् ! नारदाङ्गिरोभ्यामुक्तोपदेशरूपविद्यया मद्द-

अथ भगवन्वयमधुना त्वदवलोकपरिमृष्टाशयमलाः ॥ सुरऋषिणा यदुदितं तावकेन कथमन्यथा भवति ॥ ४५ ॥ विदितमनन्त समस्तं तव जगदात्मनो जनैरिहाचरितम् ॥ विज्ञाप्यं परमगुरोः कियदिव सवितुरिव खद्योतैः ॥ ४६ ॥ नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय ॥ दुरवसितात्मगतये कुयोगिनां भिदा परमहंसाय ॥ ४७ ॥ यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनु चित्तय उच्चकन्ति ॥ भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥ ४८ ॥ श्रीशुक उवाच ॥ संस्तुतो भगवानेवमनन्तस्तमभाषत ॥ विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ॥ ४९ ॥ श्रीभगवानुवाच ॥ यन्नारदांगिरोभ्यां ते व्याहृतं मेऽनुशासनम् ॥ संसिद्धोऽसि तया राजन्विद्यया दर्शनाच्च मे ॥ ५० ॥ अहं वै सर्वभूतानि भूतात्मा भूतभावनः ॥ शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू ॥ ५१ ॥ लोके विततमात्मानं लोकं चात्मनि सन्ततम् ॥ उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥ ॥ ५२ ॥ यथा सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि ॥ आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥ ५३ ॥ एवं जागरणादीनि जीवस्थानानि चात्मनः ॥ मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ५४ ॥

र्शनाच्च त्वं सिद्धोऽसि ॥५०॥ हे राजन् ! सर्वभूतानामहमात्मा विश्वं मद् व्यतिरिक्तं नास्ति ॥ ५१ ॥ भोक्तृभोग्यात्मकमुभयं मयि व्याप्तं पश्येत् ॥५२॥ यथा स्वप्ने सुप्तो गिरिवनादिरूपं देशान्तरस्थमात्मन्येव पश्यति तथा स्वप्न एवोत्थितः सन् जाग्रदवस्थामनुभवति ॥५३॥ एवं प्रसिद्धान्यपि जाग्रदादीन्यात्मनो मायामात्राणि इत्येवं विज्ञाय तदवस्थारहितमात्मानं स्मरेत् ॥ ५४ ॥

१ अविज्ञाता । २ भेदबुद्धया । ३ पश्यन्तम् । ४ ज्ञानेन्द्रियाणि । ५ स्वारूढं पश्यन्ति ।

जीवो येन रूपेण निद्रायां निर्गुणं सुखं वेद तमात्मानं मां जानीहि ॥५५॥ जाग्रत्स्वप्नयोः स्मरतः पुंसस्तयोः प्रकाशकत्वेन यत् जानाति तत् ज्ञानं ब्रह्म ॥५६॥ यदा मत्स्वरूपं विस्मृतं तदाऽऽत्मनः सकाशाद् भिन्नं भवति । ततः पुंसः संसृतिरूपः संसारो भवति ॥ ५७ ॥ इह मानुषीं योनिं लब्ध्वा यः आत्मानं न वेद स कुत्रापि सुखं नाप्नुयात् ॥५८॥ कविः प्रवृत्तिमार्गात् क्लेशो निवृत्तिमार्गाद् मोक्षः इति स्मृत्वा संक-

येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा ॥ सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम् ॥ ५५ ॥ उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ॥ अन्वेति व्यतिरिच्येत यज्ज्ञानं ब्रह्म तत्परम् ॥ ५६ ॥ यदेतद्विस्मृतं पुंसो मद्भावं भिन्नमात्मनः ॥ ततः संसार एतस्य देहाद्देहो मृतेर्मृतिः ॥ ५७ ॥ लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसम्भवाम् ॥ आत्मानं यो न बुध्येत न क्वचिच्छमवाप्नुयात ॥ ५८ ॥ स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम् ॥ अभयं चाप्यनीहायां सङ्कल्पाद्विरमेत्कवि ॥ ५९ ॥ सुखाय दुःखमोक्षाय कुर्वाते दम्पती क्रियाः ॥ ततो निवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च ॥ ६० ॥ एवं विपर्ययं बुद्ध्वा नृणां विज्ञाभिमानिनाम् ॥ आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम् ॥ ६१ ॥ दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा ॥ ज्ञानविज्ञानसन्तुष्टो मद्भक्तः पुरुषो भवेत् ॥ ६२ ॥ एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः ॥ स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥ ६३ ॥

ल्पाद् विरमेत् ॥५९॥ किंच दम्पती सुखाय दुःखनाशाय क्रियाः कुर्वाते । ततः किमपि न भवति ॥६०॥ एवं नृणां विपर्ययमात्मनश्च सूक्ष्मां गतिं बुद्ध्वा ॥६१॥ दृष्टश्रुतविषयैर्मुक्तः सन् ज्ञानविज्ञानतुष्टो मम भक्तो भवेत् ॥६२॥ योगनैपुण्यबुद्धिभिर्यत् स्वपरयोरेकदर्शनं स एवस्वार्थः ॥६३॥

१ यज्ज्ञानं प्रस्वापप्रतिबोधयोः प्रकाशत्वेनान्वेति ताभ्यां व्यतिरिच्यते च तद् ब्रह्म । २ पुनरपि जननं पुनरपि मरणम् । ३ शास्त्रोक्तस्यापरोक्षस्य च ज्ञानस्य संभवो यस्यां ताम् । ४ 'क्षेमम्' इ० पा० । ५ विज्ञाः उद्यमे प्रवीणाः वयमित्यभिमानिनाम् । ६ ऐहिकामुष्मिकविषयः ।

एवं मम वचो धारयन् ज्ञानविज्ञानसंपन्नस्त्वमाशु सिध्यसि ॥ ६४ ॥ श्रीशुक उवाच ॥ एवं हरिश्चित्रकेतुमाश्वास्यान्तदंधे ॥ ६५ ॥ इति श्रीभा० चू० षष्ठ० षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशेऽमोघमहर्द्धिं प्राप्य खे चरन् ॥ विहस्य गिरिशं शापादुमाया वृत्रतां गतः ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! चित्रकेतुर्यस्यां दिशि भगवान् गुप्तस्तस्यै दिशे नमः कृत्वा गगनेचरश्चचार ॥ १ ॥ सोऽव्याहतबलेन्द्रियः सिद्धादिभिः स्तूयमानः ॥२॥ विद्याधरस्त्रीभिः सह हरिं गापयन् कुलाचलेन्द्रद्रोणीषु रेमे ॥ ३ ॥ एकदा विष्णुदत्तविमानेन भ्रमन् गिरिशं

त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम ॥ ज्ञानविज्ञानसंपन्नो धारयन्नाशु सिध्यसि ॥ ६४ ॥ श्रीशुक उवाच ॥ आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः ॥ पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः ॥ ६५ ॥ इति श्रीभागवते महापुराणे षष्ठस्कन्धे चित्रकेतोस्तत्त्वोपदेशो नाम षोडशोऽध्यायः ॥ १६ ॥ श्रीशुक उवाच ॥ यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः ॥ विद्याधरश्चित्रकेतुश्चचार गगनेचरः ॥ १ ॥ स लक्षं वर्षलक्षाणामव्याहतबलेन्द्रियः ॥ स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः ॥ २ ॥ कुलाचलेन्द्रद्रोणीषु नानासङ्कल्पसिद्धिषु ॥ रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम् ॥ ३ ॥ एकदा स विमानेन विष्णुदत्तेन भास्वता ॥ गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः ॥ ४ ॥ आलिङ्ग्याङ्गीकृतां देवीं बाहुना मुनिसंसदि ॥ उवाच देव्याः शृण्वन्त्या जहासोच्चैस्तदन्तिके ॥ ॥ ५ ॥ चित्रकेतुरुवाच ॥ एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम् ॥ आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया ॥ ६ ॥ जटाधरस्तीव्रतपा ब्रह्मवादी सभापतिः ॥ अङ्कीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा ॥ ७ ॥ प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति ॥ अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम् ॥ ८ ॥ श्री शुक उवाच ॥ भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृपः ॥ तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः ॥ ९ ॥

ददृशे ॥ ४ ॥ मुनिसभायां देवीमालिङ्ग्य स्थितं शिवं दृष्ट्वा देव्याः शृण्वन्त्याः उच्चैर्हसित्वा जगाद ॥ ५ ॥ चित्रकेतुरुवाच ॥ अयं लोकगुरुः साक्षाद् देहिनां धर्मवक्ता सभायां भार्यामङ्कीकृत्यास्ते ॥ ६ ॥ अहो ! जटाधरो गतह्रीःप्राकृत इवास्ते ॥ ७ ॥ प्राकृता अपि प्रायः स्त्रियं रहसि बिभ्रति। अयं तु सदसि बिभर्ति ॥ ८ ॥ श्रीशुक उवाच ॥ एवं तद्वचः श्रुत्वा शिवः सभ्याश्च तूष्णीमासन् ॥ ९ ॥

एवं बह्वशोभनं ब्रुवाणे सति देवी क्रोधेन तस्मै जगाद ॥ १० ॥ पार्वत्युवाच ॥ अधुना लोकेऽयं दण्डधरोऽस्मद्विधानां शास्ता किम् ॥११॥ एवं बह्वशोभनं ब्रुवाणे सति देवी क्रोधेन तस्मै जगाद ॥ १० ॥ पार्वत्युवाच ॥ अधुना लोकेऽयं दण्डधरोऽस्मद्विधानां शास्ता किम् ॥११॥ योऽयं क्षत्रबन्धुर्ब्रह्मादीनज्ञान् कृत्वा शिवं शास्ति स ब्रह्मनारदादयो धर्मं न विदुः ये शास्त्रमुल्लङ्घ्य वर्तमानं हरं न निषेधन्ति ॥ १२ ॥ अतो हे दुर्मते ! त्वमासुरीं योनिं याहि । भूयो महतामपराधं न कर्तासि दण्ड्यः ॥ १३ ॥ अयं वैकुण्ठपादमूलं गन्तुं नार्हति ॥ १४ ॥

इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम् ॥ रुषाऽऽह देवी धृष्टाय निर्जितात्माभिमानिने ॥ १० ॥ पार्वत्युवाच ॥ अयं किमधुना लोके शास्ता दण्डधरः प्रभुः ॥ अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत् ॥ ११ ॥ न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा नतु नारदाद्याः ॥ न वै कुमारः कपिलो मनुश्च ये नो निषेधन्त्यतिवर्तिनं हरम् ॥ १२ ॥ एषा मनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम् ॥ यः क्षत्रबन्धुः परिभूय सूरीन् प्रशास्ति धृष्टस्तदयं हि दण्ड्यः ॥ १३ ॥ नायमर्हति वैकुण्ठपापमूलोपसर्पणम् ॥ संभावितमतिः स्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥ अतः पापीयसीं योनिमासुरीं याहि दुर्मते ॥ यथेह भूयो महतां न कर्ता पुत्र किल्बिषम् ॥१५॥ श्रीशुक उवाच ॥ एवं शप्तश्चित्रकेतुर्विमानादवरुह्य सः ॥ प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ॥ १६ ॥ चित्रकेतुरुवाच ॥ प्रतिगृह्णामि ते शापमात्मनोऽञ्जलिनाऽम्बिके ॥ देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥ संचारचक्र एतस्मिञ्जन्तुरज्ञानमोहितः ॥ भ्राम्यन्सुखं च दुःखं च भुङ्क्ते सर्वत्र सर्वदा ॥ १८ ॥ नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः ॥ कर्तारं मन्यतेऽप्राज्ञ आत्मानं परमेव च ॥ १९ ॥ गुणप्रवाह एतस्मिन्कः शापःकोन्वनुग्रहः ॥ कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा ॥ २० ॥

॥ १५ ॥ श्रीशुक उवाच ॥ एवं देव्या शप्तश्चित्रकेतुर्विमानादुत्तीर्य देवीं प्रणम्याह ॥ १६ ॥ चित्रकेतुरुवाच ॥ हे अम्बिके ! तव शापं प्रगृह्णामि ॥ १७ ॥ अज्ञानमोहितो जन्तुः संसारे भ्रमन् सर्वत्र सुखं दुःखं च भुंक्ते ॥ १८ ॥ जन्तोः सुखदुःखकर्ताऽऽत्मा परो न ॥ १९ ॥ अस्मिन् संसारे कः शापः कोऽनुग्रहः कः स्वर्गः को नरकः सुखं दुःखं च किम् ॥ २० ॥

भगवान् मायया भूतानि तेषां बन्धं मोक्षं सुखं दुःखं च सृजति ॥ २१ ॥ तस्य कश्चित् प्रियोऽप्रियो न तस्य प्रीतिः रोषश्च कुतः ॥ २२ ॥ तथापि शरीरिणां सुखदुःखादि सर्वं मायाजनितमस्ति ॥२३॥ अतो हे देवि ! शापमोक्षाय त्वां प्रार्थये। किंतु ममोक्तमपराधं क्षमस्व ॥२४॥ इत्युक्त्वा तौ प्रसाद्य जगाम ॥२५॥ ततः सर्वेषां शृण्वतां रुद्राणीं जगाद ॥ २६ ॥ हे देवि ! हरेर्भक्तानां माहात्म्यं दृष्टवत्यसि ॥ २७ ॥

एकः सृजति भूतानि भगवानात्ममायया ॥ एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कलः ॥ २१ ॥ न तस्य कश्चिद्दयितः प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः ॥ समस्य सर्वत्र निरञ्जनस्य सुखे न रागः कुत एव रोषः ॥ २२ ॥ तथापि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ॥ बन्धाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते ॥ २३ ॥ अथ प्रसादये न त्वां शापमोक्षाय भामिनि ॥ यन्मन्यसे असाधूक्तं मम तत्क्षम्यतां सति ॥ २४ ॥ श्रीशुक उवाच ॥ इति प्रसाद्य गिरिशौ चित्रकेतुररिन्दम ॥ जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः ॥ २५ ॥ ततस्तु भगवान् रुद्रो रुद्राणीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥२६॥ श्रीरुद्र उवाच ॥ दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः ॥ माहात्म्यं भृत्यभृत्यानां निस्स्पृहाणां महात्मनाम् ॥ २७ ॥ नारायणपराः सर्वे न कुतश्चन बिभ्यति ॥ स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ २८ ॥ देहिनां देहसंयोगाद्द्वन्द्वानीश्वरलीलया ॥ सुखं दुःखं मृतिर्जन्म शापोऽनुग्रह एव च ॥२९॥ अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि ॥ गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः[1] ॥ ३० ॥ वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ॥ ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ॥ ३१ ॥

नारायणपराः कुतश्चन न बिभ्यति । ते स्वर्गे नरकेऽपि समदर्शिनः सन्ति ॥ २८ ॥ देहिनां देहसंयोगाद् सुखदुःखादिद्वन्द्वानि भवन्ति ॥ २९ ॥ पुंसोऽविवेकेनात्मनि भेदो जातः ॥ ३० ॥ ईशभक्तानां कश्चिदर्थो नास्ति ॥ ३१ ॥

---

१ स्रजाविभेदः ।

अहं ब्रह्मा नारदादयो यस्येहितं न विदाम ॥ ३२ ॥ हरिः सर्वभूतप्रियः ॥३३॥ यस्यायं भक्तः । अहं च विष्णुभक्तः । अतो मम क्रोधस्त-स्मिन् नाभूत् ॥ ३४ ॥ तस्माद् तद्भक्तेषु त्वया विस्मयो न कार्यः ॥ ३५ ॥ श्रीशुक उवाच ॥ इति शिवभाषितं श्रुत्वोमा शान्ता बभूव ॥ ३६ ॥ चित्रकेतुः देवीं शप्तुं समर्थोऽपि शापमेव जगृहे एतावत् साधुलक्षणम् ॥ ३७ ॥ ततः स दैत्ययोनिमाश्रित्य त्वष्टुर्दक्षिणाग्नौ ज्ञान-



नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः ॥ विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीश-मानिनः ॥ ३२ ॥ नह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ॥ आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः ॥ ॥३३॥ तस्य चायं महाभागश्चित्रकेतुः प्रियोऽनुगः ॥ सर्वत्र समदृक्छान्तो ह्यहं चैवाच्युतप्रियः ॥३४॥ तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु ॥ महापुरुषभक्तेषु शान्तेषु समदर्शिषु ॥ ३५ ॥ श्रीशुक उवाच ॥ इति श्रुत्वा भगवतः शिव-स्योमाऽभिभाषितम् ॥ बभूव शान्तधी राजन्देवी विगतविस्मया ॥३६॥ इति भागवतो देव्याः प्रतिशप्तुमलंतमः ॥ मूर्ध्ना संजगृहे शापमेतावत्साधुलक्षणम् ॥ ३७ ॥ जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः ॥ वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ३८ ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः ॥३९॥ इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः ॥ माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद्विमुच्यते ॥ ४० ॥ य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् ॥ इतिहासं हरिं स्मृत्वा स याति परमां गतिम् ॥ ४१ ॥ इति श्रीभा० महापुराणे षष्ठस्कन्धे चित्रकेतोः शापस्वीकरणं नाम सप्तदशोऽध्यायः ॥ १७ ॥



विज्ञानसंयुक्तो वृत्रनाम्ना जज्ञे॥ ३८ ॥ एतद् वृत्रस्य कारणं ते कथितम् ॥ ३९ ॥ इमं चित्रकेतोरितिहासं विष्णुभक्तमाहात्म्यं श्रुत्वा बन्धा-न्मुच्यते ॥ ४० ॥ य एतत् प्रातः श्रद्धया शृणुयाद् वा पठेद्वा हरिं स्मरेत् स परां गतिं याति ॥ ४१ ॥ इति श्रीभागवते चू० षष्ठ० सप्तदशोऽध्यायः ॥ १७ ॥

अदितेः पञ्चमादीनां पुत्राणामन्वयोक्तिभिः ॥ अष्टादश दितेर्गर्भे शक्रेण मरुतां भिदा ॥१॥ श्रीशुक उवाच ॥ अथ सवितुः पृश्निपत्न्यां कन्याः तिस्रः—सावित्री १, व्याहृतिः २, त्रयी ३ । पुत्राः पञ्च— अग्निहोत्रं १, पशुयागः २, सोमयागः ३, चातुर्मास्यः ४, महामखः ५ इति जज्ञे ॥१॥ भगस्य सिद्धिनाम्न्यां भार्यायां महिमानः १, विभुः २, प्रभुः ३, आशीः १ कन्या च जज्ञे ॥ २ ॥ धातुः सिनीवाली दर्शम् । कुहूः सायम् । राका

श्रीशुक उवाच ॥ पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीम् ॥ अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान् ॥ १ ॥ सिद्धिर्भगस्य भार्याङ्ग महिमानं विभुं प्रभुम् ॥ आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम् ॥ २॥ धातुः कुहूः सिनीवाली राका चानुमतिस्तथा ॥ सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥ ३ ॥ अग्नीन्पुरीष्यानाधत्त क्रियायां समनन्तरः ॥ चर्षणी वरुणस्यासीद्यस्यां जातो भृगुः पुनः ॥ ४ ॥ वाल्मीकिश्च महायोगी वल्मीकादभवत्किल ॥ अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी ॥५॥ रेतः सिषिचतुः कुम्भे उर्वश्याः सन्निधौ द्रुतम् ॥ रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ॥ ६ ॥ पौलोम्यामिन्द्र आधत्त त्रीन्पुत्रानिति नः श्रुतम् ॥ जयन्तमृषभं तात तृतीयंमीढुषं प्रभुः ॥ ७ ॥ उरुक्रमस्य देवस्य मायावामनरूपिणः ॥ कीर्तौ पत्न्यां बृहच्छ्लोकस्तस्यासन्सौभगादयः ॥ ८ ॥ तत्कर्मगुणवीर्याणि काश्यपस्य महात्मनः ॥ पश्चाद्वक्ष्यामहेऽदित्यां यथैवावततार ह ॥ ९ ॥ अथ कश्यपदायादान्दैतेयान्कीर्तयामि ते ॥ यत्र भागवतः श्रीमान्प्रह्लादो बलिरेव च ॥ १० ॥

प्रातः । अनुमतिः पूर्णमासम् । एवं ताः प्रासूयन्त ॥ ३ ॥ वरुणस्य चर्षण्यां भृगुर्वाल्मीकिश्च जातः ॥ ४ ॥ अगस्त्यवसिष्ठौ मित्रावरुणयोः पुत्रौ ॥ ५ ॥ मित्रस्य रेवत्यामुत्सर्गः १, अरिष्टः २, पिप्पलः ३ ॥ ६ ॥ इन्द्रस्य पौलोम्यां जयन्तऋषभमीढुषाः त्रयः ३ अभवन् ॥ ७ ॥ वामनस्य कीर्त्यां बृहच्छ्लोकः, तस्य सौभगादयः पुत्राः आसन् ॥८॥ वामनस्य वीर्याणि अष्टमस्कन्धे वक्ष्यन्ते ॥९॥ अथ दितेर्वंशं शृणु ॥१०॥

१. अग्निन्पञ्चचितान् । २ समनन्तरो–विधाता ।

कश्यपाद् दित्यां हिरण्याक्षः हिरण्यकशिपुश्च जातौ ॥ ११ ॥ हिरण्यकशिपोः कयाध्वां चत्वारः पुत्राः ॥ १२ ॥ संह्लादः १, अनुह्लादः २, ह्लादः ३, प्रह्लादः ४, इति, कन्या सिंहिका चाभूत् । तां विप्रचित्तिर्जग्राह । तस्यां राहुः ॥ १३ ॥ यस्य शिरो हरिर्जहार । संह्लादात् कृत्यां पञ्चजनो जज्ञे ॥ १४ ॥ ह्रदात् धमन्यामिल्वलो वातापिश्च जातौ ॥ १५ ॥ अनुह्लादात् सूर्म्यायां बाष्कलमहिषौ । प्रह्लादात्

दितेर्द्वावेव दायादौ दैत्यदानववन्दितौ ॥ हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ ॥ ११ ॥ हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी ॥ जम्भस्य तनया दत्ता सुषुवे चतुरः सुतान् ॥ १२ ॥ संह्लादं प्रागनुह्लादं ह्लादं प्रह्लादमेव च ॥ तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् ॥ १३ ॥ शिरोऽहरद्यस्य हरिश्चक्रेण पिबतोऽमृतम् ॥ संह्लादस्य कृति-भार्याऽसूत पञ्चजनं ततः ॥ १४ ॥ ह्लादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् ॥ योऽगस्त्याय त्वतिथये पेचे वातापिमिल्वलम् ॥ १५ ॥ अनुह्लादस्य सूर्म्यायां बाष्कलो महिषस्तथा ॥ विरोचनस्तु प्राह्लादिर्देव्यास्तस्याभवद्बलिः ॥१६॥ बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत् ॥ तस्यानुभावः सुश्लोक्यः पश्चादेवाभिधास्यते ॥ १७ ॥ बाण आराध्य गिरिशं लेभे तद्गणमुख्यताम् ॥ यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः ॥ १८ ॥ मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः ॥ त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम् ॥ १९ ॥ राजोवाच ॥ कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो ॥ इन्द्रेण प्रापिताः सात्म्यं किं तत्साधु कृतं हि तैः ॥ २० ॥ इमे श्रद्दधते ब्रह्मन्नृषयो हि मया सह ॥ परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि ॥ २१ ॥

देव्यां विरोचनः । तस्य बलिः ॥ १६ ॥ बलेरशनाभार्यायां बाणज्येष्ठं पुत्रशतं बभूव ॥ १७ ॥ बाणः शिवस्य गणमुख्यतां प्राप ॥ १८ ॥ कश्यपाद् दित्यां मरुतः एकोनपञ्चाशत् ४९ अभवन् । ते इन्द्रेण समानरूपतां नीताः ॥ १९ ॥ राजोवाच ॥ हे गुरो ! ते आसुरं भावं

हित्वा देवत्वं कथं प्राप्ताः इदं नः कथय ॥ २० ॥ २१ ॥ सूत उवाच ॥ हे शौनक ! शुको राज्ञो वचः श्रुत्वोवाच ॥ २२ ॥ श्रीशुक उवाच ॥ हे राजन् ! एकदा हतपुत्रा दितिः पुत्रहन्तारमिन्द्रं घातयित्वा कदा सुखेन शये ॥ २३ ॥ २४ ॥ यो देहस्यार्थे भूतेभ्यो द्रुह्यति स नरके पततति ॥ २५ ॥ अतो येन मे पुत्राः नाशिताः तस्य नाशकरः पुत्रो भूयात् ॥ २६ ॥ सैवं विचार्य

सूत उवाच ॥ तद्विष्णुरातस्य स बादरायणिर्वचो निशम्यादृतमल्पमर्थवत् ॥ सभाजयन्संनिभृतेन चेतसा जगाद सत्रायण सर्वदर्शनः ॥२२॥ श्रीशुक उवाच ॥ हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ॥ मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् ॥२३॥ कदा नु भ्रातृहन्तारमिन्द्रियाराममुल्बणम् ॥ अक्लिन्नहृदयं पापं घातयित्वा शये सुखम् ॥२४॥ कृमिविड्भस्मसंज्ञाऽऽसीद्यस्येशाभिहितस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥२५॥ आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ॥ मदशोषक इंद्रस्य भूयाद्येन सुतो हि मे ॥२६॥ इति भावेन सा भर्तुराचचारसकृत्प्रियम् ॥ शुश्रूषयाऽनुरागेण प्रश्रयेण दमेन च ॥ २७ ॥ भक्त्या परमया राजन्मनोज्ञैर्वल्गुभाषितैः ॥ मनो जग्राह भावज्ञा सुस्मिताऽपाङ्गवीक्षणैः ॥ २८ ॥ एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ॥ बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥ २९ ॥ विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः ॥ स्त्रियं चक्रे स्वदेहार्धं यया पुंसां मतिर्हृता ॥ ३० ॥ एवं शुश्रूषितस्तात भगवान्कश्यपः स्त्रिया ॥ प्रहस्य परमप्रीतो दितिमाहाभिनन्द्य च ॥ ३१ ॥

नम्रतया शुश्रूषया परमभक्त्या मिष्टभाषणेन कटाक्षावलोकनेन च कश्यपं वशमकरोत् ॥ २७ ॥ एवं स्त्रिया जडीकृतः स विद्वानपि बाढमित्याह । तच्चित्रं न ॥ २८ ॥ २९ ॥ यतः प्रजापतिः स्वदेहार्धं स्त्रियं चक्रे यया पुंसा मतिर्हृता ॥ ३० ॥ एवं शुश्रूषितः कश्यपः प्रीतः

१ सत्रमयनमाश्रयो यस्य तस्य सम्बुद्धिः ।

सन् दितिमाह ॥ ३१ ॥ कश्यप उवाच ॥ हे वरोरु ! अहं ते प्रीतोऽस्मि । भर्तरि प्रीते सति स्त्रीणां मनोरथः को न सिध्येत् ॥ ३२ ॥ सर्वभूतानां वासुदेवो दैवतम् । तथा स्त्रीणां पतिरेव दैवतम् ॥ ३३ ॥ भगवान् पतिरूपेण स्त्रीभिः पूज्यते ॥ ३४ ॥ तस्माद् पतिव्रताः स्त्रियः एकभावेन पतिमीश्वरं मत्वा सेवन्ते ॥ ३५ ॥ सोऽहं त्वया पूजितः । अतो हे भद्रे ! तव कामं संपादये ॥ ३६ ॥ दितिरुवाच । हे ब्रह्मन् ! अहं मृतपुत्रा । येन मे सुतौ घातितौ तस्येन्द्रस्य हन्तारं मृत्युहीनं पुत्रं वृणे ॥ ३७ ॥ तदा कश्यपस्तद्वचो निशम्य तताप । अहो ! अधर्मो



कश्यप उवाच ॥ वरं वरय वामोरु प्रीतस्तेऽहमनिन्दिते ॥ स्त्रिया भर्तरि सुप्रीते कः काम इह चागमः ॥३२॥ पतिरेव हि नारीणां दैवतं परमं स्मृतम् ॥ मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥ ३३ ॥ स एव देवतालिंगैर्नामरूपविकल्पितैः ॥ इज्यते भगवान्पुंभिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४ ॥ तस्मात्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे ॥ यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥३५॥ सोऽहं त्वयार्चितो भद्रे ईदृग्भावेन भक्तितः॥ तत्ते संपादये काममसतीनां सुदुर्लभम् ॥३६॥ दितिरुवाच॥ वरदो यदि मे ब्रह्मन्पुत्रमिन्द्रहणं वृणे ॥ अमृत्युं मृतपुत्राऽहं येन मे घातितौ सुतौ ॥३७॥ निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत ॥ अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥ ३८ ॥ अहो अद्येन्द्रियारामो योषिन्मय्येह मायया ॥ गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥ ३९ ॥ कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः ॥ धिङ् मां बताबुधं स्वार्थे यदहं त्वजितेन्द्रियः ॥४०॥ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ॥ हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥ नहि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ॥ पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ॥४२॥ प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ॥ वधं नार्हति चेन्द्रोऽपि तत्रेदमुपकल्पते ॥ ४३ ॥



महान् प्राप्तः ॥ ३८ ॥ योषिन्मय्या मायया गृहीतचेताः ध्रुवं नरके पतिष्ये ॥ ३९ ॥ अतः स्वार्थेऽबुधं मां धिक् ॥ ४० ॥ किंच यस्याः पद्मसदृशं मुखं वचनं श्रवणामृतं हृदयं क्षुरधारोपमं तस्याश्चेष्टितं को वेद ॥ ४१ ॥ स्त्रीणां कोऽपि प्रियो न । याः स्वार्थे पतिपुत्रादीन् घ्नन्ति घातयन्ति च ॥ ४२ ॥ अस्तु, मया ददामीत्युक्तं तद् मृषा मा भूत । इन्द्रोऽपि वधं नार्हति तत्रेदं योग्यम् ॥ ४३ ॥

एवं विचार्य ॥ ४४ ॥ कश्यप उवाच ॥ हे भद्रे! संवत्सरं व्रतं यदि धारयिष्यसि तर्हि तवाभीष्टपुत्रो भविता व्रतवैपरीत्ये देवबान्धवो भविष्यति ॥४५॥ दितिरुवाच ॥ हे ब्रह्मन् ! व्रतं धारयिष्ये कर्तव्यं कथय ॥ ४६ ॥ कश्यप उवाच ॥ भूतानि न हिंस्यात् । न शपेत् । मिथ्या न वदेत । नखरोमाणि न छिन्द्यात । निषिद्धवस्तूनि न स्पृशेत् ॥ ४७ ॥ जले प्रविश्य न स्नायात् । दुष्टैः सह न संभाषेत । अधौतवस्त्रं न वसीत ।

इति संचिन्त्य भगवान्मारीचः कुरुनन्दन ॥ उवाच किंचित्कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥ कश्यप उवाच ॥ पुत्रस्ते भविता भद्रे इन्द्रहा देवबान्धवः ॥ संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि ॥ ४५ ॥ दितिरुवाच ॥ धारयिष्ये व्रतं ब्रह्मन्ब्रूहि कार्याणि यानि मे ॥ यानि चेह निषिद्धानि न व्रतं घ्नन्ति यानि तु ॥ ४६ ॥ कश्यप उवाच ॥ न हिंस्याद् भूतजातानि न शपेन्नानृतं वदेत् ॥ न च्छिन्द्यान्नखरोमाणि न स्पृशेद्यदमङ्गलम् ॥ ४७ ॥ नाप्सु स्नायान्न कुप्येत न संभाषेत दुर्जनैः ॥ न वसीताधौतवासः स्रजं च विधृतां क्वचित् ॥ ४८ ॥ नोच्छिष्टं चण्डिकान्नं च सामिषं वृषलाहृतम् ॥ भुञ्जीतोदक्यया दृष्टं पिबेदञ्जलिना त्वपः ॥ ४९ ॥ नोच्छिष्टाऽस्पृष्टसलिला सन्ध्यायां मुक्तमूर्धजा ॥ अनर्चिताऽसंयतवागसंवीता बहिश्चरेत् ॥ ५० ॥ नाधौतपादाऽप्रयता नार्द्रपान्नोउदक्शिराः ॥ शयीत नापराङ् नान्यैर्न नग्ना न च सन्ध्ययोः ॥ ५१ ॥ धौतवासाः शुचिर्नित्यं सर्वमङ्गलसंयुता ॥ पूजयेत्प्रात-राशात्प्राग्गोविप्राञ्छ्रियमच्युतम् ॥ ५२ ॥

पूर्वधृतां मालां न धारयेत् ॥४८॥ न उच्छिष्टं चण्डिकान्नं मांसं पिपीलिकादिदूषितान्नं रजस्वलादृष्टं च न भुञ्जीत । अञ्जलिना जलं न पिबेत् ॥ ४९ ॥ उच्छिष्टा संध्यायां मुक्तकेशा मण्डनहिना उपवस्त्रं विना बहिर्न गच्छेत् ॥ ५० ॥ अधौतपादा आर्द्रपादा उदक्छिराः पश्चिमशिराः नग्ना सन्ध्ययोर्न शयीत ॥ ५१ ॥ धौतवासाः शुचिः सर्वमङ्गलसंयुता भोजनात् प्राक् गोविप्रान् श्रियमच्युतं च पूजयेत् ॥ ५२ ॥

सुवासिनीश्च पूजयेत् । पतिमभ्यर्च्य समीपे तिष्ठेत् । हरिं ध्यायेत् ॥ ५३ ॥ एवं पुंसवनं व्रतं संवत्सरं यदि धारयिष्यसि तर्हि शक्रहा पुत्रो भविता ॥ ५४ ॥ सा तद्वचः स्वीकृत्य कश्यपात् व्रतं गर्भं च दधार ॥ ५५ ॥ तदेन्द्रो मातृष्वसुरभिप्रायं ज्ञात्वा दितिं शुश्रूषणं चक्रे ॥ ५६ ॥ नित्यं वनात् फलपुष्पमूलादीनि काले काले उपहृतवान् ॥ ५७ ॥ इन्द्रस्तस्याः व्रतच्छिद्रं ध्यायन् कापट्येन

स्त्रियो वीरवतीश्चार्चेत्स्रग्गन्धबलिमण्डनैः ॥ पतिं चाऽर्च्योपतिष्ठेत ध्यायेत्कोष्ठगतं च तम् ॥ ५३ ॥ सांवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ॥ धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः ॥ ५४ ॥ बाढमित्यभिप्रेत्याथ दिती राजन्महामनाः ॥ काश्यपं गर्भमाधत्त व्रतं चाञ्जो दधार सा ॥ ५५ ॥ मातृष्वसुरभिप्रायमिन्द्र आज्ञाय मानद ॥ शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः ॥ ५६ ॥ नित्यं वनात्सुमनसः फलमूलसमित्कुशान् ॥ पत्राङ्कुरमृदोऽपश्च काले काल उपाहरत् ॥ ५७ ॥ एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ॥ प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥ ५८ ॥ नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते ॥ चिन्तां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥ ५९ ॥ एकदा सा तु सन्ध्यायामुच्छिष्टा व्रतकर्शिता ॥ अस्पृष्टवार्यधौताऽङ्घ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥ लब्ध्वा तदन्तरं शक्रो निद्रापहृतचेतसः ॥ दितेः प्रविष्ट उदरं योगेशो योगमायया ॥ ६१ ॥ चकर्त सप्तधा गर्भं वज्रेण कनकप्रभम् ॥ रुदन्तं सप्तधैकैकं मा रोदीरिति तान्पुनः ॥ ६२ ॥



सेवितवान् ॥ ५८ ॥ यदा व्रतच्छिद्रं नापश्यत् तदा मे शिवं केन स्यात् इति चिन्तां प्राप ॥ ५९ ॥ एकदा सोच्छिष्टाऽधौताङ्घ्रिर्विधिमोहिता संध्यायां सुष्वाप ॥ ६० ॥ इन्द्रस्तदन्तरं वीक्ष्य योगमायया नासिकाद्वारेण दितेरुदरं प्रविश्य ॥ ६१ ॥ वज्रेण गर्भं सप्तधा

१ कुक्ष्यन्तरगतम् ।

चिच्छेद । ते सप्तधा भूताः रुरुदुः । पुनरेकैकं मा रोदीः इत्युक्त्वा सप्तधा चकर्त ॥ ६२ ॥ तदा ते ऊचुः हे इन्द्र ! वयं मरुतः तव भ्रातरः अस्मान् किं जिघांससि ॥ ६३ ॥ तदेन्द्र आह-यूयं चेत् मम भ्रातरः तर्हि मा भैष्ट ॥ ६४ ॥ हरेनुकम्पया दितेर्गर्भो न ममार यथा ब्रह्मास्त्रेण भगवान् ॥ ६५ ॥ यतो दित्या किंचिदूनं संवत्सरं हरिः पूजितः ॥६६॥ ते मरुतः इन्द्रेण सह पञ्चाशद् देवा अभवन् ।

ते तमूचुः पाट्यमानाः सर्वे प्राञ्जलयो नृप ॥ नो जिघांससि किमिन्द्र भ्रातरो मरुतस्तव ॥ ६३ ॥ मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः ॥ अनन्यभावान्पार्षदानात्मनो मरुतां गणान् ॥६४॥ न ममार दितेर्गर्भः श्रीनिवासाऽनु-कम्पया ॥ बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥ सकृदिष्ट्वाऽऽदिपुरुषं पुरुषो याति साम्यताम् ॥ संवत्सरं किंचिदूनं दित्या यद्धरिरर्चितः ॥ ६६ ॥ सजूरिन्द्रेण पञ्चाशद्देवास्ते मरुतोऽभवन् ॥ व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ॥ ६७ ॥ दितिरुत्थाय ददृशे कुमाराननलप्रभान् ॥ इन्द्रेण सहितान् देवी पर्यतुष्यदनिन्दिता ॥६८॥ अथेन्द्रमाह ताताहमादित्यानां भयावहम् ॥ अपत्यमिच्छन्त्यचरं व्रतमेतत्सुदुष्करम् ॥ ६९ ॥ एकः संक-ल्पितः पुत्रः सप्तसप्ताभवन्कथम् ॥ यदि ते विदितं पुत्र सत्यं कथय मा मृषा ॥ ७० ॥ इन्द्र उवाच ॥ अम्ब तेऽहं व्यवसितमुपधार्यागतोऽन्तिकम् ॥ लब्धान्तरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥ ७१ ॥ कृतो मे सप्तधा गर्भ आस-न्सप्त कुमारकाः ॥ तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥ ७२ ॥

एवं ते मातृदोषमपोह्येन्द्रेण सोमपाः कृताः ॥६७॥ ततो दितिरुत्थायेन्द्रेण सहाग्निप्रभान् कुमारान् दृष्ट्वा संतोषं प्राप ॥६८॥ अथ दितिः प्राह हे तात ! आदित्यानां भयदं पुत्रमिच्छन्ती व्रतमचरम् ॥ ६९ ॥ ते सप्तसप्तधा कथं बभूवुः ! यदि त्वया सत्यं ज्ञातं तर्हि कथय ॥ ७० ॥ इन्द्र उवाच ॥ हे अम्ब ! तव विचारं ज्ञात्वा व्रतच्छिद्रं वीक्ष्योदरं गत्वा गर्भं सप्तधाऽच्छिदम् ॥ ७१ ॥ पुनश्च प्रत्येकं सप्तधा अच्छिदम् ।

तथापि न मम्रुः । मया तदाश्चर्यं वीक्ष्य हरिपूजायाः सिद्धिर्दृष्टा ॥ ७२ ॥ ७३ ॥ ये निष्कामाः हरिमाराधयन्ति ते स्वार्थकुशलाः ॥ ७४ ॥ आत्मप्रदं तमाराध्य विषयभोगं को वृणीते ॥७५॥ अतो हे मातः ! मम दौरात्म्यं क्षन्तुमर्हसि ॥ ७६ ॥ श्रीशुक उवाच ॥ तदा दितिस्तस्य शुद्धभावं दृष्ट्वैतान् पालय तव साहाय्यं करिष्यन्ति इत्याह । ततः इन्द्रस्तां नत्वा तैः सह दिवं ययौ ॥७७॥ हे राजन् ! तव मरुतां जन्म

ततस्तत्परमाश्चर्यं वीक्ष्याध्यवसितं मया ॥ महापुरुषपूजायाः सिद्धिः काप्यानुषङ्गिणी॥ ७३ ॥ आराधनं भगवत ईहमाना निराशिषः ॥ ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः ॥ ७४ ॥ आराध्यात्मप्रदं देवं स्वात्मानं जगदीश्वरम् ॥ को वृणीते गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥ तदिदं मम दौर्जन्यं बालिशस्य महीयसि ॥ क्षन्तुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥ ७६ ॥ श्रीशुक उवाच ॥ इन्द्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ॥ मरुद्भिः सह तां नत्वा जगाद त्रिदिवं प्रभुः ॥७७॥ एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ मङ्गलं मरुतां जन्म किं भूयः कथयामि ते ॥ ७८ इति श्रीभाग० म० षष्ठ० मरुद्गणजन्मानुकथनं नामाष्टादशोऽध्यायः ॥ १८ ॥ राजोवाच ॥ व्रतं पुंसवनं ब्रह्मन्भवता यदुदीरितम् ॥ तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥ १ ॥ श्रीशुक उवाच ॥ शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया ॥ आरभेत व्रतमिदं सार्वकामिकमादितः ॥ २ ॥



कथितं भूयः किं कथयामि ॥ ७८ ॥ इति श्रीभागवते चूर्णिकायां षष्ठस्कन्धे अष्टादशोऽध्यायः ॥१८॥ ऊनविंशे तु यत्प्रोक्तं कश्यपेन दितेर्व्रतम् । तदेव विवृतं लोकहिताय हरितोषणम् ॥१॥ राजोवाच । हे ब्रह्मन् ! भवता यत् पुंसवनं व्रतं कथितं तत्प्रकारं ज्ञातुमिच्छामि ॥ १ ॥ श्रीशुक उवाच ॥ मार्गशीर्षशुक्लपक्षप्रतिपदि स्त्री भर्तुरनुज्ञया सार्वकामिकं व्रतमारभेत ॥ २ ॥

पूर्वं मरुतां जन्म निशम्य ब्राह्मणाज्ञया स्नात्वा श्वेतवस्त्रालंकारान् धृत्वा प्रातर्लक्ष्म्याः सह विष्णुं पूजयेत् ॥३॥ पूजादौ नमस्कारो निरपेक्षाय पूर्णकामाय महाविभूतिपतये ते नमोऽस्त्विवति ॥ ४ ॥ हे ईश ! त्वं सर्वगुणैर्युक्तः ॥ ५ ॥ विष्णुपत्नि ! हे महामाये ! ते नमोऽस्तु । ॐ नमो भगवते महापुरुषायेति मन्त्रेणावाहनादिषोडशोपचारैः पूजयेत् । अनेनैव मन्त्रेणाग्नौ हविश्शेषेण द्वादशाहुतीर्जुहुयात् ॥ ६ ॥ ७ ॥ एवं

निशम्य मरुतां जन्म ब्राह्मणाननुमन्त्र्य च ॥ स्नात्वा शुक्लदती शुक्ले वसीतालंकृताम्बरे ॥ पूजयेत्प्रातराशात्प्राग्भगवन्तं श्रिया सह ॥ ३ ॥ अलं ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ॥ महाविभूतिपतये नमः सकलसिद्धये ॥४॥ यथा त्वं कृपया भूत्या तेजसा महिनौजसा ॥ जुष्ट ईश गुणैः सर्वैस्ततोऽसि भगवान्प्रभुः ॥५॥ विष्णुपत्नि महामाये महापुरुषलक्षणे ॥ प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते ॥६॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिर्बलिमुपहराणीति ॥ अनेनाहरहर्मन्त्रेण विष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नानवासउपवीत विभूषणगन्धपुष्पधूपदीपोपहाराद्युपचारांश्च समाहित उपाहरेत ॥ हविश्शेषं तु जुहुयादनले द्वादशाहुतीः ॥७॥ॐ नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ॥ श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ॥ भक्त्या संपूजयेन्नित्यं यदीच्छेत्सर्वसंपदः ॥ ८ ॥ प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वेण चेतसा ॥ दशवारं जपेन्मन्त्रं ततः स्तोत्रमुदीरयेत् ॥ ॥ ९ ॥ युवां तु विश्वस्य विभू जगतः कारणं परम् ॥ इयं हि प्रकृतिः सूक्ष्मा माया शक्तिर्दुरत्यया ॥ १० ॥ तस्या अधीश्वरः साक्षात्त्वमेवपुरुषः परः ॥ त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ॥११॥ गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग्भवान् ॥ त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेन्द्रियाशया ॥ नामरूपे भगवति प्रत्ययस्त्वमपाश्रयः ॥ १२ ॥

भक्त्या श्रियं विष्णुं च नित्यं संपूज्य ॥८॥ भूमौ दण्डवत् प्रणम्य तन्मन्त्रं दशवारं जपित्वा प्रार्थयेत् ॥९॥ युवां सर्वजगतः कारणम् । इयं माया शक्तिः ॥ १० ॥ तस्याः साक्षात् त्वमीश्वरोऽसि ॥ ११ ॥ त्वं सर्वशरीरिणामात्मा नामरूपयोः प्रकाशकः आधारश्चासि ॥ १२ ॥

युवां त्रिलोकस्य वरदौ । अतो मम मनोरथं कुरुताम् ॥ १३ ॥ एवं स्तुत्वाऽऽचमनं दत्त्वा पुनरर्चयेत्॥ १४ ॥ ततो भक्त्या स्तोत्रेण स्तुत्वा यज्ञोच्छिष्टमवघ्राय पुनरर्चयेत् ॥ १५ ॥ परमभक्त्या पतिं च सेवयेत् पतिश्च स्वयं प्रेमयुक्तः सन् पत्न्या अनुकूलो भवेत् ॥ १६ ॥ पत्न्याः रजस्वलादिदोषे जाते भर्ता सर्वकर्माणि कुर्यात् । एकेनापि कृतमुभयोरपि फलं भवति ॥१७॥ इद विष्णोर्व्रतं कथंचन न छिन्द्यात् ।

यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ॥ तथा म उत्तमश्लोक सन्तु सत्या महाशिषः ॥१३॥ इत्यभिष्टूय वरदं श्री
निवासं श्रिया सह ॥ तन्निस्सार्योपहरणं दत्त्वाऽऽचमनमर्चयेत् ॥१४॥ ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा ॥
यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥१५॥ पतिं च परया भक्त्या महापुरुषचेतसा ॥ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः
स्वयं पतिः ॥ बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च ॥ १६ ॥ कृतमेकतरेणापि दम्पत्योरुभयोरपि ॥ पत्न्यां
कुर्यादनर्हायां पतिरेतत्समाहितः ॥ १७॥ विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात्कथंचन ॥ विप्रान्स्त्रियो वीरवतीः स्रग्गन्ध
बलिमण्डनैः ॥ अर्चेदहरहर्भक्त्या देवं नियममास्थितः ॥१८॥ उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ॥ अद्यादात्म
विशुद्ध्यर्थं सर्वकामर्द्धये तथा ॥१९॥ एतेन पूजाविधिना मासान्द्वादश हायनम् ॥ नीत्वाऽथोपचरेत्साध्वी कार्तिके
चरमेऽहनि ॥ २०॥ श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ॥ पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा ॥ पाकयज्ञ
विधानेन द्वादशैवाहुतीः पतिः* ॥२१॥ आशिषः शिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः ॥ प्रणम्य शिरसा भक्त्या भुञ्जीत
तदनुज्ञया ॥२२॥ आचार्यमग्रतः कृत्वा वाग्यतः सह बन्धुभिः ॥ दद्यात्पत्न्यै चरोः शेषं सुप्रजस्त्वं सुसौभगम् ॥२३॥

ततो विप्रान् सुवासिनीश्च स्रग्गन्धोपहारैर्नित्यमर्चयेत् ॥ १८ ॥ एवमुद्वास्य तन्निवेदितान्नमश्नीयात् ॥१९॥ एवं द्वादश मासान् कृत्वा कार्तिकान्तेऽमावास्यायामुपवसेत् ॥२०॥ श्वः प्रातः स्नात्वा पूर्ववद् विष्णुं संपूज्य पायसेन घृतमिश्रचरुणा यथाविधि द्वादशाहुतीर्जुहुयात् ॥२१॥ द्विजाशीर्वादं गृहीत्वा प्रणम्य ॥ २२ ॥ आचार्यमग्रतः कृत्वा बन्धुभिः सह भुञ्जीत । ततश्चरोः शेषं पत्न्यै दद्यात् ॥ २३ ॥

* देदीप्यमाने वह्नौ वै विशेषं जुहुयान्नरः ।' इत्यधिकः पाठः ॥

एवं कृते पुमानीप्सितार्थं लभते। स्त्री सुसौभाग्यं श्रियं सुप्रजाः यशश्च लभते ॥२४॥ कन्योत्तमं वरम् विधवा सद्गतिम्। मृतप्रजा जीवत्सुता भवति। दुर्भगा सुभगा भवेत् ॥ २५ ॥ कुरूपा सुरूपं लभते। यो देवपितृकर्मणि तदिदं पठेत् तस्य देवपित्रोरनन्ततृप्तिर्भवेत् ॥ २६ ॥ अग्निः

एतच्चरित्वा विधिवद्व्रतं विभोरभीप्सितार्थं लभते पुमानिह ॥ स्त्री त्वेतदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम् ॥ २४ ॥ कन्या च विन्देत समग्रलक्षणं वरं त्ववीरा हतकिल्बिषा गतिम् ॥ मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २५ ॥ विन्देद्विरूपा विरुजा विमुच्यते य आमयावीन्द्रियकल्पदेहम् ॥ एतत्पठन्नाभ्युदये च कर्मण्यनन्ततृप्तिः पितृदेवतानाम् ॥ २६ ॥ तुष्टाः प्रयच्छन्ति समस्तकामान्होमावसाने हुतभुक्श्रीर्हरिश्च ॥ राजन्महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते ॥ २७ ॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां वैयासिक्यां संहितायां षष्ठस्कन्धे पुंसवनव्रतकथनं नामैकोनविंशोऽध्यायः ॥१९॥

समाप्तोऽयं षष्ठस्कन्धः ॥ ६ ॥

श्रीर्हरिश्च सर्वान् कामान् ददाति। हे राजन्! मरुतां जन्म दितेर्व्रतं च ते कथितम् ॥ २७ ॥ इति श्रीभागवते महा० षष्ठस्कन्धे चूर्णिकायामेकोनविंशोऽध्यायः ॥ १९॥ अनुमानेन चूर्णिकाग्रन्थसंख्या ६४०। अस्मिन् स्कन्धे वृत्तानुष्टुब्गद्यश्लोकग्रन्थसंख्या—८४६ ॥

॥ समाप्तोऽयं षष्ठस्कन्धः ॥

## सप्तमस्कंधः



नारद
धर्मः
दैत्य
हिरण्यकशिपुः
ब्रह्मा
हिरण्यकशिपुः
हि॰ क॰
नारदः
हिरण्यकशिपु
प्रह्लाद
गुरु
दैत्य
हिरण्यकशिपु
प्रह्लादः
लक्ष्मी

श्रीगणेशाय नमः ॥ ऊतिः पञ्चदशाध्यायैः सप्तमे वर्ण्यतेऽधुना ॥ ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी ॥ १ ॥ तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते ॥ विष्णुभक्ते विरोधस्तु विप्रशापज ईर्यते ॥२॥ राजोवाच ॥ हे ब्रह्मन् ! भगवान् भूतानां प्रियः समश्च सन् देवेन्द्रस्यार्थे दैत्यान् कथमवधीत् ॥१॥ निर्गुणस्येश्वरस्य देवैः प्रयोजनं न, दैत्यैः सह द्वेषोऽपि न ॥ २ ॥ एवं सति कथं दैत्यनाशः । अत एव भगवद्गुणान् प्रति महान् संशयो जातः । तं छेत्तुमर्हसि ॥३॥ श्रीशुक उवाच ॥ हे राजन् ! त्वया हरेश्चरितं साधु पृष्टम् ॥४॥ यत्र पुण्यं प्रह्लादस्य माहात्म्यं

श्रीगणेशाय नमः ॥ राजोवाच ॥ समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम् ॥ इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ १ ॥ नह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ॥ नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥ इति नः सुमहाभाग नारायणगुणान् प्रति ॥ संशयः सुमहान् जातस्तद्भवाञ्छेत्तुमर्हति ॥ ३ ॥ श्रीशुक उवाच ॥ साधु पृष्टं महाराज हरेश्चरितमद्भुतम् ॥ यत्र भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥ गीयते परमं पुण्यमृषिभिर्नारदादिभिः ॥ नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ५ ॥ निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः ॥ स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ न तेषां युगपद्राजन् ह्रास उल्लास एव वा ॥७॥ जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान् ॥ तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत् ॥८॥ ज्योतिरादिरिवाभाति संघातान्न विविच्यते ॥ विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥

नारदादिभिः प्रगीयते अतः कृष्णं मुनिं नत्वा हरेः कथां कथयिष्ये ॥५॥ भगवान् निर्गुणोऽपि स्वमायागुणमाविश्य बाध्यबाधकतां प्राप्तः ॥६॥ हे नृप ! सत्त्वं रजस्तम इति प्रकृतेर्गुणाः । तेषां युगपद् ह्रासो वृद्धिश्च न ॥७॥ सत्त्वोत्कर्षकाले देवादीनां वृद्धिः । रजसः उत्कर्षे दैत्यानाम् । तमसः उत्कर्षे यक्षरक्षसाम् । भगवान् तत्तत्कालानुकूलो भवति ॥ ८ ॥ यथा काष्ठादिषु ज्योतिः पात्रेषु जलं तथा भगवान् नानारूपो भाति ॥९॥

१ सुराविवेहात् । २ पृथक् क्रियते ।

यदा भगवान् स्रष्टुमिच्छति तदा रजो वर्धयति । एवं क्रीडितुं सत्त्वं संहर्तुं तमश्च ॥ १० ॥ हे राजन् ! अजः प्रधानपुरुषसहकारित्वेन कालं स्वयमेव सृजति । तेन च सुरानीकं वर्धयति असुरादींश्च हिनस्ति ॥११॥ हे राजन् ! एतद्विषये महाक्रतौ पृच्छते युधिष्ठिराय पूर्वं नारदेनेतिहासः उदाहृतः । तं शृणु ॥ १२ ॥ यज्ञे शिशुपालतेजः कृष्णे प्रविष्टं दृष्ट्वा सर्वेषां शृण्वतां सतां युधिष्ठिरो नारदं पप्रच्छ ॥ १३ ॥ १४ ॥

यदा सिसृक्षुः पुरं[१] आत्मनः परो रजः सृजत्येव पृथक् स्वमायया ॥ सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥ कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत् ॥ य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यजः ॥ तत्प्रत्यनीकानसुरान् सुरप्रियो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥ ११ ॥ अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ॥ प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे ॥१२॥ दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ॥ वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १३ ॥ तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ ॥ पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १४ ॥ युधिष्ठिर उवाच ॥ अहो अत्यद्भुतं ह्येतद्दुर्लभैकान्तिनामपि ॥ वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १५ ॥ एतद्वेदितुमिच्छामः सर्व एव वयं मुने ॥ भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥ १६ ॥ दमघोषसुतः पाप आरभ्य कलभाषणात् ॥ संप्रत्यमर्षी गोविन्दे दन्तवक्रश्च दुर्मतिः ॥१७॥ शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम् ॥ श्वित्रो[२] न जातो जिह्वायां नान्धं विविशतुस्तमः ॥ १८ ॥ कथं तस्मिन् भगवति दुरवग्राह्यधामनि ॥ पश्यतां सर्वलोकानां लयमीयतुरञ्जसा ॥ १९॥ एतद् भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ॥ ब्रूह्येतदद्भुततमं भगवंस्तत्र कारणम् ॥ २० ॥

युधिष्ठिर उवाच ॥ अहो ! भक्तानां दुर्लभा द्विषतोऽस्य कृष्णे प्राप्तिः कथम् ॥ १५ ॥ एतत् ज्ञातुमिच्छामः । द्विजैर्भगवन्निन्दया वेनो नरके पातितः ॥ १६ ॥ शिशुपालस्तु बाल्यादारभ्य कृष्णद्वेष्टा तथा च दन्तवक्रः ॥ १७ ॥ असकृद्विष्णुं शपन्तौ तौ नरके न विविशतुः ॥ १८ ॥ एवं सति कथं सायुज्यं प्राप्तौ ॥ १९ ॥ एतद्विषये मे मनो भ्राम्यति । तत्र कारणं ब्रूहि ॥ २० ॥

१ शरीराणि । २ श्वेतकुष्ठम् ।

श्रीशुक उवाच ॥ नारदो राज्ञो वचः श्रुत्वा सर्वेषां शृण्वतां जगाद ॥ २१ ॥ नारद उवाच ॥ निन्दास्तुत्यादिज्ञानार्थं प्रधानपुरुषयोः कलेवरमज्ञानेन रचितम् ॥२२॥ देहाभिमानेन प्राणिनो यथा ममाहमिति वैषम्यं तत्कृतं हिंसादिकं च भवति ॥ २३ ॥ तथेश्वरस्य तु वैषम्यं नास्ति ॥ २४ ॥ अतो वैरेण भयेन स्नेहात् कामेन वा हरौ मनो युञ्ज्यात् ॥ २५ ॥ यथा मर्त्यो वैरानुबन्धेन तन्मयतां प्राप्नोति तथा भक्तियोगेन न ॥ २६ ॥ यथा कीटो भ्रमरेण रुद्धः सन् तं स्मरन् तद्रूपं प्राप्नोति ॥ २७ ॥ तथा पुमान् भगवति मनो युञ्जन् तत्स्वरूपतां

श्रीशुक उवाच ॥ राज्ञस्तद्वच आकर्ण्य नारदो भगवानृषिः ॥ तुष्टः प्राह तमाभाष्य शृण्वन्त्यास्तत्सदः कथाः ॥२१॥ नारद उवाच ॥ निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् ॥ प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥ २२ ॥ हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा ॥ वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥ २३ ॥ यन्निबद्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ॥ तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ॥ परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥ २४ ॥ तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा ॥ स्नेहात् कामेन वा युञ्ज्यात् कथंचिन्नेक्षते पृथक् ॥ २५ ॥ यथा वैरानुबंधेन मर्त्यस्तन्मयतामियात् ॥ न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥२६॥ कीटः पेशस्कृता रुद्धः कुडयायां तमनुस्मरन् ॥ संरम्भभययोगेन विन्दते तत्स्वरूपताम् ॥२७॥ एवं कृष्णे भगवति मायामनुज ईश्वरे ॥ वैरेण पूतपाप्मानस्तमीयुरनुचिन्तया ॥ २८ ॥ कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ॥ आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥२९॥ गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ॥ सम्बन्धाद् वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥३०॥ कतमोऽपि न वेनः स्यात् पञ्चानां पुरुषं प्रति ॥ तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३१ ॥ मातृष्वस्रेयो वश्चैद्यो दन्तवक्त्रश्च पाण्डव ॥ पार्षदप्रवरौ विष्णोर्विप्रशापात् पदाच्च्युतौ ॥ ३२ ॥

प्राप्नोति ॥२८॥ द्वेषादिभिः परमेश्वरे मनः स्थापयित्वा बहवस्तद्गतिं प्राप्ताः । ते के—गोप्यः कामात् । कंसो भयात् । द्वेषाच्चैद्यादयो नृपाः संबन्धात् यादवाः । स्नेहाद् यूयम् । भक्त्या वयम् ॥ २९ ॥ ३० ॥ एषु मध्ये वेनः कतमोऽपि न । तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥३१॥शिशुपालदन्तवक्त्रौ तु विष्णुपार्षदौ विप्रशापेन वैकुण्ठात् पतितौ ॥ ३२ ॥

१ संबोध्य । २ न्यक्कारस्तिरस्कारः । ३ अद्वितीयत्वात् । ४ पूर्वश्लोकोक्तकामादिपञ्चमार्गगामिनाम् ।

युधिष्ठिर उवाच ॥ मुने ! हरिदासयोः कीदृशः कस्य शापो जातः ॥३३॥ एतन्मे कथयितुं त्वमर्हसि ॥ ३४ ॥ नारद उवाच ॥ एकदा सनकादयो यदृच्छया वैकुण्ठं जग्मुः ॥३५॥ तदा द्वाःस्थौ षट्पञ्चहायनान् नग्नान् शिशून् मत्वा प्रत्यषेधताम् ॥३६॥ तदा ते क्रुद्धाः सन्त ऊचुः। हे द्वाःस्थौ! युवामत्र वासं कर्तुं नार्हथः। अतः आसुरीं योनिं यातम् इति शापं ददुः ॥३७॥ एवं शप्तौ तत्स्थानात् पतन्तौ कृपालुभिस्तैःपुनः

अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३३ ॥ युधिष्ठिर उवाच ॥ कीदृशः कस्य वा शापो हरिदासाभिमर्शनः ॥ अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३३ ॥

युधिष्ठिर उवाच ॥ कीदृशः कस्य वा शापो हरिदासाभिमर्शनः ॥ अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३३ ॥ देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ॥ देहसंबन्धसंबद्धमेतदाख्यातुमर्हसि ॥ ३४ ॥ नारद उवाच ॥ एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ॥ सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम् ॥ ३५ ॥ पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ॥ दिग्वाससः शिशून्मत्वा द्वाःस्थौ तान् प्रत्यषेधताम् ॥ ३६ ॥ अशपन् कुपिता एवं युवां वासं न चार्हथः ॥ रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ॥ पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३७ ॥ एवं शप्तौ स्वभवनात् पतन्तौ तैः कृपालुभिः ॥ प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥ ३८ ॥ जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ ॥ हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ३९ ॥ हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ॥ हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४० ॥ हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम् ॥ जिघांसुरकरोन्नानायातना मृत्युहेतवे ॥ ४१ ॥ सर्वभूतात्मभूतं तं प्रशान्तं समदर्शनम् ॥ भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः ॥ ४२ ॥ ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवस्सुतौ ॥ रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ ॥ ४३ ॥ तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ॥ रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात् प्रभो ॥ ४४ ॥

प्रोक्तौ युवां त्रिभिर्जन्मभिः स्वपदं प्राप्नुतम् ॥३८॥ तौ पूर्वं दितेः पुत्रौ हिरण्याक्षहिरण्यकशिपू जातौ ॥ ३९ ॥ नृसिंहरूपेण ज्येष्ठो हतः, वराहरूपेण हिरण्याक्षो हतः ॥४०॥ हिरण्यकशिपुर्भगवत्प्रियं प्रह्लादं जिघांसुर्मृत्युहेतवे नाना यातनाः कृत्वा ॥४१॥ शस्त्रास्त्रप्रहारैर्हन्तुं नाशक्नोत् ॥४२॥ ततस्तौ विश्रवसः केशिन्यां रावणकुम्भकर्णौ जातौ ॥४३॥ तौ रामो जघान। हे धर्म ! तस्य वीर्यं मार्कण्डेयमुखात् श्रोष्यसि ॥४४॥

१ जन्म। २ अर्भाभाः अर्भकसदृशाः।

तावेव शिशुपालदन्तवक्त्रौ जातौ। अधुना कृष्णचक्रेण हतौ ॥४५॥ तौ शापमुक्तौ भूत्वा पुनः पार्षदौ जातौ ॥४६॥ युधिष्ठिर उवाच। हे भगवन्! विष्णुभक्ते पुत्रे द्वेषः कथमासीत्। प्रह्लादस्य हरिभक्तिः कथमासीत्। तच्चरित्रं ब्रूहि॥४७॥ इति श्रीभा०म०चू०सप्तम० प्रथमोऽध्यायः॥१॥

द्वितीये विष्णुरोषेण लोकं विप्लाव्य दानवैः ॥ तद्धतभ्रातृपुत्रादीनितिहासैरसान्त्वयत् ॥ १ ॥ नारद उवाच ॥ हे राजन्! वराहरूपेण

तावेव क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ॥ अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥४५॥ वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम् ॥ नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥४६॥ युधिष्ठिर उवाच ॥ विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि ॥ ब्रूहि मे भगवन् येन प्रह्लादस्याच्युतात्मता ॥४७॥ इति श्रीभागवते म० सप्तमस्कन्धे जयविजययोः शापवर्णनं नाम प्रथमोऽध्यायः ॥१॥ नारद उवाच ॥ भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ॥ हिरण्यकशिपू राजन् पर्यतप्यद्रुषा शुचा ॥ १ ॥ आह चेदं रुषा घूर्णः संदष्टदशनच्छदः ॥ कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम् ॥२॥ करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ॥ शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३ ॥ भो भो दानवदैतेया द्विमूर्धन् त्र्यक्ष शम्बर ॥ शतबाहो हयग्रीव नमुचे पाक इल्वल ॥ ४ ॥ विप्रचित्ते मम वचः पुलोमन्शकुनादयः ॥ शृणुतानन्तरं सर्वे क्रियतामाशु मा चिरम् ॥५॥ सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् ॥ पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥६॥ तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ॥ भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥७॥ मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ॥ रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ॥ ८ ॥

हरिणा हिरण्याक्षे हते सति क्रुद्धः ॥ १ ॥ संदष्टदशनच्छदः ॥२॥ करालदंष्ट्रो हिरण्यकशिपुः सदसि शूलं धृत्वा दानवान् जगाद ॥ ३ ॥ भो दानवदैतेयाः! हे हयग्रीव! हे नमुचे! ॥४॥ हे विप्रचित्ते! मद्वचः शृणुत। तथैव शीघ्रं क्रियताम् ॥५॥ मत्सपत्नैर्देवैर्हरिणा मे भ्राता नाशितः ॥६॥ अतो मायावराहस्य भजतामनुकूलस्य हरेः ॥७॥ मच्छूलभिन्नग्रीवस्य तस्य रुधिरेण मे भ्रातरं तर्पयिष्ये ॥ ८ ॥

१ भजनैर्निमित्तभूतैः। २ शुद्धतेजोमयस्य।

हरौ नष्टे सर्वे देवाः शुष्यन्ति मूलच्छेदनेन शाखा इव ॥ ९ ॥ यावत् तर्पयिष्ये तावद् यूयं भुवं यात । तत्र तपोव्रतयज्ञादियुक्तान् द्विजान् घातयत ॥१०॥ एवं कृते द्विजक्रियामूलो विष्णुर्नश्येत् ॥११॥ तस्माद् यत्र द्विजाः गावो वर्णाश्रमाः क्रियाः तं तं देशं यात दहत ॥ १२ ॥ इति भर्तृगदितं श्रुत्वा ते दैत्यास्तथा प्रजानाशं चक्रुः ॥ १३ ॥ पुरग्रामव्रजादीन् ददहुः ॥१४॥ केचित् कुद्दालादिभिः सेतुप्रकारादीन् बिभिदुः।

तस्मिन् कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ ॥ विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥ ९ ॥ तावद्यात भुवं यूयं विप्रक्षत्रसमेधिताम् ॥ सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः ॥ १० ॥ विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ॥ देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥ ११ ॥ यत्र यत्र द्विजा गावो वेदा वर्णाश्रमा क्रियाः ॥ तं तं जनपदं यात संदीपयत वृश्चत ॥१२॥ इति ते भर्तृनिर्देशमादाय शिरसाऽऽदृताः ॥ तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥१३॥ पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेटखर्वटघोषांश्च ददहुः पत्तनानि च ॥१४॥ केचित् खनित्रैर्बिभिदुः सेतुप्रकारगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान् केचित् परशुपाणयः ॥ प्रादहञ्छरणान्यन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥ एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः ॥ दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥१६॥ हिरण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः ॥ कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥१७॥ शकुनिं शम्बरं धृष्टं भूतसन्तापनं वृकम् ॥ कालनाभं महानाभं हरिश्मश्रुमथोत्कचम् ॥ १८ ॥ तन्मातरं रुषाभानुं दितिं च जननीं गिरा ॥ श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वरः ॥ १९ ॥ हिरण्यकशिपुरुवाच ॥ अम्बाम्ब हे वधूः पुत्रा वीरं माऽर्हथ शोचितुम् ॥ रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥

केचित् परशुना वृक्षान् चिच्छिदुः ॥ १५ ॥ एवं दैत्यैरुपद्रुते लोके सति देवाः दिवं त्यक्त्वा गुप्ताः सन्तो भुवि चेरुः ॥१६॥ ततो हिरण्यकशिपुर्मृतभ्रातुरौर्ध्वदैहिकीं क्रियां कृत्वा ॥१७॥ शकुनिशम्बरवृककालनाभादीन् तत्पुत्रान् ॥ १८॥ तत्पत्नीं रुषाभानुं दितिं च सान्त्वयन् जगाद ॥ १९॥ हिरण्यकशिपुरुवाच ॥ हे अम्ब ! हे वधु ! हे पुत्रा ! वीरं मा शोचत। शूराणां रणे वधः श्रेष्ठः ॥ २० ॥



१ कपटे। २ कृषीवलानां वासस्थानम्। ३ गिरिद्रोण्याश्रयो ग्रामः। ४ आभीराणां वासस्थानम्।५ आजीव्या आम्रादयः।

इह भूतानां संगमः प्रपायामिवास्ति ॥ २१ ॥ आत्माऽव्ययो नित्यः । देहसंबन्धस्तु मायाकृतः ॥२२॥ यथा भ्राम्यमाणेन चक्षुषा भूश्चलतीव दृश्यते ॥ २३ ॥ तथा गुणैर्मनसि भ्राम्यमाणे पुरुषस्तत्साम्यतां याति ॥ २४ ॥ जीवस्य देहाभिमानेनात्मनो विपर्ययो भवति ॥ २५ ॥ जीवः कर्मणा संसृतिं प्राप्नोति । तस्मात् कर्मणा कृतं सर्वं मिथ्या इति ज्ञात्वा शोकं मा कुरुत ॥२६॥ अत्र यमस्य प्रेतबन्धूनां संवादरूप-

भूतानामिह संवासः प्रपायामिव सुव्रते ॥ दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः ॥ २१ ॥ नित्य आत्माऽव्ययः शुद्धः सर्वगः सर्ववित् परः ॥ धत्तेऽसावात्मनो लिङ्गं मायया विसृजन् गुणान् ॥ २२ ॥ यथाऽम्भसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः ॥२३॥ एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ॥ याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ॥२४॥ एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना ॥ एष प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः ॥२५॥ संभवश्च विनाशश्च शोकश्च विविधः स्मृतः ॥ अविवेकश्च चिन्ता च विवेकास्मृतिरेव च ॥२६॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ यमस्य प्रेतबन्धूनां संवादं तं निबोधत ॥२७॥ उशीनरेष्वभूद्राजा सुयज्ञ इति विश्रुतः ॥ सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥२८॥ विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम् ॥ शरनिर्भिन्नहृदयं शयानमसृग्आविलम् ॥२९॥ प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम् ॥ रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे ॥३०॥ उशीनरेन्द्रं विधिना तथा कृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः ॥ हताः स्म नाथेति करैरुरो भृशं घ्नन्त्यो मुहुस्तत्पदयोरुपापतन् ॥३१॥ रुदन्त्य उच्चैर्दयिताङ्घ्रिपङ्कजं सिञ्चन्त्य अस्रैः कुचकुङ्कुमारुणैः ॥ विस्रस्तकेशाभरणाः शुचं नृणां सृजन्त्य आक्रन्दनया विलेपिरे ॥३२॥

मितिहासं शृणुत ॥२७॥ उशीनरदेशेषु सुयज्ञो राजा बभूव । स शत्रुभिर्युद्धे हतः । ज्ञातयस्तमावृत्य स्थिताः ॥ २८ ॥ तदा शरनिर्भिन्नहृदयं विशीर्णकवचं शयानम् ॥ २९ ॥ छिन्नायुधभुजं रजसा व्याप्तमुखम् ॥ ३० ॥ एवं पतिं दृष्ट्वा तस्य महिष्यो दुःखिताः हस्तैरुरो घ्नन्त्यो हा नाथ नाथेति वदन्त्यस्तत्पादयोः पेतुः ॥ ३१ ॥ विस्रस्तकेशाभरणाः अश्रुणा दयिताङ्घ्रिपङ्कजं सिञ्चन्त्यः उच्चै रुदन्त्यो विलेपिरे ॥३२॥

१ वियोजितानाम् । २ देहाभिमानः ।

अहो ! निर्दयेन ब्रह्मणा त्वमीदृशीं दशां गमितः ॥३३॥ हे महीपते ! त्वां विना वयं कथं जीवेम । हे वीर ! यत्र त्वं यास्यसि तत्रानुगमने ऽस्माकमाज्ञां देहि ॥ ३४ ॥ एवं मृतं पतिं प्रगृह्य विलपन्तीनां तस्य दाहार्थं नयनमनिच्छन्तीनां तासां सूर्योऽस्तं गतः ॥ ३५ ॥ तदा यमस्तासां विलापं श्रुत्वा बालकरूपेण तत्रागत्य तान् बोधयामास ॥ ३६ ॥ यम उवाच ॥ अहो ! वयसाऽधिकानां मोहं पश्यत । स्वयं मृत्युधर्मा अपि यस्मादागमनं तत्र गतं वृथा शोचन्ति ॥३७॥ अहो वयं युष्मत्तो धन्याः । बाल्ये पितृभ्यां त्यक्ता अपि न चिन्तयामः । कुतः ।

अहो विधात्राऽकरुणेन नः प्रभो भवान् प्रणीतो दृगगोचरां दशाम् ॥ उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः ॥ ३३ ॥ त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन ते ॥ तत्रानुयानं तव वीरपादयोः शुश्रूषतीनां दिश यत्र यास्यसि ॥ ३४ ॥ एवं विलपतीनां वै परिगृह्य मृतं पतिम् ॥ अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्तत ॥ ३५ ॥ तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितम् ॥ आह तान् बालको भूत्वा यमः स्वयमुपागतः ॥ ३६ ॥ यम उवाच ॥ अहो अमीषां वयसाऽधिकानां विपश्यतां लोकविधिं विमोहः ॥ यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचन्त्यपार्थम् ॥३७॥ अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः ॥ अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते च यः ॥ तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसंग्रहे प्रभुः ॥ ३९ ॥ पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति ॥ जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति कालेन भवन्ति सर्वशः ॥ न तत्र हात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥

यो गर्भे रक्षति स एव सर्वत्र रक्षिता ॥ ३८ ॥ हे अबलाः ! योऽव्ययः इच्छया सृजति रक्षति संहरति तस्येयं क्रीडा ॥ ३९ ॥ यथा पथि च्युतं दैवरक्षितं तिष्ठति गृहे स्थितं दैवविहतं नश्यति । एवमीश्वरेण रक्षितोऽनाथोऽपि वने जीवति । तेनारक्षितो गृहे गुप्तोऽपि न जीवति ॥ ४० ॥ कालेन भूतानि कर्मभिर्भवन्ति नश्यन्ति च । आत्मा देहस्थितोऽपि प्रकृतेर्गुणैर्न बध्यते ॥ ४१ ॥

इदं शरीरं पुरुषस्य मोहादुत्पन्नं यथा जले जातो बुद्बुदः ॥ ४२ ॥ यथा नभः सर्वगतं न सज्जते तथाऽऽत्मा गुणाश्रयो न सज्जते ॥ ४३ ॥ हे मूढाः ! यमनुशोचथ सोऽयं सुयज्ञः शेते किम् ॥ अयं श्रोता वक्ता च न, यः श्रोता वक्ता च स कर्हिचिन्न दृश्यते ॥ ४४ ॥ स एवात्मा देहाद् भिन्नः । स तु प्राणदेहयोरन्यः ॥ ४५ ॥ विभुर्भूतेन्द्रियमनोयुक्तानुच्चनीचदेहान् सृजति नाशयति ॥ ४६ ॥ यावत् लिङ्गशरीरान्वित-

इदं शरीरं पुरुषस्य मोहजं यथा पृथग् भौतिकमीयते गृहम् ॥ यथौदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥४२॥ यथाऽनलो दारुषु भिन्न ईयते यथाऽनिलो देहगतः पृथक् स्थितः॥ यथा नभः सर्वगतं न सज्जते तथा पुमान् सर्वगुणाश्रयः परः ॥४३॥ सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ॥यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित् ॥४४॥ यः श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ॥ यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः॥४५॥भूतेन्द्रियमनोलिङ्गान्देहानुच्चावचान् विभुः ॥ भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥४६॥ यावल्लिङ्गान्वितो ह्यात्मा तावत्कर्मनिबन्धनम् ॥ ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥४७॥ वितथोऽभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ॥ यथा मनोरथः स्वाप्नः सर्वमैन्द्रियकं मृषा॥४८॥अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः॥ नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥४९॥लुब्धको विपिने कश्चित् पक्षिणां निर्मितोऽन्तकः॥वितत्य जालं विदधे तत्र तत्र प्रलोभयन् ॥५०॥कुलिङ्गमिथुनं तत्र विचरत् समदृश्यत ॥ तयोः कुलिंगी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥

स्तावत् कर्मबन्धनं भवति ततः क्लेशोऽनुवर्तते ॥ ४७ ॥ स्वप्नमनोरथ इव सुखदुःखादिषु परमार्थाभिनिवेशो मिथ्या ॥ ४८ ॥ तस्मात् ज्ञानिनो नित्यमात्मानमनित्यं देहं वा न शोचन्ति । अतः शोकं मा कुरुत ॥ ४९ ॥ अत्रेतिहासं शृणुत । पुरा वने कश्चित् लुब्धकः कणादिभिः प्रलोभयन् जालं विस्तार्य पक्षिणो धृतवान् ॥ ५० ॥ एवं कृते सति तत्र विचरत् कुलिङ्गमिथुनं दृष्ट्वा तयोर्मध्ये कुलिङ्गीं प्रलोभ्य जालसूत्रेण दधार ॥ ५१ ॥

॥५३॥ अहो देवोऽकरुणः । दीनया स्त्रिया किं करिष्यति ॥५३॥ तां बद्धां दृष्ट्वा कुलिङ्गो मोचितुमसमर्थो वृक्षमाश्रित्य स्नेहाद् विलापं चकार ॥५२॥ अहो देवोऽकरुणः । दीनया स्त्रिया किं करिष्यति ॥५३॥ पक्षहीनान् मातृहीनान् बालान् कथं बिभर्मि ॥५५॥ एवं विलपन्तं कुलिङ्गं स्त्रीविहीनजीवितेन मे किं प्रयोजनम् । अतो मामपि नय ॥ ५४ ॥ पक्षहीनान् मातृहीनान् बालान् कथं बिभर्मि ॥५५॥ एवं विलपन्तं कुलिङ्गं लुब्धको गुप्तः सन् शरेण विव्याथ ॥ ५६ ॥ एवं यूयं स्वमृत्युमपश्यन्त्यः शोचन्त्यो वर्षशतैरपि पतिं न प्राप्स्यथ ॥ ५७ ॥ हिरण्यकशिपु-

स्नेहादकल्पः साऽसज्जत शिचस्तन्त्यां महिषी कालयन्त्रिता ॥ कुलिगस्तां तथाऽऽपन्नां निरीक्ष्य भृशदुःखितः ॥ स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत् ॥५२॥ अहो अकरुणो देवः स्त्रिया करुणया विभुः ॥ कृपणं माऽनुशोचन्त्या दीनया किं करिष्यति ॥५३॥ कामं नयतु मां देवः किमर्धेनात्मनो हि मे ॥ दीनेन जीवता दुःखमनेन विधुरायुषा ॥ ५४ ॥ कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ॥ मन्दभाग्याः प्रतीक्ष्यन्ते नीडे मे मातरं प्रजाः* ॥५५॥ एवं कुलिङ्गं विलपन्तमारात प्रियावियोगातुरमश्रुकण्ठम् ॥ स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः ॥ ५६ ॥ एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः ॥ नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि ॥५७॥ हिरण्यकशिपुरुवाच ॥ बाल एवं प्रवदति सर्वे विस्मितचेतसः ॥ ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥ यम एतदुपाख्याय तत्रैवान्तरधीयत ॥ ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत्साम्परायिकम् ॥५९॥ ततः शोचत मा यूयं परं चात्मानमेव च ॥ क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा ॥ स्वपराभिनिवेशेन विनाऽज्ञानेन देहिनाम्* ॥ ६० ॥ नारद उवाच ॥ इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ॥ पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे कुलिंगकथनेन दितिशोकापनयनं नाम द्वितीयोऽध्यायः ॥ २ ॥

रुवाच ॥ एवं बाले वदति सति स्त्र्यादयः सर्वं मृषा मेनिरे ॥ ५८ ॥ इत्युक्त्वा यमोऽन्तरधीयत । ततः सुयज्ञस्य ज्ञातयः ऊर्ध्वदेहक्रियां चक्रुः ॥ ५९ ॥ तस्माद् यूयं शोकं मा कुरुत ॥ ६० ॥ नारद उवाच । हे राजन् ! सस्नुषा दितिर्दैत्यपतेर्वाक्यं श्रुत्वा पुत्रशोकं त्यक्त्वा तत्त्वे चित्तं दधार ॥ ६१ ॥ इति श्रीभागवते चूर्णिकायां सप्तमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥



* ''महादुःखेन जीवामि गाढस्तोमे विनाशितः ।'' इत्यधिकः पाठः । * ''ज्ञानेनात्मानमीहन्तेज्ञानिनरतरवर्दाशनः ।'' इत्यपि क्वचित् ।

तृतीये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः । आगत्य विस्मितस्तेन संस्तुतश्च वरानदात् ॥ नारद उवाच ॥ हे युधिष्ठिर ! हिरण्यकशिपु-
रात्मानमजेयमजरामरं शत्रुहीनं कर्तुमिच्छन् ॥ १ ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठेनावनिं श्रितः सन् मन्दरद्रोण्यां दारुणं तपस्तेपे ॥ २ ॥
तदा देवाः स्वस्थानानि भेजिरे ॥ ३ ॥ बहुकालकृततपसा तस्य मूर्ध्नः सधूमोऽग्निः समुत्थितः । तेन त्रैलोक्यं तप्तम् ॥ ४ ॥ समुद्राश्चुक्षुभुः ।
द्वीपादिभिः सह भूश्चचाल । दिशो जज्वलुः । ग्रहतारा निपेतुः ॥ ५ ॥ तेनाग्निना तप्ताः देवाः दिवं त्यक्त्वा ब्रह्मलोकं गत्वा धात्रे विज्ञाप-

नारद उवाच ॥ हिरण्यकशिपू राजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥ १ ॥ स तेपे मन्दर-
द्रोण्यां तपः परमदारुणम् ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः ॥ २॥ जटादीधितिभी रेजे संवर्तार्क इवां-
शुभिः ॥ तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥३॥ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः॥ तिर्यगूर्ध्व-
मधोलोकानतपद्विष्वगीरितः ॥४॥ चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः ॥ निपेतुः सग्रहास्तारा जज्वलुश्च दिशो
दश ॥ ५ ॥ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ॥ धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ ६ ॥ दैत्येन्द्रतपसा
तप्ता दिवि स्थातुं न शक्नुमः ॥ तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ॥ लोका न यावन्नङ्क्ष्यन्ति बलिहा-
रास्तवाभिभूः ॥ ७ ॥ तस्यायं किल संकल्पश्चरतो दुश्चरं तपः ॥ श्रूयतां किं न विदितस्तवाथापि निवेदितः ॥ ८ ॥
सृष्ट्वा चराचरमिदं तपोयोगसमाधिना ॥ अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ॥ ९ ॥ तदहं वर्धमानेन
तपोयोगसमाधिना ॥ कालात्मनोश्च नित्यत्वात्साधयिष्ये तथाऽऽत्मनः ॥ १० ॥ अन्यथेदं विधास्येऽहमयथापूर्व-
मोजसा ॥ किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिः ॥ ११ ॥

यामासुः ॥ ६ ॥ हे देवदेव ! दैत्येन्द्रतपसा तप्ताः वयं दिवि स्थातुं न समर्थाः । हे भूमन् ! लोकाः यावन्न नङ्क्ष्यन्ति तावत् तस्योपशमं
कुरु ॥ ७ ॥ हे ब्रह्मन् ! भवता विदितं तथाऽपि निवेदयामः एवं तस्य संकल्पोऽस्ति ॥ ८ ॥ यथा ब्रह्मा तपोयोगसमाधिना विश्वं सृष्ट्वा
सत्यलोकमधितिष्ठति ॥ ९ ॥ तथाऽहमपि तपोयोगादिना साधयिष्ये ॥ १० ॥ इदं विश्वं सुरासुरादिव्यत्ययेन विधास्यामि ॥ ११ ॥

एवं त्वत्पदग्रहणे तस्य संकल्पं शुश्रुम । अतो यद् योग्यं तद् विचारय ॥१२॥ हे ब्रह्मन् ! तवासनं तु द्विजगवां सुखाय वर्तते । अतस्तदुपशमं कुरु ॥ १३ ॥ एवं देवैर्विज्ञापितो ब्रह्मा भृग्वादिभिः सह तस्याश्रमं ययौ ॥१४॥ तत्र वल्मीकतृणकीचकैर्गुप्तं प्रथमं न ददर्श। पश्चात् पिपीलिकादिभिर्भक्षितमेदस्त्वङ्मांसशोणितं तं दैत्यं कथंचिदालक्ष्य ॥१५॥ विस्मितः सन् प्रहस्य जगाद ॥१६॥ ब्रह्मोवाच ॥ हे काश्यप ! उत्तिष्ठोत्तिष्ठ।



इति शुश्रुम निर्बन्धं तपः परममास्थितः ॥ विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ॥ १२ ॥ तवासनं द्विजगवां पारमेष्ठ्यं जगत्पते ॥ भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १३ ॥ इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ॥ परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १४ ॥ न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ॥ पिपीलिकाभिराचीर्णमेदस्त्वङ्मांसशोणितम् ॥ १५ ॥ तपन्तं तपसा लोकान् यथाऽभ्रापिहितं रविम् ॥ विलक्ष्य विस्मितः प्राह प्रहसन् हंसवाहनः ॥ १६ ॥ ब्रह्मोवाच ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते तपस्सिद्धोऽसि काश्यप ॥ वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥१७॥ अद्राक्षमहमेतत्ते हृत्सारं महदद्भुतम् ॥ दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥१८॥ नैतत् पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे ॥ निरम्बुर्धारयेत् प्राणान् को वै दिव्यसमाः शतम् ॥ १९ ॥ व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम् ॥ तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ॥ २० ॥ ततस्त आशिषः सर्वा ददाम्यसुरपुंगव ॥ मर्त्यस्य ते ह्यमर्त्यस्य दर्शनं नाफलं मम ॥ २१ ॥ नारद उवाच ॥ इत्युक्त्वाऽऽदिभवो देवो भक्षिताङ्गं पिपीलिकैः ॥ कमण्डलुजलेनौक्षद्दिव्येनामोघराधसा ॥ २२ ॥



त्वं तपसा सिद्धोऽसि । अत ईप्सितो वरो व्रियताम् ॥ १७ ॥ मक्षिकादिभिर्भक्षितदेहस्य ते प्राणाः अस्थिषु शेरते । एवं ते धैर्यं मया दृष्टम् ॥ ॥१८॥ एवम् ऋषयः पूर्वं न चक्रुः । अपरे च न करिष्यन्ति । दिव्यशतवर्षं जलं विना प्राणान् को धारयेत् ॥१९॥ हे दितिनन्दन ! तपोनिष्ठेन त्वया जितोऽहम् ॥२०॥ यद्दर्शनं ते निष्फलं न । अतो वरं वृणीष्व ॥२१॥ नारद उवाच ॥ एवमुक्त्वा ब्रह्मा कमण्डलुजलेन तं प्रोक्षितवान् ॥२२॥

ततः सर्वावयवसंपन्नो युवा तप्तहेमाभो वल्मीकात् समुत्थितः सन् ॥२३॥ खे स्थितं ब्रह्माणं दृष्ट्वा शिरसा भूमौ प्रणम्य ॥२४॥ उत्थाय हर्षेण पूर्णाक्षः कृताञ्जलिः सन् गद्गदया गिरा तुष्टाव ॥ २५ ॥ हिरण्यकशिपुरुवाच । हे देव ! त्वं तमसा व्याप्तं जगत् प्रकटं कृतवान् ॥२६॥ इदं त्वमेव पासि सृजसि नाशयसि । त्रिगुणाश्रयाय तस्मै नमः ॥२७॥ आद्यबीजाय ज्ञानविज्ञानमूर्तये तस्मै नमः ॥२८॥ हे विभो ! त्वं चराचरस्य

स तत्कीचकवल्मीकात् सहओजोबलान्वितः ॥ सर्वावयवसम्पन्नो वज्रसंहननो युवा ॥ उत्थितस्तप्तहेमाभो विभावसु-
रिवैधसः ॥२३॥ स निरीक्ष्याम्बरे देवं हंसवाहमवस्थितम् ॥ ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २४ ॥ उत्थाय
प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम् ॥ हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणात् ॥२५॥ हिरण्यकशिपुरुवाच ॥ कल्पान्ते
कालसृष्टेन योऽन्धेन तमसा वृतम् ॥ अभिव्यनग् जगदिदं स्वयंज्योतिस्स्वरोचिषा ॥ २६ ॥ आत्मना त्रिवृता
चेदं सृजत्यवति लुम्पति ॥ रजस्सत्त्वतमोधाम्ने पराय महते नमः ॥ २७ ॥ नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ॥
प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २८ ॥ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ॥
चित्तस्य चित्तेर्मनइन्द्रियाणां पतिर्महान्भूतगुणाशयेशः ॥ २९ ॥ त्वं सप्ततन्तून्वितनोषि तन्वा त्रय्या चातुर्होतृकवि-
द्यया च ॥ त्वमेक आत्माऽऽत्मवतामनादिरनन्तपारः कविरन्तरात्मा ॥ ३० ॥ त्वमेव कालोऽनिमिषो जनानामायुर्ल-
वाद्यावयवैः क्षिणोषि ॥ कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥३१॥ त्वत्तः परं नापरमप्य-
नेजदेजच्च किंचिद्व्यतिरिक्तमस्ति ॥ विद्या कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥३२॥ व्यक्तं विभो स्थूल-
मिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम् ॥ भुङ्क्षे स्थितो धामनि पारमेष्ठ्य अव्यक्त आत्मा पुरुषःपुराणः ॥ ३३ ॥

जगतो नियन्ता ॥२९॥ हे ईश ! त्वमेव वेदत्रयरूपेण यज्ञान् विस्तारयसि। त्वमेव कालः सन् जनानामायुः क्षिणोषि॥३०॥३१॥ कार्यकारणादि सर्वं त्वद्व्यतिरिक्तं नास्ति । वेदोपवेदादयोऽपि तवैव तनवः सन्ति । अतस्त्वं हिरण्यगर्भः ॥ ३२ ॥ हे विभो ! त्वं स्वस्वरूप एव स्थितः सन् स्थूलशरीरेणेन्द्रियादिविषयान् भुङ्क्षे । अतस्त्वं ब्रह्मैवासि तस्मै नमः ॥ ३३ ॥

---

१ चत्वारो होतारो यत्र तच्चातुर्होतृकं तद्विषयकविद्या । २ स्थावरं जङ्गमं च । ३ बृहद्–ब्रह्म । ४ त्रिगुणात्मकप्रधानस्य पृष्ठे परतः स्थितः ।

हे अनन्त ! यस्य तव सूक्ष्मरूपेण विश्वं व्याप्तं तस्मै ते भगवते नमः ॥३४॥ हे वरदोत्तम । ईप्सितवरान् यदि दास्यसि तर्हि त्वत्सृष्टेभ्यो मे मृत्युर्मा भूत ॥३५॥ अन्तर्बहिश्च न । दिवा नक्तं च न । त्वद्विसृष्टव्यतिरिक्तात् न । आयुधैर्न भूमावम्बरे च न । नरैर्न मृगैर्न ॥३६॥ सप्राणैर्न । अप्राणैर्न । सुरासुरोरगैर्वृक्षपाषाणैश्च मे मृत्युर्मा भूत । युद्धेऽप्रतिद्वन्द्वतां लोकानामैकाधिपत्यं च देहि ॥ ३७ ॥ लोकपालानां महिमानं तव महिमानं च देहि ॥ ३८ ॥ इति श्रीभा० म० चू० सप्त० तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे तु वरान् लब्ध्वा विजित्याखिललोकपान् । विष्णु-

अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् ॥ चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ३४ ॥ यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो ॥३५॥ नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः॥ न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ॥ ३६ ॥ व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः ॥ अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम् ॥३७॥ सर्वेषां लोकपालानां महिमानं यथाऽऽत्मनः ॥ तपोयोगप्रभावानां यन्न रिष्यति कर्हिचित् ॥ ३८॥ इति श्रीभा० म० सप्तमस्कन्धे हिरण्यकशिपोर्वरयाचनं नाम तृतीयोऽध्यायः॥३॥ नारद उवाच ॥ एवं वृतः शत-धृतिर्हिरण्यकशिपोरथ ॥ प्रादात् तत्तपसा प्रीतो वरांस्तस्य सुदुर्लभान् ॥ १ ॥ ब्रह्मोवाच ॥ तातेमे दुर्लभाः पुंसां यान् वृणीषे वरान् मम ॥ तथाऽपि वितराम्यङ्ग वरान् यदपि दुर्लभान् ॥ २ ॥ ततो जगाम भगवानमोघानुग्रहो विभुः ॥ पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥ एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ॥ भगवत्यकरोद्द्वेषं भ्रातुर्वध-मनुस्मरन् ॥ ४ ॥ स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः ॥ देवासुरमनुष्येन्द्रान्गन्धर्वगरुडोरगान् ॥ ५ ॥ 

द्वेषेण तान् सर्वान् दैत्येन्द्रः समपीडयत् ॥१॥ नारद उवाच । ब्रह्मेत्याकर्ण्य तत्तपसा प्रीतः सन् दुर्लभानपि वरान् प्रादात् ॥१॥ ब्रह्मोवाच । हे तात ! ये इमे मे दुर्लभास्तानपि वरान् ते वितरामि ॥ २ ॥ ततस्तेन पूजितः सन् सत्यलोकं जगाम ॥ ३ ॥ प्राप्तवरो दैत्यो हेममयं वपुर्बिभ्रत् भ्रातुर्वधं स्मरन् भगवति द्वेषं चकार ॥ ४ ॥ ततो लोकत्रयं देवासुरमनुष्येन्द्रान् गन्धर्वादीन् ॥ ५ ॥

सिद्धचारणादीन् ऋषिपितृमन्वादीन् यक्षपिशाचादीन् ॥६॥ सर्वानेतान् जित्वा वशमानीय लोकपालानां स्थानैश्वर्यादीनि जहार ॥ ७ ॥ देवोद्यानाश्रिया युक्तं विश्वकर्मणा निर्मितं स्वर्गमधिष्ठितवान् ॥८॥ यत्र प्रवालसोपानाः मारकताः भुवो वैडूर्यस्तम्भपङ्क्तयः ॥९॥ यत्र मुक्तादाम वितानानि मणिमयासनानि पयःफेननिभाः शय्याः स्वर्णमयाः परिच्छदाः ॥१०॥ यत्र देव्यो नूपुरैः शब्दयन्ति ॥११॥ तस्मिन् महेन्द्रभवने

सिद्धचारणविद्याध्रानृषीन् पितृपतीन् मनून् ॥ यक्षरक्षःपिशाचेशान् प्रेतभूतपतीनथ ॥ ६ ॥ सर्वसत्त्वपतीन् जित्वा वशमानीय विश्वजित् ॥ जहार लोकपालानां स्थानानि सह तेजसा ॥७॥ देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ॥ महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ॥ ८ ॥ * यत्र विद्रुमसोपाना महामारकता भुवः ॥ यत्र स्फटिककुड्यानि वैडूर्यस्तम्भपङ्क्तयः ॥९॥ यत्र चित्रवितानानि पद्मरागासनानि च ॥ पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ॥१०॥ कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः ॥ रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम् ॥११॥ तस्मिन्महेन्द्रभवने महाबलो महामना निर्जितलोक एकराट् ॥ रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः ॥१२॥ तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः ॥ उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥ १३ ॥ जगुर्महेन्द्रासनमोजसा स्थितं विश्वावसुस्तुम्बुरुरस्मदादयः ॥ गन्धर्वसिद्धा ऋषयोऽस्तुवन् मुहुर्विद्याधरा अप्सरसश्च पाण्डव ॥ १४ ॥ स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः ॥ इज्यमानो हविर्भागानग्रहीत् स्वेन तेजसा ॥ १५ ॥ अकृष्टपच्या तस्यासीत्सप्तद्वीपवती मही ॥ तया कामदुघा द्यौस्तु नानाश्चर्यपदं नभः ॥१६॥ रत्नाकराश्च रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥

सुरादिभिर्वन्दितचरणः सन् रेमे ॥१२॥ हे धर्म ! मद्येन मत्तं तं ब्रह्मविष्णुरुद्रैर्विनेन्द्रादिदेवाः उपायनयुक्तपाणिभिरुपासत ॥१३॥ अस्मदादयो गन्धर्वास्तस्याग्रे जगुः । अप्सरसो ननृतुः । ऋषयस्तुष्टुवुः ॥ १४ ॥ स एव वर्णाश्रमयुक्तैः जनैः कृतैर्यज्ञादिभिरिज्यमानो हविर्भागान् जग्राह ॥ १५ ॥ तस्याकृष्टपच्या मही जाता । द्यौः कामदुघाऽऽसीत् ॥ १६ ॥ समुद्राः रत्नौघान् ददुः । नद्यो घृतदुग्धादीनूहुः ॥ १७ ॥

* 'हिरण्यकशिपुर्नामदानवेन्द्रो महाबलः' इत्यधिकः पाठः ।

एवं स त्रैलोक्यैश्वर्यं पर्वताः क्रीडास्थानं दधुः। द्रुमाः सर्वर्तुषु पुष्पफलादीन् दधुः। स लोकपालानां पृथग् गुणान् स्वयमेक एव दधार॥१८॥ भुञ्जन् नातृप्यत्॥ १९॥ ऐश्वर्यमत्तस्य महान् कालो गतः॥ २०॥ तस्योग्रदण्डेनोद्विग्नाः सर्वे लोकपालाः अच्युतं शरणं जग्मुः॥ २१॥ ज्ञानिनो यत्र गत्वा न निवर्तन्ते तस्यै दिशे नमोऽस्तु॥ २२॥ इति समाहितधियो गतनिद्राः वायुभोजनाः देवाः हरिं तुष्टुवुः॥ २३॥ तदा साधूनामभयंकरी वाणी बभूव ॥२४॥ हे देवाः! मा भैष्ट ॥२५॥ तस्य दौरात्म्यं ज्ञातं तच्छान्तिं करिष्यामि तावत्कालं प्रतीक्षत ॥ २६॥

शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान्द्रुमाः॥ दधार लोकपालानामेक एव पृथग्गुणान्॥ १८॥ स इत्थं निर्जितककुबेकराड्विषयान्प्रियान्॥ यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः॥ १९॥ एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः॥ कालो महान्व्यतीयाय ब्रह्मशापमुपेयुषः॥ २०॥ तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः॥ अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥२१॥ तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः॥ यद्गत्वा न निवर्तन्ते शान्ताः संन्यासिनोऽमलाः॥ २२॥ इति ते संयतात्मानः समाहितधियोऽमलाः॥ उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः॥२३॥ तेषामाविरभूद्वाणी अरूपा मेघनिस्स्वना॥ सन्नादयन्ती ककुभः साधूनामभयंकरी॥ २४॥ मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः॥ मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये॥ २५॥ ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य यत्॥ तस्य शान्तिं करिष्यामि कालं तावत् प्रतीक्षत॥ २६॥ यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु॥ धर्मे मयि च विद्वेषः स वा आशु विनश्यति॥ २७॥ निर्वैराय प्रशान्ताय स्वसुताय महात्मने॥ प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम्॥ २८॥ नारद उवाच॥ इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः॥ न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम्॥ २९॥ तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः॥ प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः॥ ३०॥

यदा देवेषु गोविप्रसाधुषु धर्मे मयि च विद्वेषं करिष्यति तदाऽऽशु विनश्यति॥ २७॥ किंच निर्वैराय शान्ताय स्वसुतमद्भक्तप्रह्लादाय यदा द्रुह्येत्तदा प्राप्तवरमपि तं हनिष्ये॥ २८॥ नारद उवाच॥ देवाः इत्याकर्ण्य तं प्रणम्य न्यवर्तन्त दैत्यं हतं च मेनिरे॥ २९॥ तस्य दैत्यपतेश्चत्वारः पुत्राः आसन्, तेषु प्रह्लादो गुणैर्महानासीत्॥ ३०॥

ब्रह्मण्यः सत्यसंधःसर्वप्रियो जितेन्द्रियः ॥ ३१ ॥ पितृवद्दीनवत्सलो मानाहंकारवर्जितः ॥ ३२ ॥ नोद्विग्नचित्तो विषयेषु निस्स्पृहः ॥ ३३ ॥ तस्मात् कवयो मुहुर्महद्गुणान् गृह्णन्ति ॥ ३४ ॥ सदसि शत्रवोऽपि देवाः यस्य गाथां गायन्ति मानं च कुर्वन्ति । भवादृशाः किमु ॥ ३५ ॥ तस्या संख्येयैर्गुणैरलं यस्य वासुदेवे निरन्तरं रतिः ॥ ३६ ॥ यो बालोऽपि त्यक्तक्रीडनकः ॥ ३७ ॥ आसीनः पर्यटन् शयानः प्रपिबन्

ब्रह्मण्यः शीलसंपन्नः सत्यसन्धो जितेन्द्रियः ॥ आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः ॥ ३१ ॥ दासवत् संनतार्यङ्घ्रिः पितृवद्दीनवत्सलः ॥ भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः ॥ विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः ॥ ३२ ॥ नोद्विग्नचित्तो व्यसनेषु निस्स्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ॥ दान्तेन्द्रियप्राणशरीरधीः सदा प्रशान्तकामो रहितासुरोऽसुरः ॥३३॥ यस्मिन्महद्गुणा राजन् गृह्यन्ते कविभिर्मुहुः ॥ न तेऽधुनाऽपि धीयन्ते यथा भगवतीश्वरे ॥३४॥ यं साधुगाथा सदसि रिपवोऽपि सुरा नृप ॥ प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः ॥३५॥ गुणैरलमसंख्येयैर्माहात्म्यं तस्य सूच्यते ॥ वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥३६॥ न्यस्तक्रीडनको बालो जडवत् तन्मनस्कया ॥ कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३७ ॥ आसीनः पर्यटन्नश्नञ्छयानः प्रपिबन् ब्रुवन्॥नानुसंधत्त एतानि गोविन्दपरिरम्भितः ॥ ३८ ॥ क्वचिद्रुदति वैकुण्ठचिन्ताशबलचेतनः ॥ क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥३९॥ नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ॥ क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४० ॥ क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ॥ अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ ४१ ॥

गोविन्देन सहैकीकृतः ॥ ३८ ॥ क्वचिद् गोविन्दचिन्तया रुदति हसति गायति ॥ ३९ ॥ क्वचिद् विलज्जः सन् नृत्यति । क्वचिद् तद्भावनया युक्तस्तन्मयो बभूव ॥ ४० ॥ क्वचित् प्रेमानन्देन मीलितेक्षणस्तूष्णीमास्ते ॥ ४१ ॥

---

१ सन्नताः श्रेष्ठानामङ्घ्रयो येन सः ।

स भक्त्याऽऽत्मनः सुखं विस्तारयन्नन्यस्य मनसोऽपि शान्तिं चकार॥४२॥ हे राजन्! ईदृशे भगवद्भक्ते पुत्रे दैत्यो द्वेषं चकार॥४३॥ युधिष्ठिर उवाच॥ हे देवर्षे! साधवे स्वपुत्राय तत्पिता कस्माद् द्वेषं चकार। एतत् ज्ञातुमिच्छामः॥ ४४ ॥ अप्रतिकूलानपि पुत्रान् पितरः शिक्षार्थं निन्दन्ति। परंतु न घ्नन्ति ॥ ४५ ॥ एवं सति पुत्रद्वेषः पितुर्मरणाय कथं जातः। एतत् कौतूहलं दूरीकुरु॥४६॥ इति श्रीभागवते चूर्णिकायां सप्तम० चतुर्थोऽध्यायः ॥४॥ पञ्चमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम्। घातयन् द्विपसर्पाद्यैः सुतं दैत्यो न चाशकत्॥१॥ नारद उवाच॥

स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिंचनसङ्गलब्धया ॥ तन्वन्परां निर्वृतिमात्मनो मुहुर्दुस्सङ्गदीनान्यमनश्शमं व्यधात् ॥४२॥ तस्मिन्महाभागवते महाभागे महात्मनि ॥ हिरण्यकशिपू राजन्नकरोदघमात्मजे ॥ ४३ ॥ युधिष्ठिर उवाच ॥ देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ॥ यदात्मजाय शुद्धाय पिताऽदात्साधवे ह्यघम् ॥४४॥ पुत्रान्विप्रतिकूलान्स्वान्पितरः पुत्रवत्सलाः ॥ उपालभन्ते शिक्षार्थं नैवाघमपरो यथा ॥ ४५ ॥ किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान्॥ एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ॥ पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः * ॥ ४६॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे प्रह्लादचरित्रे हिरण्यकशिपुदिग्विजयप्रह्लादसाधुभाववर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ नारद उवाच ॥ पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः ॥ शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥ तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ॥ पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥ यत्तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च ॥ न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम् ॥ ३ ॥ एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ॥ पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥४॥ प्रह्लाद उवाच ॥ तत् साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ॥ हित्वाऽऽत्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥

असुरैः पौरोहित्याय शुक्रो वृतः। तस्य पुत्रौ शण्डामर्कौ राजगृहसमीपे न्यवसताम् ॥ १ ॥ तौ राज्ञाऽर्पितं प्रह्लादं बालकानितरांश्च पाठयामासतुः ॥२॥ ताभ्यां प्रोक्तं द्वैतशास्त्रं शुश्रुवे पपाठ च परंतु न साधु मेने ॥३॥ एकदा दैत्येन्द्रः पुत्रमङ्कमारोप्य पप्रच्छ। हे वत्स! त्वं यत् साधु मन्यसे तत् कथय ॥४॥ प्रह्लाद उवाच ॥ हे दैत्यवर्य! आत्मपातं गृहान्धकूपं हित्वा वनं गत्वा हरिमाश्रयेत। एतत् साधु मन्ये॥५॥

१ 'महामान्ये' इ० पा०। * 'मनो भ्रमति मे विद्वन्नेतस्मिन्संकटे द्विज'। इत्यधिकः पाठः।

नारद उवाच ॥ एवं पुत्रगिरः श्रुत्वा प्रहस्य गुरून् जगाद । अस्य धीर्विष्णुपक्षैर्यथा न भिद्येत तथा स्वगृहे बालो रक्ष्यताम् ॥ ६ ॥ ७ ॥ ततो दैत्ययाजकाः प्रह्लादं गृहमानीय प्रशस्य तं पप्रच्छुः ॥८॥ हे प्रह्लाद ! सत्यं कथय । बाला नतिक्रम्य ते बुद्धिविपर्ययः कुतः ॥९॥ तव बुद्धिभेदः परकृतो वा स्वतः । एतद् वद ॥१०॥ प्रह्लाद उवाच ॥ परः स्वः इत्यज्ञानं यस्य मायया दृष्टं तस्मै भगवते नमः ॥११॥ यदा हरिरनुकूलः

नारद उवाच ॥ श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ॥ जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥ सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ॥ विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥७॥ गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ॥ प्रशस्यश्लक्ष्णया वाचा समपृच्छन्त साम[1]भिः ॥८॥ वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा ॥ बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥ बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् ॥ भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ॥१०॥ प्रह्लाद उवाच ॥ स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ॥ विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥११॥ स यदाऽनुव्रतः पुंसां पशुबुद्धिर्विभिद्यते ॥ अन्य एष तथाऽन्योऽहमिति भेदगताऽसती ॥ १२ ॥ स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते ॥ मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥१३॥ यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ ॥ तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ १४ ॥ नारद उवाच ॥ एतावद्ब्राह्मणायोक्त्वा विरराम महामतिः ॥ तं निर्भर्त्स्याथ कुपितः स दीनो राजसेवकः ॥१५॥ आनीयतामरे वेत्रमस्माकमयशस्करः ॥ कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थो[2]ऽस्योदितो दमः ॥ १६ ॥

तदा पुंसां स्वः परः इति बुद्धिभेदो भिद्यते ॥१२॥ यस्य जिज्ञासायां ब्रह्मादयोऽपि मुह्यन्ति स बुद्धिं भिनत्ति ॥ १३ ॥ यथा लोहं चुम्बकस्य सान्निध्याद् भ्रमति तथा चक्रपाणीच्छया मे चेतो भिद्यते ॥१४॥ नारद उवाच ॥ एवमुक्त्वा विरराम । तदा गुरुः कुपितः सन् तं निर्भर्त्स्य जगाद ॥ १५ ॥ अस्माकमयशस्करोऽयं दुर्बुद्धिर्दण्डयोग्यः । अतो हे शिष्य ! वेत्रमानीयताम् ॥ १६ ॥

---

१ वृथंटानुचरित्तम् । २ सामदामभेददण्डानां मध्ये ।

अयं दैत्यरूपचन्दनवने कण्टकवृक्षो जातः। दैत्यवनोत्पाटने कुठाररूपस्य विष्णोर्दण्डरूपोऽयम् ॥ १७ ॥ एवं तं भीषयन् त्रिवर्गप्रतिपादकशास्त्र-मध्यापयामास ॥१८॥ ततो गुरुरधीतं ज्ञात्वा मात्रा वस्त्रालंकारादिभिर्भूषितं बालं दैत्येन्द्रं दर्शयामास ॥ १९ ॥ ततो हिरण्यकशिपुः पादयोः पतितं बालमालिङ्ग्याङ्कमारोप्य जगाद ॥२०॥२१॥ हिरण्यकशिपुरुवाच ॥ हे प्रह्लाद! एतावता कालेन गुरोर्यत् स्वधीतं तदुच्यताम् ॥२२॥

दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः ॥ यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १७ ॥ इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः ॥ प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १८ ॥ तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम्[१] ॥ दैत्येन्द्रं दर्शयामास मातृमृष्टमलंकृतम् ॥१९॥ पादयोः पतितं बालं प्रतिनन्द्याशिषाऽसुरः ॥ परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥२०॥ आरोप्यांकमवघ्राय मूर्धन्यश्रुकलाम्बुभिः ॥ आसिञ्चन् विकसद्वक्त्रमिदमाह युधिष्ठिरः ॥२१॥ हिरण्यकशिपुरुवाच ॥ प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम् ॥ कालेनैतावताऽऽयुष्मन् यदशिक्षद् गुरोर्भवान् ॥ २२ ॥ प्रह्लाद उवाच ॥ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ ॥२३॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ॥ क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥ निशम्यैतत् सुतवचो हिरण्यकशिपुस्तदा ॥ गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥२५॥ ब्रह्मबन्धो किमेतत्ते विपक्षं श्रयताऽसता ॥ असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २६ ॥ सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः ॥ तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥

प्रह्लाद उवाच ॥ हे तात ! विष्णोः श्रवणं १, कीर्तनं २, स्मरणं ३, पादसेवनम् ४, अर्चनं ५, वन्दनं ६, दास्यं ७, सख्यं ८, स्वदेहसमर्पणम् ९ ॥२३॥ इति नवलक्षणा भक्तिर्विष्णौ क्रियते । तदुत्तममधीतं मन्ये ॥ २४॥ एवं पुत्रवचः श्रुत्वा क्रोधेन स्फुरिताधरो दैत्यो गुरुपुत्रं जगाद॥२५॥ हे ब्रह्मबन्धो ! मामनादृत्य पुत्रः किमसारं ग्राहितः ॥२६॥ अस्मिन् लोके कापट्यवेषधारिणोऽसाधवो बहवः सन्ति ॥ २७ ॥

१ उपायचतुष्टयम् ।

गुरुपुत्र उवाच ॥ हे इंद्रशत्रो! तव सुतो मत्प्रणीतं परप्रणीतं च न वदति। अस्येयं स्वाभाविकी मतिः ततो मयि क्रोधं मा कुरु ॥ २८ ॥ नारद उवाच॥ एवं गुरूक्तं श्रुत्वा पुत्रं जगाद्। हे पुत्र! इयं ते बुद्धिर्गुरुमुखी न चेत्तर्हि कुतः प्राप्ता ॥ २९ ॥ प्रह्लाद उवाच॥ हे पितः! श्रीकृष्णे मतिः परतः स्वतो वा सत्सङ्गं विना नोत्पद्यते ॥३०॥ ये बहिरर्थमानिनस्ते स्वार्थगतिं न विदुः ॥३१॥ यावत् साधूनां पादसेवनं न करोति तावत्

गुरुपुत्र उवाच ॥ न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ॥ नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं कददाः स्म मा नः ॥२८॥ नारद उवाच ॥ गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् ॥ न चेद् गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः ॥ २९ ॥ प्रह्लाद उवाच ॥ मतिर्न कृष्णे परतः स्वतो वा मिथोऽभिपद्येत गृहव्रतानाम् ॥ अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम् ॥ ३० ॥ न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः ॥ अन्धा यथाऽन्धैरुपनीयमाना वाचीशतन्त्यामुरुदाम्नि बद्धाः ॥ ३१ ॥ नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः ॥ महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥३२॥ इत्युक्तोपरतं पुत्रं हिरण्यकशिपू रुषा ॥ अन्धीकृतात्मा स्वोत्संगान्निरस्यत महीतले ॥३३॥ आहामर्षरुषाऽऽविष्टः कषायीभूतलोचनः ॥ वध्यतामाश्वयं वध्यो निस्सारयत नैर्ऋताः ॥३४॥ अयं मे भ्रातृहा सोऽयं हित्वा स्वान् सुहृदोऽधमः ॥ पितृव्यहन्तुर्यः पादौ विष्णोर्दासवदर्चति ॥ ३५ ॥ विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः ॥ सौहृदं दुस्त्यजं पित्रोरहाद् यः पञ्चहायनः ॥ ३६ ॥ परोऽप्यपत्यं हितकृद् यथौषधं स्वदेहजोऽप्यामयवत् सुतोऽहितः ॥ छिन्द्यात्तदङ्गं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात् ॥ ३७ ॥

कृष्णे मतिर्न जायते ॥ ३२ ॥ तदा दैत्यः एवं वचो निशम्य पुत्रं स्वोत्सङ्गात् महीतले त्यक्त्वा राक्षसानुवाच ॥ ३३ ॥ हे राक्षसाः अयं वध्यतां वा निस्सार्यतां वा ॥३४॥ यः पितृव्यहन्तुर्विष्णोः पादौ दासवदर्चति ॥ ३५ ॥ योऽयं पञ्चहायनः पित्रोः सौहृदं जहौ ॥ ३६ ॥ परोऽपि हितकृच्चेत् सुतो ज्ञेयः स्वदेहजोऽपि न तथा चेद् रोग इव ज्ञेयः ॥ ३७ ॥

१ गावः इन्द्रियाणि। २ संसारम्।

अतोऽयं सर्वैरुपायैर्हन्तव्यः ॥३८॥ तदा ते राक्षसाः शूलपाणयो भर्त्राऽऽदिष्टाः ॥३९॥ नदन्तश्छिन्धि भिन्धीति वादिनः सन्तः आसीनं प्रह्लादं शूलैः सर्वमर्मसु जघ्नुः ॥४०॥ तथाऽपि महाभागवते ब्रह्मणि समाहितात्मनि प्रह्लादे तेषां प्रहाराः निष्फलाः आसन् ॥४१॥ तस्मिन् प्रयासे नष्टे सति दैत्येन्द्रस्तद्वधोपायान् चकार ॥४२॥ दिग्गजैर्दन्दशूकैरभिचारैर्गिरिशृङ्गात् पातैर्मायाभिर्विषदानैरभोजनैः ॥४३॥ हिमवाय्वग्निजलादिभिरुपायैर्नि-

सर्वैरुपायैर्हन्तव्यः संभोजशयनासनैः ॥ सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥३८॥ नैर्ऋतास्ते समादिष्टा भर्त्रा वै शूलपाणयः ॥ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ॥३९॥ नदन्तो भैरवान् नादाञ्छिन्धि भिन्धीति वादिनः ॥ आसीनं चाहनञ्छूलैः प्रह्लादं सर्वमर्मसु ॥४०॥ परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ॥ युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः ॥४१॥ प्रयासेऽपहते तस्मिन् दैत्येन्द्रः परिशङ्कितः ॥ चकार तद्वधोपायान् निर्बन्धेन युधिष्ठिर ॥४२॥ दिग्गजैर्दन्दशूकैश्च अभिचारावपातनैः ॥ मायाभिः संनिरोधैश्च गरदानैरभोजनैः ॥४३॥ हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ॥ न शशाक यदा हन्तुमपापमसुरः सुतम् ॥ ❋ चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत ॥४४॥ एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ॥ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ॥ ४५ ॥ वर्तमानोऽविदूरे वै बालोऽप्यजडधीरयम् ॥ न विस्मरति मेऽनार्यं शुनःशेप इव प्रभुः ॥ ४६ ॥ अप्रमेयानुभावोऽयमकुतश्चिद्भयोऽमरः ॥ नूनमेतद्विरोधेन मृत्युर्मे भविता न वा ॥ ४७ ॥ इति तं चिन्तया किंचिद्म्लानश्रियमधोमुखम् ॥ शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ४८ ॥ जितं त्वयैकेन जगत्त्रयं भ्रुवोर्विजृम्भणत्रस्तसमस्तधिष्ण्यपम् ॥ न तस्य चिन्त्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम् ॥ ४९ ॥



ष्पापं सुतं हन्तुं न शशाक । तदा दीर्घचिन्तां प्राप्तः आह ॥४४॥ मयाऽस्य वधोपायाः बहवः कृताः । तथाऽपि एष स्वतेजसैव मुक्तः ॥४५॥ अयं समीपे वसन्नपि मे निन्द्यकर्म न स्मरति नम्रवचो वदति ॥४६॥ अतोऽमरः किम् ? अस्य विरोधेन मे मृत्युर्भविष्यति किम् ? ॥४७॥ इति चिन्तयाऽधोमुखं दैत्यं शण्डामर्कावूचतुः ॥४८॥ हे नाथ ! त्वयैकेन जगत्त्रयं जितम्, तव तु चिन्त्यं न पश्यामः । अतः शिशोर्गुणदोषौ न चिन्तनीयौ ॥४९॥

* 'दुष्टा च भगिनी तस्मिन्नाशक्तोऽन्मारितुं तदा ।' इत्यधिकः पाठः ।

एनं वरुणपाशैर्बद्धा यावद् भार्गवः आगमिष्यति तावद् निधेहि ॥५०॥ राजा तथेत्युक्त्वा जगाद । अस्य राज्ञां धर्माः उपदेष्टव्याः॥ ५१॥ तदा गुरू त्रिवर्गोपपादकं शास्त्रं दैत्यबालकैः सह तमध्यापयताम् ॥५२॥ प्रह्लादो गुरुशिक्षितं साधु न मेने ॥५३॥ यदाऽऽचार्यो गृहकर्मसु गतस्तदा प्राप्तावसरैर्बालकैः क्रीडार्थमाहूतः ॥५४॥ प्रह्लादः स्वयमेव तानाहूय जगाद॥५५॥ ते बालाः प्रह्लादस्य गौरवात् त्यक्तक्रीडनकाः सन्तः॥५६॥

इमं तु पाशैर्वरुणस्य बद्धा निधेहि भीतो न पलायते यथा॥ बुद्धिश्च पुंसो वयसाऽऽर्यसेवया यावद्गुरुर्भार्गव आगमिष्यति ॥ ५० ॥ तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ॥ धर्मा ह्यस्योपदेष्टव्या राज्ञां ये गृहमेधिनाम् ॥ ५१ ॥ धर्ममर्थं च कामं च नितरां चानुपूर्वशः ॥ प्रह्लादायोचतू राजन् प्रश्रयावनताय च ॥५२॥ यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम् ॥ न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम् ॥५३॥ यदाऽऽचार्यः परावृत्तो गृहमेधीयकर्मसु ॥ वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५४ ॥ अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ॥ उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव ॥ ५५ ॥ ते तु तद्गौरवात्सर्वे त्यक्तक्रीडापरिच्छदाः ॥ बाला न दूषितधियो द्वन्द्वारामेरितेहितैः ॥ ५६ ॥ पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः ॥ तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥५७॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे नवधा भक्तिवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ प्रह्लाद उवाच ॥ कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ॥ दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ १ ॥ यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ॥ यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ २ ॥

तं पर्युपासत । ततो महाभागवतः प्रह्लादस्तान् बालानाह ॥५७॥ इति श्रीभागवते चू० सप्तम पञ्चमोऽध्यायः ॥५॥ षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् । अनुकम्प्य परं तन्त्रं नारदोक्तमुपादिशत्॥१॥निरर्थकक्रियालापैरायुर्व्ययमजानताम्। प्रह्लादः सदयं प्राह धर्मं भागवतं कृती॥२॥ प्रह्लाद उवाच॥ हे बालकाः! प्राज्ञः कौमारे एव भगवद्धर्मानाचरेत्। इह मानुष्यं जन्म दुर्लभम् अर्थदं च॥१॥अतो विष्णोः पादसेवनं योग्यम्॥२॥

१ रागद्वेषाविव्वारमणं येषां तैः ।

हे दैत्याः ! देहयोगेन सर्वयोनिषु विषयसुखं लभ्यते ॥३॥ अतस्तदर्थं यत्नो न कार्यः यतस्तेनायुर्व्यर्थं भवति ॥ ४ ॥ संसारं प्राप्तः पुमान् यावत् शरीरं न नश्येत् तावत् क्षेमाय यत्नं कुर्यात् ॥ ५ ॥ पुंसो वर्षशतमायुः । तत्रार्धं ( ५० ) निद्रया निष्फलं भवति ॥ ६ ॥ मूर्खस्य बाल्ये कौमारे क्रीडतो विंशतिर्वर्षाणि यान्ति । जरया ग्रस्तदेहस्य विंशतिर्वर्षाणि यान्ति ॥ ७ ॥ शेषं ( १० ) वर्षाणि गृहे सक्तस्य यान्ति

सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् ॥ सर्वत्र लभ्यते दैवाद् यथा दुःखमयत्नतः ॥ ३ ॥ तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् ॥ न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥४॥ ततो यतेत कुशलः क्षेमाय भयमाश्रितः ॥ शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥५॥ पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः ॥ निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥६॥ मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः ॥ जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ ७ ॥ दुरापूरेण कामेन मोहेन च बलीयसा ॥ शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ ८ ॥ को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः ॥ स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥९॥ को न्वर्थतृष्णां विसृजेत् प्राणेभ्योऽपि य ईप्सितः ॥ यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥१०॥ कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ॥ सुहृत्सु च स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ ११ ॥ पुत्रान्स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन्स्वसॄर्वा पितरौ च दीनौ ॥ गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥ १२ ॥ त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः ॥ औपस्थ्यजैह्वं बहु मन्यमानः कथं विरज्येत दुरन्तमोहः ॥ १३ ॥

॥८॥ एवं गृहासक्तमात्मानं मोचितुं कः उत्सहेत ॥ ९ ॥ वाणिक् तस्करश्च प्राणहानिमङ्गीकृत्य द्रव्यं साधयति । अर्थे तस्मिन् तृष्णां को विसृजेत् ॥ १० ॥ प्रियायाः रहसि संगेन शिशूनां कलभाषणेन च सक्तचित्तः ॥ ११ ॥ पुत्रान् श्वशुरगृहे स्थिताः दुहितॄश्च परं मनोज्ञपरिच्छदगृहान् पशुभृत्यवर्गान् स्मरन् सन् ॥१२॥ अवितृप्तकामः कथं विरक्तः स्यात् ॥ १३ ॥

---

१ व्यवहारासमर्थस्य। २ प्राणनाशेनापि। ३ अर्थः। ४ बद्धः। ५ जीविकाः। ६ कुलपरंपरागताः। ७ निर्गमाय गृहमप्यकुर्वाणः कीट इव।

कुटुम्बपोषणार्थं क्षीयमाणायुः पुमान् पुरुषार्थं विहतं न मन्यते ॥१४॥ वित्तहर्तुरिहामुत्र दण्डनरकरूपं दोषं जानन्नपि कुटुम्बी परवित्तं हरत्येव ॥१५॥ इत्थं कुटुम्बं पुष्णन् तत्वविचाराय न कल्पते ॥१६॥ यतः कश्चिदपि स्वमात्मानं मोचितुं न समर्थः ॥१७॥ तस्मात् हे दैत्यबालकाः ! विषयात्मकेषु दैत्येषु सङ्गं त्यक्त्वा साधुसमागमं कृत्वा नारायणं शरणं व्रजत ॥१८॥ हे बालकाः। अच्युतसाधने गुरुः श्रमो न, कस्मात् स

कुटुम्बपोषाय वियन्निजायुर्न बुध्यतेऽर्थं विहतं प्रमत्तः ॥ सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥१४॥ वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः ॥ प्रेत्येह चाथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी ॥१५॥ विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन् स्वलोकाय न कल्पते वै ॥ यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः ॥ १६ ॥ यतो न कश्चित् क्व च कुत्रचिद् वा दीनः स्वमात्मानमलं समर्थः ॥ विमोचितुं कामदृशां विहारक्रीडामृगो यन्निगडो विसर्गः॥१७॥ततो विदूरात् परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु॥ उपेत नारायणमादिदेवं विमुक्तसङ्गैरिषितोऽपवर्गः ॥ १८ ॥ नह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ॥ आत्मत्वात् सर्वभूतानां सिद्धत्वादिह सर्वतः॥ ॥१९॥ परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु ॥ भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥ २० ॥ गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा ॥ एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २१ ॥ प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ॥ व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥२२॥ केवलानुभवानन्दस्वरूपः परमेश्वरः ॥ माययान्तर्हितैश्वर्य ईयते गुणसर्गया ॥ २३ ॥ तस्माद् सर्वेषु भूतेषु दयां कुरुत सौहृदम् ॥ आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ २४ ॥

सर्वभूतानामात्मा ॥१९॥ यो जीवेष्वजीवेष्वाकाशादिषु च परमात्मा व्याप्य स्थितः। सोऽव्ययो ब्रह्मस्वरूपः ॥२०॥२१॥ दृश्यं भोग्यं द्रष्टा भोक्ता तत्स्वरूपेण व्याप्तः ॥२२॥ केवलमानन्दरूपो यस्य गुणात्मकः सर्गः। तया मायया गुप्तैश्वर्यः प्रकाशते॥ २३ ॥ तस्मादासुरं भावं विसृज्य सर्वभूतेषु दयां सौहृदं च कुरुत। दयया हरिस्तुष्यति ॥ २४ ॥

---

१ यासु भृंखलेव। २ पुत्रपौत्रादयः। ३ इष्टः। ४ गुणात्मकसर्गया।

हरौ तुष्टे तच्चरणौ सेवमानानां नः किमप्राप्यम् । अतो यूयं तस्य गुणकर्माणि गायत॥२५॥ धर्मार्थकामा इति त्रिवर्गो दण्डनीत्यादयः विविधाः जीविकाश्च सर्वं गुणयुक्तवेदस्यार्थं मन्ये । अतो निर्गुणे भगवति स्वात्मार्पणमेव साधनम् ॥२६॥ एतज्ज्ञानं नारायणो नारदाय कथितवान्। इदं ज्ञानमेकान्तभक्तानां सर्वेषामपि स्यात्। न तूत्तमानामेवेति नियमः ॥२७॥ इदं भगवद्धर्मरूपं ज्ञानं मया पूर्वं नारदात् श्रुतम् ॥२८॥ दैत्यपुत्रा ऊचुः॥ हे प्रह्लाद ! वयं त्वं च शण्डामर्कौ विनाऽन्यं गुरुं न जानीमः ॥२९॥ इमम् अन्तःपुरस्थस्य बालस्य तव महत्सङ्गः कथं जातःइति नः

तुष्टे च तत्र किमलभ्यमनन्त आद्ये किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः॥ धर्मादयः किमगुणेन च काङ्क्षितेन सारं-जुषां चरणयोरुपगायतां नः ॥२५॥ धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता॥ मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ २६ ॥ ज्ञानं तदेतदमलं दुरवापमाह नारायणो नर-सखः किल नारदाय ॥ एकान्तिनां भगवतस्तदकिंचनानां पादारविन्दरजसाप्लुतदेहिनां स्यात् ॥२७॥ श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ॥ धर्मं भागवतं शुद्धं नारदाद्देवदर्शनात् ॥२८॥ दैत्यपुत्रा ऊचुः॥ प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ॥ एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ ॥ २९ ॥ बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः ॥ छिन्धि नः संशयं सौम्य स्याच्चेद् विस्रम्भकारणम् ॥३०॥ इति श्रीभाग०म०सप्तम० प्रह्लादेन बालानां ब्रह्मज्ञानवर्णनं नाम षष्ठोऽध्यायः ॥६॥ नारद उवाच ॥ एवं दैत्यसुतैःपृष्टो महाभागवतोऽसुरः ॥ उवाच स्मयमानांस्तान्स्मरन्मदनु-भाषितम् ॥१॥ प्रह्लाद उवाच ॥ पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम्॥युद्धोद्यमं परं चक्रुर्विबुधा दानवान्प्रति॥२॥

संशयं छिन्धि॥३०॥इति श्रीभाग०चू०सप्तम०षष्ठोऽध्यायः॥६॥ सप्तमे मातृगर्भस्थे स्वस्मिन् नारद भाषितम्॥ प्रह्लादो वर्णयामास शिष्यप्रत्यय-शुद्धये॥१॥ अश्रावि नारदादेतन्मया गर्भे इतीरितुम्। तत्प्रस्तावकथामाह पद्यैः षोडशभिः सुधीः ॥२॥ नारद उवाच। एवं दैत्यसुतैः पृष्टः प्रह्लादो मम पूर्वानुभाषितं स्मरन् तानुवाच ॥१॥ प्रह्लाद उवाच॥ अस्मत्पितरि तपसे मन्दराचलं गते सति देवाः दानवान् प्रति युद्धोद्यमं चक्रुः ॥२ ॥

१ आत्मविद्या । २ कर्मविद्या । ३ तर्कौ दण्डनीतिश्च । ४ जीविका । ५ अस्य ऋते इति पूर्वेणान्वयः ।

इन्द्रादयो लोकतापकरं दैत्यं स्वपापेन पिपीलिकैरहिमिव भक्षितं वीक्ष्य हर्षं प्रापुः ॥३॥ दैत्याः देवानां बलोद्योगं दृष्ट्वा तैस्ताड्यमानाः सन्तः ॥४॥ स्त्रीपुत्रगृहादीन् त्यक्त्वा दिशो दुद्रुवुः ॥ ५ ॥ ततो देवाः राज्ञो गृहं व्यलुम्पन् । इन्द्रस्तु मम मातरं गृहीत्वा नीतवान् ॥६॥ तदा तां नीयमानां भयविह्वलां रुदतीं पथि दृष्ट्वा नारदः इन्द्रं प्राह ॥७॥ हे इन्द्र! अनागसमेनां मुञ्च मुञ्च नेतुं नार्हसि॥८॥ इन्द्र उवाच ॥ हे ऋषे ! अस्याः

पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ॥ पापेन पापोऽभक्षीति वादिनो वासवादयः ॥३॥ तेषामतिबलोद्योगं निशम्यासुरयूथपाः ॥ वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतो दिशम् ॥ ४ ॥ कलत्रपुत्रमित्राप्तान् गृहान् पशुपरिच्छदान् ॥ नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥५॥ व्यलुम्पन् राजशिबिरममरा जयकाङ्क्षिणः॥ इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥६॥ नीयमानां भयोद्विग्नां रुदतीं कुररीमिव ॥ यदृच्छयाऽऽगतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥ प्राह मैनां सुरपते नेतुमर्हस्यनागसम् ॥ मुञ्च मुञ्च महाभाग सतीं परपरिग्रहम् ॥ ८ ॥ इन्द्र उवाच ॥ आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ॥ आस्यतां यावत्प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥ नारद उवाच ॥ अयं निष्किल्बिषः साक्षान्महाभागवतो महान् ॥ त्वया न प्राप्स्यते संस्थामनन्तानुचरो बली ॥१०॥ इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन् वचः ॥ अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥११॥ ततो नो मातरमृषिः समानीय निजाश्रमम् ॥ आश्वास्येहोष्यतां वत्से यावत्ते भर्तुरागमः ॥ १२ ॥ तथेत्यवात्सीद्देवर्षेरन्ति[1] साऽप्यकुतोभया ॥ यावद् दैत्यपतिर्घोरात् तपसो न न्यवर्तत ॥ १३ ॥ ऋषिं पर्यचरत् तत्र भक्त्या परमया सती ॥ अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥

जठरेऽविषह्यं वीर्यम् । प्रसवोत्तरं जातं पुत्रं हत्वा मोक्ष्ये ॥९॥ नारद उवाच ॥ हे इन्द्र ! अयं महाभागवतः त्वत्तो मृत्युं न यास्यति ॥१०॥ इन्द्रस्तद्वचो मानयन् तां विहाय दिवं ययौ॥११॥ततो नारदो मे मातरमाश्वास्य निजाश्रमं नीत्वा यावत् तं भर्तुरागमस्तावदिह वसेत्युवाच ॥१२॥ तदा सा तथेत्युक्त्वा निर्भया सती तत्रोवास ॥१३॥ गर्भवती सा भर्तुरागमनानन्तरं प्रसूतये गर्भक्षेमाय च भक्त्या ऋषिं पर्यचरत्॥१४॥

१ अन्ति-समीपे ।

ऋषिर्मामुद्दिश्य तस्याः धर्मस्य तत्त्वरूपां भक्तिं ज्ञानं च प्रादात् ॥१५॥ तज्ज्ञानं तु दीर्घकालत्वात् मातुर्गुप्तं बभूव । ऋषिकृपया मां संप्रत्यपि स्मृतिर्न जहाति ॥१६॥ अतो यदि मम वचः श्रद्दधीरन् तर्हि भवतामपि भक्तिर्ज्ञानं च भवेत् ॥१७॥ अथ देहात्मविवेकप्रकारं दर्शयति जन्माद्याः षड् भावाः देहस्य । आत्मनो न ॥१८॥आत्मा तु नित्यः शुद्धः सर्वाश्रयः॥१९॥ इत्यादिलक्षणैर्देहाद् भेदं ज्ञात्वा देहादावहंममेति

ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः ॥ धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम् ॥ १५ ॥ तत्तु कालस्य दीर्घत्वात्स्त्रीत्वान्मातुस्तिरोदधे ॥ ऋषिणाऽनुगृहीतं मां नाधुनाऽप्यजहात् स्मृतिः ॥ १६ ॥ भवतामपि भूयान्मे यदि श्रद्दधते वचः ॥ वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥१७॥ जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः ॥ फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥१८॥ आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ॥ अविक्रियः स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृतः ॥१९॥ एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः ॥ अहंममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥ स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ॥ क्षेत्रेषु देहेषु तथाऽऽत्मयोगैरध्यात्मविद् ब्रह्मगतिं लभेत ॥ २१ ॥ अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ॥ विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥ २२ ॥ देहस्तु सर्वसंघातो जगत्तस्थुरिति द्विधा ॥ अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन् ॥ २३ ॥ अन्वयव्यतिरेकेण विवेकेनोशताऽऽत्मना ॥ सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ॥ ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥ २५ ॥

मिथ्याबुद्धिं त्यजेत् ॥२०॥ ज्ञानविद् देहेष्वात्मयोगैर्ब्रह्मगतिं लभते ॥२१॥ अष्टौ प्रकृतयः एकादशेन्द्रियाणि । पञ्च महाभूतानि । एवं चतुर्विंशतितत्त्वसहितः पुमान् ॥२२॥ स पुरुषः स्थावरजङ्गमात्मके देहे एव मृग्यः ॥ २३ ॥ यतः सृष्टिस्थितिसंहाराः जायन्ते स तस्मिन् युक्तोऽपि व्यतिरिक्तो मणिषु सूत्रमिव ॥ २४ ॥ जाग्रत्स्वप्नसुषुप्तिवृत्तयो बुद्धेर्भवन्ति । ताः येनानुभवं प्राप्नुवन्ति स पुरुषः साक्षी ॥२५॥

१ अन्वयव्यतिरेकोपजनितविवेकाच्छुद्धेन । २ समाम्नायो नाशः । ३ अव्यग्रैः ।

कर्मजन्यैर्बुद्धिभेदैरात्मनः स्वरूपं जानीयात् ॥२६॥ संसारस्तु बुद्धिद्वारकोऽज्ञानमूलको मिथ्याभूतोऽपि स्वप्न इव दृश्यते॥२७॥ तस्मात् भवद्भिरीश्वरे सर्वकर्मनाशको योगः कर्तव्यः॥२८॥ यैर्धर्मैर्भगवति रतिर्भवति स उपायो भगवतोक्तः॥२९॥ तत्रैवान्तरङ्गान् धर्मानाह। गुरुशुश्रूषया भक्त्या च साधुसङ्गेन ॥३०॥ तत्कथायां श्रद्धया तत्पादाम्बुजध्यानात् ॥३१॥सर्वभूतेषु हरिरास्ते एवं मनसा चिन्तयन् पूर्वोक्तसाधनैर्भूतानि

एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ॥ स्वरूपमात्मनो बुध्येद् गन्धैर्वायुमिवान्वयात् ॥२६॥ एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः ॥ अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते ॥ २७ ॥ तस्माद् भवद्भिः कर्तव्यं कर्मणां त्रिगुणात्मनाम् ॥ बीजनिर्हरणं योगः प्रवाहोपरमो धियः ॥ २८ ॥ तत्रोपायसहस्राणामयं भगवतोदितः ॥ यदीश्वरे भगवति यथा यैरञ्जसा रतिः ॥ २९ ॥ गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च ॥ संगेन साधुभक्तानामीश्वराराधनेन च ॥ ३० ॥ श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् ॥ तत्पादाम्बुरुहध्यानात्तल्लिंगेक्षार्हणादिभिः ॥ ३१ ॥ हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः ॥ इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥३२॥ एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ॥ वासुदेवे भगवति यया संलभते रतिम् ॥३३॥ निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि ॥ यदाऽतिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ ३४ ॥ यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् ॥ मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्ममतिर्गतत्रपः ॥३५॥ तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः ॥ निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ३६ ॥

साधु मानयेत् ॥ ३२ ॥ जितषड्वर्गो भक्त्या वासुदेवे भगवति प्रीतिं लभते ॥ ३३ ॥ हरेर्गुणकर्माणि ज्ञात्वाऽश्रुहर्षेण रोमाञ्चितः सन् गायति रौति नृत्यति ॥ ३४ ॥ हसति क्रन्दते । गतत्रपः सन् हरे नारायणेति वक्ति ॥ ३५ ॥ तदा पुमान् मुक्तबन्धनः सन् भगवन्तं प्राप्नोति ॥ ३६ ॥

तदेव मोक्षसुखं बुधाः विदुः । अतः ईश्वरं भजध्वम् ॥३७॥ हे दैत्यबालकाः ! हृदि स्थितस्य हरेर्भजने कोऽतिप्रयासोऽस्ति ॥ ३८ ॥ द्रव्यपुत्रकलत्रादयः एते क्षणभङ्गुरायुषो मर्त्यस्य प्रियं किं कुर्वन्ति ॥ ३९ ॥ यथा द्रव्यपुत्रकलत्रादिकं सुखं नश्वरम् एवं पुण्यार्जितं स्वर्गादिकमपि नश्वरम् आत्मलब्धये तस्माद् भक्त्या हरिं भजत ॥४०॥ अयं नरो यत् संकल्प्य कर्माणि करोति तद्विपरीतं फलं प्राप्नोति॥४१॥

अधोक्षजालम्भ[1]मिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् ॥ तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३७ ॥ कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः ॥ स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥३८॥ रायः कलत्रं पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः ॥ सर्वेऽर्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत् प्रियं चलाः ॥३९॥ एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः ॥ तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेश भजतात्मलब्धये ॥४०॥ यदर्थ्यर्थेह कर्माणि विद्वन्मान्यः सकृन्नरः ॥ करोत्यतो विपर्यासममोघं विन्दते फलम् ॥४१॥ सुखाय दुखमोक्षाय संकल्प इह कर्मिणः ॥ सदाऽऽप्नोतीहया दुःखमनीहायाः सुखावृतः ॥४२॥ कामान् कामयते काम्यैर्यदर्थमिह पूरुषः ॥ स वै देहस्तु पारक्यो भंगुरो यात्युपैति च ॥४३॥ किमु व्यवहितापत्यदारागारधनादयः ॥ राज्यं कोशगजामात्यभृत्याप्ता ममतास्पदाः ॥४४॥ किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥ अनर्थैरर्थसङ्काशैर्नित्यानन्दमहोदधेः ॥ ४५ ॥ निरूप्यतामिह स्वार्थः कियान् देहभृतोऽसुराः ॥ निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४६ ॥

इह कर्मिणः सुखाय संकल्पोऽस्ति परं चेच्छया दुखं प्राप्नोति ॥४२॥ पुरुषो यदर्थं कामान् कामयते स देहस्तु पारक्यः क्षणभंगुरः ॥४३॥ तदा स्त्रीपुत्रगृहधनादयः पारक्याः इति किं वक्तव्यम् ॥ ४४ ॥ आत्मनः एतैर्नश्वरैस्तुच्छैः किम् ॥ ४५ ॥ हे असुराः ! क्लिश्यमानस्य देहिनः कर्मभिः कियानर्थः कथ्यताम् ॥ ४६ ॥



१ आलम्भं मनसा चिन्तनम् ।

देही देहं कर्म चाज्ञानेनैव विस्तारयते ॥४७॥ तस्मादर्थादयः कामाः यदधीनास्तं हरिं भजध्वम् ॥४८॥ स सर्वभूतानामात्मा हरिरन्तर्यामी ॥४९॥ असुराणां हरिभजनेऽनधिकार इति न वाच्यम् । कस्मात् । देवासुरमनुष्यगन्धर्वादयो हरिचरणाम्बुजं भजन्तः सन्तः स्वस्तिमन्तः स्युः यथा वयम् ॥ ५० ॥ हे दैत्यात्मजाः ! हरितोषणाय देवद्विजऋषित्वं बहुज्ञता च न ॥५१॥ दानतपइज्याः न । केवलभक्त्या हरिः प्रसन्नो भवति ॥५२॥ तस्मात् सर्वभूतानीश्वरे पश्यन्तः सन्तो हरौ भक्तिं कुरुत ॥५३॥ दैत्ययक्षराक्षसस्त्रीशूद्रादयः सर्वे ईश्वरं प्राप्ताः ॥५४॥ अस्मिन् लोके

कर्माण्यारभते देही देहेनात्मानुवर्तिना ॥ कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४७ ॥ तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ॥ भजतानीहयाऽऽत्मानमनीहं हरिमीश्वरम् ॥ ४८ ॥ सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ॥ भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥ ४९ ॥ देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ॥ भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम् ॥५०॥ नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ॥ प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥५१॥ न दानं न तपो नेज्या न शौचं न व्रतानि च ॥ प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥५२॥ ततो हरौ भगवति भक्तिं कुरुत दानवाः ॥ आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥५३॥ दैतेया यक्षरक्षांसि स्त्रियः शूद्रो व्रजौकसः ॥ खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥५४॥ एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ॥ एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम् ॥ ५५ ॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे प्रह्लादेन दैत्यपुत्रानुशासने ब्रह्मस्वरूपवर्णनं नाम सप्तमोऽध्यायः ॥७॥ नारद उवाच ॥ अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् ॥ जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम् ॥१॥ अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् ॥ आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा ॥२॥

गोविन्दे एकान्तभक्तिः सर्वत्र तदीक्षणं पुंसः एतावानेवार्थः ॥ ५५ ॥ इति श्रीभागवते चू० सप्तम० सप्तमोऽध्यायः ॥ ७ ॥ अष्टमेऽतिरुषा सूनुं निघ्नन्दैत्यो हतः स्वयम् ॥ आविर्भूय नृसिंहेन स च ब्रह्मादिभिः स्तुतः ॥१॥ नारद उवाच ॥ अथ सर्वे दैत्यसुताः निर्दोषं प्रह्लादवाक्यं जगृहुः । गुरुशिक्षितं न ॥ १ ॥ ततः आचार्यसुतो बालानां विपर्ययबुद्धिं दृष्ट्वा भीतः शीघ्रं राज्ञे न्यवेदयत् ॥ २ ॥

दैत्यस्तद् विप्रियं श्रुत्वा क्रोधेन चलद्गात्रः पुत्रं हन्तुं मनो दधे ॥ ३ ॥ पदाऽऽहतः सर्प इव श्वसन् बद्धाञ्जलिं समीपस्थितं पापया वक्रदृष्ट्या विलोकयन् जगाद॥४॥५॥ हे मंदात्मन्! हे कुलभेदकर! मच्छासनपराङ्मुखं त्वामद्य यमालयं नेष्ये ॥ ६ ॥ यस्य मम क्रोधात् त्रयो लोकाः कम्पंते तस्य मे शासनं कस्य बलेन व्यर्थं कृतं तदुच्यताम् ॥७॥ प्रह्लाद उवाच ॥ हे राजन्! स केवलं मे बल न। किंतु तव अन्येषां बलिनां च बलम्। येन ब्रह्मादयो वशं नीताः ॥८॥ स ईश्वरः इदं विश्वं सृजति पाति संहरति॥९॥ अतस्त्वमासुरं स्वभावं जहि। मनः समं कुरु। द्विषः केपि

श्रुत्वा तदप्रियं दैत्यो दुस्सहं तनयानयम् ॥ कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे ॥३॥ क्षिप्त्वा परुषया वाचा प्रह्लाद-मतदर्हणम् ॥ आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ॥४॥ प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम् ॥ सर्पः पदाऽऽहत इव श्वसन्प्रकृतिदारुणः ॥ ५ ॥ हे दुर्विनीत मन्दात्मन् कुलभेदकराधम ॥ स्तब्धं मच्छासनोद्धूतं नेष्ये त्वाऽद्य यमक्ष-यम् ॥ ६ ॥ क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः ॥ तस्य मेऽभीतवन्मूढ शासनं किंबलोऽत्यगाः ॥ ७ ॥ प्रह्लाद उवाच ॥ न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम् ॥ परेऽवरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥८॥ स ईश्वरः काल उरुक्रमोऽसावोजस्सहस्सत्त्वबलेन्द्रियात्मा ॥ स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥९॥ जह्यासुरं भावमिमं त्वमात्मनः समं मनो धत्स्व न सन्ति विद्विषः ॥ ऋतेऽजितादात्मन उत्पथस्थितात्तद्धि ह्यनन्तस्य महत्समर्हणम् ॥ १० ॥ दस्यून्पुरा षण्णविजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश ॥ जितात्मनोऽज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥ ११ ॥ हिरण्यकशिपुरुवाच ॥ व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ॥ मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विप्लवा गिरः ॥ १२ ॥ यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ॥ क्वासौ यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते ॥ १३ ॥

न सन्ति। सर्वत्र साम्येन मनसो धारणमेव भगवतः आराधनम्॥१०॥भवादृशाःपुरा कामादिषट्शत्रून् न जित्वा दश दिशःस्वयं जिताःमन्यन्ते साधोस्तु शत्रवःकुतःस्युः॥११॥हिरण्यकशिपुरुवाच ॥ हे मन्दात्मन्! निश्चितं त्वं मर्तुकामोऽसि। यस्त्वममर्यादं विकत्थसे॥१२॥ हे मन्दभाग्य! त्वया मदन्यो जगदीश्वरः युक्तः स क्वास्ति। यदि सर्वत्रास्ति तर्हि स्तम्भे कस्मान्न दृश्यते। प्रह्लादस्तं स्तम्भं निरीक्ष्य नमस्यन्नाह दृश्यते॥१३॥

यदि न दृश्येत तर्हि तव शिरो हरामि । त्वां हरिरद्य रक्षतु ॥ १४ ॥ एवं दुरुक्तैः सुतं पीडयन् सन् खड्गं प्रगृह्य सिंहासनादुत्पत्य स्वमुष्टिना स्तम्भं तताड ॥ १५ ॥ ततः स्तम्भे भीषणः शब्दो जातः । तं श्रुत्वा ब्रह्मादयः स्वस्थाननाशं मेनिरे ॥१६॥ पुत्रवधेप्सुर्दैत्यः सभामध्ये नादं श्रुत्वा भ्रमन् तस्याश्रयं न ददर्श । नादेन सर्वे दैत्यास्त्रासं प्रापुः ॥१७॥ तदा भगवान् निजभृत्यभाषितं सत्यं कर्तुं न मृगं न मानुषमद्भुतं रूपं धारयन् सन् सभायां स्तम्भेऽदृश्यत ॥१८॥ स दैत्यो ध्वनिं श्रुत्वा तदाश्रयं विलोकयन् स्तम्भमध्यान्निर्गतं नृमृगेन्द्ररूपं दृष्ट्वा नायं मृगो

सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ॥ गोपायेत हरिस्त्वाऽद्य यस्ते शरणमीप्सितम् ॥ १४ ॥ एवं दुरुक्तैर्मुहुर्दयन्रुषा सुतं महाभागवतं महासुरः ॥ खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं तताडातिबलः स्वमुष्टिना ॥ १५ ॥ तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत् ॥ यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामाप्ययमङ्ग मेनिरे ॥१६॥ स विक्रमन् पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ॥ अन्तस्सभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥१७॥ सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् ॥१८॥ स सत्त्वमेवं परितो विपश्यन्स्तम्भस्य मध्यादनुनिर्जिहानम् ॥ नायं मृगो नापि नरो विचित्रमहो किमेतन्मृगेन्द्ररूपम् ॥ १९ ॥ मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम् ॥ प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम् ॥ २० ॥ करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम्[1] ॥ स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥ २१ ॥ दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यमम्॥ चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम् ॥ २२ ॥

नापि नरः अहो । एतत् किमिति जगाद ॥१९॥ एवं तस्य तर्कयतः सतोऽग्रतो नृसिंहरूपो हरिः प्रादुर्भूतः । तदा तप्तसुवर्णलोचनं जृम्भिताननम् ॥२०॥ करालदंष्ट्रं तीक्ष्णजिह्वं शंकुवदूर्ध्वकर्णं गिरिगुहावत् प्रसृतमुखम् ॥ २१ ॥ दिविस्पृशत्कायं स्वग्रीवं विशालवक्षःस्थलं कृशोदरं नखायुधं गौरैस्तनुरोमभिर्व्याप्तम् ॥ २२ ॥

१ भ्रुकुटीयुक्तेनमुखेनोल्बणं भयंकरम् ।

ईदृशं नृसिंहं दृष्ट्वा जगाद । अहो ! महामायिना हरिणाऽयं मम वधोपायश्चिन्तितः । अस्तु अनेन किम् ॥२३॥ एवं ब्रुवन् दैत्यकुञ्जरो नृसिंहमभ्यपतत् । तदा नृसिंहतेजसि वह्नौ पतङ्ग इवादृष्टोऽभूत् ॥२४॥ ततो दैत्यो रुषा गदया नृसिंहं जघान ॥ २५ ॥ तदैव नृसिंहेन गरुडेन पन्नग इव गृहीतः सन् हस्तात् निस्सृत्य ॥२६॥ पुनः खड्गचर्मणी प्रगृह्य वेगेन नृसिंहं ययौ ॥ २७ ॥ तदा हरिरुच्चस्वरेणाट्टहासं कृत्वा तेन

दुरासदं सर्वनिजेतरायुध[1]प्रवेकविद्रावितदैत्यदानवम् ॥ प्रायेण मेऽयं हरिणोरुमायिना वधः स्मृतोऽनेन समुद्यतेन किम् ॥ २३ ॥ एवं ब्रुवंस्त्वभ्यपतद्गदायुधो नदन्नृसिंहं प्रति दैत्यकुञ्जरः ॥ अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तदा ॥ २४ ॥ न तद्विचित्रं खलु सत्त्वधामनि स्वतेजसा योऽनु पुराऽपिबत्तमः ॥ ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया ॥ २५ ॥ तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत् ॥ स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडतो यद्वदहिर्गरुत्मतः ॥२६॥ असाध्वमन्यन्त हृतौकसोऽमरा घनच्छदा[2] भारतसर्वधिष्ण्यपाः ॥ तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृहरिं महासुरः ॥ पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे ॥२७॥ * तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः ॥ कृत्वाऽट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः ॥ २८ ॥ विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाऽऽखुं कुलिशाक्षतत्वचम् ॥ द्वार्यूरु[3] आपात्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम् ॥ २९ ॥ संरम्भदुष्प्रेक्ष्यकरालोचनो व्यात्ताननान्तं विलिहन् स्वजिह्वया ॥ असृग्लवाक्तारुणकेसराननो यथाऽन्त्रमाली द्विपहत्यया हरिः ॥ ३० ॥ नखांकुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान् ॥ अहन् समन्तान्नखशस्त्रपार्ष्णिभिर्दोर्दण्डयूथोऽनुपथान् सहस्रशः ॥ ३१ ॥

मीलिताक्षं दैत्यं गृहीत्वा ॥२८॥ सर्पः आखुमिव सभायां द्वार्यूरौ निपात्य तस्य हृदयं संध्यायां नखैर्विददार ॥ २९ ॥ ततः संग्रामे तद्रक्तबिन्दुभिः सिक्तः करालोचनो बभूव ॥३०॥ ततो मृतं दैत्यं विसृज्य धृतायुधान् तस्यानुचरान् नखशस्त्रपार्ष्णिभिरहन् ॥ ३१ ॥

१ आयुधप्रवेकाः शस्त्रोत्तमाः । २ मेघान्तरिताः । * "धराधराभो भयभीतलोचनो ननाद मातङ्गसमानसत्स्वनः ।" इत्यधिकः पाठः । ३ करे=ऊरौ ।

तदा तस्य जटाभिः कंपिताः मेघाः व्यशीर्यन्त । तद्दृष्ट्या ग्रहाः निष्प्रभाः अभवन् । श्वासहताः समुद्राश्चुक्षुभुः ॥ ३२ ॥ तत्पादपीडिता मही चचाल । तस्य वेगेन शैलाः उत्पेतुः । तत्तेजसा खं दिशो न रेजिरे ॥३३॥ ततः सभायां नृपासने स्थितं विभुं भयात् कोऽपि नासेवत ॥३४॥ तदा हरिणा त्रिलोकशत्रुं हतं निशम्य सुरस्त्रियः पुष्पैर्हरिं ववृषुः ॥ ३५ ॥ विमानावलिभिराकाशं व्याप्तमासीत् । देवाः दुन्दुभीन्

सटावधूता जलदाः परापतन्ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः ॥ अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिग्गिभा- विचुक्रुशुः ॥ ३२ ॥ द्यौस्तत्सटोत्क्षिप्तविमानसंकुला प्रोत्सर्पत क्ष्मा च पदाऽतिपीडिता ॥ शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ॥३३॥ ततः सभायामुपविष्टमुत्तमे नृपासने संभृततेजसं विभुम् ॥ अलक्षितद्वैरथमत्यम- र्षणं प्रचण्डवक्त्रं न बभाज कश्चन ॥ ३४ ॥ निशम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे ॥ प्रहर्षवेगोत्क- लितानना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥ ३५ ॥ तदा विमानावलिभिर्नभस्तलं दिदृक्षतां संकुलमास नाकिनाम् ॥ सुरानका दुन्दुभयोऽथ जघ्निरे गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः ॥३६॥ तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः ॥ ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥ ३७ ॥ मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः ॥ यक्षाः किंपुरुषास्तात वेतालाः सिद्धकिन्नराः ॥ ३८ ॥ ते विष्णुपार्षदास्सर्वे सुनन्दकुमुदादयः ॥ मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम् ॥ ईडिरे नरशार्दूलं नातिदूरचराः पृथक् * ॥ ३९ ॥ ब्रह्मोवाच ॥ नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे ॥ विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥ ४० ॥

नेदुः गन्धर्वाः जगुः । अप्सरसो ननृतुः ॥३६॥ तत्र ब्रह्मेन्द्रगिरिशादयः ऋषयः पितरः सिद्धाः विद्याधराः सर्पाः ॥ ३७ ॥ मनवः प्रजापतयो गन्धर्वाप्सरसश्चारणाः यक्षाः किंपुरुषा वेतालाः सिद्धाः किन्नराः ॥ ३८ ॥ विष्णुपार्षदाश्च बद्धाञ्जलिपुटाः सन्तो दूरादेव पृथक् पृथक् नृहरिं तुष्टुवुः ॥ ३९ ॥ ब्रह्मोवाच ॥ हे अनन्त ! अनन्तशक्तये पवित्रकर्मणे ते नमोऽस्तु ॥ ४० ॥

१ द्वैरथः प्रतियोद्धा । * ''यन्त्रमन्त्रादिभिः स्तोत्रैरष्टकैः कवचैर्हरिम् ।'' इत्यधिकः पाठः ।

रुद्र उवाच॥ हे भगवन्! नायं तव कोपावसरः। तस्मात् तत्सुतं स्वभक्तं पाहि॥४१॥ इन्द्र उवाच ॥ हे नृहरे! अस्मान् रक्षता भवता स्वभागा दैत्यादानीताः। इतः ऊर्ध्वं क्रोधं संहर॥४२॥ ऋषय ऊचुः। हे शरण्यपालक! विकुण्ठितं दैत्यं हत्वा पुनरपि तपः कुरुतेत्यस्माकमाज्ञां कृतवानसि। तस्मै ते नमः॥४३॥ पितर ऊचुः। श्राद्धानि यो बलाद् बुभुजे तस्योदरात् तानि पिण्डोदकादीनि य आहृतवान् तस्मै ते नमः॥४४॥ सिद्धा ऊचुः



श्रीरुद्र उवाच॥ कोपकालो युगांतस्ते हतोऽयमसुरोऽल्पकः॥ तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल॥४१॥ इन्द्र उवाच॥ प्रत्यानीताः परम भवता त्रायता नः स्वभागा दैत्याक्रांतं हृदयकमलं त्वद्गृहं प्रत्यबोधि॥ कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां नहि बहुमता नारसिंहापरैः किम्॥४२॥ ऋषय ऊचुः॥ त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज॥ तद्विप्रलुप्तममुनाऽद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः॥४३॥ पितर ऊचुः॥ श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु[1]॥तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे॥४४॥ सिद्धा ऊचुः॥ यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन॥ नानादर्पं तन्नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह॥४५॥ विद्याधरा ऊचुः॥ विद्यां पृथग्धारणयाऽनुराद्धां[2] न्यषेधदज्ञो बलवीर्यदृप्तः॥ स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम्॥४६॥ नागा ऊचुः॥ येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः॥ तद्वक्षःपाटनेनासां दत्तानन्द नमोस्तु ते॥४७॥ मनव ऊचुः॥ मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः॥भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किंकरान्॥४८॥



हे नृसिंह! योऽस्माकं योगसिद्धां गतिं हृतवान् तं गर्वितं भवान् नखैर्विददार तस्मै ते नमः॥४५॥ विद्याधरा ऊचुः। यो नो विद्यां न्यषेधत् स एष पशुवत् त्वया हतः त्वां नताः स्मः॥४६॥ नागा ऊचुः। येन नः स्त्रियो रत्नानि च हृतानि तद्वक्षोविदारणेन स्त्रीणामस्माकं चानन्दो दत्तः। तस्मै ते नमः॥४७॥ मनव ऊचुः॥ तवाज्ञाकारिणो वयं, येन नो मर्यादा हृताः स दैत्यस्त्वया हतः। हे प्रभो! पुनश्च नः शिक्षय॥४८॥

---

१ 'अपि तिलाम्ब्वसम्यः' इ० पा०। २ प्राप्ताम्।

प्रजापतय ऊचुः । हे सत्त्वमूर्ते ! येन प्रजासर्गो निषिद्धः स दैत्यस्त्वया हतः सन् शेते । अतः परं तवाज्ञया प्रजाः सृजामः ॥४९॥ गन्धर्वा ऊचुः । हे प्रभो ! त्वदीयाः वयं येन स्ववशे कृताः स त्वया मृत्युं नीतः । योग्यमिदम् ॥ ५० ॥ चारणा ऊचुः ॥ हे हरे ! वयं तवाङ्घ्रि-पङ्कजं मोक्षाय श्रिताः । यस्माद् साधुभयजनको दैत्यस्त्वया हतः ॥५१॥ यक्षा ऊचुः ॥ वयं दैत्येन शिबिकावाहकत्वं प्रापिताः स त्वया

प्रजापतय ऊचुः ॥ प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः ॥ स एष त्वया भिन्नवक्षा नु शेते जगन्मङ्गलं सत्त्वमूर्तेऽवतारः ॥ ४९ ॥ गन्धर्वा ऊचुः ॥ वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः ॥ स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ५० ॥ चारणा ऊचुः ॥ हरे तवाङ्घ्रि-पङ्कजं भवापवर्गमाश्रिताः ॥ यदेष साधुहृच्छयस्त्वयाऽसुरः समापितः ॥ ५१ ॥ यक्षा ऊचुः ॥ वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम् ॥ स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पञ्चतां पञ्चविंश ॥ ५२ ॥ किंपुरुषा ऊचुः ॥ वयं किंपुरुषास्त्वं तु महापुरुष ईश्वरः ॥ अयं कुपुरुषो नष्टो धिक्कृतः साधु-भिर्यदा ॥ ५३ ॥ वैतालिका ऊचुः ॥ सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे ॥ यस्तां व्यनैषी-द्भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथाऽऽमयः ॥ ५४ ॥ किन्नरा ऊचुः ॥ वयमीश किन्नरगणास्तवानुगा दिति-जेन विष्टिममुनाऽनुकारिताः ॥ भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥ ५५ ॥

मृत्युं नीतः ॥ ५२ ॥ किंपुरुषा ऊचुः । वयं किंपुरुषास्त्वं तु महापुरुष ईश्वरः । अयं कुपुरुषस्त्वया हतः ॥ ५३ ॥ वैतालिका ऊचुः ॥ हे भगवन् ! वयं तव यशो गीत्वा सत्संपत्तिं लभामहे । तां यो हृतवान् स त्वया हतः एतद् दिष्ट्या ॥५४॥ किन्नरा ऊचुः । हे हरे ! तव किंकराः वयं दितिजेन संतापिता स त्वया हतः ॥५५॥

---

१ चतुर्विंशतितत्त्वनियामक । २ निर्मूल्यं कर्म ।

विष्णुपार्षदा ऊचुः हे भगवन्! लोकानां मङ्गलदं नृसिंहरूपमद्यैव दृष्टम्। हे ईश! सोऽयं ते किंकरो विप्रशप्तः। तस्य नाशमनुग्रहाय विद्मः ॥५६॥
इति श्रीभागवते चू० सप्तम० अष्टमोऽध्यायः॥८॥ नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालकः॥ कोपं शमयन्नस्तौषीन्नृसिंहमतिभीषणम्॥१॥ उग्रो-
ऽप्यनुग्र एवायं स्वभक्तानां नृकेसरी। केसरीव स्वपोतानामन्येषामुग्रविग्रहः॥२॥ नारद उवाच। एवं दूरतः स्थित्वा स्तुवन्तो ब्रह्माद्याः देवास्तत्समीपे
गन्तुं नाशकन्॥१॥ तदा देवैः प्रेषिता लक्ष्मीस्तदद्भुतं रूपं दृष्ट्वा शङ्किता सती समीपं न जगाम॥२॥ ततो ब्रह्मा समीपे स्थितं प्रह्लादं जगाद



विष्णुपार्षदा ऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म ॥ सोयं ते विधिकर ईश विप्रशप्त-
स्तस्येदं निधनमनुग्रहाय विद्मः ॥ ५६ ॥ इति श्रीभागवते म० नृसिंहावतारे हिरण्यकशिपुदैत्यवधे नृसिंहस्तवो
नामाष्टमोऽध्यायः ॥ ८ ॥ नारद उवाच ॥ एवं सुरादयः सर्वे ब्रह्मरुद्रपुरस्सराः ॥ नोपैतुमशकन् मन्युसंरम्भं सुदुरा-
सदम् ॥१॥ साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ॥ अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शङ्किता ॥ २ ॥ प्रह्लादं
प्रेषयामास ब्रह्माऽवस्थितमन्तिके ॥ तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥ तथेति शनकै राजन् महाभाग-
वतोऽर्भकः ॥ उपेत्य भुवि कायेन ननाम विहिताञ्जलिः ॥ ४ ॥ स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया
परिप्लुतः ॥ उत्थाप्य तच्छीर्ष्ण्यदधात्कराम्बुजं कालाहिवित्रस्तधियां कृताभयम् ॥ ५ ॥ स तत्करस्पर्शधुताखि-
लाशुभः सपद्यभिव्यक्तपरात्मदर्शनः ॥ तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ६ ॥ अस्तौषीद्ध-
रिमेकाग्रमनसा सुसमाहितः ॥ प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥७॥ प्रह्लाद उवाच ॥ ब्रह्मादयः सुरगणा मुनयोऽथ
सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः ॥ नाराधितुं पुरुगुणैरधुनापि पिप्रुः किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥८॥



हे वत्स! तव पित्रे कुपितं प्रभुं प्रशमय इत्युक्त्वा प्रेषयामास॥३॥ प्रह्लादस्तथेत्युक्त्वा शनैः समीपं गत्वा कृताञ्जलिः सन् भुवि कायेन ननाम॥४॥
नृहरिः स्वपादमूले पतितं बालं विलोक्य कृपया तमुत्थाप्य तन्मस्तके कराम्बुजं दधौ॥५॥ तदा भगवत्करस्पर्शात् गताशुभो हृष्टरोमाऽश्रुलोचनः
॥६॥ प्रेमगद्गदया वाचा हृदि तं ध्यायन् तुष्टाव॥७॥ प्रह्लाद उवाच॥ ब्रह्मादयः सुरगणाः मुनयः सिद्धा बहुभिर्वक्ष्यमाणैर्गुणैरपि यमाराधयितुम-

शक्ताः स हरिरुग्रजातेर्मम कथं संतोषं प्राप्तुमर्हति ॥८॥ किंच धनं सत्कुले जन्म सौन्दर्यं तपः पाण्डित्यं कान्तिः प्रतापः शरीरं बलमित्यादयो द्वादशापि गुणा ईश्वरस्याराधनाय न भवन्ति। यतः केवलं भक्त्यैव हरिर्गजेन्द्राय तुष्टोऽभवत् ॥ ९॥ ज्ञानसत्यादिद्वादशगुणयुक्तादपि भगवच्चरणारविन्दविमुखात् विप्रात् श्वपचं भक्तियुक्तं वरिष्ठं मन्ये। यतः स सर्वं कुलं पुनाति ॥१०॥ अयं तुच्छजनादात्मनः पूजां नेच्छति। स तु निज-

मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥ नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय॥९॥ विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम्॥ मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं न तु भूरिमानः ॥ १० ॥ नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ॥ यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ११ ॥ तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि यथामनीषम् ॥ नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ १२ ॥ सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश न चोद्विजन्तः ॥ क्षेमाय भूतय उतात्मसुखाय चास्य विक्रीडितं भगवतो रुचिरावतारैः ॥ १३ ॥ तद्यच्छ मन्युमसुरश्च हतस्त्वयाऽद्य मोदेत साधुरपि वृश्चिकसर्पहत्या ॥ लोकाश्च निर्वृतिमिताः प्रतियान्ति सर्वे रूपं नृसिंह विभयाय जनाः स्मरन्ति ॥ १४ ॥ नाहं बिभेम्यजित तेऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ॥ आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥

लाभेन पूर्णः ॥११॥ अहं नीचोऽपि यथामति तस्य महिमानं वर्णयामि। येन पुमान् पूयेत ॥१२॥ हे ईश ! सर्वेऽमी ब्रह्मादयो बिभ्यतस्तव भक्ताः सन्ति न तु वयमिव वैरभावेन। तव रुचिरावतारैः क्रीडा विश्वस्य क्षेमाय न तु भयोत्पादनाय ॥१३॥ अतो मन्युं नियच्छ। यदर्थं मन्युः स च दैत्योऽधुनैव हतः। लोकाश्च सुखं प्राप्ताः सन्तः क्रोधोपशमं प्रतीक्षन्ते ॥१४॥ हे अजित ! इदं रूपं दृष्ट्वा न बिभेमि ॥ १५ ॥

१ मानम्। २ यथा मुखे कृता तिलकादिश्रीः प्रतिबिम्बस्य भवति तथा। ३ रभस आटोपः। ४ क्षतजाक्तकेसर–।

हे दीनवत्सल ! स्वकर्मभिर्बद्धः संसाराद्भीतोऽहम् ॥ एवंभूतं मां तवाङ्घ्रिकमलं प्रति कदाऽऽह्वयसि ॥१६॥ हे भूमन् ! अहं जन्ममरणाभ्यां दह्यमानः सन् नानायोनिषु भ्रमामि । अतस्तन्नाशकरं दास्ययोगं वद ॥१७॥ हे नृसिंह ! अहं त्वद्दासः सन् तव लीलाकथाः अनुगृणन् महादुःखानि न गणयिष्यामि ॥ १८ ॥ हे नृसिंह ! बालस्य पितरौ रक्षकौ न भवतः । यतस्ताभ्यां पाल्यमानस्यापि दुःखम् । समुद्रे मज्जतो

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनाद् ग्रसतां[1] प्रणीतः ॥ बद्धःस्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं प्रीतोऽप-
वर्गशरणं ह्वयसे कदा नु ॥१६॥ यस्मात् प्रियाप्रियवियोगसयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः ॥ दुःखौ-
षधं तदपि दुःखमतद्धियाऽहं[2] भूमन् भ्रमामि वद मे तव दास्ययोगम् ॥ १७ ॥ सोऽहं प्रियस्य सुहृदः परदेवताया
लीलाकथास्तव नृसिंह विरिञ्चिगीताः ॥ अञ्जस्तितर्म्यनुगृणन्[3] गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १८ ॥
बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमुदन्वति मज्जतो नौः ॥ तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्टस्ताव-
द्विभो तनुभृतां त्वदुपेक्षितानाम् ॥१९॥ यस्मिन् यतो यर्हि च येन च यस्य यस्माद्यस्मै यथा यदुत यस्त्वपरः परो
वा ॥ भावः करोति विकरोति पृथक्स्वभावः संचोदितस्तदखिलं भवतः स्वरूपम् ॥ २० ॥ माया मनः सृजति कर्म-
मयं बलीयः कालेन चोदितगुणानुमतेन पुंसः ॥ छन्दोमयं यदजयाऽर्पितषोडशारं[4] संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥
॥ २१ ॥ स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्य[5]विसर्ग[6]शक्तिः ॥ चक्रे विसृष्टमजयेश्वर-
षोडशारे निष्पीडयमानमुपकर्ष विभो प्रपन्नम् ॥ २२ ॥



नौः रक्षिका तथापि कदाचित् तया सह मज्जति । अतः सर्वत्र त्वमेव रक्षकोऽसि ॥ १९ ॥ हे भगवन् ! सप्तविभक्त्यर्थरूपस्त्वमेवासि ॥ २० ॥ हे अज ! षोडश विकाराः यस्मिन् तत् संसारचक्रात्मकं मनः ॥ २१ ॥ अतः संसारचक्रे इक्षुदण्डवद् निष्पीडयमानं प्रपन्नं मां स्वसमीपं नय ॥ २२ ॥

१ ग्रसतां हिंस्राणां मध्ये प्रणीतः प्रक्षिप्तः । २ अतद्धिया अदुःखबुद्ध्या, देहाद्यभिमानेनेति यावत् । ३ अञ्जसा । ४ अराः विकाराः । ५ विसृज्यं कार्यम् । ६ विसर्गः साधनम् ।

हे विभो! मया स्वर्गे याः संपदो लोकपालानां दृष्टास्ता अस्मत्पितुः कोपेन विध्वस्ताः। स च त्वया हतः ॥२३॥ तस्माद् भोगान् नेच्छामि किंतु तव सानिध्यम् ॥२४॥ किंच कर्णप्रिया आशिषः क्व रोगाणामुत्पत्तिस्थानं कलेवरं क्व। एवं जानन्नपि जनो विरक्तो न भवति ॥२५॥ तमोधिकेऽसुरकुले जातोऽहं क्व। तव कृपा क्व। यतः सकलसंतापहरः प्रसादो मे शिरसि दत्तः ॥ २६ ॥ ब्रह्मादय उत्तमा अयमसुरो नीच-

दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति यां जनोऽयम्। येऽस्मत्पितुः कुपितहास-विजृम्भितभ्रूविस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ २३ ॥ तस्मादमूस्तनुभृतामहमाशिषो ज्ञ आयुः श्रियं विभ-वमैन्द्रियमाविरिञ्च्यात्। नेच्छामि ते विलुलितानुरुविक्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ २४ ॥ कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः क्वेदं कलेवरमशेषरुजां विरोहः। निर्विद्यते न तु जनो यदपीति विद्वान् कामानलं मधुलवैः शमयन् दुरापैः ॥ २५ ॥ क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन् जातः सुरेतरकुले क्व तवानु-कम्पा। न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ २६ ॥ नैषा परावरमति-र्भवतो ननु स्याज्जन्तोर्यथाऽऽत्मसुहृदो जगतस्तथापि। संसेवया सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न परा-वरत्वम् ॥ २७ ॥ एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रतपन् प्रसंगात्। कृत्वाऽऽत्मसात्सुरर्षिणा भगवन् गृहीतः सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २८ ॥ मत्प्राणरक्षणमनन्त पितुर्वधश्च मन्ये स्वभृत्य-ऋषिवाक्यमृतं विधातुम्। खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥

इत्येषा प्राकृतस्य मतिः ॥ २७ ॥ हे नरसिंह ! यथा त्वयाऽनुकम्पितोऽस्मि एवं नारदेन पूर्वमनुगृहीतः सोहं कथं त्वद्भृत्यसेवां विसृजामि ॥ २८ ॥ हे अनन्त ! मत्प्राणरक्षणं मत्पितुर्वधश्च यद् द्वयं त्वया कृतं तत् स्वभृत्यवाक्यं सत्यं कर्तुं कृतमिति मन्ये ॥ २९ ॥

१ भोगपरिपाकज्ञः। २ श्रवणमेव सुखं यासु ता मिथ्याभूताः। ३ कामरूपाग्निम्। ४ ययाऽनुकम्पया। ५ जगत आत्मसुहृदो भवत इत्यन्वयः। ६ कामाविष्टजनप्रसंगेन। ७ शिरः।

त्वं जगत् सृष्ट्वा तदनुप्रविष्टः सन् हन्तेव रक्षक इव च प्रतीयसे ॥ ३० ॥ इदं कार्यकारणात्मकं जगत् त्वमेव न त्वत्तः पृथक् । त्वं तु ततोऽन्यः । अतः स्वः पर इति या बुद्धिः सा व्यर्थैव ॥ ३१ ॥ यस्त्वं प्रलये इदं जगदात्मनि कृत्वा निरीहः सन् प्रलयोदके शयनं करोषि ॥ ३२ ॥ तस्यैव तव नाभेः सकाशात् लोकपद्मं बभूव ॥३३॥ तत्संभवो ब्रह्मा पद्मादन्यदपश्यमानः सन् त्वां स्थितमपि नापश्यत् ॥३४॥

एकस्त्वमेव जगदेतदमुष्य यत्त्वमाद्यन्तयोः पृथगवेष्यसि मध्यतश्च ॥ सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ॥ ३० ॥ त्वं वा इदं सदसदीश भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था ॥ यद्यस्य जन्म निधनं स्थितिरीक्षणं च तद्वै तदेव वसुकालवदष्टितर्वोः ॥ ३१ ॥ न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये शेषेऽऽत्मना निजसुखानुभवो निरीहः ॥ योगेन मीलितदृगात्मनि पीतनिद्रस्तुर्ये स्थितो नतु तमो न गुणांश्च युङ्क्षे ॥ ३२ ॥ तस्यैव ते वपुरिदं निजकालशक्त्या संचोदितप्रकृतिधर्मण आत्मगूढम् ॥ अम्भस्यनन्तशयनाद्विरमत्समाधेर्नाभेरभूत् स्वकणिकावटवन्महाब्जम् ॥ ३३ ॥ तत्संभवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स्वबहिर्विचिन्त्य ॥ नाविन्ददब्दशतमप्सु निमज्जमानो जातेऽङ्कुरे कथमुहोपलभेत बीजम् ॥ ३४ ॥ स त्वात्मयोनिरतिविस्मित आस्थितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः ॥ त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये विततं ददर्श ॥ ३५ ॥ एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ॥ मायामयं सदुपलक्षितसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चिः ॥ ३६ ॥ तस्मै भवान्हयशिरस्तनुवं च बिभ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ ॥ हत्वाऽऽनयच्छ्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रियतमां तनुमामनन्ति ॥ ३७ ॥

तदा विस्मितो ब्रह्मा पद्ममास्थितः सन् तपसेदृशं त्वां ददर्श ॥ ३५ ॥ एवं सहस्रमुखाङ्घ्रिशिरआदिकं सर्वाभरणायुधैर्युतं त्वां दृष्ट्वा मुदमाप ॥ ३६ ॥ तदा त्वं हयग्रीवमूर्तिं धृत्वा मधुकैटभौ दैत्यौ हत्वा ब्रह्मणे श्रुतिगणान् समर्पितवान् ॥ ३७ ॥

१ विरामं करोषि । सन्मात्रतया कारणत्वेन च वर्तसे इत्यर्थः । २ 'अवस्यसि' इ० पा० । ३ गुणैः । ४ बीजम् । ५ अवस्थात्रयातीते स्वरूपे । ६ कणिका बीजम् । ७ उह=अहो ।

एवं त्वं राममत्स्याद्यवतारैर्लोकान् धर्मं च पालयसि दुष्टान् हंसि च ॥ ३८ ॥ हे विकुण्ठनाथ ! हर्षशोकादिभिरार्तं कामातुरं मम मनस्तव कथासु न प्रीतिं करोति । एवं भूते मनसि सति तव तत्त्वं कथं विचारयामि ॥ ३९ ॥ हे अच्युत ! जिह्वा शिश्नः उदरं कर्णौ नासिका चक्षुः कर्मेन्द्रियाणि एवं सर्वं सपत्न्यः पतिमिव मां त्रोटयन्ति ॥ ४० ॥ हे नित्यमुक्त ! एवं भववैतरण्यां पतितं जनं पालय ॥ ४१ ॥ हे विभो !

इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसि हंसि जगत्प्रतीपान् । धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥ ३८ ॥ नैतन्मनस्तव कथासु विकुण्ठनाथ संप्रीयते दुरितदुष्टमसाधु तीव्रम् । कामातुरं हर्षशोकभयैषणार्तं तस्मिन्कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥ जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् । घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥४०॥ एवं जनं निपतितं भववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतम् । पश्यञ्जनं स्वपरविग्रहवैरमैत्रं हन्तेति पारचर पीपृहि मूढमद्य ॥ ४१ ॥ कोन्वत्रतेऽखिलगुरो भगवन्प्रयास उत्तारणेऽस्य भव संभवलोपहेतोः । मूढेषु वै महदनुग्रह आर्तबन्धो किं तेन ते प्रियजनाननुसेवतां नः ॥४२॥ नैवोद्विजे परदुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः । शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥ प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरन्ति विजनेन परार्थनिष्ठाः । नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ॥४४॥ यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम् । तृप्यन्ति नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥ मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः । प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वाऽत्र तु दाम्भिकानाम् ॥ ४६ ॥

अस्योत्तारणे ते कोऽतिप्रयासोऽस्ति ॥ ४२ ॥ हे सर्वोत्तम ! वैतरण्याः सकाशात् न बिभेमि । किंतु त्वद्विमुखान् जनान् शोचामि ॥ ४३ ॥ एतान् कृपणान् विहाय मुक्तिं नेच्छामि । अस्य जनस्य त्वत्तोऽन्यं रक्षकं न पश्यामि ॥४४॥ कामुका बहुदुःखं प्राप्ता अपि गृहमेधिसुखे न तृप्यन्ति ॥ ४५ ॥ हे पुरुष ! मौनव्रततपआदयो मोक्षहेतवोऽपि दाम्भिकानां जीवनोपाया भवन्ति ॥ ४६ ॥

१ 'स्वकर्मपतितम्' इ० पा० ।

कार्यकारणे एव ते रूपे वेदेन प्रकाशिते । अत्र योगिनस्तयोरनुगतं त्वां पश्यन्ति ॥ ४७ ॥ हे हरे ! पञ्च महाभूतानि तन्मात्राः प्राणादि च
मनोवचोभ्यां प्रकाशितं सर्वं त्वमेवासि ॥ ४८ ॥ एते गुणाद्यभिमानिनो देवा निरुपाधिं त्वां न विदन्ति । एवं विचार्य ज्ञानिनोऽध्ययना-
दिव्यापारात् शान्ति प्राप्नुवन्ति ॥ ४९ ॥ हे उरुगाय ! अयं जनो नमस्कारः १, स्तुतिः २, सर्वकर्मार्पणं ३, परिचर्या ४, चरणस्मृतिः ५,
कथाश्रवणम् ६, एतद्रूपया षडङ्गसेवया विना त्वयि भक्तिं कथं लभेत । अतस्त्वद्दास्यस्य योग्यमेव देहि ॥५०॥ नारद उवाच ॥ प्रह्लादेन

रूपे इमे सदसती तव वेदसृष्टे बीजाङ्कुराविव न चान्यदरूपकस्य ॥ युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन
वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥ त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ॥
सर्वं त्वमेव सगुणो विगुणश्च भूमन् नान्यत्त्वदस्त्यपि मनो वचसा निरुक्तम् ॥४८॥ नैते गुणा न गुणिनो महदादयो
ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः ॥ आद्यन्तवन्त उरुगाय विदन्ति हि त्वामेवं विमृश्य सुधियो विरमन्ति
शब्दात् ॥ ४९ ॥ तत्तेऽर्हत्तम नमः स्तुतिकर्म पूजाकर्मस्मृतिश्चरणयोः श्रवणं कथायाम् ॥ संसेवया त्वयि विनेति
षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत ॥ ५० ॥ नारद उवाच ॥ एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ॥
प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत ॥ ५१ ॥ श्रीभगवानुवाच ॥ प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम ॥ वरं वृणी-
ष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५२ ॥ मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे ॥ दृष्ट्वा मां न पुनर्जन्तु-
रात्मानं तप्तुमर्हति ॥ ५३ ॥ प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः ॥ श्रेयस्कामा महाभागाः सर्वासामाशिषां
पतिम् ॥ ५४ ॥ एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ॥ एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५५ ॥ इति
श्रीभागवते म० सप्तमस्कन्धे प्रह्लादचरिते भगवत्स्तवो नाम नवमोऽध्यायः ॥ ९ ॥

स्तुतः प्रीतो नृहरिः क्रोधं शमयन् तमाह ॥५१॥ श्रीभगवानुवाच ॥ हे प्रह्लाद ! तव भद्रम् । अहं ते प्रीतः अभीष्टं वरं वृणीष्व ॥५२॥ जनानां
मे दर्शनं दुर्लभं जन्तुर्मां दृष्ट्वा पुनर्दुःखं प्राप्तुं नार्हति ॥ ५३ ॥ श्रेयस्कामाः साधवः सर्वभावेन मां तोषयन्ति ॥ ५४ ॥ इति लोकप्रलोभनैर्वरैः
प्रलोभ्यमानोऽप्येकान्तभक्तित्वात् प्रह्लादो वरान् नैच्छत् ॥ ५५॥ इति श्रीभागवते महापुराणे चूर्णिकायां सप्तमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

दशमे त्वनुगृह्यासुं भक्तमन्तर्हिते हरौ । प्रसङ्गाद् हरिणा रुद्रे कृतोऽनुग्रह ईर्यते ॥ १ ॥ नारद उवाच ॥ प्रह्लादो वरप्रदानादिकं भक्तियोगस्य विघ्नकर्तृ ज्ञात्वा केशवं प्राह ॥१॥ प्रह्लाद उवाच ॥ हे नृहरे ! अहं मुमुक्षुस्त्वामुपाश्रितः । अतो मां वरैर्मा प्रलोभय ॥ २ ॥ हे भगवन् ! त्वं भक्तलक्षणपरीक्षार्थं संसारबीजे कामे भक्तं योजयसि ॥ ३ ॥ यः सेवकस्त्वत्तः कामान् वाञ्छते स सेवको न ॥ ४ ॥ यः स्वामी भृत्यात् सेवां वाञ्छति स स्वामी न ॥ ५ ॥ अहं निष्कामस्त्वद्भक्तः । त्वं च मत्तः सेवाभिलाषरहितः स्वामी । अतः आवयोः न अन्यथा

नारद उवाच ॥ भक्तियोगस्य तत्सर्वमन्तरायतयार्भकः ॥ मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥ १ ॥ प्रह्लाद उवाच ॥ मा मां प्रलोभयोत्पत्त्या सक्तं कामेषु तैर्वरैः ॥ तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥ भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत् ॥ भवान् संसारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ३ ॥ नान्यथा तेऽखिलगुरो घटेत करुणात्मनः ॥ यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ॥ ४ ॥ आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ॥ न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ॥५॥ अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ॥ नान्यथेहावयोरर्थो राजसेवकयोरिव ॥६॥ यदि रासीश मे कामान् वरांस्त्वं वरदर्षभ ॥ कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥७॥ इंद्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ॥ ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना ॥८॥ विमुञ्चति यदा कामान्मानवो मनसि स्थितान् ॥ तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते ॥ ९ ॥ नमो भगवते तुभ्यं पुरुषाय महात्मने ॥ हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥१०॥ नृसिंह उवाच ॥ नैकान्तिनो मे मयि जात्विहाशिष आशासतेऽमुत्र च ये भवद्विधाः ॥ अथापि मन्वन्तरमेतदत्र दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ ११ ॥

प्रयोजनम् ॥ ६ ॥ हे वरदर्षभ ! यदि मे वरान् ददासि तर्हि मम हृदि कामा न विशन्तु । एवं त्वत्तो वरं वृणे ॥७॥ मानवो मनःस्थितान् कामान् यदा मुञ्चति तर्ह्येव त्वत्समानैश्वर्याय योग्यो भवति ॥ ८ ॥ ९ ॥ भगवतेऽद्भुतनृसिंहाय नमः १०॥ नृसिंह उवाच ॥ ममैकान्तभक्ता वरान् नैव वांछन्ति । अथापि मन्वन्तरे दैत्येश्वराणां भोगान् भुङ्क्ष्व ॥ ११ ॥

मदीयाः कथाः सेवमानः सर्वभूतस्थं मां मनसि कृत्वा योगेन मां यजस्व ॥१२॥ भोगेन पुण्यं व्रतादिना पापं च हित्वा भुवि सत्कीर्तिं विस्तार्य कालेन कलेवरं हित्वा मुक्तबन्धः सन् मां प्राप्स्यसि॥१३॥ हे प्रह्लाद ! त्वां मां चेदं मच्चरितं च यःस्मरन् कीर्तयेत् स कर्मबन्धात् मुच्यते ॥१४॥ ॥१५॥१६॥ प्रह्लाद उवाच॥हे हरे!मम पिता तव तेजोऽजानन् त्वामनिन्दत् स पूतो भवतु इममन्यं वरं वृणे ॥१७॥ श्रीभगवानुवाच॥ हे वत्स !

कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि सन्तमेकम् ॥ सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन् ॥१२॥ भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ॥ कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः ॥१३॥ य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ॥ त्वां च मां च स्मरँल्लोके कर्मबन्धात्प्रमुच्यते ॥ १४ ॥ प्रह्लाद उवाच ॥ वरं वरय एतत्ते वरदेशान्महेश्वर ॥ यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥१५॥ विद्धामर्षाशयःसाक्षात् सर्वलोकगुरुं प्रभुम् ॥ भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १६ ॥ तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात् ॥ पूतस्तेऽपाङ्गसंदृष्टस्तदा कृपणवत्सल ॥१७॥ श्रीभगवानुवाच ॥ त्रिः सप्तभिः पिता पूतः पितृभिः सह तेऽनघ ॥ यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः ॥ १८ ॥ यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ॥ साधवः समुदाचारास्ते पूयन्त्यपि कीकटाः ॥ १९ ॥ सर्वात्मना न हिंसन्ति भूतग्रामेषु किंचन ॥ उच्चावचेषु दैत्येन्द्र मद्भावेन गतस्पृहाः ॥२०॥ भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ॥ भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ ॥ २१ ॥ कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ॥ मदङ्गस्पर्शनेनाङ्ग लोकान्यास्यति सुप्रजाः ॥ २२ ॥ पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ॥ मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः ॥ २३ ॥

तव पितैकविंशत्या पितृभिः सह पूतः। यतस्तस्य कुले त्वं साधुर्जातः॥१८॥ हे प्रह्लाद। यत्र यत्र मद्भक्ताः वसन्ति ते कीकटा अपि देशाःशुद्धाः भवन्ति॥१९॥लोके मद्भक्ताः उच्चावचेषु भूतेषु न किंचन हिंसन्ति ॥२०॥ ये पुरुषास्त्वां श्रितास्तेऽपि मद्भक्ताः भवन्ति। अतो भक्तानां मध्ये त्वं श्रेष्ठोऽसि ॥२१॥ हे अङ्ग ! मदङ्गस्पर्शेन पूतस्य तव पितुःप्रेतकार्याणि कुरु ॥२२॥ पितृस्थानमातिष्ठ। त्वं मत्परः सन् कर्माणि कुरु॥२३॥

नारद उवाच ॥ हे राजन् ! प्रह्लादोऽपि पितुः साम्परायिकं कृत्वा द्विजैः राज्येऽभिषिक्तः ॥२४॥ तदा ब्रह्मा प्रसन्नं नृहरिं दृष्ट्वा देवैः सह प्राह ॥२५॥ ब्रह्मोवाच ॥ हे देव ! लोकसंतापकरोऽसुरो हत इति दिष्ट्या ॥ २६ ॥ योऽसौ मम सृष्टिभिरवध्यत्वं प्राप्य तपोयोगबलेन धर्मान् नाशितवान् ॥ २७ ॥ त्वद्भक्तोऽयमर्भको मृत्योर्मोचितः इदमपि भद्रम् ॥ २८ ॥ एतत् तव वपुर्ध्यायतो नरस्य सर्वतो रक्षकम् ॥ २९ ॥

नारद उवाच ॥ प्रह्लादोऽपि तथा चक्रे पितुर्यत्साम्परायिकम् ॥ यथाऽऽह भगवान्राजन्नभिषिक्तो द्विजोत्तमैः ॥ २४ ॥ प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ॥ स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २५ ॥ ब्रह्मोवाच ॥ देवदेवाखिलाध्यक्ष भूतभावन पूर्वज ॥ दिष्ट्या ते निहतः पापो लोकसंतापनोऽसुरः ॥ २६ ॥ योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ॥ तपोयोगबलोन्नद्धः समस्तनिगमानहन् ॥२७॥ दिष्ट्याऽस्य तनयः साधुर्महाभागवतोऽर्भकः ॥ त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना ॥ २८ ॥ एतद्वपुस्ते भगवन् ध्यायतः प्रयतात्मनः ॥ सर्वतो गोप्तृ संत्रासान्मृत्योरपि जिघांसतः ॥ २९ ॥ नृसिंह उवाच ॥ मैवं वरोऽसुराणां ते प्रदेयः पद्मसंभव ॥ वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३० ॥ नारद उवाच ॥ इत्युक्त्वा भगवान्राजंस्तत्रैवान्तर्दधे हरिः ॥ अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३१ ॥ ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम् ॥ भवं प्रजापतीन्देवान्प्रह्लादो भगवत्कलाः ॥ ३२ ॥ ततः काव्यादिभिः सार्धं मुनिभिः कमलासनः ॥ दैत्यानां दानवानां च प्रह्लादमकरोत्पतिम् ॥ ३३ ॥ प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः ॥ स्वधामानि ययू राजन्ब्रह्माद्याः प्रतिपूजिताः ॥ ३४ ॥ एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ॥ हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥

नृसिंह उवाच ॥ हे पद्मसंभव ! त्वया असुराणामेवं वरो न देयः सर्पाणाममृतं यथा ॥ ३० ॥ नारद उवाच ॥ इत्युक्त्वा भगवानन्तर्दधे ॥ ३१ ॥ प्रह्लादो ब्रह्मादीन् संपूज्य ववन्दे ॥ ३२ ॥ ततो ब्रह्मा शुक्रादिमुनिभिर्दैत्यदानवानां पतिं प्रह्लादं चकार ॥ ३३ ॥ ततो ब्रह्माद्याः देवाः स्वस्थानानि ययुः ॥ ३४ ॥ हे धर्म ! एवं तौ विष्णुपार्षदौ दितेः पुत्रत्वं प्रापितौ तौ हरिणा हतौ ॥ ३५ ॥

पुनः कुम्भकर्णदशग्रीवौ राक्षसौ जातौ। तौ रामविक्रमैर्हतौ ॥३६॥३७॥ तावेव पुनः शिशुपालदन्तवक्रौ जातौ। तौ वैरानुबन्धेन तव पश्यतः सतो हरौ समीयतुः ॥३८॥ कृष्णवैरिणो राजानो यत् पूर्वकृतं पापं तद्ध्यानेन तदात्मानः सन्तो जहुः ॥३९॥ हे राजन्! चैद्यादयो नृपाः हरेश्चिन्तया तं प्रापुः ॥४०॥ दमघोषसुतादीनां द्विषां हरेः सारूप्यं कथम् इति त्वं पृष्टवान्। तत् कथितम् ॥४१॥ हे राजन्। श्रीकृष्णस्य

पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः॥ कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः॥ ३६॥ शयानौ युधि निर्भिन्न-हृदयौ रामसायकैः॥ तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि॥ ३७॥ ताविहाथ पुनर्जातौ शिशुपालकरूषजौ॥ हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः॥ ३८॥ एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः॥ जहुस्तं ते तदात्मानःकीटः पेशस्कृतो यथा॥ ३९॥ यथा यथा भगवतो भक्त्या परमया भिदा॥ नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया ययुः ॥४०॥ आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान्॥ दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम्॥ ४१॥ एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः॥ अवतारकथा पुण्या वधो यत्रादिदैत्ययोः॥ ४२॥ प्रह्लादस्यानुचरितं महाभागवतस्य च॥ भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥४३॥ सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम्॥ परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥४४॥ धर्मो भागवतानां च भगवान्येन गम्यते॥ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥४५॥ य एतत्पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम्॥ कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते ॥४६॥ एतद्य आदिपुरुषस्य मृगेन्द्रलीलां दैत्येन्द्रयूथपवधं प्रयतः पठेत॥ दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वाऽनुभावमकुतोभयमेति लोकम्॥ ४७॥



श्रीनृसिंहावतारस्य च कथा। यत्रादिदैत्ययोर्वधः॥ ४२॥ प्रह्लादस्य चरितम्। भक्तिर्ज्ञानं वैराग्यं च॥ ४३॥ हरेः गुणकर्मानुवर्णनं देवदैत्यस्थानानां विपर्यासः॥ ४४॥ भागवतानां धर्मः आत्मानात्मविवेकादि च एतत् सर्वं कथितम्॥ ४५॥ यः इदं कीर्तयेद्वा शृणुयाद् वा स कर्मपाशात् मुच्यते॥ ४६॥ यः एतां मृगेन्द्रलीलां दैत्येन्द्रवधं प्रह्लादचरितं च पठेत् स वैकुण्ठं गच्छति॥ ४७॥

१ पाशाद् इ० पा०।

हे युधिष्ठिर ! यूयं नृलोके भूरिभागाः यतो युष्माकं गृहान् ऋषय आयान्ति । श्रीकृष्णश्च वसति ॥ ४८ ॥ यो भवतां मातुलेयो मोक्षसुखानुभवो हितकृत् ॥४९॥ यस्य स्वरूपं विरिञ्च्यादिभिरपि नोपवर्णितम् । एवंभूतो भगवान् प्रसीदताम् ॥५०॥ हे राजन् ! पुरा मयासुरेण खण्डितं रुद्रस्य यशः स भगवान् व्यतनोत् ॥ ५१ ॥ युधिष्ठिर उवाच ॥ अनेन कृष्णेन रुद्रस्य कीर्तिः कस्मिन् कर्मणि वर्धिता तत्

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति ॥ येषां गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥४८॥ स वा अयं ब्रह्म महद्विमृग्य कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद् वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद् गुरुश्च ॥ ४९ ॥ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ५० ॥ स एष भगवन्राजन्व्यतनोद्विहतं यशः ॥ पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥ ५१ ॥ युधिष्ठिर उवाच ॥ कस्मिन्कर्मणि देवस्य मयोऽहन् जगदीशितुः ॥ यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ ५२ ॥ नारद उवाच ॥ निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ॥ मायिनां परमाचार्यं मयं शरणमाययुः ॥ ५३ ॥ स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः ॥ दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ५४ ॥ ताभिस्तेऽसुरसेनान्यो लोकांस्त्रीन् सेश्वरान् नृप ॥ स्मरन्तो नाशयाञ्चक्रुः पूर्ववैरमलक्षिताः ॥ ५५ ॥ ततस्ते सेश्वरा लोका उपासद्येश्वरं विभो ॥ त्राहि नस्तावकान् देव विनष्टांस्त्रिपुरालयैः ॥ ५६ ॥ अथानुगृह्य भगवान् मा भैष्टेति सुरान्विभुः ॥ शरं धनुषि संधाय पुरेष्वस्त्रं व्यमुञ्चत ॥ ५७ ॥ ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात् ॥ यथा मयूखसंदोहा नादृश्यन्त पुरो यतः ॥ ५८ ॥

कथ्यताम् ॥ ५२ ॥ नारद उवाच । पुरा देवैर्जिता असुराः मयं शरणं ययुः ॥ ५३ ॥ स हैमरौप्यलोहमयीस्तिस्रः पुरो निर्माय तेभ्यो ददौ ॥ ५४ ॥ ताभिर्दैत्याः सेश्वरान् लोकान्बबाधिरे ॥ ५५ ॥ तदा देवाः दुःखिताः सन्तः शिवं शरणं ययुः ॥ ५६ ॥ ततो रुद्रो मा भैष्टेति जगाद । अस्त्रं च पुरेषु व्यमुञ्चत ॥ ५७ ॥ तदाऽग्निवर्णशरा रश्मिसमूहा इव सूर्यमण्डलादुत्पेतुः ॥ ५८ ॥

तैर्बाणैः पुरवासिनो दैत्या मृताः सन्तः पेतुः । महायोगी मयासुरो रसकूपे तान् चिक्षेप ॥५९॥ ते अमृतरसस्पर्शेन वज्रवद् दृढाङ्गा उत्तस्थुः ॥६०॥ तदा भग्नसंकल्पं शिवं वीक्ष्य भगवानुपायमकरोत् ॥६१॥ तदा ब्रह्मा वत्स आसीत् अयं विष्णुर्गौर्भूत्वा त्रिपुरं प्रविश्य कूपामृतं पपौ । तेऽसुराः पश्यन्तोऽपि मोहिताः सन्तो न न्यषेधन् ॥६२॥ मयस्तां दैवगतिं विज्ञाय स्वयं शोकयुक्तः सन् रसपालानिदं जगौ ॥ ६३ ॥ देवासुरमनुष्या दैवं नाशयितुं न समर्थाः । ईश्वरं विना परिहर्तुं कोऽपि समर्थो नास्ति ॥ ६४ ॥ अथासौ कृष्णो धर्मज्ञान-

तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः ॥ ताननीय महायोगी मयः कूपरसेऽक्षिपत् ॥५९॥ सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ॥ उत्तस्थुर्मेघदलना वैद्युता इव वह्नयः ॥ ६० ॥ विलोक्य भग्नसंकल्पं विमनस्कं वृषध्वजम् ॥ तदाऽयं भगवान्विष्णुस्तत्रोपायमकल्पयत् ॥ ६१ ॥ वत्स आसीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ॥ प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥ तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन्विमोहिताः ॥ ६२ ॥ तद्विज्ञाय महायोगी रसपालानिदं जगौ ॥ स्वयं विशोकः शोकार्तान्स्मरन्दैवगतिं च ताम् ॥६३॥ देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ॥ आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥६४॥ अथासौ शक्तिभिः स्वाभिः शंभोः प्राधानिकं व्यधात् ॥ धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभिः ॥६५॥ रथं सूतं ध्वजं वाहान्धनुर्वर्म शरादि यत् ॥ सन्नद्धो रथमास्थाय शरं धनुरुपाददे ॥६६॥ शरं धनुषि संधाय मुहूर्तेऽभिजितीश्वरः ॥ ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप ॥ ६७ ॥ दिवि दुन्दुभयो नेदुर्विमानशतसंकुलाः ॥ देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ॥ अवाकिरञ्जगुर्हृष्टा ननृतुश्चाप्सरोगणाः ॥ ६८ ॥ एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप ॥ ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥ ६९ ॥

क्रियादिभिः शम्भोः संग्रामसाधनं रथसूतध्वजादि कल्पयामास ॥ ६५ ॥ ततो रुद्रः सावधानः सन् रथमास्थाय शरं धनुश्च गृहीत्वा ॥ ६६ ॥ अभिजिन्मूहूर्ते धनुषि शरं संधाय मुमोच । ते तिस्रः पुरो ददाह ॥६७॥ तदा दिवि दुन्दुभयो नेदुः । देवर्षिपितृसिद्धेशाः जयेति पुष्पैरवाकिरन् । गन्धर्वा जगुः । अप्सरसो ननृतुः ॥ ६८ ॥ एवं शिवः पुरत्रयं दग्ध्वा ब्रह्मादिभिः स्तुतः सन् स्वधाम ययौ ॥ ६९ ॥

एवं रुद्रयशोविस्तारं चकार एवं कृष्णवीर्याणि जगत्पवित्राणि बहूनि सन्ति । अपरं किं वदामि ॥ ७० ॥ इति श्रीभा० म० चू० स० दशमोऽध्यायः ॥ १० ॥ एकादशे नृणां धर्माः साधारण्येन वर्णिताः ॥ विशेषेण च वर्णानां मुख्यामुख्याश्च योषिताम् ॥ १ ॥ श्रीशुक उवाच ॥ युधिष्ठिरः प्रह्लादस्य नृसिंहस्य चाख्यानं श्रुत्वा हर्षयुतः पुनर्नारदं पप्रच्छ ॥१॥ युधिष्ठिर उवाच ॥ हे नारद ! नृणां वर्णाश्रमाचारयुतं धर्मं श्रोतुमिच्छामि यदाचरणेन पुमान् ज्ञानं भक्तिं च विन्दति ॥ २ ॥ त्वं ब्रह्मपुत्राणां मध्ये मान्योऽसि ॥ ३ ॥ नारायणपरा विप्राः साधवो

एवंविधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः ॥ वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदामि किम् ॥७०॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे युधिष्ठिरनारदसंवादे त्रिपुरविजयो नाम दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ॥ युधिष्ठिरो दैत्यपतेर्मुदा युतः पप्रच्छ भूयस्तनयं स्वयंभुवः ॥ १ ॥ युधिष्ठिर उवाच ॥ भगवञ्छ्रोतुमिच्छामि नृणां धर्मं सनातनम् ॥ वर्णाश्रमाचारयुतं यत्पुमान् विन्दते परम् ॥ २ ॥ भवान् प्रजापतेः साक्षादात्मजः परमेष्ठिनः ॥ सुतानां संमतो ब्रह्मंस्तपोयोगसमाधिभिः ॥ ३ ॥ नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ॥ करुणाः साधवः शान्तास्त्वद्विधा न तथाऽपरे ॥ ४ ॥ नारद उवाच ॥ नत्वा भगवतेऽजाय लोकानां धर्महेतवे ॥ वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥ योऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्मतः ॥ लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥ धर्ममूलं हि भगवान्सर्ववेदमयो[1] हरिः ॥ स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति ॥ ७ ॥ सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ॥ अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥

गुह्यं धर्मं विदुः ॥ ४ ॥ नारद उवाच ॥ हे धर्म! भगवते नत्वा नारायणमुखात् श्रुतं धर्मं वक्ष्ये ॥५॥ यो धर्मतो दाक्षायण्यामंशेनावतीर्य बदरिकाश्रमे तपस्तेपे ॥ ६ ॥ सर्वधर्ममूलो हरिः । येनात्मा प्रसीदति ॥ ७ ॥ तत्र साधारणधर्मानाह । सत्यं १, दया २, तपः ३, शौचं ४, तितिक्षा ५, युक्तायुक्तविवेकः ६, शमः ७, दमः ८, अहिंसा ९, ब्रह्मचर्यं १०, दानं ११, स्वाध्यायः १२, आर्जवम् १३ ॥ ८ ॥

१ 'देवमयः' इ० पा० ।

संतोषः १४, महतां सेवा १५, प्रवृत्तकर्मनिवृत्तिः १६, निष्फलक्रियाणामीक्षणं १७, मौनम् १८, आत्मानात्मविचारः १९, अन्नाद्यादेः संविभागः २०, भूतेष्वात्मदेवताबुद्धिः २१ ॥ ९ ॥ १० ॥ अथ नवविधा भक्तिः—श्रवणम् १, कीर्तनं २, स्मरणम् ३, ईशपादादिमर्दनम् ४, अर्चनं ५, नम्रत्वं ६, दास्यं ७, सख्यम् ८, आत्मसमर्पणम् ९ ॥ ११ ॥ अयं त्रिंशल्लक्षणवान् सर्वेषां परो धर्मः कथितः ॥ १२ ॥ द्विजानां लक्षणमाह ॥ गर्भाधानादि संस्कारा यस्मिन्नविच्छिन्नाः सः द्विजः तदितरः शूद्रः । द्विजन्मनां यजनाध्ययनदानानि विहितानि ।

संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ॥ नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥ अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ॥ तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥ १० ॥ श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ॥ सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ११ ॥ नृणामयं परो धर्मः सर्वेषां समुदाहृतः ॥ त्रिंशल्लक्षणवान्राजन्स-र्वात्मा येन तुष्यति ॥ १२ ॥ संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम् ॥ इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः ॥ १३ ॥ विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः ॥ राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः ॥ १४ ॥ वैश्यस्तु वार्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः ॥ शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ॥ १५ ॥ वार्ता विचित्रा शालीनयायावरशिलोञ्छनम् ॥ विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरो-त्तरा ॥१६॥ जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ॥ १७ ॥

शूद्रस्य तु वर्णधर्मा एव ॥ १३ ॥ विप्रस्याध्ययनादीनि षट् कर्माणि विहितानि । तत्र तु याजनमध्यापनं प्रतिग्रहश्च जीविका । क्षत्रियस्य विपत्तिकाले याजनमध्यापनं च । अविपत्तौ तु खड्गवृत्तिः ॥ १४ ॥ वैश्यस्य कृषिवाणिज्यादिवृत्तिः शूद्रस्य द्विजानां शुश्रूषा विहिता ॥ १५ ॥ द्विजस्य मुख्यवृत्तिमाह । कृष्यादिरूपाऽयाचितं प्रतिदिनं धान्ययाच्ञा स्वामित्यक्तक्षेत्रापणादिपतितकणोपादानम् । इयमुत्तरो-त्तरोत्तमा ॥ १६ ॥ नीचोऽनापदि राजन्यं विनोत्तमां वृत्तिं नो कुर्यात् ॥ राजा तु विपत्तौ प्रतिग्रहं विनाऽन्यां वृत्तिं सेवेत ॥ १७ ॥

१ धाष्ट्र्यं विनैव प्राप्तमयाचितम् ।

ऋतामृतमृतप्रमृतसत्यानृतैर्जीवेत । श्ववृत्त्या कदाऽपि जीविकां न कुर्यात् ॥१८॥ पतितकणोपादानमयाचितं नित्ययाच्ञा कर्षणकर्म वाणिज्यम् । आभिर्वृत्तिभिर्जीवेत । नीचसेवनं विप्रो राजन्यश्च न कुर्यात् । सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ १९ ॥ २० ॥ ब्राह्मणलक्षणानि शमो दमस्तपः शौचं संतोषो दयाऽऽर्जवं ज्ञानं सत्यमेतानि॥२१॥युद्धोत्साहः १, वीर्यं २, धैर्यम् ३, तेजः ४, दानम् ५, आत्मजयः ६, क्षमा ७, ब्रह्मण्यता ८, अनुग्रहः ९, रक्षा १०, एतानि क्षत्रलक्षणानि॥२२॥देवादिषु भक्तिः १, त्रिवर्गपालनम् २, नित्यमुद्यमः ३, एतद्वैश्यलक्षणम्॥२३॥

ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन ॥ १८ ॥ ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम् ॥ मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम् ॥ १९ ॥ सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २० ॥ शमो दमस्तपः शौचं संतोषः शान्तिरार्जवम् ॥ ज्ञानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २१ ॥ शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ॥ ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥२२॥ देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ॥ आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥ २३ ॥ शूद्रस्य संनतिः शौचं सेवा स्वामिन्यमायया ॥ अमन्त्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ॥२४॥ स्त्रीणां च पतिदेवानां तच्छुश्रूषाऽनुकूलता ॥ तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ ॥ २५ ॥ संमार्जनोपलेपाभ्यां गृहमण्डलवर्तनैः ॥ स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥ २६ ॥ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ॥ वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम् ॥ २७ ॥ संतुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ॥ अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥ २८ ॥

शौचम् १, स्वामिसेवा २, नमस्कारमन्त्रेण यज्ञादि ३, अचौर्यं ४, सत्यम् ५, एवं शूद्रलक्षणम्॥२४॥पतिसेवा तद्बन्धूनां च सेवा तेषां हिताचरणं पतिनियमाचरणम् । एतच्चतुष्टयं स्त्रीणां धर्मो लक्षणं च॥२५॥स्त्री संमार्जनोपलेपादिभिर्निर्मलीकृतपरिच्छदा स्वयं च मण्डिता सती ॥२६॥ उच्चावचैः कामैः प्रियवाक्यैश्च पतिं भजेत् ॥२७॥ संतुष्टाऽलोलुपाऽप्रमत्ता सत्यवाक् हास्ययुक्ता सती पापरहितं कृपणमपि पतिं सेवेत ॥ २८ ॥

या स्त्री पतिं हरिभावेन भजते सा वैकुण्ठे पत्या सह मोदते ॥२९॥ चौर्यहिंसादिरहितानां रजकाद्यन्त्यजजातीनां तत्तत्कुलकृता वृत्तिः ॥ ३० ॥ हे राजन् ! अयं नृणां धर्म इह परत्र च वेददृग्भिः सुखकृत् कथितः ॥ ३१ ॥ यः स्ववृत्त्या वर्तते स्वकर्म करोति स शनैः स्वभावजं कर्म हित्वा निर्गुणतां प्राप्नोति ॥ ३२ ॥ बहूप्यमानं क्षेत्रं स्वयं निर्वीर्यतां याति । पुनः प्रसवाय न कल्पते ॥ ३३ ॥ एवं कामासक्तस्य चित्तं बहु कामसेवया शाम्यति । यथाऽतिघृतेनाग्निः शाम्यति ॥३४॥ ब्रह्मणे क्षत्रलक्षणं क्षत्रे ब्रह्मलक्षणं यदा भवेत् तदा तदेव लक्षणेन ज्ञातव्यम् ॥ ३५ ॥

या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ॥ हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ २९ ॥ वृत्तिः संकरजातीनां तत्तत्कुलकृता भवेत् ॥ अचौराणामपापानामन्त्यजान्तेवसायिनाम् ॥ ३० ॥ प्रायः स्वभावविहितो नृणां धर्मो युगे युगे ॥ वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत ॥ ३१ ॥ वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत् ॥ हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३२ ॥ उप्यमानं बहु क्षेत्रं स्वयं निर्वीर्यतामियात् ॥ न कल्पते पुनः सूत्या उप्तं बीजं च नश्यति ॥ ३३ ॥ एवं कामाशयं चित्तं कामानामतिसेवया ॥ विरम्येत् यथा राजन्नाग्निवत्कामबिन्दुभिः ॥ ३४ ॥ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ॥ यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥३५॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे युधिष्ठिरनारदसंवादे सदाचारनिर्णयो नामैकादशोऽध्यायः ॥ ११ ॥ नारद उवाच ॥ ब्रह्मचारी गुरुकुले वसन्दान्तो गुरोर्हितम् ॥ आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥ सायंप्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान् ॥ उभे सन्ध्ये च यतवाग् जपन्ब्रह्म समाहितः ॥ २ ॥ छन्दांस्यधीयीत गुरोराहूतश्चेत्सुयन्त्रितः ॥ उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥

इति श्रीभागवते चू० सप्तमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ द्वादशे वर्ण्यते धर्मो ब्रह्मचारिवनस्थयोः ॥ चतुर्णामाश्रमाणां च साधारण्येन कश्चन ॥१॥ नारद उवाच ॥ हे राजन् ! ब्रह्मचारी गुरुकुले वसन् दासवद्गुरोर्हितं कुर्यात् ॥ १ ॥ सायंप्रातर्गुर्वग्न्यर्कसुरोत्तमानुपासीत । गायत्रीं जपन् सन्ध्यात्रयमुपासीत । उभे सन्ध्ये मौनं कुर्यात् ॥ २ ॥ गुरुणाऽऽहूतश्चेत् छन्दांस्यधीयीत । आदावन्ते च गुरोश्चरणौ नमेत् ॥ ३ ॥

१ 'सनातनम्' इ० पा०।

दर्भपाणिः सन् मेखलाजिनवासांसि जटादण्डकमण्डलूनुपवीतं च बिभृयात् ॥ ४ ॥ सायंप्रातर्भैक्षमानीय गुरवे निवेदयेत् । तेनानुज्ञातश्चेद् भुञ्जीत । नोचेदुपवसेत् ॥५॥ मितभुग् जितेन्द्रियः सन् स्त्रीलुब्धजनेषु च यावदर्थं व्यवहरेत् ॥ ६ ॥ व्रतस्थः प्रमदागाथां वर्जयेत् ॥ ७ ॥ केशप्रसाधनमर्दनस्नपनाभ्यञ्जनादिकं तरुणः सन् युवतीभिर्गुरुस्त्रीभिर्न कारयेत् ॥ ८ ॥ प्रमदा नामाग्निः । घृतकुम्भसमः पुमान् । अतो

मेखलाऽजिनवासांसि जटादण्डकमण्डलून् ॥ बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥ ४ ॥ सायंप्रातश्चरेद्भैक्षं गुरवे तन्निवेदयेत् ॥ भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत्क्वचित् ॥५॥ सुशीलो मितभुग्दक्षः श्रद्दधानो जितेन्द्रियः ॥ यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च ॥६॥ वर्जयेत्प्रमदागाथामगृहस्थो बृहद्व्रतः ॥ इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ७ ॥ केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम् ॥ गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा ॥ ८ ॥ नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान् ॥ सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥९॥ कल्पयित्वाऽऽत्मना यावदाभासमिदमीश्वरः ॥ द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः ॥ १० ॥ एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि ॥ गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥ अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं मधु ॥ स्रग्गन्धलेपालंकारांस्त्यजेयुर्ये धृतव्रताः ॥ ॥ १२ ॥ उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च ॥ त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम् ॥ १३ ॥

रहसि सुतामपि जह्यात् ॥ ९ ॥ अयं पुमान्, इयं स्त्री इति यावद् भेदो वर्तते तावद् द्वैतं कुर्यात् । यदा जीवः स्वाधीनो भवेत् तदा द्वैतं विरमते ॥ १० ॥ एवं यो गृहस्थ ऋतुगामी सोऽपि ब्रह्मचारी ॥ ११ ॥ ये धृतव्रतास्तेऽञ्जनाभ्यञ्जनं मिष्टान्नभोजनं स्रग्गन्धादीन् चित्रलिखितां स्त्रियं च त्यजेयुः ॥ १२ ॥ एवं द्विजो गुरुगृहे स्थित्वा त्रयीं संहितां साङ्गोपनिषदं चाधीत्य ॥ १३ ॥

---

१ यथोपयोगमेव स्वकार्यसिद्धिपर्यन्तम् । २ केशप्रसाधनादिव्यतिरिक्तावसरे । ३ यावदर्थं (तदुक्तं) करोति सः । ४ साक्षात्कारेण । ५ आभासमात्रम् । ६ देहेन्द्रियादिकम् । इममाभासं कल्पयित्वा यावदीश्वरो न तावदित्यन्वयः । ७ द्वैतात् । ८ गुणाध्यासेन भोग्यतावुद्धिः । ९ स्त्रीणां भित्त्यादौ लेखनम् । १० स्वाधिकारानुसारेण ।

गुरवे दक्षिणां दत्त्वा तदनुज्ञातो गृहं वनं वा प्रविशेत् । तत्र वा वसेत् ॥ १४ ॥ अग्नौ गुरावात्मनि भूतेषु निर्लिप्तमीश्वरं प्रविष्टवत् पश्येत् ॥ १५ ॥ एवंविधो ब्रह्मचारी गृहस्थो वानप्रस्थो यतिर्विदितज्ञानो विचरन् परं पदं गच्छति ॥१६॥ अथ वानप्रस्थस्य नियमान् वक्ष्यामि । यानातिष्ठन् ऋषिलोकमेति॥१७॥अकृष्टपच्यमन्नं च फलादिकं चाग्निपक्वान्नं चाश्नीयात्॥१८॥वन्यैर्धान्यैर्दर्शपौर्णमासादिकं कुर्यात् । नवान्ने



दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ॥ गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत् ॥ १४ ॥ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ॥ भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥ एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ॥ चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति ॥ १६ ॥ वानप्रस्थस्य वक्ष्यामि नियमान्मुनिसंमतान् ॥ यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहाञ्जसा ॥ १७ ॥ न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ॥ अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥१८॥ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालनोदितान् ॥ लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥१९॥ अग्न्यर्थमेव शरणमुटजं वाऽद्रिकन्दराम् ॥ श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयम् ॥२०॥ केशरोमनखश्मश्रुमलानि जटिलो दधत् ॥ कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥२१॥ चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ॥ द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः ॥२२॥ यदाऽकल्पः स्वक्रियायां व्याधिभिर्जरयाऽथवा ॥ आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥२३॥ आत्मन्यग्नीन् समारोप्य संन्यस्याहंममात्मताम् ॥ कारणेषु न्यसेत् सम्यक् संघातं तु यथार्हतः ॥२४॥

प्राप्ते जीर्णान्नं त्यजेत्॥१९॥अग्निसेवार्थं पर्णकुटीं गुहां वा संपादयेत् । स्वयं हिमवाय्वग्निवर्षार्कातपान् सहेत॥२०॥केशरोमनखश्मश्रुमलानि दण्डकमण्डल्वादीन् धारयेत् ॥२१॥ एवं द्वादशाब्दान् यथाशक्ति वा मुनिर्वने चरेत् ॥२२॥ यदा व्याधिभिर्जरया वा स्वक्रियायामसमर्थः स्यात् तदाऽनशनादिकं कुर्यात् ॥ २३ ॥ आत्मन्यग्निं समारोप्य ममतां त्यक्त्वा देहमाकाशादिषु प्रविलापयेत् ॥ २४ ॥



१ हिमादीन् सहत इति । २ केशादीन्मलं च । ३ तपः क्लेशात् विपद्येत नश्येत् । ४ यथायोग्यम् ।

तदेव दर्शयति । आकाशे देहगतच्छिद्राणि । श्वासान् वायौ । ऊष्माणं तेजसि । अप्सु लोहितम् । अस्थिमांसादिकं क्षितौ ॥ २५ ॥ एवं स्थूलशरीरस्य लयं कृत्वा लिङ्गशरीरस्य लयं कुर्यात् । वाचं वह्नौ । पादौ विष्णौ । कराविन्द्रे । उपस्थं प्रजापतौ ॥ २६ ॥ पायुं मृत्यौ । श्रोत्रं दिक्षु । स्पर्शं त्वचम् ॥२७॥ आदित्ये रूपाणि । जिह्वारसं वरुणे । घ्राणं पृथिव्याम् ॥ २८ ॥ मनश्चन्द्रे । बुद्धिं ब्रह्मणि । अहंकार-कर्माणि रुद्रे । चित्तं सत्त्वे । गुणान् वैकारिके । जीवं ब्रह्मणि ॥ २९ ॥ क्षितिमप्सु । अपो ज्योतिषि । तेजो वायौ । वायुं नभसि । नभोऽ-

खे खानि वायौ निःश्वासांस्तेजस्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥२५॥ वाचमग्नौ सवक्तव्यामिन्द्रे शिल्पं करावपि ॥ पदानि गत्या वयसि रत्योपस्थं प्रजापतौ ॥ २६ ॥ मृत्यौ पायुं विसर्गं च यथा स्थानं विनिर्दिशेत् ॥ दिक्षु श्रोत्रं सनादेन स्पर्शमध्यात्मनि त्वचम् ॥२७॥ रूपाणि चक्षुषा राजञ्ज्योतींष्यभिनिवेशयेत् ॥ अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ॥२८॥ मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ॥ कर्माण्यध्यात्मना रुद्रे यदहंममता क्रिया ॥ सत्त्वे चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥२९॥ अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम् ॥ कूटस्थे तच्च महति तदव्यक्तेऽक्षरे च तत् ॥ ३० ॥ इत्यक्षरतयाऽऽत्मानं चिन्मात्रमवशेषितम् ॥ ज्ञात्वाऽद्वयोऽथ विरमेद्द-ग्धयोनिरिवानलः ॥३१॥ इति श्रीभागवते महापुराणे सप्तमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ नारद उवाच ॥ कल्प-स्त्वेवं परिव्रज्य देहमात्रावशेषितः ॥ ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥ बिभृयाद्यद्यसौ वासः कौपीना-च्छादनं परम् ॥ त्यक्तं न दण्डलिङ्गादेरन्यत्किञ्चिदनापदि ॥ २ ॥

हंतत्त्वे । अहं तत्त्वं प्रधाने । प्रधानं जीवे । जीवं परमात्मनि ॥३०॥ एवं सर्वोपाधिलयेन शिष्टमात्मानं चिन्मात्रं ज्ञात्वा द्वैतरहितः सन् दग्ध-काष्ठोऽग्निरिव विरमेत् ॥ ३१ ॥ इति श्रीभागवते चू० सप्तमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशे यतेर्धर्मः साधकस्योच्यते महान् । अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ १ ॥ नारद उवाच ॥ ज्ञानाभ्याससमर्थश्चेत् तर्हि संन्यासं गृहीत्वा ग्रामैकरात्रविधिना निरपेक्षो महीं चरेत् ॥ १ ॥ गुह्यं आच्छाद्यते यावता तावन्मात्रं कौपीनं दण्डं कमण्डलुं च बिभृयात् ॥ २ ॥

भिक्षुर्नारायणपरायण एक एव चरेत् ॥ ३ ॥ अव्यये ब्रह्मण्यात्मानं पश्येत् । आत्मनि विश्वं पश्येत् ॥ ४ ॥ आत्मदृक् सुप्तबोधयोः संधावात्मगतिं बन्धं मोक्षं च मायामात्रं पश्येत् ॥ ५ ॥ देहस्य जीवनं मरणं वा दृष्ट्वा न हृष्येत् । कालं प्रतीक्षेत ॥ ६ ॥ असच्छास्त्रेषु न सज्जेत वितण्डादिवादांस्त्यजेत् ॥ ७ ॥ बहुशिष्यान् न संपादयेत् बहुग्रन्थान् नाभ्यसेत् । मठादिव्यापारान् न कुर्यात् ॥ ८ ॥ यावत् ज्ञानं नो जायते तावत् लिङ्गशुद्ध्यर्थं नियमान् चरेत् । ज्ञानोत्पत्तौ तान् त्यजेत् ॥ ९ ॥ आच्छादितचिह्नः सन् मत्तवद् बालवत् कविरपि

एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥३॥ पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये ॥ आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥ सुप्तप्रबोधयोः संधावात्मनो गतिमात्मदृक् ॥ पश्यन्बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥५॥ नाभिनन्देद् ध्रुवं मृत्युमध्रुवं वाऽस्य जीवितम् ॥ कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥ ६ ॥ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ॥ वादवादांस्त्यजेत्तर्कान्पक्षं कंच न संश्रयेत् ॥७॥ न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ॥ न व्याख्यामुपयुञ्जीत नारम्भानारभेत्क्वचित् ॥८॥ न यतेराश्रमःप्रायो धर्महेतुर्महात्मनः ॥ शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥ अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत् ॥ कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम् ॥ १० ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥ तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥ १२ ॥ ददर्श लोकान्विचरँल्लोकतत्त्वविवित्सया ॥ वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥ कर्मणाऽऽकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः ॥ न विदन्ति जना यं वै सोऽसाविति न वेत्ति च ॥ १४ ॥

भूतवदात्मानं नृणां दर्शयेत् ॥ १० ॥ अथ परमहंसधर्मं दर्शयति ॥ अत्राजगरस्य मुनेः प्रह्लादस्य च संवादं शृणु ॥ ११ ॥ एकदा प्रह्लादः कतिपयैरमात्यैर्वेष्टितो लोकतत्त्वविवित्सया विचरन् सन् कावेर्यां सह्याद्रिशिखरे शयानं धूलिव्याप्तैर्देहावयवैर्गुप्ततेजसं मुनिं ददर्श ॥ १२ ॥ ॥ १३ ॥ यं कर्मणाऽऽकृतिलिङ्गवर्णाश्रमादिभिर्जना न विदुः ॥ १४ ॥

तं मुनिं नत्वा जिज्ञासुः प्रह्लादः पप्रच्छ ॥ १५ ॥ हे ब्रह्मन् ! सोद्यमः पुमान् यथा पुष्टं देहं बिभर्त्ति तथा त्वमपि बिभर्षि तत्र हेतुं वद । उद्यमवतां वित्तं वित्तवतां भोगिनां देहः पीवा भवति । अन्यथा न ॥ १६ ॥ अतो निरुद्यमस्य तव देहः पीवा कथम् । एतद् योग्यं चेद् वद ॥ १७ ॥ त्वं समर्थो विद्वान् चतुरः सर्वप्रियो लोकस्य कर्म पश्यन्नपि शयानोऽसि ॥ १८ ॥ नारद उवाच ॥ एवं प्रह्लादेन पृष्टो मुनि-

तं नत्वाऽभ्यर्च्य विधिवत् पादयोः शिरसा स्पृशन् ॥ विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥ बिभर्षि कायं पीवानं सोद्यमो भोगवान्यथा ॥ वित्तं चैवोद्यमवतां भोगो वित्तवतामिह ॥ भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥ १६ ॥ न ते शयानस्य निरुद्यमस्य ब्रह्मन्नु हार्थो यत एव भोगः ॥ अभोगिनोऽयं तव विप्र देहः पीवा यतस्त-द्वद नः क्षमं चेत् ॥ १७ ॥ कविः कल्पो निपुणदृक् चित्रप्रियकथः समः ॥ लोकस्य कुर्वतः कर्म शेषे तद्वीक्षिताऽपि वा ॥ १८ ॥ नारद उवाच ॥ स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ॥ स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः ॥ १९ ॥ ब्राह्मण उवाच ॥ वेदेदमसुरश्रेष्ठ भवान्नन्वार्यसंमतः ॥ ईहोपरमयोर्नॄणां पदान्यध्यात्मचक्षुषा ॥ २० ॥ यस्य नारायणो देवो भगवान् हृद्गतः सदा ॥ भक्त्या केवलयाऽज्ञानं धुनोति ध्वान्तमर्कवत् ॥२१॥ अथापि ब्रूमहे प्रश्नांस्तव राजन् यथाश्रुतम् ॥ संभावनीयो हि भवानात्मनः शुद्धिमिच्छताम् ॥ २२ ॥ तृष्णया भववाहिन्या योग्यैः कामैरपूरया ॥ कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥२३॥ यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ॥ स्वर्गापवर्ग-योर्द्वारं तिरश्चां पुनरस्य च ॥ २४ ॥ अत्रापि दम्पतीनां च सुखायान्यापनुत्तये ॥ कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥ २५ ॥

स्तमाह ॥ १९ ॥ ब्राह्मण उवाच । हे असुरश्रेष्ठ ! त्वं प्रवृत्तिनिवृत्त्योः फलानि ज्ञानचक्षुषा वेत्थ ॥२०॥ यतस्तव नारायणो हृद्गतः तमो धुनोति ॥ २१ ॥ अथापि हे दैत्यराज ! तव प्रश्नान् ब्रूमहे ॥ २२ ॥ अहं नानायोनिषु भ्रमन् मनुष्यदेहं स्वर्गापवर्गयोर्द्वारं प्रापितः ॥२३॥ ॥ २४ ॥ तत्रापि सुखाय दुःखनिवृत्त्यै च कर्म कुर्वतां दम्पतीनां विपर्ययं दृष्ट्वा निवृत्तोऽस्मि ॥ २५ ॥

अशाश्वतान् भोगान् दृष्ट्वा निरुद्यमोऽस्मि॥२६॥एवमात्मनः स्वार्थमविद्वान् संसृतिं प्राप्नोति॥२७॥ अज्ञस्तृणशैवालादिभिश्छादितं जलं हित्वा मृगतृष्णामनुधावति॥२८॥निर्दैवस्येच्छतः क्रियाः विफलाः भवन्ति॥२९॥मर्त्यस्य दुःखेन प्राप्तैः कामैः किं क्रियेत॥३०॥भयादलब्धनिद्राणां लुब्धानां धनिनां क्लेशं नित्यं पश्यामि ॥३१॥ राजचौर्यपशुपक्षिभ्यः कालतश्च नित्यं भयं पश्यामि॥३२॥ नृणां शोकमोहभयक्रोधादयो द्रव्य-

सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः ॥ मनःसंस्पर्शजान्[१] दृष्ट्वा भोगान्स्वप्स्यामि संविशन्[२] ॥ २६ ॥ इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान् ॥ विचित्रामसति द्वैते घोरमाप्नोति संसृतिम् ॥ २७ ॥ जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ॥ मृगतृष्णामुपाधावेद्यथाऽन्यत्रार्थदृक् स्वतः ॥ २८ ॥ देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः ॥ दुःखा-त्ययं चानीशस्य क्रिया मोघाः कृताकृताः ॥२९॥ आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ॥ मर्त्यस्य कृच्छ्रो-पनतैरर्थैः कामैः क्रियेत किम् ॥३०॥ पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ॥ भयादलब्धनिद्राणां सर्वतो-ऽभिविशङ्किनाम् ॥३१॥ राजतश्चोरतः शत्रोः स्वजनात्पशुपक्षितः ॥ अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम् ॥ ३२ ॥ शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ॥ यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः ॥ ३३ ॥ मधुका-रमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ॥ वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥ ३४ ॥ विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात् ॥ कृच्छ्राप्तं मधुवद्वित्तं हत्वाऽप्यन्यो हरेत्पतिम् ॥३५॥ अनीहः परितुष्टात्मा यदृच्छोपनता-दहम् ॥ नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥ ३६ ॥ क्वचिदल्पं क्वचिद्भूरि भुञ्जेऽन्नं स्वाद्वस्वादु वा ॥ क्वचिद् भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३७ ॥

मूलाः स्युः । अतो बुधो द्रव्ये स्पृहां त्यजेत् ॥३३॥ अत्र लोके मधुमक्षिकामहासर्पौ द्वौ गुरूत्तमौ । वयं ययोः शिक्षया वैराग्यं संतोषं च प्राप्ताः ॥ ३४ ॥ मक्षिकायाः कृच्छ्रात् प्राप्तमधुवदन्यः पतिं हत्वा तद्वित्तं हरेत् । तस्मात् मे सर्वकामेभ्यो विरागो मक्षिकायाः शिक्षितः॥३५॥ इच्छा-रहितो यत् प्राप्तं तेनैव तुष्टोऽहम् । नो चेद्बहुदिवसान् महाहिरिव शये ॥ ३६ ॥ क्वचिदल्पं भूरि प्राप्तं स्वाद्वस्वादु वाऽन्नं भुञ्जे ॥ ३७ ॥

१ मनोरथमात्रजान् । २ प्रारब्धभोगान् भुञ्जानः ।

क्वचित् श्रद्धया वा मानवर्जितं वा दत्तं क्वचिद् दिवा नक्तं वा यदृच्छया प्राप्तं भुञ्जे ॥३८॥ क्वचित् क्षौमं दुकूलमजिनं वस्त्रखण्डं वा परिदधे ॥३९॥ क्वचिद् धरायां तृणादिषु वा प्रासादपर्यङ्के वा शये ॥४०॥ क्वचित् स्नातः स्वलंकृतः परेच्छया रथेभाश्वैर्विचरामि क्वचिद् दिग्वासाः विचरामि ॥४१॥ अहं मानापमानेन जनं न निन्दे न च स्तौमि ॥४२॥ मनोऽहंकारे तं च मायायां मायामात्मनि सत्यदृग् मुनिर्जुहुयात् । ततो निरीहो

श्रद्धयोपाहृतं क्वापि कदाचिन्मानवर्जितम् ॥ भुञ्जे भुक्त्वाऽथ कस्मिंश्चिद्दिवा नक्तं यदृच्छया ॥ ३८ ॥ क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा ॥ वसेऽन्यदपि संप्राप्तं दिष्टभुक् तुष्टधीरहम् ॥३९॥ क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ॥ क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ ४० ॥ क्वचित्स्नातोऽनुलिप्ताङ्गः सुवासाः स्रग्व्यलंकृत ॥ रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो ॥४१॥ नाहं निन्दे न च स्तौमि स्वाभावविषमं जनम् ॥ एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥ ४२ ॥ विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे ॥ मनो वैकारिके हुत्वा तन्मायायां जुहोत्यनु ॥४३॥ आत्मानुभूतौ तां मायां जुहुयात्सत्यदृङ्मुनिः ॥ ततो निरीहो विरमेत्स्वानुभूत्याऽऽत्मनि स्थितः ॥४४॥ स्वात्मवृत्तं मयेत्थं ते सुगुप्तमपि वर्णितम् ॥ व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्प्रियः ॥४५॥ नारद उवाच ॥ धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ॥ पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहम् ॥ ४६ ॥ इति श्रीभागवते महा० सप्तम० युधि० प्रह्लादाय दत्तात्रेयेण पारमहंस्यधर्मनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ युधिष्ठिर उवाच ॥ गृहस्थ एतां पदवीं विधिना येन चाञ्जसा ॥ याति देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १ ॥

विरमेत् ॥४३॥४४॥ एवं सुगुप्तमपि स्वात्मवृत्तं तुभ्यं वर्णितम् । यतो भवान् भगवत्प्रियः ॥४५॥ नारद उवाच ॥ असुरेश्वरो मुनेः पारमहंस्यं धर्मं श्रुत्वा तं पूजयित्वाऽऽज्ञां गृहीत्वा गृहं ययौ ॥४६॥ इति श्रीभा० चू० सप्तम० त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते । देशकालादिभेदेन पुनः श्रेयोविशेषकृत् ॥१॥ युधिष्ठिर उवाच ॥ हे देवर्षे ! मादृशाः गृहस्थाः येन विधिना संन्यासिनां पदवीं यान्ति तं विधिं ब्रूहि ॥१॥

१ तूलिकायाम् । २ भगवत्परः इ० पा० ।

नारद उवाच ॥ हे राजन् ! गृहेषु स्थितो गृहोचिताः क्रियाः वासुदेवार्पिताः कुर्वन् मुनीनुपासीत ॥ २ ॥ भगवतोऽवतारकथामृतं श्रद्धया शृण्वन् ॥३॥ सत्सङ्गादात्मजायात्मजादिसङ्गं त्यजेत् ॥४॥ गृहादिषु विरक्तोऽनुरक्त इव स्थित्वा यावदर्थस्तावत् स्वीकुर्यात् ॥५॥ ज्ञातयः पितरौ पुत्र भ्रातृसुहृदादयो यदिच्छन्ति यद् वदन्ति तत् निर्ममस्ताननुमोदेत ॥६॥ दिव्यं धान्यादि भौमं निधानादि दैवलब्धं मत्वा पूर्वोक्तकर्माणि कुर्यात्

नारद उवाच ॥ गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः ॥ वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ २ ॥ शृण्वन् भगवतोऽभीक्ष्णमवतारकथामृतम् ॥ श्रद्दधानो यथाकालमुपशान्तजनावृतः ॥ ३ ॥ सत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु ॥ विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥ ४ ॥ यावदर्थमुदासीनो देहे गेहे च पण्डितः ॥ विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत् ॥५॥ ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ॥ यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः ॥ ६ ॥ दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम् ॥ तत् सर्वमुपभुञ्जान एतत् कुर्यात्स्वतो बुधः ॥७॥ यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ॥ अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥८॥ मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः ॥ आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत् ॥९॥ त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ॥ यथादेशं यथाकालं यावद्दैवोपपादितम् ॥ १० ॥ आश्वाघान्तेऽवसायिभ्यः कामान् संविभजेद् यथा ॥ अप्येकामात्मनो दारांनृणां स्वत्वग्रहो यतः ॥ ११ ॥ जह्याद् यदर्थे स्वप्राणान् हन्याद्वा पितरं गुरुम् ॥ तस्यां स्वत्वं स्त्रियां जह्याद् यस्तेन ह्यजितो जितः ॥ १२ ॥ कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ॥ क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ॥ १३ ॥

॥७॥ स्वार्थेऽधिकं यो मन्येत स स्तेनो दण्डमर्हति ॥८॥ मृगोष्ट्रवृषादिप्राणिनः पुत्रवत् पश्येत् ॥९॥ गृहस्थोऽपि त्रिवर्गं कृच्छ्रेण न सेवेत ॥१०॥ आश्वचाण्डालादिभ्यः स्वभोज्यान् विभज्य दद्यात् । एकामपि स्वस्त्रियमतिथिसेवने युञ्जीत ॥ ११ ॥ यदर्थे प्राणान् पितरं गुरुं च हन्यात् तस्यां स्त्रियां यः स्वात्माभिमानं त्यजेत् तेनेश्वरो जित एव ॥१२॥ कृमिविड्भस्मसंज्ञं तुच्छकलेवरं क्व, स्त्रियां रतिः क्व ॥ १३ ॥

प्राज्ञः पञ्चयज्ञशेषैरन्नादिभिः स्ववृत्तिं कल्पयेत् । शेषे स्वत्वं त्यजन् महतां पदवीं प्राप्नुयात् ॥ १४ ॥ स्ववृत्त्या प्राप्तवित्तेनान्वहं देवादीन् यजेत् ॥ १५ ॥ यदा स्वस्याधिकारो यज्ञसंपदश्च स्युः तदाऽग्निहोत्रादिना पुरुषं यजेत् ॥१६॥ विप्रमुखे हुतैर्यथा भगवान् तुष्येत् तथाऽग्नौ न ॥ १७ ॥ अतो ब्राह्मणादिष्वन्तर्यामिणमीश्वरं यजस्व ॥ १८ ॥ द्विजो भाद्रे पित्रोरापरपक्षिकं श्राद्धं कुर्यात् तद्बन्धूनामपि ॥ १९ ॥ अयनद्वये व्यतीपाते दिनक्षये चन्द्रसूर्यग्रहणे द्वादश्यां श्रवणे ॥ २० ॥ अक्षय्यतृतीयायां कार्त्तिकशुक्लनवम्यां मार्गशीर्षादिमासचतुष्टयेऽपि

सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद् वृत्तिमात्मनः ॥ शेषे स्वत्वं त्यजन् प्राज्ञः पदवीं महतामियात् ॥ १४ ॥ देवानृषीन् नृभूतानि पितॄनात्मानमन्वहम् ॥ स्ववृत्त्याऽऽगतवित्तेन यजेत पुरुषं पृथक् ॥१५॥ यर्ह्यात्मनोऽधिकाराद्याः सर्वाःस्युर्यज्ञसंपदः ॥ वैतानिकेन विधिना अग्निहोत्रादिना यजेत् ॥ १६ ॥ न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् ॥ इज्येत हविषा राजन् यथा विप्रमुखे हुतैः ॥१७॥ तस्माद्ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः ॥ तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं ब्राह्मणाननु ॥ १८ ॥ कुर्यादापरपक्षीयं मासि प्रौष्ठपदे द्विजः ॥ श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान् ॥ १९ ॥ अयने विषुवे कुर्याद् व्यतीपाते दिनक्षये ॥ चन्द्रादित्योपरागे च द्वादशीश्रवणेषु च ॥ २० ॥ तृतीयायां मासि शुक्ले नवम्यामथ कार्तिके ॥ चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥ २१ ॥ माघे च सितसप्तम्यां मघाराकासमागमे ॥ राकया चानुमत्या वा मासर्क्षाणि युतान्यपि ॥ २२ ॥ द्वादश्यामनुराधा स्याच्छ्रवणस्तिस्र उत्तराः ॥ तिसृष्वेकादशी वाऽऽसु जन्मर्क्षश्रोणयोगयुक् ॥ २३ ॥ त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः ॥ कुर्यात् सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २४ ॥ एषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् ॥ पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरम् ॥ २५ ॥ संस्कारकालो जायाया अपत्यस्यात्मनस्तथा ॥ प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ॥ २६ ॥

तिसृष्वष्टकासु ॥ २१ ॥ माघशुक्लसप्तम्यां मघायुक्तपौर्णिमायाम् ॥ २२ ॥ द्वादश्यां श्रवणानुराधायां जन्मर्क्षे ॥ २३ ॥ एते कालाः नृणां श्रेयोविवर्धनाः । एषु श्राद्धादिकं कुर्यात् । तदेवायुषः साफल्यम् ॥ २४ ॥ एषु यत् कृतं दानहोमजपादि तदक्षय्यं भवति ॥ २५ ॥ जायायाः गर्भाधानादि पुत्रस्य जातकर्मादि मृतानां दहनादि जायादीनामात्मनश्च श्रेयसे कर्माणि कुर्यात् ॥ २६ ॥

अथ पुण्यदेशान् वक्ष्यामि । यत्र सत्पात्रं लभ्यते स पुण्यदेशः ॥ २७ ॥ यत्र भगवद्भक्ताः यत्र ब्राह्मणकुलम् ॥ २८ ॥ हरेरर्चा गङ्गाद्याः नद्यश्च ॥ २९ ॥ यत्र पुष्करादीनि सरांसि तथा कुरुक्षेत्रं गया प्रयागः पुलहाश्रमः ॥ ३० ॥ नैमिषं प्रभासः कुशस्थली वाराणसी मथुरा पम्पा बिन्दुसरः ॥ ३१ ॥ बदरिकाश्रमः सीतारामाश्रमादयो महेन्द्रमलयादयः सर्वे पर्वताः ॥ ३२ ॥ एते यत्र सन्ति ते पुण्यतमाः देशाः । तान् पुण्येच्छुः

अथ देशान्प्रवक्ष्यामि धर्मादिश्रेयआवहान् ॥ स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ २७ ॥ बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ॥ यत्र ह ब्राह्मणकुलं तपो विद्यादयान्वितम् ॥ २८ ॥ यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ॥ यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥ २९ ॥ सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ॥ कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥ ३० ॥ नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली ॥ वाराणसी मधुपुरी पम्पा बिन्दुसरस्तथा ॥ ३१ ॥ नारायणाश्रमो नन्दा सीतारामाश्रमादयः ॥ सर्वे कुलाचला राजन्महेन्द्रमलयादयः ॥ ३२ ॥ एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये ॥ एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदयः ॥३३॥ हरिरेवैक उर्वीश यन्मयं वै चराचरम् ॥ पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः ॥ ३४ ॥ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु ॥ राजन् यदग्रपूजायां मतः पात्रतयाऽच्युतः ॥ ३५ ॥ जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ॥ तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥ ३६ ॥ पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ॥ शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥ ३७ ॥ तेष्वेषु भगवान्राजंस्तारतम्येन वर्तते ॥ तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते ॥ ३८ ॥ दृष्ट्वा तेषां मिथो नृणामवज्ञानात्मतां नृप ॥ त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ३९ ॥

सेवेत ॥ ३३ ॥ हे राजन् ! सर्वेषु हरिरेव पात्रम् ॥३४॥ सनकादिषु सत्स्वपि तव राजसूये हरिः पात्रतया संमतः ॥ ३५ ॥ ब्रह्माण्डकोशवृक्षस्य मूलं अच्युतः ॥ तदङ्घ्रिपूजनेन सर्वेषां पूजनं भवति ॥ ३६ ॥ भगवान् नृतिर्यगादिपुरेषु शेते अतः पुरुषः इति प्रसिद्धः ॥ ३७ ॥ सर्वप्राणिषु भगवान् तारतम्येन वर्तते । अतः पुरुषः सत्पात्रम् ॥ ३८ ॥ लोकास्त्रेतादिषु यज्ञादिभिः प्रतिमादौ हरेः पूजां कुर्वन्ति ३९ ॥

हरेरुपासिताऽपि पूजा पुरुषद्वेषिणामर्थदा न भवति । द्वेषं हित्वा पूजिताऽर्थदा भवति ॥४०॥ हे राजेन्द्र ! पुरुषेष्वपि ब्राह्मणं सत्पात्रं विदुः यत-स्तप आदिना स हरेस्तनुं वेदं धत्ते॥४१॥पादरजसा त्रिलोकीं पुनन्तस्ते ब्राह्मणाः कृष्णस्य महद् दैवतम्॥४२॥इति श्रीभागवते चू०सप्तमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥ ततः पञ्चदशे सर्ववर्णाश्रमनिबन्धनम् । सारतः संग्रहेणाथ वर्ण्यते मोक्षलक्षणम् ॥ १ ॥ नारद उवाच ॥ केचिद् द्विजाः कर्मनिष्ठाः, अपरे तपोनिष्ठाः, अन्ये स्वाध्यायनिष्ठाः, केचिद् ज्ञानयोगनिष्ठाः ॥ १ ॥ तत्रानन्तफलमिच्छता हव्यकव्यानि ज्ञाननिष्ठाय

ततोऽर्चायां हरिं केचित् संश्रद्धाय सपर्यया ॥ उपासत उपास्ताऽपि नार्थदा पुरुषद्विषाम् ॥ ४० ॥ पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ॥ तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥४१॥ नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः॥ पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ॥ ४२ ॥ इति श्रीभागवते म० सप्तमस्कन्धे सदाचारनिर्णये प्रतिमाद्यर्च-नादिधर्मनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ नारद उवाच ॥ कर्मनिष्ठाद्विजाः केचित् तपोनिष्ठा नृपापरे ॥ स्वाध्यायेऽन्ये प्रवचने ये केचिज्ज्ञानयोगयोः ॥१॥ ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता ॥ दैवे च तदभावे स्यादितरेभ्यो यथार्हतः ॥ २ ॥ द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ॥ भोजयेत् सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्त-रम् ॥३॥ देशकालोचिता श्रद्धा द्रव्यपात्रार्हणानि च ॥ सम्यग् भवन्ति नैतानि विस्तरात् स्वजनार्पणात् ॥४॥ देशे काले च संप्राप्ते मुन्यन्नं हरिदैवतम् ॥ श्रद्धया विधिवत् पात्रे न्यस्तं कामधुगक्षयम् ॥५॥ देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च ॥ अन्नं संविभजन् पश्येत् सर्वं तत्पुरुषात्मकम् ॥ ६ ॥ न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ॥ मुन्यन्नैः स्यात् परा प्रीतिर्यथा न पशुहिंसया ॥ ७ ॥

देयानि ॥२॥ दैवे द्वौ पितृकार्ये त्रीन् । उभयत्रैकैकं वा भोजयेत् । समृद्धोऽपि श्राद्धे विस्तारं न कुर्यात् ॥ ३ ॥ देशकालोचिता पूजाऽविस्तरात् सम्यग् भवति विस्तरान्न ॥ ४ ॥ देशे काले च संप्राप्ते व्रीह्यादिकं सत्पात्रे दत्तमक्षय्यं भवति ॥ ५ ॥ देवर्षिपितृभूतेभ्यः स्वजनाय चान्नं विभजन् सर्वमीश्वरात्मकं पश्येत् ॥६॥ धर्मज्ञः श्राद्धे आमिषं न दद्यात् स्वयं च नाश्नीयात् । व्रीह्यादिभिर्यथा हरेः प्रीतिः तथा पशुहिंसया न ॥ ७ ॥

नृणां हिंसात्यागसदृशोऽन्यो धर्मो नास्ति ॥ ८ ॥ अतो ज्ञानिनो मनो नियम्य कर्ममयान् यज्ञान् त्यजन्ति ॥ ९ ॥ द्रव्ययज्ञैर्यक्ष्यमाणं नरं दृष्ट्वा भूतानि बिभ्यति ॥ १० ॥ अतो धर्मविद् दैवप्राप्तेन मुन्यन्नेन तुष्टः सन् नित्यनैमित्तिकीः क्रियाः कुर्यात् ॥११॥ किंच विधर्मः परधर्मः आभासः उपधर्मः छलः इमा अधर्मशाखाः पञ्च धर्मज्ञस्त्यजेत् ॥ १२ ॥ विधर्मादीनामर्थमाह । धर्मबाधो विधर्मः । अन्यस्योक्तः परधर्मः पाखण्डः उपधर्मः शब्दभेदश्छलधर्मः ॥ १३ ॥ इच्छया कृतः आभासधर्मः । स्वधर्मात् परधर्मो भूयस्त्वादपि नानुष्ठेयः ॥ १४ ॥ स्वयम-

नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ॥ न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥८॥ एके कर्ममयान् यज्ञान् ज्ञानिनो यज्ञवित्तमाः ॥ आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥ द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ॥ एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब्ध्रुवम् ॥१०॥ तस्माद् दैवोपपन्नेन मुन्यन्नेनापि धर्मवित् ॥ सन्तुष्टोऽहरहः कुर्या-न्नित्यनैमित्तिकीः क्रियाः ॥११॥ विधर्मः परधर्मश्च आभास उपमा छलः ॥ अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥१२॥ धर्मबाधो विधर्मः स्यात् परधर्मोऽन्यचोदितः ॥ उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ॥१३॥ यस्त्वि-च्छया कृतः पुंभिराभासो ह्याश्रमात् पृथक् ॥ स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये ॥ १४ ॥ धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् ॥ अनीहाऽनीहमानस्य महाहेरिव वृत्तिदा ॥१५॥ संतुष्टस्य निरीहस्य स्वात्मारामस्ययत्सुखम् ॥ कुतस्तत कामलोभेन धावतोऽर्थेहया दिशः ॥१६॥ सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥१७॥ संतुष्टः केन वा राजन् न वर्तेतापि वारिणा ॥ औपस्थ्यजैह्व्यकार्पण्याद् गृहपालायते जनः ॥१८॥ असंतुष्टस्य विप्रस्य तेजो विद्या तपो यशः ॥ स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥

धनो धर्मार्थं यात्रार्थं वा धनं नेच्छेत् । निरिच्छस्यानीहा महाहेरिव वृत्तिदा भवति ॥ १५ ॥ संतुष्टस्य यत् सुखं तत् लोभेन धावतः कुतः ॥ १६ ॥ सदा संतुष्टमनसो नरस्य सर्वाः दिशः सुखदाः यथा शर्कराकण्टकादिभ्यः उपानत्पदो दुःखं न ॥ १७ ॥ जनः उपस्थजिह्वा-कामनया श्ववदाचरति ॥ १८ ॥ असंतुष्टस्य विप्रस्य तेजोविद्यादयः इन्द्रियलौल्येन स्रवन्ति ॥ १९ ॥

जनः क्षुत्तृड्भ्यां कामस्यान्तं याति । तथाऽपि दिशो जित्वा भुवः भुक्त्वा लोभस्यान्तं न याति ॥ २० ॥ पण्डिताः बहुज्ञाः बहवः सन्ति । तत्राप्यसंतोषादधः पतन्ति ॥ २१ ॥ अथ कामादिजयोपायानाह ! असंकल्पात् कामं जयेत् । कामत्यागात् क्रोधम् । अर्थेऽनर्थदर्शनेन लोभम् । तत्त्वविचारेण भयम् ॥ २२ ॥ आत्मानात्मविचारेण शोकमोहौ । साधुसेवया दम्भम् । कामादिष्वनीहया हिंसां जयेत् ॥ २३ ॥ प्राणायामेन देहजं दुःखं, कृपया भूतजं दुखं, सात्त्विकाहारादिना निद्रां जह्यात् ॥ २४ ॥ सत्त्वेन रजस्तमसी, उपशमेन सत्त्वम्, एतत्

कामस्यान्तं च क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ॥ जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥२०॥ पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः ॥ सदसस्पतयोऽप्येके असंतोषात् पतन्त्यधः ॥ २१ ॥ असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ॥ अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥२२॥ आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया ॥ योगान्तरायान्मौनेन हिंसां कायाद्यनीहया ॥२३॥ कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ॥ आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ॥ २४ ॥ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ॥ एतत सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ॥ २५ ॥ यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ॥ मर्त्यासद्धीःश्रुतं तस्य सर्वं कुञ्जरशौचवत् ॥ २६ ॥ एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥ योगेश्वरैर्विमृग्यङ्घ्रिर्लोको वै मन्यते नरम् ॥ २७ ॥ षड्वर्गसंयमैकान्ताः सर्वा नियम-चोदनाः ॥ तदन्ता यदि नो योगानावहेयुः श्रमावहाः ॥ २८ ॥ यथा वार्त्तादयो ह्यर्था योगस्यार्थं न बिभ्रति ॥ अनर्थाय भवेयुस्ते पूर्तमिष्टं तथाऽसतः ॥ २९ ॥ यश्चित्तविजये यत्तः स्यान्निस्सङ्गोऽपरिग्रहः ॥ एको विविक्तशरणो भिक्षुर्भिक्षामिताशनः ॥ ३० ॥

सर्वं गुरौ भक्त्या पुरुषो जयेत् ॥ २५ ॥ ज्ञानप्रदे गुरौ यस्य मनुष्य इति बुद्धिस्तस्य शास्त्रश्रवणं व्यर्थम् ॥ २६ ॥ एष भगवान् योगेश्वरैर्विमृग्याङ्घ्रिः, तमीश्वरं जनो नरं मन्यते ॥ २७ ॥ एवं कामादिवेगं जित्वा ध्यानपरो भवेत् ॥ २८ ॥ यथा कृष्यादयोऽर्थाः मोक्षं न साधयन्ति तथा बहिर्मुखस्येष्टापूर्ताद्यपि ॥ २९ ॥ यश्चित्तजये प्रयत्नशीलः स निस्सङ्गो मिताशनो भूत्वा ॥ ३० ॥

शुचौ देशे आसनं संस्थाप्य तत्रोपविश्य ॐ इत्युच्चारयन् ॥ ३१ ॥ पूरककुम्भकरेचकैः प्राणापानौ सन्निरुन्ध्यात् । यावन्मनः कामान् त्यजेत् तावत् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥ यत्र यत्र मनो धावति ततस्ततः आकृष्य हृदि रुन्ध्यात् ॥ ३३ ॥ एवमभ्यस्यतो यत्नशीलस्य चित्तं शान्तिं याति ॥ ३४ ॥ यस्य चित्तं ब्रह्मणि मग्नं तस्य चित्तं कदाऽपि कामे नोत्तिष्ठति ॥ ३५ ॥ यो यतिस्त्यक्तत्रिवर्गान् पुनः सेवेत स वान्ताशी ज्ञेयः ॥ ३६ ॥ कृमिविड्भस्मात्मको देहः । ये देहं ममेति मानयन्ति ते अज्ञानिनः ॥ ३७ ॥ गृहस्थस्य क्रिया-

देशे शुचौ समे राजन् संस्थाप्यासनमात्मनः ॥ स्थितं समं सुखं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१ ॥ प्राणापानौ सन्निरुन्ध्यात् पूरकुम्भकरेचकैः ॥ यावन्मनस्त्यजेत् कामान् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥ यतो यतो निस्सरति मनः कामहतं भ्रमत् ॥ ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥ ३३ ॥ एवमभ्यसतश्चित्तं कालेनाल्पीयसा यतेः ॥ अनिशं तस्य निर्वाणं यात्यनिन्धनवह्निवत् ॥ ३४ ॥ कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत् ॥ चित्तं ब्रह्मसुखस्पृष्टं नैवोतिष्ठेत कर्हिचित् ॥ ३५ ॥ यः प्रव्रज्य गृहात् पूर्वं त्रिवर्गावपनात् पुनः ॥ यदि सेवेत तान् भिक्षुः स वै वान्ताश्यपत्रपः ॥ ३६ ॥ यैः स्वदेहः स्मृतो नात्मा मर्त्यो विट्कृमिभस्मसात् ॥ त एनमात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥३७॥ गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि ॥ तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता॥३८॥ आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः ॥ देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ३९ ॥ आत्मानं चेद्विजानीयात् परं ज्ञानधुताशयः ॥ किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ४० ॥ आहुः शरीरं रथमिन्द्रियाणि हयानभीषून् मन इन्द्रियेशम् ॥ वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशसृष्टम् ॥ ४१ ॥

त्यागो, ब्रह्मचारिणो व्रतत्यागो, वानप्रस्थस्य ग्रामसेवा, संन्यासिनः इन्द्रियैर्विषयसेवनम् ॥ ३८ ॥ एते आश्रमविडम्बकाः । तान् दययोपेक्षेत ॥ ३९ ॥ नरः आत्मानं परं ब्रह्म जानीयाच्चेत् तर्हि लम्पटः सन् कस्य हेतोर्देहं पुष्णाति ॥ ४० ॥ अथ नृदेहस्य रूपकमाह । शरीरं रथं वदन्ति । इन्द्रियाणि तुरगाः । बुद्धिः सारथिः । मनो रश्मयः ॥ ४१ ॥

धर्माधर्मौ चक्रे । साहंकारो जीवो रथः । प्रणवो धनुः । शुद्धो जीवः शरः परं ब्रह्म लक्ष्यम् । यथा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यते । रागद्वेषलोभमोहाः हिंसा मत्सरः ॥ ४२ ॥ ४३ ॥ रजः प्रमादो निद्रादयः एते शत्रवो ज्ञेयाः ॥ ४४ ॥ एवं नृकायरूपं रथमास्थाय प्राप्तज्ञानासिना तान् निर्जित्य शान्तः स्वानन्देन तुष्टः सन् रथादिकं त्यक्त्वा मोक्षं याति ॥४५॥ एवं न कृते त्वेते दुष्टेन्द्रियवाजिसूताः प्रमत्तं जनं प्रवृत्तिमार्गं नीत्वा विषयदस्यून् प्रति निक्षिपन्ति । ते दस्यवः एनं सरथं संसारकूपे क्षिपन्ति ॥ ४६ ॥ एवं प्रवृत्तिमार्गेण

अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् ॥ धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥ ४२ ॥ रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः ॥ मानोऽवमानोऽसूया च माया हिंसा च मत्सरः ॥ ४३ ॥ रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः ॥ रजस्तमः प्रकृतयः सत्त्वप्रकृतयः क्वचित् ॥ ४४ ॥ यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम् ॥ ज्ञानासिमच्युतबलो दधदस्तशत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् ॥ ४५ ॥ नोचेत् प्रमत्तमसदिन्द्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु हि क्षिपन्ति ॥ ते दस्यवः सहयसूतममुं तमोन्धे संसारकूप उरुमृत्युभये क्षिपन्ति ॥४६॥ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ आवर्त्तेत प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥ हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ॥ दर्शश्च पूर्णमासश्च चातुर्मास्यं पशुः सुतः ॥ ४८ ॥ एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ॥ पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥ ४९ ॥ द्रव्यसूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः ॥ अयनं दक्षिणं सोमो दर्श औषधिवीरुधः ॥ ५० ॥ अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः ॥ एकैकश्येनानुपूर्वं भूत्वा भूत्वेह जायते ॥ ५१ ॥

संसारं निवृत्तिमार्गेण मोक्षं प्राप्नोति ॥ ४७ ॥ हिंसामयद्रव्येणाग्निहोत्रादिकं पशुयागं सोमयागम् ॥ ४८ ॥ वैश्वदेवं बलिहरणं वापीकूपादि एतत् सर्वं प्रवृत्ताख्यं कर्म जानीहि ॥ ४९ ॥ येन प्रवृत्तिमार्गेण कृष्णपक्षरात्रौ दक्षिणायने सोमलोकं याति ॥ ५० ॥ तत्र भोगान् भुक्त्वा पुनर्वृष्टिद्वारेणौषध्याद्याः तेभ्योऽन्नम् अन्नाद्रेतः ततो देहः एवं प्रत्येकं क्रमेण पृथिव्यां पुनर्जायते । एष प्रवृत्तिमार्गः ॥ ५१ ॥

भा० स०
॥३५॥

शुचौ देशे आसनं संस्थाप्य तत्रोपविश्य ॐ इत्युच्चारयन् ॥ ३१ ॥ पूरककुम्भकरेचकैः प्राणापानौ सन्निरुन्ध्यात् । यावन्मनः कामान् त्यजेत् तावत् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥ यत्र यत्र मनो धावति ततस्ततः आकृष्य हृदि रुन्ध्यात् ॥ ३३ ॥ एवमभ्यस्यतो यत्नशीलस्य चित्तं शान्तिं याति ॥ ३४ ॥ यस्य चित्तं ब्रह्मणि मग्नं तस्य चित्तं कदाऽपि कामे नोत्तिष्ठत्ति ॥ ३५ ॥ यो यतिस्त्यक्तत्रिवर्गान् पुनः सेवेत स वान्ताशी ज्ञेयः ॥ ३६ ॥ कृमिविड्भस्मात्मको देहः । ये देहं ममेति मानयन्ति ते अज्ञानिनः ॥ ३७ ॥ गृहस्थस्य क्रिया-

देशे शुचौ समे राजन् संस्थाप्यासनमात्मनः ॥ स्थितं समं सुखं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१ ॥ प्राणापानौ सन्निरुन्ध्यात् पूरकुम्भकरेचकैः ॥ यावन्मनस्त्यजेत् कामान् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥ यतो यतो निस्सरति मनः कामहतं भ्रमत् ॥ ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥ ३३ ॥ एवमभ्यसतश्चित्तं कालेनाल्पीयसा यतेः ॥ अनिशं तस्य निर्वाणं यात्यनिन्धनवह्निवत् ॥ ३४ ॥ कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत् ॥ चित्तं ब्रह्मसुखस्पृष्टं नैवोतिष्ठेत कर्हिचित् ॥ ३५ ॥ यः प्रव्रज्य गृहात् पूर्वं त्रिवर्गावपनात् पुनः ॥ यदि सेवेत तान् भिक्षुः स वै वान्ताश्यपत्रपः ॥ ३६ ॥ यैः स्वदेहः स्मृतो नात्मा मर्त्यो विट्कृमिभस्मसात् ॥ त एनमात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥३७॥ गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि ॥ तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता॥३८॥ आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः ॥ देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ३९ ॥ आत्मानं चेद्विजानीयात् परं ज्ञानधुताशयः ॥ किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ४० ॥ आहुः शरीरं रथमिन्द्रियाणि हयानभीषून् मन इन्द्रियेशम् ॥ वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशसृष्टम् ॥ ४१ ॥

त्यागो, ब्रह्मचारिणो व्रतत्यागो, वानप्रस्थस्य ग्रामसेवा, संन्यासिनः इन्द्रियैर्विषयसेवनम् ॥ ३८ ॥ एते आश्रमविडम्बकाः । तान् दययोपेक्षेत ॥ ३९ ॥ नरः आत्मानं परं ब्रह्म जानीयाच्चेत् तर्हि लम्पटः सन् कस्य हेतोर्देहं पुष्णाति ॥ ४० ॥ अथ नृदेहस्य रूपकमाह । शरीरं रथं वदन्ति । इन्द्रियाणि तुरगाः । बुद्धिः सारथिः । मनो रश्मयः ॥ ४१ ॥

चू० अ०
१५
॥३५॥

धर्माधर्मौ चक्रे । साहंकारो जीवो रथः । प्रणवो धनुः । शुद्धो जीवः शरः परं ब्रह्म लक्ष्यम् । यथा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यते । रागद्वेषलोभमोहाः हिंसा मत्सरः ॥ ४२ ॥ ४३ ॥ रजः प्रमादो निद्रादयः एते शत्रवो ज्ञेयाः ॥ ४४ ॥ एवं नृकायरूपं रथमास्थाय प्राप्तज्ञानासिना तान् निर्जित्य शान्तः स्वानन्देन तुष्टः सन् रथादिकं त्यक्त्वा मोक्षं याति ॥४५॥ एवं न कृते त्वेते दुष्टेन्द्रियवाजिसूताः प्रमत्तं जनं प्रवृत्तिमार्गं नीत्वा विषयदस्यून् प्रति निक्षिपन्ति । ते दस्यवः एनं सरथं संसारकूपे क्षिपन्ति ॥ ४६ ॥ एवं प्रवृत्तिमार्गेण

अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् ॥ धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥ ४२ ॥ रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः ॥ मानोऽवमानोऽसूया च माया हिंसा च मत्सरः ॥ ४३ ॥ रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः ॥ रजस्तमः प्रकृतयः सत्त्वप्रकृतयः क्वचित् ॥ ४४ ॥ यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम् ॥ ज्ञानासिमच्युतबलो दधदस्तशत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् ॥ ४५ ॥ नोचेत् प्रमत्तमसदिन्द्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु हि क्षिपन्ति ॥ ते दस्यवः सहयसूतममुं तमोन्धे संसारकूप उरुमृत्युभये क्षिपन्ति ॥४६॥ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ आवर्त्तेत प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥ हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ॥ दर्शश्च पूर्णमासश्च चातुर्मास्यं पशुः सुतः ॥ ४८ ॥ एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ॥ पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥ ४९ ॥ द्रव्यसूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः ॥ अयनं दक्षिणं सोमो दर्श औषधिवीरुधः ॥ ५० ॥ अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः ॥ एकैकश्येनानुपूर्वं भूत्वा भूत्वेह जायते ॥ ५१ ॥

संसारं निवृत्तिमार्गेण मोक्षं प्राप्नोति ॥ ४७ ॥ हिंसामयद्रव्येणाग्निहोत्रादिकं पशुयागं सोमयागम् ॥ ४८ ॥ वैश्वदेवं बलिहरणं वापीकूपादि एतत् सर्वं प्रवृत्ताख्यं कर्म जानीहि ॥ ४९ ॥ येन प्रवृत्तिमार्गेण कृष्णपक्षरात्रौ दक्षिणायने सोमलोकं याति ॥ ५० ॥ तत्र भोगान् भुक्त्वा पुनर्वृष्टिद्वारेणौषध्याद्याः तेभ्योऽन्नम् अन्नाद्रेतः ततो देहः एवं प्रत्येकं क्रमेण पृथिव्यां पुनर्जायते । एष प्रवृत्तिमार्गः ॥ ५१ ॥

गर्भाधानादिश्मशानान्तसंस्कारैः संस्कृतो द्विजः ॥ ५२ ॥ इन्द्रियाणि मनसि मनो वाचं वर्णसमुदाये ओंकारे तम् ॥ ५३ ॥ ॐकारं नादे नादं ब्रह्मणि न्यसेत् । क्रमेण परं पदं याति ॥ ५४ ॥ यस्मिन् गते न निवर्तेत तद् देवयानं निवृत्तिमार्गं वदन्ति ॥ ५५ ॥ यः शास्त्रचक्षुषा देवयानं पितृयानं च वेद स देहस्थोऽपि न मुह्यति ॥ ५६ ॥ देहानामादावन्ते कारणावधित्वेन प्रकाशाप्रकाशरूपो ज्ञानी स्वयमेव ॥ ५७ ॥ तर्कविरोधेन सर्वतो बाधितोऽपि प्रतिबिम्बादिराभासो वस्तुतया स्मृतः तद्वद्वैन्द्रियकं सर्वमर्थत्वेन विकल्पितं न तु परमार्थतः ॥ ५८ ॥ पृथिव्यादिपञ्च-

निषेकादिश्मशानान्तैस्संस्कारैः संस्कृतो द्विजः ॥ इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति ॥ ५२ ॥ इन्द्रियाणि मन-स्यूर्मौ वाचि वैकारिकं मनः ॥ वाचं वर्णसमाम्नाये तमोंकारे स्वरे न्यसेत् ॥५३॥ ओंकारं बिन्दौ नादे तं तं तु प्राणे महत्यमुम् ॥ अग्निः सूर्यो दिवा प्राह्णः शुक्लो राकोत्तरं स्वराट् ॥ विश्वश्च तैजसः प्राज्ञस्तुर्य आत्मा समन्वयात् ॥ ॥५४॥ देवयानमिदं प्राहुर्भूत्वा भूत्वाऽनुपूर्वशः ॥ आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते ॥५५॥ य एते पितृदेवा-नामयने वेदनिर्मिते ॥ शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥५६॥ आदावन्ते जनानां सद्बहिरंतः परावरम् ॥ ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिस्त्वयं स्वयम् ॥५७॥ आबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः ॥ दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥ ५८ ॥ क्षित्यादीनामिहार्थानां छाया न कतमाऽपि हि ॥ न संघातो विकारोऽपि न पृथङ्ना-न्वितो मृषा ॥ ५९ ॥ धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ॥ नस्युर्ह्यसत्यवयविन्यसन्नवयवोऽन्ततः ॥ ६० ॥ स्यात् सादृश्यभ्रमस्तावद् विकल्पे सति वस्तुनः ॥ जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥ भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं यथाऽऽत्मनः ॥ वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥ ६२ ॥

भूतानां छाया देहादिसंघातारम्भपरिणामानां मध्ये कतमाऽपि न भवति । एकस्मिन् वृक्षे आकृष्टे सर्वं वनं नाकृष्यते तद्वत् ॥५९॥ किंच धातवो भूतमात्रावयवैर्विना न स्युः अवयवोऽप्यन्ततोऽसन्नेव स्यात् ॥६०॥ यः ईश्वरं विनाऽन्यं पुरुषं तत्सदृशं पश्यति स सादृश्यभ्रमः । यथा स्वप्ने जाग्र-त्सुषुप्ती तथा विधिनिषेधकता ॥६१॥ भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतमेतत् त्रयं स्वानुभवेन यो जानाति स मुनिस्त्रीन् जाग्रदादीन् निवर्तयति ॥६२॥

कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत् तद् भावाद्वैतम् ॥ ६३ ॥ परे ब्रह्मणि सर्वकर्मार्पणं क्रियाद्वैतम् ॥ ६४ ॥ स्वस्य जायापुत्रादिसर्वप्राणिनां चाभेदालोचनेनार्थकामयोर्यदैक्यं तद् द्रव्याद्वैतम् ॥ ६५ ॥ नरोऽनापदि द्रव्येणाप्रतिषिद्धेन कर्माणि कर्तुमिच्छेन्नान्यैः ॥ ६६ ॥ एतैरन्यैश्च वेदोक्तैः कर्मभिर्वर्तमानो गृहेऽपि कृष्णस्य गतिं यायात् ॥ ६७ ॥ हे नृप ! यूयं गृहे वर्तमानाः सन्तः श्रीकृष्णादेव दुःखगणादतरत । भवान् यस्य चरणाश्रयेण दिशो जित्वा यज्ञान् कृतवान् ॥ ६८ ॥ श्रीकृष्णसेवा महतामवज्ञया भ्रश्यति, तत्कृपया सिद्ध्यति ।

कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत् ॥ अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥ यद् ब्रह्मणि परे साक्षात्सर्वकर्मसमर्पणम् ॥ मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥ ६४ ॥ आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ॥ यत् स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते॥६५॥यद् यस्य वा निषिद्धं स्याद् येन यत्र यतो नृप ॥ स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥ एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः ॥ गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ्नरः ॥ ६७ ॥ यया हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरतात्मनः प्रभोः ॥ यत्पादपङ्केरुहसेवया भवानहारषीन्निर्जितदिग्गजः क्रतून् ॥ ६८ ॥ अहं पुराऽभवं कश्चिद् गन्धर्व उपबर्हणः ॥ नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसंमतः ॥ ६९ ॥ रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः ॥ स्त्रीणां प्रियतमो नित्यं मत्तस्तु पुरुलम्पटः ॥ ७० ॥ एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः ॥ उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥ अहं च गायंस्तद्विद्वान् स्त्रीभिः परिवृतो गतः ॥ ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा ॥ याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ॥ ७२ ॥ तावद्दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम् ॥ शुश्रूषयाऽनुषंगेण प्राप्तोऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥

तत् स्वोदाहरणेन दर्शयति । हे धर्म ! पुराऽहं गतकल्पे उपबर्हणो नाम गन्धर्वः आसम् ॥ ६९ ॥ रूपमाधुर्यभाषणेन चतुरो नित्यं स्त्रीषु लम्पटः ॥ ७० ॥ एकदा देवयज्ञे गन्धर्वादयो हरिगाथोपगायने विश्वसृड्भिराहूताः ॥७१॥ तत्र स्त्रीभिर्वेष्टितः सन् गतः । तदा मदपराधं ज्ञात्वा विश्वसृजः शूद्रो भवेति शेपुः ॥ ७२ ॥ तावद्दास्यां जज्ञे तत्र ब्रह्मवादिनां सेवया ब्रह्मपुत्रतां प्राप्तः ॥ ७३ ॥

हे राजन् ! एवं गृहमेधीयो धर्मः उक्तः येन संन्यासिनां पदवीं प्राप्नुयात् ॥ ७४ ॥ यूयं नृलोके भूरिभागाः । यतो युष्माकं गृहेषु नराकारं श्रीकृष्णाख्यं ब्रह्म साक्षाद् वसति । तद्दर्शनार्थं मुनयः सर्वतः आयान्ति ॥ ७५ ॥ सोऽयं ब्रह्मैव युष्माकं प्रियः सुहृत् मातुलेयः इत्यादि रूपो भवति ॥ ७६ ॥ यस्य रूपं शिवादिभिरपि साक्षान्नोपवर्णितम् । एवंभूतो भगवान् मे प्रसीदताम् ॥ ७७ ॥ श्रीशुक उवाच । हे

धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः ॥ गृहस्थो येन पदवीमञ्जसा न्यासिनामियात् ॥ ७४ ॥ यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति ॥ येषां गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥७५॥ स वा अयं ब्रह्म महद् विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद् वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद् गुरुश्च ॥ ७६ ॥ न यस्य साक्षाद् भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥ श्रीशुक उवाच ॥ इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभ ॥ पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥७८॥ कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः ॥ श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः ॥७९॥ इति दाक्षायणीनां ते पृथग्वंशाः प्रकीर्तिताः ॥ देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ८० ॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां सप्तमस्कन्धे प्रह्लादानुचरिते युधिष्ठिरनारदसंवादे वर्णाश्रमधर्मनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

समाप्तोऽयं सप्तमः स्कन्धः



राजन् ! एवं नारदोक्तं निशम्य प्रीतो धर्मराजः कृष्णं नारदं च पूजयामास ॥ ७८ ॥ पूजितो मुनिः कृष्णपार्थावामन्त्र्य ययौ । धर्मः कृष्णं परं ब्रह्म श्रुत्वा विस्मितः आसीत् ॥ ७९ ॥ एवं ते दक्षकन्यानां वंशाः कथिताः ॥ यत्र देवासुरमनुष्याद्याश्चराचराः अभवन् ॥८०॥ इति श्रीभागवते चूर्णिकायां सप्तमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ समाप्तोऽयं सप्तमः स्कन्धः ॥

इति सचूर्णिके श्रीमद्भागवते सप्तमस्कन्धः समाप्तः

अथ सचूर्णिके श्रीमद्भागवते अष्टमस्कन्धः प्रारभ्यते

अष्टमस्कंधः


गजेंद्र
हरि:
दैत्य.
समुद्रमंथन
देव.
मंदर पर्वत.
चतुर्दश रत्नें
मोहिनी
अमृतवांटने.
कश्यपः
वामनः
बळी
वामन.
मत्स्यावतार

श्रीगणेशाय नमः॥अथाष्टमे चतुर्विंशत्यध्यायैर्मनुवर्णनम्।तत्सुतैर्ऋषिदेवेन्द्रैर्मूर्तिभिश्च हरेः सह॥१॥प्रतिमन्वन्तरं चैव मन्वाद्याः षट् पृथक्पृथक्। प्रवर्तयन्ति सद्धर्मान् पालयन्त्याचरन्ति च॥२॥ अतो मन्वन्तरस्योक्तं सद्धर्म इति लक्षणम्। येनैव क्रियमाणेन नरो न निरयं व्रजेत्॥३॥तत्र तु प्रथमे स्वायंभुवः स्वारोचिषस्तथा। उत्तमस्तामसश्चेति चतुर्मनुनिरूपणम्॥४॥स्वायंभुवेऽन्तरेऽनन्तदुरन्तगुणवर्णनात्। मुदितः परिपप्रच्छ सर्वमन्वन्तरस्थितिम्॥५॥राजोवाच॥हे गुरो ! स्वायंभुवस्य मनोर्वंशो विस्तरात् मया श्रुतः। यत्र मनुकन्यासु मरीच्यादीनां पुत्रादिसर्गः॥अन्यान्

ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ स्वायंभुवस्येह गुरो वंशोऽयं विस्तराच्छ्रुतः ॥ यत्र विश्वसृजां सर्गो मनून्न्यान्वदस्व नः ॥ १ ॥ यत्र यत्र हरेर्जन्म कर्माणि च महीयसः ॥ गृणन्ति कवयो ब्रह्मंस्तानि नो वद शृण्वताम् ॥ २ ॥ यद्यस्मिन्नन्तरे ब्रह्मन् भगवान्विश्वभावनः ॥ कृतवान्कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥ ३ ॥ ऋषिरुवाच ॥ मनवोऽस्मिन् व्यतीताः षट् कल्पे स्वायंभुवाद्यः ॥ आद्यस्ते कथितो यत्र देवादीनां च संभवः ॥ ४ ॥ आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ॥ धर्मज्ञानोपदेशार्थं भगवान्पुत्रतां गतः ॥ ५ ॥ कृतं पुरा भगवतः कपिलस्यानुवर्णितम् ॥ आख्यास्ये भगवान्यज्ञो यच्चकार कुरूद्वह ॥६॥ विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ॥ विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥७॥ सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् ॥ तप्यमानस्तपो घोरमिदमन्वाह भारत ॥८॥

मनून् वद ॥ १ ॥ यत्र यत्र हरेर्जन्मानि कर्माणि च कवयो गृणन्ति तानि वद ॥ २ ॥ तथा भगवान् गतमन्वन्तरे यत् कृतवान् भविष्ये यत् करिष्यति वर्तमाने यत् कुरुते तदपि ब्रूहि ॥ ३ ॥ श्रीशुक उवाच ॥ अस्मिन् कल्पे स्वायंभुवादयो मनवः षड् गताः। तत्राद्यो मनुस्ते कथितः ॥४॥स्वायंभुवस्य कन्ययोराकूतिदेवहूत्योर्धर्मज्ञानोपदेशार्थं हरिः पुत्रतां गतः॥५॥ तत्र कपिलकृतं कथितम्। यज्ञो यच्चकार तदाख्यास्ये॥६॥ अथ स्वायंभुवो मनुर्विरक्तः सन् राज्यं हित्वा सभार्यो वनं प्रविश्य ॥ ७ ॥ सुनन्दायां नद्यां वर्षशतं घोरं तपस्तप्यमानः इदमाह ॥ ८ ॥

---

१ धर्मकपिलमूर्तिभ्याम्।

मनुरुवाच । येन विश्वं चेतनीभवति विश्वं तु यं न चेतनीकरोति जने सुप्ते यो जागर्ति तं जनो न वेद स इमं तु वेद ॥ ९ ॥ लोके सर्वमीश्वरेण सत्ताचैतन्याभ्यां संव्याप्तमतस्तेनैव दत्तं भुंक्ष्व न स्वार्थम् । कस्यचित् धनं मा कांक्षीः ॥१०॥ यं पश्यन्तं जनो न पश्यति यस्य पश्यतो ज्ञानं न नश्यति तं देवं भजध्वम् ॥ ११ ॥ यस्याद्यन्तादीनि न सन्ति विश्वस्य तु तानि यस्माद् भवन्ति ॥ १२ ॥ स विश्वकायो

मनुरुवाच ॥ ये न चेतयते विश्वं विश्वं चेतयते न यम् ॥ यो जागर्ति शयनेऽस्मिन्नायं तं वेद वेद सः ॥ ९ ॥ आत्मावास्यमिदं विश्वं यत् किंचिज्जगत्यां जगत् ॥ तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥१०॥ यं न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति ॥ तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥ न यस्याद्यन्तौ मध्यं च स्वः परो नान्तरं बहिः ॥ विश्वस्यामूनि यद्यस्माद्विश्वं च तदृतं महत् ॥ १२ ॥ स विश्वकायः पुरुहूत ईशः सत्यः स्वयंज्योतिरजः पुराणः ॥ धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥ १३ ॥ अथाग्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे ॥ ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥ १४ ॥ ईहते भगवानीशो न हि तत्र विषज्जते ॥ आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम् ॥१५॥ तमीहमानं निरहंकृतं बुधं निराशिषं पूर्णमनन्यचोदितम् ॥ नॄन् शिक्षयन्तं निजवर्त्मसंस्थितं प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥ १६ ॥ श्रीशुक उवाच ॥ इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् ॥ दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्षुधा ॥ १७ ॥



मायया विश्वस्य जन्मादीनि धत्ते । तदपीच्छारहितः आस्ते ॥ १३ ॥ मुनयः आदौ मोक्षार्थं कर्माणि कुर्वन्ति ॥ १४ ॥ भगवानात्मलाभेन पूर्णार्थः । अतः कर्मसु न विषज्जते ॥ ॥१५॥ तं भगवन्तं कृष्णाद्यवतारैर्वेदोक्तं कर्म कुर्वन्तं सर्वधर्मप्रवर्तकं प्रभुं शरणं प्रपद्ये ॥१६॥ श्रीशुक उवाच ॥ एवं समाधौ मन्त्रोपनिषदमुच्चारयन्तं मनुं दृष्ट्वाऽसुराः यातुधानास्तं भक्षयितुमभ्यद्रवन् ॥ १७ ॥

---

१ भूतजातम् । २ सत्यम् । ३ परिपूर्ण ब्रह्म । ४ विश्वं कायो यस्य सः । ५ बहुनामा । ६ तमनुवर्तमानाः । ७ निरहंकृतादीनि रामाद्यवतारस्य जीवर्वलक्षण्यद्योतकानि । ८ निजावतारानुरूपमार्गसंस्थितम् ।

तदाऽऽकूतिपुत्रो यज्ञः स्वपुत्रैर्यामदेवैर्वेष्टितः सन् तान् हत्वा स्वर्गं पालयामास । अथ मन्वन्तराण्याह । तत्राद्यः । स्वायंभुवो मनुः १, प्रियव्रतोत्तानपादौ पुत्रौ २, यामादयो देवाः ३, मरीचिप्रमुखाः ऋषयः ४, यज्ञोऽवतारः ५, स एवेन्द्रः ६, ॥ १८ ॥ ततो द्वितीयोऽग्नेः पुत्रः स्वारोचिषो मनुः । द्युमत्सुषेणरोचिष्मदादयस्तत्सुताः ॥ १९ ॥ तत्र रोचननामेन्द्रः तुषितादयो देवाः ऊर्जस्तम्भादयः सप्त ऋषयः ॥ २० ॥ वेदशिरसः ऋषेस्तुषितायां विभुरित्यवतारो जातः ॥ २१ ॥ तस्मादष्टाशीतिसहस्राणि ऋषयो ब्रह्मचर्यव्रतमशिक्षन्त ॥ २२ ॥

तांस्तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः ॥ यामैः परिवृतो देवैर्हत्वाऽशासत्त्रिविष्टपम् ॥ १८ ॥ स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥ १९ ॥ तत्रेन्द्रो रोचनस्त्वासीद्देवाश्च तुषितादयः ॥ ऊर्जस्तम्भादयः सप्त ऋषयो ब्रह्मवादिनः ॥ २० ॥ ऋषेस्तुवेदशिरसस्तुषिता नाम पत्न्यभूत् ॥ तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥२१॥ अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ॥ अन्वशिक्षन्व्रतं तस्य कौमारब्रह्मचारिणः ॥२२॥ तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ॥ पवनस्सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ॥२३॥ वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ॥ सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् ॥२४॥ धर्मस्य सूनृतायां तु भगवान्पुरुषोत्तमः ॥ सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥ सोऽनृतव्रतदुश्शीलानसतो यक्षराक्षसान् ॥ भूतद्रुहो भूतगणांस्त्ववधीत् सत्यजित्सखः ॥ २६ ॥ चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः ॥ पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ॥२७॥ सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ॥ ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे ॥ २८ ॥

ततस्तृतीयः प्रियव्रतसुत उत्तमो नाम मनुः । पवनसृञ्जयाद्यास्तत्सुताः ॥ २३ ॥ वसिष्ठात्मजाः प्रमदादयः सप्त ऋषयः । सत्यादयोदेवाः । सत्यजिदिन्द्रः ॥ २४ ॥ धर्मात् सूनृतायां सत्यसेनो नाम हरेरवतारः ॥ २५ ॥ स इन्द्रसखः यक्षराक्षसान् जघान ॥ २६ ॥ ततश्चतुर्थः उत्तमभ्राता तामसो मनुः । पृथुः १, ख्यातिः २, नरः ३, केतुः ४ इत्याद्याः दश तत्सुताः ॥ २७ ॥ सत्यकाः हरयः वीराः देवाः । त्रिशिखनामेन्द्रः । ज्योतिर्धामाद्याः सप्त ऋषयः ॥ २८ ॥

अन्येऽपि विधृतेस्तनयाः वैधृतयो देवाः यैः कालेन नष्टाः वेदाः स्वतेजसा विधृताः ॥ २९ ॥ तत्र हरिमेधसो विप्रस्य हरिण्यां स्त्रियां हरि-
र्जातः येन ग्राहाद् गजेन्द्रो मोचितः ॥३०॥ राजोवाच ॥ हे शुक ! हरिर्यथा गजेन्द्रं मोचयामास तद्वयं श्रोतुमिच्छामः ॥३१॥ तत्कथासु महत्
पुण्यं यत्रोत्तमश्लोको हरिर्गीयते ॥३२॥ सूत उवाच ॥ राज्ञैवं कथासु प्रेरितः शुको मुनीनां सदसि परीक्षितं जगाद ॥३३॥ इति श्रीभागवते
चू० अष्टम० प्रथमोऽध्यायः ॥१॥ तुर्ये मन्वन्तरे प्रोक्तं गजेन्द्रस्य विमोक्षणम् ! द्वितीयादित्रिभिस्तत्तु विस्तरेणोपवर्ण्यते ॥१॥ द्वितीये तु गजे-

देवा वैधृतयो नाम विधृतेस्तनया नृप ॥ नष्टाः कालेन यैर्वेदाः विधृताः स्वेन तेजसा ॥ २९ ॥ तत्रापि जज्ञे भगवान्
हरिण्यां हरिमेधसः ॥ हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥ ३० ॥ राजोवाच ॥ बादरायण एतत्ते श्रोतुमि-
च्छामहे वयम् ॥ हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३१ ॥ तत्कथासु महत्पुण्यं धन्यं स्वस्त्ययनं शुभम् ॥
यत्र यत्रोत्तमश्लोको भगवान् गीयते हरिः ॥ ३२ ॥ सूत उवाच ॥ परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन
कथासु चोदितः ॥ उवाच विप्राः प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम् ॥ ३३ ॥ इति श्रीभा० महा०
अष्ट० मन्वन्तरानुचरितादिप्रश्नो नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ आसीद्गिरिवरो राजंस्त्रिकूट इति
विश्रुतः ॥ क्षीरोदेनावृतः श्रीमान्योजनायुतमुच्छ्रितः ॥ १ ॥ तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् ॥
दिशः खं रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥ २ ॥ अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः ॥ नानाद्रुमलता-
गुल्मैर्निर्घोषैर्निर्झराम्भसाम् ॥ ३ ॥ स चावनिज्यमानाङ्घ्रिः समन्तात् पयऊर्मिभिः ॥ करोति श्यामलां भूमिं
हरिन्मरकताश्मभिः ॥ ४ ॥

न्द्रस्य गजीभिः क्रीडतो जले । दैवाद् ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते ॥ २ ॥ श्रीशुक उवाच ॥ हे राजन् ! कश्चित् त्रिकूटनामा गिरिः
क्षीरोदेनावृतोऽयुतयोजनोच्छ्रितः तावता विस्तृतोऽस्ति ॥ १ ॥ स रौप्यलौहहिरण्मयैः शृङ्गैर्दिशः खं प्रकाशयन्नास्ते ॥ २ ॥ अन्यैः रत्न-
धातुमयैः शृङ्गैर्दिशः खं शोभयन्नास्ते ॥ ३ ॥ हरिन्मरकताश्मभिः श्यामां भूमिं करोति ॥ ४ ॥

१ परितः । २ अवनिज्यमानाः क्षाल्यमानाः अङ्घ्रयः प्रान्तभागा यस्य सः ।

क्रीडद्भिः सिद्धचारणगन्धर्वादिभिश्छादितशिखरः ॥५॥ यत्र किन्नरादीनां गीतनादेन सिंहाः परशङ्कया गर्जन्ति ॥६॥ अरण्यपशूनां यूथयुक्ताभिर्द्रोणीभिः शोभायमानः आस्ते । यत्रोद्यानेषु मधुरस्वनाः विहंगमाः सन्ति ॥७॥ यः स्वच्छोदकैः सरित्सरोभिर्युतो मणिमयवालुकैः पुलिनैर्युतः ॥ ८ ॥ एवंभूताचलस्य द्रोण्यां वरुणस्य ऋतुमन्नामोद्यानम् । तस्मिन् सुरस्त्रीणां क्रीडास्थानम् ॥ ९ ॥ किंच मन्दारपारिजाताशोक-

सिद्धचारणगन्धर्वविद्याधरमहोरगैः ॥ किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्दरः ॥५॥ यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया ॥ अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया ॥६॥ नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः ॥ चित्रद्रुमसुरोद्यानकलकण्ठविहङ्गमः ॥७॥ सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः ॥ देवस्त्रीमज्जनामोदसौरभाम्बुवनिलैर्युतः ॥८॥ तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः॥ उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ सर्वतोऽलंकृतं दिव्यैर्नित्यं पुष्पफलद्रुमैः ॥ ९ ॥ मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः ॥ चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ॥ १० ॥ क्रमुकैर्नारिकेलैश्च खर्जूरैर्बीजपूरकैः ॥ मधूकैः सालतालैश्च तमालैरसनार्जुनैः ॥११॥ अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ॥ पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ॥१२॥ द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः ॥ बिल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः ॥ १३ ॥ तस्मिन् सरस्सुविपुलं लसत्काञ्चनपङ्कजम्॥ कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ॥ मत्तषट्पदनिर्घुष्टं शकुन्तैश्च कलस्वनैः ॥ १४ ॥ हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ॥ जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥ १५ ॥ मत्स्यकच्छपसञ्चारचलत्पद्मरजःपयः॥ कदम्बवेतसनलनीपवञ्जुलकैर्वृतम् ॥ १६ ॥

चम्पकचूतपनसाम्राम्रातकनारिकेलखर्जूरबीजपूरकतालतमालासनार्जुनोदुम्बरप्लक्षवटकिंशुकचंदनपिचुमन्दसुरदारुद्राक्षेक्षुरम्भाजम्बूबदर्यामलकबिल्वकपित्थजम्बीरभल्लातकादिभिर्वृक्षैर्वेष्टितस्त्रिकूटः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तत्र सरोवरं कथंभूतम् । लसत्काञ्चनपङ्कजं कुमुदोत्पलादीनां श्रिया शोभितम् ॥ १४ ॥ हंसकारण्डवादिभिर्व्याप्तं जलकुक्कुटादीनां कुलैः कूजितम् ॥१५॥ मत्स्यकच्छपादीनां संचारेण व्याप्तोद-

१ असहनेन । २ श्लाघ्याः । ३ पद्मरजसा युक्तं पयो यस्मिन् तत् ।

कम्। कदम्बवेतसनलनीपवञ्जुलककुन्दकुरबकाशोकशिरीषकुटजेङ्गुदकुब्जकस्वर्णयूथीनागपुन्नागजातिमल्लिकादिभिरन्यैश्च तीरजैर्वृक्षैः शोभितम् ॥ १६ ॥ १७ ॥ १८ ॥ तत्रैकदा गिरिकाननाश्रयो गजेन्द्रः करेणुभिः कण्टककीचकवेणुवेत्रादिगुल्मं भञ्जन् सन् बभ्राम ॥ १९ ॥ यद्गन्धमात्रात् सिंहगजेन्द्रव्याघ्रादयो व्यालमहोरगाश्च भयात् पलायन्ते ॥ २० ॥ क्षुद्राः वृकवराहहरिणादयस्तद्दृष्टिपथं हित्वा यत्कृपयाऽभीताश्चरन्ति ॥ २१ ॥ एवं भ्रमन् घर्मतप्तो गजो गजैर्गर्जीभिः कलभैश्चानुद्रुतः स्वगरिम्णा गिरिं प्रकम्पयन् ॥ २२ ॥ दूरादेव पङ्कजरेणुमिश्रं सरोऽनिलं जिघ्रन् तृषार्दितेन स्वयूथेन वृतः सन् द्रुतं सरोवरं प्राप ॥ २३ ॥ तत्र प्रविश्य गतक्लमः सन् निर्मलं सुवासितं जलं यथेच्छं पपौ ॥ २४ ॥ करेणूः कलभांश्च स्नपयन् प्राप्तं कष्टं नाचष्ट ॥ २५ ॥

कुन्दैः कुरबकाशोकैः शिरीषैः कुटजेङ्गुदैः ॥ कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १७ ॥ मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ॥ शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलं द्रुमैः ॥१८॥ तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ॥ सकण्टकान्कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन्वनस्पतीन् ॥ १९ ॥ यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाश्च खड्गाः ॥ महोरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः ॥२०॥ वृका वराहा महिषर्क्षशल्या गोपुच्छसालावृकमर्कटाश्च ॥ अन्यत्र क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण ॥ २१ ॥ स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत्कलभैरनुद्रुतः ॥ गिरिं गरिम्णा परितः प्रकम्पयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥२२॥ सरोनिलं पङ्कजरेणुरूषितं जिघ्रन्विदूरान्मदविह्वलेक्षणः ॥ वृतः स्वयूथेन तृषार्दितेन तत्सरोवराभ्याशमथागमद्द्रुतम् ॥२३॥ विगाह्य तस्मिन्नमृताम्बु निर्मलं हेमारविन्दोत्पलरेणुवासितम् ॥ पपौ निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन्गतक्लमः ॥ २४ ॥ स पुष्करेणोद्धृतशीकराम्बुभिर्निपाययन्संस्नपयन्यथा गृही ॥ घृणी करेणूः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २५ ॥



१ नित्यमृतवः फलपुष्पादिहेतवो येषां तैः । २ चेति शेषः ।

तत्र कश्चिद् दैवप्रेरितो बलीयान् ग्राहो रुषा तं चरणेऽग्रहीत् । एवं दुःखं प्राप्तो गजो यथाबलं विचक्रमे ॥ २६ ॥ तथाविधं तमन्ये गजाः मोचयितुं नाशकन् । करेणवः आतुरं यूथपतिं दृष्ट्वा विचुक्रुशुः ॥ २७ ॥ एवं गजेन्द्रनक्रयोर्मिथो विकर्षतोर्वर्षसहस्रं जगाम ॥ २८ ॥ ततो दीर्घकालेन गजेन्द्रबलस्य व्ययो जातः । नक्रस्य बलाधिक्यं जातम् ॥ २९ ॥ एवं गजेन्द्रो यदा संकटं प्राप तदा चिरं ध्यात्वेमां बुद्धिं

तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ॥ यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥२६॥ तथाऽऽतुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ॥ विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २७ ॥ नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः ॥ समाः सहस्रं व्यगमन्महीपते सप्राणयोश्चित्रममंसतामराः ॥ २८ ॥ ततो गजेन्द्रस्य मनोबलौजसां[1] कालेन दीर्घेण महानभूद्व्ययः ॥ विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत्[2]सकलं[3] जलौकसः ॥ २९ ॥ इत्थं गजेन्द्रः स यदाऽप संकटं प्राणस्य देही विवशो यदृच्छया ॥ अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३० ॥ न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् ॥ ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् ॥ ३१ ॥ यः कश्चनेशो बलिनोऽन्तकोरगात्प्रचण्डवेगादभिधावतो भृशम् ॥ भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥ ३२ ॥ इति श्रीभागवते महापु० अष्टमस्कंधे मन्वन्तरानुवर्णने गजेन्द्रोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥

प्रत्यपद्यत ॥ ३० ॥ अहो इमे गजाः आतुरं मां मोचयितुं न समर्थाः करिण्यः कुतः । अहं ग्राहरूपेण विधातुः पाशेन वेष्टितोऽपि तमीश्वरं शरणं यामि ॥ ३१ ॥ यः ईशः प्रचण्डवेगेन धावतो मृत्युसर्पाद् भीतं जनं पाति तं शरणं व्रजेम ॥ ३२ ॥ इति श्रीभागवते चूर्णिकायाम् अष्टमस्कन्धे गजेन्द्रोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥

१ मनः उत्साहः बलं शारीरमोजः ऐन्द्रियम् । २ विपरीतमधिकम् । ३ बलादि ।

तृतीये तु गजेन्द्रेण स्तुतो हरिरुपेत्य यम् । समुद्दधार तं ग्राहाद् ग्राहं देवलशापतः ॥ १ ॥ श्रीशुक उवाच ॥ एवं बुद्ध्या विचार्य गजेन्द्रो मनः स्थिरं कृत्वा पूर्वजन्मनि शिक्षितं श्रेष्ठं स्तोत्रं जजाप ॥ १ ॥ गजेन्द्र उवाच ॥ यतश्चिद्रूपाद् देहादिकं सचेतनं भवति तस्मै पुरुषाय केवलं नमः तं ध्यायेम कायप्रणतेरशक्यत्वात् ॥२॥ यः कार्यकारणात् परः तं स्वयंभुवं शरणं व्रजामि ॥३॥ स्वात्मनि विश्वं क्वचिल्लीनं क्वचित् प्रकाशितं

श्रीशुक उवाच ॥ एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि ॥ जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥ १ ॥ गजेन्द्र उवाच ॥ नमो भगवते तस्मै यत एतच्चिदात्मकम् ॥ पुरुषायादिबीजाय परेशायाभिधीमहि ॥२॥ यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ॥ योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥ ३ ॥ यः स्वात्मनीदं निजमायया-र्पितं क्वचिद्विभातं क्व च तत्तिरोहितम् ॥ अविद्धदृक् साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥ कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु ॥ तमस्तदाऽऽसीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥५॥ न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ॥ यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥ दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः ॥ चरन्त्यलोकव्रत-मव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः ॥ ७॥ न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा ॥ तथाऽपि लोकाप्ययसम्भवाय यः स्वमायया तान्यनुकालमृच्छति ॥ ८ ॥

तदुभयं कार्यकारणे ईक्षते स मां पातु ॥ ४ ॥ कालेन सर्वेषु नाशं प्राप्तेषु सत्सु तमः आसीत् तस्मिन् यो विराजते ॥ ५ ॥ अहो देवाः ऋषयो यस्य स्वरूपं न विदुः तं कोऽपि जन्तुर्ज्ञातुं वक्तुं वाऽर्हति किं ? स मां पातु ॥६॥ यस्य पदं द्रष्टुमिच्छवो मुनयो वने ब्रह्मचर्यादिव्रतं चरन्ति स मे गतिरस्तु ॥ ७ ॥ अपि च यस्य जन्मादीनि न सन्ति तथापि लोकानामुत्पत्तिनाशार्थं जन्मादीनि यो धत्ते ॥ ८ ॥



१ अलुप्तदृक् । २ स्वयंप्रकाशः । ३ दुरवगाहम् । ४ अनन्तम् । ५ दुर्गमचरितः । ६ अच्छिद्रम् । ७ भूतेष्वात्मदृष्टयः ।

तस्मै परेशाय ब्रह्मणे आश्चर्यकर्मणे नमः ॥ ९ ॥ परमात्मने सर्वसाक्षिणे कैवल्यनाथाय मोक्षानन्दानुभूतये नमोऽस्तु ॥ १० ॥ ११ ॥ शान्ताय सत्त्वादिधर्मानुकारिणे ॥ १२ ॥ क्षेत्रज्ञाय ॥ १३ ॥ सर्वेन्द्रियगुणद्रष्ट्रे सदाभासाय ॥१४॥ सर्वकारणरूपाय ते नमो नमः ॥ १५ ॥ विधिनिषेध-

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ॥ अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥ नम आत्मप्रदीपाय साक्षिणे परमात्मने ॥ नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥ सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ॥ नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥ नमः शान्ताय घोराय मूढाय गुणधर्मिणे ॥ निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥ क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ॥ पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥१३॥ सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ॥ असता छाययोक्ताय सदाभासाय ते नमः ॥१४॥ नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय ॥ सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥ १५ ॥ गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ॥ नैष्कर्म्यभावेन विवर्जितागमस्वयंप्रकाशाय नमस्करोमि ॥ १६ ॥ मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय ॥ स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे भगवते बृहते नमस्ते ॥ १७ ॥ आत्मात्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसङ्गविवर्जिताय ॥ मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥ १८ ॥ यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ॥ किं त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥ १९ ॥

रहिताय स्वयं प्रकाशाय ॥ १६ ॥ मादृक्प्रपन्नपशुपाशविमोक्षणाय भूरिकरुणाय नमोऽस्तु ॥ १७ ॥ देहपुत्राप्तगृहवित्तजनेषु सक्तैः प्राप्तुमशक्याय गुणसङ्गविवर्जिताय नमोस्तु ॥ १८ ॥ यं धर्मार्थकाममोक्षकामाः भजन्तः इष्टां गतिं प्राप्नुवन्त्येव । य आशिषो ददाति स मे केवलं

१ मोक्षानन्दानुभूतये । २ सत्वादिगुणानुकारिणे । ३ सर्वे प्रत्ययाः इन्द्रियवृत्तयो ज्ञापकाः यस्य तस्मै । ४ असता अहंकारादिप्रपञ्चेन छाययाऽसद्रूपया जलस्थप्रतिबिम्बेन बिम्बमिव उपताय दर्शिताय । ५ सद्रूपो विषयेष्वाभासो यस्य तस्मै । ६ गुणा एवारणिस्तेन च्छन्नो ज्ञानाग्निर्येन तस्मै । ७ गुणक्षोभेण कार्ये विस्फूर्जितं बहिर्वृत्तिकमानसं यस्य तस्मै । ८ विवर्जिताः आगमाः यैस्तेषु स्वयं प्रकाशते तस्मै ।

मोक्ष करोतु नाधिकं प्रार्थये ॥ १९ ॥ अहो यस्यैकान्तभक्ताः किंच न वाञ्छन्ति ॥ २० ॥ तं परेशं परिपूर्णं स्तौमि ॥ २१ ॥ ब्रह्मादयो देवाः वेदाः लोकाश्च नामरूपभेदेन यस्यांशेन कृताः ॥ २२ ॥ यथाऽग्नेरर्चिषः उद्भवन्ति लीयन्ते तथा मनोबुद्ध्यादिगुणसंप्रवाहो यतो भवति लीयते ॥ २३ ॥ अत एव यः देवासुरमर्त्यतिर्यक् स्त्री षण्ढः पुमांश्च न भवति स परमात्मा मद्विमोक्षाय प्रकटो भवतु ॥ २४ ॥

एकान्तिनो यस्य न कंचनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः ॥ अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥ २० ॥ तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ॥ अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥२१॥ यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ॥ नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥२२॥ यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः ॥ तथा यतोऽयं गुणसंप्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः ॥२३॥ स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः ॥ नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः ॥ २४ ॥ जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या ॥ इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम् ॥२५॥ सोऽहं विश्वसृजां विश्वमविश्वं विश्ववेदसम् ॥ विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥२६॥ योगरन्धितकर्माणो हृदि योगविभाविते ॥ योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥२७॥ नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ॥ प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥ २८ ॥ नायं वेद स्वमात्मानं यच्छक्त्याऽहंधिया हतम् ॥ तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम् ॥ २९ ॥

अहं ग्राहात् शरीरमोक्षणेन जीवितुं नेच्छामि किंत्वज्ञानं दूरीकर्तुमिच्छामि ॥ २५ ॥ सोहं मुमुक्षुः केवलं ब्रह्म प्रणतोऽस्मि न तु तं जानामि ॥ २६ ॥ योगिनो यं हृदि पश्यन्ति तं योगेशं नतोऽस्मि ॥ २७ ॥ हे ईश ! दुरन्तशक्तये प्रपन्नपालाय तुभ्यं नमोऽस्तु ॥२८॥ अयं जनः यं स्वमात्मानं न वेद तमीश्वरं श्रितोऽस्मि ॥ २९ ॥

१ आवृतया अविवेकेन व्याप्तया । २ आत्मलोक आत्मप्रकाशः । ३ विश्वं वेदो धनमुपकरणं यस्य तम् । ४ शक्तयो गुणाः ।

श्रीशुक उवाच ॥ एवं मूर्तिभेदं विना वर्णितं परं तत्त्वं येन तं गजेन्द्रं विविधमूर्तिभेदाभिमानिनो ब्रह्मादयो यदा नोपजग्मुः तदा सर्वदेवमयमूर्तिर्हरिः प्रादुरासीत् ॥ ३० ॥ ततो जगन्निवासो दुःखितं गजेन्द्रं ज्ञात्वा तत्स्तोत्रं च निशम्य स्तुवद्भिर्देवैः सह हरिर्गरुडमारुह्य चक्रं गृहीत्वा शीघ्रं तत्रागमत् ॥३१॥ तदा गजेन्द्रः सरसि बलीयसा ग्राहेण गृहीतः आर्तः सन् गरुडे धृतचक्रं हरिं दृष्ट्वा शुण्डोद्धृतं कमलं प्रक्षिप्य "हे नारायणाखिलगुरो भगवन्नमस्ते" इति दीनां गिरं जगाद॥३२॥तदाऽजः आर्तं गजं वीक्ष्य गरुडादवतीर्य कृपया सरोवरात् सग्राहं तमुज्जहार। ततो देवेषु

श्रीशुक उवाच ॥ एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः ॥ नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ॥ ३० ॥ तं तद्वदार्तमुपलभ्यजगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ॥ छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः ॥ ३१ ॥ सोऽन्तःसरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ॥ उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते ॥ ३२ ॥ तं वीक्ष्य पीडितमजः सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार ॥ ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं संपश्यतां हरिरमूमुचदुस्त्रियाणाम् ॥ ३३ ॥ इति श्रीभागव० म० अष्टमस्कन्धे गजेन्द्रोपाख्याने गजेन्द्रमोक्षणं नाम तृतीयोऽध्यायः ॥ ३ ॥ श्रीशुक उवाच ॥ तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ॥ मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥ १ ॥ नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ॥ ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥ योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् ॥ मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥ ३ ॥

पश्यत्सु हरिश्चक्रेण ग्राहं विदार्य गजेन्द्रं मोचयामास॥३३॥इति श्रीभागवते० चू० अष्टम० तृतीयोऽध्यायः॥३॥चतुर्थे तु तयोर्ग्राहः प्राप गन्धर्वतां पुनः ॥ गजं स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदम् ॥ १ ॥ श्रीशुक उवाच। तदा देवर्षिगन्धर्वब्रह्मशिवादयो हरेः कर्म शंसन्तः पुष्पवृष्टिं चक्रुः ॥ १ ॥ दुन्दुभयश्च नेदुः। गन्धर्वाः ननृतुः जगुश्च ॥२॥ हे राजन् ! योऽयं ग्राहः स हूहूर्गन्धर्वः। असौ देवलशापेन ग्राहो जातः। एवमत्र

१ अतिशीघ्रता वाचकमिदम्।

प्रसिद्धा कथा । कदाचित् हूहूर्गन्धर्वः सरसि स्त्रीभिः सह क्रीडन् स्नातुं प्रविष्टं देवलं पादे प्रगृह्य विचकर्ष । स च कुपितो ग्राहो भवेति शशाप । ततः प्रसादितः सन् जगाद एवमेव गजेन्द्रं गृह्णीष्व ततश्च गजेन्द्रमुद्धरन् हरिस्त्वामपि मोचयिष्यतीति ॥३॥ स सद्यो मुक्तः सन् हरिं प्रणम्य स्तुतिं चक्रे ॥४॥ ततः ईशेनानुकम्पितः सन् पुनस्तं प्रणम्य परिक्रम्य च स्वं लोकमगात् ॥ ५ ॥ ततो गजेन्द्रो भगवत्स्पर्शात् मुक्तो भगवद्रूपं प्राप ॥६॥ हे नृपः ! स द्रविडदेशे पाण्ड्यो विष्णुव्रतपरायणः इन्द्रद्युम्ननामा राजाऽऽसीत् ॥७॥ स मलयाद्रावेकदा धृतमौनो जटाधरोऽच्युतं

प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् ॥ अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ४ ॥ सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् ॥ लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥ गजेन्द्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञान-बन्धनात् ॥ प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥ स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः ॥ इंद्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥ स एकदाऽऽराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम् ॥ जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः ॥८॥ यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः ॥ तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ॥ ९ ॥ तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धि-रद्य ॥ विप्रावमन्ता विशतां तमोऽन्धं यथा गजः स्तब्धमतिः स एव ॥१०॥ श्रीशुक उवाच ॥ एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः ॥ इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥ आपन्नः कौञ्जरीं योनिमात्मस्मृतिविना-शिनीम् ॥ हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः ॥ १२ ॥ एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगति-गमितेन युक्तः ॥ गन्धर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतं स्वभवनं गरुडासनोऽगात् ॥ १३ ॥



पूजयामास ॥ ८ ॥ तत्र यदृच्छया सशिष्योऽगस्त्यः आगमत् । तमकृतार्हणादिकं तूष्णीं स्थितं वीक्ष्य मुनिश्चुकोप ॥९॥ आह च, अयं विप्रावमन्ता गजवत् स्तब्धमतिः अतो गज एव भवतु ॥ १० ॥ श्रीशुक उवाच ॥ एवं शप्त्वाऽगस्त्यो गतः इन्द्रद्युम्नोऽपि दैवप्रापितं सर्वं पश्यन् ॥ ११ ॥ आत्मस्मृतिविनाशिनीं कौञ्जरीं योनिमापन्नः । हर्यर्चनानुभवे गजत्वेऽपि स्मृतिर्जाता ॥ १२ ॥ एवं भगवान् गजेन्द्रं विमोक्ष्य पार्षदगतिं प्राप्तेन गजेन्द्रेण युक्तः सन् विबुधादिभिः स्तूयमानो गरुडासनः स्वभवनं जगाम ॥ १३ ॥

हे राजन् ! एवं मया तव कृष्णानुभावो वर्णितः । इदं गजेन्द्रमोक्षणं शृण्वतां स्वर्ग्यं यशस्यं पापापहं दुस्स्वप्ननाशकमस्ति ॥ १४ ॥ अतः श्रेयस्कामा द्विजाः प्रातरुत्थाय दुस्स्वप्नशान्तये कीर्तयन्ति ॥१५॥ हरिर्गजेन्द्रमिदमाह ॥१६॥ श्रीभगवानुवाच । हे गजेन्द्र ! ये मां त्वामिदं सरो गिरिकन्दरकाननं वेत्रकीचकवेणूनां गुल्मानि वृक्षान् ॥ १७ ॥ ब्रह्मणो मे शिवस्य च स्थानानि क्षीरोदं श्वेतद्वीपम् ॥ १८ ॥

एतन्महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् ॥ स्वर्ग्यं यशस्यं कलिकल्मषापहं दुस्स्वप्ननाशं कुरुवर्य शृण्वताम् ॥१४॥ यथाऽनुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ॥ शुचयः प्रातरुत्थाय दुस्स्वप्नाद्युपशान्तये ॥ १५ ॥ इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम ॥ शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥ श्रीभगवानुवाच ॥ ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ॥ वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥ शृङ्गाणीमानिधिष्ण्यानि ब्रह्मणो मे शिवस्य च ॥ क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥१८॥ श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ॥ सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥ शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ॥ ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥२०॥ मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ॥कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम् ॥२१॥ प्रणवं सत्यमव्यक्तं गोविप्रान् धर्ममव्ययम् ॥ दाक्षायणीर्धर्मपत्नीः सोमकश्यपयोरपि ॥ २२ ॥ गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम् ॥ ध्रुवं ब्रह्मऋषीन् सप्त पुण्यश्लोकांश्च मानवान् ॥ २३ ॥ उत्थायापररात्रान्ते प्रयताः सुसमाहिताः ॥ स्मरन्ति मम रूपाणि मुच्यन्ते ह्येनसोऽखिलात् ॥२४॥ ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये ॥ तेषां प्राणात्यये चाहं ददामि विमलां मतिम् ॥ २५ ॥

श्रीवत्सं कौस्तुभं मालां गदां सुदर्शनं शङ्खं गरुडम् ॥ १९ ॥ शेषं श्रियं ब्रह्माणं नारदं भवं प्रह्लादम् ॥ २० ॥ मत्स्याद्यवतारकर्माणि सूर्यं सोमम् ॥ २१ ॥ प्रणवं सत्यम् ॥ २२ ॥ गङ्गां सरस्वतीं नन्दां पुण्यश्लोकान् ॥ २३ ॥ इत्यादीनि मे रूपाणि स्मरन्ति ते पापात् मुच्यन्ते ॥ २४ ॥ प्रातस्त्वत्कृतस्तोत्रेण ये मां स्तुवन्ति तेषां प्राणात्यये विमलां मतिं ददामि ॥ २५ ॥

श्रीशुक उवाच । एवमुक्त्वा भगवान् शङ्खं वादयित्वा देवान् हर्षयन् जगाम ॥२६॥ इति श्रीभाग० चू० अष्टम० चतुर्थोऽध्यायः॥४॥अमृता-
ख्यानमष्टाभिरध्यायैरनुवर्ण्यते । स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः ॥ १ ॥ पञ्चमो पञ्चमं चाथ षष्ठं चाकथयन्मनुम् । विप्रशापाच्च
निश्श्रीकैः कृता देवैर्हरेः स्तुतिः ॥ २ ॥ श्रीशुक उवाच ॥ हे राजन् ! हरेः पापनाशनं कर्म गजेन्द्रमोक्षणे कथितम् । अथ रैवतमन्वन्तरं
शृणु ॥१॥ पञ्चमो रैवतो नाम मनुः तत्पुत्रा बलिविंध्यादयः ॥२॥ विभुरिन्द्रः । भूतरयाद्याः देवाः । हिरण्यरोमादयः सप्त ऋषयः॥३॥शुभ्रस्य

श्रीशुक उवाच ॥ इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमम् ॥ हर्षयन्विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥
इति श्रीभा० महा० अष्टमस्कन्धे गजेन्द्रोपाख्याने वैकुण्ठगमनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥
राजन्नुदितमेतत्ते हरेः कर्माघनाशनम् ॥ गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु ॥ १ ॥ पञ्चमो रैवतो नाम मनुस्ताम-
ससोदरः ॥ बलिविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥२॥ विभुरिन्द्रः सुरगणा राजन्भूतरयादयः ॥ हिरण्यरोमा वेद-
शिरा ऊर्ध्ववाह्वादयो द्विजाः ॥३॥ पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः ॥तयोः स्वकलया जज्ञे वैकुण्ठो भगवा-
न्स्वयम् ॥ ४ ॥ वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः ॥ रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥ ५ ॥
तस्यानुभावः कथितो गुणाश्च परमोदयाः ॥ भौमान्रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान् ॥६॥ षष्ठश्च चक्षुषः पुत्रश्चा-
क्षुषो नाम वै मनुः ॥ पुरुपूरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥७॥ इन्द्रो मन्त्रद्रुमस्तत्र देवा आप्यादयो गणाः ॥ मुनय-
स्तत्र वै राजन्हविष्मद्वीरकादयः ॥ ८ ॥ तत्रापि देवः संभूत्यां वैराजस्याभवत्सुतः ॥ अजितो नाम भगवानंशेन
जगतः पतिः ॥९॥ पयोधिं येन निर्मथ्य सुराणां साधिता सुधा ॥ भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः ॥१०॥

विकुण्ठायां वैकुण्ठोऽवतारः ॥४॥ लक्ष्म्याः प्रियकाम्यया येन वैकुण्ठलोको निर्मितः ॥ ५ ॥ तस्य प्रभावगुणादयस्तृतीयस्कन्धादिषु कथिताः
॥६॥ षष्ठश्चाक्षुषनामा मनुः । पुरुपूरुषाद्यास्तत्पुत्राः ॥७॥ मंत्रद्रुमः इंद्रः । आप्यादयो देवाः । हविष्मद्वीरकादयः सप्त ऋषयः ॥८॥ वैराजात्
संभूत्यामजितो नामावतारः ॥ ९ ॥ येन पयोनिधिं निर्मथ्य सुराणाममृतं साधितं कूर्मरूपेणाम्भसि मन्दराद्रिर्धृतः ॥ १० ॥

राजोवाच ॥ हे ब्रह्मन् ! यथा भगवता क्षीराब्धिर्मथितः यदर्थमद्रिं स दधार ॥ ११ ॥ यथा च सुरैरमृतं प्राप्तम् अन्यदपि यद्यदभवत् तत् हरेः कर्म वद ॥१२॥ त्वया कथ्यमानेन हरेर्महिम्ना मे चित्तं न तृप्यति ॥१३॥ सूत उवाच ॥ एवं पृष्टः शुको हरेर्वीर्यं कथयितुमुद्योगं चक्रे ॥ १४ ॥ श्रीशुक उवाच ॥ यदा युधि दैत्यैः पीडयमानाः देवाः गतप्राणाः पतिताः सन्तो न पुनर्जीवन्ति स्म ॥१५॥ किंच हे नृप ! यदा दुर्वाससः शापात् त्रयो लोकाः गतश्रियो बभूवुः तदा यज्ञादिक्रियाः नष्टाः । दुर्वाससा हि कदाचिन्मार्गे गच्छन्तमिंद्रं दृष्ट्वा स्वकण्ठस्था माला तस्मै दत्ता

राजोवाच ॥ यथा भगवता ब्रह्मन्मथितः क्षीरसागरः ॥ यदर्थं वा यतश्चाद्रिं दधारांबुचरात्मना ॥११॥ यथाऽमृतं सुरैः प्राप्तं किंचान्यदभवत्ततः ॥ एतद्भगवतः कर्म वदस्व परमाद्भुतम् ॥१२॥ त्वया संकथ्यमानेन महिम्ना सात्वतां पतेः ॥ नाति तृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥ सूत उवाच ॥ संपृष्टो भगवानेवं द्वैपायनसुतो द्विजाः ॥ अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥ श्रीशुक उवाच ॥ यदा युद्धेऽसुरैर्देवा बाध्यमानाः शितायुधैः ॥ गतासवो निपतिता नोत्तिष्ठेरन्स्म भूयशः ॥१५॥ यदा दुर्वाससः शापात्सेन्द्रा लोकास्त्रयो नृप ॥ निःश्रीकाश्चाभवंस्तत्र नेशुरीज्यादयः क्रियाः ॥ १६ ॥ निशाम्यैतत्सुरगणा महेन्द्रवरुणादयः ॥ नाध्यगच्छन्स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम् ॥ ॥ १७ ॥ ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वशः ॥ सर्वं विज्ञापयांचक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥ स विलोक्येन्द्रवाय्वादीन्निस्सत्त्वान्विगतप्रभान् ॥ लोकानमङ्गलप्रायानसुरानयथा विभुः ॥ १९ ॥

इन्द्रेण च श्रीमदेनानादृत्यैरावतस्य कुम्भयोर्निक्षिप्ता स च मत्तः पद्भ्यां तां मालां चूर्णीचकार । ततः कुपितो दुर्वासास्तं शशाप । त्रिभिर्लोकैः सह त्वं निश्श्रीको भवेति ॥१६॥ ततो महेन्द्रवरुणादयः एतद् यज्ञनाशादिकं दृष्ट्वा स्वयं विचारयन्तो निश्चयं न प्रापुः ॥१७॥ ततो मेरोर्मूर्धनि ब्रह्मसभां गत्वा प्रणताः सन्तो ब्रह्मणे सर्वं निवेदयामासुः ॥ १८ ॥ तदा ब्रह्मा तान् निस्सत्त्वान् दृष्ट्वा दैत्यांश्च तेजीयसो दृष्ट्वा ॥ १९ ॥

१ दैववैलक्षण्येन ।

मनसा हरिं स्मरन् देवानुवाच ॥ २० ॥ हे देवाः ! अहं भवो यूयं मनुष्यादयश्च एते सर्वे यस्यांशाः तं शरणं व्रजामः ॥ २१ ॥ यस्य कश्चित् वध्यो रक्षणीयश्च न तथाऽपि यः सत्त्वादिगुणान् धत्ते ॥ २२ ॥ अयं कालः स्थितिपालनरूपो वर्तते । अतस्तं जगद्गुरुं शरणं व्रजामः ॥ २३ ॥ श्रीशुक उवाच ॥ इति ब्रह्मा देवान् संभाष्य देवैः सह क्षीराब्धिं जगाम ॥ २४ ॥ तत्रादृष्टरूपस्य वैदिकीभिर्गीर्भिः स्तुतिं

समाहितेन मनसा संस्मरन् पुरुषं परम् ॥ उवाचोत्फुल्लवदनो देवान्स भगवान्परः ॥ २० ॥ अहं भवो यूयमथोऽसुरादयो मनुष्यतिर्यग्द्रुमघर्मजातयः ॥ यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययम् ॥ २१ ॥ न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः ॥ अथापि सर्गस्थितिसंयमार्थं धत्ते रजस्सत्त्वतमांसि काले ॥२२॥ अयं च तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनाम् ॥ तस्माद्व्रजामःशरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः ॥ २३ ॥ श्रीशुक उवाच ॥ इत्याभाष्य सुरान्वेधा सह देवैररिंदम ॥ अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥२४॥ तत्रादृष्टस्वरूपाय श्रुतपूर्वाय वै विभो ॥ स्तुतिमब्रूत दैवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥२५॥ ब्रह्मोवाच ॥ अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम् ॥ मनोऽग्रयानं वचसाऽनिरुक्तं नमामहे देववरं वरेण्यम् ॥ २६ ॥ विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् ॥ छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥ २७ ॥ अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ॥ त्रिणाभि विद्युच्चलमष्टनेमि-यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥

चकार ॥२५॥ ब्रह्मोवाच ॥ हे ईश ! अविक्रियं सत्यं देववरं त्वां नमामः ॥ २६ ॥ प्राणादीन्द्रियाणां ज्ञातारं व्यापिनं तं शरणं व्रजामः ॥ २७ ॥ मायया प्रेर्यमाणं जीवचक्रं यस्याधिष्ठानं तं सत्यं शरणं प्रपद्ये ॥ २८ ॥

१ लोकालोकात्परतो यत्तमस्तस्मात्परम् । २ सर्वान्तरम् । ३ निरुपाधिम् । ४ अविद्या तन्निवर्तिका विद्या च । ५ जीवपक्षपातिनौ । ६ त्रियुगेष्वाविर्भवन्तम् । ७जीवस्य । ८ दशेन्द्रियाणि पञ्च प्राणाश्चेतिपञ्चदशाराः । ९ सत्त्वादिगुणा नाभिरिव मध्ये यस्य तत् । १० अष्टौ प्रकृतयो नेमिरिव यस्य तत् । ११ योऽक्षो यस्य तं यदधिष्ठानम् ।

धीरा योगरथेन यमुपासते तं हरिं नमामि ॥ २९ ॥ यस्य ते मायां कश्चिदपि नातिक्रामति यया जनो मुह्यन् सन् स्वरूपं न वेद परेशं नमामः ॥३०॥ हे देव ! इमे देवाः वयं यस्य तव सत्त्वेन सृष्टा अपि निरुपाधिं त्वां न विद्मः । रजस्तमोमयाः दैत्याः न विदुरिति किं वक्तव्यम् ॥३१॥ यस्य पादौ मही यत्र चतुर्विधभूतसर्गः ॥ ३२ ॥ यद्रेतोऽम्भः यतो लोकाः जायन्ते ॥३३॥ यस्य मनः सोमः यतो देवानामन्नं बलमायुश्च

य एकवर्णं तमसः परं तदलोकमव्यक्तमनन्तपारम् ॥ आसांचकारोपसुपर्णमेनमुपासते योगरथेन धीराः ॥२९॥ न यस्य कश्चातितितर्ति मायां यया जनो मुह्यति वेद नार्थम् ॥ तं निर्जितात्मात्मगुणं परेशं नमाम भूतेषु समं चरन्तम् ॥ ॥३०॥ इमे वयं तत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरन्तराविः ॥ गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतर-प्रधानाः॥३१॥ पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः ॥ स वै महापुरुष आत्मतन्त्रः प्रसीदतां ब्रह्म-महाविभूतिः॥३२॥ अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः॥लोकास्त्रयोऽथाखिललोकपालाः प्रसी-दतां ब्रह्म महाविभूतिः ॥३३॥ सोमं मनो यस्य समामनन्ति दिवौकसां वै बलमन्ध आयुः॥ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥३४॥ अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा॥अन्तस्स-मुद्रेऽनुपचन्स्वधातून्प्रसीदतां नः स महाविभूतिः॥ ३५॥ यच्चक्षुरासीत्तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् ॥ द्वारं च मुक्तेरमृतं च मृत्युः प्रसीदतां नः स महाविभूतिः॥३६॥ प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः॥ अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूति ॥३७॥ श्रोत्राद्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभ्याः ॥ प्राणेन्द्रियात्मासुशरीरकेतं प्रसीदतां नः स महाविभूतिः ॥३८॥ बलान्महेन्द्रस्त्रिदशाः प्रसादा-न्मन्योर्गिरीशो धिषणाद्विरिञ्चिः॥ खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥

भवति॥३४॥यस्य मुखमग्निः यः उदरमध्येऽन्नादिकं पचति॥३५॥यस्य चक्षुः सूर्यः यो मुक्त्यमृतमृत्यूनां द्वारं भवति॥३६॥यस्य प्राणात् चरा-चराणां प्राणः॥३७॥यस्य कर्णाद् दिशो हृदयाद् देहगतच्छिद्राणि॥३८॥यस्य प्रसादाद् देवाः क्रोधाद् रुद्रो बुद्धेर्ब्रह्मा शिश्नात् प्रजापतिः॥३९॥

वक्षसः श्रीः । छायायाः । स्तनाद् धर्मः । पृष्ठतोऽधर्मः । मस्तकात् स्वर्गः । विहारादप्सरसः ॥ ४० ॥ यस्य मुखाद् विप्रो वेदाश्च । यस्य भुजयोः क्षत्रं बलं च । यस्योर्वोर्वैश्यो वार्ता च । यस्याङ्घ्रितः अवेदः शुश्रूषा शूद्रश्च॥४१॥यस्याधराल्लोभः ऊर्ध्वोष्ठात् प्रीतिः । नासिकायाः कान्तिः । स्पर्शेन कामः ॥ ४२ ॥ भूतानि कालं कर्मगुणान् भौतिकप्रपञ्चं च यस्य योगमायाविहितानि वदन्ति स महाविभूतिर्नः प्रसीदताम् ।



श्रीर्वक्षसः पितरश्छाययाऽऽसन्धर्मःस्तनादितरः पृष्ठतोऽभूत् ॥ द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात्प्रसीदतां नः स महाविभूतिः ॥४०॥ विप्रो मुखं ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च ॥ ऊर्वोर्विडोजोऽङ्घ्रिरवेदशूद्रौ प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥ लोभोऽधरात्प्रीतिरुपर्यभूद् द्युतिर्नस्तः पशव्यः स्पर्शेन कामः ॥ भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥ द्रव्यं वयः कर्मगुणान्विशेषं यद्योगमायाविहितान्वदन्ति ॥ यद्दुर्विभाव्यं प्रबुधावबोधं प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥ नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभप्रतिपूरितात्मने॥गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नभस्वदूतये ॥४४॥ स त्वं नो दर्शयात्मानमस्मत्करणगोचरम् ॥ प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम् ॥४५॥ तैस्तैः स्वेच्छाधृतै रूपैः काले काले स्वयं विभो ॥ कर्म दुर्विषहं यन्नो भगवांस्तत्करोति हि ॥ ४६ ॥ क्लेशभूर्यल्पसाराणि कर्माणि विफलानि च ॥ देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥ ४७ ॥ नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ॥ कल्पते पुरुषस्यैष स ह्यात्मा दयितो हितः ॥ ४८ ॥ यथा हि स्कन्धशाखानां तरोर्मूलावसेचनम् ॥ एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥



॥ ४३ ॥ तस्मै उपशान्तशक्तये ते नमोऽस्तु ॥ ४४ ॥ एवंभूतस्त्वं प्रपन्नानां नः सस्मितं मुखाम्बुजं दर्शय ॥ ४५ ॥ त्वं काले काले स्वेच्छाधृतरूपैर्नो दुर्विषहं कर्म स्वयं करोषि ॥४६॥ देहिनां भूरिक्लेशानि स्वल्पफलानि कर्माणि त्वत्पदेऽर्पितानि सफलानि भवन्ति ॥४७॥ अल्पोऽपि कर्माभासः ईश्वरार्पितश्चेद् विफलाय न कल्पते ॥ ४८ ॥ वृक्षमूलावसेचनेन शाखानामिव विष्णोराराधनेन सर्वेषामाराधनं भवति ॥ ४९ ॥

अनन्ताय निर्गुणाय साम्प्रतं सत्त्वस्थाय तुभ्यं नमः ॥ ५० ॥ इति श्रीभागवते चूर्णिकायाम् अष्टम० पञ्चमोऽध्यायः ॥ ५ ॥ षष्ठे पुनः स्तुतिर्विष्णावाविर्भूते सुरैः कृता ॥ तन्मन्त्रेणासुरैः साकममृतार्थं महोद्यमः ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् । एवं सुरगणैः स्तुतो भगवान् सहस्राकोंदयद्युतिः प्रादुरभूत् ॥ १ ॥ तदा देवास्तत्तेजसा खं दिशो नापश्यन् ॥ २ ॥ ततः शिवेन सह ब्रह्मा आविर्भूतां तां तनुं मरकतश्यामां

नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे ॥ निर्गुणाय गुणेशाय सत्त्वस्थाय च साम्प्रतम् ॥५०॥ इति श्रीभा०म०अष्टम स्कन्धेऽमृतमथने पञ्चमोऽध्यायः॥५॥ श्रीशुक उवाच ॥ एवं स्तुतः सुरगणैर्भगवान्हरिरीश्वरः ॥ तेषामाविरभूद्राजन् सहस्रार्कोदयद्युतिः ॥१॥ तेनैव महसा सर्वे देवाः प्रतिहतेक्षणाः ॥ नापश्यन्खं दिशः क्षोणिमात्मानं च कुतो विभुम् ॥ ॥२॥ विरिञ्चो भगवान्दृष्ट्वा सह शर्वेण तां तनुम् ॥ स्वच्छां मरकतश्यामां कञ्जगर्भारुणेक्षणाम् ॥३॥ तप्तहेमावदातेन लसत्कौशेयवाससा ॥ प्रसन्नचारुसर्वांगीं सुमुखीं सुन्दरभ्रुवम् ॥ ४ ॥ महामणिकिरीटेन केयूराभ्यां च भूषिताम् ॥ कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजाम् ॥५॥ काञ्चीकलापवलयहारनूपुरशोभिताम् ॥कौस्तुभाभरणां लक्ष्मीं बिभ्रतीं वनमालिनीम् ॥ ६ ॥ सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासिताम् ॥ तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ॥ सर्वामर-गणैः साकं सर्वाङ्गैरवनिं गतैः ॥७॥ ब्रह्मोवाच ॥ अजातजन्मस्थितिसंयमायागुणाय निर्वाणसुखार्णवाय ॥ अणोरणि-म्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते॥८॥ रूपं तवैतत्पुरुषर्षभेज्यं श्रेयोर्थिभिर्वैदिकतान्त्रिकेण ॥ योगेन धातः सह नस्त्रिलोकान्पश्याम्यमुष्मिन्नु ह विश्वमूर्तौ ॥ ९ ॥ त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमा-त्मतन्त्रे ॥ त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात् ॥ १० ॥

कमललोचनाम् ॥ ३ ॥ वस्त्राभरणैर्युतां चारुसर्वांगीम् ॥ ४ ॥ किरीटकेयूराभ्यां भूषिताम् ॥ ५ ॥ काञ्चीहारनूपुरशोभितां वनमालायुताम् ॥ ६ ॥ मूर्तिमद्भिः सुदर्शनादिभिरुपासितां दृष्ट्वा परं पुरुषं तुष्टाव ॥ ७ ॥ ब्रह्मोवाच ॥ हे ईश ! अजातजन्मस्थितिसंयमाय तुभ्यं नमो नमः ॥ ८ ॥ हे देवश्रेष्ठ ! इदं तव रूपं पूज्यम् ॥ ९ ॥ इदं विश्वं त्वय्येव ॥ १० ॥

हे ईश ! त्वं विश्वं निर्माय तत्र प्रविष्टोऽसि ॥ ११ ॥ यथा काष्ठे मथनेनाग्निं प्राप्नुवन्ति तथा कवयस्त्वां बुद्ध्या गुणेषु वदन्ति ॥ १२ ॥ हे कमलनाभ ! एवंभूतं त्वां दृष्ट्वाऽद्य वयं निर्वृतिं गताः ॥ १३ ॥ ते पादमूलं यदर्थं प्राप्ताः तत् त्वं विधत्स्व । हे अन्तरात्मन् ! अशेषसाक्षिणस्तवान्यैर्विज्ञाप्यं किमस्ति ॥१४॥ हे ईश ! अहं शिवः इन्द्रादयश्चाग्नेर्विस्फुलिङ्गा इव त्वत्तो वयं पृथग् विभाताः सन्तः आत्मनः

त्वं माययाऽऽत्मश्रयया स्वयेदं निर्माय विश्वं तदनु प्रविष्टः ॥ पश्यन्ति युक्ता[1] मनसा मनीषिणो[2] गुणव्यवायेऽप्यगुणं विपश्चितः[3] ॥ ११ ॥ यथाऽग्निमेधस्यमृतं[4] च गोषु भुव्यन्नमम्बूद्यमने[5] च वृत्तिम् ॥ योगैर्मनुष्या अधियन्ति हि त्वां गुणेषु बुद्ध्या कवयो वदन्ति ॥ १२॥ तं त्वां वयं नाथ समुज्जिहानं[6] सरोजनाभातिचिरेप्सितार्थम् ॥ दृष्ट्वा गता निर्वृतिमद्य सर्वे गजा दवार्ता इव गाङ्गमम्भः ॥१३॥ स त्वं विधत्स्वाखिललोकपाला वयं यदर्थास्तव पादमूलम् ॥ समागतास्ते बहिरन्तरात्मन्किं[7] वाऽन्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥ अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्नेरिव केतवस्ते ॥ किं वा विदामेश पृथग्विभाता विधत्स्व शं नो द्विजदेवमन्त्रम् ॥ १५ ॥ श्रीशुक उवाच ॥ एवं विरिञ्चादिभिरीडितस्तद्विज्ञाय तेषां हृदयं यथैव ॥ जगाद जीमूतगभीरया गिरा बद्धाञ्जलीन्संवृतसर्वकारकान्[8] ॥ १६ ॥ एक एवेश्वरस्तस्मिन्सुरकार्ये सुरेश्वरः ॥ विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥ १७ ॥ श्रीभगवानुवाच ॥ हन्त ब्रह्मन्नहो शंभो हे देवा मम भाषितम् ॥ शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः ॥ १८ ॥ यात दानवदैतेयैस्तावतत्संधिर्विधीयताम् ॥ कालेनानुगृहीतैस्तैर्यावद्वो भव आत्मनः ॥ १९ ॥

श्रेयः किं विद्मः अपि तु न । अतो देवानां द्विजानां चेमसुपायमुपदिश ॥ १५ ॥ श्रीशुक उवाच ॥ एवं ब्रह्मादिभिः स्तुतो भगवान् तेषामभिप्रायं ज्ञात्वा बद्धाञ्जलीन् तान् जगाद ॥१६॥ देवकार्ये एक एवेश्वरः समुद्रमथनादिभिः क्रीडितुमिच्छंस्तानाह॥१७॥ श्रीभगवानुवाच ॥ हे ब्रह्मन् ! हे शम्भो ! हे देवाः मम भाषणं शृणुत ॥ १८ ॥ यूयं यात । दानवदैतेयैः सह सख्यं विधीयताम् ॥ १९ ॥



---

१ योगिनः । २ विवेकिनः । ३ शास्त्रज्ञाः । ४ अमृतमाज्यम् । ५ घटीयन्त्रादिनोद्धरणे । ६ सम्यगाविर्भवन्तम् । ७ बहिरगोचरम् । ८ नियमितसर्वेन्द्रियान् ।

हे देवाः ! आदौ स्वकार्यार्थसाधने शत्रवोऽपि मित्राणि कार्याणि पश्चादहिमूषकवद् वर्तितव्यम् ॥२०॥ अमृतोत्पादने शीघ्रं यत्नः क्रियताम् । यस्य पीतस्य सतो मृत्युग्रस्तोऽपि जन्तुरमरो भवेत् ॥ २१ ॥ तत्कर्तव्यतामाह । हे देवाः ! क्षीरसमुद्रे तृणलतौषधीः क्षिप्त्वा मन्दरं मन्थानं वासुकिं रज्जुं च कृत्वा ॥२२॥ मया सहायेन निर्मन्थध्वम् । एवं कृते दैत्या क्लेशभागिनो भविष्यन्ति । यूयं फलभागिनो भविष्यथ ॥ २३ ॥ असुराः यद्यदिच्छन्ति तत्तदनुमोदध्वम् । हे सुराः ! सर्वेऽर्थाः यथा साममार्गेण सिध्यन्ति तथा संरम्भेण न॥२४॥ किंच जलधिसंभवाद् विषात् न

अरयोऽपि हि संधेयाः सति कार्यार्थगौरवे ॥ अहिमूषकवद्देवा अर्थस्य पदवीं गतैः ॥ २० ॥ अमृतोत्पादने यत्नः क्रियतामविलम्बितम् ॥ यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥ क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ॥ मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥२२॥ सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः॥ क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥ २३ ॥ यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ॥ न संरम्भेण सिध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ २४ ॥ न भेतव्यं कालकूटाद्विषाज्जलधिसंभवात् ॥ लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु ॥ २५ ॥ श्रीशुक उवाच ॥ इति देवान्समादिश्य भगवान्पुरुषोत्तमः ॥ तेषामन्तर्दधे राजन्स्वच्छन्दगतिरीश्वरः ॥ २६ ॥ अथ तस्मै भगवते नमस्कृत्य पितामहः॥ भवश्च जग्मतुः स्वं स्वं धामोपेयुर्बलिं सुराः ॥२७॥ दृष्ट्वाऽरीनप्यसंयत्ताञ्जातक्षोभान्स्वनायकान् ॥ न्यषेधद्दैत्यराट् श्लोक्यः संधिविग्रहकालवित् ॥२८॥ ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ॥ श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥

भेतव्यम् । तथा मथनादुत्पन्नेषु कामरोषलोभाः न कार्याः ॥ २५ ॥ श्रीशुक उवाच ॥ एवं भगवान् देवानादिश्यान्तर्दधे ॥ २६ ॥ अथ भगवते नमस्कृत्य ब्रह्मा शिवश्च स्वं स्वं धाम जग्मतुः । ततो देवाः बलिं जग्मुः ॥२७॥ तदा शस्त्रादिरहितानपि देवान् दृष्ट्वा जातक्षोभान् स्वनायकान् क्रोधयुक्तान् दृष्ट्वा संधिविग्रहकालविद् बलिर्दैत्यान् न्यषेधत् ॥ २८ ॥ देवाः बलिं गत्वा परमैश्वर्येणासीनं तं दृष्ट्वा ॥ २९ ॥

---

१ अर्थमार्गप्रवृत्तैः । २ स्तुत्यः ।

महेन्द्रो बलिं सान्त्वयित्वा पुरुषोत्तमात् शिक्षितं बभाषे ॥ ३० ॥ तद् वचो बलेरन्येषां शम्बरारिष्टादीनां चारोचत ॥३१॥ ततो देवासुराः मिथः समयं कृत्वाऽमृतार्थमुद्यमं चक्रुः ॥ ३२ ॥ ततस्ते देवासुराः मन्दरगिरिमुत्पाट्योदधिं निन्युः ॥ ३३ ॥ शक्रवैरोचनादयस्तं वोढुमसमर्थाः भारेण श्रान्ताः सन्तः पथि तत्यजुः ॥ ३४ ॥ स कनकाचलस्तत्र निपतन् भारेण देवासुरान् चूर्णयामास ॥ ३५ ॥ ततो भग्न-

महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः ॥ अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥३०॥ तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः ॥ शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥ ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ॥ उद्यमं परमं चक्रुरमृतार्थे परंतप ॥ ३२ ॥ ततस्ते मन्दगिरिमोजसोत्पाट्य दुर्मदाः ॥ नदन्त उदधिं निन्युः शक्ताः परिघबाहवः ॥ ३३ ॥ दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः ॥ अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥३४॥ निपतन्स गिरिस्तत्र बहूनमरदानवान् ॥ चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥ तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् ॥ विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥ गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान् ॥ ईक्षया जीवयामास निर्जरान्निर्व्रणान्यथा ॥ ३७ ॥ गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ॥ आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥ अवरोप्य गिरिं स्कन्धात्सुपर्णः[1] पततां वरः ॥ ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ॥३९॥

इति श्रीभागवते महापुराणे अष्टमस्कन्धेऽमृतमथने मन्दराचलानयनं नाम षष्ठोऽध्यायः ॥ ६ ॥



मनसो भग्नबाहूरुकन्धरान् देवासुरान् ज्ञात्वा तत्र गरुडारूढो भगवान् प्रादुर्भूत्वा ॥ ३६ ॥ गिरिपातेन पिष्टान् देवासुरानमृतदृष्ट्या जीवयामास ॥ ३७ ॥ एकहस्तेन गिरिं गरुडे आरोप्य स्वयं चारुह्य सुरासुरैः सह क्षीराब्धिं ययौ ॥ ३८ ॥ गरुडो गिरिं स्कन्धादुत्तार्य जले क्षिप्त्वा हरिणा विसर्जितो वैकुण्ठं ययौ ॥ ३९ ॥ इति श्रीभागवते चू० अष्टम० षष्ठोऽध्यायः ॥ ६ ॥

---

१ सुपर्णे तत्र स्थिते वासुकेरागमनायोगात् ।

सप्तमे मथनोद्भूतविषभीत्याऽखिलैर्जनैः । स्तुतः सन् कृपया रुद्रः पपौ विषमितीर्यते ॥ १ ॥ श्रीशुक उवाच ॥ ते देवाः फलभागेन वासुकिमामन्त्र्य तं गिरौ संवेष्ट्य मथितुं प्रारेभिरे ॥ १ ॥ तत्र देवैः सह हरिर्मुखं जगृहे ॥ २ ॥ तद् भगवच्चेष्टितं दैत्यपतयो नैच्छन् ॥ ३ ॥ हे देवाः ! स्वाध्यायश्रुतसंपन्नाः वयं सर्पस्य पुच्छं न गृह्णीमः । एवमुक्त्वा तूष्णीं स्थितान् दैत्यान् विलोक्य ॥ ४ ॥ सामरो हरिः पुच्छं

श्रीशुक उवाच ॥ ते नागराजमामन्त्र्य फलभागेन वासुकिम् ॥ परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदाऽन्विताः ॥ १ ॥ आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह ॥ हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ २ ॥ तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टितम् ॥ न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ ३ ॥ स्वाध्यायश्रुतसंपन्नाः प्रख्याता जन्मकर्मभिः ॥ इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषोत्तमः ॥ ४ ॥ स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ॥ कृतस्थानविभागास्त एवं कश्यपनन्दनाः ॥ ५ ॥ ममन्थुः परमायत्ता अमृतार्थं पयोनिधिम् ॥ मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥६॥ ध्रियमाणोऽपि बलिभिर्गौरवात्पाण्डुनन्दन ॥ ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ॥ आसन्स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ७ ॥ विलोक्य विघ्नेशविधिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसंधिः ॥ कृत्वा वपुः काच्छपमद्भुतं महत्प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥ तमुत्थितं वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः ॥ दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥ ९ ॥ सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः ॥ बिभ्रत्तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः ॥ १० ॥

जग्राह । एवं कृतस्थानविभागास्ते पयोनिधिं ममन्थुः ॥ ५ ॥ एवमर्णवे मथ्यमाने सति बलिभिर्ध्रियमाणोऽप्यद्रिर्गुरुत्वात् जलमाविशत् ॥ ६ ॥ ततस्ते स्वपौरुषे नष्टे सति खिन्नाः बभूवुः ॥ ७ ॥ तदेश्वरो विघ्नेशकृतं विघ्नं विलोक्य काच्छपं वपुः कृत्वा तोयं प्रविश्य गिरिमुज्जहार ॥ ८ ॥ एवं तं गिरिमुत्थितं वीक्ष्य ते मथितुं पुनरुत्थिताः । तदा भगवान् लक्षयोजनविस्तृतपृष्ठेन तं दधार ॥ ९ ॥ ततः सुरासुरेन्द्राणां भुजवीर्यकम्पितं पृष्ठे भ्रमन्तं गिरिं कच्छपोऽङ्गकण्डूयनं मेने ॥ १० ॥

हरिरसुरान् दैत्याकारेण देवान् देवाकारेण रूपेण प्रविश्य तेषां बलवीर्यं प्रेरयन्नासत् ॥ ११ ॥ यदा मथनसमये गिरिरुपर्युपर्यगात् तदा भगवान् ब्रह्मभवेन्द्रमुख्यैः स्तुतो गिरौ तस्थौ ॥ १२ ॥ ततः उपर्यधश्च देवदैत्यमध्ये गोत्रनेत्रयोः प्रविशता हरिणा वृद्धिं गतास्तेऽब्धिं ममन्थुः ॥ १३ ॥ तदा वासुकेरपरिमितदृङ्मुखेभ्योऽग्निधूमौ निर्गतौ । ताभ्यां दग्धतेजसो दैत्याः अभवन् ॥ १४ ॥ तस्य श्वासज्वालाभिर्हतप्रभान्

उद्दीपयन्देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः ॥ ११ ॥
तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ॥ तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुवद्भिः सुमनोऽभिवृष्टः
उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः ॥ ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा
॥ १२ ॥ उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ॥ पौलोमकालेयबलील्वला-
क्षोभितनक्रचक्रम् ॥ १३ ॥ अहीन्द्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ॥ समभ्य-
दयो दावाग्निदग्धाः सरला इवाभवन् ॥ १४ ॥ देवांश्च तच्छ्वासशिखाहतप्रभान्धूम्राम्बरस्रग्वरकञ्चुकाननान् ॥ यदा सुधा न जायेत
वर्षन् भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः॥१५॥ मथ्यमाने तदा सिन्धौ देवासुरवरूथपैः॥ निर्ममन्थाजितः स्वयम् ॥ १६ ॥ मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्त-
नेत्रः ॥ जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा मथ्नन्मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः ॥१७॥ निर्मथ्यमाना-
दुदधेरभूद्विषं महोल्बणं हालाहलाह्वमग्रतः ॥ संभ्रांतमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिंगिलाकुलात् ॥१८॥



धूम्राम्बराननान् देवान् प्रति भगवद्वशाः मेघाः अभ्यवर्षन् शीतलवायुर्ववौ ॥ १५ ॥ एवं तैः प्रमथ्यमाने यदा सुधा न जाता तदा भगवान् स्वयं ममन्थ ॥ १६ ॥ तदा मेघश्यामः पीतवासाः मालाधरो रक्तनेत्रो हरिर्दोर्भिर्वासुकिं गृहीत्वा मथ्नन् पर्वत इव शुशुभे ॥ १७ ॥ ततो मथ्यमानादुदधेर्हालाहलं विषं जातम् । तदा मीनमकरादयो व्याकुलाः अभवन् ॥ १८ ॥

---

१ आत्मनि देवदैत्ययोर्मध्ये । २ गोत्रे दार्ढ्यरूपेण नेत्रे अभेद्यावोध रूपेण । ३ हरिणा । ४ सरलाः द्रुमविशेषाः । ५ 'मथ्यमानात्तदा सिन्धोः' इ० पा० । ६ कर्णयोर्विद्योतन्ती विद्युत्कुण्डललक्षणा यस्य सः ।

तदुग्रवेगं विषं दिशि दिशि प्रसर्पद् दृष्ट्वा देवासुराः भीताः सन्तः केनापि न रक्ष्यमाणाः शिवं शरणं जग्मुः ॥ १९ ॥ अद्रौ भवान्या सहितं दृष्ट्वा स्तुतिभिः प्रणेमुः ॥२०॥ प्रजापतय ऊचुः । हे देवदेव ! हे भूतभावन ! अस्मात् त्रैलोक्यदहनाद् विषात् शरणागतान् नः पाहि ॥२१॥ हे ईश ! सर्वजगतो बन्धमोक्षयोरीश्वरस्त्वमेक एव ॥ २२ ॥ गुह्यं परं ब्रह्म त्वमेव । यदा सर्गादीन् कर्तुमिच्छसि तदा गुणमय्या स्वशक्त्या

तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यवीर्यम् ॥ भीताः प्रजाः दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥१९॥ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याऽभिमतं मुनीनाम् ॥ आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥२०॥ प्रजापतय ऊचुः ॥ देवदेव महादेव भूतात्मन्भूतभावन ॥ त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥२१॥ त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः ॥ तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥२२॥ गुणमय्या स्वशक्त्याऽस्य सर्वस्थित्यप्ययान्विभो ॥ धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः ॥ नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः ॥ २४ ॥ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्वभावः ॥ कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत्त्रिवृदामनन्ति ॥ २५ ॥ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् ॥ कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम् ॥ २६ ॥ नाभिर्नभस्ते श्वसनं नभस्वान्सूर्यश्च चक्षूंषि जलं स्म रेतः ॥ परावरात्माश्रयणं तवात्मा सोमो मनो द्यौर्भगवञ्छिरस्ते ॥ २७ ॥

ब्रह्मविष्णुशिवाभिधां धत्से ॥२३॥ हे ईश ! त्वं परमं ब्रह्म ॥ २४ ॥ त्वं शब्दयोनिः। त्वं जगदादिः । त्वं कालः । त्वं क्रतुः ॥२५॥ हे भगवन् ! अग्निस्तव मुखम् । क्षितिः पादौ । कालो गतिः । दिशः कर्णौ । वरुणो जिह्वा ॥ २६ ॥ नभो नाभिः । जलं रेतः । चन्द्रो मनः ॥ २७ ॥

---

१ 'असह्यमप्रति, इ० पा० । २ देवतिर्यगादिरूपभावन । ३ शब्दो वेदः । ४ महत्तत्त्वम् । ५ संकल्पः ।६ यतः । ७ त्रिगुणात्मकं यदक्षरं प्रधानं तत् त्वदाश्रयमामनन्तीति । ८ परेऽवरेऽत्र ये जीवास्तेषामाधारोऽहंकारः ।

समुद्राः कुक्षिः। पर्वताः अस्थीनि। औषधयो रोमाणि। छन्दांसि सप्त धातवः। सर्वधर्मो हृदयम् ॥२८॥ हे ईश! उपनिषदस्ते मुखानि ॥२९॥ गुणाः नेत्राणि ॥ ३० ॥ किंच ब्रह्मादिलोकपालानामपि तव ज्योतिरगम्यम्। कुतः यत्र सत्त्वादयो गुणाः न ॥ ३१ ॥ हे शिव! मदनदक्षयज्ञत्रिपुरादयो येऽनेकभूतद्रुहः तान् संहरतस्तव तच्चरितं स्तुतये न भवति ॥३२॥ ये त्वामुमया सह चरन्तं तस्यामत्यन्तकामिनं श्मशाने भ्रमन्तं

कुक्षिः समुद्रा गिरयोऽस्थिसंघा रोमाणि सर्वौषधिवीरुधस्ते ॥ छन्दांसि साक्षात् तव सप्तधातवस्त्रयीमयात्मन् हृदयं सर्वधर्मः ॥ २८ ॥ मुखानि पञ्चोपनिषदस्तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ॥ यत्तच्छिवाख्यं परमार्थतत्त्वं देवः स्वयंज्योतिरवस्थितिस्ते ॥ २९ ॥ छाया त्वधर्मोर्मिषु यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि ॥ साक्षान्मनुः शास्त्रकृतस्तवेक्षा छन्दोमयो देवऋषिः पुराणः ॥३०॥ न ते गिरित्राखिललोकपालविरिञ्चवैकुण्ठसुरेन्द्रगम्यम् ॥ ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद् ब्रह्मनिरस्तभेदम् ॥३१॥ कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत्ते ॥ यस्त्वन्तकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया भसितं न वेद ॥ ३२ ॥ ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रिद्वन्द्वं चरन्तमुमया तपसाऽभितप्तम् ॥ कत्थन्त उग्रपरुषं निरतं श्मशाने ते नूनमूतिमविदंस्तव हातलज्जाः ॥ ३३ ॥ तत्तस्य ते सदसतोः परतः परस्य नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ॥ ब्रह्मादयः किमुत संस्तवने वयं तु तत्सर्गसर्गविषया अपि शक्तिमात्रम् ॥ ३४ ॥ एतत्परं प्रपश्यामो न परं ते महेश्वर ॥ मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ॥ ३५ ॥



क्रूरं हिंस्रं वदन्ति ते अतिमूर्खास्त्वां न विदुः ॥३३॥ ब्रह्मादयोऽपि तव स्वरूपज्ञानेऽसमर्थाः स्तवने तु कुतः समर्थाः स्युः। तत्र वयं तत्सर्गसर्गाः कथं स्तुवीमः ॥ ३४ ॥ हे महेश्वर! त्वत्तः परं न पश्यामः। इयं तव प्रकटता लोकस्य सुखाय। अतो नः पाहि ॥ ३५ ॥

१ वेदत्रयमूर्ते। २ तत्पुरुषाघोरसद्योजातवामदेवेशानरूपाः मन्त्राः। ३ उपरताऽवस्था। ४ दम्भलोभादिषु। ५ सत्त्वरजस्तमोभिः। ६ विविधस्सर्गः। ७ मनुर्वेदः। ८ गरक्षपणस्यावश्यंभावित्वात् सिद्धवन्निर्देशः। ९ भस्मसाद्भूतम्। १० आत्मरामाश्च ते गुरवो विविधहितोपदेष्टारस्तैः। ११ ऊतिं लीलाम्। १२ त्यक्तलज्जाः। १३ तथाऽप्यस्मत्कृतं स्तवनं शक्तिपरिमितमात्रम्।

श्रीशुक उवाच ॥ प्रजानां तद्दुखं वीक्ष्य शिवो देवीं जगाद॥३६॥शिव उवाच॥ हे भवानि ! कालकूटात् प्राप्तं प्रजानां दुखं पश्य॥३७॥प्राणरक्षेप्सूनामासां मयाऽभयं विधेयं यद्दीनपरिपालनं स श्रेष्ठस्यार्थः ॥३८॥ साधवस्तु क्षणभङ्गुरैः स्वप्राणैर्जीवान् पान्ति ॥३९॥ हे भद्रे । बद्धवैरेषु भूतेषु कृपां कुर्वतः पुंसो भगवान् प्रसन्नो भवति। तत्प्रसादे जगत् प्रसन्नं भवति॥४०॥अतः इदं विषं भुञ्जे। मत्तः प्रजानां स्वस्त्यस्तु॥४१॥ एवं

श्रीशुक उवाच ॥ तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ॥ सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम् ॥ ३६ ॥ शिव उवाच ॥ अहो बत भवान्येतत् प्रजानां पश्य वैशसम् ॥ क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ॥ ३७ ॥ आसां प्राणपरीप्सूनां विधेयमभयं हि मे ॥ एतावान् हि प्रभोरर्थो यद्दीनपरिपालनम् ॥ ३८ ॥ प्राणः स्वैः प्राणिनः पान्ति साधवः क्षणभंगुरैः ॥ बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥ पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ॥ प्रीते हरौ भगवति प्रीयेऽहं सचराचरः तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥ ४० ॥ श्रीशुक उवाच एवमामन्त्र्य भगवान् भवानीं विश्वभावनः ॥ तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥ ततः करतलीकृत्य व्यापिहालाहलं विषम् ॥ अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥ तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ॥ यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ ४३ ॥ तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ॥ परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ४४ ॥ निशम्य कर्म तच्छंभोर्देवदेवस्य मीढुषः ॥ प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥ ४५ ॥ प्रस्कन्नं पिबतः पाणेर्यत्किंचिज्जगृहुः स्म तत् ॥ वृश्चिकाहिविषौषध्यो दन्दशूकाश्च ये परे ॥ ४६ ॥ इति श्रीभागवते महापुराणे अष्टमस्कन्धे अमृतमंथने गरपानं नाम सप्तमोऽध्यायः ॥ ७ ॥

देवीं पृष्ट्वा विषं जग्धुमारेभे साऽपि प्रभावज्ञाऽन्वमोदत। ततो विषं करतलीकृत्य शिवो भक्षयामास॥४२॥ततो विषं तस्य वीर्यं दर्शयामास॥४३॥ तं गले नीलं चकार। तत् साधोर्विभूषणं जातम्! साधवो लोकतापेन तप्यंते॥४४॥ तत् शंभोः कर्म निशम्य दाक्षायणी ब्रह्मा विष्णुश्च शशंसिरे ॥४५॥ विषं पिबतस्तस्य हस्ताद् गलितं तद् वृश्चिकसर्पविषौषध्यो दन्दशूकाश्च जगृहुः ॥४६॥ इति श्रीभा० चूर्णिकायाम् अष्टम० सप्तमोऽध्यायः ॥७॥

अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः ॥ धन्वन्तरेर्हृते सोमे मोहिन्युद्भव ईर्यते ॥ १ ॥ श्रीशुक उवाच ॥ एवं शिवेन विषे पीते सति देवदैत्याः प्रीताः सन्तः पुनर्बलाद् ममन्थुः ततः कामधेनुरभवत् ॥ १ ॥ तामृषयो यज्ञस्य मेध्याय हविषे जगृहुः ॥ २ ॥ ततः श्वेतः उच्चैश्श्रवा नामाश्वो जातः । तस्मिन् बलिः स्पृहां चक्रे प्रागेव हरिणा शिक्षितत्वादिन्द्रो न ॥३॥ तत ऐरावतो नाम चतुर्दन्तयुक्तः श्वेतो गजो जातः । तमिन्द्रो जगृहे ॥४॥ ततः कौस्तुभाख्यं रत्नम् । तस्मिन् हरिः स्पृहां चक्रे ॥५॥ पारिजातः कल्पतरुरभवत् । स स्वर्गविभूषणं

श्रीशुक उवाच ॥ पीते गरे वृषांकेण प्रीतास्तेऽमरदानवाः॥ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् ॥ १ ॥ तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ॥ यज्ञस्य देवयानस्य मेध्याय हविषे नृप ॥ २ ॥ तत उच्चैश्श्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः॥ तस्मिन्बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३ ॥ तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ॥ दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम्[१] ॥ ४ ॥ कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ॥ तस्मिन्हरिः स्पृहां चक्रे वक्षोऽलंकरणे मणौ ॥५॥ ततोऽभवत्पारिजातः सुरलोकविभूषणम्॥पूरयत्यर्थिनो योऽर्थैःश्श्वद्भुवि यथा भवान् ॥६॥ ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ॥ रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ७ ॥ ततश्चाविरभूत्साक्षाच्छ्रीरमा भगवत्परा ॥ रंजयन्ती दिशः कान्त्या विद्युत् सौदामनी यथा॥८॥तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ॥ रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ९ ॥ तस्या आसनमानिन्ये महेन्द्रो महदद्भुतम् ॥ मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि ॥ १० ॥ आभिषेचनिका भूमिराहरत्सकलौषधीः ॥ गावः पञ्च पवित्राणि वसंतो मधुमाधवौ ॥ ११ ॥

जातः ॥ ६ ॥ ततोऽप्सरसो जाताः । ताः श्रेष्ठगत्याऽवलोकनादिभिः स्वर्गिणां रमण्यो जाताः ॥ ७ ॥ ततो भगवत्परा श्रीरमा जाता । सा स्वकान्त्या दिशः प्राकाशयत् ॥८॥ तस्यां देवासुरमानवाः मोहिताः सन्तः स्पृहां चक्रुः ॥ ९ ॥ तस्यै इन्द्रः आसनमानिन्ये ॥ मूर्तिमत्यो नद्यो हेमकुम्भैर्जलमानिन्युः ॥ १० ॥ भूमिः सर्वौषधीः गावः पञ्चगव्यानि । वसन्तः फलपुष्पादि ॥ ११ ॥

१ भगवतः कैलासस्य महिमानम् ।

ऋषयोऽभिषेकं चक्रुः । गन्धर्वाः जगुः । नर्तक्यो ननृतुः ॥ १२ ॥ देवाः मृदङ्गशङ्खगोमुखवीणादीनवादयन् ॥ १३ ॥ दिग्गजाः पूर्णकलशैर्द्विजेरितैः सूक्तवाक्यैरभिषेकं चक्रुः ॥ १४ ॥ समुद्रः पीतकौशेयवाससी ददौ । वरुणो वैजयन्तीं मालां ददौ ॥ १५ ॥ विश्वकर्मा विचित्रभूषणानि । सरस्वती हारम् । अजः पद्मम् । नागाः कुण्डले ददुः ॥१६॥ ततो रमा भ्रमरनादितां कमलमालां हस्ते गृहीत्वा सव्रीडहासं सुकुण्ड-

ऋषयः कल्पयांचक्रुरभिषेकं यथाविधि ॥ जगुर्भद्राणि गंधर्वा नटयश्च ननृतुर्जगुः ॥ १२ ॥ देवा मृदंगपणवमुरजानकगोमुखान् ॥ व्यनादयन् शंखवेणुवीणास्तुमुलनिस्स्वनान् ॥ १३ ॥ ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ॥ दिगिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः ॥ १४ ॥ समुद्रः पीतकौशेयवाससी समुपाहरत् ॥ वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥ १५ ॥ भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ॥ हारं सरस्वती पद्ममजो नागाश्च कुण्डले ॥ १६ ॥ ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना ॥ चचाल वक्रं सुकपोलकुण्डलं सव्रीडहासं दधती सुशोभनम् ॥ १७ ॥ स्तनद्वयं चातिकृशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम् ॥ ततस्ततो नूपुरवल्गुशिञ्जितैर्विसर्पती हेमलतेव सा बभौ ॥ १८ ॥ विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारि सद्गुणम् ॥ गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत ॥ १९ ॥ नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम् ॥ कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं पर[1]तो व्यपाश्रयः ॥ २० ॥

लादिकं च वक्रं दधती सती चचाल ॥ १७ ॥ चन्दनकेसरलेपितं स्तनद्वयं दधती कृशोदरी हेमलतेव बभौ ॥१८॥ ततो देवासुरगन्धर्वादिषु पतिमिच्छन्ती सद्गुणं कमपि नान्वविन्दत ॥ १९ ॥ तदेवाह । येषु दुर्वासःप्रभृतिषु तपः तेषु क्रोधजयो न । यस्य शुक्रगुर्वादेर्ज्ञानं स सङ्गवर्जितो न । कश्चित् महान् ब्रह्मचन्द्रादिः तस्य कामजयो न ॥ २० ॥

---

[1] परः पक्षः इंद्रादिः ।

येषु परशुरामादिषु धर्मः तेषु भूतसौहृदं । न शिबिनृपादिषु त्यागः स मुक्तिकारणं न । कार्तवीर्यादेर्वीर्यं तत् कालवेगेन विध्वस्तं भवति ॥२१॥ कश्चित् चिरायुर्मार्कण्डेयादिः तस्य शीलमङ्गलं न । यत्रोभयमस्ति स शिवोऽमङ्गलः । कश्चित् सुमङ्गलः श्रीमुकुन्दः स मां नेच्छति ॥२२॥ श्रीशुक उवाच ॥ एवं सर्वेषु विचार्य निरपेक्षमपि सर्वगुणाश्रयं मुकुन्दं वव्रे ॥ २३ ॥ ततो हरेः स्कन्धे कमलमालां निधाय तदनुग्रहं प्रतीक्ष-

धर्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम् ॥ वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं नहि द्वितीयो गुणसङ्गवर्जितः ॥ २१ ॥ क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित्तदप्यास्ति न वेद्यमायुषः ॥ यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमंगलः कश्च न काङ्क्षते हि माम् ॥ २२ ॥ श्रीशुक उवाच ॥ एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयतयाऽगुणाश्रयम् ॥ वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २३ ॥ तस्यांसदेश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ॥ तस्थौ निधाय निकटे तदुरः स्वधाम सव्रीडहासनिकसन्नयनेन याता ॥२४॥ तस्याः श्रियस्त्रिजगतो जनको जनन्या वक्षोनिवासमकरोत्परमं विभूतेः ॥ श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २५ ॥ शङ्खतूर्यमृदंगानां वादित्राणां पृथुः स्वनः ॥ देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २६ ॥ ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् ॥ ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २७ ॥श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ॥ शीलादिगुणसंपन्ना लेभिरे निर्वृतिं पराम् ॥ ॥ २८ ॥ निस्सत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः॥ यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २९ ॥



माणा तूष्णीं तस्य निकटे तस्थौ ॥ २४ ॥ भगवान् तस्याः स्ववक्षः स्थानं ददौ ॥२५॥ तदा गायतां सस्त्रीणां देवानां शङ्खमृदङ्गभेर्यादिशब्दः प्रादुरभूत् ॥ २६ ॥ पुष्पवर्षिणो ब्रह्मरुद्राद्याः विभोः स्तुतिं चक्रिरे ॥ २७ ॥ लक्ष्म्या विलोकिताः देवादयः सुखं प्रापुः ॥ २८ ॥ हे राजन् ! लक्ष्म्योपेक्षिताः दैत्यदानवाः निस्सत्त्वा लोलुपाः निर्लज्जा बभूवुः ॥ २९ ॥

---

१ सनकादिः । २ विष्णुप्रतिपादकैः ।

अथ वारुणी देवी कन्या कमललोचना आसीत् । तामसुराः जगृहुः ॥ ३० ॥ अथ मथ्यमानादुदधेरद्भुतः पुरुषः उदतिष्ठत् ॥३१॥ कथंभूतः सः ? कमलनेत्रः श्यामः स्रग्वी ॥ ३२ ॥ पीतवासाः मणिकुण्डलः कुञ्चितकेशान्तः सिंहविक्रमः ॥ ३३ ॥ अमृतपूर्णकलशं बिभ्रत् ॥३४॥ आयुर्वेदप्रवर्तको धन्वन्तर्याख्यः । एतादृशं तममृतकलशं च दृष्ट्वाऽसुराः बलात् तं कलशमाहरन् । असुरैः कलशे नीयमाने सति ॥ ३५ ॥

अथासीद्वारुणी देवी कन्या कमललोचना ॥ असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥३०॥ अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ॥ उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥३१॥ दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ॥ श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥३२॥ पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ॥ स्निग्धकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥३३॥ अमृतापूर्णकलशं बिभ्रद्वलयभूषितः ॥ स वै भगवतः साक्षाद्विष्णोरंशांशसंभवः ॥ ३४ ॥ धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक्[1] ॥ तमालोक्यासुराः सर्वे कलशं चामृताभृतम् ॥३५॥ लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽऽहरन् ॥ नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ॥ ३६ ॥ विषण्णमनसो देवा हरिं शरणमाययुः ॥ इति तद्दैन्यमालोक्य भगवान् भृत्यकामकृत् ॥ मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ३७ ॥ मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम् ॥ अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ ३८ ॥ देवाः स्वं भागमर्हन्ति ये तुल्यायासहेतवः ॥ सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३९ ॥ इति स्वान्प्रत्यषेधन्वै दैतेया जातमत्सराः ॥ दुर्बलाः प्रबलान् राजन् गृहीतकलशान् मुहुः ॥ ४० ॥ एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ॥ योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४१ ॥

॥ ३६ ॥ खिन्नाः देवाः हरिं शरणं ययुः । भगवान् तेषां दैन्यं विलोक्य दैत्यानां मिथः कलहोत्पादनेन मोहिनीरूपेण वोऽर्थं साधयिष्यामि यूयं मा खिद्यत इत्याह ॥३७॥ ततस्तेषाममृतार्थं मिथः कलहो जातः ॥३८॥ तत्र ये दुर्बलास्ते तुल्यप्रयत्नसाधकाः देवाः स्वभागमर्हन्ति एष सनातनो धर्मः इत्युक्त्वा धृतकलशान् प्रबलान् प्रत्यषेधन् ॥ ३९ ॥ ४० ॥ एतस्मिन्नन्तरे सर्वोपायविदीश्वरो योषिद्रूपं दधार ॥ ४१ ॥

[1] यज्ञभागभोक्ता ।

कथंभूतम् । उत्पलश्यामं सर्वावयवसुन्दरं सुकपोलनासिकम् ॥ ४२ ॥ नवयौवननिर्वृत्तस्तनभारकृशोदरं चञ्चललोचनम् ॥ ४३ ॥ स्वकेशभारेण मालां बिभ्रत् सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषितम् ॥४४॥ कटिसूत्रेण शोभितं लसच्चरणनूपुरम् ॥४५॥ भ्रूविक्षेपावलोकनैर्दैत्यानां चित्तेषु मुहुः काममुद्दीपयत् ॥४६॥ इति श्रीभाग० चू० अष्टम० अष्टमोऽध्यायः ॥८॥ नवमे मोहिनीदैत्यैरर्पितेऽमृतभाजने । तद्वञ्चनेन देवेभ्योऽमृतं दत्तं तयेर्यते ॥१॥ श्रीशुक उवाच ॥ अथ ते दैत्यास्त्यक्तसौहृदाः सन्तः पात्रं हरन्त आयान्तीं स्त्रियं ददृशुः ॥१॥ अहो अस्याः रूपम् अहो



प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् ॥ समानकर्णाभरणं सुकपोलोन्नसाननम् ॥ ४२ ॥ नवयौवननिर्वृत्तस्तनभारकृशोदरम् ॥ मुखामोदानुरक्तालिझङ्कारोद्विग्नलोचनम् ॥४३॥ बिभ्रत्स्वकेशभारेण मालामुत्फुल्लमल्लिकाम् ॥ सुग्रीवकण्ठाभरणं सुभुजांगदभूषितम् ॥ ४४ ॥ विरजाम्बरसंवीतनितम्बद्वीपशोभया ॥ काञ्च्या प्रविलसद्वल्गुचलच्चरणनूपुरम् ॥ ४५ ॥ सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ॥ दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ॥४६॥ इति श्रीभागवते म० अष्टम० अमृतमथने मोहिनीरूपधारणं नाम अष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ तेऽन्योन्यतोऽसुराः पात्रं हरन्तस्त्यक्तसौहृदाः ॥ क्षिपन्तो दस्युधर्माणं आयान्तीं ददृशुः स्त्रियम् ॥ १ ॥ अहो रूपमहो धाम अहो अस्या नवं वयः ॥ इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥ २ ॥ का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि ॥ कस्यासि वद वामोरु मथ्नन्तीव मनांसि नः ॥ ३ ॥ न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः ॥ नास्पृष्टपूर्वां जानीमो लोकेशैश्च कुतो नृभिः ॥४॥ नूनं त्वं विधिना सुभ्रूः प्रेषिताऽसि शरीरिणाम् ॥ सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥५॥ सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि ॥ ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ॥ ६ ॥ वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ॥ विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ७ ॥



कान्तिः अहो नवं वयः इति वदन्तो जातकामाः सन्तोऽभिद्रुत्य तां पप्रच्छुः ॥२॥ हे कमलनेत्रे ! त्वं का ? कुतः आगता ? किं चिकीर्षसि? कस्यासि ? ॥३॥ वयं त्वां देवासुरगन्धर्वसिद्धचारणादिभिरस्पृष्टपूर्वां जानीमः ॥४॥ हे सुभ्रूः ! विधिना नः सर्वेन्द्रियमनः प्रीतिं कर्तुं प्रेषिताऽसि किम् ? ॥ ५ ॥ सा त्वं शं विधत्स्व ॥ ६ ॥ वयं कश्यपपुत्राः इमे भ्रातरः । अतो नो भेदो यथा न भवेत् तथा सुधां विभजस्व ॥ ७ ॥

एवं दैत्यैः प्रार्थितो हरिः प्रहस्य प्राह ॥ ८ ॥ श्रीभगवानुवाच । हे दैत्याः ! यूयं कश्यपपुत्राः पुंश्चल्यां मयि कथमनुसृताः । पण्डिताः कामिनीषु न विश्वसन्ति ॥ ९ ॥ हे दैत्याः ! स्वैरिणीस्त्रीणां सालावृकाणां च सख्यानि न नित्यानि वदन्ति यतो नूत्नं नूत्नं विचिन्वन्ति ॥ १० ॥ श्रीशुक उवाच ॥ एवं दैत्यास्तस्याः नर्मवाक्यैर्मोहिताः सन्तो जहसुः तस्यै अमृतपात्रं च ददुः ॥११॥ ततो हरिरमृतपात्रं गृहीत्वा

इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः ॥ प्रहस्य रुचिरापांगैर्निरीक्षन्निदमब्रवीत् ॥८॥ श्रीभगवानुवाच ॥ कथं कश्यपदायादः पुंश्चल्यां मयि संगताः ॥ विश्वासं पण्डितो जातु कामिनीषु न याति हि ॥ ९ ॥ सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः ॥ सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वताम् ॥१०॥ श्रीशुक उवाच ॥ इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः ॥ जहसुर्भावगम्भीरं ददुश्चामृतभाजनम् ॥ ११ ॥ ततो गृहीत्वाऽमृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा ॥ यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् ॥ १२ ॥ इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुंगवाः ॥ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत ॥ १३ ॥ अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम् ॥ दत्त्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः ॥ १४ ॥ यथोपजोषं वासांसि परिधायाहतानि ते ॥ कुशेषु प्राविशन् सर्वे प्रागग्रेष्वभिभूषिताः ॥ १५ ॥ प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ॥ धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥१६॥ तस्यां नरेन्द्र करभोरुरुशद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी ॥ सा कूजती कनकनूपुरशिञ्जितेन कुम्भस्तनी कलशपाणिरथाविवेश ॥ १७ ॥

प्रहस्य जगाद । हे दैत्याः ! मया साधु वा असाधु वा कृतं यद्यङ्गीकुरुत तर्हि सुधां विभजे ॥ १२ ॥ एवं तस्याः वाक्यं श्रुत्वा दैत्यास्तथेति तामनुमेनिरे ॥ १३ ॥ अथ ते सर्वे कृतस्नानाः उपोष्याग्निं हुत्वा द्विजादिभ्यो दानानि दत्त्वा ॥ १४ ॥ शुद्धवासांसि धृत्वा पूर्वाग्रदर्भासनेषु प्राविशन् ॥ १५ ॥ धूपदीपामोदितशालायां देवदैत्येषु पूर्वमुखस्थितेषु सत्सु ॥ १६ ॥ तस्यां शालायां मदविह्वलाक्षी नूपुरैः शब्दं कुर्वती कुम्भस्तनी सा मोहिनी कलशं गृहीत्वा प्रविवेश ॥ १७ ॥

कनककुण्डलां श्रियः सखीं विगलितस्तनपट्टिकान्तां तां दृष्ट्वा सर्वे मुमुहुः॥१८॥तदा हरिर्जात्या क्रूराणां दैत्यानां सुधादानं सर्पाणां क्षीरदानमिव मत्वा तेभ्यः सुधां न व्यभजत् ॥१९॥ ततो देवदैत्यानां पृथक् पङ्क्तीः कृत्वा स्वस्वपङ्क्तिषु तानुपवेश्य ॥२०॥ गृहीतकलशो हरिः प्रियवाक्यादिना तान् वञ्चयन् गमनैर्दूरस्थानपि देवान् जरामृत्युहरां सुधां पाययामास ॥२१॥ ततो दैत्याः स्वकृतं समयं पालयन्तस्तस्याः बहुमानेन बद्धाः

तां श्रीसखीं कनककुण्डलचारुकर्णनासाकपोलवदनां परदेवताख्याम् ॥ संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकान्ताम् ॥ १८ ॥ असुराणां सुधादानं सर्पाणामिव दुर्नयम् ॥ मत्वा जातिनृशंसानां न तां व्यभजदच्युतः ॥१९॥ कल्पयित्वा पृथक् पङ्क्तीरुभयेषां जगत्पतिः ॥ तांश्चोपवेशयामास स्वेषु स्वेषु च पंक्तिषु ॥२०॥ दैत्यान् गृहीतकलशो वञ्चयन्नुपसंचरैः ॥ दूरस्थान् पाययामास जरामृत्युहरां सुधाम् ॥ २१ ॥ ते पालयन्तः समयमसुराः स्वकृतं नृप॥तूष्णीमासन् कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ २२ ॥ तस्यां कृतातिप्रणयाः प्रणयापायकातराः ॥ बहुमानेन चाबद्धा नोचुः किंचन विप्रियम् ॥२३॥ देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ॥ प्रविष्टः सोममपिबच्चन्द्रार्काभ्यां च सूचितः ॥२४॥ चक्रेण क्षुरधारेण जहार पिबतः शिरः ॥ हरिस्तस्य कबन्धस्तु सुधयाऽप्लावितोऽपतत् ॥२५॥ शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् ॥ यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ॥२६॥ पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः ॥ पश्यतामसुरेन्द्राणां स्वं रूपं जगृहे हरिः ॥ २७ ॥ एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोऽपि फलेविकल्पाः[1] ॥ तत्रामृतं सुरगणाः फलमञ्जसाऽऽपुर्यत्पादपङ्कजरजःश्रयणान्न दैत्याः ॥ २८ ॥



स्त्रीवादजुगुप्सया विप्रियं किंचिदपि नोचुः॥२२॥२३॥ तदा राहुर्देवपङ्क्तौ चन्द्रार्कयोर्मध्ये स्थितः सन् सुधां पपौ॥२४॥ चन्द्रार्काभ्यां सूचितो हरिश्चक्रेण तच्छिरो जहार । तत्कबन्धस्तु सुधयाऽस्पृष्टः पपात ॥२५॥ शिरस्त्वमरतां नीतम् । हरिस्तं ग्रहं चकार । यः पर्वणि वैरेण चन्द्रार्कौ प्रति धावति ॥ २६ ॥ एवं देवैरमृते पीते सुराणां पश्यतां सतां हरिः स्वस्वरूपं जगृहे ॥ २७ ॥ एवं देवासुराः श्रमे तुल्या अपि फले विकल्पं प्रापुः ।

१ फले विविधः कल्पः फलं केषांचिज्जातं केषांचिन्नेति वैचित्र्यं येषां ते ।

हे नृप ! देवाः यत्पादपङ्कजरजस्संश्रयादमृतं प्रापुः दैत्याः न॥२८॥प्राणधनादिभिर्देहात्मजादिषु यत् क्रियते तत् व्यर्थं भवति। तैरेव प्राण-धनादिभिरीश्वरोद्देशेन क्रियते तत् महाफलं भवति ॥२९॥ इति श्रीभाग॰ चू॰ अष्टम॰ नवमोऽध्यायः ॥९॥ दशमे मत्सराद् दैत्यैरारब्धे तु मृधेऽसुरैः। दैत्यमायाविषण्णेषु देवेष्वाविर्बभौ हरिः ॥१॥ तदेवममृतावाप्तिर्नाभक्तानामितीरितम्। भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते ॥२॥ श्रीशुक उवाच ॥ हे नृप ! दैतेयाः कर्मणि प्रयत्नशीलाः सन्तो भगवत्पराङ्मुखाः अत एवामृतं नाविन्दन् ॥१॥ एवं भगवान् देवानां कार्यं

यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदसत्पृथक्त्वात् ॥ तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्सर्वस्य तद्भवति मूलनिषेचनं यत्॥२९॥इति श्रीभा॰ म॰ अष्टम॰ अमृतमथने अमृतविभागो नाम नवमोऽध्यायः ॥९॥

श्रीशुक उवाच ॥ इति दानवदैतेया नाविन्दन्नमृतं नृप ॥ युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः ॥ १ ॥ साधयित्वाऽमृतं राजन्पाययित्वा स्वकान्सुरान् ॥ पश्यतां सर्वभूतानां ययौ गरुडवाहनः ॥ २ ॥ सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनंदनाः ॥ अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः ॥ ३ ॥ ततः सुरगणाः सर्वे सुधया पीतयैधिताः ॥ प्रति संयुयुधुः शस्त्रैर्नारायणपदाश्रयाः ॥ ४ ॥ तत्र दैवासुरो नाम रणः परमदारुणः ॥ रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः ॥ ५ ॥ तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे ॥ समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥ शङ्खतूर्यमृदंगानां भेरीडमरुणां महान् ॥ हस्त्यश्वरथपत्तीनां नदतां निस्स्वनोऽभवत् ॥ ७ ॥

साधयित्वा गरुडे स्थित्वा ययौ ॥ २ ॥ ततो देवानां परामृद्धिं दृष्ट्वा दैत्याः गृहीतायुधा सन्तो युद्धार्थं ययुः ॥३॥ देवा अपि नारायणपदा-श्रयाः सुधया वृद्धिं गताः शस्त्रैर्दैत्यान् प्रति युयुधुः ॥ ४ ॥ तदा समुद्रतीरे दैवासुरो नाम रोमहर्षणो दारुणः संग्रामोऽभवत् ॥ ५ ॥ तत्र रणे सपत्नाः अन्योन्यं प्राप्य जघ्नुः ॥ ६ ॥ शङ्खमृदङ्गडमरुभेर्यादीनां शब्दो जातः ॥ ७ ॥

---

१ शाखाभेदाश्रयत्वात् मूलनिषेचनवत्। २ ईश्वराश्रयत्वात् ईश्वरस्य च सर्वानुगतत्वात्। ३ यन्मूलनिषेचनं तत्सर्वस्य स्कन्धशाखादेरपि भवति।

अथ रथिनो रथिभिः पत्तयः पत्तिभिः ॥८॥ तथा केचिद् भटाः उष्ट्रगजसिंहऋक्षवानरैः॥९॥ गृध्रकङ्कबकशरभमहिषगोवृषैः ॥१०॥ शिवामूषकशशबस्तमृगहंससूकरैः॥११॥ जलस्थलखगैः प्राणिभिः एतैर्वाहनैः सेनयोर्मध्येऽग्रतोऽग्रतस्ते विविशुः॥१२॥ तदा हे नृप! चित्रध्वजपटश्वेतच्छत्रव्यजनचामरैः ॥१३॥ उष्णीषकवचभूषणतीक्ष्णशस्त्रैः ॥१४॥ देवदानववीराणां सैन्ये वीरमालाभिः रेजतुः ॥१५॥ तत्र बलिर्मयासुरनिर्मितं

रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः ॥ हया हयैरिभाश्चेभैः समसज्जन्त संयुगे ॥ ८ ॥ उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः ॥ केचिद्गौरमृगैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥९ ॥ गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गिलैः ॥ शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥ शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः ॥ बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥११॥ अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः ॥ सेनयोरुभयो राजन्विविशुस्तेऽग्रतोऽग्रतः ॥१२॥ चित्रध्वजपटै राजन्नातपत्रैः सितामलैः ॥ महाधनैर्वज्रदण्डैर्व्यजनैर्बार्हचामरैः ॥ १३ ॥ वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः ॥ स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥ १४ ॥ देवदानववीराणां ध्वजिन्यौ पाण्डुनंदन ॥ रेजतुर्वीरमालाभिर्यादसामिव सागरौ ॥ १५ ॥ वैरोचनो बलिः सङ्ख्ये सोऽसुराणां चमूपतिः ॥ यानं वैहायसं नाम कामगं मयनिर्मितम् ॥१६॥ सर्वसांग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो ॥ अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥१७॥ आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः ॥ वालव्यजनछत्राग्र्ये रेजे चन्द्र इवोदये ॥ १८ ॥ तस्यासन् सर्वतो यानैर्यूथानां पतयोऽसुराः ॥ नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥ द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः ॥ शकुनिर्भूतसंतापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥

वैहायसं कामगम् ॥ १६ ॥ सर्वाश्चर्यमयम् ॥ १७ ॥ विमानमारुह्य दैत्यसैन्यैर्वेष्टितश्छत्रचामरैश्चन्द्र इव रेजे ॥ १८ ॥ तस्य सर्वतो वाहनैः सेनापतयो नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥१९॥ द्विमूर्धा कालनाभः प्रहेतिः इल्वलः शकुनिः भूतसंतापो वज्रदंष्ट्रो विरोचनः ॥२०॥

१ यादसां मालाभिः ।

हयग्रीवः शङ्कुशिराः कपिलः मेघदुन्दुभिः तारकः चक्रदृक् शुम्भः निशुम्भः जम्भ उत्कलः ॥२१॥ अरिष्टः अरिष्टनेमिः मयअन्ये पौलोमकालेय-
निवातकवचादयः ॥२२॥ एतेऽप्राप्तभागाः केवलं क्लेशभागिनो दैत्याः आसन् ॥ २३ ॥ तथा सिंहनादान् मुञ्चन्तः शङ्खान् दध्मुः तदा शत्रून्
दृष्ट्वेन्द्रः कुपितः सन् ॥ २४ ॥ ऐरावतमारूढः सूर्य इव रेजे ॥ २५ ॥ तस्य सर्वतो नानावाहनध्वजायुधाः वाय्वग्निवरुणादयो देवाः गणैः सह
आसन् ॥२६॥ तेऽन्योऽन्यं संसृत्य मर्मभिः क्षिपन्तो मिथः आह्वयन्तो द्वन्द्वयोधिनो युयुधुः ॥२७॥ तत्र बलिरिन्द्रेण युयुधे । गुहास्तारकेण ।

हयग्रीवःशङ्कुशिराःकपिलो मेघदुन्दुभिः॥तारकश्चक्रदृक् शुम्भो निशुम्भो जम्भ उत्कलः॥२१॥ अरिष्टोऽरिष्टनेमिश्च
मयश्च त्रिपुराधिपः॥अन्ये पौलोमकालेया निवातकवचादयः ॥ २२ ॥ अलब्धभागाः सोमस्य केवलं क्लेशभागिनः॥
सर्व एते रणमुखे बहुशो निर्जितामराः॥२३॥ सिंहनादान् विमुञ्चन्तःशंखान्दध्मुर्महास्वनान् ॥ दृष्ट्वा सपत्नानुत्सिक्तान्
बलभित्कुपितो भृशम् ॥२४॥ ऐरावतं दिक्करिणमारूढः शुशुभे स्वराट् ॥ तथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥२५॥
तस्यासन्सर्वतो देवा नानावाहध्वजायुधाः ॥ लोकपालाः सहगणैर्वाय्वग्निवरुणादयः ॥ २६ ॥ तेऽन्योन्यमभिसंसृत्य
क्षिपन्तो मर्मभिर्मिथः ॥ आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः ॥२७॥ युयोध बलिरिन्द्रेण तारकेण गुहोऽस्यत॥
वरुणो हेतिनाऽयुध्यन्मित्रो राजन्प्रहेतिना ॥२८॥ यमस्तु कालनाभेन विश्वकर्मा मयेन वै ॥ शम्बरो युयुधे त्वष्ट्रा
सवित्रा तु विरोचनः ॥२९॥ अपराजितेन नमुचिरश्विनौ वृषपर्वणा ॥ सूर्यो बलिसुतैर्देवो बाणज्येष्ठैश्शतेन च ॥३०॥
राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ॥ निशुम्भशुम्भयोर्देवी भद्रकाली तरस्विनी॥३१॥वृषाकपिस्तु जम्भेन
महिषेण विभावसुः ॥ इल्वलः सहवातापिर्ब्रह्मपुत्रैररिन्दम ॥ ३२ ॥कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह ॥ बृहस्पति-
श्चोशनसा नरकेण शनैश्चरः ॥ ३३ ॥

वरुणो हेतिना । मित्रः प्रहेतिना ॥२८॥यमः कालनाभेन। विश्वकर्मा मयेन। त्वष्टा शम्बरेण। सविताविरोचनेन ॥२९॥ अपराजितो नमुचिना
अश्विनौ वृषपर्वणा । सूर्यो बलेः पुत्रशतेन येषु ज्येष्ठो बाणः ॥३०॥ सोमो राहुणा । वायुः पुलोम्ना । देवी निशुम्भशुम्भाभ्याम् ॥३१॥ वृषाकपि-
र्जम्भेन । विभावसुर्महिषेण । इल्वलवातापी ब्रह्मपुत्रैः ॥ ३२ ॥ कामदेवेन दुर्मर्षः उत्कलो मातृभिः बृहस्पतिः शुक्रेण । नरकेण शनैश्चरः॥३३॥

मरुतो निवातकवचैः वसवः कालेयैः विश्वेदेवाः पौलोमैः रुद्राः क्रोधवशैर्युयुधुः ॥ ३४ ॥ ते एवं तीक्ष्णबाणासितोमरैर्मिथो निजघ्नुः ॥३५॥ भुशुण्डिचक्रगदापट्टिशशक्तिज्वलत्काष्ठपरश्वधभल्लपरिघमुद्गरभिन्दिपालैः शिरांसि चिच्छिदुः ॥३६॥ गजाश्वरथपदातयः छिन्नबाहूरुशिरोधराङ्घ्रयो बभूवुः ॥३७॥ अपि च देवादीनां पादाघातैः रथैश्च रणभूमेः रेणुः खं दिशः सूर्यं चाच्छादयत् ॥३८॥ तेषां कृत्तकिरीटकुण्डलयुक्तैः

मरुतो निवातकवचैः कालेयैर्वसवोऽमराः ॥ विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४ ॥ त एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य च युध्यमानाः ॥ अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरासितोमरैः ॥ ३५ ॥ भुशुण्डिभिश्चक्रगदर्ष्टिपट्टिशैः शक्त्युल्मुकैःप्रासपरश्वधैरपि ॥ नैस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिन्दिपालैश्च शिरांसि चिच्छिदुः ॥३६॥ गजास्तुरङ्गाः सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः ॥ निकृत्तबाहूरुशिरोधराङ्घ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ॥ ३७ ॥ तेषां पदाघातरथाङ्गचूर्णितादायोधनादुल्बण उत्थितस्तदा ॥ रेणुर्दिशः खं द्युमणिं च छादयन् न्यवर्ततासृक्स्रुतिभिः परिप्लुतात् ॥३८॥ शिरोभिरुत्कृत्तकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः ॥ महाभुजैः साभरणैः सहायुधैः सा प्रास्तृता भूःकरभोरुभिर्बभौ ॥३९॥ कबन्धास्तत्र चोत्पेतुः पश्यंतःस्वशिरोऽक्षिभिः ॥ उद्यतायुधदोर्दण्डैराधावन्तो भटान्मृधे ॥४०॥ बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः ॥ चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत् ॥ ४१ ॥ स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः ॥ चिच्छेद निशितैर्भल्लैरसंप्राप्तान्हसन्निव ॥ ४२ ॥ तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे ॥ तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥ ४३ ॥

शिरोभिः सायुधालङ्कारैर्हस्तैस्तथा वाहनानां च शिरोरुबाहुभिः प्रास्तृता रणभूर्बभौ॥३९॥ तत्र पतितानि स्वशिरांसि तदक्षिभिः पश्यन्तः कबन्धाः धृतायुधाः भटान् प्रति युयुधिरे ॥४०॥ ततो बलिर्दशभिः शरैरिन्द्रं त्रिभिर्गजं चतुर्भिर्गजरक्षकानेकेन गजयन्तारं विव्याध ॥४१॥ इन्द्रः प्राप्तान् बाणान् शीघ्रं स्वबाणैश्चिच्छेद ॥ ४२ ॥ ततो बलिस्तस्य पराक्रमं वीक्ष्य शक्तिमाददे । ततः इन्द्रो ज्वलन्तीं हस्तस्थां तां चिच्छेद॥ ४३ ॥

ततो बलिः शूलप्रासतोमरादि यद्यत् शस्त्रं जगृहे तत्तदिन्द्रश्चिच्छेद ॥४४॥ ततो बलिरन्तर्धाय मायां ससर्ज। ततो देवसेनोपरि शैलः प्रादुरभूत् ॥४५॥ ततो दवाग्निना दह्यमानाः वृक्षाश्चूर्णयन्त्यः शिलाः ॥४६॥ महोरगाः वृश्चिकाः सिंहव्याघ्रवराहादयः ॥४७॥ शतशो वस्त्रहीनाश्छिन्धिभिन्धीति वादिन्यो यातुधान्यो रक्षोगणाश्चोत्पेतुः ॥४८॥ ततो मेघाः आकाशेऽङ्गारान् मुमुचुः॥४९॥ दैत्येन सृष्टो वह्निः प्रलयाग्निरिव देवसैन्यं

ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः ॥ यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद्विभुः ॥ ४४ ॥ ससर्जाथासुरीं मायामन्तर्धानं गतोऽसुरः ॥ ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥४५॥ ततो निपेतुस्तरवो दह्यमाना दवाग्निना॥शिलाः सटङ्कशिखराश्चूर्णयन्त्यो द्विषद्बलम् ॥४६॥ महोरगाः समुत्पेतुर्दन्दशूकाःसवृश्चिकाः ॥ सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजान् ॥४७॥ यातुधान्यश्च शतशः शूलहस्ता विवाससः॥ छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणाः प्रभो ॥४८॥ ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः ॥ अङ्गारान्मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥ सृष्टो दैत्येन सुमहान् वह्निः श्वसनसारथिः ॥ सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक् ॥५०॥ ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत॥प्रचण्डवातैरुद्धततरंगावर्त्तभीषणः ॥५१॥ एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः॥सृज्यमानासुमायासु विषेदुः सुरसैनिकाः ॥५२॥ न तत्प्रतिविधिं यत्र विदुरिन्द्रादयो नृप॥ध्यातः प्रादुरभूत्तत्र भगवान्विश्वभावनः॥५३॥ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशंगवासा नवकञ्जलोचनः ॥ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुण्डलः ॥५४॥ तस्मिन्प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महिना[1] महीयसः ॥ स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षणम् ॥५५॥

ददाह ॥ ५० ॥ समुद्रः सर्वतः प्रचण्डवातैरुद्धूततरङ्गः उद्वेलोऽदृश्यत ॥ ५१ ॥ एवं दैत्यैः सृष्टासु मायासु देवाः खेदं प्रापुः ॥ ५२ ॥ ते तस्याः नाशोपायमजानन्तो हरिं दध्युः ॥५३॥ ततो विश्वपालको हरिः पीताम्बरधरः कमललोचनः किरीटकुण्डलयुतः गरुडारूढःसन् प्रादुरभूत् ॥५४॥ तदैवासुरजाः मायाः विनेशुः । एवं हरेः स्मृतिः सर्वदुःखविमोक्षिणी भवति ॥ ५५ ॥

---

१ महिम्ना ।

तदा कालनेमिर्युद्धे गरुडारूढं हरिं दृष्ट्वा शूलं चिक्षेप । तद्गरुडमूर्ध्नि पेते । भगवान् तच्छूलं गृहीत्वा तेनैव सवाहनं शत्रुं जघान ॥ ५६ ॥ ततो माली सुमाली च चक्रेण छिन्नमस्तकौ युधि पेततुः । अथ माल्यवान् गदया गरुडं निहत्य हरिं हन्तुं गदां जगृहे तावद् भगवान् तस्य शिरश्चक्रेण चिच्छेद ॥५७॥ इति श्रीभाग० चू० अष्टम० दशमोऽध्यायः ॥१०॥ एकादशे तु देवेषु दैत्यघातिषु नारदः । देवानवारयच्छुक्रो मृतान् दैत्यानजीवयत् ॥१॥ श्रीशुक उवाच ॥ अथ देवाः ईश्वरकृपया दैत्यान् निजघ्नुः ॥१॥ यदेन्द्रो बलिं हन्तुं वज्रं जगृहे तदा प्रजाः हाहेति चुक्रुशुः

दृष्ट्वा मृधे गरुडवाहमिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः ॥ तल्लीलया गरुडमूर्ध्नि पतद् गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥५६॥ माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तम् ॥ आहत्य तिग्मगदयाऽहनदण्डजेन्द्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः ॥५७॥ इति श्रीभागवते महापुराणे अष्टमस्कन्धे अमृतदाने देवासुरयुद्धं नामदशमोऽध्यायः ॥१०॥ श्रीशुक उवाच ॥ अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसःपरमानुकम्पया ॥ जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान् रणे यैरभिसंहिताः पुरा ॥१॥ वैरोचनाय संरब्धो भगवान् पाकशासनः ॥ उदयच्छद्यदा वज्रं प्रजा हाहेति चुक्रुशुः ॥ २ ॥ वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरः स्थितम् ॥ मनस्विनं सुसंपन्नं विचरन्तं महामृधे ॥३॥ नटवन्मूढमायाभिर्मायेशान् नो जिगीषसि ॥ जित्वा बालान् निबद्धाक्षान् नटो हरति तद्धनम् ॥४॥ आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवम् ॥ तान् दस्यून् विधुनोम्यज्ञान् पूर्वस्माच्च पदादधः ॥ ५ ॥ सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा ॥ शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिः सह ॥६॥ बलिरुवाच॥ संग्रामे वर्तमानानां कालचोदितकर्मणाम् ॥ कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥

॥ २ ॥ युधि पुरः स्थितं बलिं तिरस्कृत्येन्द्रः आह ॥ ३ ॥ हे मूढ ! मायाभिर्मायेशान् नो जेतुमिच्छसि यथा नटो बालान् जित्वा धनं हरति तद्वत् ॥४॥ मायाभिर्यै स्वर्गमारोढुमिच्छन्ति तान् दस्यून पूर्वपदादप्यधः पातयामि ॥ ५ ॥ हे मन्दात्मन् ! अहं वज्रेणाद्य ते शिरो हरिष्ये । ज्ञातिभिः सहप्रयत्नं कुरु ॥ ६ ॥ बलिरुवाच । हे इन्द्र ! युद्धे वर्तमानानां कीर्तिर्जयः पराजयो मृत्युर्वा क्रमात् स्यात् ॥ ७ ॥

एतत् सर्वं ज्ञानिनः कालाधीनं पश्यन्ति । एवं विवेके यूयमज्ञाः स्थ ॥ ८ ॥ अतः कीर्तिर्जयाजयं स्वस्वाधीनं मन्यमानानां भवतां वचो वयं न गृह्णीमः ॥९ श्रीशुक उवाच ॥ एवं वीरमर्दनो बलिरिन्द्रं विनिन्द्य बाणैरहन् ॥ १० ॥ एवं वैरिणा तिरस्कृतस्तद्वचो न सेहे ॥ ११ ॥ तत इन्द्रस्तस्मै वज्रं प्राहरत् । तदा बलिः सहवाहनो भूमौ पपात ॥ १२ ॥ बलिं पतितं दृष्ट्वा तत्सखो जम्भो हतस्यापि सख्युर्मित्रत्वं दर्शयन्

तदिदं कालरशनं जनाः पश्यन्ति सूरयः ॥ न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः॥८॥न वयं मन्यमानानामात्मानं तत्र साधनम् ॥ गिरो वः साधुशोच्यानां गृह्णीमो मर्मताडनाः ॥९॥ श्रीशुक उवाच ॥ इत्याक्षिप्य विभुं वीरो नाराचैर्वीरमर्दनः ॥ आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः ॥१०॥ एवं निराकृतो देवो वैरिणा तथ्यवादिना ॥ नामृष्यत् तदधिक्षेपं तोत्राहत इव द्विपः ॥११॥ प्राहरत् कुलिशं तस्मा अमोघं परमर्दनः ॥ सयानो न्यपतद् भूमौ छिन्नपक्ष इवाचलः ॥१२॥ सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत् ॥ अभ्ययात् सौहृदं सख्युर्हतस्यापि समाचरन् ॥१३॥ स सिंहवाह आसाद्य गदामुद्यम्य रंहसा ॥ जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥ गदाप्रहारव्यथितो भृशं विह्वलितो गजः ॥ जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥ ततो रथो मातलिना हरिभिर्दशशतैर्वृतः ॥ आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः ॥ १६ ॥ तस्य तत् पूजयन् कर्म यन्तुर्दानवसत्तमः ॥ शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे ॥ १७ ॥ सेहे रुजं सुदुर्मर्षां सत्त्वमालम्ब्य मातलिः ॥ इन्द्रो जम्भस्य संक्रुद्धो वज्रेणापाहरच्छिरः ॥ १८ ॥

॥१३॥ सिंहमारुह्य गदामुद्यम्य शक्रं जत्रौ गजं च ताडयामास ॥१४॥ तदा गजो जानुभ्यां भुवं स्पृष्ट्वा दुखं प्राप ॥ १५ ॥ ततो मातलिना सहस्राश्वैर्युतो रथः आनीतः । इन्द्रो गजं हित्वा रथमारुरोह ॥१६॥ तदा यन्तुः कर्म पूजयन् जम्भः शूलेन मातलिं जघान ॥१७॥ मातलिः धैर्यं धृत्वा रुजं सेहे । ततः इन्द्रः क्रुद्धः सन् वज्रेण जम्भशिरो जहार ॥ १८ ॥

१ कीर्तिजयाजयादी २ तोत्रमङ्कुशः ।

नारदात् जम्भं हतं श्रुत्वा नमुचिः १, बलः २, पाकः ३, इति त्रयस्त्वरान्विताः ययुः ॥१९॥ ते त्रयो वचोभिरिन्द्रमर्दयन्तः शरैरवाकिरन् मेघाः धाराभिः पर्वतं यथा ॥२०॥ तत्र बलः सहस्रबाणैरिन्द्राश्वानर्दयामास ॥२१॥ पाको द्विशत्या सरथं मातलिं जघान ॥२२॥ नमुचिः पञ्चदशबाणैरिन्द्रं विद्ध्वा मेघ इव व्यनदत् ॥ २३ ॥ ततो दैत्याः सरथमिन्द्रं सर्वतः शरैश्छादयामासुः ॥ २४ ॥ तदा देवाः इन्द्रमलक्षयन्तो

जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः ॥ नमुचिश्च बलः पाकस्तत्र पेतुस्त्वरा न्विताः ॥ १९ ॥ वचोभिः परुषैरिन्द्रमर्दयन्तोऽस्य मर्मसु ॥ शरैरवाकिरन्मेघा धाराभिरिव पर्वतम् ॥२०॥ हरीन्दशशतान्याजौ हर्यश्वस्य बलः शरैः ॥ तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥ शताभ्यां मातलिं पाको रथं सावयवं पृथक् ॥ सकृत्संधानमोक्षेण तदद्भुतमभूद्रणे ॥ २२ ॥ नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः ॥ आहत्य व्यनदत्संख्ये सतोय इव तोयदः ॥ २३ ॥ सर्वतः शरकूटेन शक्रं सरथसारथिम् ॥ छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः ॥ २४ ॥ अलक्षयन्तस्तमतीव विह्वला विचुक्रुशुर्देवगणाः सहानुगाः ॥ अनायकाः शत्रुबलेन निर्जिता वणिक्पथा भिन्ननवो[1] यथार्णवे ॥२५॥ ततस्तुराषाडिषुबद्धपञ्जराद्विनिर्गतः साश्वरथध्वजाग्रणीः ॥ बभौ दिशः खं पृथिवीं च रोचयन्स्वतेजसा सूर्य इव क्षपात्यये ॥ २६ ॥ निरीक्ष्य पृतनां देवः[2] परैरभ्यर्दितां रणे ॥ उदयच्छद्रिपुं हन्तुं वज्रं वज्रधरो रुषा ॥२७॥ स तेनैवाष्टधारेण शिरसी बलपाकयोः ॥ ज्ञातीनां पश्यतां राजञ्जहार जनयन्भयम् ॥ २८ ॥ नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः ॥ जिघांसुरिन्द्रं नृपते चकार परमोद्यमम् ॥ २९ ॥

विह्वलाः शत्रुबलेन निर्जिता विचुक्रुशुः ॥ २५ ॥ ततः इन्द्रः इषुबद्धपञ्जराद् निर्गतः स्वतेजसा दिशः प्रकाशयन् सूर्य इव बभौ ॥ २६ ॥ ततो दैत्यैरर्दितां सेनां निरीक्ष्य रिपुं हन्तुं वज्रं गृहीत्वा ॥२७॥ भयं जनयन् बलपाकयोः शिरसी इन्द्रो जहार ॥ २८ ॥ नमुचिस्तयोर्वधं दृष्ट्वा शोकक्रोधयुक्तः इन्द्रं हन्तुमुद्यमं चकार ॥ २९ ॥

---

[1] भिन्ननावः । [2] इन्द्रः ।

स्वर्णघण्टाभिर्युक्तं शूलं प्रगृह्य हतोऽसीति वदन् प्राहिणोत् ॥३०॥ तदाऽऽकाशात् पतत् शूलं शरैः सहस्रधा चिच्छेद । अथेन्द्रो रुषा वज्रेण तं कन्धरेऽहन् ॥३१॥ तदा वज्रस्तस्य कवचमपि न बिभेद । तन्महदद्भुतम् ॥ ३२ ॥ तदा शत्रोर्भीतः इन्द्रः इदमाह । अहो लोकविमोहनमिदं किम् ॥ ३३ ॥ येन वज्रेण पूर्वं पर्वतपक्षाश्छिन्नाः ॥ ३४ ॥ वीर्याधिको वृत्रो मया येन नाशितः ॥ ३५ ॥ सोऽयं मे वज्रोऽल्पकेऽसुरे व्यर्थो

अश्मसारमयं शूलं घण्टावद्धेमभूषणम् ॥ प्रगृह्याभ्यद्रवत् क्रुद्धो हतोऽसीति वितर्जयन् ॥ प्राहिणोद्देवराजाय निनद-न्मृगराडिव ॥३०॥ तदाऽऽपतद्गगनतले महाजवं विचिच्छिदे हरिरिषुभिः सहस्रधा ॥ तमाहनन्नृप कुलिशेन कन्धरे रुषाऽन्वितस्त्रिदशपतिः शिरो हरन् ॥३१॥ न तस्य हि त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः ॥ तदद्भुतं परमतिवीर्यवृत्रभित् तिरस्कृतो नमुचिशिरोधरत्वचा ॥३२॥ तस्मादिन्द्रोऽबिभेच्छत्रोर्वज्रः प्रतिहतो यतः ॥ किमिदं दैवयोगेन भूतं लोकविमोहनम् ॥ ३३ ॥ येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये ॥ कृतो निविशतां भारैः पतत्रैः पततां भुवि ॥ ३४ ॥ तपःसारमयं त्वाष्ट्रं वृत्रो येन विपाटितः ॥ अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः ॥ ३५ ॥ सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके ॥ नाहं तदाददे दण्डं ब्रह्मतेजोऽप्यकारणम् ॥३६॥ इति शक्रं विषीदन्त-माह वागशरीरिणी ॥ नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥३७॥ मयाऽस्मै यद्वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः ॥ अतो-ऽन्यश्चिन्तनीयस्ते उपायो मघवन् रिपोः ॥३८॥ तां दैवीं गिरमाकर्ण्य मघवान्सुसमाहितः ॥ ध्यायन्फेनमथापश्यदुपाय-मुभयात्मकम् ॥३९॥ न शुष्केण न चार्द्रेण जहार नमुचेः शिरः ॥ तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन्विभुम् ॥ ४० ॥

जातः । तस्मात् वज्रं न धारयिष्ये । अहो दधीचेः सामर्थ्यमपि निष्फलं जातम् ॥३६॥ एवं खेदं कुर्वन्तमाकाशवागाह हे इंद्र ! अयं दैत्यः शुष्कैरार्द्रैश्च वधं नार्हति ॥३७॥ एवं मयाऽस्मै वरो दत्तः । अतो हे इन्द्र ! अन्यः उपायः कर्तव्यः ॥३८॥ इन्द्रस्तां गिरं श्रुत्वोभयात्मकमुपायमपां फेनं ज्ञात्वा ॥३९॥ तेन नमुचेः शिरो जहार । तदा मुनयः स्तुवंतः पुष्पैरवाकिरन् ॥ ४० ॥

१ पक्षैः । २ सारमयं वीर्याधिकं त्वाष्ट्रं तप एव वृत्रः । यद्वाऽयं वज्रस्त्वाष्ट्रतपःसारम् । ३ वज्रतुल्यम् ।

विश्वावसुपरावसू गन्धर्वौं जगतुः। नर्तक्यो ननृतुः। देवदुन्दुभयो नेदुः॥४१॥ततो वाय्वग्निवरुणादयोऽस्त्रौघैः प्रतिद्वंद्वान् दैत्यान् नाशयामासुः ॥ ४२ ॥ तदैव ब्रह्मणा प्रेषितो नारदः दैत्यानां क्षयं दृष्ट्वा देवान् वारयामास ॥४३॥ नारद उवाच ॥ हे देवाः ! नारायणभुजाश्रयैर्भवद्भिरमृतं प्राप्तम् । लक्ष्म्या च वृद्धिं गताः । अतो द्वेषाद्विरमत॥४४॥ श्रीशुक उवाच ॥ एवं मुनेर्वचो मानयन्तो देवाः अनुचरैर्जयं गीयमानः स्वर्गं ययुः ॥४५॥ ततो युद्धे येऽवशिष्टाः दैत्यास्ते नारदानुमतेन विपन्नं बलिं गृहीत्वाऽस्तं गिरिमुपागमन् ॥४६॥ तत्र शुक्रोऽविनष्टावयवान् तान् संजी-

गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू ॥ देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४१ ॥ अन्येऽप्येवं प्रतिद्वन्द्वान् वाय्वग्निवरुणादयः ॥ सूदयामासुरस्त्रौघैर्मृगान् केसरिणो यथा ॥ ४२ ॥ ब्रह्मणा प्रेषितो देवान् देवर्षिर्नारदो नृप ॥ वारयामास विबुधान् दृष्ट्वा दानवसंक्षयम् ॥ ४३ ॥ नारद उवाच ॥ भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः ॥ श्रिया समेधिताः सर्वे उपारमत विग्रहात् ॥ ४४ ॥ श्रीशुक उवाच ॥ संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः ॥ गीयमाना अनुचरैर्ययुः सर्वे त्रिविष्टपम् ॥४५॥ येऽवशिष्टा रणे तस्मिन् नारदानुमतेन ते ॥ बलिं विपन्नमादाय अस्तं गिरिमुपागमन् ॥४६॥ तत्राविनष्टावयवान् विद्यमानशिरोधरान् ॥ उशना जीवयामास संजीविन्या स्वविद्यया ॥ ४७ ॥ बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः ॥ पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४८ ॥ इति श्रीभागवते महापुराणे अष्टमस्कन्धे देवासुरसंग्रामविश्रान्तिर्नामैकादशोऽध्यायः ॥ ११ ॥ श्रीबादरायणिरुवाच ॥ वृषध्वजो[1] निशम्येदं योषिद्रूपेण दानवान् ॥ मोहयित्वाऽसुरगणान् हरिः सोममपाययत् ॥ १ ॥

विन्या विद्यया जीवयामास ॥४७॥ एवं शुक्रेण स्पृष्टो बलिः पुनः प्राप्तेन्द्रियस्मृतिः पराजितो नाखिद्यत् ॥४८॥ इति श्रीभा० चू० अष्टम० एकादशोऽध्यायः ॥११॥ द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम् । भवं संमोहयामास हरिः पुनरसान्त्वयत् ॥१॥ अमुह्यन्नसुरा विष्णुमायया न तदद्भुतम् । इति वक्तुं महादेवमोहोऽयमुपवर्ण्यते ॥२॥ श्रीशुक उवाच ॥ स्त्रीरूपेण दैत्यान् संमोह्य देवानमृतमपाययत् ॥ १ ॥



१ वृषध्वज इत्युत्तरेणान्वयः ।

इदं श्रुत्वा शिवो देव्या सह वृषमारुह्य यत्र हरिस्तत्र ययौ ॥२॥ तदा भगवता सत्कृतः शिवः उपविष्टः सन् हरिं प्रति जगाद ॥ ३ ॥ शिव उवाच ॥ हे देवदेव ! हे जगदीश ! सर्वभावानां त्वं हेतुः ॥ ४ ॥ अस्य जगतः आद्यन्तमध्याः यतो भवन्ति तच्चिद्रूपं ब्रह्मैव भवान् ॥५॥ मुनयः सङ्गं त्यक्त्वा तवैव चरणाम्बुजमुपासते ॥६॥ हे हरे ! त्वं सुखरूपं नित्यमानन्दमात्रं विशोकं ब्रह्म । किंच ब्रह्मव्यतिरिक्ताभावादपि त्वं

वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः ॥ सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः ॥ २ ॥ सभाजितो भगवता सादरं सोमया भवः ॥ सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन् हरिम् ॥ ३ ॥ श्रीमहादेव उवाच ॥ देवदेव जगद्व्यापिञ्जगदीश-जगन्मय ॥ सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः ॥४॥ आद्यन्तावस्य यन्मध्यमिदमन्यदहं बहिः ॥ यतोऽव्यय-स्य नैतानि तत्सत्यं ब्रह्म चिद्भवान् ॥५॥ तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः ॥ विसृज्योभयतः सङ्गं मुनयः समुपासते ॥ ६ ॥ त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्दमात्रमविकारमनन्यमन्यत् ॥ विश्वस्य हेतुरुदयस्थितिसंय-मानामात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ ७ ॥ एकस्त्वमेव सदसद्द्वयमद्वयं च स्वर्णं कृताकृतमिवेह न वस्तुभेदः ॥ अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गुणैर्व्यतिकरो निरुपाधिकस्य ॥ ८ ॥ त्वां ब्रह्म केचिदवयन्त्युत धर्ममेक एके परं सदसतोः पुरुषं परेशम् ॥ अन्येऽवयन्ति नवशक्तियुतं परं त्वां केचिन्महापुरुषमव्ययमात्मतन्त्रम् ॥९॥ नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्त्वसर्गाः ॥ यन्मायया मुषितचेतस ईश दैत्य-मर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥ १० ॥

निरपेक्षः । अतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं न स्वार्थम् ॥७॥ हे भगवन् ! कार्यकारणरूपं द्वयमद्वयं च त्वमेव ॥ ८ ॥ वेदान्तिनस्त्वां ब्रह्म मन्यंते मीमांसकास्त्वां धर्मं मन्यन्ते । सांख्याः प्रकृतिपुरुषयोः परं पुमांसं मन्यन्ते । पातञ्जला महापुरुषं मन्यन्ते ॥९॥ हे ईश ! त्वद्रचितं विश्वं ब्रह्म मरीच्यस्मदादयो न जानन्ति । अन्ये दैत्यमर्त्यादयः किमु ॥ १० ॥

---

१ इदंकारास्पदं दृश्यमहंकारास्पदं द्रष्टृ बहिर्भोग्यमन्यत् भोक्तृ च । २ इहामुत्र च । ३ नित्यम् । ४ न विद्यतेऽन्यद्यस्मात्तदनन्यम् । ५ सर्वतो व्यतिरिक्तम् । ६ कृतं कुण्डलादि अकृतं केवलम् । ७ भेदाः—विमला १, उत्कर्षणी, २, ज्ञाना ३, क्रिया ४, योगा ५, प्रह्वी ६, सत्या ७, ईशाना ८, अनुग्रहा ९ चेति नव शक्तयः ।

हे भगवन्! जगतो बन्धमोक्षौ स्थितिजन्मनाशाश्च सन्ति। तत् सर्वं त्वं जानासि॥ ११॥ एवं स्तुत्वा विज्ञापयति। हे भगवन्! गुणै रममाणस्य तव मया बहवोऽवतारा दृष्टाः। सोहं तव योषिद्रूपं द्रष्टुं वाञ्छामि ॥१२॥ येन दैत्याः मोहिताः देवाः अमृतं पायिताः तद्रूपं दर्शय। अत्यन्तं ममाश्चर्यम् ॥ १३ ॥ श्रीशुक उवाच ॥ एवं प्रार्थितो विष्णुः प्रहस्य शिवं बभाषे ॥ १४ ॥ श्रीभगवानुवाच। हे शिव! दैत्यानां कौतुकाया-

स त्वं समीहितमदः स्थितिजन्मनाशं भूतेहितं च जगतो भवबन्धमोक्षौ ॥ वायुर्यथा विशति खं च चराचराख्यं सर्वं तदात्मकतयाऽवगमोऽवरुन्त्से ॥११॥ अवतारा मया दृष्टा रममाणस्य ते गुणैः ॥ सोऽहं तद् द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतम् ॥ १२ ॥ येन संमोहिता दैत्याः पायिताश्चामृतं सुराः ॥ तद्दिदृक्षव आयाताः परं कौतूहलं हि नः ॥ १३ ॥ श्रीशुक उवाच ॥ एवमभ्यर्थितो विष्णुर्भगवाञ्छूलपाणिना ॥ प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत ॥ १४ ॥ श्रीभगवानुवाच ॥ कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः ॥ पश्यता सुरकार्याणि गते पीयूषभाजने ॥ १५ ॥ तत्तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम ॥ कामिनां बहुमन्तव्यं संकल्पप्रभवोदयम् ॥ १६ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत ॥ सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया ॥ १७ ॥ ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ॥ विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम् ॥ १८ ॥ आवर्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः पदे पदे ॥ प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः ॥ १९ ॥

मृतपात्रे गते सति देवकार्यार्थं स्त्रीवेषः कृतः ॥ १५ ॥ तद्रूपं ते दर्शयिष्यामि यतः कामिनां कामोदयो भवेत् ॥१६॥ श्रीशुक उवाच ॥ इत्युक्त्वा तत्रैवान्तरधीयत्। ततः शिवः सर्वतश्चक्षुश्चारयन् देव्या सहास्ते ॥ १७ ॥ अथ विचित्रपुष्पारुणपल्लवद्रुमे उपवने कंदुकलीलया क्रीडन्तीम् ॥१८॥ कंदुकलीलावशेन नमनोन्नमनाभ्यां कम्पितस्तनयोः प्रकृष्टहाराणां च भारैः पदे पदे मध्यतः प्रभज्यमानामिव चलन्तीम्॥१९॥



१ समीहितं स्वकृतम् ।२ संकल्पप्रभवः कामस्तस्योदयो यस्मात्तत्।

दिक्षु भ्रमतः कन्दुकस्य चाञ्चल्यैश्चललोचनां कर्णकुण्डलशोभितां नीलकेशैर्मण्डिताननाम् ॥२०॥ श्लथद्दुकूलां च्युतकबरीं वामहस्तेन बध्नतीमन्यकरेण कन्दुकं निघ्नतीं जगन्मोहयन्तीम् ॥ २१ ॥ तां वीक्ष्य कटाक्षेण वञ्चितः शिवस्तत्प्रेक्षणेन विह्वलः सन् समीपस्थामुमां स्वगणांश्च न वेद ॥२२॥ तस्याः करात् कन्दुको यदा दूरं गतः तदा तदानुव्रजन्त्यास्तस्याः काञ्चीसहितं सूक्ष्मवस्त्रं मारुतो जहार ॥२३॥ एवं भवो मनोरमां

दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ॥ स्वकर्णविभ्राजितकुण्डलोल्लसत्कपोलनीलालकमण्डिताननाम् ॥२०॥ श्लथद्दुकूलां कबरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना ॥ विनिघ्नतीमन्यकरेण कन्दुकं विमोहयन्तीं जगदात्ममायया ॥२१॥ तां वीक्ष्य देव इति कन्दुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः ॥ स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा नात्मानमन्तिक उमां स्वगणांश्च वेद ॥२२॥ तस्याः कराग्रात् स तु कन्दुको यदा गतो विदूरं तमनुव्रजत्स्त्रियाः ॥ वासः ससूत्रं लघुमारुतोऽहरद्भवस्य देवस्य किलानुपश्यतः ॥ २३ ॥ एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम् ॥ दृष्ट्वा तस्यां मनश्चक्रे विषज्जन्त्यां भवः किल ॥२४॥ तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः ॥ भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ ॥ २५ ॥ सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम् ॥ निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत ॥२६॥ तामन्वगच्छद्भगवान्भवः प्रमुषितेन्द्रियः ॥ कामस्य च वशं नीतः करेणुमिव यूथपः ॥ २७ ॥ सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम् ॥ केशबन्ध उपानीय बाहुभ्यां परिषस्वजे ॥ २८ ॥ सोपगूढा भगवता करिणा करिणी यथा ॥ इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा ॥ २९ ॥

तां दृष्ट्वा तस्यां रन्तुं मनश्चक्रे ॥ २४ ॥ ततस्तत्कृतस्मरविह्वलो देव्याः पश्यन्त्याः गतह्रीस्तत्समीपं ययौ ॥ २५ ॥ तदा सा तं विलोक्य विवस्त्रा लज्जया वृक्षेषु निलीयमाना नान्वतिष्ठत ॥ २६ ॥ कामवशं प्राप्तः शिवस्तामन्वगच्छत् ॥ २७ ॥ वेगेन तत्समीपं गत्वा तां केशबन्धे गृहीत्वाऽऽलिङ्गनं चक्रे ॥ २८ ॥ आलिङ्गिता इतस्ततः प्रसर्पन्ती विकीर्णकेशा ॥ २९ ॥

---

१ स्त्रियाः प्रेक्षणं तया च प्रतिसमीक्षणं ताभ्याम् ।

पृथुश्रोणी तद्भुजादात्मानं मोचयित्वा प्राद्रवत् ॥ ३० ॥ वैरिणेव कामेन जितो रुद्रो विष्णोः पदवीं प्रत्यपद्यत ॥ ३१ ॥ तां धावतः शिवस्य
रेतः पपात ॥३२॥ तद्रेतो भूमौ यत्र यत्र पपात तानि रूप्यस्य हेम्नश्च क्षेत्राणि जातानि ॥३३॥ एवं तां धावन् शिवः सरित्सरस्सु शैलेषु ऋषीणा-
माश्रमेषु च सन्निहितो बभूव ॥३४॥ रेतसि पतिते सति शिवः आत्मानं मायया जडीकृतं ददर्श । ततो मोहाद् न्यवर्तत ॥३५॥ एवं ज्ञातमा-

आत्मानं मोचयित्वाऽङ्ग सुरर्षभभुजान्तरात् ॥ प्राद्रवत्सा पृथुश्रोणी माया देवविनिर्मिता ॥३०॥ तस्यासौ पदवीं रुद्रो
विष्णोरद्भुतकर्मणः ॥ प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः ॥३१॥ तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः ॥ शुष्मिणो
यूथपस्येव वासितामनुधावतः ॥ ३२ ॥ यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः ॥ तानि रूप्यस्य हेम्नश्च क्षेत्राण्या-
सन्महीपते ॥ ३३ ॥ सरित्सरस्सु शैलेषु वनेषूपवनेषु च ॥ यत्र क चासन्नृषयस्तत्र सन्निहितो हरः ॥३४॥ स्कन्ने रेतसि
सोऽपश्यदात्मानं देवमायया ॥ जडीकृतं नृपश्रेष्ठ संन्यवर्तत कश्मलात् ॥३५॥ अथावगतमाहात्म्य आत्मनो जगदा-
त्मनः ॥ अपरिज्ञेयवीर्यस्य न मेने तदुहाद्भुतम् ॥३६॥ तमविक्लवमव्रीडमालक्ष्य मधुसूदनः ॥ उवाच परमप्रीतो बिभ्रत
स्वां पौरुषीं तनुम् ॥३७॥ श्रीभगवानुवाच ॥ दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः ॥ यन्मे स्त्रीरूपया स्वैरं
मोहितोऽप्यङ्ग मायया ॥ ३८ ॥ को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ॥ ताँस्तान्विसृजतीं भावान्दुस्तराम-
कृतात्मभिः ॥ ३९ ॥ सेयं गुणमयी माया न त्वामभिभविष्यति ॥ मया समेता कालेन कालरूपेण भागशः ॥४०॥
श्रीशुक उवाच ॥ एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः ॥ आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ ॥ ४१ ॥

हात्म्यः शिवो विष्णोर्मायाजडीकरणमद्भुतं न मेने ॥३६॥ ततो भगवान् शिवं दृष्ट्वा स्वतनुं बिभ्रत् प्रीतः सन् जगाद ॥३७॥ श्रीभगवानुवाच ॥
हे देव ! भाग्यमेतन्मया स्वमायया मोहितोऽपि त्वं स्वां प्रकृतिमास्थितः ॥३८॥ मम मायां त्वां विना कोनु पुमान् व्यतितरेत् ॥ ३९ ॥
सेयं गुणमयी माया त्वां न पराजेष्यते ॥४०॥ श्रीशुक उवाच ॥ एवं भगवता सत्कृतः शिवस्तमामन्त्र्य परिक्रम्य कैलासं ययौ ॥ ४१ ॥

ततः शिवो भवानीं प्रति ऋषीणां मध्ये इदं सर्वमाह ॥४२॥ हे देवि ! त्वमपि भगवतो मायां दृष्टवत्यसि। अहं श्रेष्ठोऽपि यया विमुह्ये। अन्ये पराधीनाः किमुत ॥ ४३ ॥ किंच त्वं सहस्रवर्षानुष्ठानान्ते मां प्राप्य यमपृच्छः स एष पुरुषः यत्र कालो न विशते ॥ ४४ ॥ श्रीशुक उवाच ॥ हे नृप ! येन समुद्रमथने मन्दराचलः पृष्ठे धृतः तस्य विक्रमस्ते कथितः ॥ ४५ ॥ इदमुत्तमश्लोकगुणानुवर्णनं शृण्वतः कीर्तयतः पुंसः उद्यमो न नश्यति॥४६॥ एवं कपटस्त्रीवेषो हरिर्दैत्यान् मोहयन् सन् शरणागतान् देवानमृतमपाययत् तं कामपूरं नतोऽस्मि॥४७॥ इति श्रीभागवते चूर्णि-

आत्मांशभूतां तां मायां भवानीं भगवान्भवः ॥ शंसतामृषिमुख्यानां प्रीत्याऽऽचष्टाथ भारत ॥४२॥ अयि व्यपश्यस्त्व-मजस्य मायां परस्य पुंसः परदेवतायाः॥ अहं कलानामृषभो विमुह्ये ययाऽवशोऽन्ये किमुतास्वतन्त्राः ॥४३॥ यं माम-पृच्छस्त्वमुपेत्य योगात्समासहस्रान्त उपारतं वै ॥ स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥ ४४ ॥ श्रीशुक उवाच ॥ इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः ॥ सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः ॥४५॥ एत-न्मुहुः कीर्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित् ॥ यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमा-पहम् ॥ ४६ ॥ असदविषयमङ्घ्रिं भावगम्यं प्रपन्नानमृतममरवर्यानाशयत्सिन्धुमथ्यम् ॥ कपटयुवतिवेषो मोहयन् यः सुरारींस्तमहमुपसृतानां कामपूरं नतोऽस्मि॥ ४७ ॥ इति श्रीभागवते महापुराणे अष्टमस्कन्धे शंकराय मोहिनी-रूपप्रदर्शनं नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः ॥ सप्तमो वर्त-मानो यस्तदपत्यानि मे शृणु ॥ १ ॥ इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च ॥ नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते ॥ २ ॥ करूषश्च पृषध्रश्च दशमो वसुमान्स्मृतः ॥ मनोर्वैवस्वतस्यैते दश पुत्राः परंतप ॥ ३ ॥

कायाम् अष्टमस्कन्धे द्वादशोऽध्यायः ॥१२॥ त्रयोदशे तु वर्ण्यन्ते सप्तमादीन्यनुक्रमात् ॥ मन्वन्तराणि सर्वाणि षड्विधानि पृथक्पृथक्॥१॥ श्रीशुक उवाच ॥ अथ विवस्वतः पुत्रः श्राद्धदेवो वर्तमानः सप्तमो मनुः अथ तत्पुत्रान् शृणु ॥१॥ इक्ष्वाकुः१,नभगः २, धृष्टः३,शर्यातिः४, नरिष्यन्तः ५, नाभागः ६, दिष्टः ७ ॥२॥ करूषः ८, पृषध्रः ९, वसुमान् १० एते दश तत्पुत्राः अभवन् ॥ ३ ॥

१ 'परिश्रमापहम्' इ० पा०।

आदित्याः वसवो रुद्राः विश्वेदेवा मरुद्गणाः अश्विनौ ऋभवः एते देवाः। एषां पुरन्दरो नामेन्द्रः ॥४॥ कश्यपः १, अत्रिः २, वसिष्ठः ३, विश्वामित्रः ४, गौतमः ५, जमदग्निः ६, भरद्वाजः ७ एते सप्त ऋषयः ॥५॥ कश्यपाददित्यां वामनावतारः ॥ ६ ॥ एवं सप्त मन्वन्तराणि संक्षेपेणोक्तानि भविष्याणि वक्ष्ये ॥७॥ विवस्वतो द्वे भार्ये-छाया संज्ञा चेति ॥८॥ तृतीया वडवा। यमः १, यमी २, श्राद्धदेवः ३, एते त्रयः संज्ञासुताः ॥९॥

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ अश्विनावृभवो राजन्निन्द्रस्तेषां पुरन्दरः ॥४॥ कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ॥ ५ ॥ अत्रापि भगवज्जन्म कश्यपाददितेरभूत् ॥ आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ॥ ६ ॥ संक्षेपतो मयोक्तानि सप्त मन्वन्तराणि ते ॥ भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्याऽन्वितानि च ॥७॥ विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे ॥ संज्ञा छाया च राजेन्द्र ये प्रागभिहिते तव ॥८॥ तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः ॥ यमो यमी श्राद्धदेवश्छायायाश्च सुताञ्छृणु ॥९॥ सावर्णिस्तपती कन्या भार्या संवरणस्य या ॥ शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ ॥१०॥ अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः ॥ निर्मोकविरजस्काद्याः सावर्णितनया नृप ॥११॥ तत्र देवाः सुतपसो विरजा अमृतप्रभाः ॥ तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति ॥ १२ ॥ दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ॥ राद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥१३॥ योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः ॥ निवेशितोऽधिके स्वर्गादधुनाऽऽस्ते स्वराडिव ॥ १४ ॥

सावर्णिः १, तपती २, शनैश्चरः ३ एते त्रयश्छायासुताः। अश्विनौ वडवासुतौ ॥१०॥ अष्टमः सावर्णिर्नाम मनुर्भविष्यति । निर्मोकविरजस्काद्याः दश तत्पुत्राः ॥११॥ सुतपसो विरजाः अमृतप्रभाः एते देवाः। तेषां बलिरिन्द्रो भविष्यति ॥१२॥ यः सप्तमे मन्वन्तरे पदत्रयं याचमानाय विष्णवे भूमिं दत्त्वाऽष्टमे मन्वन्तरे विष्णोः प्रसादेन प्राप्तमिन्द्रपदं हित्वा ततो मोक्षं प्राप्स्यति ॥१३॥ स सम्प्रति प्रीतेन भगवता सुतले आस्ते ॥१४॥



१ लब्धम्।

गालवो दीप्तिमान् परशुरामोऽश्वत्थामा कृपाचार्यः ऋष्यशृङ्गो व्यासः ॥१५॥ एते सप्त ऋषयस्तत्र भविष्यन्ति। इदानीं स्वे स्वे मण्डले आसते ॥ १६ ॥ सरस्वत्यां सार्वभौम इति हरेरवतारः । स इन्द्रात् स्वर्गं हृत्वा बलये दास्यति ॥१७॥ अथ दक्षसावर्णिर्नवमो मनुः भूतकेतुदीप्तिकेत्वादयो दश तत्पुत्राः ॥ १८ ॥ पारामरीचिगर्भाद्या देवाः । अद्भुतो नामेन्द्रः । द्युतिमत्प्रमुखाः सप्त ऋषयः॥१९॥ आयुष्मतोऽम्बुधारायां पत्न्यामृषभावतारः येन रक्षितां त्रिलोकीमद्भुतनामेन्द्रो भोक्ष्यति ॥२०॥ अथ ब्रह्मसावर्णिर्दशमो मनुः । भूरिषेणाद्या दश तत्पुत्राः ॥ २१ ॥

गालवो दीप्तिमान्रामो द्रोणपुत्रः कृपस्तथा ॥ ऋष्यशृङ्गः पिताऽस्माकं भगवान्बादरायणः ॥ १५ ॥ इमे सप्तर्षयस्तत्र भविष्यन्ति स्म योगतः ॥ इदानीमासते राजन्स्वे स्व आश्रममण्डले ॥१६॥ देवगुह्यात्सरस्वत्यां सार्वभौम इति प्रभुः ॥ स्थानं पुरन्दराद् धृत्वा बलये दास्यतीश्वरः ॥ १७ ॥ नवमो दक्षसावर्णिर्मनुर्वरुणसंभवः ॥ भूतकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुता नृप ॥ १८ ॥ पारामरीचिगर्भाद्या देवा इन्द्रोऽद्भुतः स्मृतः ॥ द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः ॥ १९ ॥ आयुष्मतोऽम्बुधारायामृषभो भगवत्कला ॥ भविता येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः ॥२०॥ दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् ॥ तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः ॥२१॥ * हविष्मान्सुकृतः सत्यो जयो मूर्तिस्तदा द्विजाः ॥ सुवासनविरुद्धाद्या देवाः शंभुः सुरेश्वरः ॥ २२ ॥ विष्वक्सेनो विषूच्यां तु शंभोः सख्यं करिष्यति ॥ जातः स्वांशेन भगवान् गृहे विश्वसृजो विभुः ॥ २३ ॥ मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् ॥ अनागतास्तत्सुताश्च सत्यधर्मादयो दश ॥२४॥ विहंगमाःकामगमा निर्वाणरुचयः सुराः ॥ इन्द्रश्च वैधृतिस्तेषामृषयश्चारुणादयः॥२५॥

हविष्मान् सुकृतः सत्यो जयो मूर्तिः एते ऋषयः। सुवासनविरुद्धाद्या देवाः । शंभुर्नामेन्द्रः ॥ २२ ॥ विश्वसृजः विषूच्यां भार्यायां विष्वक्सेनावतारः शम्भोः सख्यं करिष्यति ॥२३॥ एकादशो मनुर्धर्मसावर्णिः । सत्यधर्मादयो दश तत्पुत्राः ॥२४॥ विहंगमाः कामगमाः निर्वाणरुचयो देवाः । वैधृतिनामेन्द्रः । अरुणादयः सप्तऋषयः ॥ २५ ॥

* "तत्रापि जन्म भवति हरेर्विश्वसृजां गृहे । आपूर्तिरिति विख्याता येनाप्यायत वै जगत् ॥" इत्यधिकः पाठः ।

आर्यकस्य वैधृतायां धर्मसेतुनामाऽवतारः । स त्रिलोकीं धारयिष्यति ॥२६॥ द्वादशो मनुः रुद्रसावर्णिः । देवश्रेष्ठादयो दश तत्पुत्राः ॥२७॥ ऋतधामेन्द्रः । हरितादयो देवाः । आग्नीध्रकादयः सप्त ऋषयः ॥२८॥ सत्यसहसः सूनृतायां स्वधामाख्यो हरेरवतारः ॥ २९ ॥ अथ देवसावर्णिस्त्रयोदशो मनुः । चित्रसेनविचित्राद्या दश तत्पुत्राः ॥३०॥ सुकर्मसुत्रामसंज्ञा देवाः । दिवस्पतिर्नामेन्द्रः । निर्मोकतत्त्वदर्शाद्याः सप्त ऋषयो भविष्यन्ति ॥३१॥ देवहोत्रस्य बृहत्यां भार्यायां योगेश्वरो नामावतारः ॥३२॥ चतुर्दशो मनुरिन्द्रसावर्णिः । उरुगम्भीरबुद्ध्याद्याः

आर्यकस्य सुतस्तत्र धर्मसेतुरिति श्रुतः ॥ वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति ॥२६॥ भविता रुद्रसावर्णी राजन् द्वादशमो मनुः ॥ देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २७ ॥ ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः ॥ ऋषयश्च तपोमूर्तिस्तपस्व्याग्नीध्रकादयः ॥२८॥ स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः ॥ अन्तरं सत्यसहसः सूनृतायाः सुतो विभुः ॥ २९ ॥ मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् ॥ चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥ ३० ॥ देवाः सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पतिः ॥ निर्मोकतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा ॥ ३१ ॥ देवहोत्रस्य तनय उपहर्ता दिवस्पतेः ॥ योगेश्वरो हरेरंशो बृहत्यां संभविष्यति ॥३२॥ मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यति ॥ उरुगम्भीरबुद्ध्याद्या इन्द्रसावर्णिवीर्यजाः ॥ ३३ ॥ पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति ॥ अग्निर्बाहुः शुचिः शुद्धो मागधाद्यास्तपस्विनः ॥३४॥ सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ॥ वितानायां महाराज क्रियातन्तून्वितायिता ॥३५॥ राजंश्चतुर्दशैतानि त्रिकालानुगतानि ते ॥ प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः ॥ ३६ ॥ इति श्रीभागवते महापुराणेऽष्टमस्कन्धे मन्वंतरानुवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

दशतत्पुत्राः ॥ ३३ ॥ पवित्राश्चाक्षुषाः देवाः । शुचिर्नामेन्द्रः ॥ अग्निर्बाहुः शुचिः शुद्धो मागधाद्याः सप्त ऋषयः ॥ ३४ ॥ सत्रायणस्य वितानायां बृहद्भानुनामाऽवतारः स कर्ममार्गं विस्तारयिष्यति ॥ ३५॥ हे राजन् ! एतानि मन्वन्तराणि । एतैश्चतुर्दशभिर्युगसहस्रप्रमाणः कल्पो मितः ॥ ३६ ॥ इतिश्रीभागवते चू० अष्टम० त्रयोदशोऽध्यायः ॥ १३ ॥

चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम् ॥ पृथक् कर्माणि वर्ण्यन्ते भगवद्वशवर्तिनाम् ॥ १॥ राजोवाच ॥ हे ब्रह्मन् ! मन्वन्तरेषु मन्वादयो यस्मिन् कर्मणि येन नियुक्ताः सन्तो यत् कुर्वन्ति तद् वद ॥१॥ श्रीशुक उवाच॥ मनवो मनुपुत्राः ऋषय इन्द्राः देवगणाः एते सर्वे ॥ २॥ यज्ञाद्यवतारैः प्रेरिताः सन्तो जगद्यात्रां नयन्ति ॥३॥ तेषां कर्माण्याह। चतुर्युगान्ते कालेन ग्रस्तान् वेदान् ऋषयस्तपसाऽपश्यन्॥ ४ ॥ततो मनवश्चतुष्पादं धर्मं भूमौ प्रवर्तयन्ति ॥ ५ ॥ मनुपुत्रास्तं धर्मं पालयन्ति देवाः यज्ञभागान् भुञ्जते ॥ ६ ॥ इन्द्रो भगवद्दत्तां श्रियं भुञ्जानः सन्

राजोवाच ॥ मन्वन्तरेषु भगवन् यथा मन्वादयस्त्विमे ॥ यस्मिन्कर्मणि ये येन नियुक्तास्तद्वदस्व मे ॥ १ ॥ ऋषिरुवाच ॥ मनवो मनुपुत्राश्च मुनयश्च महीपते ॥ इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥ २ ॥ यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ॥ मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः ॥३॥ चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान्यथा ॥ तपसाऋषयोऽपश्यन्यतो धर्मः सनातनः ॥ ४ ॥ ततो धर्मं चतुष्पादं मनवो हरिणोदिताः ॥ युक्ताः सञ्चारयन्त्यद्धा[1] स्वे स्वे काले महीं नृपाः॥५॥ पालयन्ति प्रजापाला यावदन्तं विभागशः॥ यज्ञभागभुजो देवा ये च तत्रान्विताश्च तैः ॥६॥ इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् ॥ भुञ्जानः पाति लोकांस्त्रीन्कामं लोके प्रवर्षति ॥ ७ ॥ ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ॥ ऋषिरूपधरः कर्मयोगं योगेशरूपधृक् ॥ ८ ॥ सर्गं प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः ॥ कालरूपेण सर्वेषामभावाय पृथग्गुणः[2] ॥ ९ ॥ स्तूयमानो जनैरेभिर्मायया नामरूपया ॥ विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते ॥ १० ॥

त्रिलोकान् पाति लोके प्रवर्षति ॥ ७ ॥ सनकादिसिद्धरूपधृक् हरिरनुयुगं ज्ञानं ब्रूते याज्ञवल्क्यादिऋषिरूपधरो हरिः कर्म ब्रूते। दत्तात्रेयादि योगेशरूपधृक् हरिर्योगं ब्रूते ॥ ८ ॥ मरीच्यादिप्रजापतिरूपेण हरिः सर्गं करोति। राजमूर्तिः सन् दस्यून् हन्यात्। कालरूपेण सर्वेषां नाशाय भवति ॥९॥ मायया मोहितजनैर्नानाशास्त्रैः स्तूयमानोऽपि हरिर्नैव दृश्यते ॥ १० ॥

---

१ संयताः। २ पृथग्विधाः गुणाः शीतोष्णादयो यस्य सः।

एतदवान्तरकल्पस्य प्रमाणं तुभ्यं कथितम्। यत्र चतुर्दश मन्वन्तराणि वदन्ति॥११॥ इति श्रीभाग०चू०अष्टम०चतुर्दशोऽध्यायः॥१४॥बलिं
पञ्चदशे विश्वजिताऽऽचार्य अयाजयत् ॥ ततोऽसौ स्वर्गमगमद् भयाद्देवा निलिल्यिरे॥१॥अत्रेर्यंते नवाध्याय्या वामं वामनचेष्टितम् ॥ निग्रहा-
च्छलतो यत्र बलेर्भूयादनुग्रहः ॥२॥ राजोवाच ॥ ईश्वरः कृपणवद् भूत्वा बलेः सकाशाद् भूमेः पदत्रयं कस्मात् ययाचे। लब्धार्थोऽपि हरिरना-
गसं तं कस्माद् बबन्ध॥१॥एतत् कौतुकं ज्ञातुमिच्छामः॥२॥श्रीशुक उवाच॥ हे राजन्! युद्धे इन्द्रेण पराजितो बलिर्भृगुभिर्जीवितः सन् पश्चात्

एतत्कल्पविकल्पस्य प्रमाणं परिकीर्तितम् ॥ यत्र मन्वन्तराण्याहुश्चतुर्दश पुराविदः ॥११॥ इति श्रीभा० म० अष्ट०
सप्तमादिमन्वन्तराद्यनुवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ राजोवाच ॥ बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत ॥
भूतेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम् ॥ १ ॥ एतद्वेदितुमिच्छामो महत्कौतूहलं हि नः ॥ यज्ञेश्वरस्य पूर्णस्य
बन्धनं चाप्यनागसः ॥२॥ श्रीशुक उवाच ॥ पराजितश्रीरसुभिश्च हापितो हीन्द्रेण राजन् भृगुभिः स जीवितः ॥
सर्वात्मना तानभजद् भृगून् बलिः शिष्यो महात्माऽर्थनिवेदनेन ॥३॥ तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन्विश्व-
जिता[1] त्रिणाकम्॥ जिगीषमाणं विधिनाऽभिषिच्य महाभिषेकेण महानुभावाः॥४॥ ततो रथः काञ्चनपट्टनद्धो हयाश्च
हर्यश्वतुरङ्गवर्णाः ॥ ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात् ॥५॥ धनुश्च दिव्यं पुरटोपनद्धं तूणा-
वरिक्तौ कवचं च दिव्यम् ॥ पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ॥६॥ एवं स विप्रार्जितयोध-
नार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् ॥ प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥

तान् भृग्वादीन् सर्वात्मनाऽसेवत् ॥३॥ततः प्रसन्नाः भृगवो ब्राह्मणाः जेतुमिच्छन्तं तं बलिं विश्वजिदाख्ययज्ञेनायाजयन् ॥४॥ ततो हविर्भिर्हूय-
माने सति हुताशनात् सुवर्णपट्टबद्धो रथः इन्द्राश्ववदश्वः सिंहचिह्नितध्वजः॥५॥दिव्यं धनुः अक्षय्यबाणौ तूणौ कवचं च प्रादुर्बभूवुः। अथ प्रह्लाद-
स्तस्मै अम्लानपुष्पां मालां शुक्रः शंखं च ददौ॥६॥एवं विप्रैः संपादितयुद्धसाहित्यो बलिस्तान् प्रदक्षिणीकृत्य प्रणम्य प्रह्लादं पृष्ट्वा नमश्चकार॥७॥

१ भृगुवंश्यैः । २ निवेदनेनार्पणेन ।

ततो महारथो बलिः शस्त्रालंकारादिकं धृत्वा भृगुदत्तं रथमारुह्य कुण्डस्थोऽग्निरिव शुशुभे ॥८॥९॥ अथ तुल्यैश्वर्यबलश्रीभिर्दिग्भिः खं पिबद्भि-र्दैत्ययूथपैर्वृतः सन्॥१०॥महतीमासुरीं सेनां विकर्षन् समृद्धामिन्द्रपुरीं ययौ॥११॥ कथंभूतां ताम् ? उपवनोद्यानैः रम्यां मत्तभ्रमरविहङ्गैर्नादि-ताम् ॥१२॥ फलपुष्पोरुभारेण नम्रशाखाद्रुमैः शोभिताम् ॥१३॥ आकाशगङ्गया वेष्टिताम् अग्निवर्णेन प्राकारेण च वृताम् ॥ १४ ॥ विभक्त-

अथारुह्य रथं दिव्यं भृगुदत्तं महारथः॥सुस्रग्धरोऽथ सन्नह्य धन्वी खड्गी धृतेषुधिः ॥८॥ हेमाङ्गदलसद्बाहुःस्फुरन्म-करकुण्डलः ॥ रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ॥९॥ तुल्यैश्वर्यबलश्रीभिः स्वयूथैर्दैत्ययूथपैः ॥ पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीन्निव ॥ १० ॥ वृतो विकर्षन्महतीमासुरीं ध्वजिनीं विभुः ॥ ययाविन्द्रपुरीं स्वृद्धां कम्पयन्निव रोदसी ॥११॥ रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः ॥ कूजद्विहंगमिथुनैर्गायन्मत्तमधुव्रतैः ॥ १२ ॥ प्रवालफल-पुष्पोरुभारशाखामरद्रुमैः॥ हंससारसचक्राह्वकारण्डवकुलाकुलाः ॥ नलिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः ॥१३॥ आकाशगङ्गया देव्या वृतां परिखभूतया ॥ प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च ॥ १४ ॥ रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः ॥ जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम् ॥ १५ ॥ सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ॥ शृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ॥१६॥ यत्र नित्यवयोरूपाः श्यामा विरजवाससः ॥ भ्राजन्ते रूपवन्नार्यो ह्यर्चिर्भि-रिव वह्नयः ॥१७॥ सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम् ॥ यत्रामोदमुपादाय मार्ग आवाति मारुतः ॥ १८ ॥ हेम-जालाक्षनिर्गच्छन्धूमेनागुरुगन्धिना ॥ पाण्डुरेण प्रतिच्छन्नमार्गे यान्ति सुरप्रियाः ॥ १९ ॥

राजमार्गां स्फटिकपुरद्वारैर्जुष्टाम् ॥१५॥ सभाचत्वररथ्याढ्यां दशकोटिविमानैर्युताम् ॥१६॥ यस्यां स्वलंकृताः निर्मलवाससो नार्यः शोभन्ते ताम् ॥१७॥ यत्र देवस्त्रीकेशेभ्यः पतितानां मालानां गन्धमादाय मार्गे वायुर्वाति ताम् ॥१८॥ यत्र हेमजालेभ्यो निर्गतसुगन्धधूमेन प्रतिच्छन्न-

१ अट्टालं प्राकारोपरि रचितं युद्धस्थानम् ।

मार्गेऽप्सरसो यान्ति॥१९॥मुक्तावितानैर्मणिसुवर्णमयैर्ध्वजैश्च व्याप्ताम्॥२०॥मृदङ्गशङ्खादिशब्दैर्गन्धर्वाप्सरसां गीतनृत्यैश्च मनोरमाम् ॥२१॥



यां खलाः भूतद्रुहादयश्च न व्रजन्ति ॥२२॥ तां देवराजधानीं गत्वा सेनया रुरुधे। ततो भृगुदत्तं शङ्खं स्त्रीणां भयं जनयन् संदध्मौ ॥ २३ ॥ अथेन्द्रो बलेरुद्योगं ज्ञात्वा सर्वदेवगणैर्युतो गुरुं जगाद ॥२४॥ हे भगवन्! पूर्ववैरिणो बलेर्भूयः उद्यमः अतः इममविषह्यं मन्ये ॥ २५ ॥ अयं

मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ॥ शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमंग-लाम् ॥ २० ॥ मृदंगशंखानकदुन्दुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः ॥ नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया-जितप्रभाम् ॥२१॥यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः॥ मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्तियत्॥२२॥ तां देवधानीं स वरूथिनीपतिर्बहिः समन्तादुरुधे पृतन्यया॥ आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन् भयमिन्द्रयो-षिताम् ॥२३॥ मघवांस्तदभिप्रेत्य बलेः परममुद्यमम्॥सर्वदेवगणोपेतो गुरुमेतदुवाच ह॥२४॥भगवन्नुद्यमो भूयान् बलेर्नः पूर्ववैरिणः॥ अविषह्यमिमं मन्ये केनासीत् तेजसोर्जितः ॥२५॥ नैनं कश्चित् कुतो वाऽपि प्रतिव्योढुमधीश्वरः॥ पिब-न्निव मुखेनेदं लिहन्निव दिशो दश ॥ दहन्निव दिशो दृग्भिः संवर्ताग्निरिवोत्थितः ॥२६॥ ब्रूहि कारणमेतस्य दुर्धर्षत्व-स्य मद्रिपोः ॥ ओजः सहो बलं तेजो यत एतत्समुद्यमः ॥२७॥ गुरुरुवाच ॥ जानामि मघवञ्छत्रोरुन्नतेरस्य कारणम् ॥ शिष्यायोपभृतं तेजो भृगुभिर्ब्रह्मवादिभिः ॥२८॥ भवद्विधो भवान्वाऽपि वर्जयित्वेश्वरं हरिम् ॥ नास्य शक्तः पुरः स्थातुं कृतान्तस्य यथा जनाः॥२९॥तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम्॥यात कालं प्रतीक्षन्तो यतः शत्रोर्विपर्ययः॥३०॥



मुखेन खं पिबन्निव प्रलयाग्निरिव कुतः उत्थितः ॥२६॥ हे गुरो ! एतस्य कारणं ब्रूहि। किंच मद्रिपोस्तेजोबलादि कुतः यतः उद्यमः ॥२७॥ गुरुरुवाच। हे इन्द्र! तव शत्रोरुन्नतेः कारणं जानामि। अस्मै शिष्याय भृगुभिस्तेजो दत्तम् ॥२८॥ भवद्विधो भवान् वाऽस्याग्रे स्थातुं न समर्थः ॥ २९ ॥ अतो हे देवा! यूयं स्वर्गं हित्वा शत्रोर्विपर्ययकालं प्रतीक्षन्तः पलायध्वम् ॥ ३० ॥

१ पताकायुक्ताभिर्वलभीभिः । २ कालात् ।

अधुनाऽयं बलिर्विप्रबलोदर्कोऽस्ति कालेनैषामेवापमानात् सानुबन्धो नङ्क्ष्यति ॥३१॥ एवं गुरुणा सुमन्त्रितार्थाः देवाःस्वर्गं हित्वा कामरूपिणः सन्तो जग्मुः ॥३२॥ देवेषु गुप्तेषु सत्सु बलिरिन्द्रपदमास्थाय जगत्रयं वशं निन्ये॥३३॥अथ भृगवो विश्वजयिनं शिष्यं शताश्वमेधेनेन्द्रपदं स्थिरीकर्तुं मयाजयन् ॥३४॥ तदनुभावेन त्रैलोक्यविख्यातां कीर्तिं दिक्षु विस्तारयन् सन् चन्द्र इव रेजे ॥३५॥ ततो बलिरात्मानं कृतकृत्यमिव मन्वानो ब्राह्मणैः संपादितां समृद्धां श्रियं बुभुजे ॥३६॥ इति श्रीभागवते चू० अष्टम० पञ्चदशोऽध्यायः ॥१५॥ षोडशे पुत्रनाशेन शोचन्त्या अदितेः

एष विप्रबलोदर्कः सम्प्रत्यूर्जितविक्रमः ॥ एषामेवापमानेन सानुबन्धो विनङ्क्ष्यति॥३१॥ एवं सुमन्त्रितार्थास्ते गुरुणा-ऽर्थानुदर्शिना ॥ हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः॥३२॥देवेष्वथ निलीनेषु बलिर्वैरोचनः पुरीम् ॥ देवधानी-मधिष्ठाय वशं निन्ये जगत्रयम् ॥३३॥ तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः ॥ शतेन हयमेधानामनुव्रतम-याजयन् ॥३४॥ ततस्तदनुभावेन भुवनत्रयविश्रुताम् ॥ कीर्तिं दिक्षु वितन्वानः स रेज उडुराडिव ॥ ३५ ॥ बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलम्भिताम् ॥ कृतकृत्यमिवात्मानं मन्यमानो महामनाः ॥३६॥ इति श्रीभागवते म० अष्टम० बलिकृतस्वर्गाक्रमणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीशुक उवाच ॥ एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा ॥ हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥१॥ एकदा कश्यपस्तस्या आश्रमं भगवानगात्॥निरुत्सवं निरानन्दं समाधेर्विरत-श्चिरात् ॥ २ ॥ स पत्नीं दीनवदनां कृतासनपरिग्रहः ॥ सभाजितो यथान्यायमिदमाह कुरूद्वह ॥ ३ ॥ अप्यभद्रं न विप्राणां भद्रे लोकेऽधुनाऽऽगतम् ॥ न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः ॥ ४ ॥ अपि वा कुशलं किंचिद् गृहेषु गृहमेधिनि ॥ धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥

पतिः ! प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते ॥१॥ श्रीशुक उवाच । हे राजन् ! एवं पुत्रेषु नष्टेषु सत्सु दैत्यश्च स्वर्गे हृते सति देवमाताऽदितिः पर्यतप्यत ॥१॥ एकदा कश्यपस्तस्या निरुत्सवं निरानन्दमाश्रमं जगाम ॥२॥ तदा कृतासनपरिग्रहः स दीनवदनां पत्नीं दृष्ट्वा जगाद ॥३॥ हे भद्रे ! अधुना विप्राणां धर्मस्याभद्रं नागतं किम् ॥४॥ किंवा गृहेषु त्रिवर्गस्याकुशलं यत्रायोगिनामपि स्वधर्मादिना योगफलं भवति ॥५॥

अपि वाऽतिथयस्त्वद्गृहं प्राप्तास्त्वयाऽपूजिताः सन्तो गताः किम्॥६॥येषु गृहेष्वतिथयो जलैरपि नार्चिताः ते गृहाः शृगालराजगृहवज्ज्ञेयाः ॥७॥ किंवा होमकाले हविषाऽग्नयो न हुताः किम्॥८॥ ब्राह्मणोऽग्निश्च विष्णोर्मुखम् । तत्पूजनात् स्वर्गादिलोकान् याति ॥ ९ ॥ अथवा ते सर्वे पुत्राः कुशलिनः किम् । अहं तव मनोऽस्वस्थं लक्षयामि ॥ १० ॥ अदितिरुवाच ॥ हे ब्रह्मन् ! द्विजगवां धर्मस्य जनस्य च भद्रम् ॥ ११ ॥ तव

अपि वाऽतिथयोऽभ्येत्य कुटुम्बासक्तया त्वया ॥ गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥६॥ गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि ॥ यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः ॥ ७ ॥ अप्यग्नयस्तु वेलायां न हुता हविषा सति ॥ त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥ ८ ॥ यत्पूजया कामदुघान्याति लोकान् गृहान्वितः ॥ ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम् ॥९॥ अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि॥लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥१०॥ अदितिरुवाच ॥ भद्रं द्विजगवां ब्रह्मन्धर्मस्यास्य जनस्य च ॥ त्रिवर्गस्य परं क्षेत्रं गृहमेधिन्गृहा इमे ॥ ११ ॥ अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः ॥ सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥ को नु मे भगवन्कामो न संपद्येत मानसः ॥ यस्या भवान्प्रजाध्यक्ष एवं धर्मान् प्रभाषते ॥ १३ ॥ तवैव मारीच मनःशरीरजाः प्रजा इमाः सत्त्वरजस्तमोजुषः ॥ समो भवांस्तास्वसुरादिषु प्रभो तथाऽपि भक्तं भजते महेश्वरः ॥ १४ ॥ तस्मादीश भजन्त्या मे श्रेयश्चिन्तय सुव्रत ॥ हृतश्रियो हृतस्थानान् सपत्नैः पाहि नः प्रभो ॥ १५ ॥ परैर्विवासिता साऽहं मग्ना व्यसनसागरे ॥ ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ १६ ॥ यथा तानि पुनः साधो प्रपद्येरन्ममात्मजाः ॥ तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥ १७ ॥

ध्यानयोगात् किंचिदपि न क्षीयते ॥१२॥ भवान् धर्मान् यस्याः प्रभाषते तस्याः मनोरथः को नु न सिध्यति ॥१३॥ हे कश्यप ! तवैव सर्वाः प्रजाः । तासु त्वं समः । तथाऽपीश्वरो भक्तं भजते ॥१४॥ अत एव हे स्वामिन्! भजन्त्याः मे कल्याणं चिन्तय। शत्रुभिर्हृतस्थानश्रियो नः पाहि ॥१५॥प्रबलैर्दैत्यैर्ममैश्वर्यादीनि हृतानि। तेन दुःखसागरेऽहं मग्ना॥१६॥अतो हे साधो। मम पुत्राः यथा पुनस्तानि प्रपद्येरन् तथा मे कल्याणं कुरु॥१७॥

श्रीशुक उवाच ॥ एवं प्रार्थितः कश्यपस्तामाह । अहो स्नेहबद्धं जगत् । इदं विष्णोर्मायाबलम् ॥१८॥ अयं पाञ्चभौतिको देहः क्व? प्रकृतेः परः आत्मा क्व ? कस्य के पुत्राद्याः ? अत्र मोह एव कारणम् ॥१९॥ अतो जनार्दनं जगद्गुरुं वासुदेवं भजस्व ॥२०॥ दीनानुकम्पी सः ते कामान् करिष्यति यतो भगवद्भक्तिरमोघा अन्या न ॥ २१ ॥ अदितिरुवाच ॥ हे ब्रह्मन् ! अहं केन विधिना जगत्पतिमुपास्ये यथा मे मनोरथं स कुर्यात् ॥२२॥ हे द्विजश्रेष्ठ ! पुत्रैः सह सीदन्त्याः मे देवः आशु तुष्यति तथा तत्सेवाप्रकारं कथय ॥२३॥ कश्यप उवाच ॥ हे

श्रीशुक उवाच ॥ एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव ॥ अहो माया बलं विष्णोः स्नेहबद्धमिदं जगत् ॥१८॥ क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः ॥ कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥ १९ ॥ उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम्॥सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥२०॥ स विधास्यति ते कामान् हरिर्दीनानुकम्पनः॥ अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम ॥ २१ ॥ अदितिरुवाच ॥ केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् ॥ यथा मे सत्यसंकल्पो विदध्याच्च मनोरथम् ॥ २२ ॥ आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् ॥ आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥ २३ ॥ कश्यप उवाच ॥ एतन्मे भगवान् पृष्टः प्रजाकामस्य पद्मजः ॥ यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥ २४ ॥ फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ॥ अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ॥२५॥ सिनीवाल्यां मृदाऽऽलिप्य स्नायात्क्रोडविदीर्णया ॥ यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् ॥२६॥ त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ॥ उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ २७ ॥

देवमातः ! प्रजाकामेन मया पृष्टो ब्रह्मा यद्व्रतमाह तद् हरितोषणं व्रतं ते वक्ष्यामि ॥ २४ ॥ फाल्गुनस्य शुक्लपक्षे द्वादशाहं पयोव्रतः सन् हरिमर्चयेत् ॥२५॥ तत्रादावमावास्यायां वनवराहविदीर्णया मृदाऽङ्गमालिप्य नद्यादौ विधिना स्नायात् ॥२६॥ मृल्लेपने इमं मन्त्रमुच्चारयेत् । हे देवि ! आदिवराहेण रसायास्त्वमुद्धृता अतस्तुभ्यं नमः मम पापं नाशयेति ॥ २७ ॥

ततः स्नानान्ते नित्यनैमित्तिकं कृत्वा भक्त्या प्रतिमायां भूमौ सूर्ये जले वह्नौ गुरावपि हरिमर्चयेत् ॥ २८ ॥ ततः आवाहनादाविमान् नव मन्त्रानुच्चारयेत् महापुरुषाय सर्वभूतनिवासाय वासुदेवाय तुभ्यं नमः ॥ २९ ॥ सूक्ष्माय प्रधानपुरुषाय साङ्ख्यप्रवर्तकाय नमः ॥ ३० ॥ ॥३१॥ शिवाय शक्तिधराय सर्वविद्याधिपतये नमः ॥३२॥ हिरण्यग-
द्वे शीर्षे यस्य तस्मै त्रिपदे चतुःशृङ्गाय सप्तहस्ताय यज्ञाय नमः ॥ ३१ ॥ शिवाय शक्तिधराय सर्वविद्याधिपतये नमः ॥३२॥ हिरण्यग-

निर्वर्तितात्मनियमो देवमर्चेत्समाहितः ॥ अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ॥ २८ ॥ नमस्तुभ्यं भगवते पुरुषाय महीयसे ॥ सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ २९ ॥ नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ॥ चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे ॥३०॥ नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे ॥ सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥३१॥ नमः शिवाय रुद्राय नमः शक्तिधराय च ॥ सर्वविद्याधिपतये भूतानां पतये नमः ॥ ३२ ॥ नमो हिरण्यगर्भाय प्राणाय जगदात्मने ॥ योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥ ३३ ॥ नमस्त आदिदेवाय साक्षिभूताय ते नमः ॥ नारायणाय ऋषये नराय हरये नमः ॥ ३४ ॥ नमो मरकतश्यामवपुषेऽधिगतश्रिये ॥ केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥३५॥ त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ ॥ अतस्ते श्रेयसे धीराः पादरेणुमुपासते॥३६॥अन्ववर्तन्त यं देवाः श्रीश्च तत्पादपद्मयोः ॥ स्पृहयन्त इवामोदं भगवान् मे प्रसीदताम् ॥ ३७ ॥ एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्कृतम् ॥ अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ ३८ ॥

र्भाय प्राणाय योगैश्वर्यशरीराय नमः ॥३३॥ आदिदेवाय साक्षिभूताय नारायणाय नमः ॥ ३४ ॥ मरकतश्यामवपुषे केशवाय पीतवाससे नमः ॥ ३५ ॥ हे ईश ! त्वं पुंसां सर्ववरदः ॥ ३६ ॥ देवाः श्रीश्च तत्पादपद्मयोः सुगन्धाय यं स्पृहयन्ति स मे प्रसीदताम् ॥ ३७ ॥ इत्यादिमन्त्रैर्द्वादशाक्षरविद्यया च हृषीकेशमर्चयेत् ॥ ३८ ॥



---

१ चतुर्विंशतितत्त्वज्ञाय । २ 'चत्वारिश्रृङ्गा' इति मन्त्रस्यायमर्थः । ३ प्रायणीयोदयनीये शीर्षे । ४ पादास्त्रीणि सवनानि । ५ शृङ्गाणि वेदाः । ६ फलविस्तारकाय । ७ हस्ताः गायत्र्यादीनि सप्तच्छन्दांसि । ८ त्रय्यां विद्यायामात्मा यस्य तस्मै । ९ योगैश्वर्यं शरीरं यस्य तस्मै ।

ततः पयसा विभुं स्नापयित्वा वस्त्रोपवीताभरणैर्गन्धपुष्पधूपदीपादिभिश्च पूजयेत् ॥ ३९ ॥ ततः सघृतं सगुडं पायसं शाल्यन्नं नैवेद्यं दत्त्वा मूलमन्त्रेण जुहुयात् ॥ ४० ॥ निवेदितं तद्भक्ताय दद्यात् स्वयं वा भुञ्जीत । ततः आचमनं दत्त्वा ताम्बूलं निवेद्य ॥४१॥ अष्टोत्तरशतं मन्त्रं जपेत् । स्तुतिभिः प्रभुं स्तुत्वा प्रदक्षिणानि नमस्कारं च कृत्वा॥४२॥निर्माल्यं शिरसि धृत्वा देवं विसर्जयेत् । पायसेन द्व्यवरान् विप्रान् भोज-

अर्चित्वा गन्धमाल्याद्यैः पयसा स्नपयेद्विभुम् ॥ वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ गन्धधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥ ३९ ॥ शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ॥ ४० ॥ निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम् ॥ दत्त्वाऽऽचमनमर्चित्वा ताम्बूलं च निवेदयेत्॥४१॥ जपेदष्टोत्तरशतंस्तुवीत स्तुतिभिः प्रभुम् ॥ कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुदा ॥ ४२ ॥ कृत्वा शिरसि तच्छेषं देवमुद्वासयेत् ततः ॥ द्व्यवरान् भोजयेद्विप्रान् पायसेन यथोचितम् ॥४३॥ भुञ्जीत तैरनुज्ञातः शेषं सेष्टः सभाजितः ॥ ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि ॥४४॥ स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ पयसा स्नापयित्वाऽर्चेद्यावद्व्रत समापनम् ॥ ४५ ॥ पयोभक्षो व्रतमिदं चरेद्विष्णवर्चनादृतः ॥ पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ॥ ४६ ॥ एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः ॥ हरेराराधनं होममर्हणं द्विजतर्पणम् ॥ ४७ ॥ प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ब्रह्मचर्यमधःस्वप्नं स्नानं त्रिषवणं चरेत् ॥ ४८ ॥

येत् ॥ ४३ ॥ ततस्तैः समनुज्ञातो बन्धुभिः सह भुञ्जीत । रात्र्यां ब्रह्मचारी सन् प्रभाते ॥ ४४ ॥ यथोक्तविधिना स्नातः शुचिः पयसा विभुं स्नापयित्वाऽर्चयेत् ॥ ४५ ॥ ततः पूर्ववदग्निं जुहुयात् विप्रान् भोजयेत् ॥४६॥ एवं प्रतिदिनं द्वादशाहं पयोव्रतं तत्र हरेराराधनं होमं ब्राह्मणभोजनं च कुर्यात् ॥ ४७ ॥ प्रतिपद्दिनमारभ्य शुक्लत्रयोदशीपर्यन्तं ब्रह्मचर्यं भूमिशयनं त्रिकालस्नानं च चरेत् ॥ ४८ ॥

---

१ द्वादशाक्षरमन्त्रेण ।

असद्भाषणं भोगान् हिंसादिकं च वर्जयेत् ॥४९॥ त्रयोदश्यां पञ्चामृतैर्विष्णुं स्नपयित्वा शास्त्रविधिना ॥५०॥ महापूजां कृत्वा चरुं निरूप्य तेन पुरुषमिष्ट्वा पुरुषतुष्टिदं नैवेद्यं दद्यात् ॥५१॥ ५२ ॥ आचार्यमृत्विजश्च वस्त्राभरणधेनुभिस्तोषयेत् ॥ ५३ ॥ अन्यांश्च ब्राह्मणान् सदन्नेन भोजयेत् ॥ ५४ ॥ ततो गुरवे ऋत्विग्भ्यश्च दक्षिणां दत्त्वा तर्पयेत् ॥ ५५ ॥ सर्वेषु भुक्तेषु सत्सु ततो बन्धुभिः सह स्वयं भुञ्जीत ॥५६॥

वर्जयेदसदालापं भोगानुच्चावचांस्तथा ॥ अहिंस्रः सर्वभूतानां वासुदेवपरायणः ॥४९॥ त्रयोदश्यामथो विष्णोःस्नपनं पञ्चकैर्विभोः ॥ कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ॥५०॥ पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ॥ चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ॥ ५१ ॥ शृतेन तेन पुरुषं यजेत सुसमाहितः ॥ नैवेद्यं चातिगुणवद्दद्यात् पुरुषतुष्टिदम् ॥ ५२ ॥ आचार्यं ज्ञानसंपन्नं वस्त्राभरणधेनुभिः ॥ तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः ॥ ५३ ॥ भोजयेत् तान् गुणवता सदन्नेन शुचिस्मिते ॥ अन्यांश्च ब्राह्मणाञ्छक्त्या ये च तत्र समागताः ॥५४॥ दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथाऽर्हतः ॥ अन्नाद्येनाऽऽश्वपाकांश्च प्रीणयेत् समुपागतान् ॥ ५५ ॥ भुक्तवत्सु च सर्वेषु दीनान्धकृपणेषु च ॥ विष्णोस्तत् प्रीणनं विद्वान् भुञ्जीत सह बन्धुभिः ॥ ५६ ॥ नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः ॥ कारयेत्सत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥ ५७ ॥ एतत् पयोव्रतं नाम पुरुषाराधनं परम् ॥ पितामहेनाभिहितं मया ते समुदाहृतम् ॥ ५८ ॥ त्वं चानेन महाभागे सम्यक्चीर्णेन केशवम् ॥ आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् ॥ ५९ ॥ अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम् ॥ तपस्सारमिदं भद्रे दानं चेश्वरतर्पणम् ॥६०॥ त एव नियमाः साक्षात् त एव च यमोत्तमाः ॥ तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥ ६१ ॥

नृत्यवादित्रगीतस्तुत्यादिभिः प्रत्यहं भगवतः पूजां कारयेत् ॥५७॥ एतत् पयोव्रतं मे पितामहेनोक्तं तत् ते कथितम् ॥५८॥ हे महाभागे ! त्वं शुद्धभावेन व्रतेन केशवं भज ॥ ५९ ॥ इदं सर्वव्रताख्यं व्रतं तपःसारम् ॥ ६० ॥ येन हरिस्तुष्यति तदेव तपोदानव्रतनियमादि ॥६१॥

अतो हे भद्रे ! श्रद्धयेदं व्रतमाचर । अनेन तुष्टो भगवान् तव वरान् दास्यति ॥६२॥ इति श्रीभागवते चू० अष्टम षोडशोऽध्यायः ॥१६॥ ततः सप्तदशेऽदित्या कृते तस्मिन् व्रते हरिः । तत्कामपूरणायादौ तत्पुत्रोऽभूदितीर्यते ॥ १ ॥ श्रीशुक उवाच ॥ हे नृप । एवं कश्यपेनोक्ताऽदिति-र्द्वादशाहं पयोव्रतं प्रारभत ॥१॥ मनसेन्द्रियदुष्टाश्वान् निगृह्य ॥२॥ मनो वासुदेवे समाधाय पयोव्रतं चकार ॥३॥ हे राजन् ! तस्याः व्रतात्

तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धया चर ॥ भगवान् परितुष्टस्ते वरानाशु विधास्यति ॥६२॥ इति श्रीभागवते म० अष्टम-स्कन्धेऽदित्यै पयोव्रतोपदेशो नामषोडशोऽध्यायः॥१६॥ श्रीशुक उवाच ॥ इत्युक्ता साऽदिती राजन् स्वभर्त्रा कश्यपेन वै ॥ अन्वतिष्ठद्व्रतमिदं द्वादशाहमतन्द्रिता ॥ १ ॥ चिन्तयन्त्येकया बुद्ध्या महापुरुषमीश्वरम् ॥ प्रगृह्येन्द्रियदुष्टा-श्वान्मनसा बुद्धिसारथिः ॥२॥ मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ॥ वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥ तस्याः प्रादुरभूत्तात भगवानादिपूरुषः ॥ पीतवासाश्चतुर्बाहुः शंखचक्रगदाधरः ॥ ४ ॥ तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् ॥ ननाम भुवि कायेन दण्डवत प्रीतिविह्वला ॥ ५ ॥ सोत्थाय बद्धाञ्जलिरीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा ॥ बभूव तूष्णीं पुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥ प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह ॥ उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥ अदिति-रुवाच ॥ यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गलनामधेय ॥ आपन्नलोकवृजिनोपशमोदयाद्य शं नः कृधीश भगवन्नसि दीननाथः ॥ ८ ॥ विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ॥ स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ ९ ॥

तुष्टः पीतवासाः शङ्खचक्रगदाधरो हरिः प्रादुरभूत् ॥ ४ ॥ तदाऽदितिस्तं प्रीत्या भुवि कायेन दण्डवत् ननाम ॥५॥ ततः सा उत्थाय बद्धा-ञ्जलिः स्थिता सती स्तोतुं नोत्सेहे ॥६॥ पश्चाच्छनैर्गद्गदया गिरा जगत्पतिं हरिं तुष्टाव ॥ ७ ॥ अदितिरुवाच । हे यज्ञेश ! हे यज्ञपुरुष ! हे भगवन् ! अस्माकं शं कुरु । त्वं दीननाथोऽसि ॥ ८ ॥ जगतो जन्मस्थितिसंयमार्थं गृहीतमायागुणाय हरये नमोऽस्तु ॥ ९ ॥

हे अनन्त ! संतुष्टात् त्वत्तो नृणां ब्रह्मायुः वपुरादि सर्वं भवति शत्रुजयादि किमुत॥१०॥ श्रीशुक उवाच ॥ एवमदित्या स्तुतः सर्वभूतानामन्तर्यामी हरिरुवाच॥११॥श्रीभगवानुवाच॥हे देवमातः ! भवत्या काङ्क्षितं मया ज्ञातम्॥१२॥ किंच युद्धे दैत्यान् निर्जित्य प्राप्तजयश्रीभिः पुत्रैः सहैकत्र स्थातुमिच्छसि ॥१३॥ तथा विद्विषां दुःखिताः रुदतीः स्त्रियो द्रष्टुमिच्छसि ॥१४॥ तथा स्वर्गमधिष्ठाय क्रीडतः समृद्धान् स्वपु-



आयुः परं वपुरभीष्टमतुल्यलक्ष्मीद्योभूरसाः सकलयोगगुणास्त्रिवर्गः ॥ ज्ञानं च केवलमनन्त भवन्ति तुष्टात् त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥१०॥ श्रीशुक उवाच ॥ अदित्यैवं स्तुतो राजन् भगवान् पुष्करेक्षणः ॥ क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ॥ श्रीभगवानुवाच ॥११॥ देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम् ॥ यत सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः ॥ १२ ॥ तान् विनिर्जित्य समरे दुर्मदानसुरर्षभान् ॥ प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम् ॥ १३ ॥ इन्द्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम् ॥ स्त्रियो रुदन्तीरासाद्य द्रष्टुमिच्छसि दुःखिताः ॥ १४ ॥ आत्मजान् सुसमृद्धांस्त्वं प्रत्याहृतयशश्श्रियः ॥ नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥१५॥ प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः ॥ यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥१६॥ अथाप्युपायो मम देवि चिन्त्यः संतोषितस्य व्रतचर्यया ते ॥ ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात ॥ १७ ॥ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः ॥ स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्ताऽस्मि मारीचतपस्यधिष्ठितः ॥ १८ ॥ उपधाव पतिं भद्रे प्रजापतिमकल्मषम् ॥ मां च भावयती पत्यावेवंरूपमवस्थितम् ॥ १९ ॥



त्रान् द्रष्टुमिच्छसि ॥ १५ ॥ हे देवि ! शत्रवः समर्थैर्विप्रैः रक्षिताः अधुना नातिक्रमणीयाः । तत्र पराक्रमः सुखं न ददाति । एवं मम मतिः ॥१६॥ अथापि मयोपायश्चिन्त्यः यस्ते व्रतचर्यया तुष्टस्य ममार्चनं विफलं भवितुं नार्हति ॥१७॥ हे मातः ! यतस्त्वया पुत्रसंरक्षणार्थं व्रतेनार्चितः । अहं कश्यपस्य तपसि स्थितः सन् स्वांशेन पुत्रत्वं प्राप्य तव सुतान् पालयामि॥१८॥हे भद्रे ! पत्यौ मां भावयन्ती सती पतिं भजस्व॥१९॥

एतद्गुह्यमन्यस्मै न कथनीयम्।अनेन सर्वं सिध्यति॥२०॥श्रीशुक उवाच॥इत्युक्त्वा भगवानन्तर्दधे।अथ।दितिरात्मनि दुर्लभं हरेर्जन्म मत्वा॥२१॥ भक्त्या पतिमसेवयत।कश्यपः समाधियोगेन॥२२॥आत्मनि हरेः प्रविष्टमंशं ज्ञात्वाऽदित्यां वीर्यमाधत्त॥२३॥ततो ब्रह्माऽदितेर्गर्भे स्थितं हरिम् ज्ञात्वा गुह्यनामभिस्तुष्टाव॥२४॥ब्रह्मोवाच॥ हे भगवन् ! त्वं जय।ब्रह्मण्यदेवाय त्रिगुणाय ते नमः॥२५॥ पृश्निगर्भाय त्रिनाभाय विष्णवे नमः

नैतत्परस्मा आख्येयं पृष्टयाऽपि कथंचन ॥ सर्वं संपद्यते देवि देवगुह्यं सुसंवृत्तम ॥ २० ॥ श्रीशुक उवाच ॥ एताव-दुक्त्वा भगवांस्तत्रैवान्तरधीयत ॥ अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः ॥ २१ ॥ उपाधावत् पतिं भक्त्या परया कृतकृत्यवत् ॥ स वै समाधियोगेन कश्यपस्तदबुध्यत ॥२२॥ प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः ॥ सोऽदित्यां वीर्यमाधत्त तपसा चिरसंभृतम् ॥ समाहितमना राजन् दारुण्यग्निं यथाऽनिलः ॥ २३ ॥ अदितेर्धिष्ठितं गर्भं भगवन्तं सनातनम् ॥ हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः ॥ २४ ॥ ब्रह्मोवाच ॥ जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते ॥ नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः ॥२५॥ नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे ॥ त्रिनाभाय त्रिपृष्ठाय शिपि-विष्टाय विष्णवे ॥२६॥ त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः ॥ कालो भवानाक्षिपतीश विश्वं स्रोतो यथाऽन्तः पतितं गभीरम् ॥२७॥ त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि संभविष्णुः ॥ दिवौकसां देव दिव-श्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥२८॥ इति श्रीभागवते महापुराणे अष्टमस्कन्धेऽदितिगर्भे भगवदंशप्रवेशो नाम सप्तदशोऽध्यायः ॥ १७ ॥

॥२६॥ त्वं जगतः आदिर्मध्योऽन्तोसि । भवान् कालो विश्वमाकर्षति ॥२७॥ त्वं देवानां परमाश्रयः एवं भूतस्य ते जन्मादि नास्ति अथापि देवादीनां कार्यसाधनायायमवतारः । अतः स्वर्गभ्रष्टान् देवान् पुनः स्वर्गे स्थापय ॥२८॥ इति श्रीभा० चू० अष्टम० सप्तदशोऽध्यायः॥१७॥

१ पृश्निरिति अदितेः पूर्वजन्मनि नाम । २ त्रयो लोकाः नाभौ यस्य तस्मै । ३ त्रिलोकपृष्ठोपरि स्थिताय । ४ जीवेष्वन्तर्यामितयाऽऽविष्टाय ।

ततस्त्वष्टादशे भूत्वा वामनः सत्कृतोऽखिलैः । यज्ञं गतस्ततस्तेन सत्कृत्योक्तो वरान् वृणु ॥ १ ॥ श्रीशुक उवाच ॥ एवं ब्रह्मणा स्तुतो भगवान् चतुर्भुजः शङ्खचक्रगदापद्महस्तः पीतवासाः कमलनेत्रः ॥१॥ श्यामो मकराकारकुण्डलैर्लसच्छ्रीवदनाम्बुजः श्रीवत्सवक्षाः ॥२॥ वनमालया युतः स्वतेजसा कश्यपस्य गृहान्धकारं नाशयन् हरिः प्रादुरभूत् ॥ ३ ॥ तदा दिशः प्रसेदुः । नद्यादयः स्वच्छजलाः प्रजाः प्रहृष्टाः

श्रीशुक उवाच ॥ इत्थं विरिञ्चिस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् ॥ ॥ चतुर्भुजः शंखगदाब्जचक्रः पिशङ्गवासा
नलिनायतेक्षणः ॥१॥ श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् ॥ श्रीवत्सवक्षा वलयाङ्गदोल्लस-
त्किरीटकाञ्चीगुणचारुनूपुरः ॥ २ ॥ मधुव्रतव्रातविघुष्टया स्वया विराजितः श्रीवनमालया हरिः ॥ प्रजापतेर्वेश्मतमः
स्वरोचिषा विनाशयन् कण्ठनिविष्टकौस्तुभः ॥ ३ ॥ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणा-
न्विताः ॥ द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः संजहृषुर्नगाश्च ॥ ४ ॥ श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति
प्रभुः ॥ सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥ ५ ॥ द्वादश्यां सविताऽतिष्ठन् मध्यंदिनगतो नृप ॥ विजया नाम
सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥६॥ शङ्खदुन्दुभयो नेदुर्मृदङ्गपणवानकाः ॥ चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभ-
वत् ॥ ७ ॥ प्रीताश्चाप्सरसोऽनृत्यन् गन्धर्वप्रवरा जगुः ॥ तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥८॥ सिद्धविद्याधर-
गणाः सकिंपुरुषकिन्नराः ॥ चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ॥ ९ ॥ गायन्तोऽतिप्रशंसन्तो नृत्यन्तो विबुधा-
नुगाः ॥ आदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥

ऋतवो गुणान्विताः द्विजाः प्रसन्ना बभूवुः ॥ ४ ॥ हरेः प्रादुर्भावसमयमाह । भाद्रपदशुक्लद्वादश्यां श्रवणस्थे चन्द्रेऽभिजिन्नक्षत्रे प्रभुः प्रादुर्बभूव । जन्ममुहूर्ते सर्वे नक्षत्रग्रहाः श्रेष्ठफलदाः बभूवुः ॥५॥ यस्यां द्वादश्यां हरेर्जन्म जातं तस्यां मध्यंदिनं गतः सूर्यः आसीत् सा विजया नाम तिथिः प्रोक्ता ॥ ६ ॥ तदा शङ्खदुन्दुभयो मृदङ्गपणवानका नेदुः ॥७॥ अप्सरसो ननृतुः । गन्धर्वाः जगुः ॥८॥ सिद्धविद्याधरगणाः किंपुरुषकिन्नरादयः ॥ ९ ॥ एते गायन्तो नृत्यन्त आश्रमपदं कुसुमैरवाकिरन् ॥ १० ॥

१ देवाः ।

अथादितिः स्वगर्भसंभवं परं पुरुषं तं दृष्ट्वा मुदमाप। कश्यपो जयेत्याह॥११॥हरिर्यद्व्यक्तं च वपुः पूर्वं दधार तेन वपुषा पित्रोःपश्यतोरेव वामनो बटुर्बभूव ॥१२॥ ऋषयस्तं बटुं दृष्ट्वा कश्यपं पुरस्कृत्य जातकादिकर्माणि कारयामासुः ॥१३॥ उपनीयमानस्य तस्य सूर्यो गायत्रीमब्रवीत्। बृहस्पतिर्ब्रह्मसूत्रं ददौ। कश्यपो मेखलाम् ॥१४॥ भूमिर्मृगचर्म। सोमो दण्डम्। माता कौपीनम्। द्यौश्छत्रम् ॥ १५ ॥ ब्रह्मा कमण्डलुम्।

दृष्ट्वाऽदितिस्तं निजगर्भसंभवं परं पुमांसं मुदमाप विस्मिता ॥ गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥११॥ यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ॥ बभूव तेनैव स वामनो बटुः संपश्यतोर्दिव्य-गतिर्यथा नटः ॥१२॥ तं बटुं वामनं दृष्ट्वा मोदमाना महर्षयः ॥ कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥१३॥ तस्योपनीयमानस्य सावित्रीं सविताऽब्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥ १४ ॥ ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ॥ कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥१५॥ कमण्डलुं वेदगर्भः कुशान्सप्तर्षयो ददुः ॥ अक्षमालां महाराज सरस्वत्यव्ययात्मनः ॥१६॥ तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ॥ भिक्षां भगवती साक्षादुमाऽदादम्बिका सती॥१७॥स ब्रह्मवर्चसेनैवं सभां संभावितो बटुः ॥ ब्रह्मर्षिगणसंजुष्टामत्यरोचत मारिषः ॥१८॥ समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ॥ परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः ॥१९॥ श्रुत्वाऽश्वमेधैर्यजमान-मूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ॥ जगाम तत्राखिलसारसंभृतो भारेण गां सन्नमयन् पदे पदे ॥२० ॥ तं नर्मदा-यास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञके ॥ प्रवर्तयन्तो भृगवःक्रतूत्तमं व्यचक्षतारादुदितं यथा रविम् ॥२१॥

सप्तर्षयः कुशान्। सरस्वती रुद्राक्षमालाम् ॥१६॥ कुबेरो भिक्षापात्रीम्। उमा भिक्षां ददौ ॥ १७ ॥ एवं बटुर्वामनो ब्रह्मवर्चसतेजसा ब्रह्मर्षि-गणव्याप्तां सभामतिक्रम्याशोभत ॥ १८ ॥ ततो बटुर्वह्निं प्रदीप्य परिसमूह्य परिस्तीर्याभ्यर्च्य समिद्भिरजुहोत् ॥ १९ ॥ एतत्समये शुक्रेण प्रवर्तितैरश्वमेधैर्यजन्तं बलिं श्रुत्वा संपूर्णबलेन युक्तः पदे पदे गां नमयन् तत्र जगाम ॥२०॥ ततो नर्मदोत्तरे तीरे भृगुकच्छक्षेत्रे यज्ञं प्रवर्त-

१ भातिर्दीप्तिर्विभूषणानि आयुधानि च तैर्व्यक्तं यथा भवति तथा। २ श्रेष्ठः।

यन्तो भृगवः सूर्यमिव प्रकाशमानं दृष्ट्वा व्यतर्कयन् ॥२१॥ अहो क्रतुं दिदृक्षुः सूर्यः सनत्कुमारो वाऽऽयाति किम् ॥२२॥ एवं भृगुषु वितर्कयत्सु वामनश्छत्रकमण्डलू बिभ्रत् सन् मण्डपं विवेश ॥२३॥ सशिष्याः भृगुवः स्तं वामनं जटिलं मौञ्जीमेखलोपवीतमृगचर्मयुक्तं प्रविष्टं वीक्ष्योत्थाय प्रत्यगृह्णन् ॥ २४ ॥ २५ ॥ यजमानो बलिर्दर्शनीयं मनोरमं दृष्ट्वा तस्मै बटवे आसनं दत्त्वा ॥ २६ ॥ स्वागतेन नमस्कृत्य तत्पादौ

ते ऋत्विजो यजमानःसदस्या हतत्विषो वामनतेजसा नृप ॥ सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥२२॥ इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान् स वामनः ॥ छत्रं सदण्डं सजलं कमण्डलुं विवेश बिभ्रद्धयमेधवाटम् ॥२३॥ मौञ्ज्या मेखलयावीतमुपवीताजिनोत्तरम् ॥ जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥२४॥ प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः ॥ प्रत्यगृह्णन् समुत्थाय संक्षिप्तास्तस्य तेजसा ॥ २५ ॥ यजमानः प्रमुदितो दर्शनीयं मनोरमम् ॥ रूपानुरूपावयवं तस्मा आसनमाहरत् ॥ २६ ॥ स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः ॥ अवनिज्यार्चयामास मुक्तसङ्गंमनोरमम् ॥२७॥ तत्पादशौचं जनकल्मषापहं स धर्मविद् मूर्ध्न्यदधात् सुमंगलम् ॥ यद् देवदेवो गिरिशश्चन्द्रमौलिर्दधार मूर्ध्ना परया च भक्त्या ॥ २८ ॥ बलिरुवाच ॥ स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम ते ॥ ब्रह्मर्षीणां तपःसाक्षान्मन्ये त्वार्य वपुर्धरम् ॥२९॥ अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् ॥ अद्य स्विष्टः क्रतुरयं यद् भवानागतो गृहान् ॥ ३० ॥ अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः ॥ हतांहसो वार्भिरियं च भूरहो तथा पुनीता तनुभिः पदैस्तव ॥ ३१ ॥

क्षालयित्वा पूजयामास ॥ २७ ॥ जनकल्मषापहं तत्पादोदकं गङ्गारूपं भक्त्या मूर्ध्नि धृत्वाऽऽह ॥२८॥ बलिरुवाच ॥ हे ब्रह्मन् ! स्वागतम् तुभ्यं नमः । तव किं करवाणि । त्वां प्रत्यक्षं ब्रह्मर्षीणां तप एव मन्ये ॥ २९ ॥ अद्य नःपितरस्तृप्ताः कुलं च पावितम् । यत् त्वं नः गृहान् प्राप्तः ॥ ३० ॥ अद्य मेऽग्नयः सुहुताः । त्वत्पादैर्मे भूमिः पवित्रीकृता ॥ ३१ ॥

ह बटो ! यद्यद् वाञ्छसि तत् मत्तो गृहाण। गां सुवर्णं सर्वं हे साधो ! मत्तो गृहाण ॥३२॥ इति श्रीभा० चू० अष्टम० अष्टादशोऽध्यायः॥१८॥
ऊनविंशे तु हरिणा याचिते च पदत्रये। प्रतिश्रुते च बलिना जानन् भृगुरवारयत् ॥ १ ॥ दातुः स्तुतिः स्वयं तुष्टिरित्यादि प्रस्तुतोचितम्।
वक्तव्यमिति भिक्षूंस्तु शिक्षयन्नाह वामनः ॥ २ ॥ श्रीशुक उवाच ॥ एवं धर्मयुक्तं बलेर्वाक्यं श्रुत्वा प्रीतो वामन इदं जगाद ॥ १ ॥ वामन
उवाच। हे जनदेव ! तवैतद् वचः कुलोचितं सूनृतं धर्मयुक्तं चास्ति पारलौकिके धर्मे प्रह्लादश्च प्रमाणम् ॥२॥ अस्मिन् कुले कश्चित् कृपणो

यद्यद् बटो वाञ्छसि तत् प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये॥ गां काञ्चनं गुणवद्धाम मृष्टं तथाऽन्नपेयमुत वा विप्र-
कन्याम् ॥ ग्रामान् समृद्धांस्तुरगान् गजान् वा रथांस्तथाऽर्हत्तम संप्रतीच्छ ॥३२॥ इति श्रीभागव० म० अष्टम० बलि-
वामनसंवादे अष्टादशोऽध्यायः ॥१८॥ श्रीशुक उवाच ॥ इति वैरोचनेर्वाक्यं धर्मयुक्तं स सूनृतम् ॥ निशम्य भगवान्
प्रीतः प्रतिनन्द्येदमब्रवीत् ॥ १ ॥ श्रीभगवानुवाच ॥ वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम् ॥ यस्य
प्रमाणं भृगवः सांपराये पितामहः कुलवृद्धः प्रशान्तः ॥२॥ नह्येतस्मिन्कुले कश्चिन्निस्सत्त्वः कृपणः पुमान् ॥ प्रत्या-
ख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ॥ ३ ॥ न सन्ति तीर्थे युधि चार्थिनाऽर्थिताः पराङ्मुखा ये त्वमनस्विनो
नृप ॥ युष्मत्कुले यद्यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥ ४ ॥ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ॥
प्रतिवीरं दिग्विजये नाविन्दत गदायुधः ॥५॥ यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम् ॥ नात्मानं जयिनं
मेने तद्वीर्यं भूर्यनुस्मरन् ॥६॥ निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा ॥ हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः
॥ ७ ॥ तमायान्तं समालोक्य शूलपाणिं कृतान्तवत् ॥ चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥

निस्सत्त्वो न। ब्राह्मणाय ददामीत्युक्त्वा प्रत्याख्याताऽपि न ॥ ३ ॥ किंच दानकाले युद्धे च त्वत्कुलजाः पराङ्मुखाः न। यत्र प्रह्लादो
यशसा चन्द्र इव रेजे ॥ ४ ॥ यत्र जातो हिरण्याक्षो दिग्विजये प्रतियोद्धारं नाविन्दत ॥ ५ ॥ यं निर्जित्य विष्णुस्तत्पराक्रमं स्मरन् स्वं
जयिनं न मेने ॥ ६ ॥ ततो हिरण्यकशिपुर्भ्रातृवधं श्रुत्वा हरेः स्थानं जगाम ॥ ७ ॥ आयान्तं दैत्यं विलोक्य विष्णुश्चिन्तयामास ॥ ८ ॥

यतो यतोऽहं तत्रासौ मृत्युः अतोऽस्य हृदयं प्रवेक्ष्यामि ॥ ९ ॥ एवं निश्चित्य प्राणरन्ध्रेण रिपोः शरीरं विवेश ॥ १० ॥ दैत्यस्तत्र हरिमपश्यन् क्रुद्धो ननाद । ततः क्ष्मां दिशः खं विवरान् विष्णुं विचिन्वन् न ददर्श ॥११॥ एवमपश्यन्नाह । मद्भ्रातृहा विष्णुः यतः पुमान् नावर्तते तद् ब्रह्मैव गतः ॥१२॥ इह देहिनां मृत्युपर्यन्तं वैरानुबन्धः ॥१३॥ किञ्च तव पिता विरोचनो द्विजैर्याचितः सन् द्विजरूपधरेभ्यो देवेभ्यः

यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ॥ अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥९॥ एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेन्द्र ॥ श्वासानिलान्तर्हितसूक्ष्मदेहस्तत्प्राणरन्ध्रेण विविग्नचेताः ॥ १० ॥ स तन्निकेतंपरिमृश्य शून्यमपश्यमानः कुपितो ननाद ॥ क्ष्मां द्यां दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन् न ददर्श वीरः ॥ ११ ॥ अपश्यन्निति होवाच मयाऽन्विष्टमिदं जगत् ॥ भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् ॥ १२ ॥ वैरानुबन्ध एतावानामृत्योरिह देहिनाम् ॥ अज्ञानप्रभवो मन्युरहंमानोपबृंहितः ॥ १३ ॥ पिता प्रह्लादपुत्रस्ते तद्विद्वान्द्विजवत्सलः ॥ स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात् स याचितः ॥ १४ ॥ भवानाचरितान्धर्मानास्थितो गृहमेधिभिः ॥ ब्राह्मणैःपूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥१५॥ तस्मात् त्वत्तो महीमीषद् वृणेऽहं वरदर्षभात् ॥ पदानि त्रीणि दैत्येन्द्र संमितानि पदा मम ॥१६॥ नान्यत् ते कामये राजन्वदान्याज्जगदीश्वरात् ॥ नैनः प्राप्नोति वै विद्वान्यावदर्थपरिग्रहः ॥ १७ ॥ बलिरुवाच ॥ अहो ब्राह्मणदायाद वाचस्ते वृद्धसंमताः ॥ त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ॥ १८ ॥ मां वचोभिः समाराध्य लोकानामेकमीश्वरम् ॥ पदत्रयं वृणीते योऽबुद्धिमान् द्वीपदाशुषम् ॥ १९ ॥

स्वमायुर्ददौ ॥ १४ ॥ हे बले ! त्वं ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चारितान् धर्मानास्थितः ॥ १५ ॥ एवंभूतकुलोत्पन्नात्त्वत्तः ईषन्महीं मम पदा तुल्यानि त्रीणि पदानि वृणे ॥ १६ ॥ वदान्यान् त्वत्तोऽन्यत न कामये ॥१७॥ बलिरुवाच ॥ अहो ब्राह्मणपुत्र ! त्वं बालः स्वार्थं न वेत्सि तव वाचो वृद्धसंमताः ॥ १८ ॥ यो द्वीपदातारं मां वचोभिराराध्य पदत्रयं वृणीते स न बुधः ॥ १९ ॥

यतः पुमान् मां प्राप्य पुनरन्यस्माद्याचितुं नार्हति तस्माद् हे बटो ! वृत्तिकरीं भूमिं गृहाण ॥२०॥ वामन उवाच ॥ राजन् ! त्रैलोक्ये यावन्तो विषयाः सन्ति तेऽजितेन्द्रियं याचकं पूरयितुं न समर्थाः ॥ २१ ॥ किंच पदत्रयेण योऽसंतुष्टः स सखण्डेन द्वीपेनापि न तुष्यति ॥ २२ ॥ एवं वैन्यगयादिनृपाः अर्थकामैस्तृष्णान्तं न गताः इति श्रुतम् ॥ २३ ॥ यदृच्छया प्राप्तेन सन्तुष्टः सुखं वर्त्तते असंतुष्टस्तु न ॥२४॥ किंच पुंसोऽसन्तोषः संसृतिहेतुः संतोषस्तु मुक्तये स्मृतः ॥ २५ ॥ तथा यदृच्छालाभतुष्टस्य तेजो वर्द्धते असंतोषान्नश्यति ॥ २६ ॥ तस्मात् त्रिपद-

न पुमान् मामुपव्रज्य भूयो याचितुमर्हति ॥ तस्माद् वृत्तिकरीं भूमिं बटो कामं प्रतीच्छ मे ॥ २० ॥ श्रीभगवानुवाच ॥ यावन्तो विषयाः प्रेष्ठास्त्रिलोक्यामजितेन्द्रियम् ॥ न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप ॥ २१ ॥ त्रिभिः क्रमैरसंतुष्टो द्वीपेनापि न पूर्यते ॥ नववर्षसमेतेन सप्तद्वीपवरेच्छया ॥ २२ ॥ सप्तद्वीपाधिपतयो नृपाः वैन्यगयादयः ॥ अर्थैःकामैर्गता नान्तं तृष्णाया इति नः श्रुतम् ॥२३॥ यदृच्छयोपपन्नेन संतुष्टो वर्तते सुखम् ॥ नासंतुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः ॥ २४ ॥ पुंसोऽयं संसृतेर्हेतुरसंतोषोऽर्थकामयोः ॥ यदृच्छयोपपन्नेन संतोषो मुक्तये स्मृतः ॥२५॥ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्द्धते ॥ तत्प्रशाम्यत्यसंतोषादम्भसेवाशुशुक्षणिः ॥२६॥ तस्मात् त्रीणि पदान्येव वृणे त्वद्वरदर्षभात ॥ एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७ ॥ श्रीशुक उवाच ॥ इत्युक्तः स हसन्नाह वाञ्छातःप्रतिगृह्यताम् ॥ वामनाय महीं दातुं जग्राह जलभाजनम् ॥ २८ ॥ विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम् ॥ जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदांवरः ॥ २९ ॥ शुक्राचार्य उवाच ॥ एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः ॥ कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ३० ॥

मेव वृणे । एतावतैव तुष्टोऽहम् ॥ २७ ॥ श्रीशुक उवाच ॥ एवं निशम्य बलिर्हसन् जगाद । हे बटो ! वाञ्छातः प्रतिगृह्यताम् । एवमुक्त्वा वामनाय महीं दातुं जलपात्रं जग्राह ॥२८॥ तदा शुक्रो विष्णोश्चिकीर्षितं जानन् विष्णवे क्ष्मां प्रदास्यन्तं शिष्यं जगाद ॥२९॥ शुक्र उवाच । हे वैरोचने ! एष साक्षाद्विष्णुः देवानां कार्यसाधकःकश्यपाददित्यां जातः ॥ ३० ॥

१ प्राप्तैः । २ अग्निः ।

किंच त्वयाऽस्मै यत् प्रतिश्रुतं तत् साधु न मन्ये ॥३१॥ एष त्वत्तः स्थानमैश्वर्यादिकं चाच्छिद्येन्द्राय दास्यति ॥३२॥ अयं विश्वकायस्त्रिभिः पादैरिमान् लोकान् क्रमिष्यति । मूढ ! विष्णवे सर्वस्वं दत्त्वा कथं वर्तिष्यसे ॥३३॥ एकेन पादन्यासेन भूमिं स्वर्गं कायेन द्वितीयेन खं च क्रममाणस्य बटोस्तृतीयपादन्यासस्य क्व गतिः ॥३४॥ प्रतिज्ञातमप्रदातुस्तव नरके स्थितिं मन्ये॥३५॥ येन वृत्तिर्विपद्यते तद्दानं न योग्यं भवति यतो वृत्तिमतः पुरुषाद्दानं यज्ञस्तपः कर्म च भवति ॥३६॥ अपि च यः पुमान् स्ववित्तं धर्माय यशसेऽर्थाय कामाय स्वजनायेति पञ्चधा विभ-

प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता ॥ न साधु मन्ये दैत्यानां महानुपगतोऽन्वयः ॥ ३१ ॥ एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम् ॥ दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥ ३२ ॥ त्रिभिः क्रमैरिमाँल्लोकान्विश्वकायः क्रमिष्यति ॥ सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम् ॥३३॥ क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः ॥ खंच कायेन महता तार्तीयस्य कुतो गतिः ॥ ३४ ॥ निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम् ॥ प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥३५॥ न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते ॥ दानं यज्ञस्तपःकर्म लोके वृत्तिमतो यतः ॥३६॥ धर्माय यशसेऽर्थाय कामाय स्वजनाय च ॥ पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ॥३७॥ अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम ॥ सत्यमोमिति यत् प्रोक्तं यन्नेत्याहानृतं हि तत् ॥३८॥ सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते ॥ वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः ॥३९॥ तद्यथा वृक्ष उन्मूलश्शुष्यत्युद्वर्ततेऽचिरात् ॥ एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥४०॥ परा[1]ग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति ॥ यत्किंचिदोमिति ब्रूयात्तेन रिच्येत वै पुमान् ॥४१॥

जेत् स इहामुत्र च मोदते॥३७॥ऋग्वेदश्रुत्या सत्यानृतयोर्व्यवस्था प्रतिपादिता । वृत्तिसंकटादिष्वनृतमपि न निषिद्धमिति च । अत्रापि बह्वृचैर्गीतं शृणु । ओमिति सत्यं प्रोक्तं नेत्यनृतम् ॥३८॥ देहवृक्षस्य मूलमनृतम् । पुष्पफलं सत्यम् । अतो देहे नष्टे तन्न स्यात् ॥३९॥ यथोत्पाटितमूलो वृक्षः सद्यः शुष्यति पतति च एवं नष्टानृतो देहः शुष्येत् ॥ ४० ॥ तस्मादर्थिने यत्किंचिद्दास्यामीति ब्रूयात् तेन न्यूनो भवेत् ।

१ पराञ्चति दूरेऽर्थं गृहीत्वा व्रजतीति पराक् ।

किंच भिक्षवे सर्वं दास्यामीत्यङ्गीकुर्वतः स्वस्य भोगो न सिध्यति ॥ ४१ ॥ यो नित्यं मम किंचिदपि नास्ति सीदामीति ब्रूते स तेनानृतेन परेषामर्थानाकर्षति ॥४२॥ ननु तर्ह्यनृतमेव सर्वदा सेव्यम् । नेत्याह । सर्वं नेति ब्रूयात् स दुष्कीर्तिः श्वसन् मृतः । स्त्रीषु परिहासे विवाहे वृत्त्यर्थे प्राणसंकटे गोब्राह्मणार्थे कस्यचित् प्राप्तायां हिंसायामनृतं निन्द्यं न स्यात् ॥४३॥ इति श्रीभागवते चू० अष्टम० एकोनविंशोऽध्यायः ॥१९॥ विंशे त्वनृतभीतोऽसौ ज्ञात्वाऽपि कपटं हरेः ॥ ददावेव ततो विष्णुः सहसाऽवर्द्धतादभुतम् ॥१॥ श्रीशुक उवाच ॥ एवं कुलगुरुणोक्तो बलिः

भिक्षवे सर्वमोंकुर्वन्नालं कामेन चात्मने ॥ अथैतत्पूर्णमभ्यात्मं[1] यच्च नेत्यनृतं वचः ॥४२॥ सर्वं नेत्यनृतं ब्रूयात्स दुष्कीर्तिः श्वसन्मृतः ॥ स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसंकटे ॥ गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥४३॥ इति श्रीभागवते महा० अष्टम० वामनावतारे बलियाचनं नामैकोनविंशोऽध्यायः ॥१९॥ श्रीशुक उवाच ॥ बलिरेवं गृहपतिः कुलाचार्येण भाषितः ॥ तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम् ॥१॥ बलिरुवाच ॥ सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् ॥ अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् ॥२॥ स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ॥ प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥३॥ न ह्यसत्यात्परोऽधर्म इति होवाच भूरियम् ॥ सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥ नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् ॥ न स्थानच्यवनान्मृत्योर्यथा विप्रलम्भनात् ॥५॥ यद्यद्धास्यति लोकेऽस्मिन्संपरेतं धनादिकम् ॥ तस्य त्यागे निमित्तं किं विप्रस्तुष्येन्न तेन चेत् ॥ ६ ॥

क्षणं तूष्णीं भूत्वा प्राह ॥ १ ॥ बलिरुवाच । हे गुरो ! त्वया प्रोक्तोऽयं गृहमेधिनां धर्मः सत्यः ॥ २ ॥ अहो प्राह्लादिरहं दास्यामीति प्रतिज्ञाय वित्तलोभेन द्विजं कथं निराकरोमि ॥ ३ ॥ असत्यात् परोऽधर्मो न । निष्कपटं नरं विना सर्वं सोढुमलं मन्ये ॥ ४ ॥ अहं नरकाद् दारिद्र्यात् स्थानपतनाद् मृत्योरपि तथा न बिभेमि यथा विप्रावमानात् ॥ ५ ॥ विप्रस्तेनार्थेन दत्तेनापि न तुष्येच्चेत् तर्हि तस्य दाने किं फलम् । अतो याचितं देयम् ॥ ६ ॥

१ आत्मनोऽभिमुखमन्यस्यार्थमाकर्षतीत्यभ्यात्मम् ।

दध्यङ्शिबिप्रभृतयः साधवो दुस्त्यजैः प्राणैरपि भूतानां श्रेयः कुर्वन्ति किं पुनः पृथिव्यादिषु विचारः ॥ ७ ॥ यैर्दैत्यैरियं भूरुपभुक्ता तेषां लोकान् भोगांश्च कालो जग्रास न तु यशः अतः कीर्तिरेव साध्या ॥ ८ ॥ किंच युद्धे तनुत्यागिनः सुलभाः यथा तथा पात्रे प्राप्ते धनत्यागिनो न ॥ ९ ॥ अपि च शूरस्य दयालोः पुंसोऽर्थिनां कामपूरणेन यद् दैन्यं तद् भद्रमेव किं पुनर्भवादृशानां दानेन ॥ १० ॥ अतो भवन्तो यज्ञैर्यं यजन्ति स एष वरदो विष्णुर्वा शत्रुर्वाऽस्तु अस्मै क्षितिं दास्यामि ॥११॥ यद्यपि निरपराधं मां बध्नीयात् तथाऽपि भीतेन

श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः ॥ दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु॥७॥यैरियं बुभुजे ब्रह्मन्दैत्येन्द्रैरनिवर्तिभिः ॥ तेषां कालोऽग्रसील्लोकान्न यशोऽधिगतं भुवि ॥ ८ ॥ सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः॥ न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥ मनस्विनः कारुणिकस्य शोभनं यदर्थिकामोपनयेन दुर्गतिः ॥ कुतः पुनर्ब्रह्मविदां भवादृशां ततो बटोरस्य ददामि वाञ्छितम् ॥१०॥ यजन्ति यज्ञक्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः ॥ स एष विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने ॥ ११ ॥ यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ॥ तथाऽप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥१२॥ एष वा उत्तमश्लोको न जिहासति यद्यशः ॥ हत्वा मैनां हरेद्युद्धे शयीत निहतो मया ॥ १३ ॥ श्रीशुक उवाच ॥ एवमश्रद्धितं शिष्यमनादेशकरं गुरुः ॥ शशाप दैवप्रहितः सत्यसन्धं मनस्विनम् ॥ १४ ॥ दृढं पंडितमान्यज्ञः स्तब्धोऽस्यस्मदुपेक्षया ॥ मच्छासनातिगो यस्त्वमचिराद् भ्रश्यसे श्रियः ॥ १५ ॥ एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् ॥ वामनाय ददावेनामर्चित्वोदकपूर्वकम् ॥ १६ ॥

ब्रह्मतनुं रिपुं न हिंसिष्ये ॥ १२ ॥ यदि युद्धे मां हत्वा भूमिं हरेत् तथाऽपि यशो न नश्यति ॥ १३ ॥ श्रीशुक उवाच ॥ एवमनादेशकरं सत्यसन्धं शिष्यं गुरुः शशाप ॥ १४ ॥ हे बले ! पंडितमानी मदाज्ञायाः पराङ्मुखस्त्वम् । अतः शीघ्रं श्रियो भ्रश्यसे ॥ १५ ॥ एवं गुरुणा शप्तोऽपि सत्यान्न चलितो बलिर्वामनाय भूमिं ददौ ॥ १६ ॥

१ 'एव' इति पा० । गर्वितः ।

तदा विन्ध्यावलिर्हैमं जलपूर्णं कलशमानिन्ये ॥१७॥ ततः स्वयं यजमानो भगवतः श्रीमत्पादयुगं मुदा प्रक्षाल्य तज्जलं विश्वपावनं मूर्ध्नि दधौ अत्र विशेषो नृसिंहे—"यावदस्य बलिस्तोयं करे दातुमुपस्थितः। तावच्छुक्रस्तु कलशाज्जलधारां रुरोध ह। ततस्तु वामनः क्रुद्धः पवित्रेण नृपोत्तम। तद्रुद्धकलशाद्वारि तच्छुक्राक्षिं न्यवेधयत्" इति ॥१८॥ तदाऽसुरेन्द्रं स्वर्गे देवगन्धर्वादयस्तत्कर्म गृणन्तः सन्तः पुष्पैर्ववृषुः॥१९॥सहस्रशो दुन्दुभयो नेदुः। गन्धर्वादयो जगुः। अनेन बलिना शत्रवे जगत्त्रयं दत्तम्। इदं दुष्करं कृतम् ॥ २० ॥ एवं वदति तद्वामनं रूपमद्भुत-

विन्ध्यावलिस्तदाऽऽगत्य पत्नी जालकमालिनी ॥ आनिन्ये कलशं हैममवनेजन्यपां भृतम् ॥ १७ ॥ यजमानस्स्वयं तस्य श्रीमत्पादयुगं मुदा ॥ अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥१८॥ तदाऽसुरेन्द्रं दिवि देवतागणा गन्धर्वविद्याधरसिद्धचारणाः ॥ तत्कर्म सर्वेऽपि गृणन्त आर्जवं प्रसूनवर्षैर्ववृषुर्मुदाऽन्विताः ॥ १९ ॥ नेदुर्मुहुर्दुन्दुभयःसहस्रशो गन्धर्वकिंपूरुषकिन्नरा जगुः ॥ मनस्विनाऽनेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयम् ॥ २० ॥ तद्वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम्॥भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत ॥ २१ ॥ काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत् ॥ ददर्श विश्वं त्रिगुणं गुणात्मके भूतेन्द्रियार्थाशयजीवयुक्तम् ॥ २२ ॥ रसामचष्टाङ्घ्रितलेऽथ पादयोर्महीं महीध्रान्पुरुषस्य जंघयोः ॥ पतत्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मारुतमिन्द्रसेनः ॥ २३ ॥ सन्ध्यां विभोर्वाससि गुह्य ऐक्षत्प्रजापतीञ्जघने आत्ममुख्यान् ॥ नाभ्यां नभः कुक्षिषु सप्त सिन्धूनुरुक्रमस्योरसि चर्क्षमालाम् ॥ २४ ॥

मवर्धत। यत्र रूपे भूः खं स्वर्गो दिशः पातालानि समुद्रादयश्चासत ॥ २१ ॥ ततो बलिस्तस्य देहे विश्वं सकलात्मकं ददर्श ॥ २२ ॥ तच्च तस्याङ्घ्रितले रसातलम्। पादयोर्महीम्। जङ्घयोर्वृक्षान्। जान्वोः पक्षिणः। ऊर्वोर्मरुतः ॥२३॥ गुह्ये प्रजापतीन्। जघने दैत्यान्। नाभौ नभः। कुक्षिषु समुद्रान्। उरसि नक्षत्राणि ॥ २४ ॥

हृदि धर्मम् । स्तनयोः सत्यानृते । मनसि चन्द्रम् । वक्षसि श्रियम् ॥२५॥ भुजेषु लोकपालान् । कर्णयोर्दिशः । मूर्ध्नि द्यौः । केशेषु मेघान् । नासिकायां वायुम् । अक्ष्णोः सूर्यम् । मुखे अग्निम् ॥२६॥ वाण्यां वेदान् । जिह्वायां वरुणम् । भ्रुवोर्विधिनिषेधौ । पक्ष्मस्वहोरात्रम् । ललाटे क्रोधम् । अधरोष्ठे लोभम् ॥२७॥ रेतसि जलम् । पृष्ठेऽधर्मम् । छायासु मृत्युम् । हास्ये मायाम् । रोमस्वोषधीः ॥२८॥ नाडीषु नदीः । नखेषु

हृद्यङ्ग धर्मं स्तनयोर्मुरारेर्ऋतं च सत्यं मनस्यथेन्दुम् ॥ श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामानि समस्त-
रेफान् ॥२५॥ इन्द्रप्रधानानमरान्भुजेषु तत्कर्णयोःककुभो द्यौश्च मूर्ध्नि ॥ केशेषु मेघाञ्छ्वसनं नासिकायामक्ष्णोश्च सूर्यं
वदने च वह्निम् ॥ २६ ॥ वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ॥ अहश्च रात्रिं च पर-
मस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥ २७ ॥ स्पर्शे च कामं नृप रेतसोऽम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ॥
छायासु मृत्युं हसिते च मायां तनूरुहेष्वोषधिजातयश्च ॥ २८ ॥ नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणा-
नृषींश्च ॥ प्राणेषु गात्रे स्थिरजङ्गमानि सर्वाणि भूतानि ददर्श वीरः ॥ २९ ॥ सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः
कश्मलमापुरङ्ग ॥ सुदर्शनं चक्रमसह्यतेजो धनुऽश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३० ॥ पर्जन्यघोषो जलजः पाञ्चजन्यः
कौमोदकी विष्णुगदा तरस्विनी ॥ विद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ॥ सुनन्दमुख्या उपतस्थु-
रीशं पार्षदमुख्याः सहलोकपालाः ॥ ३१ ॥ स्फुरत्किरीटाङ्गदमीनकुण्डलः श्रीवत्सरत्नोत्तममेखलाम्बरैः ॥ मधुव्रत-
स्रग्वनमालया वृतो रराज राजन्भगवानुरुक्रमः ॥ ३२ ॥



शिलाः । बुद्धौ ब्रह्माणम् । इन्द्रियेषु देवगणान् ऋषींश्च । गात्रे स्थिरजङ्गमानि भूतानि ॥२९॥ एवं सर्वात्मनि त्रिभुवनं वीक्ष्य सर्वेऽसुराः कश्मलं प्रापुः ॥ ३० ॥ तदा सुदर्शनं शार्ङ्गधनुः कौमोदकी गदा विद्याधरसंज्ञोऽसिः शतचन्द्रयुक्तं चर्माक्षय्यसायकौ तूणौ सुनन्दमुख्याः पार्षदा ईशमुपतस्थुः ॥३१॥ हे राजन् ! तदोरुक्रमः किरीटाङ्गदमकरकुण्डलैः श्रीवत्सकौस्तुभमेखलाम्बरवनमालाभिर्युतो रराज ॥ ३२ ॥

ततस्त्रिविक्रमो बलेर्भूमिमेकेन पदा विचक्रमे। शरीरेण नभः। बाहुभिर्दिशः। द्वितीयेन पदा स्वर्गम्। तृतीयाय तदीयमण्वपि नावशिष्टम्॥२३॥ इति श्रीभागवते चूर्णिकायाम् अष्टमस्कन्धे विंशतितमोऽध्यायः ॥२०॥ एकविंशे पदा पूर्तिमिषेण बलिबन्धनम्। विष्णुना कृतमुत्कर्षं तस्य प्रथयितुं जने ॥१॥ श्रीशुक उवाच। अथ सत्यलोके प्राप्तमङ्घ्रिं वीक्ष्य ब्रह्मा मरीच्यादयः सनन्दनाद्याः योगिनश्च ॥१॥ वेदोपवेद नियम-

क्षितिं पदैकेन बलेर्विचक्रमे नभश्शरीरेण दिशश्च बाहुभिः॥ पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि॥ उरुक्रमस्याङ्घ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः ॥२३॥ इति श्रीभागवते म० अष्टम० विश्वरूपदर्शनंनाम विंशतितमोऽध्यायः ॥ २० ॥ श्रीशुक उवाच ॥ सत्यं समीक्ष्याब्जभवो नखेन्दुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् ॥ मरीचिमिश्रा ऋषयो बृहद्व्रताः सनन्दनाद्या नरदेव योगिनः॥१॥वेदोपवेदा नियमा यमान्वितास्तर्केतिहासाङ्गपुराण-संहिताः॥ये चापरे योगसमीरदीपितज्ञानाग्निना रन्धितकर्मकल्मषाः ॥ ववन्दिरे यत्स्मरणानुभावतः स्वायंभुवं धाम गता अकर्मकम्[1] ॥२॥ अथाङ्घ्रये प्रोन्नमिताय विष्णोरुपाहरत्पद्मभवोऽर्हणोदकम् ॥ समर्च्य भक्त्याऽभ्यगृणाच्छुचि-श्रवा यन्नाभिपङ्केरुहसंभवः स्वयम् ॥ ३ ॥ धातुः कमण्डलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेन्द्र ॥ स्वर्धुन्य-भून्नभसि सा पतती निमार्ष्टि लोकत्रयं भगवतो विशदेव कीर्तिः ॥४॥ ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः ॥ सानुगा बलिमाजह्रुः संक्षिप्तात्मविभूतये[2] ॥५॥ तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः ॥ धूपैर्दीपैः सुरभिभिर्लाजा-क्षतफलाङ्कुरैः ॥ ६ ॥ स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमाङ्कितैः ॥ नृत्यवादित्रगीतैश्च शङ्खदुन्दुभिनिस्स्वनैः ॥ ७ ॥

यमतर्केतिहासाङ्गपुराणसंहिताः एतेऽन्ये च तत्रागमन्। ततस्तच्चरणकमलं ववन्दिरे ॥ २ ॥ अथ विष्णोरङ्घ्रये पूजाद्रव्यमानीय भक्त्या समर्च्य ब्रह्माऽभ्यगृणात्॥३॥ ब्रह्मणः कमण्डलुजलं पादावनेजनपवित्रतया गङ्गा जाता। सा लोकत्रयं पवित्रयति॥४॥ततो ब्रह्मादयो लोकपालाः स्वनाथाय त्रिविक्रमाय बलिं दत्त्वा ॥५॥ तोयैः स्रग्भिर्गन्धपुष्पधूपदीपैः फलाङ्कुरैः ॥६॥ स्तुतिजयशब्दैर्नृत्यवादित्रगीतैः पूजयामासुः ॥७॥

---

१ कर्मभिरप्राप्यम्। २ यथापूर्वं वामनरूपेण स्थिताय।

तदा ऋक्षराजो जाम्बवान्भेरीनादैर्दिक्षु महोत्सवं घोषयन्प्रदक्षिणमकरोत् ॥ ८ ॥ अथ दैत्याः सर्वपृथिवीं त्रिपदयाच्ञामिषेण दृष्ट्वा क्रुद्धाः ऊचुः ॥९॥ अहो अयं ब्रह्मबन्धुर्न । तर्हि द्विजरूपधरो विष्णुर्देवकार्यं चिकीर्षति ॥ १० ॥ अनेन शत्रुरूपिणा सत्यव्रतस्य त्यक्तदण्डस्य दयावतो बलेः सर्वस्वं हृतम् ॥११॥१२॥ अतोऽस्य वधो धर्मः भर्तुः शुश्रूषणं च स्यात् । एवमुक्त्वा बलेः सेवका आयुधानि जगृहुः ॥१३॥ ते सर्वे शूलपट्टिशपाणयो वामनं हन्तुं प्राद्रवन् ॥१४॥ धावमानान् तान् दृष्ट्वा प्रहस्य विष्णुदूताः ॥१५॥ नन्दः सुनन्दो जयो विजयः प्रबलो बलः कुमुदः

जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः ॥ विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥८॥ महीं सर्वां हृतां दृष्ट्वा त्रिपद-
व्याजयाच्ञया ॥ ॥ ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ॥ ९ ॥ न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः ॥
द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ १० ॥ अनेन याचमानेन शत्रुणा बटुरूपिणा ॥ सर्वस्वं नो हृतं भर्तुर्न्य-
स्तदण्डस्य बर्हिषि ॥ ११ ॥ सत्यव्रतस्य सततं दीक्षितस्य विशेषतः ॥ नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः
॥ १२ ॥ तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः ॥ इत्यायुधानि जगृहुर्बलेरनुचरासुराः ॥ १३ ॥ ते सर्वे वामनं
हन्तुं शूलपट्टिशपाणयः ॥ अनिच्छतो बले राजन्प्राद्रवञ्जातमन्यवः ॥ १४ ॥ तानभिद्रवतो दृष्ट्वा दितिजानीकपा-
न्नृप ॥ प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १५ ॥ नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः ॥ कुमुदः
कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ॥ १६ ॥ जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः ॥ सर्वे नागायुतप्राणाश्चमूं ते
जघ्नुरासुरीम् ॥ १७ ॥ हन्यमानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः ॥ वारयामास संरब्धान्काव्यशापमनुस्मरन् ॥ १८ ॥
हे विप्रचित्ते हे राहो हे नेमे श्रूयतां वचः ॥ मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ १९ ॥

कुमुदाक्षो विष्वक्सेनो गरुडः ॥१६॥ जयन्तः श्रुतदेवः पुष्पदन्तः सात्वतः एते सर्वे नागायुतबलाः धृतायुधाः सन्तो दैत्यसेनां जघ्नुः ॥१७॥ अथ बलिः स्वकान्हन्यमानान्दृष्ट्वा शुक्रशापं स्मरन् तान्वारयामास ॥१८॥ हे विप्रचित्ते ! हे राहो ! हे नेमे ! मम वचः श्रूयतां यूयं मा युध्यध्वम् ॥१९॥

१ यज्ञे ।

यो भूतानां सुखदुःखोपपत्तये समर्थः तं कालं पौरुषैर्जेतुं समर्थो न भवति ॥२०॥ यः पूर्वं देवानामभवायासीत् स कालोऽद्य विपरीतो वर्तते ॥२१॥अयं जनो बलप्रधानबुद्धिदुर्गमन्त्रादिभिः सामाद्युपायैश्च कालं नातिक्रमते ॥२२॥ हे दैत्याः ! एते देवाः पूर्वं बहुशो जिताः।अधुना नः जित्वा नदन्ति ॥२३॥ यदि दैवं प्रसीदति तर्हि तान् जेष्यामः तावत् यूयं प्रतीक्षध्वम् ॥२४॥ श्रीशुक उवाच ॥ एवं बलेर्वचः श्रुत्वा दैत्यदा-

यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये ॥ तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ २० ॥ यो नो भवाय प्रागासी-दभवाय दिवौकसाम् ॥ स एव भगवानद्य वर्तते तद्विपर्ययम् ॥२१॥ बलेन सचिवैर्बुद्ध्या दुर्गैर्मन्त्रौषधादिभिः॥सामा-दिभिरुपायैश्च कालं नात्येति वै जनः ॥ २२ ॥ भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः ॥ दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदन्ति नः ॥ २३ ॥ एतान्वयं विजेष्यामो यदि दैवं प्रसीदति ॥ तस्मात्कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते ॥ २४ ॥ श्रीशुक उवाच ॥ पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः ॥ रसां निर्विविशू राजन्विष्णुपार्षदता-डिताः ॥ २५ ॥ अथ तार्क्ष्यसुतो ज्ञात्वा विराट्प्रभुचिकीर्षितम् ॥ बबन्ध वारुणैः पाशैर्बलिं सौत्येऽहनि क्रतौ ॥२६॥ हाहाकारो महानासीद्रोदस्योः सर्वतोदिशम् ॥ गृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ २७ ॥ तं बद्धं वारुणैः पाशैर्भगवानाह वामनः ॥ नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ॥ २८ ॥ पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर ॥ द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय ॥ २९ ॥ यावत्तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः ॥ यावद्वर्षति पर्जन्यस्तावती भूरियं तव ॥ ३० ॥

नवाः पार्षदैस्ताडिताः सन्तो रसातलं विविशुः ॥२५॥ अथ गरुडः प्रभुचिकीर्षितं ज्ञात्वा बलिं वारुणैःपाशैःसोमाभिषवदिने बबन्ध॥२६॥ तदा द्यावापृथिव्योर्महान् हाहाकारःआसीत्॥२७॥ततःपाशैर्बद्धं नष्टश्रियं बलिं वामनः आह॥२८॥ हे बले त्वया भूमेस्त्रीणि पदानि मे दत्तानि। तव सर्वा मही द्वाभ्यां क्रान्ता तृतीयं कल्पय ॥२९॥ यावत् सूर्यः किरणैस्तपति इन्दुर्नक्षत्रैः पर्जन्यो यावद्वर्षति तावती तव भूमिः ॥३०॥

एवं तव भूर्लोकः एकेन पदा क्रान्तः शरीरेण खं दिशो द्वितीयेन स्वर्लोकस्तव पश्यतः क्रान्तः॥३१॥तृतीयस्याभावात् प्रतिश्रुतमदातुस्ते नरक-वासः इष्टः अतः शुक्रेणानुमोदितः सन् नरकं विश॥३२॥यो याचकं प्रतिश्रुत्य न ददाति तस्य स्वर्गो दूर एव सोऽधः पतति॥३३॥किंच अभिमानिना त्वया ददामीति तिरस्कृतोऽहम्।अतः कतिचित् समाः निरयं भुङ्क्ष्व॥३४॥इति श्रीभागवते चू० अष्टम० एकविंशोऽध्यायः ॥२१॥
द्वाविंशे तु प्रसन्नः सन् प्रस्थाप्य सुतलं बलिम्।दत्त्वा वरान् हरिर्न्यूनं मत्वा तद्द्वारपोऽभवत्॥१॥समर्पिततनूवित्तनिर्मलाचलभक्तितः।छलितो

पदैकेन मया क्रान्तो भूर्लोकः खं दिशस्तनोः ॥ स्वर्लोकस्तु द्वितीयेन पश्यतस्ते स्वमात्मना ॥ ३१ ॥ प्रतिश्रुतमदातुस्ते निरिये वास इष्यते ॥ विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः ॥३२॥ वृथा मनोरथस्तस्य दूरे स्वर्गः पतत्यधः ॥ प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते ॥३३॥ विप्रलब्धो ददामीति त्वयाऽहं चाढ्यमानिना ॥ तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित्समाः ॥ ३४ ॥ इति श्रीभागवते महा० अष्टम० बलिनिग्रहो नामैकविंशोऽध्यायः ॥ २१ ॥ श्रीशुक उवाच ॥ एवं विप्रकृतो राजन्बलिर्भगवताऽसुरः ॥ भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥ १ ॥ बलिरुवाच ॥ यद्युत्तमश्लोक भवान्ममेरितं वचो व्यलीकं सुरवर्य मन्यते ॥करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥२॥ बिभेमि नाहं निरयात्पदच्युतो न पाशबन्धाद्व्यसनाद्दुरत्ययात् ॥ नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवादाद् भृशमुद्विजे यथा ॥३॥ पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् ॥ यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥४॥ त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः ॥ यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत् ॥ ५ ॥

बलिना चित्रं स्वमेवार्पयदच्युतः ॥ २ ॥ श्रीशुक उवाच ॥ एवं भगवता सत्त्वाच्चाल्यमानो बलिरविक्लवं वच आह ॥ १ ॥ बलिरुवाच ॥ हे भगवन् ! मम प्रतिज्ञानं मिथ्या न यतस्त्वया वामनरूपेण भिक्षित्वा रूपान्तरमाविष्कृतम् । अथापि त्वं यदि मिथ्या मन्यसे तर्हि सत्यं करोमि । मम शीर्ष्णि तृतीयं पदं कुरु ॥२॥ हे भगवन् ! अहं निरयदुःखात् पाशबन्धात् स्थानभ्रंशात् तव दण्डान्न बिभेमि यथाऽपकीर्तेः ॥ ३ ॥ श्रेष्ठैरर्पितं दण्डं साधु मन्ये यतो मातापित्रादयस्तद्दण्डं न कुर्वन्ति ॥ ४ ॥ त्वमसुराणां नः शत्रुच्छलेन वर्तमानो गुरुरसि ॥ ५ ॥

यस्मिन् त्वयि वैरानुबन्धेन बहवो दैत्याः सिद्धिं प्राप्ताः॥६॥तेन गुरुणा त्वया निगृहीतः पाशैर्बद्धश्च नातिव्रीडे न च व्यथे॥७॥मम पितामहः प्रह्लादस्तव भक्तानां संमतः हिरण्यकशिपुना हिंसां प्रापितोऽपि ॥ ८ ॥ आयुषोऽन्ते देहेन सर्वस्वापहारिभिः पुत्रैः संसृतिहेतुभूतया जायया केवलमायुषो व्यय एव ॥ ९ ॥ एवं देहादीनामसारतां निश्चित्य तव ध्रुवं चरणारविंदं प्रपेदे ॥ १० ॥ अतो बलात् त्याजितश्रीरहमपि दैवेन

यस्मिन्वैरानुबन्धेन रूढेन विबुधेतराः ॥ बहवो लेभिरे सिद्धिं यामु हैकान्तयोगिनः ॥ ६ ॥ तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा ॥ बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे ॥७॥ पितामहो मे भवदीयसंमतः प्रह्लाद आविष्कृतसाधुवादः ॥ भवद्विपक्षेण विचित्रवैशसं संप्रापितस्त्वत्परमः स्वपित्रा ॥ ८ ॥ किमात्मनाऽनेन जहाति योऽन्ततः किं रिक्थहारैः स्वजनाख्यदस्युभिः ॥ किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥९॥ इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम्॥ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्षक्षपणस्य सत्तम ॥१०॥ अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः॥ इदं कृतान्तान्तिकवर्ति जीवितं ययाऽध्रुवं स्तब्धमतिर्न बुध्यते ॥ ११ ॥ श्रीशुकउवाच ॥ तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ॥ आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ १२ ॥ तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम् ॥ प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं समैक्षत ॥ १३ ॥ तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत् ॥ ननाम मूर्ध्नाऽश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह ॥१४॥ तत्र हासीनमुदीक्ष्य सत्पतिं सुनन्दनन्दाद्यनुगैरुपासितम् ॥ उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविह्वलः ॥ १५ ॥

स्वस्यैव भाग्येन तवान्तिकं प्राप्तः यया श्रिया स्तब्धमतिः पुमान् मृत्युसंमुखं जीवितमध्रुवं न जानाति॥११॥श्रीशुक उवाच॥एवं बलेरुक्तवतः सतः पूर्णेन्दुरिव प्रह्लादः आजगाम॥१२॥ततः पाशबद्धो बलिस्तस्मै पूर्ववत् पूजां न चकार केवलं मूर्ध्ना ननाम॥१३॥ किंच स्वकृताहंकारादिरूपापराधस्य स्मरणेन स लज्जितो बभूव ॥ १४ ॥ ततः पुलकाश्रुविह्वलः प्रह्लादः स्वपार्षदैर्युक्तं वामनं वीक्ष्य शिरसा ननाम ॥ १५ ॥

प्रह्लाद उवाच ॥ हे भगवन्! अस्मै त्वयेन्द्रपदं दत्तं तद्धृतम्। तच्च शोभनं कृतम्।अहो त्वयैष श्रीमदाद् भ्रंशितः ॥ अयं महान् प्रसादः कृतः इत्यहं मन्ये ॥१६॥ यया श्रिया विद्वानपि मुह्यति। जगदीश्वराय कृपालवे तुभ्यं नमः ॥ १७ ॥ श्रीशुक उवाच ॥ प्रह्लादस्य शृण्वतः सतो ब्रह्मा भगवन्तं किंचिद् वक्तुं प्रवृत्तः। तदैव विन्ध्यावलिरपि वक्तुं प्रवृत्ता। तां संमानयन् स ब्रह्मा क्षणं तूष्णीं स्थितः॥१८॥ततःसा विन्ध्याव-लिर्बद्धं पतिं वीक्ष्याधोमुखी प्राञ्जलिः सती बभाषे ॥१९॥ विन्ध्यावलिरुवाच॥ हे ईश। इदं जगत् त्वया क्रीडार्थं कृतम्। तत्रान्ये कुबुद्धयः

मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो प्रह्लाद उवाच ॥ त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम्॥ यच्छ्रिय आत्ममोहनात् ॥ १६ ॥ यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा ॥ तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिललोकसाक्षिणे ॥१७॥ श्रीशुक उवाच ॥ तस्यानुशृण्वतो राजन्प्रह्लादस्य कृताञ्जलेः ॥ हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥१८॥ बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ॥ प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप ॥ १९ ॥ विन्ध्यावलिरुवाच ॥ क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर-ईश कुर्युः ॥ कर्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥२०॥ ब्रह्मोवाच॥भूतभावन भूतेश देवदेव जगन्मय ॥ मुञ्च न हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥ कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ॥ निवेदितं च सर्वस्वमात्माऽविक्लवया धिया ॥ २२ ॥

स्वाम्यं कुर्युः। अस्तु। हे स्वामिन्! अयं बलिरेवं वदति। किं तत्। मया ते लोकत्रयं दत्तम्। तृतीयपादाय देहं समर्प्य प्रतिश्रुतं सत्यं करो-मीत्येवं देहादिषु स्वाम्याविष्करणं ब्रुवन् कुबुद्धिर्निर्लज्जः यतस्त्वमेव सर्वस्वामी। अतो मन्दबुद्धिमेनं केवलं कृपया पालय ॥२०॥ ब्रह्मोवाच हे देवदेव। हृतसर्वस्वं बलिं मुञ्च मुञ्च निग्रहं नार्हति ॥ २१ ॥ अनेन तुभ्यं भूः सर्वस्वं देहश्च समर्पितानि ॥ २२ ॥



१ तस्यां सत्याम्।

अहो यस्य ते पादयोः सलिलमात्रं दत्त्वा जनः सद्गतिं याति तस्मै तुभ्यं बलिस्त्रिलोकीं दत्तवान् । स दुखं कथमर्हति ॥ २३ ॥ श्रीभगवानुवाच ॥ हे ब्रह्मन् ! अहं यमनुगृह्णामि तदर्थान् हरामि यतो द्रव्यमत्तः पुमाँल्लोकं मां चावमन्यते॥२४॥जीवात्मा निजकर्मभिर्नानायोनिषु भ्रमन्कदाचित्पौरुषीं तनुं व्रजेत्॥२५॥तत्र नृशरीरे जन्मकर्मविद्यैश्वर्यधनादिभिर्यदि स्तम्भो न भवेत्तर्हि मदनुग्रह एव ॥२६॥ कथं तर्हि ध्रुवादिभ्यः सम्पदो ददासि इति चेत्तत्राह । हे ब्रह्मन् ! मत्परः स जन्मकर्मविद्यैश्वर्यादिभिर्न मुह्यति । अतो भक्तेच्छया सम्पदो ददामि । अभक्तस्तु मुह्येत् ।

यत्पादयोरशठधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम्॥अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वाननविक्लवमनाः कथमार्तिमृच्छेत् ॥ २३ ॥ श्रीभगवानुवाच ॥ ब्रह्मन्यमनुगृह्णामि तद्विशो विधुनोम्यहम् ॥ यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ २४ ॥ यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः ॥ नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥२५॥ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ॥ यद्यस्य न भवेत्स्तम्भस्तत्रायं मदनुग्रहः ॥२६॥ मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः ॥ सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः ॥ २७ ॥ एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः॥अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥२८॥ क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ २९ ॥ गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ॥ छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ३० ॥ एष मे प्रापितः स्थानं दुष्प्रापममरैरपि ॥ सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ३१ ॥ तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ॥ यन्नाधयो व्याधयश्च क्लमस्तन्द्रा पराभवः ॥ नोपसर्गा निवसतां संभवन्ति ममेक्षया ॥ ३२ ॥

अतस्तदपहाररूपमेव तस्यानुग्रहं करोमि ॥ २७ ॥ किंच एष दानवेन्द्रो मे मायामजैषीत् । अत सीदन्नपि न मुह्यति ॥ २८ ॥ अपि च क्षीणधनः स्थानाद्भ्रष्टः शत्रुभिर्बद्धो ज्ञातिभिस्त्यक्तः ॥२९॥ गुरुणा शप्तोऽपि सत्यं न जहौ ॥ ३० ॥ एष सावर्णिमन्वन्तरे मदाश्रयादिन्द्रो भविता ॥ ३१ ॥ तावद्विश्वकर्मनिर्मितं सुतलमध्यास्तां यत्र क्लेशादयो न सन्ति ॥ ३२ ॥

१ विशः अर्थान् ।

हे बले ! त्वं ज्ञातिभिः सह सुतलं याहि तव भद्रम् ॥ ३३ ॥ यत्र त्वां लोकेशाः न पराजेष्यन्ते । त्वदाज्ञालङ्घिनो दैत्यान् मे चक्रं पीडयिष्यति ॥३४॥ सर्वतः सानुगं त्वां रक्षिष्ये । हे वीर ! तत्र मां भवान्द्रक्ष्यते ॥३५॥ दैत्यानां सङ्गात् ते आसुरो भावो मदनुभावं दृष्ट्वा सद्यो नश्यति ॥ ३६ ॥ इति श्रीभागवते चू० अष्टम० द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे बलौ याते सुतलं स पितामहे ॥ उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदते हरिः ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! एवं ब्रुवाणं भगवन्तं बद्धाञ्जलिः प्रेमाश्रुव्याप्तनेत्रो बलिर्गद्गदया गिराऽब्रवीत् ॥ १ ॥

इन्द्रसेन महाराज याहि भो भद्रमस्तु ते ॥ सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥ न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे ॥ त्वच्छासनातिगान्दैत्यांश्चक्रं मे सूदयिष्यति ॥ ३४ ॥ रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ॥ सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ॥३५॥ तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः ॥ दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनङ्क्ष्यति ॥ ३६ ॥ इति श्रीभागवते महापुराणे अष्टमस्कन्ध बलिवामनसंवादो नाम द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीशुक उवाच ॥ इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसम्मतः ॥ बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युद्गलो गद्गदया गिराऽब्रवीत ॥ १ ॥ बलिरुवाच ॥ अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः ॥ यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः ॥ विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥ एवमिन्द्राय भगवान् प्रत्यानीय त्रिविष्टपम् ॥ पूरयित्वाऽदितेः काममशासत्सकलं जगत् ॥ ४ ॥

बलिरुवाच । हे भगवन् । अहं तुभ्यं त्रिलोकीं दत्तवान् ! इदं तावदास्ताम् । प्रणामोऽपि सम्यक् न कृतः किन्तु तदर्थमुद्यममात्रं कृतम् । तेन च कर्मतपोदानादिकोटिभिरपि दुर्लभस्त्वदनुग्रहः सम्पादितः । अहो त्वत्प्रणामप्रभावः आश्चर्यम् ॥ २ ॥ श्रीशुक उवाच । एवमुक्त्वा बलिर्हरिं नत्वा ब्रह्माणं शिवं च नत्वा पाशैर्मुक्तः सन् दैत्यैः सह सुतलं विवेश ॥ ३ ॥ एवं भगवानिन्द्राय स्वर्गं दत्त्वाऽदितेर्मनोरथं पूरयित्वा सकलं जगत् पालयामास ॥ ४ ॥

ततो लब्धप्रसादं पौत्रं दृष्ट्वा प्रह्लादः इदं जगाद ॥५॥ प्रह्लाद उवाच ॥ हे भगवन् ! इमं प्रसादं ब्रह्मा शिवःश्रीश्च न लभते । कोऽसौ तमाह यस्त्वं नो दुर्गपालोऽसि ॥ ६ ॥ हे आश्रयप्रद ! ब्रह्मादयो यत्पादसेवनाद्विभूतीः सेवन्ते तस्य ते दाक्षिण्यदृष्टिमार्गं वयमुग्रजातयो दुर्वृत्ताः कस्माद् हेतोः प्रापिताः अहो चित्रम् ॥७॥ सर्वज्ञस्य सर्वात्मनः सर्वदृशस्तवैवमीहितम् । अहो चित्रं त्वं कल्पतरुस्वभावः सन् भक्तप्रियोऽसि ॥८॥ श्रीभगवानुवाच । हे वत्स प्रह्लाद ! त्वं पौत्रेण सह सुतलं याहि ॥९॥ तत्र गदापाणिं स्थितं मां नित्यं द्रक्ष्यसि ॥१०॥ श्रीशुक उवाच ॥ एवं

लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम् ॥ निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत ॥५॥ प्रह्लाद उवाच॥नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुतापरे ते ॥ यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरपि वन्दिताङ्घ्रिः॥६॥यत्पादपद्ममकरन्दनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभूतीः ॥ कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥ चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य ॥ सर्वात्मनः समदृशो विषमस्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥ श्रीभगवानुवाच ॥ वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलालयम् ॥ मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥९॥ नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् ॥ मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ १० ॥ श्रीशुक उवाच ॥ आज्ञां भगवतो राजन् प्रह्लादो बलिना सह ॥ बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥११॥ परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ॥ प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥१२॥ अथाहोशनसं राजन् हरिर्नारायणोऽन्तिके ॥ आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥ ब्रह्मन् संतनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ॥ यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥

भगवदाज्ञां गृहीत्वा बलिना सह प्रह्लादस्तथेत्युक्त्वा ॥ ११ ॥ आदिपुरुषं वामनं परिक्रम्य प्रणम्य तदनुज्ञातो रसातलं विवेश ॥ १२ ॥ अथ श्रीवामनो ब्रह्मवादिनां सदसि स्थितं शुक्रं जगाद ॥ १३ ॥ हे ब्रह्मन् ! शिष्यस्य यजमानस्य यज्ञे यन्न्यूनं तद् विस्तारय । यजमानं विना कथं भवेत् तत्राह । ब्राह्मणैर्दृष्टं समं भवेत् ॥ १४ ॥

शुक्र उवाच॥हे ईश ! यस्य यज्ञपुरुषः कर्मेश्वरस्त्वं तस्य कर्मवैषम्यं कुतः ॥१५॥ तव नामकीर्तनान्मन्त्रतन्त्रादिषु यन्न्यूनं तत् सर्वं पूर्णं भवति ॥१६॥ तथाऽपि तवाज्ञां करिष्यामि । त्वदाज्ञापालनमेव पुंसां श्रेयः॥१७॥श्रीशुक उवाच ॥ हे नृप ! शुक्रो भगवदाज्ञां स्वीकृत्य ऋत्विग्भिः सह यज्ञच्छिद्रं संदधे ॥ १८ ॥ हे राजन् ! एवं बलेर्महीं भिक्षित्वा भ्रात्रे इन्द्राय स्वर्गं ददौ ॥ १९ ॥ ततो ब्रह्मा देवर्षिपितृमनुकुमारशिव-

शुक्र उवाच ॥ कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ॥ यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः॥१५॥मन्त्रतस्तन्त्रत-श्छिद्रं देशकालार्हवस्तुतः ॥ सर्वं करोति निश्छिद्रं नामसंकीर्तनं तव ॥१६॥ तथाऽपि वदतो भूमन् करिष्याम्यनुशासनम् ॥ एतच्छ्रेयः परं पुंसां यत्तवाज्ञाऽनुपालनम् ॥१७॥ श्रीशुक उवाच ॥ अभिनन्द्य हरेराज्ञामुशना भगवानिति ॥ यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह ॥ १८ ॥ एवं बलेर्महीं राजन् भिक्षित्वा वामनो हरिः ॥ ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम् ॥१९॥ प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ॥ दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥ कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च ॥ लोकानां लोकपालानामकरोद्वामनं पतिम् ॥ २१ ॥ वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ॥ मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ २२ ॥ उपेन्द्रं कल्पयांचक्रे पतिं सर्वविभूतये ॥ तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥ ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम् ॥ लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥ प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः ॥ श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥२५॥ ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ॥ पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥



दक्षमरीच्यादिभिः सह ॥ २० ॥ कश्यपस्यादितेश्च प्रीत्यै सर्वेषां लोकपालादीनां पतिं वामनं चकार ॥ २१ ॥ सर्वेषामीश इन्द्रे सत्यपि वेददेवधर्मयशः श्रीमङ्गलव्रतादीनां पालने ॥ २२ ॥ वामनमुपेन्द्रं कल्पयांचक्रे । तदा सर्वभूतानि मुमुदिरे ॥ २३ ॥ ततः इन्द्रो लोकपालैः सह विमानेन वामनं पुरस्कृत्य तं स्वर्गं निन्ये ॥ २४ ॥ वामनभुजरक्षितः इन्द्रस्त्रिभुवनं प्राप्य मुमुदे ॥ २५ ॥ ततो ब्रह्मा शिवो भृग्वादयो मुनयः पितरः सिद्धादयः ॥ २६ ॥

एते सर्वे हरेस्तत्कर्म गायन्तोऽदितिं च प्रशंसन्तः स्वस्थानानि जग्मुः॥२७॥ हे नृप ! एवं श्रोतॄणां पापहरं त्रिविक्रमचरितं ते कथितम् ॥२८॥ अहो यथा भूरजोगणनमशक्यं तथा हरिगुणानुवर्णनम् ॥२९॥ यः इदं हरेरवतारचरितं शृणोति स परां गतिं याति ॥३०॥ दैवे पित्र्ये मानुषे वा कर्मणि क्रियमाणे यत्रेदं कीर्त्यते तत् कर्म सुकृतं विदुः ॥३१॥ इति श्रीभागवते चू० अष्टमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्विंशे प्रसङ्गेन मत्स्यरूपस्य शार्ङ्गिणः ॥ लीलोच्यते यतः सत्यव्रतरक्षा महार्णवे ॥१॥ तनुं तनुं विदश्यादौ निजैश्वर्यनिदर्शनात् ॥ मत्स्यं पृच्छति

सुमहत् कर्म तद्विष्णोर्गायन्तः परमाद्भुतम् ॥ धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥ सर्वमेतन्मयाऽऽख्यातं भवतः कुलनन्दन ॥ उरुक्रमस्य चरितं श्रोतॄणामघमोचनम् ॥२८॥ पारं महिम्न उरुविक्रमतो गृणानो यः पार्थिवानि विममे स रजांसि मर्त्यः ॥ किं जायमान उत जात उपैति मर्त्य इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥२९॥ य इदं देवदेवस्य हरेरद्भुतकर्मणः ॥ अवतारानुचरितं शृण्वन् याति परां गतिम् ॥ ३० ॥ क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ॥ यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥ इति श्रीभागवते महापुराणेऽष्टमस्कन्धे वामनावतारचरिते त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः ॥ अवतारकथामाद्यां मायामत्स्यविडम्बनम् ॥ १ ॥ यदर्थमदधाद् रूपं मात्स्यं लोकजुगुप्सितम् ॥ तमःप्रकृति दुर्मर्षं कर्मग्रस्तमिवेश्वरः ॥२॥ एतन्नो भगवन् सर्वं यथावद् वक्तुमर्हसि ॥ उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥३॥ सूत उवाच ॥ इत्युक्तो विष्णुरातेन भगवान् बादरायणिः ॥ उवाच चरितं विष्णोर्मत्स्यरूपेण यत् कृतम् ॥ ४ ॥ श्रीशुक उवाच ॥ गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ॥ रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥

पृथ्वीशो लीलया वामनोपमम् ॥२॥ राजोवाच ॥ हे भगवन् ! हरेराद्यां मत्स्यावतारकथां श्रोतुमिच्छामि ॥१॥ किंच इदं लोकनिन्द्यं मात्स्यं रूपं यदर्थं धृतम् ॥ २ ॥ एतद्यथावद् वक्तुमर्हसि ॥३॥ सूत उवाच ॥ हे शौनक ! राज्ञैवं पृष्टः शुको मत्स्यरूपेण यत् कृतं चरितं तत् प्राह ॥ ४ ॥ श्रीशुक उवाच ॥ गोविप्रदेवसाधूनां च रक्षामिच्छन् हरिरवतारं धत्ते ॥ ५ ॥

हरेर्नैन्ध्यत्वं परिहरति । उच्चनीचभूतेषु वायुरिव चरन् स निर्गुणत्वादुच्चनीचत्वं न भजते॥६॥अथ गतकल्पान्ते ब्रह्मनिद्रोद्भवो नैमित्तिको लयः आसीत्।तत्र भूरादयो लोकाः समुद्रे मग्नाः आसन्॥७॥तस्मिन् प्रलये प्राप्तनिद्रस्य ब्रह्मणो मुखतो निर्गतान् वेदान् हयग्रीवोऽसुरो जहार॥८॥ तज्ज्ञात्वा हरिर्मात्स्यं रूपं दधार ॥९॥ तत्र कश्चित् सत्यव्रतो नाम्ना राजर्षिस्तपस्तेपे ॥ १० ॥ योऽस्मिन् श्वेतवाराहकल्पे विवस्वतस्तनयः

उच्चावचेषु भूतेषु चरन् वायुरिवेश्वरः ॥ नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ॥६॥ आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ॥ समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥ ७ ॥ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ॥ मुखतो निस्सृतान् वेदान् हयग्रीवोऽन्तिकेऽहरत् ॥ ८ ॥ ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ॥ दधार शफरी-रूपं भगवान् हरिरीश्वरः ॥९॥ तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ॥ नारायणपरोऽतप्यत् तपः स सलिला-शनः ॥ १० ॥ योऽसावस्मिन् महाकल्पे तनयः स विवस्वतः ॥ श्राद्धदेव इति ख्यातो मनुत्वे हरिणार्पितः ॥ ११ ॥ एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥ तस्याञ्जल्युदके काचित् शफर्येकाऽभ्यपद्यत ॥ १२ ॥ सत्यव्रतोऽञ्जलि-गतां सह तोयेन भारत ॥ उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ १३ ॥तमाह साऽतिकरुणं महाकारुणिकं नृपम् ॥ यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ॥ कथं विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥ १४ ॥ तमात्म-नोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ॥ अजानन् रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥ तस्या दीनतरं वाक्य-माश्रुत्य स महीपतिः ॥ कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ १६ ॥ सा तु तत्रैकरात्रेण वर्धमाना कम-ण्डलौ ॥ अलब्ध्वाऽऽत्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥



श्राद्धदेव इति हरिणा मनुत्वे योजितः ॥११॥ एकदा कृतमालायां नद्यां जलतर्पणं कुर्वतः सत्यव्रतस्याञ्जल्युदके शफरी प्राप्ता ॥१२॥ स तां नदीतोये उत्ससर्ज ॥१३॥ सा तं नृपं जगाद । हे दीनवत्सल ! ज्ञातिघातिभ्यो भीतां मां कथं विसृजसे ॥ १४ ॥ राजा तद्दीनवाक्यं श्रुत्वा मत्स्यवपुर्धरं हरिमजानन् कलशजले तां शफरीं निधायाश्रमं निन्ये ॥ १५ ॥ १६ ॥ सैकरात्रेण कमण्डलौ वर्धमाना नृपमाह ॥ १७ ॥

हे नृप ! अहं कमण्डलौ वस्तुं नोत्सहे। विपुलं स्थानं कल्पय। यत्र सुखं निवसे ॥ १८ ॥ अतो मणिकस्थे जले तं मत्स्यं न्यधात्। तथाऽपि तत्र मुहूर्तेन हस्तत्रयमवर्धत ॥१९॥ एतदुदकं वस्तुं सुखं न। विपुलं स्थानं देहि। यतोऽहं त्वां शरणं गता ॥२०॥ ततस्तां गृहीत्वा सरोवरे प्राक्षिपत्। तदपि सरो व्याप्य महामत्स्योऽवर्धत ॥२१॥ हे राजन् ! इदं सरो मे स्वस्तये न। अतो मामशुष्कह्रदे निधेहि ॥२२॥ एवमुक्तः स यत्र यत्र जलाशये स्थापितवान् तत्र तत्र वर्धमानं मत्स्यं दृष्ट्वा समुद्रे प्राक्षिपत् ॥२३॥ क्षिप्यमाणो मत्स्यः इदमाह। हे वीर ! अत्र मां

नाहं कमण्डलावस्मिन् कृच्छ्रं वस्तुमिहोत्सहे ॥ कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥१८॥ स एनां तत आदाय न्यधादौदञ्चनोदके ॥ तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ १९ ॥ न म एतदलं राजन् सुखं वस्तुमुदञ्चनम् ॥ पृथु देहि पदं मह्यं यत्त्वाऽहं शरणं गता ॥२०॥ तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे ॥ तदावृत्यात्मना तोयं महामीनोऽन्ववर्धत॥२१॥नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः॥निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥२२॥इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि ॥ जलाशये संमितं तं समुद्रे प्राक्षिपज्झषम् ॥२३॥ क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ॥ अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि॥२४॥ एवं विमोहितस्तेन वदता वल्गुभारतीम् ॥ तमाह को भवानस्मान् मत्स्यरूपेण मोहयन् ॥२५॥ नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि च ॥ यो भवान् योजनशतमह्नाऽभिव्यानशे सरः ॥ २६ ॥ नूनं त्वं भगवान् साक्षाद्धरिर्नारायणोऽव्ययः ॥ अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥२७॥ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ॥ भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ २८ ॥

महाबलाः मकरादयः खादन्ति। इह त्यक्तुं नार्हसि ॥ २४ ॥ एवं मोहितो राजा मत्स्यं प्राह। मत्स्यरूपेण मोहयन् वञ्चकोऽसि ॥ २५ ॥ एवंवीर्यो जलचरः पूर्वं न दृष्टो न श्रुतः यस्त्वं दिनेन योजनशतं सरो व्याप्तवान् ॥ २६ ॥ त्वं नूनं साक्षाद् भगवान् भूतानामनुग्रहाय जलचर रूपं धत्से ॥ २७ ॥ अतो हे पुरुषश्रेष्ठ ! तुभ्यं नमः ॥ २८ ॥

तेऽवताराः भूतानां सुखकराः । त्वया यदर्थं रूपं धृतं तज्ज्ञातुमिच्छामि ॥ २९ ॥ हे कमलनेत्र ! देहाद्यभिमानिनां सतामितरेषां पादोपस-
र्पणं यथा मृषा भवेत्तथा तव पादोपसर्पणं मृषा न भवेत् ॥ ३० ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणं सत्यव्रतं मत्स्यवपुर्हरिराह ॥ ३१ ॥
श्रीभगवानुवाच ॥ हे नृप ! इतः ऊर्ध्वं सप्तमेऽहनि समुद्रे त्रैलोक्यं निमङ्क्ष्यति ॥ ३२ ॥ तस्मिन् प्रलयोदके त्रिलोक्यां लीयमानायां
सत्यां मत्प्रेरिता काचिन्नौस्त्वां प्राप्स्यति ॥ ३३ ॥ त्वं चौषधीः सर्वबीजानि गृहीत्वा सप्तर्षिभिः सह ॥ ३४॥ नावमारुह्य ऋषीणामेव तेजसै-

सर्वे लीलावतारास्ते भूतानां भूतिहेतवः ॥ ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥२९॥ न तेऽरविन्दाक्ष पदोपस-
र्पणं मृषा भवेत सर्वसुहृत्प्रियात्मनः ॥ यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि न ॥३०॥ श्रीशुक उवाच॥
इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये ॥ विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षुरेकान्तजनप्रियः प्रियम्
॥३१॥ श्रीभगवानुवाच॥ सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिंदम॥ निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥३२॥
त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा ॥ उपस्थास्यति नौः काचिद्विशाला त्वां मयेरिता ॥ ३३ ॥ त्वं ताव-
दोषधीः सर्वा बीजान्युच्चावचानि च ॥ सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥३४॥ आरुह्य महतीं नावं विचरिष्य-
स्यविक्लवः ॥ एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥३५॥ दोधूयमानां तां नावं समीरेण बलीयसा ॥ उपस्थितस्य
मे शृंगे निबध्नीहि महाहिना॥ ३६॥ अहं त्वामृषिभिः साकं सहनावमुदन्वति ॥ विकर्षन् विचरिष्यामि यावद् ब्राह्मी
निशा प्रभो ॥ ३७ ॥ मदीयं महिमानं च परं ब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥ ३८ ॥
श्रीशुक उवाच ॥ इत्थमादिश्य राजानं हरिरन्तरधीयत ॥ सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ३९ ॥



कार्णवे चरिष्यसि ॥ ३५ ॥ तत्र वायुवेगेन चञ्चलां नावं प्राप्तस्य मे शृङ्गे वासुकिना बध्नीहि ॥ ३६ ॥ अहं सप्तर्षिभिः साकं सनावं त्वां
विकर्षन् यावद् ब्राह्मी निशा तावद्विचरिष्यामि ॥ ३७ ॥ तदा तव प्रश्नैर्मयोक्तं मन्महिमानं त्वं वेत्स्यसि ॥ ३८ ॥ श्रीशुक उवाच ॥ इत्थं
राजानमादिश्य हरिरन्तर्दधे । स तं कालमन्ववैक्षत ॥ ३९ ॥

१ दृष्टवानसि ।

अथ राजा प्रागग्रान्दर्भानास्तीर्योदङ्मुखो हरेः पादौ चिन्तयन्निषसाद॥४०॥ततो वर्षद्भिर्मेघैर्वर्धमानः समुद्रो महीं प्लावयन् सन् ददृशे॥४१॥तदा सत्यव्रतो भगवदाज्ञां ध्यायन् तावन्नावं दृष्ट्वौषधिवीरुधः आदाय ऋषिभिः सह तामारुरोह ॥ ४२ ॥ ततः प्रीताः मुनयस्तमूचुः । हे राजन् केशवं ध्यायस्व संकटान्नः शं करिष्यति ॥४३॥ ततो राज्ञा ध्यातो हरिः प्रलयार्णवे एकशृङ्गधरो हैमो लक्षयोजनो मत्स्यः प्रादुर्बभूव॥४४॥

आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः ॥ निषसाद हरेः पादौ चिन्तयन्मत्स्यरूपिणः ॥ ४० ॥ ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीम् ॥ वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥ ध्यायन्भगवदादेशं ददृशे नावमागताम् ॥ तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ४२ ॥ तमूचुर्मुनयः प्रीता राजन्ध्यायस्व केशवम् ॥ स वै नः संकटादस्मादविता शं विधास्यति ॥४३॥ सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ॥ एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥४४॥ निबद्ध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ॥ वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥ राजोवाच ॥ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥ यदृच्छयेहोपसृता यदाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥४६॥ जनोऽबुधोऽयं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम् ॥ यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्याद्धृदयं स नो गुरुः ॥ ४७ ॥ यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः ॥ भजेत वर्णं निजमेष सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥

ततो राजा तस्य शृङ्गे वासुकिना नावं निबध्य हरिं तुष्टाव॥४५॥सत्यव्रत उवाच॥अविद्यया वेष्टिताः संसारपरिश्रमैः पीडिताः जनाः यदनुग्रहाद्यं प्राप्नुवन्ति स भवान् गुरुःसन् नो हृदयग्रन्थिं भिन्द्यात्॥४६॥स्वकर्मबद्धो जनः सुखेच्छया कर्म कुरुते तथाऽप्यसुखं प्राप्नोति। तां सुखेच्छारूपां नो हृदयग्रन्थिं भिन्द्यात् यतो भवान्परो गुरुः॥४७॥यस्य सेवया पुमान्मनोमलं त्यक्त्वा स्वरूपं भजते स ईशो नो गुरुर्भूयात्॥४८॥

देवादयो यत्प्रसादलेशमपि कर्तुं न समर्थाः तं त्वां शरणं प्रपद्ये॥४९॥यथान्धस्यान्धोऽग्रणीः तथाऽज्ञानिजनस्याविद्वान् गुरुर्न किमपि कर्तुं समर्थः । त्वं तु सर्वेन्द्रियाणां प्रकाशकः स्वगतिं बोद्धुमिच्छद्भिरस्माभिर्गुरुः कृतोऽसि ॥ ५० ॥ किंच अयं जनो जनस्यासतीं मतिमुपदिशति यया संसारं प्राप्नोति । त्वं तु अमोघज्ञानमुपदिशसि येन निजं पदं प्राप्नोति॥५१॥हे ईश्वर! त्वं सर्वलोकस्य गुरुः । तथाऽपि जनोऽन्धधीःसन् हृदि स्थितं त्वां न जानाति ॥५२॥ एवंभूतं त्वां शरणं प्रपद्ये हे भगवन् ! परमार्थप्रकाशकैर्वचोभिर्नो हृदयग्रन्थिं छिन्धि स्वं रूपं प्रकाशय

न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ॥ कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥४९॥अचक्षुरन्धस्य यथाऽग्रणीः कृतस्तथा जनस्याविदुषोऽबुधो गुरुः ॥ त्वमर्कदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम् ॥५०॥ जनो जनस्यादिशतेऽसतीं मतिं यया प्रपद्येत दुरत्ययं तमः ॥ त्वं त्वव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम् ॥५१॥ त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ॥ तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ ५२ ॥ तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय ॥ छिन्ध्यर्थदीपैर्भगवन्वचोभिर्ग्रन्थीन्हृदय्यान्विवृणु स्वमोकः ॥५३॥ श्रीशुक उवाच ॥ इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः॥मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत् ॥५४॥ पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम् ॥ सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥ अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयम् ॥ नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम् ॥५६॥ अतीतप्रलयापाय उत्थिताय सवेधसे ॥ हत्वाऽसुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः ॥ ५७ ॥ स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ॥ विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः ॥ ५८ ॥

॥५३॥ श्रीशुक उवाच ॥ एवं ब्रुवाणं नृपं मत्स्यरूपी हरिः प्रलयोदके विहरन् ॥५४॥ आत्मगुह्यं तत्त्वं मत्स्यपुराणमब्रवीत् ॥ ५५ ॥ नाविस्थितः स ऋषिभिः सह तदश्रौषीत् ॥५६॥ ततः प्रलयान्ते ब्रह्मण्युपस्थिते सति हरिर्हयग्रीवं हत्वा वेदानानीय ब्रह्मणे ददौ ॥ ५७ ॥ स तु सत्यव्रतोऽस्मिन्कल्पे हरेः प्रसादात् वैवस्वतो मनुर्जातः ॥ ५८ ॥

यो मत्स्यरूपिणो हरेः सत्यव्रतस्य च संवादं शृणुते स पातकान्मुच्यते ॥ ५९ ॥ अयं हरेरवतारः । तं दिने दिने यः कीर्तयेत् तस्य संकल्पाः सिध्यन्ति स परमां गतिं याति ॥ ६० ॥ किंच हे राजन् ! यः प्रलयोदके दैत्यं हत्वा दैत्येन ब्रह्मणो मुखेभ्यो नीतं श्रुतिगणं गृहीत्वा

सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ॥ संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात् ॥ ५९ ॥ अवतारो हरेर्योऽयं कीर्तयेदन्वहं नरः ॥ संकल्पास्तस्य सिध्यन्ति स याति परमां गतिम् ॥ ६० ॥ प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ॥ दितिजमकथयद्यो ब्रह्म सत्यव्रतानां तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यामष्टमस्कन्धे मत्स्यावतारचरितानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

सत्यव्रतस्य ऋषीणां च तत्त्वं विवव्रे तं मायारूपं मत्स्यं नतोऽस्मि ॥ ६१ ॥ इति श्रीभागवते महापुराणे चूर्णिकायामष्टमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥ आहत्यात्र स्कन्धे चूर्णिकाश्लोकसंख्याः ॥ ८५० ॥

समाप्तोऽयमष्टमः स्कन्धः

---

इदं पुस्तकं क्षेमराज-श्रीकृष्णदास श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गल्ली
खम्बाटा लैन ) स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणागारेऽङ्कयित्वा
प्रकाशितम् ।

# अथ सच्चूर्णिके श्रीमद्भागवते नवमस्कन्धः प्रारभ्यते

श्रीगणेशाय नमः ॥ त्रिगुणाष्टभिरध्यायैर्वैवस्वतसुतान्वयः।नवमे कृष्णसत्कीर्तिप्रसङ्गाय वितन्यते॥१॥एवमुक्तोऽष्टमस्कन्धे सद्धर्मः सत्त्वशो-धकः ॥ कर्तृपालकवक्रादिमन्वादीनां निरूपणैः ॥२॥ सद्धर्मशुद्धसत्त्वानामन्तरङ्गेशसत्कथा ॥ सूर्यसोमान्वयाख्यानैरधुना संगतोच्यते ॥३॥ त्रयोदशभिरध्यायैः सूर्यवंशोऽनुवर्ण्यते।एकादशभिरध्यायैः सोमवंशस्ततः परैः॥४॥तत्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये। सोमवंशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥५॥ राजोवाच । हे शुक ! त्वयोक्तानि सर्वमन्वन्तराणि श्रुतानि । तेषु हरेः कृतानि वीर्याणि च श्रुतानि ॥ १ ॥ योऽसौ

ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे ॥ वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च ॥ १ ॥ योऽसौ सत्यव्रतो नाम राजर्षिर्द्रविडेश्वरः ॥ ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया ॥ २ ॥ स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम् ॥ त्वत्तस्तस्य सुताश्चोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥ तेषां वंशं पृथग् ब्रह्मन् वंशानुचरितानि च ॥ कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥ ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये ॥ तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान् ॥ ५ ॥ सूत उवाच ॥ एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ॥ पृष्टः प्रोवाच भगवान् शुकः परमधर्मवित् ॥ ६ ॥ श्रीशुकउवाच ॥ श्रूयतां मानवो वंशः प्राचुर्येण परंतप ॥ ॥ न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥ ७ ॥ परावरेषां भूतानामात्मा यः पुरुषः परः ॥ स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किंचन ॥ ८ ॥

सत्यव्रतो नाम राजर्षिः स गतकल्पान्ते पुरुषसेवया ज्ञानं लब्धवान् ॥२॥ स एवाद्य विवस्वतः पुत्रत्वाद् वैवस्वतो मनुः । तस्येक्ष्वाकुमुख्याः दश पुत्राः इदं श्रुतम् ॥ ३ ॥ इदानीं तेषां वंशं वंशानुचरितानि च शुश्रूषमाणानां नो वद ॥ ४ ॥ किंच ये भूताः ये वर्तमानास्तेषां पराक्रमान् वद ॥ ५ ॥ सूत उवाच ॥ हे शौनक ! ब्रह्मवादिनां सदसि परीक्षिता पृष्टः शुक उवाच ॥ ६ ॥ श्रीशुक उवाच ॥ हे राजन् मानवो वंशः संक्षेपेण श्रूयताम् । विस्तरतो वर्षशतैरपि वक्तुं न शक्यते ॥ ७ ॥ हे राजन् ! कल्पान्ते नारायणः एक एवासीत् ॥ ८ ॥

---

१ प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ । तत्पुत्रपौत्रनप्तॄणामनुवृत्तं तदन्तरम् ॥ इति ४ स्कन्धे १ अ० ९श्लोके ।

तस्य नाभेः स्वर्णमयं कमलम्। तस्मिन् चतुर्मुखो ब्रह्मा जज्ञे ॥९॥ तस्य मनसो मरीचिः तस्य कश्यपः तस्माद् विवस्वान् ॥१०॥ तस्मात् संज्ञायां श्राद्धदेवो मनुः। तस्मात् श्रद्धायां दश पुत्राः ॥११॥ ते च इक्ष्वाकुः १, नृगः २, शर्यातिः३, दिष्टः४, धृष्टः,५, करूषकः६, नरिष्यन्तः ७, पृषध्रः ८, नभगः ९, कविः १०॥१२॥ एषां पुत्राणामुत्पत्तेः प्रागप्रजस्य मनोः प्रजार्थं वसिष्ठो मित्रावरुणयोरिष्टिं चकार ॥ १३ ॥ तदा

मरीचिर्मनसस्तस्य
तस्य नाभेः समभवत् पद्मकोशो हिरण्मयः ॥ तस्मिन् जज्ञे महाराज स्वयंभूश्चतुराननः ॥ ९ ॥ मरीचिर्मनसस्तस्य
जज्ञे तस्यापि कश्यपः ॥ दाक्षायण्यां ततोऽदित्यां विवस्वानभवत् सुतः ॥ १० ॥ ततो मनुः श्राद्धदेवः संज्ञायामास
भारत ॥ श्रद्धायां जनयामास दश पुत्रान्स आत्मवान् ॥ ११ ॥ इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ॥ नरिष्यन्तं
पृषध्रं च नभगं च कविं विभुः ॥१२॥ अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान्किल ॥ मित्रावरुणयोरिष्टिं प्रजार्थमकरो-
त्प्रभुः ॥१३॥ तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ॥ दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता[1] ॥१४॥ प्रेषितोऽध्व-
र्युणा होता ध्यायंस्तत्[2]सुसमाहितः ॥ हविषि व्यचरत् तेन वषट्कारं गृणन्द्विजः ॥१५॥ होतुस्तद्व्यभिचारेण कन्येला
नाम साऽभवत् ॥ तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम् ॥१६॥ भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् ॥
विपर्ययमहो[3] कष्टं मैवं स्याद् ब्रह्मविक्रिया ॥१७॥ यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः ॥ कुतः संकल्पवैषम्य-
मनृतं[4] विबुधेष्विव ॥१८॥ तन्निशम्य वचस्तस्य भगवान्प्रपितामहः ॥ होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥१९॥



श्रद्धा नाम मनोः पत्नी होतारं प्रति मम कन्या भवतु इति ययाचे ॥१४॥ अध्वर्युणा प्रेषितो होता तया प्रार्थितं ध्यायन्नयजत् ॥१५॥ तद् होतुर्मन्त्रव्यभिचारेणेला नाम कन्या जाता। मनुस्तां कन्यां दृष्ट्वा गुरुं जगाद ॥१६॥ हे गुरो ! इदं विपरीतं किं जातम्। ब्रह्मविक्रियैवं मा स्यात्। अहो कष्टम् ॥१७॥ यूयं मन्त्रविदो भवथ। संकल्पवैषम्यं कुतः ॥१८॥ ततो वसिष्ठस्तद्वचो निशम्य होतुर्व्यतिक्रमं ज्ञात्वोवाच ॥१९॥

---

१ पय एव नियतः आहारो यस्याः सा। २ 'यत्तया' इ० पा०। ३ विपर्यासम्। ४ मन्त्रान्यथात्वम्।

हे मनो! होतुर्व्यभिचारतः इदं संकल्पविपरीतं जातम्। तथाऽपि तव पुत्रार्थं स्वतेजसा साधयिष्ये॥२०॥इत्युक्त्वा वसिष्ठ इलायाः पुंस्त्वकाम्यया ऽऽदिपुरुषं तुष्टाव ॥ २१ ॥ तदा प्रसन्नो हरिरिलामेव सुद्युम्नं चकार ॥ २२ ॥ स सुद्युम्न एकदा तुरगमारुह्य प्रधानादिभिः सह मृगयां गतः सन् ॥ २३ ॥ धनुर्बाणं गृहीत्वोत्तरां दिशम् ॥ २४ ॥ मेरोरधस्ताद्वनं विवेश, यत्रोमया सह शिवो रममाणः आस्ते ॥ २५ ॥ सुद्युम्नस्तस्मिन् प्रवि-

एतत्संकल्पवैषम्यं होतुस्ते व्यभिचारतः ॥ तथाऽपि साधयिष्ये ते सुप्रजस्त्वं स्वतेजसा ॥२०॥ एवं व्यवसितो राजन् भगवान् सुमहायशाः ॥ अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया ॥२१॥ तस्मै कामवरं तुष्टो भगवान्हरिरीश्वरः ॥ ददाविलाऽभवत्तेन सुद्युम्नः पुरुषर्षभः ॥२२॥ स एकदा महाराज विचरन् मृगयां वने ॥ वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥२३॥ प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान्॥दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥२४॥ स कुमारो वनं मेरोरधस्तात्प्रविवेश ह ॥ यत्रास्ते भगवान् रुद्रो रममाणः सहोमया ॥२५॥ तस्मिन् प्रविष्ट एवासौ सुद्युम्नः परवीरहा॥ अपश्यत् स्त्रियमात्मानमश्वं च वडवां नृप ॥ २६ ॥ तथा तदनुगाःसर्व आत्मलिङ्गविपर्ययम् ॥ दृष्ट्वा विमनसोऽभूवन् वीक्षमाणाः परस्परम् ॥ २७ ॥ राजोवाच ॥ कथमेवं गुणो देशः केन वा भगवन्कृतः ॥ प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥२८॥ श्रीशुक उवाच ॥ एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः ॥ दिशो वितिमिराभासाः कुर्वन्तः समुपागमन् ॥२९॥ तान् विलोक्याम्बिका देवी विवासा व्रीडिता भृशम् ॥ भर्तुरङ्कात्समुत्थाय नीवीमाश्वथ पर्यधात् ॥३०॥ ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः ॥ निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥३१॥

ष्टमात्मानं स्त्रियमश्वं च वडवां ददर्श ॥२६॥ तथा तत्प्रधानादयः सर्वे आत्मदेहविपर्ययं दृष्ट्वा परस्परं वीक्षमाणाः सन्तः खिन्नाः बभूवुः॥२७॥ राजोवाच ॥ कथमेवंगुणो देशः। केन वा कृतः। एतत्कौतुकं नो वद ॥ २८ ॥ श्रीशुक उवाच ॥ एकदा ऋषयो गिरीशं द्रष्टुं तत्र जग्मुः ॥ २९ ॥ तान्दृष्ट्वा विवस्त्रा पार्वती लज्जिता सती भर्तुरुत्सङ्गादुत्थाय वस्त्रं पर्यधात् ॥ ३० ॥ ऋषयोऽपि क्रीडतोस्तयोः प्रसङ्गं दृष्ट्वा

---

१ कवची। २ विगतं तिमिरमाभासश्चान्यस्य यासु ताः।

निवृत्ताः सन्तो नरनारायणाश्रमं जग्मुः ॥३१॥ तदा शिवः प्रियायाः प्रियकाम्यययाऽऽह । एतत्स्थानं प्रति यः प्रविशेत्स योषिद्भवेत् ॥३२॥ तदूर्ध्वं पुरुषास्तद्वनं वर्जयन्ति । अथो इला कन्या अनुचरीभिः सह वनाद्वनं चचार ॥ ३३ ॥ ततो बुधः स्वाश्रमसमीपे चरन्तीं प्रमदोत्तमां मां वीक्ष्य कामितवान् ॥३४॥ साऽपि बुधं पतिं चकमे । तस्यां बुधः पुरूरवसं पुत्रं जनयामास ॥३५॥ एवं स्त्रीत्वं प्राप्तः सुद्युम्नो वसिष्ठं सस्मार ॥३६॥ ततो वसिष्ठस्तस्य पुंस्त्वमिच्छन्शंकरमाराधयामास ॥३७॥ स शिवो वसिष्ठाय तुष्टः सन् स्वां वाचं सत्यां कुर्वन् तत्प्रियं च कुर्वञ्जगाद ॥३८॥

तदिदं भगवानाह प्रियायाः प्रियकाम्यया ॥ स्थानं यः प्रविशेदेतत्स वै योषिद्भवेदिति ॥ ३२ ॥ तत ऊर्ध्वं वनं तद्वै पुरुषा वर्जयन्ति हि ॥ सा चानुचरसंयुक्ता विचचार वनाद्वनम् ॥ ३३ ॥ अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् ॥ स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान्बुधः ॥३४॥ साऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ॥ स तस्यां जनयामास पुरूरवसमात्मजम् ॥३५॥ एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ॥ सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम ॥३६॥ स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः ॥ सुद्युम्नस्याशयन्पुंस्त्वमुपधावत शंकरम् ॥ ३७ ॥ तुष्टस्तस्मै स भगवानृषये प्रियमावहन् ॥ स्वां च वाचमृतां कुर्वन्निदमाह विशांपते ॥ ३८ ॥ मासं पुमान्स भविता मासं स्त्री तव गोत्रजः ॥ इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ ३९ ॥ आचार्यानुग्रहात्कामं लब्ध्वा पुंस्त्वं व्यवस्थया ॥ पालयामास जगतीं नाभ्यनन्दन्स्म तं प्रजाः ॥४०॥ तस्योत्कलो गयो राजन्विमलश्च सुतास्त्रयः ॥ दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥४१॥ ततः परिणते काले प्रतिष्ठानपतिः प्रभुः ॥ पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ ४२ ॥

इति श्रीभागवते महापुराणे नवमस्कन्धे इलोपाख्याने सुद्युम्नस्य स्त्रीपुंस्त्वयोः प्राप्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥

हे वसिष्ठ ! अयं मासं पुमान्मासं स्त्री भविता । इत्थं व्यवस्थया सुद्युम्नो मेदिनीं पालयतु ॥३९॥ एवं गुरोः प्रसादात्पुंस्त्वं लब्ध्वा भूमिं पालयामास । तं प्रजाः नाभ्यनन्दन् ॥४०॥ तस्योत्कलो गयो विमलः एते त्रयः पुत्राः दक्षिणमार्गगोप्तारो बभूवुः ॥४१॥ ततः प्रतिष्ठानपतिस्सुद्युम्नः पुरूरवसे पुत्राय राज्यं दत्त्वा वनं जगाम ॥४२॥ इति श्रीभागवते चूर्णिकायां नवमस्कन्धे सुद्युम्नस्य स्त्रीपुंस्त्वप्राप्तिर्नाम प्रथमोऽध्यायः ॥ १ ॥

द्वितीये मनुपुत्राणां द्वावपुत्रौ विरागतः ॥ करूषकादिपञ्चानां वंशानाह लघुक्रमात् ॥ १ ॥ श्रीशुक उवाच ॥ एवं सुद्युम्ने गते सति श्राद्धदेवो मनुः पुत्रार्थं यमुनायां शतवर्षं तपस्तेपे ॥१॥ ततो मनुरपत्याय हरिं यजमानः पूर्वोक्तान् दश पुत्रान् लेभे ॥ २ ॥ तत्राष्टमः पृषध्रस्तु गुरुणा गोपालः कृतः । स खड्गपाणिः सन् गाः पालयामास ॥३॥ एकदा निशि मेघे वर्षति सति गोशालायां व्याघ्रः प्राविशत् । तदा भीताः गावो व्रजे बभ्रमुः ॥४॥ तदा व्याघ्रः एकां जग्राह । सा भयातुरा चुक्रोश । तदा पृषध्रस्तद्रुदितं श्रुत्वा॥५॥खड्गं गृहीत्वा व्याघ्रशङ्कया कपिलायाः

श्रीशुक उवाच ॥ एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ॥ पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥१॥ ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ॥ इक्ष्वाकुपूर्वजान् पुत्रान् लेभे स्वसदृशान् दश॥२॥ पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ॥ पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥३॥ एकदा प्राविशद् गोष्ठं शार्दूलो निशि वर्षति ॥ शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥४॥ एकां जग्राह बलवान् सा चुक्रोश भयातुरा ॥ तस्यास्तत्क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह॥५॥खड्गमादाय तरसा प्रलीनोडुगणे निशि ॥ अजानन्नहनद् बभ्रोः शिरः शार्दूलशङ्कया॥६॥ व्याघ्रोऽपि वृक्णश्रवणो निस्त्रिंशाग्राहतस्ततः ॥ निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन्॥७॥मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ॥ अद्राक्षीत्स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥ तं शशाप कुलाचार्यः कृतागसमकामतः ॥ न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भवितामुना ॥९॥ एवं शप्तस्तु गुरुणा प्रत्यगृह्णात्कृताञ्जलिः ॥ अधारयद् व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥ वासुदेवे भगवति सर्वात्मनि परेऽमले ॥ एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्समः ॥११॥

गोः शिरो जहार ॥६ ॥ व्याघ्रोऽपि छिन्नकर्णो भीतः सन् पथि रक्तं त्यजन् निश्चक्राम ॥७॥पृषध्रो व्याघ्रं हतं मन्यमानः प्रातःकाले स्वहतां गां दृष्ट्वा दुःखितो जातः ॥ ८ ॥ तदा स गुरुः पृषध्रं शशाप । हे पृषध्र । अनेन कर्मणा त्वं शूद्रो भव ॥ ९ ॥ एवं गुरुणा शप्तः स शापं प्रगृह्य ब्रह्मचर्यं मुनिप्रियं व्रतं दधार ॥ १० ॥ स वासुदेवे मनः समाधाय सर्वभूतसमः ॥ ११ ॥

मुक्तसङ्गः शान्तात्मा यदृच्छयोपपन्नेन स्ववृत्तिं कल्पयन् ॥ १२ ॥ ज्ञानतृप्तो जडान्धबधिराकृतिः सन् महीं विचचार ॥ १३ ॥ एवं वने भ्रमन् दावाग्निना दग्धदेहो ब्रह्म प्राप ॥ १४ ॥ ततः कनिष्ठो दशमः कविर्विषयेषु निस्स्पृहः सन् राज्यं बन्धूंश्च हित्वा वनं गत्वा परं पुरुषं प्राप्तः॥१५॥अथ षष्ठपुत्रात् कारूषाः क्षत्रियाः ते उत्तरदेशपालकाः आसन्॥१६॥ततः पञ्चमाद् धृष्टाद् धाष्टर्यं क्षत्रं जातं ब्राह्मणत्वं प्राप्तम् । ततो द्वितीयस्य नृगस्य पुत्रः सुमतिः । ततो भूतज्योतिः । तस्माद् वसुः ॥ १७ ॥ तस्य प्रतीकः । तस्मादोघवान् ओघवती कन्या च । तां

विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः ॥ यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥ १२ ॥ आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ॥ विचचार महीमेतां जडान्धबधिराकृतिः ॥१३॥ एवं वृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ॥ तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥ १४ ॥ कविः कनीयान् विषयेषु निस्स्पृहो विसृज्य राज्यं सह बन्धुभिर्वनम् ॥ निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः ॥ १५ ॥ करूषान्मानवादासन् कारूषाः क्षत्रजातयः ॥ उत्तरापथगोप्तारो ब्रह्मण्यां धर्मवत्सलाः ॥ १६ ॥ धृष्टाद् धाष्टर्यमभूत् क्षत्रं ब्रह्मभूयं गतं क्षितौ ॥ नृगस्य वंशः सुमतिर्भूतज्योतिस्ततो वसुः ॥ १७ ॥ वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्पिता ॥ कन्या चोघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥ चित्रसेनो नरिष्यन्ताद् दक्षस्तस्य सुतोऽभवत् ॥ तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥ १९ ॥ वीतिहोत्रस्त्विन्द्रसेनात् तस्य सत्यश्रवा अभूत् ॥ उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥ ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत् सुतः ॥ कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥ ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप ॥ नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥

सुदर्शनः उवाह । ओघवतः पुत्रः ओघवान्॥१८॥ततः सप्तमान्नरिष्यन्ताच्चित्रसेनः । ततो दक्षः । तस्य मीढ्वान् । ततः कूर्चः । तत्पुत्रःइन्द्रसेनः ॥१९॥ इन्द्रसेनाद् वीतिहोत्रः । तस्य सत्यश्रवाः । ततः उरुश्रवाः ! तस्माद् देवदत्तः ॥२०॥ ततोऽग्निवेश्यो नाम । स एव कानीनो जातूकर्ण्य इति ॥ २१ ॥ तस्माद् ब्रह्मकुलं जातम् । अथ चतुर्थो दिष्टः तद्वंशं शृणु ॥ २२ ॥

दिष्टान्नाभागः स च कर्मणा वैश्यतां गताः । तत्पुत्रो भलन्दनः । तस्य वत्सप्रीतिः ॥२३॥ तस्य प्रांशुः । ततः प्रमतिः । तस्य खनित्रः । तस्य चाक्षुषः ततो विविंशतिः ॥२४॥ तस्य रम्भः । ततः खनिनेत्रः । तस्य धार्मिकः । तस्य करन्धमः ॥२५॥ ततोऽविक्षित् । तत्पुत्रो मरुत्तः । स चक्रवर्ती जातः । संवर्तो योगी तमयाजयत् ॥२६॥ यस्य यज्ञ इवान्यस्य यज्ञो न जातः । तस्य यज्ञे सर्वं हिरण्मयमासीत् ॥ २७ ॥ यस्य यज्ञे सोमदानेनेन्द्रो दक्षिणाभिर्द्विजातयोऽन्ये च हर्षं प्रापुः ॥२८॥ मरुत्तस्य दमः । ततो राज्यवर्धनः । तस्य सुधृतिः । ततो नरः ॥२९॥ तत्पुत्रः

नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ॥ भलन्दनः सुतस्तस्य वत्सप्रीतिर्भलन्दनात् ॥२३॥ वत्सप्रीतेः सुतः प्रांशुस्तत्सुतं प्रमतिं विदुः ॥ खनित्रः प्रमतेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥२४॥ विविंशतिसुतो रम्भः खनिनेत्रोऽस्य धार्मिकः ॥ करन्धमो महाराज तस्यासीदात्मजो नृपः ॥ २५ ॥ तस्यावीक्षित्सुतो यस्य मरुत्तश्चक्रवर्त्यभूत् ॥ संवर्त्तोऽयाजयद्यं वै महायोग्यङ्गिरस्सुतः ॥ २६ ॥ मरुत्तस्य यथा यज्ञो न तथाऽन्यस्य कश्चन ॥ सर्वं हिरण्मयं त्वासीद्यत्किंचिच्चास्य शोभनम् ॥ २७ ॥ अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ मरुतः परिवेष्टारो विश्वे देवाः सभासदः ॥ २८ ॥ मरुत्तस्य दमः पुत्रस्तस्यासीद्राज्यवर्धनः ॥ सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥ तत्सुतः केवलस्तस्माद् बन्धुमान्वेगवांस्ततः ॥ बन्धुस्तस्याभवद्यस्य तृणबिन्दुर्महीपतिः ॥३०॥ तं भेजेऽलम्बुषा देवी भजनीयगुणालयम् ॥ वराऽप्सरा यतः पुत्राः कन्या चेडविडाऽभवत् ॥३१॥ तस्यामुत्पादयामास विश्रवा धनदं सुतम् ॥ प्रादाय विद्यांपरमामृषिर्योगेश्वरात्पितुः ॥ ३२ ॥ विशालः शून्यबन्धुश्च धूम्रकेतुश्च तत्सुताः ॥ विशालो वंशकृद्राजा वैशालीं निर्ममे पुरीम् ॥३३॥ हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः ॥ तत्पुत्रात् संयमादासीत् कृशाश्वः सहदेवजः ॥३४॥

केवलः । ततो बन्धुमान् । तस्य वेगवान् । ततो बन्धुः । ततस्तृणबिन्दुः ॥३०॥ तमलम्बुषाऽप्सराः भेजे यस्यां तृणबिन्दोः पुत्रास्त्रयः विशालः १, शून्यबन्धुः २ धूम्रकेतुः ३ इति इडविडा कन्या च जाता ॥३१॥ सा विश्रवसमुपयेमे । विश्रवास्तस्यां कुबेरं जनयामास ॥३२॥ तृणबिन्दुपुत्रेण विशालेन वैशाली पुरी निर्मिता ॥ ३३ ॥ विशालाद्धेमचन्द्रः । तस्य धूम्राक्षः । तस्य संयमः । तस्य कृशाश्वदेवजौ द्वौ पुत्रौ ॥ ३४ ॥

कृशाश्वात् सोमदत्तः॥३५॥सोमदत्तात् सुमतिः। ततो जनमेजयः। एते तृणबिन्दुयशोधराः विशालस्य वंशे जाताः॥३६॥ इति श्रीभागवते चू० नवम० द्वितीयोऽध्यायः ॥२॥ तृतीये मनुपुत्रस्य शर्यातेः कीर्त्यतेऽन्वयः। यत्र सौकन्यमाख्यातं रैवतं च महाद्भुतम्॥१॥श्रीशुक उवाच॥ मनुपुत्रस्तृतीयः शर्यातिर्ब्रह्मनिष्ठो बभूव। सः अङ्गिरसां यज्ञे द्वितीयेऽह्नि क्रियमाणं कर्मोवाच॥१॥तस्य सुकन्या नाम कन्या तया सह शर्यातिश्च्यवनाश्रमवनं गतः ॥२॥ सा सखीभिः सह वने वृक्षान् विचिन्वती सती वल्मीकरन्ध्रे खद्योताविव द्वे ज्योतिषी दृष्ट्वा ॥३॥ दैवेन प्रेरिता

कृशाश्वात् सोमदत्तोऽभूद्योऽश्वमेधैरिडस्पतिम्॥इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रितः ॥३५॥ सौमदत्तिस्तु सुमतिस्तत्सुतो जनमेजयः ॥ एते वैशालभूपालास्तृणबिन्दोर्यशोधराः ॥ ३६ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धे कारूषकादिवंशानुकीर्तनं नाम द्वितीयोऽध्यायः ॥२॥ श्रीशुक उवाच ॥ शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह ॥ यो वा अंगिरसां सत्रे द्वितीयमह ऊचिवान्॥१॥ सुकन्या नाम तस्यासीत् कन्या कमललोचना ॥ तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥२॥सा सखीभिः परिवृता विचिन्वत्यङ्घ्रिपान्वने ॥ वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥३॥ सा दैवचोदिता बाला ज्योतिषी कण्टकेन वै ॥ अविध्यन्मुग्धभावेन सुस्रावासृक् ततो बहु ॥४॥ शकृन्मूत्रनिरोधोऽभूत् सैनिकानां च तत्क्षणात् ॥ राजर्षिस्तमुपालक्ष्य पुरुषान् विस्मितोऽब्रवीत् ॥५॥ अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम् ॥ व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम्॥६॥ सुकन्या प्राह पितरं भीता किंचित् कृतं मया॥ द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन वै ॥७॥ दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः ॥ मुनिं प्रसादयामास वल्मीकान्तर्गतं शनैः ॥८॥तदभिप्रायमाज्ञाय प्रादाद् दुहितरं मुनेः॥कृच्छ्रान्मुक्तस्तमामन्त्र्य पुरं प्रायात्समाहितः ॥९॥

सा कण्टकेनाविध्यत्। तदा तस्मात् रुधिरं सुस्राव॥४॥तदैव सैनिकानां शकृन्मूत्रनिरोधो जातः।तदा राजर्षिरेवं वीक्ष्य सैनिकान् जगाद ॥५॥ हे सैनिकाः!युष्माभिश्च्यवनस्यापराधः कृतःकिम्॥६॥तदा सुकन्या पितरं प्राह।अजानन्त्या मया द्वे ज्योतिषी कण्टकेन निर्भिन्ने॥७॥तद्वचः श्रुत्वा शर्यातिर्जातसंभ्रमो मुनिं प्रसादयामास॥८॥ततो राजा मुनेरभिप्रायं ज्ञात्वा कन्यां मुनये दत्त्वा दुःखान्मुक्तस्तमामन्त्र्य पुरं ययौ॥९॥

ततः सुकन्या मुनिं प्रीत्या सेवयामास ॥ १० ॥ कस्मिंश्चित्समयेऽश्विनौ कुमारौ स्वाश्रमं प्राप्तौ। तौ पूजयित्वा च्यवनः प्रोवाच ॥ ११ ॥ हे सद्वैद्यौ ! मम तारुण्यं स्त्रीणामीप्सितं रूपं च संपादयतम्। अहं सोमपानरहितयोर्युवयोः सोमपूर्णं पात्रं दास्यामि॥१२॥तदा तौ बाढमित्यूचतुः। हे ऋषे ! अस्मिन्सिद्धनिर्मिते ह्रदे निमज्ज ॥१३॥ इत्युक्तो मुनिर्जरया ग्रस्तदेहोऽश्विभ्यां सह ह्रदं विवेश॥१४॥तदा ह्रदात्सूर्यवर्चस्तुल्यरूपास्त्रयः पुरुषाः उत्तस्थुः ॥ १५ ॥ तान्दृष्ट्वा पतिमजानती साध्वी तावश्विनौ शरणं ययौ ॥ १६ ॥ पातिव्रत्येन तोषितौ तौ तस्यै

सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ॥ प्रीणयामास चित्तज्ञा अप्रमत्ताऽनुवृत्तिभिः ॥ १० ॥ कस्यचित्त्वथ कालस्य नासत्यावाश्रमागतौ ॥ तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥११॥ ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपोः॥क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥१२॥ बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ॥निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥१३॥ इत्युक्त्वा जरया ग्रस्तदेहो धमनिसंततः॥ह्रदं प्रवेशितोऽश्विभ्यां वलीपलितविग्रहः ॥१४॥ पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ॥ पद्मस्रजः कुण्डलिनस्तुल्यरूपास्सुवाससः ॥१५॥ तान् निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ॥ अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥१६॥ दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ॥ ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥१७॥ यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः ॥ ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥ राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ॥ आशिषश्चाप्रयुञ्जानो नातिप्रीतमना इव ॥१९॥चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो लोकनमस्कृतो मुनिः ॥ त्वं यज्जराग्रस्तमसत्यसंमतं विहाय जारं भजसेऽमुमध्वगम् ॥ २० ॥ कथं मतिस्तेऽवगताऽन्यथा सतां कुलप्रसूते कुलदूषणं त्विदम् ॥ बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः ॥ २१ ॥

पतिं दर्शयित्वा ऋषिमामन्त्र्य स्वर्गं ययतुः ॥१७॥ ततः कालेन यज्ञं कुर्वाणः शर्यातिश्च्यवनाश्रमं गतः। तत्र कन्यासमीपे दिव्यं पुरुषं दृष्ट्वा ॥१८॥ नातिप्रीतमनाः राजा दुहितरं प्राह ॥१९॥ हे सुकन्ये ! त्वयेदं किं चिकीर्षितम्। त्वं लोकनमस्कृतं वृद्धं पतिं हित्वा जारं भजसे ॥२०॥ हे सतां कुलप्रसूते ! तव विपरीता मतिः कथं प्राप्ता ॥ पितुर्भर्तुश्च कुलं नरकं नयसि ॥ २१ ॥

तदा विस्मिता सा सुकन्या पितरं प्राह हे तात ! एष भृगुनन्दनस्तव जामाता ॥२२॥ इत्युक्त्वा पितुः सर्वं पूर्ववृत्तं शशंस । तच्छ्रुत्वा स कन्यां परिषस्वजे ॥ २३ ॥ ततश्च्यवनः शर्यातिं सोमेन याजयन् सन्नश्विनोः सोमपूर्णपात्रं जग्राह ॥२४॥ तदा क्रुद्धः इन्द्रः शर्यातिं हन्तुं वज्रं गृहीतावान् च्यवनः सवज्रं हस्तं स्तम्भयामास ॥ २५ ॥ ततः सर्वे तद्दिनतोऽश्विनोर्यज्ञभागमन्वजानन् । यौ भिषक्त्वात् पूर्वं सोमाहुत्या बहिष्कृतौ ॥ २६ ॥ अथ शर्यातेरुत्तानबर्हिः १, आनर्तः २, भूरिषेणः ३, इति त्रयः पुत्राः । आनर्ताद्रेवतो जातः ॥२७॥ समुद्रे कुशस्थलीं निर्माय तत्र

एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ॥ उवाच तात जामाता तवैष भृगुनन्दनः ॥२२॥ शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् ॥ विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥२३॥ सोमेन याजयन्वीरं ग्रहं सोमस्य चाग्रहीत् ॥ असोमपोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥२४॥ हन्तुं तमाददे वज्रं सद्योमन्युरमर्षितः ॥ सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥ २५ ॥ अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः ॥ भिषजाविति यत् पूर्वं सोमाहुत्या बहिष्कृतौ ॥२६॥ उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ॥ शर्यातेरभवन् पुत्रा आनर्ताद्रेवतोऽभवत् ॥२७॥ सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम् ॥ आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दम ॥२८॥ तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् ॥ ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः ॥ २९ ॥ कन्यावरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ॥ आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥३०॥ तदन्त आद्यमानम्य स्वाभिप्रायं न्यवेदयत् ॥ तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥३१॥ अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ॥ तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ॥ ३२ ॥

स्थितः संस्तत्प्रदेशान्बुभुजे ॥२८॥ तस्य ककुद्मिज्येष्ठं पुत्रशतं जातम् ॥ ककुद्मी स्वां रेवतीं कन्यामादाय ॥२९॥ वरं प्रष्टुं ब्रह्मलोकं गतः । तत्र गान्धर्वे प्रवर्त्तमाने सति क्षणं स्थित्वा ॥३०॥ गान्धर्वान्ते स्वाभिप्रायं ब्रह्मणे न्यवेदयत् । तच्छ्रुत्वा ब्रह्मा प्रहस्य जगाद ॥३१॥ अहो ! हे राजन् ! ये त्वया हृदि निश्चितास्ते कालेन नष्टाः तेषां पुत्रपौत्रादि न शृण्महे ॥ ३२ ॥

---

१ ब्रह्माणम् । २ क्षणोऽवसरः ।

क्षणमात्रेण सप्तविंशतिचतुर्युगात्मकः कालो गतः । इदानीं देवदेवांशो बलदेवोऽस्ति ॥३३॥ स भुवो भारावताराय स्वांशेनावतीर्णः । तस्मै इदं कन्यारत्नं देहि इत्यादिष्टः ककुद्मी नमस्कृत्य स्वपुरं प्राप्य ॥३४॥ ३५ ॥ बलरामाय कन्यां दत्त्वा स्वयं तपस्तप्तुं नरनारायणाश्रमं जगाम ॥ ३६ ॥ इति श्रीभागवते चू० नवम० तृतीयोऽध्यायः ॥३॥ चतुर्थे मनुपौत्रस्य नाभागस्य कथोच्यते॥तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यतः॥१॥श्रीशुक उवाच॥हे राजन् ! मनुपुत्रो नवमो नभगस्तस्य पुत्रो नाभागः । स गुरुकुले चिरमवसत् । तदा तस्य सर्वे भ्रातरः

कालोऽभियातस्त्रिणवचतुर्युगविकल्पितः ॥ तद्गच्छ देवदेवांशो बलदेवो महाबलः ॥३३॥ कन्यारत्नमिदं राजन् नर-रत्नाय देहि भो ॥ भुवो भारावताराय भगवान् भूतभावनः ॥३४॥ अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ॥ इत्यादि-ष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः ॥३५॥ त्यक्तं पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ॥ सुतां दत्त्वाऽनवद्यांगीं बलाय बलशालिने ॥ बदर्याख्यं गतो राजा तप्तुं नारायणाश्रमम् ॥ ३६ ॥ इति श्री भागवते महापुराणे नवमस्कन्धे शर्या-त्यन्वयनिरूपणं नाम तृतीयोऽध्यायः ॥३॥ श्रीशुक उवाच ॥ नाभागो नभगापत्यं यं ततं भ्रातरः कविम् ॥ यविष्ठं व्यभजन् दायं ब्रह्मचारिणमागतम् ॥ १ भ्रातरोऽभाक्त किं मह्यं भजाम पितरं तव ॥ त्वां म आर्यास्तताऽभाङ्क्षुर्मा पुत्रक तदादृथाः ॥ २ ॥ इमे अंगिरसः सत्रमासतेऽद्य सुमेधसः ॥ षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३ ॥

एवं नाभागं नैष्ठिकं मत्वा तस्य भागमप्रकल्प्य पितृधनमात्मनां विभज्य पश्चादागताय नाभागाय पितरं भागतया ददुः । ततः कालेन स गुरुकुलादागत्य भ्रातॄन् प्रति स्वभागं पप्रच्छ ॥१॥ हे भ्रातरः ! मम भागः क्व ? ते ऊचुः । हे नाभाग ! तदा तु तव भागो विस्मृतः ।इदानी-मयमुर्वरितः पिता ते भागः । तदा स पितरं गत्वोवाच । हे पितः ! त्वमेव मे भाग इति भ्रातरः कथयन्ति । तदा पितोवाच ॥ हे पुत्र ! तेषामादरं मा कार्षीः ॥२॥ तव जीवनोपायं दर्शयामि । हे नाभाग ! इमे अङ्गिरसो यज्ञं कुर्वन्ति । षष्ठदिने कर्मणि मुह्यन्ति ॥ ३ ॥

---

१ तातम् । २ तत हे तात । ३ विद्वन् ।

ततः श्रुत्वा स तथाऽ-

तान् त्वं वैश्वदेवे द्वे सूक्ते शंशय । यज्ञे समाप्ते ते स्वर्गं गच्छन्तोऽङ्गिरसो यज्ञशेषितं बहु धनं तुभ्यं दास्यन्ति ॥४॥ करोत् तदाऽङ्गिरसो यज्ञावशेषितं सर्वं धनं तस्मै दत्त्वा स्वर्गं ययुः ॥५॥ ग्रहीष्यन्तं तमुत्तरतः आगतः श्रीरुद्रः आह । हे वत्स ! इदं मदीयं धनम् ॥६॥ तदा नाभाग उवाच॥इदम् ऋषिभिर्मह्यं दत्तम् । तत् श्रुत्वा रुद्रः उवाच॥इदं कस्य द्रव्यमिति पितरं पृच्छ । स गृहं गत्वा पितरं पृष्टवान् ॥७॥ तदा पिता तं जगाद । हे पुत्र ! ऋषयो यज्ञावशिष्टं भागं रुद्राय चक्रुः । अतः स एवार्हति ॥ ८ ॥ एवं श्रुत्वा नाभागो रुद्रं

तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ॥ ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥ दास्यन्त्यथ ततो गच्छ तथा स कृतवान् यथा ॥ तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषितम् ॥ ५ ॥ तं कश्चित् स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ॥उवाचोत्तरतोऽभेत्य ममेदं वास्तुकं वसु ॥६॥ ममेदमृषिभिर्दत्तमिति तर्हि स्म मानवः॥स्यान्नौ ते पितरि प्रश्नः पृष्टवान् पितरं तथा ॥ ७ ॥ यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ॥ चक्रुर्विभागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥ नाभागस्तं प्रणम्याह तवेश किल वास्तुकम् ॥ इत्याह मे पिता ब्रह्मन् शिरसा त्वां प्रसादये ॥ ९ ॥ यत्ते पिताऽवदद्धर्मं त्वं तु सत्यं प्रभाषसे॥ददामि ते मन्त्रदृशो ज्ञानं ब्रह्म सनातनम् ॥१०॥गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् ॥ इत्युक्त्वाऽन्तर्हितो रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥ य एतत् संस्मरेत् प्रातस्सायं च सुसमाहितः ॥ कविर्भवति मन्त्रज्ञो गतिं चैव तथाऽऽत्मनः ॥१२॥ नाभागादम्बरीषोऽभून्महाभागवतः कृती ॥ नास्पृशद् ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित् ॥ १३ ॥

प्रति गत्वा प्रणम्याह । हे ईश ! वास्तुकं सर्वं तव भाग इति मे पिताऽऽह । अहं त्वां शिरसा प्रसादये॥९॥तदा रुद्र उवाच । यतस्ते पिता धर्मं जगाद त्वमपि सत्यं भाषसे अतस्तुभ्यं ज्ञानं ददामि ॥१०॥ मद्दत्तं द्रव्यं च गृहाण इत्युक्त्वा रुद्रोऽन्तर्दधे ॥११॥ इदमाख्यानं यः संस्मरेत् स आत्मगतिं प्राप्नोति ॥ १२ ॥ अथ नाभागादम्बरीषः यस्य ब्रह्मशापोऽपि न पस्पर्श ॥ १३ ॥

१ प्राप्नोतीति शेषः ।

राजोवाच ॥ हे ब्रह्मन् । तस्य राजर्षेर्ब्रह्मदण्डः कथं समर्थो न बभूव । इदं श्रोतुमिच्छामि ॥१४॥ श्रीशुक उवाच ॥ महाभागोऽम्बरीषः सप्तद्वीपवतीं भूमिं श्रियं च लब्ध्वा॥१५॥पुंसां दुर्लभं तत् सर्वं स्वप्नवत् मत्वा वासुदेवे तद्भक्तेषु च सर्वात्मभावं प्राप्तः सन्॥१६॥१७॥ कृष्णपदारविन्दयोर्मनश्चकार।तद्गुणानुवर्णने वचांसि मन्दिरमार्जनादिषु करौ ।कथाश्रवणे कर्णौ॥१८॥ तत्स्वरूपदर्शने दृशौ।तदर्पिततुलस्यास्तत्पाद-

राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ॥ न प्राभूद यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ १४ ॥
श्रीशुक उवाच ॥ अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ॥ अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ १५ ॥
मेनेऽतिदुर्लभं पुंसां सर्वं तत् स्वप्नसंस्तुतम् ॥ विद्वान् विभवनिर्वाणं तमो विशति यत् पुमान् ॥ १६ ॥ वासुदेवे
भगवति तद्भक्तेषु च साधुषु ॥ प्राप्तो भावं परं विश्वं येनेदं लोष्टवत् स्मृतम् ॥ १७ ॥ स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ॥ करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥ मुकुन्दलिङ्गालय-
दर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसंगमम् ॥ घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ १९ ॥
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ॥ कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोक-
जनाश्रया रतिः ॥ २० ॥ एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ॥ सर्वात्मभावं विदधन्मही-
मिमां तन्निष्ठविप्राभिहितः शशास ह ॥ २१ ॥ ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ॥ ततै-
र्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥

सरोजप्राप्तगन्धग्रहणे घ्राणम् । तद्भृत्यगात्रस्पर्शेऽङ्गसंगमम् ॥ १९ ॥ तत्क्षेत्रानुगमे पादौ । तत्पादाभिवन्दने शिरः तद्भक्तेषु रतिः ॥२०॥ स्वकर्मणां समूहं भगवत्यर्पयन् विप्रशिक्षया महीं पालयामास ॥२१॥ किंच वसिष्ठासितगौतमादिभिर्विस्तृतैरश्वमेधैर्हरिमाराधयामास ॥२२॥

---

१ कृत्यानलः । २ नाशम् । ३ मोहम् । ४ तदर्पिताम्रादाविति शेषः । ५ स्रक्चन्दनादिसेवाम् । ६ विषयेच्छया । ७ उपचितान्यङ्गानि दक्षिणा च येषु तैः । ८ धन्वदेशे निरुदके देशे ।

यस्य यज्ञेषु देवैः सह द्विजादयो भूषणादिभिस्तुल्यरूपाः व्यदृश्यन्त ॥२३॥ यस्य प्रजाःउत्तमश्लोकचरितं शृण्वत्यः स्वर्गं नेच्छन्ति तस्य तु का वार्ता ॥२४॥ अपि च हृदि हरिं पश्यतो जनान् सिद्धानामपि दुर्लभाः विषयाः न हर्षयन्ति॥२५॥सोऽम्बरीषः इत्थं भक्तियोगेन हरिं तोषयन् शनैः सर्वसङ्गान् जहौ॥२६॥किंच गृहदारपुत्रबन्धुगजाश्वरथपत्तिषु कोषादिषु मिथ्यामतिं चकार॥२७॥तस्य भक्त्या तुष्टोहरिः संर-

यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ॥ तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥ २३ ॥ स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ २४ ॥ समर्धयन्ति तान्कामाः स्वाराज्यपरिभाविताः ॥ दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः ॥२५॥ स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ॥ स्वधर्मेण हरिं प्रीणन् सङ्गान्सर्वाञ्छनैर्जहौ ॥२६॥ गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ॥ अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥२७॥ तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ॥ एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥ २८ ॥ आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ॥ युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥ व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः ॥ स्नातः कदाचित्कालिन्द्यां हरिं मधुवनेऽर्चयत ॥ ३० ॥ महाभिषेकविधिना सर्वोपस्करसम्पदा ॥ अभिषिच्याम्बराकल्पैर्गन्धमाल्यार्हणादिभिः ॥ ३१ ॥ तद्गतान्तरभावेन पूजयामास केशवम् ॥ ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ ३२ ॥ गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ॥ पयश्शीलवयोरूपवत्सोपस्करसम्पदाम् ॥ ३३ ॥ प्राहिणोत साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ॥ भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥ ३४ ॥

क्षणाय चक्रं ददौ ॥२८॥ सपत्नीकः सांवत्सरमेकादशीव्रतं दधार ॥२९॥ व्रतान्ते कार्तिकशुक्लैकादशीदिने कालिन्द्यां स्नात्वोपोष्य मधुवने हरिमानर्च ॥३०॥ सर्वोपस्करसंपत्त्याऽभिषेकविधिनाऽभिषिच्य गंधपुष्पादिभिः॥३१॥ केशवं संपूज्य भक्तितो ब्राह्मणांश्च संपूज्य॥३२॥ तेभ्यो गृहेषु स्वर्णशृङ्गीणां रौप्यखुराणां वस्त्रादिसर्वोपस्करयुतानां गवां षट् न्यर्बुदानि प्राहिणोत् ततः द्वादश्यां स्वाद्वन्नं द्विजान् भोजयित्वा॥३३॥३४॥

१ स्वरूपसुखेनातिशयिताः।

तदनुज्ञया पारणं कर्तुमुद्युक्तस्तदैव दुर्वासाः अतिथिः प्राप्तः ॥३५॥नृपस्तं संपूज्य भोजनाय न्यमन्त्रयत॥३६॥ऋषिर्नृपं तथेत्युक्त्वा माध्याह्निकं कर्तुं यमुनायां गत्वा ब्रह्म ध्यायन् सलिले निममज्ज॥३७॥पारणं प्रति मुहूर्तार्धावशिष्टायां द्वादश्यां धर्मज्ञो धर्मसंकटे द्विजैः सह चिंतयामास॥३८॥ब्राह्मणातिक्रमे पारणातिक्रमे च दोषः इत्येवं विचार्य निश्चयं करोति॥३९॥हे विप्राः! केवलेन जलेन व्रतपारणं करिष्ये। जलपानम-

लब्धकामैरनुज्ञातः पारणायोपचक्रमे ॥ तस्य तर्ह्यतिथिः साक्षाद् दुर्वासा भगवानभूत् ॥ ३५ ॥ तमानर्चातिथिं भूपः प्रत्युत्थानासनार्हणैः ॥ ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ ३६ ॥ प्रतिनन्द्य स तद्याच्ञां कर्तुमावश्यकं गतः ॥ निममज्ज बृहद् ध्यायन्कालिन्दीसलिले शुभे॥३७॥मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति॥ चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसंकटे ॥ ३८ ॥ ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ॥ यत्कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ॥ ३९ ॥ अम्भसा केवलेनाथ करिष्ये व्रतपारणम् ॥ प्राहुरब्भक्षणं विप्रा ह्यशितं नाशितं च तत् ॥ ४० ॥ इत्यपः प्राश्य राजर्षिश्चिन्तयन्मनसाऽच्युतम् ॥ प्रत्याचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥ ४१ ॥ दुर्वासा यमुनाकूलात्कृतावश्यक आगतः ॥ राज्ञाऽभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ४२ ॥ मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ॥ बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥४३॥ अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ॥ धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ॥ ४४ ॥ यो मामतिथिमायातमातिथ्येन निमन्त्र्य च ॥ अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥४५॥ एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ॥ तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥४६॥

शितं नाशितं चाहुः ॥ ४० ॥ एवं मनसा हरिं चिंतयन् जलं प्राश्य द्विजागमनं प्रत्यैक्षत ॥ ४१ ॥ तदैव दुर्वासाः यमुनातीरादागत्य राजचेष्टितं ज्ञात्वा ॥ ४२ ॥ क्रोधेन चलद्गात्रो बुभुक्षितः कृताञ्जलिं नृपं जगाद ॥ ४३ ॥ अहो श्रियोन्मत्तस्य मिथ्या वदतोऽस्य धर्मव्यतिक्रमं पश्यत ॥४४॥ अस्य फलं सद्यो दर्शये ॥४५॥ इत्युक्त्वा जटामुत्पाट्य तया कालाग्निसदृशीं कृत्यां निर्ममे ॥ ४६ ॥

नृपस्तां ज्वलन्तीं वेपयन्तीमायान्तीं वीक्ष्य स्थानान्न चचाल ॥४७॥ तदा प्राग् रक्षणार्थं दत्तं विष्णोश्चक्रं कृत्यां दग्ध्वा ॥ ४८ ॥ ऋषिम-
न्वधावत् । तदा दुर्वासाः स्वप्रयत्नं निष्फलं वीक्ष्य भीतः सन् प्राणरक्षणेच्छया दिक्षु दुद्राव ॥४९॥ चक्रमपि तमन्वधावत् । तदा ऋषिः
पृष्ठसंलग्नं चक्रं निरीक्ष्य मेरोर्गुहामधावत् ॥ ५० ॥ एवं दिशो भूमिं पातालान् समुद्रादीन् प्रति गतः । यतो यतो धावति तत्र तत्र सुदर्शनं
ददर्श ॥५१॥ एवं सर्वत्र भ्रमित्वा ब्रह्माणं शरणं गत्वाऽऽह । हे ब्रह्मन् ! विष्णुचक्रतो मां त्रायस्व ॥५२॥ ब्रह्मोवाच ॥ ॥ हे ऋषे ! सहविश्वं

तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम् ॥ वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ ४७ ॥ प्राग्दिष्टं भृत्यर-
क्षायां पुरुषेण महात्मना॥ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः॥४८॥तमभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम् ॥
दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया॥४९॥तमन्वधावद्भगवद्रथांगं दावाग्निरुद्धूतशिखो यथाऽहिम् ॥ तथाऽनुषक्तं
स निरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥ ५० ॥ दिशो नभः क्ष्मां विवरान् समुद्रान् लोकान्सपालांस्त्रिदिवं
गतः सः ॥ यतो यतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श ॥५१॥ अलब्धनाथस्स यदा कुतश्चित् संत्रस्त चित्तोऽर-
णमेषमाणः ॥ देवं विरिञ्चं समगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसो माम् ॥ ५२ ॥ ब्रह्मोवाच ॥ स्थानं मदीयं सहवि-
श्वमेतत क्रीडावसाने द्विपरार्धसंज्ञे॥भ्रूभङ्गमात्रेण हि संदिधक्षोः कालात्मनो यस्य तिरोभविष्यति ॥५३॥ अहं भवो
दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः॥सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः ॥५४॥ प्रत्याख्यातो
विरिञ्चेन विष्णुचक्रोपतापितः॥दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ५५ ॥ श्रीरुद्र उवाच ॥ वयं न तात प्रभ-
वाम भूम्नि यस्मिन्परेऽन्येऽप्यजजीवकोशाः॥भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ॥ ५६ ॥



मत्स्थानं यस्य कालात्मनो भ्रूभङ्गमात्रेण द्विपरार्धकाले नश्यति ॥५३॥ यस्याज्ञां पालयन्तः सन्तो लोकतन्त्रं वहामः । अतः तद्भक्तद्रोहिणं
त्वां रक्षितुं न समर्थोऽहम् ॥ ५४ ॥ एवं श्रुत्वा दुर्वासाः शिवं शरणं जगाम ॥ ५५ ॥ हे शिव ! मां पाहि तदा शिव उवाच । हे पुत्र !
यस्मिन् ब्रह्मादिजीवकोशाः भवन्ति नश्यन्ति च यत्र लोकेशाभिमानिनो वयं भ्रमामः ॥ ५६ ॥

१ महति ।

किंच अहं सनत्कुमारो नारदो ब्रह्मा कपिलादयः ॥ ५७ ॥ मरीच्यादयश्च यन्मायां न विद्मः ॥ ५८ ॥ तस्येश्वरस्येदं शस्त्रं नो दुस्सहम् ।
अतस्तमेव शरणं याहि ॥ ५९ ॥ ततो निराशो दुर्वासाः वैकुण्ठं गत्वा ॥ ६० ॥ चक्रेण तापितः कंपितस्तत्पादमूलेपतित्वाऽऽह । हे अनन्त !
कृतापराधं मां पाहि ॥ ६१ ॥ तव प्रतापमजानता मया तव भक्तस्य पापं कृतम् । तस्योपायं कुरु तव नाम्ना नरकस्थोऽपि मुच्यते ॥६२॥

अहं सनत्कुमारश्च नारदो भगवानजः ॥ कपिलोऽपान्तरतमो देवलो धर्म आसुरिः ॥ ५७ ॥ मरीचिप्रमुखाश्चान्ये
सिद्धेशाः पारदर्शनाः ॥ विदाम न वयं सर्वे यन्मायां माययाऽऽवृताः ॥ ५८ ॥ तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि
नः ॥ तमेव शरणं याहि हरिस्ते शं विधास्यति ॥५९॥ ततो निराशो दुर्वासाः पदं भगवतो ययौ ॥ वैकुण्ठाख्यं यद-
ध्यास्ते श्रीनिवासः श्रिया सह ॥ ६० ॥ स दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः ॥ आहाच्युता-
नन्त सदीप्सित प्रभो कृतागसं माऽव हि विश्वभावन ॥ ६१ ॥ अजानता ते परमानुभावं कृतं मयाऽघं भवतः
प्रियाणाम् ॥ विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥६२॥ श्रीभगवानुवाच ॥ अहं भक्तपरा-
धीनो ह्यस्वतन्त्र इव द्विज ॥ साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ६३ ॥ नाहमात्मानमाशासे मद्भक्तैः साधुभि-
र्विना ॥ श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥ ६४ ॥ ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ॥ हित्वा
मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥६५॥ मयि निर्बद्धहृदयाः साधवः समदर्शनाः ॥ वशे कुर्वन्ति मां भक्त्या
सत्स्त्रियः सत्पतिं यथा ॥६६॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ॥ नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् काल-
विद्रुतम् ॥६७॥ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ६८ ॥

श्रीभगवानुवाच ॥ हे ऋषे ! अहं भक्तपराधीनो भक्तजनप्रियः ॥ ६३ ॥ अहं मद्भक्तैर्विनाऽऽत्मानं श्रियं च नेच्छामि ॥ ६४ ॥ ये स्त्रीगृह-
पुत्रादीन् हित्वा मां शरणं यातास्तांस्त्यक्तुं कथमिच्छेयम् ॥ ॥ ६५ ॥ मयि निर्बद्धहृदयाः साधवो भक्त्या मां वशीकुर्वन्ति ॥ ६६ ॥
ते मत्सेवया प्राप्तं सालोक्यादिचतुष्टयं नेच्छन्ति ॥ ६७ ॥ साधवो ममहृदयम् । साधूनामहं हृदयम् । मां विना तेऽन्यन्न जानन्ति ॥ ६८ ॥

हे विप्र ! उपायं कथयामि शृणु । यतः इदं दुःखं तत्रैव यातु ॥६९॥ हे ब्रह्मन् ! साधुषु प्रेरितं तेजः प्रेरणाकर्तुरनर्थं कुरुते ॥ ७० ॥ अतो नाभागतनयं प्रति गत्वा तं क्षमापय । स तव शान्तिं करिष्यति ॥ ७१ ॥ इति श्रीभागवते चूर्णिकायां नवमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ पञ्चमे विष्णुचक्रं तु प्रसाद्य प्राणसङ्कटात् । दुर्वासा रक्षितस्तेन तथा तद् वृत्तमीर्यते ॥ १ ॥ श्रीशुक उवाच ॥ एवं भगवताऽऽदिष्टो दुर्वासा-

उपायं कथयिष्यामि तव विप्र शृणुष्व तम् ॥ अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ॥ ६९ ॥ साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम् ॥ तपो विद्या च विप्राणां निःश्रेयसकरे उभे ॥ त एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ॥ ॥ ७० ॥ ब्रह्मंस्तद्गच्छ भद्रं ते नाभागतनयं नृपम् ॥ क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ७१ ॥ इति श्रीभागवते म० नवमस्कन्धेऽम्बरीषोपाख्याने दुर्वासोऽनुतापशमनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः ॥ अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ १ ॥ तस्य सोद्यमनं वीक्ष्य पादस्पर्शविलज्जितः ॥ अस्तावीत् तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ २ ॥ अम्बरीष उवाच ॥ त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः ॥ त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ ३ ॥ सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय ॥ सर्वास्त्रघातिन् विप्राय स्वस्ति भूया इडस्पते ॥ ४ ॥ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ॥ त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ५ ॥ नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे ॥ त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥ ६ ॥ त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च धृतो महात्मनाम् ॥ दुरत्ययस्ते महिमा गिरांपते त्वद्रूपमेतत्सदसत्परावरम् ॥ ७ ॥

श्चक्रतापितः सन्नम्बरीषं प्राप्य तत्पादौ जग्राह ॥१॥ तदा पादस्पर्शेन लज्जितः कृपया पीडितो राजा चक्रं तुष्टाव ॥२॥ अम्बरीष उवाच ॥ त्वं सूर्यो व्योमादिः ॥३॥ हे सुदर्शन ! सहस्रार ! तुभ्यं नमः । त्वत्तो द्विजस्य शं भूयात् ॥४॥ त्वं लोकपालः । त्वं धर्मः । सर्वात्मा ॥५॥ हे सुनाभ ! त्वां स्तोतुं कः समर्थः । मनोजवाय तुभ्यं केवलं नमस्करोमि ॥ ६ ॥ त्वत्तेजसा सूर्यादीनां प्रकाशः ॥ ७ ॥

१ सः उद्यमनं स्तवादियत्नम् । २ पृथ्वीपते ।

हे अजित ! हरिणा यदा विसृष्टस्त्वं तदा दैत्यदानवानां सैन्यं प्रविष्टः सन् तेषां बाह्वङ्घ्रिशिरांसि भिन्दन् विराजसे ॥ ८ ॥ हे जगद्रक्षक ! त्वं खलानां प्रहारार्थं स्थापितः । अतोऽस्मत्कुलस्य भाग्यलाभाय द्विजस्य शं विधेहि । तदेव नोऽनुग्रहः ॥९॥ यदि मयेष्टं वा दत्तं वा विप्र दैवतं नः कुलं चेत् अयं द्विजो गततापो भवतु ॥१०॥ यदि नः सर्वभूतात्मभावेन भगवान् प्रीतश्चेद् द्विजो विज्वरो भवतु ॥११॥ श्रीशुक उवाच ॥ एवं राज्ञः स्तुवतः सतो विष्णुचक्रं शशाम ॥ १२ ॥ चक्राग्नितापेन मुक्तो दुर्वासाः आशिषो युञ्जानः सन् राजानं प्रशशंस ॥१३॥

यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजित दैत्यदानवम् ॥ बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजसे ॥ ८ ॥ स त्वं जगत्त्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता ॥ विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥९॥ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ॥ कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥१०॥ यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः ॥ सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥११॥ श्रीशुक उवाच ॥ इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ॥ अशाम्यत् सर्वतो विप्रं प्रदहद्राजयाञ्चया ॥ १२ ॥ स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः ॥ प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥ १३ ॥ दुर्वासा उवाच ॥ अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे ॥ कृतागसोऽपि यद्राजन्मङ्गलानि समीहसे ॥ १४ ॥ दुष्करः को नु साधूनां दुस्त्यजो वा महात्मनाम् ॥ यैः संगृहीतो भगवान् सात्त्वतामृषभो हरिः ॥ १५ ॥ यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः ॥ तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ १६ ॥ राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना ॥ मदघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ १७ ॥ राजा तमकृताहारः प्रत्यागमनकाङ्क्षया ॥ चरणावुपसंगृह्य प्रसाद्य समभोजयत् ॥ १८ ॥

दुर्वासा उवाच ॥ अहो भगवद्भक्तानां महत्त्वं मयाऽद्य दृष्टम् । कृतापराधस्यापि मम कल्याणं त्वमिच्छसि ॥१४॥ यैर्हरिर्गृहीतः तेषां दुष्करो दुस्त्यजः कः ॥१५॥ यन्नामस्मरणमात्रेण पुमान् निर्मलो भवति ॥१६॥ हे राजन् ! त्वया ममोपरि प्रसादः कृतः । ममापराधं पृष्ठतः कृत्वा मे प्राणाः रक्षिताः ॥ १७ ॥ ततो राजा ऋषेश्चरणौ प्रगृह्य प्रसाद्याभोजयत् ॥ १८ ॥

ततो दुर्वासाः आशिषो दत्त्वा नृपतिं भुज्यतामित्याह ॥१९॥ हे नृप ! तव दर्शनस्पर्शनभाषणैः प्रीतोऽस्मि ॥ २० ॥ एतत् तव कर्म स्वर्गस्त्रियो गायन्ति। तव पुण्यां कीर्तिं भूः कीर्त्तयिष्यति ॥२१॥ श्रीशुक उवाच ॥ एवमुक्त्वा ऋषिस्तमामन्त्र्य ब्रह्मलोकं ययौ ॥२२॥ मुनिर्यावन्नागतः तावत् एकः संवत्सरो गतः । तद्दर्शनाकाङ्क्षी राजा जलभक्षो बभूव ॥ २३ ॥ एवं दुर्वाससि गते सति स्वयं बुभुजे । एतत् सर्वं

सोऽशित्वाऽऽहृतमानीतमातिथ्यं सार्वकामिकम् ॥ तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥ १९ ॥ प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै ॥ दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ २० ॥ कर्मावदातमेतत्ते गायन्ति स्वस्त्रियो मुहुः ॥ कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ २१ ॥ श्रीशुक उवाच ॥ एवं संकीर्त्य राजानं दुर्वासाः परितोषितः ॥ ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहैतुकम् ॥ २२ ॥ संवत्सरोऽत्यगात्तावद्यावता नागतो गतः ॥ मुनिस्तद्दर्शनाकाङ्क्षी राजाऽब्भक्षो बभूव ह ॥ २३ ॥ गते च दुर्वाससि सोऽम्बरीषो द्विजोपयोगातिपवित्रमाहरत् ॥ ऋषेर्विमोक्षं व्यसनं च बुद्धा मेने स्ववीर्यं च परानुभावम् ॥२४॥ एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे ॥ क्रियाकलापैः समुवाह भक्तिं ययाऽऽविरिञ्चान्निरयांश्चकार ॥२५॥ अथाम्बरीषस्तनयेषु राज्यं समानलीलेषु विसृज्य धीरः ॥ वनं विवेशात्मनि वासुदेवे मनो दधद् ध्वस्तगुणप्रवाहः ॥ २६ ॥ इत्येतत्पुण्यमाख्यानमम्बरीषस्य भूपतेः ॥ संकीर्तयन्ननुध्यायन् भक्तो भगवतो भवेत् ॥ २७ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धेऽम्बरीषोपाख्याने दुर्वासउपचरणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

भगवदनुभावं मेने ॥ २४ ॥ एवंविधो राजा वासुदेवे क्रियाकलापैर्भक्तिं कुर्वन् ब्रह्मपदसहितान् भोगान् नरकवत् मत्वा ॥ २५ ॥ कालेन पुत्रेषु राज्यं त्यक्त्वा वासुदेवे मनो निवेश्य वनं विवेश ॥ २६ ॥ एतत्पुण्यमाख्यानं यः कीर्तयेत् ध्यायेत् स भगवतो भक्तो भवेत् ॥ २७ ॥ इति श्रीभागवते चूर्णिकायां नवमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

१ आत्मनि मेधा यस्य तेन।

षष्ठारम्भेऽम्बरीषस्य वंशमुक्त्वा ततः परम् । षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥१॥ तत्र षष्ठे शशादादिर्मान्धात्रन्तो निरूप्यते । प्रसङ्गात् सौभ-
रेराख्या मान्धातृतनयापतेः ॥२॥ श्रीशुक उवाच ॥ अम्बरीषस्य त्रयः पुत्राः विरूपः १, केतुमान् २, शंभुः ३। विरूपात् पृषदश्वः। तस्य रथीतरः
॥१॥ सोऽप्रजः। तस्य भार्यया प्रजार्थं प्रार्थितः सन्नङ्गिरास्तस्यां पुत्रान् जनयामास । ते ब्राह्मणाः बभूवुः ॥२॥ एते रथीतरक्षेत्रेऽङ्गिरसो वीर्येण
जाताः क्षेत्रोत्पन्नत्वाद् रथीतरगोत्राः सन्तः आंगिरसाः द्विजाः अभवन् ॥३॥ ततो वैवस्वतमनोः क्षुवतो नासिकाद्वारादिक्ष्वाकुर्जज्ञे। तस्य विकुक्षि-

श्रीशुक उवाच ॥ विरूपः केतुमान् शंभुरम्बरीषसुतास्त्रयः ॥ विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥ १ ॥ रथीतरस्या-
प्रजस्य भार्यायां तन्तवेऽर्थितः ॥ अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥२॥ एते क्षेत्रे प्रसूता वै पुनस्त्वाङ्गिरसाः
स्मृताः ॥ रथीतराणां प्रवराः क्षत्त्रोपेता द्विजातयः ॥३॥ क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ॥ तस्य पुत्रशतज्येष्ठा
विकुक्षिनिमिदण्डकाः ॥४॥ तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृप ॥ पञ्चविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥५॥ स
एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ॥ मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम् ॥६॥ तथेति स वनं गत्वा
मृगान्हत्वा क्रियार्हणान् ॥ श्रान्तो बुभुक्षितो वीरः शशं चाददपस्मृतिः ॥७॥ शेषं निवेदयामास पित्रे तेन च तद्गुरुः ॥
चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥ ८ ॥ ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः ॥ देशान्निस्सारयामास सुतं
त्यक्तविधिं रुषा ॥९॥ स तु विप्रेण संवादं जापकेन समाचरन् ॥ त्यक्त्वा कलेवरं योगी स तेनावाप यत्परम् ॥१०॥

निमिदण्डकाद्याः शतं पुत्राः बभूवुः ॥४॥ तेषु पञ्चविंशतिरार्यावर्त्तदेशस्य नृपाः अभवन् । तथा पञ्चविंशतिः पश्चिमदिशायाः स्वामिनः। मध्ये
पूर्वोक्तास्त्रयः । अपरे दक्षिणोत्तरयोः राजानः ॥५॥ एकदेक्ष्वाकुरष्टकाश्राद्धे मांसानयनाय विकुक्षिं प्रत्याज्ञां चक्रे ॥६॥ स तथेति वनं गत्वा
मृगान् हत्वा बुभुक्षितः सन् शशं भर्जयित्वा भुक्त्वा ॥७॥ शेषं मांसं पित्रे निवेदयामास । तदेक्ष्वाकुणा प्रेरितो वसिष्ठः प्रोक्षणकाले उच्छिष्ट-
मांसं ज्ञात्वा राज्ञे कथयामास ॥८॥ तदेक्ष्वाकुस्तत् कर्म ज्ञात्वा पुत्रं देशान्निस्सारयामास ॥९॥ इक्ष्वाकुर्योगेन देहं हित्वा ब्रह्म प्राप ॥१०॥

१ वसिष्ठेन ।

अथ विकुक्षिः पितरि परलोकं गते सति पृथ्वीं पालयामास । स एव शशभक्षणात् शशादनामाऽभवत् ॥ ११ ॥ तस्य पुत्रः पुरंजयः इन्द्रवाहः ककुत्स्थ इति नामत्रयेण ख्यातः । तस्य कर्मभिर्नामानि शृणु ॥१२॥ पुरा देवदैत्यसंग्रामे देवैर्वेष्टितः स उवाच । हे देवाः ! इन्द्रो यदि वाहनं स्यात् तर्हि दैत्यान् हनिष्यामि ॥१३॥ एवं वाहनत्वे याचितः इन्द्रो लज्जया तन्नांगीकुर्वन् विष्णोर्वचनाद् वृषो बभूव॥१४॥तदा शशादपुत्रो वृषरूपेन्द्रस्य स्कन्धे स्थित्वा धनुर्बाणौ गृहीत्वा ॥१५॥ विष्णोस्तेजसा दैवैः सह पश्चिमदिशि दैत्यानां पुरं रुरोध ॥१६॥ तदा

पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम् ॥ शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥ पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ॥ ककुत्स्थ इति चाप्युक्तः श्रृणु नामानि कर्मभिः ॥ १२ ॥ कृतान्त आसीत् समरो देवानां सह दानवैः ॥ पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥ वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ॥ वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १४ ॥ स सन्नद्धो धनुर्दिव्यमादाय विशिखाञ्छितान् ॥ स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥ तेजसाऽऽप्यायितो विष्णोः पुरुषस्य परात्मनः ॥ प्रतीच्यां दिशि दैत्यानां न्यरुणत्त्रिदशैः पुरम् ॥१६॥ तैस्तस्य चाभूत् प्रधनं तुमुलं रोमहर्षणम् ॥ यमाय भल्लैरनयद्दैत्यान्येऽभिययुर्मृधे ॥१७॥ तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् ॥ विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥ जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये ॥ प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः ॥ १९ ॥ पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ॥ विश्वरन्धिस्ततश्चन्द्रो युवनाश्वश्च तत्सुतः ॥ २० ॥

दैत्यैः सह रोमहर्षणं घोरं युद्धं जातम् । ये मृधे संमुखं ययुस्तान् बाणैरमारयत्॥१७॥तदा हन्यमानाः दैत्याः संग्रामं विसृज्य पातालं प्रति दुद्रुवुः ॥१८॥ स शशादपुत्रः एवं दैत्यान् हत्वा तेषां सर्वं धनमिन्द्राय ददौ एवं कर्मभिः पुरंजयादिनामानि प्राप्तः ॥१९॥ ततः पुरञ्जया-दनेनाः पुत्रः तस्य पृथुः ॥ तस्य विश्वरन्धिः । ततश्चन्द्रः तस्य युवनाश्वः ॥ २० ॥



१ कृतं विश्वमन्तयतीति सः ।

तस्य शावस्तः येन शावस्ती पुरी निर्मिता । तस्य बृहदश्वः । तस्मात् कुवलयाश्वः ॥ २१ ॥ स एकविंशतिसहस्रपुत्रैः सह वेष्टितो धुन्धुनामासुरं जघान ॥२२॥ तेन धुन्धुमार इति ख्यातः । धुन्धोर्मुखाग्निना तत्पुत्रा दग्धाः ॥२३॥ तेषु दृढाश्वः १, कपिलाश्वः २, भद्राश्वः ३ इति त्रयः शिष्टाः । दृढाश्वात् हर्यश्वः । तस्य निकुम्भः ॥ २४ ॥ तस्य पुत्रौ द्वौ बर्हणाश्वकृशाश्वौ । कृशाश्वात् सेनजित् । तस्य युवनाश्वः । सोऽनपत्यो भार्याशतेन सह विरक्तः सन् वनं गतः । तत्र ऋषयस्तस्य पुत्रार्थामिष्टिं[1] चक्रुः ॥२५॥२६॥ निशि तृषितो राजा सुप्तान् विप्रान् दृष्ट्वा मन्त्रितं

शाबस्तस्तत्सुतो येन शावस्ती निर्ममे पुरी ॥ बृहदश्वस्तु शाबस्तिस्ततः कुवलयाश्वकः ॥२१॥ यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली ॥ सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥ २२ ॥ धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ॥ धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥२३॥ दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ॥ दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥२४॥ बर्हणाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित् ॥ युवनाश्वोऽभवत् तस्य सोऽनपत्यो वनं गतः ॥२५॥ भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ॥ इष्टिं स्म वर्तयांचक्रुरैन्द्रीं ते सुसमाहिताः ॥२६॥ राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ॥ दृष्ट्वा शयानान् विप्रांस्तान् पपौ मन्त्रजलं स्वयम् ॥२७॥ उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ॥ पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥२८॥ राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते ॥ ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २९ ॥ ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ॥ युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥ कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् ॥ मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात् ॥३१॥

जलं पत्न्यै देयं स्वयं पपौ ॥२७॥ प्रातस्ते मुनयो निरुदकं कलशं दृष्ट्वा केन पीतमिति पप्रच्छुः ॥ २८ ॥ ततो राज्ञा पीतं ज्ञात्वाऽहो दैव बलमेव मुख्यं बलम् । इत्युक्त्वेश्वराय नमश्चक्रुः ॥२९॥ ततः काले प्राप्ते सति युवनाश्वस्य दक्षिणं कुक्षिं भित्त्वा पुत्रो निर्गतः ॥३०॥ अयं कुमारः कं धास्यतीति विप्रैरुक्ते सति तस्यामिष्टयामाराधितः इन्द्रः आह मां धाता हे वत्स ! मा रोदीरिति ब्रुवन् तन्मुखे तर्जनीं ददौ ॥३१॥

१ पुत्रोत्पत्तिकारणम् ।

तस्य पिता भिन्नकुक्षिरपि विप्रदेवप्रसादतो न ममार कालान्तरे तत्रैव स युवनाश्वः सिद्धिं प्राप ॥ ३२ ॥ इन्द्रः पुत्रस्य नाम त्रसद्दस्यु-रिति चकार यस्माद्रावणादयस्त्रसन्ति ॥ ३३ ॥ असौ मान्धाता सप्तद्वीपवतीं महीं शशास ॥ ३४ ॥ स भूरिदक्षिणै-र्यज्ञैर्विष्णुमीजे ॥ ३५ ॥ कथंभूतं तम् द्रव्यमन्त्रविधियज्ञयजमानर्त्विग्धर्मादयः इत्येतत् सर्वं यदात्मकं तम् ॥ ३६ ॥ याव-त्पर्यन्तं सूर्यः प्रकाशते तत् सर्वं मान्धातुःक्षेत्रम् ॥ ३७ ॥ स मान्धाता शशबिन्दोः कन्यायां बिन्दुमत्यां भार्यायां पुरुकुत्सम्

न ममार पिता तस्य विप्रदेवप्रसादतः ॥ युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥३२॥ त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै ॥ यस्मात्त्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥३३॥ यौवनाश्वोऽथमान्धाता चक्रवर्त्यवनीं प्रभुः ॥ सप्त-द्वीपवतीमेकः शशासाच्युततेजसा ॥३४॥ ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्वात्मकमती-न्द्रियम् ॥३५॥ द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथार्त्विजः ॥ धर्मो देवश्च कालश्च सर्वमेतद्यदात्मकम् ॥३६॥ याव-त्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ॥ सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥३७॥ शशबिन्दोर्दुहितरि बिन्दुमत्या-मधान्नृपः ॥ पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ॥३८॥ तेषां स्वसारः पञ्चाशत्सौभरिं वव्रिरे पतिम् ॥ यमुनान्तर्जले मग्नस्तप्यमानः परंतपः ॥ ३९ ॥ निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ जातस्पृहो नृपं विप्रः कन्यामेकामया-चत ॥४०॥ सोऽप्याह गृह्यतां ब्रह्मन्कामं कन्यां स्वयंवरे ॥ स विचिन्त्याप्रियं स्त्रीणां जरठोऽयमसंमतः ॥४१॥ वली-पलित एजत्क इत्यहं प्रत्युदाहृतः ॥ साधयिष्ये तथाऽत्मानं सुरस्त्रीणामपीप्सितम् ॥ किं पुनर्मनुजेन्द्राणामिति व्यव-सितः प्रभुः ॥ ४२ ॥ मुनिः प्रवेशितः क्षत्त्रा कन्यान्तःपुरमृद्धिमत् ॥वृतश्च राजकन्याभिरेकः पञ्चाशता वरः॥ ४३ ॥



१, अम्बरीषम् २, मुचुकुन्दं ३ ॥ ३८ ॥ पंचाशत्कन्याश्चोत्पादयामास ॥ ३९ ॥ ताः सौभरिं पतिं वव्रिरे । एकदा सौभरिर्यमुनान्त-र्जले मीनराजस्य मैथुनं वीक्ष्य जातस्पृहः सन् मान्धातारं नृपं गत्वैकां कन्यां ययाचे ॥ ४० ॥ तदा राजा सौभरिं वृद्धं दृष्ट्वाऽऽह । हे ऋषे ! स्वयंवरे या वृणीयात्तां त्वं गृहाण ॥ ४१ ॥ तत् श्रुत्वा ऋषिः स्वमनसि जगाद अहं वृद्धः कंपमानशिराः अतो राज्ञैवमुक्तम् तस्मात् सुरस्त्रीणामपीप्सितं रूपं साधयिष्यामि । मनुष्यस्त्रीणां किमुत ॥४२॥ इति निश्चित्य तथा रूपं धृतवान् । ततो राज्ञः कन्यान्तःपुरे

प्रवेशितः सन् सर्वाभिर्वृतः ॥ ४३ ॥ तद्गतचेतसां तासां ममायं योग्यो नायं तवेति कलिर्मिथो बभूव ॥ ४४ ॥ ततः परिणीतः ऋषिस्ताभिः सह स्वमन्त्रसामर्थ्येन नानाविधोपवनेषु ॥ ४५ ॥ शय्यासनवस्त्रभूषणस्नानानुलेपोपहारपुष्पादिभिः शोभितः सन् सदा रेमे ॥ ४६ ॥ मान्धाता सौभरेर्गृहस्थाश्रमं वीक्ष्य विस्मितः सन् गर्वं जहौ ॥ ४७ ॥ मुनिरेवं गृहेषु सुखैर्विषयभोगादीन् सेवमानोऽपि नातुष्यत् ॥ ४८ ॥ स कदाचिन्मनसा मत्स्यसङ्गादुत्पन्नस्वतपोहानिं दृष्ट्वाह ॥४९॥ अहो तपस्विनो मे विनाशं पश्यत यतो जलचरप्रसङ्गाच्चिरं धृतं तपश्च्या-

तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ॥ ममानुरूपो नायं व इति तद्गतचेतसाम् ॥४४॥ स बह्वृचस्ताभिरपा-
रणीयतपः श्रियाऽनर्घ्यपरिच्छदेषु ॥ गृहेषु नानोपवनामलाम्भस्सरस्सु सौगन्धिककाननेषु ॥ ४५ ॥ महार्हशय्या-
सनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्वलंकृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृङ्गबन्दिषु ॥ ४६ ॥
यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ॥ विस्मितः स्तम्भमजहात्सार्वभौमश्रियाऽन्वितम् ॥४७॥ एवं गृहेष्वभिरतो
विषयान्विविधैः सुखैः ॥ सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥ स कदाचिदुपासीन आत्मापह्नवमा-
त्मनः ॥ ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥४९॥ अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य ॥
अन्तर्जले वारिचरप्रसङ्गात् प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥ ५० ॥ संगं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना
न विसृजेद्बहिरिन्द्रियाणि॥ एकश्चरन्रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥५१॥ एकस्तपस्व्य-
हमथाम्भसि मत्स्यसङ्गात्पञ्चाशदासमुत पञ्चसहस्रसर्गः ॥ नान्तं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषये
ऽर्थभावः ॥ ५२ ॥ एवं वसन्गृहे कालं विरक्तो न्यासमास्थितः ॥ वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५३ ॥

वितम् ॥५०॥ मुमुक्षुर्गृहस्थाश्रमिणां सङ्गं त्यजेत् । एकश्चरन् रहसि भगवति चित्तं युञ्जीत॥५१॥ अहो अहं जले मत्स्यसङ्गाद्धेतोः पञ्चाश-
द्भार्यासंबन्धात् पञ्चाशदासम् । ततः पुत्रैः पञ्चसहस्रसर्गः आसम् । तथाऽपि मनोरथानामन्तं व्रजामि॥५२॥एवं गृहे वसन् प्राप्तवैराग्यो वनं
जगाम । तदा तत्पत्न्योऽनुययुः ॥ ५३ ॥

ऋषिस्तत्र तपस्तप्त्वाऽग्निभिः सहात्मानं ब्रह्मणि युयोज ॥५४॥ तदा ताः स्त्रियः पत्युर्गतिं विलोक्य तमन्वीयुः ॥५५॥ इति श्रीभा० चू०नवम० षष्ठोऽध्यायः ॥ ६ ॥ मांधातुरन्वयः प्रोक्तः सप्तमे यत्र गीयते ॥ पुरुकुत्सस्य चाख्यानं हरिश्चन्द्रस्य चोत्तमम् ॥ १ ॥ श्रीशुक उवाच ॥ मान्धातुर्यः श्रेष्ठपुत्रोऽम्बरीषः कथितस्सः पितामहेन युवनाश्वेन स्वीकृतः । तस्य पुत्रो यौवनाश्वः॥१॥यौवनाश्वस्य हारीतः । एते त्रयो मांधातृगोत्रप्रवराः । अथ मांधातृपुत्रः पुरुकुत्सः । तस्मै सर्पैः स्वभगिनी नर्मदा दत्ता ॥२॥ तया स रसातलं नीतः सन् तत्र गंधर्वान् जघान॥३॥ ततो नागा वरं ददुः।हे पुरुकुत्स!ये तव चरितं नाम च ग्रहीष्यन्ति तेषां सर्पभयं न स्यात्।अथ पुरुकुत्सात् त्रसदस्युः।तस्यानरण्यः॥४॥ तस्य हर्यश्वः । तस्मादरुणः । तस्य निबन्धनः।तस्य सत्यव्रतः असौ त्रिशङ्कुरिति विश्रुतः ॥५॥ स पितुः शापात् चाण्डालतां प्राप्तोपि विश्वामित्रप्रभावेण सशरीरः स्वर्गं गतः ॥६॥ तत्र देवैरधश्शिराः पातितोऽपि विश्वामित्रेण बलात् स्तंभितः । सोऽद्यापि दिवि दृश्यते ॥ त्रिशङ्कोः पुत्रो हरिश्चन्द्रः यन्निमित्तं विश्वामित्रवसिष्ठयोराडीबकयोः पक्षिणोर्बहुकालं युद्धं बभूव । युद्धकारणं विश्वामित्रोराजसूयदक्षिणाच्छलेन हरिश्चन्द्रस्य सर्वस्वमपहृत्य तं पातयामास । तच्छ्रुत्वा कुपितो वसिष्ठोऽपि विश्वामित्रं त्वमाडी भवेति शशाप । सोऽपि त्वं बको भवेति शशापेति ॥ ७ ॥

तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्षणमात्मवान् ॥ सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥ ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम् ॥ अन्वीयुस्तत्प्रभावेण अग्निं शान्तमिवार्चिषः ॥ ५५ ॥ इति श्रीभागवते म० नवम० इक्ष्वाकुवंशवर्णने सौभर्याख्यानं नाम षष्ठोऽध्यायः ॥ ६ ॥ श्रीशुक उवाच ॥ मान्धातुः पुत्रप्रवरो योऽम्बरीषः प्रकीर्तितः ॥ पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः ॥ १ ॥ हारीतस्तस्य पुत्रोऽभून्मान्धातृप्रवरा इमे ॥ नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ॥२॥ तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ॥ गन्धर्वानवधीत्तत्र वध्यान्वै विष्णुशक्तिधृक् ॥ ३ ॥ नागाल्लब्धवरः सर्पादभयं स्मरतामिदम् ॥ त्रसदस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ ४ ॥ हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ निबन्धनः ॥ तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ॥ ५ ॥ प्राप्तश्चाण्डालतां शापाद्गुरोः कौशिकतेजसा ॥ सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ ६ ॥ पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् ॥ त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ॥ यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिकम् ॥ ७ ॥

स हरिश्चन्द्रोऽनपत्यो नारदोपदेशतो वरुणं शरणं गत्वा मे पुत्रो जायताम् ॥ ८ ॥ तेनैव त्वां यक्ष्य इति ययाचे । वरुणस्तथाऽस्त्वित्युक्तवान् तदा रोहितो नाम पुत्रो जातः ॥९॥ तदा वरुणः एत्य मां यजस्वेत्याह॥तदा राजोवाच । यदा पशुर्निर्गतदशदिवसः स्यात् तदा शुद्धो भवेत् ॥१०॥ दशदिवसनिर्गमे सति वरुणः आगत्य यजस्वेत्याह । स तमब्रवीत् । यदा पशोर्दन्ता जायेरन् तदा मेध्यो भवेत् ॥११॥ दन्ता जाताः । वरुणो यजस्वेत्याह । राजाऽब्रवीत् । यदा दुग्धदन्ताः पतिष्यन्ति तदा मेध्यो भवेत् ॥१२॥ दंताः पतिताः । वरुणो यजस्वेत्याह । तदा नृपः

सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ॥ वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥८॥ यदि वीरो महाराज तेनैव त्वां यजे इति ॥ तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः ॥९॥ जातस्सुतो ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत् ॥ यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ॥१०॥ निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत् ॥ दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥११॥ जाता दन्ता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति ॥१२॥ पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत् ॥ यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ॥१३॥ पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ सान्नाहिको यदा राजन्राजन्योऽथ पशुः शुचिः ॥ १४ ॥ इति पुत्रानुरागेणस्नेह-यन्त्रितचेतसा ॥ कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत ॥ १५ ॥ रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ॥ प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ १६ ॥ पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ॥ रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥ १७ ॥ भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रः सोऽप्यरण्येऽवसत्समाम् ॥ १८ ॥

आह । यदा पुनर्दंताः भवेयुस्तदा ॥ १३ ॥ पुनर्दंताः जाताः वरुणो यजस्वेत्याह । स आह । यदा युद्धयोग्यः स्यात् तदा ॥ १४ ॥ एवं पुनः पुनः राजा पुत्रस्नेहेन कालं वञ्चयामास । वरुणस्तं तं कालं प्रत्यैक्षत ॥१५॥ तदा रोहितः पितुश्चिकीर्षितं ज्ञात्वा प्राणरक्षणाय धनुर्गृहीत्वा वनं जगाम ॥ १६ ॥ तज्ज्ञात्वा वरुणो राज्ञि महोदरं विदधे । तदा रोहितः पितरं जलोदरग्रस्तं श्रुत्वा ग्रामं जगाम । तदेन्द्रो मार्गे तं प्रतिषिध्याह ॥ १७ ॥ हे रोहित ! तीर्थक्षेत्रनिषेवणैर्भूमेः पर्यटनं पुण्यम् । तत् श्रुत्वा सोऽपि वने वर्षमवसत् ॥ १८ ॥

एवं पञ्चवर्षपर्यन्तमिन्द्रो वृद्धब्राह्मणो भूत्वा न्यषेधत् ॥१९॥ एवं पुनः षष्ठे संवत्सरे पितरं वरुणग्रस्तं श्रुत्वा पुरीं प्रति गच्छन् मार्गेऽजीगर्त
द्विजात् शुनश्शेपं मध्यमं पुत्रं क्रीत्वा द्विजाय धनं दत्त्वा गृहे गत्वा॥२०॥पित्रे तं दत्त्वा ववन्दे । ततो हरिश्चन्द्रो मुक्तोदरः सन् पुरुषमेधेन
॥२१॥ वरुणादीनयजत् । यस्य यज्ञे विश्वामित्रो होता ॥ २२ ॥ जमदग्निरध्वर्युः । वसिष्ठो ब्रह्मा । अयास्यो मुनिरुद्गाता । तत्र यज्ञे तुष्टः
इन्द्रस्तस्मै सौवर्णरथं ददौ ॥२३॥ अग्रे शुनश्शेपस्य माहात्म्यं वक्ष्यामि सभार्यस्य भूपतेर्धैर्यं दृष्ट्वा ॥२४॥ प्रीतो विश्वामित्रो ज्ञानं ददौ ।

एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ॥ अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाऽऽह वृत्रहा॥१९॥षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ॥ उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम् ॥ २० ॥ शुनश्शेपं पशुं पित्रे प्रदाय समवन्दत ॥ ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ॥ २१ ॥ मुक्तोदरोऽयजद् देवान् वरुणादीन् महत्कथः ॥ विश्वामित्रोऽभवत् तस्मिन् होता चाध्वर्युरात्मवान् ॥ २२ ॥ जमदग्निरभूद् ब्रह्मा वसिष्ठोऽयास्यसामगः ॥ तस्मै तुष्टो ददाविन्द्रश्शातकौम्भमयं रथम् ॥ २३ ॥ शुनश्शेपस्य माहात्म्यमुपरिष्टात् प्रचक्ष्यते ॥ सत्यसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥२४॥ विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ॥ मनः पृथिव्यां तामद्भिस्तेजसाऽपोऽनिलेन तत् ॥२५॥खे वायुं धारयंस्तच्चभूतादौ तं महात्मनि ॥ तस्मिन् ज्ञानकलां ध्यात्वा तयाऽज्ञानंविनिर्दहन्॥२६॥ हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ॥ अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥२७॥ इति श्रीभाग० म० नवम० हरिश्चन्द्रोपाख्यानं नामसप्तमोऽध्यायः ॥७॥
श्रीशुक उवाच ॥ हरितो रोहितसुतश्चम्पस्तस्माद्विनिर्मिता ॥ चम्पापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥

हरिश्चन्द्रो मनो भूमौ धारयन् तां जले जलं तेजसि तेजो वायौ ॥२५॥ वायुमाकाशे तदहंकारेऽहंकारं महत्तत्त्व एकीकुर्वन् तस्मिन् ज्ञानकलां ध्यात्वा तेनाज्ञानं दहन् ॥२६॥ तं च हित्वा मुक्तबन्धनः सन् स्वस्वरूपेण तस्थौ ॥२७॥ इति श्रीभागवते चू० नवमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृपः ॥ सगरः कपिलाक्षेपान्निर्दग्धा यस्य सूनवः ॥ १ ॥ श्रीशुक उवाच ॥ रोहिताद्धरितः । तस्य चम्पः । येन चम्पापुरी निर्मिता । तस्मात् सुदेवः । तस्य विजयः ॥ १ ॥

१ अयास्यो मुनिः ।

तस्य भरुकः। ततो वृकः तस्य बाहुकः। स शत्रुभिर्हृतराज्यः सन् सभार्यो वनं गत्वा ॥ २ ॥ कालेन मृतः। भार्यामग्निं प्रवेष्टुकामां दृष्ट्वौर्वऋषिः सगर्भां ज्ञात्वा निवारितवान् ॥३॥ तज्ज्ञात्वाऽस्यै सपत्नीभिर्विषं दत्तम्। तेन सह सा पुत्रं सुषुवे ॥ ४ ॥ स सगराख्यश्चक्रवर्ती यत्पुत्रैः सागरः कृतः। किंच यः और्वऋषिवचसा तालजङ्घान् यवनान् शकान् हैहयबर्बरान् हत्वा कांश्चित्श्मश्रुधरान् मुक्तकेशानन्यथा च विकृतांश्चक्रे ॥ ५ ॥ ६ ॥ ७ ॥ स और्वऋषिणोपदिष्टयोगेनाश्वमेधैर्हरिमयजत्। तस्य यज्ञे इन्द्रोऽश्वं जहार ॥८॥ तदा राज्ञः सुमतिभार्याया

भरुकस्तत्सुतस्तस्माद् वृकस्तस्यापि बाहुकः ॥ सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत् ॥ २ ॥ वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती ॥ और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता ॥३॥ आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽन्धसा सह ॥ सह तेनैव संजातः सगराख्यो महायशाः ॥ ४ ॥ सगरश्चक्रवर्त्यासीत् सागरो यत्सुतैः कृतः ॥ यस्तालजङ्घान् यवनाञ्छकान् हैहयबर्बरान् ॥ ५ ॥ नावधीद्गुरुवाक्येन चक्रे विकृतवेषिणः ॥ मुण्डाञ्श्मश्रुधरान्कांश्चिन्मुक्तकेशार्धमुण्डितान् ॥ ६ ॥ अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान् ॥ सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ॥ ७ ॥ और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ॥ तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८ ॥ सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ॥ हयमन्वेषमाणास्ते समन्तान्न्यखनन् महीम् ॥ ९ ॥ प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके ॥ एष वाजिहरश्चौर आस्ते मीलितलोचनः ॥ १० ॥ हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ॥ उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥ स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः ॥ महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ १२ ॥

षष्टिसहस्राणि पुत्राः पितुराज्ञया हयमन्वेषमाणा महीं खनन्तः सन्तः ॥९॥ ऐशान्यां दिशि कपिलाश्रमेऽश्वं ददृशुः। अहो एषोऽश्वहरश्चौरो मीलितलोचनः आस्ते ॥ १० ॥ एष हन्यतां हन्यतामित्युक्त्वोदायुधाः अभिययुः तदा मुनिर्नेत्रोन्मीलनं चकार ॥ ११ ॥ तदा महतामनादरात् तेषामेव स्वशरीरोत्पन्नेन ते कोपाग्निना ते सर्वे क्षणाद् भस्मसादभवन् ॥ १२ ॥

केचित्तु कपिलस्य कोपाग्निना दग्धा इति वदन्ति तदसंगतम् । कुतः । सत्त्वमूर्तौ कपिले भेदस्यासंभवात् ॥ १३ ॥ येन सांख्यमयी विद्या प्रवर्तिता यया मुमुक्षुः संसारसमुद्रं तरति तस्य शत्रुमित्रादिभेददृष्टिः कुतः ॥१४॥ सगरस्यान्यभार्यायां केशिन्यामसमञ्जस इति पुत्रो जातः। तस्यांशुमान् ॥ १५ ॥ सोऽसमञ्जसः पूर्वजन्मनि योगाद् विचालितः इह जन्मनि जातिस्मरः सन् लोके आत्मानमसमञ्जसं दर्शयन् ॥१६॥ कूपवाप्यादिषु क्रीडतो बालान् प्राक्षिपत् ॥ १७ ॥ तदा जनाः राज्ञेऽकथयन् । राजा तत् श्रुत्वा पुत्रं ग्रामान्निस्सारयामास । तदाऽसमञ्जसः

न साधुवादो मुनिकोपभर्जिता नृपेन्द्रपुत्रा इति सत्त्वधामनि ॥ कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः ॥ १३ ॥ यस्येरिता सांख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ॥ भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥ योऽसमञ्जस इत्युक्तः स केशिन्यां नृपात्मजः ॥ तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः ॥ १५ ॥ असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् ॥ जातिस्मरः पुरा सङ्गाद्योगी योगाद्विचालितः ॥ १६ ॥ आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ॥ सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयञ्जनम् ॥ ॥ १७ ॥ एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ॥ योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ ॥ १८ ॥ अयोध्यावासिनः सर्वे बालकान् पुनरागतान् ॥ दृष्ट्वा विसिस्मिरे राजन्राजा चाप्यन्वतप्यत ॥ १९ ॥ अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणे ययौ ॥ पितृव्यखातानुपथं भस्मान्ति ददृशे हयम् ॥ २० ॥ तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् ॥ अस्तौत्समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥ २१ ॥

पितृस्नेहं त्यक्त्वा योगबलेन मृतबालान् दर्शयित्वा वनं ययौ॥१८॥सर्वेऽयोध्यावासिनः पुनः प्राप्तान् बालान् दृष्ट्वा विसिस्मिरे।राजाऽन्वतप्यत ॥१९॥ ततो राज्ञाऽश्वान्वेषणे प्रेरितोंऽशुमान् पितृव्यमार्गं गत्वा भस्मसमीपेऽश्वं ददृशे॥२०॥तत्र कपिलाख्यं हरिं दृष्ट्वा प्रणम्य तुष्टाव ॥२१॥

---

१ भुवो रजः खे कथमिति दृष्टान्तः ।

अंशुमानुवाच। हे कपिल! ब्रह्माऽपि त्वां न पश्यति। अपरे वयमपि कुतस्त्वां पश्येम ॥२२॥ देहभाजस्त्वन्मायामोहिताः स्वस्मिन् स्थितं त्वां न विदुः। किंतु गुणानेव पश्यन्ति॥२३॥ तं शुद्धज्ञानमूर्तिं सनकादिमुनिभिर्विचिन्त्यं त्वां मूढः कथं विचारयामि ॥२४॥ हे प्रशान्त! ज्ञानोपदेशाय गृहीतदेहं त्वां नमामि॥२५॥ मोहविभ्रान्तचेतसो नराः सत्यबुद्ध्या गृहादिषु भ्रमन्ति॥२६॥ हे भगवन्! अद्य तव दर्शनाद् दृढो मोहपाश-

अंशुमानुवाच ॥ न पश्यति त्वां परमात्मनोऽजनो न बुध्यतेऽद्यापि समाधियुक्तिभिः ॥ कुतोऽपरे[1] तस्य मनःशरीरधीविसर्गसृष्टा[3] वयमप्रकाशाः[2]॥२२॥ ये देहभाजस्त्रिगुणप्रधाना[5] गुणान् विपश्यन्त्युत वा तमश्च ॥ यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिःप्रकाशाः[4]॥ २३ ॥ तं त्वामहं ज्ञानघनं स्वभावप्रध्वस्तमायागुणभेदमोहैः ॥ सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं हि मूढः परिभावयामि ॥ २४ ॥ प्रशान्त मायागुणकर्मलिङ्गम[6]नामरूपं सदसद्विमुक्तम्[7] ॥ ज्ञानोपदेशाय गृहीतदेहं नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥ त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ॥ भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥२६॥ अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः[8] ॥ मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥ २७ ॥ श्रीशुक उवाच ॥ इत्थं गीतानुभावस्तं भगवान् कपिलो मुनिः ॥ अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥२८॥ श्रीभगवानुवाच ॥ अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ॥ इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत् ॥२९॥ तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ॥ सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥

श्छिन्नः॥२७॥ श्रीशुक उवाच॥ तदा प्रसन्नः कपिलो बुद्ध्याऽनुगृह्य तमाह॥२८॥ श्रीकपिल उवाच॥ हे वत्स! तव पितामहपशुरयमश्वो नीयताम्। इमे तव पितृव्याः दग्धाः गङ्गाजलमर्हन्ति॥२९॥ इति श्रुत्वा तं परिक्रम्य शिरसा प्रणम्य यज्ञाश्वमानयत्। सगरस्तेन क्रतुशेषं समापयत् ॥३०॥

---

१ स्वस्मात्परम्। २ अर्वाचीनाः। ३ देवतिर्यङ्नराणां सर्गेषु सृष्टाः। ४ अज्ञानाः। ५ त्रिगुणा बुद्धिरेव प्रधानं येषां ते। बुद्धिपरतन्त्रतया जाग्रत्स्वप्नयोर्विषयान्पश्यन्ति सुषुप्तौ तम एव पश्यन्ति। ६ मायया कर्माणि विश्वसृष्ट्यादीनि लिङ्गानि च यस्य तम्। ७ पुण्यपापरहितम्। ८ कामादीनामाशयः।

ततः सगरोंऽशुमति राज्यं कृत्वा मुक्तबन्धनः और्वोपदिष्टमार्गेण परमां गतिं लेभे॥३१॥इति श्रीभागव० चू० नवमस्कन्धे अष्टमोऽध्यायः ॥८॥ ॥ श्रीशुक उवाच ॥ अंशुमान् गंगानयनवमेंऽशुमतो वंशः खट्वाङ्गावधि वर्ण्यते ॥ गङ्गां भूतलमानिन्ये यस्य पौत्रो भगीरथः ॥ १ ॥ नकाम्यया तपः कुर्वन् कालेन मृतः॥१॥तत्पुत्रो दिलीपस्तद्वत् तपः कुर्वन् सोऽपि मृतः । तत्पुत्रो भगीरथो महत् तपस्तेपे ॥२॥ तदा तं गङ्गाऽऽत्मानं दर्शयन्ती जगाद । हे भगीरथ ! अहं प्रसन्ना वरदाऽस्मि । एवं गंगयोक्तो राजा स्वाभिप्रायं तस्यै शशंस ॥ ३ ॥ तत् श्रुत्वा गंगा

**राज्यमंशुमति न्यस्य निस्स्पृहो मुक्तबन्धनः ॥ और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥ इति श्रीभाग०म० नवमस्कन्धे सगरोपाख्याने अश्वमेधाश्वनयनं नामाष्टमोऽध्यायः ॥८॥ श्रीशुक उवाच ॥ अंशुमांश्च तपस्तेपे गङ्गानयनकाम्यया ॥ कालं महान्तं नाशक्नोत् ततःकालेन संस्थितः ॥ १ ॥ दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान् ॥ भगीरथस्तस्य पुत्रस्तेपे स सुमहत् तपः ॥ २ ॥ दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते ॥ इत्युक्तः स्वमभिप्रायं शशंसावनतो नृपः ॥३॥ कोऽपि धारयिता वेगं पतन्त्या मे महीतले ॥ अन्यथा भूतलं भित्वा नृप यास्ये रसातलम् ॥४॥ किं चाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम्॥मृजामि तदघं कुत्र राजंस्तत्र विचिन्त्यताम्॥५॥भगीरथ उवाच ॥ साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ॥ हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः ॥ ६ ॥ धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम्॥यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु॥७॥इत्युक्त्वा स नृपो देवं तपसाऽतोषयच्छिवम्॥कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत ॥८॥ तथेति राज्ञाऽभिहितं सर्वलोकहितः शिवः॥दधारावहितो गङ्गां पादपूतजलां हरेः ॥९॥ भगीरथः स राजर्षिर्निन्ये भुवनपावनीम् ॥ यत्र स्वपितृणां देहा भस्मीभूताः स्म शेरते ॥१०॥**

प्राह । हे नृप ! गगनात् महीतले पतन्त्याः मम वेगं को धारयिष्यति अन्यथा रसातलं यास्ये ॥ ४ ॥ किंच नराः मयि पापं मृजन्ति यत् तत् कुत्र त्यजामि । तत्रोपायो विचिन्त्यताम् ॥ ५ ॥ भगीरथ उवाच ॥ हे गंगे ! साधवोऽङ्गसङ्गेन ते पापं हरिष्यन्ति ॥ ६ ॥ शिवस्ते वेगं धारयिष्यति यस्मिन् विश्वं प्रोतम् ॥७॥ इत्युक्त्वा स तपसा शिवं तोषयामास । तदाऽल्पकालेन प्रसन्नः शिवः ॥ ८ ॥ नृपोक्तं सर्वं श्रुत्वा तथेत्युक्त्वा गङ्गां दधार ॥९॥ भगीरथो यत्र पितृणां देहाः भस्मीभूताः तत्र भुवनपावनीं गङ्गां निन्ये ॥ १० ॥

वायुवेगेन रथेन प्रयान्तं नृप पश्चात् धावन्ती देशान् पुनन्ती सती सगरात्मजानासिञ्चत् ॥११॥ यस्याः जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि सगरात्मजाः स्वर्गं जग्मुः॥१२॥ये तु श्रद्धया गङ्गां सेवन्ते ते स्वर्गं गच्छन्तीति किमु वक्तव्यम्॥१३॥ हे नृप ! गङ्गायाः यन्माहात्म्यं कथितं तदाश्चर्यं न ॥१४॥ यतो मुनयो यस्मिन् मनो निवेश्य देहसम्बन्धं त्यक्त्वा मुक्तिं प्राप्ताः॥१५॥भगीरथात् श्रुतः । तस्य नाभः । तस्य सिन्धुद्वीपः । तस्मादयुतायुः ॥१६॥ तस्य ऋतुपर्णः यो नलायाक्षहृदयं दत्त्वा तस्मादश्वविद्यां प्राप्तः । तत्पुत्रः सर्वकामः ॥१७॥ तस्य सुदासः ।

रथेन वायुवेगेन प्रयान्तमनुधावती ॥ देशान्पुनन्ती निर्दग्धानासिञ्चत्सगरात्मजान् ॥ ११ ॥ यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि ॥ सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ १२ ॥ भस्मीभूताङ्गसंगेन स्वर्याताः सगरात्मजाः ॥ किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥१३॥ न ह्येतत् परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ॥ अनन्तचरणाम्भोजप्रसूताया भवच्छिदः ॥ १४ ॥ सन्निवेश्य मनो यस्मिन् श्रद्धया मुनयोऽमलाः ॥ त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥१५॥ श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ॥ सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ १६ ॥ ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ॥ दत्त्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः ॥१७॥ ततःसुदासस्तत्पुत्रो मदयन्तीपतिर्नृप ॥ आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित् ॥ वसिष्ठशापाद्रक्षोऽभूदनपत्यस्स्वकर्मणा ॥१८॥ राजोवाच ॥ किंनिमित्तो गुरोः शापः सौदासस्य महात्मनः ॥ एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ १९ ॥ श्रीशुक उवाच ॥ सौदासो मृगयां किंचिच्चरन्रक्षो जघान ह ॥ मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ २० ॥ स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे ॥ गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ २१ ॥

तस्मात् मदयन्तीपतिः सौदासः यं मित्रसहं कल्माषाङ्घ्रिमाहुः स वसिष्ठशापाद् राक्षसोऽनपत्यश्च अभूत् ॥ १८ ॥ राजोवाच ॥ सौदासस्य गुरोः शापः किंनिमित्तः । एतत् कथ्यताम् ॥ १९ ॥ श्रीशुक उवाच ॥ एकदा सौदासो मृगयार्थं भ्रमन् कश्चित् राक्षसं जघान । तस्य भ्राता पलाय्यगतः ॥ २० ॥ स राज्ञोऽघं चिन्तयन् सूदरूपो भूत्वा तद्गृहे वर्तमानः सन्नेकदा भोक्तुकामाय गुरवे नरामिषं पक्त्वा ददौ ॥ २१ ॥

ततो रक्षःकृतं तद्विदित्वा द्वादशवार्षिकं वसिष्ठस्तत् परिवेक्ष्यमाणमभक्ष्यं नृमांसं विलोक्य क्रुद्धः सन् राजानं रक्षो भविष्यसीति शशाप॥२२॥ ततो राजा गुरुं शप्तुं जलं गृहीत्वोद्युक्तः ॥२३॥ तदा तत्पत्न्या मदयन्त्या निवारितः तत्तीक्ष्णं जलं सर्वं जीवमयं पश्यन् स्वपादयोर्जहौ ॥ २४ ॥ ततो राक्षसं भावमापन्नः पादे कल्माषतां गतः एकदा वने मैथुनासक्तौ वनवासिनौ तपस्विनौ स्त्रीपुरुषौ दृष्ट्वा ॥ २५ ॥ क्षुधार्तः सन् तत्र स्थितं विप्रं जगृहे। तदा तत्पत्नी जगाद। भवान् राक्षसो न इक्ष्वाकूणां वंशजोऽसि॥ २६ ॥ हे वीर ! त्वं मदयन्त्याः पतिः

रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम् ॥ सोऽप्यपोऽञ्जलिनाऽऽदाय गुरुं शप्तुं समुद्यतः ॥ २३ ॥ वारितो मदयन्त्याऽपो रुशतीःपादयोर्जहौ ॥ दिशः खमवनीं सर्वं पश्यञ्जीवमयं नृपः ॥ २४ ॥ राक्षसं भावमापन्नः पादे कल्माषतां गतः ॥ व्यवायकाले ददृशे वनौकोदम्पती द्विजौ ॥ २५ ॥ क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ॥ न भवान्राक्षसस्साक्षादिक्ष्वाकूणां महारथः ॥ २६ ॥ मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ॥ देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् ॥ २७ ॥ देहोऽयं मानुषो, राजन्पुरुषस्याखिलार्थदः ॥ तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ २८ ॥ एष हि ब्राह्मणो विद्वांस्तपश्शीलगुणान्वितः ॥ आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ॥ सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः ॥ २९ ॥ सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ॥ कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः ॥ ३० ॥ तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान् ॥ ३१ ॥ यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ॥ न जीविष्ये विना येन क्षणं च मृतकं यथा ॥ ३२ ॥

अधर्मं कर्तुं नार्हसि । पुत्रकामायाः मेऽपूर्णरतिं पतिं देहि ॥२७॥ हे राजन् ! अयं मानुषो देहः सर्वार्थदः । तद्वधे सर्वार्थवधो भवति । अयं तु द्विजः शीलगुणान्वितो महापुरुषमाराधयितुमिच्छुः ॥२८॥२९॥ सोऽयं ब्रह्मर्षिश्रेष्ठो राजर्षिश्रेष्ठाद्भवतो वधं कथमर्हति ॥३०॥ हे धर्मज्ञ ! अपापस्य ब्रह्मवादिनस्तस्य वधं कथं साधु मन्यसे ॥३१॥ यदि भक्षयसि तर्हि मां पूर्वं खाद । तेन विना क्षणं न जीविष्ये ॥ ३२ ॥

एवं विलपन्त्याः सत्याः शापमोहितः सौदासस्तं चखाद ॥३३॥ सा स्त्री राक्षसेन भक्षितं पतिं वीक्ष्य कुपिता सती प्राह ॥ ३४ ॥ हे पाप ! कामार्तायां मे पतिर्यतस्त्वया भक्षितः तस्मात् स्त्रीसङ्गात् त्वं मरिष्यसि ॥ ३५ ॥ एवं सौदासं शप्त्वा तदस्थीनि गृहीत्वाऽग्नौ प्रास्य भर्तुर्गतिं गता ॥३६॥ राजा द्वादशवर्षान्ते शापरहितः सन् गृहे गत्वा मैथुनायोद्योगं चक्रे । तदा ब्राह्मणीशापं विज्ञाय महिष्या निवारितः ॥३७॥ तदा स्त्रीसुखं तत्याज । तेन कर्मणाऽप्रजाः ! ततो राजाज्ञया वसिष्ठो मदयन्त्यां गर्भमादधौ ॥ ३८ ॥ सा सप्तवर्षाणि गर्भमादधार । ततो

एवं करुणभाषिण्या विलपन्त्या अनाथवत्॥व्याघ्रः पशुमिवाखादत्सौदासः शापमोहितः ॥ ३३ ॥ ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् ॥ शोचन्त्यात्मानमुर्वीशमशपत्कुपिता सती ॥ ३४ ॥ यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः ॥ ३५ ॥ एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता॥३६॥विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः॥ विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः ॥३७॥ ततः ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः ॥ वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ॥ ३८ ॥ सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ॥ जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥३९॥ अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥ नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥ ४० ॥ ततो दशरथस्तस्मात् पुत्र ऐडविडस्ततः ॥ राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत ॥ ४१ ॥ यो देवैरर्थितो दैत्यानवधीद्युधि दुर्जयः ॥ मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं संदधे मनः ॥ ४२ ॥ न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चात्मजाः ॥ न श्रियो न महीराज्यं न दाराश्चातिवल्लभाः ॥ ४३ ॥

वसिष्ठः पाषाणेनोदरं भित्वा निष्कासितवान् । तेनाश्मकः कथ्यते ॥ ३९ ॥ तस्य मूलकः । यः स्त्रीभिः स्ववेषं दत्त्वा परशुरामाद्रक्षितः । अतो नारीकवच इति नामान्तरम् । स निःक्षत्रे सति क्षत्रस्य मूलम् । अतो मूलक इति चोक्तः ॥ ४० ॥ तस्य दशरथः । ततः ऐडविडः । तस्य विश्वसहः । तस्मात् खट्वाङ्गः ॥ ४१ ॥ यो देवैः प्रार्थितो दैत्यानवधीत् । प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते मुहूर्त्तमात्रमायुर्ज्ञात्वा विमानेन स्वपुरं प्राप्य भगवति मनः संदधे ॥ ४२ ॥ एतद् दर्शयति । मम ब्रह्मकुलात् प्राणपुत्रस्त्रीराज्यादयो नातिप्रियाः ॥ ४३ ॥

विष्णुं विनाऽन्यद्वस्तु न पश्ये ॥४४॥ मह्यं देवैर्वरो दत्तः न तं वृणे ॥४५॥ ये देवास्तेऽपि स्वहृदिस्थं हरिं न पश्यन्ति अपरे किमुत ॥४६॥
अतो गुणेषु सङ्गं हित्वा तं शरणं प्रपद्ये ॥ ४७ ॥ इति बुद्ध्या निश्चित्याज्ञानं हित्वा हरिं प्रति स्वं भावमाश्रितः ॥ ४८ ॥ यं साधवो ब्रह्म-
सूक्ष्मं भगवान् वासुदेव इति गृणन्ति॥४९॥इति श्रीभागवते चू० नवमस्कन्धे नवमोऽध्यायः॥९॥ दशमे प्राह खट्वाङ्गवंशे श्रीरामसंभवम् ॥ तच्च-

न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ॥ नापश्यमुत्तमश्लोकादन्यत्किंचन वस्त्वहम् ॥ ४४ ॥ देवैः कामवरो
दत्तो मह्यं त्रिभुवनेश्वरैः॥ न वृणे तमहं कामं भूतभावनभावनः[1]॥४५॥ ये विक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम्॥
न विदन्ति प्रियं शश्वदात्मानं किमुतापरे॥४६॥अथेशमायारचितेषु संगं गुणेषु गन्धर्वपुरोपमेषु॥रूढं प्रकृत्याऽऽत्मनि
विश्वभर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥ ४७ ॥ इति व्यवसितो बुद्ध्या नारायणगृहीतया ॥ हित्वाऽन्यभावमज्ञानं[2] तत-
स्स्वं भावमाश्रितः॥४८॥यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम्[3]॥भगवान्वासुदेवेति यं गृणन्ति हि सात्वताः॥४९॥
इति श्रीभागवते महापुराणे नवमस्कन्धे सूर्यवंशानुवर्णने गंगावतरणादिवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥ श्रीशुक
उवाच ॥ खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः ॥ अजस्ततो महाराजस्तस्माद्दशरथोऽभवत् ॥ १ ॥ तस्यापि
भगवानेष साक्षाद्ब्रह्ममयो हरिः॥अंशांशेन चतुर्धाऽगात्पुत्रत्वं प्रार्थितः सुरैः॥२॥ रामलक्ष्मणभरतशत्रुघ्ना इति संज्ञया ॥
तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः ॥ श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः॥ ३ ॥

रित्रं च लङ्केशं हत्वाऽयोध्यागमावधि॥१॥श्रीशुक उवाच ॥ खट्वाङ्गाद् दीर्घबाहुः । स एव दिलीपः स्मृतः । इत्युक्तमानन्दरामायणे । तस्य
रघुः । तस्मादजः तस्य दशरथः ॥ १ ॥ तस्य देवैः प्रार्थितो हरिरंशेन रामलक्ष्मणभरतशत्रुघ्नाः इति चतुर्धा पुत्रत्वं जगाम । तस्य चरितं
वाल्मीकिमुख्यैर्वर्णितं त्वया श्रुतम् तथाऽपि संक्षेपतः कथ्यमानं शृणु ॥ २ ॥ ३ ॥

---

१ भूतभावेन हरौ भावना भक्तिर्यस्य सः । २ देहाद्यभिमानरूपम् । ३ शून्यवत्कल्पितं वागाद्यविषयीत्वात् ।

यः श्रीरामः पितुः सत्यस्य पालनार्थं राज्यं त्यक्त्वा वनं विवेश । तत्र शूर्पणख्याः वैरूप्यकरणात् सीता रावणेन हृता । तेन क्रुद्धो रामः समुद्रं गत्वा सेतुं बबन्ध ततो रावणादीन् जघान । एवंभूतः ईश्वरो नः संरक्षतु ॥४॥ किंच यो विश्वामित्रस्य यज्ञे मारीचादीन् राक्षसान् जघान ॥ ५ ॥ यः सीतास्वयंवरे दूतानां त्रिशतेनानीतं शैवं धनुरिक्षुदण्डमिव लीलया गृहीत्वा विकृष्य मध्ये बभञ्ज ॥६॥ ततो गुणशीलवयोरूपा-

गुर्वर्थं त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम् ॥
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषा रोषितभ्रूविजृम्भत्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोशलेन्द्रोऽवतान्नः ॥४॥ विश्वा-
मित्राध्वरे येन मारीचाद्या निशाचराः ॥ पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥ ५ ॥ यो लोकवीरसमितौ धनुरै-
शमुग्रं सीतास्वयंवरगृहे त्रिशतोपनीतम् ॥ आदाय बालगजलील इवेक्षुयष्टिं सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये
॥ ६ ॥ जित्वाऽनुरूपगुणशीलवयोंगरूपां सीताभिधां श्रियमुरस्यभिलब्धमानाम् ॥ मार्गे व्रजन्भृगुपतेर्व्यनयत्प्ररूढं
दर्पं महीमकृत यस्त्विरराजबीजाम् ॥ ७ ॥ यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ॥
राज्यं श्रियं प्रणयिनः सुहृदो निवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसंगः ॥ ८ ॥ रक्षस्स्वसुर्व्यकृत रूपमशुद्धबुद्धे-
स्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ॥ जघ्ने चतुर्दशसहस्रमपारणीयकोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९ ॥
सीताकथाश्रवणदीपितहृच्छयेन सृष्टं विलोक्य नृपते दशकन्धरेण ॥ जघ्नेऽद्भुतैणवपुषाऽऽश्रमतोऽपकृष्टो मारीचमाशु
विशिखेन यथा कमुग्रः ॥ १० ॥

दियुतां सीतां जित्वा मार्गे व्रजन् परशुरामस्य दर्पं दूरीकृतवान् ॥७॥ ततो नगरं प्राप्य राज्याभिषेकसमये विघ्नकर्त्र्याः कैकेय्या निमित्तेन पितुराज्ञया सीतालक्ष्मणसहितो योगी प्राणानिव राज्यं हित्वा वनं ययौ ॥८॥ ततः शूर्पणखायाः रूपं विरूपं चकार । ततः खरत्रिशिरादि चतुर्दशसहस्रराक्षसान् हत्वा दण्डकारण्ये उवास ॥ ९ ॥ ततो मृगवपुषं मारीचं जघ्ने । तदा रावणेन सीता हृता ॥ १० ॥

---

१ अपनीताध्वश्रमः । २ सुग्रीवलक्ष्मणाभ्याम् । ३ कठिनं गरिष्ठम् । ४ पूर्वमिति शेषः । ५ अपारणीयमलङ्घ्यमसह्यं कोदण्डं पाणौ यस्य सः ।

रावणेनासमक्षं सीतायां नीतायां सत्यां तद्वियोगेन दुःखितः स्त्रीसङ्गिनां दुःखं दर्शयन् लक्ष्मणेन सह वने चचार ॥११॥ तत्र जटायुषं पुत्र-वद्दग्ध्वा ततः कबन्धं राक्षसं हत्वा सुग्रीवादिभिः सख्यं विधाय वालिनि हते सति वानरैः सीतास्थितिं ज्ञात्वा पुनस्तैः सह समुद्रतीरं जगाम ॥ १२ ॥ तत्र त्रिरात्रोपवासेन प्रतीक्षितोऽपि समुद्रो नायातः । पश्चात् रामस्य क्रोधेन भीतः सिन्धुः पूजाद्रव्यं गृहीत्वा समीपमागत्य जगाद

रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम् ॥ भ्रात्रा वने कृपणवत् प्रियया वियुक्तः स्त्रीसंगिनां गतिमिति प्रथयंश्चचार ॥ ११ ॥ दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन् कबन्धं सख्यं विधाय कपिभिर्दयितागतिं तैः ॥ बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यैर्वेलामगात्स मनुजोऽजभवार्चिताङ्घ्रिः ॥ १२ ॥ यद्रोषविभ्रमविवृत्तकटाक्षपातसं-भ्रान्तनक्रमकरो भयगीर्णघोषः ॥ सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥ १३ ॥ न त्वां वयं जडधियो नु विदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशम् ॥ यत्सत्त्वतः सुरगणा रजसः प्रजेशा मन्यो-श्च भूतपतयः स भवान् गुणेशः ॥ १४ ॥ कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम् ॥ बध्नीहि सेतुमिह ते यशसो वितत्यै गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥ १५ ॥ बद्ध्वोदधौ रघुपतिर्विविधाद्रि-कूटैः सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ॥ सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लङ्कां विभीषणदृशाऽविशदग्रदग्धाम् ॥ १६ ॥

॥१३॥ हे भूमन् ! वयं जडधियः आदिपुरुषं त्वां न विदाम ॥१४॥ हे राम ! जलमाक्रम्य यथेच्छं याहि तथा रावणं जहि पत्नीं प्राप्नुहि । हे वीर ! इदं जलं ते प्रतिबन्धकं न तथाऽपि यशोविस्ताराय सेतुं बधान ॥ १५ ॥ ततो रामः समुद्रे पर्वतशृङ्गैः बद्ध्वा सुग्रीवनीलहनुमदा-दिभिः सह विभीषणेन दर्शितां लङ्कां प्रविवेश ॥ १६ ॥



---

१ मूर्तिमान् । २ यस्येत्यर्थः । यदंशेभ्यः सत्त्वादिभ्यः सुरगणादयो भवन्ति स भवान् । ३ पुरीषप्रायम् । ४ त्रैलोक्यं रावयत्याक्रन्दयतीति तम् । ५ भूरुहाणामङ्गानि शाखादीनि तैः । ६ दृग्बुद्धिः ।

सा लङ्का वानरेन्द्रसैन्यैः प्रचलिता बभूव ॥ १७ ॥ एवं दृष्ट्वा रावणो निकुम्भकुम्भधूम्राक्षदुर्मुखादीन् कुम्भकर्णं च युद्धाय प्राहिणोत् ॥१८॥ तदा खड्गशूलधनुश्शक्तितोमरादिभिर्युक्तां राक्षससेनां दृष्ट्वा रामः सुग्रीवलक्ष्मणहनूमद्गन्धमादर्नीलाङ्गदादिभिः सह युद्धाय जगाम ॥ १९ ॥ ततोऽङ्गदाद्या सेनापतयो वृक्षगिरिशृंगदेषुभिः रावणसैन्यं प्रतिद्वन्द्वीभूय जघ्नुः ॥ २० ॥ रावणः स्वसैन्यनाशं दृष्ट्वा क्रुद्धः सन् रथमारुह्य

सा वानरेन्द्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटङ्का ॥ निर्भज्यमानधिषणध्वजहेमकुम्भशृंगाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ १७ ॥ रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ॥ पुत्रं प्रहस्तमतिकायविकम्पनादीन् सर्वानुगान्समहिनोदथ कुम्भकर्णम् ॥ १८ ॥ तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम् ॥ सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलांगदर्क्षपनसादिभिरन्वितोऽगात् ॥ १९ ॥ तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः ॥ जघ्नुर्द्रुमैर्गिरिगदेषुभिरंगदाद्याः सीताभिमर्शहतमंगलरावणेशान् ॥२०॥ रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ॥ स्वःस्यन्दने द्युमति मातलिनोपनीते विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ २१ ॥ रामस्तमाह पुरुषादपुरीष यन्नः कान्ताऽसमक्षमसताऽपहृता श्ववत्ते ॥ त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः ॥ २२ ॥ एवं क्षिपन् धनुषि सन्धितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद ॥ सोऽसृग् वमन् दशमुखैर्न्यपतद्विमानाद्धाहेति जल्पति जने सुकृतीव रिक्तः ॥ २३ ॥ ततो निष्क्रम्य लंकाया यातुधान्यः सहस्रशः ॥ मन्दोदर्या समं तस्मिन् प्ररुदत्य उपाद्रवन् ॥ २४ ॥

रामं जगाम । रामः इन्द्रप्रेरितेन मातलिनाऽऽनीतं रथमारुह्य वाग्बाणैर्जघान ॥ २१ ॥ हे पुरुषाद ! हे नरकतुल्य ! त्वं मेऽसमक्षं भार्यां हृतवान् अतो निन्द्यकर्मकर्तुस्तेऽद्य कालान्तकोऽहं तत्फलं दर्शयामि ॥ २२ ॥ एवं बहुधा निर्भर्त्स्य धनुषि संधितं बाणं मुमोच । तेन तद्धृदयं बिभेद । स दशमुखै रुधिरं वमन् पपात ॥ २३ ॥ ततो मन्दोदर्याद्याः स्त्रियो लङ्कायाः निष्क्रम्य रुरुदुः ॥ २४ ॥

---

१ क्रीडास्थानम् । २ धान्यागारम् । ३ कोशः । ४ गृहद्वारम् । ५ पुरद्वारम् । ६ प्रासादादिपुरोभागाच्छादिनी । ७ कपोतपालिका । ८ वेदिकादि । ९ चतुष्पथम् । १० द्वन्द्वं यथा भवति तथा । ११ हतमङ्गलो रावणः ईशो येषां तान् । १२ क्षीणपुण्यः ।

तत्रैत्य स्वस्वपतीन् रुरुदुरूचुश्च ॥२५॥ हे रावण ! नाथ ! वयं हताः स्मः । हे त्वद्विहीना लङ्का कं शरणं यायात् ॥ २६ ॥ भवान् कामवशं
गतः सीतायास्तेजोऽनुभावं न वेद येनेमां दशां प्राप्तः ॥२७॥ हे कुलनन्दन ! त्वया लङ्का वयं च विधवाः कृताः इत्यादिविलापम् ॥२८॥
श्रीशुक उवाच ॥ रामाज्ञया विभीषणः स्वानां क्रियां चक्रे ॥२९॥ ततो रामोऽशोकवनिकाश्रमे शिंशपावृक्षमूले स्थितां कृशां वियोगदुःख-

स्वान्स्वान् बन्धून् परिष्वज्य लक्ष्मणेषुभिरर्दितान् ॥ रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना ॥२५॥ हा हताः स्म
वयं नाथ लोकरावण रावण ॥ कं यायाच्छरणं लंका त्वद्विहीना परार्दिता ॥ २६ ॥ नैवं वेद महाभाग भवान् काम-
वशं गतः ॥ तेजोऽनुभावं सीताया येन नीतो दशामिमाम् ॥ २७ ॥ कृतैषा विधवा लंका वयं च कुलनन्दन ॥ देहः
कृतोऽन्नं गृध्राणामात्मा नरकहेतवे ॥ २८ ॥ श्रीशुक उवाच ॥ स्वानां विभीषणश्चक्रे कोसलेन्द्रानुमोदितः ॥ पितृमे-
धविधानेन यदुक्तं साम्परायिकम् ॥ २९ ॥ ततो ददर्श भगवानशोकवनिकाश्रमे ॥ क्षामां स्वविरहव्याधिं शिंशपामू-
लमास्थिताम् ॥ ३० ॥ रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत ॥ आत्मसंदर्शनाह्लादविकसन्मुखपंकजाम् ॥
॥ ३१ ॥ आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः ॥ विभीषणाय भगवान् दत्त्वा रक्षोगणेशताम् ॥ ३२ ॥ लंका-
मायुश्च कल्पान्तं ययौ चीर्णव्रतः पुरीम् ॥ अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ३३ ॥ उपगीयमान-
चरितः शतधृत्यादिभिर्मुदा ॥ गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥३४॥ महाकारुणिकोऽतप्यज्जटिलं स्थण्डि-
लेशयम् ॥ भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ॥ ३५ ॥

युक्ताम्॥३०॥दीनां भार्यां वीक्ष्य दयां चकार॥३१॥ ततो रामः सीतां गृहीत्वा लक्ष्मणसुग्रीवहनुमदादिभिः सह पुष्पकं विमानमारुरोह॥३२॥
रामो विभीषणाय लङ्काधिपत्यं कल्पान्तमायुश्च दत्त्वा मार्गे पुष्पैर्विकीर्यमाणः स्वपुरीं ययौ ॥३३॥ तदा गोमूत्रपक्वयवान्नभोजिनं जटिलं
वल्कलाम्बरम्॥३४॥भूमिशायिनं भरतं श्रुत्वा दुःखं प्राप । भरतः आगतं रामं श्रुत्वा पादुके शिरसि धृत्वा पौरामात्यपुरोहितैः सह ॥३५॥

१ और्ध्वदेहिकम् ।

नन्दिग्रामाद्गीतवादित्रशब्दैर्ब्रह्मघोषैः ॥ ३६ ॥ रथाश्वगजपदातिभिर्वेश्याभिः सह च्छत्रचामरादिचिह्नानि गृहीत्वा ॥ ३७ ॥ ३८ ॥ रामसमीपं प्राप्य पादुके पुरतः स्थापयित्वा प्रेम्णा पादयोः पपात ॥ ३९ ॥ रामस्तं चिरमालिङ्ग्य नेत्रोदकैः स्नापयामास । विप्रेभ्यो नमश्चक्रे ॥ ४० ॥ प्रजाः रामं नमश्चक्रुः ॥४१॥ चिरागतं रामं वीक्ष्य जनाः पुष्पैर्वृष्टिं कुर्वन्तो ननृतुः । भरतः पादुके अगृह्णात् ॥४२॥ विभीषणश्चा-

नन्दिग्रामात् स्वशिबिराद्गीतवादित्रनिस्स्वनैः ॥ ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ॥३६॥ स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥ सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः ॥३७॥ श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः ॥ पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि च ॥३८॥ पादयोर्न्यपतत् प्रेम्णा प्रक्लिन्नहृदयेक्षणः॥ पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः ॥ ३९ ॥ तामाश्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः ॥ रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः ॥४०॥ तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥ धुन्वन्त उत्तरासङ्गान् पतिं वीक्ष्य चिरागतम् ॥४१॥ उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा ॥ पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ॥४२॥ विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ धनुर्निषंगाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् ॥४३॥ अबिभ्रदंगदः खड्गं हैमं चर्मर्क्षराण्नृप ॥ पुष्पकस्थोऽन्वितः स्त्रीभिःस्तूयमानश्च बन्दिभिः॥४४॥विरेजे भगवान् राजन् ग्रहैश्चन्द्र इवोदितः॥ भ्रातृभिर्नन्दितः सोऽपि सोत्सवां प्राविशत्पुरीम् ॥४५॥ प्रविश्य राजभवनं गुरुपत्नीः स्वमातरम् ॥ गुरून् वयस्यावरजान् पूजितः प्रत्यपूजयत् ॥ ४६ ॥ वैदेही लक्ष्मणश्चैव यथावत्समुपेयतुः ॥ पुत्रान्स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः ॥ आरोप्यांकेऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः ॥४७॥

मरं सुग्रीवो व्यजनं हनूमान् श्वेतं छत्रं शत्रुघ्नो धनुर्निषङ्गान् सीता तीर्थकमण्डलुम् ॥ ४३ ॥ अङ्गदः खड्गं जाम्बवान् चर्म । एवंविधो रामो बन्दिभिः स्तूयमानः पुष्पकविमानस्थः ॥४४॥ ग्रहैश्चन्द्र इव रेजे । ततः उत्सवसहितां पुरीं प्रविश्य ॥४५॥ राजभवनं गत्वा स्वमातॄर्ननाम ॥ ४६ ॥ सीता लक्ष्मणश्च तथैव नमश्चक्रतुः । मातरस्तानङ्के आरोप्य प्रेमाश्रुभिः सिञ्चन्त्यः शोकं जहुः ॥ ४७ ॥

१ राजार्हाणि । २ प्राणानिव स्थितांस्तान् पुत्रान् प्रति तन्वः इन्द्रियाणि इव स्थिताः मातरः उत्थिताः ।

ततो वसिष्ठो जटाः निर्मुच्य चतुस्समुद्रजलैः रामं सिंहासनेऽभ्यषिञ्चत् ॥ ४८ ॥ एवं कृताभिषेकः सुवासाः मालादिभिः राजचिह्नैरलंकृतो भ्रातृभिर्भार्यया सह बभौ ॥४९॥ तदा वर्णाश्रमगुणान्विताः प्रजा स्वधर्मनिरताः बभूवुः ॥५०॥ रामः पितृवत् प्रजा जुगोप । प्रजाः तं पितरं मेनिरे । त्रेतायां कृतयुगसमः कालोऽभवत् ॥ ५१ ॥ रामे राज्ञि सति वनानि नद्यो गिरयो वर्षाणि द्वीपाः समुद्राः ॥५२॥ एते सर्वे कामदुघा आसन्। प्रजानामाधिव्याधिजराग्लानिशोकभयक्लेशाः नाभवन्॥५३॥रामराज्येऽनिच्छतां मृत्युर्नासीत्। रामः एकपत्नीव्रतधरो राजर्षिः॥५४॥

एवं कृतशिरःस्नानः जटा निर्मुच्य विधिवत् कुलवृद्धैः समं गुरुः ॥ अभ्यषिञ्चद्यथैवेन्द्रं चतुस्सिन्धुजलादिभिः ॥४८॥ एवं कृतशिरःस्नानः सुवासाः स्रग्व्यलंकृतः ॥ स्वलंकृतः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥४९॥अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ॥ प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ॥५०॥ जुगोप पितृवद्रामो मेनिरे पितरं च तम् ॥ त्रेतायां वर्त्तमानायां कालः कृतसमोऽभवत् ॥ ५१ ॥ रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥ वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः ॥ ५२ ॥ सर्वे कामदुघा आसन् प्रजानां भरतर्षभ ॥ नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ॥ ५३ ॥ मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे ॥ एक पत्नीव्रतधरो राजर्षिचरितः शुचिः ॥ ५४ ॥ स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरत ॥ प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ॥ धिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥ ५५ ॥ इति श्रीभाग० म० नवमस्कन्धे इक्ष्वा० सगरोपाख्याने श्रीरामचरितं नाम दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ भगवानात्मनाऽऽत्मानं राम उत्तमकल्पकैः ॥ सर्वदेवमयं देवमीज आचार्यवान्मखैः ॥ १ ॥ होत्रेऽददाद् दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः ॥ अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥

स्वयं गृहस्थाश्रमधर्मं लोकान् शिक्षयन्नाचरत् । भावज्ञा सीता प्रेम्णा शीलेन नम्रत्वादिना भर्तुर्मनो जहार ॥५५॥ इति श्रीभागवते चू० नवमस्कन्धे दशमोऽध्यायः ॥१०॥ ततश्चैकादशेऽयोध्यामावसन्ननुजैः सह । यज्ञादि यश्चकारेशो रामस्तदनुवर्ण्यते ॥ १ ॥ श्रीशुक उवाच । भगवान् रामो यज्ञैः सर्वदेवमयमात्मानमीजे ॥१॥ यत्र यज्ञे होत्रे पूर्वां दिशं ददौ । ब्रह्मणे दक्षिणाम् । अध्वर्यवे पश्चिमाम् । सामगायोत्तराम्॥२॥

शेषां भूमिमाचार्याय । इदं सर्वं ब्राह्मण एवार्हति इति मन्यमानो निस्स्पृहः ॥३॥ भूषणवस्त्रोपवस्त्रैः शेषितः । तथा सीताऽपि मङ्गलसूत्रावशेषिता ॥४॥ ते ऋत्विजो रामस्य वात्सल्यं वीक्ष्य प्रीताः सन्तस्तस्मै सर्वं दत्त्वोचुः ॥ ५ ॥ हे भगवन् ! त्वया किं नु न दत्तम् ? त्वं हृदयं प्रविश्याज्ञानं नाशयसि ॥६॥ तस्मै ब्रह्मण्यदेवाय रामाय नमः ॥७॥ कदाचित् लोकवृत्तं जिज्ञासुः रामो रात्र्यां गूढश्चरन् कस्यचिद्भार्यामुद्दिश्य वाचः शुश्राव ॥ ८ ॥ तदेवाह । हे स्त्रि ! परवेश्मगां दुष्टां त्वां न धारयामि स्त्रीलोभी रामः सीतां धारयतु अहं तु पुनस्त्वां न सेवे ॥ ९ ॥

आचार्याय ददौ शेषां यावती भूस्तदन्तरा ॥ मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निस्स्पृहः ॥ ३ ॥ इत्ययं तदलंकारवासोभ्यामवशेषितः ॥ तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता ॥ ४ ॥ ते तु ब्रह्मण्यदेवस्य वात्सल्यं वीक्ष्य संस्तुतम् ॥ प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥ अप्रत्तं नस्त्वया किन्नु भगवन् भुवनेश्वर ॥ यन्नोऽन्तर्हृदयं विश्य तमो हंसि स्वरोचिषा ॥ ६ ॥ नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे ॥ उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये ॥७॥ कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ॥ चरन् वाचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित ॥८॥ नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ॥ स्त्रीलोभी बिभृयात् सीतां रामो नाहं भजे पुनः ॥ ९ ॥ इति लोकाद्बहुमुखाद् दुराराध्यादसंविदः ॥ पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥ १० ॥ अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ॥ कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥११॥ अंगदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ॥ तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ १२ ॥ सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ॥ गन्धर्वान् कोटिशो जघ्ने भरतो विजये दिशाम् ॥ १३ ॥

इति लोकापवादाद्भीतेन रामेण त्यक्ता सती सीता गर्भवती शनैर्वाल्मीकेराश्रमं प्राप्ता ॥१०॥ ततः प्रसूतिकाले प्राप्ते कुशलवौ द्वौ पुत्रौ सुषुवे । तयोर्जातकर्माद्याः क्रियाः मुनिश्चक्रे ॥ ११ ॥ अङ्गदश्चित्रकेतुश्च लक्ष्मणस्य पुत्रौ । तक्षपुष्कलौ भरतस्य पुत्रौ ॥ १२ ॥ सुबाहुश्रुतसेनौ शत्रुघ्नस्य पुत्रौ । भरतो दिग्विजये कोटिशो गन्धर्वान् हत्वा ॥ १३ ॥

१ अज्ञात् ।

मधुवने मथुरां नाम पुरीं चक्रे । सीता वाल्मीकिसमीपे पुत्रौ
तदीयं धनं राज्ञे निवेदयामास । शत्रुघ्नो मधोः पुत्रं लवणं राक्षसं हत्वा ॥१४॥ स्थापयित्वा ॥ १५ ॥ रामचरणौ ध्यायन्ती पातालं विवेश ॥ १६ ॥ तत् श्रुत्वा रामो बुद्ध्या शोकं रुन्धन्नपि तद्गुणान् स्मरन् तद्वियोगं न सेहे । एवं स्त्रीपुंसप्रसङ्गः सर्वत्र त्रासकरः ॥१७॥ ततः ऊर्ध्वं ब्रह्मचर्यं धारयन् त्रयोदशसहस्रवर्षाण्यग्निहोत्रं जुहाव ॥ १८ ॥ ततो भक्तानां

शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ॥ १४ ॥ हत्वा मधुवने चक्रे मथुरां
तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ॥
नाम वै पुरीम् ॥ मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ॥ १५ ॥ ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥
तच्छ्रुत्वा भगवान् रामो रुन्धन्नपि धिया शुचः ॥ १६ ॥ स्मरंस्तस्या गुणांस्तांस्तान् नाशक्नोद्रोद्धुमीश्वरः ॥ स्त्रीपुंप्र-
संग एतादृक् सर्वत्र त्रासमावहः ॥ १७ ॥ अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः ॥ तत ऊर्ध्वं ब्रह्मचर्यं धारयन्न-
जुहोत् प्रभुः ॥ त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥ स्मरतां हृदि विन्यस्य विद्धं दण्डककण्टकैः ॥ स्व-
पादपल्लवं राम आत्मज्योतिरगात् ततः ॥ १९ ॥ नेदं यशो रघुपतेः सुरयाच्ञयाऽऽत्तलीलातनोरधिकसाम्यविमुक्त-
धाम्नः[1] ॥ रक्षोवधो जलधिबन्धनमस्त्रपूगैः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥ यस्यामलं नृपसदस्सु यशो-
ऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम्[2] ॥ तं नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं शरणं प्रपद्ये ॥२१॥
स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा ॥ कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥ २२ ॥ पुरुषो
रामचरितं श्रवणैरुपधारयन् ॥ आनृशंस्यपरो राजन्कर्मबन्धैर्विमुच्यते ॥ २३ ॥

हृदि स्वचरणकमलं कृत्वा स्वधाम प्रत्यगात् ॥ १९ ॥ किंच रामस्य सेतुबन्धनं रक्षोवधादि च कविभिर्वर्णितमपि स्तुतिर्न भवति द्वन्द्व रहितधाम्नस्तस्य किं कपयः सहायाः॥२०॥यस्य रामस्य यशो युधिष्ठिरादीनां सदसि मार्कण्डेयादयो वर्णयन्ति तं रघुपतिं शरणं प्रपद्ये ॥२१॥ ततस्ते कोसलदेशवासिनः सर्वे यत्र योगिनो गच्छन्ति तत् स्थानं ययुः॥२२॥हे राजन् ! पुरुषो रामचरित्रं शृण्वन् कर्मबन्धाद्विमुच्यते॥२३॥

१ अधिकसाम्याभ्यां विमुक्त धाम प्रभावः यस्य तस्य । लीलामात्रत्वात्तत्सहायस्येति भावः । २ तेषां पट्टवदाभरणरूपम् ।

राजोवाच॥ हे शुक ! स रामः स्वयं भ्रातॄन् प्रति कथमवर्तत तथा तस्मिन् रामे ते भ्रातरः प्रजाश्च कथमवर्तन्त तद् वद॥२४॥ श्रीशुक उवाच॥ रामो भ्रातॄन् दिग्विजये आदिशत्। ततः पुरीमैक्षत॥२५॥ कथंभूतां पुरीम्। गन्धोदकैः सिक्तमार्गाम्॥२६॥ प्रासादपुरद्वारसभादिषु स्वर्णकलशैः पताकाभिश्च शोभिताम्॥२७॥ पूगैः कदलीभिरादर्शैः स्रग्भिस्तोरणैश्च मण्डिताम्॥२८॥ ततः पुरजनाः अर्हणपाणयस्तं राममीयुः

राजोवाच॥ कथं स भगवान् रामो भ्रातॄन्वा स्वयमात्मनः॥ तस्मिन्वा तेऽन्ववर्तन्त प्रजाः पौराश्च ईश्वरे॥ २४॥
श्रीशुक उवाच॥ अथादिशद् दिग्विजये भ्रातॄंस्त्रिभुवनेश्वरः॥ आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः॥ २५॥
आसिक्तमार्गां गन्धोदैः करिणां मदशीकरैः॥ स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव॥ २६॥ प्रासादगोपुरसभाचैत्यदेवगृहादिषु॥ विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम्॥२७॥ पूगैः सवृन्तै रम्भाभिः पट्टिकाभिः सुवाससाम्॥ आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम्॥ २८॥ तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः॥ आशिषो युयुजुर्देव पाहीमां प्राक् त्वयोद्धृताम्॥२९॥ ततः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः॥ आरुह्य हर्म्याण्यरविन्दलोचनमतृप्तनेत्राः कुसुमैरवाकिरन्॥३०॥ अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वजादिभिः॥ अनन्ताखिलकोशाढ्यमनर्घ्योरुपरिच्छदम्॥ ३१॥ विद्रुमोदुम्बरद्वारैर्वैडूर्यस्तम्भपङ्क्तिभिः॥ स्थलैर्मारकतैः स्वच्छैर्भ्राजत्स्फटिकभित्तिभिः॥ ३२॥ चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः मुक्ताफलैश्चिदुल्लासैः[1] कान्तकामोपपत्तिभिः[2]॥३३॥ धूपदीपैः सुरभिभिर्मण्डितं पुष्पमण्डितैः॥ स्त्रीपुंभिः सुरसंकाशैर्जुष्टं भूषणभूषणैः॥ ३४॥

आशीर्वादं च ददुः। हे राम ! पुरा वराहरूपेण त्वयोद्धृतां पृथ्वीं पाहि॥२९॥ ततः प्रजाश्चिरागतं पतिं विलोक्य हर्म्याण्यारुह्य पुष्पैरवाकिरन्॥३०॥ अथ रामः स्वगृहं विवेश। कथंभूतं गृहम्। रत्नादिकोशैराढ्यम्। अमौल्यपरिच्छदम्॥३१॥ प्रवालादीनां द्वारैर्वैडूर्यस्तम्भपङ्क्तिभिर्मण्डितम्॥३२॥ स्रक्पट्टिकावस्त्रमणिमुक्ताफलैर्भोगसाधनसाहित्यैर्युक्तम्॥३३॥ धूपदीपपुष्पादिभिर्वस्त्रालंकारयुक्तैः स्त्रीपुंभिः शोभितम्॥३४॥

---

१ चिद्वदुज्ज्वलैः। २ रमणीयभोगसाधनैः।

एतादृशे गृहे रामः सीतया सह रेमे ॥३५॥ यथाकामं बहुवर्षसमूहान् विषयभोगान् बुभुजे ॥३६॥ इति श्रीभागवते चूर्णिकायां नवमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते । एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥ १ ॥ श्रीशुक उवाच ॥ कुशस्यातिथिः पुत्रः । तस्य निषधः । ततो नभः । तस्य पुण्डरीकः । तस्मात् क्षेमधन्वा ॥१॥ तस्य देवानीकः । तस्मादनीहः ।तस्य पारियात्रः । ततो बलः । तस्य स्थलः । तस्मादर्कसंभूतः वज्रनाभः ॥२॥ ततः स्वगणः । तस्य विधृतिः । ततो हिरण्यनाभः । स जैमिनिशिष्योऽभूत् ॥३॥ यस्मात् याज्ञवल्क्योऽध्यात्मयोगं प्राप ॥४॥ हिरण्यनाभस्य पुष्यः । तस्य ध्रुवसंधिः । तस्मात्सुदर्शनः अग्निवर्णः शीघ्रश्च। शीघ्रस्य मरुः ॥ ५ ॥ यो मरुर्योगसिद्धः सन् कलापग्रामे स्थित्वा कलेरन्ते नष्टं सूर्यवंशं पुनर्भावयिष्यति ॥ ६ ॥ तत्पुत्रः प्रसुश्रुतः । तस्य संधिः । तस्मादमर्षणः । तस्य सहस्वान् । ततो विश्वसाह्वः । तस्य प्रसेनजित् । ततस्तक्षकः ॥ ७ ॥

तस्मिन् स भगवान्रामः स्निग्धया प्रिययेष्टया ॥ रेमे स्वाराममधीशणामृषभः सीतया किल ॥ ३५ ॥ बुभुजे च यथा कालं कामान्धर्ममपीडयन् ॥ वर्षपूगान्बहून् नृणामभिध्याताङ्घ्रिपल्लवः ॥३६॥ इति श्रीभागवते महापुराणे नवमस्कन्धे इक्ष्वा० सगरचरिते श्रीरामोपाख्यानं नाम एकादशोऽध्यायः ॥ ११ ॥ श्रीशुक उवाच ॥ कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ॥ पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत् ततः ॥ १ ॥ देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः ॥ ततो बलःस्थलस्तस्माद्वज्रनाभोऽर्कसंभवः ॥ २ ॥ स्वगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः ॥ ३ ॥ शिष्यः कौसल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः ॥ योगं महोदयमृषिर्हृदयग्रन्थिभेदकम् ॥ ४ ॥ पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् ॥ सुदर्शनोऽग्निवर्णश्च शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥ योऽसावास्ते योगसिद्धः कलापग्राममाश्रितः ॥ कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥ तस्मात्प्रसुश्रुतस्तस्य सन्धिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत ॥ ततः प्रसेनजित् तस्मात् तक्षको भविता पुनः ॥ ७ ॥

तस्य बृहद्बलः यस्तव पित्राऽभिमन्युना युद्धे हतः । एते ऐक्ष्वाकाः भूपाः अतीताः । अनागतान् शृणु ॥८॥ बृहद्बलस्य बृहद्रणः । तस्योरुक्रियः । ततो वत्सवृद्धः ॥९॥ तस्य प्रतिव्योमः । ततो भानुः । तस्य दिवाकः । ततः सहदेवः । तस्य बृहदश्वः । तस्माद्भानुमान् ॥ १० ॥ तस्य प्रतीकाश्वः । तस्मात् सुप्रतीकः । ततो मरुदेवः । तस्य सुनक्षत्रः । तस्मात् पुष्करः ॥११॥ ततोऽन्तरिक्षः । तस्मात् सुतपाः तस्यामित्रजित् । ततो बृहद्राजः । तस्य बर्हिः । तस्य कृतंजयः ॥१२॥ तस्य रणंजयः । तस्य संजयः । तस्य शाक्यः । ततः शुद्धोदः । तस्य लाङ्गलः

ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ ८ ॥ बृहद्बलस्य भविता पुत्रो नाम बृहद्रणः ॥ उरुक्रियस्ततस्तस्य वत्सवृद्धो भविष्यति ॥ ९ ॥ प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः ॥ सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ॥ १० ॥ प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ॥ भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः ॥ ११ ॥ तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित ॥ बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतंजयः ॥१२॥ रणंजयस्तस्य सुतः संजयो भविता ततः ॥ तस्माच्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ॥१३॥ ततः प्रसेनजित्तस्मात्क्षुद्रको भविता ततः ॥ रणको भविता तस्मात्सुरथस्तनयस्ततः ॥ १४ ॥ सुमित्रो नाम निष्ठान्त एते बार्हद्बलान्वयाः ॥ इक्ष्वाकूणामयं वंशस्सुमित्रान्तो भविष्यति ॥ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १५ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धे इक्ष्वाकुचरिते कुशान्वयवर्णनं नाम द्वादशोऽध्यायः ॥१२॥ श्रीशुक उवाच ॥ निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ॥ आरभ्य सत्रं सोऽप्याह शक्रेण प्राग् वृतोऽस्मि भोः ॥ १ ॥

॥ १३ ॥ तस्य प्रसेनजित् । ततः क्षुद्रकः । तस्माद् रणकः तस्य सुरथः ॥ १४ ॥ तस्मात् सुमित्रः । अयमिक्ष्वाकूणां वंशः सुमित्रान्तो भविष्यति यतस्तं राजानं प्राप्य कलौ संस्थां प्राप्स्यति ॥ १५ ॥ इति श्रीभागवते चू० नवमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे । वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ १ ॥ श्रीशुक उवाच ॥ इक्ष्वाकुपुत्रो निमिः । स यज्ञमारभ्य वसिष्ठमृत्विक्त्वे वव्रे । तदा वसिष्ठः आह अहं शक्रेण प्राग् वृतोऽस्मि ॥ १ ॥

तं यज्ञं कृत्वाऽऽगमिष्यामि तावन्मां प्रतीक्षस्व इत्युक्त्वेन्द्रस्य यज्ञं चकार ॥ २ ॥ निमिरिदमनित्यं शरीरं ज्ञात्वा यावत् गुरुर्नागतः तावत् सत्रं प्रारेभे ॥३॥ वसिष्ठः इन्द्रस्य यज्ञं समाप्य तत्रागतः सन् निमेरन्यायं वीक्ष्य निमेर्देहः पततु इति शशाप ॥४॥ तदा निमिर्लोभाद्धर्मम- जानतस्तवापि देहः पततु इति गुरवे शशाप ॥५॥ इत्युक्त्वा स्वदेहं तत्याज । ततः उर्वशीदर्शनात् मित्रावरुणयोः स्खलितं रेतः ताभ्यां कुम्भे निषिक्तम् । तस्माद् वसिष्ठो जज्ञे ॥६॥ मुनयो निमेर्देहं गन्धद्रव्ये स्थापयित्वा प्राप्तान् देवान् जगदुः ॥७॥ हे देवाः ! यदि भवन्तः प्रसन्नाः तर्हि राज्ञो देहो जीवतु । तदा देवैस्तथेत्युक्ते सति निमिर्जीवन् सन् जगाद मम देहबन्धनं मा भूत्॥८॥यतो वियोगभयकातराः मुनयो यस्य योगं न वाञ्छन्ति ॥९॥ दुःखशोकभयावहं देहं न धारयिष्ये यतः सर्वत्र मृत्युः ॥१०॥ देवा ऊचुः । हे मुनयः ! विदेहो देहिनां नेत्रेषून्मेषाभ्यां लक्षितः सन् वसतु एवं सति युष्माभिः प्रार्थितं जीवितं भवेत् देहबन्धनं च न ॥११॥ ऋषयोऽराजके नृणां भयं मत्वा निमेर्देहं ममन्थुः । तदा कुमारः समजायत ॥ १२ ॥

निमिश्चल- मिदं विद्वान् सत्रमारभतात्मवान् ॥ ऋत्विग्भिरपरैस्तावन्नागमद् यावता गुरुः ॥ ३ ॥ शिष्यव्यतिक्रमं वीक्ष्य निर्व- र्त्य गुरुरागतः ॥ अशपत् पतताद्देहो निमेः पण्डितमानिनः ॥ ४ ॥ निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ॥ तवापि पतताद्देहो लोभाद्धर्ममजानतः ॥५॥ इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपिता- महः ॥६॥ गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः ॥ समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥ ७ ॥ राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ॥ तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ॥ ८ ॥ यस्य योगं न वाञ्छन्ति वियोग- भयकातराः ॥ भजन्ति चरणांभोजं मुनयो हरिमेधसः ॥९॥ देहं नावरुरुत्सेऽहं दुःखशोकभयावहम् ॥ सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥१०॥ देवा ऊचुः ॥ विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ॥ उन्मेषणनिमेषाभ्यां लक्षि- तोऽध्यात्मसंस्थितः ॥११॥ अराजकभयं नृणां मन्यमाना महर्षयः ॥ देहं ममन्थुः स्म निमेः कुमारस्समजायत ॥१२॥

(मूल: तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ॥ तूष्णीमासीद् गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥ २ ॥)

स एवं जन्मना जनकः विदेहाज्जातोऽतो वैदेहः मथनाज्जातोऽतो मिथिलः येन मिथिला नाम पुरी निर्मिता ॥ १३ ॥ जनकादुदावसुः । तस्य नन्दिवर्धनः । ततः सुकेतुः । तस्य देवरातः ॥१४॥ तस्य बृहद्रथः । ततो महावीर्यः । तस्मात् सुधृतिः । ततो धृष्टकेतुः । तस्य हर्यश्वः । तस्य मरुः ॥ १५ ॥ ततः प्रदीपकः । तस्य कृतिरथः । ततो देवमीढः । तस्य विश्रुतः । ततो महाधृतिः ॥१६॥ तस्य कृतिरातः । ततो महारोमा । तस्य स्वर्णरोमा । ततो ह्रस्वरोमा ॥१७॥ तस्य सीरध्वजः । तस्य यज्ञार्थं महीं कर्षतः सतो लांगलाग्रात् सीता जाता । अत एव सीरध्ज

जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः ॥ मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥ तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः ॥ ततः सुकेतुस्तस्यापि देवरातो महीपते ॥ १४ ॥ तस्माद् बृहद्रथस्तस्य महावीर्यस्सुधृतिपता ॥ सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥ मरोः प्रदीपकस्तस्माज्जातः कृतिरथो यतः ॥ देवमीढस्तस्य सुतो विश्रुतोऽथ महाधृतिः ॥ १६ ॥ कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः ॥ स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥ ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ॥ सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः ॥ १८ ॥ कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः ॥ धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ ॥ १९ ॥ कृतध्वजात्केशिध्वजः खाण्डिक्यस्तु मितध्वजात् ॥ कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ २० ॥ खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद्द्रुतः ॥ भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥ २१ ॥ शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ॥ उर्ध्वकेतुस्सनद्वाजादजोऽथ पुरुजित्सुतः ॥ २२ ॥ अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ॥ ततश्चित्ररथो यस्य क्षेमर्द्धिर्मिथिलाधिपः ॥ २३ ॥

इति तस्य नाम ॥ १८ ॥ तस्मात् कुशध्वजः । ततो धर्मध्वजः । तस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥१९॥ कृतध्वजस्य केशिध्वजः । मितध्वजात् खाण्डिक्यः । केशिध्वजस्य भानुमान् । ततः शतद्युम्नः ॥ २० ॥ २१ ॥ तस्य शुचिः । तस्य सनद्वाजः । ततः ऊर्ध्वकेतुः । तस्याजः । तस्य पुरुजित् ॥ २२ ॥ ततोऽरिष्टनेमिः । तस्य श्रुतायुः । ततः सुपार्श्वकः । तस्य चित्ररथः । ततः क्षेमर्द्धिः ॥ २३ ॥

तस्य वस्वनन्तः । तस्य युयुधः । ततः सुभाषणः । तस्य श्रुतः ।
तस्य समरथः । ततः सत्यरथः । तस्योपगुरुः । ततः उपगुप्तः ॥ २४ ॥ तस्य वस्वनन्तः । तस्य युयुधः । ततः सुभाषणः । तस्य श्रुतः । ततो महा-
ततो जयः । तस्य विजयः । ततः ऋतः ॥ २५ ॥ तस्य शुनकः । ततो वीतहव्यः ।तस्य धृतिः । ततो बहुलाश्वः । तस्य कृतिः । ततो महा-
वशी ॥ २६ ॥ हे राजन् ! एते आत्मविद्याविशारदाः मैथिलाः योगेश्वरप्रसादेन गृहेष्वपि द्वन्द्वैर्मुक्ताः आसन् ॥२७॥ इति श्रीभागवते चू०
नवमस्कन्धे त्रयोदशोऽध्यायः ॥१२ चतुर्दशादिभिः सोमवंशमाह समाप्तितः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥१॥ चतुर्दशे

तस्मात्समरथस्तस्य सुतः सत्यरथस्ततः ॥ आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसंभवः ॥ २४ ॥ वस्वनन्तोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ॥ श्रुतस्ततो जयस्तस्माद् विजयोऽस्मादृतः सुतः ॥ २५ ॥ शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः ॥ बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥ २६ ॥ एते वै मिथिला राजन्नात्मविद्याविशारदाः ॥ योगेश्वर प्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥ इति श्रीभा० म० नवमस्कन्धे इक्ष्वाकुचरिते निमिवंशानुवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीशुक उवाच ॥ अथातः श्रूयतां राजन् वंशः सोमस्य पावनः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥ १ ॥ सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ॥ जातस्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥ तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल ॥ विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥ ३ ॥ सोऽयजद् राजसूयेन विजित्य भुवनत्रयम् ॥ पत्नीं बृहस्पतेर्दर्पात् तारां नामाहरद्बलात् ॥ ४ ॥ यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात् ॥ नात्यजत् तत्कृते जज्ञे सुरदानवविग्रहः ॥ ५ ॥

गुरोः पत्न्यां तारायां सोमजाद् बुधात् ॥ जातश्चैलःपडुर्वश्यामायुमुख्यानजीजनत् ॥ २ ॥ श्रीशुक उवाच ॥ हे राजन् ! सूर्यवंशः कथितः ।
अथ सोमस्य पवित्रो वंशः श्रूयतां यस्मिन्नैलादयो भूपाः कीर्त्यन्ते ॥१॥ ॥ आदौ नारायणस्य नाभिपद्माद् ब्रह्माऽऽसीत् । तस्मादत्रिः ॥२॥
अत्रेर्दृग्भ्यः सोमः । स विप्रौषधिनक्षत्रगणानां ब्रह्मणा पतिः कल्पितः ॥ ३ ॥ स सोमो भुवनत्रयं जित्वा राजसूयेन हरिमयजत । स बृहस्पते-
र्भार्यां तारां बलादहरत् ॥ ४ ॥ तदा बृहस्पतिना याचितश्चन्द्रस्तां न ददौ तदा तत्कृते देवदैत्ययोर्द्वेषो जज्ञे ॥ ५ ॥

ततो बृहस्पतेर्द्वेषाद्दैत्यैः सह शुक्रश्चन्द्रसहायोऽभूत् । सर्वभूतगणैः सह शिवश्च गुरुसुतं बृहस्पतिमग्रहीत् ॥६॥ देवैः सहितः इन्द्रो गुरुसहायोऽभूत् । तस्मिन् युद्धे देवदैत्यनाशो जातः ॥७॥ अंगिरसा प्रार्थितो ब्रह्मा सोमं निर्भर्त्स्य तारां गुरवे ददौ । गुरुर्गर्भवतीं तां ज्ञात्वा जगाद ॥ ८ ॥ हे दुष्टबुद्धे ! परैः स्थापितं गर्भं शीघ्रं त्यज त्यज । अहं सन्तानार्थी अतस्त्वां भस्मसान्न कुर्याम् ॥९॥ ततो लज्जिता तारा सुवर्णसदृशं कुमारं तत्याज । तं दृष्ट्वा बृहस्पतिसोमाविच्छां चक्राते ॥१०॥ ममायं न च तव इति विवादं चक्रतुः । तदा देवैर्ऋषिभिश्च पृष्टा तारा किमपि नोवाच

शुक्रो बृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम् ॥ हरो गुरुसुतं स्नेहात् सर्वभूतगणावृतः ॥ ६ ॥ सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात् ॥ सुरासुरविनाशोऽभूत्समरस्तारकामयः ॥ ७ ॥ निवेदितोऽथाङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत् ॥ तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत्पतिः ॥८॥ गर्भं त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः ॥ नाहं त्वां भस्मसात्कुर्यां स्त्रियं सान्तानिकः सति ॥ ९ ॥ तत्याज व्रीडिता तारा कुमारं कनकप्रभम् ॥ स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ॥ १० ॥ ममायं न तवेत्युच्चैस्तस्मिन् विवदमानयोः ॥ पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता तु सा ॥ ११ ॥ कुमारो मातरं प्राह कुपितोऽलीकलज्जया ॥ किं न वोचस्यसद्वृत्ते आत्मावद्यं वदाशु मे ॥ १२ ॥ ब्रह्मा तां रह आहूय समप्राक्षीच्च सान्त्वयन् ॥ सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ॥ १३ ॥ तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण्मुदम् ॥ १४ ॥ ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥ १५ ॥ श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ॥ तदन्तिकमुपेयाय देवी स्मरशरार्दिता ॥ १६ ॥

॥ ११ ॥ तदा कुमारः कुपितः सन् मातरं वदेत्याह ॥१२॥ तदा ब्रह्मा तां रहसि पप्रच्छ । सा शनैः सोमस्य पुत्रः इत्याह । तदा सोमस्तं जग्राह ॥ १३ ॥ ब्रह्मा तस्य बुध इति नाम चक्रे । चन्द्रः पुत्रेण मुदं प्राप ॥ १४ ॥ ततो बुधादिलायां पुरूरवाः जज्ञे ॥१५॥ उर्वशीन्द्रभवने नारदेन गीयमानान् पुरूरवसो रूपगुणौदार्यादीन् श्रुत्वा कामेन पीडिता सती मित्रावरुणयोः शापात् पृथ्वीतलं प्राप्य पुरूरवसः समीपं

भा० न० ॥२७॥

चू० अ० १४

गत्वा ॥१६॥१७॥ धैर्यं धृत्वा तत्समीपमुपतस्थे । स तां विलोक्य मोहितः सन् जगाद ॥१८॥ पुरूरवा उवाच । हे उर्वशि ! तव स्वागतम् अत्र स्थीयतां तव किं करवाणि मया सह रमस्व ॥१९॥ उर्वश्युवाच । हे सुन्दर ! कस्याः मनस्त्वयि न सज्जेत । तथाऽपि मम नियमपर्यन्तमात्रं वत्स्यामि ॥२०॥ हे राजन् ! एतौ मम मेषौ रक्ष ॥२१॥ हे वीर ! मम भक्ष्यं घृतम् । भूमौ घृतस्यैवामृतत्वात् । मैथुनादन्यत्र वस्त्रहीनं त्वां न

मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ निशम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् ॥ १७॥ धृतिं विष्टभ्य ललना उपतस्थे तदन्तिके ॥ स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ॥ उवाच श्लक्ष्णयावाचा देवीं हृष्टतनूरुहः ॥ १८ ॥ राजोवाच ॥ स्वागतं ते वरारोहे आस्यतां करवाम किम् ॥ संरमस्व मया साकं रतिर्नो शाश्वतीः समाः ॥ १९ ॥ उर्वश्युवाच ॥ कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर ॥ यदङ्गान्तरमासाद्य च्यवते ह रिरंसया॥ २० ॥ एतावुरणकौ राजन् न्यासौ रक्षस्व मानद ॥ संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः॥२१॥ घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् ॥ विवाससं तत्तथेति प्रतिपेदे महामनाः ॥ २२ ॥ अहो रूपमहो भावो नरलोकविमोहनम् ॥ को न सेवेत मनुजो देवीं त्वां स्वयमागताम् ॥ २३ ॥ तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः ॥ रेमे सुरविहारेषु कामं चैत्ररथादिषु ॥ २४ ॥ रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया ॥ तन्मुखामोदमुषितो मुमुदेऽहर्गणान्बहून् ॥२५॥ अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान्समचोदयत् ॥ उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥२६॥ त उपेत्य महारात्रे तमसि प्रत्युपस्थिते ॥ उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २७ ॥ निशम्याक्रन्दितं देवी पुत्रयोर्नीयमानयोः ॥ हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ २८ ॥

॥२७॥

द्रक्ष्ये इति ! तथेति राजाऽङ्गीकृत्य जगाद॥२२॥हे उर्वशि ! नरलोकविमोहिनीं स्वयमागतां त्वां को न सेवेत॥२३॥ततस्तया सह देवोद्यानादिषु यथेच्छं रेमे॥२४॥किंच तया सह रममाणो बहूनहर्गणान् मुमुदे॥२५॥इन्द्रः स्वभवने एकदोर्वशीमपश्यन् सन् तामानेतुं गन्धर्वान् प्रैरयत्॥२६॥ ते गन्धर्वाः मध्यरात्रे एत्योर्वश्याः मेषौ जह्रुः ॥२७॥ उर्वशी तयोः पुत्रयोः क्रन्दितं श्रुत्वा जगाद । अहं नपुंसकेन नाथेन हा हताऽस्मि ॥२८॥

यस्य विश्वासात् नष्टा हृतपुत्रा च जाता ॥२९॥ इति वाग्बाणैर्विद्धो राजा खड्गं गृहीत्वा रात्रौ नग्न एवाभ्यद्रवत् ॥३०॥ गन्धर्वास्तं दृष्ट्वा मेषौ विसृज्य विद्युतः प्रकाशमकुर्वत । ततो मेषावादायायान्तं नग्नं तं दृष्ट्वा सा समयभङ्गान्निर्जगाम॥३१॥राजाऽपि शयने तामदृष्ट्वा विह्वलः शोचन् महीं बभ्राम ॥३२॥ स बहुकालेन कुरुक्षेत्रे तां दृष्ट्वोवाच ॥३३॥ अहो जाये ! तिष्ठ तिष्ठ मां त्यक्तुं नार्हसि॥३४॥हे देवि ! अयं देहः पतति त्वया

यद्विश्रम्भादहं नष्टा हृतापत्या च दस्युभिः ॥ यः शेते निशि संत्रस्तो यथा नारी दिवा पुमान् ॥ २९ ॥ इति वाक्सायकैर्विद्धः प्रतोत्त्रैरिव कुञ्जरः ॥ निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा ॥ ३० ॥ ते विसृज्योरणौ तत्र व्यद्योतन्त स्म विद्युतः ॥ आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३१ ॥ ऐलोऽपि शयने जायामपश्यन्विमना इव ॥ तच्चित्तो विह्वलः शोचन्बभ्रामोन्मत्तवन्महीम् ॥ ३२ ॥ स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः ॥ पञ्च प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः ॥३३॥ अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि ॥ मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै ॥३४॥ सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया ॥ खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३५ ॥ उर्वश्युवाच ॥ मा मृथाः पुरुषोऽसि त्वं मा स्म त्वाऽद्युर्वृका इमे ॥ क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥ ॥ ३६ ॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ॥ घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥३७॥ विधायालीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः ॥ नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ३८ ॥ संवत्सरान्ते हि भवानेकरात्रं मयेश्वर ॥ वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः ॥ ३९ ॥

दूरं त्यक्तः अतो वृकाद्याः खादन्ति ॥३५॥ उर्वश्युवाच ॥ हे राजन् ! त्वं पुरूरवाः असि । धैर्यं धारय । मा म्रियस्व । स्त्रियः स्वभावतःक्रूराः तासां सख्यं क्वापि न ॥३६॥ स्त्रियः प्रियसाहसाः अल्पार्थे पतिं भ्रातरं च घ्नन्ति ॥३७॥ त्यक्तसौहृदाः स्वैरवृत्तयः पुंश्चल्यो नवं नवमिच्छन्ति तासां सख्यं सत्यं न ॥३८॥ अथ तं सान्त्वयति । हे नृप ! संवत्सरान्ते एकरात्रं मया सह त्वं वत्स्यसि तदा तव पुत्राः भविष्यन्ति ॥ ३९ ॥

श्रीशुक उवाच ॥ राजा तां गर्भवतीं ज्ञात्वा पुरं ययौ । पुनर्वर्षान्ते कुरुक्षेत्रं गत्वा॥४०॥तया सहैकरात्रं रेमे ॥ अथोर्वशी तं प्राह॥४१॥ हे राजन् त्वं गन्धर्वान् भज । ते तुष्टाः मां तुभ्यं दास्यन्ति । ततः स तथा चक्रे । गन्धर्वास्तस्मै अग्निस्थालीं ददुः । स तामुर्वशीं मत्वा वने विचरन् पश्चादग्निस्थालीति बुबुधे ॥४२॥ ततस्तां स्थालीं वने स्थापयित्वा गृहं गतः ततस्त्रेतायां संप्रवृत्तायां तन्मनसि कर्म बोधकं वेदत्रयं प्रादुरभूत्॥४३॥पुनः राजास्थालीस्थानं गत्वा तत्र शमीगर्भमश्वत्थं दृष्ट्वा तेनद्वे अरणी कृत्वोर्वशीलोककाम्यया॥४४॥अधरारणिमुर्वशीमुत्तरारणिमात्मानमुभयोर्मध्ये

श्रीशुक उवाच ॥ अन्तर्वत्नीमुपालभ्य देवीं स प्रययौ पुरम् ॥ पुनस्तत्र गतोऽब्दान्ते उर्वशीं वीरमातरम् ॥ ४० ॥ उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥ ४१ ॥ गन्धर्वानुपधावेमां-स्तुभ्यं दास्यन्ति मामिति ॥ तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप ॥ उर्वशीं मन्यमानस्तां सोऽबुध्यत चरन् वने ॥४२॥ स्थालीं न्यस्य वने गत्वा गृहानाध्यायतो निशि ॥ त्रेतायां संप्रवृत्तायां मनसि त्रय्यवर्वत ॥४३॥ स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः ॥ तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४४ ॥ उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम् ॥ आत्मानमुभयोर्मध्ये यत्तत् प्रजननं प्रभुः ॥ ४५ ॥ तस्य निर्मन्थनाज्जातो जातवेदा विभावसुः ॥ त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥ ४६ ॥ तेनायजत यज्ञेशं भगवन्तमधोक्षजम् ॥ उर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥ ४७ ॥ एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ॥ देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ४८ ॥ पुरूरवस एवासीत् त्रयी त्रेतामुखे नृप ॥ अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥ ४९ ॥

इति श्रीभागवते महा० नवमस्कन्धे सोमवंशचरिते ऐलोपाख्याने चतुर्दशोऽध्यायः ॥ १४ ॥

यत्काष्ठं तत् पुत्रं ध्यायन् ममन्थ ॥४५॥ मन्थनादग्निरुत्पन्नः । स राज्ञापुत्रत्वे कल्पितः ॥४६॥ ततः उर्वशीलोकमिच्छन् तेनाग्निना हरिमयजत ॥४७॥आदौ कृतयुगे प्रणवः एक एव वेदः । देवो नारायणः एक एव । अग्निश्च लौकिकः एक एव । वर्णश्च हंसो नामैक एव । ॥४८॥ हे नृप ! त्रेतामुखे पुरूरवस एव वेदत्रयी जाता । राजाऽग्निपुत्रेण गान्धर्वं लोकं प्राप ॥४९॥ इति श्रीभा० चू० नवमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

ततः पञ्चदशे गाधिरैलपुत्रान्वयेऽजनि ॥ यद्दौहित्रसुतो रामः कार्तवीर्यमहन् रुषा ॥ १ ॥ श्रीशुक उवाच ॥ पुरूरवसः उर्वशीगर्भात् षट्पुत्राः आयुः १, श्रुतायुः २, सत्यायुः ३, रयः ४, विजयः ५, जयः ६, इति ॥१॥ तत्र श्रुतायोर्वसुमान् पुत्रः। सत्यायोः श्रुतंजयः। रयस्यैकसंज्ञः। जयस्यामितः ॥२॥ विजयस्य भीमः। तस्य काञ्चनः ! ततो होत्रकः। तस्य जह्नुः यो गङ्गा गण्डूषीकृत्य पपौ। जह्नोः पूरुः। तस्य बलाकः। ततोऽजकः ॥ ३ ॥ तस्य कुशः। कुशस्य चत्वारः पुत्राः कुशाम्बुः १, मूर्तयः २, वसुः ३, कुशनाभः ४ इति। कुशाम्बोर्गाधिः ॥४॥ गाधेः

श्रीशुक उवाच ॥ ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ॥ आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥ १ ॥ श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतंजयः ॥ रयस्य सुत एकश्च जयस्य तनयोऽमितः ॥ २ ॥ भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः ॥ तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ॥ जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ॥ ३ ॥ ततः कुशः कुशस्यापि कुशाम्बुर्मूर्तयो वसुः ॥ कुशनाभश्च चत्वारो गाधिरासीत् कुशाम्बुजः ॥ ४ ॥ तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ॥ वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥ ५ ॥ एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ॥ सहस्रं दीयतां शुल्कं कन्यायाः कुशिका वयम् ॥ ६ ॥ इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम् ॥ आनीय दत्त्वा तानश्वानुपयेमे वराननाम् ॥ ७ ॥ स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया ॥ श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥ तावत् सत्यवती मात्रा स्वचरुं याचिता सती ॥ श्रेष्ठं मत्वा तयाऽयच्छन्मात्रे मातुरदात्स्वयम् ॥ ९ ॥

सत्यवती कन्या ! ऋचीकस्तामयाचत। गाधिरननुरूपं वरं मत्वा ऋचीकं जगाद ॥५॥ हे ऋषे ! एकतः श्यामकर्णानां हयानां सहस्रं मौल्यं दीयताम्। इदमपि मे कन्यायाः पर्याप्तं न॥६॥ एवमुक्तः ऋषिस्तन्मतं ज्ञात्वा वरुणादश्वानानीय गाधये दत्त्वा सत्यवतीमुपयेमे ॥७॥ स ऋचीकः पत्न्या श्वश्र्वा च पुत्रकामनया प्रार्थितः सन् चरुं श्रपयित्वा स्नातुं गतः ॥ ८ ॥ यावत् स्नात्वा स नागतस्तावत् सत्यवती मात्रा तच्चरुं याचिता सती श्रेष्ठं मत्वा स्वचरुं मात्रे प्रायच्छत् मातुश्चरुं स्वयमदात् ॥ ९ ॥

मुनिरागत्य तद्विज्ञाय पत्नीं प्राह। हे सत्यवति! अहो जुगुप्सितं कृतं यतस्तव पुत्रो दण्डधरो भविष्यति। तव भ्राता ब्रह्मज्ञो भविष्यति॥१०॥ ततः एवं मा भूदिति सत्यवत्या प्रार्थितः ऋषि प्राह। एवं चेत् पौत्रो घोरो भविष्यति। ततः ऋचीकाद् जमदग्निः प्रादुरभूत् ॥११॥ सा सत्यवती कौशिकी नाम नदी जाता। जमदग्निः रेणोः सुतां रेणुकामुवाह ॥१२॥ तस्यां वसुमदादयः पुत्राः अभवन् तेषां कनिष्ठो रामः ॥१३॥ यं वासुदेवांशं वदन्ति। यः एकविंशतिवारं महीं निःक्षत्रियां चक्रे ॥१४॥ किंच क्षत्रेण महापापे कृते भुवो भारं दुष्टं नाशयामास ॥१५॥ राजो-

तद्विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः ॥ घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ १० ॥ प्रसादितः सत्यवत्या-
मैवं भूदिति भार्गवः ॥ अथ तर्हि भवेत्पौत्रो जमदग्निस्ततोऽभवत् ॥ ११ ॥ सा चाभूत्सुमहापुण्या कौशिकी लोकपा-
वनी ॥ रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १२ ॥ तस्यां वै भार्गवऋषेः सुता वसुमदादयः ॥ यवीयाञ्जज्ञ
एतेषां राम इत्यभिविश्रुतः ॥ १३ ॥ यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम् ॥ त्रिस्सप्तकृत्वो य इमां चक्रे निः-
क्षत्रियां महीम् ॥ १४ ॥ दुष्टं क्षत्रं भुवो भारमब्रह्मण्यमनीनशत् ॥ रजस्तमोवृतमहन्फल्गुन्यपि कृतेंऽहसि ॥ १५ ॥
राजोवाच ॥ किं तदंहो भगवतो राजन्यैरजितात्मभिः ॥ कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥ १६ ॥
श्रीशुक उवाच ॥ हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ॥ दत्तं नारायणस्यांशमाराध्य परिकर्मभिः ॥ १७ ॥ बाहू-
न्दशशतं लेभे दुर्धर्षत्वमरातिषु ॥ अव्याहतेन्द्रियौजश्श्रीस्तेजो वीर्यं यशो बलम् ॥ १८॥ योगेश्वरत्वमैश्वर्यं गुणा
यत्राणिमादयः ॥ चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥ स्त्रीरत्नैरावृतः क्रीडन्रेवाम्भसि मदोत्कटः ॥
वैजयन्तीं स्रजं बिभ्रद्रुरोध सरितं भुजैः ॥ २० ॥

वाच ॥ हे ब्रह्मन्! राजन्यैस्तस्य पापं किं कृतं येन क्षत्रियाणां कुलं नाशितम् ॥१६॥ श्रीशुक उवाच ॥ हे नृप! हैहयानामधिपः कीर्तवीर्यार्जुनो दत्तात्रेयं पूजाभिराराध्य ॥ १७ ॥ बाहूनां सहस्रं शत्रुषु दुर्धर्षत्वं तेजो वीर्यं यशो बलम् ॥ १८ ॥ अणिमादि च लेभे ॥१९॥ यदा स स्त्रीभिः सह रेवायाः जले क्रीडमाणः सन् भुजैर्नदीं रुरोध ॥ २० ॥

तदा रावणोऽपि दिग्विजयं कृत्वा तत्तीरे देवपूजां कुर्वन् जलैः प्लावितं स्वदेवमन्दिरं दृष्ट्वा तद्वीर्यं न सेहे ॥२१॥ यदा रावणः क्रीडमानं तं जेतुं प्रवृत्तः तदाऽर्जुनेन स्त्रीणां समक्षं धृत्वा माहिष्मत्यां निरुद्धः पुनरवज्ञया मुक्तः॥२२॥अथैकदाऽर्जुनो मृगयां विचरन् जमदग्नेराश्रमं जगाम्॥२३॥ जमदग्निः कामधेन्वा ससैन्यस्य तस्यातिथ्यं चक्रे ॥२४॥ राजा कामधेनोः सामर्थ्यं दृष्ट्वा धेन्वां साभिलाषो जातः॥२५॥अर्जुनेन ततः प्रेरिताः

विप्लावितं स्वशिबिरं प्रतिस्रोतस्सरिज्जलैः ॥ नामृष्यत तस्य तद्वीर्यं वीरमानी दशाननः ॥ २१ ॥ गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ॥ माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥ स एकदा तु मृगयां विचरन्विपिने वने ॥ यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत् ॥ २३ ॥ तस्मै स नरदेवाय मुनिरर्हणमाहरत् ॥ ससैन्यामात्यवाहाय हविष्मत्या तपोधनः ॥ २४ ॥ स वीरस्तत्र तद् दृष्ट्वा आत्मैश्वर्यातिशायनम् ॥ तन्नाद्रियताग्निहोत्र्यां साभिलाषः स हैहयः ॥ २५ ॥ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत् ॥ ते च माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥ २६ ॥ अथ राजनि निर्याते राम आश्रम आगतः ॥ श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥ २७ ॥ घोरमादाय परशुं सतूणं चर्म कार्मुकम् ॥ अन्वधावत दुर्धर्षो मृगेन्द्र इव यूथपम् ॥ २८ ॥ तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ॥ ऐणेयचर्माम्बरमर्कधामभिर्युतं जटाभिर्ददृशे पुरीं विशन् ॥ २९ ॥ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ॥ अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥३०॥ यतो यतोऽसौ प्रहरत्परश्वधो मनोऽनिलौजाः परचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३१ ॥

दूताः सवत्सां क्रन्दन्तीं धेनुं बलान्माहिष्मतीं निन्युः ॥२६॥ अथार्जुने गते सति रामः आश्रममेत्य तस्य तद्दौरात्म्यं श्रुत्वा सर्प इव चुक्रोध ॥२७॥ ततो घोरं परशुं सतूणं धनुश्चर्म च गृहीत्वा तत्पश्चादन्वधावत् ॥२८॥ तदा राजा धनुर्धरं परश्वधायुधं मृगचर्माम्बरं जटाधरं रामं वीक्ष्य ॥२९॥ सप्तदशाक्षौहिणीसेनास्तं प्रति प्रैरयत् । ताः सेनाः भगवान् रामः एक एवानाशयत् ॥३०॥ परचक्रनाशको रामो यान्यान्॥

१ ददर्श ।

प्रहरति ते छिन्नभुजोरुकन्धराः हतसूतवाहनाः भूमौ निपेतुः ॥ ३१ ॥ तदार्जुनः रुधिरौघकर्दमे युद्धे रामपरशुबाणैर्निपातितं स्वसैन्यं दृष्ट्वा रुषाऽऽमत्य ॥३२॥ स्वयं पञ्चशतेषु धनुष्षु बाणान् युगपत् संदधे । तदा रामः स्वबाणैस्तानि धनूंषि चिच्छेद ॥३३॥ पुनरर्जुनो युद्धे स्वहस्तैरचलान् वृक्षांश्च प्रगृह्य वेगेन राममधावत् । ततो रामः परशुना तद्भुजान् शिरश्च चिच्छेद॥३४॥कार्तवीर्यार्जुने मृते सति दशसहस्रं तत्पुत्राः भयाद्दुद्रुवुः ॥३५॥ रामः सवत्सां धेनुं गृहीत्वाऽऽश्रमं प्राप्य पित्रे तां दत्त्वा ॥३६॥ स्वकृतं कर्म कथयामास । तत् श्रुत्वा जमदग्निरभाषत॥३७॥

निपातितं हैहय आपतद्रुषा ॥ ३२ ॥ अथार्जुनः पञ्चशतेषु बाहुभिर्धनुष्षु बाणान्युगपत्स संदधे ॥ रामाय रामोऽस्त्रभृतां समग्रणीस्तान्येकधन्वेषुभिराच्छिनत्समम् ॥ ३३ ॥ पुनः स्वहस्तैरचलान्मृधेऽङ्घ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ॥ भुजान्कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं त्वहेरिव ॥ ३४ ॥ कृत्तबाहोः शिरस्तस्य गिरेः शृङ्गमिवाहरत् ॥ हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५ ॥ अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ॥ समुपेत्याश्रमं पित्रे परिक्लिष्टां समर्पयत् ॥ ३६ ॥ स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ॥ वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥ राम राम महाबाहो भवान्पापमकारषीत् ॥ अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ॥ ३८ ॥ वयं हि ब्राह्मणास्तात क्षमयाऽर्हणतां गताः ॥ यया लोकगुरुर्देवः पारमेष्ठ्यमगात्पदम् ॥ ३९ ॥ क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा ॥ क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥४०॥ राज्ञो मूर्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुः॥तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥ ४१ ॥ इति श्रीभागवते महा० नवमस्कन्धे सोमवंशचरिते कार्तवीर्यार्जुनवधो नाम पञ्चदशोऽध्यायः ॥१५॥

हे राम ! महाबाहो ! भवान् पापमकार्षीत् । सर्वदेवमयं राजानं वृथाऽवधीत् ॥ ३८ ॥ वयं ब्राह्मणाः क्षमया पूज्यतां गताः यया द्विजः परं पदं प्राप्नुयात् ॥३९॥ किंच क्षमया लक्ष्मीः सूर्यप्रभेव शोभते । क्षमिणां भगवान् तुष्यति ॥४०॥ राज्याभिषेकं प्राप्तस्य राज्ञो वधो ब्रह्मवधादपि महत्तरः । अतस्त्वं भगवन्तं चित्ते कृत्वा तीर्थसेवया पापं जहि ॥ ४१ ॥ इति श्रीभागवते चू० नवमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

षोडशेऽथार्जुनसुतैर्जमदग्नौ हते मुहुः ॥ रामात् क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः॥१॥श्रीशुक उवाच॥ रामः पित्राज्ञया संवत्सरं तीर्थयात्रां चरित्वा प्रतिनिवृत्तः ॥१॥ कदाचित् रेणुका जलार्थं गङ्गां गता तत्राऽप्सरोभिः क्रीडमानं चित्ररथं गन्धर्वं दृष्ट्वा किंचिद्गन्धर्वे स्पृहावती सती होमवेलां न सस्मार ॥२॥३॥ ततः कालातिक्रमं ज्ञात्वा मुनेः शापशङ्किता सती गृहं प्राप्याग्रे कलशं निधाय कृताञ्जलिस्तस्थौ ॥४॥ तदा मुनिस्तस्याः मानसं व्यभिचारं ज्ञात्वा कुपितः सन् जगाद ! हे पुत्राः ! पापां मारयत । एवमुक्तास्ते मातृवधं न चक्रुः ॥ ५ ॥ तदा मुनेः

श्रीशुक उवाच॥ पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन ॥ संवत्सरं तीर्थयात्रां चरित्वाऽऽश्रममाव्रजत् ॥ १ ॥ कदाचिद्रेणुका याता गङ्गायां पद्ममालिनम् ॥ गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥ विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता ॥ होमवेलां न सस्मार किंचिच्चित्ररथस्पृहा ॥ ३ ॥ कालात्ययं तं विलोक्य मुनेः शापविशङ्किता ॥ आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥४॥ व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ॥ घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे ॥ ५ ॥ रामः संचोदितः पित्रा भ्रातॄन् मात्रा सहावधीत ॥ प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥ वरेण च्छन्दयामास प्रीतः सत्यवतीसुतः ॥ वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥ ॥ ७ ॥ उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा ॥ पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥ येऽर्जुनस्य सुता राजन् स्मरन्तः स्वपितुर्वधम् ॥ रामवीर्यपराभूता लेभिरे न शर्म क्वचित् ॥ ९ ॥ एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते ॥ वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥ दृष्ट्वाऽग्न्यगार आसीनमावेशितधियं मुनिम् ॥ भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥

प्रभावज्ञो रामः पित्रा प्रेरितः सन् मात्रा सह भ्रातॄन् जघान ॥६॥ तदा प्रसन्नो जमदग्निर्वरं वृणीष्वेत्याह । रामोऽपि निहतानां जीवितं वधेऽस्मृतिं च वव्रे ॥७॥ तदा ते निद्रासमाप्ताविव कुशलिनः उत्तस्थुः । रामः पितुस्तपोवीर्यं जानन् सुहृद्वधं चक्रे ॥८॥ अथ ये कार्तवीर्यार्जुनस्य दशसहस्रं पुत्राः पितुर्वधं स्मरन्तः सुखं न लेभिरे ॥ ९ ॥ ते एकदाऽऽश्रमतः सभ्रातरि रामे वनं गते सति वैरं साधयन्तः आश्रमं प्राप्य ॥ १० ॥ होमशालायां समाधिस्थं मुनिं जघ्नुः ॥ ११ ॥

ततः कृपणया राममात्रा याच्यमाना अपि दुष्टाः शिरः उत्कृत्य निन्युः ॥ १२ ॥ तदा शोकार्ता रेणुका हे राम, हे राम, हे तातेहीत्युच्चै-
श्चुक्रोश ॥१३॥ रामस्तत् श्रुत्वाऽऽश्रमं प्राप्य पितरं हतं ददृशे ॥१४॥ तदा शोकमोहितो रामः आह हा तात ! हे धार्मिष्ठ ! अस्मान् त्यक्त्वा
भवान् स्वर्गं गतः ॥१५॥ एवं विलप्य पितुर्देहं भ्रातृषु निधाय परशुं गृहीत्वा क्षत्रान्ताय मनो दधे ॥१६॥ ततो रामो माहिष्मतीं पुरीं गत्वा तेषां
मस्तकैः पुर्यां महापर्वतं चक्रे ॥१७॥ तद्रक्तेन घोरां नदीं चक्रे । पितृवधं हेतुं कृत्वा ॥१८॥ एकविंशतिवारं निःक्षत्रां महीं कृत्वा स्यमन्तपञ्चके

**याच्यमानाः कृपणया राममात्राऽतिदारुणाः ॥ प्रसह्य शिर उत्कृत्य निन्युस्ते क्षत्रबन्धवः ॥ १२ ॥ रेणुका दुःखशो-
कार्ता निघ्नन्त्यात्मनमात्मना ॥ राम रामेहि तातेति विचुक्रोशोच्चकैः सती ॥ १३ ॥ तदुपश्रुत्य दूरस्थो हा रामेत्या-
र्तवत् स्वनम् ॥ त्वरयाऽऽश्रममासाद्य ददृशे पितरं हतम् ॥ १४ ॥ तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः ॥ हा तात
साधो धर्मिष्ठ त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥ १५ ॥ विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ॥ प्रगृह्य परशुं
रामः क्षत्रान्ताय मनो दधे ॥ १६ ॥ गत्वा माहिष्मतीं रामो ब्रह्मघ्नं विहतश्रियम् ॥ तेषां स शीर्षभी राजन् मध्ये
चक्रे महागिरिम् ॥ १७ ॥ तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ॥ हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥ १८ ॥
त्रिस्सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ॥ स्यमन्तपञ्चके चक्रे शोणितोदान् ह्रदान् नव ॥ १९ ॥ पितुः कायेन
संधाय शिर आदाय बर्हिषि ॥ सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥ ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां
दिशम् ॥ अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥ २१ ॥ अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यमाम् ॥
आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥**

रक्तजलान् नव ह्रदान् चक्रे । त्रिस्सप्तकृत्वो भूनिःक्षत्रकरणे कारणमुक्तं नारसिंहे "त्रिस्सप्तकृत्वः त्वं कुक्षिं ताडयामास पार्थिव । तच्छृण्वन्नागतो
रामः शीघ्रं मातरमब्रवीत् । त्वयैकविंशतिवारेण यस्मात् कुक्षिः प्रताडितः । त्रिस्सप्तकृत्वस्तस्मात्तु हनिष्ये भुवि पार्थिवान् ॥ "इति ॥१९॥ ततो
मस्तकं गृहीत्वा पितुः शरीरेण संधाय सर्वदेवमयमात्मानं यज्ञैरयजत ॥२०॥ तदा होत्रे पूर्वां दिशं ददौ । ब्रह्मणे दक्षिणाम् । अध्वर्यवे पश्चिमाम् ।
उद्गात्रे उत्तराम् ॥ २१ ॥ अन्येभ्यो विदिशः । कश्यपाय मध्यमाम् । उपद्रष्ट्रे आर्यावर्तं ददौ ॥ २२ ॥

ततः सरस्वत्यामवभृथस्नानेन गतपापः सन् सूर्य इव रेजे ॥ २३ ॥ जमदग्निर्देहं लब्ध्वा ऋषीणां मण्डले रामपूजितः सप्तमोऽभवत् ॥२४॥ आगामिन्यन्तरे रामोऽपि सप्तर्षिष्वेकतमो वेदप्रवर्तको भविष्यति ॥ २५ ॥ हे राजन् ! स रामोऽद्यापि सिद्धगन्धर्वचारणैर्गीयमानचरितो महेन्द्रपर्वते आस्ते ॥२६॥ एवं श्रीहरिर्भृगुवंशेऽवतीर्य भुवो भारं जहार ॥२७॥ अथगाधेर्महातेजाः विश्वामित्रः। यस्तपसा क्षत्रं हित्वा ब्रह्मतेजो लेभे ॥ २८ ॥ तस्यैकशतं पुत्राः आसन् ॥२९॥ विश्वामित्रः शुनश्शेपं पुत्रत्वेन स्वीकृत्य स्वपुत्रानाह । हे पुत्राः एष ज्येष्ठत्वे प्रकल्प्यताम्

ततश्चावभृथस्नानविधूताशेषकिल्बिषः ॥ सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥२३॥ स्वदेहं जमदग्निस्तुलब्ध्वा संज्ञानलक्षणम् ॥ ऋषीणां मण्डले सोऽभूत् सप्तमो रामपूजितः ॥२४॥ जामदग्न्योऽपि भगवान् रामःकमललोचनः ॥ आगामिन्यन्तरे राजन् वर्तयिष्यति वै बृहत् ॥२५॥ आस्तेऽद्यापि महेन्द्रादौ न्यस्तदण्डः प्रशान्तधीः ॥ उपगीयमान-चरितःसिद्धगन्धर्वचारणैः ॥२६॥ एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः ॥ अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान् ॥२७॥गाधेरभून्महातेजाःसमिद्ध इव पावकः ॥ तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥२८॥ विश्वामित्रस्य चैवा-सन् पुत्रा एकशतं नृप॥मध्यमस्तु मधुच्छन्दा मधुच्छन्दस एव ते ॥२९॥ पुत्रं कृत्वा शुनश्शेपं देवरातं च भार्गवम् ॥ आर्जीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥ यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ॥ स्तुत्वा देवान् प्रजे-शादीन् मुमुचे पाशबन्धनात् ॥ ३१ ॥ यो रातो देवयजने देवैर्गाधिषु तापसः ॥ देवरात इति ख्यातःशुनश्शेपः स भार्गवः ॥ ३२ ॥ ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ॥ अशपत् तान् मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥३३॥ स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः ॥ यन्नो भवान् संजानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥

॥३०॥ यो हरिश्चन्द्रमखे विक्रीतपशुर्देवादीन् स्तुत्वा पाशबन्धान्मुमुचे॥३१॥यो देवयजने देवैः रक्षितः स भार्गवोऽपि गाधेर्वंशजेषु देवरात इति ख्यातः ॥३२॥ एवं विश्वामित्रवचः श्रुत्वा ये ज्येष्ठा पञ्चाशत् ते कुशलं न मेनिरे । तदा क्रुद्धो विश्वामित्रो म्लेच्छा भवतेति तान् शशाप ॥ ३३ ॥ ततः पञ्चाशत कनिष्ठानाह । हे पुत्राः ! अयं ज्येष्ठः प्रकल्प्यतां तदा ते शुनश्शेपं ज्येष्ठं चक्रुः ॥ ३४ ॥

तदा विश्वामित्रः पुत्रवन्तो भविष्यथ इति तेभ्यः आशिषं ददौ ॥३५॥ हे कुशिकाः ! एष देवरातः कौशिकः एव यतो मत्पुत्रः अतस्तमनुगच्छत । तत हे राजन् ! तथाऽन्ये च विश्वामित्रस्य पुत्राः अष्टकहारीतजादयः आसन् ॥ ३६ ॥ एवं कौशिकगोत्रं विश्वामित्रगोत्रं नानाप्रकारं जातम् । तत प्रवरान्तरं च प्राप्तम् ॥३७॥ इति श्रीभागवते चूर्णिकायां नवमस्कन्धे षोडशोऽध्यायः ॥१६॥ आयोः सप्तदशे त्वैलज्येष्ठपुत्रस्य पञ्चसु । सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम् ॥१॥ श्री शुकउवाच ॥ यः पुरूरवसः पुत्रः आयुस्तस्य पञ्च पुत्राः आसन् । नहुषः १, क्षत्रवृद्धः २, रजिः ३,

ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि ॥ विश्वामित्रःसुतानाह वीरवन्तो भविष्यथ ॥ ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्तमाम् ॥३५॥ एष वः कुशिका वीरो देवरातस्तमन्वित ॥ अये चाष्टकहारीतजयक्रतुमदादयः ॥ ३६ ॥ एवं कौशिकगोत्रे तु विश्वामित्रैःपृथग्विधम् ॥ प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम् ॥ ३७ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धे परशुरामकृतक्षत्रवधविश्वामित्रान्वययोर्वर्णनं नाम षोडशोऽध्यायः ॥१६॥ श्रीशुक उवाच ॥ यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः ॥ नहुषः क्षत्रवृद्धश्च रजी रम्भश्च वीर्यवान् ॥ १ ॥ अनेना इति राजेन्द्र शृणु क्षत्रवृधोऽन्वयम् ॥ क्षत्रवृद्धसुतस्यासन्होत्रस्यात्मजास्त्रयः ॥ २ ॥ काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकश्शौनको यस्य बह्वृचप्रवरो मुनिः ॥३॥ काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमः पिता ॥ धन्वन्तरिर्दीर्घतम आयुर्वेदप्रवर्तकः ॥ ४ ॥ यज्ञभुग्वासुदेवांशस्स्मृतमात्रार्तिनाशनः ॥ तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः ॥ ५ ॥ दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः ॥ स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ॥ तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥६॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ नालर्कादपरो राजन्मेदिनीं बुभुजे युवा ॥ ७ ॥

रम्भः ४, अनेनाः ५, इति ॥१॥ क्षत्रवृद्धस्य सुहोत्रः । तस्य त्रयः पुत्राः ॥२॥ काश्यः १, कुशः २, गृत्समदः ३, इति । गृत्समदात् शुनकः । तस्य ऋग्वेदप्रवरः शौनकः ॥३॥ काश्यात् काशिः । तस्य राष्ट्रः । तस्य दीर्घतमाः । ततो धन्वतरिः । स आयुर्वेद प्रवर्तकः ॥४॥ स वासुदेवांशः । तस्य केतुमान् । ततो भीमरथः ॥ ५ ॥ तस्माद् दिवोदासः । तस्य द्युमान् । स एव प्रतर्दनः शत्रुजित् ऋतध्वजः कुलयाश्व इति नामचतुष्टयेनोक्तः । दिवोदासस्यालर्कादयः पुत्राः ॥ ६ ॥ स षट्षष्टिसहस्रवर्षाणि ( ६६००० ) पृथ्वीं बुभुजे ॥ ७ ॥

अलर्कस्य संततिर्नाम पुत्रः तस्य सुनीथः । ततः सुकेतनः । तस्य धर्मकेतुः तस्मात् सत्यकेतुः ॥८॥ तस्य धृष्टकेतुः । तस्य सुकुमारः । ततो वीतिहोत्रः । तस्य भर्गः । तस्य भार्गभूमिः ॥९॥ इमे काशेर्वंश्या नृपाः । अथायुपुत्रस्य रम्भस्य रभसो नाम पुत्रः । तस्य गम्भीरः । ततोऽक्रियः ॥१०॥ तत्क्षेत्रे ब्रह्म जज्ञे । आयुपुत्रस्यानेनसः शुद्धो नाम पुत्रो जातः तस्य शुचिः । ततस्त्रिककुत् । तस्य धर्मसारथिः ॥११॥ तस्य शान्तरयः तस्यवंशो न । आयोः पुत्रस्य रजेः पञ्चशतं पुत्रा बभूवुः ॥१२॥ यो रजिर्देवैः प्रार्थितः सन् दैत्यान् हत्वेन्द्राय स्वर्गं ददौ । इन्द्रस्तस्मै पुनः स्वर्गं दत्त्वा तं

अलर्कात्संततिस्तस्मात्सुनीथोऽथ सुकेतनः ॥ धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ॥ ८ ॥ धृष्टकेतुः सुतस्तस्मात्सुकुमारः क्षितीश्वरः ॥ वीतिहोत्रस्य भर्गोऽतो भार्गभूमिरभून्नृपः ॥ ९ ॥ इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः ॥ रम्भस्य रभसः पुत्रो गम्भीरश्चाक्रियस्ततः ॥ १० ॥ तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ॥ शुद्धस्ततः शुचिस्तस्मात्त्रिककुद्धर्मसारथिः ॥ ११ ॥ ततश्शान्तरयो जज्ञे कृतकृत्यः स आत्मवान् ॥ रजेः पञ्चशतान्यासन्पुत्राणाममितौजसाम् ॥ १२ ॥ देवैरभ्यार्थितो दैत्यान्हत्वेन्द्रायाददाद्दिवम् ॥ इन्द्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः ॥१३॥ आत्मानमर्पयामास प्रह्लादाद्यरिशङ्कितः ॥ पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ १४ ॥ त्रिविष्टपं महेन्द्राय यज्ञभागान्समाददुः ॥ गुरुणा हूयमानेऽग्नौ बलभित्तनयान्रजेः ॥ १५ ॥ अवधीद् भ्रंशितान्मार्गान्न कश्चिदवशेषितः ॥ कुशात्प्रतिः क्षात्रवृद्धात्संजयस्तत्सुतो जयः ॥१६॥ ततः कृतः कृतस्यापि जज्ञे हर्यवनो नृपः ॥ सहदेवस्ततोऽहीनो जयसेनस्तु तत्सुतः ॥ १७ ॥ संस्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः ॥ क्षत्रवृद्धान्वया भूपाः शृणु वंशं च नाहुषात् ॥ १८ ॥ इति श्रीभा० म० नव० चन्द्रवं० क्षत्रवृद्धवंशा० सप्तदशोऽध्यायः ॥ १७ ॥

नत्वा ॥१३॥ प्रह्लादाद्यरिशंकितः आत्मानमपि समर्पयामास । ते रजौ पितरि मृते सति पुत्राः याचमानायेन्द्राय स्वर्गं न ददुः ॥१४॥ तदा गुरुणा मरणप्रयोगेनाग्नौ हूयमाने सति इन्द्रो रजेः पुत्रान् जघान न कश्चिदवशिष्टः । सुहोत्रपुत्रस्य कुशस्य प्रतिर्नाम पुत्रः तस्य संजयः ततो जयः ॥ १५ ॥ १६ ॥ तस्य कृतिः । ततो हर्यवनः तस्य सहदेवः । तस्याहीनः ततो जयसेनः ॥ १७ ॥ तस्य संस्कृतिः । तस्य जयः । अथ नहुषवंशं शृणु ॥ १८ ॥ इति श्रीभागवते० चू० नवम० सप्तदशोऽध्यायः ॥ १७ ॥

अष्टादशे ययातेस्तु नाहुषस्य यथोच्यते ॥ यस्य पञ्चसु पुत्रेषु कनीयानग्रहीज्जराम् ॥१॥ श्रीशुक उवाच । नहुषस्य यतिः १, ययातिः २, संयातिः ३, आयतिः ४, वियतिः ५, कृतिः ६ इति षट् पुत्राः बभूवुः ॥ १ ॥ यतिः पित्रा दत्तं राज्यं नैच्छत् यतस्तत्परिणामवित् ॥२॥ पितरि नहुषे इन्द्राण्याः ग्रहणाद् द्विजैः स्थानाद् भ्रंशितेऽजगरत्वं प्रापिते सति पश्चात् द्वितीय पुत्रो ययातिर्नृपोऽभवत् ॥३॥ स चतुर्दिक्षु कनिष्ठभ्रातॄनादिशत् । ततः काव्यस्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् पृथ्वीं जुगोप ॥४॥ राजोवाच ॥ हे ब्रह्मन् । काव्यो ब्रह्मर्षिर्ययातिस्तु क्षत्रियः एवं सति

श्रीशुक उवाच ॥ यतिर्ययातिः संयातिरायतिर्वियतिः कृति ॥ षडिमे नहुषस्यासन्निन्द्रियाणीव देहिनाम् ॥ १ ॥ राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित ॥ यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥ पितरि भ्रंशिते स्थानादिन्द्राण्या धर्षणाद् द्विजैः ॥ प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ॥ ३ ॥ चतसृष्वादिशद्दिक्षु भ्रातॄन् भ्राता यवीयसः ॥ कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥४॥ राजोवाच ॥ ब्रह्मर्षिर्भगवान् काव्यः क्षत्रबन्धुश्च नाहुषः ॥ राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः ॥ ५ ॥ श्रीशुक उवाच ॥ एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका ॥ सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥ देवयान्या पुरोद्याने पुष्पितद्रुमसंकुले ॥ व्यचरत् कलगीतालिन-लिनीपुलिनेऽबला ॥ ७ ॥ ता जलाशयमासाद्य कन्याः कमललोचनाः ॥ तीरे न्यस्य दुकूलानि विजह्रुः सिञ्चतीर्मिथः ॥ ८ ॥ वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषस्थितम् ॥ सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥ शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ॥ स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥ १० ॥



प्रतिलोमको विवाहः कथं तत् कथ्यताम् ॥ ५ ॥ श्रीशुक उवाच । एकदा वृषपर्वणः शर्मिष्ठा नाम कन्या सहस्रसखीभिर्युता देवयान्या सह ॥ ६ ॥ पुष्पितवृक्षसंकुले पुरोद्याने विजहार ॥७॥ ताः सर्वास्तीरे वस्त्राणि स्थापयित्वा जलाशये मिथो विजह्रुः । तदा देव्या सह वृषस्थितं गच्छन्तं शिवं दृष्ट्वा लज्जिताः सत्यः सरसः उत्तीर्णवस्त्राणि पर्यधुः ॥ ८ ॥ ९ ॥ तदाऽजानती शर्मिष्ठा देवयान्या वस्त्रं स्वकीयं मत्वा पर्यधात् । तदा कुपिता देवयानी जगाद ॥ १० ॥

अहो अस्याः दास्याः अयोग्यं कर्म निरीक्ष्यताम्। अस्मद्धार्यं वस्त्रं धृतवती यज्ञे हविः शुनीव॥ ११॥ अहो वयं ब्राह्मणाः परमात्मनो मुखम्॥ १२॥ यान् द्विजान् देवाः हरिरपि स्तुवते॥ १३॥ तत्रापि वयं भृगवः। अपि च मत्पितृशिष्यस्य त्वं कन्या। हे दुष्टे! त्वं मम वस्त्रं कथं धृतवती॥ १४॥ एवं शपन्तीं गुरुपुत्रीं क्रुद्धा शर्मिष्ठाभाषत॥ १५॥ हे भिक्षुकि! आत्मवृत्तमज्ञात्वा किं बहु कत्थसे। अस्माकं गृहान् किं न प्रतीक्षसे यथा बलिभुजः॥ १६॥ एवंविधै-

अहो निरीक्ष्यतामस्या दास्याः कर्म ह्यसाम्प्रतम्। अस्मद्धार्यं धृतवती शुनीव हविरध्वरे॥ ११॥ यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये। धार्यते यैरिह ज्योतिः शिवः पन्थाश्च दर्शितः॥ १२॥ यान् वदन्त्युपतिष्ठन्ते लोकनाथाः सुरेश्वराः। भगवानपिविश्वात्मा पावनः श्रीनिकेतनः॥ १३॥ वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः। अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती॥ १४॥ एवं शपन्तीं शर्मिष्ठा गुरुपुत्रीमभाषत। रुषा श्वसन्त्युरङ्गीव धर्षिता दष्टदच्छदा॥ १५॥ आत्मवृत्तमविज्ञाय कत्थसे बहु भिक्षुकि। किं न प्रतीक्षसेऽस्माकं गृहान् बलिभुजो यथा॥ १६॥ एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम्। शर्मिष्ठा प्राक्षिपत् कूपे वासः आदाय मन्युना॥ १७॥ तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन्। प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह॥ १८॥ दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे। गृहीत्वा पाणिना पाणिमुज्जहार दयापरः॥ १९॥ तं वीरमाहौशनसी प्रेमनिर्भरया गिरा। राजंस्त्वया गृहीतो मे पाणिः परपुरंजय॥ २०॥ हस्तग्राहोऽपरो मा भूद्गृहीतायास्त्वया हि मे। एष ईशकृतो वीर संबन्धो नौ न पौरुषः॥ २१॥

दुष्टवाक्यैर्देवयानीं निर्भर्त्स्यं वस्त्रमादाय तां कूपे प्रक्षिप्य स्वगृहं शर्मिष्ठा जगाम॥ १७॥ तस्यां गतायां ययातिर्मृगयां चरन् यदृच्छया तत्र कूपं प्राप्य जलार्थी सन् कूपे तां नग्नां दृष्ट्वा॥ १८॥ तस्यै स्वमुत्तरीयं वस्त्रं दत्त्वा पाणिना पाणिं गृहीत्वा कूपात् तामुज्जहार॥ १९॥ तदा देवयानी प्रेमवाण्या तमाह हे राजन्! त्वया मे पाणिर्गृहीतः॥ २०॥ अतोऽपरो हस्तग्राहो मे मा भूत्। हे वीर! एष ईशकृतः संबन्धो न मानुषः॥ २१॥

---

१ ब्रह्म। २ वेदमार्गः।

हे ययाते ! कचस्य शापान्मे ब्राह्मणः पतिर्न भविता । शापस्य कारणमाह । बृहस्पतेः पुत्रः कचः शुक्रान्मृतसंजीवनीं विद्यामध्यगात् । तदा च शुक्रकन्या देवयानी तं पतिमभिलषितवती । स गुरुपुत्री मम पूज्येति न तामुदवहत् । ततश्च कुपिता सती तवेयं विद्या निष्फला भवत्विति शशाप । स च तव ब्राह्मणः पतिर्न भवेदिति तां शशापेत्याद्युक्तं भारते ॥२२॥ ययातिरशास्त्रीयमपि दैवप्रापितं ज्ञात्वा तस्याः वाक्यं जग्राह ॥ २३ ॥ अथ राजनि गते सति देवयानी रुदती सती शर्मिष्ठया कृतं सर्वं स्वकृतं च पित्रे न्यवेदयत् ॥२४॥ तदा शुक्रः पौरोहित्यं निन्दन्

यदिदं कूपमग्नाया भवतो दर्शनं मम ॥ न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ॥ कचस्य बार्हस्पत्यस्य शापाद् यमशपं पुरा ॥२२॥ ययातिरनभिप्रेतं दैवोपहृतमात्मनः ॥ मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥२३॥ गते राजनि सा वीरे तत्र स्म रुदती पितुः ॥ न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥ दुर्मना भगवान् काव्यः पौरोहित्यं विगर्हयन् ॥ स्तुवन् वृत्तिं[1] च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥ वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम्[2] ॥ गुरुं प्रसादयन् मूर्ध्ना पादयोः पतितः पथि ॥२६॥ क्षणार्धमन्युर्भगवान् शिष्यं व्याचष्ट भार्गवः ॥ कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे ॥२७॥ तथेत्यवस्थिते प्राह देवयानी मनोगतम् ॥ पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥ स्वानां तत् संकटं वीक्ष्य तदर्थस्य च गौरवम् ॥ देवयानीं पर्यचरत् स्त्रीसहस्रेण दासवत् ॥ २९ ॥ नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशनाः ॥ तमाह राजञ्छर्मिष्ठामाधास्तल्पे न कर्हिचित् ॥ ३० ॥

देवयान्या सह पुरात् निर्ययौ ॥२५॥ वृषपर्वा निर्गतं तं ज्ञात्वा पथि गुरुं प्रणम्य प्रार्थयामास ॥२६॥ क्षणार्धमन्युः शुक्रः शिष्यमाह । हे वृषपर्वन् ! कन्यायाः इच्छा क्रियताम् ॥२७॥ दैत्येन तथेत्युक्ते सति देवयानी प्राह । अहं पित्रा यत्र दत्ता तत्र यास्ये । शर्मिष्ठा सखीसहिता मामनुयातु ॥ २८ ॥ तदा वृषपर्वा स्वानां संकटं वीक्ष्य कन्यां ददौ । शर्मिष्ठा स्त्रीसहस्रेण दासवद् देवयानीं पर्यचरत् ॥ २९ ॥ ततः शुक्रः कन्यां ययातये दत्त्वा जगाद । हे राजन् ! शर्मिष्ठायास्तल्पे त्वं नोपगच्छेः ॥ ३० ॥



१ उञ्छवृत्तिम् । २ प्रत्यनीकाः देवाः जयप्राप्त्याश्रयत्वेन विवक्षिताः यस्य तम् ।

कदाचित् शर्मिष्ठा देवयानीं सप्रजां दृष्ट्वा रहसि तमेव पतिं वव्रे॥३१॥शर्मिष्ठयाऽपत्यार्थं याचितो ययातिर्धर्ममवेक्ष्य शुक्रवचश्चस्मरन् दैवप्रापितं सङ्गमभ्यपद्यत न कामतः ॥३२॥ ततो देवयानी यदुं तुर्वसुं च प्रासूत । शर्मिष्ठा द्रुह्युमनुं पूरुं च प्रासूत ॥३३॥ शर्मिष्ठायाः भर्तुः सकाशाद्गर्भसम्भवं विज्ञाय देवयानी क्रोधेन पितुर्गेहं ययौ ॥३४॥ तदा ययातिः कामी सन् प्रियामनुगतः प्रसादयितुं न शशाक ॥ ३५ ॥ ततः शुक्रः कन्यावचः श्रुत्वा क्रुद्धः सन् जगाद । हे अनृतपुरुष ! त्वां विरूपकरणी जरा विशतु ॥३६॥ ययातिरुवाच ॥ हे ब्रह्मन् ! तव दुहितरि कामैर-

विलोक्यौशनसीं राजञ्छर्मिष्ठा सप्रजां क्वचित् ॥ तमेव वव्रे रहसि सख्याः पतिमृतौ सती ॥ ३१ ॥ राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ॥ स्मरञ्छुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥ गर्भसंभवमासुर्या भर्तुर्विज्ञाय मानिनी ॥ देवयानी पितुर्गेहं ययौ क्रोधविमूर्च्छिता ॥ ३४ ॥ प्रियामनुगतः कामी वचोभिरुपमन्त्रयन् ॥ न प्रसादयितुं शेके पादसंवाहनादिभिः ॥ ३५ ॥ शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ॥ त्वां जरा विशतां मन्द विरूपकरणी नृणाम् ॥ ३६ ॥ ययातिरुवाच ॥ अतृप्तोऽस्म्यद्य कामानां ब्रह्मन् दुहितरि स्म ते ॥ व्यत्यस्यतां यथाकामं वयसा योऽभिधास्यति[1] ॥ ३७ ॥ इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ॥ यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥ मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ॥ वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥ यदुरुवाच ॥ नोत्सहे जरसा स्थातुमन्तरा प्राप्तया तव ॥ अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥

तृप्तोऽस्मि । तदा शुक्र उवाच । हे राजन् ! यो जरां धारयिष्यति तस्य वयसा यथेच्छं भोगान् त्वं भुङ्क्ष्व ॥ ३७ ॥ इति प्राप्तव्यवस्थानो राजा ज्येष्ठं यदुं याचे । हे पुत्र ! इमां जरां गृहाण निजं वयो देहि ॥ ३८ ॥ हे वत्स ! तव वयसा कतिपयाः समाः रंस्ये ॥ ३९ ॥ यदुरुवाच ॥ हे तात ! विषयसुखमभुक्त्वा जरया स्थातुं नोत्सहे ॥ ४० ॥

---

१ योऽभिधास्यत्यभितो धारयिष्यति तस्य वयसेत्यन्वयः ।

एवमेव तुर्वसुर्द्रुह्युरनुश्चोचुः॥४१॥तदा राजा वयसा न्यूनं गुणाधिकं पूरुं जगाद–हे वत्स ! ज्येष्ठबन्धुवन्नेति वक्तुं त्वं नार्हसि॥४२॥पूरुरुवाच॥ हे तात ! पितुराज्ञां लोके को न मन्येत यत्प्रसादात् परं विन्दति ॥४३॥ यः पुत्रश्चिन्तितं कुर्यात् स उत्तमः । यः उक्तं कुरुते स मध्यमः अश्रद्धया यः कुर्यात् सोऽधमः । य उक्तोऽपि न कुरुते स मूत्रसमः ॥४४॥ इत्युक्त्वा जरां जगृहे । ययातिरपि तस्य वयसा ॥४५॥ पितृवत्

तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत ॥ प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥ अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम् ॥ न त्वमग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि ॥ ४२ ॥ पूरुरुवाच ॥ को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान् ॥ प्रतिकर्तुं क्षमो यस्य प्रसादाद्विन्दते परम् ॥ ४३ ॥ उत्तमश्चिन्तितं कुर्यात्प्रोक्तकारी तु मध्यमः ॥ अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥४४॥ इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ॥ सोऽपि तद्वयसा कामान्यथावज्जुजुषे नृप ॥ ४५ ॥ सप्तद्वीपपतिः सम्यक् पितृवत्पालयन्प्रजाः ॥ यथोपजोषं विषयाञ्जुजुषेऽव्याहतेन्द्रियः ॥ ४६ ॥ देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ॥ प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥ अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥ यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः ॥ नानेव भाति नाभाति स्वप्नमायामनोरथः ॥ ४९ ॥ तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ॥ नारायणमणीयांसं निराशीरयजत् प्रभुम् ॥ ५० ॥ एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ॥ विदधानोऽपि नातृप्यत्सार्वभौमः कदिन्द्रियैः॥५१॥

इति श्रीभागवते महापुराणे नवमस्कन्धे ययातिचरितं नामाष्टादशोऽध्यायः ॥ १८ ॥

सप्तद्वीपस्थाःप्रजाःपालयन् विषयान् बुभुजे॥४६॥देवयान्यपि प्रतिदिनं मनोवाग्देहवस्तुभिः प्रीतिं चकार॥४७॥ययातिर्भूरिदक्षिणैर्यज्ञैःसर्वदेवमयं हरिमयजत ॥४८॥ यस्मिन् विश्वं व्योम्नि मेघपङ्क्तिरिव रचितम् ॥४९॥ हृदि विन्यस्य निष्कामनया हरिमयजत ॥५०॥ एवं वर्षसहस्राणि सार्वभौमो राजा दुष्टेन्द्रियैर्विषयान् भुञ्जानोऽपि नातृप्यत् ॥ ५१ ॥ इति श्रीभागवते चू० नवमस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥



१ स्वप्नमायाभ्यां सहितः स्वप्ने असन् मनोरथ इव । २ निरिच्छुः ।

ऊनविंशे ययातिः स्वं चेष्टितं नन्वजोपमम् ॥ देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥ १ ॥ भुक्तभोगामजां हास्यन्नजवद् वृत्तमात्मनः । विडम्बयन् प्रियामाह निर्वेदयितुमात्मवान्॥२॥श्रीशुक उवाच॥ स ययातिरित्थं स्त्रीलम्पटः कामान् सेवमानः विरक्तः सन् प्रियायै गाथामगायत ॥१॥ हे भार्गवि ! गाथां शृणु ॥२॥ कश्चिदजो वने विचरन् कूपे पतितामजां ददर्श ॥३॥ अजः कामी सन् तस्याः उद्धरणोपायं चिन्तयामास । ततः शृङ्गाग्रेण कूपतटद्वयमुद्धृत्य तामुज्जहार ॥४॥ सा कूपान्निर्गत्य तमेव पतिं चकमे । तया वृतं वीक्ष्यान्या अजा वव्रुः॥५॥

श्रीशुक उवाच ॥ स इत्थमाचरन् कामान् स्त्रैणोपह्नवमात्मनः ॥ बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥ १ ॥ शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ॥ धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥२॥ बस्त एको वने कश्चिद्विचिन्वन् प्रियमात्मनः ॥ ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥ तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन् ॥ व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसी ॥४॥ सोत्तीर्य कूपात् सुश्रोणी तमेव चकमे किल ॥ तया वृतं समुद्वीक्ष्य बह्व्योऽजा कान्तकामिनीः ॥ पीवानं श्मश्रुलं प्रेष्ठं मिढ्वांसं याभकोविदम् ॥५॥ स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः ॥ रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥ तमेव प्रेष्ठतमया रममाणमजाऽन्यया ॥ विलोक्य कूपसंलग्ना नामृष्यद् बस्तकर्म तत् ॥७॥ तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ॥ इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥८॥ सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ॥ कुर्वन्निडविडाकारं नाशक्नोत्पथि संधितुम् ॥ ९ ॥ तस्य तत्र द्विजः कश्चिदजास्वाम्यच्छिनद्रुषा ॥ लम्बन्तं वृषणं भूयः संदधेऽर्थाय योगवित् ॥१०॥ संबद्धवृषणः सोऽपि ह्यजया कूपलब्धया ॥ कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥

स एको बह्वीनां रतिवर्धनस्ताभिः सह रेमे ॥ ६ ॥ तदा कूपसंलग्नाऽजाऽन्यया सह रममाणं दृष्ट्वा ॥ ७ ॥ तं त्यक्त्वा दुःखिता सती स्वामिनं ययौ ॥८॥ सोऽपि स्त्रैणः इडविडाकारं शब्दं कुर्वन् तां प्रसादयितुं नाशक्नोत् ॥९॥ तत्र कश्चिद् रुषा तद्वृषणमच्छिनत् । पुनरजप्रार्थनया लम्बन्तं वृषणमर्थाय संदधे ॥ १० ॥ ततः सोऽपि कूपलब्धाजया बहुकालं रेमे अद्यापि न तुष्यति ॥ ११ ॥

हे देवयानि ! अहं भवत्याः प्रेमयन्त्रितस्तव मायामोहितः आत्मानं न जानामि॥१२॥ तर्हि पुनरपि बहुविषयाः सेव्यन्तां ततः कामोपशान्त्या मोहो निवर्तेत इति चेत् तर्हि शृणु । यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः इदं सर्वं कामताडितस्य पुंसो मनः प्रीतिं न पूरयति ॥ १३ ॥ कामानामुपभोगेन कामो न शाम्यति यथा घृतेनाग्निः ॥१४॥ यदा तु पुंसः समदृष्टित्वं भवेत् तदा सर्वाः दिशः सुखमय्यो भवन्ति ॥१५॥ या तृष्णा स्वयं जीर्यतः सतो न जीर्यते तां दुःखप्रदां तृष्णां सुखेच्छुः शीघ्रं त्यजेत् ॥१६॥ स्त्रीसन्निधानं तु सर्वथा त्याज्यम् । मातृभगिनीक-

**तथाऽहं कृपणः सुभ्रूर्भवत्याः प्रेमयन्त्रितः ॥ आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते ॥ १३ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥ यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ॥ समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥ १५ ॥ या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ॥ तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ १६ ॥ मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् ॥ बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥ पूर्णं वर्षसहस्रं मे विषयान् सेवतोऽसकृत् ॥ तथाऽपि चानुसवनं तृष्णा तेषूपजायते ॥ १८ ॥ तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ॥ निर्द्वन्द्वो निरहंकारश्चरिष्यामि मृगैः सह ॥ १९ ॥ दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न संविशेत ॥ संसृतिं चात्मनाशं च तत्र विद्वान् स आत्मदृक् ॥ २० ॥ इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ॥ दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥ दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ॥ प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम् ॥ २२ ॥**

न्यादिभिरेकान्तासनो न भवेत् । यतः बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥ एवं वर्षसहस्रं विषयान् सेवतो मम तृष्णा विषयेषु पुनर्जायते ॥ १८ ॥ अतस्तां तृष्णां त्यक्त्वा ब्रह्मणि मनः स्थापयित्वा द्वन्द्वरहितो निरहंकारश्च सन् मृगैः सह चरिष्यामि ॥१९॥ यो दृष्टं श्रुतमसत् ज्ञात्वा नोपभुञ्जीत स आत्मदृक् ॥२०॥ ययातिः इति जायामुक्त्वा पूरवे तदीयं वयो दत्त्वा स्वां जरामाददे ॥२१॥ ततः पूर्वस्यां द्रुह्युं दक्षिणस्यां यदुं पश्चिमायां तुर्वसुमुत्तरस्यामनुं स्थापयित्वा ॥ २२ ॥

पूरुं स्वराज्येऽभिषिच्य तस्य वशेऽग्रजान् कृत्वा वनं ययौ ॥२३॥ स षड्वर्गं क्षणेन त्यक्त्वा ॥२४॥ मुक्तसमस्तसङ्गो वासुदेवे भगवति भक्तिं कुर्वाणः भगवद्गतिं लेभे ॥२५॥ देवयानी तां गाथां श्रुत्वा स्त्रीपुंसयोः स्नेहवैक्लव्यात् परिहासमिव- मत्वा ॥२६॥ राजनि गते सति प्रपाया-मिव गच्छतां सुहृदां वासं सर्वं मायारचितं ज्ञात्वा ॥२७॥ सर्वत्रसंगं त्यक्त्वा भगवते वासुदेवाय सर्वभूतनिवासाय तुभ्यं नम इति नमनादिभिः

भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम् ॥ अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥ आसेवितं वर्षपूगान् षड्वर्गं विषयेषु सः ॥ क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥ स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या-विधुतत्रिलिङ्गः ॥ परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥ श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ॥ स्त्रीपुंसोः स्नेहवैक्लव्यात् परिहासमिवेरितम् ॥ २६ ॥ सा सन्निवासं सुहृदां प्रपायामिव गच्छताम् ॥ विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः ॥ २७ ॥ सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ॥ कृष्णे मनः समावेश्य व्यधुनोल्लिंगमात्मनः ॥ २८ ॥ नमस्तुभ्यं भगवते वासुदेवाय वेधसे ॥ सर्वभूताधिवासाय शान्ताय बृहते नमः ॥ २९ ॥ इति श्रीभागवते महापुराणे नवम० ययातिविरक्तिवर्णनं नाम एकोनविंशोऽध्यायः ॥ १९ ॥ श्रीशुक उवाच ॥ पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ॥ यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥१॥ जन्मेजयो ह्यभूत् पूरोः प्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥

कृष्णे मनो निवेश्य स्वदेहं व्यधुनोत् ॥२८॥२९॥ इति श्रीभागवते चू० नवमस्कन्धे एकोनविंशोऽध्यायः ॥१९॥ विंशे पितृप्रसादात्तराजासन-महोन्नतेः॥पूरोर्वंशे हि दौष्यन्तेर्भरतस्येर्यते यशः ॥ १ ॥ श्रीशुक उवाच ॥ हे नृप ! पूरोर्वंशं कथयामि यत्र त्वं जातोऽसि । हे भारत ! यत्र राजर्षयो ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥ पूरोः पुत्रो जनमेजयः । तस्य प्रचिन्वान् । ततः प्रवीरः । तस्य नमस्युः । तस्माच्चारुपदः ॥ २ ॥

१ विधुतं निरस्तं त्रिगुणात्मकं लिंगं येन सः । २ प्रख्यातः । ३ परिहासं निवृत्तिमार्गप्रोत्साहनं वा ।

तस्य सुद्युः । तस्माद् बहुगवः । ततः संयातिः । तस्याहंयातिः । ततो रौद्राश्वः ॥ ३ ॥ रौद्राश्वाद्घृताच्यामप्सरसि दश पुत्राः बभूवुः ॥ ते च-ऋतेयुः १, कुक्षेयुः २, स्थण्डिलेयुः ३, कृतेयुः ४, जलेयुः ५, संततेयुः ६, धर्मेयुः ७, सत्येयुः ८, व्रतेयुः ९, वनेयुः १० इति ॥४॥५॥ ऋतेयोः पुत्रो रन्तिभारः । तस्य पुत्रास्त्रयः-सुमतिः १, ध्रुवः २, अप्रतिरथः ३, अप्रतिरथस्य कण्वः ॥६॥ तस्य मेधातिथिः । तस्मात् प्रस्कण्वाद्याः द्विजातयः । सुमतेः पुत्रो रैभ्यः । तस्य दुष्यन्तः ॥७॥ स कदाचित् मृगयां यातः सन् कण्वाश्रमं गतः । तत्र स्वकान्त्या आश्रमं

तस्य सुद्युरभूत् पुत्रस्तस्माद् बहुगवस्ततः ॥ संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥ ऋतेयुस्तस्य कुक्षेयुः स्थण्डिलेयुः कृतेयुकः ॥ जलेयुः संततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ॥ घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥ ऋतेयो रन्तिभारोऽभूत् त्रयस्तस्यात्मजा नृप ॥ सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥ तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्या द्विजातयः ॥ पुत्रोऽभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥ ७ ॥ दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः ॥ तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥ विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ॥ ८ ॥ बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ॥ ९ ॥ पप्रच्छ कामसंतप्तः प्रहसन् श्लक्ष्णया गिरा ॥ का त्वं कमलपत्राक्षि कस्यासि हृदयंगमे ॥१०॥ किं वा चिकीर्षितं त्वत्र भवत्या निर्जने वने ॥ व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ॥ नहि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ ११ ॥ शकुन्तलोवाच ॥ विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ॥ वेदैतद् भगवान् कण्वो वीर किं करवाम ते ॥ १२ ॥

शोभयन्तीं स्त्रियं दृष्ट्वा मुमुहे ॥८॥ तद्दर्शनेन हृष्टः कामसंतप्तस्तां बभाषे ॥ ९ ॥ हे कमलपत्राक्षि ! त्वं का कस्यासि ॥ १० ॥ निर्जने वने तव किं चिकीर्षितं त्वां निश्चयेन राजन्यतनयां जानामि । कुतः पूरुवंश्यानां चेतोऽधर्मे क्वचिदपि न रमते ॥ ११ ॥ शकुन्तलोवाच ॥ हे राजन् ! अहं विश्वामित्रात्मजा मेनकायां जाता स्वर्गं गच्छन्त्या तया वने त्यक्ता । कण्वः एतत् सर्वं वेद । वीर ! किं करवाम ॥ १२॥

अत्र स्थीयताम् । अर्हणं च गृह्यताम् । अत्र नीवाराः सन्ति भुज्यताम् । रोचते चेदुष्यताम् ॥१३॥ दुष्यन्त उवाच ॥ हे सुभ्रु ! कुशिकान्वये जातायास्तवेदमुपपन्नम् । राजकन्यकाः स्वयं सदृशं वरं वृणुते ॥१४॥ तदा तया तथेत्युक्ते सति राजा गान्धर्वविधिना तामुपयेमे ॥१५॥ ततोऽमोघवीर्यो राजर्षिस्तस्यां वीर्यमादधे । स श्वोभूते स्वपुरं यातः । सा कालेन पुत्रमसूत ॥१६॥ कण्वो वने कुमारस्य जातकर्मादिसंस्कारान् चक्रे । स बालो व्याघ्रादीन् बद्ध्वा क्रीडते स्म॥१७॥शकुन्तला पराक्रमिणं पुत्रमादाय भर्तुः समीपं जगाम॥१८॥राजा भार्यां पुत्रं च यदा

आस्यतां ह्यरविन्दाक्ष गृह्यतामर्हणं च नः ॥ भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते॥१३॥दुष्यन्य उवाच ॥ उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ॥ स्वयं हि वृणुते राज्ञां कन्यकास्सदृशं वरम् ॥ १४ ॥ ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम् ॥ गान्धर्वविधिना राजा देशकालविभागवित् ॥१५॥ अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ॥ श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १६ ॥ कण्वः कुमारस्य वने चक्रे समुदिताः क्रियाः ॥ बद्ध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः॥१७॥तं दुरत्ययविक्रान्तमादाय [1] प्रमदोत्तमा॥हरेरंशांशसंभूतं भर्तुरन्तिकमागमत् ॥१८॥ यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ॥ शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ १९ ॥ माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥ भरस्व पुत्रं दुष्यन्त माऽवमंस्थाः शकुन्तलाम् ॥२०॥ रेतोधाः पुत्रो नयति नरदेव यमक्षयात् ॥ त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥२१॥ पितर्युपरते सोऽपि चक्रवर्ती महायशाः ॥ महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २२ ॥ चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः ॥ ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराड् विभुः ॥ २३ ॥ पञ्च पञ्चाशता मेध्यैर्गङ्गायामनु वाजिभिः ॥ मामतेयं पुरोधाय यमुनायामनु प्रभुः ॥ २४ ॥

न जगृहे तदा सर्वेषां शृण्वतामाकाशवाण्याह ॥१९॥ माताऽऽधारपात्रं पितुः पुत्रः येन जातः स एव सः । हे दुष्यन्त ! पुत्रं पुषाण। शकुन्तलां माऽवमंस्थाः ॥२०॥ किंच पुत्रो नरकात् पितरं तारयति अस्य त्वं पिता शकुन्तला सत्यमाह इत्युक्ते ततो भार्यां पुत्रं च स्वीकृतवान् ॥२१॥ ततो दुष्यन्ते कालेन मृते सति स भरतश्चक्रवर्ती बभूव ॥२२॥ यस्य दक्षिणहस्ते चक्रचिह्नं पादयोः कमलचिह्नं स भरतः एकदा मामतेयं पुरोहितं कृत्वा गङ्गातीरे यमुनातीरे च पञ्चपञ्चाशता ( ५५ ) अश्वमेधैरीजे ॥ २३ ॥ २४ ॥

१ 'विधानवित्' इ० पा० ।

अष्टसप्तति ( ७८ ) मेध्यान् अश्वान् बबन्ध । दौष्यन्तेर्भरतस्य प्रकृष्टगुणवति देशे चितोऽग्निरभूत् यस्मिन्नग्निचयने सहस्रं ब्राह्मणाः भरतेन दत्ताः गाः प्रत्येकं बद्वं विभज्य जगृहुः । बद्वं च चतुरशीत्युत्तरैस्त्रयोदशसहस्रैरेकं भवति ( १३०८४ ) ॥ २५ ॥ ततश्च भरतो नृपान् विस्मापयन् सन् त्रयस्त्रिंशच्छतानि (३३००) ॥ अश्वान् बद्ध्वा देवतानां वैभवमत्यगात् ॥ २६ ॥ ततश्च मष्णाराख्ये कर्मणि तीर्थे वा चतुर्दशलक्षाणि गजान् ददौ ॥ २७ ॥ हे राजन् । भरतस्य महत् कर्म पूर्वे नाकुर्वन् अपरे न करिष्यन्ति ॥ २८ ॥ अथ भरतो दिग्विजयेऽब्रह्मण्यान् नृपान् किरातादींश्च जघान् ॥ २९ ॥ पुरा असुरैर्हृताः देवस्त्रियोऽसुरान् हत्वा देवेभ्यो ददौ ॥ ३० ॥ सप्तविंशतिसहस्रं ( २७००० ) वत्सरान् राज्यं चक्रे ॥ ३१ ॥ स राज्यं देहं च मृषेति विचार्योपरराम ॥३२॥ तस्य पत्न्यस्तिस्र आसन् । ताः भर्त्रैते पुत्राः मत्सदृशाः न इत्युक्ते सति व्यभिचारशङ्कयाऽस्मान् त्यक्ष्यतीति भयात् पुत्रान् जघ्नुः ॥ ३३ ॥

सहस्रं बद्वशो यस्मिन् ब्राह्मणा गा विभेजिरे ॥ २५ ॥ त्रयस्त्रिंशच्छतं ह्यश्वान् बद्ध्वा विस्मापयन् नृपान् ॥ दौष्यन्तिरत्यगान्मायां देवानां गुरुमाययौ ॥ २६ ॥ मृगाञ्छुक्लदतः कृष्णान् हिरण्येन परीवृतान् ॥ अदात् कर्मणि मष्णारे नियुतानि चतुर्दश ॥ २७ ॥ भरतस्य महत् कर्म न पूर्वे नापरे नृपाः ॥ नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥ २८ ॥ किरातहूणान्यवनान्न्ध्रान् कङ्कान् खशाञ्छकान् ॥ अब्रह्मण्यान् नृपांश्चाहन् म्लेच्छान् दिग्विजयेऽखिलान् ॥२९॥ जित्वा पुराऽसुरा देवान् ये रसौकांसि भेजिरे ॥ देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत् ॥३०॥ सर्वकामान् दुदुहतुः प्रजानां तस्य रोदसी ॥ समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३१ ॥ सम्राट् लोकपालाख्यमैश्वर्यमधिराट्श्रियम् ॥ चक्रं चास्खलितं प्राणान् मृषेत्युपरराम ह ॥ ३२ ॥ तस्यासन् नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसम्मताः ॥ जघ्नुस्त्यागभयात् पुत्रान् नानुरूपा इतीरिते ॥ ३३ ॥

अष्टसप्ततिमेध्याश्वान् बबन्ध प्रददद्वसु॥भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः ॥

१ ऐतरेयब्राह्मणे अष्टमपञ्चिकायामष्टमाध्याये भरताख्यानम् । २ चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः ॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश ( १३०८४ ) इति बद्वलक्षणम् । ३ मेनामात्रां वा ।

तदा नष्टे वंशे सति पुत्रार्थं मरुत्स्तोमेन यज्ञेन यजतो भरतस्य प्रसन्नाः मरुतो भरद्वाजं नाम पुत्रं ददुः ॥ ३४ ॥ तदुत्पत्तिमाह । यदाबृहस्पति-भ्रातुरुतथ्यस्य पत्न्यां गर्भिण्यां ममतायां चौर्येण मैथुनाय प्रवृत्तः तदा गर्भस्थेन निवारितः,तदा क्रुद्धो बृहस्पतिरन्धो भवेति गर्भं शप्त्वा बलाद् वीर्यं न्यषिञ्चत् । ततो बृहस्पतेः शापाद् गर्भस्थोऽन्धो बभूव । तेन च तद्वीर्यं पार्ष्णिना योनेर्बहिर्निस्सारितं भूमौ पातितम् । स सद्य एव कुमारो जातः ॥३५॥ तत्र भर्तृत्यागविशङ्कया पुत्रं त्यक्त्वा यान्तीं ममतां देवाः प्राहुः ॥३६॥ हे मूढे ! इमं पुत्रं भर, एकस्य क्षेत्रेऽन्यस्य बीजादिति द्वाभ्यां जातम् । अतस्तस्यापि पुत्रः । एवमुक्ता ममता तं प्राह । हे बृहस्पते ! त्वमिमं पोषय यतो द्वाभ्यामन्यायतो जातः ।

तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ॥ मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३४ ॥ अन्तर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः ॥ प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥३५॥ तं त्यक्तुकामां ममतां भर्तृत्यागविशङ्किताम् ॥ नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः ॥ ३६ ॥ मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते ॥ यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३७ ॥ चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम् ॥ व्यसृजन्मरुतोऽबिभ्रन्दत्तोऽयं वितथेऽन्वये ॥ ३८ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धे शकुन्तलोपाख्याने विंशोऽध्यायः ॥ २० ॥ श्रीशुक उवाच ॥ वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः ॥ महावीर्यो नरो गर्गस्संकृतिस्तु नरात्मजः ॥१॥ गुरुश्च रन्तिदेवश्च संकृतेः पाण्डुनन्दन ॥ रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥ वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ॥ निष्किंचनस्य धीरस्य सकुटुम्बस्य सीदतः ॥ ३ ॥

अतो नाहमेकाकिनी भरामि एवमुक्त्वा विवदमानौ तौ पुत्रं त्यक्त्वा यातौ । यतो हेतोरयं भरद्वाजः ॥ ३७ ॥ तं मरुतोऽबिभरुः एवं मरुद्भिः प्राप्तः । अयं भरतवंशे नष्टे सति दत्तः । अतो वितथो नाम जातः ॥३८॥ इति श्रीभागव० चू० नवम० विंशोऽध्यायः ॥ २० ॥ एकविंशे तु दौष्यन्तेः सुतस्यान्वय उच्यते ॥ रन्तिदेवाजमीढाद्यैर्यत्र कीर्तिः प्रतन्यते ॥ १ ॥ श्रीशुक उवाच ॥ वितथस्य सुतो मन्युः । तस्य पुत्राः पञ्च-बृहत्क्षत्रः १, जयः २, महावीर्यः ३, नरः ४, गर्गः ५ इति । नरात् संकृतिः ॥ १ ॥ तस्य गुरुः रन्तिदेवश्च । रन्तिदेवस्य यशः इहामुत्र च गीयते ॥ २ ॥ निष्किंचनस्य धीरस्य सकुटुम्बस्य दुःखिनो लब्धं लब्धं ददतः ॥ ३ ॥

रन्तिदेवस्याष्टचत्वारिंशत् ॥ ४८ ॥ दिनानि व्यतीयुः । तदा घृतं पायसं संयावं जलं च प्राप्तम् ॥४॥ ततः क्षुत्तृड्भ्यां जातवेपथोर्भोक्तुकामस्य तस्य काले ब्राह्मणोऽतिथिरागमत्॥५॥स सर्वत्र हरिं पश्यन्नतिथये श्रद्धयाऽन्नं ददौ । स द्विजो भुक्त्वा ययौ ॥६॥ अवशिष्टमन्नं कुटुम्बाय विभज्य भोक्तुकामस्य सतोऽन्यः शूद्रोऽतिथिरागमत् । राजा तस्मै अन्नं ददौ ॥ ७ ॥ शूद्रे गते श्वभिर्वेष्टितोऽतिथिस्तमागत्याह—हे राजन् ! सगणाय क्षुधार्ताय मेऽन्नं दीयताम् ॥ ८ ॥ तदा राजा तस्मै बहुमानपुरस्सरं श्वभ्यश्च शेषमन्नं दत्त्वा नमश्चक्रे ॥९॥ ततः एकस्यैव तृप्तिकरं

व्यतीयुरष्टचत्वारिंशदहान्यपि बत किल ॥ घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥ कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ॥ अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥ तस्मै संव्यभजत् सोऽन्नमादृत्य श्रद्धयाऽन्वितः ॥ हरिं सर्वत्र संपश्यन् स भुक्त्वा प्रययौ द्विजः ॥६॥ अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते ॥ विभक्तं व्यभजत् तस्मै वृषलाय हरिं स्मरन्॥७॥याते शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः ॥ राजन् मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥ स आदृत्यावशिष्टं यद् बहुमानपुरस्कृतम् ॥ तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥ पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ॥ पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥ तस्य तां करुणां वाचं निशम्य विपुलश्रमाम् ॥ कृपया भृशसंतप्त इदमाहामृतं वचः ॥ ११ ॥ न कामयेऽहं गतिमीश्वरात् परामष्टर्द्धियुक्तामपुनर्भवं वा ॥ आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः ॥ १२ ॥ क्षुत्तृट्छ्रमो गात्रपरिश्रमश्च दैन्यं क्लमः शोकविषादमोहाः ॥ सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणान्मे ॥ १३ ॥ एवं प्रभाष्य पानीयं म्रियमाणः पिपासया ॥ पुल्कसायाददाद्धीरो निसर्गकरुणो नृपः ॥ १४ ॥

जलं शिष्टम् । तत् पास्यतः पुल्कसः आगत्य जलं देहीति ययाचे ॥ १० ॥ तस्य तां दीनां वाणीं निशम्य कृपया पीडितः इदमाह ॥११॥ ईश्वराद् गतिं मोक्षं च न कामये किंतु अखिलदेहधारिणां दुःखं भोक्तृत्वरूपेणान्तः स्थितः सन् कामये येन तेऽदुःखिनो भवन्ति ॥ १२ ॥ कृपणस्य जन्तोर्जलार्पणान्मे क्षुत्तृट्छ्रमादयः सर्वे गताः ॥ १३ ॥ एवमुक्त्वा स्वयं पिपासया म्रियमाणोऽपि तस्मै जलं ददौ ॥ १४ ॥

तदा तस्य फलदाः ब्रह्मविष्णुमहेश्वराः आत्मानं दर्शयांचक्रुः॥१५॥ स तेभ्यो नमस्कृत्य निस्सङ्गः सन् वासुदेवे भक्त्या नमश्चक्रे॥१६॥ एवमीश्वरालम्बनं चित्तं कुर्वतस्तस्य गुणमयी माया स्वप्नवत् गुप्ता बभूव॥१७॥ तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः सर्वे जनाः नारायणपराः अभवन्॥१८॥ अथ मन्युसुतस्य गर्गस्य वंशमाह। गर्गात् शिनिः। तस्मात् गार्ग्यप्रमुख्याः द्विजाः। मन्युसुतस्य महावीर्यस्य वंशमाह। महावीर्यस्य दुरितक्षयः। तस्य त्रय्यारुणिः १, कविः २॥१९॥ पुष्करारुणिः ३ एते त्रयो द्विजत्वं प्राप्ताः। अथ बृहत्क्षत्रस्य पुत्रो हस्ती येन हस्तिनापुरं

तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम्॥ आत्मानं दर्शयांचक्रुर्माया विष्णुविनिर्मिताः॥ १५॥ स वै तेभ्यो नमस्कृत्य निस्सङ्गो विगतस्पृहः॥ वासुदेवे भगवति भक्त्या चक्रे नमः परम्॥ १६॥ ईश्वरालम्बनं चित्तं कुर्वतोऽनन्यराधसः॥ माया गुणमयी राजन् स्वप्नवत् प्रत्यलीयत॥ १७॥ तत्प्रसंगानुभावेन रन्तिदेवानुवर्तिनः॥ अभवन् योगिनः सर्वे नारायणपरायणाः॥ १८॥ गर्गाच्छिनिस्ततो गार्ग्यः क्षत्राद् ब्रह्म ह्यवर्तत॥ दुरितक्षयो महावीर्यात् तस्य त्रय्यारुणिः कविः॥ १९॥ पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः॥ बृहत्क्षत्रस्य पुत्रोऽभूद्धस्तीयद्धस्तिनापुरम्॥ २०॥ अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः॥ अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः॥२१॥ अजमीढाद् बृहदिषुस्तस्य पुत्रो बृहद्धनुः॥ बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः॥२२॥ तत्सुतो विशदस्तस्य सेनजित् समजायत॥ रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः॥ २३॥ रुचिराश्वसुतः पारः पृथुसेनस्तदात्मजः॥ पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत्॥ २४॥

निर्मितम्॥ २०॥ हस्तिनस्त्रयः पुत्राः अजमीढः १, द्विमीढः २, पुरुमीढः ३, इति। अजमीढस्य प्रियमेधादयो द्विजाः॥२१॥ पुनरजमीढात् द्वितीयः पुत्रो बृहदिषुर्नाम्ना। तस्य बृहद्धनुः। ततो बृहत्कायः। तस्य जयद्रथः॥२२॥ तस्य विशदः। ततः सेनजित्। तस्य चत्वारः पुत्राः—रुचिराश्वः १, दृढहनुः २, काश्यः ३, वत्सः ४ इति॥२३॥ रुचिराश्वात् पारः। तस्य पुत्रौ द्वौ पृथुसेनो नीप इति। नीपस्य पुत्रशतं जातम्॥२४॥

१ मायया वृषलादिरूपेण प्रतीताः। २ ईश्वरातिरिक्तफलान्तरानपेक्षस्य।

स एव नीपः शुककन्यायां कृत्व्यां ब्रह्मदत्तं पुत्रं प्रासूत । ब्रह्मदत्तः सरस्वत्यां भार्यायां विष्वक्सेनं पुत्रमधात्॥२५॥स एव ब्रह्मदत्तो जैगीषव्योपदेशेन योगतन्त्रं चकार । विष्वक्सेनादुदक्स्वनः । तस्य भल्लादः । एते बृहदिषोर्वंश्याः॥२६॥अथ द्विमीढाद् यवीनरः। तस्य कृतिमान् । ततः सत्यधृतिः । तस्य दृढनेमिः । ततः सुपार्श्वः ॥२७॥ तस्य सुमतिः । ततः सन्नतिमान् । तस्य कृती । स हिरण्यनाभाद् योगं प्राप्य ॥ २८ ॥ साम्नां षट् संहिताः विभज्य शिष्यानध्यापितवान् । कृतिनो नीपः । तस्योग्रायुधः ततः क्षेम्यः । तस्य सुवीरः । ततो रिपुञ्जयः ॥२९॥ तस्य

स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥ स योगी गवि भार्यायां विष्वक्सेनमधात् सुतम् ॥२५॥ जैगीषव्योपदेशेन योगतन्त्रं चकार ह ॥ उदक्स्वनस्ततस्तस्माद् भल्लादो बार्हदीषवाः ॥ २६ ॥ यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः ॥ नाम्ना सत्यधृतिर्यस्य दृढनेमिः सुपार्श्वकृत् ॥ २७ ॥ सुपार्श्वात् सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः ॥ कृती हिरण्यनाभाद् यो योगं प्राप्य जगौ स्म षट् ॥ २८ ॥ संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः ॥ तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः ॥ २९ ॥ ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ नलिन्यामजमीढस्य नीलः शान्तिस्सुतस्ततः ॥३०॥ शान्तेः सुशान्तिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ॥ भर्म्याश्वस्तनयस्तस्य पञ्चासन्मुद्गलादयः ॥ ३१ ॥ यवीनरो बृहदिषुः काम्पिल्यः सञ्जयः सुताः ॥ भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ॥ ३२ ॥ विषयाणामलमिमे इति पञ्चालसंज्ञिताः ॥ मुद्गलाद् ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥ ३३ ॥ मिथुनं मुद्गलाद् भार्म्याद्दिवोदासः पुमानभूत् ॥ अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ॥३४॥ तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ॥ शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल ॥ ३५ ॥



बहुरथः । पुरुमीढोऽपुत्रः अथाजमीढस्य वंशान्तरमाह । अजमीढात् नलिन्यां नीलः । तस्य शान्तिः ॥३०॥ ततः सुशान्तिः । तस्य पुरुजः । ततोऽर्कः तस्य भर्म्याश्वः । तस्य पञ्च पुत्राः—मुद्गलः १, यवीनरः २, बृहदिषुः ३, काम्पिल्यः ४, संजयः ५ इति । इमे पाञ्चालसंज्ञकाः आसन् ॥ ३१ ॥ मुद्गलाद् ब्रह्म जातम् । तद्गोत्रं मुद्गलाख्यं जातम् ॥ ३२ ॥ ३३ ॥ मुद्गलान्मिथुनं तत्र दिवोदासः पुमान् अहल्या कन्या । तस्यां गौतमात् शतानन्दो जातः ॥३४॥ तस्य सत्यधृतिः । ततः शरद्वान् । तस्योर्वशीदर्शनात् शरस्तम्बे रेतः पपात । तद्रेतसो मिथुनं जातम् ।

तन्मिथुनं दृष्ट्वा शन्तनुर्मृगयां चरन् कृपया जग्राह । तत्र पुमान् कृपः कन्या कृपी या द्रोणपत्नी ॥ ३५ ॥ ३६ ॥ इतिश्रीभागवते चू० नवमस्कन्धे एकविंशोऽध्यायः ॥२१॥ द्वाविंशे तु दिवोदासवंशमुक्त्वाऽथ वर्णिताः । ऋक्षवंशे जरासंधपार्थदुर्योधनादयः॥१॥श्रीशुक उवाच ॥ दिवोदासात् मित्रायुः । तस्य च्यवनः सुदासः सहदेवः सोमकः इति चत्वारः पुत्राः॥१॥तस्य शतं पुत्राः बभूवुः । तेषु जन्तुर्ज्येष्ठःपृषतः कनिष्ठः । ततो द्रुपदः । तस्य द्रौपदी कन्याधृष्टद्युम्नादयश्च पुत्राः ॥२॥ धृष्टद्युम्नाद्धृष्टकेतुः । इमे पाञ्चालसंज्ञकाः । अजमीढस्य वंशान्तरमाह । अजमीढा-

शरस्तम्बेऽपतद्रेतो मिथुनं तदभूच्छुभम् ॥ तद् दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ॥ कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ॥ ३६ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धे भरतरन्तिदेवाजमीढादिचरितं नामैकविंशोऽध्यायः ॥ २१ ॥ श्रीशुक उवाच ॥ मित्रायुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप ॥ सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥ तस्य पुत्रशतं तेषां यवीयान् पृषतः सुतः ॥ द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥२॥ धृष्टद्युम्नाद् धृष्टकेतुर्भार्म्याः पाञ्चालका इमे ॥ योऽजमीढसुतो ह्यन्य ऋक्ष संवरणस्ततः ॥ ३ ॥ तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ॥ परीक्षित्सुधनुर्जह्नुर्निषधाश्वः कुरोस्सुताः ॥ ४ ॥ सुहोत्रोऽभूत् सुधनुषश्च्यवनोऽथ ततः कृती ॥ वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥ कुशाम्बमत्स्यप्रत्यग्रचेदिपाद्याश्च चेदिपाः ॥ बृहद्रथात् कुशाग्रोऽभूदृषभस्तस्य तत्सुतः ॥ ६ ॥ जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः ॥ अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥ ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ॥ जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ॥ ८ ॥

दृक्षः । तस्य संवरणः ॥ ३ ॥ तस्य तपत्यां सूर्यकन्यायां कुरुः । तस्य चत्वार पुत्राः परीक्षित् १, सुधनुः २, जह्नुः ३, निषधाश्वः ४, इति ॥४॥ सुधनुषः सुहोत्रः । तस्य च्यवनः ततः कृती । तस्योपरिचरो वसुः । तस्य पुत्राः बृहद्रथकुशाम्बमत्स्यप्रत्यग्रचेदिपाद्याः । ते चेदिपसंज्ञाः बृहद्रथात् कुशाग्रः । तस्य ऋषभः ॥ ५ ॥ ६ ॥ तस्य पुष्पवान् । ततः सत्यहितः । तस्य जहुः बृहद्रथादेवान्यभार्यायां द्वे शकले जाते ॥ ७ ॥ ते मात्रा बहिस्त्यक्ते जीव जीवेति क्रीडमाणया जरया राक्षस्या चाभिसन्धिते । स जरासंधः ॥ ८ ॥

तस्य सहदेवः । तस्य सोमापिः । तस्य श्रुतश्रवाः । कुरुपुत्रो यः परीक्षित् सोऽपुत्रः । कुरुपुत्रस्य जह्नोः सुरथः ॥ ९ ॥ तस्य विदूरथः । तस्य सार्वभौमः । तस्य जयसेनः । तस्य राधिकः । तस्यायुतः ॥१०॥ तस्य क्रोधनः । तस्य देवातिथिः । तस्य ऋष्यः । तस्य दिलीपः तस्य प्रतीपः ॥११॥ प्रतीपस्य त्रयः पुत्राः देवापिः १, शन्तनुः २, बाह्लीकः ३,इति । तत्र देवापिः पितृराज्यं त्यक्त्वा वनं गतः । शन्तनू राजाऽभवत् । स कराभ्यां यं यं जीर्णं स्पृशति स स यौवनं प्राप्नोति ॥ १२ ॥१३॥ तस्य राज्ये यदा द्वादश वर्षाणि देवो न ववर्ष ॥१४॥ तदा शन्तनुस्तत्कारणं विप्रान् पप्रच्छ तदा ब्राह्मणैरुक्तः हे राजन् । त्वं परिवेत्ता अतस्तद्दोषपरिहारार्थमग्रजाय राज्यं देहि ततो वृष्टिः स्यात्॥१५॥

ततश्च सहदेवोऽभूत् सोमापिर्यच्छ्रुतश्रवाः ॥ परीक्षिदनपत्योऽभूत् सुरथो नाम जाह्नवः ॥ ९ ॥ ततो विदूरथस्तस्मात् सार्वभौमस्ततोऽभवत् ॥ जयसेनस्तत्तनयो राधिकोऽतोऽयुतो ह्यभूत् ॥१०॥ ततश्च क्रोधनस्तस्माद्देवातिथिरमुष्य च ॥ ऋष्यस्तस्य दिलीपोऽभूत्प्रतीपस्तस्य चात्मजः ॥ ११ ॥ देवापिश्शन्तनुस्तस्य बाह्लीक इति चात्मजाः ॥ पितृराज्यं परित्यज्य देवापिस्तु वनं गतः॥१२॥अभवच्छन्तनू राजा प्राङ्महाभिषसंज्ञितः॥ यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः॥१३॥शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ॥ समा द्वादश तद्राज्ये न ववर्ष यदा विभुः॥१४॥शन्तनुर्ब्राह्मणैरुक्तः परिवेत्ता त्वमग्रभुक् ॥ राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥१५॥ एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ॥ तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥१६॥ वेदवादातिवादान्वै तदा देवो ववर्ष ह ॥ देवापिर्योगमास्थाय कलापग्राममाश्रितः ॥ १७॥ सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ बाह्लीकात्सोमदत्तोऽभूद् भूरिर्भूरिश्रवास्ततः ॥ १८ ॥

इत्याकर्ण्य शन्तनुर्वनं गत्वा ज्येष्ठं त्वं राज्यं कुर्विति प्रार्थितवान् । शन्तनुगमनात् पूर्वमेव तस्याश्मरावसंज्ञेन मन्त्रिणा देवापिं पाखण्डीकृत्य राज्यानर्हं कर्तुं ये प्रहिता विप्रास्तैः पाखण्डमताश्रयया गिरा वेदाद्भ्रंशितः सन् देवापिर्वेदनिन्दापरोऽभवत्॥१६॥ततस्तस्य पातित्येन राज्यार्हत्वे गते शन्तनोर्दोषाभावादिन्द्रो ववर्ष । देवापिर्योगमास्थाय कलापग्रामे आस्ते ॥१७॥ स कलौ सोमवंशे नष्टे कृतादौ स्थापयिष्यति । बाह्लीकात् सोमदत्तः । तस्य पुत्रास्त्रयः भूरिः १, भूरिश्रवाः २ ॥ १८ ॥

शलः २ इति। शन्तनोर्गङ्गायां भीष्मः आसीत्। स महाभागवतः॥१९॥येन युधि परशुरामस्तोषितः। शंतनोर्दाशकन्यायां सत्यवत्यां चित्राङ्गदो विचित्रवीर्यश्च जज्ञे ॥२०॥ तत्र चित्राङ्गदश्चित्राङ्गनामकगन्धर्वेण युद्धे हतः सत्यवत्यां शन्तनुपरिग्रहात् पूर्वमेव पराशराद् व्यासो जातः ॥२१॥यतोऽहं जातः। स पैलादीन् शिष्यान् हित्वा॥२२॥मह्यं पुत्रायेदं भागवतमाह। विचित्रवीर्यः काशिराजसुते बलात्॥२३॥भीष्मेण स्वयंवरादानीते अम्बिकाम्बालिके उभे उवाह। तयोरासक्तहृदयः स यक्ष्मणा मृतः ॥२४॥ अप्रजस्य तस्य भ्रातुः क्षेत्रे मात्रोक्तो व्यासोऽम्बिकायां

शलश्च शन्तनोरासीद्गङ्गायां भीष्म आत्मवान्॥सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥१९॥ वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः॥ शन्तनोर्दाशकन्यायां जज्ञे चित्रांगदः सुतः ॥२०॥ विचित्रवीर्यश्चावरजो नाम्ना चित्रांगदो हतः॥ यस्यां पराशरात्साक्षादवतीर्णो हरेः कला ॥२१॥ वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥ हित्वा स्वशिष्यान्पैलादीन्भगवान्बादरायणः ॥२२॥ मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ॥ विचित्रवीर्योऽथोवाह काशिराजसुते बलात ॥२३॥ स्वयंवरादुपानीते अंबिकाम्बालिके उभे ॥ तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥ क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः॥ धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत॥२५॥गांधार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप ॥ तत्र दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका॥२६॥शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः॥जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः॥२७॥नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ॥ द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन् ॥ २८ ॥ युधिष्ठिरात् प्रतिविन्ध्यः श्रुतसेनो वृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥

धृतराष्ट्रमम्बालिकायां पाण्डुं दास्यां विदुरं च जनयामास ॥२५॥ धृतराष्ट्राद् गान्धार्यां दुर्योधनादिपुत्रशतं दुःशला कन्या च जज्ञे ॥२६॥ वने मृगशापान्मैथुने रुद्धस्य पाण्डोः कुन्त्यां धर्मवाय्विन्द्रेभ्यो युधिष्ठिरभीमार्जुना जाताः ॥२७॥ माद्र्यां नासत्यदस्राभ्यां नकुलसहदेवौ द्रौपद्यां पञ्चभ्यः पञ्चाभवन् ॥२८॥ तत्र युधिष्ठिरात् प्रतिविन्ध्यः, भीमात् श्रुतसेनः अर्जुनात् श्रुतकीर्तिः, नकुलात् शतानीकः ॥ २९ ॥

सहदेवात् श्रुतकर्मा । तथाऽन्यस्त्रीषु धर्मात् पौरव्यां देवकः । भीमाद् हिडिम्बायां घटोत्कचः ॥३०॥ तथा भीमात् काल्यां सर्वगतः । सहदेवाद् विजयायां सुहोत्रः ॥३१॥ नकुलात् करेणुवत्यां निरमित्रः । अर्जुनादुलूप्यां नागकन्यायामिरावान् । तथा मणिपूरपतेः सुतायां चित्राङ्गदायां पुत्रिकाधर्मेण दत्तायां बभ्रुवाहनः । अतोऽर्जुनपुत्रः सन्नपि मणिपूरपतेः सुतः ॥३२॥ अर्जुनात् सुभद्रायां ते तातोऽभिमन्युः । तस्मात् त्वम् ॥३३॥ द्रोणेर्ब्रह्मास्त्रतेजसा क्षीणेषु कुरुषु कृष्णानुभावेन त्वं मृत्योः प्रमोचितः ॥ ३४ ॥ ततस्तव चत्वारः पुत्राः जनमेजयः १, श्रुतसेनः २,

सहदेवसुतो राजन् श्रुतकर्मा तथाऽपरे ॥ युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥ भीमसेनाद्धिडिम्बायां काल्यां सर्वगतस्ततः ॥ सहदेवात्सुहोत्रं तु विजयाऽसूत पार्वती ॥ ३१ ॥ करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः ॥ इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥ मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥ ३२ ॥ तव तातः सुभद्रायामभिमन्युरजायत ॥ सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥ ३३ ॥ परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ॥३४॥ तवेमे तनयास्तात जनमेजयपूर्वकाः ॥ श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥३५॥ जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ सर्वान् वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ॥ ३६ ॥ कावषेयं पुरोधाय तुरं तुरगमेधयाट् ॥ समन्तात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ॥ ३७ ॥ तस्य पुत्रश्शतानीको याज्ञवल्क्यात्त्रयीं पठन् ॥ अस्त्रज्ञानं क्रियाज्ञानं शौनकात्परमेष्यति ॥ ३८ ॥ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ असीमकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ॥ ३९ ॥

भीमसेनः ३, उग्रसेनः ४ इति ॥ ३५ ॥ जनमेजयस्तक्षकात् त्वां निधनं प्राप्तं श्रुत्वा सर्पसत्रं करिष्यति ॥ ३६ ॥ ततो भुवं जित्वा कावषेयं तुरसंज्ञं पुरोहितं कृत्वाऽश्वमेधैर्यक्ष्यति ॥३७॥ जनमेजयस्य पुत्रः शतानीकः । स याज्ञवल्क्यशौनककृपेभ्यस्त्रयीं क्रियाज्ञानमात्मनो ज्ञानमस्त्रज्ञानं च क्रमतोऽध्येष्यते ॥ ३८ ॥ शतानीकस्य सहस्रानीकः । तस्याश्वमेधजः । ततः असीमकृष्णः । तस्य नेमिचक्रः ॥ ३९ ॥

एते भाव्याः॥निमिचक्रो गजाह्वये हृते सति कौशाम्ब्यां वत्स्यति । तस्य चित्ररथः । तस्य कविरथः ॥ ४० ॥ ततो वृष्टिमान् । तस्य सुषेणः । ततः सुनीथः । तस्य नृचक्षुः । ततः सुखीनलः ॥ ४१ ॥ तस्य परिप्लवः । ततः सुनयः ततो मेधावी । तस्य नृपंजयः । तस्य दूर्वः । तस्य तिमिः । तस्य बृहद्रथः । तस्य सुदासः । तस्य शतानीकः ॥ ४२ ॥ तस्य दुर्दमनः । तस्य दण्डपाणिः । तस्य निमिः तस्य क्षेमकः ॥ ४३ ॥ अयं ब्रह्मक्षत्रस्य वंशः । कलौ क्षेमकमन्तं प्राप्य पुरुवंशः समाप्तिं प्राप्स्यति ॥ ४४ ॥ अथ भाव्याः मागधराजाः । तान्

गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ॥ उक्तस्ततश्चित्ररथस्तस्मात्कविरथः सुतः ॥ ४० ॥ तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ॥ सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः ॥ ४१ ॥ परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ॥ नृपञ्जयस्ततो दूर्वस्तिमिस्तस्माज्जनिष्यति ॥ तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः ॥ ४२ ॥ शतानीकाद् दुर्दमनस्तस्यापत्यं वहीनरः ॥ दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृपः ॥ ४३ ॥ ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ॥ क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥४४॥ अथ मागधराजानो भवितारो वदामि ते ॥ भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः ॥४५॥ ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ सुनक्षत्रः सुनक्षत्राद्बृहत्सेनोऽथ कर्मजित् ॥४६॥ ततः सृतंजयाद्विप्रः शुचिस्तस्य भविष्यति ॥ क्षेमोऽथ सुव्रतस्तस्माद्धर्मसूत्रः शमस्ततः॥४७॥ द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः ॥ सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुञ्जयः ॥ बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥ ४८ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धे दिवोदासक्षयोर्वंशवर्णनं नाम द्वाविंशोऽध्यायः॥२२॥

वदामि । बृहद्रथात् पूर्वोक्तात् जरासंधः । तस्य सहदेवः तस्य मार्जारिः तस्य श्रुतश्रवाः ॥ ४५ ॥ तस्यायुतायुः । तस्य निरमित्रः । तस्य सुनक्षत्रः । तस्य बृहत्सेनः । तस्य कर्मजित् ॥ ४६ ॥ तस्य सृतंजयः । तस्य विप्रः । तस्य क्षेमः ! तस्य सुव्रतः । तस्य धर्मसूत्रः तस्य शमः ॥ ४७ ॥ तस्य द्युमत्सेनः । तस्य सुमतिः । तस्य सुबलः । तस्य सुनीथः । तस्य सत्यजित् । तस्य विश्वजित् । तस्य रिपुञ्जयः एते बार्हद्रथाः भूपालाः सहस्रसंवत्सरं भाव्याः ॥ ४८ ॥ इति श्रीभाग० चू० नवम० द्वाविंशोऽध्यायः ॥ २२ ॥

त्रयोविंशे त्वनोर्द्रुह्योस्तुर्वसोश्चान्वयः क्रमात् । यदोश्च वंशोऽनुक्रान्तो यावज्ज्यामघसंभवः ॥ १ ॥ श्रीशुक उवाच ॥ ययाति पुत्रस्यानोस्त्रयः पुत्राः-सभानरः १, चक्षुः २, परोक्षः ३ इति । सभानरात् कालनरः । तस्य सृंजयः ॥ १ ॥ तस्य जनमेजयः । तस्य महाशीलः तस्य महामनाः । तस्योशीनरस्तितिक्षुश्च द्वौ पुत्रौ । उशीनरस्य चत्वारः पुत्राः-शिबिः १, वेनः २, शमिः ३, दक्षः ४, इति ॥ २ ॥ शिबेश्चत्वारः पुत्राः-वृषादर्भः १,सुवीरः २, भद्रः कैकेय ४ इति । उशीनरभ्रातुः तितिक्षोः रुशद्रथः ॥ ३ ॥ तस्य हेमः तस्य सुतपाः तस्य बलिः । बलेः

श्रीशुक उवाच ॥ अनोः सभानरश्चक्षुः परोक्षश्च सुतास्त्रयः ॥ सभानरात् कालनरः सृञ्जयस्तत्सुतस्ततः ॥ १ ॥ जनमेजयस्तस्य पुत्रो महाशीलो महामनाः ॥ उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः ॥ २ ॥ वृषादर्भः सुवीरश्च भद्रः कैकेय आत्मजाः ॥ शिबेश्चत्वार एवासंस्तितिक्षोश्च रुशद्रथः ॥ ॥३॥ ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ अङ्गवङ्गकलिङ्गाद्याः सुह्मपुण्ड्रान्ध्रसंज्ञिताः ॥४॥ जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ चक्रुः स्वनाम्ना विषयान्षडिमान्प्राच्यकांश्च ते॥५॥ खनपानोऽङ्गतो जज्ञे तस्माद्दिविरथस्ततः ॥ सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः ॥ ६ ॥ रोमपाद इति ख्यातस्तस्मै दशरथः सखा ॥ शान्तां स्वकन्यां प्रायच्छदृष्यशृङ्ग उवाह ताम् ॥ ७ ॥ देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् ॥ नाट्यसंगीतवादित्रैर्विभ्रमालिङ्गनार्हणैः ॥ ८ ॥ स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः ॥ प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः ॥९॥ चतुरंगो रोमपादात्पृथुलाक्षस्तु तत्सुतः ॥ बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ॥ १० ॥

क्षेत्रे दीर्घतमसोऽङ्गवङ्गकलिङ्गसुह्मपुण्ड्रान्ध्रसंज्ञिताः पुत्राः जज्ञिरे । एते स्वनाम्ना षट् देशान् चक्रुः ॥४॥५॥ अङ्गात् खनपानः तस्य दिविरथः । तस्य धर्मरथः । तस्य चित्ररथः सोऽप्रजा एव॥६॥स रोमपाद इति ख्यातः । तस्मै दशरथः शान्तां स्वकन्यां ददौ । तामृष्यशृंगः उवाह ॥७॥ यं रामाः वृष्ट्यर्थं नाट्यगीतादिभिरानिन्युः ॥ ८॥स हरिणीसुतः ऋष्यशृंङ्गो मरुत्वतः इष्टिं निरूप्य चित्ररथाय प्रजामदात् येन दशरथोऽपि प्रजा लेभे ॥ ९ ॥ रोमपादाच्चतुरङ्ग तस्य पृथुलाक्षः तस्य त्रयः पुत्राः बृहद्रथः १, बृहत्कर्मा २, बृहद्भानुः ३ इति ॥ १० ॥

बृहद्रथाद् बृहन्मनाः तस्य जयद्रथः। तस्य संभूत्यां विजयः। तस्य धृतिः॥११॥ तस्य धृतव्रतः। तस्य सत्कर्मा। तस्याधिरथः स गङ्गातटे क्रीडमानः कुन्त्या त्यक्तं मञ्जूषान्तर्गतं कानीनं यं सुतं चकार स कर्णः। तस्य वृषसेनः॥१२॥१३॥अथ ययातिपुत्रस्य द्रुह्योर्वंशं शृणु। द्रुह्योर्बभ्रुः। तस्य सेतुः तस्यारब्धः। तस्य गान्धारः। तस्य धर्मः। तस्य धृतः ॥१४॥ तस्य दुर्मनाः। तस्य प्रचेताः। तस्य शतं पुत्राः म्लेच्छपतयो बभूवुः॥१५॥अथ ययातिपुत्रस्य तुर्वसोर्वह्निः। तस्य भर्गः।तस्य भानुमान्। तस्य त्रिभानुः।तस्य करन्धमः॥१६॥ तस्य मरुतः। सोऽपुत्रः

आद्याद् बृहन्मनास्तस्माज्जयद्रथः उदाहृतः॥ विजयस्तस्य संभूत्यां ततो धृतिरजायत ॥११॥ ततो धृतव्रतस्तस्य सत्कर्माऽधिरथस्ततः॥ योऽसौ गङ्गातटे क्रीडन्मञ्जूषान्तर्गतं शिशुम् ॥ १२॥ कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत् सुतम्॥ वृषसेनः सुतस्तस्य कर्णस्य जगतीपतेः॥ १३॥ द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः॥ आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः॥ १४॥ धृतस्य दुर्मनास्तस्मात्प्रचेताः प्राचेतसं शतम्॥ म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः॥ १५॥ तुर्वसोश्च सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान्॥ त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः॥ १६॥ मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत्॥ दुष्यन्तः स पुनर्भेजे स्ववंशं राज्यकामुकः ॥ १७॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ॥ वर्णयामि महापुण्यं सर्वपापहरं नृणाम्॥ १८॥ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते॥ यत्रावतीर्णो भगवान् परमात्मा नराकृतिः॥१९॥ यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुताः॥ चत्वारः सूनवस्तत्र शतजित्प्रथमात्मजः॥ २०॥ महाहयो वेणुहयो हैहयश्चेति तत्सुताः॥ धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः॥ सोहञ्जिरभवत्कुन्तेर्महिष्मान्भद्रसेनकः॥ २१॥

सन् पौरवं दुष्यन्तं पुत्रत्वेनाग्रहीत्। स दुष्यन्तः पुनः स्वं पुरुवंशं राज्यकामुकः सन् भेजे॥१७॥हे राजन्! ययातेर्ज्येष्ठपुत्रस्य यदोः पुण्यं वंशं वर्णयामि॥१८॥नरस्तद्वंशं श्रुत्वा सर्वपापैः प्रमुच्यते। यत्र भगवान् नराकृतिरवतीर्णः॥१९॥ यदोश्चत्वारः पुत्राः सहस्रजित् १,क्रोष्टा२नलः३रिपुः४ इति। सहस्रजितः शतजित्। तस्य पुत्राः॥२०॥ महाहयः १, वेणुहयः २, हैहयः ३ इति। हैहयाद्धर्मः तस्य नेत्रः। तस्य कुन्तिः तस्य सोहञ्जिः।

कृतवीर्यः १, कृताग्निः २, कृतवर्मा ३, तस्य महिष्मान्। तस्य भद्रसेनकः॥२१॥तस्य द्वौ पुत्रौ दुर्मदो धनकश्चेति। धनकस्य चत्वारः पुत्राः—कृतवीर्यः १, कृताग्निः २, कृतवर्मा ३, कृतौजाः ४ इति ॥२२॥ कृतवीर्यस्य सहस्रार्जुनः सप्तद्वीपेश्वरोऽभवत्। स दत्तात्रेयात् योगसिद्धिं प्राप ॥२३॥ तस्य गतिं यज्ञादिभिरन्ये नृपाः न यास्यन्ति ॥२४॥ यः पञ्चाशीतिसहस्रं (८५०००) वर्षाणि राज्यं चकार ॥ २५ ॥ तस्य पुत्रसहस्रेषु युद्धे पञ्चैवोर्वरिताः। ते च जयध्वजः १, शूरसेनः २, वृषभः ३, मधुः ४,ऊर्जितः ५ इति ॥२६॥ जयध्वजात् तालजङ्घः। तस्य पुत्रशतम्। तदौर्वतेजसा संहारितम् ॥२७॥ तेषां वीति-

दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ॥ कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ २२ ॥ अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ॥ दत्तात्रेयाद्धरेरंशाद् प्राप्तयोगमहागुणः ॥२३॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ यज्ञदानतपोयोग श्रुतवीर्यजयादिभिः ॥ २४ ॥ पञ्चाशीतिसहस्राणि ह्यव्याहतबलः समाः ॥ अनष्टवित्तस्मरणो बुभुजे ऽक्षय्यषड्वसु[1] ॥ २५ ॥ तस्य पुत्रसहस्रेषु पञ्चैवोर्वरिता मृधे ॥ जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २६ ॥ जयध्वजात्तालजङ्घस्तस्या पुत्रशतं त्वभूत ॥ क्षत्रं यत् तालजंघाख्यमौर्वतेजोपसंहृतम् ॥ २७ ॥ तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ॥ तस्य पुत्रशतं त्वासीद् वृष्णिज्येष्ठं यतः कुलम् ॥ २८ ॥ माधवा वृष्णयो राजन् यादवाश्चेतिसंज्ञिताः ॥ यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥२९॥ श्वाहिस्ततो रुशेकुर्वै तस्य चित्ररथस्ततः॥ शशबिन्दुर्महायोगी महाभोजो महानभूत् ॥ ३० ॥ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥३१॥ दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ॥ तेषां षड्प्रधानानां पृथुश्रवस आत्मजाः ॥ ३२ ॥

होत्रो ज्येष्ठः। अथ मधोर्वृष्णिज्येष्ठं पुत्रशतम्। मधोर्वृष्णेर्यदोश्च हेतोरिदं कुलं तत्संज्ञम् ॥२८॥ यदुपुत्रस्य क्रोष्टुः। तस्य वृजिनवान् ॥२९॥ तस्य श्वाहिः। तस्य रुशेकुः। तस्य चित्ररथः।तस्य शशबिन्दुः॥ ३० ॥ तस्य दशसहस्रस्त्रीषु प्रत्येकं लक्षं लक्षमिति ॥ ३१ ॥ एवं पुत्राणां दशलक्षसहस्राणि ( १००००००००० ) जनयामास। तेषु पृथुश्रवाः पृथुयशाः इत्यादयः षण्मुख्याः ॥ ३२ ॥

१ षड्वसु षडिन्द्रियविषयम्।

पृथुश्रवसो धर्मः । तस्योशनाः । तस्य रुचकः । तस्य पुत्राः पञ्च—पुरुजित् १, रुक्मः २, रुक्मेषुः ३, पृथुः ४, ज्यामघः ५ इति ॥ ३३ ॥ ज्यामघोऽप्रजाः तस्य शैब्या स्त्री । स एकदा शत्रुभवनात् भोज्यां कन्यां जहार ॥ ३४ ॥ रथस्थां तां दृष्ट्वा शैब्याऽऽह । हे कुहक ! केयं मत्स्थानं रथं स्थापिता ॥ ३५ ॥ इति श्रुत्वा भयात् तव स्नुषेत्याह । सा विस्मयन्ती सती पतिं प्राह । अहं वन्ध्याऽसपत्नी च मम स्नुषा कथं युज्यते ॥ ३६ ॥ तदा स तमाह—हे राज्ञि ! यदा पुत्रं जनयिष्यसि तदा तस्येयमुपयुज्यते । तदा विश्वेदेवाः पितरश्च राज्ञः प्राणसंकटं विलोक्य दयायुक्तास्तथे-

धर्मो नामोशनास्तस्य हयमेधशतस्य याट् ॥ तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु ॥ पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसंज्ञिताः ॥ ३३ ॥ ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् ॥ नाविन्दच्छत्रुभवनाद् भोज्यां कन्यामहारषीत् ॥ ३४ ॥ रथस्थां तां निरीक्ष्याह शैब्या पतिममर्षिता ॥ केयं कुहक मत्स्थानं रथमारोपितेति वै ॥ ३५ ॥ स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत् ॥ अहं वन्ध्याऽसपत्नी च स्नुषा मे युज्यते कथम् ॥ ३६ ॥ जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते ॥ अन्वमोदन्त तद् विश्वेदेवाः पितर एव च ॥ ३७ ॥ शैब्या गर्भमधात् काले कुमारं सुषुवे शुभम् ॥ स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३८ ॥ इति श्रीभागवते महापुराणे नवमस्कन्धेऽनुद्रुह्युतुर्वसुयदुवंशानुवर्णनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ श्रीशुक उवाच ॥ तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ ॥ तृतीयं रोमपादं च विदर्भकुलनन्दनम् ॥ १ ॥

त्वन्वमोदन्त ॥ ३७ ॥ ततो देवताप्रसादेन शैब्या गर्भमधात् । सा कालेन कुमारं सुषुवे । स कुमारो विदर्भः स्नुषां सतीमुपयेमे ॥ ३८ ॥ भार्यावश्यास्तु ये केचिद् भविष्यन्त्यथवा मृताः । तेषां तु ज्यामघः श्रेष्ठः शैब्यापतिरभून्नृप ॥ १ ॥ इति श्रीभागवते चू० नवम त्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवः । वंशा नानामुखाः प्रोक्ता रामकृष्णोद्भवावधि ॥ १ ॥ श्रीशुक उवाच । हे नृप ! स विदर्भस्तस्यां कुशः १, क्रथः २, रोमपादः ३ इति त्रीन् पुत्रान् अजनयत् ॥ १ ॥

अथ क्रथस्य कुन्तिः । तस्य धृष्टिः । तस्य निर्वृतिः रोमपादाद् बभ्रुः । तस्य कृतिः । तस्य कुशिकः । तस्य चेदिः । तस्माच्चैद्यादयः ॥ २ ॥ तस्य दशार्हः । तस्य व्योमः ॥ ३ ॥ तस्य जीमूतः । तस्य विकृतिः । तस्य भीमरथः । तस्य नवरथः । तस्य दशरथः ॥ ४ ॥ तस्य शकुनिः । तस्य करम्भिः । तस्य देवरातः । तस्य देवक्षेत्रः । तस्य मधुः । तस्य कुरुवशः । तस्यानुः ॥५॥ तस्य पुरुहोत्रः । तस्य आयुः तस्य सात्वतः । सात्वतस्य सप्त पुत्राः—भजमानः १, भजिः २, दिव्यः ३ वृष्णिः ४, देवावृधः ५, अन्धकः ६, महाभोजः ७ इति ॥ ६ ॥

क्रथस्य कुन्तिः पुत्रोऽभूद् धृष्टिस्तस्याथ निर्वृतिः ॥ ततो दशार्हो नाम्नाऽभूत् यस्य व्योमः सुतस्ततः ॥३॥ जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ॥ ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥ करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः ॥ देवक्षेत्रस्ततस्तस्य मधुः कुरुवशादनुः ॥ ५ ॥ पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ॥ भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ॥ ६ ॥ सात्वतस्य सुताः सप्त महाभोजश्च मारिष ॥ भजमानस्य निम्लोचिः किङ्किणो वृष्णिरेव च ॥७॥ एकस्यामात्मजा पत्न्यामन्यस्यां च त्रयः सुताः ॥ शताजिच्च सहस्राजिदयुताजिदिति प्रभो ॥ ८ ॥ बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू ॥ यथैव शृणुमो दूरात् संपश्यामस्तथाऽन्तिकात् ॥९॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च ॥ १० ॥ येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ महाभोजोऽपि धर्मात्मा भोजा आसंस्तदन्वये ॥ ११ ॥

रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ॥ कुशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृप ॥ २ ॥

भजमानस्य त्रय पुत्राः—, निम्लोचिः १, किङ्किणः २, वृष्णिः इति ॥ ७ ॥ अन्यस्यां पत्न्यां त्रयः—शताजित् १, सहस्राजित् २, अयुताजित् ३ इति ॥ ८ ॥ अथ देवावृधाद् बभ्रुः । स मनुष्येषु श्रेष्ठः । देवावृधश्च देवैः समः । तदुपदेशेनाष्टाधिकपञ्चषष्टिसहस्रं (६५००८) पुरुषाः मोक्षं प्राप्ताः । अथ महाभोजवंशे भोजाः आसन् ॥ ९ ॥ १० ॥ ११ ॥

अथ सात्वतपुत्रस्य वृष्णेर्द्वौ पुत्रौ—सुमित्रः १ युधाजित् २ इति। युधाजित् द्वौ पुत्रौ—शिनिरनमित्रश्च। अनिमित्रान्निम्नः ॥ १२ ॥ तस्य द्वौ पुत्रौ—सत्राजितः प्रसेनश्च। अनमित्रसुतोऽन्यः शिनिः। तस्य सत्यकः ॥१३॥ तस्य युयुधानः। तस्य जयः। तस्य कुणिः। तस्य युगन्धरः। अनमित्रस्यापरः पुत्रः वृष्णिः ॥ १४ ॥ वृष्णेरन्यौ पुत्रौ—श्वफल्कश्चित्ररथश्चेति। श्वफल्काद्गान्दिन्यां त्रयोदश पुत्राः ॥ १५ ॥ अक्रूरः १ आसंगः २ सारमेयः ३ मृदुरः ४ मृदुवित् ५ गिरिः ६ धर्मवृद्धः ७ सुकर्मा ८ क्षेत्रोपेक्षः ९ अरिमर्दनः १० शत्रुघ्नः ११ गन्धमादः १२ प्रतिबाहुः

वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परन्तप ॥ शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ॥ १२ ॥ सत्राजितः प्रसेनश्च निम्नस्याप्यासतुः सुतौ ॥ अनमित्रसुतो योऽन्यः शिनिस्तस्याथ सत्यकः ॥ १३ ॥ युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ॥ युगन्धरोऽनमित्रस्य वृष्णिः पुत्रोऽपरस्ततः ॥ १४ ॥ श्वफल्कश्चित्ररथश्च गान्दिन्यां च श्वफल्कतः ॥ अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः ॥ १५ ॥ आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः ॥ धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥ १६ ॥ शत्रुघ्नो गन्धमादश्च प्रतिबाहुश्च द्वादश ॥ तेषां स्वसा सुचीराख्या द्वावक्रूरसुतावपि ॥१७॥ देववानुपदेवश्च तथा चित्ररथात्मजाः ॥ पृथुर्विदूरथाद्याश्च बहवो वृष्णिनन्दनाः ॥ १८ ॥ कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ॥ कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः ॥ १९ ॥ कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः ॥ अन्धको दुन्दुभिस्तस्मादरिद्योतः पुनर्वसुः ॥ २० ॥

१३। तेषां भगिनी सुचीरा नाम ॥ १६ ॥ १७ ॥ अक्रूरस्य द्वौ पुत्रौ—देववानुपदेवश्च। श्वफल्कभ्रातुश्चित्ररथस्य पृथुः। अन्ये विदूरथाद्याः बहवः सन्ति ॥ १८ ॥ सात्त्वतपुत्रादन्धकात् चत्वारः पुत्राः—कुकुरः १ भजमानः २ शुचिः ३ कम्बलबर्हिषः ४ इति। कुकुरस्य वह्निः। तस्य विलोमा ॥ १९ ॥ तस्य कपोतरोमा। तस्यानुः। तस्यान्धकः। तस्य दुन्दुभिः। तस्यारिद्योतः। तस्य पुनर्वसुः ॥ २० ॥

तस्याहुकः आहुकी कन्या च । आहुकस्य पुत्रौ–द्वौ देवकः उग्रसेनश्च । देवकस्य चत्वारः पुत्राः ॥ २१ ॥ देववान् १ उपदेवः २ सुदेवः ३ देववर्धन ४ इति । तेषां सप्त भगिन्यः ॥२२॥ धृतदेवा १ शान्तिदेवा २ उपदेवा ३ श्रीदेवा ४ देवरक्षिता ५ सहदेवा ६ देवकी ७ इति । एताः वसुदेवः उवाह ॥२३॥ उग्रसेनस्य नव पुत्राः–कंसः १ सुनामा २न्यग्रोधः ३ कङ्कः ४ शङ्कुः ५ सुहूः ६ राष्ट्रपालः ७ सृष्टिः ८ तुष्टिमान् ९ इति ॥२४॥ एषां पञ्च भगिन्यः–कंसा १ कंसवती २ कङ्का ३ शूरभूः ४ राष्ट्रपालिका ५ इति वसुदेवानुजानां स्त्रियः ॥२५॥ अथान्धकपुत्रस्य

तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ ॥ देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २१ ॥ देववानुपदेवश्च सुदेवो देववर्धनः ॥ तेषां स्वसारः सप्तासन् धृतदेवादयो नृप ॥ २२ ॥ शांतिदेवोपदेवा च श्रीदेवा देवरक्षिता ॥ सहदेवा देवकी च वसुदेव उवाह ताः ॥२३॥ कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा ॥ राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥ कंसा कंसवती कङ्का शूरभू राष्ट्रपालिका ॥ उग्रसेनदुहितरो वसुदेवानुजस्त्रियः ॥ २५ ॥ शूरो विदूरथादासीद्भजमानः सुतस्ततः ॥ शिनिस्तस्मात् स्वयम्भोजो हृदीकस्तत्सुतो मतः ॥२६॥ देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ॥ देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २७॥ तस्यां स जनयामास दश पुत्रानकल्मषान् ॥ वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥ सृञ्जयं श्यामकं कङ्कं शमीकं वत्सकं वृकम् ॥ देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥ २९॥ वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ॥ पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥३०॥

भजमानस्य विदूरथः । तस्य शूरः । तस्य भजमानः । तस्य शिनिः । तस्य स्वयम्भोजः । तस्य हृदीकः ॥ २६ ॥ तस्य चत्वारः पुत्राः–देवबाहुः १ शतधनुः २ कृतवर्मा ३ देवमीढः ४ इति । देवमीढस्य शूरः ॥२७॥ शूरस्य मारिषायां पत्न्यां दश पुत्राः–वसुदेवः १ देवभागः २ देवश्रवाः ३ आनकः ४ सृञ्जयः ५ श्यामकः ६ कङ्कः ७ शमीकः ८ वत्सकः ९ वृकः १० इति । वसुदेवजन्मन्यानकाः दुन्दुभयश्च नेदुः ॥२८॥ ॥ २९ ॥ अतस्तमानकदुन्दुभिं हरेः स्थानं वदन्ति । शूरस्य कन्याः पञ्च–पृथा १ श्रुतदेवा २ श्रुतिकीर्तिः ३ श्रुतश्रवाः ४ ॥ ३० ॥

राजाधिदेवी ९ इति । शूरोऽप्रजसः कुन्तेः पृथां ददौ ॥३१॥ सा पृथैकदा गृहागतं दुर्वाससं पूजयामास । ततो दुर्वाससः सा देवस्याह्वानहेतु विद्यां प्राप । ततो विद्यापरीक्षार्थं सूर्यस्यावाहनं चक्रे ॥ ३२ ॥ तत्रागतं सूर्यं दृष्ट्वाऽऽह हे देव ! मया परीक्षार्थं विद्या योजिता । अतो याहि। अपराधं क्षमस्व ॥ ३३ ॥ तदा सूर्य आह । हे देवि ! मम दर्शनं व्यर्थं न अतो योनिर्यथा न दुष्येत तथा त्वयि पुत्रं दधे ॥ ३४ ॥ एवं तस्यां गर्भमाधाय सूर्यो दिवं गतः । ततः सद्यः कुमारो जज्ञे ॥ ३५ ॥ पृथा लोकभयात् तं नदीतोये तत्याज । तां पाण्डुरुवाह ॥ ३६ ॥

राजाधिदेवी चैतेषां भगिन्यः पञ्च कन्यकाः ॥ कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥ साऽऽप दुर्वाससो विद्यां देवहूतिं प्रतोषितात् ॥ तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिम् ॥ ३२ ॥ तदैवोपागतं देवं वीक्ष्य विस्मितमानसा ॥ प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे ॥ ३३ ॥ अमोघं दर्शनं देवि आधत्से त्वयि चात्मजम् ॥ योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३४ ॥ इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः ॥ सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ॥ ३५ ॥ तं सात्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ॥ प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥ ३६ ॥ श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत् ॥ यस्यामभूद्दन्तवक्र ऋषिशप्तो दितेः सुतः ॥ ॥ ३७ ॥ कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत ॥ संतर्दनादयस्तस्यां पंचासन् कैकयाः सुताः ॥३८॥ राजाधिदेव्यामावन्त्यो जयसेनोऽजनिष्ट ह ॥ दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥३९॥ शिशुपालः सुतस्तस्याः कथितस्तस्य सम्भवः ॥ देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४० ॥

कारूषो वृद्धशर्माश्रुतदेवायां दन्तवक्रं जनयामास ॥ ३७ ॥ कैकेयोधृष्टकेतुः श्रुतकीर्त्यां सन्तर्दनादीन् पञ्च पुत्रान् जनयामास ॥ ३८ ॥ जयसेनो राजाधिदेव्यां विन्दानुविन्दावजनिष्ट । चेदिराजो दमघोषः श्रुतश्रवसि शिशुपालं जनयामास । एवं वसुदेवभगिनीनां वंशमुक्त्वा तद्भ्रातुर्वंशमाह । देवभागात् कंसायां चित्रकेतुबृहद्बलौ द्वौ ॥ ३९ ॥ ४० ॥

सृञ्जयात् राष्ट्रपाल्यां वृषदुर्मर्षणादयः । देवश्रवसः कंसवत्यां सुवीरः इषुमानिति द्वौ । आनकात्कङ्कायां सत्यजित् पुरुजिदिति द्वौ ॥ ४१ ॥ वृकाद् दुर्वाक्ष्यां तक्षपुष्करशालादयः ॥ ४३ ॥ श्यामकात् शूरभूम्यां हरिकेशहिरण्याक्षौ ॥ ४२ ॥ वत्सकान्मिश्रकेश्यामप्सरसि वृकादयः । वसुदेवस्य पौरवी १ रोहिणी २ भद्रा ३ शमीकात् सुदामिन्यां सुमित्रार्जुनपालादयः । कङ्कात् कर्णिकायाम् ऋतधामो जयश्च ॥ ४४ ॥ वसुदेवो रोहिण्यां बलं गदं सारणं दुर्मदं विपुलं ध्रुवं कृतादींश्च मदिरा ४ रोचना ५ इला ६ देवकी ७ इति सप्त पत्न्यः आसन् ॥ ४५ ॥

कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ॥ कंकायामानकाज्जातौ सत्यजित् पुरुजित्तथा ॥ ४१ ॥ सृञ्जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ॥ ४२ ॥ मिश्रकेश्यामप्सरसि वृकादीन् वत्सकस्तथा ॥ तक्षपुष्करशालादीन् दुर्वाक्ष्यां वृक आदधे ॥ ४३ ॥ सुमित्रार्जुनपालादीन् शमीकात्तु सुदामिनी ॥ कंकश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥ पौरवी रोहिणी भद्रा मदिरा रोचना इला ॥ देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥ ४५ ॥ बलं गदं सारणं च दुर्मदं विमलं ध्रुवम् ॥ वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥ ४६ ॥ सुभद्रो भद्रबाहुश्च दुर्मदो भद्र एव च ॥ पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥ ४७ ॥ नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः ॥ कौसल्या केशिनं त्वेकमसूत कुलनन्दनम् ॥ ४८ ॥ रोचनायामतो जाता हस्तहेमाङ्गदादयः ॥ इलायामुरुवल्कादीन् यदुमुख्यानजीजनत् ॥ ४९ ॥ विपृष्ठो धृतदेवायामेक आनकदुन्दुभेः ॥ शान्तिदेवात्मजा राजञ्छमप्रतिश्रुतादयः ॥ ५० ॥



जनयामास ॥ ४६ ॥ वसुदेवात् पौरव्यां सुभद्रो भद्रबाहुः दुर्मदो भद्रो भूताद्याश्च द्वादशाभवन् ॥ ४७ ॥ वसुदेवस्य मदिरायां नन्द उपनन्दः कृतकः शूराद्याः जाताः । वसुदेवाद् भद्रायां केशी ॥४८॥ वसुदेवस्य रोचनायां हस्तहेमाङ्गदादयः ॥ तथैलायामुरुवल्कादयः ॥४९॥ वसुदेवाद् धृतदेवायां विपृष्ठः तथा शान्तिदेवायां शमप्रतिश्रुतादयः ॥ ५० ॥

वसुदेवादुपदेवायां कल्पवर्षाद्याः दशाभवन् । तथा श्रीदेवायां वसुहंससुवंशाद्याः षट् ॥५१॥ वसुदेवाद् देवरक्षितायां गदादयो नव तथा सह देवायां पुरुविश्रुतादयोऽष्ट । वसुदेवाद् देवक्यामष्ट पुत्राः ॥५२॥५३॥ कीर्तिमान् १ सुषेणः २ भद्रसेनः ३ ऋजुः ४ संमर्दनः ५ भद्रः६सङ्कर्षणः ७ इति सप्त ॥५४॥ अष्टमस्तु स्वयमेव हरिः ८ सुभद्रा नाम कन्या च । सा तव पितामही ॥५५॥ यदेह धर्मक्षयः पापवृद्धिश्च स्यात्

राजानः कल्पवर्षाद्या उपदेवासुता दश ॥ वसुहंससुवंशाद्याः श्रीदेवायास्तु षट् सुताः ॥ ५१ ॥ देवरक्षितया लब्धा नव चात्र गदादयः ॥ वसुदेवः सुतानष्टावादधे सहदेवया ॥ ५२ ॥ पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ॥ वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ॥ ५३ ॥ कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ॥ ऋजुं सम्मर्दनं भद्रं संकर्षणमहीश्वरम् ॥ ५४ ॥ अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल ॥ सुभद्रा च महाभागा तव राजन् पितामही ॥ ५५ ॥ यदा यदेह धर्मस्य क्षयो वृद्धिश्च पाप्मनः ॥ तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५६ ॥ न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ॥ आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥ यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ॥ अनुग्रहस्तंन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥ अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ॥ भुव आक्रम्यमाणाया अभाराय कृतोद्यमः ॥ ५९ ॥ कर्माण्यपरिमेयानि मनसाऽपि सुरेश्वरैः ॥ सहसंकर्षणश्चक्रे भगवान्मधुसूदनः ॥ ६० ॥ कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ॥ अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ॥ ६१ ॥

तदा हरिरवतारं धरति ॥५६॥ हे राजन् ! ईश्वरस्यात्ममायाविनोदं विना जन्मनः कर्मणो वा कारणं न संभवति ॥ ५७ ॥ यस्य मायाचेष्टितं जीवस्यानुग्रहः तस्य जीवानुग्राहकस्य कर्मादिपारतन्त्र्येण जन्मादिसम्भवः कुतः ॥५८॥ मधुसूदनो हरिः रामेण सह भुवो भारावताराय देवैरवितर्क्याणि कर्माणि चक्रे ॥ ५९ ॥ ६० ॥ कलौ जनिष्यमाणानां भक्तानामनुग्रहाय दुःखशोकादिनाशकं पुण्यं यशो व्यतनोत् ॥ ६१ ॥

---

१ स्थित्यादिनिवृत्तिहेतोः ।

यद्यशःश्रवणेन जनः कर्मवासनां धुनोति ॥६२॥ भोजवृष्णयन्धकादिभिः कुरुसृञ्जयपाण्डुभिः श्लाघनीयेहितो हरिर्हास्यावलोकनोदारवाक्यैः पराक्रमलीलया स्वमूर्त्या नृलोकं रमयामास॥६३॥६४॥यस्य सुन्दरहास्ययुक्तं मकराकारकुण्डलाभ्यां चारुकर्णं मुखं दृष्टिभिः पिबन्त्यो नार्यो नरा अपि न तृप्ता बभूवुः॥६५॥ कृष्णचरित्रं संक्षेपेण वर्णयति । आदौ निजरूपेण जातः पश्चान्मनुष्याकारः सन् पितृगेहाद् व्रजं गतः । तत्र

यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ॥ श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥ ६२ ॥ भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ॥ श्लाघनीयेहितः शश्वत् कुरुसृञ्जयपाण्डुभिः ॥ ६३ ॥ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६४ ॥ यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सुविलासहासम् ॥ नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥ जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून् सुतशतानि कृतोरुदारः ॥ उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयञ्जनेषु ॥ ६६ ॥ पृथ्व्याः स वै गुरुभरं क्षपयन् कुरूणामन्तस्समुत्थकलिना युधि भूपचम्वः ॥ दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम ॥ ६७ ॥ इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां संहितायां वैयासिक्यां नवमस्कन्धे श्रीसूर्यसोमवंशानुकीर्तने यदुवंशविदर्भान्वयानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तोऽयं नवमस्कन्धः ॥

व्रजवासिनां मनोरथान् परिपूर्य रिपून् हत्वा दारान् कृत्वा तासु पुत्रशतान्युत्पाद्य जनेषु स्वकीयं वेदमार्गं विस्तारयन् यज्ञैरात्मानमीजे ॥६६॥ तथा कौरवाणां मिथः क्लेशनिमित्तेन भुव उरुभारं क्षपयन् युद्धे भूपसेनाः विधूयाऽर्जुनेन जितमित्येवं घोषं कृत्वोद्धवाय परं तत्त्वमुपदिश्य स्वधाम जगाम ॥६७॥ इति श्रीमद्भागवते चूर्णिकायां नवमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥ अनुमानेन चूर्णिकाश्लोकसङ्ख्याः ॥९६०॥ अस्मिन् स्कन्धे वृत्तानुष्टुप्श्लोकाः ॥ ९६९ ॥ श्रीकृष्णार्पणमस्तु ॥



१ यस्मिन्यशोरूपे तीर्थवरे श्रोत्ररूपाञ्जलिमान् पुरुष उपस्पृश्य वासनाः धुनुते इत्यन्वयः।

इदं पुस्तकं क्षेमराज-श्रीकृष्णदास श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गली खम्बाटा लैन ) स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणागारेऽङ्कयित्वा प्रकाशितम् ।

अथ सचूर्णिके श्रीमद्भागवते दशमस्कन्ध–पू० प्रारभ्यते

श्रीगणेशाय नमः । दशमे कृष्णसत्कीर्तिर्वितानायानुवर्ण्यते ॥ धर्मग्लानिनिमित्तस्तु निरोधो दुष्टभूभुजाम् ॥१॥ प्राकृतादिश्चतुर्धा यो निरोधः स तु वर्णितः ॥ तत्तत्प्रसंगतः सृष्टिसंहारादिनिरूपणैः ॥ २ ॥ कृता नवतिरध्याया दशमे कृष्णकीर्तये ॥ तत्र तु प्रथमे कंसः स्वमृत्युं देवकीसुतात् ॥ श्रुत्वा भीतोऽवधीत् तस्याः षड्गर्भानिति वर्ण्यते ॥३॥ राजोवाच ॥ हे ब्रह्मन् ! भवता सोमसूर्ययोः परमाद्भुतं चरितं वंशविस्तारश्च कथितः ॥ १ ॥ धर्मशीलस्य यदोर्वंशेऽवतीर्णस्य विष्णोर्वीर्याणि कथय ॥ २ ॥ किंच भगवान् हरिर्यदुवंशेऽवतीर्य यान् पराक्रमान् कृतवान्

ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ कथितो वंशविस्तारो भवता सोमसूर्ययोः ॥ राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥१॥ यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ॥ तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥२॥ अवतीर्य यदोर्वंशे भगवान् भूतभावनः ॥ कृतवान् यानि विश्वात्मा तानि नो वद विस्तरात् ॥३॥ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ॥ क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात् ॥ ४ ॥ पितामहा मे समरेऽमरञ्जयैर्देवव्रताद्यातिरथैस्तिमिंगिलैः ॥ दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन् वत्सपदं स्म यत्प्लवाः ॥५॥ द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम् ॥ जुगोप कुक्षिं गत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ॥६॥ वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः ॥ प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ॥ ७ ॥ रोहिण्यास्तनयः प्रोक्तो रामः संकर्षणस्त्वया ॥ देवक्या गर्भसम्बन्धः कुतो देहान्तरं विना ॥ ८ ॥

तान् विस्तराद्वद ॥३॥ हे शुक ! भवौषधात् हरिगुणानुवादात् पशुघ्नं विना को विरज्येत ॥ ४ ॥ किंच मम पितामहाः अर्जुनादयो भीष्मादिरूपजलचरैर्दुरत्ययं कौरवसैन्यसागरं वत्सपदं कृष्णरूपनौकयाऽतरन् ॥ ५ ॥ किंच अश्वत्थाम्नो ब्रह्मास्त्रेण दग्धं मे शरीरं मम मातुः कुक्षिं गतः सन् चक्रं धृत्वा यो ररक्ष ॥ ६ ॥ तस्य मायामनुष्यस्य वीर्याणि वद ॥ ७ ॥ किंच त्वया नवमे रामो रोहिणीपुत्रः प्रोक्तः । पुनर्देवक्या गर्भसम्बन्धः देहान्तरं विना कुतो घटते ॥ ८ ॥

---

१ गततृष्णैः । २ यः श्रीकृष्णः प्लवः सहायो नौकारूपो येषां ते । ३ अन्तर्यामिपुरुषेणामृतं मोक्षं बहिश्च कालरूपेण मृत्युं संसारं प्रयच्छतो मायामनुष्यस्येति योज्यम् ।

तथा मातुर्भ्रातरं कथं जघान
मुकुन्दः पितुर्गेहात् कुतोव्रजं गतः।तथा ज्ञातिभिः सह निवासं क्व कृतवान्॥९॥तथा व्रजे मथुरायां च वसन् किमकरोत्। हे शुक!
॥१०॥हरिर्नृदेहमाश्रित्य कति वर्षाणि यदुपुर्यामवात्सीत् तस्य कतिपत्न्यो बभूवुः॥११॥अन्यच्च सर्वं कृष्णचरितं त्वं वक्तुमर्हसि॥१२॥
एषा क्षुधा त्यक्तोदकमपि मां न बाधते यतो हरिकथामृतं पिबामि॥१३॥सूत उवाच॥एवं प्रश्नं श्रुत्वा शुको नृपसंमानं कृत्वा कृष्णचरितं वक्तुं प्रार-

कस्मान्मुकुन्दो भगवान् पितुर्गेहाद्व्रजं गतः ॥ क्व वासं ज्ञातिभिः सार्धं कृतवान् सात्वतांपतिः ॥ ९ ॥ व्रजे वसन्
किमकरोन्मधुपुर्यां च केशवः ॥ भ्रातरं चावधीत् कंसं मातुरद्धा॒ऽतदर्हणम् ॥ १० ॥ देहं मानुषमाश्रित्य कति वर्षाणि
वृष्णिभिः ॥ यदुपुर्यां सहावात्सीत् पत्न्यः कत्यभवन् प्रभोः ॥११॥ एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितम् ॥ वक्तु-
मर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतम् ॥ १२ ॥ नैषातिदुस्सहा क्षुन्मां त्यक्तोदमपि बाधते ॥ पिबन्तं त्वन्मुखाम्भोज-
च्युतं हरिकथामृतम् ॥१३॥ सूत उवाच ॥ एवं निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातम् ॥
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः ॥१४॥ श्रीशुक उवाच ॥ सम्यग्व्यवसिता बुद्धि-
स्तव राजर्षिसत्तम ॥ वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥ १५ ॥ वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि ॥
वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलिलं यथा ॥ १६ ॥ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ॥ आक्रान्ता भूरिभारेण
ब्रह्माणं शरणं ययौ ॥ १७ ॥ गौर्भूत्वाश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः ॥ उपस्थिताऽन्तिके तस्मै व्यसनं स्वम-
वोचत ॥ १८ ॥ ब्रह्मा तदुपधार्याथ सह देवैस्तया सह ॥ जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ १९ ॥ तत्र गत्वा
जगन्नाथं देवदेवं वृषाकपिम् ॥ पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः ॥ २० ॥

भत॥१४॥श्रीशुक उवाच॥हे राजन्! तव बुद्धिः सम्यङ् निश्चिता यतो हरिकथायां नैष्ठिकी प्रीतिर्जाता॥१५॥ वासुदेवकथाप्रश्नो वक्तारं पृच्छकं
श्रोतारं च पुनाति॥१६॥हे नृप!इयं भूमिर्गर्विष्ठनृपदैत्यसैन्यशतायुतैर्बहुभारेणपीडिताऽश्रुमुखी गौर्भूत्वा ब्रह्माणं शरणं गत्वा तस्मै दुःखं जगाद॥१७॥
॥१८॥ ब्रह्मा तद्दुःखं ज्ञात्वा देवैस्तयाच सह क्षीराब्धितीरं ययौ ॥१९ ॥तत्र गत्वा समाहितः सन् जगन्नाथं पुरुषं पुरुषसूक्तेन तुष्टाव ॥२०॥

१ साक्षात् । २ वधानहंम् । ३ वृषः धर्मः, कपिः वराहः तदुभयरूपत्वाद् वृषाकपिः ।

ततो ब्रह्मा समाधावाकाशवाणीं निशम्य देवानाह हे देवाः! मत्तः पौरुषीं वाणीं शृणुत तथा क्रियतां मा चिरम् ॥२१॥ अहो ईश्वरेण भूमेस्तापः पूर्वमेवज्ञातः भवद्भिर्यदुष्वंशैर्जन्यताम्॥२२॥भगवान् वसुदेवगृहे जनिष्यते तत्प्रियार्थं सुरस्त्रियः संभवन्तु ॥२३॥ किंच सहस्रवदनोऽनन्तो हरेः प्रियार्थमादौ भविष्यति॥२४॥तथा विष्णोर्माया कार्यार्थे यशोदायां संभविष्यति ॥२५॥ श्रीशुक उवाच ॥ एवं ब्रह्मा देवानादिश्य महीमाश्वास्य

गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह ॥ गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम् ॥ २१ ॥ पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ॥ स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥ २२ ॥ वसुदेवगृहे साक्षाद्भगवान् पुरुषः परः ॥ जनिष्यते तत्प्रियार्थं संभवन्तु सुरस्त्रियः ॥ २३ ॥ वासुदेवकलाऽनन्तः सहस्रवदनः स्वराट् ॥ अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ २४ ॥ विष्णोर्माया भगवती[1] यया संमोहितं जगत् ॥ आदिष्टा प्रभुणांऽशेन कार्यार्थे सम्भविष्यति ॥ २५ ॥ श्रीशुक उवाच ॥ इत्यादिश्यामरगणान् प्रजापतिपतिर्विभुः ॥ आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥ २६ ॥ शूरसेनो यदुपतिर्मथुरामावसन् पुरीम् ॥ माथुरान् शूरसेनांश्च विषयान् बुभुजे पुरा ॥ २७ ॥ राजधानी ततः साऽभूत् सर्वयादवभूभुजाम् ॥ मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः ॥ २८ ॥ तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः[2] ॥ देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत ॥ २९ ॥ उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ॥ रश्मीन् हयानां जग्राह रौक्मै रथशतैर्वृतः ॥ ३० ॥ चतुश्शतं पारिबर्हं गजानां हेममालिनाम् ॥ अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् ॥ ३१ ॥

स्वलोकं ययौ॥२६॥ हे नृप! पुरा यदुपतिः शूरसेनो मथुरायां वसन् मथुरादिदेशान् बुभुजे ॥२७॥ ततः सा मथुरेति नाम्ना राजधानी बभूव यत्र हरिर्नित्यं सन्निहितः॥२८॥ तस्यां कदाचित् कृतोद्वाहो वसुदेवो देवक्या सहप्रयाणार्थं रथमारुरोह॥२९॥तदा कंसो भगिन्याः प्रियार्थं तुरगाणां रश्मीन् जग्राह ॥ ३० ॥ तदा देवको देवक्यै प्रयाणसमये गजानां चतुश्शतम् (४००) अश्वानां पञ्चदशसहस्रं (१५०००) रथाना-

१ भागवतीम् । २ नवोढया ।

मष्टादश शत (१८००) दासीनां शतद्वयम् (२००) एवं पारिबर्हं ददौ॥३१॥३२॥तदा शंखतूर्यमृदङ्गादयो नेदुः ॥३३॥ ततो मार्गे प्रग्रहिणं कंसं रे रे कंसेति संबोध्य दिव्या वागाह—हे अज्ञ ! त्वं यां वहसे तस्या अष्टमो गर्भस्त्वां हनिष्यति ॥३४॥ इत्युक्तः सः दुष्टः खड्गं गृहीत्वा भगिनीं हन्तुं केशे जग्राह॥३५॥तदा वसुदेवः क्रूरं निर्लज्जं कंसं सान्त्वयन् जगाद॥३६॥वसुदेव उवाच ॥ हे कंस । त्वं शूरैर्वर्णनीयगुणोऽसि अतो भवान् विवाहपर्वणि भगिनीं कथं हन्यात् 'मरणभयेन हन्मीति चेत् तर्हि हे वीर ! देहधारिणां देहेन सह मृत्युर्जायते सोऽद्य वाऽब्दशतान्ते वा स्यात्

दासीनां सुकुमारीणां द्वे शते समलंकृते ॥ दुहित्रे देवकः प्रादाद्याने दुहितृवत्सलः ॥ ३२ ॥ शंखतूर्यमृदंगाश्च नेदुर्दुन्दुभयः समम् ॥ प्रयाणप्रक्रमे तावद्वरवध्वोः सुमङ्गलम् ॥ ३३ ॥ पथिप्रग्रहिणं कंसमाभाष्याहाशरीरवाक् ॥ अस्यास्त्वामष्टमो गर्भो हन्ता यां वहसेऽबुध ॥ ३४ ॥ इत्युक्तः स खलः पापो भोजानां कुलपांसनः ॥ भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥ ३५ ॥ तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् ॥ वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥ ३६ ॥ वसुदेव उवाच ॥ श्लाघनीयगुणः शूरैर्भवान् भोजयशस्करः ॥ स कथं भगिनीं हन्यात् स्त्रियमुद्वाहपर्वणि ॥ ३७ ॥ मृत्युर्जन्मवतां वीर देहेन सह जायते ॥ अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ३८ ॥ देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ॥ देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ३९ ॥ व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति ॥ यथा तृणजलूकैवं देही कर्मगतिं गतः ॥ ४० ॥ स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः॥दृष्टश्रुताभ्यां मनसाऽनुचिन्तयन् प्रपद्यते तत् किमपि ह्यपस्मृतिः ॥ ४१ ॥

अतः पापाचरणं न योग्यम् ॥३७॥३८॥ अस्मिन् देहे मृतप्राये सति जीवः कर्मवशाद्देहान्तरं प्राप्य पश्चात् पूर्वदेहं तृणजलौकेव त्यजति । यथातृणजलौकातृणान्तरं धृत्वा पूर्वतृणं त्यजति तथा जीवोऽपि ॥३९॥ यथा मनोरथाविष्टचित्तो नरो दृष्टश्रुताभ्यामाहितसंस्कारेण मनसा तदेवाचिन्तयन् स्वप्ने तत्सदृशं गजादिरूपं पश्यति क्षणान्तरे च तदेवाहमिति मन्यते ततश्च जाग्रद्देहात् गतस्मृतिर्भवति तथा जीवो देहान्तरं प्राप्य प्राक्तनकर्मस्मृतिनष्टो भवति ॥ ४० ॥ ४१ ॥



१ यथा व्रजन् गन्ता पुरुषः एकेन अग्रतो निहितेन पदा तिष्ठन् भुवमवष्टभ्य देह बिभ्रत् पश्चादन्येन पूर्वप्रदेशादुत्थाप्य पुरो निहितेन गच्छति तद्वत् ।

किंच फलाभिमुखेन कर्मणा प्रेरितं मनः पञ्चसु भूतेषु मायया नानादेहरूपेण रचितेषु यं यं देवतिर्यगादिरूपं देहं धावतिधावच्च सद् यं यं प्राप्नोति तत्र तत्रासौ जीवस्तदेवाहमिति मन्यमानस्तेन सह जायते॥४२॥ हे कंस ! यथा चन्द्रादिज्योतिरुदकतैलादियुक्तेषु घटादिषु प्रतिबिम्बेन स्थितं वायुवेगेन कम्पादियुक्तं दृश्यते एवं मायया रचितेषु देहेष्वसौ पुमान् रागेण प्रविष्टोऽभिनिवेशं प्राप्नोति ॥४३॥ अतः आत्मनः क्षेममन्विच्छन् कस्यचित् द्रोहं नाचरेत् ॥४४॥ हे कंस! एषा तवानुजा अचेतनप्रायाऽस्ति इमां हन्तुं त्वं नार्हसि॥४५॥ श्रीशुक उवाच ॥ एवमुक्तोऽपि कंसो न न्यवर्तत

यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप पञ्चसु ॥ गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥ ४२ ॥ ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते ॥ एवं स्वमायारचितेष्वसौ पुमान् गुणेषु रागानुगतो विमुह्यति ॥४३॥ तस्मान्न कस्यचिद्द्रोहमाचरेत् स तथाविधः ॥ आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ॥४४॥ एषा तवानुजा बाला कृपणा पुत्रिकोपमा ॥ हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सलः ॥ ४५ ॥ श्रीशुक उवाच ॥ एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः ॥ न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥४६॥ निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः ॥ प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत॥४७॥ मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् ॥ यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥४८॥ प्रदाय मृत्यवे पुत्रान् मोचये कृपणामिमाम् ॥ सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् ॥४९॥ विपर्ययो वा किं न स्याद् गतिर्धातुर्दुरत्यया ॥ उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥५०॥ अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति ॥ एवं हि जन्तोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥५१॥

॥४६॥ तदा वसुदेवस्तस्याभिप्रायं ज्ञात्वा प्राप्तं कालं वञ्चयितुं विचारितवान्॥४७॥ तदाह। यावद् बुद्धिबलोदयस्तावद् बुद्धिमता पुरुषेण मृत्युर्दूरीकर्तव्यः। यदि न निवर्तेत तर्हि देहिनोऽपराधो नास्ति॥४८॥ अतःएवं करिष्यामीत्याह। मृत्यवे कंसाय पुत्रान् दत्त्वेमां मोचये। यदि च मे सुता जायेरन् तदा यद् भावि तद् भवतु। तदन्तरा वा कंसो न म्रियेत चेत्॥४९॥ विपर्ययो वा किं न स्यात। विधातुर्गतिर्दुरत्यया॥५०॥ यथाऽग्नेः काष्ठ-

१ चतुश्चत्वारिंशत्तमे श्लोके भेदः, पञ्चचत्वारिंशत्तमे तु साम । २ कंसः । ३ मृत्युरिति शेषः ।

वियोगसंयोगयोरदृष्टतोऽन्यन्निमित्तं नास्ति । एवं जन्तोर्जन्ममरणयोरपि हेतुरचिन्त्यः ॥५१॥ श्रीशुक उवाच ॥ वसुदेवः एवं विमृश्य बहुमान-पुरस्सरं तं पूजयित्वा ॥५२॥ मुखं प्रसार्य क्रूरं तं हसन् जगाद ॥५३॥ वसुदेव उवाच ॥ हे कंस ! यत् सा दिव्यवाक् जगाद तद् भयं तव न यतोऽस्याः पुत्रांस्तेऽर्पयिष्यामि ॥५४॥ श्रीशुक उवाच ॥ ततः कंसो भगिनीवधान्निवृत्तः । वसुदेवोऽपि कंसं प्रशस्य गृहं विवेश ॥ ५५ ॥ अथ प्रसूतिकाले प्राप्ते देवकी पुत्रान् सुषुवे ॥ ५६ ॥ तत्र प्रथमजं कीर्तिमन्तं गृहीत्वाऽनृताद् भीतो वसुदेवो दुःखेन कंसाय ददौ ॥५७॥ हे नृप !

श्रीशुक उवाच ॥ एवं विमृश्य तं पापं यावदात्मनिदर्शनम् ॥ पूजयामास वै शौरिर्बहुमानपुरस्सरम्॥५२॥प्रसार्य वदना-म्भोजं नृशंसं निरपत्रपम् ॥ मनसा दूयमानेन विहसन्निदमब्रवीत् ॥५३॥ वसुदेव उवाच ॥ न ह्यस्यास्ते भयं सौम्य यद्वै साऽऽहाशरीरवाक् ॥ पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ ५४ ॥ श्रीशुक उवाच ॥ स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् ॥ वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद् गृहम् ॥५५॥ अथ काल उपावृत्ते देवकी सर्वदेवता ॥ पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ ५६ ॥ कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः ॥ अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥ ५७ ॥ किं दुस्सहं नु साधूनां विदुषां किमपेक्षितम् ॥ किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम् ॥ ५८ ॥ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् ॥ कंसस्तुष्टमना राजन् प्रहसन्निदमब्रवीत् ॥ ॥ ५९ ॥ प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् ॥ अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥ ६० ॥ तथेति सुतमादाय ययावानकदुन्दुभिः ॥ नाभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः ॥ ६१ ॥ नन्दाद्या ये व्रजे गोपा याश्चा-मीषां च योषितः ॥ वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ६२ ॥



साधूनां दुस्सहं किम् ॥५८॥ एवं शौरेः समत्वं दृष्ट्वा तुष्टः सन् कंसः इदं जगाद ॥५९॥ हे वसुदेव ! अयं ते कुमारो गच्छतु । अस्मान्मे भयं न । युवयोरष्टमाद् गर्भान्मे मृत्युः॥६०॥ एवमुक्तो वसुदेवः सुतं गृहीत्वा ययौ ॥ तथाऽपि तद्वचो नाभ्यनन्दत् ॥ ६१ ॥ एतस्मिन् समये नारदः सभायामेत्य कंसं जगाद । हे कंस ! व्रजे ये नन्दाद्याः गोपास्तथा तत्स्त्रियः तथा मथुरायां वसुदेवाद्या वृष्णयो देवक्याद्यास्तत्स्त्रियश्च ॥६२॥

१ स्वप्रजावधि । २ 'प्रसन्नवदनाम्भोजः' इ० पा० । ३ सर्वः— सर्वात्मा भगवानेव देवता यस्याः सा । ४ भगवानेव तत्त्वं नान्यदिति जानताम् ।

एते सर्वे देवताप्रायाः संति ॥ ६३ ॥ इदं तथा भूमेर्भारायमाणानां दैत्यानां वधोद्यमं च श्रावयित्वा नारदो ययौ ॥६४॥ ततः कंसो यदून् देवान् मत्वा तथा देवक्याः गर्भसंभूतं विष्णुं स्ववधं प्रति कारणं मत्वा ॥ ६५ ॥ वसुदेवं देवकीं च गृहे शृङ्खलैर्बद्ध्वा तयोर्जातं पुत्रं जघान ॥ ६६ ॥ हे राजन् ! प्राणपोषकाः राजानो मातृपितृभ्रात्रादीन् घ्नन्ति । अत्र किमाश्चर्यम् ॥ ६७ ॥ किंच प्राग् विष्णुना हतं कालनेमिरूपं स्वमात्मानं जानन् स यदुभिर्व्यरुध्यत ॥ ६८ ॥ उग्रसेनाद् राज्यं गृहीत्वा स्वयं बुभुजे ॥६९॥ इति श्रीभागवते चू० दशमस्कन्धे पूर्वार्धे

सर्वे वै देवताप्राया उभयोरपि भारत ॥ ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ॥६३॥ एतत् कंसाय भगवान् शशंसाभ्येत्य नारदः ॥ भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥ ६४ ॥ ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति ॥ देवक्या गर्भसंभूतं विष्णुं च स्ववधं प्रति ॥६५॥ देवकी वसुदेवं च निगृह्य निगडैर्गृहे ॥ जातं जातमहन् पुत्रं तयोरजनशङ्कया ॥६६॥ मातरं पितरं भ्रातॄन् सर्वांश्च सुहृदस्तथा ॥ घ्नन्ति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥६७॥ आत्मानमिह संजातं जानन् प्राग्विष्णुना हतम् ॥ महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥६८॥ उग्रसेनं च पितरं यदुभोजान्धकाधिपम् ॥ स्वयं निगृह्य बुभुजे शूरसेनान् महाबलः ॥६९॥इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीकृष्णावतारहेत्वादिनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ प्रलम्बबकचाणूरतृणावर्तमहाशनैः ॥ मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ १ ॥ अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ॥ यदूनां कदनं चक्रे बली मागधसंश्रयः ॥२॥ ते पीडिता निविविशुः कुरुपाञ्चालकैकयान् ॥ शाल्वान् विदर्भान् निषधान् विदेहान् कोसलानपि ॥ ३ ॥

प्रथमोऽध्यायः ॥ १ ॥ द्वितीये कंसघाताय देवक्या गर्भगो हरिः ॥ ब्रह्मादिभिः स्तुतः सा च सान्त्वितेति निरूप्यते ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! जरासन्धाश्रयः कंसः प्रलम्बबकचाणूरादिभिर्मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैर्बाणभौमादिभिश्च सह यदूनां कदनं चक्रे ॥ १ ॥ ॥ २ ॥ ते पीडिताः सन्तः कुरुपाञ्चालकैकयशाल्वादीन् देशान् विविशुः ॥ ३ ॥

---

१ वसुदेवनन्दयोः । २ अजनः—विष्णुः । ३ महाशन—अघासुरः ।

केचित् कंसमनुवर्तमानाः पर्युपासत । एवं देवक्याः षट्सु बालेषु हतेषु सत्सु ॥४॥ सप्तमोऽनन्ताख्यं विष्णोर्धाम देवक्याः हर्षशोकप्रदो गर्भो बभूव ॥ ५ ॥ भगवानपि यदूनां कंसजं भयं ज्ञात्वा योगमायामादिशत् ॥६॥ हे देवि ! व्रजं गच्छ, तत्र वसुदेवपत्नी रोहिणी गुप्तस्थाने वसति ॥७॥ तत्र गत्वा देवकीजठरे मे धाम शेषाख्यं तदाकृष्य रोहिण्याः उदरे स्थापय ॥८॥ ततो देवक्याः पुत्रतां प्राप्स्यामि । त्वं च नन्दस्त्रियां



एके तमनुरुन्धाना ज्ञातयः पर्युपासते ॥ हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥ ४ ॥ सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते ॥ गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥५॥ भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ॥ यदूनां निजनाथानां योगमायां समादिशत्॥६॥गच्छ देवि व्रजं भद्रे गोपगोभिरलंकृतम् ॥ रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले ॥ अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ॥७॥ देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥ तत् संनिकृष्य रोहिण्या उदरे संनिवेशय ॥८॥ अथाहमंशभागेन देवक्याः पुत्रतां शुभे ॥ प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ॥९॥ अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥ धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥१०॥ नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ॥ दुर्गेति भद्रकालीति विजया वैष्णवीति च ॥११॥ कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ॥ माया नारायणीशानी शारदेत्यम्बिकेति च ॥१२॥ गर्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि॥रामेति लोकरमणाद्बलं बलवदुच्छ्रयात्॥१३॥ श्रीशुक उवाच ॥ संदिष्टैवं भगवता तथेत्योमिति तद्वचः ॥ प्रतिगृह्य परिक्रम्य गां गता तत्तथाऽकरोत् ॥ १४ ॥ गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया ॥ अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः॥१५॥



यशोदायां भविष्यसि ॥ ९ ॥ एवं कृते मनुजास्त्वां धूपदीपनैवेद्यादिभिरार्चिष्यन्ति ॥ १० ॥ तव नामानि दुर्गा भद्रकाली विजया वैष्णवी ॥ ११ ॥ कुमुदा चण्डिका कृष्णा नारायणीति स्थानानि च कुर्वन्ति ॥ १२ ॥ तथा गर्भाकर्षणात् तं संकर्षणमिति वदन्ति; लोकरमणात् राममिति बलाधिक्याद् बलमिति च ॥१३॥ श्रीशुक उवाच ॥ एवं हरिणाऽऽदिष्टा सा व्रजे आगत्य तथा चकार ॥१४॥ एवं योगमायया

देवक्या गर्भे रोहिण्यां स्थापिते सति पौराः गर्भः पपातेति चुक्रुशुः॥१५॥अथ भगवान् भक्तानामभयदो वसुदेवमनसि प्रादुर्बभूव ॥ १६ ॥ ततो वसुदेवः पौरुषीं मूर्तिं बभार सूर्य इव तेजस्वी भूतानां दुर्धर्षश्च बभूव॥१७॥ततो वसुदेवेन वेददीक्षयाऽर्पितां श्रीमूर्तिं देवकी मनसैव दधार पूर्वदिक् चन्द्रमिव । अथ वेधदीक्षालक्षणम् । तत्र स्पर्शदीक्षा, दृग्दीक्षा, वेधदीक्षेति दीक्षात्रैविध्यम् । तदुक्तं कुलार्णवागमे 'यथा पक्षी स्वपक्षाभ्यां शिशून् संवर्धयेच्छनैः ॥ स्पर्शदीक्षोपदेशैश्च तादृशः कथितः प्रिये ( १ ) स्वापत्यानि यथा मत्स्यो वीक्षणेनैव पोषयेत ॥ दृष्टिदीक्षोपदेशश्च तादृशः कथितः प्रिये ( २ ) यथा कूर्मः स्वतनयान् ध्यानमात्रेण पोषयेत् ॥ वेधदीक्षोपदेशश्च तादृशः कथितः प्रिये ( ३ )' इति ॥१८॥ सा देवकी

भगवानपि विश्वात्मा भक्तानामभयंकरः ॥ आविवेशांशभागेन मन आनकदुन्दुभेः ॥ १६ ॥ स बिभ्रत् पौरुषं धाम भ्राजमानो यथा रविः ॥ दुरासदोऽतिदुर्धर्षो भूतानां संबभूव ह ॥ १७ ॥ ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी ॥ दधार सर्वात्मकमात्मभूतं काष्ठा यथाऽऽनन्दकरं मनस्तः ॥ १८ ॥ सा देवकी सर्वजगन्निवासनिवासभूता नितरां न रेजे ॥ भोजेन्द्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती ॥ १९ ॥ तां वीक्ष्य कंसः प्रभयाऽजितान्तरां विरोचयन्तीं भवनं शुचिस्मिताम् ॥ आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रितो यन्न पुरेयमीदृशी ॥ ॥ २० ॥ किमद्य तस्मिन् करणीयमाशु मे यदर्थतन्त्रो न विहन्ति विक्रमम् ॥ स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हन्त्यनुकालमायुः ॥ २१ ॥ स एष जीवन् खलु संपरेतो वर्तेत योऽत्यन्तनृशंसितेन ॥ देहे मृते तं मनुजाः शपन्ति गन्ता तमोऽन्धं तनुमानिनो ध्रुवम् ॥ २२ ॥

श्रीहरेर्निवासभूता सत्यपि न रेजे यतः कंसगृहे रुद्धा यथा घटादिषु रुद्धो दीपः ॥१९॥ एवं स्वकान्त्या भवनं प्रकाशयन्तीं तां दृष्ट्वा कंसः आह—मे प्राणहरो यो हरिः स ध्रुवं गुहां श्रितः, यतः इयं पुरैवं न रेजे ॥ २० ॥ स मद्वधे पराक्रमं करिष्यत्येव । अतस्तस्मिन्नद्य मया किं करणीयम् । इयमेव हन्यतामिति चेत् तर्हि भगिन्याः गर्भिण्याः स्त्रिया वधो यशःश्रियमायुश्च नाशयति ॥२१॥ किंचक्रौर्येण यो वर्तते स जीवन्नपि मृतः स्यात् । किंच तं जीवन्तमेव मनुजाः शपन्ति । देहाद्यभिमानिनोऽस्य देहे मृतेऽयं नरकं गमिष्यतीति ॥ २२ ॥

१ ज्ञानवञ्चके । अन्येषामनुपकारिणीत्यर्थः । २ विष्णुगर्भाम् । ३ अर्थतन्त्रः देवकार्यप्रधानो विक्रमं स्वं न विहन्ति मद्वधे पराक्रमं करिष्यत्येवेत्यर्थः ।

एवं विचार्य कंसोऽतिघोराद्भावान्निवृत्य हरेर्जन्म प्रतीक्षमाण आस्ते ॥२३॥ किंच आसीनो भुञ्जानः पर्यटन् हरिं चिन्तयानो जगत् तन्मयं ददर्श ॥२४॥ तत्र देवैः सहः ब्रह्मा शिवश्च गत्वा तुष्टुवुः॥२५॥हे हरे ! सत्यसंकल्प कालत्रयेऽपि सत्यं त्वां वयं शरणं प्रपन्नाः स्मः ॥२६॥ किंच हे कृष्ण ! अयं संसारवृक्षो मायाश्रयः तस्य सुखदुःखे द्वे फले । गुणत्रयं मूलम् । धर्मार्थादयश्चत्वारो रसाः । सप्त धातवस्त्वक् । पञ्चभूतमनोबुद्ध्य-

इति घोरतमाद्भावात् संनिवृत्तः स्वयं प्रभुः ॥ आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धकृत् ॥ २३ ॥ आसीनः संविशंस्तिष्ठन् भुञ्जानः पर्यटन् महीम् ॥ चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत् ॥ २४ ॥ ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः ॥ देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन् ॥ २५ ॥ सत्यव्रतं सत्यपरं त्रिसत्यं सत्त्यस्य योनिं निहितं च सत्ये ॥ सत्यस्य सत्यं ऋतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ २६ ॥ एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा ॥ सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥ २७ ॥ त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च ॥ त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥२८॥ बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य ॥ सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम् ॥ २९ ॥

हंकाराख्याः अष्ट शाखाः नव द्वाराणि छिद्राणि । दश प्राणाः पर्णानि । जीवेश्वरौ द्वौ पक्षिणौ स्तः ॥ २७ ॥ एवं भूतवृक्षस्योत्पत्तिपालननाशकर्ता त्वमेव न तु ब्रह्मादयः ॥ २८ ॥ एवंभूतस्त्वं सर्वलोकानां क्षेमाय सात्त्विकरूपाणि बिभर्षि ॥ २९ ॥



१ कामवर्षिणम् । २ सत्यं परं श्रेष्ठं प्राप्तिसाधनं यस्मिंस्तम् । ३ सच्छब्देन पृथिव्यप्तेजांसि । त्यच्छब्देन वाय्वाकाशौ । एवं सच्च त्यच्च सत्यं भूतपञ्चकम् । तस्य योनिः कारणम् । ४ सत्ये तस्मिन्नेवभौतिके देहेऽन्तर्यामितया स्थितम् । ५ सत्यस्य सत्ये पारमार्थिके तन्नाशेऽप्यवशिष्यमाणरूपम् । ६ ऋतं सूनृता वाणी, सत्यं समदर्शनं, तयोर्नेत्रं नेतारं प्रवर्तकमिति यावत् । ७ पञ्चेन्द्रियाणि विधाः ज्ञान प्रकारा यस्य सः । ८ 'बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ । शोकमोहौ जरामृत्यू देहस्येति षडूर्मयः ॥" इति षडात्मनः स्वभावाः यस्य सः । ९ अवबोधैकस्वरूपः ।

हे कमलनेत्र ! त्वयि सत्त्वमूर्तौ समाधिना चित्तं कृत्वा त्वत्पादपोताश्रयेण भवाब्धिं गोवत्सपदं कुर्वन्ति ॥३०॥ हे स्वप्रकाश ! तव भक्ता भवार्णवमुत्तीर्य त्वद्भक्तिमार्गसंप्रदायरूपां नौकां लोकतरणार्थमत्र स्थापयित्वा पारं याताः ॥३१॥ हे हरे ! ये ज्ञानिनस्त्वत्पादसेवा न कुर्वन्ति ते परं पदमारुह्य ततोऽधः पतन्ति ॥३२॥ तथा तव भक्तास्तु न पतन्ति । किंतु विघ्नानां मूर्धसु पदं दत्त्वा निर्भयाः सन्तो विचरन्ति ॥३३॥

त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि समाधिनाऽऽवेशितचेतसैके ॥ त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥३०॥ स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः ॥ भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥ ३१ ॥ येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ॥ आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥३२॥ तथा न ते माधव तावकाः क्वचिद् भ्रश्यन्ति मार्गात् त्वयि बद्धसौहृदाः ॥ त्वयाऽभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥३३॥ सत्त्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः ॥ वेदक्रियायोगतपस्समाधिभिस्तवार्हणं येन जनः समीहते ॥ ३४॥ सत्त्वं न चेद् धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम् ॥ गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः ॥ ३५ ॥ न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः ॥ मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ॥३६॥

एवंभूतो भवान् विश्वस्य पालने जीवानां कर्मफलदातृवपुराश्रयते । तेन वपुषा जनस्तव पूजां करोति ॥३४॥ हे धातः ! इदं सत्त्वं तव वपुर्न भवेत् तर्ह्यज्ञाननिवर्तकमपरोक्षज्ञानं न भवेत् । गुणप्रकाशैर्भवान् केवलं कल्प्यते न तु साक्षात् क्रियते ॥३५॥ हे देव ! सर्वसाक्षिणस्तव नामरूपे गुणजन्मकर्मभिर्निरूपणयोग्ये न भवतः । यतस्त्वं मनसो वचसश्च पारे । अथापि भक्ताः उपासनादिलक्षणक्रियायां त्वां साक्षात् पश्यन्ति ॥३६॥

---

१ महद्भिः सेव्यतया संपादितेन । २ अतिप्रीतियुक्ताः । सर्वभूतेष्विति शेषः । ३ सतः भक्तानगृह्णातीति । ४ विमुक्ताः वयमिति मन्यमानाः । ५ भक्तेरभावादित्यर्थः । ६ यस्य संबन्ध्ययं बुद्ध्यादिगुण प्रकाशते येन वा बुद्ध्याद्येन बुद्ध्याधिष्ठात्रा बाह्यो गुणः घटादिः प्रकाशते स ईश्वरः इत्यनुमीयते इत्यर्थः । ७ गुणाश्च जन्मानि न कर्माणि च तैः ।

प्रविष्टचेताः सन् संसाराय न कल्पते ॥ ३७ ॥ हे हरे ! अस्यास्तव
हे कृष्ण ! तव नामरूपाणि शृण्वन् गृणन् चिन्तयन् त्वच्चरणकमलयोः प्रविष्टचेताः सन् संसाराय न कल्पते ॥ ३७ ॥ हे हरे ! अस्यास्तव पादभूतायाः भुवो भारस्त्वया जन्मनैव दूरीकृतः एतद् दिष्ट्या । किंच त्वत्पदैश्चिह्नितां पृथ्वीं द्रक्ष्याम एतद् दिष्ट्या ॥ ३८ ॥ हे कृष्ण ! अजन्मनस्तव जन्मकारणं क्रीडां विना न तर्कयामः ॥३९॥ हे ईश ! मत्स्यकूर्मनृसिंहवराहादियोनिषु कृतावतारस्त्वं त्रिभुवनमस्मांश्च पासि

शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते ॥ क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते ॥३७॥ दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः ॥ दिष्ट्याऽङ्कितां त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥३८॥ न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ॥ भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥ ३९ ॥ मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ॥ त्वं पासि नस्त्रिभुवनं च यथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनं ते ॥ ४० ॥ दिष्ट्याऽम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद् भगवान् भवाय नः ॥ मा भूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥ ४१ ॥ श्रीशुक उवाच ॥ इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ॥ ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥ ४२ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे ब्रह्मादिकृतगर्भगतविष्णुस्तुतिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

यथाऽन्यदा तथाऽधुनाऽपि पाहि । भुवो भारं हर । तस्मै तुभ्यं नमः ॥४०॥ अथ देवकीं वदन्ति । हे अम्ब ! शिवायास्माकं साक्षाद् भगवान् ते कुक्षिं गतः अतः कंसात् ते भयं मा भूत् तवात्मजो यदूनां गोप्ता भविष्यति ॥४१॥ श्रीशुक उवाच ॥ हे राजन् ! इति स्तुत्वा देवाः स्वर्गं ययुः ॥४२॥ इति श्रीभाग० महा० चू० दशम० पू० द्वितीयोऽध्यायः ॥ २ ॥



---

१ देवार्चनादिकर्मसु । २ त्वया । ३ हे अभयाश्रय हे नित्यमुक्त । ४ जीवात्मन्यपि भवादयो यतस्त्वयि विषये याऽविद्या तया कृताः न परमार्थतः सन्ति । तदा तव जन्मकारणं नास्तीति किमुवक्तव्यम् । ५ देवेषु कृतावतारो वामनाख्यः । ६ यस्य रूपम् । ७ अनिदं सर्वप्रत्यग्भूतम् । ८ ययावत् ।

तृतीये निजरूपेण सम्भूतस्तु हरिः स्वयम् ॥ पितृभ्यां संस्तुतो नीतः पित्रा भीतेन गोकुलम् ॥ १ ॥ अथ यदा सर्वगुणयुक्तः शुभः कालः आसीत् तथा यदा शान्तर्क्षग्रहतारकं रोहिण्यृक्षमासीत् ॥ यदा च दिशः प्रसेदुः निर्मलोडुगणोदयं नभः आसीत् । मङ्गलभूयिष्ठपुर-ग्रामव्रजाकरा मही जाता ॥ २ ॥ यदा प्रसन्नजलाः नद्यः कमलशोभिनो ह्रदाश्च ॥ तथा पक्षिभिर्भ्रमरैर्नादिताः वनपंक्तयः आसन् ॥ ३ ॥ यदा च सुखस्पर्शो वायुर्ववौ तथा विप्राग्नयो देदीप्यमानाः बभूवुः ॥ ४ ॥ यदा च साधूनां मनांसि प्रसन्नानि जातानि किंच तस्मिन्नजन्मनि

श्रीशुक उवाच ॥ अथ सर्वगुणोपेतः कालः परमशोभनः ॥ यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥ १ ॥ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ॥ मही मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥ २ ॥ नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ॥ द्विजालिकुलसन्नादस्तवका वनराजयः ॥ ३ ॥ ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ॥ अग्नयश्च द्विजातीनां शांतास्तत्र समिन्धत ॥ ४ ॥ मनांस्यासन् प्रसन्नानि साधूनामसुरद्रुहाम् ॥ जायमानेऽजने तस्मिन्नेदुर्दुन्दुभयो दिवि ॥ ५ ॥ जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः ॥ विद्याधर्यश्च नन्नृतुरप्सरोभिः समं तदा ॥ ६ ॥ मुमुचुर्मुनयो देवाः सुमनांसि मुदाऽन्विताः ॥ मन्दं मन्दं जलधरा जगर्जुरनुसागरम् ॥७॥ निशीथे तम उद्भूते जायमाने जनार्दने ॥ देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ॥ आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥ ८ ॥ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदार्युदायुधम् ॥ श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥ ९ ॥

जायमाने सति दिवि दुन्दुभयो नेदुः ॥ ५ ॥ किंनरगन्धर्वाः जगुः सिद्धचारणास्तुष्टुवुः विद्याधर्योऽप्सरसो नन्नृतुः ॥६॥ मुनयो देवाः पुष्पाणि ववृषुः । मेघाः अब्धिमनु मन्दं मन्दं जगर्जुः ॥७॥ तदा भयंकरेऽतितमसि जायमाने निशीथे देवक्यां विष्णुः प्रादुरासीत् प्राच्यांदिशि पूर्णेन्दुरिव ॥ ८ ॥ तं पद्मेक्षणं चतुर्भुजं शङ्खचक्रगदायुधं श्रीवत्सचिह्नं कौस्तुभकण्ठं पीताम्बरं घनश्यामम् ॥ ९ ॥

---

१ अजनान्नारायणाज्जन्म यस्य सः प्रजापतिः तस्यर्क्षं रोहिणीनक्षत्रम् । २ अरिः चक्रम् । शंखादीन्युद्गतान्यायुधानि यत्र तम् ।

किरीटकुण्डलकान्त्या स्फुरत्केशं कटिसूत्राङ्गदादिभिः रोचमानं बालकं दृष्ट्वा ॥१०॥ प्रफुल्लनेत्रो वसुदेवो हर्षितः सन् द्विजेभ्यो मनसाऽयुतगा अददात् ॥११॥ स्वतेजसा सूतिकागृहं प्रकाशयन्तम् एनं परमपुरुषं निश्चित्य कृताञ्जलिर्भूत्वा तुष्टाव ॥१२॥ वसुदेव उवाच ॥ हे ईश ! त्वां जानामि । कथम् । प्रकृतेः परः पुरुषः इति ॥ १३ ॥ स एव त्वं स्वमाययेदं सृष्ट्वा तदनुप्रविष्टवद्दृश्यसे ॥ १४ ॥ यथेमे महदादयो भावाः

महार्हवैदूर्यकिरीटकुण्डलत्विषापरिष्वक्तसहस्रकुन्तलम् ॥ उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥ १० ॥ सविस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा ॥ कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् ॥ ११ ॥ अथैनमस्तौदवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः ॥ स्वरोचिषा भारत सूतिकागृहं विरोचयन्तं गतभीः प्रभाववित् ॥ १२ ॥ वसुदेव उवाच ॥ विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः ॥ केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥ १३ ॥ स एव स्वप्रकृत्येदं सृष्ट्वाऽग्रे त्रिगुणात्मकम् ॥ तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥ १४ ॥ यथेमेऽविकृता भावास्तथा ते विकृतैः सह ॥ नानावीर्याः पृथग्भूता विराजं जनयन्ति हि ॥ १५ ॥ सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ॥ प्रागेव विद्यमानत्वान्न तेषामिह संभवः । ॥ १६ ॥ एवं भवान् बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैस्सन्नपि तद्गुणाग्रहः ॥ अनावृतत्वाद्बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ १७ ॥ य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः ॥ विनाऽनुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत् पुमान् ॥ १८ ॥

षोडशविकारैः सहैकत्र मिलित्वा विराजमुत्पाद्य ॥१५॥ तत्र प्रविष्टा इव दृश्यन्ते न पुनः प्रविष्टाः प्रागेव विद्यमानत्वात् ॥१६॥ एवं भवान् गुणैः सह वर्तमानोऽपि केवलानुभवानन्दरूप एव त्वं विदितोऽसीति मे भाग्यम् ॥ १७ ॥ यः पुमान् देहं पृथक् पश्यति स मूढः ॥ १८ ॥

१ संनिपाते हेतुमाह । नानावीर्या इति । यतः पृथग्भूताः सन्तो नानावीर्याः विशिष्टकार्यसमर्थाः न भवन्ति । २ बुद्ध्या रूपादिज्ञानेनानुमेयं लक्षणं स्वरूपं येषां तैरिन्द्रियैर्ग्राह्यैर्गुणैः विषयैः । ३ तैर्गुणैः सह न गृह्यते । ४ देहादिषु । ५ आत्मव्यतिरेकेण । ६ वाचारम्भणमात्रं विना । ७ विचारितं देहादि । ८ यतोऽवस्तुत्वेन त्यक्तं बाधितमेव यस्तु बुद्ध्योपाददत् स्वीकुर्वन् पुमानबुध एवेत्यर्थः ।

किंच हे विभो ! विश्वस्य जन्मादि त्वत्तो वदन्ति । एतत् त्वयि न विरुद्धम् । यतः कुर्वद्भिर्गुणैस्त्वयि सृष्ट्यादिकर्तृत्वमुपचर्यते तव गुणाश्रयत्वात् । यथा भृत्यकृत्यं राजनि ॥१९॥ एवंभूतस्त्वं त्रिलोकपालनार्थं मायया श्वेतवर्णं बिभर्षि । तथोत्पत्तये रक्तम् । नाशाय कृष्णमिति ॥२०॥ अपि च हे विभो ! अस्य लोकस्य रक्षार्थं मम गृहेऽवतीर्णोऽसि । स त्वं नृपसंज्ञैरसुरैरितस्ततश्चाल्यमानाः सेना हनिष्यसि ॥२१॥ एवं सत्यपि त्वयाऽप्रमत्तेन भाव्यम् । हे प्रभो ! यतः खलः कंसो नौ गृहे भावि त्वज्जन्म श्रुत्वा तवाग्रजानवधीत् । स पुरुषैः कथितं तवावतारं जातं

त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो वदन्त्यनीहादगुणादविक्रियात् ॥ त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥१९॥ स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः ॥ सर्गाय रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये ॥ २० ॥ त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर ॥ राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥ २१ ॥ अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाऽग्रजांस्ते न्यवधीत् सुरेश्वर ॥ स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥ २२ ॥ श्रीशुक उवाच ॥ अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् ॥ देवकी तमुपाधावत् कंसाद्भीता शुचिस्मिता ॥२३॥ देवक्युवाच ॥ रूपं यत् तत् प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारम् ॥ सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥ २४ ॥ नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु ॥ व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यतेऽशेषसंज्ञः ॥ २५ ॥

श्रुत्वोदायुधः सन् सम्प्रत्येवागमिष्यति ॥ २२ ॥ श्रीशुक उवाच ॥ हे नृप ! अथ देवकी महापुरुषलक्षणं पुत्रं दृष्ट्वा कंसाद् भीता सती तं तुष्टाव ॥२३ ॥ देवक्युवाच ॥ हे भगवन् ! वेदाः निर्गुणं निर्विकारं यद् वस्तु वदन्ति तदेव त्वं विष्णुः ॥ २४ ॥ महाप्रलयेऽस्मिन् लोके नष्टे सति यस्त्वमेक एवाशेषसंज्ञोऽवशिष्यसे । एवंभूतस्य तव भयशङ्का नेति ॥ २५ ॥

१ बृहत् । २ चेतनम् । ३ बुद्ध्याविकरणसंघातप्रकाशकः । ४ पञ्चतन्मात्रम् । ५ शेषसंज्ञः इति पा०

हे विभो ! अयं निमेषादिर्वत्सरान्तः कालस्तव चेष्टामाहुः । तं त्वां निर्भयं शरणं व्रजामि ॥२६॥ हे आद्य ! अयं मर्त्यो मृत्युसर्पाद् भीतः सन् कुत्रापि निर्भयं स्थानं न प्राप । ततो यदृच्छया त्वत्पादाब्जं प्राप्य स्वस्थः शेते ॥२७॥ स त्वं कंसाद् भीतान् नस्त्राहि । इदं तव पौरुषं रूपं ध्यानास्पदं मांसचक्षुषां प्रत्यक्षं मा कृथाः ॥२८॥ हे कृष्ण ! असौ पापो मयि त्वज्जन्म जातमिति मा जानीयात्, यतस्तस्माद् बिभेमि ॥२९॥ हे विश्वात्मन् ! शंखचक्रादियुक्तं चतुर्भुजं रूपं संहर ॥३०॥ किंच हे ईश ! यस्त्वं प्रलयान्ते इदं विश्वं यथावकाशं स्वतनौ बिभर्षि स

योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् ॥ निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥ २६ ॥ मर्त्यो मृत्युव्यालभीतः पलायन् सर्वाल्लोकान्निर्भयं नाध्यगच्छत् ॥ त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति ॥ २७ ॥ स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान् भृत्यवित्रासहासि ॥ रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥ २८ ॥ जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ॥ समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ २९ ॥ उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ॥ शंखचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥३०॥ विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् ॥ बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं हि तत् ॥ ३१ ॥ श्रीभगवानुवाच ॥ त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायंभुवे सति ॥ तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥ ३२ ॥ युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः ॥ सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३३ ॥ वर्षवातातपहिमघर्मकालगुणाननु ॥ सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥ ३४ ॥

त्वं मे गर्भगोऽभूः इदं नृलोकस्य विडम्बनम्॥३१॥अथ चतुर्भुजरूपेण प्राकट्ये कारणमाह॥श्रीभगवानुवाच ॥ हे मातः ! स्वायंभुवमन्वन्तरे पूर्वजन्मनि त्वं पृश्निरिति अयं वसुदेवः सुतपा इत्यासीत् ॥ ३२ ॥ तदा युवां ब्रह्माज्ञया सृष्टयर्थं तपः कृतवन्तौ ॥३३॥ तदा वर्षवातादिकालगुणान् सहमानौ गतमलौ ॥ ३४ ॥

---

१ हे प्रकृतिप्रवर्तक ।

गलितपर्णवायुभोजनौ मत्तः कामेच्छया ममाराधनं कृतवन्तौ॥३५॥एवं तीव्रं तपस्तप्यतोः सतोर्दिव्यद्वादशसहस्रवर्षाणि व्यतीयुः ॥३६॥ तदा-वां तुष्टो वपुषाऽमुना प्रादुरासम् ॥३७॥ ततो वरो व्रियताम् इत्युक्ते युवाभ्यामनपत्याभ्यां मादृशः पुत्रो वृतः ॥३८॥ न मोक्षः यतो देवमायया मोहितौ॥३९॥तदा तथाऽस्त्वित्येवं वरं दत्त्वा मयि गते सति प्राप्तमनोरथौ भूत्वा ग्राम्यभोगान् भुक्तवन्तौ॥४०॥ततो लोके मत्सममन्यमदृष्ट्वा वां पृश्निगर्भ इति सुतोऽभवम्॥४१॥ततोऽन्यजन्मन्यदित्यां कश्यपाद् वामनरूपेण वां सुतः आसम्॥४२॥अधुना तृतीये भवेऽपि तेनैव वपुषा

शीर्णपर्णानिलाहारावुपशान्तेन च चेतसा ॥ मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ॥३५॥ एवं वां तप्यतोस्तीव्रं तपः परमदुष्करम् ॥ दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥३६॥ तदा वां परितुष्टोऽहममुना वपुषाऽनघे ॥ तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥ ३७ ॥ प्रादुरासं वरदराड्युवयोः कामदित्सया ॥ व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३८ ॥ अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ॥ न वव्राथेऽपवर्गं मे मोहितौ देवमायया ॥ ३९ ॥ गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ॥ ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४० ॥ अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् ॥ अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥४१॥ तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ॥ उपेन्द्र इति विख्यातो वामनत्वाच्चवामनः ॥ ४२ ॥ तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाऽथ वाम् ॥ जातो भूयस्तयो-रेव सत्यं मे व्याहृतं सति ॥ ४३ ॥ एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ॥ नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥ ४४ ॥ युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ॥ चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥४५ ॥ यदि कंसाद् बिभेषि त्वं तर्हि मां गोकुलं नय ॥ मन्मायामानयाशु त्वं यशोदागर्भसंभवाम् ॥ ४६ ॥

जातोऽस्मि । हे सति ! एवं मे वचः सत्यम् ॥ ४३ ॥ किंच प्राग्जन्मस्मरणायेदं रूपं मया दर्शितम् । अन्यथा मज्जन्मज्ञानं मर्त्यशरीरेण नोत्पद्यते । अतः परं त्वदिच्छया बालोऽपि भविष्यामि ॥४४॥ हे पितरौ ! युवां पुत्रभावेनब्रह्मभावेन च चिन्तयन्तौ सन्तौ मद्गतिं यास्यथः ॥ ४५ ॥ हे वसुदेव ! यदि कंसाद् बिभेषि तर्हि मां गोकुलं नय, यशोदागर्भसंभवां मन्मायां चानय ॥ ४६ ॥

श्रीशुक उवाच ॥ एवं हरिरुक्त्वा पित्रोः पश्यतोः सद्यः प्राकृतः शिशुर्बभूव ॥ ४७ ॥ ततो वसुदेवो भगवदाज्ञया सुतं गृहीत्वा यदा बहिर्गन्तुमैच्छत् तदैव योगमाया यशोदायां व्रजे जाता ॥४८॥ तया हृतेन्द्रियवृत्तिषु द्वारपालेषु पौरेषु च शायितेषु सत्सुसर्वाः पिहितद्वारो बृहत्कपाटलोहकीलशृङ्खलैर्दुरत्यया अपि ॥४९॥ कृष्णवाहे वसुदेवे प्राप्ते सति ताः द्वारो विवृताः॥तदैव मन्दगर्जितः पर्जन्यो ववर्ष । तदैव शेषः फणैर्जलं निवारयन् जगाम॥५०॥ततः इन्द्रे वर्षति सति यमुनाऽगाधवेगोर्मिभिः फेनव्याप्ताऽतिभयानकभ्रमिशतैर्व्याप्ताऽपि रामस्य सिन्धुरिव मार्गं ददौ



श्रीशुक उवाच ॥ इत्युक्त्वाऽऽसीद्धरिस्तूष्णीं भगवानात्ममायया ॥ पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः॥४७॥ ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् ॥ यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाऽजनि नन्दजायया ॥ ४८ ॥ तया हृतप्रत्ययसर्ववृत्तिषु द्वास्स्थेषु पौरेष्वपि शायितेष्वथ ॥ द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृंखलैः ॥ ४९ ॥ ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्तन्त यथा तमो रवेः ॥ ववर्ष पर्जन्य उपांशुगर्जितः शेषोऽन्वगाद् वारिनिवारयन् फणैः ॥५०॥ मघोनि वर्षत्यसकृद्यमानुजा गम्भीरतोयौघजवोर्मिफेनिला ॥ भयानकावर्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥५१॥ नन्दव्रजं शौरिरुपेत्य तत्र तान् गोपान्प्रसुप्तानुपलभ्य निद्रया ॥ सुतं यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ॥५२॥ देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ॥ प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥५३॥ यशोदा नन्दपत्नी च जातं परमबुध्यत ॥ न तल्लिङ्गं परिश्रान्ता निद्रयाऽपगतस्मृतिः ॥५४॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे श्रीकृष्णजन्मनि तृतीयोऽध्यायः ॥ ३ ॥

अत्र विशेषः पराशरपुराणे--"यमुनांचातिगम्भीरां नानावर्तशताकुलाम् । वसुदेवो वहन् विष्णुं जानुमात्रजलां ययौ"इति । कृष्णांगुष्ठं स्पृष्ट्वा जानुमात्राऽभूदित्युक्तं पाद्मे॥५१॥ततो वसुदेवो व्रजं गत्वा मायया सुप्तान् गोपान् ज्ञात्वा यशोदाशयने सुतं निधाय तत्सुतां गृहीत्वा पुनर्गृहान् गत्वा ॥५२॥ तां देवकीशयने निधाय पादयोर्निगडं बद्ध्वा पूर्ववत् तस्थौ॥५३॥ नन्दपत्नी यशोदा च निद्रया गतस्मृतिः किंचिज्जातमिति बुबुधे न खलु कन्या पुत्रो वेति यतो योगमायया मोहिता ॥५४ ॥ इति श्रीभागवते चू० द० पू० श्रीकृष्णजन्मनि तृतीयोऽध्यायः ॥ ३ ॥



१ हृताः प्रत्ययाः अन्याश्च सर्वाः वृत्तयो येषां तादृशेषु । २ 'व्यशीर्यंत' इति पाठान्तरम् ।

चतुर्थे चण्डिकावाक्यमाकर्ण्यातिभयाकुलः ॥ दुर्मन्त्रिभिर्हितं मेने कंसो बालादिहिंसनम् ॥१॥श्रीशुक उवाच ॥ ततो बहिरन्तः पुरद्वारः श्रृङ्खलादिना पूर्ववद्बद्धाः । ततो द्वारपालाः बालध्वनिं श्रुत्वोत्थिताः सन्तः ॥१॥ तूर्णं राजमन्दिरं गत्वा कंसाय तदष्टमं जन्म कथयामासुः॥२॥ अथ कंसस्तल्पादुत्थाय मुक्तकेशः सूतिकागृहं जगाम ॥३॥ तदा देवकी कंसं दीनवाण्या जगाद हे भ्रातः ! इयं तव स्नुषा एनां हन्तुं नार्हसि ॥४॥ किंच हे कंस ! त्वया बहवः शिशवो हताः ॥ ५ ॥ हे भ्रातः ! इमां चरमां प्रजां कन्यारूपां मे दातुमर्हसि ॥ ६ ॥ श्रीशुक उवाच ॥

श्रीशुक उवाच ॥ बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः ॥ ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥ ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ॥ आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥ स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः ॥ सूतीगृहमगात्तूर्णं प्रस्खलन् मुक्तमूर्धजः ॥ ३ ॥ तमाह भ्रातरं देवी कृपणा करुणं सती ॥ स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥ बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ॥ त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥ नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ॥ दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥ श्रीशुक उवाच ॥ उपगुह्यात्मजामेवं रुदत्या दीनदीनवत् ॥ याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥ ७ ॥ तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् ॥ अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ॥ ८ ॥ सा तद्धस्तात् समुत्पत्य सद्यो देव्यम्बरं गता ॥ अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥ दिव्यस्रगम्बरालेपरत्नाभरणभूषिता ॥ धनुश्शूलेषुचर्मासिशंखचक्रगदाधरा ॥ १० ॥

एवं रुदत्या तया दीनवत् याचितः कंसस्तां निर्भर्त्स्य तद्धस्तात् कन्यामाकृष्य जग्राह ॥ ७ ॥ ततः कंसस्तां चरणयोर्गृहीत्वा शिलोपरि बलेन चिक्षेप ॥८॥ सा तद्धस्तादुत्पत्य सद्यो देवी भूत्वा गगने स्थिता सती तत्रायुधसहिताऽष्टभुजा ददृशे ॥९॥ तथा दिव्यगन्धपुष्पमालावस्त्रालंकारैर्भूषिता धनुश्शूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ १० ॥

दत्तबलिभिः सिद्धचारणादिभिः स्तूयमाना जगाद ॥११॥ हे मन्द ! मया हतया किं यत्र क्व वा तव शत्रुर्जातोऽस्ति दीनशिशून् मा हिंसीः ॥१२॥ एवं प्रभाष्य देवी काश्यादिबहुस्थानेषु बहुनामा बभूव ॥ १३ ॥ कंसस्तयोक्तं श्रुत्वा विस्मितः सन् देवकीं वसुदेवं च शृङ्खलायाः विमुच्य नम्रो भूत्वा जगाद ॥१४॥ हे भगिनि ! हे भाम ! मया युवयोः पुत्राः बहवो हिंसिताः ॥ १५ ॥ सोऽहं निर्दयः सन् ब्रह्महेव श्वसन् कान् लोकान् गमिष्यामि ॥१६॥ किंच दैवमपि मिथ्या वक्ति न मर्त्य एव यतः आकाशवाण्याः विश्वासात् पापः अहं शिशून् हतवान् ॥१७॥

सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः ॥ उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥ किं मया हतया मन्द जातः खलु तवान्तकृत् ॥ यत्र क्व वा पूर्वशत्रुर्मा हिंसीः कृपणान् वृथा ॥१२॥ इति प्रभाष्य तं देवी माया भगवती भुवि ॥ बहुनामनिकेतेषु बहुनामा बभूव ह ॥ १३ ॥ तयाऽभिहितमाकर्ण्य कंसः परमविस्मितः ॥ देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ १४ ॥ अहो भगिन्यहो भाम मया वां बत पाप्मना ॥ पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ॥ १५ ॥ स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत् खलः ॥ काँल्लोकान् वै गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥१६॥ दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् ॥ यद्विस्रम्भादहं पापः स्वसुर्निहतवान् शिशून् ॥ १७ ॥ मा शोचतं महाभागावात्मजान् स्वकृतं भुजः ॥ जन्तवो न सदैकत्र दैवाधीनाः सहासते॥१८॥भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च ॥ नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥ १९॥ यथानेवंविदो भेदो यत आत्मविपर्ययः ॥ देहयोगवियोगौ च संसृतिर्न निवर्तते॥२०॥तस्माद्भद्रे स्वतनयान् मया व्यापादितानपि ॥ माऽनुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः॥२१॥

अतो युवां पुत्रान् स्वकृतं भुक्तवतः प्रति मा शोचतं यतो जन्तवो दैवाधीनाः सदैकत्र न आसते ॥१८॥ किंच देहा एव भवन्ति न भवन्ति च यथा भुवि घटादीनि न त्वात्मा ॥ १९ ॥ एवमजानतः पुंसो देहात्मबुद्धिर्भवति । तया भेदः भेदाद्देहयोगवियोगौ । ततः सुखदुःखे ॥ २० ॥ अतो हे भद्रे ! पुत्रान् माऽनुशोच । यतः प्राणी पराधीनः सन् स्वकृतं भुङ्क्ते ॥ २१ ॥



१ हे भगिनीभर्तः । २ राक्षसः यथा स्वापत्यानि हिनस्ति तद्वदिति शेषः । ३ 'महाभागौ स्वात्मजान्' इ० पा० ।

यावद्धतो हन्ताऽस्मीत्यात्मानं मन्यते तावदज्ञो बाध्यबाधकतामियात् ॥२२॥ हे दीनवत्सलाः ! मम दौरात्म्यं क्षमध्वम् । एवमुक्त्वाऽश्रुमुखः कंसस्तयोः पादावग्रहीत् ॥२३॥ ततः आत्मसौहृदं दर्शयन् तौ निगडान्मोचयामास ॥२४॥ ततोऽनुतप्तस्य कंसस्य क्षान्त्वा देवकी रोषं व्यसृजत् । वसुदेवश्च तं जगाद ॥ २५ ॥ हे कंस ! यथा त्वं वदसि तथा, अज्ञानादहंकारबुद्धिः ततः स्वपरभेदः ततश्च शोकहर्षादयः ॥ २६ ॥

यावद्धतोऽस्मि हन्ताऽस्मीत्यात्मानं मन्यते स्वदृक् ॥ तावत्तदभिमान्यज्ञो बाध्यबाधकतामियात् ॥२२॥ क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः ॥ इत्युक्त्वाऽश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत् ॥२३॥ मोचयामास निगडाद्विस्रब्धः कन्यकागिरा ॥ देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥ २४ ॥ भ्रातुः समनुतप्तस्य क्षान्त्वा रोषं च देवकी ॥ व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥ एवमेतन्महाभाग यथा वदसि देहिनाम् ॥ अज्ञानप्रभवाऽहंधीः स्वपरेति भिदा यतः ॥ २६ ॥ शोकहर्षभयद्वेषलोभमोहमदान्विताः ॥ मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ २७ ॥ श्रीशुक उवाच ॥ कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः ॥ देवकी वसुदेवाभ्यामनुज्ञातोऽविशद् गृहम् ॥ २८ ॥ तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः ॥ तेभ्य आचष्ट तत्सर्वं यदुक्तं योगनिद्रया ॥ २९ ॥ आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः ॥ देवान् प्रति कृतामर्षा दैतेया नातिकोविदाः ॥३०॥ एवं चेत्तर्हि भोजेन्द्र पुरग्रामव्रजादिषु ॥ अर्निर्दशान् निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥ ३१ ॥ किमुद्यमैः करिष्यन्ति देवाः समरभीरवः ॥ नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥

॥ २७ ॥ श्रीशुक उवाच ॥ एवं तयोर्वचः श्रुत्वा कंसस्तदाज्ञां गृहीत्वा गृहं विवेश ॥२८॥ ततस्तस्यां रात्र्यां गतायां कंसो मन्त्रिणः आहूय योगमाययोक्तं सर्वं तेभ्यः आह ॥२९॥ एवं कंसवचः श्रुत्वा ते देवशत्रवस्तं जगदुः ॥३०॥ हे भोजेन्द्र ! एवं चेत् तर्हि पुरग्रामव्रजादिषु सर्वान् शिशूनद्य हनिष्यामः ॥ ३१ ॥ तव धनुर्ज्याशब्दैरुद्विग्नाः देवा उद्यमैः किं करिष्यन्ति ॥ ३२ ॥

१ द्विवचनबलात् स्वसृतत्पत्योरित्यर्थः । २ क्षान्तरोषा चेति पाठोऽपि । ३ भेदबुद्धयो भावैरेव निमित्तभूतैर्मिथो भावान् घ्नन्तं भावमीश्वरं न पश्यन्तीत्यर्थः । ४ न निर्गतानि दश दिनानि येषां तान् ।

तव बाणैर्हन्यमानाः देवाः संग्रामं त्यक्त्वा पलायनं चक्रुः॥३३॥तत्र केचित् प्राञ्जलयः केचिद् मुक्तकच्छशिखाः केचिद् भीताः स्म इति वादिनः स्युः ॥३४॥ त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयातुरान् देवान् न हिनस्सि॥३५॥निर्भयदेशे शूरैर्देवैः किम्। बहिरदृष्टेन हरिणा किम् । वनस्थितेन शम्भुना किम् ॥३६॥ अल्पवीर्येणेन्द्रेण किम् । तपः कुर्वता ब्रह्मणा किम् । अथापि शत्रुत्वाद्देवाः न सोढव्याः इति मन्महे । अतो देवानां

अस्यंतस्ते शरव्रातैर्हन्यमानाः समन्ततः ॥ जिजीविषव उत्सृज्य पलायनपरा ययुः ॥३३॥ केचित् प्राञ्जलयो दीना न्यस्तशस्त्रा दिवौकसः ॥ मुक्तकच्छशिखाः केचित् केचिद् भीताः स्म वादिनः ॥३४॥ न त्वं विस्मृतशस्त्रास्त्रान्विरथान् भयसंवृतान् ॥ हंस्यन्यासक्तविमुखान् भग्नचापानयुध्यतः ॥ ३५ ॥ किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ॥ रहोजुषा किं हरिणा शंभुना वा वनौकसा ॥ ३६ ॥ किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥ तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ॥ ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥३७॥ यथाऽमयोऽङ्गे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुम् ॥ यथेन्द्रियग्राम उपेक्षितस्तथा रिपुर्महान् बद्धबलो न चाल्यते ॥ ३८ ॥ मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः ॥ तस्य च ब्रह्मगोविप्रास्तपोयज्ञाः सदक्षिणाः ॥ ३९ ॥ तस्मात् सर्वात्मना राजन् ब्राह्मणान् ब्रह्मवादिनः ॥ तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः ॥ ४० ॥ विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ॥ श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥४१॥ स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ॥ तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥ अयं वै तद्वधोपायो यदृषीणां विहिंसनम् ॥ ४२ ॥

मूलखनने आज्ञां देहि॥३७॥हे कंस ! यथा शरीरे समुपेक्षितो रोगो वृद्धः सन् चिकित्सितुं न शक्यते एवं बद्धबलो रिपुर्न चाल्यते॥३८॥हे प्रभो! देवानां मूलं विष्णुः । तन्मूलं धर्मः । तन्मूलं वेदगोविप्रतपोयज्ञाः ॥३९॥ अतस्तपस्विनो विप्रान् हविर्दुघा गाश्च हनिष्यामः ॥४०॥ किंच विप्रगोदेववेदतपआदयो हरेस्तनवः ॥ ४१ ॥ हरिः सर्वदेवानामीशः तन्मूलाः ब्रह्मादिसर्वदेवाः । अतो यदृषीणां हिंसनं तत् तद्वधोपायः ॥४२॥



१ विघ्यंतः सतः। २ अन्यासक्तान् विमुखान्।

श्रीशुक उवाच ॥ एवं कंसो दुर्मन्त्रिभिः सह विचार्य कालपाशेन वेष्टितः सन् ब्रह्महिंसां हितं मेने ॥ ४३ ॥ ततो दैत्यान् लोकनाशार्थमादिश्य गृहं ययौ ॥ ४४ ॥ ततस्ते दैत्याः सतां द्वेषमाचेरुः यतः समीपप्राप्तमृत्यवः ॥ ४५ ॥ सतां विद्वेषः पुरुषस्य यशोधर्मादीनि सर्वाणि हन्ति ॥ ४६ ॥ इति श्रीभागवते महापुराणे चूर्णिकायां दशमस्कन्धे पू० चतुर्थोऽध्यायः ॥ ४ ॥ पञ्चमे जातकं नन्दः सूनोः कृत्वा महोत्सवम् ॥ गत्वाऽथ मथुरां प्राप वसुदेवागमोत्सवम् ॥१॥ श्रीशुक उवाच ॥ अथ नन्दः पुत्रे उत्पन्ने सति जाताह्लादः स्नातो दैवज्ञान् विप्रानाहूय

श्रीशुक उवाच ॥ एवं दुर्मन्त्रिभिः कंसः सह संमन्त्र्य दुर्मतिः ॥ ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥४३॥ संदिश्य साधुलोकस्य कदने कदनप्रियान् ॥ कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ॥ ४४ ॥ ते वै रजःप्रकृतयस्तमसा मूढचेतसः ॥ सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥४५॥ आयुः श्रियं यशो धर्मं लोकानाशिष एव च ॥ हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ ४६ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पू० कंसाज्ञप्तकृतबालादिहिंसनं नाम चतुर्थोऽध्यायः ॥४॥ श्रीशुक उवाच ॥ नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ॥ आहूय विप्रान् दैवज्ञान् स्नातः शुचिरलंकृतः ॥ १ ॥ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ॥ कारयामास विधिवत् पितृदेवार्चनं तथा ॥ २ ॥ धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृते ॥ तिलाद्रीन् सप्त रत्नौघशातकौम्भाम्बरावृतान् ॥ ३ ॥ कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ॥ शुध्यन्ति दानैः संतुष्ट्या द्रव्याण्यात्माऽऽत्मविद्यया ॥ ४ ॥ सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः ॥ गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥ ५ ॥

॥ १ ॥ ततस्तैः स्वस्त्ययनं वाचयित्वा पुत्रस्य जातकर्म कारयामास ॥ २ ॥ ततो नन्दो विप्रेभ्यो धेनूनां लक्षद्वयं तथा वस्त्ररत्नयुतान् सप्ततिलपर्वतान् ददौ ॥ ३ ॥ यतः कालादिना भूम्यादिशुद्धिः दानेन द्रव्यशुद्धिः संस्कारैर्गर्भशुद्धिः तपसेन्द्रियशुद्धिः स्यात् ॥ ४ ॥ ततो विप्रसूतमागधवन्दिनां मङ्गलवाण्यो बभूवुः गायकाः जगुः । भेरीदुन्दुभयो नेदुः ॥ ५ ॥

---

१ रत्नौघैः शातकौम्भैः सुवर्णरसाक्तैरम्बरैश्चावृतान् । २ स्नानेन देहादेः शुद्धिः । शौचेनामेध्यलिप्तादेः इज्यया ब्राह्मणादेः । संतुष्ट्या मनसः । जीवस्य चाध्यात्मविद्यया ।

चित्रध्वजपताकातोरणादिभिर्भूषितो व्रजोऽभूत् ॥ ६ ॥ गो वृषवत्साः हरिद्रातैललिप्ता विचित्रधातुमालाभिर्भूषिता बभूवुः ॥ ७ ॥ गोपाः अमूल्यवस्त्राभरणैर्भूषिताः नानोपायनपाणयः आययुः ॥ ८ ॥ गोप्यो यशोदायाः सुतोद्भवं श्रुत्वा वस्त्रालंकारादिभिरात्मानमलंकृत्य पृथुश्रोण्यो बलिभिः सह त्वरितं जग्मुः ॥ ९ ॥ १० ॥ एवं नन्दगृहं गच्छन्त्यश्चित्राम्बराः पथि शिखाच्युतपुष्पवर्षाः सकङ्कणा गोप्यो मार्गे विरेजुः ॥११॥ ततस्तत्र गत्वा चिरं पाहीति बालके आशिषः प्रयुञ्जानाः हरिद्राचूर्णतैलजलैर्जनं सिञ्चन्त्यः उज्जगुः ॥१२॥ कृष्णे व्रजमागते

व्रजः संमृष्टसंसिक्तद्वाराजिरगृहान्तरः ॥ चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥ ६ ॥ गावो वृषा वत्सतरा हरिद्रातैलरूषिताः ॥ विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥७॥ महार्हवस्त्राभरणाः कञ्चुकोष्णीषभूषिताः ॥ गोपाः समाययू राजन्नानोपायनपाणयः ॥ ८ ॥ गोप्यश्चाकर्ण्य मुदिताः यशोदायाः सुतोद्भवम् ॥ आत्मानं भूषयांचक्रुर्वस्त्राकल्पाञ्जनादिभिः ॥९॥ नवकुङ्कुमकिञ्जल्कमुखपङ्कजभूतयः ॥ बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥१०॥ गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यश्चित्राम्बराः पथिशिखाच्युतमाल्यवर्षाः ॥ नन्दालयं सवलया व्रजतीर्विरेजुर्व्याललोलकुण्डलपयोधरहारशोभाः ॥११॥ ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके ॥ हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्यो जनमुज्जगुः ॥१२॥ अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे ॥ कृष्णे विश्वेश्वरेऽनन्ते नन्दस्य व्रजमागते ॥१३॥ गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः ॥ आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः ॥१४॥ नन्दो महामनास्तेभ्यो वासोऽलंकारगोधनम् ॥ सूतमागधबन्दिभ्यो येऽन्ये विद्योपजीविनः ॥ १५ ॥ तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ॥ विष्णोराधनार्थाय स्वपुत्रस्योदयाय च ॥१६॥ रोहिणी च महाभागा नन्दगोपाभिनन्दिता ॥ व्यचरद्दिव्यवासस्स्रक्कण्ठाभरणभूषिता ॥१७॥

विचित्रवाद्यानि व्यवाद्यन्त ॥१३॥ गोपाः मिथो हृष्टाः दधिक्षीरादिभिः सिञ्चन्तो नवनीतैर्लिम्पन्तस्तानि च मिथश्चिक्षिपुः ॥ १४ ॥ अथ नन्दस्तेभ्यः सूतमागधबन्दिभ्यश्च वासोऽलंकारादि प्रादात् ॥१५॥ तथा येऽन्ये विद्योपजीविनस्तान् स्वपुत्रोदयार्थं कामैरपूजयत् ॥ १६ ॥ ततो रोहिणी दिव्यवस्त्रालंकारादिभिर्भूषिता सती तत्र व्यचरत् ॥ १७ ॥



१ नवकुंकुमकिञ्जल्कैर्मुखपङ्कजेषु भूतिर्यासां ताः ।

तद्दिनमारभ्य नन्दव्रजः सर्वसमृद्धिमानासीत् ॥१८॥ हे राजन् ! एकदा नन्दो गोकुलरक्षार्थं गोपान् स्थापयित्वा कंसस्य प्रतिवर्षं देयं करं दातुं मथुरां गतः ॥ १९ ॥ तदा वसुदेवो नन्दमागतं श्रुत्वा राज्ञे दत्तकरं च ज्ञात्वा तस्य वासस्थानं शकटोत्तारभूमिं ययौ ॥ २० ॥ नन्द आगतं तं दृष्ट्वोत्थाय प्रीतः सन् दोर्भ्यामालिङ्गितवान् ॥२१॥ ततस्तेन पूजितः कुशलं पृष्टः आसीनो वसुदेवः इदमाह ॥२२॥ हे भ्रातः !

तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् ॥ हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप ॥ १८ ॥ गोपान् गोकुलरक्षायां निरूप्य मथुरां गतः ॥ नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ॥१९॥ वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम् ॥ ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम् ॥२०॥ तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ॥ प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥२१॥ पूजितः सुखमासीनः पृष्ट्वाऽनामयमादृतः ॥ प्रसक्तधीःस्वात्मजयोरिदमाह विशांपते ॥२२॥ दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ॥ प्रजाशाया निवृत्तस्य प्रजा यत् समपद्यत ॥२३॥ दिष्ट्या संसारचक्रेऽस्मिन् वर्तमानः पुनर्भवः ॥ उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥२४॥ नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ॥ ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥ २५ ॥ कच्चित् पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् ॥ बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥ २६ ॥ भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे ॥ तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥२७॥ पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः ॥ न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥ २८ ॥

अप्रजस्य तव प्रजा यत् समपद्यत तद् दिष्ट्या ॥ २३ ॥ किंच अत्र संसारचक्रे वर्तमानो भवान् पुनर्जात इव मया प्राप्तः एतद् दिष्ट्या इदं प्रियदर्शनं दुर्लभम् ॥ २४ ॥ यतः प्रियसंवासः एकत्र न यथा नद्या ओघेन तृणादीनां तद्वत् ॥२५॥ हे नन्द ! तद् वनं कुशलं कच्चित् यत्र त्वं सुहृद्वृतः आस्से ॥ २६ ॥ हे भ्रातः ! मम सुतो मात्रा सह त्वां तातं मन्वानः सुखी कच्चित् ॥ २७ ॥ हे नन्द ! बन्धून् प्रति संपादितो यस्त्रिवर्गः स एव पुंसो योग्यः ॥ २८ ॥

---

१ हरेर्निवासेन य आत्मनि गुणाः सर्वप्रियत्वादयस्तैः । २ लक्ष्मीविहारस्थानम् ।

नन्द उवाच ॥ अहो हे वसुदेव ! तव पुत्राः कंसेन बहवो हताः एका कन्याऽवशिष्टा साऽपि दिवं गता ॥२९॥ हे भ्रातः त्वया दुःखं न भावनीयम् ॥३०॥ वसुदेव उवाच ॥ हे नन्द ! त्वया राज्ञे वार्षिकः करो दत्तः युष्माभिर्वयं च दृष्टाः । अत्र बहुकालं न स्थेयम् । इदानीं गोकुले उत्पाताः सन्ति ॥३१॥ श्रीशुक उवाच ॥ ततो नन्दादयो गोपाः वसुदेवोक्तं श्रुत्वा तमनुज्ञाप्य शकटैर्गोकुलं ययुः ॥३२॥ इति श्रीभाग० चू० दशम० पू० पञ्चमोऽध्यायः ॥ ५ ॥ षष्ठे सख्युर्गिरा नन्दो व्रजं गच्छन् मृतां पथि ॥ दृष्ट्वा तु राक्षसीं तस्या मृत्युं श्रुत्वाऽथ विस्मितः॥१॥

नन्द उवाच ॥ अहो ते देवकीपुत्राः कंसेन बहवो हताः ॥ एकाऽवशिष्टाऽवरजा कन्या साऽपि दिवं गता ॥ २९ ॥ नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः॥ अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति॥३०॥वसुदेव उवाच ॥ करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः ॥ नेह स्थेयं बहुतिथं सन्त्युत्पाताश्च गोकुले ॥ ३१ ॥ श्रीशुक उवाच ॥ इति नन्दादयो गोपाः प्रोक्तास्ते शौरिणा ययुः ॥ अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम् ॥ ३२ ॥ इति श्रीभागवते महा० दशमस्कन्धे पू० नन्दवसुदेवसंगमो नाम पञ्चमोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ नन्दः पथि वचः शौरेर्न मृषेति विचिन्तयन् ॥ हरिं जगाम शरणमुत्पातागमशङ्कितः ॥ १ ॥ कंसेन प्रहिता घोरा पूतना बालघातिनी ॥ शिशूंश्चचार निघ्नन्ती पुरग्रामव्रजादिषु ॥२॥ न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु ॥ कुर्वन्ति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ॥३॥सा खेचर्येकदोपेत्य पूतना नन्दगोकुलम् ॥ योषित्वां माययाऽऽत्मानं प्राविशत् कामचारिणी॥४॥ तां केशबन्धव्यतिषक्तमल्लिकां बृहन्नितम्बस्तनकृच्छ्रमध्यमाम्॥सुवाससं कम्पितकर्णभूषणत्विषोल्लसत्कुन्तलमण्डिताननाम् ॥५॥

श्रीशुक उवाच ॥ अथ नन्दः शौरेर्वचो न मृषेति पथि चिन्तयन् हरिं शरणं जगाम॥१॥एतर्हि कंसेन प्रेषिता बालघातिनी पूतना पुरग्रामव्रजादिषु शिशून् घ्नन्ती सती चचार ॥२॥ हे नृप ! यत्र हरेः श्रवणादीनि न सन्ति तत्रैव रक्षोबलम्। साक्षाद् हरौ तद्भयं नेति किं पुनर्वक्तव्यम्॥३॥ ततः सा खेचरी कदाचित् स्त्रीवेषं धृत्वा व्रजं प्राविशत् ॥४॥ तां केशबन्धसंसक्तमल्लिकाकुसुमां कृशोदरीं सुवाससं कर्णभूषणादियुताम् ॥५॥



१ अदृष्ट एव निष्ठा समाप्तिर्यस्य सः । २ योषित्वा वेषतो वरां नारीमेवात्मानं विधाय ।

सुन्दरहास्यकटाक्षावलोकनादिभिर्व्रजौकसां मनो हरन्तीं पतिदर्शनार्थं प्राप्तां लक्ष्मीमिव गोप्यो मेनिरे॥६॥ततः सा शिशून् विचिन्वती यदृच्छया नन्दगृहे दुष्टानामन्तकं बालं तल्पे ददर्श ॥७॥ तदा हरिर्बालकमारिकां तां ज्ञात्वा मीलितेक्षणः आस । सा तं बालं गृहीत्वाऽङ्कमारोपयत् ॥८॥ तां तीक्ष्णचित्तां मातुरिव चेष्टितां पूतनां निरीक्षमाणे तत्प्रभया धर्षिते यशोदारोहिण्याववतिष्ठतां न निवारितवत्यौ॥९॥ ततः सा घोरा बालमङ्के निवेश्य तस्मै दुर्जरविषं स्तनं ददौ।अथ भगवान् तं स्तनं कराभ्यां गाढं प्रपीड्य प्राणैः सह पपौ ॥१०॥ ततः सा मुञ्च मुञ्चेति भाषिणीनेत्रे

वल्गुस्मितापाङ्गविसर्गवीक्षितैर्मनो हरन्तीं वनितां व्रजौकसाम्॥अमंसताम्भोजकरेण रूपिणीं गोप्यः श्रियं द्रष्टुमिवागतां पतिम् ॥६॥ बालग्रहस्तत्र विचिन्वती शिशून्यदृच्छया नन्दगृहेऽसदन्तकम् ॥ बालं प्रतिच्छन्ननिजोरुतेजसं ददर्श तल्पेऽग्निमिवाहितं भसि[1]॥७॥ विबुध्य तां बालकमारिकाग्रहं चराचरात्मा स निमीलितेक्षणः ॥ अनन्तमारोपयदङ्कमन्तकं यथोरगं सुप्तमबुद्धिरज्जुधीः[2] ॥८॥ तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यान्तरा[3] कोशपरिच्छदासिवत्[4] ॥ वरस्त्रियं तत्प्रभया च धर्षिते निरीक्षमाणे जननी ह्यतिष्ठताम् ॥ ९ ॥ तस्मिन् स्तनं दुर्जरवीर्यमुल्बणं घोराऽङ्कमादाय शिशोर्ददावथ ॥ गाढं कराभ्यां भगवान्प्रपीड्य तत्प्राणैः समं रोषसमन्वितोऽपिबत् ॥ १० ॥ सा मुञ्च मुञ्चालमिति प्रभाषिणी निष्पीड्यमानाऽखिलजीवमर्मणि ॥ विवृत्य नेत्रे चरणौ भुजौ मुहुः प्रस्विन्नगात्राक्षिपती रुरोद ह ॥११॥ तस्याः स्वनेनातिगभीररंहसा साद्रिर्मही द्यौश्च चचाल सग्रहा ॥ रसा दिशश्च प्रतिनेदिरे जनाः पेतुः क्षितौ वज्रनिपात शङ्कया ॥१२॥ निशाचरीत्थं व्यथितस्तना व्यसुर्व्यादाय केशांश्चरणौ भुजावपि ॥ प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन्नृप ॥ १३ ॥

विवृत्य चरणौ च क्षिप्त्वा परिस्वेदव्याप्ता सती रुरोद॥११॥तस्याः शब्देन साद्रिर्मही चचाल,रसातलानि दिशश्च प्रतिनेदुः।तदा जनाः वज्रपातशंकया क्षितौ पेतुः॥१२॥इत्थं निशाचरी गतप्राणा सती मुखं विवृत्य केशचरणभुजान् प्रसार्य व्रजे स्वस्वरूपेण स्थिता सती वज्रहतो वृत्र इव पपात॥१३॥

१ भस्मनि। २ अबुद्धिरज्ञानी चासौरज्जुधीश्च। ३ गृहमध्ये। ४ कोशाभ्यन्तरनिहितखड्गवत्।

पतन्नपि तद्देहः षट्क्रोशमध्यवर्तिवृक्षान् चूर्णीचकार॥१४॥ ततः गिरिकन्दरनासिकम्॥१५॥अन्धकूपसदृशनेत्रं जलहीनहृदोदरं तस्या देहं दृष्ट्वा गोपाः गोप्यश्च त्रेसुः ॥१६॥१७॥ ततस्तस्याः उरसि क्रीडन्तं बालं दृष्ट्वा गोप्यः एत्य जगृहुः ॥१८॥ ततो यशोदारोहिणीभ्यां सहिताः गोप्यो बालस्य गोपुच्छभ्रमणादिभिः रक्षां चक्रिरे ॥१९॥ततस्तं गोमूत्रेण स्नापयित्वा गोरजसा रक्षां कृत्वा तथा ललाटादिषु द्वादशाङ्गेषु गोमयेन केशवादिनामभिः रक्षां चक्रुः॥२०॥ ततो गोप्य आचम्य बालके बीजन्यासं चक्रुः । हे कृष्ण ! अजस्तव चरणौ पातु । अणिमान् तव जानुनी

पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् ॥ चूर्णयामास राजेन्द्र महदासीत्तदद्भुतम्॥१४॥ईषामात्रोग्रदंष्ट्रास्यं गिरिक-न्दरनासिकम् ॥ गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥ १५ ॥ अन्धकूपगभीराक्षं पुलिनारोहभीषणम् ॥ बद्धसेतु-भुजोर्वङ्घ्रि शून्यतोयहृदोदरम् ॥ १६ ॥ संतत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरम् ॥ पूर्वं तु तन्निःस्वनितभिन्न-हृत्कर्णमस्तकाः॥१७॥ बालं च तस्या उरसि क्रीडन्तमकुतोभयम् ॥ गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः ॥१८॥ यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः ॥ रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥ १९ ॥ गोमूत्रेण स्नाप-यित्वा पुनर्गोरजसाऽर्भकम् ॥ रक्षां चक्रुश्च शकृता द्वादशांगेषु नामभिः ॥ २० ॥ गोप्यः संस्पृष्टसलिला अंगेषु करयोः पृथक् ॥ न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥२१॥ अव्यादजोऽङ्घ्रिमणिमांस्तव जान्वथोरू यज्ञोऽ-च्युतः कटितटं जठरं हयास्यः ॥ हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥२२॥ चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ॥ कोणेषु शंख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात ॥ २३ ॥

पातु । यज्ञः ऊरू पातु । अच्युतः कटितटं पातु । हयशिराः उदरं पातु । केशवो हृदयं पातु । ईशः उरःस्थलं पातु । इनः कण्ठं पातु । विष्णु-र्भुजौ पातु । उरुक्रमो मुखं पातु । ईश्वरः शिरः पातु॥२१॥२२॥चक्रधरो हरिरग्रेऽस्तु। गदाधरो हरिः पश्चादस्तु ।चापधरो मधुसूदनो दक्षिणेऽस्तु खड्गधरोऽजनो वामेऽस्तु। चतुष्कोणेषु शङ्खधरः उरुगायो रक्षतु । उपेन्द्र उपरि रक्षतु । ताक्ष्र्योऽधो रक्षतु । हलधरः आसमन्तात् पातु ॥२३॥

१ ईषा लाङ्गलदण्डः तत्प्रमाणोग्रा दंष्ट्रा यस्मिंस्तथाविधमास्यं यस्य तत् । २ पुलिनवद् विशालाभ्यामारोहाभ्यां जघनाभ्यां भीषणम् । ३ बद्धा सेतव इव भुजावूरू अङ्घ्री च यस्मिन् तत् ।

हृषीकेशः इंद्रियाणि पातु । नारायणः प्राणान् रक्षतु । श्वेतद्वीपपतिश्चित्तं रक्षतु । योगेश्वरो मनो रक्षतु ॥२४॥ पृश्निगर्भो बुद्धिं रक्षतु । भगवानहंकारं रक्षतु । गोविन्दः क्रीडन्तं रक्षतु । माधवः शयानं रक्षतु ॥२५॥ वैकुण्ठो व्रजन्तं रक्षतु । श्रीपतिरासीनं रक्षतु । यज्ञभुग्भुञ्जानं रक्षतु ॥२६॥ तथा डाकिन्यो यातुधान्यो भूतप्रेतपिशाचादयस्तथा कोटरारेवतीज्येष्ठापूतनादयोऽपस्मारादिरोगाः ॥ २७ ॥२८॥ तथा स्वप्नदृष्टाः

इन्द्रियाणि हृषीकेशः प्राणान् नारायणोऽवतु ॥ श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ २४ ॥ पृश्निगर्भश्च ते बुद्धिमात्मानं भगवान् परः ॥ क्रीडन्तं पातु गोविंदः शयानं पातु माधवः ॥ २५ ॥ व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियः पतिः ॥ भुञ्जानं यज्ञभुक्पातु सर्वग्रहभयंकरः ॥ २६ ॥ डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः ॥ भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥ २७ ॥ कोटरारेवतीज्येष्ठापूतनामातृकादयः ॥ उन्मादा ये ह्यपस्मारादेहप्राणेन्द्रियद्रुहः ॥ २८ ॥ स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ॥ सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ ॥२९॥ श्रीशुक उवाच ॥ इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणम् ॥ पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥ ॥ ३० ॥ तावन्नन्दादयो गोपा मथुराया व्रजं गताः ॥ विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ॥ ३१ ॥ नूनं बतर्षिः सञ्जातो योगेशो वा समास सः[1] ॥ स एव दृष्टो ह्युत्पातो यदाहानकदुन्दुभिः ॥ ३२ ॥ कलेवरं परशुभिश्छित्त्वा तत्ते व्रजौकसः ॥ दूरे क्षिप्त्वावयवशो न्यदहन् काष्ठवेष्टितम् ॥ ३३ ॥ दह्यमानस्य देहस्य धूमश्चागुरुसौरभः ॥ उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥ ३४ ॥

महोत्पाताः वृद्धबालग्रहाश्च सर्वे विष्णोर्नामग्रहणान्नश्यन्तु ॥ २९ ॥ एवं गोपीभिः कृतरक्षणं सुतं स्तन्यं पाययित्वा शाययामास ॥ ३० ॥ तावन्नन्दादिगोपाः व्रजमेत्य तद्देहं दृष्ट्वा विस्मिताः बभूवुः आहुश्च॥३१॥अहो नूनं वसुदेवः ऋषिः संजातः । यतः स यदाह सोऽयमुत्पातो दृष्टः ॥ ३२ ॥ ततो गोपाः परशुभिस्तद्देहं खण्डानि कृत्वा दूरे क्षिप्त्वा न्यदहन् ॥ ३३ ॥ ततस्तद्देहात् सुगन्धतुल्यो धूमः उत्थितः ॥ ३४ ॥

---

१ सम्यगास ।

हे नृप ! एवं सा राक्षसी हरये जिघांसया स्तनं दत्त्वाऽपि सद्गतिं प्राप ॥ ३५ ॥ किं पुनः श्रद्धया भक्त्या तस्मै कृष्णाय प्रियं यच्छन् सद्गतिं प्राप्नोतीति वक्तव्यम्॥३६॥भक्तहृदिस्थाभ्यां पद्भ्यां यस्याः अङ्गमाक्रम्य स्तनं पपौ॥३७॥सा राक्षसी मातृगतिं स्वर्गं प्राप।कृष्णभुक्तस्तनक्षीरा गावो मातरश्च प्राप्नुवन्तीति किं वक्तव्यम् ॥३८॥ यासां दुग्धानि मोक्षदः कृष्णः पपौ ॥३९॥ तासां कृष्णावलोकनं कुर्वतीनां संसारः पुनर्न

पूतना लोकबालघ्नी राक्षसी रुधिराशना ॥ जिघांसयाऽपि हरये स्तनं दत्त्वाऽपि सद्गतिम् ॥ ३५ ॥ किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ॥ यच्छन्प्रियतमं किं नु रक्तास्तन्मातरो यथा ॥ ३६ ॥ पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः ॥ अङ्गं यस्याः समाक्रम्य भगवानपिबत् स्तनम् ॥३७॥ यातुधान्यपि सा स्वर्गमवाप जननीगतिम् ॥ कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥ ३८॥ पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् ॥ भगवान्देवकीपुत्रः कैवल्याद्यखिलप्रदः ॥ ३९ ॥ तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् ॥ न पुनः कल्पते राजन्संसारोऽज्ञानसम्भवः ॥४०॥ कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः ॥ किमिदं कुत एवेति वदन्तो व्रजमाययुः ॥४१॥ ते तत्र वर्णितं गोपैः पूतनागमनादिकम् ॥ श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन्सुविस्मिताः ॥ ४२ ॥ नंदः स्वपुत्रमादाय प्रेत्यागतमुदारधीः ॥ मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ॥ ४३ ॥ य एतत्पूतनामोक्षं कृष्णस्यार्भकमद्भुतम् ॥ शृणुयाच्छ्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥ ४४ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे पूतनामोक्षोनाम षष्ठोऽध्यायः ॥ ६ ॥

संभवति ॥४०॥ ततोऽन्ये व्रजौकसः कटधूमस्य सुगन्धं घ्रात्वा किमिति वदन्तो नन्दव्रजं ययुः ॥४१॥ ततस्ते गोपैः पूतनागमनादि तन्निधनं शिशोः कुशलं चोक्तं श्रुत्वा विस्मिताः आसन्॥४२॥ततो नन्दः स्वपुत्रं प्रेत्यागतमिव गृहीत्वा मूर्ध्निघ्रात्वा हर्षं लेभे ॥४३॥ हे नृप ! यः श्रद्धया पूतनामोक्षं कृष्णस्य बालचरितं शृणुयात् स गोविंदे प्रीतिं लभते॥४४॥इति श्रीभाग० महा० चूर्णिकायां दशमस्कन्धे पूर्वार्धे षष्ठोऽध्यायः ॥६॥

उत्क्षिपन् शकटं व्योम्नि तृणावर्तमधः क्षिपन्। दर्शयन् विश्वमास्ये च कृष्णः क्रीडति सप्तमे ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन्! भगवान् मत्स्याद्यवतारेण यानि चरितानि करोति तानि नः कर्णसुखानि भवन्ति ॥१॥ हे शुक! यच्चरितं शृण्वतः पुंसो मनोग्लानिस्तृष्णा च गच्छति तथा चित्तशुद्धिर्भक्तसख्यानि च भवन्ति ॥२॥ अथान्यत् कृष्णस्य बालचरितं वद ॥३॥ श्रीशुक उवाच। हे नृप! एकदा शिशोः सुगन्धादिनाऽङ्गपरिवर्तनसमये करणीये उत्सवाभिषेके तथा तस्मिन्नेव दिने जन्मर्क्षयोगे च मिलितस्त्रीणां मध्ये यशोदा कृष्णस्याभिषेचनं चकार ॥४॥ ततो

राजोवाच ॥ येन येनावतारेण भगवान्हरिरीश्वरः ॥ करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो ॥१॥ यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुध्यत्यचिरेण पुंसः ॥ भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत् ॥२॥ अथान्यदपि कृष्णस्य तोकाचरितमद्भुतम् ॥ मानुषं लोकमासाद्य तज्जातिमनुरुन्धतः ॥३॥ श्रीशुक उवाच ॥ कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम् ॥ वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ॥४॥ नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः ॥ अन्नाद्यवासःस्त्रगभीष्टधेनुभिः संजातनिद्राक्षमशीशयच्छनैः ॥ ५ ॥ औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजयती व्रजौकसः ॥ नैवाशृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत् ॥६॥ अधश्शयानस्य शिशोरनोऽल्पकप्रवालमृद्वङ्घ्रिहतं व्यवर्तत ॥ विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥७॥ दृष्ट्वा यशोदाप्रमुखा व्रजस्त्रिय औत्थानिके कर्मणि याः समागताः ॥ नन्दादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ॥८॥ (इति ब्रुवन्तोऽतिविवादमोहिता जनाः समन्तात्परिवव्रुरातवत्)॥

यशोदाऽन्नादिना पूजितैर्विप्रैः कृतस्वस्त्ययनं पुत्रं प्राप्तनिद्रं ज्ञात्वा शकटाधः प्रेङ्खे शायितवती॥५॥ततः सा तस्मिन्नुत्सवे प्राप्तानां व्रजौकसां संमानं कुर्वती सती कृष्णरोदनं नाशृणोत्।तदा स्तनपानार्थी कृष्णः पादावूर्ध्वं चालितवान्॥६॥ततः शकटाधः शयानस्य शिशोः पदाहतं विध्वस्तनानारसकुप्यभाजनं शकटं न्युब्जं पपात॥७॥ततो यशोदाद्याः गोप्यः नन्दादयो गोपाश्च तदद्भुतं दृष्ट्वा शकटं कथं विपरीतं पपातेत्यूचुः॥८॥

१ हरेश्चरितम्। २ कुप्यं स्वर्णरजतातिरिक्तकांस्यादिमयम्।

ततो बालकाः अनेन रुदता पातितमित्याहुः ॥९॥ तद् बालभाषितं गोपादयो न श्रद्दधिरे । यतो बालस्य कृष्णस्य बलं ते न विदुः ॥१०॥ ततो यशोदा रुदन्तं शिशुं गृहीत्वा ग्रहपीडाशङ्किता भूत्वा विप्रैः कृतस्वस्त्ययनं पुत्रं स्तनमपाययत् ॥११॥ ततो गोपैः शकटं पूर्ववत् स्थापितम् । ततो विप्राः ग्रहादिहोमं कृत्वा शकटं पूजयामासुः ॥१२॥ किंच ये ईर्ष्यानृतहिंसादिभिर्वर्जितास्तेषामाशिषो व्यर्था न स्युः इत्यभिप्रेत्य

ऊचुरव्यवसितमतीन् गोपान् गोपीश्च बालकाः ॥ रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः ॥९॥ न ते श्रद्दधिरे गोपा बाल-
भाषितमित्युत ॥ अप्रमेयं बलं तस्य बालकस्य न ते विदुः ॥१०॥ रुदन्तं सुतमादाय यशोदा ग्रहशंकिता ॥ कृतस्व-
स्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥ ११ ॥ पूर्ववत् स्थापितं गोपैर्बलिभिः सपरिच्छदम् ॥ विप्रा हुत्वाऽर्चयांचक्रुर्द-
ध्यक्षतकुशाम्बुभिः ॥१२॥ येऽसूयानृतदम्भेर्ष्याहिंसामानविवर्जिताः ॥ न तेषां सत्यशीलानामाशिषो विफलाः कृताः
॥ १३ ॥ इति बालकमादाय सामर्ग्यजुरुपाकृतैः ॥ जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ॥ १४ ॥ वाचयित्वा
स्वस्त्ययनं नन्दगोपः समाहितः ॥ हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥१५॥ गावःसर्वगुणोपेता वासस्स्र-
ग्रुक्ममालिनीः ॥ आत्मजाभ्युदयार्थाय प्रादात् तेचान्वयुञ्जत ॥१६॥ विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाऽऽशिषः ॥
ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम् ॥१७॥ एकदाऽऽरोहमारूढं लालयन्ती सुतं सती ॥ गरिमाणं शिशो-
र्वोढुं न सेहे गिरिकूटवत् ॥ १८ ॥ भूमौ निधाय तं गोपी विस्मिता भारपीडिता ॥ महापुरुषमादध्यौ जगतामास
कर्मसु ॥१९॥ दैत्यो नाम्ना तृणावर्तः कंसभृत्यः प्रणोदितः ॥ चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥ २० ॥

पुत्रं गृहीत्वा अभिमन्त्रितैः जलैः पवित्रौषधिभिः विप्रैरभिषेच्य॥१३॥१४॥स्वस्त्ययनं वाचयित्वा नन्दो विप्रेभ्यो गवादि पुत्रोदयार्थं प्रादात् । ततस्ते आशिषः प्रयुयुजुः ॥१५॥१६॥ ताः विप्ररुक्ताः आशिषो निष्फलाः न बभूवुः॥१७॥अथैकदा यशोदोत्सङ्ग स्थितं सुतं लालयन्ती शिशोर्भारं वोढुं न सेहे ॥ १८ ॥ ततो यशोदा विस्मिता सती तं भुवि कृत्वेश्वरं दध्यौ ॥ १९ ॥ तावत् तृणावर्तनामा दैत्यः कंसप्रेरितः सन्

१ जगतां मध्ये कर्मसु आस बभूव न तु जगदुदरं तं वदेत्यर्थः । 'जगामाशु च' इति पाठान्तरम् ।

चक्रवातरूपेणागत्य व्रजं रजोभिर्व्यापयन् दिशो घोरशब्देन नादयन्नासीनं शिशुं जहार ॥२०॥२१॥ ततो मुहूर्तं गोष्ठं रजस्तमोभ्यां व्याप्तम्॥ ततो यशोदा सुतं नापश्यत् ॥२२॥ तथा कोऽपि जनो मोहितः आत्मानं परं च नापश्यत्॥२३॥ एवं वायुचक्राद्रजोवर्षे सति माता सुतमार्गं न ज्ञात्वा मृतवत्सा गौरिव भुवि निपत्य शुशोच ॥ २४ ॥ ततो यशोदायाः रोदनं श्रुत्वाऽश्रुपूर्णमुख्यो गोप्यस्तदनु रुरुदुः ॥२५॥ स दैत्यः

गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूंषि रेणुभिः॥ ईरयन् सुमहाघोरशब्देन प्रदिशो दिशः॥२१॥मुहूर्तमभवद्गोष्ठं रजसा तमसा वृतम्॥ सुतं यशोदा नापश्यत्तस्मिन्न्यस्तवती यतः ॥ २२ ॥ नापश्यत् कश्चनात्मानं परं चापि विमोहितः ॥ तृणावर्तनिसृष्टाभिः शर्कराभिरुपद्रुतः ॥२३॥ इति खरपवनचक्रपांसुवर्षे सुतपदवीमबलाऽविलक्ष्य माता ॥ अतिकरुणमनुस्मरन्त्यशोचद् भुवि पतिता मृतवत्सका यथा गौः ॥२४॥ रुदितमनु निशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः॥ रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे ॥२५॥ तृणावर्तः शान्तरयो वात्यारूपधरो हरन् ॥ कृष्णं नभो गतो गन्तुं नाशक्नोद्भूरिभारभृत ॥२६॥ तमश्मानं मन्यमान आत्मनो गुरुमत्तया ॥ गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम्॥२७॥ गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः ॥ अव्यक्तरावो न्यपतत् सहबालो व्यसुर्व्रजे ॥२८॥ तमन्तरिक्षात् पतितं शिलायां विशीर्णसर्वावयवं करालम् ॥ पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः ॥ २९ ॥ प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लंबमानम् ॥ तं स्वस्तिमन्तं पुरुषादनीतं[1] विहायसा मृत्युमुखात् प्रमुक्तम् ॥ गोप्यश्च गोपाः किल नन्दमुख्या लब्ध्वाशिषः[2] प्रापुरतीव मोदम् ॥ ३० ॥

कृष्णं हरन् सन् दुःखादाकाशं गतोऽपि ततः परं गन्तुं नाशक्नोत् ॥२६॥ स शिशुं पर्वतप्रायं मन्यमानः कृष्णेन गले धृतः सन् तं त्यक्तुं नाशक्नोत् ॥ २७ ॥ किंच गलग्रहणान्निश्चेष्टो निर्गतलोचनो दैत्यो गतप्राणः सन् बालेन सह व्रजे पपात ॥ २८ ॥ आकाशात् शिलायां पतितं विशीर्णावयवं दैत्यं रुदत्यः स्त्रियो दृष्ट्वा ॥ २९ ॥ तस्योरसि लम्बमानं कृष्णं गृहीत्वा यशोदायै समर्प्य गोपा गोप्यो लब्ध-

१ पुरुषादो राक्षसः। २ 'लब्ध्वा पुनः' इ० पा०।

मनोरथाः सन्तः हर्षं प्रापुराहुश्च ॥३०॥ अहो एष बालो दैत्येन मृत्युं प्रापितोऽपि पुनः प्राप्तः ॥ ३१ ॥ किंच अस्माभिस्तपः पूजनदानादि किं कृतं यतो मृतोऽपि बालः पुनः प्राप्तः ॥३२॥ एवं नन्दः कर्माणि दृष्ट्वा वसुदेववचः सत्यमिति मानयामास॥३३॥अथैकदा यशोदा सुतं स्वाङ्कमारोप्य स्तनं पाययामास ॥३४॥ ततो यशोदा पीतप्रायस्तनस्य तस्य जृम्भतः सतो मुखं लालयन्ती सती यद्ददृशे ॥ ३५ ॥ तदाह खं

अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात् पुनः ॥ हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद् विमुच्यते ॥३१॥ किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तमुत भूतसौहृदम् ॥ यत्संपरेतः पुनरेव बालको दिष्ट्या स्वबन्धून्प्रणयन्नुपस्थितः ॥३२॥ दृष्ट्वाऽद्भुतानि बहुशो नन्दगोपो बृहद्वने ॥ वसुदेववचो भूयो मानयामास विस्मितः ॥३३॥ एकदाऽर्भकमादाय स्वांकमारोप्य भामिनी ॥ प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ ३४ ॥ पीतप्रायस्य जननी सा तस्य रुचिरस्मितम् ॥ मुखं लालयती राजन्जृम्भतो ददृशे इदम् ॥३५॥ खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च ॥ द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ॥३६॥ सा वीक्ष्य विश्वं सहसा राजन्संजातवेपथुः ॥ संमील्य मृगशावाक्षी नेत्रे आसीत् सुविस्मिता ॥ ३७ ॥ इति श्रीभागवते महापु० दशमस्कन्धे पू० शकटतृणावर्तभञ्जनविश्वप्रदर्शनं नाम सप्तमोऽध्यायः ॥ ७ ॥ श्रीशुक उवाच ॥ गर्गः पुरोहितो राजन्यदूनां सुमहातपाः ॥ व्रजं जगाम नन्दस्य वसुदेवप्रचोदितः ॥ १ ॥

द्यौर्भूर्ज्योतिश्चक्रं दिशः सूर्यचन्द्राग्निवायुवरुणान् द्वीपपर्वतनदीर्वनानि चराचरभूतानि॥३६॥हे राजन् ! सैवं विश्वं वीक्ष्य कम्पमाना सती नेत्रे संमील्य विस्मिताऽऽसीत् ॥ ३७ ॥ इति श्रीभागवते चू० द० पू० सप्तमोऽध्यायः॥७॥ अष्टमे नामकर्मास्य बालक्रीडाकुतूहले ॥ मृद्भक्षणादियोगे च विश्वरूपं निरूप्यते ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! वसुदेवेन प्रेरितो यदुपुरोहितो गर्गो नन्दस्य व्रजं जगाम ॥ १ ॥



---

१ पूर्तं वापीकूपादिनिर्माणम् । इष्टम् अग्निहोत्रादि । दत्तं दानम् । २ हर्षयन् ।

नन्दस्तं दृष्ट्वोत्थाय कृताञ्जलिः सन्नधोक्षजदृष्ट्या तमानर्च ॥ २ ॥ एवं कृतातिथ्यं मुनिं स जगाद हे ब्रह्मन् ! पूर्णस्य तव किंकरवाम ॥ ३ ॥ त्वादृशां महतामन्यत्र गमनं स्वार्थं न किंतु गृहिणां श्रेयसे॥४॥किंच त्वयाऽतीन्द्रियज्ञानसाधनं ज्योतिश्शास्त्रं कृतं येन पुमान् भूतभावि फलं वेत्ति ॥ ५ ॥ त्वं ब्रह्मविदां श्रेष्ठोऽसि । अतो मे पुत्रयोर्नामकर्मादिसंस्कारान् कर्तुमर्हसि ॥६॥ गर्ग उवाच । हे नन्द ! अहं यदूनामाचार्यःसदा विख्यातोऽस्मि । मया संस्कारे कृते तव पुत्रं कंसो देवकीसुतमिति मन्येत ॥७॥ किंच पापधीः कंसस्तु कन्यागिरः श्रुत्वा देवक्या अष्टमो गर्भः

तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः ॥ आनर्चाधोक्षजधिया प्रणिपातपुरस्सरम् ॥२॥ सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम् ॥ नन्दयित्वाऽब्रवीद् ब्रह्मन् पूर्णस्य करवाम किम् ॥ ३ ॥ महद्विचलनं नृणां गृहिणां दीनचेतसाम् ॥ निःश्रेयसाय भगवन् कल्पते नान्यथा क्वचित् ॥ ४ ॥ ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतीन्द्रियम् ॥ प्रणीतं भवता येन पुमान्वेद परावरम् ॥५॥ त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान्कर्तुमर्हसि॥ बालयोरनयोर्नॄणां जन्मना ब्राह्मणो गुरुः ॥ ॥ ६ ॥ गर्ग उवाच ॥ यदूनामहमाचार्यः ख्यातश्च भुवि सर्वदा ॥ सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥ ७ ॥ कंसः पापमतिः सख्यं तव चानकदुन्दुभेः ॥ देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥ ८ ॥ इति संचिन्तयञ्छ्रुत्वा देवकीदारिकावचः ॥ अपि हन्ताऽऽगताशंकस्तर्हि तन्नोऽनयो भवेत् ॥ ९ ॥ नन्द उवाच ॥ अलक्षितोऽस्मिन् रहसि मामकैरपि गोव्रजे ॥ कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥ १० ॥ श्रीशुक उवाच ॥ एवं संप्रार्थितो विप्रः स्वचिकीर्षितमेव तत् ॥ चकार नामकरणं गूढो रहसि बालयोः ॥ ११ ॥ गर्ग उवाच ॥ अयं हि रोहिणीपुत्रो रमयन् सुहृदो गुणैः ॥ आख्यास्यते राम इति बलाधिक्याद्बलं विदुः ॥ यदूनामपृथग्भावात् संकर्षणमुशन्त्युत ॥ १२ ॥

स्त्री भवितुं नार्हति इति चिन्तयन् युवयोः सखित्वं ज्ञात्वा यदि हनिष्यति तर्हि नोऽन्यायः स्यात्॥८॥९॥नन्द उवाच॥हे गर्ग! त्वमेकान्ते मामकैरप्यलक्षितः सन् स्वस्तिवाचनपूर्वकमनयोः संस्कारं कुरु ॥१०॥ श्रीशुक उवाच ॥ एवं प्रार्थितो गर्गो बालयोर्नामकरणं रहसि चकार॥११॥ गर्ग उवाच। हे नन्द! अयं रोहिणीपुत्रो गणैः सुहृदो रमयन् रामः इत्याख्यास्यते।बलाधिक्याद्बलं यदूनामपृथग्भावात् संकर्षणं वक्ष्यन्ति॥१२॥

किंच अयं तवात्मजः किंच अस्य शुक्लो रक्तः पीतः इति त्रयो वर्णाः पुरा, इदानीं तु कृष्णतां गतः। अतः कृष्णः इत्येकं नाम स्यात् ॥१३॥ किंच अयं तवात्मजः प्रागवसुदेवस्य क्वचिज्जातः। अतो वासुदेवः इति वदन्ति ॥१४॥ अस्य गुणकर्मानुरूपनामानि बहूनि सन्ति ॥ १५ ॥ अयं कृष्णो वः श्रेयः करिष्यति। अनेन च सर्वदुःखानि यूयं तरिष्यथ ॥१६॥ किंच पुराऽराजके चौरपीडिताः साधवोऽनेन रक्ष्यमाणाः सन्तो दस्यून् जिग्युः ॥१७॥ तथा च येऽस्मिन् प्रीतिं कुर्वन्ति तेषां शत्रवः पराभवं न कुर्वन्ति ॥१८॥ तस्माद्धे नन्द। अयं तवात्मजो गुणैर्नारायणसमः। अतः

आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १३ ॥ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥१४॥ बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ॥ गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥१५॥ एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः ॥ अनेन सर्वदुर्गाणि यूय-मञ्जस्तरिष्यथ ॥१६॥ पुराऽनेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून् समेधिताः ॥१७॥ य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः ॥ नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥१८॥ तस्मान्नन्दात्म-जोऽयं ते नारायणसमो गुणैः ॥ श्रिया कीर्त्याऽनुभावेन गोपायस्व समाहितः ॥ १९ ॥ श्रीशुक उवाच ॥ इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते ॥ नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम् ॥ २० ॥ कालेन व्रजताऽल्पेन गोकुले रामकेशवौ ॥ जानुभ्यां सहपाणिभ्यां रिङ्गमाणौ विजह्रतुः ॥ २१ ॥ तावंघ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोष-रुचिरं व्रजकर्दमेषु ॥ तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्तिमात्रोः ॥ २२ ॥

एनं पालयस्व ॥१९॥ श्रीशुक उवाच ॥ एवं नन्दमादिश्य गर्गे स्वगृहं गते सति नन्दो हर्षितः सन् पूर्णाशिषमात्मानं मेने ॥ २० ॥ ततः स्वल्पकालेन व्रजता रामकेशवौ जानुभ्यां पाणिभ्यां रिङ्गमाणौ सन्तौ विजह्रतुः ॥ २१ ॥ ततो व्रजकर्दमेषु चरणभूषणशब्देन रुचिरं चलन्तौ तन्नादेन हृष्टमनसौ सन्तौ भीतवद्यशोदारोहिण्योः समीपमाजग्मतुः ॥ २२ ॥

१ घोषाः कटिपादभूषणकिङ्किण्यः।

तदा मातरौ तौ सुतौ हस्ताभ्यामागतावालिङ्ग्य मुखे स्तनं दत्त्वाऽल्पदशनं तयोर्मुखं वीक्ष्य मुदं ययतुः ॥२३॥ यदा स्त्रीणां कुमारलीलाः दर्शयन्तौ धृतपुच्छैर्वत्सैरितस्ततः आकृष्टौ तदा तौ दृष्ट्वा गोप्यो हर्षिताः आसन् ॥ २४ ॥ किंच यदा शृङ्गिदंष्ट्र्यस्यग्निजलपक्षिकण्टकेभ्यः क्रीडातत्परौ चपलौ सुतौ निषेद्धुं तज्जनन्यौ न शेकाते तदा मातरौ गृहसौख्यस्य परां काष्ठां प्रापतुः॥२५॥तावत् स्वल्पकालेन रामकृष्णावघृष्ट-जानुभिः पद्भिर्विचक्रमतुः ॥ २६ ॥ ततः कृष्णो व्रजबालकैः रामेण च सह स्त्रीणां हर्षं जनयन् चिक्रीड ॥ २७ ॥ तदा गोप्यः एवं कृष्णस्य

तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ पङ्काङ्गरागरुचिरावुपगृह्य दोर्भ्याम् ॥ दत्त्वा स्तनं प्रपिबतोः स्म मुखं निरी-क्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥ २३ ॥ यर्ह्यङ्गनादर्शनीयकुमारलीलावन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः ॥ वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहा जहृषुर्हसन्त्यः ॥२४॥ शृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम् ॥ गृह्याणि कर्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोऽनवस्थाम् ॥ ॥२५॥ कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले ॥ अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसा ॥२६॥ ततस्तु भगवान् कृष्णो वयस्यैर्व्रजबालकैः ॥ सहरामो व्रजस्त्रीणां चिक्रीडे जनयन् मुदम् ॥ २७ ॥ कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम् ॥ शृण्वन्त्याः किलतन्मातुरिति होचुः समागताः ॥ २८ ॥ वत्सान् मुञ्चन् क्वचिदसमये क्रोशसंजात-हासः स्तेयं स्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः ॥ मर्कान् भोक्ष्यन् विभजति सचेन्नात्ति भाण्डं भिनत्ति द्रव्या-लाभे स गृहकुपितो यात्युपक्रोश्य तोकान् ॥२९॥ हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित् ॥ ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥३०॥

कौमारचापलं वीक्ष्य यशोदायाः समीपमेत्य जगदुः ॥ २८ ॥ हे यशोदे ! अयं कृष्णोऽकाले वत्सान् मुञ्चति कल्पितैश्चौर्योपायैर्दधि पयो भक्षयति मर्कटेभ्यो ददाति । तत्र तृप्तत्वेन सोऽपि न भक्षयति चेद् भाण्डं भिनत्ति । द्रव्यस्यालाभे सति गृहं दग्धं करिष्यामीति क्रुद्धः सन् बालान् रोदयित्वा याति ॥ २९ ॥ तथा यदा तुङ्गशिक्यस्थभाण्डेषु हस्तस्पर्शो न भवेत्तदा पीठकोलूखलाद्यैर्विधिं प्रकल्प्य च्छिद्रं रच-

१ अन्तर्निहिते दध्यादौ वयुनं ज्ञानं यस्य सः । २ छिद्ररचनादिवेत्ता ।

यति । यदा चान्धकारयुक्ते गृहे भाण्डानि स्थाप्यन्ते तदा कृष्णो धृतमणिगणं स्वाङ्गमेवार्थप्रदीपं करोति । तानि च पश्यति॥३०॥ यदा च
रे चोर ! इत्याकुष्टः सन् त्वमेव चोरोऽहं गृहस्वामीत्येवं धाष्टर्यानि कुरुते । तथा स्वार्चिते गृहे मूत्रपुरीषोत्सर्गादीनि कृत्वा त्वत्समीपे साधुरि-
वास्ते । एवं क्रुद्धानां गोपीनां वचः श्रुत्वाऽपि यशोदाऽऽक्षेप्तुं नैच्छत् ॥३१॥ अथैकदा क्रीडमानाः रामादिगोपपुत्राः कृष्णो मृदं भक्षितवान्
इति मात्रे न्यवेदयन् ॥३२॥ सा कृष्णं करे धृत्वा निर्भर्त्स्य भीतं तमाह ॥३३॥ हे कृष्ण ! कस्मात् त्वं मृदं भक्षितवान् । एते बालाः बलरा-

एवं धाष्टर्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते ॥ इत्थं स्त्रीभिः सभयन-
यनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छत् ॥ ३१ ॥ एकदा क्रीडमानास्ते रामाद्या
गोपदारकाः ॥ कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥ ३२ ॥ सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी ॥
यशोदा भयसंभ्रान्तप्रेक्षणाक्षमभाषत ॥ ३३ ॥ कस्मान्मृदमदान्तात्मन् भवान्भक्षितवान्रहः ॥ वदन्ति तावका ह्येते
कुमारास्तेऽग्रजोऽप्ययम् ॥ ३४ ॥ नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः ॥ यदि सत्यगिरस्तर्हि समक्षं पश्य मे
मुखम् ॥ ३५ ॥ यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान्हरिः ॥ व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबालकः ॥ ३६ ॥ सा
तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः ॥ साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दुतारकम् ॥ ३७ ॥ ज्योतिश्चक्रं
जलं तेजो नभस्वान्वियदेव च ॥ वैकारिकाणीन्द्रियाणि मनो मात्रागुणास्त्रयः ॥ ३८ ॥ एतद्विचित्रं सहजीवकालस्व-
भावकर्माशयलिङ्गभेदम् ॥ सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शङ्काम् ॥ ३९ ॥

मोऽपि वदति॥३४॥तदा कृष्ण आह। हे मातः अहं मृदं न भक्षितवान्, एते मिथ्या वदन्ति यदि सत्यगिरस्तर्हिमे मुखं पश्येति ॥३५॥ एवं चेत्
मुखं प्रसारयेति मात्रोक्ते हरिर्मुखं प्रसारितवान् ॥३६॥ ततः सा तन्मुखे विश्वम्॥३७॥३८॥स्वर्लोकादिसहितं व्रजं दृष्ट्वा शङ्कां प्राप्याह॥३९॥

१ उशति हे कमनीये यशोदे । २ शब्दावयः ।

अहो एतत् किं स्वप्नः उत वा देवमाया अथवाऽस्य जन्मसिद्धमैश्वर्यम् ॥४०॥इत्युक्त्वा चरमं पक्षं गृहीत्वा कृष्णः ईश्वरः इति निश्चित्य यतः इदं जगत् प्रतीयते तत्पदं प्रणताऽस्मि ॥४१॥ तथा यन्मायया ममासौ पतिरेष मे सुतः इमा गोप्यो गोपाश्च ममैवेति कुबुद्धिर्भवति स मे गतिः स्यात्॥४२॥एवं ज्ञाततत्त्वायां यशोदायां कृष्णः पुत्रस्नेहमयीं स्वमायां व्यतनोत्॥४३॥तदा नष्टस्मृतिर्गोपी तमङ्कमारोप्य पूर्ववदासीत्॥४४॥ किंच वेदादिभिर्गीयमानमाहात्म्यं हरिं पुत्रमिति मेने ॥४५॥ राजोवाच ॥ हे ब्रह्मन् ! नन्दः एवं श्रेयः किं चकार तथा यशोदा च यस्याः स्तनं

किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः ॥ अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ॥ ४० ॥ अथो यथावन्न वितर्कगोचरं चेतोमनः कर्मवचोभिरञ्जसा ॥ यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्य प्रणताऽस्मि तत्पदम् ॥ ४१ ॥ अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती ॥ गोप्यश्च गोपा सहगोधनाश्च मे यन्माययेत्थं कुमतिः स मे गतिः ॥४२॥ इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः ॥ वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥४३॥ सद्यो नष्टस्मृतिर्गोपी साऽऽरोप्यारोहमात्मजम् ॥ प्रवृद्धस्नेहकलिलहृदयाऽऽसीद्यथा पुरा ॥ ४४ ॥ त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः ॥ उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम् ॥ ४५ ॥ राजोवाच ॥ नन्दः किमकरोद्ब्रह्मन् श्रेय एवं महोदयम् ॥ यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥ ४६ ॥ पितरौ नान्वविन्देतां कृष्णोदारार्भकेहितम् ॥ गायन्त्यद्यापि कवयो यल्लोकशमलापहम् ॥ ४७ ॥ श्रीशुक उवाच ॥ द्रोणो वसूनां प्रवरो धरया सह भार्यया ॥ करिष्यमाण आदेशान्ब्रह्मणस्तमुवाच ह ॥ ४८ ॥ जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ ॥ भक्तिः स्यात्परमा लोके ययाऽञ्जो दुर्गतिं तरेत् ॥ ४९ ॥ अस्त्वित्युक्तः स भगवान् व्रजे द्रोणो महायशाः ॥ जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत् ॥ ५० ॥

हरिः पपौ ॥४६॥ रामकृष्णयोर्बालचरितं तत्पितरौ न ज्ञातवन्तौ । एवं श्रेयस्ताभ्यां किं कृतम् ॥४७॥ श्रीशुक उवाच ॥ हे नृप ! अष्टवसूनां मध्ये द्रोणो नाम वसुर्धरया भार्यया सह ब्रह्माज्ञया गोपालनादिलक्षणां पूजां करिष्यमाणस्तमाह ॥४८॥ हे ब्रह्मन् ! जातयोः सतोरावयोर्हरौ भक्तिः स्यात् इति प्रसादं कुरु ॥४९॥ ततो ब्रह्मणा तथेत्युक्तो द्रोणः इदानीं नन्दः इति तत्पत्नी यशोदेति च जज्ञे ॥ ५० ॥

तस्मात् पुत्रीभूते हरौ तयोर्भक्तिरासीत्॥५१॥अतः कृष्णो ब्रह्मणः उक्तं सत्यं कर्तुं सहरामो व्रजे वसन् तेषां प्रीतिं चक्रे ॥५२॥ इति श्रीभागवत चू० दशमस्कन्धे पू० अष्टमोऽध्यायः॥८॥नवमे पय उत्सिक्ते मत्वा गोप्यथ तत्कृतम् ॥ विलोक्य भाण्डभङ्गादि कृष्णं दाम्ना बबन्ध तम्॥१॥ तनूदराश्रितं विश्वं दृष्ट्वा विस्मितचेतसः॥ बन्धनव्यङ्गुलापूर्त्या पूर्णतामन्वदर्शयत्॥२॥श्रीशुक उवाच॥ हे नृप ! एकदा गृहदासीषु कर्मान्तर-नियुक्तासु सतीषु यशोदा स्वयं दधिमन्थनं चकार॥१॥ तदा पुत्रस्य बालचरितानि स्मरन्ती तानि जगौ ॥२॥ हे नृप ! सा कटितटे काञ्चीबद्धं

ततो भक्तिर्भगवति पुत्रीभूते जनार्दने ॥ दम्पत्योर्नितरामासीद् गोपगोपीषु भारत ॥५१॥ कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः ॥ सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ॥ ५२ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वा० विश्वरूपदर्शनेऽष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ एकदा गृहदासीषु यशोदा नन्दगेहिनी ॥ कर्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि ॥१॥ यानि यानीह गीतानि तद्बालचरितानि च ॥ दधिनिर्मन्थने काले स्मरन्ती तान्यगायत ॥२॥ क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः ॥ रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममन्थ ॥३॥ तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः ॥ गृहीत्वा दधिमन्थानं न्यषेधत्प्रीतिमावहन् ॥ ४ ॥ तमङ्कमारूढमपाययत्स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् ॥ अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ ५ ॥ संजातकोपः स्फुरितारुणाधरं संदश्य दद्भिर्द-धिमन्थभाजनम् ॥ भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः ॥ ६ ॥

सूक्ष्मवस्त्रं बिभ्रती तथा स्नेहस्नुतस्तनयुग्मं रज्ज्वाकर्षणेन श्रमयुक्तभुजयोश्चलत्कङ्कणौ कर्णयोः कुण्डले च बिभ्रती स्वेदयुक्तमुखी सती दधि ममन्थ ॥३॥ तदा स्तन्यकामो हरिस्तां प्राप्य दधिमन्थानं धृत्वा न्यषेधत् ॥४॥ सा तं स्तनं पाययित्वा सस्मितं मुखं वीक्षमाणा चुल्ल्यां स्थापिते दुग्धे तापेनोद्रिच्यमाने सति पुत्रं हित्वा शीघ्रमुत्तारणार्थं ययौ ॥५॥ तदा कृष्णः क्रुद्धः सन् मन्थनपात्रं भित्त्वा नवनीतमभक्षयत्॥६॥

१ शिलापुत्रेण । २ गृहमध्ये ।

ततो गोपी पयः उत्तार्य पुनरेत्य भग्नं पात्रं दृष्ट्वा तत् पुत्रकर्म ज्ञात्वा कृष्णं तत्र न दृष्ट्वा ॥७॥ ततः परिवर्तितोलूखलोपरि स्थितं शिक्यस्थं नवनीतं मर्कटाय ददतं चौर्यशङ्कितेक्षणं दृष्ट्वा शनैः पृष्ठत आजगाम ॥ ८ ॥ ततः कृष्णो धृतयष्टिं यशोदां वीक्ष्योलूखलादुत्तीर्य भीतवत् पलाययामास । तदा गोपी योगिनामपि तपसा योग्यभूतं मनो न यं प्राप तमन्वधावत् ॥९॥कृष्णमनुगच्छन्ती कटिपश्चाद्भागभारेण स्तब्ध-

उत्तार्य गोपी सुशृतं पयः पुनः प्रविश्य संदृश्य च दध्यमत्रकम् ॥ भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ॥७॥ उलूखलाङ्घ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं शिचि स्थितम् ॥ हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात् सुतमागमच्छनैः ॥ ८ ॥ तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोऽवरुह्यापससार भीतवत् ॥ गोप्यन्वधावन्न यमाप योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ॥९॥ अन्वञ्चमाना जननी बृहच्चलच्छ्रोणीभराक्रान्तगतिस्सुमध्यमा ॥ जवेन विस्रंसितकेशबन्धनच्युतप्रसूनानुगतिः परामृशत् ॥ १० ॥ कृतागसं तं प्ररुदन्तमक्षिणी कर्षन्तमञ्जन्मषिणी स्वपाणिना ॥ उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत् ॥ ११ ॥ त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला ॥ इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा ॥ १२ ॥ नचान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ॥ पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः ॥ १३ ॥ तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् ॥ गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा॥१४॥तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः॥ द्व्यङ्गुलोनमभूत्तेन संदधेऽन्यच्च गोपिका ॥ १५ ॥ यदासीत्तदपि न्यूनं तेनान्यदपि संदधे ॥ तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १६ ॥

गतिः सती दुःखेन तं धृतवती ॥१०॥ ततः साऽपराधिनं रुदन्तं भयविह्वलेक्षणं सुतं भीषयन्ती हस्ते धृत्वाऽभर्त्सयत् ॥११॥ तावत् सुतं भीतं ज्ञात्वा यष्टिं त्यक्त्वा तं रज्ज्वा बद्धुमैच्छत्॥१२॥यस्यान्तर्बहिर्न पूर्वमपरं च न ॥१३॥ एवंभूतं सुतमिति मत्वा यशोदोलूखले दाम्ना बबन्ध ॥१४॥ तद्दाम्नि द्व्यङ्गुलोने सति यशोदाऽन्यत् संदधे ॥१५॥ तदपि न्यूनं जातम् । तेनान्यदपि संदधे । तदपि द्व्यङ्गुलं न्यूनं जातम्॥१६॥

---

१ विस्रंसितात् केशबन्धनाच्युतैः कुसुमैरनुगतिः अनुगमनं यस्याः सा । २ अंजती सर्वतः प्रसरन्ती मषी ययोस्ते ।

एवं यशोदा स्वगृहदामानि संदधत्यपि तं बद्धुमसमर्था सती विस्मिता जाता ॥१७॥ एवं स्विन्नगात्रायाः स्वमातुः श्रमं दृष्ट्वा कृष्णः स्वबन्धने कृपालुरासीत् ॥१८॥ हे नृप ! एवं हरिणा भक्ताधीनता दर्शिता यस्येदं सेश्वरं विश्वमधीनम् ॥१९॥ तं प्रसादं ब्रह्मा शिवः श्रीर्न लेभिरे यं गोपी प्राप ॥२०॥ किंच भगवान् यथा भक्तिमतां सुखेन प्राप्यस्तथा योगिनां न ॥ २१ ॥ अथ कृष्णो गृहकृत्येषु यशोदायां व्यग्रायां पूर्वं कुबेरपुत्रौ गुह्यकौ सन्ताविदानीमर्जुनौ ददर्श ॥२२॥ हे राजन् ! तौ नलकूबरमणिग्रीवौ पुरा नारदशापेन मदाद् वृक्षतां प्रापितौ॥२३॥

एवं स्वगेहदामानि यशोदा संदधत्यपि ॥ गोपीनामुत्स्मयन्तीनां स्मयन्ती विस्मिताऽभवत् ॥ १७ ॥ स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः ॥ दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत् स्वबन्धने ॥ १८ ॥ एवं संदर्शिता ह्यङ्ग हरिणा भक्तवश्यता ॥ स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥१९॥ नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया ॥ प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥ २० ॥ नायं सुखापो भगवान्देहिनां गोपिकासुतः ॥ ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह ॥२१॥ कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः ॥ अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥ २२ ॥ पुरा नारदशापेन वृक्षतां प्रापितौ मदात् ॥ नलकूबरमणिग्रीवाविति ख्यातौ श्रियान्वितौ ॥ २३ ॥ इति श्रीभागव० म० दशम० पू० दामबन्धने कृष्णप्रसादो नाम नवमोऽध्यायः ॥९॥ राजोवाच ॥ कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम् ॥ यत्तद्विगर्हितं कर्म येन वा देवर्षेस्तमः ॥१॥ श्रीशुक उवाच ॥ रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ ॥ कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ ॥ २ ॥ वारुणीं मदिरां पीत्वा मदघूर्णितलोचनौ ॥ स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥ ३ ॥ अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि ॥ चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥४ ॥

इति श्रीभागवते चू० द० पू० नवमोऽध्यायः ॥ ९ ॥ दशमेऽपातयद्रिङ्गन्नन्तरा यमलार्जुनौ ॥ तत्रत्याभ्यां च देवाभ्यां कृष्णः स्तुत इतीर्यते ॥१॥ राजोवाच ॥ हे ब्रह्मन् तयोः शापस्य कारणं भागवतोत्तमस्य नारदस्यापि येन क्रोधस्तत् कथ्यताम् ॥१॥ श्रीशुक उवाच ॥ हे नृप ! कुबेरात्मजौ शिवानुचरौ भूत्वा कैलासोपवने गङ्गायाम् ॥ २ ॥ मदिरां पीत्वा मदघूर्णितलोचनौ गायद्भिः स्त्रीजनैः सह वने चेरतुः ॥ ३ ॥ ततस्तौ गङ्गामध्ये प्रविश्य युवतीभिश्चिक्रीडतः ॥ ४ ॥

तावद् यदृच्छया तत्र नारद आगतः सन् तौ दृष्ट्वोन्मत्तावबुध्यत ॥५॥ ततो नारदं दृष्ट्वा नग्नाः स्त्रियः शापभीताः सत्यो वस्त्राणि पर्यधुः । तौ गुह्यकौ न पर्यधाताम् ॥६॥ अयं नारदस्तौ मत्तौ दृष्ट्वा तयोरनुग्रहार्थं शापं दास्यन् जगाद ॥७॥ नारद उवाच ॥ विषयान् सेवमानस्य पुरुषस्य बुद्धिभ्रंशकः श्रीमदादन्यः सत्कुलविद्यादिजनितो मदो न यत्र श्रीमदे स्त्रीद्यूतमद्यादयः सन्ति॥८॥ तथेमं देहं स्थिरं मत्वा निर्दयैः पुरुषैः पशवो हन्यन्ते ॥ ९ ॥ किंच अयं देहो नृपसंज्ञितोऽप्यन्ते कृमिविड्भस्मसंज्ञितो भवति । एतादृशदेहार्थं यो भूतध्रुक् स किं स्वार्थं वेद । न

यदृच्छया च देवर्षिर्भगवाँस्तत्र कौरव ॥ अपश्यन्नारदो देवौ क्षीबाणौ समबुध्यत ॥ ५ ॥ तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः ॥ वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ॥६॥ तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ॥ तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥ ७ ॥ नारद उवाच ॥ नह्यन्यो जुषतो जोष्यान् बुद्धिभ्रंशो रजोगुणः ॥ श्रीमदादाभिजात्यादिर्यत्र स्त्री द्यूतमासवः ॥ ८ ॥ हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः ॥ मन्यमानैरिमं देहमजरामृत्युनश्वरम् ॥ ९ ॥ देवसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितम् ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयोयतः ॥ १० ॥ देहः किमन्नदातुः स्वं निषेक्तुर्मातुरेव वा ॥ मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥ ११ ॥ एवं साधारणं देहमव्यक्तप्रभवाप्ययम्[1] ॥ को विद्वानात्मसात्कृत्वा हन्ति जन्तूनृतेऽसतः ॥ १२ ॥ असतः श्रीमदान्धस्य दारिद्र्यं परमाञ्जनम् ॥ आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥ १३ ॥ यथा कण्टकविद्धांगो जन्तोर्नेच्छति तां व्यथाम् ॥ जीवसाम्यं गतो लिंगैर्न[2] तथाऽविद्धकण्टकः ॥ १४ ॥

किंचित् ॥१०॥ अयं देहोऽन्नदातुर्मात्रादीनां वा किम् ॥११॥ एवं साधारणं देहमव्यक्तप्रभावाप्ययमात्मेति मत्वा दुर्जनान् विहाय को विद्वान् जन्तून् हन्ति ॥ १२ ॥ किंच श्रीमदान्धस्य पुरुषस्य परमौषधं दारिद्र्यं यतो दरिद्रः सन्नात्मवद् भूतानि पश्यति ॥ १३ ॥ किंच यथा कण्टकविद्धाङ्गस्तां व्यथां जन्तोर्नेच्छति तथाऽविद्धकण्टको न ॥ १४ ॥

१ अव्यक्तात्जन्म अप्ययो नाशश्च तत्रैवं यस्य तम् । २ मुखम्लान्यादिलिंगैः सर्वप्राणिनां सुखदुःखे समे इति ज्ञातवानित्यर्थः ।

एवं पुमान् दरिद्रः सन् कष्टं प्राप्नोति ! तदेव तस्य तपः ॥१५॥ एवमन्नकाङ्क्षिणः क्षुधा कृशदेहस्य पुंसः इन्द्रियाणि शुष्यन्ति । हिंसाऽपि समाप्यते ॥१६॥ किंच दरिद्रस्यैव साधुसंगमो भवति । ततः स शुध्यति॥१७॥ ननु साधूनामपि धनिकः प्रियः स्यान्न दरिद्रः इति तदाह । साधूनां धनगर्वितैः पुंभिः किम् । न किमपि ॥ १८ ॥ अतोऽनयोः श्रीमदान्धयोरज्ञानजं मदं हरिष्यामि ॥ १९ ॥ यतः इमौ लोकपालसुतौ भूत्वाऽऽत्मानं वस्त्रहीनं न जानीतः ॥ २० ॥ तस्माद् वृक्षतां गच्छताम् । तत्रापि मत्प्रसादेन स्मृतिः स्यात् ॥२१॥ किंच दिव्ये शतवर्षे गते

दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह ॥ कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि तस्य परं तपः ॥१५॥ नित्यं क्षुत्क्षामदेहस्य दरिद्रस्यान्नकांक्षिणः ॥ इन्द्रियाण्याशु शुष्यन्ति हिंसाऽपि विनिवर्तते ॥१६॥ दरिद्रस्यैव युज्यन्ते साधवः समदर्शिनः ॥ सद्भिः क्षिणोति तं तर्षं तत आराद्विशुध्यति ॥१७॥ साधूनां समचित्तानां मुकुन्दचरणैषिणाम् ॥ उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः ॥१८॥ तदहं मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः ॥ तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः ॥१९॥ यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ ॥ न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥२०॥ अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ॥ स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥२१॥ वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ॥ वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः ॥२२॥ श्रीशुक उवाच ॥ एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमम् ॥ नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ ॥२३॥ ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः ॥ जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ ॥२४॥ देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ॥ तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥२५॥

हरेः सान्निध्यं प्राप्य पुनर्देवत्वं प्राप्स्यतः ॥२२॥ श्रीशुक उवाच ॥ एवमुक्त्वा नारदो नारायणाश्रमं गतः । ततस्तौ नलकूबरमणिग्रीवौ व्रजे यमलार्जुनौ बभूवतुः ॥ २३ ॥ हे नृप ! कृष्णः एवं नारदवचः सत्यं कर्तुं यत्र तावास्तां तत्र शनैर्जगाम ॥ २४ ॥ किंच नारदो यतोऽतिप्रियः अतस्तदुक्तं साधयिष्यामीति मनसि निधाय ॥ २५ ॥



---

१ निर्गतोऽहंकाररूपस्तम्भो यस्मात् । २ वासुदेवस्येति शेषः ।

सहजातयोः कृष्णस्तयोर्मध्यतो निर्ययौ । कृष्णस्य प्रवेशमात्रेण तिर्यग्गतमुलूखलम् ॥२६॥आकर्षयता कृष्णेनोत्पाटितमूलबन्धौ तौ चण्ड-
शब्दं कृत्वा पेततुः ॥२७॥ तत्र स्वकान्त्या दिशः प्रकाशयन्तौ स्वस्वरूपं प्राप्य कृष्णं नत्वा बद्धाञ्जली सन्तौ जगदतुः ॥२८॥ हे कृष्ण ! महा-
योगिन् ! ! त्वमाद्यः पुरुषः । इदं विश्वं तव रूपम् ॥२९॥ हे भगवन् सर्वभूतानां देहादीनामीशः कालश्च त्वमेव॥३०॥ किंच महान् प्रकृतिपुरु-

इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ ॥ आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् ॥ २६ ॥ बालेन निष्कर्षयताऽन्व-
गुलूखलं तद्दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ॥ निष्पेततुः परमविक्रमितातिवेपस्कन्धप्रवालविटपौ कृतचण्ड-
शब्दौ ॥ २७ ॥ तत्र श्रिया परमया ककुभः स्फुरन्तौ सिद्धावुपेत्य कुजयोरिव जातवेदाः ॥ कृष्णं प्रणम्य शिरसा-
ऽखिललोकनाथं बद्धाञ्जली विरजसाविदमूचतुः स्म ॥२८॥ कृष्ण कृष्ण महायोगिंस्त्वमाद्यः पुरुषः परः ॥ व्यक्ताव्य-
क्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥ २९ ॥ त्वमेकः सर्वभूतानां देहास्वात्मेन्द्रियेश्वरः ॥ त्वमेव कालो भगवान्विष्णु-
रव्यय ईश्वरः ॥ ३० ॥ त्वं महान् प्रकृतिः साक्षाद् रजस्सत्त्वतमोमयी ॥ त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥
॥ ३१ ॥ गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ॥ को न्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः ॥ ३२ ॥ तस्मै
तुभ्यं भगवते वासुदेवाय वेधसे ॥ आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥ ३३ ॥ यस्यावतारा ज्ञायन्ते शरीरेष्व-
शरीरिणः ॥ तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसंगतैः ॥ ३४ ॥ स भवान् सर्वलोकस्य भवाय विभवाय च ॥ अवती-
र्णोऽशभागेन साम्प्रतं पतिराशिषाम् ॥ ३५ ॥

षादिश्च त्वमेव ॥ ३१ ॥ प्राकृतगुणैस्त्वमग्राह्यः । प्राक्सिद्धं त्वां ज्ञातुं कोऽर्हति ॥३२॥ एवंभूताय भगवते वासुदेवाय तुभ्यं नमः ॥ ३३ ॥
अशरीरिणो यस्यावताराः शरीरेषु मत्स्यादिषु ज्ञायन्ते ॥ ३४ ॥ स त्वं सर्वलोकोद्भवाय मोक्षाय चाधुनाऽवतीर्णोऽसि ॥ ३५ ॥

१ परमस्य श्रीकृष्णस्य विक्रमस्तेनातिवेपः अतिकम्पो येषु तथाविधाः स्कन्धप्रवालविटपाः ययोस्तौ । २ वृक्षयोः स्थितोऽग्निर्यथा मूर्तिमानुपैति तथोपेत्य । ३ असवः प्राणाः आत्मा अहंकारः । ४ अन्तर्यामी । ५ सर्व-
क्षेत्रेषु सर्वदेहेषु विकारान् मन आदीनि वेत्तीति । ६ देहाद्यावृत्तः । ७ आत्मनः स्वस्माद् द्योतः प्रकाशो येषां तैर्गुणैः ।

तस्मै शान्ताय यदूनां पतये नमः ॥३६॥ हे कृष्ण ! नौ तव किङ्करावनुजानीहि । त्वद्दर्शनं नारदस्यानुग्रहादासीत् ॥३७॥ हे हरे ! इयं वाणी तव गुणकथनेऽस्तु । कर्णौ कथायाम् । हस्तौ तव पूजायाम् । मनस्त्वत्पादस्मरणे । शिरस्तव निवासभूत जगत्प्रणामे । दृष्टिः सतां तव मूर्तीनां च दर्शने ॥३८॥ श्रीशुक उवाच ॥ एवं तयोर्वाक्यं श्रुत्वा दाम्नोलूखले बद्धः कृष्णस्तौ प्रति प्राह ॥३९॥ श्रीभगवानुवाच ॥ हे गुह्यकौ ! मयैतत् नारदशापादि पुरैव ज्ञातम् ॥४०॥ साधूनां दर्शनाद् बन्धो न भवेद् यथा सवितुर्दर्शनान्नेत्रयोर्बन्धो न ॥४१॥ अतो मत्परौ सन्तौ स्वस्थानं

नमः परमकल्याण नमः परममङ्गल ॥ वासुदेवाय शान्ताय यदूनां पतये नमः ॥३६॥ अनुजानीहि नौ भूमंस्तवानु-
चरकिङ्करौ ॥ दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥३७॥ वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मन-
स्तव पादयोर्नः ॥ स्मृत्यां शिरस्तवनिवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥३८॥ श्रीशुक उवाच ॥
इत्थं संकीर्तितस्ताभ्यां भगवान् गोकुलेश्वरः ॥ दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ ॥ ३९ ॥ श्रीभगवानुवाच ॥
ज्ञातं मम पुरैवैतदृषिणा करुणात्मना ॥ यच्छ्रीमदान्धयोर्वाग्भिर्विभ्रंशोऽनुग्रहः कृतः ॥ ४० ॥ साधूनां समचित्तानां
सुतरां मत्कृतात्मनाम् ॥ दर्शनान्नो भवेद् बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ॥ ४१ ॥ तद्गच्छतं मत्परमौ नलकूबर साद-
नम् ॥ सञ्जातो मयि भावो वामीप्सितः परमोऽभवः ॥४२॥ श्रीशुक उवाच ॥ इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः
पुनः ॥ बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥ ४३ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे यमला-
र्जुनयोः नारदशापमोचनं नाम दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो
रवम् ॥ तत्राजग्मुः कुरुश्रेष्ठ निर्घातभयशङ्किताः ॥ १ ॥

गच्छतम् । युवयोर्मयि भक्तिर्जाता ॥४२॥ श्रीशुक उवाच ॥ हे नृप ! ततः कृष्णं पुनः पुनः प्रणम्य परिक्रम्यामन्त्र्योत्तरां दिशं जग्मतुः ॥४३॥ इति श्रीभाग० चू० द० पू० दशमोऽध्यायः ॥ १० ॥ एकादशे समागत्य वृन्दावनमथार्भकैः ॥ वत्सान् पालयताऽनेन हतौ वत्सबकासुरौ ॥ ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! ततो नन्दादिगोपाः पततोर्वृक्षयोः शब्दं श्रुत्वा वज्रपात इति भयशङ्किताः सन्तस्तत्र ययुः ॥ १ ॥

१ नह्यन्यो जुवतो जोष्यान्नित्यादिभिः । २ मयि कृतः निहितः आत्मा यैस्तेषाम् । ३ न भवो यस्मिन् सः ।

ततो भुवि पतितौ दृष्ट्वा तत्पतनकारणं न ज्ञात्वा बभ्रमुः ॥२॥ तावदुलूखलं कर्षन्तं दाम्ना बद्धं बालं कस्येदं कर्मेत्याहुः ॥३॥ तदा तत्रस्था बाला उलूखलं कर्षताऽनेन कृतमित्यूचुः । तत्र द्वौ पुरुषावपि दृष्टौ ॥४॥ ततो बालवचस्ते गोपाः न जगृहुः । केचित् संदेहयुक्तचित्ता बभूवुः ॥५॥ तत्रोलूखले दाम्ना बद्धं सुतं दृष्ट्वा नन्दस्तं मुमोच ॥६॥ अथ कदाचित् कृष्णो गोपीभिः करतालादिनोत्साहयुक्तः सन् नृत्यति गायति च ॥७॥ क्वचित् केनचिदिदमानयेति कृताज्ञः सन् पीठकोन्मानपादुकं बिभर्ति । हस्तचालनं च कुरुते ॥८॥ एवं कृष्णेन भक्तवश्यता दर्शिता । भग-

भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ॥ बभ्रमुस्तदभिज्ञाय लक्ष्यं पतनकारणम् ॥२॥ उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम् ॥ कस्येदं कुत आश्चर्यमुत्पात इति कातराः ॥३॥ बाला ऊचुरनेनेति तिर्यग्गतमुलूखलम् ॥ विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥४॥ न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् ॥ बालस्योत्पाटनं तर्वोः केचित् संदिग्धचेतसः ॥५॥ उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम् ॥ विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥६॥ गोपीभिःस्तोभितोऽनृत्य-द्भगवान्बालवत्क्वचित् ॥ उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत् ॥७॥ बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् ॥ बाहुक्षेपं च कुरुते स्वानां च प्रीतिमावहन् ॥ ८ ॥ दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम् ॥ व्रजस्योवाह वै हर्षं भगवान्बालचेष्टितैः ॥ ९ ॥ गृह्णीहि भोः फलानीति श्रुत्वा सत्वरमच्युतः ॥ फलार्थी धान्यमादाय ययौ सर्व-फलप्रदः ॥ १० ॥ फलविक्रयिणी तस्य च्युतधान्यकरद्वयम् ॥ फलैरपूरयद्रत्नैः फलभाण्डमपूरि च ॥ ११ ॥ सरि-त्तीरगतं कृष्णं भग्नार्जुनमथाह्वयत् ॥ रामं च रोहिणी देवी क्रीडन्तं बालकैर्भृशम् ॥ १२ ॥

वान् बालचेष्टितैर्व्रजस्यैवं हर्षं चकार ॥ ९ ॥ तान्येवाधिकं वर्णयति । सर्वफलप्रदो भगवान् फलार्थी फलानि गृहाणेत्युक्तः सन् धान्यमाददे ॥ १० ॥ यदा च फलविक्रेत्र्या गलिते धान्ये तस्य करद्वयं फलैः पूरितं तदा फलभाण्डं रत्नपूर्णमभवत् ॥ ११ ॥ अथ कदाचित् रोहिणी सरित्तीरगतं कृष्णमाजुहाव ॥ १२ ॥

---

१ प्रत्यक्षतः पुरतो दृष्टमपि । २ पीठकं श्रीपर्ण्यादिपीठम् । उन्मानं दारुप्रस्थादि । ३ 'क्रीणीहि' इति पाठान्तरम् ।

पुत्रस्नेहस्नुतस्तनी साग्रजं बालैः सह दीर्घं कालं क्रीडमानं कृष्णमाह्वयति ॥१४॥ हे कृष्ण ! हे कमलाक्ष ! ! हे तात ! ! ! एहि स्तनं पिब अलं क्रीडित्वा श्रान्तोऽसि । त्वमिदानीं क्षुत्परीतश्च ॥१५॥ रामं प्रति वदति हे कुलनन्दन राम ! कृष्णेन सहागच्छ । प्रातरेव कृताहारस्त्वमधुना भोक्तुमर्हसि ॥१६॥ हे कृष्ण ! भोक्ष्यमाणो व्रजाधिपस्त्वां प्रतीक्षते अतः आगत्यावयोः प्रियं विधीयताम् । हे बालकाः ! यूयं स्वस्वगृहान् यात ॥१७॥ हे पुत्र ! त्वमिदानीं परागव्याप्तकलेवरोऽतो मज्जनं कुरु । अद्य भवतो जन्मनक्षत्रम् । अतो विप्रेभ्यो गावो देयाः ॥१८॥ अपि चाह । तव वयस्यान् मातृमृष्टान् स्वलंकृतांश्च पश्य । त्वमपि स्नात्वा भुक्त्वा स्वलंकृतश्च भूत्वा विहर ॥१९॥ स्नेहनिबद्धमनाः यशोदा ब्रह्मादिमुकुटमणिं सुतं मत्वा सरामं तं हस्ते गृहीत्वा स्ववाटं नीतवती ॥ ॥२०॥ श्रीशुक उवाच ॥ ततो गोपवृद्धाः व्रजे महोत्पातानतनुभूय सर्वे मिलित्वा गोकुलस्य हितकृत्यं विचारयन्तः आसन् ॥२१॥ तत्र ज्ञानवयोऽधिकः उपनन्दनामा गोपः आह ॥२२॥ हे गोपाः ! अस्माभिरितः शीघ्रं गन्तव्यम् । अत्र बालानां नाशहेतवः उत्पाता आयान्ति ॥२३॥

एवमाहूतावपि रामकृष्णौ क्रीडासक्त्या यदा नागतौ तदा रोहिणी तयोरानयनार्थं यशोदां प्रेषितवती ॥१३॥

क्रीडन्तं सा सुतं बालैरतिवेलं सहाग्रजम् ॥ यशोदाऽजोहवीत्कृष्णं पुत्रस्नेहस्नुतस्तनी ॥ १४ ॥ कृष्णकृष्णारविन्दाक्ष तात एहि स्तनं पिब ॥ अलं विहारैः क्षुत्क्षान्तः क्रीडाश्रान्तोऽसि पुत्रक ॥ १५ ॥ हे रामागच्छ ताताशु सानुजः कुलनन्दन ॥ प्रातरेव कृताहारस्तद्भवान् भोक्तुमर्हति ॥ १६ ॥ प्रतीक्षते त्वां दाशार्ह भोक्ष्यमाणो व्रजाधिपः ॥ एह्यावयोः प्रियं धेहि स्वगृहान् यात बालकाः ॥१७॥ धूलिधूसरिताङ्गस्त्वं पुत्र मज्जनमावह ॥ जन्मर्क्षमद्य भवतो विप्रेभ्यो देहि गाः शुचिः ॥ ॥ १८ ॥ पश्य पश्य वयस्यांस्ते मातृमृष्टान्स्वलंकृतान् ॥ त्वं च स्नातः कृताहारो विहरस्व स्वलंकृतः ॥ १९ ॥ इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप ॥ हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम् ॥२०॥ श्रीशुक उवाच ॥ गोपवृद्धा महोत्पातानतनुभूय बृहद्वने ॥ नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥ २१ ॥ तत्रोपनन्दनामाऽऽह गोपो ज्ञानवयोऽधिकः ॥ देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः ॥ २२ ॥ उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः ॥ आयान्त्यत्र महोत्पाता बालानां नाशहेतवः ॥ २३ ॥

तदाह । कथंचिद् बालघ्न्या अयं कृष्णो मुक्तः । तथा हरेः प्रसादात् शकटं तदुपरि नापतत् ॥ २४ ॥ तथा तृणावर्तेनायं खं नीतः शिलायां पतितोऽपि देवै रक्षितः ॥२५॥ किंच द्रुमयोर्मध्यं प्राप्यासौ बालोऽन्यो वा न मृतः । इदमीशेन रक्षणं कृतम् ॥२६॥ अतो यावदौत्पातिकोऽनर्थो न भवेत् तावदितो बालान् गृहीत्वाऽन्यत्र यास्यामः ॥२७॥ इतः समीपे वृन्दावनं नाम वनं गोपगोपीगवां सेव्यं पुण्याद्रितृणलतं वर्तते ॥२८॥

मुक्तः कथंचिद् राक्षस्या बालघ्न्या बालको ह्यसौ ॥ हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥२४॥ चक्रवातेन नीतोऽयं दैत्येन विपदं वियत् ॥ शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः ॥२५॥ यन्न म्रियेत द्रुमयोरन्तरं प्राप्य बालकः ॥ असावन्यतमो वाऽपि तदप्यच्युतरक्षणम् ॥ २६ ॥ यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः ॥ तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः ॥ २७ ॥ वनं वृन्दावनं नाम पशव्यं नवकाननम् ॥ गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥२८॥ तत् तत्राद्यैव यास्यामः शकटान् युङ्क्त मा चिरम् ॥ गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥२९॥ तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः ॥ व्रजान् स्वान् स्वान् समायुज्य ययू रूढपरिच्छदाः ॥३०॥ वृद्धान् बालान्स्त्रियो राजन् सर्वोपकरणानि च ॥ अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥३१॥ गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः ॥ तूर्यघोषेण महता ययुः सहपुरोहिताः ॥ ३२ ॥ गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तयः ॥ कृष्णलीला जगुः प्रीता निष्ककण्ठ्यः सुवाससः ॥ ३३ ॥ तथा यशोदारोहिण्यावेकं शकटमास्थिते ॥ रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥ ३४ ॥

तत्राद्यैव वयं यास्यामः शकटान् नियुङ्क्त। भवतां यदि रोचते गोधनानि पुरतो यान्तु ॥२९॥ तच्छ्रुत्वा गोपाः साध्वित्युक्त्वा शकटसमूहान् संयोज्य शकटेषु परिच्छदान् तथा वृद्धबालस्त्रियो निधाय गृहीतशरासनाः ॥३०॥३१॥ गोधनानि पुरस्कृत्य शृङ्गाणि पूरयन्तस्तूर्यघोषेण सह पुरोहिताः कृतप्रयत्नाः ययुः ॥३२॥ तदा गोप्यः शकटारूढाः सत्यः कृष्णलीलाः जगुः ॥३३॥ तथा यशोदारोहिण्यावेकं शकटमारुह्य पुत्राभ्यां रेजतुः ॥३४॥

१ वीनां पक्षिणां पदं विहारस्थानम् ।

एवं सर्वकालसुखावहं वृन्दावनं प्रविश्य शकटैरर्धचन्द्रवद् वसतिस्थानं चक्रुः ॥ ३५ ॥ किञ्च वृन्दावनं गोवर्धनं यमुनातटानि च दृष्ट्वा राम-कृष्णयोः परा प्रीतिरासीत् ॥३६॥ एवं बालचेष्टितैर्व्रजौकसां प्रीतिं दत्त्वा कालेन तौ वत्सपालौ बभूवतुः ॥ ३७ ॥ अथ कौमारलीलामाह । ततस्तौ व्रजभुवः समीपे गोपबालैः सह वत्सान् चारयामासतुः ॥ ३८ ॥ क्वचिद् वेणुं वादयतः । तथा क्षेपणैर्बिल्वादीनि क्षिपतः । क्वचित् किङ्किणीयुक्तपादैस्ताडयतः । क्वचित् कृत्रिमगोवृषैः सह स्वयं वृषायमाणौ नर्दन्तौ सन्तौ मिथो युयुधाते । किंच हंसादीन् जन्तून् शब्दैर-

वृन्दावनं संप्रविश्य सर्वकालसुखावहम् ॥ तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥ ३५ ॥ वृन्दावनं गोवर्धनं यमुना-पुलिनानि च ॥ वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप ॥३६॥ एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः ॥ कल-वाक्यैः स्वकालेन वत्सपालौ बभूवतुः ॥ ३७ ॥ अविदूरे व्रजभुवः सह गोपालदारकैः ॥ चारयामासतुर्वत्सान्नानाक्रीडा-परिच्छदौ ॥३८॥ क्वचिद् वादयतो वेणुं क्षेपणैःक्षिपतः क्वचित् ॥ क्वचित् पादैः किंकिणीभिः क्वचित्कृत्रिमगोवृषैः ॥ ॥ ३९ ॥ वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ॥ अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥४०॥ कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः ॥ वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥ ४१ ॥ तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः ॥ दर्शयन्बलदेवाय शनैर्मुग्ध इवासदत् ॥ ४२ ॥ गृहीत्वाऽपरपादाभ्यां सहलांगूलमच्युतः ॥ भ्रामयित्वा कपित्थाग्रे प्राहिणोद् गतजीवितम् ॥ स कपित्थैर्महाकायः पात्यमानैः पपात ह ॥ ४३ ॥ तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति ॥ देवाश्च परिसंतुष्टा बभूवुः पुष्पवर्षिणः ॥ ४४ ॥

नुकृत्य चेरतुः ॥ ३९ ॥ ४० ॥ कदाचित् बालैः सह वत्सान् चारयतोः सतोस्तज्जिघांसुर्दैत्य आगमत् ॥४१॥ तं वत्सरूपिणं वत्सयूथगतं वीक्ष्य कृष्णो रामाय दर्शयित्वा तत्समीपं गत्वा ॥ ४२ ॥ तं लाङ्गूलं पश्चात्पादाभ्यां सह धृत्वा भ्रामयित्वा कपित्थाग्रे गतप्राणं प्राहिणोत् । तदा स महाकायः कपित्थफलैः सह पपात ॥४३॥ तं वीक्ष्य बालाः प्रशस्य साध्वित्यूचुः । देवाः पुष्पवृष्टिं चक्रुः ॥ ४४ ॥

१ रज्जुर्निर्मितयन्त्रविशेषैर्गोफण इति प्रसिद्धः । २ अजानन्निव । ३ आगमत् ।

एवं तौ वत्सपालौ भूत्वा सप्रातराशौ वत्सांश्चारयन्तौ तत्र विचेरतुः ॥४५॥ अथैकदा सर्वे बालाः स्वस्ववत्सकुलमादाय जलसमीपं गत्वा जलं पाययित्वा स्वयं पपुः ॥ ४६ ॥ तत्र ते बालाः गिरेः शृङ्गमिव स्थितं पक्षिणं ददृशुः ॥४७॥ हे राजन् । स वै बको नामासुरः सहसाऽऽगत्य तीक्ष्णतुण्डेन कृष्णं जग्रास ॥४८॥ ततो बकेन ग्रस्तं कृष्णं दृष्ट्वा बालाः अचेतनाः बभूवुः ॥४९॥ ततस्तालुमूलेऽग्निवद्दहन्तं तं दैत्योववाम ।

तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ॥ सप्रातराशौ गोवत्सांश्चारयन्तौ विचेरतुः ॥ ४५ ॥ स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा ॥ गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम् ॥ ४६ ॥ ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् ॥ तत्रसुवज्रनिर्भिन्नं गिरेः शृङ्गमिव च्युतम् ॥ ४७ ॥ स वै बको नाम महानसुरो बकरूपधृक् ॥ आगत्य सहसा कृष्णं तीक्ष्णतुण्डोऽग्रसद्बली ॥ ४८ ॥ कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ॥ बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः ॥४९॥ तं तालुमूलं प्रदहन्तमग्निवद्गोपालसूनुं पितरं जगद्गुरोः ॥ चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥ ५० ॥ तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां पतिः ॥ पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम् ॥ ५१ ॥ तदा बकारिं सुरलोकवासिनः समाकिरन्नन्दनमल्लिकादिभिः ॥ समीडिरे चानकशंखसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ॥ ५२ ॥ मुक्तं बकास्यादुपलभ्य बालका रामादयः प्राणमिवेन्द्रियो गणः ॥ स्थानागतं तं परिरभ्य निर्वृताः प्रणीय वत्सान्व्रजमेत्य तज्जगुः ॥ ५३ ॥ श्रुत्वा तद्विस्मिता गोपागोप्यश्चातिप्रियादृताः ॥ प्रेत्यागतमिवौत्सुक्यादैक्षन्त तृषितेक्षणाः ॥ ५४ ॥

तुण्डेन हन्तुं प्राप्तः ॥५०॥ तावत् कृष्णस्तं चञ्च्वोर्दोर्भ्यां धृत्वा बालेषु पश्यत्सु लीलया ददार ॥ ५१ ॥ तदा बकारिं कृष्णं देवाः पुष्पैर्ववृषुः । आनकशंखैः स्तवैश्च तुष्टुवुः ॥५२॥ एवं बकमुखान्मुक्तं कृष्णं प्राप्य रामादयः प्रीताः सन्तो व्रजम् एत्य तत् कर्म जगुः ॥५३॥ ततो गोप्यो गोपाश्च तत् श्रुत्वा विस्मिताः भूत्वा तृषितेक्षणाः सन्तस्तं दृष्ट्वोचुः ॥ ५४ ॥

१ ब्रह्मणः । २ तृणवत् । ३ एकीकृत्य ।

अहो अस्य बालस्य बहवो मृत्यवः प्राप्ताः तथाऽपि तेषामनिष्टमासीत् ॥५५॥ घोरदर्शनास्ते कृष्णजिघांसयाऽऽसाद्याग्नौ पतङ्गवन्नश्यन्ति ॥५६॥ अहो ब्रह्मविदां वाचः कदाऽपि मृषा न भवन्ति यतो गर्गो यदाह तत् तथैव जातम् ॥५७॥ एवं नन्दादयो गोपाः कृष्णरामकथां कुर्वन्तः संसारवेदनां नाविन्दन् ॥५८॥ एवं कृष्णरामौ कौमारैः क्रीडनैर्निलयनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिर्व्रजे कौमारावस्थां जहतुः ॥५९॥ इति श्रीभागवते महापुराणे चूर्णिकायां दशमस्कन्धे पू० एकादशोऽध्यायः ॥ ११ ॥ द्वादशे तु महासर्पवपुर्धरमघासुरम् । वत्सपालगिलं क्रुद्धो गलेऽहन्निति

अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् ॥ अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥ ५५ ॥ अथाप्यभिभवन्त्येनं नैव ते घोरदर्शनाः ॥ जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ॥ ५६ ॥ अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् ॥ गर्गो यदाह भगवानन्वभावि तथैव तत् ॥ ५७ ॥ इति नन्दादयो गोपाः कृष्णरामकथां मुदा ॥ कुर्वन्तो रममाणाश्च नाविन्दन्भववेदनाम् ॥ ५८ ॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ॥ निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥५९॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पू० वत्सबकवधो नामैकादशोऽध्यायः ॥ ११ ॥

श्रीशुक उवाच॥ क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान् ॥ प्रबोधयञ्छृङ्गरवेण चारुणा विनिर्गतो वत्सपुरस्सरो हरिः ॥ १ ॥ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः ॥ स्वान्स्वान्सहस्रोपरिसंख्ययाऽन्वितान्वत्सान्पुरस्कृत्य विनिर्ययुर्मुदा ॥ २ ॥ कृष्णवत्सैरसंख्यातैर्यूथीकृत्य स्ववत्सकान् ॥ चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥ ३ ॥

वर्ण्यते ॥१॥ महाबकगलक्रीडा केवलस्य न कौतुकम् । इति वाघासुरमुखे ससखः प्राविशद्धरिः ॥२॥ श्रीशुक उवाच ॥ कदाचित् कृ णो वने भोजनं कर्तुं प्रातरुत्थाय शृङ्गशब्देन बालान् प्रबोध्य वत्सान् पुरस्कृत्य निर्गतः ॥१॥ ततः कृष्णेन सह सहस्रशो बालाः सहस्राधिकसंख्यायुतान् वत्सान् पुरस्कृत्य शृङ्गवेत्रवेणून् गृहीत्वा ययुः ॥२॥ ततस्ते कृष्णस्य वत्सैः स्ववत्सान् मेलयित्वा चारयन्तो बाललीलाभिस्तत्र तत्र विजह्रुः ॥ ३ ॥

१ तेषां मृत्यूनामेवानिष्टमासीत्, यतस्तैः पूर्वमन्येषां भयं कृतम् । २ निलीय स्थितस्यान्येन तच्छोधनं निलायनम् ।

ततः फलप्रवालपिच्छधातुकाचगुञ्जामणिभिरात्मानं भूषयन्तः ॥ ४ ॥ किंच अन्योन्यशिक्यादीन् मुष्णन्तो गोपैर्ज्ञातानि चिक्षिपुर्ददुश्च ॥ ५ ॥ कृष्णो वनशोभावलोकनाय यदि दूरं गतो भवेत् तदा कृष्णमहंपूर्वमहंपूर्वमिति संस्पृश्य रेमिरे ॥६॥ केचिद्गोपाला वेणून् वादयन्तः, केचित् शृङ्गाणि, केचित् भृङ्गैरिव गायन्तः केचित् कोकिलैरिव शब्दं कुर्वन्तः ॥७॥ केचित् पक्षिच्छायाभिर्धावन्तः, के० हंसैर्गच्छन्तः, के० बकैरिवोपविशन्तः, के० मयूरैर्नृत्यन्तः ॥८॥ केचिद् वृक्षशाखासु लम्बमानान् वानरपुच्छान् विकर्षयन्तः, केचित् तत्पुच्छैर्द्रुमानारोहन्तः,

फलप्रवालस्तवकसुमनः पिच्छधातुभिः ॥ काचगुञ्जामणिस्वर्णभूषिता अप्यभूषयन् ॥ ४ ॥ मुष्णन्तोऽन्योन्यशिक्यादीन् ज्ञातानाराच्च चिक्षिपुः ॥ तत्रत्याश्च पुनर्दूराद्धसन्तश्च पुनर्ददुः ॥५॥ यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम् ॥ अहं पूर्वमहंपूर्वमिति संस्पृश्य रेमिरे ॥६॥ केचिद्वेणून् वादयन्तो ध्मान्तः शृङ्गाणि केचन ॥ केचिद्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे ॥ ७ ॥ विच्छायाभिः प्रधावन्तो गच्छन्तः साधु हंसकैः ॥ बकैरुपविशन्तश्च नृत्यन्तश्च कलापिभिः ॥८॥ विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान् ॥ विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु ॥ ९ ॥ साकं भेकैर्विलङ्घन्तः सरित्प्रस्रवसंप्लुताः ॥ विहसन्तः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान् ॥ १० ॥ इत्थं सतां ब्रह्म सुखानुभूत्या दास्यं गतानां परदैवतेन ॥ मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाः ॥११॥ यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यगम्यः ॥ स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमतो व्रजौकसाम् ॥ १२ ॥

के० दन्तदर्शनादिभिस्तैः सह विकारान् कुर्वन्तः ॥ ९ ॥ के० भेकैरिव विलंघन्तः, के० प्रतिबिम्बानि विहसन्तः, के० प्रतिस्वनान् शपन्तः सन्तो रेमिरे ॥ १० ॥ एवं ते गोपबालाः परब्रह्मरूपेण मनुष्यपुत्रतया प्रतीयमानेन सह विजह्रुः । अहो तेषां भाग्यम् ॥११॥ यस्य पादरेणुर्योगिभिरपि दुष्प्रापः स एवेशो येषां संमुखे स्थितस्तेषां व्रजौकसां भाग्यं किं वर्ण्यते ॥ १२ ॥

---

१ शाखायाः शाखान्तरमुद्गच्छन्तः । २ वृक्षेषु । ३ ब्रह्म च तत्सुखं चानुभूतिश्च तया । विदुषां स्वप्रकाशपरमसुखेनेत्यर्थः ? ४ भक्तानाम् । ५ मायाश्रितानां तु नरदारकतया प्रतीयमानेन !

अथैवं तेषां क्रीडनं न सहमानोऽघासुरः आगमत्॥१३॥ततः कृष्णादिबालान् दृष्ट्वा पूतनाबकयोः कनिष्ठबन्धुः स आह। अयं कृष्णो मे सोदरयोर्नाशकृत्। अतो वत्सतत्पालसहितमेनं हनिष्यामि ॥ १४॥ किंच यदैते बालाः मत्सुहृदोस्तिलोदकतया कल्पितास्तदा व्रजवासिनो नष्टतुल्याः भवन्ति यतस्ते प्रजाप्राणा एव सन्ति ॥१५॥ इति निश्चित्य योजनदीर्घमद्रितुल्यं गुहावत् प्रसारितमुखमाजगरं वपुर्धृत्वा सर्वग्रसने-

अथाघनामाऽभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः ॥ नित्यं यदन्तर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते ॥ १३ ॥ दृष्ट्वाऽर्भकान्कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः ॥ अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये ॥ १४ ॥ एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः ॥ प्राणे गते वर्ष्मसु कानु चिंता प्रजासवः प्राणभृतो हि ये ते ॥१५॥ इति व्यवस्याजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम् ॥ धृत्वाऽद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः ॥ १६ ॥ धराधरोष्ठो जलदोत्तरोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रः ॥ ध्वान्तान्तरास्यो वितताध्वजिह्वः परुषानिलश्वासदवेक्षणोष्णः ॥ १७ ॥ दृष्ट्वा तं तादृशं सर्वे मत्वा वृन्दावनश्रियम् ॥ व्यात्ताजगरतुण्डेन ह्युत्प्रेक्षन्ते स्म लीलया ॥१८॥ अहो मित्राणि गदत सत्त्वकूटं पुरः स्थितम् ॥ अस्मत्संग्रसनव्यात्तव्यालतुण्डायते न वा ॥ १९ ॥ सत्यमर्ककरारक्तमुत्तराहनुवद्धनम् ॥ अधराहनुवद्रोधस्तत्प्रतिच्छायायाऽरुणम् ॥ २० ॥

च्छया पथि व्यशेत ॥१६॥ कथंभूतः। भूमावधरोष्ठो मेघेषूर्ध्वोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रो विस्तीर्णमार्गजिह्वः इति ॥ १७ ॥ एवं दैत्यं तादृशं दृष्ट्वा तं च वृन्दावनशोभेति भ्रान्त्या मत्वा प्रसारिताजगरमुखसादृश्येन विपरीतमुत्प्रेक्षितवन्तः आहुश्च ॥१८॥ अहो मित्राणि गदत गदत। अयं सत्त्वाभासो न वा अस्मद्ग्रसनाय प्रसारितसर्पमुखवन्न वा ॥ १९ ॥ सत्यं सत्यं सूर्यकिरणै रक्तं मेघमयोष्ठवत् पश्यत ॥ २० ॥



१ विचिन्त्यते। यद् देवैरपि हृदि विचिन्त्यते तथाविधे सुखक्रीडनकं विक्षितुमक्षमः इति योज्यम्। २ देहेषु देववत् दावाग्निवद् ईक्षणयोः नेत्रयोरुष्णः। ४ तत्प्रतिच्छायया मेघप्रतिच्छाययाऽरुणं रोधःस्थलमधरोष्ठवदिति योज्यम्।

एता उच्चशृङ्गपङ्क्तयस्तद्दंष्ट्राभिःस्पर्धमानाः पश्यत ॥२१॥अयं दीर्घमार्गो जिह्वां प्रति स्पर्धते पश्यत॥२२॥दवाग्निनोष्णकठोरवायुः श्वासवद् भाति पश्यत। तत्र दवाग्निना दग्धप्राणिनां दुर्गन्धोऽन्तर्मांसगन्धवद् भाति पश्यत ॥२३॥ किंच अयं किमस्मान् प्रविष्टान् ग्रसिष्यति। एवं चेदनेन कृष्णेन बकवन्नङ्क्ष्यति इत्युक्त्वा करताडनैर्ययुः ॥२४॥ एवं कृष्णो भाषणं श्रुत्वा रक्षः इति विदित्वा गोपान् वारयितुं यावन्मनो

प्रतिस्पर्धेते सृक्किभ्यां सव्यासव्ये नगोदरे ॥ तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्च पश्यत ॥२१॥ आस्तृतायाममार्गोऽयं रसनां प्रति गर्जति ॥ एषामन्तर्गतं ध्वान्तमेतदप्यन्तराननम् ॥ २२ ॥ दावोष्णखरवातोऽयं श्वासवद् भाति पश्यत ॥ तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत् ॥२३॥ अस्मान् किमत्र ग्रसिता निविष्टानयं तथा चेद् बकवद् विनङ्क्ष्यति॥ क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसन्तः करताडनैर्ययुः ॥ २४ ॥ इत्थं मिथोऽतथ्यमतज्ज्ञभाषितं श्रुत्वा विचिन्त्येत्यमृषा मृषायते ॥ रक्षो विदित्वाऽखिलभूतहृत्स्थितः स्वानां निरोद्धुं भगवान् मनो दधे ॥ २५ ॥ तावत्प्रविष्टास्त्वसुरोदरान्तरं परं न गीर्णाः शिशवः सवत्साः ॥ प्रतीक्षमाणेन बकारिवेशनं हतस्वकान्तस्मरणेन रक्षसा ॥२६॥ तान् वीक्ष्य कृष्णः सकलाभयप्रदो ह्यनन्यनाथान् स्वकरादवच्युतान् ॥ दीनांश्च मृत्योर्जठराग्निघासान् घृणार्दितो दिष्टकृतेन विस्मितः ॥ २७ ॥ कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ॥ द्वयं कथं स्यादिति संविचिन्त्य तज्ज्ञात्वाऽविशत्तुण्डमशेषदृग्घरिः ॥ २८ ॥ तदा घनच्छदा देवा भयाद्धाहेतिचुक्रुशुः ॥ जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवाः ॥ २९ ॥

दधे तावत् तदन्तरे ते प्रविष्टाः। तथाऽपि कृष्णप्रवेशं प्रतीक्षमाणेन तेन न गीर्णाः ॥२५॥२६॥ ततः कृष्णो मृत्योर्जठराग्निघासान् स्वहस्तान्निस्सृतान् तान् दृष्ट्वा दिष्टकृतेन विस्मितः सन् ॥२७॥ एषां प्रविष्टानां विहिंसनमजगरस्य जीवनमेतदुभयं कथं न स्याद् इति विचिन्त्य ज्ञात्वा सर्वज्ञो हरिरजगरमुखं विवेश ॥ २८ ॥ तदा मेघान्तरिताः देवा हाहेति चुक्रुशुः। राक्षसा हर्षं प्रापुः ॥ २९ ॥

१ बकारेः कृष्णस्य उशन्मुखं कमनीयं मुखम्। २ अमृषा वस्तुतः सर्पवपुरसुर एव। मृषायते स्वानां सर्पसादृश्यगोचरत्वेन प्रतीयते इति तान् निरोद्धुमिति योज्यम्। ३ हतयोः स्वकयोरन्तस्मरतीति तथाविधेन।

ततः कृष्णस्तत् श्रुत्वाऽर्भकवत्ससहितमात्मानं चूर्णीकर्तुमिच्छोस्तस्य गले ववृधे ॥३०॥ ततो निरुद्धमार्गिणस्तस्य देहान्तरगतो वायुर्ब्रह्म-रन्ध्रं निर्भिद्य बहिर्गतः ॥३१॥ तेनैव सर्वेषु प्राणेषु बहिर्गतेषु मृतान् बालवत्सान् स्वामृतदृष्ट्योत्थाप्य तैर्युक्तः कृष्णो मुखाद् बहिर्ययौ॥३२॥ ततस्तद्देहोत्थितं तेजः खे स्थितं सत् कृष्णनिर्गमं प्रतीक्ष्य देवानां पश्यतां कृष्णे विवेश ॥ ३३ ॥ तदा देवाः पुष्पवृष्टिं चक्रुः। अप्सरसो

तच्छ्रुत्वा भगवान् कृष्णस्त्वव्ययः सार्भवत्सकम् ॥ चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले ॥ ३० ॥ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः ॥ पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्धन् विनिष्पाट्य विनिर्गतो बहिः ॥ ॥ ३१ ॥ तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान् सुहृदः परेतान् ॥ दृष्ट्या स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुन्दो भगवान् विनिर्ययौ ॥ ३२ ॥ पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद् दिशो दश ॥ प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन् मिषतां दिवौकसाम् ॥ ३३ ॥ ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः ॥ गीतैः सुरा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जयनिस्स्वनैर्गणाः ॥ ३४ ॥ तदद्भुतस्तोत्रसु-वाद्यगीतिकाजयादिनैकोत्सवमंगलस्वनान् ॥ श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद् दृष्ट्वा महीशस्य जगाम विस्म-यम् ॥ ३५ ॥ राजन्नाजगरं चर्म शुष्कं वृन्दावनेऽद्भुतम् ॥ व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥ ३६ ॥ एतत्कौ-मारजं कर्म हरेरात्माहिमोक्षणम् ॥ मृत्योः पौगण्डके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥ ३७ ॥

नन्तुः। गन्धर्वाः जगुः ॥ ३४ ॥ ततो वाद्यगीतस्तुत्यादीनां शब्दान् सत्यलोके स्वधाम्नः समीपे श्रुत्वाऽऽगतो ब्रह्मा कृष्णस्य महिमानं दृष्ट्वा विस्मयं प्राप ॥ ३५ ॥ हे राजन्! तदाजगरं चर्म शुष्कं सद् वृन्दावने व्रजौकसां क्रीडार्थं महाबिलमासीत् ॥३६॥ हे नृप! एतत् कृष्णस्य पञ्चमवर्षकृतं कर्म बालाः व्रजे आगत्य षष्ठे वर्षे ऊचुः ॥ ३७ ॥



---

१ स्वकार्यं कुर्वतः। २ अकुर्वत। ३ पूजाम्। ४ अन्ति समीपे। ५ महि महिमानम्। ६ ईशस्य कृष्णस्य।

हे नृप ! मनुजार्भमायिनः कृष्णस्य तच्चित्रं न, यतः स पापोऽपि सत्समानरूपतां प्राप ॥३८॥ तस्य मूर्तिप्रतिमा सकृन्मनसि स्थापिता सती प्रह्लादादिभ्यः आत्मगतिं ददौ । स एव यस्यान्तर्गतस्तस्य मोक्षो जातः इदं किमाश्चर्यम् ॥३९॥ सूत उवाच । हे शौनकादयो द्विजाः ! एवं कृष्णचरितं श्रुत्वा राजा पुनः पप्रच्छ ॥४०॥ राजोवाच । हे ब्रह्मन् ! कौमारे कृतं कर्म बालाः पौगण्डके कथं ज्ञात्वोचुः । अवस्थाप्रमाणमाह—"कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशाद् यौवनं तु ततः परम्" इति ॥४१॥ अत्रास्माकं महत् कौतूहलं वर्तते ।

नैतद् विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः ॥ अघोऽपि यत्स्पर्शनधौतपातकः प्रापात्मसात्म्यं त्वसतां सुदुर्लभम् ॥ ३८ ॥ सकृद् यदंगप्रतिमान्तराहिता मनोमयीं भागवतीं ददौ गतिम् ॥ स एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोऽन्तर्गतो हि किं पुनः ॥३९॥ सूत उवाच ॥ इत्थं द्विजा याँदवदेवदत्तः[1]श्रुत्वा स्वरातुश्चरितं[2] विचित्रकम् ॥ पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः[3] ॥ ४० ॥ राजोवाच ॥ ब्रह्मन् कालान्तरकृतं तत्कालीनं कथं भवेत् ॥ यत्कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः ॥४१॥ तद् ब्रूहि मे महायोगिन् परं कौतूहलं गुरो ॥ नूनमेतद्धरेरेव माया भवति नान्यथा ॥ ४२ ॥ वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः ॥ यत् पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम् ॥४३ सूत उवाच ॥ इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानन्तहृताखिलेन्द्रियः ॥ कृच्छ्रात् पुनर्लब्धबहिर्दृशिः[4] शनैः प्रत्याह तं भागवतोत्तमोत्तम ॥४४॥ इति श्रीभागवते महा० दशम० पू० अघासुरवधो नाम द्वादशोऽध्यायः ॥१२॥ श्रीशुक उवाच ॥ साधु पृष्टं महाभाग त्वया भागवतोत्तम ॥ यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥१॥

तद् ब्रूहि ॥४२॥ किंच वयं क्षत्रबंधवोऽपि धन्याः, यतस्त्वत्तः कृष्णकथामृतं पिबामः ॥४३॥ सूत उवाच। हे शौनक ! इत्थं पृष्टः शुकः शनैस्तमाह ॥४४॥ इति श्रीभागवते महापु० चू० दशम० पू० द्वादशोऽध्यायः ॥१२॥ त्रयोदशेऽहरद् ब्रह्मा वत्सान् पालांश्च मायया। तदा तत्सर्वरूपोऽब्दं कृष्णः पूर्ववदाचरत् ॥१॥ श्रीशुक उवाच । हे भागवतोत्तम ! त्वया साधु पृष्टं यतो मुहुर्हरिकथां शृण्वन्नपि नूतनवत् तां करोषि ॥१॥

१ यादवदेवेन श्रीकृष्णेन दत्तः । उत्तराया इति शेषः । २ स्वरक्षकस्य । ३ येन श्रवणेन निगृहीतं वशीकृतं चेतो यस्य सः । ४ दृष्टिः । द्वितीयान्तपाठः क्वचित् ।

किञ्च कृष्णकथा प्रतिक्षणं नव्यवद् भवति इति यत् स साधूनां स्वभाव एव यथा स्त्रीलम्पटानां कामिन्याः वार्ता नूतना तद्वत् ॥२॥ तस्मात् हे नृप ! इदं गुह्यमपि वदामि ॥३॥ ततोऽघासुरमुखाद्वत्सान् बालांश्च रक्षित्वा ततस्तान् यमुनातीरम् आनीय कृष्णः इदमाह ॥४॥ हे बालाः ! इदं तटं रम्यम् । कोमलस्वच्छवालुकं भ्रमरपक्षिनादेनलसद्भिर्द्रुमैर्व्याप्तमस्ति ॥५॥ अतोऽस्माभिरत्र भोक्तव्यं यतो वेलातिपातेऽत्र क्षुधार्दिताः

सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि ॥ प्रतिक्षणं नव्यवदच्युतस्य यत् स्त्रिया विटानामिव साधुवार्ता ॥२॥ शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते ॥ ब्रूयुः स्निग्धस्य शिष्यस्य गुरवोगुह्यमप्युत ॥३॥ तथाऽघवदनान्मृत्यो रक्षित्वा वत्सपालकान् ॥ सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥ ४ ॥ अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसंपन्मृदुलाच्छवालुकम् ॥ स्फुटत्सरोगन्धहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ॥५॥ अत्र भोक्तव्यमस्माभिर्दिवाऽऽरूढं क्षुधार्दिताः ॥ वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥६॥ तथेति पाययित्वाम्भो वत्सानारुध्य शाद्वले ॥ मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥ ७ ॥ कृष्णस्य विष्वक् पुरुराजिमण्डलैरभ्याननाः फुल्लदृशो व्रजार्भकाः ॥ सहोपविष्टा विपिने विरेजुश्छदा यथाऽम्भोरुहकर्णिकायाः ॥ ८ ॥ केचित् पुष्पैर्दलैः केचित् पल्लवैरङ्कुरैः फलैः ॥ शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥ ९ ॥ सर्वे मिथो दर्शयन्तः स्वस्वभोज्यरुचिं पृथक् ॥ हसन्तो हासयन्तश्चाभ्यवजह्रुः सहेश्वराः ॥ १० ॥

स्मः । किंच एते वत्साः जलं पीत्वा समीपे तृणं चरन्तु ॥६॥ ततस्तथेत्युक्त्वा बालाः वत्सान् हरिततृणदेशे संरुध्य स्वस्वशिक्यानि मुक्त्वा कृष्णेन सह बुभुजुः ॥७॥ तदा कृष्णस्य सर्वतः संमुखाः अर्भकाः बहुपङ्क्तिमण्डलैः स्थिताः सन्तो विरेजुः ॥८॥ तत्र केचित् पुष्पैस्तद्दलैः पत्रैः फलैः शिलादिभिश्च पात्राणि कृत्वा ॥९॥ सर्वे स्वस्वभोज्यरुचिं मिथो दर्शयन्तो हसन्तः सकृष्णाः बुभुजुः ॥ १० ॥



१ या अच्युतवार्तवार्ता येषां तथा विधानि वाणीश्रुतिचेतांसि येषां तेषाम् । २ स्वीयानां केलीनां संपदो विद्यन्तेर्यास्मिस्तत् । ३ सरः सरोजम्, अलीनां पत्रिणां पक्षिणां च के उदके ध्वनयः तेषां प्रतिध्वनेन व्याप्तैर्द्रुमैराकुलम् । ४ क्षुधाविता इ० पा० ।

तदा यज्ञभुक् कृष्णस्तन्मध्यस्थः सन्नुदरवस्त्रयोर्मध्ये वेणुं दधद्वामकक्षे शृङ्गवेत्रे दधद्वामकरे दध्योदनकवलं दधद् अङ्गुलिसन्धिषु बिल्वादि फलानि दधद् एवं धृत्वा मित्राणि नर्मभिर्हासयन् स्वर्गस्थजने पश्यति सति बालवत् क्रीडन् बुभुजे ॥११॥ हे नृप ! एवं बालेशु भुञ्जानेषु वत्सास्तृणलोभेन दूरं विविशुः ॥१२॥ तदा भीतान् गोपान् कृष्ण आह। हे सखायः ! भोजनाद् मा विरमत। वत्सानहमानेष्ये ॥ १३ ॥ एवमुक्त्वा कृष्णोऽद्रिगुह्वादिषु वत्सान् विचिन्वन् सपाणिकवलो ययौ ॥ १४ ॥ तावद्ब्रह्मा तदा कृष्णस्य महिमानं द्रष्टुं स्थानात्

विभ्रद्वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु ॥ तिष्ठन्मध्ये स्वपरिसुहृदो[1] हासयन्नर्मभिः स्वैः स्वर्गे लोके मिषति बुभुजे यज्ञभुग् बालकेलिः ॥ ११ ॥ भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु ॥ वत्सास्त्वन्तर्वने दूरं विविशुस्तृणलोभिताः ॥ १२ ॥ तान् दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम्[3] ॥ मित्राण्या-शान्माविरमतेहानेष्ये वत्सकानहम् ॥ १३ ॥ इत्युक्त्वाऽद्रिदरीकुञ्जगह्वरेष्वात्मवत्सकान् ॥ विचिन्वन् भगवान् कृष्णः सपाणिकवलो ययौ ॥ १४ ॥ अम्भोजन्मजनिस्तदन्तरगतो मायार्भकस्येशितुर्द्रष्टुं मञ्जु महित्वमन्यदपि तद्वत्सा-नितो वत्सपान् ॥ नीत्वाऽन्यत्र कुरूद्वहान्तरदधात् खेऽवस्थितो यः पुरा दृष्ट्वाऽघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्म-यम् ॥ १५ ॥ ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् ॥ उभावपि वने कृष्णो विचिकाय समन्ततः ॥ १६ ॥ क्वाप्यदृष्ट्वाऽन्तर्विपिने वत्सान् पालांश्च विश्वजित् ॥ सर्वं विधिकृतं कृष्णः सहसाऽवजगाम ह ॥ १७ ॥ ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ॥ उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ १८ ॥

तद्वत्सान् बालांश्च जहार, यो ब्रह्मा पूर्वं कृष्णस्याघासुमोक्षणं दृष्ट्वा परं विस्मयं प्राप्तः ॥ १५ ॥ ततः कृष्णो वने वत्सानदृष्ट्वा यमुनातटे तान् बालांश्च सर्वत्र मृगयन् ॥ १६ ॥ वत्सान् वत्सपांश्च क्वापि न दृष्ट्वा सर्वं ब्रह्मकृतं ज्ञात्वा ॥१७॥ कृष्णस्तन्मातॄणां ब्रह्मणश्च हर्षं कर्तुं वत्सानां गोपबालानां च रूपेण वर्तमानमात्मानं चक्रे ॥ १८ ॥



१ स्वस्य परितः उपविश्य स्थितान् सुहृदः। २ अपास्य। ३ भयहेतुभ्यो भयम्।

तदेवाह । वत्सपानां वत्सानां च यावद्वपुः प्रमाणं यावत् करचरणादिकं यावद्यष्टिश्रृङ्गवेणुदलशिक्‍ यावद्वस्त्राभरणं यावद्गुणशीलनामाकृति वयो यावत् क्रीडादिकं तावद्रूपः कृष्णो बभौ । सर्वं विष्णुमयं जगदिति या वाणी सा प्रत्यक्षा बभूव ॥१९॥ एवं सर्वात्मा कृष्णः आत्मरूपान् गोवत्सान् स्वात्मरूपैर्गोपबालैः प्रयोज्य व्रजं विवेश ॥२०॥ तत्तद्वत्सान् पृथक् नीत्वा तत्तद्गोशालायां स्थापयित्वा तत्तद्गृहं स्वयं विवेश ॥२१॥ तदा तन्मातरो वेणुनादं श्रुत्वोत्थाय सत्यान् पुत्रान् मत्वा ब्रह्मैव दोर्भिरालिङ्ग्य स्नेहस्नुतं स्तनं पाययामासुः ॥२२॥ एवं

यावद्वत्सपवत्सकाल्पकवपुर्यावत् कराङ्घ्र्यादिकं यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम् ॥ यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥ १९ ॥ स्वयमात्मात्मगोवत्सान् प्रतिवार्यात्मवत्सपैः ॥ क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद् व्रजम् ॥२०॥ तत्तद्वत्सान् पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः ॥ तत्तदात्माऽभवद्राजंस्तत्तत्सद्म प्रविष्टवान् ॥ २१ ॥ तन्मातरो वेणुरवत्वरोत्थिता उत्थाप्य दोर्भिः परिरभ्य निर्भरम् ॥ स्नेहस्नुतस्तन्यपयस्सुधासवं मत्वा परं ब्रह्म सुतानपाययन् ॥ २२ ॥ ततो नृपोन्मर्दनमज्जलेपनालङ्काररक्षातिलकाशनादिभिः ॥ संलालितः स्वचरितैः प्रहर्षयन् सायं गतो यामयमेन माधवः ॥ २३ ॥ गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः परिहूतसंगतान् ॥ स्वकान्स्वकान् वत्सतरानपाययन् मुहुर्लिहन्त्यः स्रवदौधसं पयः ॥ २४ ॥ गोगोपीनां मातृताऽस्मिन् सर्वा स्नेहर्धिका विना ॥ पुरोवदास्वपि हरेस्तोकता मायया विना ॥ २५ ॥ व्रजौकसांस्वतोकेषु स्नेहवल्ल्याब्दमन्वहम् ॥ शनैर्निस्सीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥ २६ ॥

नित्यवत् कृष्णः स्वचरितैर्मातॄः प्रहर्षयन् सायं व्रजं प्राप्तस्ततस्ताभिर्मातृभिर्मज्जनमर्दनलेपालंकारवस्त्रतिलकाशनादिभिर्लालितः ॥२३॥ ततो गावो गोष्ठं प्राप्य स्वस्ववत्सान् लिहन्त्यः सत्यो हुंकारं कृत्वा पयोऽपाययन् ॥२४॥ हे नृप ! गोगोपीनां मातृभावः कृष्णे पूर्ववदासीत् । गोगोपीष्वपि हरेर्बाल भावनाऽपि पूर्ववदासीत् ॥२५॥ एवं व्रजौकसां स्वबालेषु स्नेहवल्ली नित्यं वर्षपर्यन्तं निस्सीम ववृधे ॥ २६ ॥

१ 'उवूह्य' इ० पा० । २ पय एव सुधावत् स्वादु आसववन्मादकम् । ३ तत्तत्कालक्रीडानियमेन । ४ स्नेहाधिक्यं त्विदानीं विशेषः इत्यर्थः । ५ 'पूरोयद्' इ० पा० । ६ आ अब्दं यावत्संवत्सरम् ।

एवं कृष्णो वत्सपालमिषेण वर्षं वनगोष्ठयोश्चिक्रीडे ॥ २७ ॥ एकदा सरामः कृष्णो वर्षस्य पञ्चसु षट्सु वा रात्रिषु न्यूनासु सतीषु वनं विवेश ॥२८॥ ततो गोवर्धनशिखरे चरन्त्यो गावो व्रजसमीपे वत्सान् चरतो ददृशुः ॥२९॥ ततः स गोसमूहो रक्षकानतिक्रम्य दुर्गमार्गानुल्लङ्घ्योच्चमुखपुच्छः स्रवत्पयाः हुंकारेण द्रुतं व्रजसमीपं जगाम॥३०॥ततो गावो वत्सान् प्राप्याङ्गानि गिलन्त्य इव लिहन्त्यः पुनः प्रसूता अपि

इत्थमात्माऽऽत्मनाऽऽत्मानं वत्सपालमिषेण सः ॥ पालयन् वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः ॥ २७ ॥ एकदा चारयन् वत्सान् सरामो वनमाविशत् ॥ पञ्चषासु त्रियामासु हायनापूरणीष्वजः ॥ २८ ॥ ततो विदूराच्चरतो गावो वत्सानुपव्रजम् ॥ गोवर्धनाद्रिशिरसि चरन्त्यो ददृशुस्तृणम् ॥ २९ ॥ दृष्ट्वाऽथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः ॥ द्विपात् ककुद्ग्रीव उदास्यपुच्छोऽगाद् धुंकृतैरास्रुपया जवेन ॥ ३० ॥ समेत्य गावोऽधो वत्सान् वत्सवत्योऽप्यपाययन् ॥ गिलन्त्य इव चाङ्गानि लिहन्त्यः स्वौधसं पयः ॥ ३१ ॥ गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना ॥ दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान् ॥ ३२ ॥ तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्यवोऽर्भकान् ॥ उदुह्य दोर्भिः परिरभ्य मूर्धनि घ्राणैरवापुः परमां मुदं ते ॥ ३३ ॥ ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः ॥ कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः ॥३४॥ व्रजस्य रामः प्रेमर्द्धेर्वीक्ष्यौत्कण्ठ्यमनुक्षणम् ॥ मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिन्तयत् ॥३५॥ किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि॥व्रजस्यसात्मनस्तोकेष्वपूर्वंप्रेमवर्धते ॥३६॥

पयोऽपाययन् ॥३१॥ ततो गोपाः गवां रोधनप्रयत्ननिष्फलत्वेन जातक्रोधाः अतिदुःखमार्गेण तत्रैत्य गोवत्सैः सह सुतान् दृष्ट्वा॥३२॥ क्रोधहीनाः सन्तः प्रेमयुक्ता दोर्भिः पुत्रानालिङ्ग्य मूर्धानमवघ्राय मुदं प्रापुः ॥३३॥ ततस्ते गोपाः कृच्छ्रात् तथा शनैर्निर्वृताः आसन् ॥३४ अथ रामो व्रजस्य प्रेमवृद्धेरतिशयं दृष्ट्वा तद्धेतुमचिन्तयत्॥३५॥तदाह।अहो व्रजस्य प्रेम यथा कृष्णे आसीत् तथा स्वबालेषु वर्धते।एतत् किम्॥३६॥

---

१ आपूरणीषु पूरकतयाऽवशिष्टासु । २ अतिक्रान्तः आत्मपात् गोपालात् अत्यात्मपः। स चासौदुर्गमार्गश्च अत्यात्मपदुर्गमार्गः । ३ द्विपाविव प्रतीयमानः। ४ ककुद्याकुञ्चिता ग्रीवा यस्य सः।५ आसवतः स्रवन्ति पयांसि यस्य सः । 'आस्नु' इ० पा० । ६ हेतुमजानन् ।

इयं माया देवानां नराणां दैत्यानां वा यतो मामपि मोहयति अतः कृष्णस्यैव ॥३७॥ एवं संचिन्त्य रामो वत्सान् बालांश्च सर्वं कृष्णरूपं ज्ञानदृष्ट्या ददर्श ॥३८॥ ततः कृष्णं दृष्ट्वा जगाद । हे कृष्ण ! एते तावद्वत्साः ऋष्यंशाः पालास्तु देवांशाः इत्यहं वेद्मि । अधुना तु सर्वं त्वमेव भासि एवं कथं तद्विविच्य वद । तदा कृष्णेन संक्षेपात् सर्ववृत्तान्तमुक्तं बलो विदितवान् ॥ ३९ ॥ अथ ब्रह्माऽऽत्मनो मानेन त्रुटिमात्रकालेन तत्रैत्य पुरावत् सानुचरं क्रीडन्तं हरिं दृष्ट्वा व्यतर्कयत्॥४०॥ एते वत्साः बालाश्च मे मायातल्पे शयानाः नाद्याप्युत्थिताः॥४१॥

केयं वा कुत आयाता दैवी वा नार्युताऽऽसुरी ॥ प्रायो मायाऽस्तु मे भर्तुर्नान्या मेऽपि विमोहिनी ॥ ३७ ॥ इति संचिन्त्य दाशार्हो वत्सान्सवयसानपि ॥ सर्वानाचष्ट वैकुण्ठं चक्षुषा वयुनेन सः ॥ ३८ ॥ नैते सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाऽऽश्रयेऽपि ॥ सर्वं पृथक् त्वं निगमात् कथं वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत ॥३९॥ तावदेत्यात्मभूरात्ममानेन त्रुट्यनेहसा ॥ पुरोवदब्दं क्रीडन्तं ददृशे सकलं हरिम् ॥ ४० ॥ यावन्तो गोकुले बालाः सवत्साः सर्व एव हि ॥ मायाशये शयाना मे नाद्यापि पुनरुत्थिताः ॥ ४१ ॥ अतः एतेऽत्र कुत्रत्या मन्मायामोहितेतरे ॥ तावन्त एव तत्राब्दं क्रीडन्तो विष्णुना समम् ॥४२॥ एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः ॥ सत्याः के कतरे नेति ज्ञातुं नेष्ट कथंचन ॥ ४३ ॥ एवं संमोहयन् विष्णुं विमोहं विश्वमोहनम् ॥ स्वयैव माययाऽजोऽपि स्वयमेव विमोहितः ॥ ॥४४॥ ताभ्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि ॥ महतीतरमायैश्यं निहन्त्यात्मनि युञ्जतः ॥ ४५ ॥ तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात ॥ व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः ॥ ४६ ॥



अतः एतेऽत्र कुत्रत्याः ॥४२॥ एवं चिरं ध्यात्वा सत्याः के इतरे के इति ज्ञातुं समर्थो नासीत् ॥४३॥ एवं ब्रह्मा विष्णुं मोहयितुं प्रवृत्तोऽपि स्वमायया स्वयमेव मोहं प्राप ॥४४॥ यथा खद्योतकान्तिः पृथक् प्रकाशं न दिवा करोति । एवं महापुरुषे युञ्जतः पुंसो माया न किंचित् करोति ॥ ४५ ॥ तावद्ब्रह्मणः पश्यतः सतः सर्वे वत्सास्तत्पालाश्च घनश्यामाः पीताम्बरधराः ॥ ४६ ॥

१ उक्तमिति शेषः । २ मन्मायामोहितेभ्यः इतरे । ३ हिमकणप्रभवम् । ४ नीचा माया । ५ युञ्जतः इतरतया न किंचित् करोति किंत्वात्मनि स्वस्मिन् ऐश्यं सामर्थ्यं निहन्ति नाशयति ।

चतुर्भुजाः शङ्खचक्रगदापद्मधराः किरीटकुण्डलवनमालाधराः ॥४७॥ श्रीवत्साङ्गदादिलक्षिताः नूपुरकटिसूत्राङ्गुलीयकैः शोभिताः ॥ ४८ ॥ तुलसीनवमालाभिरापादमस्तकपूर्णाः ॥ ४९ ॥ चन्द्रिकावद्धवलैः स्मितैः कटाक्षावलोकनैः स्वभक्तमनोरथानां रजस्सत्त्वाभ्यां स्रष्टृपालका इवन्यदृश्यन्त ॥५०॥ ब्रह्मादितृणपर्यन्तैश्चराचरैर्नृत्यगीताद्यनेकार्हणैः पृथक्पृथगुपासिताः॥५१॥तथा अणिमाद्यैश्चतुर्विंशतितत्त्वैश्च तथा काल-

चतुर्भुजाः शंखचक्रगदाराजीवपाणयः ॥ किरीटिनः कुण्डलिनो हारिणो वनमालिनः ॥ ४७ ॥ श्रीवत्सांगददोरत्नक-म्बुकङ्कणपाणयः ॥ नूपुरैः कटकैर्भाताः कटिसूत्रांगुलीयकैः ॥४८॥ आंघ्रिमस्तकमापूर्णास्तुलसीनवदामभिः ॥ कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ॥ ४९ ॥ चन्द्रिकाविशदस्मेरैः सारुणापांगवीक्षितैः ॥ स्वकार्थानामिव रजस्सत्त्वाभ्यां स्रष्टृपालकाः ॥ ५० ॥ आत्मादिस्तम्बपर्यन्तैर्मूर्तिमद्भिश्चराचरैः ॥ नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः ॥ ५१ ॥ अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः ॥ चतुर्विंशतिभिस्तत्त्वैः परीता महदादिभिः ॥ ५२ ॥ कालस्वभावसंस्का-रकामकर्मगुणादिभिः ॥ स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः॥५३॥सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तयः ॥ अस्पृष्ट-भूरिमाहात्म्या अपि ह्युपनिषद्दृशाम् ॥५४॥ एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान् ॥ यस्य भासा सर्वमिदं विभा-तिसचराचरम् ॥५५॥ ततोऽतिकुतुकोद्वृत्तस्तिमितैकादशेन्द्रियः ॥ तद्धाम्नाऽभूदजस्तूष्णीं पूर्देव्यन्तीव पुत्तिका ॥५६॥

कर्मगुणादिभिः सर्वैर्मूर्तिमद्भिरुपासिताः ॥ ५२ ॥ ५३ ॥ कथं भूता मूर्तिमन्तः । सत्यज्ञानरूपाः अनन्ता ब्रह्ममूर्तयो व्यदृश्यन्त ॥ ५४ ॥ एवं ब्रह्मैकदैव सर्वान् ददर्श ॥ ५५ ॥ ततोऽत्याश्चर्येण हंसपृष्ठे निपत्य तेषां तेजसा स्तब्धेन्द्रियः पुत्तिकेव तूष्णीं बभूव ॥ ५६ ॥

---

१ श्रीवत्साङ्गदाः दोष्षु येषां ते च रत्नकम्बुकंकणपाणयश्च । रत्नमयानि कम्बुवत् त्रिधाराणि कङ्कणानि पाणिषु येषां ते । २ बहुपुण्ययुतजनैरर्पितैः । ३ रजसाऽपाङ्गारुणत्वोपलक्षितेन स्रष्टारः सत्त्वेन स्मितधवलत्वोपलक्षितेन स्रष्टारः सत्त्वेन स्मितधवलत्वोपलक्षितेन पालकाश्च । ४ मायाविद्याविभिः शक्तिभिः । ५ भगवन्महिम्ना तिरस्कृतस्वातन्त्र्यैः । ६ उपनिषद् आत्मज्ञानमेव दृक् चक्षुर्येषां तेषाम् । ७ उद्वृत्तः क्षुभितः । ८ पूर्देवी व्रजाधिष्ठात्री काचिद्देवता तस्याः अन्ति समीपे यथा पुत्तिका प्रतिमा ।

हे नृप ! एवं ब्रह्मणि किमिदमिति मुह्यति सति श्रीकृष्णः स्वमायाजवनिकामपसारितवान् ॥५७॥ ततो ब्रह्मा मृतवदुत्थितः सन् नेत्राण्युन्मील्य ॥ ५८ ॥ सर्वतः पश्यन् पुरः स्थितं वृन्दावनं ददर्श ॥ ५९ ॥ तदेवाह । यत्र वने स्वाभाविकाप्रतिकार्यवैराः मनुष्यसिंहादयो मित्राणि सहैवासन् ॥ ६० ॥ ब्रह्मा तत्र मायाशिशुत्वरूपं नाट्यं धारयन्तं पूर्ववद् वत्सान् सर्वतः शोधयन्तं सपाणिकवलं ब्रह्मरूपं कृष्णं

इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ ॥ अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि परमोऽजाजवनिकाम् ॥ ५७ ॥ ततोऽर्वाक् प्रतिलब्धाक्षः कः परेतवदुत्थितः ॥ कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं सहात्मना ॥ ५८ ॥ सपद्येवाभितः पश्यन् दिशोऽपश्यत्पुरः स्थितम् ॥ वृन्दावनं जनाजीव्यद्रुमाकीर्णं समांप्रियम् ॥ ५९ ॥ यत्र नैसर्गदुर्वैराः सहासन् नृमृगादयः ॥ मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम् ॥ ६० ॥ तत्रोद्वहत् पशुवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनन्तमगाधबोधम् ॥ वत्सान् सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥ ६१ ॥ दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपुः कनकदण्डमिवाभिपात्य ॥ स्पृष्ट्वा चतुर्मुकुटकोटिभिरङ्घ्रियुग्मं नत्वा मुदश्रुसुजलैरकृताभिषेकम् ॥ ६२ ॥ उत्थायोत्थाय कृष्णस्य चिरस्य पदयोः पतन् ॥ आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः ॥ ६३ ॥

ददर्श ॥ ६१ ॥ एवं दृष्ट्वा स्ववाहनाद्धंसाद्भुव्युत्तीर्य वेगेन दण्डवत् तं नत्वा चतुर्मुकुटाग्रैश्चरणद्वयं स्पृष्ट्वाऽऽनन्दाश्रुजलैरभिषिषेच ॥ ६२ ॥ ततो ब्रह्मोत्थाय पूर्वदृष्टं महित्वं स्मृत्वा कृष्णपादयोश्चिरं पपात ॥ ६३ ॥



---

१ इरा सरस्वती तस्याः ईशे ब्रह्मणि । २ निजः असाधारणो महिमा यस्य तस्मिन् । ३ स्वप्रमिति स्वप्रकाशं च तत् कं सुखं च यस्मिंस्तस्मिन् । ४ अजातः प्रकृतेः परत्र परस्मिन् । ५ अतन्निरसन सुखेन मायायाः मिथ्यात्वप्रतिपादने ब्रह्मकैः श्रुतिशिरोभिरुपनिषद्भिर्मितिः ज्ञानं यस्य तस्मिन् स्वरूपम् इत्यध्याहार्यम् । तद्विशेषणस्वेनातर्क्यादयः पञ्च सप्तम्यन्तार्थाः योज्याः । एतादृशत्वरूपे ब्रह्मणि किमिदमिति मुह्यति सति पश्चात् तद् द्रष्टुमप्यनीशे सतीत्यन्वयः । ६ अपश्यत । ७ सं सन्ततानि आ समन्तात् प्रियाणि यस्य तत् । ८ अजितस्य श्रीकृष्णस्यावासेन द्रुताः पलायिताः रुट्तर्षादयः क्रोधलोभादयो यस्मात् तत् ।

ततः शनैरुत्थाय लोचने विमृज्य कृष्णं वीक्ष्य नम्रकन्धरः कृताञ्जलिः सकम्पो गद्गदवाण्या तुष्टाव ॥६४॥ इति श्रीभागवते चू० दशम० पू० त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशेऽद्भुतं दृष्ट्वा पूर्वागन्तुकनिश्चयम् ॥ अनीशः कर्तुमस्तौषीत् कृष्णं ब्रह्मा विमोहितः ॥१॥ ब्रह्मोवाच ॥ हे स्तुत्य! अभ्रवपुषे तडिदम्बराय गुञ्जाकर्णभूषणाय वनमालाधराय मयूरपिच्छमुकुटाय कवलवेत्रशृङ्गवेणुभिः शोभिताय मृदुपदे तुभ्यं नमः॥ ॥ १ ॥ हे देव ! अस्यापि सुलभतया प्रकाशितस्यापि तव वपुषो महिमानं ज्ञातुं न कोऽपि समर्थः । किमुत तवैव साक्षात् स्वसुखानुभवमा-

शनैरथोत्थाय विमृज्य लोचने मुकुन्दमुद्वीक्ष्य विनम्रकन्धरः ॥ कृताञ्जलिः प्रश्रयवान् समाहितः सवेपथुर्गद्गदयैल-तलया ॥६४॥ इति श्रीभाग० म० दशम० पू० ब्रह्ममोहनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ ब्रह्मोवाच ॥ नौमीड्य-तेऽभ्रवपुषे तडिदम्बरायगुञ्जावतंसपरिपिच्छलसन्मुखाय ॥ वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपा-ङ्गजाय॥१॥अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य नतु भूतमयस्य कोऽपि॥ नेशे महि त्ववसितुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः॥ २ ॥ ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्ताम् ॥ स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥ ३ ॥ श्रेयस्स्रुतिं भक्तिमु-दस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ॥ तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावघाति-नाम् ॥ ४ ॥ पुरेह भूमन् बहवोऽपि योगिनस्त्वदर्पितेहानिजकर्मलब्धया ॥ विबुध्य भक्त्यैव कथोपनीतया प्रपेदि-रेऽञ्जोऽच्युत ते गतिं पराम् ॥ ५ ॥

त्रस्य ॥२॥ हे अजित ! ज्ञाने प्रयत्नं हित्वा स्वस्थान एव श्रुतिपथप्राप्तां त्वत्कथां सत्कुर्वन्तो ये जीवन्ति तैस्त्वं जितोऽसि ॥ ३ ॥ हे विभो ! ये भक्तिं निःश्रेयसस्य मार्गं हित्वा ज्ञानप्राप्तये यत्नं कुर्वन्ति तेषां क्लेश एवावशिष्यते यथा तुषावखंडिनाम् ॥ ४ ॥ हे भूमन् ! पुरा बहवोऽपि योगिनो योगैर्ज्ञानमप्राप्य पश्चात् भक्त्यैवाऽऽत्मानं ज्ञात्वा सुखेन तव गतिं प्रपेदिरे ॥ ५ ॥

---

१ नन्दपुत्राय । २ ममानुग्रहो यस्मात् तस्य । ३ स्वीयानां यथायथेच्छा तथा तथा भवतः । ४ नेष्टे । ५ क्लेशं लाति ददातीति । ६ त्वय्यर्पितेहा लौकिकी सर्वाऽपि चेष्टा निजानि कर्माणि च तैर्लब्धया ।

हे विभो । अगुणस्य तव महिमा विजितेन्द्रियः क्वचित् ज्ञातुमर्हति॥६॥सगुणस्य तव विश्वहितायावतीर्णस्य गुणानां प्रमाणं कर्तुं के समर्थाः न केऽपि ॥ ७ ॥ तस्मात् तव कृपा कदा भविष्यतीति मन्यमानः स्वोपार्जितकर्मफलमनासक्तः सन् भुञ्जान एवात्यन्तं तपआदिनाक्लिश्यन् यो जीवेत् स मुक्तौ दायभाग्भवति ॥८॥ एवं स्तुत्वाऽपराधं निवेदयति ॥ हे ईश ! मम दौर्जन्यं पश्य, यतः सर्वमोहके त्वयि स्वमायां प्रसार्य

तथाऽपि भूमन् महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः ॥ अविक्रियात् स्वानुभवादरूपतोह्यनन्यबो-
ध्यात्मतया न चान्यथा ॥ ६ ॥ गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्य ॥ कालेन यैर्वा-
विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥७॥ तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ॥
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ ८ ॥ पश्येश मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि-
मायिमायिनि ॥ मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ ॥ ९ ॥ अतः क्षमस्वाच्युत मे रजो-
भुवो ह्यजानतस्त्वत्पृथगीशमानिनः ॥ अजावलेपान्धतमोऽन्धचक्षुष एषोऽनुकम्प्यो मयि नाथवानिति ॥ १० ॥
क्वाहं तमोमहदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः ॥ क्वेदृग्विधाविगणिताण्डपराणुचर्यावाताध्व-
रोमविवरस्य च ते महित्वम् ॥ ११ ॥ उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे ॥ किमस्तिनास्ति
व्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः ॥ १२ ॥

तवैश्वर्यं द्रष्टुमैच्छम्।अहो त्वय्येवं कर्तुमहं कियान्।अग्नौ ज्वालेव न किंचित्॥९॥अतो हे अच्युत!त्वत्तः पृथगीशमात्मानं मन्यमानस्य मेऽपराधं क्षमस्व ॥१०॥हे ईश ! अस्मिन् ब्रह्माण्डे स्वमानेन सप्तवितस्तिकायोऽहं क्व । ईदृग्विधानेक ब्रह्माण्डरूपपरमाणुपरिभ्रमणार्थं गवाक्षाइवरोमरन्ध्राणि यस्य तस्य तव महिमा क्व॥११॥अपि च,हे ईश ! गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुरपराधाय स्यात् किम्।अतःसर्वस्य कुक्षिगतत्वेन ममापि-



१ विक्रिया विशेषाकारः तद्रहितात् । २ आत्माकारान्तःकरणसाक्षात्कारात् । ३ अविषयात् । ४ स्वप्रकाश्यत्वेनैव विबोद्धुमर्हति न त्वन्यथेति भावः । ५ अतिनिपुणैः । ६ हिमकणाः । ७ दिविनक्षत्रादिकिरण-परमाणवोऽपि । ८ अजो जगत्कर्ताऽहमिति मदेन गाढतमोरूपेणान्धीभूते नेत्रे यस्य तस्य । ९ ब्रह्माण्डरूपो घटः १० भावाभावशब्दाभ्यामभिहितम् । ११ अनन्तः बहिः तव कुक्षेः कियदपि किंचिन्मात्रमपि किमस्तीत्यन्वयः ।

तथात्वान्मातृवदपराधः सोढव्यः ॥ १२ ॥ प्रलये नारायणस्योदरनाभिनालात् निर्गतोऽजः इति वाक् तावन्न मृषा ॥१३॥ ननु नारायण पुत्र एवस्याः त्वं तेन मया किं प्राप्तं तत्राह ! नारायणो जलाश्रयः सर्वलोकसाक्षी किं त्वं नासि ॥१४॥ तव जलस्थं वपुः सत्यं न, यदि सत्यं स्यात् तर्हि तदेव मया किमिति न दृष्टम् । हृद्यपि किमिति नो दृष्टम् । ततस्तपःकरणानन्तरमेव सुदृष्टम् । अतो मायैव । अतस्तव जलेन परिच्छेदः

जगत्त्रयान्तोदधिसंप्लवोदे नारायणस्योदरनाभिनालात् ॥ विनिर्गतोऽजस्त्विति वाङ्न वै मृषा किं त्वीश्वर त्वन्न विनिर्गतोऽस्मि ॥ १३ ॥ नारायणस्त्वं नहि सर्वदेहिनामात्मास्यधीशोऽखिललोकसाक्षी ॥ नारायणोऽङ्गं नरभूजलायनात्तच्चापि सत्यं न तवैव माया ॥१४॥ तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव ॥ किं त्वा सुदृष्टं-हृदि मे तदैव किन्नो सपद्येव पुनर्व्यदर्शि ॥१५॥ अत्रैव मायाधमनावतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य ॥ कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ॥१६॥ यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा ॥ तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना ॥१७॥ अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितमेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि ॥ तावन्तोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासितास्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते ॥१८॥ अजानतां त्वत्पदवीमनात्मन्यात्माऽऽत्मना भासि वितत्य मायाम् ॥ सृष्टाँविवाहं जगतो विधानं इव त्वमेषोऽन्त इव त्रिनेत्रः ॥ १९ ॥

सत्यो न ॥ १५ ॥ अत्रैवावतारे त्वया बहिः स्फुटस्य प्रपञ्चस्य मायात्वं जनन्यै जठरान्तर्जगत्प्रदर्शनेन प्रकटीकृतम् ॥ १६ ॥ किंच तव कुक्षौ सर्वं मायैव भाति ॥१७॥ ममापि त्वया मायात्वं दर्शितम् । तदाह आदावेकः ॥ ततो वत्साः तत्पालाः यावन्तस्तावन्तश्चतुर्भुजाः । अन्ते त्वमेक एवावशिष्टोऽसि ॥ १८ ॥ हे ईश ! तव स्वरूपमजानतां प्रकृतिस्त्वमात्मा स्वातन्त्र्येण मायां विस्तार्य भासि कथं । जगत्सृष्ट्यादिष्वस्मदादादिवत् ॥ १९ ॥

१ नराद्उद्भूता येऽर्थास्तथा नराज्जातं यज्जलं तदयनाद् यो नारायणः प्रसिद्धः सोऽपि तवैवांगं मूर्तिः। २ मायोपशमन । ३ त्वत्सहितम् । किमिदं त्वत्सहितं मायया विना घटेतेत्यन्वयः। ४ त्वां विहाय। ५ मया सहाखिलैस्तत्त्वैरुपासिताः । ६ त्वया । ७ विश्वस्येत्यादिः । ८ पालने ।

तथा देवर्षिनरतिर्यक्षु तव वामनपरशुरामरामवराहरूपेण जन्म दुष्टानां मदनिग्रहाय सतामनुग्रहाय च वर्तते ॥२०॥ एवंभूतस्य तव विभूतीः को वेत्ति । अतस्तव योगमायावैभवमचिन्त्यम् ॥२१॥ तस्मादिदमसज्जगत् सत्ये त्वयि जायमानवन्नश्यत् सत् सत्यमिवभाति ॥ २२ ॥ सत्यस्तु त्वमेवेत्याह ॥ एकस्त्वं सत्यः स्वयंज्योतिः पुराणः पुरुषः ॥ २३ ॥ एवंभूतं त्वां ये गुरुलब्धज्ञानचक्षुषा पश्यन्ति त एव संसार-

सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य ॥ जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च ॥२०॥ को वेत्ति भूमन्भगवन्परात्मन् योगेश्वरोतीर्भवतस्त्रिलोक्याम् ॥ क्व वा कथं वा कति वा कदेति विस्तारयन् क्रीडसि योगमायाम् ॥ २१ ॥ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ॥ त्वय्येव नित्यसुखबोधतनावनन्ते माया त उद्यदपि यत सदिवावभाति ॥२२॥ एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः ॥ नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥ २३ ॥ एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ॥ गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरन्तीव भवानृताम्बुधिम् ॥ २४ ॥ आत्मानमेवात्मतयाऽविजानतां तेनैव जातं निखिलं प्रपञ्चितम् ॥ ज्ञानेन भूयोऽपिचतत् प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥२५॥ अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ॥ अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी॥२६॥त्वामात्मानं परं मत्वा परमात्मानमेव च॥ आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताऽज्ञता ॥२७॥

समुद्रं तरन्ति ॥ २४ ॥ तदा येषामात्मतयाऽऽत्मानमजानतां सर्वज्ञानेनैव जातं तत् ज्ञानेन लीयते रज्ज्वां सर्पशरीरस्याध्यासापवादौ यथा ॥२५॥ किंच एतौ बन्धमोक्षौ ऋतज्ञभावादन्यौ न स्तः ॥ एवं विचार्यमाणे नात्मनि बन्धमोक्षौ यथा सूर्ये रात्र्यहनी ॥२६॥ आत्मनि देहादिकम् अध्यस्य देहादावात्मानमध्यस्यात्रैव नष्टः आत्मा बहिर्मृग्यः इति विचित्रम् । नहि गृहे नष्टं वने मृग्यते ॥ २७ ॥



---

१ अजन्मनः । २ निरस्तप्रतिभासम् । ३ ऋतः अबाधितश्चासौ ज्ञः चिदात्मा च तथाविधो भावः परमार्थभूतः आत्मा च तस्मात् । ४ अजस्रचिति अखंडानुभवरूपे ।

अतो विवेकिनस्त्वां देहमध्ये एव जडं त्यजन्तः सन्तो मृगयन्ति। एवं चात्मतयैव ज्ञानान्मुक्तिः॥२८॥अथापि हे देव ! तव पदाम्बुजद्वयप्रसा-
दलेशेनानुगृहीत एव पुमान् तव तत्त्वं जानाति नान्यः ॥ २९ ॥ तस्मात् नाथ ! अत्र ब्रह्मजन्मनि तिर्यग्योनीनां मध्ये वा यज्जन्म तस्मिन्नेत-
द्भूरि भाग्यमस्तु येन भाग्येन त्वद्भक्तानां मध्ये कश्चिद्भूत्वा तव चरणकमलं सेवेय ॥ ३० ॥ हे कृष्ण ! व्रजे गावो गोप्यश्च धन्याः यासां

अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति संतः ॥ असन्तमप्यंन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति संतः ॥२८॥ अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि ॥ जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥ २९ ॥ तदस्तु मे नाथ स भूरिभागो भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम् ॥ येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम् ॥ ३० ॥ अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ॥ यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥ ३१ ॥ अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ॥ यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥ ३२ ॥ एषां तु भाग्यमहिमाऽच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः ॥ एतद्धृषीकचषकैरसकृत् पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥३३॥ तद्भूरिभाग्यमिह जन्म किमिप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् ॥ यज्जीवितं तु निखिलं भगवान् मुकुन्दस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥ ३४ ॥

स्तन्यं वत्सबालरूपेण त्वया पीतम्। यस्य तव तृप्तये सर्वेऽपि यज्ञाः अद्यापि न शक्ताः ॥ ३१ ॥ अहो नन्दगोपव्रजौकसां महद्भाग्यं येषां
परब्रह्म मित्रम् ॥ ३२ ॥ एषां भाग्यमहिमा तावदास्ताम्। वयमपि देवाः एकादशेन्द्रियाधिष्ठातारो भूरिभाग्याः यतः एतद्रूपमिन्द्रिय-
पानपात्रैर्मुहुः पिबामः ॥ ३३ ॥ हे नाथ ! अत्र लोके तत्रापि गोकुले ते यज्जन्म तदेव भूरि भाग्यम् ॥ ३४ ॥

१ अंति समीपे। २ रज्जुम्। ३ जानन्ति। ४ सन्तः सन्तमपि गुणं निवेधं विना किं जानन्ति न जानन्तीत्यर्थः। ५ अहंकारस्य शिवो बुद्धेर्ब्रह्मा चेति वस्तुतस्त्रयोदश। ६ उदजं कमलम्। ७ गोकुलवासिनां मध्येऽपि यस्य कस्याप्यङ्घ्रिरजसाऽभिषेको यस्मिंस्तत्। ८ येषां जीवितम्।

एषां व्रजवासिनां भक्त्या भगवान् ऋणीवास्ते॥३५॥हे कृष्ण ! यावत् त्वद्भक्ताः न जातास्तावद् रागादयश्चौराः भवन्ति। तथा गृहं कारागृहम् अङ्घ्रिनिगडो मोहः ॥३६॥ किंच प्रभो ! शरणागतजनानामानन्दं विस्तारयितुं निष्प्रपंचोऽपि प्रपञ्चं विस्तारयसि ॥३७॥ किंच त्वां जानन्त एव जानन्तु। किं बहूक्त्या। मम मनआदीनां तव वैभवं न गोचरम्॥३८॥हे कृष्ण ! मां सत्यलोकं गन्तुमाज्ञां देहि। त्वं सर्वं वेत्सि अतः इदं

एषां घोषनिवासिनामुत भवान् किं देवरातेति नश्चेतो विश्वफलात् फलं त्वदपरं कुत्राप्ययन्मुह्यति ॥ सद्वेषादिव पूतनाऽपि सकुलं त्वामेव देवाऽऽपिता यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥ ३५ ॥ तावद्रागादयः स्तेनास्तावत् कारागृहं गृहम् ॥ तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः ॥ ३६ ॥ प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले ॥ प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो ॥ ३७ ॥ जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो ॥ मनसो वपुषो वाचो वैभवं तव गोचरः ॥ ३८ ॥ अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक् ॥ त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥ ३९ ॥ श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ॥ उद्धर्मशार्वरहर क्षितिराक्षसध्रुगाकल्पमार्कमर्हन् भगवन् नमस्ते ॥ ४० ॥ श्रीशुक उवाच ॥ इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः ॥ नत्वाऽभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत ॥ ४१ ॥ ततोऽनुज्ञाप्य भगवान् स्वभुवं प्रागवस्थितान् ॥ वत्सान्पुलिनमानिन्ये यथापूर्वसखं स्वकम् ॥ ४२ ॥

मे शरीरं तवार्पितम् ॥३९॥ हे कृष्ण ! हे वृष्णिकुलपद्मस्य प्रीतिदायिन् ! हे महादेव ! हे द्विजपशुसमुद्रवृद्धिकारिन् ! तुभ्यं नमः॥४०॥श्रीशुक उवाच ॥ ब्रह्मा कृष्णमेवं स्तुत्वा त्रिः परिक्रम्य नत्वा च स्वलोकं ययौ ॥४१॥ ततो ब्रह्माणमनुज्ञाप्य वत्सान् बालांश्च यमुनातटं निन्ये ॥४२॥



१ विश्वफलात् सर्वफलात्मकात् त्वत्तोऽपरं फलं किम्। भवान् राता दातेत्यस्माकंचेतोऽन्यदपि सर्वत्र गच्छदविचारयदपि मुह्यति। २ भवतानां वेषानुकरणमात्रेण । ३ बकाघासुरसहिता । ४ प्रापिता। ५ येषां तु धामादयस्त्वदर्थमेव तेषां किमपरं भवान् दास्यतीत्यर्थः । ६ पाखंडधर्मरूपं शार्वरं तमो हरतीति। ७ आ अर्कम् अर्कमभिव्याप्य सर्वेषामर्हन् पूजनीय । ८ यथापूर्वं सखायो यस्मिस्तत्।

हे नृप ! एवं कृष्णं विनैकस्मिन् वर्षे गते सति ते बाला वर्षं क्षणार्धं मेनिरे यतः कृष्णमायामोहिताः ॥ ४३ ॥ यया मायया मोहितं जगत् पुनः पुनर्विस्मृतात्मकं भवति ॥ ४४ ॥ ततस्ते ऊचुः–हे कृष्ण ! त्वया सम्यगागतम् । त्वद्विनैकोऽपि कवलो न भुक्तः । अतः साधु भुज्यताम् ॥ ४५ ॥ ततः कृष्णः प्रहस्य तैः सह भुक्त्वाऽऽजगरं चर्म दर्शयन् ॥ ४६ ॥ मयूरपिच्छपुष्पगैरिकादिधातुभिर्विचित्रिताङ्गः शृङ्गवेणू

एकस्मिन्नपि यातेऽब्दे प्राणेशं चान्तरात्मनः ॥ कृष्णमायाहता राजन् क्षणार्धं मेनिरेऽर्भकाः ॥४३॥ किं किं न विस्मरन्तीह मायामोहितचेतसः ॥ यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृतात्मकम् ॥४४॥ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा ॥ नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥४५॥ ततो हसन् हृषीकेशोऽभ्यवहृत्य सहार्भकैः ॥ दर्शयंश्चर्माजगरं न्यवर्तत वनाद्व्रजम् ॥ ४६ ॥ बर्हप्रसूननवधातुविचित्रिताङ्गः प्रोद्दामवेणुदलशृङ्गरवोत्सवाढ्यः ॥ वत्सान् गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः[1] प्रविवेश गोष्ठम् ॥४७॥ अद्यानेन महाव्यालो यशोदानन्दसूनुना ॥ हतोऽविता वयं चास्मादिति बाला व्रजे जगुः ॥४८॥ राजोवाच ॥ ब्रह्मन् परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत ॥ योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥४९॥ श्रीशुक उवाच ॥ सर्वेषामपि भूतानां नृप स्वात्मैकवल्लभः ॥ इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ॥ ५० ॥ तद्राजेन्द्र यथा स्नेहः स्वस्वकात्मनि देहिनाम् ॥ न तथा ममतालम्बिपुत्रवित्तगृहादिषु ॥५१॥ देहात्मवादिनां पुंसामपि राजन्यसत्तम ॥ यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् ॥ ५२ ॥

वादयन् सन् व्रजं प्राविशत् ॥४७॥ ततो बालाः एवमूचुः । अद्यानेन महासर्पो हतः । अस्माकं रक्षा च कृता ॥४८॥ राजोवाच ॥ हे ब्रह्मन् ! इयान् व्रजवासिनां कृष्णे प्रेमा कथं जातः इदं कथ्यताम्॥४९॥श्रीशुक उवाच ॥ हे नृप ! सर्वभूतानामात्माऽतिप्रियः । तत्प्रियत्वादन्येऽपत्यादयः ॥५०॥ तस्मात् स्वात्मनि यथा सर्वेषां प्रीतिस्तथा ममतालम्बिपुत्रवित्तादिषु न ॥ ५१ ॥ किंच देहात्ममानिनां पुंसां यथा देहः प्रियतमस्तथा तदनुगाः न ॥ ५२ ॥

[1] गोपीदृशामुत्सवरूपं दृशिः दर्शनं यस्य सः ।

देहोऽपि ममताभाक् चेत् तर्ह्यात्मवत् प्रियो न, यतः क्षीयमाणे देहेऽपि जीविताशा बलीयसी ॥५३॥ तस्मादात्मा सर्वेषां प्रियतमः ॥५४॥ हे नृप ! त्वं सर्वात्मानं कृष्णं जानीहि । अतोऽत्र सर्वेषां प्रीतिर्जाता ॥ ५५ ॥ इदं जगत् कृष्णरूपम् ॥ ५६ ॥ सर्वेषामपि वस्तूनां कृष्ण एव कारणम् ॥५७॥ हे नृप ! ये कृष्णचरणकमलनौकाश्रितास्तेषां भवाब्धिर्वत्सपदतुल्यो भवति ॥५८॥ एवं त्वया यत् पृष्टं तत् सर्वं कथि-

देहोऽपि ममताभाक् चेत् तर्ह्यसौ नात्मवत् प्रियः ॥ यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी ॥५३॥ तस्मात् प्रियतमः स्वात्मा सर्वेषामपि देहिनाम् ॥ तदर्थमेव सकलं जगदेतच्चराचरम् ॥ ५४ ॥ कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ॥ जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥ ५५ ॥ वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च ॥ भवगद्रूपमखिलं नान्यद् वस्त्विह किंचन ॥ ५६ ॥ सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः ॥ तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम् ॥ ५७ ॥ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः ॥ भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद् विपदां न तेषाम् ॥ ५८ ॥ एतत् ते सर्वमाख्यातं यत् पृष्टोऽहमिह त्वया ॥ यत् कौमारे हरिकृतं पौगण्डे परिकीर्तितम् ॥ ५९ ॥ एतत सुहृद्भिश्चरितं मुरारेरघार्दनं शाद्वलजेमनं च ॥ व्यक्तेतरद्रूपमजोर्वभिष्टवं शृण्वन् गृणन्नेति नरोऽखिलार्थान् ॥ ६० ॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ॥ निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥६१॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे ब्रह्मस्तुतिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥

तम् ॥५९॥ इदं कृष्णस्य चरितं यः शृणोत्युच्चारयति वा स सर्वार्थान् प्राप्नोति ॥ ६० ॥ एवं रामकृष्णौ कौमारैः क्रीडनैर्व्रजे क्रीडन्तौ सन्तौ कौमारं वयस्तत्यजतुः ॥ ६१ ॥ इति श्रीभागवते चूर्णिकायां दशमस्कन्धे पूर्वार्धे ब्रह्मस्तुतिर्नाम चतुर्दशोऽध्यायः ॥ १४ ॥



---

१ परमार्थः। २ भवतीति भवत् परिणामं प्राप्नुवत् कारणमिति यावत् तस्मिन् । ३ श्रीकृष्णव्यतिरिक्तम् । ४ महतामाश्रयम् । ५ परं पदं वैकुण्ठाख्यं पदं स्थानं तेषां भवति । यत्तु विपदां पदं तत् कदाचिदपि तेषां न भवति । ६ व्यक्तात् जडप्रपञ्चादितरत् । शुद्धसत्वात्मकमित्यर्थः । तथाविधं रूपं वत्सवत्सपालरूपं यस्मिंस्तत् । ७ अजस्य ब्रह्मणः । उरुः महान् अभिष्टवः स्तवः तम् ।

ततः पञ्चदशे धेनुपालनं धेनुकार्दनम् ॥कालियक्ष्वेडतो गोपरक्षणं च निरूप्यते॥१॥अहिवक्त्रप्रवेशेन वृथा खिन्नान् सखीनतः ॥ कृष्णः प्रावेशय-त्पक्वफलं तालालिकाननम् ॥२॥ श्रीशुक उवाच॥ततः कृष्णरामौ पौगण्डवयश्श्रितौ पशुपालानां संमतौ सखिभिर्गाश्चारयन्तौ सन्तौ वृन्दावनं स्वपदैः पुण्यतमं चक्रतुः ॥१॥ ततश्च माधवो बलरामादिभिर्वृतो वेणुं वादयन् पशूनां हितं वनं विवेश ॥२॥ तद्वनं भ्रमरमृगपक्षिभिर्व्याप्तं कमल-गन्धिवायुना सेवितं दृष्ट्वा तत्र रन्तुं कृष्णो मनो दधे ॥ ३ ॥ ततः स रक्तपल्लवश्रिया फलपुष्पभारेण स्वपादयोः स्पृशच्छिखाग्रान् वृक्षान् दृष्ट्वा

श्रीशुक उवाच ॥ ततश्च पौगण्डवयः श्रितौ व्रजे बभूवतुस्तौ पशुपालसंमतौ ॥ गाश्चारयन्तौ सखिभिः समं पदैर्वृन्दावनं पुण्यमतीव चक्रतुः ॥ १ ॥ तन्माधवो वेणुमुदीरयन् वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः ॥ पशून् पुरस्कृत्य पशव्यमाविशद्विहर्तुकामः कुसुमाकरं वनम् ॥ २ ॥ तन्मञ्जुघोषालिमृगद्विजाकुलं महन्मनः प्रख्यपयस्सरस्वता[1] ॥ वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान् मनो दधे ॥३॥ स तत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ॥ स्पृशच्छिखान् वीक्ष्य वनस्पतीन् मुदा स्मयन्निवाहाग्रजमादिपूरुषः ॥४॥ श्रीभगवानुवाच ॥ अहो अमी देववरामरार्चितं पदाम्बुजं ते सुमनःफलार्हणम् ॥ नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म-यत्कृतम् ॥ ५ ॥ एतेऽलिनस्तव यशोखिललोकतीर्थं गायन्त आदिपुरुषानुपदं भजन्ते ॥ प्रायो अमी मुनिगणा भवदीयमुख्या[2] गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥६॥ नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यःकुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ॥ सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥ ७ ॥

हसन्निव कृष्णो रामं जगाद ॥४॥श्रीभगवानुवाच॥हे राम!एते वृक्षाः पुष्पफलार्हणं गृहीत्वा शाखाभिस्तव पादाम्बुजं येन पापेन तरुजन्मकृतं तस्य नाशाय नमन्ति॥५॥किं च एते भ्रमरास्तव यशो गायन्ति।अतः इमे प्रायो मुनिगणाःवने गूढमपित्वां न त्यजन्ति॥६॥हे राम!एते मयूराः नृत्यन्ति। तथैताः हरिण्यो गोप्य इव दृष्ट्याप्रियं कुर्वन्ति । तथा कोकिलाः गृहं प्राप्ताय तुभ्यं वाग्भिः सत्कुर्वन्ति । अतः एते वनस्था अपि धन्याः॥७॥

१ महतां मनसा प्रख्यं तुल्यं पयो येषु तथाविधं सरोऽस्यास्तीति तेन । 'मनःस्वच्छ, इ० पा० । २ त्वद्भक्तेषु श्रेष्ठाः ।

हे राम ! इयं भूस्तृणलताश्च तव पादस्पर्शाद्धन्याः द्रुमलतास्तव नखस्पर्शात् धन्याः । पर्वतमृगपक्षिणस्ते कृपावलोकैर्धन्याः । गोप्यस्तव वक्षसा धन्याः ॥८॥ श्रीशुक उवाच ॥ एवं वृन्दावनं दृष्ट्वा प्रीतः समीपवर्तिनदीतटेषु पशून् चारयन् रेमे ॥ ९ ॥ क्वचित् भ्रमरेषु गायत्सु स्वयं गायति ॥१०॥ क्वचिद् हंसकूजितमनुकूजति । क्वचित् नृत्यन्तं मयूरमभिनृत्यति ॥११॥ क्वचिद्गम्भीरवाचा दूरगान् पशूनाह्वयति॥१२॥क्वचित् चकोर-

धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ॥ नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्यो-ऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥८॥ श्रीशुक उवाच ॥ एवं वृन्दावनं श्रीमत्प्रीतः प्रीतमनाः पशून् ॥ रेमे सञ्चारय-न्नद्रेः सरिद्रोधस्सु सानुगः ॥९॥ क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः ॥ उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥ १० ॥ क्वचिच्च कलहंसानामनुकूजति कूजितम् ॥ अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥११॥ मेघगम्भी-रया वाचा नामभिर्दूरगान् पशून् ॥ क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥१२॥ चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ॥ अनुरौति स्म सत्त्वानां भीतवद् व्याघ्रसिंहयोः ॥ १३ ॥ क्वचित् क्रीडापरिश्रान्तं गोपोत्संगोपबर्हणम् ॥ स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः॥१४॥नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः ॥ गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुः ॥१५॥ क्वचित् पल्लवतल्पेषु नियुद्धश्रमकर्शितः ॥ वृक्षमूलाश्रयः शेते गोपोत्संगोपबर्हणः ॥ १६ ॥ पादसंवाहनं चक्रुः केचित्तस्य महात्मनः ॥ अपरे हतपाप्मानो व्यजनैः समवीजयन् ॥ १७ ॥



क्रौञ्चचक्रवाकादीननुकृत्य रौति । क्वचिद् व्याघ्रसिंहाभ्यां पशुषु पलायमानेषु भीतवत् पलायते ॥१३॥ क्वचित् क्रीडाश्रान्तं रामं पादसंवाह-नादिभिर्विगतश्रमं करोति ॥ १४ ॥ क्वचिद् नृत्यतो गायतो गोपान् रामकृष्णौ प्रशशंसतुः ॥ १५ ॥ क्वचिद् कृष्णः पत्रशय्यासु गोपोत्सङ्ग-कृतोपबर्हणः सन् वृक्षमूले शेते ॥१६॥ तदा केचिद्गोपास्तस्य पादसंवाहनं चक्रुः । अपरे पल्लवादिनिर्मितव्यजनैर्वीजयन्ति स्म ॥ १७ ॥

१ यद्भुजयोरन्तरं स्पृहतीति तयोक्ताः ।

अन्ये तु तदनुरूपाणि गायन्ति ॥१८॥ एवं कृष्णो ग्राम्यैः समं चरितैर्गोपपुत्रत्वं विडम्बयन् रेमे ॥ १९ ॥ तदा श्रीदामा नाम गोपालस्तथा सुबलस्तोकादयः इदं प्रेम्णा जगदुः ॥ २० ॥ हे राम ! हे कृष्ण ! इतः समीपे तालवृक्षपंक्तिभिर्व्याप्तं महद् वनम् ॥२१॥ तत्र बहूनि फलानि सन्ति । तथाऽपि धेनुकेन रुद्धानि ॥२२॥ स तु खररूपधृक् ज्ञातिभिः सहास्ते ॥२३॥ तस्मात् तद् वनं नृपशुपक्ष्यादिभिः रहितम् ॥२४॥

अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ॥ गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥१८॥ एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन् ॥ रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः ॥१९॥ श्रीदामा नाम गोपालो रामकेशवयोः सखा ॥ सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥ २० ॥ राम राम महाबाहो कृष्ण-दुष्टनिबर्हण ॥ इतोऽविदूरे सुमहद् वनं तालालिसंकुलम् ॥२१॥ फलानि तत्र भूरीणि पतितानि पतन्ति च ॥ सन्ति किं त्ववरुद्धानि धेनुकेन दुरात्मना ॥२२॥ सोऽतिवीर्योऽसुरो राम हे कृष्ण खररूपधृक् ॥ आत्मतुल्यबलैरन्यैर्ज्ञातिभि-र्बहुभिर्वृतः ॥ २३ ॥ तस्मात् कृतनराहाराद् भीतैर्नृभिरमित्रहन् ॥ न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥ २४ ॥ विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च ॥ एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते ॥ २५ ॥ प्रयच्छ तानि नः कृष्ण गन्धलोभितचेतसाम् ॥ वाञ्छाऽस्ति महती राम गम्यतां यदि रोचते ॥२६॥ एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ॥ प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥२७॥ बलः प्रविश्य बाहुभ्यां तालान् संपरिकम्पयन् ॥ फलानि पातयामास मतङ्गज इवौजसा ॥ २८ ॥ फलानां पततां शब्दं निशम्यासुररासभः ॥ अभ्यधावत् क्षितितलं सनगं परिकम्पयन् ॥२९॥

तत्र फलानां गन्धो वाति जिघ्र ॥२५॥ हे कृष्ण ! तानि नः प्रयच्छ । अस्माकं वाञ्छाऽस्ति । हे राम ! यदि रोचते तर्हि गम्यताम् ॥२६॥ एवं तद्वचः श्रुत्वा तौ सखिप्रियार्थं गोपैः सह तत्र जग्मतुः ॥२७॥ ततो बलस्तद्वनं प्रविश्य बाहुभ्यां तालान् कम्पयन् फलानि पातयामास ॥ २८ ॥ तदा फलानां पततां शब्दं श्रुत्वा धेनुकोभूतलं कम्पयन्नधावत् ॥ २९ ॥

१ सर्वतः प्रसृतः ।

ततो बलमेत्य पश्चात्पादाभ्यां वक्षसि निहत्य शब्दं कृत्वा पर्यसरत् ॥३०॥ पुनरेत्य संमुखं स्थितः सन्नपरपादौ बलाय प्राक्षिपत् ॥ ३१ ॥ तावद् बलरामस्तं पादयोर्हस्ते धृत्वा भ्रामयित्वा च मृतं तं तालाग्रे चिक्षेप ॥ ३२ ॥ तेन हतस्तालः पार्श्वस्थं वृक्षं कम्पयन् भग्नः सोऽन्यं सोऽपरमकम्पयत् ॥३३॥ एवं खरदेहताडिताः सर्वे तालाः वातप्रेरिता इव चकम्पिरे ॥३४॥ एतदनन्ते भगवति चित्रं न ॥ ३५ ॥ धेनुकस्य

समेत्य तरसा प्रत्यग् द्वाभ्यां पद्भ्यां बलं बली ॥ निहत्योरसि काशब्दं मुञ्चन् पर्यसरत् खलः ॥३०॥ पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः ॥ चरणावपरौ राजन् बलाय प्राक्षिपद् रुषा ॥ ३१ ॥ स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना ॥ चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥ ३२ ॥ तेनाहतो महातालो वेपमानो महाशिराः ॥ पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ॥ ३३ ॥ बलस्य लीलयोत्सृष्टखरदेहहताहताः ॥ तालाश्चकम्पिरे सर्वे महावातेरिता इव ॥ ३४ ॥ नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ॥ ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः ॥ ३५ ॥ ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ॥ क्रोष्टारोऽभ्यद्रवन् सर्वे संरब्धा हतबान्धवाः ॥३६॥ तांस्तानापततः कृष्णो रामश्च नृपलीलया ॥ गृहीतपश्चाच्चरणान् प्राहिणोत् तृणराजसु ॥ ३७॥ फलप्रकरसंकीर्णा दैत्यदेहैर्गतासुभिः ॥ रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥ ३८ ॥ तयोस्तत् सुमहत् कर्म निशम्य विबुधादयः ॥ मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥ अथ तालफलान्यादन् मनुष्या गतसाध्वसाः ॥ तृणं च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥



सर्वे ज्ञातयो रामकृष्णावभ्यद्रवन् ॥ ३६ ॥ आगच्छतस्तान् रामः कृष्णश्च पश्चात्पादेषु धृत्वा तालवृक्षाग्रे प्राहिणोत् ॥ ३७ ॥ तदा गतप्राणैर्दैत्यदेहैः फलतालाग्रैश्च व्याप्ता मही रराज ॥ ३८ ॥ एवं रामकृष्णयोर्महत् कर्म दृष्ट्वा देवादयः पुष्पवृष्टिं मुमुचुः ॥ ३९ ॥ ततस्तत्र गोपास्तत्फलानि भक्षयामासुः पशवश्च तृणं चेरुः ॥ ४० ॥

१ गर्दभशब्दानुकरणमेतत् । २ गर्दभरूपोऽसुरः । ३ ओतमूर्ध्वतन्तुषु प्रोतं तिर्यक्तन्तुषु । ४ गर्दभाः ।

ततः सरामः कृष्णो गोपैः स्तूयमानो व्रजं प्राप्तः ॥ ४१ ॥ तदा वेणुं क्वणन्तं गोरजोऽव्याप्तकेशेषु बद्धमयूरपिच्छपुष्पं रुचिरावलोकनहास्ययुतं कृष्णं दृष्ट्वा गोप्यः सम्मुखं जग्मुः ॥४२॥ ततः कृष्णमुखगतं मधु नेत्ररूपभृङ्गैः पीत्वा दिनवियोगजं तापं जहुः । ततः कृष्णस्तासां कटाक्षमोक्षरूपं संमानं गृहीत्वा व्रजं विवेश ॥ ४३ ॥ अथ यशोदारोहिण्यौ तयोराशिषौ व्यधत्ताम् ॥ ४४ ॥ ततो रामकृष्णौ मज्जनोन्मर्दनादिभिर्गतश्रमौ

कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः ॥ स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥ तं गोरजश्छुरितकुन्तलबद्धवर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ॥ वेणुं क्वणन्तमनुगैरगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥४२॥ पीत्वा मुकुन्दमुखसारघमक्षिभृंगैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ॥ तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपाङ्गमोक्षम् ॥ ४३ ॥ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ॥ यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥ ४४ ॥ गतांध्वानश्रमौ[1] तत्र मज्जनोन्मर्दनादिभिः ॥ नीवीं[2] वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥४५॥ जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ॥ संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥ ४६ ॥ एवं स भगवान् कृष्णो वृन्दावनचरः क्वचित् ॥ ययौ राममृते राजन् कालिन्दीं सखिभिर्वृतः ॥४७॥ अथ गावश्च गोपाश्च निदाघातपपीडिताः ॥ दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥ ४८ ॥ विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः ॥ निपेतुर्व्यसवः सर्वे सलिलान्ते कुरूद्वह ॥ ४९ ॥ वीक्ष्य तान् वै तथाभूतान् कृष्णो योगेश्वरेश्वरः ॥ ईक्षयाऽमृतवर्षिण्या स्वनाथान् समजीवयत् ॥ ५० ॥ ते संप्रतीतस्मृतयः समुत्थाय जलान्तिकात् ॥ आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ॥ ५१ ॥

नीवीं वसित्वा॥४५॥ततो मात्राऽऽनीतं स्वाद्वन्नं भक्षयित्वा शय्यायां सुषुपतुः ॥४६॥ अथ कदाचित् कृष्णो रामं विना गोपैः सह यमुनां गतः ॥४७॥अथ गोपाः गावश्च निदाघातपपीडितास्तृषाऽऽर्ताः विषदूषितं तस्याः जलं पपुः॥४८॥तदा ते विषजलस्योपस्पर्शाद् गतप्राणाः निपेतुः ॥४९॥ तान् स्वभक्तान् योगेश्वरः कृष्णोऽमृतदृष्ट्या जीवयामास ॥५०॥ ततस्ते जलान्तिकादुत्थाय परस्परं वीक्ष्य विस्मिताः आसन् ॥५१॥

---

१ न श्रमोऽश्रमः स न भवतीत्यनश्रमः । श्रमः इत्यर्थः । द्वयोर्नञोः प्रकृतार्थबाढर्यबोधकत्वात् । गताध्वश्रमावित्यर्थः । २ वस्त्रम् ।

हे राजन् ते विषं पीत्वा मृतस्यात्मनः पुनरुत्थानं कृष्णस्यानुग्रहममंसत ॥५२॥ इति श्रीभागवते चू० दशमस्कन्धे पू० पञ्चदशोऽध्यायः॥१५॥
षोडशे कालियस्योक्तो निग्रहो यमुनाह्रदे ॥ तत्पत्नीभिः स्तुतेनाऽथ कृष्णेनानुग्रहः कृतः ॥१॥ हत्वा रामभद्रैतेयान् जग्ध्वा तालफलान्यलम्॥
प्रीतोऽनृत्यत् फणारङ्गे कालियस्य कलानिधिः ॥ २ ॥ श्रीशुक उवाच ॥ हे राजन् ! कृष्णः कालियनागेन दूषितां यमुनां दृष्ट्वा तस्याः शुद्धि-
मिच्छन् कालियं निस्सारितवान् ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन् ! भगवानगाधे जले बहुयुगावासं कालियं कथं न्यगृह्णात् । किञ्च सोऽजल-

अन्वमंसत तद्राजन् गोविन्दानुग्रहेक्षितम् ॥ पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥ ५२ ॥ इति श्रीभागवते म०
दशमस्कन्धे पू० धेनुकासुरवधो नाम पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीशुक उवाच ॥ विलोक्य दूषितां कृष्णां कृष्णः
कृष्णाहिना विभुः ॥ तस्यां विशुद्धिमन्विच्छन् सर्पं तमुदवासयत् ॥ १ ॥ राजोवाच ॥ कथमन्तर्जलेऽगाधे न्यगृह्णाद्भ-
गवानहिम् ॥ स वै बहुयुगावासं यथाऽऽसीद्विप्र कथ्यताम् ॥२॥ ब्रह्मन् भगवतस्तस्य भूम्नः स्वच्छन्दवर्तिनः ॥ गोपा-
लोदारचरितं कस्तृप्येतामृतं जुषन् ॥ ३ ॥ श्रीशुक उवाच ॥ कालिन्द्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना ॥
श्रप्यमाणपया यस्मिन् पतन्त्युपरिगाः खगाः॥४॥ विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः ॥ म्रियन्ते तीरगा यस्य
प्राणिनः स्थिरजङ्गमाः ॥५॥ तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ॥ कृष्णः कदम्बमधिरुह्य
ततोऽतितुङ्गमास्फोट्य गाढरशनो न्यपतद्विषोदे ॥ ६ ॥ सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसिताम्बु-
राशिः ॥ पर्यक्प्लुतो विषकषायविभीषणोर्मिर्धावन् धनुश्शतमनन्तबलस्य किं तत् ॥ ७ ॥

चरोऽपि कथमवात्सीत् । तत् कथ्यताम् ॥२॥ हे ब्रह्मन् ! कृष्णस्य चरितामृतं सेवमानः कस्तृप्येत् ॥३॥ श्रीशुक उवाच ॥ हे नृप ! कालिन्द्यां
कालियस्य ह्रदो विषाग्निना पच्यमानजलः आसीत्, यदुपरि गच्छन्तः पक्षिणः पतन्ति॥४॥किंच यस्य तीरस्थाः स्थिरजङ्गमजीवाः अम्बुकण-
युक्तेन विषजलतरङ्गवायुना स्पृष्टाः म्रियन्ते ॥ ५ ॥ ततः कृष्णस्तत्र प्रचण्डवेगं सर्पं तेन दुष्टां नदीं च दृष्ट्वा परिकरं बद्ध्वा कदम्बमारुह्य बाहुं
करतलेनाहत्य विषोदे पपात ॥ ६ ॥ ततः स ह्रदः कृष्णनिपातवेगेन धनुश्शतं परितः प्रसृतः । अनन्तबलस्यैतत् चित्रं न ॥ ७ ॥

एवं ह्रदे क्रीडमानस्य करिश्रेष्ठपराक्रमस्य कृष्णस्य भुजदण्डताडितजलघोषं श्रुत्वा कालियः स्वगृहपराभवं दृष्ट्वाऽऽजगाम ॥८॥ ततो घनश्यामं सुकुमारं पीताम्बरधरं निर्भयं क्रीडमानं कृष्णं दृष्ट्वा मर्मस्थानेषु सन्दश्य देहेन तमवेष्टयत् ॥ ९ ॥ कालियवेष्टनं दृष्ट्वा गोपा दुःखिताः सन्तस्तीरे निपेतुः ॥१०॥ गावः सवृषवत्साः कृष्णे न्यस्तेक्षणाः रुदत्य इव तस्थिरे ॥ ११ ॥ अथ व्रजे भूकम्पोल्कापातनेत्रस्फुरणादयः

तस्य ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग वरवारणविक्रमस्य ॥ आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुश्श्रवाः समसरत्तदमृष्यमाणः ॥ ८ ॥ तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम् ॥ क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं संदश्य मर्मसु रुषा भुजया चच्छाद ॥९॥ तन्नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ॥ कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः ॥ १० ॥ गावो वृषावत्सतर्यः क्रन्दमानाः सुदुःखिताः ॥ कृष्णे न्यस्तेक्षणा भीता रुदत्य इव तस्थिरे ॥ ११ ॥ अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः ॥ उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः ॥ १२ ॥ तानालक्ष्य भयोद्विग्ना गोपा नन्दपुरोगमाः ॥ विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् ॥ १३ ॥ तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः ॥ तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः ॥ १४ ॥ आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः ॥ निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः ॥ १५ ॥ तांस्तथा कातरान् वीक्ष्य भगवान् माधवो बलः ॥ प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः ॥ १६ ॥ तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः ॥ भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् ॥ १७ ॥

उत्पाता बभूवुः ॥१२॥ तान् दृष्ट्वा नन्दादिगोपाः रामं विना गाश्चारयितुं गतं कृष्णं ज्ञात्वा ॥ १३ ॥ तैर्दुर्निमित्तैः पुत्रस्य निधनं मत्वा तत्प्राणाः गोपास्ततो दुःखशोकभयातुराः ॥ १४ ॥ तथा आबालवृद्धस्त्रियः सर्वे कृष्णदर्शनलालसाः गोकुलान्निर्जग्मुः ॥ १५ ॥ एवं भीतान् तान् दृष्ट्वा बलः प्रहस्य तत्प्रभावज्ञः किञ्चिन्नोवाच ॥१६॥ ततस्ते कृष्णं मृगयन्तो भगवत्पदैः सूचितमार्गेण यमुना तीरं जग्मुः ॥ १७ ॥

१ न तं विदन्तीति तथा । २ अतिवत्सलाः ।

तदा ते गोपाः कृष्णस्य ध्वजयवाङ्कुशवज्रादिभिर्युतानि पदानि वीक्ष्य त्वरया ययुः॥१८॥ततस्तत्र ह्रदे सर्पेण वेष्टितं कृष्णं दृष्ट्वा कश्मलं प्रापुः ॥१९॥तदा गोप्यश्च कृष्णासक्तमनसःसत्योऽहिना प्रियतमे ग्रस्ते सति त्रैलोक्यं शून्यं ददृशुः॥२०॥किंच ततो गोप्यः कृष्णमनुप्रविष्टां यशोदां धृत्वा कृष्णमुखेऽर्पितदृशः सत्यो मृततुल्याः आसन्॥२१॥तथा कृष्णप्राणान् ह्रदं प्रविशतो नन्दादीन् वीक्ष्य रामः प्रत्यषेधत्॥२२॥एवमन-

ते तत्र तत्राब्जयवाङ्कुशाशनिध्वजोपपन्नानि पदानि विश्पतेः ॥ मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरङ्ग सत्वराः ॥ १८ ॥ अन्तर्ह्रदे भुजगभोगपरीतमारात् कृष्णं निरीहमुपलभ्य जलाशयान्ते ॥ गोपांश्च मूढधिषणान् परितः पशूंश्च संक्रन्दतः परमकश्मलमापुरार्ताः ॥ १९ ॥ गोप्योऽनुरक्तमनसो भगवत्यनन्ते तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः ॥ ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ॥२०॥ ताः कृष्णमातरमपत्यमनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवन्त्यः ॥ तास्ताःप्रियव्रजकथाः कथयन्त्य आसन् कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः ॥ २१ ॥ कृष्णप्राणान् निर्विशतो नन्दादीन्वीक्ष्य तं ह्रदम् ॥ प्रत्यषेधत् स भगवान्रामः कृष्णानुभाववित्॥२२॥ इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः ॥ आज्ञाय मर्त्यपदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरंगबन्धात् ॥ २३ ॥ तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजंगः ॥ तस्थौ श्वसन् श्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः ॥२४॥ तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिम् ॥ क्रीडन्नमुं परिससार यथा खगेन्द्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः ॥२५॥

न्यगतिमात्महेतोर्दुःखितं गोकुलं दृष्ट्वा कृष्णः कालियबन्धान्निर्गतः ॥ २३ ॥ ततो हरेर्विस्तीर्यमाणदेहेन व्यथितदेहः कालियस्तं त्यक्त्वा क्रुद्धः सन् फणानुन्नमय्य श्वसन् कृष्णमीक्षमाणस्तस्थौ ॥ २४ ॥ ततो हरिस्तं द्विशिखजिह्वया सृक्किणी लिहन्तं दृष्ट्वा क्रीडमानः सन्

१ मध्येमध्ये। २ विरहितम्। ३ श्वसनरन्ध्रविषः। अम्बरीषस्तब्धेक्षणः। उल्मुकमुखश्च । श्वसनरन्ध्रेषु नासिकाविवरेषु विष यस्य। अम्बरीषः मण्डकपाकभाजनं तप्तलोहमयम्। तद्वत् स्तब्धे ईक्षणे यस्य सः।

परितस्तं बभ्राम। सर्पोऽप्यवसरं प्रतीक्षमाणो बभ्राम ॥ २५ ॥ एवं भ्रमणेन हतबलमुन्नतांसं तमानम्य तन्मस्तकेषु ननर्त ॥ २६ ॥ तदा कृष्णं नृत्यं कर्तुमुद्युक्तं दृष्ट्वा गन्धर्वसिद्धचारणादयो मृदङ्गपणवादिभिः सहाऽऽगमन् ॥ २७ ॥ ततः शतैकमस्तकस्य तस्य यद्यत् शिरो न नमति तत्तत् कृष्णः स्वचरणपातैर्ममर्द। तदा मुखतो नासाविवरेभ्यश्च रक्तं वमन् मूर्छां प्राप ॥ २८ ॥ एवं कृतेऽपि तस्य यद्यत् शिरः समुन्नमति

एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरस्स्वधिरूढ आद्यः ॥ तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त ॥ २६ ॥ तं नर्तुमुद्यतमवेक्ष्य तदा तदीयगन्धर्वसिद्धसुरचारणदेववध्वः ॥ प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥ २७ ॥ यद्यच्छिरो न नमतेऽङ्ग शतैकशीर्ष्णस्तत्तन्ममर्द खलदण्डधरोऽङ्घ्रिपातैः ॥ क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृक् नस्तो वमन्परमकश्मलमाप नागः ॥ २८ ॥ तस्याक्षिभिर्गरलमुद्वमतः शिरस्सु यद्यत्समुन्नमति निःश्वसतो रुषोच्चैः ॥ नृत्यन्पदाऽनुनमयन्दमयांबभूव पुष्पैः प्रपूजित इवेह पुमान्पुराणः ॥२९॥ तच्चित्रताण्डवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन्नृपभग्नगात्रः ॥ स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ॥३०॥ कृष्णस्य गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ॥ दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसनभूषणकेशबन्धाः ॥ ३१ ॥ तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः ॥ साध्व्यः कृताञ्जलिपुटाः शमलस्य भर्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः ॥ ३२ ॥

तत्तत् कृष्णः पुनर्नृत्यन् सन् दमयामास। तदा स गन्धर्वादिभिः पुष्पैः पूजितः आसीत् ॥२९॥ हे नृप ! तस्य चित्रताण्डवेन भग्नफणच्छत्रः स मुखैः रक्तं वमन्नादिपुरुषं स्मृत्वा तं मनसा शरणं जगाम ॥ ३० ॥ एवं गर्भजगतः कृष्णस्य भारेणावसन्नं पादताडनेन भग्नफणातपत्रं पतिं दृष्ट्वा तत्पत्न्यः आर्ताः गलितवस्त्रभूषणकेशबन्धाः पुरस्कृतबालकाः कृताञ्जलिपुटाः भर्तुर्मोक्षार्थं भुवि कृष्णं प्रणेमुः ॥ ३१ ॥ ३२ ॥

१ गर्भे जगत् यस्य। २ पापात्मनः।

दुष्टदमनार्थम् ॥३३॥ हे कृष्ण ! यतोऽस्य सर्पत्वं
नागपत्न्य ऊचुः ! हे कृष्ण ! कृतापराधेऽस्मिन् त्वया कृतो दण्डो योग्यः यतस्तवावतारो
दृश्यतेऽतस्तन्मूलपापनाशको दण्डस्त्वयाऽस्मदनुग्रहार्थमेव कृतः ॥ ३४ ॥ हे कृष्ण ! अनेन पूर्वं किं तपआदि कृतं यतस्तवाङ्घ्रिरेणुस्प-
र्शाधिकारो जातः। अयं कस्यानुभावः इति न विद्महे ॥३५॥३६॥ ये त्वत्पादरजः प्रपन्नास्ते स्वर्गब्रह्मलोकादि तथा मोक्षमपि नेच्छन्ति ॥३७॥

नागपत्न्य ऊचुः ॥ न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय ॥ रिपोः सुतानामपि तुल्यदृष्टे-
र्धत्से दमं फलमेवानुशंसन् ॥ ३३ ॥ अनुग्रहोऽयं भवता कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः ॥ यद् दन्दशू-
कत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव संमतः ॥३४॥ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन ॥
धर्मोऽथ वा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ॥३५॥ कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्प-
र्शाधिकारः ॥ यद्वाञ्छया श्रीर्ललनाऽचरत् तपो विहाय कामान्सुचिरं धृतव्रता ॥ ३६ ॥ न नाकपृष्ठं न च सार्वभौमं
न पारमेष्ठ्यं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः ॥ ३७ ॥ तदेष नाथाप दुराप-
मन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः ॥ संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद् विभवः समक्षः ॥ ३८ ॥
नमस्तुभ्यं भगवते पुरुषाय महात्मने ॥ भूतावासाय भूताय पराय परमात्मने ॥ ३९ ॥ ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्त-
शक्तये ॥ अगुणायाविकाराय नमस्तेऽप्राकृताय च ॥ ४० ॥ कालाय कालनाभाय कालावयवसाक्षिणे ॥ विश्वाय तदुपद्रष्ट्रे
तत्कर्त्रे विश्वहेतवे ॥ ४१ ॥ भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने ॥ त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥ ४२ ॥

हे नाथ ! एवंभूतं त्वत्पादरजः एष प्रयत्नं विना प्राप । अहो भाग्यम् ॥ ३८ ॥ अतो भूतावासाय परमात्मने ब्रह्मणे नमः ॥ ३९ ॥ ४० ॥
कालाय सर्वसाक्षिणे विश्वकर्त्रे विश्वस्योपद्रष्ट्रे च ॥ ४१ ॥ ४२ ॥



१ पुरुषार्थप्रतिबन्धकपापनिवृत्त्यादिरूपम् । २ पर्यालोचयन् । ३ स्वयं मानरहितेनाप्यन्येभ्यो मानदेन । ४ सर्वं जीवयतीति तथा । ५ कालशक्त्याश्रयाय । ६ सृष्ट्यादिसमयानां साक्षिणे । ७ सर्वकारकरूपाय ।
८ गूढा स्वांशभूतानामात्मनां जीवानामनुभूतिर्येन तस्मै ।

अनन्ताय सूक्ष्माय वाच्यवाचकशक्तये नमः ॥ ४३ ॥ ४४ ॥ कृष्णाय रामाय प्रद्युम्नाय ॥ ४५ ॥ गुणप्रदीपाय ॥ ४६ ॥ अतर्क्यमहिम्ने नमः । हे करणप्रवर्तक ! आत्माराम ॥ ४७ ॥ परावरगतिज्ञाय विश्वाय तुभ्यं नमः ॥ ४८ ॥ हे हरे ! त्वं विश्वस्य जन्मादीन् गुणैः स्वय-

नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते ॥ नानावादानुरोधाय वाच्यवाचकशक्तये ॥ ४३ ॥ नमः प्रमाणमूलाय कवये शास्त्रयोनये ॥ प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥ ४४ ॥ नमः कृष्णाय रामाय वसुदेवसुताय च ॥ प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥ ४५ ॥ नमो गुणप्रदीपाय गुणात्मच्छादनाय च ॥ गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥४६॥ अव्याकृतविहाराय सर्वव्याकृतसिद्धये ॥ हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने ॥ ४७ ॥ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ॥ अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे ॥ ४८ ॥ त्वं ह्यस्य जन्मस्थिति-संयमान्प्रभो गुणैरनीहोऽकृत कालशक्तिधृक् ॥ तत्तत्स्वभावान्प्रतिबोधयन्सतः समीक्षयाऽमोघविहार ईहसे ॥ ४९ ॥ तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः ॥ शान्ताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः ॥ ५० ॥ अनुगृह्णीष्व भगवन् प्राणांस्त्यजति पन्नगः ॥ स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम् ॥ ५१ ॥

मिच्छारहितः सन्नकरोः । एवममोघविहारस्त्वं क्रीडसे ॥ ४९ ॥ एवंभूतस्य तव शान्ताः प्रियाः सन्ति, यतः सतां रक्षणार्थमवतीर्णोऽसि ॥ ५० ॥ हे भगवन् ! अस्माननुगृहाण । अयं नागः प्राणांस्त्यजति । अतो नः पतिरूपः प्राणो दीयताम् ॥ ५१ ॥

---

१ अस्ति नास्ति सर्वज्ञः किञ्चिज्ज्ञो बद्धो मुक्तः एकोऽनेकः इत्यादिनानावादाननुरुणद्धि माययानुवर्तते यस्तस्मै । २ चक्षुरादीनांचक्षुरादिरूपाय । अतः कवये स्वयं तन्निरपेक्षज्ञानाय । ३ विधि रूपाय । ४ निषेधरूपाय । ५ गुणाः अन्तः करणानि मनोबुद्धिचित्ताहंकाररूपाणि प्रदीपयति प्रकाशयतीति तस्मै । ६ तैरेव गुणैरुपासकानां फलवैचित्र्यायात्मानमाच्छाद्य नानात्वेन प्रकाशमानाय । ७ चित्तादीनां चेतनाध्यवसायादिवृत्तिभिरुपलक्ष्याय । ८ अगोचराय । ९ सर्वकार्योत्पत्तिप्रकाशहेतुत्वेनोपलक्षणयोग्याय । १० सर्वाधिष्ठात्रे । ११ न विश्वं यस्मिंस्तन्निषेधवाक्ये इत्यर्थः । १२ तद्विवर्ताधिष्ठानायेत्यर्थः । १३ घोरत्वादीन् । १४ संस्काररूपेणेति शेषः । १५ ईक्षणमात्रेण । १६ क्रीडासामग्र्यः । १७ सतां धर्मपरिपालनेच्छया ईहतः प्रवर्तमानस्य । अतस्तानवितुं स्थातुः स्थितस्य ।

तथा कालियेन कृतोऽपराधस्त्वया सोढव्यः ॥५२॥ किंच अस्माकं तव दासीनां यदनुष्ठेयं तद् विधेहि,यत् श्रद्धयाऽनुतिष्ठन् पुमान् सर्वभया-
न्मुच्यते ॥ ५३ ॥ श्रीशुक उवाच ॥ एवं नागपत्नीभिः स्तुतः कृष्णो मूर्छितं सर्पं विससर्ज ॥ ५४ ॥ ततः सर्पः स्वस्थो भूत्वा दीनः कृता-
ञ्जलिः शनैर्हरिमाह ॥ ५५ ॥ कालिय उवाच ॥ हे कृष्ण ! वयमुत्पत्त्यैव खलाः दीर्घमन्यवः स्मः ॥ ५६ ॥ हे ईश ! त्वया सृष्टं विश्वं नाना-

अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः ॥ क्षन्तुमर्हसि शान्तात्मन् मूढस्य त्वामजानतः ॥ ५२ ॥ विधेहि ते
किंकरीणामनुष्ठेयं तवाज्ञया ॥ यच्छ्रद्धयाऽनुतिष्ठन् वै मुच्यते सर्वतो भयात् ॥ ५३ ॥ श्रीशुक उवाच ॥ इत्थं स नाग-
पत्नीभिर्भगवान् समभिष्टुतः ॥ मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः ॥ ५४ ॥ प्रतिलब्धेन्द्रियप्राणः कालियः
शनकैर्हरिम् ॥ कृच्छ्रात् समुच्छ्वसन् दीनः कृष्णं प्राह कृताञ्जलिः ॥ ५५ ॥ कालिय उवाच ॥ वयं खलाः सहो-
त्पत्त्या तामसा दीर्घमन्यवः ॥ स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः ॥ ५६ ॥ त्वया सृष्टमिदं विश्वं
धातुर्गुणविसर्जनम् ॥ नानास्वभाववीर्योजोयोनिबीजाशयाकृति ॥ ५७ ॥ वयं च तत्र भगवान् सर्पा जात्युरुमन्यवः ॥
कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम् ॥ ५८ ॥ भवान् हि कारणं तत्र सर्वज्ञो जगदीश्वरः ॥ अनुग्रहं
निग्रहं वा मन्यसे तद्विधेहि नः ॥ ५९ ॥ श्रीशुक उवाच ॥ इत्याकर्ण्य वचः प्राह भगवान् कार्यमानुषः ॥ नात्र
स्थेयं त्वया सर्प समुद्रं याहि मा चिरम् ॥ ६० ॥ स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यतां नदी ॥ य एतत्संस्मरेन्म-
र्त्यस्तुभ्यं मदनुशासनम् ॥ ६१ ॥

स्वभाववीर्यादिमत् ॥५७॥ हे भगवन् ! तत्र वयमुरुमन्यवः सर्पाः । अतस्त्वन्मायां कथं त्यजामः ॥ ५८ ॥ यतो मायात्यागे त्वं कारणम् ।
अतोऽनुग्रहं वा मन्यसे तद् विधेहि ॥ ५९ ॥ श्रीशुक उवाच ॥ एवं सर्पवचः श्रुत्वा कृष्ण आह—हे सर्प ! त्वयाऽत्र न स्थेयम् ! स्वज्ञाति
पुत्रस्त्रीभिः सह समुद्रं याहि । मा चिरम् । इयं नदी गोनृभिर्भुज्यताम् ॥ किंच तुभ्यं यन्मच्छासनं जातं तद् यः स्मरेत् ॥ ६० ॥ ६१ ॥

१ यतोऽसद्ग्रहरूपः स स्वभावः । २ गुणैर्विविधतया सृज्यत इति तथा । ३ देवानां कार्यं कर्तुं मनुष्यत्वेनावतीर्णः ।

तथा संध्ययोः कीर्तयेत् स युष्मद्भयं नाप्नुयात् । किंच योऽत्र स्नात्वा जलैर्देवादीन् तर्पयेत् ॥६२॥ उपोष्य मामर्चेत् स पापैर्मुच्यते । त्वं तु यस्य भयात् रमणकं द्वीपं हित्वा ह्रदमेतमुपाश्रितः स गरुडो मत्पादचिह्नितं त्वां न भक्षयिष्यति ॥६३॥ श्रीशुक उवाच ॥ एवं कृष्णेनोक्तो नागस्तत्स्त्रियश्च दिव्यवस्त्रालंकारादिभिर्दिव्यगन्धानुलेपनैः कमलमालया च कृष्णं पूजयामासुः ॥६४॥६५॥ एवं जगन्नाथं संपूज्य प्रदक्षिणीकृत्य तस्याज्ञया ॥६६॥ स्त्री पुत्रैः सह रमणकं द्वीपं जगाम । तदैव यमुना निर्विषाभवत् ॥६७॥ इति श्रीभागवते चू० दशम० पू० षोडशोऽध्यायः

कीर्तयन्नुभयोः संध्योर्न युष्मद्भयमाप्नुयात् ॥ योऽस्मिन् स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ॥६२॥ उपोष्य मां स्मरन्नर्चेत् सर्वपापैः प्रमुच्यते ॥ द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः ॥ यद्भयात् स सुपर्णस्त्वां नाद्यान्मत्पादलाञ्छितम् ॥६३॥ श्रीशुक उवाच ॥ एवमुक्तो भगवता कृष्णेनाद्भुतकर्मणा ॥ तं पूजयामास मुदा नागपत्न्यश्च सादरम् ॥ ६४ ॥ दिव्याम्बरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ॥ दिव्यगन्धानुलेपैश्च महत्योत्पलमालया ॥६५॥ पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ॥ ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवाद्य तम् ॥६६॥ सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ॥ तदैव साऽमृतजला यमुना निर्विषाऽभवत् ॥ अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥६७॥ इति श्रीभागवते महापुराणे दशमस्कंधे पू० कालियदमनं नाम षोडशोऽध्यायः ॥१६॥ राजोवाच ॥ नागालयं रमणकं कस्मात् तत्याज कालियः ॥ कृतं किं वा सुपर्णस्य तेनैकेनासमञ्जसम् ॥१॥ श्रीशुक उवाच ॥ उपाहार्यैः सर्पजनैर्मासि मासीह यो बलिः ॥ वानस्पत्यो महाबाहो नागानां प्राङ्निरूपितः ॥२॥ स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि ॥ गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥३॥

॥१६॥ नागं सप्तदशे नागालयं तं निरयापयत् ॥ बन्धून् स्वदुःखतः श्रान्तान् सुप्तांस्तत्र दवादपात् ॥१॥ राजोवाच ॥ हे द्विज ! कालियो नागालयं रमणकं कथं तत्याज । तेन गरुडस्य किमप्रियं कृतम् ॥१॥ श्रीशुक उवाच ॥ हे नृप ! भक्ष्यैः सर्पजनैर्वृक्षमूले प्रतिमासं नागानां बाधापरिहारायैकैको नागरूपो बलिरुपकल्पितः ॥ २ ॥ ते च नागाः पर्वणि सर्पजनैर्दत्तं स्वं स्वं भागं गरुडाय स्वरक्षार्थं प्रयच्छन्ति कालियस्तु न ॥३॥

१ मम क्रीडास्थाने । २ वनस्पतिमूले देयः ।

तत्र विषयवीर्यमदाविष्टः कालियो गरुडं तुच्छीकृत्यान्यैर्दत्तं तद्बलिं स्वयं बुभुजे ॥४॥ तच्छ्रुत्वा क्रुद्धो गरुडः कालियं हन्तुमागतः ॥ ५ ॥ तमागतं दृष्ट्वोज्जृम्भितफणः उग्रलोचनः कालियो विषायुधः सन् दन्तैर्गरुडं ददंश ॥६॥ तावत् प्रचण्डवेगो गरुडः क्रुद्धः सन् वामपक्षेण तं जघान ॥ ७ ॥ तदा तत्पक्षताडितः सर्पो विह्वलः सन् तेनागम्यं यमुनाह्रदं विवेश ॥८॥ तत्रैकदा गरुडो भक्ष्यं जलचरं सौभरिणा निवारि-

विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ॥ कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥ ४ ॥ तच्छ्रुत्वा कुपितो राजन् भगवान् भगवत्प्रियः ॥ विजिघांसुर्महावेगः कालियं समुपाद्रवत् ॥५॥ तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रित-नैकमस्तकः ॥ दद्भिः सुपर्णं व्यदशद्ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ॥६॥ तं तार्क्ष्यपुत्रः स निरस्य मन्यु-मान् प्रचण्डवेगो मधुसूदनासनः ॥ पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः ॥ ७ ॥ सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः ॥ ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम् ॥८॥ तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् ॥ निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ॥ ९ ॥ मीनान्सुदुःखितान् दृष्ट्वा दीनान्मीनपतौ हते ॥ कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् ॥ १० ॥ अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति ॥ सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्य-हम् ॥ ११ ॥ तं कालियः परं वेद नान्यः कश्चन लेलिहः ॥ अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः ॥ १२ ॥ कृष्णं ह्रदाद्विनिष्क्रान्तं दिव्यस्रग्गन्धवाससम् ॥ महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम् ॥ १३ ॥ उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः ॥ प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे ॥ १४ ॥

तोऽपि बलादहरत् ॥ ९ ॥ ततः स ऋषिर्मीनपतौ हते दुःखितान् मीनान् दृष्ट्वा गरुडमुद्दिश्याह ॥ १० ॥ अत्र यदि गरुड एत्य मत्स्यान् खादति तर्हि सद्यो मरिष्यति । एतत् सत्यं ब्रवीमि ॥११॥ हे नृप ! तं ह्रदं कालियो वेद । अन्य सर्पो न, अतो गरुडाद्भीतः सन् तत्र गतः ! ततस्तस्मात् कृष्णेन निष्कासितः ॥ १२ ॥ ततो ह्रदात् निर्गतं कृष्णं दिव्यस्रग्गन्धवाससं स्वर्णालंकृतं दृष्ट्वा ॥ १३ ॥ गोपाः उत्थायानन्द पूर्णमनसः सन्तः आलिङ्गयामासुः ॥ १४ ॥

यशोदा रोहिणी नन्दो गोप्यो गोपाश्च प्राप्तमनोरथाः आसन् ॥ १५ ॥ रामश्च तमालिङ्ग्य जहास । वृक्षाः गवादयश्च हर्षं लेभिरे ॥ १६ ॥ ततः सभार्याः विप्राः नन्दं गत्वोचुः । हे नन्द ! तव सुतः सर्पग्रस्तोऽपि मुक्तः । एतद् दिष्ट्या ॥१७॥ अतो विप्रेभ्यो दानं देहि । ततो नन्दः प्रीतः सन् सुवर्णं गाश्च ददौ ॥ १८ ॥ तदा यशोदाऽपि कृष्णं परिष्वज्य प्रेमाश्रूणि मुमोच ॥ १९ ॥ हे नृप ! सर्वे व्रजवासिनो गावश्च तां रात्रिं क्षुत्तृड्भ्याप्ताः सन्तो यमुनातीरे ऊषुः ॥ २० ॥ तदा शुष्कवनोत्पन्नोऽग्निः सुप्तं व्रजजनं निशीथे सर्वतो व्याप्य तं दग्धुमुपचक्रमे ॥२१॥

यशोदा रोहिणी नन्दो गोप्यो गोपाश्च कौरव ॥ कृष्णं समेत्य लब्धेहा आसँल्लब्धमनोरथाः ॥ १५ ॥ रामश्चाच्युतमालिङ्ग्य जहासास्यानुभाववित् ॥ नगा गावो वृषा वत्सा लेभिरे परमां मुदम् ॥ १६ ॥ नन्दं विप्राः समागत्य गुरवः सकलत्रकाः ॥ ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः ॥ १७ ॥ देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे ॥ नन्दः प्रीतमना राजन् गाः सुवर्णं तदाऽदिशत् ॥ १८ ॥ यशोदाऽपि महाभागा नष्टलब्धप्रजा सती ॥ परिष्वज्याङ्कमारोप्य मुमोचाश्रुकला मुहुः ॥ १९ ॥ तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्शिताः ॥ ऊषुर्व्रजौकसो गावः कालिन्द्या उपकूलतः ॥ २० ॥ तदा शुचिवनोद्भूतो दावाग्निः सर्वतो व्रजम् ॥ सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥२१॥ तत उत्थाय सम्भ्रान्ता दह्यमाना व्रजौकसः ॥ कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥ ॥२२॥ कृष्णकृष्ण महाभाग हे रामामितविक्रम ॥ एष घोरतमो वह्निस्तावकान् ग्रसते हि नः ॥ २३ ॥ सुदुस्तरान्नः स्वान् पाहि कालाग्नेः सुहृदः प्रभो ॥ न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतोभयम् ॥ २४ ॥ इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः ॥ तमग्निमपिबत् तीव्रमनन्तोऽनन्तशक्तिधृक् ॥ २५ ॥ इति श्रीभागवते महा० दशमस्कन्धे पू० कालियनिर्यापणदावाग्निपानं नाम सप्तदशोऽध्यायः ॥ १७ ॥

ततस्ते दह्यमानाः जनाः मायामनुष्यं कृष्णं शरणं प्राप्याहुः ॥२२॥ हे कृष्ण ! हे कृष्ण ! हे राम ! एषोऽतिघोरोऽग्निस्तावकान् नो ग्रसति ॥ २३ ॥ अतः कालाग्नेर्नः पाहि । त्वच्चरणं त्यक्तुं न शक्नुमः ॥२४॥ इत्थं स्वजनवैक्लव्यं दृष्ट्वा कृष्णस्तमग्निं पपौ ॥२५॥ इति श्रीभागवते महापुराणे चू० दशमस्कन्धे पूर्वार्द्धे सप्तदशोऽध्यायः ॥ १७ ॥

अष्टादशे ततो ग्रीष्मे वसन्तगुणलक्षिते ॥ अघातयद्बलेनालं प्रलम्बं लीलया हरिः ॥ १ ॥ कृत्वा नृत्यं फणाग्रेषु कालियस्य सकौतुकम् । बलं प्रलम्बतुङ्गांसमारोहयदरातिहा ॥ २ ॥ श्रीशुक उवाच ॥ अथ कृष्णो ज्ञातिभिर्गीयमानो व्रजं प्राविशत् ॥१॥ एवं व्रजे गोपालकपटमायया रामकृष्णयोः क्रीडतोः सतोर्जीवानां नातिप्रियो ग्रीष्मऋतुः प्राप्तः ॥२॥ स वृन्दावनगुणैर्वसन्त इव लक्षितः यत्र सरामः कृष्णः आस्ते॥३॥ तस्य वसन्तसाम्यमाह । यत्र ग्रीष्मे निर्झरनादेन गतझिल्लीस्वनं वृन्दावनं भवति । निर्झराणामम्बुकणैर्ये स्निग्धाः द्रुमास्तैः शोभितम् ॥४॥

श्रीशुक उवाच ॥ अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः ॥ अनुगीयमानो न्यविशद्व्रजं गोकुलमण्डितम्॥१॥ व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया ॥ ग्रीष्मो नामर्तुरभवन्नातिप्रेयाञ्छरीरिणाम् ॥ २ ॥ स च वृन्दावनगुणैर्वसन्त इव लक्षितः ॥ यत्रास्ते भगवान्साक्षाद्रामेण सह केशवः ॥ ३ ॥ यत्र निर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् ॥ शश्वत्तच्छीकरर्जीषद्रुममण्डलमण्डितम् ॥४॥ सरित्सरःप्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणुहारिणा ॥ न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले ॥५॥ अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः पुलिनैः समन्ततः ॥ न यत्र चण्डांशुकरा विषोल्बणा भुवो रसं शाद्वलितं च गृह्णते ॥ ६ ॥ वनं कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम् ॥ गायन्मयूरभ्रमरं कूजत्कोकिलसारसम् ॥ ७ ॥ क्रीडिष्यमाणस्तत् कृष्णो भगवान्बलसंयुतः ॥ वेणुं विरणयन् गोपैर्गोधनैः संवृतोऽविशत् ॥ ८ ॥ प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः ॥ रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः ॥ ९ ॥ कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् ॥ वेणुपाणितलैः शृङ्गैः प्रशशंसुरथापरे ॥ १० ॥ गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः ॥ ईडिरे कृष्णरामौ च नटा इव नटं नृप ॥ ११ ॥



यत्र वने मन्दसुगन्धिशीतवायुना वनस्थानां ग्रीष्मकालिकवह्न्यर्कोद्भवस्तापो न विद्यते॥५॥यत्र सूर्यकिरणाः विषवदुग्राः भुवो रसं न हरन्ति ॥६॥ एवं पुष्पितं मृगपक्षिभिर्नादितं मयूरभ्रमरैर्गीतं वनं दृष्ट्वा ॥७॥ क्रीडेच्छू रामगोपालगोधनैर्युक्तः कृष्णो वेणुं वादयन् तद्वनं विवेश ॥८॥ ततः प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः रामकृष्णादयो गोपाः ननृतुर्युयुधुर्जगुः॥९॥एवं कृष्णस्य नृत्यतः केचिद् जगुः । केचिद्वेणुहस्ततालशृङ्गैरवादयन् । अपरे प्रशशंसुः ॥ १० ॥ एवं गोपजातिगुप्ताः देवाः गोपालरूपिणो रामकृष्णयोः स्तुतिं चक्रुः ॥ ११ ॥

१ अतिहरिततृणाकीर्णे । २ द्रवत् द्रवीभवत् पुरीष पङ्को यस्याः वा द्रवत्पुरीषी तस्याः भुवः । शाद्वलरूपताम् ।

ततस्तौ काकपक्षधरौ सन्तौ भ्रामणोल्लङ्घनास्फोटनविकर्षणैर्बाहुयुद्धेन च चिक्रीडतुः ॥ १२ ॥ क्वचिदन्येषु नृत्यत्सु स्वयं गायकौ वादकौ भूत्वा साध्विति शशंसतुः ॥१३॥ क्वचिद् रामकृष्णौ बिल्वैः कुम्भवृक्षफलैरामलकमुष्टिरस्पृश्यनेत्रबन्धादिना च चिक्रीडतुः । क्वचिद् मृगखगानां चेष्टया ॥ १४ ॥ क्व० भेकप्लुतिभिः । क्व० दोलालम्बनेन । नृपलीलया ॥ १५ ॥ एवं तौ क्रीडाभिर्वने नदीपर्वतादिषु सरोवरेषु

भ्रामणैर्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः ॥ चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित् ॥ १२ ॥ क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् ॥ शशंसतुर्महाराज साधु साध्विति वादिनौ ॥ १३ ॥ क्वचित् बिल्वैः क्वचित्कुम्भैः क्वचामलकमुष्टिभिः ॥ अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया ॥ १४ ॥ क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः ॥ कदाचित् स्पन्दोलिकया कर्हिचिन्नृपचेष्टया ॥ १५ ॥ एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ॥ नद्यद्रिद्रोणिकुञ्जेषु काननेषु सरस्सु च ॥ १६ ॥ पशूंश्चारयतोर्गोपैस्तद्वने रामकृष्णयोः ॥ गोपरूपी प्रलम्बोऽगादसुरस्तज्जिहीर्षया ॥ १७ ॥ तं विद्वानपि दाशार्हो भगवान् सर्वदर्शनः ॥ अन्वमोदत तत्सख्यं वधं तस्य विचिन्तयन् ॥ १८ ॥ तत्रोपाहूयगोपालान् कृष्णः प्राह विहारवित् ॥ हे गोपा विहरिष्यामो द्वन्द्वीभूय यथायथम् ॥१९॥ तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ ॥ कृष्णसंघट्टिनः केचिदासन्रामस्य चापरे ॥ २० ॥ आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः ॥ यत्रारोहन्ति जेतारो वहन्ति च पराजिताः ॥ २१ ॥

च चेरतुः ॥ १६ ॥ गोपैः सह तद्वने ययोः पशूंश्चारयतोः सतोस्तयोर्जिहीर्षया गोपरूपी प्रलम्बासुरोऽगात् ॥ १७ ॥ तदा भगवान् तं जानन्नपि तद्वधोपायं विचिन्त्य तेन सख्यं मेने ॥ १८ ॥ ततः कृष्णो गोपानाहूयाऽऽह । हे गोपाः ! यथायोग्यं वयो बलाद्यनुरूपं द्वन्द्वीभूय विहरिष्यामः ॥ १९ ॥ तत्र गोपाः रामकृष्णौ नायकौ चक्रुः । तत्र केचित् कृष्णपक्षीयाः अन्ये रामपक्षीयाः आसन् ॥ २० ॥ ततो वाह्यवाहकलक्षणाः क्रीडाश्चक्रुः यत्र क्रीडायां जेतारः आरोहन्ति पराजिता वहन्ति ॥ २१ ॥

१ अस्पृश्यत्वं नेत्रबन्धश्च ।

एवं वहन्तो वाह्यमाना गोपाः गोधनं चारयन्तः सन्तो भाण्डीरकं नाम वटं जग्मुः ॥ २२ ॥ यदा रामपक्षीयाः श्रीदामवृषभादयः क्रीडायां जयिनो जाताः तदा कृष्णपुरोगमास्तानूहुः ॥२३॥ तत्र श्रीकृष्णः श्रीदामानमुवाह । भद्रसेनो वृषभम् । प्रलम्बो रामम् ॥२४॥ ततः स दैत्यः पर्वतवद् भारसारं रामं वहन् दैत्यः स्वं वपुरास्थितः सुवर्णालंकृष्णमसह्यं मत्वा रामं वहन् मर्यादातः परं दूरं शीघ्रं प्रागात् ॥ २५ ॥ ततः



वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम् ॥ भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥ २२ ॥ रामसंघट्टिनो यर्हि श्रीदामवृषभादयः ॥ क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप ॥ २३ ॥ उवाह कृष्णो भगवान् श्रीदामानं पराजितः ॥ वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ॥ २४ ॥ अविषह्यं मन्यमानः कृष्णं दानवपुङ्गवः ॥ वहन् द्रुततरं प्रागादवरोहणतः परम् ॥ २५ ॥ तमुद्वहन् धरणिधरेन्द्रगौरवं महासुरो विगतरयो निजं वपुः ॥ स आस्थितः पुरटपरिच्छदो बभौ तडिद्द्युमानुडुपतिवाडिवाम्बुदः ॥ २६ ॥ निरीक्ष्य तद्वपुरलमम्बरे चरत् प्रदीप्तदृग् भ्रुकुटितटोग्रदंष्ट्रकम् ॥ ज्वलच्छिखं कटककिरीटकुण्डलत्विषाऽद्भुतं हलधर ईषदत्रसत् ॥ २७ ॥ अथागतस्मृतिरभयो रिपुं बलो विहायसाऽर्थमिव हरन्तमात्मनः ॥ रुषाऽहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥२८॥ स आहतः सपदि विशीर्णमस्तको मुखाद्वमन् रुधिरमपस्मृतोऽसुरः ॥ महारवं व्यसुरपतत् समीरयन् गिरिर्यथा मघवत आयुधाहतः ॥२९॥ दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना ॥ गोपाः सुविस्मिता आसन् साधु साध्विति वादिनः ॥३०॥

कृतो मेघ इव बभौ ॥ २६ ॥ ततः आकाशेऽतिवेगेन भ्रमन्तं प्रदीप्तदृशं ज्वलत्केशं तं दृष्ट्वा रामः किंचित् तत्रास ॥ २७ ॥ अथ प्राप्तस्मृतिर्निर्भयो राम आत्मानं हरन्तं दैत्यं रुषा दृढमुष्टिना शिरसि जघान ॥ २८ ॥ ततो दैत्यस्तदैव भग्नमस्तको मुखाद् रुधिरं वमन् महाशब्दं कुर्वन् गतप्राणः पपात वज्रहतो गिरिरिव ॥ २९ ॥ रामेण निहतं प्रलम्बं दृष्ट्वा गोपाः साध्वित्युक्त्वा विस्मिता आसन् ॥ ३० ॥



१ विद्युद्दीप्तिमान्। २ उडुपतिं चन्द्रं वहतीति चन्द्रस्थानीयो रामः असुरो मेघः विद्युत् सुवर्णालंकारकान्तिः। ३ भ्रुकुटितटसंलग्नोग्रा दंष्ट्रा यस्मिंस्तत्। ४ गतस्मृतिः।

ततः आशिषो गृणन्तः प्रेत्यागतमिवालिङ्ग्य तं प्रेमविह्वलचित्ताः प्रशशंसुः॥३१॥तदा देवाः पापे प्रलम्बे निहते सति पुष्पैः राममभ्यवर्षन् साध्विति शशंसुः ॥३२॥ इति श्रीभा ० म ० चू ० द ० पू०अष्टादशोऽध्यायः॥१८॥ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः॥मुञ्जारण्यमरण्याग्नेररक्षत्तन्निपाततः ॥१॥ श्रीशुक उवाच ॥ हे नृप ! क्रीडासक्तेषु गोपेषु तद्गावः स्वैरं चरन्त्यस्तृणलोभेन गह्वरं विविशुः ॥ १ ॥ अजा गावो महिष्यश्च वनाद् वनं प्रविशन्त्यो दावेन तृषिताः क्रन्दन्त्योऽत्युच्छ्रितघनतृणविशेषारण्यं विविशुः ॥ ॥२॥ततः कृष्णरामादयो गोपाः

आशिषोऽभिगृणन्तस्तं प्रशशंसुस्तंदर्हणम्[1] ॥ प्रेत्यागतमिवालिङ्ग्य प्रेमविह्वलचेतसः ॥३१॥ पापे प्रलम्बे निहते देवाः परमनिर्वृताः ॥ अभ्यवर्षन् बलं माल्यैः शशंसुः साधु साध्विति ॥३२॥ इति श्रीभा० म० द० पू० प्रलम्बासुरवधो नामाष्टादशोऽध्यायः ॥ १८ ॥ श्रीशुक उवाच ॥ क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः ॥ स्वैरं चरन्तो विविशुस्तृणलोभेन गह्वरम् ॥१॥ अजा गावो महिष्यश्च निर्विशन्त्यो वनाद्वनम् ॥ इषीकाटवीं निर्विविशुः क्रन्दन्त्यो दावतर्षिताः ॥ ॥ २ ॥ तेऽपश्यन्तः पशून् गोपाः कृष्णरामादयस्तदा ॥ जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम् ॥ ३ ॥ तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम् ॥ मार्गमन्वगमन् सर्वे नष्टाऽऽजीव्या[2] विचेतसः ॥ ४ ॥ मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोधनम् ॥ संप्राप्य तृषिताः श्रान्तास्ततस्ते संन्यवर्तयन् ॥ ५ ॥ ता आहूता भगवता मेघगम्भीरया गिरा ॥ स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः ॥ ६ ॥ ततः समन्ताद्वनधूमकेतुर्यदृच्छयाऽभूत क्षयकृद्वनौकसाम् ॥ समीरितः सारथिनोल्बणोल्मुकैर्विलेलिहानः स्थिरजङ्गमान् महान् ॥ ७ ॥

पशून् दृष्ट्वा तद्गतिं विचिन्वन्तोऽपि न विदुः ॥३॥ ततस्तासां खुरैर्दन्तैश्च च्छिन्नतृणैर्गोष्पदाङ्कित भूप्रदेशैश्च गवां मार्गमन्वगमन्॥४॥ ततस्ते गोपाः मुञ्जाटव्यां क्रन्दमानं स्वगोधनं प्राप्य तृषिताःसन्तःसंन्यवर्तयन्॥५॥तदा कृष्णेन मेघगम्भीरया वाचाऽऽहूतास्ताः स्वनामशब्दं श्रुत्वा प्रतिनेदुः ॥ ६ ॥ तावद् ततः सर्वतो दावाग्निर्ज्वलत्काष्ठैः स्थिरजङ्गमान् लेलिहानः प्रादुरभूत् ॥ ७ ॥

---

१ प्रशंसार्हम्। २ गतजीविकासाधनाः। ३ वायुना।

तदा तं दावाग्निं दृष्ट्वा भीता गोपा गावश्च सबलं कृष्णं जगदुः॥८॥ हे कृष्ण ! हे कृष्ण ! हे राम ! अग्निना दह्यमानान् नस्त्रातुमर्हथः ॥ ९ ॥ हे कृष्ण ! त्वद्बान्धवाः दुखं प्राप्तुं नार्हन्ति । वयं हि त्वत्सेवकाः स्मः॥१०॥श्रीशुक उवाच ॥ हे नृप ! बन्धूनां दीनं वचः श्रुत्वा कृष्णः आह- हे गोपाः ! मा भैष्ट । नेत्राणि निमीलयत ॥११॥ तथेत्युक्त्वा मिलिताक्षेषु तेष्वग्निं पीत्वा तान् दुःखाद् व्यमोचयत्॥१२॥ ततश्च ते गोपाः नेत्राण्युन्मील्य पुनर्भाण्डीरं वटं प्रापिताः सन्तो हरेः कर्म दृष्ट्वा विस्मिताः आसन् ॥१३॥ ततः एवं कृष्णयोगवीर्यं दावाग्नेरात्मनो रक्षां च

तमापतन्तं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः ॥ ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः ॥ ८ ॥ कृष्ण कृष्ण महावीर्य हे रामामितविक्रम ॥ दावाग्निना दह्यमानान्प्रपन्नांस्त्रातुमर्हथः ॥ ९ ॥ नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुम् ॥ वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः ॥ १० ॥ श्रीशुक उवाच ॥ वचो निशम्य कृपणं बन्धूनां भगवान् हरिः ॥ निमीलयत मा भैष्ट लोचनानीत्यभाषत ॥ ११ ॥ तथेति मीलिताक्षेषु भगवानग्निमुल्बणम् ॥ पीत्वा मुखेन तान् कृच्छ्राद् योगाधीशो व्यमोचयत् ॥१२॥ ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिताः ॥ निशम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः ॥१३॥ कृष्णस्य योगवीर्यं तद्योगमायानुभावितम् ॥ दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥ १४ ॥ गाः सन्निवर्त्य सायाह्ने सहरामो जनार्दनः ॥ वेणुं विरणयन् गोष्ठमगाद् गोपैरभिष्टुतः ॥ १५ ॥ गोपीनां परमानन्द[१] आसीद् गोविन्ददर्शने ॥ क्षणं युगशतमिव यासां येन विनाऽभवत् ॥ १६ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीकृष्णकृतदावाग्निपानं नामैकोनविंशोऽध्यायः ॥ ॥१९॥ श्रीशुक उवाच ॥ तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः ॥ गोपाः स्त्रीभ्यः समाचख्युः प्रलम्बवधमेव च ॥१॥

दृष्ट्वा ते गोपाः कृष्णं देवं मेनिरे ॥१४॥ ततः सायाह्ने सरामः कृष्णो गोपैः स्तुतः सन् गाः परावर्त्य वेणुं वादयन् व्रजं विवेश ॥१५॥ तदा गोपीनां कृष्णदर्शनेऽत्यानन्दः आसीत् । कृष्णं विना यासां क्षणं युगशतमिव जातम् ॥ १६ ॥ इति श्रीभाग चू० दशम० पू० एकोनविंशोऽध्यायः ॥१९॥ विंशे प्रावृट्छरच्छोभावर्णनेन वनोचिताः ॥ प्रावृट्क्रीडा निरूप्यन्ते गोपारामयुजो हरेः॥१॥ हेयादेयोपमानेन प्रावृट्छरदृतुश्रियोः॥ वर्णनं त्वद्भुतैश्वर्यकृष्णलीलाविवक्षया ॥२॥ श्रीशुक उवाच ॥ अथ गोपाः दावाग्नेरात्मनो मोक्षं प्रलम्बवधं च स्त्रीभ्य आचख्युः॥१॥

१ 'सद्' इ० पा० ।

ततः एवं तयोरद्भुतं कर्म श्रुत्वा गोपाः गोप्यश्च कृष्णरामौ देवश्रेष्ठौ मेनिरे ॥२॥ ततः सर्वप्राणिसमुद्भवो वर्षर्तुः प्राप्तः । कथंभूतः सः । क्षोभितनभस्तलः ॥३॥ तदा मेघैराकाशं गुणैर्व्याप्तं ब्रह्मेव बभौ ॥४॥ तदा सूर्यः किरणैरष्टौ मासान्पीतं यद्भूमेर्जलं तन्मोक्तुमारेभे॥५॥किंच मेघाः विश्वस्य जीवनं जलं करुणा इव मुमुचुः॥६॥तदा च ग्रीष्मेण कृशा मही पुष्टा जाता । काम्यतपसो नरस्य तनुः कामान् सम्प्राप्य पुष्टा भवति

गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः ॥ मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ ॥ २ ॥ ततः प्रावर्तत प्रावृट् सर्वसत्त्वसमुद्भवा ॥ विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥ ३ ॥ सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः ॥ अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥ ४ ॥ अष्टौ मासान्निपीतं यद् भूम्याश्चोदमयं वसु ॥ स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥५॥ तडित्वन्तो महामेघाश्चण्डश्वसनवेपिताः ॥ प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ॥ ६ ॥ तपःकृशा देवमीढा आसीद्वर्षीयसी मही ॥ यथैव काम्यतपसस्तनुः संप्राप्य तत्फलम् ॥७॥ निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः ॥ यथा पापेन पाषण्डा नहि वेदाः कलौ युगे ॥८॥ श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः ॥ तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये ॥ ९ ॥ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः ॥ पुंसो यथाऽस्वतन्त्रस्य देहद्रविणसम्पदः ॥ १० ॥ हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिता ॥ उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत् ॥ ११ ॥ क्षेत्राणि सस्यसम्पद्भिः कर्षकाणां मुदं ददुः ॥ धनिनामुपतापं च दैवाधीनमजानताम् ॥ १२ ॥

यथा ॥७॥ निशामुखेषु खद्योताः भान्ति ग्रहाः न यथा कलौ पापेन पाषण्डाः न वेदाः ॥८॥ किंच पर्जन्यशब्दं श्रुत्वा मण्डूकाःशब्दांश्चक्रुःयथा नियमात्यये ब्राह्मणाः पुनर्वाचमाददते ॥९॥ क्षुद्रनद्यः उत्पथवाहिन्यः आसन् इन्द्रियाधीनस्य पुंसो द्रव्यसम्पद इव ॥१०॥ हरितैस्तृणैररुणकीटैश्च हरिता रक्ता च भूः राज्ञां सेनेव जाता॥११॥क्षेत्राणि सस्यसंपद्भिः कर्षकाणां हर्षं ददुः । दैवाधीनमजानतां धनिनामुपतापं च ददुः॥१२॥

१ सर्वसत्त्वानामुत्पत्तितो जीवनतश्च समुद्भवः यस्यां सा । २ परिधयः दिशः । ३ पर्जन्यसिक्ता । ४ नित्यकर्मसमाप्त्यनन्तरम् ।

किंच सर्वे प्राणिनो नवोदकसेवनेन रुचिरं रूपं दधुः यथा हरिसेवया भक्ताः॥१३॥सरिद्भिः संगतः सिन्धुश्चुक्षोभ यथाऽपक्वयोगिनश्चित्तम्॥१४॥ पर्वताः धाराभिर्हन्यमाना अपि न विव्यथुः यथा व्यसनैः पराभूताः अपि भक्ताः॥१५॥मार्गास्तृणैर्व्याप्ताः संदिग्धा आसन् द्विजैरनभ्यस्ताः श्रुतय इव ॥१६॥ मेघेषु विद्युल्लताः स्थैर्यं न चक्रुः पुरुषेषु पुंश्चल्य इव॥१७॥आकाशे निर्गुणमपीन्द्रधनुरभात प्रपञ्चे निर्गुणः पुमानिव॥१८॥

जलस्थलौकसः सर्वे नववारिनिषेवया ॥ अबिभ्रद्रुचिरं रूपं यथा हरिनिषेवया ॥ १३ ॥ सरिद्भिः संगतः सिन्धुश्चुक्षुभे श्वसनोर्मिमान् ॥ अपक्वयोगिनश्चित्तं कामाक्तं[1] गुणयुग्यथा ॥१४॥ गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः ॥ अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ॥ १५ ॥ मार्गा बभूवुः संदिग्धास्तृणैश्छन्ना ह्यसंस्कृताः ॥ नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव ॥ १६ ॥ लोकबन्धुषु मेघेषु विद्युतश्चलसौहृदाः ॥ स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव ॥ १७॥ धनुर्वियति माहेन्द्रं निर्गुणं[2] च गुणिन्यभात् ॥ व्यक्ते गुणव्यतिकरेऽगुणवान् पुरुषो यथा ॥ १८ ॥ न रराजोडुपश्छन्नः स्वज्योत्स्नाराजितैर्घनैः ॥ अहंमत्या भासितया स्वभासा[3] पुरुषो यथा ॥ १९ ॥ मेघागमोत्सवा हृष्टाः प्रत्यनन्दन् शिखण्डिनः ॥ गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे ॥ २० ॥ पीत्वाऽपः पादपाः पद्भिरासन् नानात्ममूर्तयः ॥ प्राक् क्षामास्तपसा श्रान्ता यथा कामानुसेवया ॥ २१ ॥ सरस्स्वशान्तरोधस्सु न्यूषुरङ्गापि सारसाः ॥ गृहेष्वशान्तकृत्येषु ग्राम्या इव दुराशयाः ॥ २२ ॥ जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे[4] ॥ पाषण्डिनामसद्वादैर्वेदमार्गाः कलौ यथा ॥ २३ ॥

मेघैर्गुप्तश्चन्द्रो न रराज अहंकारेण गुप्तो जीव इव॥१९॥तदा मेघागमे मयूराः प्रत्यनन्दन् यथा गृहे खिन्नाः पुरुषा भक्तसमागमे नन्दन्ति ॥२०॥ वृक्षाः मूलैर्जलं पीत्वा नानामूर्तयः आसन् यथा तपसा श्रान्ता नराः कामसेवया ॥ २१ ॥ किंच पङ्ककण्टकादियुक्ततटेषु सरस्सु चक्रवाकाः अवसन् अशान्तकार्येषु गृहेषु ग्राम्या यथा ॥२२॥ जलस्योघैस्तटमर्यादाः अभिद्यन्त कलौ पाषण्डिनां दुष्टवादैर्वेदमार्गाः यथा ॥ २३ ॥

[1] कामवासनायुक्तम् । [2] मौर्वीशून्यं गुणरहितम् । [3] स्वचैतन्येन प्रकाशितेनाहंकारेणेत्यर्थः । [4] पर्जन्ये ।

मेघाः,भूतेभ्यो जलं व्यमुञ्चन् यथा राजानो दानानि ददते॥२४॥एवंभूतं पक्वखर्जूरजम्बूयुतं तद्वनं दृष्ट्वा गोगोपैर्बलरामेण च सह कृष्णस्तत्र विवेश ॥२५॥ तदा धेनवो भगवताऽऽहूताः सत्यः स्रावितपयोधरा ययुः॥२६॥तदा हरिः प्रीताः पुलिन्दीर्ददर्श। वनपङ्क्तयो मधुस्रवाः ददर्श। गिरेः पतिताः जलधारास्तासां नादान् निकटवर्तिनीर्गुहाश्च ददर्श॥२७॥तत्र मेघे वर्षति सति कृष्णः क्वचित् वृक्षच्छायायां प्रविश्य कन्दमूलफलाशनो रेमे॥२८॥गृहादानीतं दध्योदनं शिलायां कृत्वा सबलगोपैर्बुभुजे॥२९॥ततस्तृणोपरि संचर्वतस्तृप्तान् वृषान् वत्सान् गाश्च पयोधरभारश्रमाः॥३०॥

व्यमुञ्चन् वायुभिर्नुन्ना भूतेभ्योऽथा मृतं घनाः ॥ यथाऽऽशिषो विश्पतयः कालेकाले द्विजेरिताः ॥२४॥ एवं वनं तद् वर्षिष्ठं पक्वखर्जूरजम्बुमत् ॥ गोगोपालैर्वृतो रन्तुं सबलः प्राविशद्धरिः ॥२५॥ धेनवो मन्दगामिन्य ऊधोभारेण भूयसा॥ ययुर्भगवताऽऽहूता द्रुतं प्रीत्या स्नुतस्तनीः ॥ २६ ॥ वनौकसः प्रमुदिता वनराजीर्मधुच्युतः ॥ जलधारा गिरेर्नादा-नासन्ना ददृशे गुहाः ॥२७॥ क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति ॥ निविश्य भगवान् रेमे कन्दमूलफलाशनः ॥२८॥ दध्योदनं समानीतं शिलायां सलिलान्तिकं ॥ संभोजनीयैर्बुभुजे गोपैः संकर्षणान्वितः ॥ २९ ॥ शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् ॥ तृप्तान् वृषान् वत्सतरान् गाश्च स्वोधोभरश्रमाः ॥ ३० ॥ प्रावृट्छ्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् ॥ भगवान् पूजयांचक्रे आत्मशक्त्युपबृंहिताम् ॥ ३१ ॥ एवं निवसतोस्तस्मिन् रामकेशवयोर्व्रजे ॥ शरत् समभवद् व्यभ्रा स्वच्छयाम्ब्वपरुषानिला ॥ ३२ ॥ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः ॥ भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥३३॥ व्योम्नोऽब्दं भूतशाबल्यं भुवः पङ्कमपां मलम् ॥ शरज्जहाराश्रमिणां कृष्णे भक्तिर्य-थाऽशुभम् ॥३४॥ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः ॥ यथा त्यक्तैषणः शान्ता मुनयो मुक्तकिल्बिषाः ॥ ३५ ॥

तथा तां वर्षर्तुश्रियं च दृष्ट्वा संमानं चक्रे ॥ ३१ ॥ एवं तत्र रामकृष्णयोर्निवसतोः सतोः शरदृतुः प्राप्तः । तदा खं निरभ्रम् । जलं स्वच्छम् । शान्तो वायुश्च ॥३२॥ शरदा जलानि प्रकृतिं ययुः यथा योगसेवया भ्रष्टानां चेतांसि ॥३३॥ किंच नभसो मेघं भूतानां सांकर्यं भुवः पङ्कं जलस्य मलं च शरद् जहार । आश्रमिणां चतुर्णां पापं कृष्णभक्तिरिव॥३४॥मेघाः सर्वस्वं हित्वा शुभ्रकान्तयो रेजुः त्यक्तैषणाःमुनय इव॥३५॥

पर्वताः जलं क्वचिन्मुमुचुः क्वचिन्न यथा ज्ञानिनो ज्ञानं क्वचिद् विस्तारयन्ति क्वचिन्न ॥ ३६ ॥ क्षीयमाणं जलं क्षुद्रजलेचराः नः विदुः यथा क्षीयमाणमायुर्मूढनरा न जानन्ति ॥३७॥ क्षुद्रजलचराः अर्कजं तापं प्रापुः यथा कुटुम्बी दारिद्र्येण तापं प्राप्नोति ॥ ३८ ॥ किंच स्थलानि कर्दमं जहुः लताः अपक्वतां जहुः यथा धीराः शरीरादौ ममतां त्यजन्ति ॥३९॥ किंच अब्धिः स्थिरजलोऽभूत् त्यक्तक्रियो मुनिरिव ॥४०॥ शरदागमे कर्षकाः क्षेत्रेभ्यः सेतुभिर्जलं जगृहुः यथा योगिन इन्द्रियरोधेन ज्ञानम् ॥४१॥ भूतानां शरदर्कजं तापं चन्द्रो जहार देहाभिमानं

गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् ॥ यथा ज्ञानमृतं काले ज्ञानिनो ददते न वा ॥३६॥ नैवाविदन् क्षीयमाणं जलं गाधजलेचराः ॥ यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः ॥३७॥ गाधवारिचरास्तापमविन्दन् शरदर्कजम् ॥ यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः॥३८॥शनैश्शनैर्जहुः पंकंस्थलान्यामं चवीरुधः॥ यथाऽहंममतां धीराः शरीराद्दिष्वनात्मसु ॥ ३९ ॥ निश्चलाम्बुरभूत् तूष्णीं समुद्रः शरदागमे ॥ आत्मन्युपरते सम्यग् मुनिर्व्युपरतागमः ॥ ४० ॥ केदारेभ्यस्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः ॥ यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः ॥४१॥ शरदर्कांशुजांस्तापान्भूतानामुडुपोऽहरत् ॥ देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम् ॥४२॥ खमशोभत निर्मेघं शरद्विमलतारकम् ॥ सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥ ४३ ॥ अखण्डमण्डलो व्योम्नि रराजोडुगणैः शशी ॥ यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥४४॥ आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम् ॥ जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः ॥४५॥ गावो मृगाः खगाः नार्यः पुष्पिण्यः शरदाऽभवन् ॥ अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव ॥ ४६ ॥



बोध इव ॥४२॥ खं निर्मेघं स्वच्छनक्षत्रं शुशुभे सत्त्वयुक्तं चित्तमिव ॥४३॥ तदा चन्द्रो नक्षत्रैः पूर्णमण्डलः शुशुभे यथा यादवैर्वृतः कृष्णः ॥ ४४ ॥ किंच जनाः पुष्पवनवायुमालिङ्ग्य तापं जहुः । कृष्णहृतचित्ताः गोप्यो न जहुः ॥ ४५ ॥ तदा गोमृगखगस्त्रियः शरदृतुना पुष्पिण्यः स्वपतिभिः पश्चादन्वीयमानाः अभवन् ॥ ४६ ॥

---

१ इन्द्रियैः । २ इवशब्दोऽध्याहार्यः । ३ शब्दब्रह्मणः वेदस्यार्थान् पूर्वोत्तरमीमांसानिर्णीतान् दर्शयतीति तथा । ४ ईश्वराराधनार्थाः क्रियाः ।

सूर्योदये कमलानि चन्द्रविकासीनि विना हर्षं प्रापुः यथा राज्ञा दस्यून् विना लोकाः ॥४७॥ किंच पुरग्रामव्रजेषु नवान्नप्राशनार्थैर्वैदिकैर्यज्ञैर्महोत्सवैश्च लौकिकैः पक्वधान्येन च युक्ता भूर्बभौ ॥४८॥ शरदागमाद् वणिजो यतयो नृपा स्नातकाश्च वर्षाकाले रुद्धाः सन्तो बहिर्निर्गम्य स्वस्वार्थान् प्रपेदिरे यथा सिद्धाः आयुषा रुद्धाः सन्तः काले प्राप्ते देवादिदेहान् प्राप्नुवन्ति ॥४९॥ इति श्रीभागवते चू० द० पू० विंशोऽध्यायः ॥२०॥ एकविंशे शरद्रम्यवृन्दावनगते हरौ ॥ तद्वेणुस्वरमाकर्ण्य गोपीभिर्गीतमीर्यते ॥१॥ श्रीशुक उवाच ॥ हे राजन्! गोगोपालसहितः कृष्णः शरत्स्वच्छजलं कमलसुगन्धि-

उदहृष्यन् वारिजानि सूर्योत्थाने कुमुद्विना ॥ राज्ञा तु निर्भया लोका यथा दस्यून् विना नृप ॥ ४७ ॥ पुरग्रामेष्वाग्रयणैरैन्द्रियैश्च[1] महोत्सवैः ॥ बभौ भूः पक्वसस्याढ्या कलाभ्यां[2] नितरां हरेः ॥ ४८ ॥ वणिङ्मुनिनृपस्नाता निर्गम्यार्थान् प्रपेदिरे ॥ वर्षरुद्धा यथा सिद्धाः स्वपिण्डान् काल आगते ॥ ४९ ॥ इति श्रीभा० म० दश० पू० प्रावृट्शरद्वर्णनं नाम विंशोऽध्यायः ॥ २० ॥ श्रीशुक उवाच ॥ इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना ॥ न्यविशद् वायुना वातं सगोगोपालकोऽच्युतः ॥ १ ॥ कुसुमितवनराजिशुष्मिभृङ्गद्विजकुलघुष्टसरस्सरिन्महीध्रम् ॥ मधुपतिरवगाह्य चारयन् गाः सहपशुपालबलश्चुकूज वेणुम् ॥२॥ तद् व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् ॥ काश्चित् परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् ॥३॥ तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् ॥ नाशकन् स्मरवेगेन विक्षिप्तमनसो नृप ॥ ४ ॥ बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद् वासः कनककपिशं वैजयन्तीं च मालाम् ॥ रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैर्वृन्दारण्यं स्वपदरमणं[3] प्राविशद् गीतकीर्तिः ॥ ५ ॥

वायुना वातम् ॥१॥ पुष्पितवनपंक्तिषु मत्तभ्रमरपक्षिभिर्नादितसरस्सरित्पर्वतं तद् वृन्दावनं प्रविश्य बलेन गोपालैश्च सह कृष्णो गाश्चारयन् वेणुमवादयत् ॥२॥ तत् कामोत्पत्तिकरं वेणुगीतं श्रुत्वा गोप्यः परोक्षे सखीभ्योऽवर्णयन् ॥३॥ तद् वर्णयितुमारब्धवत्योऽपि कामवेगेन विक्षिप्तमनसो वर्णयितुं नाशकन् ॥४॥ तदा यादृशं कृष्णस्मरणं तासां मनः क्षोभकं जातं तदाह। कृष्णो मयूरपिच्छमुकुटं नटवरवपुर्बिभ्रत् तथा कर्णयोः कर्णिकारपुष्पं बिभ्रत् तथा स्वर्णवत्पीतं वासो वैजयन्तीं मालां च बिभ्रत् वेणोः रन्ध्राण्यधरसुधयाऽऽपूर्य गोपैर्गीतकीर्तिः सन् वृन्दावनं विवेश ॥५॥

---

१ इन्द्रियार्थः लौकिकैर्न वैदिकैरित्यर्थः । २ रामकृष्णाभ्यामित्यर्थः । ३ स्वपदैरंकितैः रमणं रतिजनकम् ।

हे नृप ! एवं वेणुशब्दं श्रुत्वा व्रजस्त्रियो वर्णयन्त्यःपदे-पदे कृष्णमालिंगितवत्यः ऊचुः ॥ ६ ॥ गोप्य ऊचुः ॥ हे गोप्यः ! चक्षुष्मतां तावत् प्रियदर्शनमिदमेव फलम्; नान्यत् । तच्च फलं पशून् वने प्रवेशयतोः रामकृष्णयोर्वेणुं वादयन्मुखं यैः पीतं तैरेव सेवितं, नान्यैः ॥ ७ ॥ अन्याः आहुः—हे गोप्यः ! आम्रप्रवालकमलमालाभिर्विचित्रवेषौ गोपसभायां नटवराविव मध्ये रेजतुः । अहो गोपानां पुण्यमिति ॥८॥ किंच हे गोप्यः ! अयं वेणुः किं पुण्यं कृतवान् यतोऽस्मद्भोग्यां कृष्णाधरसुधां स्वयं भुङ्क्ते । किंच यासां जलेन पुष्टाः ताः नद्यः कमलादिना

इति वेणुरवं राजन् सर्वभूतमनोहरम् ॥ श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे ॥ ६ ॥ गोप्य ऊचुः ॥ अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेशयतोर्वयस्यैः ॥ वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥ ७ ॥ चूतप्रवालबर्हस्तबकोत्पलाब्जमालाऽनुपृक्तपरिधानविचित्रवेषौ ॥ मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ ॥८॥ गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ॥ भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथाऽऽर्याः ॥ ९ ॥ वृन्दावनं सखि भुवो वितनोति कीर्तिं यद्देवकीसुतपदाम्बुजलब्धलक्ष्मि ॥ गोविंदवेणुमनुमत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम् ॥ १० ॥ धन्याः स्म मूढमतयोऽपि हरिण्य एता या नन्दनन्दनमुपात्तविचित्रवेषम् ॥ आकर्ण्य वेणुरणितं सहकृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥ ११ ॥

रोमाञ्चिताः लक्ष्यन्ते । येषां वंशे जातास्ते वृक्षाः मधुधारामिषेणाश्रूणि मुमुचुः यथा वृद्धाः स्ववंशे हरिसेवकं दृष्ट्वा रोमाञ्चिताः भवन्त्यश्रूणि च मुञ्चन्ति ॥ ९ ॥ हे सखि ! इदं वनं भुवः कीर्तिं विस्तारयति यतः कृष्णपादाब्जप्राप्तशोभम् । किंच इमं वेणुनादं तदनु मयूरनृत्यं च दृष्ट्वाऽन्ये मृगादयः पर्वतशिखरेषु स्तब्धा बभूवुः ॥ १० ॥ अपराः आहुः—हे गोप्यः ! एताः हरिण्योऽज्ञा अपि धन्याः, यतो वेणुगीतं श्रुत्वा पतिभिःसह स्नेहावलोकनैः कृष्णपूजां चक्रुः ॥ ११ ॥



१ स्निग्धकटाक्षविसर्गम् । २ ईषदन्तरान्तरसंयुक्तम् । ३ केवलमवशिष्टं रसमात्रं यथा भवति तथा ।

अन्या ऊचुः । हे गोप्यः ! देवाङ्गनाः कृष्णं दृष्ट्वा तद्वेणुगीतं च श्रुत्वा विमानेषु देवानामुत्सङ्गेषु स्थिता अपि श्लथन्नीव्यो मुमुहुः ॥१२॥ किं च हे गोप्यः ! गावो वेणुगीतामृतमुन्नमितकर्णपुटैः पिबन्त्यस्तस्थुः । तथा स्नुतस्तनपयःकवलाः सन्तो विस्मृतक्रियाः बभूवुः ॥ १३ ॥ हे गोप्यः ! अत्र ये पक्षिणो वृक्षशाखाः आरुह्य कृष्णस्य वेणुगीतं शृण्वन्ति ते च निर्निमेषदृशः पश्यन्ति ते बहुधा मुनयो भवितुमर्हन्ति ॥१४॥

कृष्णं निरीक्ष्य वनितोत्सवरूपवेषं[1] श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ॥ देव्यो विमानगतयः स्मरनुन्नसारा[2] भ्रश्य-त्प्रसूनकबरा मुमुहुर्विनीव्यः ॥ १२ ॥ गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबन्त्यः ॥ शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्गोविन्दमात्मनि दृशा[3]ऽश्रुकलाः[4] स्पृशन्त्यः ॥ १३ ॥ प्रायो बताम्ब विहगा मुनयो वने ऽस्मिन् कृष्णेक्षितं[5] तदुदितं[6] कलवेणुगीतम् ॥ आरुह्य ये द्रुमभुजान् रुचिरप्रवालान् शृण्वन्त्यमीलितदृशो विगतान्य-वाचः ॥ १४ ॥ नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः[7] ॥ आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृ-ह्णन्ति[8] पादयुगलं कमलोपहाराः ॥१५॥ दृष्ट्वाऽऽतपे व्रजपशून् सहरामगोपैः संचारयन्तमनुवेणुमुदीरयन्तम् ॥ प्रेमप्रवृद्ध उदितः कुसुमावलीभिः[9] सख्युर्व्यधात्[10] स्ववपुषाऽम्बुद आतपत्रम् ॥ १६ ॥

हे गोप्यः नद्यः कृष्णगीतं श्रुत्वोर्मिभुजैःकमलान्याहरन्त्यो मुरारेः पादयुगं धारयन्ति । अतस्ताः धन्याः ॥१५॥ किंच हे गोप्यः ! मेघ-आतपे रामगोपैःसह पशून् चारयन्तं कृष्णं दृष्ट्वोदितः सन् स्ववपुषा छत्रमिव छायामकरोत् । किं भाग्यम् ॥ १६ ॥

---

१ वनितानामुत्सवो यस्मात् तथाविधं रूपं वेषश्च यस्य तम् । २ स्मरेण परिक्षिप्तधियः । ३ दृशा मार्गेणात्मनि मनसि गोविंदं स्पृशन्त्यः आलिङ्गन्त्यः । ४ अश्रु फलाः लेशाः लोचनयोर्यासां ताः गोविशेषणान्येतानि । गावःशावाश्चेति समुच्चयः । ५ कृष्णस्य दर्शनं पुष्पफलाद्यन्तरं विना यथा भवति तथा । ६ कृष्णप्रकटितम् । ७ आवर्तैःपरिभ्रमैर्लक्षितेन सूचितेन मनोभवेन भग्नो वेगो यासां ताः । ८ आलिङ्गनेनाच्छादितं यथा भवति तथा । ९ पुष्पसमूहैस्तुषारैर्वा । १० लोकार्तिहरणशीतत्वादिसाम्यात् सखा श्रीकृष्णो मेघस्य ।

हे सख्यः ! एता पुलिन्द्यः कृतार्थाः । यतःश्रीवैष्णवचरणकमलकुंकुमं वने चङ्क्रमणेन तृणेषु संलग्नं दृष्ट्वा तन्मुखस्तनेष्वालिप्य कामव्यथां
जहुः । अतस्ताःधन्याः ॥१७॥ अन्याः ऊचुः ॥ अयं गोवर्धनोऽद्रिर्वैष्णवेषु श्रेष्ठोऽस्ति, यतःस सहगोगणयोः रामकृष्णयोर्जलतृणकन्दमूल-
गुहादिभिः संमानं करोति ॥१८॥ किंच हे सख्यः ! शिरसि गोपादबन्धनरज्जुवेष्टनेन स्कन्धे गोकर्षणार्थं पाशग्रहणेन शोभमानयोगाः वने नय-
तोः रामकृष्णयोर्वेणुनादैर्गतिमतां स्तब्धतास्थावर धर्मस्तरूणां रोमाञ्चो जङ्गमधर्मःइदमाश्चर्यं शृणुत ॥१९॥एवं हे नृप ! वृन्दावनस्थाः गोप्यो

पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुंकुमेन दयितास्तनमण्डितेन ॥ तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य
आननकुचेषु जहुस्तदाधिम् ॥ १७ ॥ हन्तायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः ॥ मानं तनोति
सहगोगणयोस्तयोर्यत् पानीयसूयवसकन्दरकन्दमूलैः ॥ १८ ॥ गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्त-
नुभृत्सु सख्यः ॥ अस्पन्दनं गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥ १९ ॥ एवंविधा भग-
वतो या वृन्दावनचारिणः ॥ वर्णयन्तो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥ २० ॥ इति श्रीभागवते महापुराणे
दशमस्कन्धे पूर्वार्धे श्रीकृष्णवेणुगीतवर्णनं नामैकविंशतितमोऽध्यायः ॥ २१ ॥ श्रीशुक उवाच ॥ हेमन्ते प्रथमे
मासि नन्दव्रजकुमारिकाः ॥ चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम् ॥ १ ॥ आप्लुत्याम्भसि कालिन्द्या जलांते
चोदितेऽरुणे ॥ कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥ २ ॥

मिथःकृष्णक्रीडाःवर्णयन्त्यः सत्यस्तन्मयतां ययुः ॥२०॥ इति श्रीभागवते महापुराणे चूर्णिकायां दशमस्कन्धे पूर्वा० एकविंशोऽध्यायः॥२१॥
द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया ॥ वरं दत्त्वा गतःकृष्णो यज्ञशालामितीर्यते।१॥श्रीशुक उवाच ॥ हे राजन् हेमन्ते मार्गशीर्षे मासि
व्रजकुमारिकाःहविष्यं भुञ्जानाः कात्यायन्यर्चनं व्रतं चेरुः ॥१॥ ततोऽरुणोदये यमुनायाः जले स्नात्वा तीरे वालुकामयीं देवीं कृत्वा ॥२॥

१ उरुगायस्य श्रीकृष्णस्य पादाब्जयोः रागेण आरुण्येन श्रीःकान्तिर्यस्य तेन कुंकुमेन । २ दयितानां स्तनेषु मण्डितेन अनुलिप्तेन। ३ कुंकुमदर्शनेन स्मरकृता रुक् तापो यासां ताः । ४ गोभिः गणेन सखिसमूहेन च वर्तमानयोः । ५ रामकृष्णयोः । ६ सूयवस शोभनतृणम् । ७ स्थावरजङ्गमात्मकेषु द्विविधेषु शरीरिषु मध्ये ।

गन्धपुष्पधूपनैवेद्यादिभिस्तामानर्चुः ॥ ३ ॥ किंच हे कात्यायनि ! हे महामाये ! ! हे देवि ! ! ! नन्दगोपसुतं कृष्णं मे पतिं कुरु । तुभ्यं नमः ॥४॥ एवं मन्त्रं जपन्त्यस्ताः पूजां चक्रुः । एवं ताः मासपर्यन्तं व्रतं चेरुः ॥५॥ व्रतपूर्वाङ्गमाह । प्रातरेवोत्थाय मिथो गृहीतपाणयः ॥ ६ ॥ कालिन्द्यां स्नातुं यान्त्यःऊच्चैः कृष्णं जगुः । एकदा नद्यां गत्वा तीरे पूर्ववद् वस्त्राणि निधाय जले विजह्रुः । तद् ज्ञात्वा योगेश्वरःकृष्णः ॥ ७ ॥ ८ ॥ गोपैः सह तत्रागत्य तासां वस्त्राणि गृहीत्वा कदम्बमारुह्य ॥ ९ ॥ बालैस्सह हसन् सन् सपरिहासं जगाद ।

गन्धैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः ॥ उच्चावचैश्चोपहारैः प्रवालफलतण्डुलैः ॥३॥ कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ॥४॥ इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः ॥ एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः ॥ ५ ॥ भद्रकालीं समानर्चुर्भूयान्नन्दसुतः पतिः ॥ उषस्युत्थाय गोत्रैः स्वैरन्योऽन्याबद्धबाहवः ॥ ६ ॥ कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातुमन्वहम् ॥ नद्यां कदाचिदागत्य तीरे निःक्षिप्यपूर्ववत् ॥७॥ वासांसि कृष्णं गायन्त्यो विजह्रुः सलिले मुदा ॥ भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः ॥ ८ ॥ वयस्यैरावृतस्तत्र गतस्तत्कर्मसिद्धये ॥ तासां वासांस्युपादाय नीपमारुह्य सत्वरः ॥ ९ ॥ हसद्भिः प्रहसन्बालैः परिहासमुवाच ह ॥ अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम् ॥ १० ॥ सत्यं ब्रवाणि नो नर्म यद् यूयं व्रतकर्शिताः ॥ न मयोदितपूर्वं वा अनृतं तदिमे विदुः ॥ ११ ॥ एकैकशः प्रतीच्छध्वं सहैवोत सुमध्यमाः ॥ तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः ॥ १२ ॥ व्रीडिताः प्रेक्ष्य चान्योऽन्यं जातहासा न निर्ययुः ॥ एवं ब्रुवति गोविन्दे नर्मणाऽऽक्षिप्तचेतसः ॥ आकण्ठमग्नाः शीतोदे वेपमानास्तमब्रुवन् ॥ १३ ॥

हे अबलाः ! अत्रागत्य स्वं स्वं वस्त्रं गृह्यताम् ॥ १० ॥ अहं सत्यं कथयामि न परिहासः, यतो यूयं व्रतकृशाः स्थ ॥ ११ ॥ अतोऽत्रैत्य सहैवैकैकशो वा वस्त्रं गृह्यताम् । हे नृप ! एवं कृष्णस्य परिहासं दृष्ट्वा गोप्यः ॥ १२ ॥ व्रीडिताः सत्यो मिथः प्रेक्ष्य हास्यं कृत्वा बहिर्न निर्ययुः । एवं कृष्णे ब्रुवति सति ताः शीतोदके आकण्ठमग्नाः कम्पमानाः सत्यः कृष्णमूचुः ॥ १३ ॥

१ नामभिः ।

प्रौढा ऊचुः । हे श्यामसुन्दर ! वयं ते दास्यो भवाम । तवोदितं करवाम । वस्त्राणि देहि । नो चेद् नन्दाय ब्रूम ॥ १५ ॥ श्रीकृष्ण उवाच ॥ हे अबलाः ! सत्यो यूयं यदि मे दास्यः तर्हि मदुक्तं कुरुत । अत्रागत्य वस्त्राणि गृह्णन्तु ॥ १६ ॥ ततस्ताः पाणिभ्यां योनिमाच्छाद्य शीतेन कम्पिताः जलाद् बहिर्निर्गताः ॥१७॥ ततः कृष्णस्ताः कुमारिका वीक्ष्य स्कन्धे वासांसि गृहीत्वा प्रीतःप्रोवाच ॥१८॥ हे अबलाः ! यूयं व्रतं धृत्वा

तत्र मुग्धाः ऊचुः । हे कृष्ण ! अन्यायं मा कृथाः । नन्दपुत्र त्वां जानीमः । वस्त्राणि देहि, यतो वयं कम्पिताः ॥ १४ ॥

माऽनयं भोः कृथास्त्वां तु नन्दगोपसुतं प्रियम् ॥ जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥१४॥ श्यामसुन्दर ते दास्यः करवाम तवोदितम् ॥ देहि वासांसि धर्मज्ञ नो चेद् राज्ञे ब्रुवामहे ॥ १५ ॥ श्रीभगवानुवाच ॥ भवत्यो यदि मे दास्यो मयोक्तं वा करिष्यथ ॥ अत्रागत्य स्ववासांसि प्रतीच्छन्तु शुचिस्मिताः ॥ १६ ॥ ततो जलाशयात् सर्वा-दारिकाः शीतवेपिताः ॥ पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुः शीतकर्शिताः ॥ १७ ॥ भगवानाह ता वीक्ष्य शुद्धभावप्र-सादितः ॥ स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥ १८ ॥ यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत् तदु-देवहेलनम् ॥ बद्ध्वाऽञ्जलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमोऽधो वसनं प्रगृह्यताम् ॥१९॥ इत्यच्युतेनाभिहितं व्रजाबला मत्वा विवस्त्राप्लवनं व्रतच्युतिम् ॥ तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं नेमुरवद्यमृग्यतः ॥ २० ॥ तास्तथाऽवनता दृष्ट्वा भगवान् देवकीसुतः ॥ वासांसि ताभ्यः प्रायच्छत्करुणस्तेन तोषितः ॥ २१ ॥ दृढं प्रलब्धास्त्रपया च हापिताः प्रस्तोभिताः क्रीडनवच्च कारिताः ॥ वस्त्राणि चैवापहृतान्यथाप्यमुं ता नाभ्यसूयन् प्रियसङ्गनिर्वृताः ॥ २२ ॥

वस्त्ररहिताः स्नानं कृतवत्यः । तत् पापमेव । तत्पापनिवृत्तये मूर्ध्न्यञ्जलिं बद्ध्वाऽधः प्रणामं कृत्वा वस्त्राणि गृह्यताम् ॥१९॥ एवं कृष्णोक्तं विवस्त्रस्नानं व्रतनाशकं मत्वा व्रतपूर्तिहेतवे तमेव प्रणेमुः ॥२०॥ ततःकृष्णो नम्रास्ताः दृष्ट्वा ताभ्यो वासांसि ददौ ॥२१॥ एवं कृष्णेन दृढं वञ्चिता अपि तं दोषदृष्ट्या नापश्यन् ॥ २२ ॥

---

१ फलभूतम् । २ यतः सः एवावद्यमृग् पापमार्जकः । ३ उपहसिताः ।

ततस्ताः स्ववासांसि परिधाय तस्मिन् लज्जायितेक्षणाः सत्यो नो चेलुः ॥२३॥ ततस्तासां संकल्पं ज्ञात्वा कृष्णः आह ॥२४॥ हे साध्व्यः ! युष्मत्संकल्पो मया विदितोऽनुमोदितश्च । अतः स सत्यो भवितुमर्हति ॥ २५ ॥ किंच मय्यावेशितधियां मनोरथो विषयभोगाय न कल्पते ॥२६॥ हे अबलाः ! व्रजं यात । आगामिनीः रात्रीर्मया सह रंस्यथ ॥२७॥ श्रीशुक उवाच ॥ हे नृप ! एवं कृष्णेनादिष्टास्ताः कुमारिका

परिधाय स्ववासांसि प्रेष्ठसङ्गमसज्जिताः[1] ॥ गृहीतचित्ता नो चेलुस्तस्मिँल्लज्जायितेक्षणाः ॥२३॥ तासां विज्ञाय भगवान् स्वपादस्पर्शकाम्यया ॥ धृतव्रतानां संकल्पमाह दामोदरोऽबलाः ॥ २४ ॥ संकल्पो विदितः साध्व्यो भवतीनां मदर्चनम् ॥ मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हति ॥२५॥ न मय्यावेशितधियां कामः कामाय कल्पते ॥ भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यते ॥२६॥ याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः ॥ यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥२७॥ श्रीशुक उवाच ॥ इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः ॥ ध्यायन्त्यस्तत्पदांभोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥२८॥ अथ गोपैः परिवृतो भगवान् देवकीसुतः ॥ वृन्दावनाद्गतो दूरं चारयन् गाः सहाग्रजः ॥२९॥ निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः ॥ आतपत्रायितान् वीक्ष्य द्रुमानाह व्रजौकसः ॥३०॥ हे स्तोक कृष्ण हे अंशो श्रीदामन् सुबलार्जुन ॥ विशालर्षभ तेजस्विन् देवप्रस्थवरूथप ॥३१॥ पश्यतैतान्महाभागान् परार्थैकान्तजीवितान् ॥ वातवर्षातपहिमान् सहन्तो वारयन्ति नः ॥३२॥ अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् ॥ सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ॥३३॥ पत्रपुष्पफलच्छाया मूलवल्कलदारुभिः ॥ गन्धनिर्यास[2]भस्मास्थितोक्मैः[3] कामान् वितन्वते ॥ ३४ ॥

कृष्णचरणकमलं ध्यायन्त्यो ययुः ॥२८॥ अथ सबलः कृष्णोगोपैर्वृतो गाश्चारयन् दूरं गतः ॥२९॥ तदा ग्रीष्मार्कातपे छत्रवत् कृतच्छायान्वृक्षान् दृष्ट्वा कृष्णो गोपानाह ॥ ३० ॥ हे स्तोक ! हे कृष्ण ! हे अंशो ! हे श्रीदामन् ! हे सुबल ! ॥३१॥ एतान् वृक्षान् पश्यत । स्वयं वातवर्षातपहिमान् सहित्वाऽस्माकं निवारयन्ति ॥३२॥ अहो ! तेषां वरं जन्म येषामर्थिनोऽविमुखा न यान्ति ॥३३॥ एते पत्रपुष्पफलच्छायामूलवल्कलदारुभिः सर्वेषां कामान्पूरयन्ति ॥ ३४ ॥

---

१ प्रेष्ठसंगमेन प्रियतमसंगमेन सज्जिताः वशीकृताः । २ निर्यासः घनरसः । ३ तोक्मैः पल्लवाद्यङ्कुरैः ।

एवं प्रवालस्तबकपुष्पादिभिर्नम्रशाखानां तरूणां मध्ये एतावदेव प्राणिनां जन्मसाफल्यम्। तदाह–प्राणार्थादिभिः सदा श्रेय एवाचरेत् ॥३५॥ तत्रोपवने पशूंश्चारयन्तः क्षुधार्ताः गोपाः कृष्णरामाव- यमुनां गतः सन् ॥ ३६ ॥ तत्र गाः जलं पाययित्वा गोपाः स्वयं जलं पपुः ॥३७॥ त्रयोविंशे ततो गोपैरन्नयाञ्चोपदेशतः ॥ तत्पत्न्यनुग्रहात् कृष्णो दीक्षिता- ब्रुवन् ॥३८॥ इति श्रीभागवते चू० द० पू० द्वाविंशोऽध्यायः ॥२२॥ तच्छान्ति कर्तुमर्हथ ॥१॥ श्रीशुक उवाच ॥ एवं गोपै- न्नवतापयत् ॥ १ ॥ गोपा ऊचुः । हे राम ! हे कृष्ण ! एषा क्षुधाऽस्मान् बाधते । तच्छान्तिं कर्तुमर्हथ ॥१॥

एतावज्जन्मसाफल्यं देहिनामिह देहिषु ॥ प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत् सदा ॥ ३५ ॥ इति प्रवालस्तबकफल- पुष्पदलोत्करैः ॥ तरूणां नम्रशाखानां मध्येन यमुनां गतः ॥ ३६ ॥ तत्र गाः पाययित्वाऽपः सुमृष्टाः शीतला शिवाः ॥ ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम् ॥ ३७ ॥ तस्या उपवने कामं चारयन्तः पशून्नृप ॥ कृष्णरामावु- पागम्य क्षुधार्ता इदमब्रुवन् ॥ ३८ ॥ श्रीभाग० म० दश० पू० श्रीकृष्णकृतगोपीवस्त्रापहरणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ गोपा ऊचुः ॥ राम राम महावीर्य कृष्ण दुष्टनिबर्हण ॥ एषा वै बाधते क्षुन्नस्तच्छान्तिं कर्तुमर्हथः ॥ १ ॥ श्रीशुक उवाच ॥ इति विज्ञापितो गोपैर्भगवान् देवकीसुतः ॥ भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत् ॥२॥ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः ॥ सत्रमांगिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥ तत्र गत्वौदनं गोपा याचतास्मद्वि- सर्जिताः ॥ कीर्त्तयन्तो भगवत आर्यस्य मम चाभिधाम् ॥ ४ ॥ इत्यादिष्टा भगवता गत्वाऽयाचन्त ते तथा ॥ कृताञ्जलिपुटा विप्रान् दण्डवत् पतिता भुवि ॥५॥ हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः ॥ प्राप्ताञ्जानीत भद्रं वो गोपान्नो रामचोदितान् ॥ ६ ॥

प्रार्थितः कृष्णः स्वभक्तायाः विप्रभार्यायाः प्रसीदन् सन् जगाद ॥२॥ हे गोपाः ! देवयजनं गच्छत, तत्र ब्राह्मणाः स्वर्गेच्छयाऽऽङ्गिरसं सत्रमा- सते ॥ ३ ॥ तत्र गत्वा मम रामस्य च नाम गृहीत्वाऽन्नं याचत ॥ ४ ॥ ततो गोपास्तत्र गत्वा विप्रान् दण्डवन्नत्वा कृताञ्जलयोऽन्नमयाचन्त ॥ ५ ॥ हे भूमिदेवाः ! शृणुत । अस्मान् कृष्णदासान् रामप्रेरितान् जानीत ॥ ६ ॥

१ आवाभ्यां प्रहिताः ।

किंच हे द्विजाः ! इतः समीपे गाश्चारयन्तौ रामकृष्णौ वर्तेते । तयोरन्नं दीयतां यदि श्रद्धा ॥७॥ ननु वयं दीक्षिताः अभोज्यान्नाः इति चेत् तत्राहुः ॥ हे विप्राः ! दीक्षायाः आरभ्याग्नीषोमीयपश्वालम्भनात् पूर्वमन्नभक्षणे दोषस्तथा सौत्रामण्याश्च नान्यत्र ॥८॥ हे राजन् ! एवं द्विजाः भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः, यतो बालिशाः वृथा वृद्धाभिमानिनः ॥ ९ ॥ किंच हे नृप ! देशकालद्रव्यमन्त्रादि सर्वं यज्ञश्च यन्मयः ॥ १० ॥ तं साक्षाद्भगवन्तं मनुष्यदृष्ट्या द्विजाः मेनिरे ॥११॥ ओमिति नेति च नोचुः । ततो गोपाः निराशाः भूत्वा रामकृष्ण-

गाश्चारयन्ताववि‍दूर ओदनं रामाच्युतौ वो लषतो[1] बुभुक्षितौ ॥ तयोर्द्विजा ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः ॥७॥ दीक्षायाः पशुसंस्थाया सौत्रामण्याश्च सत्तमाः ॥ अन्यत्र दीक्षितस्यापि नान्नमश्नन् हि दुष्यति ॥८॥ इति ते भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः ॥ क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥९॥ देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ १० ॥ तं ब्रह्म परमं साक्षाद्भगवन्तमधोक्षजम् ॥ मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥११॥ न ते यदोमिति प्रोचुर्न नेति च परंतप ॥ गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः ॥ १२ ॥ तदुपाकर्ण्य भगवान् प्रहस्य जगदीश्वरः॥ व्याजहार पुनर्गोपान् दर्शयन् लौकिकीं गतिम् ॥ १३ ॥ मां ज्ञापयत पत्नीभ्यः ससंकर्षणमागतम् ॥ दास्यन्ति काममन्नं वः स्निग्धा मय्युषिता धिया ॥ १४ ॥ गत्वाऽथ पत्नीशालायां दृष्ट्वाऽऽसीनाः स्वलंकृताः ॥ नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥ १५ ॥ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः ॥ इतोऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥ १६ ॥

योरागत्योचुः ॥१२॥ तच्छ्रुत्वा कृष्ण प्रहस्य पुनर्गोपानाह ॥१३॥ हे गोपाः ! सबलं मां प्राप्तं विप्रपत्नीभ्यः कथयत । ताः वोऽन्नं दास्यन्ति ॥ १४ ॥ ततो गोपास्तत्र गत्वा पत्नीशालायामासीनास्ताः दृष्ट्वा नत्वा च जगदुः ॥१५॥ हे विप्रपत्न्यः ! युष्मभ्यं नमः । वचांसि शृणुत । इतोऽविदूरे भ्रमता कृष्णेन वयं प्रेषिताः ॥ १६ ॥

१ अभिलषतः ।

स कृष्णो गाश्चारयन् गोपालैः रामेण च सह दूरमागतः । तस्य गोपैः सह क्षुधितस्यान्नं दीयताम् ॥१७॥ ततस्ताः कृष्णं प्राप्तं श्रुत्वा जातसं-
भ्रमाः सत्यः॥१८॥चतुर्विधमन्नं गृहीत्वा नद्यः समुद्रमिव कृष्णमभिजग्मुः॥१९॥ततश्च ताः पत्यादिभिर्निषेधिता अपि कृष्णे धृतमानसाःसत्यः
॥२०॥ यमुनोपवने गत्वा सरामं कृष्णं ददृशुः॥२१॥ कथंभूतं तम्,श्यामं पीताम्बरधरं मित्रस्कन्धे कृतहस्तमन्यहस्तेन कमलं भ्रामयन्तं प्रसन्न-

गाश्चारयन्स गोपालः सरामो दूरमागतः ॥ बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥ १७ ॥ श्रुत्वाऽच्युतमुपायातं
नित्यं तद्दर्शनोत्सुकाः ॥ तत्कथाक्षिप्तमनसो बभूवुर्जातसम्भ्रमाः ॥१८॥ चतुर्विधं बहुगुणमन्नमादाय भाजनैः ॥ अभि-
सस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥ १९ ॥ निषिध्यमानाः पतिभिर्भ्रातृभिर्बन्धुभिः सुतैः ॥ भगवत्युत्तमश्लोके दीर्घ-
श्रुतधृताशयाः ॥२०॥ यमुनोपवनेऽशोकनवपल्लवमण्डिते ॥ विचरन्तं वृतं गोपैः साग्रजं ददृशुः स्त्रियः ॥ २१ ॥ श्यामं
हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ॥ विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोल-
मुखाब्जहासम् ॥२२॥ प्रायः श्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरन्ध्रैः ॥ अन्तः प्रवेश्य सुचिरं परि-
रभ्य तापं प्राज्ञं यथाऽभिमतयो विजहुर्नरेन्द्र ॥ २३ ॥ तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया ॥ विज्ञायाखिल-
दृग्द्रष्टा प्राह प्रहसिताननः ॥२४॥ स्वागतं वो महाभागा आस्यतां करवाम किम् ॥ यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं
हि वः ॥ २५ ॥ नन्वद्धा मयि कुर्वन्ति कुशलाः स्वार्थदर्शनाः ॥ अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा ॥ २६ ॥

मुखम्॥२२॥ईदृशं तं दृष्ट्वा नेत्ररन्ध्रैरन्तः प्रवेश्य चिरकालमालिङ्ग्य तापं जहुः ॥२३॥ ततः कृष्णस्त्यक्तसर्वाशाः स्वदिदृक्षयाऽऽगतास्ताः
ज्ञात्वा प्रहस्याह ॥२४॥ हे स्त्रियः ! स्वागतं वः । आस्यतां किं करवाम । किंच दर्शनार्थं यूयं प्राप्ताः । इदं वो योग्यम् ॥२५॥ ननु विवेकिनो



१ दीर्घं बहुकालं श्रुतेन श्रवणेन धृतः आशयो याभिस्ताः । २ कर्णयोरुत्पले अलकाः कपोलयोर्मुखाब्जे च हासो यस्य तम् ।३ श्रुताः ये प्रियतमस्योदयाः उत्कर्षास्त एव कर्णपूराः तैः । ४ साक्षिणम् । ५ अहंकृतयः ।
६ आत्मनः पुरुषार्थं पश्यन्तीति तथा । ७ अहैतुकी फलाभिसन्धानरहिताम् । अतोऽव्यवहितां निरन्तराम् । ८ आत्मा च प्रियश्च तस्मिन् । ९ यथावत् ।

मयि निष्कामां भक्तिं कुर्वन्ति ॥२६॥ यतः आत्माध्यासेन देहापत्यकलत्रधनादयः सर्वे प्रियाः भवन्ति । ततः को न्वपरः ॥ २७ ॥ अतो यूयं धन्याः ! तस्मात् यज्ञवाटं गच्छत । युष्मत्पतयो यज्ञं समापयिष्यन्ति ॥२८॥ पत्न्य ऊचुः ॥ हे विभो ! एवं क्रूरं वक्तुं नार्हसि । वयं सर्वबन्धून् हित्वा त्वद्दास्यार्थं प्राप्ताः । अतोऽस्मान् मा त्यज ॥ २९ ॥ किंच अस्मत्पतिपुत्रादयो न स्वीकारं कुर्वन्ति । तस्मादस्माकमन्यगतिर्मा भूत् । त्वद्दास्यमेव देहि ॥ ३० ॥ श्रीभगवानुवाच ॥ हे स्त्रियः ! युष्मासु देवा अपि मानं करिष्यन्ति पतिपुत्रादयः किमु ॥ ३१ ॥

प्राणबुद्धिमनस्स्वात्मदारापत्यधनादयः ॥ यत्संपर्कात् प्रिया आसंस्ततः को न्वपरः प्रियः ॥ २७ ॥ तद् यात देवयजनं पतयो वो द्विजातयः ॥ स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमेधिनः ॥२८॥ पत्न्य ऊचुः ॥ मैवं विभोऽर्हति भवान् गदितं नृशंसं सत्यं कुरुष्व निगमं[1] तव पादमूलम् ॥ प्राप्ता वयं तुलसिदाम पदाऽवसृष्टं[2] केशैर्निवोढुमतिलङ्घ्य समस्तबन्धून् ॥ २९ ॥ गृह्णन्ति नो न पतयः पितरौ सुता वा न भ्रातृबन्धुसुहृदः कुत एव चान्ये ॥ तस्माद् भवत्प्रपदयोः[3] पतितात्मनां नो नान्या[4] भवेद्गतिररिन्दम तद् विधेहि ॥ ३० ॥ श्रीभगवानुवाच ॥ पतयो नाभ्यसूयेरन् पितृभ्रातृसुतादयः ॥ लोकाश्च वो मयोपेता[5] देवा[6] अप्यनुमन्वते ॥ ३१ ॥ न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिव ॥ तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ ॥३२॥ ( स्मरणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात् ॥ न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ ) श्रीशुक उवाच ॥ इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ॥ ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥ ३३ ॥ तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम् ॥ हृदोपगुह्य विजहौ देहं कर्मानुबन्धनम् ॥ ३४ ॥ भगवानपि गोविन्दस्तेनैवान्नेन गोपकान् ॥ चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः ॥ ३५ ॥

किंच मद्भक्तानां सुखाय स्नेहवृद्धये च अङ्गसङ्गो न भवति किन्तु मनस्संग एव । अतो मयि मनो युञ्जानाः सत्यःशीघ्रं मां प्राप्स्यथ ॥३२॥ श्रीशुक उवाच ॥ एवं कृष्णेनोक्ता विप्रपत्न्यो यज्ञवाटं गताःततः पतयस्तासु दोषमकृत्वा ताभि सह यज्ञं समापयन् ॥३३॥ तत्रैका भर्त्रा धृता सती यथा श्रुतं कृष्णं मनसालिङ्ग्य देहं जहौ ॥३४॥ ततः कृष्णस्तेनान्नेन गोपान् भोजयित्वा स्वयं बुभुजे ॥ ३५ ॥

---

१ निगमं प्रतिज्ञानं "न मे भक्तःप्रणश्यति" इति । २ अविवक्षया दत्तमपि । ३ तव पादाग्रयो : । ४'ये' इ० पा० । ५ उपेताः अनुज्ञाताः । ६ प्रत्यक्षं देवान् प्रवर्श्याह देवा अपीति ।

एवं कृष्णो लोकमनुकुर्वन् गोगोपगोपीः रमयन् रेमे ॥३६॥ अथ ते विप्राः रामकृष्णयोर्याच्ञां हतवन्तो वयमिति स्मृत्वाऽन्वतप्यन्त॥३७॥ ततस्ते स्त्रीणां कृष्णे भक्तिं दृष्ट्वा भक्त्या हीनं स्वमात्मानं व्यगर्हयन् ॥ ३८ ॥ अहो नो जन्म धिक् । तथा व्रतं विद्यां कुलं क्रियाश्च धिक् यतो वयं कृष्णे विमुखाः ॥३९॥ किंच भगवन्माया योगिनामपि मोहिनी, यतो नृणां गुरवो अपि स्वार्थे मुह्यामहे ॥ ४० ॥ अहो ! स्त्रीणां

एवं लीलानरवपुर्नृलोकमनुशीलयन् ॥ रेमे गोगोपगोपीनां रमयन्रूपवाक्कृतैः ॥३६॥ अथानुस्मृत्य विप्रास्तेअन्वतप्यन्
कृतागसः ॥ यद् विश्वेश्वरयोर्याच्ञामहन्म नृविडम्बयोः ॥ ३७ ॥ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् ॥
आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥ ३८ ॥ धिग् जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग् बहुज्ञताम् ॥ धिक् कुलं
धिक् क्रिया दाक्ष्यं विमुखा ये त्वधोक्षजे ॥ ३९ ॥ नूनं भगवतो माया योगिनामपि मोहिनी ॥ यद्वयं गुरवो नृणां
स्वार्थे मुह्यामहे द्विजाः ॥ ४० ॥ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ ॥ दुरंतभावं योऽविध्यन्मृत्युपाशान् गृहा-
भिधान् ॥ ४१ ॥ नासां द्विजातिसंस्कारो न निवासो गुरावपि ॥ न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥
॥ ४२ ॥ अथापि ह्युत्तमश्लोकेकृष्णे योगेश्वरेश्वरे ॥ भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥ ४३ ॥ ननु स्वार्थ-
विमूढानां प्रमत्तानां गृहेहया ॥ अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥४४॥ अन्यथा पूर्णकामस्य कैवल्या-
द्याशिषां पतेः ॥ ईशितव्यैः किमस्माभिरीशस्यैतद्विडम्बनम् ॥ ४५ ॥

गोविन्दे भावं पश्यत यो गृहरूपमृत्युपाशान् छिन्नवान् ॥४१॥ किञ्च आसां द्विजातिसंस्कारो गुरौ निवासस्तपः शौचं क्रियाश्च न ॥ ४२ ॥ अथापि योगेश्वरे कृष्णे दृढा भक्तिर्जाता । किमासां भाग्यम् ॥ ४३ ॥ किञ्च कृपालुः कृष्णो गृहेच्छया मत्तानां नो गोपवाक्यैः स्मारयामास ॥ ४४ ॥ अन्यथा पूर्णस्य तस्यान्नयाचनया किम् ॥ ४५ ॥

१ नरानुकरणवतोः । २ सौत्रं सावित्रं दक्षमिति त्रिगुणितं जन्मेत्याद्युक्तम् ।

किंच लक्ष्मीरन्यान् हित्वा यं सेवते यस्य च याच्ञा जनमोहिनी खलु ॥ ४६ ॥ किंच देशकालद्रव्यादयो धर्मो यज्ञश्च यन्मयः ॥ ४७ ॥ स एष भगवान् यदुषु जात इति श्रुत्वाऽपि वयं न विद्महे ॥४८॥ अहो वयं धन्याः यतो नः स्त्रियस्तादृश्यः यासां भक्त्या नो मतिर्हरौ स्थिरा जाता ॥४९॥ तस्मै भगवते कृष्णाय नमः यन्मायामोहिता वयं कर्ममार्गेषु भ्रमामः ॥५०॥ स कृष्णो नोऽपराधं क्षन्तुमर्हति ॥५१॥ एवं स्वापराधमनुस्मृत्य कंसाद् भीताः सन्तस्तयोर्दर्शनाय न जग्मुः ॥५२॥ इति श्रीभाग० चू० द० पू० त्रयोविंशोऽध्यायः ॥२३॥ चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभिः ॥ कृष्णः प्रवर्तयामास गोवर्धनमखोत्सवम् ॥१॥ भूसुराणां क्रियागर्वं निरस्य स्वस्सुरेषु च ॥ मघवन्मदभङ्गाय तन्मखं स

हित्वाऽन्यान् भजते यं श्रीः पादस्पर्शाशयाऽसकृत् ॥ आत्मदोषापवर्गेण यद्याच्ञा जनमोहिनी ॥४६॥ देशः कालः पृथग्द्रव्यं मन्त्रतंत्रर्त्विजोऽग्नयः ॥ देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥४७॥ स एष भगवान् साक्षाद् विष्णुर्योगेश्वरेश्वरः ॥ जातो यदुष्वित्यश्रृण्म ह्यपि मूढा न विद्महे ॥ ४८ ॥ अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः ॥ भक्त्या यासां मतिर्जाता ह्यस्माकं निश्चला हरौ ॥४९॥ नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ॥ यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥५०॥ स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् ॥ अविज्ञातानुभावानां क्षन्तुमर्हत्यतिक्रमम् ॥५१॥ इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः ॥ दिदृक्षवोऽप्यच्युतयोः कंसाद् भीता न चाचलन् ॥५२॥ इति श्री० म० द० पू० यज्ञपत्न्युद्धरणदीक्षितानुतापनं नाम त्रयोविंशोऽध्यायः ॥२३॥ श्रीशुक उवाच ॥ भगवानपि तत्रैव बलदेवेन संयुतः ॥ अपश्यन्निवसन् गोपानिन्द्रयागकृतोद्यमान् ॥१॥ तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः ॥ प्रश्रयावनतोऽपृच्छद् वृद्धान्नंदपुरोगमान् ॥२॥ कथ्यतां मे पितः कोऽयं संभ्रमो व उपागतः ॥ किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥ ३ ॥

न्यवारयत् ॥२॥ श्रीशुक उवाच ॥ रामेण सह कृष्णोऽपि तत्रैव निवसन्निन्द्रयागकृतोद्यमान् गोपान् ददर्श ॥१॥ तज्ज्ञात्वाऽपि कृष्णो नम्रतया नन्दादीन् पप्रच्छ ॥२॥ हे पितः ! कोऽयं सम्भ्रमो वः प्राप्तः । मखोऽयमिति चेत् । अस्य किं फलम् । कस्योद्देशः । केनायं मखः साध्यते ॥३॥

१ आत्मनस्याच्चस्यगर्वादिदोषाणां त्यागेन । २ तादृश्यः ।

एतन्मह्यं ब्रूहि । मित्रोदासीनशत्रुरहितानां साधूनां गोप्यं कृत्यं किमपि नास्ति ॥४॥५॥ किंच अयं जनो ज्ञात्वाऽज्ञात्वा कर्माणि करोति । तत्र यथाविदुषः कर्मफलं स्यात् तथाऽज्ञानिनो न ॥६॥ तत्रायं क्रियायोगः शास्त्रतः प्रवृत्तो वा लौकिको वा प्राप्तः इदमुच्यताम् ॥ ७ ॥ नन्द उवाच ॥ हे कृष्ण ! भगवदिन्द्रप्रियमूर्त्तयो मेघाः ते भूतानां जीवनं पयो वर्षन्ति ॥ ८ ॥ तमिन्द्रं वयमन्ये च तद्वृष्टिजलेन सिद्धैर्द्रव्यैः

एतद् ब्रूहि महान्कामो मह्यं शुश्रूषवे पितः ॥ नहि गोप्यं हि साधूनां कृत्यं सर्वात्मनामिह ॥ ४ ॥ अस्त्यस्वपरदृष्टी-नाममित्रोदास्तविद्विषाम् ॥ उदासीनोऽरिवद् वर्ज्य आत्मवत् सुहृदुच्यते ॥ ५ ॥ ज्ञात्वाऽज्ञात्वा च कर्माणि जनो-ऽयमनुतिष्ठति ॥ विदुषः कर्मसिद्धिः स्यात् तथा नाविदुषो भवेत् ॥ ६ ॥ तत्र तावत् क्रियायोगो भवतां किं विचारितः ॥ अथवा लौकिकस्तन्मे पृच्छतः साधु भण्यताम् ॥ ७ ॥ नन्द उवाच ॥ पर्जन्यो भगवानिंद्रो मेघास्त-स्यात्ममूर्तयः ॥ तेऽभिवर्षन्ति भूतानां प्राणनं जीवनं पयः ॥ ८ ॥ तं तात वयमन्ये च वार्मुचां पतिमीश्वरम् ॥ द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः ॥ ९ ॥ तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे ॥ पुंसां पुरुषकाराणां पर्जन्यः फलभावनः ॥ १० ॥ य एवं विसृजेद् धर्मं पारम्पर्यागतं नरः ॥ कामाल्लोभाद्भयाद् द्वेषात् स वै नाप्नोति शोभनम् ॥ ११ ॥ श्रीशुक उवाच ॥ वचो निशम्य नन्दस्य तथाऽन्येषां व्रजौकसाम् ॥ इन्द्राय मन्युं जनयन् पितरं प्राह केशवः ॥ १२ ॥



क्रतुभिर्यजन्ते ॥९॥ ततश्च होमशेषेण त्रिवर्गफलसिद्धये नराः जीविकां कुर्वन्ति ॥१०॥ एवं परम्परागतं धर्मं यः कामलोभद्वेषादिना त्यजेत् स शुभं नाप्नोति ॥ ११ ॥ श्रीशुक उवाच ॥ एवं नन्दस्य गोपानां च वचः श्रुत्वेन्द्राय क्रोधं जनयन् कृष्णो नन्दमाह ॥ १२ ॥

---

१ अस्य पूर्वेणान्वयः । २ न विद्यते स्वः पर इति दृष्टिर्येषां तेषाम् । ३ उदास्तः उदासीनः । ४ सत्यपि भेददर्शने उदासीनः शत्रुवद् वर्ज्यः । आत्मातुल्यत्वाद् सुहृद मन्त्रेषु न वर्जयितव्य इत्याह उदासीन इति । ५ यत्नानाम् । ६ फलसाधकः ।

श्रीभगवानुवाच ॥ हे पितः । अयं जीवः कर्मणा जायते म्रियते च। तथा तेन सुखदुःखादि कर्मणैव प्राप्यते॥१३॥ यदि च फलरूपीश्वरः कश्चित् स्यात् सोऽपि कर्तारं भजेत ॥१४॥ अतः स्वस्वकर्मानुवर्तिनां भूतानां प्राक्तनसंस्कारजं यत् कर्म तदन्यथा कर्तुमनीशेनेन्द्रेण किं न किंचित् ॥१५॥ किंच अयं जनः स्वभावाधीनः स्वभावमनुवर्तते । इदं सर्वं स्वभावस्थमेव ॥१६॥ अयं जीवः कर्मणोच्चनीचान् देहान् प्राप्य त्यजति च । तथा शत्रुमित्रोदासीनगुर्वीश्वराश्च कर्मैव ॥१७॥ तस्मात् स्वभावस्थः सन् जनः कर्मैव पूजयेत् । तदेवास्य दैवतम् ॥१८॥ किंच

श्रीभगवानुवाच ॥ कर्मणा जायते जन्तुः कर्मणैव विलीयते ॥ सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते॥१३॥अस्ति चेदीश्वरः कश्चित् फलरूप्यन्यकर्मणाम् ॥ कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥१४॥ किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम् ॥ अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम् ॥१५॥ स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते ॥ स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥ १६ ॥ देहानुच्चावचाञ्जन्तुः प्राप्योत्सृजति कर्मणा ॥ शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः ॥१७॥ तस्मात् संपूजयेत्कर्म स्वभावस्थः स्वकर्मकृत् ॥ अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ॥१८॥ आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति ॥ न तस्माद्विन्दते क्षेमं जारं नार्यसती यथा ॥ १९ ॥ वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः ॥ वैश्यस्तु वार्तया जीवेच्छूद्रस्तु द्विजसेवया ॥ २० ॥ कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते ॥ वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥२१॥ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ॥२२॥ रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः ॥ प्रजास्तैरेव सिद्ध्यन्ति महेन्द्रः किं करिष्यति॥२३॥

यः पूर्वसेवितां वृत्तिं त्यक्त्वाऽन्यां सेवते स तस्मात् क्षेमं नाप्नोति दुष्टा स्त्री जारं यथा सेवित्वा ॥१९॥ स्ववृत्तिं वक्तुं दृष्टान्तत्वेन वर्णानां वृत्तिभेदमाह । विप्रो वेदाध्ययनादिना वर्तेत । राजन्यो भुवो रक्षया । वैश्यः कृष्यादिरूपवार्तया । शूद्रस्तु द्विजसेवया ॥२०॥ तत्र वैश्यवृत्तेश्चातुर्विध्यमाह । कृषिः १, वाणिज्यं २, गोरक्षा ३, वृद्धिजीवनम् । तत्र वयं सदैव गोरक्षावृत्तयः ॥२१॥ किंच सत्त्वादिगुणाः जगतः पालनादिहेतवः सन्ति । तत्र । रजसा विश्वमुत्पद्यते ॥२२॥ तथा रजसा प्रेरिताः मेघा जलं वर्षन्ति । तैर्मेघैरेव प्रजा जीवन्ति । तत्रेन्द्रः किं करिष्यति ॥२३॥

१ फलदाता । २ अन्येषां जीवानां कर्मणाम् ।

तथा हे नन्द! अस्माकं पुरो देशाः ग्रामाः न। वयं तु नित्यं वनपर्वतवासिनः स्मः॥२४॥ तस्माद्गवां विप्राणामद्रेश्च मखः इन्द्रयागार्थं सिद्धैः साहि-
त्यैः साध्यताम्॥२५॥ तत्र विविधाः पायसादयः सूपान्ताः पाकाः पच्यन्ताम्। तथा संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम्॥२६॥ तथा विप्रै-
रग्नयो हूयन्ताम्। तेभ्योऽन्नं धेनुदक्षिणाश्च देयाः॥२७॥ तथाऽन्येभ्यः श्वचाण्डालपतितपर्यन्तेभ्योऽप्यन्नं देयम्। तथा गवां तृणं दत्त्वा गिरये
बलिर्दीयताम् ॥२८॥ तथा यूयं सुवाससः स्वलंकृताः भुक्तवन्तः सन्तो गोविप्राग्निपर्वतान् प्रदक्षिणं कुरुत ॥२९॥ हे नन्द ! एतन्मम मतं यदि

न नः पुरो जनपदा न ग्रामा न गृहा वयम् ॥ वनौकसस्तात नित्यं वनशैलनिवासिनः ॥ २४ ॥ तस्माद् गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः ॥ य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः ॥ २५ ॥ पच्यन्तां विविधाः पाकाः सूपान्ताः पायसादयः ॥ संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥ २६ ॥ हूयन्तामग्नयः सम्यग्ब्राह्मणैर्ब्रह्मवादिभिः ॥ अन्नं बहुगुणं तेभ्यो देयं वो धेनुदक्षिणाः ॥ २७ ॥ अन्येभ्यश्चाश्वचाण्डालपतितेभ्यो यथार्हतः ॥ यवसं च गवां दत्त्वा गिरये दीयतां बलिः ॥ २८ ॥ स्वलंकृता भुक्तवन्तः स्वनुलिप्ताः सुवाससः ॥ प्रदक्षिणं च कुरुत गोविप्रानल-पर्वतान् ॥ २९ ॥ एतन्मम मतं तात क्रियतां यदि रोचते ॥ अयं गोब्राह्मणादीनां मह्यं च दयितो मखः ॥ ३० ॥ श्रीशुक उवाच ॥ कालात्मना भगवता शक्रदर्पजिघांसया[1] ॥ प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त तद्वचः ॥ ३१ ॥ तथा च व्यदधुः सर्वं यथाऽऽह मधुसूदनः ॥ वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान्॥ ३२ ॥ उपहृत्य बलीन् सर्वानादृता यवसं गवाम् ॥ गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥ ३३ ॥ अनांस्यनडुद्युक्तानि ते चारुह्य स्वलङ्कृताः ॥ गोप्यश्च कृष्णवीर्याणि गायन्त्यः सद्विजाशिषः ॥ ३४ ॥



रोचते तर्हि क्रियताम्। अयं गोब्राह्मणाद्रीणां यज्ञो मे प्रियोऽस्ति ॥३०॥ श्रीशुक उवाच ॥ एवमिन्द्रगर्वं दूरीकर्त्रा कृष्णेनोक्तं श्रुत्वा नन्दाद्यास्त-
द्वचोऽगृह्णन् ॥३१॥ तथा च कृष्णेनोक्तवत् सर्वं चक्रुः। ततः स्वस्तिवाचनं वाचयित्वा मखद्रव्येण गिरये ब्राह्मणेभ्यश्च बलिं दत्त्वा॥३२॥ गोभ्यश्च
तृणं दत्त्वा गोधनानि पुरस्कृत्य शकटेष्वारुह्य स्वलंकृताः नन्दाद्याः कृष्णवीर्याणि गायन्त्यो गोप्यश्च गिरिं प्रदक्षिणं चक्रुः ॥ ३३ ॥३४॥

१ 'दर्पं जिघांसता' इ० पा०।

तदा कृष्णो गोपविश्वासार्थमन्यद्रूपं धृत्वा पर्वतमस्तकेऽहं पर्वतोऽस्मीति ब्रुवन् बलिमभक्षयत ॥३५॥ किंच स कृष्णो व्रजजनैः सहात्मना-ऽऽत्मने तस्मै नमः कृत्वाऽऽह–अहो हे जनाः ! पश्यत । असौ शैलो नोऽनुग्रहं व्यधात् ॥३६॥ अयं सर्पादिकामरूपी शैलोऽवजानतो मर्त्यान् हन्ति । अतो गवां स्वस्य च सुखार्थमस्मै नमस्यामः ॥३७॥ हे नृप! एवमद्रिगोद्विजमखं कृत्वा गोपाः व्रजं ययुः ॥३८॥ इति श्रीभा० चू० द० पू० चतुर्विंशोऽध्यायः ॥२४॥ पञ्चविंशे रुषा शक्रे व्रजनाशाय वर्षति ॥ उद्धृत्य गिरिमासारादरक्षद् गोकुलं प्रभुः ॥१॥ श्रीशुक उवाच ॥ इन्द्रः

कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः ॥ शैलोऽस्मीति ब्रुवन् भूरि बलिमादद् बृहद्वपुः ॥३५॥ तस्मै नमो व्रजजनैः स चक्रे आत्मनाऽऽत्मने ॥ अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात् ॥३६॥ एषोऽवजानतो मर्त्यान् कामरूपी वनौ-कसः ॥ हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवाम् ॥३७॥ इत्यद्रिगोद्विजमखं वसुदेवप्रणोदिताः ॥ यथा विधाय ते गोपाः सहकृष्णा व्रजं ययुः ॥३८॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पू० इन्द्रमखभंगो नाम चतुर्विंशोऽध्यायः ॥२४॥ श्रीशुक उवाच ॥ इन्द्रस्तदाऽऽत्मनः पूजां विज्ञाय विहतां नृप ॥ गोपेभ्यः कृष्णनाथेभ्यो नन्दादिभ्यश्चुकोप सः ॥१॥ गणं सांवर्तकं नाम मेघानां चान्तकारिणाम् ॥ इन्द्रः प्राचोदयत क्रुद्धो वाक्यं चाहेशमान्युत[1] ॥२॥ अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् ॥ कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥३॥ यथाऽदृढैः कर्ममयैः क्रतुभिर्नाम नौनिभैः ॥ विद्या-मान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम् ॥ ४ ॥ वाचालं बालिशं स्तब्धमज्ञं पंडितमानिनम् ॥ कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ॥५॥ येषां श्रियाऽवलिप्तानां कृष्णेनाध्मायितात्मनाम् ॥ धुनुत श्रीमदस्तम्भं पशून्नयत संक्षयम् ॥६॥

आत्मनः पूजां नष्टां ज्ञात्वा कृष्णनाथेभ्यो नन्दादिगोपेभ्यश्चुकोप ॥१॥ ततः इन्द्रः प्रलयकर्तारं मेघगणं प्रेषयामास आह च ॥ २ ॥ अहो गोपानां श्रीमदमाहात्म्यं पश्यत, ये गोपाः कृष्णं मनुष्यमाश्रित्य मे देवस्यापमानं चक्रुः ॥३॥ किंच कर्ममयैर्यज्ञैरात्मानुस्मृतिरूपां विद्यां हित्वा भवाब्धिं कथं तितीर्षन्ति ॥४॥ एते गोपाः बालिशं कृष्णमाश्रित्य मेऽप्रियं चक्रुः ॥५॥ अतस्तेषां श्रीमदगर्वं नाशयत पशूंश्च क्षयं नयत ॥ ६ ॥

1 ईशमानो आत्मानमीशं मन्यते इति ।

ऐरावतमारुह्य नन्दव्रजं हन्तुं मरुद्गणैः सहागमिष्यामि ॥ ७ ॥ श्रीशुक उवाच ॥ एवमिन्द्रेणाज्ञप्ताः मुक्तबन्धनाः मेघाः धारापातैर्नन्दव्रजं पीडयामासुः ॥ ८ ॥ ततस्ते गर्जन्तो विद्युल्लताभिः प्रकाशिताः सन्तो जलशर्करा ववृषुः ॥ ९ ॥ एवं मेघेषु धाराः मुञ्चत्सु सत्सु जलौघैः प्लाव्यमाना भूर्नतोन्नता नादृश्यत ॥१०॥ अत्यासारातिवातेन कंपिताः पशवो गोपाः गोप्यश्चार्ताः सन्तः कृष्णं शरणं ययुः॥११॥तत्र शिरः पुत्रांश्च कायेनाच्छाद्य कृष्णपादमूलं ययुः ॥ १२ ॥ ततो गोपादयः आहुः—हे कृष्ण ! हे भक्तवत्सल ! इदं गोकुलं कुपितादिन्द्रात्

अहं चैरावतं नागमारुह्यानुव्रजे व्रजम् ॥ मरुद्गणैर्महावीर्यैर्नन्दगोष्ठजिघांसया ॥ ७ ॥ श्रीशुक उवाच ॥ इत्थं मघवताऽऽज्ञप्ता मेघा निर्मुक्तबन्धनाः ॥ नन्दगोकुलमासारैः पीडयामासुरोजसा ॥८॥ विद्योतमाना विद्युद्भिः स्तनन्तः स्तनयित्नुभिः ॥ तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः ॥९॥ स्थूणास्थूला[1] वर्षधारामुञ्चत्स्वभ्रेष्वभीक्ष्णशः ॥ जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नता ॥ १० ॥ अत्यासारातिवातेन पशवो जातवेपनाः ॥ गोपा गोप्यश्च शीतार्ता गोविंदं शरणं ययुः ॥११॥ शिरः सुतांश्च कायेन प्रच्छाद्यासारपीडिताः ॥ वेपमाना भगवतः पादमूलमुपाययुः ॥ १२ ॥ कृष्ण कृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो ॥ त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल ॥ १३ ॥ शिलावर्षनिपातेन हन्यमानमचेतनम् ॥ निरीक्ष्य भगवान् मेने कुपितेन्द्रकृतं हरिः ॥१४॥ अपर्त्वत्युल्बणंवर्षमतिवातं[2] शिलामयम् ॥ स्वयागे निहतेऽस्माभिरिन्द्रो नाशाय वर्षति ॥ १५ ॥ तत्र प्रतिविधिं सम्यगात्मयोगेन साधये ॥ लोकेशमानिनां मौढ्याद् हरिष्ये श्रीमदं तमः ॥ १६ ॥ नहि सद्भावयुक्तानां सुराणामीशविस्मयः[3] ॥ मत्तोऽसतां मानभङ्गः प्रशमायोपकल्पते ॥ १७ ॥



त्रातुमर्हसि ॥ १३ ॥ ततः शिलावर्षपातेन हन्यमानां प्रजां दृष्ट्वा हरिरिन्द्रकृतं सर्वं मत्वा जगाद ॥ १४ ॥ अस्माभिः स्वयज्ञे नाशिते इंद्रो व्रजनाशाय वर्षति ॥ १५ ॥ तत्रोपायं स्वसामर्थ्येन साधये । किंच एषां लोकेशमानिनां श्रीमदं हरिष्ये ॥ १६ ॥ तथा सात्त्विकानां गर्वो न युक्तः अतो मत्तः एषां मानभङ्गः शान्तये कल्पते ॥ १७ ॥

१ स्थूणा आयसः स्तम्भः । २ अपगतः ऋतुर्यस्य तत् । ३ ईशा वयमिति गर्वः । स च न युक्तः । अतस्तेषामसतां मानभङ्ग इत्यादि योज्यम् ।

तस्माद् मच्छरणं व्रजं स्वात्मयोगेन रक्षिष्यामि ॥१८॥ एवमुक्त्वा कृष्णः एकहस्तेन गोवर्धनाद्रिं दधार बालकश्छत्राकमिव ॥१९॥ अथ कृष्ण आह–हे अम्ब ! हे तात ! हे गोपाः ! यथासुखं सगोधनाः गिरिगर्तं विशत ॥२०॥ मद्धस्ताद् गिरिःपतेद् इति त्रासो न कार्यः। वातवर्षभयाद् युष्मान् रक्षिष्यामि ॥२१॥ ततो गोपादयो गर्तं विविशुः॥२२॥ततस्तैर्व्रजवासिभिः क्षुत्तृड्व्यथां हित्वा वीक्ष्यमाणः कृष्णः सप्ताहं पर्वतं दधार स्थानाच्च नाचलत् ॥२३॥ एवमिन्द्रः कृष्णस्य योगानुभावं दृष्ट्वा विस्मितो भ्रष्टसङ्कल्पः सन् स्वान् मेघान् न्यवारयत् ॥२४॥ ततः कृष्णो

तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् ॥ गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः ॥१८॥ इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् ॥ दधार लीलया कृष्णश्छत्राकमिव बालकः ॥ १९ ॥ अथाह भगवान् गोपान् हेऽम्बतात व्रजौकसः ॥ यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥ २० ॥ न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातने ॥ वातवर्षभयेनालं तत्त्राणं विहितं हि वः ॥ २१ ॥ तथा निर्विविशुर्गर्तं कृष्णाश्वासितमानसाः ॥ यथावकाशं सधनाः सव्रजाः सोपजीविनः ॥ २२ ॥ क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तैर्व्रजवासिभिः ॥ वीक्ष्यमाणो दधावद्रिं सप्ताहं नाचलत्पदात ॥ ॥ २३ ॥ कृष्णयोगानुभावं तं निशाम्येन्द्रोऽतिविस्मितः ॥ निस्स्तम्भो भ्रष्टसंकल्पः स्वान्मेघान् स न्यवारयत्॥२४॥ खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् ॥ निशाम्योपरतं गोपान् गोवर्धनधरोऽब्रवीत् ॥२५॥ निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः ॥ उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥२६॥ ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम् ॥ शकटोढोपकरणं स्त्रीबालस्थविराः शनैः ॥ २७ ॥ भगवानपि तं शैलं स्वस्थाने पूर्ववत् प्रभुः ॥ पश्यतां सर्वभूतानां स्थापयामास लीलया ॥ २८ ॥

निरभ्रं गगनं दृष्ट्वा गोपानाह॥२५॥हे गोपाः।सस्त्रीगोधनार्भकाः बहिर्निर्यात त्रासं त्यजत वातवर्षं शान्तम् ।नद्यश्च स्वल्पजलाः जाताः॥२६॥ ततो गोपाः गोधनं शकटारोपितं परिच्छदं चादाय सस्त्रीबालवृद्धाश्च बहिर्निर्ययुः॥२७॥ततः कृष्णः सर्वेषां पश्यतां पूर्ववत् स्थानेऽद्रिं स्थापयामास॥२८॥

---

१ यथासुखम् । २ भृत्यपुरोहितादिसहिताः । ३ निगर्वः ।

ततो व्रजौकसः कृष्णालिङ्गनादिभिरुपजग्मुः । गोप्यश्च स्नेहेनापूजयन् । तथा दध्यक्षताद्भिराशिषो युयुजुः ॥ २९ ॥ ततो यशोदा रोहिणी नन्दो रामश्च कृष्णमालिङ्ग्याशीर्वादं ददुः ॥ ३० ॥ तदा स्वर्गे देवसाध्याः सिद्धगन्धर्वचारणास्तुष्टुवुः पुष्पवृष्टिं चक्रुः ॥ ३१ ॥ शङ्खदुन्दुभयो नेदुः । गन्धर्वाः जगुः ॥३२॥ ततो गोपैर्वेष्टितः सरामः कृष्णो व्रजं विवेश । तमनु गोपिकाः गोवर्धनोद्धारणादीनि कृष्णस्य चरितानि गायन्त्यो ययुः ॥३३॥ इति श्रीभागवते चू० द० पू० पञ्चविंशोऽध्यायः ॥२५॥ षड्विंशे विस्मितान् गोपान् कृष्णस्याद्भुतकर्मभिः ॥

तं प्रेमवेगान्निभृता व्रजौकसो यथा समीयुः परिरम्भणादिभिः ॥ गोप्यश्च सस्नेहमपूजयन्मुदा दध्यक्षताद्भिर्युयुजुः सदाशिषः ॥ २९ ॥ यशोदा रोहिणी नन्दो रामश्च बलिनां वरः ॥ कृष्णमालिङ्ग्य युयुजुराशिषः स्नेहकातराः ॥ ३० ॥ दिवि देवगणाः साध्याः सिद्धगन्धर्वचारणाः ॥ तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि पार्थिव ॥ ३१ ॥ शङ्खदुन्दुभयो नेदुर्दिवि देवप्रणोदिताः ॥ जगुर्गन्धर्वपतयस्तुम्बुरुप्रमुखा नृप ॥ ३२ ॥ ततोऽनुरक्तैः पशुपैःपरिश्रितो राजन्स्वगोष्ठं सबलोऽव्रजद्धरिः ॥ तथाविधान्यस्य कृतानि गोपिका गायन्त्य ईयुर्मुदिता हृदिस्पृशः ॥३३॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पू० गोवर्द्धनोद्धरणं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ श्रीशुक उवाच ॥ एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते ॥ अतद्वीर्यविद प्रोचुः समभ्येत्य सुविस्मिताः ॥ १ ॥ बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै ॥ कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥ २ ॥ यः सप्तहायनो बालः करेणैकेन लीलया ॥ कथं बिभ्रद् गिरिवरं पुष्करं गजराडिव ॥ ३ ॥ तोकेनामीलिताक्षेण पूतनाया महौजसः ॥ पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः[१] ॥ ४ ॥

नन्दो गर्गोक्तिमाश्राव्य तदैश्वर्यमवर्णयत् ॥ १ ॥ श्रीशुक उवाच । गोपाः कृष्णस्यैवंविधानि कर्माणि वीक्ष्य विस्मिताः नन्दं जगदुः ॥ १ ॥ हे नन्द ! अस्य बालस्य कर्माण्यत्यद्भुतानि सन्ति । अतोऽसौ गोपालेषु कथं जन्मार्हति ॥२॥ सप्तवर्षात्मको बालः एकेन हस्तेन कथं गिरिं दधार गजराट् पद्ममिव ॥ ३ ॥ तथा मीलिताक्षेण बालेन पूतनायाः स्तनः सप्राणः कथं पीतः ॥ ४ ॥

१ तनोर्वयः आयुर्यौवनं वा कालेन यथा पीयते तद्वत् ।

किंच शकटस्याधः शयानस्य मास्यस्य उर्द्ध्वं चरणौ चालयतः पदाग्रेण हतं शकटं कथं पतितम् ॥ ५ ॥ हे नन्द ! एकवर्षस्तवपुत्रस्तृणाव-र्तेन दैत्येनाकाशमार्गेण नीतः सन् तमेव कथं जघान ॥ ६ ॥ क्वचिन्नवनीतचौर्ये मात्रोलूखले बद्धः स यमलार्जुनयोर्मध्ये गत्वा तौ बाहुभ्यां पातयामास ॥ ७ ॥ एकदा वने रामगोपैर्युक्तः कृष्णो वत्सान् चारयन् तावत् प्राप्तं बकं मुखतो दोर्भ्यामपाटयत् ॥८॥ तथा वत्समध्ये प्राप्तं वत्सरूपिणं दैत्यं हत्वा कपित्थवृक्षे क्षिप्त्वा तेन कपित्थानि पातयामास॥९॥ततो धेनुकासुरं तद्बन्धूंश्च हत्वा तालवनं सुखकरं चक्रे॥१०॥

हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक् ॥ अनोऽपतद् विपर्यस्तं रुदतः प्रपदाहतम् ॥ ५ ॥ एकहायन आसीनो ह्रियमाणो विहायसा ॥ दैत्येन यस्तृणावर्तमहन् कण्ठग्रहातुरम् ॥६॥ क्वचिद् हैयङ्गवस्तैन्ये मात्रा बद्ध उलूखले ॥ गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥ ७ ॥ वने संचारयन् वत्सान् सरामो बालकैर्वृतः ॥ हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥ ८ ॥ वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया ॥ हत्वा न्यपातयत् तेन कपित्थानि च लीलया ॥ ९ ॥ हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः ॥ चक्रे तालवनं क्षेमं परिपक्वफलान्वितम् ॥ १० ॥ प्रलम्बं घातयित्वोग्रं बलेन बलशालिना ॥ अमोचयद् व्रजपशून् गोपांश्चारण्यवह्नितः ॥ ११ ॥ आशीविषतमाहीन्द्रं दमित्वा विमदं ह्रदात् ॥ प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् ॥ १२ ॥ दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम् ॥ नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः[1] कथम् ॥ १३ ॥ क्व सप्तहायनो बालः क्व महाद्रिविधारणम् ॥ ततो नो जायते शंका व्रजनाथ तवात्मजे ॥ १४ ॥ नन्द उवाच ॥ श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके ॥ एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥ १५ ॥

ततो हे नंद ! प्रलम्बं बलरामेण घातयित्वाऽरण्यवह्नितो गाः गोपांश्च मोचयामास ॥११॥ ततोऽतिविषं कालियं दमित्वा ह्रदाद् निष्कास्य यमुनां निर्विषजलां चक्रे ॥१२॥ हे नन्द ! तव पुत्रे सर्वेषामस्माकं दुस्त्यजा प्रीतिः। तथाऽस्मासु तस्यास्ति ॥ १३ ॥ अहो अयं सप्तवर्षात्मको बालः क्व अद्रिधारणं क्व ॥ १४ ॥ नन्द उवाच ॥ हे गोपाः ! गर्गो यदाह तद् वचः श्रूयतां तेन वः शङ्का गच्छतु ॥ १५ ॥

---

१ स्वाभाविकः ।

तदाह । प्रतियुगं तनूर्गृह्णतोऽस्य श्वेतो रक्तः पीत इति वर्णाः आसन् । इदानीं कृष्णतां प्राप्तः॥१६॥किंच अयं तव पुत्रः पूर्वं क्वचिद् वसुदेवस्य
जातःअतो वासुदेवं वदन्ति॥१७॥अस्य गुणकर्मयोग्यानि नामरूपाणि बहूनि सन्ति तान्यहं वेद जनाःन॥१८॥एष वः कल्याणं करिष्यति।अनेन
सर्वसंकटानि यूयं तरिष्यथ॥१९॥पुराऽराजके चोरपीडिताः साधवोऽनेन रक्षिताः सन्तश्चोरान् जिग्युः ॥२०॥ अस्मिन् कृष्णे ये प्रीतिं कुर्वन्ति
तेषां शत्रवः पराभवं न कुर्वन्ति॥२१॥तस्माद् हे नन्द!तव पुत्रो गुणैः श्रिया कीर्त्यादिना नारायणसमः।अतस्तत्कर्मसु नाश्चर्यम् ॥२२॥ एवमा-

वर्णास्त्रयः किलस्यासन् गृह्णतोऽनुयुगं तनूः ॥ शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १६ ॥ प्रागयं वसुदेवस्य
क्वचिज्जातस्तवात्मजः ॥ वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥१७॥ बहूनि संति नामानि रूपाणि च सुतस्य ते ॥
गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ १८ ॥ एष वः श्रेय आधास्यत् गोपगोकुलनन्दनः ॥ अनेन सर्वदुर्गाणि
यूयमञ्जस्तरिष्यथ॥१९॥पुराऽनेन व्रजपते साधवो दस्युपीडिताः ॥ अराजके रक्ष्यमाणा जिग्युर्दस्यून् समेधिताः ॥२०॥
य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः ॥ नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥ २१ ॥ तस्मान्न-
न्दात्मजोऽयं ते नारायणसमो गुणैः ॥ श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥ २२ ॥ इत्यद्धा मां समादिश्य
गर्गे च स्वगृहं गते ॥ मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम् ॥२३॥ इति नन्दवचः श्रुत्वा गर्गगीतं व्रजौकसः ॥
दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः ॥ मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः ॥ २४ ॥ देवे वर्षति यज्ञवि-
प्लवरुषा वज्राश्मवर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वाऽनुकम्प्युत्स्मयन् ॥ उत्पाट्यैककरेण शैलमबलो
लीलोच्छिलीन्ध्रं यथा बिभ्रद्गोष्ठमपान्महेन्द्रमदभित् प्रीयान्न इन्द्रो गवाम् ॥ २५ ॥ इति श्रीभा० म दशमस्कन्धे
पूर्वार्धे गर्गगीतनिरूणं नाम षड्विंशतितमोऽध्यायः ॥ २६ ॥



दिश्य गर्गे गृहं गते सति तमिमं नारायणांशं मन्ये॥२३॥एवं गर्गगीतं नन्दवचःश्रुत्वा गोपाःगतविस्मयाः सन्तः कृष्णं नन्दं चानर्चुः॥२४॥ततो
भगवतः प्रीतिं प्रार्थयन्ते । स्वयज्ञनाशक्रोधेनेन्द्रे वर्षति सति दुःखितं गोगोपालस्त्रीव्रजं दृष्ट्वा दययैककरेणाद्रिमुत्पाट्य च्छत्राकमिव धृत्वा व्रजं
ररक्ष । स इन्द्रमदनाशको गवां स्वामी कृष्णो नः प्रीयताम् ॥२५॥ इति श्रीभागवते चूर्णिकायां दशमस्कन्धे पूर्वार्धे षड्विंशोऽध्यायः॥२६॥

१ लीलायं छत्राकम् ।

सप्तविंशे तदालक्ष्य कृष्णस्य प्रभवं परम् ॥ वर्ण्यते सुरभीन्द्राभ्यामभिषेकमहोत्सवः ॥१॥ श्रीशुक उवाच ॥ हे नृप ! गोवर्धने धृते सति व्रजे रक्षिते सति च गोलोकात् सुरभिरिन्द्रश्च कृष्णं प्रति आजग्मतुः ॥१॥ ततः इन्द्रो लज्जितः सन्नेकान्ते कृष्णं प्राप्य तत्पादयोः शिरसा नत्वा ॥ २ ॥ नष्टत्रिलोकेशमदो कृताञ्जलिः सन् कृष्णं जगाद ॥ ३ ॥ इन्द्र उवाच ॥ हे कृष्ण ! तव स्वरूपं शुद्धसत्त्वं रजस्तमोरहितं शान्तम् । अतोऽयं संसारः सर्वज्ञस्य तव नास्ति ॥४॥ तत्कृताः लोभादयः कुतः स्युः । तथाऽपि त्वं धर्मरक्षणाय खलनिग्रहाय च दण्डं बिभर्षि ॥५॥

श्रीशुक उवाच ॥ गोवर्धने धृते शैले आसाराद्रक्षिते व्रजे ॥ गोलोकादाव्रजत् कृष्णं सुरभिः शक्र एव च ॥ १ ॥ विविक्त उपसंगम्य व्रीडितः कृतहेलनः ॥ पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा ॥ २ ॥ दृष्टश्रुतानुभावोऽस्य कृष्णस्यामिततेजसः ॥ नष्टत्रिलोकेशमद इन्द्र आह कृताञ्जलिः ॥३॥ इन्द्र उवाच ॥ विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम् ॥ मायामयोऽयं गुणसंप्रवाहो न विद्यते तेऽग्रहणानुबन्धः[1] ॥ ४ ॥ कुतो नु तद्धेतव[2] ईश तत्कृता[3] लोभादयो येऽबुधलिङ्गभावाः[4] ॥ तथाऽपि दण्डं भगवान् बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥ ५ ॥ पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः ॥ हिताय स्वेच्छातनुभिः समीहसे मानं विधुन्वन् जगदीशमानिनाम्[5] ॥ ६ ॥ ये मद्विधाऽज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम् ॥ हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया[6] ईहा खलानामपि तेऽनुशासनम् ॥ ७ ॥ स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेऽविदुषः प्रभावम् ॥ क्षन्तुं प्रभोऽथार्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥ ८ ॥

हे ईश ! त्वं जगतां पिता गुरुः कालः । अतो जगदीशमानिनामस्माकं मानं विधुन्वन् हितायोपात्तदण्डो लीलावतारैर्लीलां करोषि ॥ ६ ॥ हे हरे ! ये मत्सदृशाः अज्ञास्ते भयकालेऽभयं दृष्ट्वा मदं हित्वा सन्मार्गं भजन्ति । अतस्तवेहैव खलानां दण्डः ॥ ७ ॥ एवंभूतस्त्वमैश्वर्यमदव्याप्तस्य ममापराधं क्षन्तुमर्हसि पुनस्त्वयि मतिरेवं मे मा भूत् ॥ ८ ॥

---

१ अग्रहणेन अज्ञानेनानुबध्यते इति तथा । २ पुनरन्यस्य देहस्य हेतवः । ३ देहसंबद्धकृताः । ४ अज्ञानित्वगमकाः । ५ जगदीश इति मदम् । ६ गतगर्वाः ।

तथा हे अधोक्षज ! अयं तेऽवतारोऽतिभारजन्मनां सेनापतीनां नाशाय सतां पालनाय च ॥ ९ ॥ एवं क्षमापयित्वा नमस्करोति ॥ हे कृष्ण ! वासुदेवाय सात्त्वतां पतये स्वच्छन्देन गृहीतदेहाय सर्वबीजाय तुभ्यं नमः ॥ १० ॥ ११ ॥ हे भगवन् ! यज्ञे नष्टे व्रजनाशार्थं मया कर्म कृतं तत्सहनं कर्तव्यम् ॥ १२ ॥ किंच त्वयाऽनुग्रहः कृतः । अतः ईश्वरं गुरुं त्वां शरणं प्राप्तः ॥ १३ ॥ श्रीशुक उवाच ॥ एवं स्तुतः कृष्णः

तवावतारोऽयमधोक्षजेह स्वयंभराणामुरुभारजन्मनाम्[1] ॥ चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम् ॥ ९ ॥ नमस्तुभ्यं भगवते पुरुषाय महात्मने ॥ वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥ १० ॥ स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये ॥ सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥ ११ ॥ मयेदं भगवन् गोष्ठनाशायासारवायुभिः ॥ चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥ १२ ॥ त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो हतोद्यमः ॥ ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥ १३ ॥ श्रीशुक उवाच ॥ एवं संकीर्तितः कृष्णो मघोना भगवानमुम् ॥ मेघगम्भीरया वाचा प्रहसन्निदमब्रवीत् ॥ १४ ॥ श्रीभगवानुवाच ॥ मया तेऽकारि मघवन् मखभङ्गोऽनुगृह्णता ॥ मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् ॥ १५ ॥ मामैश्वर्यश्रीमदान्धो दण्डपाणिं न पश्यति ॥ तं भ्रंशयामि संपद्भ्यो यस्य चेच्छाम्यनुग्रहम् ॥ १६ ॥ गम्यतां शक्र भद्रं वः क्रियतां मेऽनुशासनम् ॥ स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तम्भवर्जितैः ॥ १७ ॥ अथाह सुरभिः कृष्णमभिवाद्य मनस्विनी ॥ स्वसंतानैरुपामन्त्र्य गोपरूपिणमीश्वरम् ॥१८॥

प्रहस्य जगाद ॥ १४ ॥ श्रीभगवानुवाच ॥ हे इन्द्र ! स्वर्गश्रिया मत्तस्य तवानुग्रहार्थं मया यज्ञभङ्गः कृतः ॥ १५ ॥ किंच ऐश्वर्यमदान्धः पुमान् दण्डपाणिं मां न पश्यति । अतो यस्यानुग्रहमिच्छामि तं संपद्भ्यो भ्रंशयामि ॥१६॥ हे इन्द्र ! तव भद्रं स्वाधिकारे स्थित्वा निरहंकारैर्युष्माभिर्मच्छिक्षा क्रियताम् ॥ १७ ॥ अथ कामधेनुर्गोभिः सह कृष्णं नत्वा जगाद ॥ १८ ॥

१ बहूनां भाराणां जन्म येभ्यस्तेषाम् ।

सुरभिरुवाच॥ हे कृष्ण! हे विश्वात्मन्! लोकनाथेन त्वया वयमिन्द्रेण हृता अपि सनाथाः कृताः ॥१९॥ हे जगत्पते! त्वं नो दैवतम्। अतो गोविप्रसाधूनामभ्युदयार्थमद्य त्वमेवेन्द्रो भव ॥२०॥ किंच ब्रह्मणा प्रेरिताः इन्द्ररूपं त्वामभिषेक्ष्यामः ॥२१॥ श्रीशुक उवाच॥ एवं सुरभिः कृष्णं प्रार्थ्य स्वदुग्धेन तथेन्द्रः आकाशगङ्गाया ऐरावतशुण्डोद्धृतैर्जलैरभ्यषिञ्चत ॥ इन्द्रस्ततः कृष्णस्य गोविन्द इति नाम कृतवान्॥ तथा चोक्तम्—"अहमिन्द्रो हि देवानां त्वं गवामिन्द्रतां गतः ॥ गोविन्द इति लोके त्वां गास्यन्ति भुवि मानवाः" इति ॥२२॥२३॥ तत्रागता-

सुरभिरुवाच ॥ कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वसम्भव ॥ भवता लोकनाथेन सनाथा वयमच्युत ॥ १९ ॥ त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते ॥ भवाय भव गोविप्रदेवानां ये च साधवः ॥ २० ॥ इन्द्रं नस्त्वाऽभिषेक्ष्यामो ब्रह्मणा चोदिता वयम् ॥ अवतीर्णोऽसि विश्वात्मन् भूमेर्भारापनुत्तये ॥ २१ ॥ श्रीशुक उवाच ॥ एवं कृष्णमुपामन्त्र्य सुरभिः पयसाऽऽत्मनः ॥ जलैराकाशगङ्गाया ऐरावतकरोद्धृतैः ॥२२॥ इन्द्रः सुरर्षिभिः साकं नोदितो देवमातृभिः ॥ अभ्यषिञ्चत दाशार्हं गोविन्द इति चाभ्यधात् ॥ २३ ॥ तत्रागतास्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः ॥ जगुर्यशो लोकमलापहं हरेः सुराङ्गनाः संननृतुर्मुदाऽन्विताः ॥ २४ ॥ तं तुष्टुवुर्देवनिकायकेतवो[1] व्यवाकिरंश्चाद्भुत-पुष्पवृष्टिभिः ॥ लोकाः परां निर्वृतिमाप्नुवंस्त्रयो गावस्तदा गामनयन् पयोद्रुताम् ॥२५॥ नानारसौघाः सरितो वृक्षा आसन् मधुस्रवाः ॥ अकृष्टपच्यौषधयो गिरयोऽबिभ्रं[2]दुन्मणीन् ॥२६॥ कृष्णेऽभिषिक्त एतानि सत्त्वानि कुरुनन्दन ॥ निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः ॥ २७ ॥

स्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः हरेर्यशो जगुः देवाङ्गना ननृतुः ॥२४॥ तदा देवमुख्याः कृष्णं स्तुत्वा पुष्पवृष्टिं चक्रुः। त्रयो लोकाः सुखं प्रापुः। गावो दुग्धव्याप्तां भुवं चक्रुः ॥२५॥ किंच क्षीरादिरसवाहिन्यो नद्यः आसन्। वृक्षाः मधुस्रवाः आसन्। औषधयोऽकृष्टपच्याः आसन्। पर्वता बहिः प्रकटान् मणीनबिभरुः ॥ २६ ॥ एवं कृष्णेऽभिषिक्ते सति क्रूराण्यपि सत्त्वानि निर्वैराणि जातानि ॥ २७ ॥

१ देवनिकायेषु देवसमूहेषु केतव इव दर्शनीयाः। २ व्यत्ययेन झस्यात् आर्षः।

हे नृप ! एवमिन्द्रः कृष्णमभिषिच्य तेनानुज्ञातो देवैः सह स्वर्गं ययौ ॥२८॥ इति श्रीभागवते चू० द० पू० सप्तविंशोऽध्यायः ॥२७॥ अष्टाविंशे ततो नन्दानयनं वरुणालयात् ॥ वैकुण्ठदर्शनं चाथ गोपानामनुवर्ण्यते॥१॥श्रीशुक उवाच॥ एकादश्यां निराहारो नन्दो जनार्दनमभ्यर्च्य कलामात्रावशिष्टद्वादश्यां दैत्यवेलामज्ञात्वाऽरुणोदयात् पूर्वं निशि कालिन्दीजलं स्नातुं विवेश ॥१॥ तदा वरुणदूतस्तं धृत्वा वरुणसमीपं निनाय ॥२॥ ततो नन्दमपश्यन्तो गोपाः हे कृष्ण ! हे रामेति चुक्रुशुः । तच्छ्रुत्वा कृष्णो वरुणान्तिकं ययौ ॥ ३ ॥ ततो वरुण आगतं हरिं

इति गोगोकुलपतिं गोविन्दमभिषिच्य सः ॥ अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥ २८ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पू० इन्द्रस्तुतिर्नाम सप्तविंशोऽध्यायः ॥ २७ ॥ श्रीशुक उवाच ॥ एकादश्यांनिराहारः समभ्यर्च्य जनार्दनम् ॥ स्नातुं नन्दस्तु कालिन्द्यां द्वादश्यां जलमाविशत् ॥१॥ तं गृहीत्वाऽनयद् भृत्यो वरुणस्यासुरोऽन्तिकम् ॥ अविज्ञायासुरीं वेलां प्रविष्टमुदकं निशि ॥२॥ चुक्रुशुस्तमपश्यन्तः कृष्ण रामेति गोपकाः ॥ भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम् ॥३॥ तदन्तिकं गतो राजन्स्वानामभयदो विभुः ॥ प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्यया ॥ महत्या पूजयित्वाऽह तद्दर्शनमहोत्सवः ॥४॥ वरुण उवाच ॥ अद्य मे निभृतो देह अद्यार्थोऽधिगतः प्रभो ॥ त्वत्पादभाजोभगवन्नवापुः पारमध्वनः ॥ ५ ॥ नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने ॥ न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥६॥ अजानता मामकेन मूढेनाकार्यवेदिना॥ आनीतोऽयं तव पिता तद् भवान्क्षन्तुमर्हति ॥७॥ ममाप्यनुग्रहं कृष्ण कर्तुमर्हस्यशेषदृक् ॥ गोविन्द नीयतामेष पिता ते पितृवत्सल ॥ ८ ॥

दृष्ट्वा तद्दर्शनाज्जातोत्सवस्तमर्हणैः संपूज्य जगाद ॥ ४ ॥ वरुण उवाच ॥ हे कृष्ण ! अद्य मया देहसाफल्यं प्राप्तम् । हे हरे ! त्वत्पादभजनकर्तारो ये ते मोक्षं प्रापुः ॥५॥ अतस्तुभ्यं ब्रह्मणे परमात्मने नमः ॥६॥ हे कृष्ण ! अजानता मे दूतेन त्वत्पितुराकर्षणं यत् तत् क्षन्तुमर्हसि । हे गोविन्द ! एष ते पिता नीयताम् ॥ ७ ॥ ८ ॥

श्रीशुक उवाच ॥ एवं वरुणेन प्रसादितः कृष्णः स्वपितरं गृहीत्वा स्वानां हर्षं कुर्वन् जगाम ॥९॥ नन्दस्त्वदृष्टपूर्वं लोकपालैश्वर्यं तथा तेषां लोकपालानां कृष्णे नम्रतां च दृष्ट्वा व्रजमेत्य ज्ञातिभ्यो जगाद॥१०॥ततो गोपास्तमीश्वरं मत्वाऽयं कृष्णः स्वर्गतिं ब्रह्माख्यां नः प्रापयिष्यति इति संकल्पितवन्तः ॥११॥ ततः सर्वज्ञः कृष्णस्तेषां संकल्पसिद्धये चिन्तयामास ॥१२॥ अयं जनोऽत्र लोकेऽविद्याकामकर्मभिस्तिर्यगादि-योनिषु भ्रमन् स्वां गतिं न वेद ॥ १३ ॥ एवं दयालुः कृष्णो विचिन्त्य स्वलोकं वैकुण्ठं गोपानां दर्शयामास ॥ १४ ॥ देहादिपिहितानां

श्रीशुक उवाच ॥ एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः ॥ आदायागात् स्वपितरं बन्धूनां चावहन्मुदम् ॥ ९ ॥ नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम् ॥ कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥ १० ॥ ते त्वौत्सुक्यधियो राजन् मत्वा गोपास्तमीश्वरम् ॥ अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ॥ ११ ॥ इति स्वानां स भगवान् विज्ञायाखिलदृक् स्वयम् ॥ संकल्पसिद्धये तेषां कृपयैतदचिन्तयत् ॥ १२ ॥ जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः ॥ उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन् ॥ १३ ॥ इति संचिन्त्य भगवान् महाकारुणिको हरिः ॥ दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥ १४ ॥ सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनम् ॥ यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः ॥ १५ ॥ ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ॥ ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात् पुरा ॥ १६ ॥ नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः ॥ कृष्णं च तत्र च्छन्दोभिः स्तूयमानं सुविस्मिताः ॥१७॥ इति श्रीभा० महा० दशम० पूर्वार्धे नन्दानयनवैकुण्ठप्रदर्शनं नामाष्टाविंशतितमोऽध्यायः ॥२८॥

लोकदर्शनमशक्यमिति प्रथमं देहादिव्यतिरिक्तं ब्रह्मरूपं दर्शयामास । तदाह । सत्यं स्वप्रकाशं ब्रह्म दर्शयामास यज्ज्ञानिनः पश्यन्ति॥१५॥ ते तु गोपाः ब्रह्म ह्रदं कृष्णेन नीताः मग्नाश्च पुनः कृष्णेनोद्धृताः सन्तो वैकुण्ठं ददृशुः । कृष्णे निमित्ते सति पूर्वं यमक्रूरो दृष्टवान् ॥१६॥ तत्र नन्दादयो गोपाः वेदैः स्तूयमानं कृष्णं दृष्ट्वा परमानन्देन व्याप्ताः सन्तो विस्मिता बभूवुः ॥१७॥ इति श्रीभाग० चूर्णिकायां दश० पू० अष्टाविंशोऽध्यायः ॥ २८ ॥

ऊनत्रिंशे तु रासार्थमुक्तिप्रयुक्तयो हरेः ॥ गोपीभी राससंरम्भे तस्य चान्तर्द्धिकौतुकम् ॥१॥ श्रीकृष्ण उवाच ॥ हे नृप ! भगवान् शरदि विक-
सितमल्लिकापुष्पाः रात्रीर्वीक्ष्य योगमायामाश्रितः सन् क्रीडां कर्तुं मनश्चक्रे॥१॥तदा चन्द्रः पूर्वदिशायाः मुखं सुखकरैः रश्मिभिरुदयरागेणा-
रुणीकुर्वन्नुदितः प्रियायाः मुखं प्रिय इव ॥२॥ एवं पूर्णमण्डलं चन्द्रं तथा चन्द्रकोमलरश्मिरञ्जितं वनं च दृष्ट्वा कृष्णस्तत्रत्यस्त्रीणां मनोहरं
मधुरं जगौ ॥३॥ तत् कामवर्धनं श्रुत्वा व्रजस्त्रियो मिथो न लक्षिताः यत्र कृष्णः आसीनस्तत्राजग्मुः॥४॥तत्र काश्चिद्दुहन्त्यो दोहं हित्वा

श्रीशुक उवाच ॥ भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ॥ वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥ १ ॥
तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः ॥ स चर्षणीनाम्[1] उदगाच्छुचो[2] मृजन् प्रियः प्रियाया
इव दीर्घदर्शनः[3] ॥ २ ॥ दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाननाभं[4] नवकुंकुमारुणम् ॥ वनं च तत् कोमलगोभि-
रञ्जितं जगौ कलं वामदृशां मनोहरम् ॥ ३ ॥ निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः ॥ आज-
ग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः ॥४॥ दुहन्त्योऽभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः ॥
पयोऽधिश्रित्य संयावम्[5] अनुद्वास्य[6] अपरा ययुः ॥५॥ परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून् पयः ॥ शुश्रूषन्त्यः पतीन्
काश्चिदश्नन्त्योऽपास्य भोजनम् ॥६॥ लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ॥ व्यत्यस्तवस्त्राभरणाः
काश्चित् कृष्णान्तिकं ययुः ॥ ७ ॥ ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः ॥ गोविन्दाऽपहृतात्मानो न न्यव-
र्तन्त मोहिताः ॥८॥ अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ॥ कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥

ययुः तथाऽन्याश्चुल्ल्यां दुग्धमधिश्रित्य क्वाथमप्रतीक्षमाणाः ययुः । काश्चित् संयावमनुत्तार्य ययुः ॥५॥ काश्चित् परिवेषयन्त्यस्तद्धित्वा
ययुः ॥ का० शिशून् पाययन्त्यस्तद्धित्वा ययुः।का० पतीन् शुश्रूषन्त्यस्तद्०।का० अश्नन्त्यो भोजनमनपास्य ययुः ॥६॥ का० लिम्पन्त्यः,
काश्चिद् प्रमृजन्त्यः, का० नेत्रे अञ्जन्त्यः,विपर्यस्तवस्त्राभरणाः ययुः ॥७॥ एवं ताः पतिपितृभ्रातृभिर्वार्यमाणा अपि गोविन्दगतचित्ताः ययुः
॥ ८ ॥ काश्चिद्गोप्योऽन्तर्गृहे कुण्ठिताः सत्यः कृष्णमेव दध्युः ॥ ९ ॥

१ जनानाम् । २ तापग्लानीः । ३ दीर्घकालेन दर्शनं यस्य सः । ४ लक्ष्मीमुखवत्सुन्दरम् । ५ गोधूमकणान्नम् । ६ अनुत्तार्य ।

ततः कृष्णविरहतापेन गतपापास्तद्ध्यानेन प्राप्तपरमसुखभोगेन क्षीणपुण्यबन्धनाः जारबुद्ध्या प्राप्ता अपि गुणमयं देहं जहुः ॥१० ॥११॥ राजोवाच॥ हे ब्रह्मन् ! गोप्यः कृष्णं कान्तं विदुः न ब्रह्म।एवं सति तासां संसारोपरमः कथम् ॥१२॥ श्रीशुक उवाच ॥ हे नृप ! एतत् पूर्वमुक्तं यथा द्विषन्नपि चैद्यः सिद्धिः गतः हरिप्रियाः किमुत॥१३॥हे नृप ! इयं कृष्णस्य प्रकटता नृणां मोक्षायैव॥१४॥किंच कामक्रोधभयस्नेहै-

दुस्सहप्रेष्ठविरहतीव्रतापधुताशुभाः ॥ ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ १० ॥ तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः ॥ जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ ११ ॥ राजोवाच ॥ कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने ॥ गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥ १२ ॥ श्रीशुक उवाच ॥ उक्तं पुरस्तादेतत् ते चैद्यः सिद्धिं यथा गतः ॥ द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥ नृणां निश्श्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥ अव्यक्तस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥ कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ॥ नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥१५॥ न चैवं विस्मयः कार्यो भवता भगवत्यजे ॥ योगेश्वरेश्वरे कृष्णे यत एतद् विमुच्यते ॥ १६ ॥ ता दृष्ट्वान्तिकमायाता भगवान् व्रजयोषितः ॥ अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन् ॥ १७ ॥ श्रीभगवानुवाच ॥ स्वागतं वो महाभागाः प्रियं किं करवाणि वः ॥ व्रजस्यानामयं कच्चिद् ब्रूतागमनकारणम् ॥ १८ ॥ रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥ प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥ १९ ॥ मातरः पितरः पुत्रा भ्रातरः पतयश्च वः ॥ विचिन्वन्ति ह्यपश्यन्तो मा कृढ्वं बन्धुसाध्वसम् ॥ २० ॥

क्यादि कुर्वन्तः पुरुषास्तन्मयतां यान्ति ॥१५॥ एवंभूते ईश्वरे कृष्णे एवं विस्मयो न कार्यः यस्मादिदं विमुच्यते ॥१६॥ ततः कृष्णःप्राप्ता गोपीर्दृष्ट्वा वाग्विलासैस्ताः मोहयन् जगाद॥१७॥श्रीभगवानुवाच॥हे गोप्यः ! स्वागतं व्रजस्य कुशलं कच्चित् ! आगमनकारणं ब्रूत ॥१८॥ एषा रजनी घोररूपा अतो व्रजं यात, अत्र स्त्रीभिर्न स्थेयम्॥१९॥हे गोप्यः ! पितृपतिपुत्रादयो वो मृगयन्ते, बन्धुसाध्वसं मा कुरुत॥२०॥

१ गुणनियन्तुः ।

किंच पुष्पितं चन्द्रकिरणैः शोभितं वनं दृष्टम् ॥२१॥ अतो व्रजं यात पतीन् शुश्रूषध्वम् वत्साः बालाश्च क्रन्दन्ति तान् पालयत दुह्यत च ॥२२॥ किं वा मत्स्नेहाद् यूयं प्राप्ताः। इदं योग्यम्। मयि जन्तवः प्रसन्नाः भवन्ति ॥२३॥ किंच भर्तुस्तद्बन्धूनां च शुश्रूषणं स्त्रीणां परो धर्मः ॥२४॥ हे गोप्यः! स्वपतिर्दुःशीलो दुर्भगो वृद्धो जडो निर्धनोऽपि स्त्रीभिर्न त्याज्यः अपातकी चेत् ॥ २५ ॥ किंच हे कुलस्त्रियः! जार-

दृष्टं वनं कुसुमितं राकेशकररञ्जितम् ॥ यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥ २१ ॥ तद् यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः ॥ क्रन्दन्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥ २२ ॥ अथवा मदभिस्नेहाद् भवन्त्यो यंत्रिताशयाः ॥ आगता ह्युपपन्नं वः प्रीयन्ते मयि जन्तवः ॥ २३ ॥ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ॥ तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥ २४ ॥ दुश्शीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ॥ पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ २५ ॥ अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ॥ जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियः ॥ २६ ॥ श्रवणाद् दर्शनाद् ध्यानान्मयि भावोऽनुकीर्तनात् ॥ न तथा संनिकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥ श्रीशुक उवाच ॥ इति विप्रियमाकर्ण्य गोप्यो गोविंदभाषितम् ॥ विषण्णा भग्नसंल्पाश्चि-न्तामापुर्दुरत्ययाम् ॥ २८ ॥ कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ॥ अस्रैरुपात्तमषिभिः कुचकुंकुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥ २९ ॥ प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ॥ नेत्रे विमृज्य रुदितोपहते स्म किंचित्संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥ ३० ॥

सौख्यं निन्द्यम् ॥२६॥ हे गोप्यः! श्रवणदर्शनध्यानेभ्यो मयि यथा भावः स्यात् तथा समीपतया न, अतो गृहान् यात ॥२७॥ श्रीशुक उवाच ॥ एवमप्रियं कृष्णवचः श्रुत्वा गोप्यः चिन्तां प्रापुः ॥ २८ ॥ ततो गोप्यो मुखान्यधः कृत्वा पादांगुष्ठेन भुवं लिखन्त्योऽश्रुभिः कुचकुङ्कुमानि मृजन्त्यस्तूष्णीं तस्थुः ॥२९॥ किंच अप्रियमिव भाषमाणं कृष्णं किंचित्कोपावेशेन गद्गदगिरो नेत्रे विमृज्य गोप्यो जगदुः ॥३०॥



१ एजन्तः कम्पमानाः। २ वशीकृतचित्ताः। ३ 'कुलस्त्रियाः' इति षष्ठ्यन्त कुत्रचित्। ४ गृहीतकज्जलैः।

गोप्य ऊचुः ॥ हे विभो ! त्वमेवं क्रूरं गदितुं नार्हसि। वयं भोगान् हित्वा ते पादमूलं प्राप्ताः अस्मान् भजस्व मा त्यज॥३१॥पत्यादीनां सेवनं स्त्रीणां परो धर्मः इति यत् त्वयोक्तं तत् त्वय्यस्तु, यतः शरीरिणां मध्ये त्वं प्रियो बन्धुश्च॥३२॥हे कृष्ण! कुशलाः प्रिये त्वयि प्रीतिं कुर्वन्ति, दुःखदैः पतिपुत्रादिभिः किम्!अतो नः प्रसीद। त्वयि धृतामाशां मा छिन्द्याः॥३३॥किंच अस्मच्चित्तमेतावत्कालं गृहं विशति स्म तत् त्वया-

गोप्य ऊचुः ॥ मैवं विभोऽर्हति भवान् गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमूलम् ॥ भक्ता भजस्व दुरवग्रह मा त्यजास्मान् देवो यथाऽऽदिपुरुषो भजते मुमुक्षून् ॥३१॥ यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥ अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥ ३२ ॥ कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥ तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या आशां भृतां त्वयि चिरादरविन्दनेत्र ॥३३॥ चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥ पादौ पदं न चलतस्तव पादमूलाद् यामः कथं व्रजमथो करवाम किं वा ॥ ३४ ॥ सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् ॥ नो चेद् वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥ यर्ह्यम्बुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य ॥ अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग स्थातुं त्वयाऽभिरमिता बत पारयामः ॥३६॥ श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम् ॥ यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद् वयं च तव पादरजः प्रपन्नाः ॥ ३७ ॥

ऽपहृतम्। एवं हस्तौ तथा पादावपि स्थानाद् न चलतः कथं व्रजं यामः किं करवामः॥३४॥ अतो हे कृष्ण!कामाग्निमधरामृतपूरेण सिञ्च। एवं नो चेत् तर्हि कामविरहाग्निभ्यां दग्धदेहाः वयं ध्यानेन ते पदवीं यामः ॥ ३५ ॥ हे हरे ! लक्ष्म्याः दत्तावसरं तव पादतलं यदा स्पृष्टवत्यो वयं तदाऽऽरभ्यान्यसमक्षं स्थातुं न समर्थाः ॥ ३६ ॥ किंच लक्ष्मीर्वक्षसि स्थानं लब्ध्वाऽपि तुलस्या सह यत्पादाम्बुजरजः

१ हे स्वच्छन्द । २ आत्मन् आत्मनि । ३ अरण्यजनाः प्रियाः यस्य तस्य । ४ यस्या लक्ष्म्याः । विलोकानार्थमन्येषां ब्रह्मादीनां तपोभिः प्रयासः सा यद्रजश्चकमे इति योज्यम् ।

इच्छति तद्वद् वयं ते पादरजः प्राप्ताः ॥ ३७ ॥ हे दुःखहर ! वयं स्वगृहान् हित्वा तेऽङ्घ्रिमूलं प्राप्ताः । तत् प्रसीद । तथा तवावलोकनेन तप्तात्मनां नो दास्यं देहि ॥३८॥ तव केशैर्वेष्टितं हसितावलोकं मुखं वक्षःस्थलं च दृष्ट्वा वयं तव दास्यो भवामः ॥ ३९ ॥ हे कृष्ण ! तव वेणुगीतमोहिता का स्त्री त्रैलोक्ये स्वधर्मान्न चलेत् । किंच इदं रूपं वीक्ष्य गोपक्षिद्रुममृगाः रोमाञ्चं बभ्रुः ॥४०॥ हे हरे ! त्वं व्रजभयदुःखहरः

तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ॥ त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्ता-
त्मनां पुरुषभूषण देहि दास्यम् ॥ ३८ ॥ वीक्ष्यालकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम् ॥
दत्ताभयं च भुजदण्डयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः॥३९॥ का स्त्र्यङ्ग ते कमलपदायतवेणुगीतसंमो-
हिताऽऽर्यचरितान्न चलेत् त्रिलोक्याम् ॥ त्रैलोक्यसौभगमिदं च निरीक्ष्यरूपं यद् गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥
॥४०॥ व्यक्तं भवान् व्रज भयार्तिहरोऽभिजातो देवो यथाऽऽदिपुरुषः सुरलोकगोप्ता ॥ तन्नो निधेहि करपङ्कजमार्तबन्धो
तप्तस्तनेषु च शिरस्सु च किंकरीणाम् ॥४१॥श्रीशुक उवाच ॥ इति विक्लवितं तासां श्रुत्वायोगेश्वरेश्वरः॥ प्रहस्य सदयं
गोपीरात्मारामोऽप्यरीरमत ॥४२॥ ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥उदारहासद्विजकुंद-
दीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥ ४३ ॥ उपगीयमान उद्गायन् वनिताशतयूथपः ॥ मालां बिभ्रद्वैजयन्तीं व्य-
चरन्मण्डयन्वनम् ॥ ४४ ॥ नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥ रेमे तत्तरलानन्दकुमुदामोदवायुना ॥ ४५ ॥



आदिपुरुषवत् अतो नो दासीनां तप्तस्तनेषु मस्तकेषु च हस्ताब्जं स्थापय ॥ ४१ ॥ श्रीशुक उवाच ॥ एवं तासां विक्लवितं वचनं श्रुत्वा प्रहस्य ताः रमयामास ॥४२॥ ततस्ताभिः प्रियेक्षणोत्फुल्लमुखीभिरच्युतो नक्षत्रैश्चन्द्र इव व्यरोचत ॥ ४३ ॥ ततो वनिताशतयूथपः कृष्णो वैजयन्तीं मालां धृत्वा वनं शोभयन् व्यचरत् ॥ ४४ ॥ ततो गोपीभिः सह हिमवालुकं नद्यास्तटं प्रविश्य रेमे ॥ ४५ ॥

---

१ कुण्डलयोः श्रीर्ययोस्तयाविधे गण्डस्थले यस्मिन् । २ श्रियाः एकमेव रमणं रतिजनकम् । ३ दन्तेत्यर्थः ।

तदा कृष्णो बाहुप्रसारेणालिङ्गनेन हस्तकेशोरुस्तनेस्पर्शेन परिहासेन नखाग्रपातेन क्रीडयाऽवलोकनादिभिश्च गोपीनां कामं सन्दीपयन् क्रीडयामास ॥४६॥ एवं कृष्णात् प्राप्तमानाः गोप्यो भुवि स्त्रीणां मध्ये आत्मानमधिकं मेनिरे ॥४७॥ ततः कृष्णस्तासां गर्वं मदं च वीक्ष्य गर्वशमनायानुग्रहाय च तत्रैवान्तरधीयत ॥ ४८ ॥ इति श्रीभागवते महापुराणे चूर्णिकायां दशमस्कन्धे पूर्वार्द्धे रासक्रीडायां कृष्णान्तर्धानं नामैकोनत्रिंशोऽध्यायः ॥२९॥ त्रिंशे विरहसन्तप्तगोपीभिः कृष्णमार्गणम् ॥ उन्मत्तवन्न नियतं भ्रमन्तीभिर्वने वने ॥ १ ॥ श्रीशुक उवाच ॥

बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः ॥ क्ष्वेल्याऽवलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिरमयांचकार ॥४६॥ एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ॥ आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥४७॥ तासां तत्सौभगमदं वीक्ष्य मानंच केशवः ॥ प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे रासक्रीडायां कृष्णान्तर्धानं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ श्रीशुक उवाच ॥ अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ॥ अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥१॥ गत्याऽनुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ॥ आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥ गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः ॥ असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥ गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥४॥ दृष्टो वः क्वचिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ॥ नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ५ ॥

हे राजन् ! भगवत्यन्तर्हिते सति गोप्यस्तमपश्यन्त्योऽतप्यन् ॥ १ ॥ ततस्ताः रमापतेर्गतिहास्यप्रेमालोकनादिभिराकृष्टचित्ताः तल्लीलानुकरणेन चिक्रीडिरे ॥२॥ किंच कृष्णस्य गतिहास्यावलोकनादिषु प्रविष्टमूर्तयस्ता कृष्णस्यैवं क्रीडाविलासाः अहमेव कृष्ण इति मिथो निवेदितवत्यः ॥ ३ ॥ तत उच्चैः कृष्णमेव गायन्त्यो मत्तवदेकत्र मिलित्वा वनाद्वनं गच्छन्त्यः आकाशमिव सर्वव्यापिनं कृष्णं वृक्षान् पप्रच्छुः ॥ ४ ॥ हे अश्वत्थ ! हे प्लक्ष ! हे वट ! अस्माकं मनो हृत्वा गतः कृष्णो युष्माभिः क्वचिद्दृष्टः किम् ? ॥ ५ ॥

१ 'कच्चित्' इ० पा० ।

हे कुरबकाशोकनागपुन्नागचम्पकाः ! अस्माकं दर्पहरस्मितः स इतो गतः किम् ॥ ६ ॥ हे तुलसि ! भ्रमरकुलैः सह त्वां बिभ्रत् तव प्रिय-स्त्वया दृष्टः किम् ॥७॥ हे मालति ! हे मल्लिके ! हे जाति ! हे यूथिके ! कृष्णः करस्पर्शेन वः प्रीतिं जनयन्नितो गतः किम् ॥ ८ ॥ हे आम्र-प्रियालपनसादयः ! यूयं यमुनातीरे स्थिताः स्थ । अतः शून्यचेतसां नः कृष्णमार्गं कथयत ॥९॥ हे क्षिते ! त्वया तपः किं कृतं ? या त्वं

कच्चित् कुरबकाशोकनागपुन्नागचम्पकाः ॥ रामानुजो मानिनीनामितो दर्पहरस्मितः ॥ ६ ॥ कच्चित् तुलसिकल्याणि गोविन्दचरणप्रिये ॥ सह त्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥ मालत्यदर्शि वः कच्चिन्मल्लिके जाति यूथिके ॥ प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः ॥ ८ ॥ चूतप्रियालपनसासनकोविदारजम्ब्वर्कबिल्वबकुला-म्रकदम्बनीपाः ॥ येऽन्ये परार्थभवका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥ ९ ॥ किं ते कृतं क्षिति-तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ॥ अप्यङ्घ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरम्भणेन ॥ १० ॥ अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः ॥ कान्ताङ्गसङ्ग-कुचकुंकुमरंजितायाः कुन्दस्रजः कुलपतेरिह वाति गंधः ॥ ११ ॥ बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुज-स्तुलसिकालिकुलैर्मदान्धैः ॥ अन्वीयमान इव वस्तरवः प्रणामं किं वाऽभिनन्दति चरन् प्रणयावलोकैः ॥ १२ ॥ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ॥ नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥



कृष्णचरणस्पर्शेन रोमाञ्चिता शोभसे । अतो नूनं त्वया दृष्टः ॥१०॥ हे हरिणि ! कृष्णः प्रियया सह तव दृशां प्रियं मुखादिभिः कुर्वन् गतः किम् ॥ ११ ॥ हे वृक्षाः ! कृष्णः स्कन्धे बाहुं कृत्वा भ्रमरैरनुगम्यमानः सन् वः प्रणामस्य प्रेमावलोकनैः सम्मानं करोति किम् ॥ १२ ॥ काश्चिदाहुः हे सख्यः ! एताः लताः प्रति पृच्छत । यतः पत्युर्बाहूनालिङ्ग्य रोमाञ्चं बिभ्रति । अतो नूनं तन्नखस्पृष्टाः सन्ति ॥ १३ ॥

---

१ परार्थं भवः जन्म येषां ते । २ केशवस्याङ्घ्रिस्पर्शनोत्सवो यस्याः सा । ३ एष च योऽङ्घ्रिसंभवःउत्सवः सः किं वामनस्य पदा सर्वाऽऽक्रमणाद्युत ततोऽपि पूर्वं वराहावतारे तदालिङ्गनेन । ४ श्रीकृष्णस्य ।

एवमुन्मत्तवचो गोप्यः कृष्णशोधनेन व्याकुलाः सत्यो हरेस्तास्ताः लीलाः अनुचक्रुः ॥१४॥ कस्याश्चित् पूतनावदाचरन्त्याः काचित् कृष्णवत् स्तनं पपौ! अन्या बालवदात्मानं कृत्वा रुदति सती परां शकटाकृतिं पदा जघान ॥ १५ ॥ काचित् दैत्यवद् रूपं धृत्वा कृष्णरूपामन्यां जहार। काऽपि चरणौ कर्षयन्ती रिङ्गयामास ॥१६॥ ततोद्वे कृष्णरामरूपेधृतवत्यौ अन्याश्च गोपरूपाणि धृतवत्यः। तत्रैका वत्सरूपधरा-मन्या बकरूपधरां च हन्ति ॥ १७ ॥ एका कृष्णरूपं धृत्वा दूरे स्थिता गोरूपं धृतवतीर्गोपीराहूय वेणुं क्वणयति। तदाऽन्यास्तां साध्विति

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ॥ लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ १४ ॥ कस्याश्चित् पूतनायन्त्याः कृष्णायन्त्यपिबत् स्तनम् ॥ तोकायित्वा रुदत्यन्या पदाऽहन् शकटायतीम् ॥ १५ ॥ दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ॥ रिङ्गयामास काऽप्यङ्घ्री कर्षन्ती घोषनिस्स्वनैः[1] ॥ १६ ॥ कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन ॥ वत्सायन्तीं हंति चान्या तत्रैका तु बकायतीम् ॥ १७ ॥ आहूय दूरगा यद्वत् कृष्णस्त-मनुकुर्वतीम्[2] ॥ वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसति साध्विति ॥ १८ ॥ कस्यांचित् स्वभुजं न्यस्य चलंत्याहापरा ननु ॥ कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥१९॥ मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ॥ इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥२०॥ आरुह्यैका पदाऽऽक्रम्य शिरस्याहापरां नृप ॥ दुष्टाहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥२१॥ तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम् ॥ चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममञ्जसा ॥२२॥

शंसन्ति ॥१८॥ कस्यांचित् स्वभुजं कृत्वा चलन्ती जगाद अहं कृष्णो मम गतिं पश्यत ॥१९॥ काचिद् वातवर्षाभ्यां मा भैष्ट तत्संरक्षणं मया कृतम् इत्युक्त्वा हस्तेन वस्त्रमूर्ध्वं धृतवती ॥२०॥ तदैका गोपी कृष्णरूपं धृत्वा कालियरूपगोप्याः शिरस्यारुह्य जगाद। हे दुष्टाहे! इतो गच्छ गच्छ अहं खलानां दण्डकर्ता ॥२१॥ तत्रैकाऽऽह। हे गोपाः! दावाग्निं पश्यत, नेत्राणि निमीलयत युष्माकं कुशलं कुर्वे ॥२२॥

---

१ किङ्किणीस्वनैः। २ प्रयत्नं कुर्वंती।

तत्र कृष्णरूपा काचिद् मालयोलूखलेऽन्यया बद्धा मुखं पिधाय भयानुकरणं प्राप ॥२३॥ एवं वृक्षादीन् पृच्छन्त्यः गोप्यो वनप्रदेशे कृष्ण-पदानि ददृशुः ॥२४॥ ततः आहुः-एतानि पदानि कृष्णस्यैव, यतो ध्वजादिभिश्चिह्नितानि ॥२५॥ ततस्तैस्तैः पदैस्तन्मार्गमन्विच्छन्त्यो-ऽग्रतो गत्वा तत्रान्यवध्वाः पदस्सपृक्तानि पदानि दृष्ट्वा दुःखिताः सत्यः आहुः ॥ २६ ॥ हे गोप्यः ! कृष्णेन सह यातायाः कस्याः एतानि पदानि ॥२७॥ अनयैव नूनं हरिराराधितः यतोऽस्मान् हित्वेमामेकान्तेऽनयत् ॥२८॥ हे सख्यः ! एते कृष्णपदाब्जरेणवो धन्याः,यतः इमान् ब्रह्मादयः पापनाशाय मूर्ध्नि दधुः ॥२९॥ हे सख्यः ! तस्या एतानिपदानि नः क्षोभं कुर्वन्ति, यतः एका एकान्ते कृष्णस्याऽधरं भुङ्क्ते॥३०॥ अहो सख्यः ! अत्र तस्याः पदानि न लक्ष्यन्ते, यतस्तृणाङ्कुरैर्दुःखिताङ्घ्रितलां तां कृष्णः स्कन्धे आरोपितवान् ॥ ३१ ॥ तथा तदर्थमत्र कृष्णेन पुष्पावचयः कृतः, यत प्रपदाक्रमणेऽसकले पदे पश्यत ॥३२॥ किंच कामिना कृष्णेनात्र तस्याः केशप्रसाधनं कृतम् ॥ ३३ ॥

॥२३॥ एवं कृष्णं बद्ध्वाऽन्यया स्रजा काचित् तन्वी तत्र उलूखले ॥ भीता सुदृक् पिधायास्यं भेजे भीतिविडम्बनम् ॥२३॥ ... पृच्छमाना वृन्दावनलतास्तरून् ॥ व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ २४ ॥ पदानि व्यक्तमेतानि नन्दसूनो-महात्मनः ॥ लक्ष्यंते हि ध्वजाम्भोजवज्रांकुशयवादिभिः ॥ २५ ॥ तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ॥ वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥ २६ ॥ कस्याः पदानि चैतानि याताया नंदसूनुना ॥ अंसन्यस्त-प्रकोष्ठायाः करेणोः करिणा यथा ॥ २७ ॥ अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः ॥ यन्नो विहाय गोविंदः प्रीतो यामनयद्रहः ॥ २८ ॥ धन्या अहो अमी आल्यो गोविंदाङ्घ्र्यब्जरेणवः ॥ यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्य-घनुत्तये ॥ २९ ॥ तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत ॥ यैकाऽपहृत्य गोपीनां रहो भुंक्तेऽच्युताध-रम् ॥ ३० ॥ न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणांकुरैः ॥ खिद्यत्सुजातांघ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ ३१ ॥ ( इमान्यधिकमग्नानि पदानि वहतो बधूम् ॥ गोप्याः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः ॥ अत्रावरोपिता कांता पुण्यहेतोर्महात्मना ॥ ) अत्र प्रसूनावचयः प्रियार्थं प्रेयसा कृतः ॥ प्रपदाक्रमणे एते पश्यताऽसकले पदे ॥ ॥ ३२ ॥ केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥ तानि चूडयता कांतामुपविष्टमिह ध्रुवम् ॥ ३३ ॥

१ कोमलं इत्यर्थः २ 'क्रान्तानि' इ० पा० । ३ पुष्पाणि । ४ चूडाकारेण बध्नता ।

हे नृप । तथा तया सहाऽऽत्मारामोऽपि कृष्णः कामिनां दीनत्वं स्त्रीणां दुस्स्वभावं च दर्शयन् रेमे ॥३४॥ एवं कृष्णं पश्यन्त्यो गोप्यो वने चेरुः । अन्याः विहाय यां रहो निन्ये सा सर्वस्त्रीणां मध्ये आत्मानं श्रेष्ठं मेने॥३५॥३६॥ततः सा वनोद्देशं गत्वा गर्विष्ठा सती कृष्णं जगाद । हे कृष्ण ! अहं चलितुं न शक्ता यत्र ते मनस्तत्र मां नय ॥३७॥ इत्याकर्ण्य कृष्णः स्कन्धमारोहेत्युक्त्वा स्वयमन्तर्दधे । सा वधूश्चाऽन्वतप्यत ॥३८॥ हा नाथ ! हे रमण ! क्वासि क्वासि । हे सखे ! तव दास्याः मे सन्निधिं दर्शय॥३९॥श्रीशुक उवाच॥एवं कृष्णमार्गमन्विच्छन्त्यो गोप्यः

रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः ॥ कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् ॥३४॥ इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ॥ यां गोपीमनयत् कृष्णो विहायान्याः स्त्रियो वने ॥३५॥ सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ॥ हित्वा गोपीः कामयाना मामसौ भजते प्रियः ॥३६॥ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥ नपारयेऽहं चलितुं नय मां यत्र ते मनः ॥३७॥ एवमुक्तः प्रियामाह स्कन्धमारुह्यतामिति ॥ ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ॥३८॥ हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥ दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥३९॥ श्रीशुक उवाच ॥ अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः॥ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥४०॥ तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥ अपमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥ ४१ ॥ ततोऽविशन् वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ॥ तमः प्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ॥ ४२ ॥ तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ४३ ॥ पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ॥ समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः[1] ॥ ४४ ॥ इति श्रीभाग० महापु० दशम० पूर्वार्धे रासक्रीडावर्णने कृष्णान्वेषणं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥

समीपे तद्वियोगमोहितां तां ददृशुः ॥४०॥ ततस्तयोक्तं कृष्णाद् मानप्राप्तिं दौरात्म्याद्पमानं च श्रुत्वा विस्मयं प्रापुः ॥४१॥ ततस्ताः सर्वाः यावच्चन्द्रज्योत्स्ना तावद् वने गत्वा परं तमः प्रविष्टं दृष्ट्वा ततो निववृतुः॥४२॥ततस्ताःकृष्णमनसस्तद्गुणानेव गायन्त्यः स्वगृहाणि न सस्मरुः ॥४३॥पुनः कालिन्द्यास्तटं गत्वा कृष्णागमनमिच्छन्त्यो मिलिताः सत्यः कृष्णं जगुः॥४४॥इति श्रीभागवते द०चू०पू० त्रिंशोऽध्यायः॥३०॥

---

१ कृष्णागमनं काङ्क्षितं यासां ताः ।

एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः ॥ कृष्णमेवानुगायन्त्यः प्रार्थयन्ते तदागमम् ॥ १ ॥ गोप्य ऊचुः ॥ हे प्रिय ! तव जन्मना व्रजो-
ऽधिकमुत्कर्षेण वर्तते यतस्त्वमत्र जातः तस्माल्लक्ष्मीर्व्रजमलंकृत्य वर्तते। एवं व्रजे हर्षिते सति त्वदीयाः गोपिकास्त्वयि धृतप्राणाः सत्यो दिक्षु
त्वां विचिन्वते। अतस्त्वमात्मानं दर्शय ॥ १ ॥ अन्या आहुः। हे सुरतनाथ ! नेत्रेणामूल्यदासीर्मारयतस्तवाऽयं वधो न भवति किं-किंतु
भवत्येव। अतस्तव दृशाऽपहृतप्राणप्रत्यर्पणाय त्वमात्मानं दर्शय॥२॥हे श्रेष्ठ ! त्वया विषमयजलनाशात् तथाऽघासुराद् वर्षमारुतवैद्युतान-

गोप्य ऊचुः ॥ जयति तेऽधिकं जन्मना व्रजः श्रयत इंदिरा शश्वदत्र हि ॥ दयित दृश्यतां दिक्षु तावकास्त्वयि धृता-
सवस्त्वां विचिन्वते ॥ १ ॥ शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ॥ सुरतनाथ तेऽशुल्कदासिका वरद-
निघ्नतो नेह किं वधः ॥२॥ विषजलाप्ययाद् व्यालराक्षसाद् वर्षमारुताद्वैद्युतानलात् ॥ वृषमयात्मजाद् विश्वतो
भयादृषभ ते वयं रक्षिता मुहुः ॥ ३ ॥ न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ॥ विखनसार्थितो
विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥४॥ विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् ॥ करसरोरुहं
कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ५ ॥ व्रजजनार्तिहन् वीर योषितां निजजनस्मयध्वंसनस्मित ॥ भज
सखे भवत्किंकरीः स्म नो जलरुहाननं चारु दर्शय ॥ ६ ॥ प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ॥
फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥

लादिभ्योऽरिष्टव्योमासुरादिभ्यश्च वयं रक्षिताः। अतः इदानीं किमुपेक्षसे॥३॥अपि च हे सखे ! त्वं गोपीसुतो न किंतु जीवानां बुद्धिसाक्षी।
ब्रह्मणा जगद्रक्षणार्थं प्रार्थितः सन् यदुकुले उत्पन्नोऽसि। अतस्तव भक्तोपेक्षाऽनुचिता॥४॥हे विष्णुश्रेष्ठ ! संसार भयात् ते चरणं सेवमानानां
दत्ताभयं हस्तकमलं नः शिरसि स्थापय ॥५॥ हे व्रजजनदुःखनाशक ! हे वीर ! तव दासीर्नः सेवस्व। आदौ तावद् मुखकमलं दर्शय ॥ ६ ॥
हे सखे ! प्रणामकर्तॄणां नृणां पापनाशकं पशूनामनुगमनकारि कालियफणासु समर्पितं ते चरणकमलं नः स्तनेषु कृत्वा कामं छिन्धि ॥ ७ ॥

१ सरसि सम्यग् जातस्य शोभनस्य यदुदरं तस्य श्रियं मुष्णातीति। २ श्रियः करं गृह्णातीति तथा गर्वंइत्यर्थः।

हे कमलनेत्र ! तव मधुरवाण्या मुह्यन्तीर्नो दासीरधरामृतेन सञ्जीवय ॥८॥ हे हरे ! तप्तजीवनं कल्मषनाशकं श्रवणमङ्गलं तव कथामृतं ये भुवि गृणन्ति ते धन्याः किं पुनर्ये त्वां पश्यन्ति । अतः प्रार्थयामहे त्वमात्मानं दर्शय ॥९॥ हे कृष्ण ! तव हास्यं तथा प्रेमावलोकं तथा तव क्रीडनं तथा तव रहसि सङ्केतपरिहासाः हे कपट ! एतानि नः क्षोभयन्ति ॥१०॥ किंच यदा त्वं व्रजात् पशून् चारयन् चलसि तदा ते पदं हे नाथ ! रजःकणैस्तृणाङ्कुरैश्च क्लिश्यति इति नो मनोऽस्वास्थ्यं प्राप्नोति ॥११॥ हे वीर ! त्वं सायंकाले कृष्णकुन्तलैर्व्याप्तं गोरजोभिः शोभितं मुखाब्जं

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ॥ विधिकरीरिमा वीरमुह्यतीरधरसीधुनाऽऽप्याययस्व नः ॥८॥ तव कथाऽमृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ॥ श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥९॥ प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम् ॥ रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥१०॥ चलसि यद्व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम् ॥ शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति ॥ ११ ॥ दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ॥ घनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥ प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ॥ चरणपङ्कजं शंतमं च ते रमण नः स्तनेष्वर्पयाऽऽधिहन् ॥ १३ ॥ सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ॥ इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥ अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् ॥ कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥ १५ ॥

नो मुहुर्दर्शयन् मनसि काममर्पयसि न तु सङ्गं ददासि । अतस्त्वं कपटः ॥१२॥ हे मनोव्याधिहन् ! प्रणतकामदं लक्ष्म्याऽर्चितं ते पदाब्जं नः स्तनेषु कामशान्तये अर्पय ॥१३॥ हे सखे ! रतिवृद्धिकरं सुस्वरवेणुना चुम्बितं तवाऽधरोष्ठामृतं नो देहि ॥१४॥ हे कृष्ण ! दिवसे यदा त्वं वनेऽटसि तदा त्वामपश्यन्तीनां नः क्षणार्धमपि युगवद्भवति । तथा तव श्रीमुखं पश्यन्तीनां नो दृशां यः पक्ष्मकृद्ब्रह्मा सोऽप्यज्ञ एव ॥१५॥

१ विस्तृतं यथा भवति तथा । २ सुखतमम् । ३ 'त्रुटि युगायते' इति क्वचित् । विभक्तिलोप आर्षः ।

सत्यस्त्वत्समीपं प्राप्ताः । हे शठ ! एवंभूताः स्त्रियो रात्रौ स्वयमागता-
तस्मात् हे अच्युत ! पतिपुत्रबान्धवादीन् हित्वा वयं तव गीतमोहिताः
स्त्वां विना कस्त्यजेत् ॥१६॥ किंच हे कृष्ण ! तव रहसि भाषणं हास्यमुखं प्रेमावलोकनं तथा लक्ष्मीस्थानं तव वक्षो दृष्ट्वाऽतिस्पृहा भवति मनश्च
मुह्यति ॥१७॥ हे सखे ! इयं तव प्रकटता व्रजवासिनां दुःखहन्त्री विश्वस्य मङ्गलरूपा । अतोऽस्माकमतिगोप्यं यदौषधं तत् कार्पण्यमकृत्वा
देहि ॥१८॥ हे प्रिय ! यत् तव सुकुमारं पादाब्जं वयं कठोरस्तनेषु मर्दनशंकया भीताः सत्यः शनैर्धारयेम तेन त्वं वनेऽटसि । अतस्तच्चर-

पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागताः ॥ गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्य-
जेन्निशि ॥ १६ ॥ रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ॥ बृहदुरःश्रियो वीक्ष्य धाम ते मुहुरति
स्पृहा मुह्यते मनः ॥ १७ ॥ व्रजवनौकसां व्यक्तिरंग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ॥ त्यज मनाक्[1] च नस्त्वत्स्पृ-
हात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥ यत् ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्क-
शेषु ॥ तेनाटवीमटसि तद् व्यथते न किंस्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां[2] नः ॥ १९ ॥ इति श्रीभागवते
महापुराणे दशमस्कन्धे पूर्वार्धे गोपिकागीतं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥ श्रीशुक उवाच ॥ इति गोप्यः प्रगा-
यन्त्यः प्रलपन्त्यश्च चित्रधा ॥ रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ १ ॥ तासामाविरभूच्छौरिः स्मयमान
मुखाम्बुजः ॥ पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥२॥ तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः ॥ उत्त-
स्थुर्युगपत् सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥

॥६९॥

णाब्जं सूक्ष्मपाषाणादिभिर्न व्यथेत किम् ? किन्तु व्यथेत ॥ तस्माद् नो धीर्मुह्यति ॥१९॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे
चूर्णिकायां गोपीगीतं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥ द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः ॥ तत्राविर्भूय गोपीस्ताः सान्त्वयामास मानयन्
॥ १ ॥ श्रीशुक उवाच ॥ एवं गोप्यः कृष्णदर्शनलालसाः अनेकधा गायन्त्यः सत्यो रुरुदुः ॥ १ ॥ तदा कृष्णः पीताम्बरधरः काममोह-
कस्तासां मध्ये आविर्बभूव ॥ २ ॥ तं प्रियं दृष्ट्वोत्फुल्लनेत्राः गोप्यो युगपदुत्तस्थुः करचरणादयः आगतं प्राणमिव ॥ ३ ॥

१ मनाक् ईषत् किमपि त्यज मुञ्च कार्पण्यमकृत्वा देहीत्यर्थः । २ भवानायुः जीवनं यासां तासाम्

तत्र काचित् कृष्णस्य हस्तकमले हस्तद्वयेन जगृहे काचित् तद्बाहुं स्कन्धे दधार ॥४॥ काचित् तस्य चर्वितं ताम्बूलं जग्राह । एका तच्चरणकमलं तप्तस्तनयोरधात् ॥५॥ एका भ्रुकुटिं वक्रीकृत्य कृष्णं कटाक्षैस्ताडयन्तीव ददर्श ॥६॥ अन्या तन्मुखं सेवमानाऽपि नातृप्यत् सन्तस्तच्चरणं यथा ॥७॥ काचिद् नेत्रद्वारेण कृष्णं हृदये नीत्वा नेत्रं निमील्यालिङ्ग्य योगीवानन्दव्याप्तास्ते॥८॥एवं सर्वास्ताः भगवद्दर्शनेन वियोगजं तापं जहुः

काचित् कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा ॥ काचिद् दधार तद्बाहुमंसे चन्दनभूषितम् ॥ ४ ॥ काचिदञ्जलिनाऽगृह्णात्तन्वी ताम्बूलचर्वितम् ॥ एका तदङ्घ्रिकमलं संतप्ता स्तनयोरधात् ॥ ५ ॥ एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला ॥ घ्नन्तीवैक्षत् कटाक्षेपैः संदष्टदशनच्छदा ॥६॥ अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम् ॥ आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा ॥ ७ ॥ तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च ॥ पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसंप्लुता ॥ ८ ॥ सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ॥ जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ॥९॥ ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ॥ व्यरोचताधिकं तात पुरुषश्शक्तिभिर्यथा॥ १० ॥ ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ॥ विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥११॥ शरच्चन्द्रांशुसंदोहध्वस्तदोषातमः शिवम् ॥ कृष्णाया हस्ततरलाऽऽचितकोमलवालुकम् ॥ १२ ॥ तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः ॥ स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे ॥१३॥ तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदिकल्पितासनः ॥ चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥ १४ ॥

॥९॥ततो गतशोकाभिर्गोपीभिर्वेष्टितःकृष्णोऽधिकं बभौ यथा पुरुषः सत्त्वादिशक्तिभिर्भाति॥१०॥ततःकृष्णस्ताःआदाय कालिन्द्यास्तटं प्रविश्य बभौ ॥११॥ कथंभूतं तटं शरच्चन्द्रकिरणैर्ध्वस्तरात्रिगततिमिरं सुखकरं नदीतरंगैरास्तृतवालुकम् ॥१२॥ ततश्च ता गोप्यःपूर्णकामाःसत्यः स्वकुचकुङ्कुमाङ्कितैरुत्तरीयवस्त्रैरन्तर्यामिणे कृष्णायाऽऽसनं रचयामासुः ॥१३॥ तत्रोपविष्टः कृष्णो गोपीसभागतः सन् ताभिः संमानितः

---

१ 'रूषितम्' इ० पा० । २ सुषुप्तिसाक्षिणम् । ३ सुरभ्यनिलात् षट्पदाः भ्रमराः यस्मिन्निति विग्रहः । ४ कालिन्द्याः । ५ योगेश्वरैः अन्तर्हृदि स्वहृदये कल्पितमासनं यस्य सः । ६ त्रैलोक्ये लक्ष्म्या एकपदम् । संधिरार्षः ।

शुशुभे ॥१४॥ ततो गोप्यः श्रीकृष्णं सत्कृत्य हास्यलीलेक्षणयुक्तया भ्रुकुट्योपलक्षिताः सत्यः ईषत्कुपिता बभाषिरे ॥१५॥ गोप्य ऊचुः ॥ हे
कृष्ण ! केचिद् भजतस्तद्भजनानुसारेण भजन्ति केचिद् भजतोऽपि तद्भजनानपेक्ष भजन्ति अन्ये तु नोभयान् एतत् कथमिति ब्रूहि ॥१६॥
श्रीभगवानुवाच ॥ हे सख्यः ! ये मिथो भजन्ति ते स्वार्थं तत्र सौहृदं न धर्मश्च न ॥१७॥ अभजतो ये भजन्ति ते करुणाः । तत्र निरपवादो
धर्मोऽस्ति ॥१८॥ केचिद् भजतोऽपि न भजन्ति अभजतः कुतः । ते तु चतुर्विधाः आत्मारामाः, आप्तकामाः, मूढाः, अतिकठिनाः । तत्राहं न

सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा ॥ संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥१५॥ गोप्य ऊचुः॥भजतोऽनुभजन्त्येक एक एतद्विपर्ययम्।नोभयांश्च भजन्त्यन्य एतन्नो ब्रूहि साधु भोः ॥१६॥
श्रीभगवानुवाच॥मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते।न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥१७॥
भजन्त्यभजतो ये वै करुणाः पितरो यथा॥ धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥१८॥ भजतोऽपि न वै केचिद् भजन्त्यभजतः कुतः ॥ आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥१९॥ नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये ॥यथाऽधनो लब्धधने विनष्टे तच्चिन्तयाऽन्यन्निभृतो न वेद ॥ २० ॥ एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः ॥ मया परोक्षं भजता तिरोहितं माऽसूयितुं मार्हथ तत्प्रियं प्रियाः ॥ २१ ॥ न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः ॥ या माऽभजन् दुर्जयगेहशृङ्खलाः संवृश्च्य तद् वः प्रतियातु साधुना ॥ २२ ॥ इति श्रीभा० महा० दश० पूर्वार्द्धे हरिकृतविरहितगोपीसान्त्वनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

कोऽपि किंतु दयालुः ॥१९॥ हे सख्यः ! अहं भजतोऽपि जन्तून् न भजामि । कुतः । भजतां निरन्तरध्यानप्रवृत्त्यर्थं यथा अधनो लब्धधने
नष्टे तच्चिंतयाऽन्यद् न वेत्ति तद्वत् ॥२०॥ एवं मदर्थं त्यक्तलोकवेदज्ञातीनां युष्माकमनुवृत्तये मया युष्माकं परोक्षं युष्मत्प्रेमालापान् शृण्वतैव
तिरोहितम् । अतो हे प्रियाः ! प्रियं मां दोषरूपेण द्रष्टुं न योग्याः ॥२१॥ किंच हे प्रियाः ! अखण्डसंयोगिनां वश्चिरकालेनापि प्रत्युपकारं
कर्तुं न शक्नोमि याः दुर्जयगृहशृङ्खलाश्छित्त्वा मामभजन् ॥२२॥ इति श्रीभा० द० चू० पू० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

१ संमर्दनेन । २ एते उपकारमप्युपकारतया न भजन्तीति भावः । ३ माम् । ४ युष्माकमेव साधुना साधुकृत्येन तत् साधुकृत्यं भवतु यतो बहुषु प्रेमनिष्ठतया नैकनिष्ठं मच्चित्तम् । अतो युष्मत्सौशील्येनैव ममानृण्यं न तु मत्कृतप्रत्युपकारेणेत्यर्थः ।

त्रयस्त्रिंशे ततो गोपीमण्डलीमध्यगो हरिः ॥ प्रियास्ता रमयामास ह्लादिनीवनकेलिभिः॥१॥श्रीशुक उवाच ॥ हे नृप ! एवं कृष्णवचः श्रुत्वा गोप्यो वियोगजं तापं जहुः ॥ १ ॥ तत्र गोविन्दोन्योऽन्याऽऽबद्धबाहुभिः स्त्रीरत्नैः सह रासक्रीडां प्रारभत ॥ २ ॥ ततो मण्डलत्वेन स्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णेन रासोत्सवः सम्प्रवृत्तः । यं गोप्यः स्वनिकटं मामेवाऽऽलिङ्गितवानिति मन्येरन् । तावत् सस्त्रीणां देवानां विमान-

श्रीशुक उवाच ॥ इत्थं भगवतो गोप्यः श्रुत्वा वाचा सुपेशलाः ॥ जहुर्विरहजं तापं तदङ्गोपचिताशिषः[1] ॥ १ ॥
तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ॥ स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याऽऽबद्धबाहुभिः ॥ २ ॥ रासोत्सवः संप्रवृत्तो
गोपीमण्डलमण्डितः ॥ योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥३॥
यं मन्येरन् नभस्तावद् विमानशतसंकुलम् ॥ दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥ ४ ॥ ततो दुन्दुभयो
नेदुर्निपेतुः पुष्पवृष्टयः ॥ जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥५॥ वलयानां नूपुराणां किङ्किणीनां च योषिताम्॥
सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥ ६ ॥ तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः ॥ मध्ये मणीनां हैमानां
महामरकतो यथा ॥ ७ ॥ पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ॥
स्विद्यन्मुख्यः कबररशनाग्रन्थयः[2] कृष्णवध्वो गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥

शतसंकुलं नभो बभूव ॥३॥४॥ तदा दुन्दुभयो नेदुः । पुष्पवृष्टयः पेतुः । सस्त्रीकाः गन्धर्वास्तद्यशो जगुः ॥५॥ तदा स्त्रीणां वलयनूपुरकिङ्किणीनां शब्दो रासमण्डले तुमुलो जातः ॥ ६ ॥ तत्र ताभिः कृष्णः स्वर्णमणिमध्ये नीलमणिरिव शुशुभे ॥७॥ तथा पादन्यासैर्हस्तचालनैर्हास्य युक्तभ्रूविलासैर्भज्यमानमध्यैश्चलत्कुचपटैः कुण्डलैश्च सस्वेदमुख्यो गोप्यः कृष्णेन मेघसमूहे विद्युल्लता इव विरेजुः ॥ ८ ॥

---

१ उपचिताः समृद्धाः आशिषो यासां ताः । २. कबरेषु रशनासु च ग्रन्थयो वृढग्रन्थयोर्यासां ताः ।

ताः नृत्यमानाः रतिप्रियाः सत्यः उच्चैर्जगुः । यासां गीतेन विश्वं व्याप्तम् ॥ ९ ॥ तत्र काचित् कृष्णेन समं स्वरजातीरुन्निन्ये । ततस्ते साधु साध्विति पूजिता सती तदेव ध्रुवाख्यतालं विशेषेण पुनरुन्निन्ये । कृष्णस्तस्या मानं चक्रे ॥ १० ॥ काचिद् रासपरिश्रान्ता कृष्णस्य स्कन्धं बाहुना जग्राह ॥११॥ एका स्कन्धगतं बाहुं चन्दनाऽऽलिप्तमाघ्राय हृष्टरोमा चुचुम्ब ॥१२॥ कस्याश्चिद् गण्डे गण्डं संदधत्याः कृष्णस्ताम्बूलं चर्वितं ददौ ॥१३॥ काचिद् नृत्यती श्रान्ता सती कृष्णहस्तकमलं स्तनयोरधात् ॥१४॥ ततो गोप्यः कृष्णं कान्तं लब्ध्वा कृष्णहस्ताभ्यां

उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः ॥ कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥ काचित् समं मुकुन्देन स्वरजातीरमिश्रिताः ॥ उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति ॥ तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ ॥१०॥ काचिद् रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ॥ जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका ॥ ११ ॥ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ॥ चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १२ ॥ कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम् ॥ गण्डे गण्डं सन्दधत्या अदात्ताम्बूलचर्वितम् ॥ १३ ॥ नृत्यन्ती गायती काऽपि कूजन्नूपुरमेखला ॥ पार्श्वस्थाऽच्युतहस्ताब्जं श्रान्ताऽधात् स्तनयोः शिवम् ॥ १४ ॥ गोप्यो लब्ध्वाऽच्युतं कान्तं श्रिय एकान्तवल्लभम् ॥ गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥ १५ ॥ कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ॥ गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥ एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ॥ रेमे रमेशो व्रजसुन्दरीभिर्यथाऽर्भकः स्वप्रतिबिम्बविभ्रमः ॥ १७ ॥

गृहीतकण्ठ्यो गानं कृत्वा चिक्रीडिरे॥१५॥ततो गोप्यः कर्णोत्पलादिभिर्मुखेषु शोभा यासां ताः गलितपुष्पमालाः सत्यो वलयनूपुरघोषरूपवाद्यैः राससभायां भ्रमराः गायकाः यस्यां तस्यां भगवता समं ननृतुः ॥१६॥ एवं भगवानप्यालिङ्गनकरस्पर्शाऽवलोकनविलासहासैर्गोपीभिः सह रेमे यथा बालः स्वप्रतिबिम्बैः ॥ १७ ॥



१ कान्तिरित्यर्थः । २ आवात्, इ० पा० । ३ कर्णोत्पलैरलकविटकैः अलकालङ्कृतैः कपोलैः घर्मैश्च वक्त्रेषु श्रीर्यासां ताः । ४ स्वप्रतिबिम्बैर्विभ्रमः क्रीडा यस्य सः ।

गोप्यस्तदङ्गसंगहर्षेण व्याप्तेन्द्रियाः सत्यः केशान् वस्त्राणि कुचपट्टिकां वा धर्तुं न समर्थाः बभूवुः ॥ १८ ॥ ततः एवं कृष्णक्रीडितं दृष्ट्वा कामार्दिताः खेचरस्त्रियो मुमुहुः । चन्द्रोऽपि सगणः कामार्दितः सन् विस्मितो बभूव । अनेनैतत् सूचितम् । शशाङ्केन विस्मितेन सर्वेऽपि ग्रहास्तत्रतत्रैव तस्थुः । ततश्चातिदीर्घासु रात्रिषु यथासुखं विजह्रुरिति ॥ १९ ॥ ततः कृष्णो यावत्यो गोपांगनास्तावन्ति रूपाणि कृत्वा ताभिः सह रेमे ॥ २० ॥ ततः क्रीडया श्रमितानां गोपीनां मुखानि कृष्णः सुखकरेण पाणिना प्रामृजत् ॥ २१ ॥ ततो गोप्योऽमृतायित-

तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः केशान् दुकूलं कुचपट्टिकां वा ॥ नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ॥ १८ ॥ कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ॥ कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ ॥१९॥ कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः ॥ रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥ तासामतिविहारेण श्रान्तानां वदनानि सः ॥ प्रामृजत् करुणः प्रेम्णा शंतमेनाङ्ग पाणिना ॥ २१ ॥ गोप्यः स्फुरत्पुरटकुण्डल-कुन्तलत्विड्गण्डश्रिया सुधितहासनिरीक्षणेन ॥ मानं दधत्यऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥ ताभिर्युतः श्रममपोहितुमङ्गसृष्टस्रजः स कुचकुङ्कुमरञ्जितायाः ॥ गन्धर्वपालिभिरनुद्रुत आविशद् वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ २३ ॥ सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग ॥ वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥ २४ ॥ ततश्च कृष्णोपवने जल-स्थलप्रसूनगन्धानिलजुष्टदिक्तटे ॥ चचार भृङ्गप्रमदागणावृतो यथा मदच्युद् द्विरदः करेणुभिः ॥ २५ ॥

हास्यावलोकनेन कृष्णस्य संमानं कुर्वत्यस्तस्य कर्माणि जगुः ॥ २२ ॥ अथ जलक्रीडामाह । ततः कृष्णः श्रमं दूरीकर्तुं ताभिः सहोदकं मालासम्बन्धिभिर्भ्रमरैरनुगतः सन् विवेश गजीभिर्गज इव ॥ २३ ॥ स कृष्णोऽतिशयेन गोपीभिः परिषिच्यमानः पुष्पवृष्टिं कुर्वद्भिर्देवैरीड्यमानः उदके रेमे ॥ २४ ॥ अथ वनक्रीडामाह । ततश्च कृष्णो यमुनायाः उपवने भृङ्गाणां च गणैर्वेष्टितः सन् गजीभिर्गज इव चचार ॥ २५ ॥

१ सुवर्णस्येत्यर्थः । २ अङ्गसंगेन घृष्टायाः मालायाः । ३ गन्धर्वपतय इव गायन्तो येऽलयस्तैः ।

एवं कृष्णश्चन्द्रकिरणैः शोभिताः सर्वाः निशाः आत्मन्यस्खलितधातुः सन् सेवितवान् ॥२६॥ राजोवाच ॥ हे ब्रह्मन् । भगवान् धर्मस्थाप-
नार्थं दुष्टानां नाशार्थमवतीर्णः ॥ २७ ॥ तथा धर्ममार्गाणां वक्ता कर्ताऽपि सन् कथं परदाराभिमर्शनं प्रत्यक्षमाचरत् ॥ २८ ॥ किंच पूर्ण-
कामोऽपि स निन्द्यं कर्म कृतवान्। एतं नः संशयं छिन्धि ॥ २९ ॥ श्रीशुक उवाच । हे नृप ! महतां धर्मव्यतिक्रमः साहसं च दृष्टम्। तत्
तेषां तेजस्विनां दोषाय न स्यात् सर्वभुजो वह्नेर्यथा ॥ ३० ॥ अतः इदं महाकर्मासमर्थो मनसापि नाचरेत्, यथा शिवं विनाऽन्यो विषं भक्ष-

एवं शशांकांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः ॥ सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्य-
कथारसाश्रयाः ॥ २६ ॥ राजोवाच ॥ संस्थापनाय धर्मस्य प्रशमायेतरस्य च ॥ अवतीर्णो हि भगवानंशेन जगदी
श्वरः ॥२७॥ स कथं धर्मसेतूनां वक्ता कर्ताऽभिरक्षिता ॥ प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनम् ॥ २८ ॥ आप्त-
कामो यदुपतिः कृतवान् वै जुगुप्सितम् ॥ किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥ २९ ॥ श्रीशुक उवाच ॥
धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥ तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥नैतत् समाचरेज्जातु
मनसाऽपि ह्यनीश्वरः ॥ विनश्यत्याचरन् मौढ्याद् यथाऽरुद्रोऽब्धिजं विषम् ॥३१॥ ईश्वराणां वचः सत्यं तथैवाच-
रितं क्वचित् ॥ तेषां यत्स्ववचो युक्तं बुद्धिमांस्तत् समाचरेत् ॥ ३२ ॥ कुशलाचरितेनैषामिह स्वार्थो न विद्यते ॥
विपर्ययेण वाऽनर्थो निरहंकारिणां प्रभो ॥ ३३ ॥ किमुताखिलसत्त्वानां तिर्यङ्मर्त्य दिवौकसाम् ॥ ईशितुश्चेशित-
व्यानां कुशलाकुशलान्वयः ॥ ३४ ॥

यन् म्रियेत ॥३१॥ किं च महतां वचः सत्यम्। अतस्तैर्वचसा यदुक्तं तदेवाचरेत् ॥ ३२ ॥ एषां महतां कुशलाचरितेन स्वार्थो न विपर्यये-
णानर्थो न किंतु प्रारब्धकर्म नाशमात्रमेव तेषां कृत्यं नान्यत् ॥ ३३ ॥ अतः सर्वप्राणिनां नियंतुर्हरेः कुशलाकुशलाभ्यां संबन्धो नेति किं
पुनर्वक्तव्यम् ॥ ३४ ॥



१ शरदि भवाः काव्येषु कथ्यमानाः ये रसास्तेषामाश्रयभूताः निशाविशेषणमेतत् । २ अधर्मस्य । ३ कोऽभिप्रायो यस्येति तथा ।

किच यत्पादपङ्कजपरागनिषेवणेन तृप्ताः मुनयो न बध्यमानाः सन्तः सर्वत्र स्वेच्छया चरन्ति तस्येच्छया गृहीतवपुषो बन्धः कुत एव ॥
॥ ३५ ॥ हे नृप ! गोपीनां सर्वदेहिनां च योऽन्तश्चरति ॥ ३६ ॥ स मानुषं देहं भूतानामनुग्रहार्थमास्थितः सन् तादृशीः क्रीडाः
भजते याः स्मृत्वा नरस्तत्परो भवेत् ॥३७॥ तथा व्रजौकसः स्वस्वदारान् स्वपार्श्वस्थान् मत्वा तन्मायामोहिताः सन्तः कृष्णाय नासूयन्
॥ ३८ ॥ ततो गोप्यः ब्राह्मे मुहूर्ते प्राप्ते कृष्णाज्ञयाऽनिच्छन्त्योऽपि गृहान् ययुः ॥ ३९ ॥ इदं व्रजस्त्रीभिः सह विष्णोः क्रीडितं यः शृणुयाद्वर्ण-

यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुनाखिलकर्मबन्धाः ॥ स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छ-
याऽऽत्तवपुषः कुत एव बन्धः ॥ ३५ ॥ गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ॥ योऽन्तश्चरति सोऽध्यक्षः क्रीड-
नेनेह देहभाक् ॥ ३६ ॥ अनुग्रहाय भूतानां मानुषं देहमास्थितः ॥ भजते तादृशीः क्रीडा याः स्मृत्वा तत्परो
भवेत् ॥३७॥ नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ॥ मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ॥
॥ ३८ ॥ ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ॥अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ॥ ३९ ॥ विक्री-
डितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः ॥ भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमा-
श्वपहिनोत्यचिरेण धीरः ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे रासक्रीडावर्णनं नाम त्रयस्त्रिंशो
ऽध्यायः ॥ ३३ ॥ श्रीशुक उवाच ॥ एकदा देवयात्रायां गोपाला जातकौतुकाः ॥ अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बि-
कावनम् ॥१॥ तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् ॥ आनर्चुरर्हणैर्भक्त्या देवीं च नृपं तेऽम्बिकाम् ॥ २ ॥

येच्च स हरौ भक्तिं प्राप्य हृद्रोगं काममाशु त्यजति ॥४०॥ इति श्रीभागवते महापुराणे दशमस्कन्धे चूर्णिकायां पूर्वार्धे त्रयस्त्रिंशोऽध्यायः ॥
॥ ३३ ॥ चतुस्त्रिंशेऽहिना ग्रस्तं नन्दं हरिरमूमुचत् ॥ विद्याध्रं चाङ्गिरश्शापाच्छङ्खचूडं तथाऽवधीत् ॥ १ ॥ श्रीशुक उवाच ॥ एकदा
गोपालाः शकटैर्देवयात्रायामम्बिकावनं ययुः ॥ १ ॥ तत्र सरस्वत्यां स्नात्वा शिवमम्बिकां चानर्चुः ॥ २ ॥

---

१ बुद्ध्यादिसाक्षी । २ 'भक्तानाम्' इ० पा० । ३ नृपते इ.पा. ।

ततो गोपाः ब्राह्मणेभ्यो गोसुवर्णवस्त्रान्नानि देवः प्रीयतामित्युक्त्वा ददुः ॥ ३ ॥ ततस्तत्र जलं प्राश्य धृतव्रताः नन्दादयस्तां रात्रिं नदीतीरे न्यवसन् ॥ ४ ॥ तस्मिन् वने बुभुक्षितोऽजगरः शयानं नन्दं जग्रास ॥ ५ ॥ स नन्दो हे कृष्ण ! हे कृष्ण ! हे तात ! सर्पो मां ग्रसते शरणागतं मां मोचयेत्येवमाचुक्रोश ॥ ६ ॥ ततो गोपाः नन्दाक्रोशं श्रुत्वोत्थाय सर्पग्रस्तं नन्दं दृष्ट्वा ज्वलितकाष्ठैः सर्पं ताडयामासुः ॥ ७ ॥ तैस्ताडितोऽपि सर्पो नन्दं नामुञ्चत् । तदा कृष्णः एत्य पदा तमस्पृशत् ॥ ८ ॥ सर्पो भगवत्पादस्पर्शाद्गतपापः सर्पवपुर्हित्वा विद्याधरपूजितं रूपं प्राप ॥ ९ ॥ तं हेममालिनं कृतप्रणामं कृष्णः पप्रच्छ ॥ १० ॥ हे सर्प ! अद्भुतदर्शनस्त्वं कः ? कथमेतां दुर्गतिं प्रापितः ॥११॥ सर्प उवाच ॥ हे कृष्ण ! अहं 'सुदर्शन' इति कश्चिद्विद्याधरः स्वरूपसंपत्त्या युतः सन् विमानेन दिशोऽचरम् ॥ १२ ॥ यदा कुरूपानङ्गिरस ऋषीन् दृष्ट्वा रूपेण गर्वितस्तान् हसितवान् तदा तैरिमां योनिं प्रापितः ॥ १३ ॥

गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः ॥ ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥ ३ ॥ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः ॥ रजनीं तां महाभागा नन्दसुनन्दकादयः ॥ ४ ॥ कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः ॥ यदृच्छयाऽऽगतो नन्दं शयानमुरगोऽग्रसीत् ॥ ५ ॥ स चुक्रोशाहिना ग्रस्तः कृष्ण कृष्ण महानयम् ॥ सर्पो मां ग्रसते तात प्रपन्नं परिमोचय ॥ ६ ॥ तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः ॥ ग्रस्तं च दृष्ट्वा विभ्रान्ताः सर्पं विव्यधुरुल्मुकैः ॥ ७ ॥ आलातैर्हन्यमानोऽपि नामुञ्चत् तमुरङ्गमः ॥ तमस्पृशत् पदाऽभ्येत्य भगवान् सात्वतां पतिः ॥ ८ ॥ स वै भगवतः श्रीमत्पादस्पर्शहताशुभः ॥ भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ ९ ॥ तमपृच्छद्धृषीकेशः प्रणतं समुपस्थितम् ॥ दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥ को भवान् परया लक्ष्म्या रोचतेऽद्भुतदर्शनः ॥ कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥११॥ सर्प उवाच ॥ अहं विद्याधरः कश्चित् सुदर्शन इति श्रुतः ॥ श्रिया स्वरूपसंपत्त्या विमानेनाचरं दिशः ॥१२॥ ऋषीन् विरूपाङ्गिरसःप्राहसंरूपदर्पितः ॥ तैरिमां प्रापितो योनिं प्रलब्धैः[1] स्वेन पाप्मना ॥ १३ ॥

१ उपहसितैः ।

॥७३॥

दयालुभिस्तैः शापो मेऽनुग्रहायैव कृतः, यतः शापात् लोकगुरुणा त्वया पदा स्पृष्टो गतपापो जातः ॥१४॥ एवंभूतं त्वां स्वलोकं गन्तुमनुज्ञां याचे ॥ १५ ॥ हे कृष्ण ! तव शरणं गतोऽस्मि । गन्तुमाज्ञां मे देहि ॥१६॥ हे अच्युत ! तव दर्शनाद् ब्रह्मशापमुक्तोऽहं, यन्नाम गृह्णन् पुमान् श्रोतॄनात्मानं च सद्यः पुनाति ॥१७॥ किं पुनस्तव पदा स्पृष्टः । एवं कृष्णमुक्त्वा प्रदक्षिणं नमस्कारं च कृत्वा सुदर्शनः स्वर्गं गतः । नन्दश्च

शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः ॥ यदहं लोकगुरुणा पदा स्पृष्टो हताशुभः ॥ १४ ॥ तं त्वाऽहं भवभीतानां प्रपन्नानां भयापहम् ॥आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ॥१५॥ प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते ॥ अनुजानीहिमां देव सर्वलोकेश्वरेश्वर ॥ १६ ॥ ब्रह्मदण्डाद् विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात् ॥ यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च ॥१७॥ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥ इत्यानुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च ॥ सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः ॥ १८ ॥ निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतस-स्ततः ॥ समाप्य तस्मिन् नियमं पुनर्व्रजं नृपाऽऽययुस्तत् कथयन्त आदृताः ॥१९॥ कदाचिदथ गोविन्दो रामश्चा-द्भुतविक्रमः ॥ विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥२०॥ उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः ॥ स्वलं-कृतानुलिप्तांगौ स्रग्विणौ विरजोऽम्बरौ ॥२१॥ निशामुखं मानयन्तावुदितोडुपतारकम् ॥ मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥ जगतुः सर्वभूतानां मनःश्रवणमङ्गलम् ॥ तौ कल्पयन्तौ युगपत् स्वरमण्डलमूर्च्छितम् ॥२३॥ गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन् नृप ॥ स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥ २४ ॥

दुःखात् मुक्तः ॥ १८ ॥ ततो व्रजवासिनः एवं कृष्णवैभवं दृष्ट्वा तत्र नियमं समाप्य पुनर्व्रजं ययुः ॥१९॥ अथैकदा रामकृष्णौ स्त्रीणां मध्यगौ सन्तौ वने रात्र्यां विजह्रतुः ॥ २० ॥ तौ स्त्रीजनैरुपगीयमानौ मालाशोभिनौ ॥२१॥ उदितचन्द्रतारकं निशामुखं सत्कुर्वन्तौ सन्तौ सर्वभूतानां मनश्श्रवणमङ्गलं यथा भवति तथाऽगायताम् ॥ २२ ॥ २३ ॥ तद्गीतं श्रुत्वा गोप्यो गतवस्त्रं देहं नाविदन् ॥ २४ ॥

१ हे दुःखनाशन । २ 'स्खलत्' इ० पा० ।

एवं क्रीडतोर्गायतोः सतोस्तावत् कुबेरानुचरः शङ्खचूडः तत्राजगाम ॥ २५ ॥ ततो हे नृप ! तयोः पश्यतोः सतोः क्रोशन्तं स्त्रीजनं स निर्भयःसन्
हठात्प्रेरयामास ॥२६॥ तदा हे कृष्ण ! हे रामेति क्रोशन्तं स्त्रीगणं दृष्ट्वा तावन्वधावताम् ॥२७॥ कथं भूतौ तौ ? मा भैष्टेत्यभयशब्दौ शालहस्तौ
सन्तौ तं गुह्यकाधमं शीघ्रं प्रापतुः ॥२८॥ शंखचूडः कालमृत्यू इव प्राप्तौ दृष्ट्वा स्त्रीगणं त्यक्त्वा जीवितेच्छयाऽग्रे प्राद्रवत् ॥ २९ ॥ स गुह्यको
यत्र यत्र धावति तत्र तत्र श्रीकृष्णस्तच्छिरोरत्नं ग्रहीतुमिच्छन् धावति । बलस्तु स्त्रियो रक्षन् तत्रैव तस्थौ ॥ ३० ॥ कृष्णः शङ्खचूडस्य

एवं विक्रीडतोः स्वैरं गायतोः संप्रमत्तवत् ॥ शंखचूड इति ख्यातो धनदानुचरोऽभ्यगात् ॥ २५ ॥ तयोर्निरीक्षतो राजंस्तन्नाथं[1] प्रमदाजनम् ॥ क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥ २६ ॥ क्रोशन्तं कृष्ण रामेति विलोक्य स्वपरिग्रहम् ॥ यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥ मा भैष्टेत्यभयाऽऽरावौ शालहस्तौ तरस्विनौ ॥ आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥ २८ ॥ स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ॥ विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया ॥ २९ ॥ तमन्वधावद् गोविन्दो यत्रयत्र स धावति ॥ जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन् स्त्रियो बलः ॥३०॥ अविदूर इवाभ्येत्यशिरस्तस्य दुरात्मनः ॥ जहार मुष्टिनैवाङ्ग सहचूडामणिं विभुः ॥ ३१ ॥ शंखचूडं निहत्यैवं मणिमादाय भास्वरम् ॥ अग्रजायाददत् प्रीत्या पश्यन्तीनां च योषिताम् ॥ ३२ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे शंखचूडवधो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ श्रीशुक उवाच ॥ गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ॥ कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥

समीपं गत्वा मुष्टिना मस्तकेन सह चूडामणिं जहार ॥३१॥ एवं शङ्खचूडं हत्वा मणिं गृहीत्वा सर्वस्त्रीणां सतीनां पश्यंतिनां बलरामाय ददौ ॥३२॥
इति श्रीभा०द०पू०चू० शङ्खचूडवधोनाम चतुस्त्रिंशोऽध्यायः ॥३४॥ पञ्चत्रिंशे वनं याते कृष्णे गोकुलयोषितः ॥ युग्मश्लोकानुगीतेन निन्युर्दुःखेन
वासरान् ॥१॥ श्रीशुक उवाच हे नृप ! गोप्यः एवं रात्रिषु कृष्णेन सह क्रीडित्वा दिवा कृष्णे वनं गते सति कृष्णलीलाः गायन्त्यो दुःखेन

१ सः कृष्णो नाथो यस्य तम् ।

दिवसान् निन्युः ॥१॥ गोप्यः ऊचुः॥हे गोप्यः ! वामबाहौ कृतवामकपोलः कृष्णोऽधरोष्ठे स्थापितं कोमलाङ्गुलिभिराश्रितसप्तस्वरच्छिद्रं वेणुं यदा वादयति ॥२॥ तदा तच्छ्रुत्वा सिद्धस्त्रियः सिद्धैः सह वर्तमाना अपि कामबाणेभ्योऽर्दितचित्ताः सत्यो मोहं प्रापुः यतो विस्मृतनीव्यः। (एवं भूतस्य कृष्णस्य वियोगं कथं सहामहे)॥३॥ हे अबलाः ! इदमाश्चर्यं शृणुत। अयं नन्दसूनुर्दुःखितजनानां सुखकरो यदा वेणुनादं करोति ॥४॥ तदा व्रजवृषाः मृगगावो वाद्येन हृतचित्ताः दन्तैर्दष्टग्रासाः उत्तम्भितकर्णाः लिखितचित्रमिवाऽऽसन् ॥५॥ हे सखि! यदा सबलः कृष्णो

गोप्य ऊचुः ॥ वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् ॥ कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुंदः ॥ २ ॥ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ॥ काममार्गणसमर्दितचित्ताः कश्मलं ययुरपस्मृतनीव्यः॥ ३ ॥ हन्त चित्रमबलाः शृणुतेदं हारहास[1] उरसि स्थिरविद्युत्[2] ॥ नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥ वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ॥ दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥५॥ बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः ॥ कर्हिचित्सबल आलि सगोपैर्गाः समाह्वयति यत्र मुकुंदः ॥ ६ ॥ तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ॥ स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥ ७ ॥ अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ॥ वनचरो गिरितटेषु चरन्तीर्वेणुनाह्वयति गाः स यदा हि॥८॥वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः ॥ प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥

मयूरपिच्छधातुपल्लवैः कृतमल्लवेषः सन् वेणुनादेन गा आह्वयति ॥६॥ तदा भग्नगतयो नद्यो वायुना नीतं तत्पादाब्जरजो वयमिव स्पृहयन्त्यः स्थिरोदकाः भवन्ति (तस्य विरहं कथं सहेमहि) ॥७॥ हे सखि ! हरिर्गोपैर्वर्णितवीर्यो गिरितटेषु चरन्तीर्गाः यदा वेणुना समाह्वयति ॥८॥ तदाः वृक्षाः वनलताश्च स्वस्मिन् विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः सत्यो मधुधाराः ववृषुः ।(तस्य विरहं कथं सहेमहि) ॥९॥

१ हार इव हासो यस्य सः इत्यादयं । २ स्थिरा विद्युदिव लक्ष्मीः यस्य सः ।

हे सखि!यदा सुन्दराणां मध्ये मुख्यः श्रीकृष्णो ऽमराणामुच्चैर्गीतमादरेण शृण्वन् वेणुं धारयति॥१०॥तदा सरोवरे सारसहंसपक्षिणो गीतेन हृत-चित्ताः सन्तः एत्य मौनं धृत्वा हरिमुपासते । (तस्य वियोगं कथं सहेमहि)॥११॥हे व्रजदेव्यः! यदा सरामः कृष्णो गिरितटेषु वर्तमानः सन् विश्वं हर्षयन् वेणुनादेन विश्वं पूरयति ॥१२॥ तदा मेघः कृष्णस्याऽतिक्रमणशंकितचेताः मन्दं मन्दं गर्जति तथा पुष्पैर्वर्षति छायया छत्रं च विदधाति (तस्य विरहं कथं सहेमहि)॥१३॥ हे यशोदे !तव सुतो नानागोपक्रीडासु निपुणः सन् यदाऽधरोष्ठेऽर्पितवेणुर्निषादर्षभादि स्वरजाती-

दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तैः॥अलिकुलैरलघुगीतमभीष्टमाद्रियन् यर्हि संधितवेणुः१०॥सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ॥ हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥ ११ ॥ सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ॥ हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥१२॥ महदति-क्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः॥सुहृदमभ्यवर्षत् सुमनोभिश्छायया च विदधत् प्रतपत्रम् ॥१३॥ विविध गोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः ॥ तव सुतस्सति यदाऽधरबिम्बे दत्तवेणुरनयत्स्वरजातीः॥१४॥संवन-शस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः॥ कवय आनतकंधरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः॥१५॥ निजपदा-ब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः॥व्रजभुवश्शमयन् खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥ १६ ॥ व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ॥ कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥ १७ ॥ मणिधरः क्वचिदागणयन् गा मालया दयितगन्धतुलस्याः ॥ प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥

रुन्नीतवान् ॥१४॥ तदा तच्छ्रुत्वा ब्रह्मशिवेन्द्रमुख्याःदेवाः नम्रकण्ठचित्ताः सन्तोऽनिश्चिततद्भेदाः मोहं ययुः (तद्वियोगं कथं सहेमहि) ॥१५॥ हे सखि ! श्रीकृष्णो ध्वजादिचिह्नितैः स्वचरणकमलैर्व्रजभुवो गवादिखुराक्रमणव्यथां शमयन् यदा वेणुं वादयन् सन् व्रजति॥१६॥ तदा तद्वि-लोकनेनार्पितकामवेगाः वयं वृक्षगतिं गताः सत्यो मोहेन केशबन्धं वस्त्रं वा न विदामः । (तस्य वियोगं कथं सहेमहि)॥१७॥हे अबलाः ! श्रीहरिः

१ निजेव शिक्षा यासु ताः।स्वोत्प्रेक्षिताः न त्वन्यतः श्रुता इत्यर्थः । २ मन्द्रमध्यमतारभेदेन । ३ चिह्नैः । ४ वर्ष्मणा देहेन धुर्यः स्थूलः—गजः—तद्वद्गतिर्यस्य सः ।

क्वचिद् देशे गोगणनार्थं ग्रथितमणिमालाधरः सन् गोपस्य स्कन्धे भुजं कृत्वा यदाऽगायत ॥१८॥ तदा वेणुनादेन हृतचित्ताः कृष्णसारकुटुम्बिन्यो हरिण्यो वयमिव त्यक्तगृहाशाः सत्यः कृष्णाद् न न्यवर्तन्त । (तद्वियोगं का सहेत) ॥१९॥ हे सखि ! नन्दसूनुर्गोपगोधनवेष्टितो यदा यमुनायां क्रीडितवान् ॥२०॥ तदा वायुः सुगन्धशीतलस्पर्शेन तं संमानयन् वाति । किंच तदा गन्धर्वादिगणाः वाद्यगीतपुष्पवर्षादिभिः समन्तादुपासत । (तस्य विरहं कथं सहेमहि) ॥२१॥ हे सखि ! यदा व्रजगवां हितकृत् मार्गे वृद्धैर्ब्रह्मादिभिर्वन्दितचरणः सायंकाले

क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः । गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ ॥१९॥ कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् । नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥२०॥ मन्दवायुरनुवात्यनुकूलं मानयन् मलयजस्पर्शेन । बन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥ वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः । कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः ॥२२॥ उत्सवं श्रमरुचाऽपि दृशीनामुन्नयन् खुररजश्छुरितस्रक् । दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥ मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली । बदरपाण्डुवदनो मृदुगण्डं मण्डयन्कनककुंडललक्ष्म्या ॥ २४ ॥ यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते । मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥२५॥ श्रीशुकउवाच ॥ एवं व्रजस्त्रियो राजन् कृष्णलीला नु गायतीः। रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥२६॥ इति श्रीभा० महा० दशमस्कन्धे पूर्वार्द्धे वृन्दावनक्रीडायां गोपिकागीतं नाम पञ्चत्रिंशोऽध्यायः ॥३५॥

सर्वं गोधनमेकीकृत्य गीतवेणुस्सन् ॥२२॥ खुररजोभिर्व्याप्तस्रक् नो नेत्राणां हर्षं प्रापयन् तथा नः सुहृदां मनोरथस्य दातुमिच्छयाऽयमागच्छति पश्य ॥२३॥ किंच हे सखि ! श्रीकृष्णो मदविह्वललोचनो बदरपाण्डुवदनः स्वर्णकुण्डलकान्त्या कोमलं गण्डस्थलं शोभयन् यदुपतिः सायंकाले गजगतिः गवामस्माकं च दिनतापं शमयन् समीपमायाति तं पश्य ॥२४॥२५॥ श्रीशुक उवाच ॥ हे नृप ! एवं व्रजस्त्रियः कृष्णलीलाः गायन्त्यो दिनेष्वपि रेमिरे ॥२६॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे चूर्णिकायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

१ समुद्रमित्यर्थः । २ मलयजस्येव स्पर्शेन । ३ तत्समीपम् । ४ गोवर्धनधरः । ५ चन्द्रः ।

षट्त्रिंशे तु हतेऽरिष्टे नारदोक्त्या बलाच्युतौ ॥ वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥१॥ श्रीशुक उवाच ॥ हे राजन्! एवं व्रजे उत्सवे वर्तमाने व्रजं वृषभाकृतिररिष्टासुरः खुरैर्विदारितां महीं कम्पयन् ॥१॥ वृषभजातिशब्दं कुर्वन् पदा महीं विदारयन् पुच्छमूर्ध्वं कृत्वा शृङ्गाग्रेण तटान्युत्क्षिपन् ॥२॥ विण्मूत्रमुत्सृजन् सन् प्राप्तः । यस्य शब्देन गवां नृणां गर्भाः अकाले पतन्ति स्रवन्ति च यस्य स्कन्धे पर्वतशङ्कया मेघाः निर्विशन्ति ॥३॥४॥ तं तीक्ष्णशृङ्गं दैत्यं दृष्ट्वा गोप्यो गोपाश्च त्रासं प्रापुः । पशवो व्रजं हित्वा दुद्रुवुः ॥ ५ ॥ ततः सर्वे

श्रीशुक उवाच ॥ अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ॥ महीं महाककुत्कायः कम्पयन् खुरविक्षताम् ॥१॥ रम्भमाणः खरतरं पदा च विलिखन् महीम् ॥ उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥ किंचित्किंचित् शकृन्मुञ्चन् मूत्रयन्स्तब्धलोचनः ॥ यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् ॥ ३ ॥ पतन्त्यकालतो गर्भाः स्रवन्ति स्म भयेन वै ॥ निर्विशन्ति घना यस्य ककुद्यचलशंकया ॥ ४ ॥ तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ॥ पशवो दुद्रुवुर्भीता राजन् संत्यज्य गोकुलम् ॥५॥ कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः ॥ भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम् ॥ ६ ॥ मा भैष्टेति गिराऽऽश्वास्य वृषासुरमुपाह्वयत् ॥ गोपालैः पशुभिर्मन्द त्रासितैः किमसत्तम ॥७॥ बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् ॥ इत्यास्फोटयाच्युतोऽरिष्टं तलशब्देन कोपयन् ॥ ८ ॥ सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥ सोऽप्येवं कोपितोऽरिष्टं खुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ ९ ॥

गोपाः हे कृष्ण ! हे कृष्णेति गोविन्दं शरणं ययुः । भगवान् भयविद्रुतं व्रजं दृष्ट्वा ॥६॥ मा भैष्टेति गिराऽऽश्वास्य दैत्यमाह्वयत् । हे मंद ! त्रासितैर्गोपैः पशुभिश्च किम् ॥७॥ त्वादृशानां दुष्टानां बलदर्पहाऽहम् इत्युक्त्वा करतलेन बाहुं स्फोटयित्वा तं कोपयन् ॥८॥ सख्युः स्कन्धे भुजं कृत्वा कृष्णः स्थितः । एवं कोपितो दैत्यः खुरेण भुवमुल्लिखन् क्रुद्धः सन् कृष्णं प्राद्रवत् ॥ ९ ॥

अग्रन्यस्तशृङ्गाग्रः स स्तब्धलोचनः कटाक्षेण वक्रं दृष्ट्वेन्द्रमुक्तं वज्रमिव प्राद्रवत् ॥ १० ॥ ततः कृष्णस्तं शृङ्गयोर्धृत्वाऽष्टादशपदानि पश्चादपोवाह ॥ ११ ॥ एवमपक्षिप्तः स पुनरुत्थाय निश्श्वसन् कृष्णं प्राद्रवत् ॥ १२ ॥ आगतं तं कृष्णः शृङ्गयोः प्रगृह्य भूतले निपात्य पदाऽऽक्रम्यार्द्रवस्त्रमिव निष्पीडयामास । ततः शृङ्गमुत्पाट्य तेनैव जघान । तदा स पपात ॥ १३ ॥ ततः स रक्तं वमन् पादान् क्षिपन् शकृन्मूत्रं सृजन् मृत्युं प्राप । तदा देवाः पुष्पवृष्टिं कृत्वा कृष्णं तुष्टुवुः ॥ १४ ॥ एवं दैत्यं हत्वा सबलः कृष्णो व्रजं विवेश ॥ १५ ॥ एवं कृष्णेन दैत्ये हते नारदः एत्य कंसाय

अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ॥ कटाक्षिप्याऽद्रवत् तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥ १० ॥ गृहीत्वाशृङ्गयोस्तं च अष्टादश पदानि सः ॥ प्रत्यपोवाह भगवान् गजः प्रतिगजं यथा ॥ ११ ॥ सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः ॥ आपतत् स्विन्नसर्वांगो निश्श्वसन् क्रोधमूर्च्छितः ॥ १२ ॥ तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले ॥ निष्पीडयामास यथाऽऽर्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ॥ १३ ॥ असृग्वमन् मूत्रशकृत् समुत्सृजन् क्षिपंश्च पादाननवस्थितेक्षणः ॥ जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः ॥ १४ ॥ एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ॥ विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः ॥ १५ ॥ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा ॥ कंसायाथाह भगवान् नारदो देवदर्शनः ॥ १६ ॥ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ॥ रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥ १७ ॥ न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः ॥ निशम्य तद्भोजपतिः कोपात्प्रचलितेन्द्रियः ॥ १८ ॥ निशातमसिमादत्त वसुदेवजिघांसया ॥ निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ॥ १९ ॥

जगाद ॥ १६ ॥ हे कंस ! अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतां जानीहि । यशोदासुतत्वेन प्रसिद्धं कृष्णं देवकीपुत्रं जानीहि । रोहिणीपुत्रं रामं देवक्याः सप्तमं पुत्रं जानीहि ॥ १७ ॥ तौ पुत्रौ भीत्या वसुदेवेन स्वमित्रे नन्दे स्थापितौ याभ्यां तव पुरुषाः हता इति ॥ १८ ॥ तच्छ्रुत्वा कोपात् प्रचलितेन्द्रियः कंसो वसुदेवं हन्तुं खड्गं जगृहे । तदा नारदेन (वसुदेवे हते तौ पलायेयाताम् ॥ अतो मा वध्यताम् इति) निवारितः १९

१ मृत्योः । २ निवासम् । ३ एवं कथिते एवं भविष्यतीति, साक्षाद्देववद्दर्शनं ज्ञानं यस्य स नारदः ।

तदा कंसस्तौ स्वमृत्यू ज्ञात्वा वसुदेव देवकीं च लोहमयपाशैर्बबन्ध । एवं कृत्वा नारदे गते कंसः केशिनमाभाष्य ॥२०॥ त्वया रामकृष्णौ हन्येताम् इत्युक्त्वा प्रेषयामास । ततः कंसो मुष्टिकचाणूरशलतोशलकादीन् ॥ २१ ॥ अमात्यान् हस्तिपांश्चाहूयाह–भोभोश्चाणूरादयः ! वचः श्रूयताम् ॥२२॥ नन्दव्रजे वसुदेवसुतौ । ताभ्यां मम मृत्युर्विधात्रा दर्शितः ॥२३॥अतः इह प्राप्तौ तौ भवद्भ्यां मल्ललीलया हन्येताम् । विविधाः मञ्चाः क्रियन्ताम् ॥२४॥ सर्वे पौराः जानपदाः संग्रामं पश्यन्तु । हे महामात्र ! त्वया रङ्गद्वारि कुवलयापीडो गजः आनीयताम् ॥

ज्ञात्वा लोहमयैः पाशैर्बबन्ध सह भार्यया ॥ प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥ २० ॥ प्रेषयामास हन्येतां भवता रामकेशवौ ॥ ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥ २१ ॥ अमात्यान् हस्तिपांश्चैव समाहूयाह भोजराट् ॥ भो भो निशम्यतामेतद्वीर चाणूरमुष्टिकौ ॥२२॥ नन्दव्रजे किलासाते सुतावानकदुन्दुभेः ॥ रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः ॥२३॥ भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया ॥ मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः ॥ ॥२४॥ पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम् ॥ महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम् ॥२५॥ द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥ आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ॥ विशसन्तु पशून् मेध्यान् भूतराजायमीढुषे ॥२६॥ इत्याज्ञाप्यार्थतन्त्रज्ञ आहूय यदुपुङ्गवम् ॥ गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥२७॥ भो भो दानपते मह्यं क्रियतां मैत्रमादृतः ॥ नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ २८ ॥ अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधनम् ॥ यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभुः ॥ २९ ॥

॥२५॥ तेन तौ मम शत्रू जहि । किंच चतुर्दश्यां धनुर्यागः आरभ्यताम् । तत्र पशुमांसेन रुद्राय बलिं कुरुत ॥ २६ ॥ एवमाज्ञाप्य कंसोऽक्रूरमाहूय हस्तेन हस्तं गृहीत्वाऽऽह ॥२७॥ हे अक्रूर ! मम मित्रकृत्यं क्रियताम् । त्वत्तोऽन्यो भोजवृष्णिषु हितकर्ता नास्ति ॥२८॥ अतस्त्वां कार्यार्थम् आश्रितोऽस्मि । यथेन्द्रो विष्णुमाश्रित्य स्वार्थं प्राप्नोति ॥ २९ ॥



१ वरदाय। २ कार्यं गौरवेण गुरुतया साधयतीति तथाविधम्।

अतो नन्दव्रजं गच्छ तत्र वसुदेवस्य पुत्रौ तौ रथेनानय ॥३०॥ ताभ्यां मम मृत्युर्दैवैर्निर्मितः। अतस्तावुपायनसहितैर्नन्दादिगोपैः सममानय ॥३१॥इहाऽऽनीतौ तौ कालसदृशेन हस्तिना घातयिष्ये। यदि तस्माद् मुक्तौ तर्हि मल्लैर्घातयिष्ये॥३२॥एवं तयोर्हतयोः सतोस्तद्बन्धून् वसुदेव मुख्यान् वृष्णिभोजादीन् ॥३३॥ तथा वृद्धं राज्यकामुकं मे पितरं तद्बन्धुं देवकं च येऽन्ये मद्विद्विषस्तानपि हनिष्यामि॥३४॥ततश्चेयं मही नष्ट कण्टका भविष्यति ! जरासन्धो मम गुरुः। द्विविदः ॥३५॥ शम्बरो नरको बाणः एते सखायः। तैरहं देवपक्षीयान् नृपान् हत्वा महीं भोक्ष्ये

**गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः ॥ आसाते ताविहानेन रथेनानय मा चिरम् ॥३०॥ निसृष्टः किलमेमृत्युर्देवैर्वै-कुण्ठसंश्रयैः॥तावानय समं गोपैर्नन्दाद्यैःसाभ्युपायनैः ॥३१॥ घातयिष्य इहानीतौ कालकल्पेन हस्तिना॥यदि मुक्तौततो मल्लैर्घातये वैद्युतोपमैः ॥३२॥ तयोर्निहतयोस्तप्तान् वसुदेवपुरोगमान् ॥ तद्बन्धून् निहनिष्यामि वृष्णिभोजदशार्हकान् ॥३३॥ उग्रसेनं च पितरं स्थविरं राज्यकामुकम् ॥ तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥३४॥ ततश्चैषामही मित्र भवित्री नष्टकण्टका॥जरासन्धो मम गुरुर्द्विविदो दयितः सखा ॥३५॥ शम्बरोनरको बाणोमय्येव कृतसौहृदाः॥ तैरहं सुरपक्षीयान्हत्वा भोक्ष्ये महीं नृपान् ॥ ३६ ॥ एतज्ज्ञात्वाऽऽनय क्षिप्रं रामकृष्णाविहार्भकौ ॥ धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥३७॥ अक्रूर उवाच॥राजन्मनीषितं सम्यक् तव स्वावद्यमार्जनम् ॥ सिद्ध्यसिद्ध्योः समंकुर्याद्दैवं हि फलसाधनम् ॥ ३८ ॥ मनोरथान् करोत्युच्चैर्जनो दैवहतानपि ॥ युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ॥ ३९ ॥ श्रीशुक उवाच ॥ एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य सः ॥ प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयम् ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे अक्रूरसंप्रेषणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥**

॥ ३६ ॥ हे अक्रूर ! एतज्ज्ञात्वा धनुर्मखावलोकनार्थं मथुराशोभां च द्रष्टुं तौ शीघ्रमानय ॥ ३७ ॥ अक्रूर उवाच ॥ हे कंस ! तव विचारितं स्वमरणनिवर्तकं सम्यक् परन्तु सिद्ध्यसिद्ध्योः समं कुर्यात् यतः फलसाधनं दैवम्॥३८॥किंच। अयं जनो दैवहतानपि मनोरथान् करोति। कृत्वा च हर्षशोकाभ्यां युज्यते ! तथापि तवाज्ञां करोमि ॥३९॥ श्रीशुक उवाच ॥ एवमक्रूरमादिश्य मन्त्रिणश्च विसृज्य कंसो गृहं विवेश। अक्रूरोऽपि स्वगृहं ययौ ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे चूर्णिकायां पूर्वार्द्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः ॥ नारदेन स्तुतः क्रीडन् व्योमासुरमथावधीत् ॥१॥ श्रीशुक उवाच ॥ हे नृप ! अश्वरूपधरः केशी
तु कंसप्रेरितः खुरैर्महीं विदारयन् सटाभिरितस्ततः क्षिप्ताभ्रविमानैर्व्याप्तं नभः कुर्वन् विश्वं भीषयन् ॥ १ ॥ ( विशालनेत्रो नीलमहाघनोपमः
कंसहितं चिकीर्षुः सन् नन्दस्य व्रजं जगाम ) तदा गोकुलं शब्दैस्त्रासयन्तमात्मानं युद्धे मृगयन्तं तं दैत्यं दृष्ट्वा कृष्णो निर्गत्य समीपमाह्वयत् ।
तत् श्रुत्वा दैत्यः सिंह इव ननाद ॥२॥ ततः केशी कृष्णं दृष्ट्वा मुखेन खं पिबन्निव सम्मुखः सन् जगाम । ततः पश्चात्पद्भ्यां कृष्णं जघान

श्रीशुक उवाच ॥ केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन् मनोजवः ॥ सटावधूताऽभ्रविमानसंकुलं
कुर्वन् नभो हेषितभीषिताखिलः ॥ १ ॥ ( विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहाघनोपमः ॥ दुराशयः
कंसहितं चिकीर्षुर्व्रजं स नन्दस्य जगाम कम्पयन्) ॥ तं त्रासयन्तं भगवान् स्वगोकुलं तद्धेषितैर्वालविघूर्णिताम्बुदम् ॥
आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत् स व्यनदन्मृगेन्द्रवत् ॥ २ ॥ स तं निशम्याभिमुखो मुखेन खं पिबन्निवा-
भ्यद्रवत्यमर्षणः ॥ जघान पद्भ्यामरविन्दलोचनं दुरासदश्चण्डजवो दुरत्ययः ॥ ३ ॥ तद्वञ्चयित्वा तमधोक्षजो रुषा
प्रगृह्य दोर्भ्यां परिविध्य पादयोः ॥ सावज्ञमुत्सृज्य धनुश्शतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥ ४ ॥ स लब्ध-
संज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसाऽऽपतद्धरिम् ॥ सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथो-
रगं बिले ॥५॥ दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयःस्पृशो[1] यथा ॥ बाहुश्च तद्देहगतो महात्मनो यथा-
ऽऽमयः संववृधे उपेक्षितः ॥ ६ ॥

॥ ३ ॥ तद् वञ्चयित्वा कृष्णो रुषा तं दोर्भ्यां पादयोर्धृत्वा भ्रामयित्वा धनुश्शतान्तरे त्यक्त्वा स्थितः गरुडः सर्पमिव ॥४॥ पुनः सावधानः
स उत्थाय मुखं प्रसार्य कृष्णं प्रति प्राद्रवत् । कृष्णोऽपि तन्मुखे दक्षिणं भुजं बिले सर्पमिव प्रवेशयामास ॥ ५ ॥ ततः कृष्णभुजस्पर्शात्
तद्दन्ताः निपेतुः । तद्देहगतो बाहुश्च जलोदररोग इवोपेक्षितो ववृधे ॥ ६ ॥

१ तप्तमयः अतितप्तं लोहादि तत् स्पृशतः ।

एवं वर्धमानेन कृष्णबाहुना रुद्धवायुश्चरणान् क्षिपन् अजितनेत्रो लेण्डं विसृजन् गतप्राणो भूमौ पपात ॥७॥ ततः कृष्णः कर्कटिकाफलसद्द-
शात् तद्देहात् भुजमाकृष्य पुष्पवर्षैर्देवैः स्तुतः सन् स्थितः ॥८॥ तावद् नारदः एत्यैकान्ते कृष्णं बभाषे ॥९॥ हे कृष्ण ! हे योगेश ! हे जग-
दीश्वर ! हे प्रभो ! ॥ १० ॥ हे ईश ! सर्वभूतानां त्वं साक्षी ॥ ११ ॥ भगवान् मायया पूर्वं गुणान् ससर्ज । तैर्गुणैरिदं विश्वं सृजसि नाशयसि

समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ॥ प्रस्विन्नगात्रःपरिवृत्तलोचनः पपात लेण्डं विसृजन्
क्षितौ व्यसुः ॥७॥ तद्देहतः कर्कटिकाफलोपमाद् व्यसोरपाकृष्य भुजं महाभुजः ॥ अविस्मितोऽयत्नहतारिरुत्स्मयैः
प्रसूनवर्षैर्दिविषद्भिरीडितः ॥ ८ ॥ देवर्षिरुपसङ्गम्य भागवतप्रवरो नृप ॥ कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥ ९ ॥
कृष्ण कृष्णाप्रमेयात्मन् योगेश जगदीश्वर ॥ वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥ १० ॥ त्वमात्मा सर्वभूता-
नामेको ज्योतिरिवैधसाम् ॥ गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥ ११ ॥ आत्मनाऽऽत्माश्रयः पूर्वं मायया
ससृजे गुणान् ॥ तैरिदं सत्यसङ्कल्पः सृजस्यत्स्यवसीश्वरः ॥ १२ ॥ स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम् ॥ अव-
तीर्णो विनाशाय सेतूनां रक्षणाय च ॥ १३ ॥ दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः ॥ यस्य हेषितसंत्र-
स्तास्त्यजन्त्यनिमिषा दिवम् ॥ १४ ॥ चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम् ॥ कंसं च निहतं द्रक्ष्ये परश्वो-
ऽहनि ते विभो ॥ १५ ॥ तस्यानुशङ्खयवनमुराणां नरकस्य च ॥ पारिजातापहरणमिन्द्रस्य च पराजयम् ॥ १६ ॥
उद्वाहं वीरकन्यानां वीरशुल्कादिलक्षणम् ॥ नृगस्य मोक्षणं शापाद्द्वारकायां जगत्पते ॥ १७ ॥

रक्षसि ॥१२॥ स त्वं दैत्यप्रमथरक्षसां नाशाय धर्मस्य च रक्षणायाऽवतीर्णोसि ॥ १३ ॥ हे कृष्ण ! अयं लीलया हतो दैत्यः । एतद्दिष्टच्या
यस्य शब्देन त्रस्ताः देवाः स्वर्गं त्यजन्ति ॥१४॥ किंच चाणूरं मुष्टिकमन्यमल्लांश्च हस्तिनं कंसं च परश्वो नाशितं द्रक्ष्ये ॥ १५ ॥ अपि च
तदनन्तरं शङ्खयवनादीनां वधं पारिजातहरणमिन्द्रपराजयम् ॥१६॥ वीरकन्यानामुद्वाहं द्वारकायां शापाद् नृगस्य मोक्षणम् ॥ १७ ॥

१ पुरीषम् । २ काष्ठानाम्, अन्तंरित शेषः । ३ राजरूपेण लब्धजन्मनाम् ।

ततः पौण्ड्रकवधं वाराणस्याः दहनं दन्तवक्त्रनिधनं राजसूये जाम्बवत्या सह स्यमन्तकमणेर्ग्रहणं महाकालपुराद्द्विजस्य मृतपुत्रदानम् ॥१८॥ ततः पौण्ड्रकवधं वाराणस्याः दहनं दन्तवक्रनिधनं राजसूये शिशुपालस्य नाशम् ॥ १९ ॥ तथा यानि चान्यानि वीर्याणि द्वारकायां वसन् त्वं करिष्यसि तानि द्रक्ष्यामि ॥ २० ॥ कालरूपस्याऽर्जुन सारथेस्तवाक्षौहिणीनां निधनं द्रक्ष्यामि॥२१॥एवं विज्ञाप्य नमस्करोति । हे कृष्ण ! केवलज्ञानैकमूर्तिं स्वतेजसा निवृत्तमायागुणं भगवन्तं त्वां शरणं व्रजेम ॥२२॥ किंच। ईश्वरं क्रीडार्थं स्वीकृतमनुष्यदेहं यदुवृष्णिसात्वतां श्रेष्ठ त्वां नतोऽस्मि॥२३॥ श्रीशुक उवाच ॥ एवं नारदः कृष्णं

स्यमन्तकस्य च मणेरादानं सह भार्यया ॥ मृतपुत्रप्रदानं च ब्राह्मणस्यस्वधामतः ॥ १८ ॥ पौण्ड्रकस्य वधं पश्चात् काशिपुर्याश्चदीपनम् ॥ दन्तवक्त्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ १९ ॥ यानि चान्यानि वीर्याणि द्वारकामावसन् भवान् ॥ कर्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि ॥२०॥ अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ॥ अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥ २१ ॥ विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम् ॥ स्वतेजसा नित्यनिवृत्तमायया गुणप्रवाहं भगवन्तमीमहि ॥ २२ ॥ त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ॥ क्रीडार्थमद्याऽऽत्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥ २३ ॥ श्रीशुक उवाच ॥ एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः ॥ प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥ २४ ॥ भगवानपि गोविन्दो हत्वा केशिनमाहवे ॥ पशूनपालयत् पालैः प्रीतैर्व्रजसुखावहः ॥ २५ ॥ एकदा ते पशून् पालाश्चारयन्तोऽद्रिसानुषु ॥ चक्रुर्निलायनक्रीडाश्चौरपालापदेशतः ॥ २६ ॥ तत्रासन् कतिचिच्चौर पालाश्च कतिचिन्नृप ॥ मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः ॥ २७ ॥

प्रणिपत्य तदनुज्ञातो ययौ॥२४॥ततःकृष्णोऽपि केशिनं हत्वा गोपालैःसह पशून् पालयामास॥२५॥एकदा ते गोपाःपर्वतशिखरेषु पशून् चारयन्तः सन्तश्चौरपालापदेशतो निलायनक्रीडाश्चक्रुः ॥२६॥ तत्र कतिचित् चोराःकतिचित् पालाःकतिचिन्मेषवत् सन्तो निर्भयाः विजह्रुः ॥२७॥

१ स्वरूपे सम्यक् स्थित्येव परमानन्दरूपया। २ विशेषाः महदाद्याः यादवादिरूपा वा।

तत्र मयपुत्रो व्योमासुरो गोपालवेषं धृत्वा चौरवन्मेषवदाचरितो गोपान्निनाय ॥२८॥ ततः स दैत्यो नीतं नीतं गोपं गिरिगुहायां निक्षिप्य शिलया द्वारं छादितवान् । ततश्चतुष्पञ्चावशेषिताः ॥ २९ ॥ कृष्णस्तस्य तत् कर्म ज्ञात्वा सिंहो वृकमिव तं जग्राह ॥ ३० ॥ स स्वरूपं गिरीन्द्रतुल्यं धृत्वाऽऽत्मानं मोक्तुमिच्छन्नपि नाशक्नोत् ॥ ३१ ॥ ततः कृष्णस्तं दोर्भ्यां धृत्वा भूतले निपात्य दिवि देवानां पश्यतां श्वासहीनं यथा भवति तथा तममारयत् ॥३२॥ ततः कृष्णो गुहायाः आच्छादनं निर्भिद्य गोपान् निस्सार्य ततो गोपैः स्तूयमानो व्रजं विवेश ॥३३॥ इति श्रीभागवते

मयपुत्रो महामायो व्योमो गोपालवेषधृक् ॥ मेषायितानपोवाह प्रायश्चौरायितो बहून् ॥ २८ ॥ गिरिदर्यां विनिक्षिप्य नीतंनीतं महासुरः ॥ शिलया पिदधे द्वारं चतुष्पञ्चावशेषिताः ॥२९॥ तस्य तत् कर्म विज्ञाय कृष्णः शरणदः सताम् ॥ गोपान् नयन्तं जग्राह वृकं हरिरिवौजसा ॥ ३० ॥ स निजं रूपमास्थाय गिरीन्द्रसदृशं बली ॥ इच्छन् विमोक्तुमात्मानं नाशक्नोद् ग्रहणातुरः ॥३१॥ तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ॥ पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३२ ॥ गुहापिधानं निर्भिद्य गोपान् निस्सार्य कृच्छ्रतः ॥ स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥३३॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे केशिव्योमासुरवधो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

श्रीशुक उवाच ॥ अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः ॥ उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥ गच्छन् पथि महाभागो भगवत्यम्बुजेक्षणे ॥ भक्तिं परामुपगत एवमेतदचिन्तयत् ॥२॥ किं मया चरितं भद्रं किं तप्तं परमं तपः ॥ किं वाऽथाप्यर्हते दत्तं यद् द्रक्ष्याम्यद्य केशवम् ॥३॥ ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम् ॥ विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥

दशम० चू० पू० सप्तत्रिंशोऽध्यायः॥३७॥ अष्टत्रिंशे यथा ध्यायन्नक्रूरो गोकुलं गतः ॥ तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥१॥ श्रीशुक उवाच ॥ हे नृप ! अक्रूरोपि मथुरायां तां रात्रिमुषित्वा प्रातरेव रथमारुह्य गोकुलं ययौ ॥१॥ स पथि गच्छन् कृष्णे परां भक्तिं प्राप्येदमचिन्तयत् ॥२॥ मया किं भद्रं किं तपश्चरितं किं वा योग्याय दत्तं यतोऽद्य हरिं द्रक्ष्यामि ॥ ३ ॥ विषयात्मनो मम कृष्णदर्शनं दुर्लभं मन्ये ॥ ४ ॥

यद्वानीचस्यापि मे दर्शनं स्यात् यतः कालनद्या ह्रियमाणः कश्चित् तरति तद्वत्॥५॥किंच । अद्य मम पापं नष्टम् । जन्म च सफलं यतो हरिं
नमस्ये ॥ ६ ॥ अद्य कंसो मेऽनुग्रहं कृतवान् यतः कृष्णपदाब्जं द्रक्ष्यामि ॥७॥ कथंभूतं चरणम् ! ब्रह्मशिवादिभिर्लक्ष्म्या सात्त्वतैश्चार्चितम् ।
किंच । यद्गोचारणार्थं गोपालैः सह वनेऽचरत् ॥८॥ तथा सुकपोलनासिकं सहास्यावलोकनं कृष्णमुखं च द्रक्ष्यामि । यतो मृगाः दक्षिणतश्च-

ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः ॥ यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥६॥ कंसो बताद्याकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः ॥ कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन् यन्नखमण्डलत्विषा ॥ ७ ॥ यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः ॥ गोचारणायानुचरैश्चरद्वने यद् गोपिकानां कुचकुंकुमाङ्कितम् ॥८॥ द्रक्ष्यामि नूनं सुकपोलनासिकं स्मितावलोकारुणकञ्जलोचनम् ॥ मुखं मुकुंदस्य गुडालकावृतं प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥९॥ अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ॥ लावण्यधाम्नो भवितोपलम्भनं मह्यं न न स्यात्फलमञ्जसा दृशः ॥ १० ॥ य ईक्षिताऽहं रहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदाभ्रमः ॥ स्वमाययाऽऽत्मन् रचितैस्तदीक्षयां प्राणाक्षधीभिः सदनेष्वभीयते॥११॥यस्याखिलाऽमीवहभिःसुमंगलैर्वाचो विमिश्रा गुणकर्मजन्मभिः॥ प्राणन्ति शुम्भन्ति पुनंति वै जगद्यास्तद्विरक्ताः शवशोभना मताः ॥ १२ ॥ स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत् ॥ यशो वितन्वन् व्रज आस्त ईश्वरो गायन्ति देवा यदशेषमंगलम् ॥ १३ ॥



रन्ति॥९॥अपि च स्वेच्छया भूभारदूरीकरणाय मनुष्यत्वं प्राप्तस्य कृष्णस्य दर्शनं भविष्यति चेत् तर्हि मे नेत्रस्य फलं न स्यादिति न ॥१०॥
यः कार्यकारणयोर्द्रष्टा । तथाप्यहंकाररहितः । एवंविधोऽपि कृष्णो गोपीगृहेषु लीलया कर्माणि कुर्वन् सक्तवत् प्रतीयते ॥११॥ यस्य गुणजन्म
कर्मभिर्युक्ताः या वाचस्ताः जगज्जीवयन्ति पुनन्ति । तैर्हीनाः वाचस्तु शववत् शोभनाः मताः ॥ १२ ॥ स यादवान्वयेऽवतीर्णः सन् व्रजे

१ पूर्वोक्तं वा माऽस्तु । २ वक्रेणेत्यर्थः । ३ आत्मनि । ४ जीवस्येक्षया । ५ अखिलस्याऽमीवानी पापानि घ्नन्तीत्यखिलामीवहानि तैः ।

आस्ते सर्वमङ्गलं यद्यशो देवाः गायन्ति ॥१३॥ तं सतां गतिमीश्वरमद्य नूनं द्रक्ष्यामि यतो मे प्रभातसमयाः शुभसूचकाः भवन्ति ॥१४॥ अथ दर्शनानन्तरं तदैव रथादुत्तीर्य रामकृष्णयोश्चरणं योगिभिरपि धिया धृतं नमस्ये। तथा तौ गोपांश्च नमस्यामि ॥१५॥ किंच कृष्णोऽङ्घ्रिमूले पतितस्य मे शिरसि स्वहस्तकमलं धास्यति किम् ॥१६॥ यत्र शक्रः पूजां निधाय जगत्त्रयेन्द्रतां प्राप ॥१७॥ किंच अहं कंसदूतस्त-

तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ॥ रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममाऽसन्नुषसः सुदर्शनाः ॥ १४ ॥ अथावरूढः सपदीशयो रथात्प्रधानपुंसोश्चरणं स्वलब्धये ॥ धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन् वनौकसः ॥१५॥ अप्यङ्घ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपंकजम् ॥ दत्ताभयं कालभुजङ्गरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥१६॥ समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेन्द्रताम् ॥ यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगन्धिकगन्धयपानुदत् ॥ १७ ॥ न मय्युपैष्यत्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोऽपि विश्वदृक् ॥ योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥१८॥ अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिं मामीक्षिता सस्मितमार्द्रया दृशा ॥ सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशंक ऊर्जिताम् ॥ १९ ॥ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ॥ आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कर्मात्मक उच्छ्वसित्यतः ॥२०॥ लब्ध्वाङ्गसङ्गं प्रणतं कृताञ्जलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ॥ तदा वयं जन्मभृतो महीयसा यो नैवादृतो धिगमुष्य जन्म तत् ॥ २१ ॥

थाप्यच्युतो मयि शत्रुबुद्धिं न करिष्यति यतः सर्वज्ञः ॥ १८ ॥ तदङ्घ्रिमूले कृताञ्जलिं मां कृपादृष्ट्या द्रक्ष्यति किम्? यदि द्रक्ष्यति तर्हि परां मुदं प्राप्स्यामि ॥ १९ ॥ कृष्णो यदा मां दोर्भ्यामालिङ्गयिष्यति तदैव तेन मे देहः पवित्रीकरिष्यते ॥२०॥ कृष्णः कृताञ्जलिं नम्रं मां हे अक्रूर! ताततेति यदा वक्ष्यते तदा वयं सफलजन्मानो भवेम। यः कृष्णेन नादृतस्तस्य जन्म धिक् ॥ २१ ॥

१ दृशिमन्तःमनुष्याः । २ आत्मलाभाय । ३ पद्मगन्धि । ४ श्लाघ्यो भवति । ५ देहात् ।

एवंभूतस्य हरेः कश्चिद्दयितः सुहृत्तमोऽप्रियो द्वेष्यः उपेक्ष्यो न । तथापि भक्तान् कल्पवृक्ष इव भजते ॥२२॥ किंच रामो नम्रं मामालिंग्या-
ञ्जलौ धृत्वा गृहं प्रवेश्य स्वबन्धुषु कंसकृतं प्रक्ष्यति ॥२३॥ श्रीशुक उवाच ॥ हे नृप ! एवमक्रूरोमार्गे कृष्णं चिन्तयन् सायङ्काले रथेन गोकुलं
प्राप्तः ॥२४॥ ततः स हरेः पदानि पद्मयवांकुशाद्यैरंकितानि गोकुले ददर्श ॥२५॥ तद्दर्शनात् जातसम्भ्रमो रोमाञ्चितः प्रेमाश्रुलोचनो रथाद-

न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा ॥ तथाऽपि भक्तान् भजते यथा तथा सुरद्रुमो यद्व-
दुपाश्रितोऽर्थदः ॥२२॥ किं चाऽग्रजो माऽवनतं यदूत्तमः स्मयन् परिष्वज्य गृहीतमञ्जलौ ॥ गृहं प्रवेश्याप्तसमस्त
सत्कृतं संप्रक्ष्यते कंसकृतं स्वबन्धुषु ॥ २३ ॥ श्रीशुकउवाच ॥ इति संचिन्तयन् कृष्णं श्वफल्कतनयोऽध्वनि ॥ रथेन
गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥२४॥ पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ॥ ददर्श गोष्ठे क्षिति-
कौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥ २५ ॥ तद्दर्शनाह्लादविवृद्धसंभ्रमः प्रेम्णोर्ध्वरोमाश्रुकलाकुलेक्षणः ॥ रथा-
दवस्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति ॥२६॥ देहंभृतामियानर्थो हित्वा दम्भं भियं शुचम् ॥ संदेशा-
द्यो हरेर्लिङ्गदर्शनश्रवणादिभिः॥२७॥ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ॥ पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥
॥ २८ ॥ किशोरौ श्यामलश्वेतौ श्रीनिकेते बृहद्भुजौ ॥ सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ २९ ॥ ध्वज-
वज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् ॥ शोभयन्तौ महात्मानौ सानुक्रोशस्मितेक्षणौ ॥ ३० ॥ उदाररुचिरक्रीडा
स्रग्विणौ वनमालिनौ ॥ पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ ३१ ॥

वप्लुत्य हरेरमूनि पादरजांसीति दुर्लभतां भावयन् रजसि व्यलुठत् ॥२६॥ देहिनामेतावानेव पुरुषार्थः इति ॥२७॥ ततो व्रजे गोदोहनस्थानं
प्राप्तौ रामकृष्णौ पीतनीलाम्बरधरौ ॥ २८ ॥ किशोरवयसौ श्यामलश्वेतौ बालहस्तिपराक्रमौ ॥ २९ ॥ ध्वजवज्रांकुशादिचिह्नितैरंघ्रिभिर्व्रजं
शोभयन्तौ ॥ ३० ॥ रत्नमालाधरौ वनमालिनौ स्नातौ निर्मलवस्त्रधरौ ॥ ३१ ॥

१ माम् । २ संदेशः आद्यो यस्यार्थस्य सः । ३ यावानक्रूरस्य जातस्तावानेव देहभाजां पुरुषार्थ इत्यर्थः । ४ अनुक्रोशः दया ।

प्रधानपुरुषौ स्वांशेनावतीर्णौ ॥३२॥ स्वतेजसा गतान्धकारः दिशि कुर्वाणौ च ददर्श ॥३३॥ एवंभूतौ दृष्ट्वाऽक्रूरो रथादवप्लुत्य तयोश्चरणसमीपे दण्डवत् पपात ॥ ३४ ॥ ततस्तद्दर्शनाद् रोमाञ्चिताङ्गोबाष्पपर्याकुललोचनः सन् त्वामेषोऽहं नमस्करोमीति वक्तुं नाशकत् ॥ ३५ ॥ भगवानपि तं ज्ञात्वा चक्राङ्कितहस्तेनाकृष्य प्रीतः सन्नालिङ्गितवान्॥३६॥रामश्चतमालिङ्ग्यपाणिना हस्तौ धृत्वा सकृष्णस्तं गृहं निनाय॥३७॥

प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ॥ अवतीर्णौ जगत्यर्थे[1] स्वांशेन बलकेशवौ ॥३२॥ दिशो वितिमिरा राजन् कुर्वाणौ प्रभया स्वया ॥ यथा मारकतः शैलो रौप्यश्च कनकाचितौ ॥ ३३ ॥ रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ॥ पपात चरणोपान्ते दण्डवद्रामकृष्णयोः ॥ ३४ ॥ भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः ॥ पुलकांचिताङ्गऔत्कण्ठ्यात्स्वाख्याने नाशकन्नृप ॥३५॥ भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना ॥ परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥३६॥ सङ्कर्षणश्च प्रणतमुपगुह्य महामनाः ॥ गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहम् ॥३७॥ पृष्ट्वाऽथ स्वागतं तस्मै निवेद्य च वरासनम् ॥ प्रक्षाल्यविधिवत्पादौ मधुपर्कार्हणमाहरत् ॥ ३८ ॥ निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः ॥ अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ॥ ३९ ॥ तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ॥ मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात्पुनः ॥४०॥ पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे ॥ कंसे जीवति दाशार्ह सौनपाला[2] इवावयः ॥ ४१ ॥ योऽवधीत्स्वस्वसुस्तोकान् क्रोशन्त्या असुतृप्[3] खलः ॥ किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥ ४२ ॥

अथ स्वागतं पृष्ट्वा तस्मै आसनं दत्त्वा पादौ प्रक्षाल्य मधुपर्कादि समर्पितवान् ॥३८॥ तथा तस्मै गां दत्त्वा तं श्रान्तं संवाह्य विभुस्तस्मै बहुगुणमन्नं ददौ ॥ ३९ ॥ ततो भुक्तवते तस्मै रामो मुखवासैर्गन्धमाल्यैः परां प्रीतिं चक्रे ॥ ४० ॥ ततो नन्दस्तं पप्रच्छ । हे अक्रूर ! क्रूरे कंसे जीवति सति यूयं कथं जीवथ ॥४१॥ यः कंसः क्रोशन्त्याः भगिन्याः बालान् जघान । तत्प्रजानां वः किं नु कुशलं विचारयाम ॥ ४२ ॥

---

१ पृथिव्या भारापनयनाय । २ सौनः पशुघाती । स एव पालको येषामवीनां मेषाणाम् । त इव तत्तुल्या इत्यर्थः । ३ असून् वै तर्पयति यः ।

एवं मधुरवाण्या नन्देन सत्कृतोऽक्रूरस्तत्प्रश्नेन मार्गपरिश्रमं जहौ ॥४३॥ इति श्रीभागवते चू० द० पू० अष्टात्रिंशोऽध्यायः ॥३८॥ नवत्रिंशे पुरीं
गच्छत्यच्युते गोपिकोक्तयः ॥ अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥१॥ श्रीशुक उवाच ॥ हे नृप ! रामकृष्णाभ्यां मानितः पर्यंके उपविष्टो-
ऽक्रूरः सर्वान् मनोरथान् लेभे ॥१॥ हे राजन् ! हरौ प्रसन्ने किमलभ्यम् । तथापि भक्ताः किमपि नेच्छन्ति ॥२॥ ततः कृष्णः सायङ्कालेऽशनं कृत्वा संबं-
धिषु कंसस्य चिकीर्षितं वृत्तं च पप्रच्छ ॥३॥ श्रीभगवानुवाच ॥ हे तात ! तव स्वागतम् । स्वज्ञातिबन्धूनामारोग्यं कच्चित् ॥४॥ हे अक्रूर ! कुलस्य

इत्थं सूनृतया वाचा नन्देन सुसभाजितः ॥ अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥४३॥ इति श्रीभागवते महापुराणे
दशम० पू० अक्रूरागमनं नामाऽष्टात्रिंशोऽध्यायः ॥३८॥ श्रीशुक उवाच ॥ सुखोपविष्टः पर्यंके रामकृष्णोरुमानितः ॥
लेभे मनोरथान् सर्वान्पथि यान्स चकार ह ॥१॥ किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ॥ तथापि तत्परा राजन् नहि वाञ्छ-
न्ति किञ्चन ॥२॥ सायन्तनाशनं कृत्वा भगवान् देवकीसुतः ॥ सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितम् ॥३॥ श्रीभगवा-
नुवाच ॥ तात सौम्यागतः कच्चित् स्वागतं भद्रमस्तु वः ॥ अपि स्वज्ञातिबंधूनामनमीवमनामयम् ॥४॥ किं नु नः कुशलं
पृच्छे एधमाने कुलामये ॥ कंसे मातुलनाम्न्यङ्ग स्वानां नस्तत्प्रजासु च ॥५॥ अहो अस्मदभूद् भूरि पित्रोर्वृजिनमार्य-
योः ॥ यद्धेतोः पुत्रमरणं यद्धेतोर्बन्धनं तयोः ॥६॥ दिष्ट्याऽद्य दर्शनं स्वानां मह्यं वः सौम्य काङ्क्षितम् ॥ सञ्जातं वर्ण्यतां
तात तवागमनकारणम् ॥७॥ श्रीशुक उवाच ॥ पृष्टो भगवता सर्वं वर्णयामास माधवः ॥ वैरानुबन्धं यदुषु वसुदेव-
वधोद्यमम् ॥८॥ यत्सन्देशो यदर्थं वा दूतः संप्रेषितः स्वयम् ॥ यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः ॥ ९ ॥

रोगरूपे मातुलनाम्नि कंसे वृद्धिं गते सति स्वज्ञातीनां कि नु कुशलं पृच्छामि ॥५॥ किंच अहो ! भूरि खलु पित्रोः पापं यस्मिन् निमित्ते
तयोः पुत्रमरणं बन्धनं जातम् ॥ ६ ॥ हे अक्रूर ! अद्य तव दर्शनं जातम् । इदं भद्रम् । तवागमनकारणं वर्ण्यताम् ॥ ७ ॥ श्रीशुकवाच ॥
एवं पृष्टोऽक्रूरो यदुषु वैरानुबन्धं वसुदेववधोद्यमं सर्वं जगाद ॥ ८ ॥ किंच । कंसेन यदर्थमक्रूरः प्रेषितस्तन्नारदोक्तं च सर्वं जगाद ॥ ९ ॥

१ उद वह्व । २ अपापाम् ।

एवं कृष्णरामौ तद्वचः श्रुत्वा कंसेन कथितं प्रति ज्ञापयामासतुः ॥ १० ॥ ततो नन्दो गोपानाह। हे गोपाः। क्षारादि गृह्यताम्। शकटानि युज्यन्ताम् ॥ ११ ॥ श्वो मथुरां यास्यामः। राज्ञे रसान् दास्यामः। महत् पर्व द्रक्ष्यामः। एवं नन्दो द्वारपालेन भेरीघोषेण सर्वतो व्रजे घोषितवान् ॥१२॥ ततो गोप्यो रामकृष्णौ नेतुं प्राप्तमक्रूरं श्रुत्वा दुःखिता बभूवुः ॥ १३ ॥ काश्चित् श्वासम्लानमुखश्रियः काश्चन श्लथित दुकूलवलयकेशग्रन्थ्यो बभूवुः ॥ १४ ॥ अन्याश्च तद्ध्यानेन निवृत्तेन्द्रियवृत्तयः सत्यः इमं देहं मुक्ता इव जानन्ति स्म ॥१५॥ अपरा हरे-

श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा ॥ प्रहस्य नन्दं पितरं राज्ञाऽऽदिष्टं विजज्ञतुः ॥ १० ॥ गोपान् समादिशत् सोऽपि गृह्यतां सर्वगोरसः ॥ उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥ ११ ॥ यास्यामःश्वो मधुपुरीं दास्यामो नृपते रसान् ॥ द्रक्ष्यामःसुमहत् पर्व यांति जानपदाः किल ॥ एवमाघोषयत् क्षत्त्रा नन्दगोपः स्वगोकुले ॥ १२ ॥ गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम् ॥ रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥ १३ ॥ काश्चित् तत्कृतहृत्तापश्वासम्लानमुखश्रियः ॥ स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च काश्चन ॥ १४ ॥ अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ॥ नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥ १५ ॥ स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः ॥ हृदिस्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ॥ १६ ॥ गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् ॥ शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥ १७ ॥ चिन्तयन्त्यो मुकुन्दस्य लीला विरहकातराः ॥ समेताः संघशः प्रोचुरश्रुमुख्योऽच्युताशयाः ॥ १८ ॥ गोप्य ऊचुः ॥ अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः ॥ तांश्चाकृतार्थान् वियुनंक्ष्यपार्थकं विक्रीडितं तेऽर्भकचेष्टितं यथा ॥ १९ ॥ यस्त्वं प्रदर्श्यासितकुन्तलावृतं मुकुंदवक्त्रं सुकपोलमुन्नसम् ॥ शोकापनोदस्मितलेशसुंदरं करोषि पारोक्ष्यमसाधु ते कृतम् ॥ २० ॥

श्चित्रपदा गिरः स्मरन्त्यः सत्योः मुमुहुः॥१६॥एवं सर्वाः कृष्णस्यसुन्दरगतिं हास्यावलोकनं चरितानि च चिन्तयन्त्यः एकत्र मिलित्वाऽश्रुमुख्यः सत्यः ऊचुः ॥१७॥१८॥ गोप्य ऊचुः ॥ हे विधातः! तव क्वचित् दया न, यतस्त्वं जीवान् मैत्र्यैकत्र संयोज्याऽप्राप्तभोगानपि तान् वियुक्तान् करोषि। अतस्तव क्रीडितं बालस्येव व्यर्थम् ॥१९॥ यस्त्वमसितकेशावृतं कृष्णमुखं सकृत् प्रदर्श्यादर्शनं करोषि। अतस्ते कर्म निन्द्यम्॥२०॥

॥२१॥अथ परस्परमूचुः। अयं
हे विधातः! अक्रूरनाम्ना त्वं क्रूर एव, यतो नश्चक्षुर्हरसे। येन चक्षुषा हरेरवयवादौ त्वदीयं निखिलसृष्टिसौन्दर्यमद्राक्ष्म॥२१॥अथ परस्परमूचुः। अयं नन्दपुत्रः क्षणभङ्गसौहृदः यतोऽस्मान् गृहादीन् विहाय तदास्यं प्राप्ताः न विलोकयतियतो नवप्रियः॥२२॥इयं रात्रिः सुप्रभाता जाता। अतो मथुरास्त्रीणामाशिषः सत्या स्युः याः प्रविष्टस्य हरेर्मुखं पास्यन्ति॥२३॥मथुरास्त्रीणां मधुरभाषणैर्वशीकृतचित्तः कृष्णोऽस्मान् प्रति कथं पुनरायास्यति॥२४॥अद्य मथुरायां दाशार्हभोजादीनां दृष्टेर्महोत्सवो भविष्यति, यतस्ते देवकीसुतं द्रक्ष्यन्ति॥२५॥ततोऽक्रूरं शपन्त्यः आहुः। अस्य निर्दयस्याऽक्रूरः इति शुभं नाम मा भूत् यो दुःखितं जनमनाश्वास्यहरिं दूरं देशं नेष्यति॥२६॥अयं कठिनधीः कृष्णः अहो! एते गोपास्त्वरां कुर्वन्ति। एते वृद्धा न निवारयन्ति, अतो नो दैवं प्रतिकूलम्। किं कुर्मः ॥२७॥ हे स्त्रियः! वयं मिलित्वा कृष्णं निवारयामः। वृद्धाः बान्धवाः नः किं करिष्यन्ति॥२८॥

येनैकदेशेऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म वयं मधुद्विषः
॥ २१ ॥ न नन्दसूनुः क्षणभङ्गसौहृदः समीक्षते नः स्वकृतातुरा बत ॥ विहाय गेहान् स्वजनान् सुतान् पतीं-
स्तद्दास्यमद्धोपगता नवप्रियः ॥ २२ ॥ सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम् ॥ याः सम्प्र-
विष्टस्य मुखं व्रजस्पतेः पास्यन्त्यपाङ्गोत्कलितस्मितासवम् ॥२३॥ तासां मुकुन्दो मधुमञ्जुभाषितैर्गृहीतचित्तः पर-
वान् मनस्व्यपि ॥ कथं पुनर्नः प्रतियास्यतेऽबला ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन् ॥ २४ ॥ अद्य ध्रुवं तत्र दृशो
भविष्यते दाशार्हभोजान्धकवृष्णिसात्वताम् ॥ महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम्
॥ २५ ॥ मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीव दारुणः ॥ योऽसावनाश्वास्यसुदुःखितं जनं प्रियात् प्रियं
नेष्यति पारमध्वनः ॥२६॥ अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयन्ति दुर्मदाः ॥ गोपा अनोभिः स्थविरै-
रुपेक्षितं दैवं च नोऽद्य प्रतिकूलमीहते ॥ २७ ॥ निवारयामः समुपेत्य माधवं किं नोऽकरिष्यन् कुलवृद्धबान्धवाः ॥
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजाद् दैवेन विध्वंसितदीनचेतसाम् ॥ २८ ॥



१ स्वकृतेन तत्कृतेन स्मिताविना आतुराः परवशाः। २ नेत्रप्रान्तेनोत्कलितमुज्जृम्भितं स्मितमेवाऽऽसवो यस्मिंस्तत्। ३ प्राणात्। ४ निमिषार्धमपि दुस्त्यजान्मुकुन्दसङ्गाद्। ५ विध्वंसितानि वियोजितानि यतो दीनानि चेतांसि यासां तासाम्।

हे गोप्यः । येन सह रासक्रीडायामस्माभिः क्षण इव रात्रयो नीतास्तं विना वियोगदुःखं कथं तरेम ॥२९॥ किंच । यः कृष्णः सायंकाले राम गोपैः सह वेणुं क्वणयन् व्रजं विशन् स्वावलोकनेन नश्चित्तं हरति तं विना कथं जीवेम ॥३०॥ श्रीशुक उवाच ॥ विरहातुराः एवं ब्रुवाणाः गोप्यो लज्जां त्यक्त्वा हे गोविंद ! हे दामोदर ! हे माधव ! इत्युच्चैः रुरुदुः ॥३१॥एवं तासां रुदन्तीनां सूर्ये उदितेऽक्रूरः संध्योपासनादि कर्म कृत्वा

यस्यानुरागललितस्मितवल्गुमन्त्रलीलावलोकपरिरम्भणरासगोष्ठयाम् ॥ नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरन्तम् ॥ २९ ॥ योऽह्नः क्षये व्रजमनन्तसखः परीतो गोपैर्विशन् खुररजश्छुरितालकस्रक् ॥ वेणुं क्वणन् स्मितकटाक्षनिरीक्षणेन चित्तं क्षिणोत्यमुमृते नु कथं भवेम ॥ ३० ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ॥ विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति ॥ ३१ ॥ स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथ ॥ अक्रूरश्चोदयामास कृतमैत्रादिको[1] रथम् ॥ ३२ ॥ गोपास्तमन्वसज्जन्त नंदाद्याः शकटैस्ततः ॥ आदायोपायनं भूरि कुम्भान् गोरससंभृतान् ॥३३॥ गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः ॥ प्रत्यादेशं[2] भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥३४॥ तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ॥ सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः ॥ ३५ ॥ यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च ॥ अनुप्रस्थापितात्मानो लेख्यानीवोपतस्थिरे॥३६॥ता निराशा निववृतुर्गोविंदविनिवर्तने ॥ विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम्॥३७॥

रथं प्रेरयामास ॥३२॥ तमनु नन्दादिगोपाः उपायनं घृतादिकुम्भांश्च गृहीत्वा शकटैरगच्छन् ॥ ३३ ॥ गोप्यश्च तमनुव्रज्य कृष्णस्य प्रत्यादेशमिच्छन्त्योऽवतस्थिरे ॥३४॥ एवं कृष्णस्तप्यतीस्ताः दृष्ट्वा दूतवाक्यैरायास्ये इति सान्त्वयामास ॥ ३५ ॥ ततस्ताः यावद्रथस्य ध्वजो रेणुश्च दृश्यते तावत् पुत्तलिका इव स्थिताः ॥ ३६ ॥ ततो निराशाः भूत्वा परावृत्य तच्चेष्टितं गायन्त्यो दिनानि निन्युः ॥ ३७ ॥

---

१ मैत्रं मित्रदैवतं संध्योपासनम् । २ प्रत्याख्यानम् ।

अथ कृष्णो रामाक्रूरयुतो वायुवेगेन रथेनयमुनां प्राप्तः ॥३८॥ तत्रोपस्पृश्य जलं पीत्वा वृक्षसमूहं गत्वा सरामो रथमाविशत् ॥३९॥ अक्रूरस्तौ रथोपरि कृत्वा कालिन्द्याः ह्रदं गत्वा स्नानं चकार ॥४०॥ तत्र निमज्ज्य ब्रह्म जपन् तत्र तौ ददर्श ॥४१॥ तौ रथस्थाविह कथम् ? एवं सति रथे न स्तः इत्युन्मज्ज्य तावपश्यत् ॥४२॥ तथा पूर्ववद्रथे तौ दृष्ट्वा । तयोर्जले यद्दर्शनं जातं तन्मृषा वा सत्यं वेति ज्ञातुं पुनर्ममज्ज ॥४३॥

रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥ ३८ ॥ तत्रोपस्पृश्य पानीयं
भगवानपि संप्राप्तो रामाक्रूरयुतो नृप ॥
पीत्वा मृष्टं मणिप्रभम् ॥ वृक्षखण्डमुपव्रज्य सरामो रथमाविशत् ॥ ३९ ॥ अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि ॥ कालिन्द्या ह्रदमागत्य स्नानं विधिवदाचरत् ॥ ४० ॥ निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् ॥ तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥ ४१ ॥ तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः ॥ तर्हि स्वित् स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः ॥ ४२ ॥ तत्रापि च यथापूर्वमासीनौ पुनरेव सः ॥ न्यमज्जद्दर्शनं यन्मे मृषा किं सलिले तयोः ॥ ४३ ॥ भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् ॥ सिद्धचारणगन्धर्वैरसुरैर्नतकन्धरैः ॥ ४४ ॥ सहस्रशिरसं देवं सहस्रफणमौलिनम् ॥ नीलाम्बरं बिसश्वेतं शृङ्गैः[1] श्वेतमिव स्थितम् ॥ ४५ ॥ तस्योत्संगे घनश्यामं पीतकौशेयवाससम् ॥ पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥ ४६ ॥ प्रसन्नचारुवदनं चारुहासनिरीक्षणम् ॥ सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४७ ॥ प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् ॥ कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम्[2] ॥ ४८ ॥ बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ॥ चारुजानुयुगं चारुजंघायुगलसंयुतम् ॥ ४९ ॥

पुनश्च स जले सिद्धचारणगन्धर्वैः स्तूयमानम् ॥४४॥ सहस्रशिरसंसहस्रफणमौलिनं नीलाम्बरं श्वेतमनन्तं दृष्ट्वा ॥४५॥ तस्योत्सङ्गे घनश्यामं पीताम्बरधरं चतुर्भुजम् ॥४६॥ सुन्दरप्रसन्नमुखं शोभनाभ्यां भ्रूभ्यामुन्नतया नासिकया च युक्तं सकपोलं रक्ताधरोष्ठम् ॥ ४७ ॥ दीर्घमांसलभुजं कम्बुकण्ठं निम्ननाभिम् ॥ ४८ ॥ बृहत्कटितटं मांसलोरुद्वयं सुन्दरजानुजङ्घायुगम् ॥ ४९ ॥

१ कैलासम् । २ वलिमत् पल्लववदश्वत्थदलसदृशं चोदरं यस्य तम् ।

ईषदुन्नतगुल्फं कोमलाङ्गुल्यंगुष्ठदलैः शोभितपादपद्मम् ॥५०॥ अमौल्यकिरीटादिभिर्नूपुरकुण्डलैश्च शोभमानम् ॥५१॥ शङ्खचक्रगदापद्मधरं श्रीवत्सवक्षसं कौस्तुभवनमालाधरम् ॥५२॥ सुनन्दनन्दादिभिः पार्षदैर्ब्रह्मशिवाद्यैः ॥ ५३ ॥ प्रह्लादनारदमुख्यैर्भक्तैः पृथक्पृथक् वचोभिःस्तूयमानम् ॥५४॥ लक्ष्म्या पुष्ट्या कान्त्यादिभिर्विद्याऽविद्यादिभिश्च सेवितम् ॥५५॥ एवंभूतं श्रीहरिं दृष्ट्वा प्रीतोऽक्रूरो रोमाञ्चितःसन् ॥ ५६ ॥ हरिं

तुङ्गगुल्फारुणनखव्रांतदीधितिभिर्वृतम् ॥ नवांगुल्यङ्गुष्ठदलैर्विलसत्पादपंकजम् ॥५०॥ सुमहार्हमणिव्रातकिरीटकटकाङ्गदैः ॥ कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ५१ ॥ भ्राजमानं पद्मकरं शंखचक्रगदाधरम् ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभं वनमालिनम् ॥५२॥ सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ॥ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥५३॥ प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः ॥ स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥ ५४ ॥ श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ॥ विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥ ५५ ॥ विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ॥ हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ५६ ॥ गिरा गद्गदयाऽस्तौषीत् सत्त्वमालम्ब्य सात्वतः ॥ प्रणम्य मूर्ध्नावहितः कृताञ्जलिपुटः शनैः ॥ ५७ ॥ इति श्रीभागव० म० द० पूर्वार्धेऽक्रूरप्रतियानं नामैकोनचत्वारिंशोऽध्यायः॥३९॥ अक्रूर उवाच॥नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् ॥ यन्नाभिजातादरविन्दकोशाद् ब्रह्माऽऽविरासीद्यत एष लोकः ॥१॥ भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इन्द्रियाणि ॥ सर्वेन्द्रियार्था विबुधाय सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ॥ २ ॥

नत्वा कृताञ्जलिर्गद्गदया गिरा तुष्टाव ॥ ५७ ॥ इति श्रीभागव० चू० दशम पूर्वार्द्धेऽक्रूरप्रतियानं नामैकोनचत्वारिंशोऽध्यायः ॥३९॥ चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम् ॥ प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥१॥ अक्रूर उवाच ॥ हे कृष्ण ! त्वां नारायणं नतोऽस्मि, यन्नाभिजातकमलकोशाद् ब्रह्माऽऽविरासीत् ॥ १ ॥ हे हरे ! ये जगतो हेतवः पञ्चतत्त्वदशेन्द्रियादयस्ते सर्वे त्वदङ्गाज्जाताः ॥ २ ॥

१ सहेत्यर्थः ।

एते सर्वेऽजाद्यास्तव रूपं न विदुः ! ब्रह्माऽपि तव रूपं न वेद ! अन्यः कुतो ज्ञास्यति॥३॥एवंभूतं महापुरुषं त्वां योगिनः साधवश्च यजन्ति ॥४॥
केचित् कर्मयोगिनो यज्ञैर्नानारूपं त्वामेव यजन्ते ॥५॥ एके ज्ञानिनः सर्वकर्माणि संन्यस्य ज्ञानयज्ञे ज्ञानरूपिणं त्वां यजन्ति॥६॥ अन्ये विष्णु-
दीक्षया दीक्षिताः सन्तस्त्वदुक्तपाञ्चरात्रविधिना सङ्कर्षणादिबहुमूर्तिं नारायणरूपेणैकमूर्तिं त्वां यजन्ति॥७॥तथाऽपरे शिवोक्तमार्गेण शिवरूपिणं

अजोऽनुबद्धः स गुणैरजाया गुणात् परं वेद न ते स्वरूपम् ॥ नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः ॥३॥ त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् ॥ साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥४॥ त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः ॥ यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥ ५ ॥ एके त्वाऽखिलकर्माणि संन्यस्योपशमं गताः ॥ ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् ॥६॥ अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ॥ यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम् ॥ ७ ॥ त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ॥ बह्वाचार्यविभेदेन भगवन् समुपासते ॥ ८ ॥ सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ॥ येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥९॥ यथाऽद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो ॥ विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः ॥ १० ॥ सत्त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः ॥ तेषु हि प्राकृताः प्रीता आब्रह्मस्थावरादयः ॥११॥ तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे ॥ गुणप्रवाहोऽयमविद्यया कृतः प्रवर्तते देवनृतिर्यगात्मसु ॥ १२॥ अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः ॥ द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः कुक्षिर्मरुत्प्राणबलं प्रकल्पितम् ॥ १३ ॥

त्वामुपासते ॥८॥ ये च अन्यदेवताभक्तास्ते सर्वदेवमयं त्वां यजन्ति ॥९॥ एवं सर्वे मार्गास्त्वयि प्रविशन्ति यथा नद्यः समुद्रम् ॥१०॥ अत्र कारणमाह।त्वन्मायागुणाःसत्वादयस्त्रयः । तेषु सर्वे आब्रह्मस्थावरादयः प्रीताः । अतस्ते त्वद्भिन्नाः न॥११॥अतस्त्वमेवसर्वदेवमयः। एवंभूताय सर्वधियां साक्षिणे तुभ्यं नमोऽस्तु॥१२॥अथ सगुणं स्तौति । हे हरे! तव मुखमग्निः।भूरङ्घ्री । सूर्यो नेत्रम् । नभो नाभिः। दिशः श्रोत्रम्।स्वर्गः

१ अजः आदिर्येषां ते । २ मायायाः । ३ गुणातीतम् । ४ बुद्धिमात्रभेदो न वस्तुभेदः । ५ प्रकृतिकार्योपाधयः ।

शिरः। देवाः भुजाः। सागरा कुक्षिः। वायुः प्राणबलौ ॥ १३ ॥ वृक्षौषधयो रोमाणि। केशाः मेघाः। अस्थिनखानि पर्वताः। निमेषाणि रात्र्यहनी। प्रजापतिः शिश्नम्। वीर्यं तु वृष्टिः ॥ १४ ॥ एवं सर्वे लोकास्त्वयि कल्पिताः सन्तः प्रचलन्ति। उदुम्बरे यथा मशकाः ॥१५॥ हे देव! इह क्रीडार्थं त्वं यानि यानि रूपाणि बिभर्षि तैर्दूरीकृतशोका लोकास्तव यशो गायन्ति ॥१६॥ अथ प्रलयाब्धिचराय कारण मत्स्याय ते नमः तथा मधुकैटभहन्त्रे हयग्रीवाय ते नमः ॥१७॥ मन्दरधारिणे कूर्माय ते नमः। भूम्युद्धारविहाराय वराहमूर्तये ते नमः ॥१८॥ अद्भुत-

रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः ॥ निमिषणं रात्र्यहनी प्रजापतिर्मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते ॥ १४ ॥ त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसङ्कुलाः ॥ यथा जले संजिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥ १५ ॥ यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि ॥ तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥ १६ ॥ नमः कारणमत्स्याय प्रलयाब्धिचराय च ॥ हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १७ ॥ अकूपाराय बृहते नमो मन्दरधारिणे ॥ क्षित्युद्धारविहाराय नमः सूकरमूर्तये ॥ १८ ॥ नमस्तेऽद्भुतसिंहाय साधुलोकभयापह ॥ वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥ १९ ॥ नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे ॥ नमस्ते रघुवर्याय रावणान्तकराय च ॥ २० ॥ नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ॥ प्रद्युम्नायाऽनिरुद्धाय सात्वतां पतये नमः ॥ २१ ॥ नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने ॥ म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥ २२ ॥ भगवन् जीवलोकोऽयं मोहितस्तव मायया ॥ अहंममेत्यसद्ग्राहो[1] भ्राम्यते कर्मवर्त्मसु ॥ २३ ॥

सिंहाय नमः। क्रान्तत्रैलोक्याय वामनाय ते नमः ॥ १९ ॥ क्षत्रहन्त्रे परशुरामाय० रावणहन्त्रे रामाय० ॥२०॥ वासुदेव सङ्कर्षणप्रद्युम्नानिरुद्धेति चतुर्मूर्तये ते नमः ॥२१॥ दैत्यादिमोहकर्त्रे बुद्धाय ०। म्लेच्छप्रायक्षत्रहन्त्रे कल्किरूपिणे ते नमोऽस्तु ॥ २२ ॥ हे भगवन्! अयं लोकस्तव मायया मोहितः सन् कर्ममार्गेषु भ्राम्यति ॥ २३ ॥

१ असति देहादौ ग्राहः आग्रहो यस्य सः।

यथाऽज्ञस्तृणादि-
अहमपिस्वप्नतुल्यदेहादिषु सत्यधिया भ्रमामि ॥२४॥ एवं देहगेहादौ विपरीतबुद्धिरहमात्मनः प्रियं त्वां न जाने ॥२५॥ यथाऽज्ञस्तृणादि-
भिर्गुप्तं जलं हित्वा मृगतृष्णाजलं गच्छति तथा त्वां पराङ्मुखो वर्ते ॥२६॥ किञ्च । इन्द्रियैरितस्ततः आकृष्यमाणं मे मनो रोद्धुं न शक्नोमि
॥२७॥ सोऽहं दुष्टानां दुर्लभं तव चरणं शरणं प्राप्तोऽस्मि । अयं तेऽनुग्रहः इति मन्ये ॥२८॥ अतो विज्ञानमूर्तये कालकर्मादीनां नियन्त्रे॥२९॥
वासुदेवाय सर्वभूतक्षयाय तुभ्यं नमः । हे प्रभो ! शरणागतं मां पाहि ॥३०॥ इति श्रीभाग० दशम० चू० पू० चत्वारिंशोऽध्यायः ॥४०॥

अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् ॥ द्वन्द्वारामस्तमोविष्टो न जाने त्वाऽऽत्मनः प्रियम् ॥२५॥ यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ॥ अभ्येति मृगतृष्णां वै तद्वत् त्वाऽहं पराङ्मुखः ॥२६॥ नोत्सहेऽहं कृपणधीः कामकर्महतं मनः ॥ रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः ॥ २७ ॥ सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं भवदनुग्रह ईश मन्ये ॥ पुंसो भवेद्यर्हि संसरणापवर्गस्त्वय्यब्जनाभ सदुपासनया मतिः स्यात् ॥ २८ ॥ नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ॥ पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥ २९ ॥ नमस्ते वासुदेवाय सर्वभूतक्षयाय च ॥ हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥ ३० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे अक्रूरस्तुतिर्नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

श्रीशुक उवाच ॥ स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः ॥ भूयः समाहरत् कृष्णो नटो नाट्यमिवात्मनः ॥ ॥१॥ सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्ज्य सत्वरः ॥ कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत् ॥२॥ तमपृच्छद्धृषीकेशः किं ते दृष्टमिवाद्भुतम् ॥ भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥ ३ ॥

एकचत्वारिंशकेऽथ रजकं प्रविशन् पुरीम् । ततो वरानदात्तुष्टः सुदाम्नो वायकस्य च ॥ १ ॥ श्रीशुक उवाच ॥ एवमक्रूरस्य स्तुवतः सतः कृष्णो जले वपुर्दर्शयित्वा पुनरुपसञ्जहार ॥१॥ सोऽपि तदन्तर्हितं दृष्ट्वा जलादुन्मज्ज्यावश्यकं कर्म कृत्वा रथं जगाम ॥२॥ तदा हरिस्तमाह । हे अक्रूर । त्वयाद्भुतं भूमौ जले आकाशे वा किं दृष्टम् ॥ ३ ॥

१ संसारस्य समाप्तिः । २ प्रत्ययो ज्ञानम् । ३ आश्रयाय ।

अक्रूर उवाच ॥ हे हरे ! भूमिजलादिषु यावन्त्यद्भुतानि तानि त्वय्येव सन्ति । तं त्वां पश्यता मया सर्वं दृष्टम् ॥ ४ ॥ हे परमेश्वर ! त्वयि सर्वाण्यद्भुतानि सन्ति तं त्वामिह पश्यतो मे त्वां विना भूम्यादौ किमपि नाद्भुतम् ॥५॥ एवमुक्त्वाऽक्रूरो रथं प्रेरयामास । ततो रामं कृष्णं चापराह्णकाले मथुरामानयत् ॥ ६ ॥ तदा मार्गे जनास्तत्र तौ दृष्ट्वा प्रीताः सन्तः पश्यन्त एव स्थिताः ॥ ७ ॥ तावन्नन्दादयः पुरोपवनं प्राप्य पुत्रागमनं प्रतीक्षमाणाः स्थिताः ॥ ८ ॥ ततः कृष्णो नन्दादीन् प्राप्य हस्तेन हस्तं गृहीत्वा प्रहस्याक्रूरं जगाद ॥९॥ हे सखे ! त्वं

अक्रूर उवाच ॥ अद्भुतानीह यावन्ति भूमौ वियति वा जले ॥ त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥४॥ यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले ॥ तं त्वाऽनु पश्यतो ब्रह्मन् किं मे दृष्टमिवाद्भुतम् ॥५॥ इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः ॥ मथुरामनयत् रामं कृष्णं चैव दिनात्यये ॥ ६ ॥ मार्गे ग्रामजना राजंस्तत्रतत्रोपसंगताः ॥ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥ ७ ॥ तावद् व्रजौकसस्तत्र नन्दगोपादयोऽग्रतः ॥ पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥८॥ तान् समेत्याह भगवानक्रूरं जगदीश्वरः ॥ गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥ भवान् प्रविशतामग्रे सहयानः पुरीं गृहम् ॥ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥ १० ॥ अक्रूर उवाच ॥ नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ॥ त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥११॥ आगच्छ याम गेहान्नः सनाथान् कुर्वधोक्षज ॥ सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ॥ १२ ॥ पुनीहि पादरजसा गृहान्नो गृहमेधिनाम् ॥ यच्छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः ॥१३॥ अवनिज्याङ्घ्रियुगलमासीच्छ्लोक्यो[1]बलिर्महान् ॥ ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां[2] तु या ॥ १४ ॥

सरथोऽग्रे गृहं गच्छ वयं तु विश्रम्य ततः पुरीं द्रक्ष्यामहे ॥१०॥ अक्रूर उवाच ॥ हे प्रभो ! भवद्भ्यां विना पुरीं न प्रवेक्ष्ये ? हे नाथ ! मां त्यक्तुं नार्हसि ॥ ११ ॥ किंच । सबलो गोपैः सह नो गृहानेत्य सनाथान् कुरु ॥१२॥ तथा नो गृहान् पादरजसा पुनीहि । तव पादप्रक्षालनोदकेन पित्रादयस्तृप्यन्ति ॥ १३ ॥ तव चरणयुगलं प्रक्षाल्य बलिः सद्गतिं लेभे ॥ १४ ॥

१ पुण्यकीर्त्यर्हः । २ एकान्तभक्तानाम् ।

तथा तव पादक्षालनोदकानि त्रिलोकीं पुनन्ति । किञ्च यानि शिवः शिरसाऽधत्त । सगरसुता अपि यैः स्वर्गं याताः ॥१५॥ हे देवदेव ! हे नारायण ! एवंभूताय ते नमोऽस्तु ॥१६॥ श्रीभगवानुवाच ॥ हे अक्रूर ! आदौ कंसं हत्वा ततः सबलस्तव गृहमेत्य सुहृत्प्रियं दास्यामि ॥१७॥ एवमुक्तोऽक्रूरो विमनाः पुरीं प्रविश्य कृतं कर्म कंसाय निवेद्य गृहं ययौ ॥१८॥ ततः कृष्णो रामगोपैः सहापराह्णे मथुरां विवेश ॥१९॥ कथंभूतां

आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकाञ्छुचयोऽपुनन् ॥ शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥१५॥ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥१६॥ श्रीभगवानुवाच ॥ आयास्ये भवतो गेहमहमार्यसमन्वितः ॥ यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥ १७ ॥ श्रीशुक उवाच ॥ एवमुक्तो भगवता सोऽक्रूरो विमना इव ॥ पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥ १८ ॥ अथापराह्णे भगवान् कृष्णः सङ्कर्षणान्वितः ॥ मथुरांप्राविशद् गोपैर्दिदृक्षुः परिवारितः ॥ १९ ॥ ददर्श तां स्फाटिकतुङ्गगोपुरद्वारां बृहद्धेमकपाटतोरणाम् ॥ ताम्राऽऽरकोष्ठांपरिखादुरासदामुद्यानरम्योपवनोपशोभिताम् ॥ २० ॥ सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ॥ वैदूर्यवज्राऽमलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥२१॥ जुष्टेषुजालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ॥ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् ॥ २२ ॥ आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृन्तरम्भाक्रमुकैः सकेतुभिः स्वलङ्कृतद्वारगृहां सपट्टिकैः ॥ २३ ॥



ताम् । स्फाटिकतुङ्गगोपुरगृहद्वारां सुवर्णकपाटतोरणां परिखया दुर्गमाम् ॥२०॥ सुवर्णनिर्मितैश्चतुष्पथादिभिरलङ्कृतां पारावतमयूरादिभिर्नादिताम् । संसिक्तरथ्यापणमार्गचत्वराम् ॥ २१ ॥ २२ ॥ आपूर्णकुम्भैःकदलीस्तम्भैर्ध्वजपताकादिभिः प्रतिद्वारं शोभिताम् ॥ २३ ॥

१ आरं पित्तलम् । २ धान्यागारादि । ३ श्रेणीनाम् एकरूपशिल्पोपजीविनाम् । सभाभिः उपवेशनस्थानैः । ४ स्फटिकम् । ५ मरकतम् । ६ जालामुखं गवाक्षम् । गवाक्षच्छिद्रेषु कुट्टिमेषु चेतिद्वन्द्वः वैदूर्यादिरत्नैर्जुष्टेषु वलभ्यादिष्वाविष्टैः, उपविष्टैः पारावतादिभिरिति दूरान्वयेन योज्यम् । ७ प्रसूनानां दीपानां चेति द्वन्द्वः । ८ वितस्तिविस्तराणि पट्टवस्त्राणि । तत्रेयं रीतिः—द्वारेषूभयतः तण्डुलानामुपरि कुम्भाः तत्परितः प्रसूनावलयः कण्ठे पट्टिका मुखे चूतादिपल्लवास्तदुपरि पात्रान्तरे दीपावलयस्तत्सन्निधौ रम्भाः क्रमुकाः केतवस्तोरणानि चेति ।

एवंभूतां तां प्रविष्टौ रामकृष्णौ प्रति द्रष्टुं पुरस्त्रियो ययुः हर्म्याण्यारुरुहुश्च ॥२४॥ काश्चिद् विपरीतं धृतवस्त्रभूषणा ईयुः । काश्चिदेकमेव नूपुरं धृत्वा अपराः एकनेत्रेऽञ्जनं निधाय ॥२५॥ काश्चिद् भोजनं हित्वा, का॰ बालं पाययन्तस्तं हित्वा, काश्चिद् निद्रां त्यक्त्वा ॥२६॥ तासां मनांसि कृष्णो हास्यावलोकनादिभिर्जहार ॥ २७ ॥ एवंविधं कृष्णं दृष्ट्वा दृशाऽऽलिङ्ग्य मनोव्यथां जहुः ॥२८॥ ततः प्रासादशिखरारूढाः

तां संप्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना ॥ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥ २४ ॥ काश्चिद् विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ॥ कृतैकपत्रश्रवणैकनूपुरा नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम् ॥२५॥ अश्नन्त्य एकास्तदपास्य भोजनमभ्यज्यमाना अकृतोपमज्जनाः ॥ स्वपन्त्य उत्थाय निशम्य निस्स्वनं प्रपाययन्त्योऽर्भमपोह्य मातरः ॥ २६ ॥ मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकनैः ॥ जहार मत्तद्विरदेन्द्रविक्रमो दृशा ददच्छ्रीरमणात्मनोत्सवम् ॥२७॥ दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः ॥ आनन्दमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम् ॥ २८ ॥ प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः ॥ अभ्यवर्षन् सौमनस्यैः प्रमदा बलकेशवौ ॥ २९ ॥ दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः ॥ तावानर्चुः प्रमुदितास्तत्रतत्र द्विजातयः ॥३०॥ ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् ॥ या ह्येतावनुपश्यन्ति नरलोकमहोत्सवौ ॥ ३१ ॥ रजकं कञ्चिदायान्तं रङ्गकारं गदाग्रजः ॥ दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥ ३२ ॥ देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः ॥ भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ ३३ ॥ स याचितो भगवता परिपूर्णेन सर्वतः ॥ साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥ ३४ ॥

स्त्रियस्तौ प्रति पुष्पगुच्छैर्वृष्टिं चक्रुः ॥ २९ ॥ तत्रतत्र द्विजातयो दध्यक्षतादिभिरुपायनैस्तावानर्चुः ॥३०॥ पुरस्त्रिय ऊचुः ॥ अहो ! गोप्यः किं तपः आचरन् याः एतौ नित्यं पश्यन्ति ॥ ३१ ॥ तावत् कृष्णो रजकं रङ्गकारं प्राप्तं दृष्ट्वा धौतश्रेष्ठवस्त्राणि ययाचे ॥३२॥ हे रजक ! आवयोर्योग्यवस्त्राणि देहि, तव श्रेयो भविष्यति ॥ ३३ ॥ एवं याचितः स दुर्मदः क्रुद्धः सन् जगाद ॥ ३४ ॥

१ धार्येषु कुण्डलकङ्कणादिषु । २ कृतमेकमेव पत्रं ताटंकं ययोस्ते श्रवणे यासां ताः । ३ 'सोत्सवाः' इ॰ पा॰ । ४ श्रियं रमयतीति श्रीरमणः तेनात्मना वपुषा ।

यदि जिजीविषा एवं न प्रार्थ्यम् ! यतो गर्विष्ठ
हे उद्वृत्ताः ! गिरिवनेचराः ईदृग्वस्त्राणि परिधत्त किम् ? ॥३५॥ हे बालिशाः ! यात यात । यदि जिजीविषा एवं न प्रार्थ्यम् ! यतो गर्विष्ठं राजदूताः बध्नन्ति घ्नन्ति लुम्पन्ति ॥३६॥ एवं वदतस्तस्य शिरो हरिः कराग्रेण पातयामास ॥३७॥ ततस्तत्सेवकाः वस्त्राणि हित्वा दुद्रुवुः ॥३८॥ ततः कृष्णो रामश्च स्वप्रिये वस्त्रे धृत्वा शेषाणि गोपेभ्यो ददतुः ॥३९॥ ततो वायकः प्रीतः सन् वस्त्रमयभूषणैस्तयोर्वेषं चकार॥४०॥

यातांशु बालिशा-
ईदृशान्येव वासांसि नित्यं गिरिवनेचराः ॥ परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥ ३५ ॥ मैवं प्रार्थ्यं यदि जिजीविषा ॥ बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि वै ॥३६॥ एवं विकत्थमानस्य कुपितो देवकीसुतः ॥ रजकस्य कराग्रेण शिरः कायादपातयत् ॥ ३७ ॥ तस्यानुजीविनः सर्वे वासःकोशान् विसृज्य वै ॥ दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः ॥३८॥ वसित्वात्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा ॥ शेषाण्यदत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥ ३९ ॥ ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् ॥ विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ॥४०॥ नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ॥ स्वलङ्कृतौ बालगजौ पर्वणीव सितेतरौ ॥४१॥ तस्य प्रसन्नो भगवान् प्रादात् सारूप्यमात्मनः ॥ श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम् ॥४२॥ ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः ॥ तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥ ४३ ॥ तयोरासनमानीय पाद्यं चार्थार्हणादिभिः ॥ पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः ॥ ४४ ॥ प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ॥ पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥४५॥ भवन्तौ किल विश्वस्य जगतः कारणं परम् ॥ अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥४६॥

तदा तौ स्वलङ्कृतौ विरेजतुः उत्सवे बालगजाविव ॥४१॥ तस्य प्रसन्नो हरिः स्वसारूप्यं श्रियं च ददौ ॥४२॥ ततः सुदाम्नो मालाकारस्य गृहं जग्मतुः तौ दृष्ट्वा स उत्थाय शिरसा नत्वा॥४३॥आसनं दत्त्वा स्रक्ताम्बूलानुलेपनैः पूजां कृत्वा॥४४॥प्राह । हे प्रभो ! मम जन्म सार्थकं जातम् । कुलं च पावितम् । अद्य देवपित्रादयो युष्माकमागमनेन मह्यं तुष्टाः॥४५॥भवन्तौ विश्वस्य परं कारणम् । जगतः क्षेमायावतीर्णौ॥४६॥

१ "आदत्त" इ० पा० । २ उद्धवाय ।

जगदात्मनोर्वां मित्रमरिरिति विषमा दृष्टिर्न ॥४७॥ भृत्यं मामाज्ञापयन्तं किं करवाणि ॥४८॥ एवं विज्ञापयन् सुदामा तयोर्मतं ज्ञात्वा सुगन्धपुष्पैः रचिता माला ददौ ॥४९॥ ततः स्वलङ्कृतौ प्रीतौ रामकृष्णौ प्रपन्नाय तस्मै वरान् ददतुः ॥५०॥ सोऽपि हरौ भक्तिं तद्भक्तेषु स्नेहं भूतेषु दयां च वव्रे ॥५१॥ तदा कृष्णस्तथेत्युक्त्वा ततो वंशे वृद्धिमतीं श्रियमायुर्यशआदिकं च दत्त्वा निर्जगाम ॥५२॥ इति श्रीभागवते दशम० चू० पू० एकचत्वारिंशोऽध्यायः ॥४१॥ द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भिदा । वधस्तद्रक्षिणां कंसारिष्टं रंगोत्सवादि च ॥१॥ श्रीशुक

नहि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ॥ समयोः सर्वभूतेषु भजन्तं भजतोरपि ॥४७॥ तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् ॥ पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥ ४८ ॥ इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः ॥ शस्तैस्सुगन्धैः कुसुमैर्माला विरचिता ददौ ॥४९॥ ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ ॥ प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥५०॥ सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ॥ तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥५१॥ इति तस्मै वरान् दत्त्वा श्रियं चान्वयवर्धिनीम् ॥ बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ॥ ५२ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पू० पुरप्रवेशो नामैकचत्वारिंशोऽध्यायः ॥४१॥ श्रीशुक उवाच ॥ अथ व्रजन् राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम् ॥ विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्तीं प्रहसन् रसप्रदः ॥१॥ का त्वं वरोर्वेतद्दुहानुलेपनं कस्याङ्गने वा कथयस्व साधु नः ॥ देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्यति ॥ २ ॥ सैरन्ध्र्युवाच ॥ दास्यस्म्यहं सुन्दर कंससंमता त्रिवक्रनामा ह्यनुलेपकर्मणि ॥ मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥३॥ रूपपेशलमाधुर्यहसितालापवीक्षितैः ॥ धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥

उवाच ॥ हे नृप ! ततः कृष्णो राजपथेन गच्छन् गृहीताङ्गविलेपभाजनां यान्तीं कुब्जां दृष्ट्वोवाच ॥१॥ हे वरोरु ! त्वं का ? इदं लेपनं कस्येति नो वद । आवयोर्विलेपनं देहि । तव श्रेयो भविष्यति ॥२॥ सैरन्ध्र्युवाच ॥ हे सुन्दर ! अहं त्रिवक्रानाम्नी दासी कंसस्य बहुमान्याऽस्मि । मत्कृतं तस्यातिप्रियं भवति । तद्युवां विना कोऽन्योऽर्हति ॥ ३ ॥ एवमुक्त्वा सा हरेः रूपादिभिर्मोहितोभयोर्लेपनं ददौ ॥ ४ ॥

कृष्णस्तां त्रिवक्रां सरलां कर्तुं मनश्चक्रे ॥ ६ ॥ स्वपद्भ्यां तस्याः पादाग्रद्वयमा-
ततस्तौ तेनाङ्गरागेण रञ्जितौ शुशुभाते ॥५॥ ततः प्रसन्नः क्रम्य द्व्यङ्गुल्युत्तानपाणिना चुबुके धृत्वा देहमुन्नमयामास॥७॥ सा तदैव कृष्णस्पर्शादृजुसमानाङ्गी प्रमदोत्तमा बभूव॥८॥ ततो रूपगुणौदा-
र्यसम्पन्ना सोत्तरीयवस्त्रमाकृष्य कृष्णं जगाद ॥९॥ हे वीर ! एहि गृहं यामः ! त्वां त्यक्तुं नोत्सहे । मम प्रसीद ॥१०॥ एवं तया याच्यमानः

ततस्तावङ्गरागेण स्ववर्णेतरशोभिना॥संप्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ ॥५॥ प्रसन्नो भगवान् कुब्जां त्रिवक्रां रुचि-
राननाम् ॥ ऋज्वीं कर्तुं मनश्चक्रे दर्शयन् दर्शने फलम् ॥६॥ पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना ॥ प्रगृह्य
चुबुकेऽध्यात्ममुदनीनमदच्युतः ॥ ७ ॥ सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा ॥ मुकुन्दस्पर्शनात् सद्यो बभूव प्रम-
दोत्तमा ॥८॥ ततो रूपगुणौदार्यसंपन्ना प्राह केशवम् ॥ उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया ॥९॥ एहि वीर
गृहं यामो न त्वां त्यक्तुमिहोत्सहे ॥ त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥१०॥ एवं स्त्रिया याच्यमानः कृष्णो
रामस्य पश्यतः ॥ मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाचह॥११॥एष्यामि ते गृहं सुभ्रूः पुंसामाधिविकर्शनम् ॥ साधिता-
र्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥१२॥ विसृज्य माध्व्या वाण्या तां व्रजन् मार्गे वणिक्पथैः ॥ नानोपायनताम्बू-
लस्रग्गन्धैः साग्रजोऽर्चितः ॥ १३ ॥ तद्दर्शनस्मरक्षोभादात्मानं नाविदन् स्त्रियः ॥ विस्रस्तवासःकबरवलयालेख्यमू-
र्तयः ॥१४॥ ततः पौरान् पृच्छमानो धनुषः स्थानमच्युतः ॥ तस्मिन् प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥ १५ ॥

कृष्णो रामादीनां मुखं वीक्ष्य तमाह ॥११॥ हे सुभ्रूः ! अहं कंसवधेन साधितसुहृत्प्रयोजनः सन् तव गृहमेष्यामि यतस्त्वमकृतदाराणां
प्रवासिनां नः परमाश्रयः ॥१२॥ एवं तां विसृज्य व्रजन् मार्गे वणिक्पथैरुपायनादिभिः साग्रजोऽर्चितः ॥१३॥ तद्दर्शनकामक्षोभात् स्त्रियो
विह्वलिताः आत्मानं न विदुः ॥ १४ ॥ ततः कृष्णः पौरान् धनुस्स्थानं पृष्ट्वा तत्र गत्वा धनुर्ददृशे ॥ १५ ॥

१ रामकृष्णयोर्वर्णाभ्यामितरेण । २ परभागः शोभा । ३ 'वणिजां' पन्थाः वाणिज्यरूपो येषां तैः वणिग्भिरित्यर्थः । ४ चित्रवन्निश्चलाः मूर्तयो यासां ताः ।

तत्र बहुपुरुषैः रक्षितं धनुर्नृभिर्वारितोऽपि कृष्णः आददे ॥१६॥ ततो वामकरेण तत् सज्यं कृत्वा सर्वेषां पश्यतां मध्यतो बभञ्ज इक्षुदण्डं गज इव॥१७॥ततो भज्यमानधनुश्शब्दः खं रोदसी दिशः पूरयामास। तं श्रुत्वा कंसस्त्रासं प्राप॥१८॥तदा धनुषो रक्षकाः क्रुद्धाः सन्तो गृह्यतां बध्यतामिति ब्रुवन्तः कृष्णं वेष्टितवन्तः॥१९॥तान् दृष्ट्वा रामकृष्णौ धनुश्शकले आदाय तान् जघ्नतुः ॥२०॥ तथा कंसप्रेरितं सैन्यं च

पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् ॥ वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे॥१६॥करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ॥ नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ॥१७॥ धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ॥ पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत्॥१८॥ तद्रक्षिणः सानुचराः कुपिता आततायिनः॥ ग्रहीतुकामा आवव्रुर्गृह्यतां बध्यतामिति ॥ १९ ॥ अथ तान् दुरभिप्रायान् विलोक्य बलकेशवौ ॥ क्रुद्धौ धन्वन आदाय शकले तांश्च जघ्नतुः॥२०॥बलं च कंसप्रहितं हत्वा शालामुखात् ततः ॥ निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः ॥२१॥ तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः ॥ तेजः प्रागल्भ्यरूपं च मेनिरे विबुधोत्तमौ ॥२२॥ तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान्॥ कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥ २३ ॥ गोप्यो मुकुन्दविगमे विरहातुरा या आशासताशिष ऋता मधुपुर्यभूवन् ॥ संपश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान् नु भजतश्चकमेऽयनं श्रीः ॥ ॥ २४ ॥ अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षीरोपसेचनम् ॥ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥ २५ ॥

हत्वा ततः शालामुखान्निर्गम्य पुरसम्पदो दृष्ट्वा चेरतुः॥२१॥ तयोस्तं पराक्रमं दृष्ट्वा तौ पुरवासिनो देवोत्तमौ मेनिरे ॥२२॥ एवं तयोश्चरतोः सूर्योऽस्तं जगाम। तावद् रामाद्यैर्वृतः शकटस्थानं जगाम ॥२३॥ हे नृप ! गोप्यो व्रजाद्धरेर्निर्गमनसमये याः आशिषः आशासत ताः हरिमूर्तिशोभां पश्यतां मधुपुरि सत्याः जाताः ॥ २४ ॥ ततः कृष्णरामौ पादौ प्रक्षाल्य दुग्धान्नं भुक्त्वा तां रात्रिं न्यवसताम् ॥ २५ ॥

१ ब्रह्मादीन् । २ आश्रयम् । इतरान् हित्वा श्रीः कामयामास स्वयंवरकाले यां गात्रलक्ष्मीमिति वा ।

कंसस्तु धनुर्भङ्गं रक्षपालानां घातं च श्रुत्वा ॥२६॥ भीतो दीर्घप्रजागरो मृत्युसूचकानि दुर्निमित्तानि ददर्श ॥२७॥ तान्याह । जलदर्पणादौ प्रतिरूपे दृश्यमानेऽपि स्वशिरसोऽदर्शनं ददर्श । तथा ज्योतिषां द्वैरूप्यम् ॥२८॥ छायायां छिद्रप्रतीतिः । प्राणघोषस्याश्रवणं वृक्षेषु सुवर्णवर्णप्रतीतिः । रजः कर्दमादिषु स्वपदानामदर्शनम् ॥२९॥ स्वप्ने प्रेतालिङ्गनं खरमारुह्य यानं विषभक्षणं जपाकुसुममालाधारणं तैलाभ्यक्तस्य दिगम्बरस्य चात्मनो यानम् ॥ ३० ॥ इत्यादीनि कंसो दृष्ट्वा मरणत्रस्तः सन् निद्रां न लेभे ॥ ३१ ॥ ततश्चतुर्दश्यां प्रातः कंसो मल्लक्रीडा-

कंसस्तु धनुषो भंगं रक्षिणां स्वबलस्य च ॥ वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥२६॥ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ॥ बहून्याचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ २७॥ अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ॥ असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥ २८ ॥ छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ॥ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ २९ ॥ स्वप्ने प्रेतपरिष्वङ्गः खरयानं विषादनम् ॥ यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥३०॥ अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च ॥ पश्यन् मरणसंत्रस्तो निद्रां लेभे न चिन्तया ॥३१॥ व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते ॥ कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥ ३२ ॥ आनर्चुः पुरुषा रंगं तूर्यभेर्यश्च जघ्निरे ॥ मञ्चाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः ॥३३॥ तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ॥ यथोपजोषं विविशू राजानश्च कृतासनाः ॥ ३४ ॥ कंसस्तु संवृतोऽमात्यै राजमञ्च उपाविशत् ॥ मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ३५ ॥ वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ॥ मल्लाः स्वलंकृता दृप्ताः सोपाध्यायाः समागताः ॥ ३६ ॥ चाणूरो मुष्टिकः कूटः शलस्तोशल एव च ॥ त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥ ३७ ॥

महोत्सवं कारयामास ॥ ३२ ॥ पुरुषाः रङ्गमानर्चुः । तूर्यभेर्यो जघ्निरे । मञ्चाः स्रक्पताकादिभिरलंकृताः ॥ ३३ ॥ तेषु सर्वजनाः राजानश्च यथासुखमुपविविशुः ॥३४॥ सामात्यः कंसश्च कम्पितहृदयेन राजमञ्चे उपविवेश॥३५॥ एवं तूर्येषु वाद्यमानेषु सत्सु गुरुसहिताः मल्लाश्चाणूरमुष्टिककूटशलतोशलाः हर्षिताः सन्तो मल्लरङ्गमासेदुः ॥ ३६ ॥ ३७ ॥

नन्दादयो गोपाः कंसायोपायनानि दत्त्वैकस्मिन् मञ्चे आविशन् ॥३८॥ इति श्रीभाग चू० द० पू० द्विचत्वारिंशोऽध्यायः ॥४२॥ त्रिचत्वारिंशके हत्वा गजेन्द्रं रामकृष्णयोः ॥ रङ्गप्रवेशसौभाग्यं चाणूरेण च भाषणम् ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! अथ रामकृष्णौ मल्लदुन्दुभिनादं श्रुत्वा तं द्रष्टुम् रङ्गद्वारं गत्वा कुवलयापीडं गजं ददृशतुः ॥१॥२॥ तत कृष्णः परिकरं बद्ध्वा गम्भीरवाण्या हस्तिपं जगाद ॥ ३ ॥ हे अम्बष्ठ! हे अम्बष्ठ! मार्गं देहि, नो चेत् सगजं त्वामद्य यमालयं नयामि ॥४॥ एवं निर्भर्त्सितोऽम्बष्ठः क्रुद्धः सन् कृष्णाय कोपितं गजं प्रेरयामास

नन्दगोपादयो गोपा भोजराजसमाहुताः ॥ निवेदितोपायनास्ते एकस्मिन् मञ्च आविशन् ॥ ३८ ॥ इति श्रीभाग० म० द० पू० कुब्जोन्नमनादिवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ श्रीशुक उवाच ॥ अथ कृष्णश्च रामश्च कृतशौचौ परन्तप ॥ मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥१॥ रङ्गद्वारं समासाद्य तस्मिन्नागमवस्थितम् ॥ अपश्यत् कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् ॥ २॥ बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान् ॥ उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ३ ॥ अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्रम मा चिरम् ॥ नो चेत् सकुञ्जरं त्वाद्य नयामि यमसादनम् ॥४॥ एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम् ॥ चोदयामास कृष्णाय कालान्तकयमोपमम् ॥५॥ करीन्द्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् ॥ कराद् विगलितः सोऽमुं निहत्यांघ्रिष्वलीयत ॥६॥ सङ्क्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ॥ परामृशत् पुष्करेण स प्रसह्य विनिर्गतः ॥७॥ पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम् ॥ विचकर्ष यथा नागं सुपर्ण इव लीलया ॥८॥ स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः ॥ बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः॥९॥

॥ ५ ॥ ततो गजः कृष्णं शुण्डया जग्राह । शुण्डया विगलितः कृष्णो मुष्टिना तं हत्वाऽङ्घ्रिषु निलिल्ये ॥ ६ ॥ ततो गजस्तमपश्यन् क्रुद्धः सन् घ्राणदृष्टिर्भूत्वा तं शुण्डया दधार । ततः कृष्णो बलान्निर्गतः सन् ॥७॥ तं पुच्छे धृत्वा धनुषां पञ्चविंशतिर्यावत् तावन्तं देशं विचकर्ष ॥ ८ ॥ तथा सव्यदक्षिणतो भ्राम्यमाणेन तेन सह व्यस्तं बभ्राम ॥ ९ ॥

---

१ अम्बष्ठः हस्तिपः ।

ततः संमुखं भुवं गत्वा तं पाणिना हत्वा धावन् सन् तं पातयामास ॥१०॥ धावन् कृष्णो भूमौ पतित्वा सहसोत्थितः तदा गजस्तं पतितं मत्वा दन्ताभ्यां भुवं जघान ॥११॥ एवं पराक्रमे नष्टे क्रुद्धो गजो रुषा कृष्णं दुद्राव ॥१२॥ ततः कृष्णस्तं गजमागतं दृष्ट्वा पाणिना शुण्डां धृत्वा भूतले निपात्य ॥१३॥ पदाऽऽक्रम्य दन्तमुत्पाट्य तेनैव तं हस्तिनं हस्तिपांश्च जघान ॥१४॥ ततो मृतं तमुत्सृज्य दन्तहस्तो रुधिरमदबिन्दु-

ततोऽभिमुखमभ्येत्य पाणिनाऽऽहत्य वारणम् ॥ प्राद्रवन् पातयामास स्पृश्यमानः पदेपदे ॥ १० ॥ स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः ॥ तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत् क्षितिम् ॥ ११ ॥ स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः ॥ चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद् रुषा ॥ १२ ॥ तमापतन्तमासाद्य भगवान् मधुसूदनः ॥ निगृह्य पाणिना हस्तं पातयामास भूतले ॥ १३ ॥ पतितस्य पदाक्रम्य मृगेन्द्र इव लीलया ॥ दन्तमुत्पाट्य तेनेभं-हस्तिपांश्चाहनद्धरिः ॥ १४ ॥ मृतकं द्विपमुत्सृज्य दन्तपाणिः समाविशत् ॥ असंन्यस्तविषाणोऽसृङ्मदबिन्दुभिर-ङ्कितः ॥ विरूढस्वेदकणिकावदनाम्बुरुहो बभौ ॥ १५ ॥ वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ ॥ रंगं विविशतू राजन् गजदंतवरायुधौ ॥ १६ ॥ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रंगं गतः साग्रजः ॥ १७ ॥ हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ॥ कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप ॥१८॥ तौ रेजतू रंगगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ ॥ यथा नटावुत्तमवेषधारिणौ मनः क्षिपन्तौ प्रभया निरीक्षताम् ॥१९॥

भिरंकितः सन् बभौ ॥ १५ ॥ एवं रामकृष्णौ गोपैः सह गजदन्तायुधौ रङ्गं विविशतुः ॥१६॥ तदा स कृष्णो मल्लानां वज्रसदृशो नृणां नरवरः स्त्रीणां मदनो गोपानां स्वजनो दुष्टराजानां शास्ता पित्रोः शिशुः कंसस्य मृत्युरज्ञानिनामपर्याप्तो योगिनां तत्त्वं यदूनां परदेवतेति विदितः सन् साग्रजो रङ्गं गतः ॥ १७ ॥ एवं हतं गजं दृष्ट्वा शूरोऽपि कंसो भयं प्राप ॥ १८ ॥ ततस्तौ नटाविव विरेजतुः ॥ १९ ॥

एवंभूतौ तौ दृष्ट्वा मञ्चस्थाः सर्वे जनास्तन्मुखं नयनैः पीत्वा ॥२०॥ जिह्वया लिहन्त इव बाहुभिरालिङ्गन्त इव ॥२१॥ तयोर्यथादृष्टं यथाश्रुतं रूपगुणमाधुर्यधाष्टर्यादिकं वीक्ष्य परस्परमूचुः ॥ २२ ॥ एतौ हरेरंशेन वसुदेवगृहेऽवतीर्णौ ॥२३॥ एष कृष्णो देवक्यां किल जातः । ततो गोकुलं नीतः एतावन्तं कालं नन्दगृहे गुप्तः सन् ववृधे ॥ २४ ॥ अनेन पूतना चक्रवातो यमलार्जुनौ शङ्खचूडः केशी धेनुकः अन्ये च नाशिताः ॥ २५ ॥ एतेन दावाग्नेः सकाशात् सपालाः गावो मोचिताः । कालियो दमितः । इन्द्रश्च विमदः कृतः ॥२६॥ तथाऽनेन सप्ताह-

निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप ॥ प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम् ॥२०॥ पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥ २१ ॥ ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ॥ तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥२२॥ एतौ भगवतः साक्षाद् हरेर्नारायणस्य हि ॥ अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥२३॥ एष वै किल देवक्यां जातो नीतश्च गोकुलम् ॥ कालमेतं वसन् गूढो ववृधे नन्दवेश्मनि॥२४॥पूतनाऽनेन नीतान्तं चक्रवातश्च दानवः ॥ अर्जुनौ गुह्यकः केशी धेनुकोऽन्ये च तद्विधाः ॥२५॥ गावः सपाला एतेन दावाग्नेः परिमोचिताः ॥ कालियो दमितः सर्प इन्द्रश्च विमदः कृतः ॥ २६ ॥ सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना ॥ वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥२७॥ गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् ॥ पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रमं मुदा ॥२८॥ वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः ॥ श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥ २९ ॥ अयं चास्याग्रजः श्रीमान् रामः कमललोचनः ॥ प्रलम्बो निहतो येन वत्सको ये बकादयः ॥ ३० ॥ जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ॥ कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥ ३१ ॥

मेकहस्तेन गोवर्धनो धृतः । वातवर्षादिभ्यो गोकुलं च रक्षितम् ॥२७॥ तथा गोप्योऽस्य मुखं पश्यन्त्यस्तापान् जहुः ॥२८॥ तथाऽनेन यदा वंशो विख्यातः सन् श्रियं यशो महत्त्वं च लप्स्यते ॥ २९ ॥ अयं चास्याग्रजो रामः । अनेन प्रलम्बो बकादयो नाशिताः ॥ ३० ॥ एवं जनेषु ब्रुवाणेषु तूर्येषु स कृष्णरामावाभाष्य चाणूरः आह ॥ ३१ ॥

---

१ ईषच्छ्रमयुक्तम् ।

हे कृष्ण ! हे राम ! युवां वीरमान्यौ युद्धनिपुणौ ज्ञात्वा कंसेनाहूतौ ॥३२॥ किंच राज्ञः प्रियं कुर्वन्त्यः प्रजा श्रेयो विन्दन्ति । अन्यथा न ॥ ३३ ॥ किंच गोपाः नित्यं वनेषु मल्लयुद्धेन क्रीडन्तो गाश्चारयन्ति ॥३४॥ तस्माद्राज्ञः प्रियं यूयं वयं च करवाम । भूतानि नः प्रसीदन्ति यतः सर्वभूतमयो नृपः ॥३५॥ एवं श्रुत्वा कृष्णो देशकालोचितं वचः आह ॥ ३६ ॥ हे मल्ल ! अस्य राज्ञो यूयं वयं च प्रजाः अतोऽस्य प्रियं करवाम ॥ ३७ ॥अद्य वयं बालास्तुल्यबलैः क्रीडिष्यामश्चेद्बाहुयुद्धं स्यात् । अत्र मल्लसभास्थानस्मानधर्मो मा स्पृशेत् ॥३८॥ चाणूर

हे नन्दसूनो हे राम भवन्तौ वीरसंमतौ ॥ नियुद्धकुशलौ श्रुत्वा राज्ञाऽऽहूतौ दिदृक्षुणा ॥ ३२ ॥ प्रियं राज्ञः प्रकुर्वन्त्यः श्रेयो विन्दन्ति वै प्रजाः ॥ मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥ नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ॥ वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः ॥३४॥ तस्माद्राज्ञः प्रियं यूयं वयं च करवामहे ॥ भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः ॥ ३५ ॥ तन्निशम्याब्रवीत् कृष्णो देशकालोचितं वचः ॥ नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च ॥३६॥ प्रजा भोजपतेरस्य वयं चापि वनेचराः ॥ करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ॥ ३७ ॥ बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ॥ भवेन्नियुद्धं माऽधर्मः स्पृशेन्मल्लसभासदः ॥ ३८ ॥ चाणूर उवाच ॥ न बालो न किशोरस्त्वं बलश्च बलिनां वरः ॥ लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥ ३९ ॥ तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै ॥ मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे कुवलयापीडवधो नाम त्रिचत्वारिंशोऽध्यायः ॥४३॥ श्रीशुक उवाच ॥ एवं चर्चितसंकल्पो भगवान् मधुसूदनः ॥ आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥

उवाच ॥ हे कृष्ण ! त्वं बालो न । बलश्च बलिनां वरः । येन सहस्रगजबलधारकः कुवलयापीडो हतः ॥३९॥ तस्माद्भवद्भ्यां मादृशैः सह योद्धव्यम् । अत्राधर्मो न । ततः हे कृष्ण ! भवान् मया सह, बलेन मुष्टिकश्च युध्यताम् ॥४०॥ श्रीभाग० द० चू० पू० त्रिचत्वारिंशोऽध्यायः ॥४३॥ चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् । कंसयोषित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥१॥ श्रीशुक उवाच ॥ एवं निश्चितसंकल्पो भगवान् चाणूरमाससाद । रामो मुष्टिकम् ॥ १ ॥

हस्ताभ्यां हस्तयोर्बद्ध्वा पदभ्यां पादयोः जानुभ्यां जानुनी शीर्ष्णा शिरो वक्षसा वक्षः एवं बद्ध्वाऽन्योन्यं जिगीषयाऽभिजघ्नतुः ॥ २ ॥ ३ ॥ परिभ्रमणविक्षेपपरिरम्भावपातनादिभिरुत्थापनैरुन्नयनैश्चालनैः परस्परं जिगीषन्तौ तावाकृष्य परस्परं देहस्यापकारं कृतवन्तौ ॥ ४ ॥ ५ ॥ तद् बलाबलवद् युद्धं दृष्ट्वा मिथः सर्वस्त्रियः ऊचुः ॥ ६ ॥ अहो एषां सभासदां महानधर्मः पश्यत ॥ ७ ॥ एतौ मल्लौ शैलोपमौ क्व । एतौ

हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ॥ विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥२॥ अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ॥ शिरःशीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥३॥ परिभ्रामणविक्षेपपरिरम्भावपातनैः ॥ उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुन्धताम् ॥४॥ उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ॥ परस्परं जिगिषन्तावपचक्रतुरात्मनः ॥ ॥५॥ तद्बलाबलवद् युद्धं समेताः सर्वयोषितः ॥ ऊचुः परस्परं राजन् सानुकम्पा वरूथशः ॥ ६ ॥ महानयं बताऽधर्म एषां राजसभासदाम् ॥ ये बलाबलवद् युद्धं राज्ञोऽन्विच्छन्ति पश्यतः ॥७॥ क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ ॥ क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥ ८ ॥ धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् ॥ यत्राधर्मस्समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥९॥ न सभां प्रविशेत् प्राज्ञः सभ्यदोषाननुस्मरन् ॥ अब्रुवन् विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥ १० ॥ वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम् ॥ वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभिः ॥ ११ ॥

सुकुमारौ क्व ॥ ८ ॥ अतोऽस्य समाजस्य धर्मव्यतिक्रमो भवेद् यत्राऽधर्मः उत्तिष्ठेत् तत्र न स्थेयम् ॥ ९ ॥ किंच । प्राज्ञः सभ्यदोषान् स्मरन् सभां न प्रविशेत्, यतोऽब्रुवन् विब्रुवन् नरः पापं भुङ्क्ते ॥ १० ॥ हे स्त्रियः ! शत्रुं सर्वतो धावतः कृष्णस्य श्रमबिन्दुव्याप्तं मुखाम्बुजं दृश्यताम् ॥ ११ ॥

---

१ हस्तादिषु गृहीत्वा परितश्चालनम् । २ नोदनम् । ३ बाहुभ्यां निष्पीडनम् । ४ अधःक्षेपः । ५ उत्सृज्य पुरतो गमनम् । ६ पृष्ठतो गमनम् । ७ जानुनी पादौ च पिण्डीकृत्यपतितस्योच्चाटनम् । ८ हस्ताभ्यामुद्धृत्य नयनम् । ९ कण्ठादिलग्नस्य निस्सारणम् । १० पादादिपिण्डीकरणम् । ११ अनुमन्यन्ते । १२ विपरीतं वदन् ।

कि न पश्यत ॥१२॥ अपराः ऊचुः । अहो व्रजभुवः पुण्याः यतः अन्याः ऊचुः । अहो मुष्टिकं प्रति सक्रोधं ताम्रलोचनं रामस्य च मुखं किं न पश्यत ॥१२॥ अपराः ऊचुः । अहो व्रजभुवः पुण्याः यतः पुराणपुरुषो वेणुं क्वणयन् विक्रीडया सत्करोति ॥१३॥ हे स्त्रियः ! गोप्यस्तपः किमचरन् याः अस्य रूपं लावण्यसारं नित्यं दृग्भिः पिबन्ति ॥ १४ ॥ याः गोप्यो दोहने कण्डने मथने प्रेङ्खे दोलनादौ कृष्णं गायन्ति ताः धन्याः ॥ १५ ॥ किंच प्रातर्व्रजाद् गच्छतः सायं प्रविशतो

किं न पश्यत रामस्य मुखमाताम्रलोचनम् ॥ मुष्टिकं प्रतिसामर्ष हाससंरम्भशोभितम् ॥ १२ ॥ पुण्या बत व्रजभुवो यदयं नृलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः ॥ गाः पालयन् सहबलः क्वणयंश्च वेणुं विक्रीडयाञ्चति गिरित्ररमार्चिताङ्घ्रिः ॥ १३ ॥ गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ॥ दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य ॥ १४ ॥ या दोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ ॥ गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥ १५ ॥ प्रातर्व्रजाद् व्रजत आविशतश्च सायं गोभिस्समं क्वणयतोऽस्य निशम्य वेणुम् ॥ निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम् ॥ १६ ॥ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ॥ शत्रुं हन्तुं मनश्चक्रे भगवान् भरतर्षभ ॥ १७ ॥ सभायाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ ॥ पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥ १८ ॥ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ॥ युयुधाते यथान्योन्यं तथैव बलमुष्टिकौ ॥ १९ ॥



वेणुनादं श्रुत्वा बहिर्निर्गत्यास्य सहास्यं मुखं पश्यन्ति । अतस्ताः बहुपुण्याः ॥ १६ ॥ एवं ब्रुवतीषु श्रीकृष्णः शत्रुं हन्तुं मनश्चक्रे ॥ १७ ॥ एवं स्त्रीणां गिरः श्रुत्वा पुत्रयोर्बलमजानन्तौ पितरावतप्येताम् ॥ १८ ॥ ततो रामकृष्णौ तैस्तैर्युद्धमार्गैस्ताभ्यां सह युयुधाते ॥ १९ ॥

---

१ देह इत्यर्थः । २ शिव इत्यर्थः । ३ न विद्यते सममूर्ध्वमधिकं च यस्य तत् । ४ प्रतिक्षणमित्यर्थः । ५ ऐश्वर्यस्य । ६ उरुक्रमचित्तेनैव यातं सर्वविषयप्राप्तिर्यासां ताः ।

ततो भगवद्गात्रप्रहारैः श्लथाङ्गश्चाणूरो ग्लानिं प्राप ॥२०॥ ततः स मुष्टिं बद्ध्वोत्पत्य च क्रुद्धः कृष्णं वक्षसि ताडयामास ॥२१॥ तत्प्रहारेण कृष्णोऽचलितः सन् तं बाह्वोर्निगृह्य बहुशो भ्रामयन् ॥२२॥ गतप्राणं भूतले पोथयामास । ततः स वज्र इव पपात ॥२३॥ तथैव बलभद्रेण ताडितो मुष्टिको मुखतो रुधिरं वमन् भूतले गतप्राणः पपात ॥ २४ ॥ २५ ॥ ततः प्राप्तं कूटं रामो मुष्टिना जघान ॥ २६ ॥ तद्वैव शलतोश-

भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः॥ चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह॥२०॥ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ॥ भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥ २१ ॥ नाचलत् तत्प्रहारेण मालाहत इव द्विपः ॥ बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन् हरिः ॥ २२ ॥ भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ॥ विस्रस्ताऽऽकल्पकेशस्रगिंद्रध्वज इवापतत् ॥२३॥ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै ॥ बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥२४॥ प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः ॥ व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥२५॥ ततः कूटमनुप्राप्तो रामः प्रहरतां वरः ॥ अवधील्लीलया राजन् सावज्ञं वाममुष्टिना ॥२६॥ तर्ह्येव हि शलः कृष्णप्रपदाहतशीर्षकः॥ द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥२७॥ चाणूरे मुष्टिके कूटे शले तोशलके हते ॥ शेषाः प्रदुद्रुवुर्मल्लाः सर्वप्राणपरीप्सवः ॥२८॥ गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः ॥ वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥ २९ ॥ जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ॥ ऋते कंसं विप्रमुख्याः साधवः साधुसाध्विति ॥ ३० ॥ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ॥ न्यवारयत् स्वतूर्याणि वाक्यं चेदमुवाच ह ॥ ३१ ॥ निस्सारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ॥ धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥ ३२ ॥

लकौ प्राप्तौ । तावपि कृष्णपदा हतशीर्षकौ निपेततुः ॥ २७ ॥ एवं चाणूरमुष्टिकादिषु मृतेषु शेषाः मल्ला स्वप्राणरक्षायै दुद्रुवुः ॥२८॥ ततो रामकृष्णौ गोपानाहूय तैः सह नृत्यादि कुर्वन्तौ विजह्रतुः ॥२९॥ तदा जनाः हर्षं प्रापुः । साधवः साधुसाध्वित्यूचुः ॥ ३० ॥ एवं मल्लवर्येषु हतेषु कंसो वाद्यानि निवार्य जगाद ॥ ३१ ॥ हे दूताः! एतौ दुर्वृन्तौ वसुदेवसुतौ पुरान्निस्सारयत । गोपानां धनं हरत, नन्दं बध्नीत ॥३२॥

वसुदेवस्तथा परपक्षगो नः पितोग्रसेनो हन्यताम् ॥ ३३ ॥ एवं कंसे विकत्थमाने सति क्रुद्धः कृष्णः उड्डयनं कृत्वोच्चं मञ्चमारुहत् ॥३४॥ तं स्वमृत्युं प्राप्तं दृष्ट्वा कंसः आसनादुत्थाय खड्गचर्मणी जगृहे ॥ ३५ ॥ तं खड्गपाणिं विचरन्तं कृष्णः आशु समग्रहीत् गरुडः सर्पमिव ॥३६॥ ततः कृष्णः कंसं केशे धृत्वा मञ्चाद्रङ्गोपरि निपात्य तस्योपरि विश्वाश्रयः स्वयं पपात ॥३७॥ तावता मृतं कंसं हरिर्जगतः पश्यतो विच-

वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ॥ उग्रसेनः पिता चापि सानुगः परपक्षगः ॥ ३३ ॥ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ॥ लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत ॥ ३४ ॥ तमाविशन्तमालोक्य मृत्युमात्मन आसनात् ॥ मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥३५॥ तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे ॥ समग्रहीद् दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ॥३६॥ प्रगृह्य केशेषु चलत्किरीटं निपात्य रंगोपरि तुङ्गमञ्चात् ॥ तस्योपरिष्टात् स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः ॥ ३७ ॥ ( कंसोऽपि कृष्णेन जगत्त्रयैकनिवासभूतेन निपात्य सोऽधः ॥ तेनात्मतन्त्रेण निपीडितोऽसुं तत्याज राजन्निमिषान्तरेण ॥ ) तं संपरेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ॥ हाहेति शब्दः सुमहांस्तदाऽभूदुदीरितः सर्वजनैर्नरेन्द्र ॥ ३८ ॥ स नित्यदोद्विग्नधिया तमीश्वरं पिबन् वदन् वा विचरन् स्वपञ्श्वसन् ॥ ददर्श चक्रायुधमग्रतो यतो तदेव रूपं दुरवापमाप ॥ ३९ ॥ तस्याऽनुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः ॥ अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥ ४० ॥ तथाऽतिरभसांस्तांस्तु संयत्तान्रोहिणीसुतः ॥ अहन्परिघमुद्यम्य पशूनिव मृगाधिपः ॥ ४१ ॥ नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः ॥ पुष्पैः किरन्तस्तं प्रीत्या शशंसुर्ननृतुः स्त्रियः ॥ ४२ ॥

कर्ष तदा हाहेति शब्दो जातः ॥३८॥ हे नृप ! स कंसो नित्यमुद्विग्नधिया हरिं भक्षणपानभाषणशयनादिषु यतो ददर्श ततस्तत्स्वरूपं प्राप ॥३९॥ ततस्तद्भ्रातरोऽष्टौ कङ्कन्यग्रोधादयो भ्रातुरानृण्यार्थमभ्यधावन् ॥ ४० ॥ ततोऽतिवेगवत्तरांस्तान् रामः परिघमुद्यम्य जघान ॥ ४१ ॥ तदा व्योम्नि दुन्दुभयो नेदुः ब्रह्मरुद्रादिदेवाः पुष्पवृष्टिं कुर्वन्तः शशंसुः ॥ ४२ ॥

१ स्वतन्त्रः । २ अयं श्लोकः क्वचित्पुस्तकेषु न दृश्यते ।

हे नृप ! ततः कंसादीनां स्त्रियो मस्तकानि निघ्नन्त्योऽश्रुलोचनास्तत्राऽऽजग्मुः ॥४३॥ तदा वीरशय्यायां शयानान् स्वपतीनालिङ्ग्य सुस्वरं विलापं चक्रुः ॥४४॥ हा नाथ ! हे प्रिय ! हे धर्मज्ञ ! हे करुणानाथ ! सगृहप्रजाः वयं त्वया हतेन निहताः ॥४५॥ किंच इयं पुरी त्वया पत्या हीना वयमिव न शोभते ॥४६॥ हे कंस ! त्वं निरपराधिनां भूतानां द्रोहं कृतवान् । तेनेमां दशां नीतः ॥४७॥ एष कृष्णः सर्वेषां गोप्ता जन्म

तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः ॥ तत्राभीयुर्विनिघ्नन्त्यः शीर्षाण्यश्रुविलोचनाः ॥ ४३ ॥ शयानान् वीरशय्यायां पतीनालिङ्ग्य शोचतीः ॥ विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥ ४४ ॥ हा नाथ प्रिय धर्मज्ञ करुणानाथवत्सल ॥ त्वया हतेन निहता वयं ते सगृहप्रजाः ॥ ४५ ॥ त्वया विरहिता पत्या पुरीयं पुरुषर्षभ ॥ न शोभते वयमिव निवृत्तोत्सवमङ्गला ॥ ४६ ॥ अनागसां त्वं भूतानां कृतवान् द्रोहमुल्बणम् ॥ तेनेमां भो दशां नीतो भूतध्रुक् को लभेत शम् ॥४७॥ सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ॥ गोप्ता च तदवध्यायी न क्वचित् सुखमेधते ॥४८॥ श्रीशुक उवाच ॥ राजयोषित आश्वास्य भगवाँल्लोकभावनः ॥ यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥ ४९ ॥ मातरं पितरं चैव मोचयित्वाऽथ बंधनात् ॥ कृष्णरामौ ववन्दाते शिरसाऽऽस्पृश्य पादयोः ॥ ५० ॥ देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ ॥ कृतसंवन्दनौ पुत्रौ सस्वजाते न शंकितौ ॥ ५१ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

मृत्युकारणम् एवंभूतस्यावज्ञाकर्ता क्वापि सुखं न प्राप्नोति ॥४८॥ श्रीशुक उवाच ॥ ततः कृष्णो राजपत्नीराश्वास्य हतानां पारलौकिकीं क्रियां कारयामास ॥४९॥ ततो मातरं पितरं च बन्धान्मोचयित्वा रामकृष्णौ ववन्दाते॥५०॥ तदा देवकी वसुदेवश्च कृतवन्दनौ पुत्रौ जगदीश्वराविति ज्ञात्वा नाऽऽलिङ्गितवन्तौ । किंतु बद्धाञ्जली तस्थतुः ॥५१॥ इति श्रीभाग० द० चू० पू० कंसवधो नाम चतुश्चत्वारिंशोऽध्यायः ॥४४॥

१ अश्रूणि ।

पञ्चचत्वारिंशकेऽथ पितृनन्दादिसान्त्वनम् । उग्रसेनाभिषेकश्च गुरौ वासात् पुरागमः ॥१॥ श्रीशुक उवाच ॥ कृष्णः पितरौ प्राप्तज्ञानौ ज्ञात्वेदानीं तज्ज्ञानं मा भूदिति हेतोः स्वमायां व्यस्तारयत् ॥१॥ ततः सबलः कृष्णः हे अम्ब ! हे तातेति पितरौ प्रीणयन् जगाद ॥२॥ हे पितरौ ! अस्मत्तौ युवयोर्बालाद्यवस्थासुखानि नाभवन् ॥३॥ किंच । आवयोर्वासो भवतां समीपे न जातः ॥४॥ तथाऽयं देहो याभ्यां जनितः पोषितश्च तयोरानृण्यं मर्त्यः शतवर्षेणापि नाप्नोति ॥५॥ यः सुतः समर्थः सन् देहेन धनेन च पित्रोर्जीविकां न संपादयेत् तं लोकान्तरे यमदूता स्वस्यैव मांसं

श्रीशुक उवाच ॥ पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ॥ मा भूदिति निजां मायां ततान जनमोहिनीम् ॥१॥ उवाच पितरावेत्य साग्रजः सात्वतर्षभः ॥ प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम् ॥२॥ नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि ॥ बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् क्वचित् ॥३॥ न लब्धो दैवहतयोर्वासो नौ भवदंतिके ॥ यां बालाः पितृगेहस्था विदन्ते ललिता मुदम् ॥४॥ सर्वार्थसंभवो देहो जनितः पोषितो यतः ॥ न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥५॥ यस्तयोरात्मजः कल्प आत्मना च धनेन च ॥ वृत्तिं न दद्यात तं प्रेत्य स्वमांसं खादयन्ति हि ॥६॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ॥ गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन् मृतः ॥७॥ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ॥ मोघमेते व्यतिक्रान्ता दिवसाः वामनर्चतोः ॥ ८ ॥ तत् क्षंतुमर्हथस्तात मातर्नौ परतन्त्रयोः ॥ अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥९॥ श्रीशुक उवाच ॥ इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ॥ मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ १० ॥ सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ ॥ न किंचिदूचतू राजन् बाष्पकण्ठौ विमोहितौ ॥ ११ ॥

खादयन्ति ॥६॥ वृद्धमातापितरौ पतिव्रतां स्त्रियं बालं सुतं गुरुं विप्रं शरणागतं च समर्थो यो न पोषयति स जीवन्मृततुल्यः ॥७॥ तस्मात् कंसाद्भीतयोर्वामपूजयतोरावयोरेते दिवसाः व्यर्थं गताः ॥८॥ अतो हे पितरौ ! शुश्रूषामकुर्वतोः परतन्त्रयोर्नौ क्षन्तुमर्हथः ॥९॥ श्रीशुक उवाच ॥ एवं हरेर्वाण्या मोहितौ पितरौ सुतावङ्कमारोप्यालिङ्ग्य मुदं प्रापतुः ॥ १० ॥ स्नेहाश्रुधाराभिः सिञ्चन्तौ गद्गदकण्ठौ किंचन नोचतुः ॥ ११ ॥

१ यां मुदंविन्दन्ते सा न लब्धा । २ कंसेन ।

एवं कृष्णः पितरावाश्वास्योग्रसेनं यदूनां नृपं कृत्वाऽऽह ॥ १२ ॥ हे महाराज ! प्रजानामाज्ञां कर्तुमर्हसि । ययातिशापात् यदुभिर्नृपासने न स्थेयम् । ( तव तु ममाज्ञया न दोष इति ) ॥१३॥ किंच भृत्ये मयि समीपे सति देवादयः उपायनानि समर्पयिष्यन्ति । अन्ये नृपाः किमु ॥१४॥ ततः कृष्णः सर्वान् स्वजातिसंबन्धान् यदुवृष्ण्यन्धकादींश्च दिग्भ्य आनाय्य ॥१५॥ वित्तैः संतर्प्य स्वस्वगेहेषु संस्थापयामास ॥१६॥ ततः सर्वे यादवाः रामकृष्णभुजैः रक्षिताः प्राप्तमनोरथा नित्यं कृष्णमुखाम्बुजं वीक्षमाणाः सन्तो गृहेषु रेमिरे ॥१७॥ १८ ॥ तत्र ये वृद्धास्ते

एवमाश्वास्य पितरौ भगवान् देवकीसुतः ॥ मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥ आह चास्मान् महाराज प्रजाश्चाज्ञप्तुमर्हसि ॥ ययातिशापाद्यदुभिर्नाऽऽसितव्यं नृपासने ॥ १३ ॥ मयि भृत्य उपासीने भवतो विबुधादयः ॥ बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ॥ १४ ॥ सर्वान्स्वज्ञातिसंबन्धान् दिग्भ्यः कंसभयाकुलान् ॥ यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् ॥ १५ ॥ सभाजितान् समाश्वास्य विदेशावासकर्शितान् ॥ न्यवासयत् स्वगेहेषुवित्तैः सन्तर्प्य विश्वकृत् ॥ १६ ॥ कृष्णसंकर्षणभुजैर्गुप्ता लब्धमनोरथाः ॥ गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥ १७ ॥ वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम् ॥ नित्यं प्रमुदितं श्रीमत् सदयस्मितवीक्षणम् ॥ १८ ॥ तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः ॥ पिबन्तोऽक्षमुकुन्दस्य मुखाम्बुजसुधां मुहुः ॥ १९ ॥ अथ नन्दंसमासाद्य भगवान् देवकीसुतः ॥ संकर्षणश्च राजेन्द्र परिष्वज्येदमूचतुः ॥ २० ॥ पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ॥ पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥ २१ ॥ स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ॥ शिशून् बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ २२ ॥

तरुणा आसन्, यतः कृष्णमुखामृतं पिबन्ति स्म ॥१९॥ अथ रामकृष्णौ नन्दं गत्वाऽऽलिंग्योचतुः ॥२०॥ हे पितः ! युवाभ्यामावां लालितौ पालितौ च एतन्नाश्चर्यं यतः पित्रोः स्वदेहादपि पुत्रेष्वधिका प्रीतिः स्यात् ॥ २१ ॥ किंच स पिता सा माता यौ स्वपुत्रवद् बन्धुभिस्त्यक्तान् शिशून् पुष्णीताम् ॥ २२ ॥

अथ वसुदेवः पुत्रयोर्व्रतबन्धं गर्गादिभिः कारयित्वा ॥२६॥ तेभ्यो दक्षिणाः स्वलंकृताः सवत्साः गाः ददौ ॥२७॥ किंच रामकृष्णयोर्जन्मनि

यात यूयं व्रजं तात वयं च स्नेहदुःखितान्॥ ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ २३ ॥ एवं सान्त्वय्य भगवान् नन्दं सव्रजमच्युतः ॥ वासोऽलंकराकुप्याद्यैरर्हयामास सादरम् ॥ २४ ॥ इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः ॥ पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥२५॥ अथ शूरसुतो राजन् पुत्रयोः समकारयत् ॥ पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम् ॥२६॥ तेभ्योऽदाद्दक्षिणा गावो रुक्ममालाः स्वलंकृताः ॥ स्वलंकृतेभ्यः संपूज्य सवत्साः क्षौममालिनीः ॥ २७ ॥ या कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ॥ ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥ २८ ॥ ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्यसुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद् गायत्रं व्रतमास्थितौ ॥ २९ ॥ प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ॥ नान्यसिद्धामलज्ञानं गूहमानौ नरेहितैः ॥ ३० ॥ अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः ॥ काश्यं सान्दीपनिंनाम ह्यवन्तीपुरवासिनम् ॥३१॥ यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् ॥ ग्राहयन्तावुपेतौस्म भक्त्या देवमिवादृतौ ॥३२॥ तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ॥ प्रोवाच वेदानखिलान् सांगोपनिषदो गुरुः ॥ ३३ ॥ सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ॥ तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥ ३४ ॥

हे तात ! यूयं व्रजं यात । वयं युष्मान् स्नेहदुःखितान् द्रष्टुमेष्याम ॥२३॥ एवं कृष्णः सगोपं नन्दं सान्त्वयित्वा वस्त्रालंकारकांस्यादिपात्रादिभिः पुष्पतांबूलसुगन्धादिभिश्च पूजयामास ॥ २४ ॥ एवमुक्तो नन्दोऽश्रुभिर्नेत्रे आपूर्य प्रेमविह्वलस्तावालिङ्ग्य गोपैः सह व्रजं ययौ॥२५॥ या मनोदत्तास्ताः गा अपि स्मृत्वा ददौ ॥२८॥ ततः कृष्णरामौ द्विजत्वं प्राप्य जगदीश्वरौ तौ स्वकुलाचार्याद् गर्गाद् ब्रह्मचर्यं व्रतं लब्ध्वा ॥२९॥ ३० ॥ गुरुकुलं वासमिच्छन्तावन्तीपुरस्थं काश्यं सान्दीपनिं जग्मतुः ॥ ३१ ॥ ततस्तौ गुरौ वर्तनमन्यान् शिक्षयन्तौ ॥ ३२ ॥ तयोस्तुष्टो गुरुर्वेदं धर्मशास्त्रं मीमांसां तर्कविद्यां षड्विधां राजनीतिं च प्रोवाच ॥ ३३ ॥ ३४ ॥

१ स्वसिद्धज्ञानम् ।

तौ सर्वविद्याप्रवर्तकावेकवारं गुरोरुच्चारणमात्रेण जगृहतुः ॥३५॥ ततश्चतुष्षष्ट्याऽहोरात्रैश्चतुष्षष्टिकलाश्चतुर्दश विद्याः जगृहतुः । ततो रामकृष्णौ गुरुं दक्षिणार्थमुपलोभितवन्तौ ॥३६॥ ततो गुरुस्तयोरद्भुतं महिमानं दृष्ट्वा पत्न्या सहविचार्य प्रभासे समुद्रे मृतं बालं वरयामास ॥३७॥ तदा तथेत्युक्त्वा तौ रथमारुह्य प्रभासे समुद्रतटे गत्वा निषीदतुः । तावीश्वराविति ज्ञात्वा समुद्रस्तयोः पूजनं चकार ॥३८॥ तं हरिराह हे सिन्धो ! त्वया यो मद्गुरुबालः ऊर्मिणा ग्रस्तः स दीयताम् ॥३९॥ समुद्र उवाच ॥ हे देव ! अहं बालं नाहार्षं किंतु ममान्तर्जले पञ्चजननामा शङ्ख-

सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ॥ सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ॥ ३५ ॥ अहोरात्रैश्चतुष्षष्ट्या संयत्तौ तावतीः कलाः ॥ गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥ ३६ ॥ द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम् ॥ संमन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयांबभूव ह ॥ ३७ ॥ तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरन्तविक्रमौ ॥ वेलामुपव्रज्य निषीदतुः क्षणं सिन्धुर्विदित्वाऽर्हणमाहरत्तयोः ॥ ३८ ॥ तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् ॥ योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥ समुद्र उवाच ॥ नैवाहार्षमहं देव दैत्यः पञ्चजनो महान् ॥ अन्तर्जलचरः कृष्ण शंखरूपधरोऽसुरः ॥ ४० ॥ आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः ॥ जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् ॥ ४१ ॥ तदङ्गप्रभवं शंखमादाय रथमागमत् ॥ ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥ ४२ ॥ गत्वा जनार्दनः शंखं प्रदध्मौ सहलायुधः ॥ शंखनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ॥ ४३ ॥ तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम् ॥ उवाचावनतः कृष्णं सर्वभूताशयालयम् ॥ लीलामनुष्य हे विष्णो युवयोः करवाम किम् ॥ ४४ ॥

रूपधरोऽसुरः आस्ते । तेन नूनं हृतः । तच्छ्रुत्वा प्रभुर्जलं प्रविश्य दैत्यं हत्वा तदुदरे बालं नापश्यत् ॥ ४० ॥ ४१ ॥ ततस्तदङ्गजं शङ्खमादाय संयमिनीं यमपुरीं गत्वा ॥४२॥ सरामः कृष्णः शङ्खं दध्मौ । तं नादं श्रुत्वा यमः ॥ ४३ ॥ तयोर्महापूजां कृत्वा सर्वभूतहृदयनिवासं कृष्णं जगाद—हे विष्णो ! हे राम ! युवयोः किं करवाम ॥ ४४ ॥

श्रीभगवानुवाच ॥ हे यम ! तत्कर्मवशात् त्वयेहानीतो गुरुपुत्रो मदाज्ञया प्रत्यर्प्यताम् ॥ ४५ ॥ तथेति तेन प्रत्यर्पितं बालं गृहीत्वा भुवि
प्राप्य गुरवे दत्त्वा पुनर्वृणीष्वेत्यूचतुः ॥ ४६ ॥ ततो गुरुराह—हे वत्सौ ! युवाभ्यां गुरुदक्षिणा सम्यक् सम्पादिता ॥ ४७ ॥ अतः स्वगृहं
गच्छताम्।वां कीर्तिः पावनी भवतु । तथेह परत्र च वेदाः अगतसाराः सन्तु ॥ ४८ ॥ एवं गुरुणाऽनुज्ञातौ तौ वायुवेगेन रथेन मथुरां प्राप्तौ
॥४९॥ तौ दृष्ट्वा बहूनि दिनानि न पश्यन्त्यः प्रजाः आनन्दं प्रापुः नष्टलब्धधनाः इव ॥५०॥ इति श्रीभागवते महापुराणे चूर्णिकायां दशम-

श्रीभगवानुवाच ॥ गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् ॥ आनयस्व महाराज मच्छासनपुरस्कृतः ॥ ४५ ॥ तथेति
तेनोपनीतं गुरुपुत्रं यदूत्तमौ ॥ दत्त्वास्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥ ४६ ॥ सम्यक् संपादितो वत्स भवद्भ्यां गुरु-
निष्क्रयः ॥ को नु युष्मद्विधगुरोः[1] कामानामवशिष्यते ॥४७॥ गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी ॥ छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ४८ ॥ गुरुणैवमनुज्ञातौ रथेनानिलरंहसा ॥ आयातौ स्वपुरं तात पर्जन्यनिर्नदेन[2] वै ॥ ४९ ॥ समनन्दन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ ॥ अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव ॥ ५० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे नन्दादिसान्त्वनोग्रसेनाभिषेकगुरुकुलवासगुरुपुत्रानयनं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ श्रीशुक उवाच ॥ वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा ॥ शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः[3] ॥ १ ॥ तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित् ॥ गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ २ ॥
गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह ॥ गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय ॥ ३ ॥

स्कन्धे पूर्वार्धे पञ्चचत्वारिंशोऽध्यायः ॥४५॥ षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा । यशोदानन्दयोश्चक्रे कृष्णः शोकापनोदनम् ॥ १ ॥
श्रीशुक उवाच ॥ हे नृप ! वृष्णीनां श्रेष्ठो बृहस्पतेः शिष्यो बुद्धिसत्तमः उद्धवः कृष्णस्य दयितः सखासीत् ॥ १ ॥ तं प्रियं भक्तं हरिर्हस्तेन
हस्तं गृहीत्वाऽऽह ॥ २ ॥ हे उद्धव ! त्वं व्रजं गच्छ । पित्रोः प्रीतिं कुरु । गोपीनां मम वियोगजं दुखं मत्सन्देशैर्दूरीकुरु ॥ ३ ॥

१ युष्मद्विधयोर्गुरोर्ममेति षष्ठीतत्पुरुषः । २ मेघवन्निनदो यस्य तेन । ३ बुद्धयाऽतिश्रेष्ठः ।

यतस्ताः मत्प्राणाः ये मदर्थे त्यक्तपतिपुत्राद्यास्तान् सुखीकरोमि ॥४॥ तथा मयि दूरस्थे सति मां स्मरन्त्यो विमुह्यन्ति ॥५॥ तथाऽतिदुःखेन प्राणान् मदात्मिका बल्लव्यो मम प्रत्यागमनसन्देशैर्धारयन्ति ॥ ६ ॥ श्रीशुक उवाच ॥ एवमुक्तः उद्धवो रथमारुह्य सूर्यास्तसमये प्रविशतां पशूनां खुररजोभिश्छन्नरथः सन् व्रजं प्राप्तः ॥ ७ ॥ ८ ॥ व्रजं वर्णयति—पुष्पवतीनां गवां निमित्तं युध्यद्भिर्वृषैस्तथा स्ववत्सान् धावन्तीभिर्ना-

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ॥ ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम् ॥ ४ ॥ मयि ताः प्रेय-सां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ॥ स्मरन्त्योऽङ्ग विमुह्यन्ति विरहोत्कण्ठ्यविह्वलाः ॥५॥ धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथंचन ॥ प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ६ ॥ श्रीशुक उवाच ॥ इत्युक्त उद्धवो राजन् संदेशं भर्तुरा-दृतः ॥ आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥७॥ प्राप्तो नन्दव्रजं श्रीमान् निम्लोचति विभावसौ ॥ छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥ ८ ॥ वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः ॥ धावन्तीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ९ ॥ इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः ॥ गोदोहशब्दाभिरवैर्वेणूनां निस्स्वनेन च ॥ १० ॥ गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः ॥ स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥ अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ॥ धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥ सर्वतां पुष्पितवनं द्विजालिकुल-नादितम् ॥ हंसकारण्डवाकीर्णैः पद्मखण्डैश्च मण्डितम् ॥ १३ ॥ तमागतं समागम्य कृष्णस्यानुचरं प्रियम् ॥ नन्दः प्रीतः परिष्वज्य वासुदेवधियाऽर्चयत् ॥ १४ ॥

दितम् ॥ ९ ॥ इतस्ततः उत्पतद्भिर्वत्सैर्मण्डितम् । किंच । गोदोहशब्दैर्मण्डितम् ॥ १० ॥ रामकृष्णयोः कर्माणि गायन्तीभिर्गोपीभिर्गोपैश्च विराजितम् ॥११॥ अपि च अग्न्यर्कातिथिगोविप्रादीनां पूजयाऽन्वितैर्गोपगृहैर्मनोरमम् ॥१२॥ सर्वतः पुष्पितवनं भ्रमरपक्षिनादितम् ॥१३॥ एवंभूतं व्रजं प्राप्तमुद्धवं दृष्ट्वा नन्दः प्रीतः आलिङ्ग्य पूजयामास ॥ १४ ॥

१ मत्तः ।

प्रपच्छ ॥ १५ ॥ हे उद्धव ! सखा वसुदेवः पुत्रादिभिर्युतः सुखी
ततः सुष्ठु भोजितं शय्यायामुपविष्टं पादसंवाहनादिना विश्रान्तं तं नन्दः
कच्चित् ॥१६॥ किंच पापः कंसो मृतः । एतद् दिष्ट्या ! यो यदूनां सदा द्वेष्टा ॥१७॥ कृष्णः आवां पितरौ सखीन् गाः वृन्दावने गोवर्द्धनं च स्मरति किम् ॥१८॥ गोविन्दः स्वजनान् सकृद् द्रष्टुमेष्यति किम् । तर्हि तन्मुखं द्रक्ष्यामः ॥१९॥ किंच । कृष्णेन दावाग्नेर्वातवर्षादिभ्यो दुरत्ययमृत्युभ्यो वयं रक्षिताः स्मः ॥२०॥ अतः तद्वीर्यलीलाहास्यभाषणानि स्मरतां नः सर्वक्रियाः शिथिलाः ॥२१॥ तथा सरिच्छैलवनो-

भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ॥ गतश्रमं पर्यपृच्छत् पादसंवाहनादिभिः ॥१५॥ कच्चिदंग महाभाग सखा नः शूरनंदनः ॥ आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥१६॥ दिष्ट्या कंसो हत पापः सानुगः स्वेन पाप्मना॥ साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १७ ॥ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ॥ गोपान् व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥१८॥ अप्यायास्यति गोविन्दः स्वजनान् सकृदीक्षितुम् ॥ तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥ १९ ॥ दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः ॥ दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥२०॥ स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम् ॥ हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः॥२१॥सरिच्छैलवनोद्देशान् मुकुन्दपदभूषितान् ॥ आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २२ ॥ मध्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ॥ सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ २३ ॥ कंसं नागायुतप्राणं मल्लौ गजपतिं तथा ॥ अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥ २४ ॥ तालत्रयं महासारं धनुर्यष्टिमिवेभराट् ॥ बभञ्जैकेनहस्तेन सप्ताहमदधाद्गिरिम् ॥२५॥ प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ॥ दैत्याः सुरासुरजितो हता येनेह लीलया ॥ २६ ॥

देशान् कृष्णपदभूषितान् वीक्षमाणानां नो मनस्तन्मयतां याति ॥२२॥ एतौ देवोत्तमौ देवकार्यार्थं प्राप्तौ इति मन्ये ॥ २३ ॥ किंच । अयुतगजबलं कंसं तथा मल्लौ गजं च रामकृष्णौ लीलयाऽवधिष्टाम् ॥२४॥ तालत्रयमितं कृष्णो धनुर्बभञ्ज । हस्तेन गिरिं सप्ताहं दधौ ॥२५॥ प्रलम्बधेनुकवृषतृणावर्तबकादयो येन हताः ( अतस्तौ देवावेव ) ॥ २६ ॥

१ आत्मा कृष्णो नाथो यस्य तम् । २ क्रीडास्थानानि । ३ वचनविशेषणमेतत् ।

श्रीशुक उवाच ॥ इति संस्मृत्य प्रेमप्रसरविह्वलः सन् तूष्णीं जातः ॥२७॥ एवं यशोदापुत्रचरितानि शृण्वन्त्यश्रूणि मुमोच ॥ २८ ॥ एवं कृष्णे यशोदानन्दयोः प्रीतिं दृष्ट्वोद्धवो नन्दमाह ॥२९॥ उद्धव उवाच ॥ नूनं युवामतिश्रेष्ठौ यतः ईदृशी बुद्धिर्हरौ कृता ॥ ३० ॥ एतौ रामकृष्णौ निश्चयेन ज्ञानस्य चैतन्यात्मकस्य नियन्तारौ स्तः ॥ ३१ ॥ यस्मिन् जनोऽन्ते क्षणं मनः आवेश्य वासनां त्यक्त्वा परां गतिं

श्रीशुक उवाच ॥ इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः ॥ अत्युत्कण्ठोऽभवत् तूष्णीं प्रेमप्रसरविह्वलः ॥२७॥ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ॥ शृण्वन्त्यश्रूण्यवास्राक्षीत् स्नेहस्नुतपयोधरा ॥२८॥ तयोरित्थं भगवति कृष्णे नन्दयशोदयोः ॥ वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ २९ ॥ उद्धव उवाच ॥ युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ॥ नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥३०॥ एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्दः पुरुषः प्रधानम्[1] ॥ अन्वीय[2] भूतेषु विलक्षणस्य ज्ञानस्य चेशात[3] इमौ पुराणौ ॥ ३१ ॥ यस्मिञ्जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ॥ निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥३२॥ तस्मिन् भवन्तावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ॥ भावं विधत्तां नितरां महात्मन् किं वाऽवशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ॥ प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः ॥ ३४ ॥ हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् ॥ यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥ ३५ ॥ मा खिद्यतं महाभागौ द्रक्ष्यथः कृष्णमन्तिके ॥ अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ ३६ ॥

याति ॥ ३२ ॥ तस्मिन् नारायणे युवां भावं विधत्ताम्। अतो युवां कृतकृत्यौ ॥ ३३ ॥ हे नन्द ! कृष्णोऽदीर्घेण कालेन व्रजमेत्य पित्रोः प्रियं करिष्यति ॥ ३४ ॥ किंच। कंसं हत्वा वः समीपं गत्वा कृष्णो यदाह तदपि सत्यं करिष्यति ॥ ३५ ॥ हे महाभागौ ! कृष्णं समीपे द्रक्ष्यथः। यतः स सर्वभूतानामन्तर्हृदि काष्ठेऽग्निरिवास्ते ॥ ३६ ॥

१ प्रकृतिः । २ अनुप्रविश्य । ३ च ईशाते । ज्ञानस्येशाते चकाराज्जीवानां च ।

तस्य निरहंकारिणः साहंकारस्य न च प्रियाप्रियोत्तमाधमादयो न॥३७॥ मातृपितृस्त्रीपुत्रादयश्च न । देहो जन्म च न ॥ ३८ ॥ एवंभूतोऽपि साधुरक्षणार्थं देवादिमत्स्यादियोनिषु प्रादुर्भवति ॥ ३९ ॥ किंच । स्वयं निर्गुणोऽपि गुणान् सेवते । तथा तैर्गुणैर्विश्वं सृजति ॥ ४० ॥ हे नन्द ! यथा परिभ्रमणदृष्ट्या भूरपि भ्राम्यतीव प्रतीयते । एवं विक्षिप्तचित्तेऽहंबुद्ध्याऽऽत्मा कर्ता स्मृतः ॥ ४१ ॥ किंच अयं हरिर्युवयोरेव

न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः ॥ नोत्तमो नाधमो वाऽपि समानस्यासमोऽपि वा ॥ ३७ ॥ न माता न पिता तस्य न भार्या न सुतादयः ॥ नात्मीयो न परश्चापि न देहो जन्म एव च ॥ ३८ ॥ न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ॥ क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ॥ ३९ ॥ सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् ॥ क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हन्त्यजः ॥ ४० ॥ यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ॥ चित्ते कर्तरि तत्रात्मा कर्तेवाहंधिया स्मृतः ॥ ४१ ॥ युवयोरेव नैवायमात्मनो भगवान् हरिः ॥ सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥ ४२ ॥ दृष्टं श्रुतं भूतभवद्भविष्यत् स्थास्नुश्चरिष्णुर्महदल्पकं च ॥ विनाऽच्युताद् वस्तुतरां न वाच्यं स एव सर्वं परमार्थभूतः ॥ ४३ ॥ एवं निशा सा ब्रुवतोर्व्यतीता नंदस्य कृष्णानुचरस्य राजन् ॥ गोप्यः समुत्थाय निरूप्य दीपान् वास्तून् समभ्यर्च्य दधीन्यमन्थन् ॥ ४४ ॥ ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रजः ॥ चलन्नितम्बस्तनहारकुंडलत्विषत्कपोलारुणकुङ्कुमाननाः ॥ ४५ ॥



पुत्रः इति न । किंतु स ईश्वरः सर्वेषां पिता माता च ॥ ४२ ॥ दृष्टं श्रुतं महदल्पं चाच्युताद् भिन्नं किमपि न ॥४३॥ हे राजन् । एवं नन्दोद्धवयोर्ब्रुवतोः सा रात्रिर्गता । तावद् गोप्यः उत्थाय दीपान् प्रज्वाल्याङ्गणादीनभ्यर्च्य दधीनि ममन्थुः ॥४४॥ तदा ताः रज्जूर्विकर्षद्भुजकङ्कणमालाश्चञ्चलनितम्बस्तनहाराः सत्यो विरेजुः ॥ ४५ ॥

---

१ तत्त्वतोऽवाच्यं निर्वचनानर्हमित्यर्थः। २ 'दीपदीप्तैः' इ० पा० । ३ कुण्डलान्तः कपोलान्तः आननान्तश्चेति त्रयो बहुव्रीहयः । ४ त्विषत् स्फुरत् ।

कृष्णं गायन्तीनां तासां शब्दो दधिमन्थनशब्दमिश्रितः सन् स्वर्गं पस्पर्श। येन दिशाममङ्गलं नश्यति ॥४६॥ तावत् सूर्ये उदिते सति व्रजद्वारि रथं दृष्ट्वा जनाः कस्य रथ इति जगदुः ॥ ४७ ॥ येन मथुरां कृष्णो नीतः स कंसार्थसाधकोऽक्रूरः आगतः किम् ॥ ४८ ॥ किंच। अयमपरः साधितकार्येण तुष्टस्य भर्तुर्निष्कृतिमस्माभिः साधयिष्यति किम्। इति स्त्रीणां वदन्तीनामुद्धवः स्नानादिनियमं कृत्वाऽऽजगाम॥४९॥ इति श्रीभागवते चू० द० पू० षट्चत्वारिंशोऽध्यायः ॥४६॥ सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः। बोधयित्वोद्धवस्तत्त्वमनुज्ञाप्यागमत्

उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद् ध्वनिः ॥ दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम् ॥४६॥ भगवत्युदिते सूर्ये नन्दद्वारि व्रजौकसः ॥ दृष्ट्वा रथं शातकौम्भं[1] कस्यायमिति चाब्रुवन् ॥४७॥ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ॥ येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥४८॥ किं साधयिष्यत्यस्माभिर्भर्तुः प्रेतस्य निष्कृतिम्[2] ॥ इति स्त्रीणां वदन्तीनामुद्धवोऽगात् कृताह्निकः ॥ ४९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्धे नन्दशोकापनयनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ श्रीशुक उवाच ॥ तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम् ॥ पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं परिमृष्टकुण्डलम् ॥१॥ शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः ॥ इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥ तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः ॥ रहस्यपृच्छन्नुपविष्टमासने विज्ञाय सन्देशहरं रमापतेः ॥ ३ ॥ जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ॥ भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥

पुरीम् ॥१॥ श्रीशुक उवाच ॥ हे राजन्! ततो गोप्यस्तं हरिदासं पीताम्बरं कमलमालिनं दृष्ट्वा ॥ १ ॥ शुचिस्मिताः सत्यः सुन्दरदर्शनोऽच्युतवेषभूषणः कोऽयं कस्य कुतो वाऽऽयातः इति वदन्त्यस्तं सर्वतो वेष्टनं चक्रुः ॥ २ ॥ ततश्च तमासने स्थितं हरेः संदेशहरं ज्ञात्वा रहसि पप्रच्छुः ॥ ३ ॥ हे उद्धव! त्वां हरेः सेवकं जानीमः। इह भर्त्रा पित्रोः प्रियं कर्तुं प्रेषितः ॥ ४ ॥

---

१ हिरण्मयम्। २ किमयं कंसस्योर्ध्वदैहिकमस्मन्मांसः पिण्डान् कृत्वा दास्यतीत्यर्थः।

अन्यथा तस्य व्रजे स्मरणीयं न । बन्धूनां स्नेहानुबन्धस्तु मुनेरपि दुस्त्यजः ॥५॥ किंच । अन्येषु कार्यनिमित्ता मैत्री न सत्या पुष्पेषु भ्रम-राणामिव ॥६॥ अस्य प्रपञ्चः गणिकाः निर्द्रव्यं पुरुषं त्यजन्ति । प्रजाः असमर्थं नृपम् । प्राप्तविद्याः शिष्याः गुरुम् । ऋत्विजो दत्तदक्षि-णम् ॥७॥ खगा अफलं वृक्षं त्य० अतिथयो भुक्त्वा गृहम् । मृगाः दग्धं वनम् । जारो रतां स्त्रियं भुक्त्वा त्यजति ॥८॥ एवं गोप्यो गोविन्दे गतवाक्कायमानसाः सत्यो हरेः कर्माणि गायन्त्यो रुदत्यः सत्यः (उद्धवमपृच्छन्) ॥ ९ ॥ १० ॥ तावत् काचिद् गोपी भ्रमरं दृष्ट्वा कृष्णेन

अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ॥ स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥ अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् ॥ पुंभिः स्त्रीषु कृता यद्वत् सुमनस्स्विव षट्पदैः ॥ ६ ॥ निस्स्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः ॥ अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥ खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ॥ दग्धं मृगास्तथाऽरण्यं जारो भुक्त्वा रतां स्त्रियम् ॥८॥ इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः ॥ कृष्णदूते व्रजंयातेउद्धवे त्यक्तलौकिकाः ॥९॥ गायन्त्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ॥ तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥१०॥ काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ॥ प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥ गोप्युवाच ॥ मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ॥ वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥ सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् ॥ परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ १३ ॥

प्रस्थापितं दूतं कल्पयित्वा जगाद ॥११॥ गोप्युवाच ॥ हे शठबन्धो भ्रमर ! त्वं नः पादं मा स्पृश, यतस्त्वं सपत्न्याः कुचसंमर्दितकृष्णमा-लायाः कुंकुमयुतश्मश्रुभिरुपलक्षितः । किंतु तव स सखा तासामेव स्त्रीणां प्रसादं वहतु ॥१२॥ किंच । स स्वामधरसुधां सकृत् पाययित्वा नस्तत्यजे । एवंभूतस्य पादाब्जं लक्ष्मीः कथं सेवते । सा तु मूढा ॥ १३ ॥

१ अनुकरणमात्रं न तु तात्त्विकी । २ अपृच्छन्निति तृतीयश्लोकेनान्वयः । ३ कुचकुंकुमलिप्तश्मश्रुः । ४ उपहासास्पदम् । प्रसादविशेषणमेतत् । ५ लोकवेदमर्यादाविस्मारिकाम् । ६ मिथ्याकथाभिः ।

हे षडङ्घ्रे ! कृष्णं किमिह बहु गायसि । या इदानीं तत्प्रियास्तदग्रे तत्प्रसङ्गो गीयताम् । ता एव तवापेक्षितं दास्यन्ति ॥१४॥ किंच हरेस्त्रैलोक्ये दुरापाः स्त्रियः काः । न का अपि । यस्य पादरजो लक्ष्मीः सेवते तत्र वयं काः ॥ १५ ॥ हे भ्रमर ! शिरसि स्थापितं पादं विसृज ! तव सर्वं वेद्मि । कृष्णवत् त्वमपि न विश्वसनीयः । अहो ! याः वयं त्यक्तपतिपुत्रास्ताः नस्तत्याज । तत्र किं नु संधातव्यम् ॥१६॥ किंच ।

किमिह बहु षडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ॥ विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥ दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ॥ चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥ विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ॥ स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु सन्धेयमस्मिन् ॥ १६ ॥ मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ॥ बलिमपि बलिमत्त्वाऽवेष्टयद् ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथाऽर्थः ॥ ॥ १७ ॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ॥ सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इव विहङ्गा भिक्षुचर्यां चरन्ति ॥ १८ ॥

यो वालिनं लुब्धक इव विव्याध । तथा स्त्रीजितः सन् शूर्पणखां विरूपां चक्रे तथा तद्दत्तं बलिं भक्षयित्वा तं बलिं यः काकवद्बबन्ध । एवंभूतस्य कृष्णस्य तस्य सख्यैरलम् । परंतु तत्कथाऽर्थो दुस्त्यजः ॥१७॥ यस्य चरितलीलामृतलेशस्य सकृत् सेवनाद्गतद्वन्द्वधर्माः असत्तुल्याः विहंगाः अपि दुःखितं कुटुम्बं विहाय भोगहीनाः सन्तः प्राणवृत्तिमात्रं चरन्ति ॥ १८ ॥

---

१ गृहरहितत्वादेवत्वदिष्टं दातुमसमर्थानामस्माकमित्यर्थः । २ बहुशोऽनुभूतम् । ३ अर्जुनस्य सखाश्रीकृष्णः । ४ कृष्णालिङ्गनेन क्षपिता कुचरुजो यासां ताः । इष्टा इत्यस्य विशेषणमेतत् । ५ कृष्णप्रियाः । ६ यद्यप्येवं तथापि कृपणानुकम्पिनि पुंस्युत्तमश्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः । ७ पादमूले प्रविशन्तं क्षमापयिष्यन्तमिव मत्वाऽऽह—विसृजेति । ८ प्रियोक्तिरचनाभिः । ९ प्रार्थनाचतुरस्य । १० तदर्थम् । ११ काम एव यानं प्राप्तिसाधनं यस्यास्ताम् । १२ विन्दुः । १३ रागद्वेषादि । १४ हंसवत् सारग्रहणचतुराः परमहंसाः ।

हे दूत ! वयं तस्य सत्यमिवानृत वचः श्रद्दधानाः एतद्दृष्टवत्यः । अतोऽन्यवार्त्ता कथ्यताम् ॥१९॥ हे भ्रमर ! त्वं कृष्णेन प्रेषितः किम् । किं प्राप्तुमिच्छसि तद्वरय । हे दूत ! कथमस्मान् श्रीकृष्णसमीपं नेष्यसि ॥ २० ॥ हे द्विरेफ ! श्रीकृष्णो ( गुरुकुलादागत्य ) मथुरायां वर्तते कच्चित् । अस्माकं वार्ताः ब्रूते किम् । स्वभुजं नो मूर्ध्नि कदा धास्यति ॥ २१ ॥ श्रीशुक उवाच ॥ एवं श्रुत्वोद्धवः कृष्णसन्देशैः सान्त्वयन्

वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ॥ ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्म-
ररुज उपमन्त्रिन् भण्यतामन्यवार्ता ॥ १९ ॥ प्रियसख पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुन्धे माननीयोऽसि
मेऽङ्ग ॥ नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥२०॥ अपि बत मधुपुर्या-
मार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान् सौम्य बन्धूंश्च गोपान् ॥ क्वचिदपि स कथा नः किङ्करीणां गृणीते
भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥ २१ ॥ श्रीशुक उवाच ॥ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ॥
सान्त्वयन् प्रियसन्देशैर्गोपीरिदमभाषत ॥ २२ ॥ उद्धव उवाच ॥ अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ॥
वासुदेवे भगवति यासामित्यर्पितं मनः ॥ २३ ॥ दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोभिर्विविधैश्चान्यैः कृष्णे
भक्तिर्हि साध्यते ॥ २४ ॥ भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ॥ भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा
॥ २५ ॥ दिष्ट्या पुत्रान् पतीन् देहान्स्वजनान् भवनानि च ॥ हित्वावृणीत यूयं यत् कृष्णाख्यं पुरुषं परम्
॥ २६ ॥ सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ॥ विरहेण महाभागा महान् मेऽनुग्रहः कृतः ॥ २७ ॥



जगाद ॥२२॥ उद्धव उवाच ॥ हे गोप्यः ! यूयं कृतार्थाः, यतो हरौ मनः समर्पितम् ॥ २३ ॥ किंच । दानव्रततपोहोमादिभिः कृष्णे भक्तिः साध्यते ॥२४॥ सा मुनिभिर्दुर्लभा भक्तिः कृष्णे भवतीभिः प्रवर्तिता । एतद्दिष्ट्या ॥ २५ ॥ किंच । पतिपुत्रगृहादीन् हित्वा परं पुरुषमवृणीत । इदमपि भद्रम् ॥ २६ ॥ युष्माकं भगवति प्रेमसुखं दर्शयित्वा विरहेण ममैवानुग्रहः कृतः ॥ २७ ॥

१ मृगयुः । २ आगतः । ३ दुस्त्यजं द्वन्द्वं मिथुनीभावो यस्य तस्य कृष्णस्य । ४ यस्येति शेषः । साकं सहैव । ५ एकान्तभक्तिः । ६ प्राप्तः ।

अतः परं कृष्णस्य संदेशो मत्तः श्रूयताम् ॥ २८ ॥ श्रीभगवानुवाच ॥ हे गोप्यः ! युष्माकं मया सह क्वापि वियोगो न । यथा पृथिव्यादीनि चराचरेषु भूतेषु तथाऽहमुपादानकारणत्वेन सर्वकार्येषु ॥२९॥ आत्मन्येवात्मनो मायासामर्थ्यै भूतेन्द्रियगुणरूपेणात्मनाऽऽत्मानं सृजे पालये हन्मि च ॥ ३० ॥ आत्मा तु शुद्धः । स विश्वतैजसप्राज्ञरूपेण मायावृत्तिभिः प्रतीयते न स्वतः ॥ ३१ ॥ किंच । पुमान् येन मनसा विषयान् चिन्तयेत् प्राप्नुयाच्च तन्मनोऽनलसः सन्नियच्छेत् ॥३२॥ एवं सर्वोऽपि योगो मनोनियमनान्त एव यथा समुद्रान्ता नद्यः ॥ ३३ ॥ हे

श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ॥ यमादायागतो भद्रा अहं भर्तू रहस्करः[1] ॥२८॥ श्रीभगवानुवाच ॥ भवतीनां वियोगो मे नहि सर्वात्मना क्वचित् ॥ यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥ तथाऽहं च मनःप्राणभूतेन्द्रियगुणात्मना[2] ॥२९॥ आत्मन्येवात्मनात्मानं सृज हन्म्यनुपालये ॥ आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥३०॥ आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तो गुणान्वयः ॥ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥३१॥ येनेन्द्रियार्थान् ध्यायेत मृषा स्वप्नवदुत्थितः ॥ तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ॥३२॥ एतदन्तःसमाम्नायो योगः सांख्यं मनीषिणाम् ॥ त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः ॥ ३३ ॥ यत् त्वहंभवतीनां वै दूरे वर्ते प्रियो दृशाम् ॥ मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥ यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते ॥ स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षगोचरे ॥ ३५ ॥ मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ॥ अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ ॥ ३६ ॥ या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः ॥ अलब्धरासाः कल्याण्यो माऽऽपुर्मद्वीर्यचिन्तया ॥ ३७ ॥ श्रीशुक उवाच ॥ एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ॥ ता ऊचुरुद्धवं प्रीतास्तत्संदेशाऽऽगतस्मृतीः ॥ ३८ ॥

गोप्यः ! युष्माकं दृशां यद् दूरे वर्ते तन्मनस्सन्निकर्षार्थम् ॥ ३४ ॥ यथा दूरे प्रेष्ठे मनो वर्तते तथेन्द्रियगोचरे न ॥ ३५ ॥ यूयं मयि मनो निधाय मां स्मरन्त्यः शीघ्रं मां प्राप्स्यथ ॥ ३६ ॥ किंच । हे कल्याण्यः ! रासक्रीडायां स्वपतिभी रुद्धाः याः गोप्यस्ताः व्रजस्थिताः मच्चिन्तया तदैव मां प्रापुः ( तद्वद् यूयम् ) ॥ ३७ ॥ श्रीशुक उवाच ॥ एवं कृष्णसंदेशमुद्धवमुखतः श्रुत्वा प्रीताः सत्यः प्राहुः ॥ ३८ ॥

१ रहस्यकार्यकर्ता । २ मनआदीनि कार्याणि गुणाः कारणं तेषामाश्रयत्वेनानुगत इत्यर्थः ।

गोप्य ऊचुः । हे उद्धव । पापी कंसः कृष्णेन हतः । एतद् दिष्ट्या । कृष्णश्च कुशली कच्चित् ॥३९॥ किंच । कृष्णो मथुरास्त्रीणां प्रीतिं करोति
किम् ॥ ४० ॥ अन्या ऊचुः । अहो ! रतिविशेषज्ञः स पुरस्त्रीणां वाक्यैर्विलासैश्च कथं नाऽनुबध्येत ॥ ४१ ॥ अपरा ऊचुः । हे साधो !
पुरस्त्रीणां वार्तामध्ये कृष्णो नः स्मरति किम् ॥ ४२ ॥ अन्या ऊचुः । यासु रात्रिष्वस्माभिः सह कृष्णो रेमे ताः रात्रीः स्मरति किम् ॥४३॥

गोप्य ऊचुः ॥ दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ॥ दिष्ट्याऽऽप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना
॥ ३९ ॥ कच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम् ॥ प्रीतिं न स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥
कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् ॥ नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुपूजितः ॥ ४१ ॥ अपि स्मरति नः साधो
गोविन्दः प्रस्तुते क्वचित् ॥ गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ॥ ४२ ॥ ताः किं निशाः स्मरति यासु तदा
प्रियाभिर्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ॥ रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् ॥
॥ ४३ ॥ अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ॥ संजीवयन्नु नो गात्रैर्यथेन्द्रो वनमम्बुदैः ॥ ४४ ॥ कस्मात्
कृष्ण इहायाति प्राप्तराज्यो हताहितः ॥ नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥ किमस्माभिर्वनौकोभि-
रन्याभिर्वा महात्मनः ॥ श्रीपतेराप्तकामस्य क्रियेताऽर्थः कृतात्मनः ॥ ४६ ॥ परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह
पिङ्गला ॥ तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ४७ ॥ क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् ॥
अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित् ॥ ४८ ॥

किंच । स्वनिमित्तेन शोकेन तप्ताः, नो हस्तस्पर्शादिभिर्जीवयन् पुनरेष्यति किम् ॥४४॥ इतराः ऊचुः ॥ अहो ? कस्मात् स इहाऽऽयाति यतो
महदैश्वर्यं प्राप्तः, तेन राजकन्याश्च परिणीताः ॥४५॥ अतो वनौकोभिरस्माभिस्तस्य श्रीपतेः कोऽपि नार्थः ॥४६॥ किंच । स्वैरिण्यपि पिङ्गला
नैराश्यं परं सौख्यमाह । तज्जानतीनामपि नौ दुरत्ययाऽऽशा वर्त्तते ( किं कुर्मः ) ॥४७॥ तथा च तस्यैकान्तवार्तां कस्त्यक्तुमुत्सहते ॥४८॥



१ संबन्धिभिः । २ प्रसङ्गे । ३ पूर्णस्य ।

हे उद्धव ! एते सरिच्छैलवनोद्देशादयो रामकृष्णाभ्यां सेविताः मुहुरस्माकं कृष्णं स्मारयन्ति ॥ ४९ ॥५०॥ हरेर्गतिहास्याऽवलोकनादिभि-
र्हृतधियो वयं कथं तं विस्मरामः ॥५१॥ हे नाथ ! हे रमानाथ ! दुखार्णवे मग्नं गोकुलमुद्धर ॥ ५२ ॥ श्रीशुक उवाच ॥ ततस्ताः कृष्णमा-
त्मानं ज्ञात्वोद्धवपूजां चक्रुः ॥५३॥ ततः उद्धवस्तत्र कतिचिन्मासान् स्थित्वा कृष्णलीला गायन् गोकुलं रमयामास ॥५४॥ उद्धवो यावन्ति

सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥ संकर्षणसहायेन कृष्णेनाऽऽचरिताः प्रभो ॥ ४९ ॥ पुनः पुनः स्मारयन्ति नन्द
गोपसुतं बत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥ गत्या ललितयोदारहासलीलावलोकनैः ॥
माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ॥ ५१ ॥ हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ॥ मग्नमुद्धर गोविंद
गोकुलं वृजिनार्णवे ॥ ५२ ॥ श्रीशुक उवाच ॥ ततस्ताः कृष्णसन्देशैर्व्यपेतविरहज्वराः ॥ उद्धवं पूजयाञ्चक्रुर्ज्ञात्वा-
ऽऽत्मानमधोक्षजम् ॥ ५३ ॥ उवास कतिचिन्मासान् गोपीनां विनुदञ्छुचः ॥ कृष्णलीलाकथां गायन् रमयामास
गोकुलम् ॥ ५४ ॥ यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत् स उद्धवः ॥ व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया
॥ ५५ ॥ सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान् ॥ कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥५६॥ दृष्ट्वैव-
मादि गोपीनां कृष्णाऽऽवेशात्मविक्लवम् ॥ उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५७ ॥ एताः परं तनुभृतो
भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः ॥ वाञ्छन्ति यद् भवभियो मुनयो वयं च किं ब्रह्म जन्म-
भिरनन्तकथारसस्य ॥ ५८ ॥

दिनानि तत्र स्थितः । तावन्ति दिनानि व्रजौकसां क्षणमिवाऽऽसन् ॥ ५५ ॥ एवं स कृष्णसेवकः सरिद्वनादीन् दृष्ट्वा व्रजौकसां कृष्णं स्मार-
यन् रेमे ॥ ५६ ॥ हे नृप ! एवं गोपीनां मनोवैक्लव्यं दृष्ट्वा ताः नमस्यन्नुद्धवः उवाच ॥ ५७ ॥ इह भुवि गोपस्त्रिय एव सफलजन्मानः, यतः
कृष्णे प्रेमवत्यः ॥ ५८ ॥

१ तत्तद्देशे चिह्नतया स्थितैर्हेतुभिः । २ कृष्णाऽऽवेशेन मनसो वैक्लव्यम् । ३ भवाद् भीर्यासां ताः।४ विप्रसम्बन्धिभिः । शौक्लसावित्रयाज्ञिकस्त्रीभिर्जन्मभिः । ५ श्रीकृष्णकथासु रसो यस्य तस्य ।

किंच । इमाः व्यभिचारदुष्टाः स्त्रियः क्व । कृष्णे दृढभावः क्व । अथापि भगवान् भजतः पुंसः श्रेयस्तनोति ॥५९॥ अहं हरेरनुग्रहो लक्ष्म्या
देवस्त्रीणामपि न । यो रासोत्सवे व्रजगोपीनां प्राप्तः ॥ ६० ॥ अत एव गोपीनां पादरेणुसेवितानां वृक्षलतादीनां मध्ये यत्किमपि स्याम्
( इत्याशंसा ) ॥ ६१ ॥ किंच याः गोप्यो हरेश्चरणारविन्दं ब्रह्मादिभिरर्चितं योगिभिश्च हृदये निहितं स्तनेषु कृत्वा तापं जहुः ॥ ६२ ॥

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ॥ नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रे-
यस्तनोत्यगदराज इवोपयुक्तः ॥५९॥ नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ॥
रासोत्सवेऽस्य भुजदण्डगृहीतकंठलब्धाशिषां य उदगाद् व्रजवल्लवीनाम् ॥ ६० ॥ आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम् ॥ या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्
॥ ६१ ॥ या वै श्रियार्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ॥ कृष्णस्य तद् भगवतश्चरणा-
रविन्दं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥६२॥ वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ॥ यासां हरिकथोद्गीतं
पुनाति भुवनत्रयम् ॥ ६३ ॥ श्रीशुक उवाच ॥ अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ॥ गोपानामन्त्र्य दाशार्हो
यास्यन्नारुरुहे रथम् ॥ ६४ ॥ तं निर्गतं समासाद्य नानोपायनपाणयः ॥ नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥
॥ ६५ ॥ मनसो वृत्तयो न स्युः कृष्णपादाम्बुजाश्रयाः ॥ वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६६ ॥ कर्म-
भिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ॥ मङ्गलाचरितैर्दानैर्मतिर्नः कृष्ण ईश्वरे ॥ ६७ ॥



अत एव नन्दव्रजस्त्रीणां पादरेणुं वन्दे यासां हरिकथोद्गीतं जगत्त्रयं पुनाति ॥६३॥ श्रीशुक उवाच ॥ अथोद्धवो गोपीर्नन्दादींश्चाऽऽनुज्ञाप्य गमि-
ष्यन् रथमारुरुहे ॥६४॥ तदा नानोपायनपाणयो नन्दादयोऽश्रुनेत्राः सन्तः ऊचुः ॥६५॥ हे उद्धव ! मनोवृत्तयो नः कृष्णपादाम्बुजाश्रयाः
भवेयुः । तन्नामकीर्तन्यो वाचः स्युः ॥६६॥ किंच । कर्मभिर्यत्र क्वापि भ्राम्यमाणानामस्माकं मंगलाचरितैः कृष्णे मतिः स्यात् ॥ ६७ ॥

१ अमृतम् । २ वक्षसि । ३ अहो । ४ एकान्तरतिमत्याः । ५ नलिनस्येव गन्धो रुक् कान्तिश्च यासां तासाम् । ६ उद्गानम् ।

एवं नन्दादिभिः सत्कृतः उद्धवो मथुरां ययौ ॥६८॥ ततः उद्धवः कृष्णं प्रणिपत्य व्रजौकसां भक्त्युद्रेकं कथयामास । उग्रसेनादिभ्यश्चोपायनानि ददौ ॥६९॥ इति श्रीभाग० म० द० चू० पू० सप्तचत्वारिंशोऽध्यायः ॥४७॥ अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् । अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत् ॥१॥ श्रीशुक उवाच ॥ अथ भगवान् कामतप्तायाः कुब्जायाः प्रियमिच्छन् तद्गृहं ययौ ॥१॥ (तद्गृहं वर्णयति) अमौल्यगृहसाहित्यैः सुरतबन्धादिलेख्यैर्मुक्तादामपताकाभिर्धूपदीपादिभिश्च युतम्॥२॥गृहमागतं कृष्णं दृष्ट्वा कुब्जा शीघ्रमुत्थाय समीपं गत्वा

एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ॥ उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ६८ ॥ कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ॥ वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ६९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे भ्रमरगीतोद्धवप्रतियानं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ श्रीशुक उवाच ॥ अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शनः ॥ सैरन्ध्र्याः कामतप्तायाः प्रियमिच्छन् गृहं ययौ ॥ १ ॥ महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ॥ मुक्तादामपताकाभिर्वितानशयनादिभिः ॥ धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ २ ॥ गृहं तमायान्तमवेक्ष्य साऽऽसनात् सद्यः समुत्थाय हि जातसंभ्रमा ॥ यथोपसंगम्य सखीभिरच्युतं सभाजयामाससदासनादिभिः ॥ ३ ॥ तथोद्धवः साधु तयाऽभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ॥ कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥४॥ सा मज्जनालेपदुकूलभूषणस्रग्गन्धताम्बूलसुधासवादिभिः ॥ प्रसाधितात्मोपससार माधवं सव्रीडलीलोस्मितविभ्रमेक्षितैः ॥ ५ ॥ आहूय कान्तां नवसंगमह्रिया विशङ्कितां कङ्कणभूषिते करे ॥ प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ॥ ६ ॥

तं संमानयामास ॥३॥ तथैव तया पूजितः उद्धवः आसनं स्पृष्ट्वा भुवि स्थितः । कृष्णस्तु शयनस्थानं विवेश ॥४॥ ततः कुब्जा स्नानानुलेपवस्त्रभूषणस्रग्गन्धताम्बूलादिभिः योग्यं स्वदेहं कृत्वा सव्रीडहास्येन कृष्णसमीपं जगाम ॥५॥ ततः कृष्णो नवसंगमलज्जया शङ्कितां करे धृत्वा शय्यां निवेश्य तया सह रेमे ॥ ६ ॥

---

१ उत्तमभित्यर्थः । २ अनुलेमार्पणादन्यत्तस्याः पुण्यं नास्तीति दर्शयितुं पुण्यलेशयेत्युक्तम् ।

तदा कुब्जा स्तनान्तरगतं कृष्णं दोर्भ्यामालिङ्ग्य दीर्घं तापं जहौ ॥७॥ हे नृप ! एवं सा मोक्षदं दुष्प्रापं चन्दनार्पणेन प्राप्य दुर्भगेदं ययाचे ॥ ८ ॥ हे कृष्ण ! इह कतिचिद्दिनानि स्थित्वा मया सह रमस्व । त्वां त्यक्तुं नोत्सहे ॥९॥ ततः कृष्णस्तस्याः इच्छितं वरं दत्त्वा सोद्धवः स्वगृहं जगाम ॥१०॥ हे नृप ! एवं दुराराध्यं विष्णुमाराध्य यो विषयसुखं वृणीते स दुर्मतिः ॥११॥ अथ रामोद्धवसहितः कृष्णोऽक्रूरगृहं जगाम

सानङ्गतप्तकुचयोरुरसस्तथाक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ॥ दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्द-
मूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥ सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ॥ अङ्गरागार्पणेनाहो दुर्भगेदमयाचत
॥ ८ ॥ आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ॥ रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण ॥ ९ ॥ तस्यै काम-
वरं दत्त्वा मानयित्वा च मानदः ॥ सहोद्धवेन सर्वेश स्वधामागमदर्चितः ॥ १० ॥ दुराराध्यं समाराध्य विष्णुं सर्वेश्वरे-
श्वरम् ॥ यो वृणीते मनोग्राह्यमसत्त्वात् कुमनीष्यसौ ॥ ११ ॥ अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ॥ किंचि-
च्चिकीर्षयन् प्रागादक्रूरप्रियकाम्यया ॥१२॥ स तान् नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान् ॥ प्रत्युत्थाय प्रमुदितः परि-
ष्वज्याभिनन्द्य च ॥ १३ ॥ ननाम कृष्णं रामं च स तैरप्यभिवादितः ॥ पूजयामास विधिवत् कृतासनपरिग्रहान् ॥
॥ १४ ॥ पादावनेजनीरापो धारयञ्छिरसा नृप ॥ अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥ १५ ॥ अर्चित्वा शिरसा-
ऽऽनम्य पादावङ्कगतौ मृजन् ॥ प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १६ ॥ दिष्ट्या पापो हतः कंसः सानुगो
वामिदं कुलम् ॥ भवद्भ्यामुद्धृतं कृच्छ्राद्दुरन्ताच्च समेधितम् ॥ १७ ॥

॥१२॥ ततोऽक्रूरस्तान् दृष्ट्वोत्थायाऽऽलिङ्ग्य च ॥१३॥ रामं कृष्णं च प्रणम्य तैर्नमस्कृतः सन् तान् पूजयामास ॥१४॥ ततस्तत्पादप्रक्षाल-नजलानि शिरसा धारयन् वस्त्रभूषणगन्धपुष्पादिभिः ॥ १५ ॥ तौ प्रतिपूज्य नत्वा चोत्सङ्गे स्थापितौ पादौ मृजन् सन् जगाद ॥१६॥ हे कृष्ण ! अयं सानुगः पापः कंसो हतः । एतद्दिष्ट्या । तथेदं कुलं च दुरन्तदुःखात् समुद्धृतं च ॥ १७ ॥

१ कुचादीनां रुजो मृजती जिघ्रन्ती च चरणम् । २ तुच्छत्वात् । ३ अक्रूरप्रार्थनां पूरयितुमित्यर्थः

किंच। युवां प्रधानपुरुषौ भवद्भ्यां विना कार्यकारणं न किंचित्॥१८॥ इदं स्वसृष्टं विश्वं प्रविश्य कारणत्वादननुप्रविष्टोऽप्यनुप्रविश्येव स्थितः स्वशक्तिभिः श्रुतप्रत्यक्षगोचरं यथा भवति तथा बहुधा भवान् प्रतीयते ॥१९॥ यथा चराचरजगत्सु पृथ्व्यादिपञ्चभूतानि नाना भान्ति तथा त्वं नृमृगादिशरीरेषु बहुधा भासि ॥ २० ॥ किंच। इदं जगत् स्वशक्तिभिस्त्वं सृजसि पासि हरसि तथापि तद्गुणकर्मभिस्त्वं न बध्यसे

युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ॥ भवद्भ्यां न विना किंचित् परमस्ति न चापरम् ॥ १८ ॥ आत्मसृष्टमिदं विश्व-मन्वाविश्य स्वशक्तिभिः ॥ ईयते बहुधा ब्रह्मञ्छ्रुतप्रत्यक्षगोचरम् ॥१९॥ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना ॥ एवं भवान् केवल आत्मयोनिष्वात्मात्मतन्त्रो बहुधा विभाति ॥ २० ॥ सृजस्यथो लुम्पसि पासि विश्वं रजस्तमस्सत्त्वगुणैः स्वशक्तिभिः ॥ न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥ २१ ॥ देहाद्युपा-धेरनिरूपितत्वाद्भवो न साक्षान्न भिदाऽऽत्मनः स्यात् ॥ अतो न बन्धस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥ २२ ॥ त्वयोदितोऽयं जगतो हिताय यदायदा वेदपथः पुराणः॥ बाध्येत पाखण्डपथैरसद्भिस्तदा भवान् सत्त्वगुणं बिभर्ति ॥ २३ ॥ स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः ॥ अक्षौहिणीशत-वधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २४ ॥ अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृ-भूतनृदेवमूर्तिः ॥ यत्पादशौचसलिलं त्रिजगद् पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः ॥ २५ ॥

॥ २१ ॥ मायायास्तुच्छत्वादात्मनो न बन्धः न च मोक्षः ॥२२॥ हे कृष्ण ! अयं पुराणो वेदमार्गो यदा पाखण्डमार्गैर्बाध्यते तदा त्वं सत्त्वं गुणं बिभर्षि ॥ २३ ॥ एवंभूतस्त्वमद्यासंख्याताक्षौहिणीसेनावधेन भूभारं हर्तुं वसुदेवगृहेऽवतीर्णोऽसि ॥ २४ ॥ किंच। हे कृष्ण ! अद्य नो गृहाः बहुपुण्याः, यतः सर्वदेवादिमूर्तिस्त्वं गृहान् प्रविष्टोऽसि ॥ २५ ॥

१ जन्म तन्मूलभिदा च देहाद्युपाधेरनिरूपितत्वात् साक्षात्स्वरूपतो नैव स्यातामतो नात्मनो बन्धो मोक्षो वेत्यर्थः। २ निकामः स्वाभिप्रायानुरूपोऽस्माकमविवेक एव परमेवंभूत इत्यर्थः। ३ असुरांशभूतानां राज्ञाम्।

हे ईश ! भक्तप्रियात् सत्यवाचस्त्वत्तः परं शरणं को गच्छेत्, यतो भवान् भजतः सर्वकामान् ददाति॥२६॥ हे जनार्दन ! देवादिभिर्दुर्दर्शो-
ऽपि त्वं नः प्रत्यक्षोऽसि । एतद् दिष्ट्या । अतस्त्वं स्त्रीपुत्रगृहधनादिमोहरशनां त्वन्मायां नश्छिन्धि ॥ २७ ॥ एवं भक्तेन स्तुतो हरिरक्रूरं
मोहयन्निव प्राह ॥२८॥ श्रीकृष्ण उवाच ॥ हे अक्रूर ! त्वं नो गुरुः पितृव्यश्च । वयं तु वः प्रजाः । अतः पोष्याः अनुकम्प्याश्च॥२९॥ किंच ।
त्वादृशाः अत्यन्तपूजनीयाः साधवः श्रेयस्कामैर्नृभिः सेव्याः॥३०॥ तीर्थानि देवाश्च बहुकालेन पुनन्ति साधवस्तु दर्शनादेव ॥३१॥ तस्माद्

कः पंडितस्त्वदपरं शरणं समीयाद् भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ॥ सर्वान् ददाति सुहृदो भजतोऽभिकामाना-
त्मानमप्युपचयापचयौ[1] न यस्य ॥ २६ ॥ दिष्ट्या जनार्दन भवानिह नः प्रतीतो योगेश्वरैरपि दुरापगतिः सुरेशैः ॥
छिन्ध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥ २७ ॥ इत्यर्चितः संस्तुतश्च भक्तेन भगवान्
हरिः ॥ अक्रूरं सस्मितं प्राह गीर्भिः संमोहयन्निव ॥ २८ ॥ श्रीभगवानुवाच ॥ त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बंधुश्च
नित्यदा ॥ वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः ॥ २९ ॥ भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ॥
श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था[2] न साधवः ॥ ३० ॥ नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनन्त्युरु
कालेन दर्शनादेव साधवः ॥ ३१ ॥ स भवान् सुहृदां वै नः श्रेयाञ्छ्रेयश्चिकीर्षया ॥ जिज्ञासार्थं पाण्डवानां गच्छ-
स्व त्वं गजाह्वयम् ॥ ३२ ॥ पितर्युपरते बालाः सह मात्रा सुदुःखिताः ॥ आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम
॥ ३३ ॥ तेषु राजाम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः ॥ समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥ ३४ ॥ गच्छ
जानीहि तद्वृत्तमधुना साध्वसाधु वा ॥ विज्ञाय तद् विधास्यामो यथा शं सुहृदां भवेत् ॥ ३५ ॥

हे अक्रूर ! त्वं नः सुहृन्मध्ये श्रेष्ठोऽसि, अतः पाण्डवानां श्रेयश्चिकीर्षया हस्तिनापुरं गच्छ ॥ ३२ ॥ ते बालाः पाण्डौ मृते सति धृतराष्ट्रेण
स्वपुरमानीताः इति शुश्रुम ॥३३॥ तेषु बालेषु स धृतराष्ट्रः समो न वर्तते, यतो दुष्पुत्रदुर्योधनादिवशगः ॥३४॥ अतस्त्वं गच्छ । अधुना
तद् वृत्तं साध्वसाधु वा जानीहि । ततो यथा सुहृदः सुखं भवेत् तथा विधास्यामः ॥ ३५ ॥



१ यस्योपचयापचयौ वृद्धिक्षयौ न स्तस्तथाविधमात्मानमपि ददातीत्यन्वयः । २ स्वकार्यसाधनपराः ।

एवमक्रूरमादिश्य कृष्णो रामोद्धवाभ्यां सह स्वभवनं ययौ ॥३६॥ इति श्रीभागवते चू० दशमस्कन्धे पूर्वार्धेऽष्टचत्वारिंशोऽध्यायः ॥४८॥ऊनपञ्चाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम्॥ राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥१॥ श्रीशुक उवाच ॥ हे नृप ! ततोऽक्रूरो हस्तिनापुरं गत्वा तत्र धृतराष्ट्रं भीष्मं विदुरं कुन्तीम् ॥१॥ बाह्लीकं सोमदत्तं द्रोणं कृपं कर्णं दुर्योधनं सुहृदश्च दृष्ट्वा ॥२॥ यथायोग्यं मिलित्वा तैः सुहृद्वार्तां पृष्टः स्वयं तेषां कुशलं पप्रच्छ॥३॥तत्र धृतराष्ट्रस्य वृत्तं ज्ञातुमिच्छया कतिचिन्मासानुवास॥४॥किंच । पाण्डवानां प्रभावं शस्त्रादिनैपुण्यबलशौर्यादिगुणा-

इत्यक्रूरं समादिश्य भगवान् हरिरीश्वरः ॥ संकर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥३६॥ इति श्रीभागवते महापुराणे दशमस्कन्धे पूर्वार्द्धे कुब्जारमणादिनिरूपणं नामाष्टचत्वारिंशोऽध्यायः ॥४८॥ श्रीशुक उवाच ॥ स गत्वा हास्तिनपुरं पौरवेन्द्रयशोऽङ्कितम् ॥ ददर्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम् ॥१॥ सहपुत्रं च बाह्लीकं भारद्वाजं सगौतमम् ॥ कर्णं सुयोधनं द्रौणिं पाण्डवान् सुहृदोऽपरान् ॥२॥ यथावदुपसंगम्य बन्धुभिर्गान्दिनीसुतः ॥ संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥३॥ उवास कतिचिन्मासान् राज्ञो वृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ ॥४॥ तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ॥ प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥५॥ कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ॥ आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥६॥ पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ॥ उवाच जन्मनिलयं स्मरन्त्यश्रुकुलेक्षणा ॥ ७ ॥ अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च मे ॥ भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥८॥ भ्रात्रेयो भगवान् कृष्णः शरण्यो भक्तवत्सलः ॥ पैतृष्वसेयान् स्मरति रामश्चाम्बुरुहेक्षणः ॥ ९ ॥ सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ॥ सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥१०॥

नसहमानदुर्योधनादिभिः कर्तुमिष्टं यत् तथा कृतं च यद्विषदानादि तत् सर्वं पृथा विदुरश्चाक्रूराय प्राहतुः॥५॥६॥पृथा तु प्राप्तं भ्रातरमक्रूरं समीपं गत्वा स्वजन्मस्थानं स्मृत्वाऽऽह॥७॥ हे भ्रातः ! अस्माकं पितरौ भ्रातृभगिन्यो भ्रातृपुत्रादयश्च नः स्मरन्ति किम्॥८॥ तथा भक्तवत्सलः कृष्णो रामश्च मत्पुत्रान् स्मरति किम्॥९॥किंच शत्रुमध्ये शोचन्तीं मां वृकाणां मध्ये हरिणीमिव पितृहीनान् मे बालांश्च हरिः सान्त्वयिष्यति किम्॥१०॥

१ कुलस्त्रियः ।

हे कृष्ण ! मृत्युसंसाराद्भीतानां नृणां त्वत्पदाम्बुजादन्यद्रक्षणं न


हे कृष्ण ! हे महायोगिन् ! पुत्रैः सह क्लिश्यन्तीं शरणागतां मां पाहि ॥११॥ हे कृष्ण ! मृत्युसंसाराद्भीतानां नृणां त्वत्पदाम्बुजादन्यद्रक्षणं न
हे नृप ! एवं तव प्रपितामही
पश्यामि ॥१२॥ अतो योगेश्वराय परमात्मने कृष्णाय ते नमः । अहं त्वां शरणं गता ॥१३॥ श्रीशुक उवाच ॥ हे नृप ! एवं तव प्रपितामही
स्वजनं कृष्णं च स्मृत्वा प्रारुदत् ॥१४॥ तदा समदुःखसुखोऽक्रूरो विदुरश्च तां कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः सान्त्वयामासतुः ॥१५॥ ततोऽक्रूरोगच्छन्
सन् धृतराष्ट्रं गत्वा सुहृन्मध्ये सौहृदाद्रामकृष्णादिभिर्यदुक्तं तदवदत् ॥१६॥ अक्रूर उवाच ॥ भो भो धृतराष्ट्र ! भ्रातरि पाण्डौ मृते सति संप्रति

शिशुभिश्चावसीदतीम् ॥ ११ ॥ नान्यत्तव
कृष्णकृष्ण महायोगिन् विश्वात्मन् विश्वभावन ॥ प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥ ११ ॥ नान्यत्तव
पदाम्भोजात्पश्यामि शरणं नृणाम् ॥ बिभ्यतां मृत्युसंसारादीश्वरस्याऽऽपवर्गिकात् ॥१२॥ नमः कृष्णाय शुद्धाय ब्रह्मणे
परमात्मने ॥ योगेश्वराय योगाय त्वामहं शरणं गता ॥१३॥ श्रीशुक उवाच ॥ इत्यनुस्मृत्य स्वजनं कृष्णं च जगदी-
श्वरम् ॥ प्रारुदद्दुःखिता राजन् भवतां प्रपितामही ॥१४॥ समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ॥ सान्त्वयामासतुः कुन्तीं
तत्पुत्रोत्पत्तिहेतुभिः ॥१५॥ यास्यन् राजानमभ्येत्य विषमं पुत्रलालसम् ॥ अवदत् सुहृदां मध्ये बन्धुभिः सौहृदोदि-
तम् ॥ १६ ॥ अक्रूर उवाच ॥ भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ॥ भ्रातर्युपरते पाण्डावधुनाऽऽसनमास्थितः
॥१७॥ धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् ॥ वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥१८॥ अन्यथा त्वाचरँल्लोके
गर्हितो यास्यसे तमः ॥ तस्मात् समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥१९॥ नेह चात्यन्तसंवासः कर्हिचित् केनचित्सह ॥
राजन् स्वेनापि देहेन किमु जायात्मजादिभिः ॥२०॥ एकः प्रसूयते जन्तुरेक एव प्रलीयते ॥ एको नु भुङ्क्ते सुकृतमेक
एव च दुष्कृतम् ॥२१॥ अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः ॥ सम्भोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥

त्वमासनमास्थितः ॥१७॥ अस्तु तथापि प्रजाः पालयन् स्वकीयेषु समो वर्तमानः सन् श्रेयः कीर्तिं प्राप्स्यसि ॥१८॥ अन्यथा नरकं यास्यसे ।
अतस्त्वं स्वपुत्रेषु पाण्डवेषु च समत्वेन वर्तस्व ॥१९॥ किंच हे राजन् ! अत्र लोके कर्हिचित् केनापि देहेन च नित्यं सम्यक् स्थितिर्न । स्त्रीपु-
त्रादिभिः किम् ॥२०॥ जन्तुरेक एव प्रसूयते नश्यति पुण्यं पापं चैक एव भुङ्क्ते ॥२१॥ अधर्मार्जितं द्रव्यं पोष्यपुत्रादिमिषेणाऽन्ये हरन्ति ॥२२॥



१ मोक्षप्रदात् । २ तस्याः पुत्राणामुत्पत्तिहेतुभिः जनकैर्धर्मानिलेन्द्रैः तत्कथनैरित्यर्थः ।

किंच । अधर्मेण यान् पुष्णाति ते पुत्रादयस्तं त्यजन्ति ॥२३॥ एवं तैस्त्यक्तः स्वयमपूर्णमनोरथः सन् तमो विशति ॥२४॥ तस्मात् त्वं लोक-स्वप्नमायामनोरथवद् वीक्ष्य मनो जित्वा समः शान्तो भव॥२५॥धृतराष्ट्र उवाच॥हे अक्रूर ! यथा त्व वदसि तथाऽनया वाण्या न तृप्यामि मर्त्यो-ऽमृतं प्राप्य यथा॥२६॥तथेयं तव प्रिया वाग् हे साधो ! पुत्रानुरागविषमे चञ्चले मे हृदि विद्युल्लतेव न स्थितिमुपैति॥२७॥किंच भूभारनाशाय यदु-कुलेऽवतीर्णस्य हरेः कर्तव्यं को नु पुमानन्यथा करोति॥२८॥यो माययेदं सृष्ट्वा तदनुप्रविष्टः कर्माणि तत्फलानि विभजते। एवंभूताय परमेश्वराय

पुष्णाति यानधर्मेण स्वबुद्ध्या तमपंडितम् ॥ तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः ॥ २३ ॥ स्वयं किल्बिष-मादाय तैस्त्यक्तो नार्थकोविदः ॥ असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥ २४ ॥ तस्माल्लोकमिमं राजन् स्वप्नमायामनोरथम् ॥ वीक्ष्याऽऽयम्यात्मनात्मानं समः शान्तो भव प्रभो ॥ २५ ॥ धृतराष्ट्र उवाच ॥ यथा वदति कल्याणीं वाचं दानपते भवान् ॥ तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथामृतम् ॥ २६ ॥ तथापि सूनृता सौम्य हृदि न स्थीयते चले ॥ पुत्रानुरागविषमे विद्युत् सौदामनी यथा ॥ २७ ॥ ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ॥ भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ २८ ॥ यो दुर्विमर्शपथया निजमाययेदं दृष्ट्वा गुणान् विभजते तदनुप्रविष्टः ॥ तस्मै नमो दुरवबोधविहारतन्त्रसंसारचक्रगतये परमेश्वराय ॥ २९ ॥ श्रीशुक उवाच ॥ इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ॥ सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥ ३० ॥ शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टि-तम् ॥ पाण्डवान् प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ॥ ३१ ॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां दशमस्कन्धे पूर्वार्धे पाण्डववृत्तनिरूपणं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

नमः॥२९॥श्रीशुक उवाच ॥ एवं धृतराष्ट्राऽभिप्रायं ज्ञात्वाऽक्रूरः सुहृद्भिः समनुज्ञातः सन् मथुरां जगाम॥३०॥ततो मथुरामेत्य यदर्थं पाण्डवान् प्रति प्रेषितस्तत् सर्वं धृतराष्ट्रचेष्टितं रामकृष्णाभ्यां शशंस ॥३१॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायां पूर्वार्धे एकोनपञ्चाशत्तमोऽध्यायः ॥४९॥ अस्मिन् दशमस्कन्धे पूर्वार्धे अनुष्टुब्वृत्तश्लोकसंख्या–२००७ चूर्णिकाश्लोकसंख्या २००० सामान्यतः । ( इति दशमस्कन्धपूर्वार्द्धः )

१ अवितर्क्यमार्गया । २ दुरवबोधो विहार एव तन्त्रं मुख्यं कारणं यस्य संसारचक्रस्यात एव तस्य गतिर्यस्मात्तस्मै ।

( अयं दशमस्कन्धपूर्वार्द्धः मुम्बय्यां क्षेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेंकटेश्वर" ( स्टीम् यन्त्रालये मुद्रितः ) संवत् २०२७, सन १९७०

इति सचूर्णिके श्रीमद्भागवते दशमस्कन्धपूर्वार्द्धः समाप्तः

# अथ सच्चूर्णिके श्रीमद्भागवते दशमस्कन्धोत्तरार्द्धप्रारम्भः

श्रीगणेशाय नमः ॥ ततः पञ्चाशत्तमे तु जरासन्धभयादिव ॥ कारयित्वाम्बुधौ दुर्गं तं निनाय निजं जनम् ॥ १ ॥ कपटान् कपटैरेव हत्वा दैत्यानयत्नतः ॥ अजयच्च जरासन्धं धर्मेणैव तु धार्मिकम् ॥ २ ॥ श्रीशुक उवाच ॥ हे राजन् ! अस्तिः प्राप्तिश्च कंसस्य भार्ये द्वे भर्तरि मृते सति दुःखार्ते पितुर्गेहं जग्मतुः ॥ १ ॥ ततो जरासन्धाय स्ववैधव्यकारणं कथयामासतुः ॥ २ ॥ ततो जरासन्धोऽप्रियमाकर्ण्य क्रुद्धः सन् महीमयादवीं कर्तुं मनश्चक्रे ॥ ३ ॥ ततस्त्रयोविंशत्यक्षौहिणीभिर्युक्तः स मथुरां रुरोध ॥ ४ ॥ तदा श्रीकृष्णस्तत् सैन्यं तेन रुद्धं स्वपुरं

ॐ नमो भगवते वासुदेवाय ॥ श्रीशुक उवाच ॥ अस्तिः प्राप्तिश्च कंसस्य महिष्यौ[1] भरतर्षभ ॥ मृते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान् ॥ १ ॥ पित्रे मगधराजाय जरासन्धाय दुःखिते ॥ वेदयांचक्रतुः सर्वमात्मवैधव्यकारणम् ॥२॥ स तदप्रियमाकर्ण्य शोकामर्ष[2]युतो नृप ॥ अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥ अक्षौहिणीभिर्विंशत्या-तिसृभिश्चापि संवृतः ॥ यदुराजधानीं मथुरां न्यरुणत् सर्वतोदिशम् ॥ ४ ॥ निरीक्ष्य तद् बलं कृष्ण उद्वेलं[3]मिव सागरम् ॥ स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥ चिंतयामास भगवान् हरिः कारणमानुषः ॥ तद्देशका-लानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥ हनिष्यामि बलं ह्येतद् भुवि भारं समाहितम् ॥ मागधेन समानीतं वश्यानां सर्वभूभुजाम् ॥ ७ ॥ अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः ॥ मागधस्तु न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥ ॥८॥ एतदर्थोऽवतारोऽयं भूभारहरणाय मे ॥ संरक्षणाय साधूनां कृतोऽन्येषां[4] वधाय च ॥ ९ ॥ अन्योऽ[5]पि धर्मरक्षायै देहः संभ्रियते मया ॥ विरामायाप्यधर्मस्य काले प्रभवतः[6] क्वचित् ॥ १० ॥



भयाकुलं स्वजनं च दृष्ट्वा ॥५॥ भूभारहरणकारणेन गृहीतमानुषदेहो हरिः स्वावतारप्रयोजनं चिन्तयामास ॥ ६ ॥ किं तत् । जरासन्धेना-नीतं भूभारभूतं सैन्यं हनिष्यामि ॥७॥ मागधस्तु न हन्तव्यः, यतो भूयो बलोद्यमं करिष्यति ॥८॥ ममाऽवतारः साधूनां रक्षणाय दुर्जनानां वधाय चैवास्ति ॥ ९ ॥ मयाऽन्यो देहो धर्मरक्षायै ॥ १० ॥

---

१ कृताभिषेका महिष्यौ । २ अमर्षः क्रोधः । ३ उद्वेलं लंघितमर्यादम् । ४ अन्येषाम् असाधूनाम् । ५ अन्यः मनुष्यदेहाद् भिन्नो वराहादिः । ६ प्रभवतः उद्भूवतः ।

एवं गोविन्दे ध्यायति सति ससूतौ ध्वजकवचादियुक्तौ सूर्यवर्चसौ द्वौ रथौ गगनात् प्राप्तौ ॥ ११ ॥ तथाऽऽयुधानि च प्राप्तानि । तानि दृष्ट्वा केशवो रामं जगाद ॥ १२ ॥ हे राम ! यदूनां प्राप्तं दुःखं पश्य । तथैव ते रथः आयुधानि चाऽऽयातानि पश्य ॥ १३ ॥ अधुना रथमास्थाय तत् सैन्यं जित्वा दुःखात् स्वकीयान् समुद्धर । एतदर्थं हि आवयोर्जन्म ॥ १४ ॥ किंच ! त्रयोविंशत्यक्षौहिणीमितं भूमेर्भारं दूरीकुरु । एवं संमन्त्र्य तौ रामकृष्णौ स्वायुधाढ्यौ रथाभ्यां पुराद् जग्मतुः । विनिर्गत्य हरिः शंखं दध्मौ ॥१५ ॥१६॥ तेन नादेन शत्रुसैन्यानां हृदि कम्पो

एवं ध्यायति गोविन्द आकाशात् सूर्यवर्चसौ ॥ रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ ११ ॥ आयुधानि च दिव्यानि पुराणानि यदृच्छया ॥ दृष्ट्वा तानि हृषीकेशः संकर्षणमथाब्रवीत् ॥ १२ ॥ पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां[1] प्रभो ॥ एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥ यानमास्थाय जह्येतद् व्यसनात् स्वान् समुद्धर ॥ एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत् ॥ १४ ॥ त्रयोविंशत्यनीकाख्यं[2] भूमेर्भारमपाकुरु ॥ एवं संमन्त्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ॥ १५ ॥ निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसाऽऽवृतौ ॥ शंखं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥ १६ ॥ ततोऽभूत् परसैन्यानां हृदि वित्रासवेपथुः[3] ॥ तावाह मागधो वीक्ष्य हे कृष्ण पुरुषाधम ॥ ॥ १७ ॥ न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया ॥ गुप्तेन हि त्वया मन्द न योत्स्ये याहि बन्धुहन् ॥ १८ ॥ तव राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह ॥ हित्वा मच्छरैश्छिन्नं देहं स्वर्याहि मां जहि ॥ १९ ॥ श्रीभगवानुवाच ॥ न वै शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम् ॥ न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ॥ २० ॥

जातः । ततो मागधस्तौ प्रति जगाद ॥ १७ ॥ हे कृष्ण ! पुरुषाधम ! बालेन त्वया सह योद्धुं नेच्छामि । कुतः । त्वं मातुलहन्ताऽसि । अतो याहि ॥ १८ ॥ हे राम ! तव युद्धे श्रद्धाऽस्ति चेत् तर्हि धैर्यं धृत्वा युध्यस्व । मया जितश्चेत् मच्छरैश्छिन्नं देहं हित्वा स्वर्गं याहि । मां वा जहि ॥१९॥ श्रीभगवानुवाच ॥ हे मागध ! शूराः एवमात्मस्तुतिं न कुर्वते पौरुषमेव दर्शयन्ति । अतः आतुरस्य ते वचो न गृह्णीमः ॥२०॥

---

१ त्वमेव अवन रक्षको येषां ते त्वावन्तः तेषाम् । २ अनीकम् नाम सैन्यम् । ३ वेपथुः कम्पः ।

श्रीशुक उवाच ॥ हे राजन् ! मागधोमहासैन्यसमूहेन सैन्यरथध्वजाश्वसूतैः सह तावावेष्टयत्॥२१॥तदा पुराट्टालिकादिषु स्थिताः स्त्रियो राम-
कृष्णरथौ न पश्यन्त्यः सत्यः शुचार्दिताः मुमुहुः ॥२२॥ ततः श्रीकृष्णः स्वसैन्यं शत्रुसैन्यशरैः पीडितं दृष्ट्वा स्वं शार्ङ्गं धनुरुज्जृम्भितवान् ॥
॥ २३ ॥ किं कुर्वन् धनुरुज्जृम्भितवांस्तदाह । तूणीरात् शरान् गृहीत्वा धनुषि सन्धायाऽऽकृष्य तीक्ष्णबाणौघान् मुञ्चन् सन् रथगजाश्वपदा-
तीन् प्रहरन् ॥२४॥ तदा गजाः निर्भिन्नकुम्भाः पेतुः ! अश्वाश्छिन्नग्रीवाः पेतुः । रथाः हताश्वध्वजसूतनायकाः पेतुः । पदातयश्छिन्नभुजोरु-

श्रीशुक उवाच ॥ जरासुतस्तावभिसृत्य माधवौ महाबलौघेन बलीयसाऽऽवृणोत् ॥ ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥ २१ ॥ सुपर्णतालध्वजचिह्नितौ रथावलक्षयन्त्यो हरिरामयोर्मृधे ॥ स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमुमुहुः शुचार्दिताः ॥२२॥ हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्षपीडितम् ॥ स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥ २३ ॥ गृह्णन् निषंगादथ संदधच्छरान्विकृष्य मुञ्चञ्छितबाणपूगान् ॥ निघ्नन् रथान् कुञ्जरवाजिपत्तीन् निरन्तरं यद्वदलातचक्रम् ॥२४॥ निर्भिन्नकुम्भाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकन्धराः ॥ रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धराः ॥२५॥ संछिद्यमानद्विपदेभवाजिनामङ्गप्रसूताः शतशोऽसृगापगाः ॥ भुजाऽहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकुलाः ॥ २६ ॥ करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसंकुलाः ॥ अच्छूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥ ॥ २७ ॥ प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम् ॥ विनिघ्नताऽरीन् मुसलेन दुर्मदान् संकर्षणेनापरिमेयतेजसा ॥ २८ ॥

ग्रीवा पेतुः ॥२५॥ एवं छिन्नदेहानां तेषामङ्गेभ्यो निस्सृताः रुधिरनद्यः परस्परं प्रवर्तिताः आसन् । तासु भुजाः सर्पाः शीर्षाणि कच्छपाः गजाः
अन्तर्वर्तिततटानि अश्वा नक्राः ॥२६॥ कराः उरवश्च मीनाः नृकेशाः शैवालानि धनूंषि तरङ्गा आयुधानि गुल्माः चर्माणि चक्राणि वाऽऽवर्ता
मणयो वालुकाः ॥ २७ ॥ एतादृश्यः शूराणां हर्षकर्यः भीरुभयावहाः नद्यः प्रोहुः ॥ २८ ॥

१ मधुवंशभवौ । २ सूर्यमग्नेरग्नि रेणुभिरित्यन्वयः । ३ बाणः । ४ प्रबलवृष्टिः । ५ तृणम् । ६ उत्तमः ।

ततः एवं संकर्षणेन तत् सैन्यं क्षयं नीतम् तद् वसुदेवपुत्रयोः परं विक्रीडनं न तु पराक्रमः ॥२९॥ अहो ! यस्त्रिभुवनस्य स्थित्यादि स्वलीलयैव धत्ते तस्य शत्रुपक्षविग्रहश्चित्रं न ॥ ३० ॥ ततो रामो महाबलं जरासन्धं जग्राह ॥ ३१ ॥ तदा जरासन्धं रामेण बारुणैः पाशैर्बध्यमानं दृष्ट्वा कार्यचिकीर्षया गोविन्दो वारयामास ॥ ३२ ॥ एवं रामकृष्णाभ्यां मुक्तः स लज्जितो भूत्वा तपसे कृतसंकल्पः पथि राजभिर्निवा-

बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम् ॥ क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥२९॥ स्थित्युद्भवान्तं भुवनत्रयस्य यः समीहतेऽनन्तगुणः स्वलीलया ॥ न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते ॥ ३० ॥ जग्राह विरथं रामो जरासन्धं महाबलम् ॥ हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा ॥ ३१ ॥ वध्यमानं हताराति पाशैर्वारुणमानुषैः ॥ वारयामासगोविन्दस्तेन कार्यचिकीर्षया ॥ ३२ ॥ स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसंमतः ॥ तपसे कृतसंकल्पो वारितः पथि राजभिः ॥३३॥ वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि ॥ स्वकर्मबन्धप्राप्तोऽयं यदुभिस्ते पराभवः ॥ ३४ ॥ हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ॥ उपेक्षितो भगवता मगधान् दुर्मना ययौ ॥ ३५ ॥ मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ॥ विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥ ३६ ॥ माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयः सूतमागधवन्दिभिः ॥ ३७ ॥ शंखदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदङ्गानि पुरं प्रविशति प्रभौ ॥ ३८ ॥

रितः ॥३३॥ हे मागध ! अल्पैर्यदुभिस्ते महतः पराभवः केवलं कर्मबन्धेन प्राप्तः । अतस्त्वया न लज्जितव्यम् ॥ ३४ ॥ एवं नीतिवाक्यैर्बोधितो जरासन्धो दुर्मनाः स्वपुरं ययौ ॥ ३५ ॥ अक्षीणसैन्यः कृष्णोऽपि देवैः पुष्पैर्विकीर्यमाणः ॥ ३६ ॥ मथुरास्थजनैर्मिलित्वा सूतमागधादिभिः स्तूयमानः स्वपुरं ययौ ॥ ३७ ॥ शङ्खदुन्दुभयः कृष्णे पुरं प्रविशति नेदुः ॥ ३८ ॥

१ अङ्ग हे राजन् ।२ अर्णववद् दुर्गमं भयङ्करं च । ३ तलम् । ४ अवधिः । ५ नीतम् । ६ मर्त्याननुविधत्ते अनुकरोतीति मर्त्यानुविधः तस्य । ७ पवित्रार्थानि धर्मोपदेशपराणि पदानि येषु तैः । ८ नीतिभिः । ९ लौकिकैः । १० मुकुन्दोऽपि ययावित्यन्वयः ।

पताकाभिरलङ्कृतां ब्रह्मघोषेण नादितां सिक्तमार्गां बद्धतोरणां मथुरां प्रविश्य ॥ ३९ ॥ स्त्रीभिर्दध्यक्षताङ्कुरैर्विकीर्यमाणः ॥ ४० ॥ रणप्राप्तं वित्तं यदुराजाय ददौ ॥ ४१ ॥ एवं जरासन्धः सप्तदशवारान् यदुभिर्युयुधे ॥ ४२ ॥ तदा यादवस्तद्बलं क्षयं निन्युः । ततो जरासन्धः स्वसैन्येषु हतेषु जगाम ॥ ४३ ॥ पुनरष्टादशे संग्रामे भाव्ये सति तन्मध्ये नारदप्रेषितः कालयवनः एत्य ॥ ४४ ॥ तिसृभिर्म्लेच्छकोटिभिर्मथुरां रुरोध ॥ ४५ ॥ तं दृष्ट्वा रामकृष्णौ चिन्तयामासतुः । अहो यदूनामुभयतो दुःखं प्राप्तम् ॥ ४६ ॥ तदाह । अयं यवनोऽस्मान् निरुन्धे ।

सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम् ॥ निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥३९॥ निचीयमानो नारीभि-
र्माल्यदध्यक्षताङ्कुरैः॥निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः॥४०॥ आयोधनगतं वित्तमनन्तं वीरभूषणम् ॥ यदु-
राजाय तत्सर्वमाहृतं प्रादिशत् प्रभुः ॥ ४१ ॥ एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ॥ युयुधे मागधो राजा यदुभिः
कृष्णपालितैः ॥ ४२ ॥ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ॥ हतेषुस्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥ ४३ ॥
अष्टादशमसंग्रामे आगामिनि तदन्तरा ॥ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥४४॥ रुरोध मथुरामेत्य तिसृभिर्म्ले-
च्छकोटिभिः॥ नृलोके च प्रतिद्वन्द्वो वृष्णीञ्श्रुत्वाऽऽत्मसंमितान् ॥४५॥ तं दृष्ट्वाऽचिन्तयत् कृष्णः संकर्षणसहायवान् ॥
अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥४६॥ यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः ॥ मागधोऽप्यद्य वा श्वो
वा परश्वो वाऽऽगमिष्यति ॥ ४७ ॥ आवयोर्युध्यतोरस्य यद्यागन्ता जरासुतः ॥ बन्धून् वधिष्यत्यथवा नेष्यते स्वपुरं
बली ॥ ४८ ॥ तस्माद्द्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ तत्र ज्ञातीन् समाधाय यवनं घातयामहे ॥ ४९ ॥ इति
संमन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ॥ अन्तस्समुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥ ५० ॥

महाबलो मागधोऽद्य श्वः परश्वो वाऽऽगमिष्यति ॥ ४७ ॥ अनेनाऽऽवयोर्युध्यतोः सतोर्जरासन्धो यद्यागमिष्यति तर्हि बन्धून् यादवान् वधिष्यति स्वपुरं वा नेष्यति ॥ ४८ ॥ तस्माद्द्य द्विपददुर्गमं दुर्गं कृत्वा तत्र ज्ञातीन् संस्थाप्य यवनं घातयामहे ॥ ४९ ॥ एवं विचार्य भगवान् समुद्रमध्ये द्वादशयोजनं दुर्गं तन्मध्ये सर्वाश्चमयं नगरं कारयामास ॥ ५० ॥

यत्र विश्वकर्मणः शिल्पनैपुण्यं दृश्यते । तत्कीदृशम् । यत्र राजमार्गाः अङ्गणान्युपमार्गाः सुवर्णभवनानि ॥ ५१ ॥ यत्र सुरद्रुमलतोद्यानानि ॥ ५२ ॥ यत्र रौप्यपित्तलाभ्यां निर्मिताऽश्वादिशाला रत्नयुक्तहेमकुम्भानि महामरकतमयानि स्थलानि ॥ ५३ ॥ नगरगृहादौ वास्तोष्पतीनां देवानां च स्थानानि ! एवं चातुर्वर्ण्यजनाकीर्णम् ॥ ५४ ॥ यत्रेन्द्रो हरेः सुधर्मां सभां पारिजातं च प्राहिणोत् ॥ ५५ ॥ वरुणः श्यामैक कर्णानश्वान् कुबेरो निधीन् अन्ये लोकपालाः स्वैश्वर्याणि ॥५६॥ अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये दत्तमाधिपत्यं हरौ भूमि-

दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥ ५१ ॥ सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥५२॥ राजताऽऽरकुटैः कोष्ठैर्हेमकुम्भैरलङ्कृतैः ॥ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ ५३ ॥ वास्तोष्पतीनां च गृहैर्वल्लभीभिश्च निर्मितम् ॥ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥ ५४ ॥ सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ॥ यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥ ॥ ५५ ॥ श्यामैककर्णान् वरुणो हयाञ्छुक्लान् मनोजवान् ॥ अष्टौ निधिपतिः कोशान् लोकपालो निजोदयान् ॥ ५६ ॥ यद्यद् भगवता दत्तमाधिपत्यं स्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ५७ ॥ तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः ॥ प्रजापालेन रामेण कृष्णः समनुमन्त्रितः ॥ निर्जगाम पुरद्वारात् पद्ममाली निरायुधः ॥ ॥ ५८ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे दुर्गनिवेशनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ श्रीशुक उवाच ॥ तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् ॥ दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥

गते सति सर्वं प्रत्यर्पयामासुः ॥ ५७ ॥ ततः श्रीकृष्णो योगप्रभावेण तत्र सर्वजनं नीत्वा रामं जगाद । त्वमत्र स्थित्वा प्रजाः पालय । अहं पलायिष्ये इति । एवमुक्त्वा स्वयं निरायुधः सन् पुरद्वाराद् निर्जगाम॥५८॥ इति श्रीभागवते चू० उ० दशमस्कन्धे पञ्चाशत्तमोऽध्यायः॥५०॥ एकपञ्चाशत्तमेऽहन् मुचुकुन्ददृशा हरिः । यवनं मुचुकुन्देन स्तुतः सन्नन्वकम्पत ॥१॥ यवनेन्द्रसुतात् कालयवनाद्यदुभीषणात् । हरिर्हरगिरः स्वैरं पालनाय पलायत ॥ २ ॥ श्रीशुक उवाच ॥ ततः पुरद्वारात् निर्गतं चन्द्रमिव दर्शनीयं श्यामं पीताम्बरम् ॥ १ ॥

१ गृहादिनिर्माणशास्त्रमनतिक्रम्य । २ उपरिभूमिका । ३ यदुदेवगृहैः उल्लसत् शोभमानम् । ४ क्षुत्पिपासादिभिः । ५ निजविभूतीः ।

स्त्रीभिर्दध्यक्षताङ्कुरैर्विकीर्यमाणः ॥ ४० ॥ रणप्राप्तं
पताकाभिरलङ्कृतां ब्रह्मघोषेण नादितां सिक्तमार्गां बद्धतोरणां मथुरां प्रविश्य ॥ ३९ ॥
वित्तं यदुराजाय ददौ ॥ ४१ ॥ एवं जरासन्धः सप्तदशवारान् यदुभिर्युयुधे ॥ ४२ ॥ तदा यादवस्तद्बलं क्षयं निन्युः । ततो जरासन्धः स्वसै-
न्येषु हतेषु जगाम ॥ ४३ ॥ पुनरष्टादशे संग्रामे भाव्ये सति तन्मध्ये नारदप्रेषितः कालयवनः एत्य ॥ ४४ ॥ तिसृभिर्म्लेच्छकोटिभिर्मथुरां
रुरोध ॥ ४५ ॥ तं दृष्ट्वा रामकृष्णौ चिन्तयामासतुः । अहो यदूनामुभयतो दुखं प्राप्तम् ॥ ४६ ॥ तदाह । अयं यवनोऽस्मान् निरुन्धे ।

निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणाम् ॥३९॥ निचीयमानो नारीभि-
सिक्तमार्गां हृष्टजनां पताकाभिरलङ्कृताम् ॥
र्माल्यदध्यक्षताङ्कुरैः॥ निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः॥४०॥ आयोधनगतं वित्तमनन्तं वीरभूषणम् ॥ यदु-
राजाय तत्सर्वमाहृतं प्रादिशत् प्रभुः ॥ ४१ ॥ एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ॥ युयुधे मागधो राजा यदुभिः
कृष्णपालितैः ॥ ४२ ॥ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ॥ हतेषुस्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥ ४३ ॥
अष्टादशमसंग्रामे आगामिनि तदन्तरा ॥ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥४४॥ रुरोध मथुरामेत्य तिसृभिर्म्ले-
च्छकोटिभिः॥ नृलोके च प्रतिद्वन्द्वो वृष्णीञ्श्रुत्वाऽऽत्मसंमितान् ॥४५॥ तं दृष्ट्वाऽचिन्तयत् कृष्णः संकर्षणसहायवान् ॥
अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥४६॥ यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः ॥ मागधोऽप्यद्य वा श्वो
वा परश्वो वाऽऽगमिष्यति ॥ ४७ ॥ आवयोर्युध्यतोरस्य यद्यागन्ता जरासुतः ॥ बन्धून् वधिष्यत्यथवा नेष्यते स्वपुरं
बली ॥ ४८ ॥ तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम् ॥ तत्र ज्ञातीन् समाधाय यवनं घातयामहे ॥ ४९ ॥ इति
संमन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ॥ अन्तस्समुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥ ५० ॥

महाबलो मागधोऽद्य श्वः परश्वो वाऽऽगमिष्यति ॥ ४७ ॥ अनेनाऽऽवयोर्युध्यतोः सतोर्जरासन्धो यद्यागमिष्यति तर्हि बन्धून् यादवान्
वधिष्यति स्वपुरं वा नेष्यति ॥ ४८ ॥ तस्मादद्य द्विपददुर्गमं दुर्गं कृत्वा तत्र ज्ञातीन् संस्थाप्य यवनं घातयामहे ॥ ४९ ॥ एवं विचार्य
भगवान् समुद्रमध्ये द्वादशयोजनं दुर्गं तन्मध्ये सर्वाश्चमयं नगरं कारयामास ॥ ५० ॥

यत्र विश्वकर्मणः शिल्पनैपुण्यं दृश्यते । तत्कीदृशम् । यत्र राजमार्गाः अङ्गणान्युपमार्गाः सुवर्णभवनानि ॥ ५१ ॥ यत्र सुरद्रुमलतोद्यानानि ॥ ५२ ॥ यत्र रौप्यपित्तलाभ्यां निर्मिताऽश्वादिशाला रत्नयुक्तहेमकुम्भानि महामरकतमयानि स्थलानि ॥ ५३ ॥ नगरगृहादौ वास्तोष्पतीनां देवानां च स्थानानि ! एवं चातुर्वर्ण्यजनाकीर्णम् ॥ ५४ ॥ यत्रेन्द्रो हरेः सुधर्मां सभां पारिजातं च प्राहिणोत् ॥ ५५ ॥ वरुणः श्यामैककर्णानश्वान् कुबेरो निधीन् अन्ये लोकपालाः स्वैश्वर्याणि ॥५६॥ अन्ये च सिद्धादयो भगवता स्वाधिकारसिद्धये दत्तमाधिपत्यं हरौ भूमि-

दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥ ५१ ॥ सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ हेमशृङ्गैर्दिविस्पृग्भिः स्फटिकाट्टालगोपुरैः ॥५२॥ राजताऽऽरकुटैः कोष्ठैर्हेमकुम्भैरलङ्कृतैः ॥ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ ५३ ॥ वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ॥ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥ ५४ ॥ सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ॥ यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥ ॥ ५५ ॥ श्यामैककर्णान् वरुणो हयाञ्छुक्लान् मनोजवान् ॥ अष्टौ निधिपतिः कोशान् लोकपालो निजोदयान् ॥ ५६ ॥ यद्यद् भगवता दत्तमाधिपत्यं स्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ ५७ ॥ तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः ॥ प्रजापालेन रामेण कृष्णः समनुमन्त्रितः ॥ निर्जगाम पुरद्वारात् पद्ममाली निरायुधः ॥ ॥ ५८ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे दुर्गनिवेशनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ श्रीशुक उवाच ॥ तं विलोक्य विनिष्क्रान्तमुज्जिहानमिवोडुपम् ॥ दर्शनीयतमं श्यामं पीतकौशेयवाससम् ॥ १ ॥

गते सति सर्वं प्रत्यर्पयामासुः ॥ ५७ ॥ ततः श्रीकृष्णो योगप्रभावेण तत्र सर्वजनं नीत्वा रामं जगाद । त्वमत्र स्थित्वा प्रजाः पालय । अहं पलायिष्ये इति । एवमुक्त्वा स्वयं निरायुधः सन् पुरद्वाराद् निर्जगाम ॥५८॥ इति श्रीभागवते चू० उ० दशमस्कन्धे पञ्चाशत्तमोऽध्यायः ॥५०॥ एकपञ्चाशत्तमेऽहन् मुचुकुन्ददृशा हरिः । यवनं मुचुकुन्देन स्तुतः सन्नन्वकम्पत ॥१॥ यवनेन्द्रसुतात् कालयवनाद्यदुभीषणात् । हरिर्हरगिरः स्वैरं पालनाय पलायत ॥ २ ॥ श्रीशुक उवाच ॥ ततः पुरद्वारात् निर्गतं चन्द्रमिव दर्शनीयं श्यामं पीताम्बरम् ॥ १ ॥

१ गृहादिनिर्माणशास्त्रमनतिक्रम्य । २ उपरिभूमिका । ३ यदुदेवगृहैः उल्लसत् शोभमानम् । ४ क्षुत्पिपासादिभिः । ५ निजविभूतीः ।

श्रीवत्सवक्षसं भ्राजमानेन कौस्तुभेन पिनद्धग्रीवं चतुर्भुजं कमलेक्षणं सुस्मितमुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलं श्रीकृष्णं यवनो वीक्ष्य ॥ २ ॥ वत्सलाञ्छनः सुन्दरः पुमान् वासुदेव एव नारदोक्तैर्लक्षणैरन्यो भवितुं नार्हति। अयं निरायुधः।अतो निरायुधः सन्ननेन सह योत्स्ये ॥ ३ ॥ ४ ॥ ५ ॥ इति निश्चित्य स यवनो धावतं श्रीकृष्णं जेतुमिच्छन् सन्नन्वधावत् ॥ ६ ॥ आत्मानं हस्तप्राप्तमिव दर्शयता हरिणा दूरं

श्रीवत्सवक्षसं भ्राजत्कौस्तुभाऽऽमुक्तकन्धरम् ॥ पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम् ॥ २ ॥ नित्यप्रमुदितं श्रीमत्सुकपोलं शुचिस्मितम् ॥ मुखारविन्दं बिभ्राणं स्फुरन्मकरकुण्डलम् ॥ ३ ॥ वासुदेवो ह्ययमिति पुमाञ्श्रीवत्सलाञ्छनः ॥ चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः ॥ ४ ॥ लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हति ॥ निरायुधश्चलन् पद्भ्यां योत्स्येऽनेन निरायुधः ॥ ५ ॥ इतिनिश्चित्य यवनः प्राद्रवन्तं पराङ्मुखम् ॥ अन्वधावज्जिघृक्षुस्तं दुरापमपि योगिनाम् ॥ ६ ॥ हस्तप्राप्तमिवात्मानं हरिणा स पदेपदे ॥ नीतो दर्शयता दूरं यवनेशोऽद्रिकन्दरम् ॥ ७ ॥ पलायनं यदुकुले जातस्य तव नोचितम् ॥ इति क्षिपन्ननुगतो नैनं प्रापाहताशुभः ॥ ८ ॥ एवं क्षिप्तोऽपि भगवान् प्राविशद् गिरिकन्दरम् ॥ सोऽपि प्रविष्टस्तत्रान्यं शयानं ददृशे नरम् ॥ ९ ॥ नन्वसौ दूरमानीय शेते मामिह साधुवत् ॥ इति मत्वाऽच्युतं मूढस्तं पदा समताडयत् ॥ १० ॥ स उत्थाय चिरं सुप्तः शनैरुन्मील्य लोचने ॥ दिशो विलोकयन् पार्श्वे तमद्राक्षीदवस्थितम् ॥ ११ ॥

गिरेर्गुहां नीतः ॥ ७ ॥ तदा यवनेन यदुकुले जातस्य तव पलायनं नोचितम् ॥८॥ एवं तिरस्कृतोऽपि भगवान् गुहां प्राविशत् सोऽपि तदनुगुहां प्रविष्टः सन् तत्रान्यं शयानं नरं ददृशे ॥९॥ असौ मां दूरमानीय साधुवत् शेते मूढ इति शयानं कृष्णं मत्वा पदा ताडयामास ॥१०॥ ततश्चिरं सुप्तः स नरो नेत्रे उन्मील्य पार्श्वे तं यवनं ददर्श ॥ ११ ॥

१ अक्षीणकर्मा।

तदा यवनः क्रुद्धस्य तस्य देहजेनाग्निना दग्धदेहो बभूव ॥१२॥ राजोवाच । हे ब्रह्मन् ! स पुमान् कः । कस्य सुतः । कुतो गुहायां शयनं कृतवान् । यत्तेजसा यवनो दग्धः । तद्वद॥१३॥ श्रीशुक उवाच ॥ हे राजन्! स इक्ष्वाकुकुलजातस्य मान्धातुः पुत्रो मुचुकुन्द इति ख्यातः ॥१४॥ स देवैरसुरेभ्यः सुररक्षणे प्रार्थितः चिरं रक्षां चकार ॥१५॥ ततस्ते देवाः षडाननं रक्षकं लब्ध्वा मुचुकुन्द जगदुः । हे राजन्! अस्माकं चिरं पालनाद्विरम्यताम् ॥ १६ ॥ अस्मान् रक्षतस्तव सर्वे राज्यादिकामाः गताः ॥ १७ ॥ तव स्त्रीपुत्रप्रधानादयोऽपि संप्रति न सन्ति ।

स तावत्तस्य रुष्टस्य दृष्टिपातेन भारत ॥ देहजेनाग्निना दग्धो भस्मसादभवत्क्षणात् ॥१२॥ राजोवाच ॥ को नाम स पुमान्ब्रह्मन्कस्य किंवीर्य एव च ॥ कस्माद् गुहां गतः शिश्ये किंतेजो यवनार्दनः ॥ १३ ॥ श्रीशुक उवाच ॥ स इक्ष्वाकुकुले जातो मान्धातृतनयो महान् ॥ मुचुकुन्द इति ख्यातो ब्रह्मण्यः सत्यसंगरः ॥१४॥ स याचितः सुरगणैरिन्द्राद्यैरात्मरक्षणे ॥ असुरेभ्यः परित्रस्तैस्तद्रक्षां सोऽकरोच्चिरम् ॥ १५ ॥ लब्ध्वागुहं ते स्वःपालं मुचुकुन्दमथाब्रुवन् ॥ राजन्विरमतां कृच्छ्राद्भवान्नः परिपालनात् ॥ १६ ॥ नरलोके परित्यज्य राज्यं निहतकण्टकम् ॥ अस्मान्पालयतो वीर कामास्ते सर्व उज्झिताः ॥ १७ ॥ सुता महिष्यो भवतो ज्ञातयोऽमात्यमन्त्रिणः ॥ प्रजाश्च तुल्यकालीया नाऽधुना सन्ति कालिताः ॥ १८ ॥ कालो बलीयान्बलिनां भगवानीश्वरोऽव्ययः ॥ प्रजाः कालयते क्रीडन्पशुपालो यथा पशून् ॥ १९ ॥ वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ॥ एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ॥ ॥ २० ॥ एवमुक्तः स वै देवानभिवन्द्य महायशाः ॥ निद्रामेव ततो वव्रे स राजा श्रमकर्शितः ॥ २१ ॥ यः कश्चिन्मम निद्राया भंगं कुर्यात्सुरोत्तमाः ॥ स हि भस्मीभवेदाशु तथोक्तश्च सुरैस्तदा ॥ २२ ॥

त्वत्समानकालीनाः प्रजाश्च न सन्ति ॥१८॥ कालात्माऽव्ययो हरिः क्रीडन् प्रजाः इतस्ततश्चालयति ॥१९॥ तव भद्रमस्तु । मोक्षं विना वरं वृणीष्व । कस्मात् । मोक्षस्य दाता विष्णुः स एक एव ॥२०॥ एवं देवैरुक्तो मुचुकुन्दस्तानभिवन्द्य संरक्षणात् श्रमकर्शितः सन् निद्रामेव वव्रे ॥ २१ ॥ हे देवाः ! मम निद्रां यच्छत । किंच । निद्रामध्ये यो भङ्गं कुर्यात् स भस्मीभवतु । तदा देवाः ऊचुः ॥ २२ ॥

१ कस्य तेजः पुत्रः । २ विचालिताः ।

हे राजन् । सुप्तं त्वां मध्ये यो बोधयेत् स तव दृष्टिमात्रेण भस्मीभवतु । एवं देवैरुक्तो मुचुकुन्दस्तान् नत्वा गुहां प्रविष्टः सन् शेते स्म ॥२३॥ एवं यवने भस्मीभूते सति हरिर्मुचुकुन्दाय स्वरूपं दर्शयामास ॥२४॥ तं घनश्यामं पीताम्बरं कौस्तुभेन विराजितम् ॥२५॥ चतुर्भुजं वैजयन्त्या मालया रोचमानम् ॥२६॥ नृलोकस्य दर्शनीयं स्मितेक्षणं सिंहविक्रमं कृष्णं वीक्ष्य ॥ २७ ॥ तत्तेजसा शङ्कितः शनैः पप्रच्छ ॥ २८ ॥ मुचु-

अशयिष्ट गुहाविष्टो निद्रया देवदत्तया ॥ * स्वापं यातं यस्तु मध्ये बोधयेत् त्वामचेतनः ॥ स त्वया दृष्टमात्रस्तु भस्मीभवतु तत्क्षणात् ॥२३॥ यवने भस्मसान्नीते भगवान् सात्वतर्षभः ॥ आत्मानं दर्शयामास मुचुकुन्दाय धीमते ॥ ॥ २४ ॥ तमालोक्य घनश्यामं पीतकौशेयवाससम् ॥ श्रीवत्सवक्षसं भ्राजत्कौस्तुभेन विराजितम् ॥ २५ ॥ चतु-र्भुजं रोचमानं वैजयन्त्या च मालया ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ २६ ॥ प्रेक्षणीयं नृलोकस्य सानुराग-स्मितेक्षणम् ॥ अपीच्यवयसं मत्तमृगेन्द्रोदारविक्रमम् ॥ २७ ॥ पर्यपृच्छन्महाबुद्धिस्तेजसा तस्य धर्षितः ॥ शङ्कितः शनकै राजादुर्धर्षमिव तेजसा ॥ २८ ॥ मुचुकुन्द उवाच ॥ को भवानिह संप्राप्तो विपिने गिरिगह्वरे ॥ पद्भ्यां पद्मपलाशाभ्यां विचरस्युरुकण्टके ॥२९॥ किंस्वित्तेजस्विनां तेजो भगवान् वा विभावसुः ॥ सूर्यः सोमो महेन्द्रो वा लोकपालोऽपरोऽपि वा ॥३०॥ मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ॥ यद्बाधसे गुहाध्वान्तं प्रदीपः प्रभया यथा ॥ ॥ ३१ ॥ शुश्रूषतामव्यलीकमस्माकं नरपुङ्गव ॥ स्वजन्मकर्मगोत्रं वा कथ्यतां यदि रोचते ॥ ३२ ॥ वयं तु पुरुष-व्याघ्र ऐक्ष्वाकाः क्षत्रबन्धवः ॥ मुचुकुन्द इति प्रोक्तो यौवनाश्वात्मजः प्रभो ॥ ३३ ॥ चिरप्रजागरश्रान्तो निद्रयापहते-न्द्रियः ॥ शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना ॥ ३४ ॥



कुन्द उवाच । भवान् कः इह गह्वरे कस्मादागतः । बहुकण्टके कोमलपद्भ्यां कथं विचरसि ॥ २९ ॥ त्वं तेजस्विनां मध्ये किं सूर्यो वाऽसि अग्निः सोमः इन्द्रो वा ॥ ३० ॥ त्वां ब्रह्मादीनां मध्ये विष्णुं मन्ये यतो गुहांधकारं नाशयसि ॥ ३१ ॥ अतो हे नरश्रेष्ठ ! निष्कपटं श्रोतु-मिच्छतां नः स्वजन्मकर्माणि वद ॥ ३२ ॥ हे पुरुषव्याघ्र ! अहं त्विक्ष्वाकुकुलोत्पन्नस्य यौवनाश्वस्य पुत्रः ॥ ३३ ॥ अहं चिरप्रजागरश्रान्तः

* अयं श्लोकः अधिकः क्वचित् । १ सुन्दरम् । २ अभिभूतः ।

सन् शयितः संप्रति केनाप्युत्थापितः ॥ ३४ ॥ सोऽपि स्वपापेनैव भस्मीकृतः । अनन्तरं त्वामपश्यम् ॥ ३५ ॥ इदानीं त्वत्तेजसा त्वां द्रष्टुं न शक्नोमि ॥ ३६ ॥ एवं राज्ञा संभाषितो भगवान् प्रहस्याह ॥ ३७ ॥ भगवानुवाच । हे राजन् ! मम जन्मकर्मनामानि सहस्रशः सन्ति । अतः संख्यातुं न शक्यन्ते, अनन्तत्वाद्‌मयापि हि न शक्यन्ते ॥ ३८ ॥ क्वचिद् भूमेः रजांसि कश्चित् गणयिष्यति । तथापि मे जन्मकर्माभिधानानि न गणयिष्यति ॥ ३९ ॥ ऋषयो मे जन्मकर्मणामन्तं न यान्ति ॥ ४० ॥ तथाप्यद्यतनानि नामानि शृणुष्व । पुरा ब्रह्मणा

सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना ॥ अनन्तरं भवाञ्श्रीमाँल्लक्षितोऽमित्रशातनः ॥ ३५ ॥ तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः ॥ हतौजसो महाभाग माननीयोऽसि देहिनाम् ॥ ३६ ॥ एवं संभाषितो राज्ञा भगवान् भूतभावनः ॥ प्रत्याह प्रहसन् वाण्या मेघनादगभीरया ॥ ३७ ॥ श्रीभगवानुवाच ॥ जन्मकर्माभिधानानि संति मेऽङ्गसहस्रशः ॥ न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्मयापि हि ॥ ३८ ॥ क्वचिद् रजांसि विममे पार्थिवान्युरुजन्मभिः ॥ गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ॥ ३९ ॥ कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ॥ अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥४०॥ तथाप्यद्यतनान्यङ्ग शृणुष्व गदतो मम ॥ विज्ञापितो विरिञ्चेन पुराऽहं धर्मगुप्तये ॥ भूमेर्भारायमाणानामसुराणां क्षयाय च ॥ ४१ ॥ अवतीर्णो यदुकुले गृह आनकदुन्दुभेः ॥ वदन्ति वासुदेवेति वसुदेवसुतं हि माम् ॥४२॥ कालनेमिर्हतः कंसः प्रलम्बाद्याश्च सद्द्विषः ॥ अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥४३॥ सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ॥ प्रार्थितः प्रचुरं पूर्वं त्वयाऽहं भक्तवत्सलः ॥४४॥ वरान् वृणीष्व राजर्षे सर्वान् कामान् ददामि ते ॥ मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ॥ ४५ ॥

भूभारहरणाय प्रार्थितः ॥ ४१ ॥ तदाऽहं यदुकुले वसुदेवगृहेजातः अतो मां वासुदेव इति वदंति ॥ ४२ ॥ मया कालनेमिः कंसः प्रलम्बाद्याश्च हताः अयं यवनोऽपि ते चक्षुषा दग्धः ॥ ४३ ॥ पूर्वं त्वया बहु प्रार्थितः सोऽहं तवानुग्रहाय गुहां प्राप्तः ॥ ४४ ॥ अतो वरान् वृणीष्व, सर्वान् कामान् ददामि । तव भद्रम् । मां प्राप्तो जनः पुनः शोचितुं नार्हति ॥ ४५ ॥

१ मर्दनः ।

श्रीशुक उवाच ॥ इत्युक्तो मुचुकुन्दो नारायणं तं ज्ञात्वाऽष्टाविंशतितमे युगे भगवानवतरिष्यतीति वृद्धगर्गवाक्यं स्मरन् प्रणम्याह ॥ ४६ ॥
मुचुकुन्द उवाच ॥ हे भगवन्! अयं जनस्तव मायया मोहितः सन् त्वां न भजते ॥ ४७ ॥ अत्र दुर्लभं मानुषं जन्म प्राप्य यस्तव पाद-
कमलं न भजति स पशुरेव ॥ ४८ ॥ श्रीमदान्धस्य गृहासक्तस्य मम कालो निष्फलो गतः ॥ ४९ ॥ अस्मिन् देहे राजाऽहम् इत्यभिमानेन

श्रीशुक उवाच ॥ इत्युक्तस्तं प्रणम्याह मुचुकुन्दो मुदान्वितः ॥ ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥ ४६ ॥
मुचुकुन्द उवाच ॥ विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ॥ सुखाय दुःखप्रभवेषु सज्जते
गृहेषु योषित् पुरुषश्च वञ्चितः ॥ ४७ ॥ लब्ध्वा जनो दुर्लभमत्र मानुषं कथंचिदव्यंगमयत्नतोऽनघ ॥ पादारविन्दं
नभजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥ ४८ ॥ ममैषकालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य
भूपतेः ॥मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥ ४९ ॥ कलेवरेऽस्मिन् घटकुडयसंनिभे निरू-
ढमानो नरदेव इत्यहम् ॥ वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वाऽगणयन् सुदुर्मदः ॥ ५० ॥ प्रमत्तमुच्चैरिति
कृत्यचिन्तया प्रवृद्धलोभं विषयेषुलालसम् ॥ त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ५१ ॥
पुरा रथैर्हेमपरिष्कृतैश्चरन् मतङ्गजैर्वा नरदेवसंज्ञितः ॥ स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः
॥ ५२ ॥ निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः ॥ गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः
पूरुष ईश नीयते ॥ ५३ ॥



रथगजाश्वपदातिभिः सहः गां पर्यटन् त्वामविगणय्य स्थितः ॥ ५० ॥ अतो विषयेषु लालसं मामन्तकस्त्वमहिर्मूषकमिवाभिभवसि ॥५१॥
यः पुरा हेमरथैर्वा गजैर्वा नरदेवसंज्ञितश्चरन् स एव कालेन कृमिविड्भस्मसंज्ञितः कृतः ॥ ५२ ॥ यो राजा पूर्वं समानराजैर्वन्दितः स एव
स्त्रीगृहेषु क्रीडामृग इव ततः इतो नीयते ॥ ५३ ॥

१ दुःखानामेव प्रभवो येषु तेषु । २ अविकलाङ्गम् । ३ मर्त्यशरीरे आत्मबुद्धिर्यस्य तस्य । ४ एवमेवं करणीयमिति मनोरथपरम्परया । ५ क्षुधा "सृक्किणी" लेलिहानः । ६ अविद्यमानसंग्रामः ।

यो राजा पुनः राज्यप्राप्तये तपांसि करोति स प्रवृद्धतृष्णः सन् सुखं न प्राप्नोति ॥ ५४ ॥ हे अच्युत ! संसारे भ्रमतो जनस्य त्वत्कृपया यदा संसारनिवृत्तिर्भाविनी तदा सत्संगमः स्यात् । ततस्त्वयि भक्तिः । ततो मुक्तिः भवति ॥ ५५ ॥ हे ईश ! मम तु सत्सङ्गात् पूर्वमेव यो राज्यासङ्गविच्छेदो जातः सोऽयं त्वया महाननुग्रहः कृतः इति मन्ये ॥ ५६ ॥ हे विभो ! त्वत्पादसेवनं विनाऽन्यं वरं न वृणे । मोक्षदं त्वामा-

करोति कर्माणि तपस्सु निष्ठितो निवृत्तभोगस्तदपेक्षयाऽऽददत् ॥ पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥ ५४ ॥भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ॥ सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः॥५५॥मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया॥यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥ ५६ ॥ न कामयेऽन्यं तव पादसेवनादकिंचनप्रार्थ्यतमाद्वरं विभो ॥ आराध्यकस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥५७॥ तस्माद् विसृज्याशिष ईश सर्वतो रजस्तमस्सत्त्वगुणानुबंधनाः ॥ निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ ५८ ॥ चिरमिहवृजिनार्तस्तप्यमानोऽनुतापैरवितृषषड-मित्रोऽलब्धशान्तिः कथंचित् ॥ शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि माऽपन्नमीश ॥ ५९ ॥ श्रीभगवानुवाच ॥ सार्वभौम महाराज मतिस्ते विमलोर्जिता ॥ वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥ ६० ॥ प्रलोभितो वरैर्यस्त्वमप्रमदाय विद्धि तत् ॥ नधीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥ ६१ ॥

राध्याऽऽत्मबन्धनं वरं को वृणीते ॥ ५७ ॥ अतः आशिषस्त्यक्त्वा निर्गुणं पुरुषं त्वां शरणं व्रजामि ॥ ५८ ॥ इह संसारे कर्मफलतापैस्त-प्यमानोऽहं त्वां शरणं प्राप्तः । अतो मां पाहि ॥ ५९ ॥ श्रीभगवानुवाच ॥ हे राजन् ! तव मतिर्निर्मला, यतः कामैर्न हन्यते ॥ ६० ॥ मया यद् वरैः प्रलोभितस्त्वं तत्सर्वमप्रमादाय विद्धि । एकान्तभक्तानां मतिर्न भिद्यते ॥ ६१ ॥

---

१ राजादिशरीरं गृह्णन् । २ इन्द्रः । ३ तृष्णा । ४ संसारनाशः । ५ प्राप्तकाल इति शेषः ६ अकिंचनाः निवृत्ताभिमानाः । ७ ज्ञानधनम् । ८ कर्मफलैरार्त्तः । ९ न विगततृषाः षडमित्राः शत्रवः इन्द्रियलक्षणा यस्य ।

हे राजन् ! अभक्तानां प्राणायामादिभिर्मनो वासनारहितं न दृश्यते ॥६२॥ अतस्त्वं मयि मनो निवेश्य महीं विचरस्व । तव मयि निश्चला भक्तिरस्तु ॥ ६३ ॥ क्षात्रधर्मेण जन्तूनवधीः तत् पापं तपसा जहि ॥६४॥ ततो जन्मान्तरे विप्रो भूत्वा मां प्राप्स्यति ॥ ६५ ॥ इति श्रीभागवते चू० दशम० उत्तरा ० मुचुकुन्दस्तुतिर्नामैकपञ्चाशत्तमोऽध्यायः ॥५१॥ द्विपञ्चाशत्तमे धावन् भयादिव गतः पुरीम् ॥ अन्वमोदत संदेशं रुक्मिण्या द्विजवर्णितम् ॥१॥ श्रीशुक उवाच । हे राजन् ! इत्थं कृष्णेनाऽनुगृहीतो मुचुकुन्दस्तं परिक्रम्य नत्वा च गुहायाः निर्गत्य ॥ १ ॥

युञ्जानानामभक्तानां प्राणायामादिभिर्मनः ॥ अक्षीणवासनं राजन् दृश्यते पुनरुत्थितम् ॥६२॥ विचरस्व महीं कामं मय्यावेशितमानसः ॥ अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ ६३ ॥ क्षात्रधर्मं स्थितो जन्तून्न्यवधीर्मृगयादिभिः ॥ समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥ ६४ ॥ जन्मन्यनन्तरे राजन्सर्वभूतसुहृत्तमः ॥ भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥ ६५ ॥ इति श्रीभाग० महापु० दशमस्कन्धे उत्त० मुचुकुन्दस्तुतिर्नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ श्रीशुक उवाच ॥ इत्थं सोऽनुगृहीतोऽङ्ग कृष्णेनेक्ष्वाकुनन्दनः ॥ तं परिक्रम्य संनम्य निश्चक्राम गुहामुखात् ॥१॥ स वीक्ष्य क्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन् ॥ मत्वा कलियुगं प्राप्तं जगाम दिशमुत्तराम् ॥ २ ॥ तपश्श्रद्धायुतो धीरो निस्सङ्गो मुक्तसंशयः ॥ समाधाय मनःकृष्णे प्राविशद् गन्धमादनम् ॥ ३ ॥ बदर्याश्रममासाद्य नरनारायणालयम् ॥ सर्वद्वन्द्वसहः शान्तस्तपसाऽऽराधयद्धरिम् ॥ ४ ॥ भगवान् पुनराव्रज्य पुरीं यवनवेष्टिताम् ॥ हत्वा म्लेच्छबलं निन्ये तदीयं द्वारकां धनम् ॥ ५ ॥ नीयमाने धने गोभिर्नृभिश्चाच्युतचोदितैः ॥ आजगाम जरासन्धस्त्रयोविंशत्यनीकपः ॥ ६ ॥

क्षुल्लकान् मनुष्यपश्वादीन् दृष्ट्वा कलियुगं प्राप्तं ज्ञात्वोत्तरां दिशं जगाम ॥ २ ॥ ततः कृष्णे मनो विधाय गन्धमादनं प्रविश्य ॥ ३ ॥ नरनारायणालयं बदर्याश्रमं गत्वा तपसा हरिमाराधयत् ॥४॥ ततः श्रीकृष्णः पुनर्मथुरां गत्वा यवनसैन्यं हत्वा तदीयं धनं द्वारकां निन्ये ॥५॥ गोभिर्नृभिश्च धने नीयमाने त्रयोविंशत्यक्षौहिणीसैन्ययुतो जरासन्धः आजगाम ॥ ६ ॥

तत्सैन्यवेगं दृष्ट्वा वित्तं त्यक्त्वा रामकृष्णौ पद्मपलाशाभ्यां पद्भ्यां बहुयोजनं पलाययामासतुः ॥ ७ ॥ ८ ॥ पलायमानौ तौ दृष्ट्वा मागधः प्रहस्य रथानीकैः सहाऽन्वधावत् ॥ ९ ॥ ततस्तौ दूरं प्रद्रुत्य प्रवर्षणाख्यं गिरिमारुरुहताम् ॥ १० ॥ ततो जरासन्धस्तौ गिरौ गुप्तौ ज्ञात्वा तं गिरिं काष्ठैः संवेष्ट्य ददाह ॥ ११ ॥ ततस्तावेकादशयोजनोच्चाद्दह्यमानगिरितटादधो भुवि निपेततुः ॥ १२ ॥ एवं रिपुणाऽलक्ष्यमाणौ तौ

विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ ॥ मनुष्यचेष्टामापन्नौ राजन् दुद्रुवतुर्द्रुतम् ॥ ७ ॥ विहाय वित्तं प्रचुरमभीतौ भीरुभीतवत् ॥ पद्भ्यां पद्मपलाशाभ्यां चेलतुर्बहुयोजनम् ॥ ८ ॥ पलायमानौ तौ दृष्ट्वा मागधः प्रहसन्बली ॥ अन्वधावद्रथानीकैरीशयोरप्रमाणवित्[1] ॥९॥ प्रद्रुत्य दूरं संश्रान्तौ तुङ्गमारुहतां गिरिम् ॥ प्रवर्षणाख्यं भगवान् नित्यदा यत्र वर्षति ॥ १० ॥ गिरौ निलीनावाज्ञाय नाधिगम्य पदं नृप ॥ ददाह गिरिमेधोभिः समन्तादग्निमुत्सृजन् ॥११॥ तत उत्पत्य तरसा दह्यमानतटादुभौ ॥ दशैकयोजनोत्तुङ्गान्निपेततुरधो भुवि ॥ १२ ॥ अलक्ष्यमाणौ रिपुणा सानुगेन यदूत्तमौ ॥ स्वपुरं पुनरायातौ समुद्रपरिखां नृप ॥ १३ ॥ सोऽपि दग्धाविति मृषा मन्वानो बलकेशवौ ॥ बलमाकृष्य सुमहन्मगधान् मागधो ययौ ॥ १४ ॥ आनर्ताधिपतिः श्रीमान् रैवतो रेवतीं सुताम् ॥ ब्रह्मणा चोदितः प्रादाद् बलायेति पुरोदितम् ॥ १५ ॥ भगवानपि गोविंद उपयेमे कुरूद्वह ॥ वैदर्भीं भीष्मकसुतां श्रियो मात्रां[2] स्वयंवरे ॥ ॥ १६ ॥ प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् ॥ पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥ १७ ॥

समुद्रपरिखां द्वारकां पुनरायातौ ॥ १३ ॥ सोऽपि मागधस्तौ दग्धौ मत्वा स्वसैन्यं गृहीत्वा मागधान् ययौ ॥ १४ ॥ ततः आनर्ताधिपती रैवतो ब्रह्मणा प्रेरितः सन् स्वसुतां रेवतीं बलाय प्रादादिति नवमस्कन्धे उक्तम् ॥ १५ ॥ हे भारत ! भगवान् श्रीकृष्णोऽपि स्वयंवरे चैद्यपक्षीयान् शाल्वादीन् प्रमथ्य गरुडः सुधामिव भीष्मकसुतां रुक्मिणीमुपयेमे ॥ १६ ॥ १७ ॥

---

१ प्रमाणमियत्ता तद्वेत्तीति । २ कलाम् ।

राजोवाच ॥ हे शुक ! श्रीकृष्णो रुक्मिणीं राक्षसविधिनोपयेमे इति श्रुतम् ॥ १८ ॥ यथा भगवान् मागधशाल्वादीन् जित्वा कन्यां जहार
तत् श्रोतुमिच्छामि ॥ १९ ॥ हे ब्रह्मन् ! लोकमलापहाः कृष्णकथाः शृण्वानः को नु तृप्येत ॥२०॥ श्रीशुक उवाच ॥ हे राजन् ! विदर्भाधि-
पतिर्भीष्मको नाम राजाऽऽसीत् । तस्य पञ्च पुत्राः एका कन्या च ॥ २१ ॥ ते च रुक्मी १ रुक्मरथः २ रुक्मबाहुः ३ रुक्मकेशः ४ रुक्म-
माली ५ एषां स्वसा रुक्मिणी ॥ २२ ॥ सा रुक्मिणी श्रीकृष्णगुणान् श्रुत्वा तं स्वयोग्यं पतिं मेने ॥ २३ ॥ कृष्णोऽपि स्वयोग्यां तामुद्वोढुं

राजोवाच ॥ भगवान् भीष्मकसुतां रुक्मिणीं रुचिराननाम् ॥ राक्षसेन विधानेन उपयेम इति श्रुतम् ॥ १८ ॥ भग-
वञ्छ्रोतुमिच्छामि कृष्णस्यामिततेजसः ॥ यथा मागधशाल्वादीञ्जित्वा कन्यामुपाहरत् ॥ १९ ॥ ब्रह्मन्कृष्णकथाः
पुण्यामाध्वीर्लोकमलापहाः ॥ को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥ २० ॥ श्रीशुक उवाच ॥ राजाऽऽसी-
द्भीष्मको नाम विदर्भाधिपतिर्महान् ॥ तस्य पञ्चाभवन्पुत्राः कन्यैका च वरानना ॥ २१ ॥ रुक्म्यग्रजो रुक्मरथो
रुक्मबाहुरनन्तरः ॥ रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥ २२ ॥ सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुण
श्रियः ॥ गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥ २३ ॥ तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ॥ कृष्णश्च
सदृशीं भार्यां समुद्वोढुं मनो दधे ॥ २४ ॥ बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप ॥ ततो निवार्य कृष्णद्विड्
रुक्मी चैद्यममन्यत ॥ २५ ॥ तदवेत्यासितापांगी वैदर्भी दुर्मना भृशम् ॥ विचिन्त्याऽऽप्तं द्विजं कञ्चित्कृष्णाय
प्राहिणोद्द्रुतम् ॥ २६ ॥ द्वारकां स समभ्येत्य प्रतीहारैः प्रवेशितः ॥ अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥ २७ ॥
दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् ॥ उपवेश्यार्हयाञ्चक्रे यथाऽऽत्मानं दिवौकसः ॥ २८ ॥

मनो दधे ॥ २४ ॥ तां रुक्मिणीं कृष्णाय दातुमिच्छतो बन्धून् निवार्य कृष्णद्विट् रुक्मी शिशुपालं वरं मेने ॥२५॥ सा तत् ज्ञात्वा दुर्मनाः
सती कंचनाप्तं द्विजं कृष्णाय प्राहिणोत् ॥ २६ ॥ स विप्रो द्वारकामेत्यद्वारपालैः प्रवेशितः सन् सुवर्णासने स्थितं कृष्णं ददर्श ॥ २७ ॥
कृष्णो द्विजमागतं दृष्ट्वाऽऽसनादवतीर्य स्वासने तमुपवेश्य सम्पूज्य ॥ २८ ॥

१ श्रुतिसुखाः ।

भोजयित्वा विश्रान्तं तं समीपमेत्य पाणिना पादौ संमर्दयन् सन् पप्रच्छ ॥२९॥ हे द्विज ! सन्तुष्टमनसस्ते धर्मो नातिकृच्छ्रेण वर्तते कच्चिद् ॥३०॥ ब्राह्मणः संतुष्टश्चेत्तर्हि धर्मस्तस्य कामधुक् भवति ॥३१॥ असंतुष्टो देवेन्द्रोऽपि लोकाल्लोकान्तरं पर्यटति । (एकत्र निर्वृतो न तिष्ठति । अतः क्लिश्यत्येव) ॥३२॥ अहं स्वलाभसंतुष्टान् द्विजान् शिरसा नमस्ये ॥३३॥ हे द्विज ! राजतो वः कुशलं कच्चिद् । यस्य देशे प्रजाः सुखं

तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः ॥ पाणिनाऽभिमृशन् पादावव्यग्रस्तमपृच्छत ॥ २९ ॥ कच्चिद् द्विजवर-श्रेष्ठ धर्मस्ते वृद्धसम्मतः ॥ वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥३०॥ संतुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित ॥ अहीयमानः स्वाद्धर्मात् स ह्यस्याखिलकामधुक् ॥ ३१ ॥ असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ॥ अकिञ्च-नोऽपि संतुष्टः शेते सर्वाङ्गविज्ज्वरः ॥३२॥ विप्रान् स्वलाभसंतुष्टान्साधून् भूतसुहृत्तमान् ॥ निरहङ्कारिणः शान्तान्न-मस्ये शिरसाऽसकृत् ॥ ३३ ॥ कच्चिद् वः कुशलं ब्रह्मन् राजतो यस्य हि प्रजाः ॥ सुखं वसन्ति विषये पाल्यमाना स मे प्रियः ॥ ३४ ॥ यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया ॥ सर्वं नो ब्रूह्यगुह्यं चेत् किं कार्यं करवाम ते ॥ ३५ ॥ एवं संपृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना ॥ लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥ ३६ ॥ रुक्मिण्युवाच ॥ श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ॥ रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताऽऽविशति चित्तमपत्रपं मे ॥ ३७ ॥ का त्वा मुकुन्द महती कुलशीलरूपविद्यावयोद्रविणधामभिरात्म-तुल्यम् ॥ धीरा पति कुलवती न वृणीत कन्या काले नृसिंह नरलोकमनोऽभिरामम् ॥ ३८ ॥

वसन्ति स मे प्रियः ॥ ३४ ॥ हे द्विज ! यतस्त्वं समुद्रं निस्तीर्य दुर्गमागतः तत् गुह्यं न चेत् सर्वं ब्रूहि । तव कार्यं किं करवाम ॥३५॥ एवं पृष्टो विप्रो रुक्मिण्या लिखितां पत्रिकां तस्मै दर्शयित्वा तदनुज्ञया सर्वमवर्णयत् ॥ ३६ ॥ रुक्मिण्युवाच ॥ हे कृष्ण ! तव गुणान् रूपं च श्रुत्वा मे चित्तं त्वयि विशति ॥ ३७ ॥ हे मुकुन्द ! कुलशीलादिभिः स्वतुल्यं पतिं त्वां महती कन्या का न वृणीत ॥ ३८ ॥

१ चक्षुष्मताम् ।

मया पूर्वजन्मनि तस्माद् मया भवान् वृतः। तव देहश्चार्पितः॥अतस्त्वमत्रागत्य मां भवतो जायां विधेहि। इमं तव भागं चैद्यो मम स्पृशतु॥३९॥ वापीकूपयज्ञदानव्रतादिभिर्भगवानाराधितश्चेत्तर्हि कृष्ण एवात्रागत्य पाणिं गृह्णातु। नान्यः॥४०॥हे अजित ! श्वो भाविनि विवाहे प्रथमं गुप्तः एत्य पश्चात् सेनायुतः सन् चैद्यादिसैन्यं निर्मथ्य राक्षसविधिना वीर्यशुल्कां मामुद्वह॥४१॥ हे कन्ये ! तव बन्ध्वादीन् हत्वान्तःपुरे स्थितां त्वां कथमुद्वहे इति वदसि चेत् वच्मि। शृणु। पूर्वेद्युः कुलदेव्याः यात्रास्ति तस्यां नववधूरम्बिकामुपेयात्॥४२॥यत्पादरजो भवादयः पापनाशाय वाञ्छन्ति

तन्मे भवान् खलु वृतः पतिरङ्ग जायामात्मार्पितश्च भवतोऽत्र विभो विधेहि ॥ मा वीरभागमभिमर्शतु चैद्य आराद्गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥ ३९ ॥ पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान् परेशः ॥ आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥ ४० ॥ श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तः समेत्य पृतनापतिभिः परीतः ॥ निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥४१॥ अन्तःपुरान्तरचरीमनिहत्य बन्धूंस्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ॥ पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ ४२ ॥ यस्याङ्घ्रिपङ्कजरजस्स्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै ॥ यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून्व्रतकृशान् शतजन्मभिः स्यात् ॥४३॥ ब्राह्मण उवाच ॥ इत्येते गुह्यसंदेशा यदुदेव मयाहृताः ॥ विमृश्य कर्तुं यच्चात्र क्रियतां तदनन्तरम् ॥ ४४ ॥ इति श्रीभाग० महा० दश० उत्तरा० कृष्णं प्रति रुक्मिणीसंदेशप्रेषणं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥ श्रीशुक उवाच ॥ वैदर्भ्याः स तु संदेशं निशम्य यदुनन्दनः ॥ प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत् ॥ १ ॥

तस्य भवतः प्रसादं यदि न प्राप्नुयां तर्हि व्रतकृशान् प्राणान् त्यजेयम्॥४३॥विप्र उवाच ॥ हे भगवन् ! एते गुह्यसंदेशाः मयाऽनीताः। यदत्र करणीयं तद् विमृश्य क्रियताम्॥४४॥इति श्रीभागवते महापुराणे दशमस्कन्धे चूर्णिकायामुत्तरार्वे द्विपञ्चाशत्तमोऽध्यायः॥५२॥त्रिपञ्चाशत्तमे गत्वा विदर्भानद्भुतेहितः। रुक्मिणीमहरत् कृष्णो मिषतां द्विषतां बलात्॥१॥श्रीशुक उवाच॥ हे राजन् ! स कृष्णः एवं रुक्मिण्याः संदेशं श्रुत्वा प्रहसन्

१ यावत्तव प्रसादः इति शेषः।

जगाद ॥१॥ श्रीभगवानुवाच अहमपि तच्चित्तः सन् निशि निद्रां न लेभे । रुक्मिणा द्वेषान्ममोद्वाहो निवारितस्तदपि जानामि ॥२॥ अतो मृधे राज्ञः उन्मथ्य मत्परां तां रुक्मिणीं परिणेष्ये ॥३॥ श्रीशुक उवाच॥ श्रीकृष्णो रुक्मिण्याः विवाहर्क्षं परश्वोऽस्तीति ज्ञात्वा सारथिं जगाद । हे दारुक ! मम रथः आशु संयुज्यताम् ॥४॥ ततः स दारुकः शैब्यसुग्रीवमेघपुष्पबलाहकैरश्वैर्युक्तं रथमानीयाग्रतः प्राञ्जलिः सन् तस्थौ॥५॥ हरिः रथं स्वयमारुह्य द्विजं चारोप्य शीघ्रगैरश्वैरेकरात्रेण विदर्भान् देशान् ययौ ॥ ६ ॥ राजा भीष्मकस्तु पुत्रस्नेहबद्धः सन् शिशुपालाय

श्रीभगवानुवाच ॥ तथाहमपि तच्चित्तो निद्रां च न लभे निशि ॥ वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥ २ ॥
तामानयिष्य उन्मथ्य राजन्यापसदान् मृधे ॥ मत्परामनवद्यांगीमेधसोऽग्निशिखामिव ॥ ३ ॥ श्रीशुक उवाच ॥
उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ॥ रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥४॥ स चाश्वैः शैब्यसुग्री-
वमेघपुष्पबलाहकैः ॥ युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ ५ ॥ आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः ॥
आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ ६ ॥ राजा स कुण्डिनपतिः पुत्रस्नेहवशं गतः ॥ शिशुपालाय स्वां कन्यां
दास्यन् कर्माण्यकारयत ॥ ७ ॥ पुरं संमृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ॥ चित्रध्वजपताकाभिस्तोरणैः समलङ्कृ-
तम् ॥ ८ ॥ स्रग्गन्धमाल्याभरणैर्विरजोऽम्बरभूषितैः ॥ जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥ ९ ॥ पितॄन् देवान्
समभ्यर्च्य विप्रांश्च विधिवन्नृप ॥ भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥१०॥ सुस्नातां सुदतीं कन्यां कृत-
कौतुकमङ्गलाम् ॥ अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥ ११ ॥ चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ॥
पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये ॥ १२ ॥

स्वां कन्यां दास्यन् कर्माण्यकारयत् ॥७॥ ततः पुरं चित्रध्वजपताकातोरणैः समलंकृतम् ॥ ८ ॥ स्रग्गन्धमाल्याभरणवस्त्रभूषितैः स्त्रीपुरुषैर्जुष्टं च कारयित्वा ॥९॥ पितृदेवविप्रानभ्यर्च्य विप्रांश्च भोजयित्वा कन्यां प्रति मंगलं वाचयित्वा ॥१०॥ सुस्नातां मङ्गलसूत्रादियुक्तां तां कन्यां भूषितां चक्रे ॥ ११ ॥ द्विजाः सामादिमन्त्रैस्तस्याः रक्षां चक्रुः । ततः पुरोहितो ग्रहशान्तयेऽग्नौ जुहाव ॥ १२ ॥

राजा विप्रेभ्यः सुवर्णरूप्यवासोगुडमिश्रिततिलान् धेनूश्च प्रादात् ॥१३॥ एवं चेदिपतिर्दमघोषो मन्त्रज्ञैः सर्वमभ्युदये उचितं पुत्राय कारयित्वा ॥१४॥ गजरथपत्त्यश्वयुक्तैः सैन्यैर्वेष्टितः कुण्डिनं ययौ॥१५॥ भीष्मकस्तं समेत्य संपूज्य कल्पितान्यगृहे निवेशयामास॥१६॥ तत्र शाल्वजरासन्धदन्तवक्त्रादयश्चैद्यपक्षीयाः सहस्रशो राजानः आजग्मुः ॥ १७ ॥ श्रीकृष्णो यदुभिः सहाऽऽगत्य कन्यां यदि हरेद् तर्हि तेन सह सहंताः योत्स्याम इति निश्चितमानसाः सन्तः कन्यां शिशुपालाय साधयितुं सबलवाहनाः आजग्मुः॥१८॥१९॥ भगवान् रामः एतन्नृपोद्यमं श्रुत्वा

हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ॥ प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥ १३ ॥ एवं चेदिपती राजा दमघोषः सुताय वै ॥ कारयामास मन्त्रज्ञैः सर्वमभ्युदयोचितम् ॥ १४ ॥ मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः ॥ पत्त्यश्वसंकुलैः सैन्यैः परीतः कुंडिनं ययौ ॥ १५ ॥ तं वै विदर्भाधिपतिः समभ्येत्याभिपूज्य च ॥ निवेशयामास मुदा कल्पितान्यनिवेशने ॥१६॥ तत्र शाल्वो जरासन्धो दन्तवक्त्रो विदूरथः ॥ आजग्मुश्चैद्यपक्षीयाः पौण्ड्काद्याः सहस्रशः ॥ १७ ॥ कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् ॥ यद्यागत्य हरेत् कृष्णो रामाद्यैर्यदुभिर्वृतः ॥ १८ ॥ योत्स्यामः संहतास्तेन इति निश्चितमानसाः ॥ आजग्मुर्भूभुजः सर्वे समग्रबलवाहनाः ॥ १९ ॥ श्रुत्वैतद्भगवान् रामो विपक्षीयनृपोद्यमम् ॥ कृष्णं चैकं गतं हर्तुं कन्यां कलहशंकितः ॥ २० ॥ बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः ॥ त्वरितः कुंडिनं प्रागाद्गजाश्वरथपत्तिभिः ॥ २१ ॥ भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः ॥ प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा ॥ २२ ॥ अहो त्रियामान्तरित उद्वाहो मेऽल्पराधसः ॥ नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ॥ २३ ॥

कन्यां हर्तुं कृष्णं चैकाकिनं गतं ज्ञात्वा कलहशङ्कितः सन्॥२०॥ चतुरङ्गसेनया सह त्वरितः कुण्डिनं ययौ ॥२१॥ तदा सा रुक्मिणी हरेर्द्विजस्य च प्रत्यागमनमपश्यन्ती सती चिन्तयामास॥२२॥रात्र्यन्तरितो मे विवाहः। अद्यापि श्रीकृष्णो द्विजश्च नायाति, तत्र कारणं न जाने ॥२३॥

१ मन्दभाग्यायाः।

मयि किञ्चिज्जुगुप्सितं दृष्ट्वा मत्पाणिग्रहणे नूनं नायाति ॥ २४ ॥ किं दुर्भगायाः मे दैवं नानुकूलम् । किं वा महेश्वरो गौरी पार्वती वा नानुकूला किम् ? ॥ २५ ॥ एवं चिंतयन्ती सती रुक्मिणी नेत्रे न्यमीलयत् ॥२६॥ एवं कृष्णागमनं चिन्तयन्त्यास्तस्याः वामोरुभुजनेत्रं पुस्फोर ॥ २७ ॥ तस्मिन् काले स द्विजो राजपुत्रीं तां ददर्श ॥२८॥ सा च प्रहृष्टवदनं तं दृष्ट्वा पप्रच्छ ॥ २९ ॥ ततो द्विजः कृष्णमागतं

सोऽपि नावर्ततेऽद्यापि मत्सन्देशहरो द्विजः ॥ अपि मय्यनवद्यात्मा दृष्ट्वा किञ्चिज्जुगुप्सितम् ॥ मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥ २४ ॥ दुर्भगाया न मे धाता नानुकूलो महेश्वरः ॥ देवी वा विमुखा गौरी रुद्राणी गिरिजा सती ॥२५॥ एवं चिन्तयती बाला गोविन्दहृतमानसा ॥ न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ॥२६॥ एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृपं ॥ वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः[1] ॥२७॥ अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ॥ अंतःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥२८॥ सा तं प्रहृष्टवदनमव्यग्रात्मगतिं[2] सती ॥ आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ॥ २९ ॥ तस्या आवेदयत् प्राप्तं शशंस यदुनन्दनम् ॥ उक्तं च सत्यवचनमात्मनोपनयनं प्रति ॥ ३० ॥ तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ॥ न पश्यन्ती ब्राह्मणाय प्रियमन्यन्ननाम सा ॥ ३१ ॥ प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ॥ अभ्ययात् तूर्यघोषेण रामकृष्णौ समर्हणैः ॥ ३२ ॥ मधुपर्कमुपानीय वासांसि विरजांसि च ॥ उपायनान्यभीष्टानि विधिवत् समपूजयत् ॥ ३३ ॥ तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ॥ ससैन्ययोः सानुगयोरातिथ्यं विदधे तथा ॥ ३४ ॥ एवं राज्ञां समेतानां यथावीर्यं यथावयः ॥ यथाबलं यथावित्तं[3] सर्वैः कामैः समर्हयत् ॥ ३५ ॥

रुक्मिण्यै आवेदयत् । तं च प्रशशंस ! श्रीकृष्णेनोक्तं सत्यवचनं च तस्यै कथयामास ॥३०॥ तदा हृष्टमना सा ब्राह्मणाय दातुं न पश्यन्ती ननाम ॥३१॥ ततो भीष्मको रामकृष्णौ प्राप्तौ श्रुत्वा वादित्रघोषेण संमुखं गत्वा ॥३२॥ मधुपर्कवस्त्रोपायनादिभिर्विधिवत् पूजयामास ॥ ॥ ३३ ॥ तयोर्निवेशस्थानमुपकल्प्यातिथ्यं चक्रे ॥ ३४ ॥ एवं सर्वेषां राज्ञां यथावीर्यं यथाबलमातिथ्यमकरोत् ॥ ३५ ॥

---

१ प्रियसूचकाः । २ न व्यग्राऽऽत्मनो देहस्य गतिर्यस्य तम् । ३ यथावत् ।

विदर्भपुरवासिनः प्राप्तं कृष्णं श्रुत्वाऽऽगत्य तन्मुखं वीक्ष्य ॥३६॥ अस्यैव रुक्मिणी स्त्री योग्या । तस्याः अयमेव पतिर्योग्यः ॥३७॥ यत् सुकृतमाचरितं तेनाच्युतो वैदर्भ्याः पाणिं गृह्णातु ॥३८॥ एवं प्रेमबद्धाः पुरवासिनः परस्परमूचुः । ततः सा रुक्मिणी भवान्याः पादपद्मं द्रष्टुं पथि मौनयुक्ता सखीभिर्वेष्टिता धृतायुधैः शूरैः राजभटै रक्षिता कृष्णचरणाम्बुजं ध्यायती सती पद्भ्यामम्बिकालयं ययौ ॥ ३९ ॥ ४० ॥ तदा सहस्रशो वाराङ्गनाः नानोपहारबलिभिः स्वलङ्कृताः द्विजपत्न्यः स्रग्गन्धवस्त्राभरणैश्च जगाम । मृदङ्गशङ्खभेर्यादयश्च जघ्निरे ॥ ४१ ॥

कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ॥ आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ॥ ३६ ॥ अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ॥ असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ ३७ ॥ किञ्चित् सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ॥ अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥ ३८ ॥ एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः ॥ कन्या चान्तःपुरात् प्रागाद् भटैर्गुप्ताम्बिकालयम् ॥३९॥ पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ॥ सा चाऽनुध्यायती सम्यङ् मुकुन्दचरणाम्बुजम् ॥४०॥ यतवाङ्मातृभिः सार्धं सखीभिः परिवारिता ॥ गुप्ता राजभटैः शूरैः सन्नद्धैरुद्यतायुधैः ॥ मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ॥ ४१ ॥ नानोपहारबलिभिर्वारमुख्याः सहस्रशः ॥ स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलङ्कृताः ॥ ४२ ॥ गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ॥ परिवार्य वधूं जग्मुः सूतमागधबन्दिनः ॥ ४३ ॥ आसाद्य देवीसदनं धौतपादकराम्बुजा ॥ उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥ ४४ ॥ तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ॥ भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् ॥ ४५ ॥ नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसन्तानयुतां शिवाम् ॥ भूयात् पतिर्मे भगवान् कृष्णस्तदनुमोदताम् ॥ ४६ ॥

गायकाः गायन्तः सूतबन्दिनः स्तुवन्तो वधूं परिवार्य जग्मुः ॥४२॥४३॥ कन्या च देवीसदनं प्राप्य हस्तौ पादौ च प्रक्षाल्याचम्याम्बिकासमीपं जगाम ॥ ४४ ॥ ततो विधिज्ञा विप्रस्त्रियस्तां वधूं भवपत्नीं वन्दयांचक्रुः ॥४५॥ तदा कन्याह-हे अम्बिके ! गणेशादियुतां त्वामभीक्ष्णं नमस्ये, यथा कृष्णो मे पतिर्भूयात् तथाऽनुमोदस्व ॥ ४६ ॥

ततः सा कन्या गन्धाक्षतपुष्पधूपदीपैर्नानोपहारबलिश्चाम्बिकां पूजयामास ॥४७॥ एवं विप्रस्त्रियोऽपि तैर्द्रव्यैर्लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः सा रुक्मिणी समपूजयत् ॥४८॥ ततस्ताः स्त्रियस्तस्याः आशिषो ददुः ! रुक्मिणी ताभ्यो देव्यै च नमस्कृत्य निर्माल्यं गृहीत्वा ॥४९॥ मौनं त्यक्त्वा स्वपाणिना सखीं धृत्वाम्बिकालयान्निश्चक्राम ॥५०॥ तदा वीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननां करेण केशान् निवारय-

अद्भिर्गन्धाक्षतैर्धूपैर्वासस्स्रङ्माल्यभूषणैः ॥ नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ४७ ॥ विप्रस्त्रियः पतिमतीस्तथा तैः समपूजयत ॥ लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ४८ ॥ तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ॥ ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥४९॥ मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् ॥ प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥ ५० ॥ तां देवमायामिव वीरमोहनीं सुमध्यमां कुण्डलमण्डिताननाम् ॥ श्यामां नितम्बार्पित रत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥५१॥ शुचिस्मितां बिम्बफलाधरद्युतिं शोणायमानद्विजकुन्दकुड्मलाम् ॥ पदा चलन्तीं कलहंसगामिनीं शिञ्जत्कलानूपुरधामशोभिना ॥५२॥ विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥५३॥ यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीडावलोकहृतचेतस उज्झितास्त्राः ॥ पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥ ५४ ॥ सैवं शनैश्चलयती चलपद्मकोशौ प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥ उत्सार्य वामकरजैरलकानपाङ्गैः प्राप्तान् ह्रियैक्षत नृपान् ददृशेऽच्युतं सा ॥ ५५ ॥

न्तीम् ॥५१॥ शुचिस्मितां पदा चलन्तीं हंसगामिनीं नूपुरैः क्वणयन्तीम् ॥५२॥ एतादृशीं तां विलोक्य कामार्दिताः वीराः मुमुहुः ॥५३॥ ते नृपतयो यां श्रीकृष्णे स्वशोभामर्पयन्तीं वीक्ष्य गजरथाश्वशस्त्रैरुज्झिताः सन्तः क्षितौ पेतुः ॥ ५४ ॥ सा शनैश्चरणौ चालयन्ती वामकरेण केशानुत्सार्य पश्यन्ती सती नृपान् ह्रिया वीक्ष्याऽच्युतं ददृशे ॥ ५५ ॥

---

१ लवणादिभिर्द्रव्यैः । २ कुन्तलेभ्यः शङ्किते इव ईक्षणे यस्यास्ताम् । ३ कला शोभा तद्युपरक्तं नूपुरम् । शिञ्जच्च तत् कलानूपुरं च । तस्य धाम्ना तेजसा शोभते इति तथाभूतेन ।

तदा हरिः शत्रूणां पश्यतां समीपमागतां तां पाणिना प्रगृह्य रथमारोप्य राजन्यचक्रं परिभूय रामादिभिः सह ययौ ॥५६॥ ततोऽभिमानिनस्ते
राजानो जरासन्धादयः स्वपराभवं न सेहिरे। अहो! अस्मान् धिक्, यतो धनुर्धारिणामस्माकं यशो गोपैर्हृतं सिंहानां मृगैरिव ॥ ५७ ॥ इति
श्रीभागवते म० दशमस्कन्धे चूर्णिकायाम् उ० त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥ चतुष्पञ्चाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान् ॥ रुक्मिणं च विरू-
प्याथ भैष्म्याः पाणिं पुरेऽग्रहीत्॥१॥श्रीशुक उवाच ॥ हे राजन्! ततः सर्वे राजानः क्रुद्धाः सन्तो वाहनान्यारुह्य स्वसैन्यैः सह तमनुययुः॥१॥

तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् ॥ रथं समारोप्य सुपर्णलक्षणं राजन्यचक्रं परिभूय
माधवः ॥ ततो ययौ रामपुरोगमः शनैः शृगालमध्यादिव भागहृद् हरिः ॥ ५६ ॥ तं मानिनः स्वाभिभवं यशः क्षयं
परे जरासन्धवशा न सेहिरे ॥ अहो धिगस्मान् यश आत्तधन्वनां गोपैर्हृतं केसरिणां मृगैरिव ॥ ५७ ॥ इति श्रीभा-
गवते महापुराणे दशमस्कन्धे उत्तरार्धे रुक्मिणीहरणं नाम त्रिपञ्चाशत्तमोध्यायः ॥ ५३ ॥ श्रीशुक उवाच ॥ इति
सर्वे सुसंरब्धा वाहानारुह्य दंशिताः ॥ स्वैः स्वैर्बलैः परिक्रान्ता अन्वीयुर्धृतकार्मुकाः ॥ १ ॥ तानापतत आलोक्य
यादवानीकयूथपाः ॥ तस्थुस्तत्संमुखा राजन् विस्फूर्ज्य स्वधनूंषि ते ॥२॥ अश्वपृष्ठे गजस्कन्धे रथोपस्थे च कोविदाः ॥
मुमुचुः शरवर्षाणि मेघा अद्रिष्वपो यथा ॥ ३ ॥ प्रत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा ॥ सव्रीडमैक्षत्तद्वक्त्रं
भयविह्वललोचना ॥४॥ प्रहस्य भगवानाह मा स्म भैर्वामलोचने ॥ विनङ्क्ष्यत्यधुनैवैतत्तावकैः शात्रवं बलम् ॥ ५ ॥
तेषा तद्विक्रमं वीरा गदसंकर्षणादयः ॥ अमृष्यमाणा नाराचैर्जघ्नुर्हयगजान् रथान् ॥ ६ ॥

ततो यादवास्तान् दृष्ट्वा स्वधनूंषि टङ्कारयित्वासंमुखास्तस्थुः ॥२॥केचिदश्वपृष्ठे केचिद् गजस्कन्धे अपरे रथोपस्थे स्थिताः एवं यादवेषु शर-
वर्षाणि मुमुचुः ॥३॥ तदा रुक्मिणी पत्युः सैन्यं शरैराच्छादितं दृष्ट्वा भयविह्वला कृष्णमुखमैक्षत ॥ ४ ॥ तदा भगवान् प्रहस्य तामाह हे
सुन्दराक्षि! त्वं मा भैषीः। अधुनैव शत्रुसैन्यं नङ्क्ष्यति ॥ ५ ॥ गदसंकर्षणादयः शत्रुपराक्रममसहमानाः शरैरश्वरथगजादीन् जघ्नुः ॥६॥

१ सिंहः । २ धृतकवचाः । ३ त्ववीर्यैः ।

तदा शत्रूणां कोटिशः सकुण्डलकिरीटानि शिरांसि पेतुः ॥ ७ ॥ खड्गगदाधनुस्सहिताः हस्ताः ऊर्वङ्घ्रयोऽश्वगजोष्ट्रादयश्च निपेतुः ॥ ८ ॥ एवं हन्यमानबलाः जरासन्धादयो विमुखाः सन्तः ॥९॥ हृतदारमातुरं नष्टकान्तिं शुष्कवदनं शिशुपालमेत्य जगदुः ॥१०॥ हे पुरुषशार्दूल ! दौर्मनस्यं त्यज । देहिषु प्रियाप्रिययोः स्थैर्यं न दृश्यते ॥११॥ यथा काष्ठमयी नारी नर्तयितुरिच्छया नृत्यते एवमीश्वरतन्त्रोऽयं जनः सुख-

पेतुः शिरांसि रथिनामश्विनां गजिनां भुवि॥सकुण्डलकिरीटानि सोष्णीषाणि च कोटिशः॥७॥हस्ताःसासिगदेष्वासाः करभा ऊरवोऽङ्घ्रयः ॥ अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसि च ॥८॥ हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः ॥ राजानो विमुखा जग्मुर्जरासन्धपुरस्सराः ॥९॥ शिशुपालं समभ्येत्य हृतदारमिवातुरम् ॥ नष्टत्विषं गतोत्साहं शुष्यद्वदनमब्रुवन् ॥ १० ॥ भो भो पुरुषशार्दूल दौर्मनस्यमिदं त्यज ॥ प्रियाप्रिययो राजन् निष्ठा देहिषु दृश्यते ॥११॥ यथा दारुमयी योषिन्नृत्यते कुहकेच्छया ॥ एवमीश्वरतन्त्रोऽयमीहते सुखदुःखयोः ॥ १२ ॥ शौरेः सप्तदशाहं वै संयुगानि पराजितः ॥ त्रयोविंशतिभिः सैन्यैर्जिग्य एकमहं परम् ॥ १३ ॥ तथाऽप्यहं न शोचामि न प्रहृष्यामि कर्हिचित् ॥ कालेन दैवयुक्तेन जानन् विद्रावितं जगत् ॥ १४ ॥ अधुनापि वयं सर्वे वीरयूथपयूथपाः ॥ पराजिताः फल्गुतन्त्रैर्यदुभिः कृष्णपालितैः ॥१५॥ रिपवो जिग्युरधुना काल आत्मानुसारिणि ॥ तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः ॥१६॥ एवं प्रबोधितो मित्रैश्चैद्योऽगात् सानुगः पुरम् ॥ हतशेषाः पुनस्तेऽपि ययुः स्वं स्वं पुरं नृपाः ॥ १७ ॥

दुःखयोरीहते ॥ १२ ॥ अहं सप्तदशवारान् त्रयोविंशत्यक्षौहिणीभिः सैन्यैः सह कृष्णेन पराजितः । मया सोऽप्येकवारं जितः ॥ १३ ॥ तथापि न शोचामि न हृष्यामि ॥ १४ ॥ अधुनाऽपि यदुभिर्वीरयूथपा वयं पराजिताः ॥ १५ ॥ यदा कालोऽनुकूलः स्यात् तदा तान् जेष्यामः ॥ १६ ॥ एवं बोधितः शिशुपालः सानुगः स्वपुरं जगाम । ततो हतशेषाः जरासन्धादयोऽपि स्वं स्वं पुरं जग्मुः ॥ १७ ॥

---

१ उष्णीषः शिरोऽवतंसवस्त्रम् । २ प्रकोष्ठाः । ३ स्वल्पसैन्यैः ।

अक्षौहिण्या वेष्टितो रुक्मी तु कृष्णमन्वगमत् ॥१८॥ तदा सर्वभूभुजां शृण्वतां शरासनः क्रोधयुक्तो रुक्मी प्रतिज्ञां चकार ॥१९॥ तामाह युधि कृष्णमहत्वा रुक्मिणीमगृहीत्वा कुण्डिनं न प्रवेक्ष्यामि। एतद्वः सत्यं ब्रवीमि ॥२०॥ इत्युक्त्वा रथमारुह्य सारथिमाह—हे सूत ! यत्र कृष्णस्तत्र रथं शीघ्रं नय ॥२१॥ अद्य शरैस्तस्य गोपालस्य वीर्यमदं नाशयामि ॥ २२ ॥ एवं विकत्थमानः कृष्णं तिष्ठतिष्ठेत्याहूय ॥२३॥

रुक्मी तु राक्षसोद्वाहं कृष्णद्विडसहन् स्वसुः ॥ पृष्ठतोऽन्वगमत् कृष्णमक्षौहिण्या वृतो बली ॥१८॥ रुक्म्यमर्षीसुसंरब्धः शृण्वतां सर्वभूभुजाम् ॥ प्रतिजज्ञे महाबाहुर्दंशितः सशरासनः ॥१९॥ अहत्वा समरे कृष्णमप्रत्यूह्य च रुक्मिणीम् ॥ कुंडिनं न प्रवेक्ष्यामि सत्यमेतद् ब्रवीमि वः ॥२०॥ इत्युक्त्वा रथमारुह्य सारथिं प्राह सत्वरः ॥ चोदयाश्वान् यतः कृष्णस्तस्य मे संयुगं भवेत् ॥२१॥ अद्याहं निशितैर्बाणैर्गोपालस्य सुदुर्मतेः ॥ नेष्ये वीर्यमदं येन स्वसा मे प्रसभं हृता ॥२२॥ विकत्थमानः कुमतिरीश्वरस्याप्रमाणवित् ॥ रथेनैकेन गोविन्द तिष्ठतिष्ठेत्यथाह्वयत् ॥२३॥ धनुर्विकृष्य सुदृढं जघ्ने कृष्णं त्रिभिः शरैः ॥ आह चात्र क्षणं तिष्ठ यदूनां कुलपांसन ॥२४॥ कुत्र यासि स्वसारं मे मुषित्वा ध्वांक्षवद्धविः ॥ हरिष्येऽद्य मदं मन्द मायिनः कूटयोधिनः ॥२५॥ यावन्न मे हतो बाणैःशयीथा मुञ्च दारिकाम् ॥ स्मयन् कृष्णो धनुश्छित्त्वा षडभिर्विव्याध रुक्मिणम् ॥२६॥ अष्टभिश्चतुरो वाहान् द्वाभ्यां सूतं ध्वजं त्रिभिः ॥ स चान्यद्धनुरादाय कृष्णं विव्याध पञ्चभिः ॥२७॥ तैस्ताडितः शरौघैस्तु चिच्छेद धनुरच्युतः ॥ पुनरन्यदुपादत्त तदप्यच्छिनदव्ययः ॥ २८ ॥

धनुराकृष्य त्रिभिः शरैस्तं जघ्ने। आह च। हे कुलदूषण ! अत्र क्षणं तिष्ठ ॥२४॥ काको हविरिव मे भगिनीं हृत्वा क्व यास्यसि ॥२५॥ हे मन्द ! यावन्मद्बाणैर्न हतोऽसि तावद्रुक्मिणीं मुञ्च। तदा कृष्णो विस्मितः सन् तस्य धनुश्छित्त्वा षड्भिर्बाणै रुक्मिणम् ॥२६॥ अष्टभिः शरैरश्वान् द्वाभ्यां सूतं त्रिभिर्ध्वजं विव्याध। स च रुक्मी धनुरन्यदादाय पञ्चभिः शरैः कृष्णं विव्याध ॥२७॥ तदपि धनुः कृष्णश्चिच्छेद ॥२८॥

१ युद्धम्।

तदा कृष्णं परिघशूलखड्गशक्तितोमरान् चिक्षेप । तानपि कृष्णश्चिच्छेद ॥ २९ ॥ ततो रुक्मी रथादुत्तीर्य जिघांसया खड्गं गृहीत्वा कृष्ण-मधावत् ॥ ३० ॥ ततः कृष्णो बाणेन खड्गं तिलशश्छित्त्वा तं हन्तुमसिमाददे ॥ ३१ ॥ तदा रुक्मिणी भ्रातृवधोद्योगं दृष्ट्वा भयविह्वला सती भर्तुः पादयोः पतित्वा करुणं जगाद ॥ ३२ ॥ हे योगेश्वर ! हे देवदेव ! मे भ्रातरं हन्तुं नार्हसि ॥ ३३ ॥ श्रीशुक उवाच ॥ त्रासविक-म्पिताङ्ग्या तया गृहीतचरणो हरिर्वधाद् न्यवर्तत ॥३४॥ ततस्तं वस्त्रेण बद्ध्वा श्मश्रुकेशं प्रवपन् विरूपं चकार । तावद् यदुप्रवीराः परसैन्यं

परिघं पट्टिशं शूलं चर्मासी शक्तितोमरौ ॥ यद्यदायुधमादत्त तत् सर्वं सोऽच्छिनद्धरिः ॥ २९ ॥ ततो रथादवप्लुत्य खड्गपाणिर्जिघांसया ॥ कृष्णमभ्यद्रवत्क्रुद्धः पतङ्ग इव पावकम् ॥ ३० ॥ तस्य चापततः खड्गं तिलशश्चर्म चेषुभिः ॥ छित्त्वासिमाददे तिग्मं रुक्मिणं हन्तुमुद्यतः ॥ ३१ ॥ दृष्ट्वा भ्रातृवधोद्योगं रुक्मिणी भयविह्वला ॥ पतित्वा पाद-योर्भर्तुरुवाच करुणं सती ॥ ३२ ॥ योगेश्वराप्रमेयात्मन् देवदेव जगत्पते ॥ हन्तुं नार्हसि कल्याण भ्रातरं मे महा-भुज ॥ ३३ ॥ श्रीशुक उवाच ॥ तया परित्रासविकम्पिताङ्गया शुचाऽवशुष्यन्मुखरुद्धकण्ठया ॥ कातर्यविस्रंसित-हेममालया गृहीतपादः करुणो न्यवर्तत ॥ ३४ ॥ चैलेन बद्ध्वा तमसाधुकारिणं सश्मश्रुकेशं प्रवपन् व्यरूपयत् ॥ तावन्ममर्दुः परसैन्यमद्भुतं यदुप्रवीरा नलिनीं यथा गजाः ॥ ३५ ॥ कृष्णान्तिकमुपव्रज्य ददृशुस्तत्र रुक्मिणम् ॥ तथाभूतं हतप्रायं दृष्ट्वा सङ्कर्षणो विभुः ॥ विमुच्य बद्धं करुणो भगवान् कृष्णमब्रवीत् ॥ ३६ ॥ असाध्विदं त्वया कृष्ण कृतमस्मज्जुगुप्सितम् ॥ वपनं श्मश्रुकेशानां वैरूप्यं सुहृदो वधः ॥ ३७ ॥ मैवास्मान् साध्व्यसूयेथा भ्रातुर्वै-रूप्यचिन्तया ॥ सुखदुःखदो न चान्योऽस्ति यतः स्वकृतभुक् पुमान् ॥ ३८ ॥ बन्धुर्वधार्हदोषोऽपि न बंधोर्वध-मर्हति ॥ त्याज्यः स्वेनैव दोषेण हतः किं हन्यते पुनः ॥ ३९ ॥

मर्दयामासुः ॥३५॥ कृष्णसमीपं ययुः । तत्र रामो विरूपं हतप्रायं रुक्मिणं दृष्ट्वा बद्धं तं विमुच्य कृष्णं जगाद ॥३६॥ हे कृष्ण ! न त्वया साधु कृतम्, यतो वैरूप्यं सुहृदो वधः ॥३७॥ ततो रुक्मिणीं सान्त्वयति । हे साध्वि ! भ्रातुर्वैरूप्यचिन्तयाऽस्मान् माऽसूयेथाःसुखदुःखदो-ऽन्यो नास्ति यतः पुमान् स्वकृतं भुङ्क्ते ॥ ३८ ॥ बन्धुर्वध्योऽपि बन्धोर्वधं नार्हति ॥ ३९ ॥

एवं कृष्णमुक्त्वा रुक्मिणीमाह । युद्धे भ्राता भ्रातरं हन्यात् । अयं क्षत्रियाणां धर्म एव ॥ ४० ॥ पुनः कृष्णं जगाद । श्रीमदान्धा अभिमानिनो राज्यस्य भूमेर्वित्तस्य स्त्रियो वाऽन्यस्य हेतोः सम्बन्धिनं नाशयन्ति । ( तथाप्यस्माकमेतदनुचितमेव ) ॥ ४१ ॥ ततो देवीमाह—हे रुक्मिणि ! सर्वभूतेषु मध्ये दुर्हृदां शिशुपालादीनामभद्रं सुहृदां भद्रं च यदिच्छसि सेयं तव विषमा बुद्धिः कुतः ॥४२॥ नृणां स्वपरोदासीन इति मोहो मायया भवति ॥ ४३ ॥ हे देवि ! देहिनामात्मा एक एव । तस्मिन्नविद्यया कल्पितो देहः आत्मानं संसारयति ॥ ४४॥ ४५ ॥

क्षत्रियाणामयं धर्मः प्रजापतिविनिर्मितः ॥ भ्राताऽपि भ्रातरं हन्याद् येनघोरतमस्ततः ॥ ४० ॥ राज्यस्य भूमेर्वित्तस्य स्त्रियो मानस्य तेजसः ॥ मानिनोऽन्यस्य[1] वा हेतोः श्रीमदान्धाः क्षिपन्ति हि ॥४१॥ तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ॥ यन्मन्यसे सदाऽभद्रं सुहृदां भद्रमज्ञवत् ॥ ४२ ॥ आत्ममोहो नृणामेष कल्पते देवमायया ॥ सुहृद्दुर्हृदुदासीन इति देहात्ममानिनाम् ॥ ४३ ॥ एक एव परो ह्यात्मा सर्वेषामपि देहिनाम् ॥ नानेव गृह्यते मूढैर्यथा ज्योतिर्यथा नभः ॥४४॥ देह आद्यन्तवानेष द्रव्यप्राणगुणात्मकः ॥ आत्मन्यविद्यया क्लृप्तः संसारयति देहिनम् ॥ ॥४५॥ नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ॥ तद्धेतुत्वात् तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ॥ ४६ ॥ जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ॥ कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव ॥ ४७ ॥ यथा शयान आत्मानं विषयान् फलमेव च ॥ अनुभुङ्क्तेऽप्यसत्यर्थे तथाप्नोत्यबुधो भवम् ॥ ४८ ॥ तस्मादज्ञानजं शोकमात्मशोषविमोहनम्[2] ॥ तत्त्वज्ञानेन निर्हृत्य स्वस्था भव शुचिस्मिते ॥ ४९ ॥ श्रीशुक उवाच ॥ एवं भगवता तन्वी रामेण प्रतिबोधिता ॥ वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥ ५० ॥

हे सति ! अधिभूतादिनाऽऽत्मनः संयोगवियोगौ न स्तः ॥ ४६ ॥ जन्मादिविकाराः देहस्य । आत्मनो न ॥ ४७ ॥ यथा स्वप्ने भोगान् भुङ्क्ते तथाऽज्ञः संसारं प्राप्नोति ॥ ४८ ॥ अतोऽज्ञानजं शोकं तत्त्वज्ञानेन दूरीकृत्य स्वस्था भव ॥ ४९ ॥ श्रीशुक उवाच ॥ एवं रामेण बोधिता रुक्मिणी खेदं त्यक्त्वा मनः समाहितं चकार ॥ ५० ॥

१ मानवन्तः । २ आत्मानं शोषयति विमोहयति चेति यथा तम् ।

ततो रुक्मी शत्रुभिस्त्यक्तः सन् विरूपकरणं स्मरन् स्वप्रतिज्ञापालनाय तत्रैव भोजकटं पुरं निर्मायाऽवसत् ॥५१॥५२॥ एवं भगवान् नृपान् निर्जित्य रुक्मिणीं पुरमानीय विधिवदुपयेमे ॥५३॥ तदा यदुपुर्यां गृहे गृहे उत्सवः आसीत् ॥५४॥ तदा नराः नार्यश्च प्रमृष्टमणिकुण्डलाः हर्षिताः सत्यः पारिबर्हं समर्पयामासुः ॥५५॥ एवं सा द्वारका ध्वजपताकारत्नतोरणैः प्रतिद्वारं पूर्णकुम्भादिभिश्च बभौ ॥५६॥ आहूतनृपाणां

प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ॥ स्मरन् विरूपकरणं वितथात्ममनोरथः ॥ चक्रे भोजकटं नाम निवासाय महत्पुरम् ॥ ५१ ॥ अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ॥ कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद् रुषा ॥ ५२ ॥ भगवान् भीष्मकसुतामेवं निर्जित्य भूमिपान् ॥ पुरमानीय विधिवदुपयेमे कुरूद्वह ॥ ५३ ॥ तदा महोत्सवो नृणां यदुपुर्यां गृहेगृहे ॥ अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥ ५४ ॥ नरा नार्यश्च मुदिताः प्रमृष्टमणिकुंडलाः ॥ पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥५५॥ सा वृष्णिपुर्युत्तंभितेन्द्रकेतुभिर्विचित्रमाल्याम्बररत्नतोरणैः ॥ बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैरापूर्णकुम्भाऽगुरुधूपदीपकैः ॥ ५६ ॥ सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ॥ गजैर्द्वाःसु परामृष्टरम्भापूगोपशोभिता ॥ ५७ ॥ कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः ॥ मिथो मुमुदिरे तस्मिन् संभ्रमात् परिधावताम् ॥ ५८ ॥ रुक्मिण्याहरणं श्रुत्वा गीयमानं ततस्ततः ॥ राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥५९॥ द्वारकायामभूद् राजन् महामोदः पुरौकसाम् ॥ रुक्मिण्या रमयोपेतं दृष्ट्वा कृष्णं श्रियः पतिम् ॥ ६० ॥ इति श्रीभागवते महापु० दशम० उत्त० रुक्मिण्युद्वाहोत्सवो नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

गजगलितमदेन संसिक्तमार्गा रम्भापूगादिवृक्षैश्च शोभिता बभूव ॥ ५७ ॥ तदा कुरुसृञ्जयकैकेयविदर्भादयो राजानो मिथः समेत्य मुदं प्रापुः ॥५८॥ एवमितस्ततो गीयमानं रुक्मिण्याः हरणं श्रुत्वा राजानो राजकन्याश्च विस्मिता बभूवुः ॥५९॥ हे राजन्! रुक्मिण्या युक्तं श्रियः पतिं श्रीकृष्णं दृष्ट्वा पौराणां हर्षो जातः ॥ ६० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे चूर्णिकायामुत्तरार्धे चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

१ वरवध्वोः। २ उच्चस्तम्भे निवेशितैर्ध्वजविशेषैः। ३ पुरे। ४ मध्ये बन्धूनामिति शेषः।

पञ्चपञ्चाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः ॥ शम्बरेण हृतः सोऽथ हत्वा तं कान्तयाऽऽगमत् ॥१॥ प्रद्युम्नहानिलाभाद्यैः शम्बराहरणादिना । कुटुम्बिनामपत्यादिसुखदुःखमसूसुचत् ॥ २ ॥ श्रीशुक उवाच ॥ प्राग् रुद्रमन्युना दग्धः कामो भूयो देहप्राप्तये रुद्रमेव प्रत्यपद्यत ॥ १ ॥ रुक्मिण्यां कृष्णवीर्यसमुद्भवः प्रद्युम्न इति विख्यातो जातः॥२॥तदा शम्बरो नारदमुखात् तं जातं श्रुत्वाऽऽत्मशत्रुं ज्ञात्वा दशदिनमध्ये एव तं हृत्वा समुद्रे प्रक्षिप्य गृहं ययौ ॥ ३ ॥ तं मत्स्यो गिलितवान् ॥ मत्स्यजीविनः कैवर्ताः जालेन तं मत्स्यं गृहीत्वा ॥ ४ ॥ शम्बरायोपायनं

श्रीशुक उवाच ॥ कामस्तु वासुदेवांशो दग्धः प्राग् रुद्रमन्युना ॥ देहोपपत्तये भूयस्तमेव प्रत्यपद्यत ॥१॥ स एव जातो वैदर्भ्यां कृष्णवीर्यसमुद्भवः ॥ प्रद्युम्न इति विख्यातः सर्वतोऽनवमः पितुः ॥२॥ तं शम्बरः कामरूपी हृत्वा तोकमनिर्दशम् ॥ स विदित्वाऽऽत्मनः शत्रुं प्रास्योदन्वत्यगाद् गृहम् ॥३॥ तं निर्जगार बलवान् मीनः सोऽप्यपरैः सह ॥ वृतो जालेन महता गृहीतो मत्स्यजीविभिः ॥४॥ तं शम्बराय कैवर्ता उपाजह्रुरुपायनम् ॥ सूदा महानसं नीत्वावद्यन् स्वधितिनाऽद्भुतम् ॥ ५ ॥ दृष्ट्वा तदुदरे बालं मायावत्यै न्यवेदयन् ॥ नारदोऽकथयत् सर्वं तस्याः शङ्कितचेतसः ॥ बालस्य तत्त्वमुत्पत्तिं मत्स्योदरनिवेशनम् ॥६॥ सा च कामस्य वै पत्नी रतिर्नाम यशस्विनी ॥ पत्युर्निर्दग्धदेहस्य देहोत्पत्तिं प्रतीक्षती ॥ ७ ॥ निरूपिता शम्बरेण सा सूपौदनसाधने ॥ कामदेवं शिशुं बुद्ध्वा चक्रे स्नेहं तदाऽर्भके ॥८॥ नातिदीर्घेण कालेन स कार्ष्णी रूढयौवनः ॥ जनयामास नारीणां वीक्षन्तीनां च विभ्रमम् ॥ ९ ॥ सा तं पतिं पद्मदलायतेक्षणं प्रलम्बबाहुं नरलोकसुन्दरम् ॥ सव्रीडहासोत्तभितभ्रुवेक्षती प्रीत्योपतस्थे रतिरङ्ग सौरतैः ॥ १० ॥

ददुः । तदा शंबरः पाककर्तृभ्यो ददौ । ते महानसं मत्स्यं नीत्वा शस्त्रिकया खण्डितवन्तः ॥५॥ तदुदरे बालं दृष्ट्वा मायावत्यै न्यवेदयन् । ततो नारदस्तत्रागत्य बालस्योत्पत्तिं मत्स्योदरे निवेशनं च तस्यै कथयामास ॥ ६ ॥ सा च कामपत्नी रतिर्नाम्ना स्वपत्युर्देहोत्पत्तिं प्रतीक्षती ॥ ७ ॥ शम्बरेण सूपौदनसाधने निरूपिता सती शिशुं कामं बुद्ध्वा तस्मिन् स्नेहं चक्रे ॥८॥ शिशुः स्वल्पकालेन प्राप्तयौवनः सन् नारीणां मोहं जनयामास ॥ ९ ॥ ततो रतिस्तं नरलोकसुन्दरं सौरतैर्भावैः समुपतस्थे ॥ १० ॥

१ अन्यूनः।

तदा प्रद्युम्नस्तमाह—हे मातः ! त्वं मातृभावं त्यक्त्वा कामिनीव कथं वर्तसे ॥११॥ रतिरुवाच ॥ त्वं कृष्णसुतः शम्बरेणाऽत्रानीतः । अतस्त्वं कामोऽसि । अहं तव पत्नी रतिः ॥१२॥ एष शम्बरो दशदिनमध्ये त्वां हृत्वा समुद्रे प्राक्षिपत् । तत्र मत्स्यो जग्रास । तदुदरात् त्वं प्राप्तोऽसि ॥१३॥ अतः शतमायाविनं शत्रुं जहि ॥१४॥ तव माता गतवत्सा गौरिव शोचति ॥१५॥ हे राजन् ! एवं प्रभाष्य रतिः सर्वमायाविनाशिनीं

तामाह भगवान् कार्ष्णिर्मातस्ते मतिरन्यथा ॥ मातृभावमतिक्रम्य वर्तसे कामिनी यथा ॥११॥ रतिरुवाच ॥ भवान् नारायणसुतः शम्बरेणाहृतो गृहात् ॥ अहं तेऽधिकृता पत्नी रतिः कामो भवान् प्रभो ॥ १२ ॥ एष त्वाऽनिर्दशं सिन्धावक्षिपच्छम्बरोऽसुरः ॥ मत्स्योऽग्रसीत् तदुदरादिह प्राप्तो भवान् प्रभो ॥ १३ ॥ तमिमं जहि दुर्धर्षं दुर्जयं शत्रुमात्मनः ॥ मायाशतमिदं त्वं च मायाभिर्मोहनादिभिः ॥१४॥ परिशोचति ते माता कुररीव गतप्रजाः ॥ पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा ॥१५॥ प्रभाष्यैवं ददौ विद्यां प्रद्युम्नाय महात्मने ॥ मायावती महामायां सर्वमायाविनाशिनीम् ॥ १६ ॥ स च शम्बरमभ्येत्य संयुगाय समाह्वयत् ॥ अविषह्यैस्तमाक्षेपैः क्षिपन्संजनयन् कलिम् ॥ १७ ॥ सोऽधिक्षिप्तो दुर्वचोभिः पदाहत इवोरगः ॥ निश्चक्राम गदापाणिरमर्षात् ताम्रलोचनः ॥ १८ ॥ गदामाविध्यतरसा प्रद्युम्नाय महात्मने ॥ प्रक्षिप्य व्यनदन्नादं वज्रनिष्पेषनिष्ठुरम् ॥१९॥ तमापतन्तीं भगवान् प्रद्युम्नो गदया गदाम् ॥ अपास्य शत्रवे क्रुद्धः प्राहिणोत्स्वगदां नृप ॥ २० ॥ स च मायां समाश्रित्य दैतेयीं मयदर्शिताम् ॥ मुमुचेऽस्त्रमयं वर्षं कार्ष्णौ वैहायसोऽसुरः ॥ २१ ॥ बाध्यमानोऽस्त्रवर्षेण रौक्मिणेयो महारथः ॥ सत्त्वात्मिकां महाविद्यां सर्वमायोपमर्दिनीम् ॥ २२ ॥

विद्यां प्रद्युम्नाय ददौ ॥१६॥ प्रद्युम्नः शम्बरं प्राप्य वाग्बाणैः कलहं जनयन् युद्धायाऽऽह्वयत् ॥१७॥ तदा शम्बरः क्रोधाद् रक्तनेत्रो गदापाणिर्गृहान्निर्गत्य ॥१८॥ प्रद्युम्नाय वेगेन गदामाविध्य घोरं शब्दं चकार ॥१९॥ प्रद्युम्नोऽपि गदया तां गदां दूरीकृत्य स्वगदया तं ताडयामास ॥२०॥ स च मायामाश्रित्य नभसि स्थितः सन्नस्त्रमयीं वृष्टिं चक्रे ॥२१॥ तदा प्रद्युम्नोऽस्त्रवर्षेण बाध्यमानः सन् सात्त्विकीं विद्यां युयोज॥२२॥

दैत्यश्च गौह्यकगान्धर्वपैशाचौरगराक्षसीर्मांया व्यतनोत् । ताः सर्वाःकार्ष्णिर्नाशयामास॥२३॥ ततः खड्गं गृहीत्वा त्वरया शम्बरस्य सकिरी-
टकुण्डलं शिरो जहार ॥२४॥ तदा देवैः पुष्पैराकीर्यमाणः प्रद्युम्नस्तया स्त्रियाऽऽकाशमार्गेण द्वारकां नीतः ॥२५॥ ततो ललनाशतसङ्कुल-
मन्तःपुरं पत्न्या सह विवेश ॥ २६ ॥ तदा ताः स्त्रियस्तं पीताम्बरवरं प्रलम्बबाहुं श्यामवर्णं रुचिराननं दृष्ट्वा ॥२७॥ कृष्णं मत्वा लज्जिताः
सत्यस्तत्र तत्र निलिल्युः॥२८॥ततस्ताः स्त्रियः किञ्चिद्वैलक्षण्येन कृष्णो नेति निश्चित्य विस्मिताः सत्यस्तत्समीपं ययुः॥२९॥तदा रुक्मिणी

ततो गौह्यकगान्धर्वपैशाचौरगराक्षसीः ॥ प्रायुङ्क्त शतशो दैत्यः कार्ष्णिर्व्यधमयत्स ताः ॥ २३ ॥ निशातमसिमु-
द्यम्य सकिरीटं सकुण्डलम् ॥ शम्बरस्य शिरः कायात् ताम्रश्मश्र्वोजसाऽहरत् ॥ २४ ॥ आकीर्यमाणो दिविजैः
स्तुवद्भिः कुसुमोत्करैः ॥ भार्ययाम्बरचारिण्या पुरीं नीतो विहायसा ॥ २५ ॥ अन्तःपुरवरं राजँल्ललनाशतसङ्कु-
लम् ॥ विवेश पत्न्या गगनाद् विद्युतेव बलाहकः ॥ २६ ॥ तं दृष्ट्वा जलदश्यामं पीतकौशेयवाससम् ॥ प्रलम्बबाहुं
ताम्राक्षं सुस्मितं रुचिराननम् ॥२७॥ स्वलङ्कृतमुखाम्भोजं नीलवक्रालकालिभिः ॥ कृष्णं मत्वा स्त्रियो ह्रीतानिलि-
ल्युस्तत्र तत्र ह ॥ २८ ॥अवधार्य शनैरीषद्वैलक्षण्येन योषितः ॥ उपजग्मुः प्रमुदितः सस्त्रीरत्नं सुविस्मिताः ॥ २९ ॥
अथ तत्रामितापाङ्गी वैदर्भी वल्गुभाषिणी ॥ अस्मरत् स्वसुतं नष्टं स्नेहस्नुतपयोधरा ॥ ३० ॥ को न्वयं नरवैदूर्यः
कस्य वा कमलेक्षणः ॥ धृतः कया वा जठरे केयं लब्धा त्वनेन वा ॥३१॥ मम चाप्यात्मजो नष्टो नीतो यः सूति-
कागृहात् ॥ एतत्तुल्यवयोरूपो यदि जीवति कुत्रचित् ॥ ३२ ॥ कथं त्वनेन संप्राप्तं सारूप्यं शार्ङ्गधन्वनः ॥ आकृ-
त्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥ ३३ ॥ स वा भवेन्नूनं यो मे गर्भे धृतोऽर्भकः॥ अमुष्मिन्प्रीतिरधिका वामः
स्फुरति मे भुजः ॥ ३४ ॥

नष्टं स्वसुतं स्मृत्वा स्नेहस्नुतपयोधरा सती जगाद ॥३०॥ कमलनेत्रोऽयं कः, कया वा जठरे धृतः, अनेन केयं प्राप्ता ? ॥३१॥ मम नष्टः पुत्रः
कुत्रचित् जीवति चेद् वयआदिलक्षणैरेतत्तुल्योऽस्ति ॥ ३२ ॥ अनेन कृष्णसारूप्यं कथं प्राप्तम् ॥ ३३ ॥ तस्माद् यो मया गर्भे धृतः स
एव वा भवेत् यतोऽस्मिन् मेऽधिका प्रीतिर्भवति, वामो भुजश्च स्फुरति ॥ ३४ ॥

एवं विचार्यमाणायां रुक्मिण्यां सत्यां वसुदेवदेवकीभ्यां सह कृष्ण आगत्य ॥३५॥ विज्ञातार्थोऽपि तूष्णीमासीत् । ततो नारदः शम्बराहरणादिकं सर्वं कथयामास ॥३६॥ तत् श्रुत्वा कृष्णस्त्रियो बहुभिः संवत्सरैः पुनः प्राप्तं प्रद्युम्नं दृष्ट्वा मुदं प्रापुः ॥३७॥ ततो देवक्याद्यास्तौ दम्पती परिष्वज्य हर्षं प्रापुः ॥ ३८ ॥ नष्टं प्रद्युम्नमायातमाकर्ण्य पौराः एतद्दिष्ट्येति जगदुः ॥ ३९ ॥ अहो ! कृष्णसदृशं प्रद्युम्नं दृष्ट्वा तन्मातरो मुमुहुः अन्यनार्यः किमु ॥ ४० ॥ इति श्रीभागवते द० चू० उ० पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ षट्पञ्चाशत्तमे मिथ्याऽभियोगे मणिमाहरत् ।

एवं मीमांसमानायां वैदर्भ्यां देवकीसुतः ॥ देवक्यानकदुन्दुभ्यामुत्तमश्लोक आगमत् ॥३५॥ विज्ञातार्थोऽपि भगवान् तूष्णीमासीज्जनार्दनः ॥ नारदोऽकथयत् सर्वं शम्बराहरणादिकम् ॥ ३६ ॥ तच्छ्रुत्वा महदाश्चर्यं कृष्णान्तःपुरयोषितः ॥ अभ्यनन्दन् बहूनब्दान् नष्टं मृतमिवागतम् ॥ ३७ ॥ देवकी वसुदेवश्च कृष्णरामौ तथा स्त्रियः ॥ दम्पती तौ परिष्वज्य रुक्मिणी च ययुर्मुदम् ॥ ३८ ॥ नष्टं प्रद्युम्नमायातमाकर्ण्य द्वारकौकसः ॥ अहो मृत इवायातो बालो दिष्ट्येति हाऽब्रुवन् ॥ ३९ ॥ यं वै मुहुः पितृसरूप[1]निजेशभावास्तन्मातरो यदभजन् [2]रहरूढभावाः ॥ चित्रं न तत् खलु रमास्पदबिम्ब[3]बिम्बे कामे स्मरेऽक्षिविषये किमुतान्यनार्यः ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे समुद्रक्षिप्तप्रद्युम्नप्रत्यागमनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ श्रीशुक उवाच ॥ सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः ॥ स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ १ ॥ राजोवाच ॥ सत्राजितः किमकरोद् ब्रह्मन् कृष्णस्य किल्बिषम् ॥ स्यमन्तकः कुतस्तस्य कस्माद् दत्ता सुता हरेः ॥ २ ॥

कन्यां जाम्बवतः प्राप कृष्णः सत्राजितस्ततः ॥ १ ॥ पुत्रादिकामसौख्यस्य निष्ठामुक्त्वाऽतिचञ्चलाम् ॥ अर्थस्यानर्थतामाह स्यमन्तहरणादिना ॥ २ ॥ श्रीशुक उवाच ॥ कृतापराधः सत्राजितः स्वकन्यां स्यमन्तकेन मणिना सह कृष्णाय ददौ ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन् ! सत्राजितः कृष्णस्य कमपराधं चकार । तस्य स्यमन्तकः कुतः प्राप्तः । हरये कन्या कस्माद् हेतोर्दत्ता ? तद्वद ॥ २ ॥

---

१ पित्रा श्रीकृष्णेन सदृशे तुल्ये प्रद्युम्ने निजः आत्मीयः ईशः भर्तेति भावो यासां ताः । २ रहसि निरूढभावाः । ३ प्रतिबिम्बे ।

श्रीशुक उवाच ॥ सत्राजितो भक्तस्य सूर्यः सखाऽऽसीत्। सूर्यस्तस्मै तुष्टः सन् स्यमन्तकं मणिं ददौ ॥३॥ स सत्राजित् कदाचित् तं मणिं कंठे धृत्वा द्वारकां प्रविष्टः ॥ ४ ॥ तं विलोक्य जनाः सूर्योऽयमिति शङ्किताः सन्तः कृष्णाय कथयामासुः ॥ ५ ॥ हे यदुनन्दन ! ते नमोऽस्तु ॥६॥ हे कृष्ण ! एष सूर्यो रश्मिजालेन नृणां चक्षूंषि छादयन् ॥७॥ यदुषु गुप्तं त्वां ज्ञात्वा द्रष्टुमायाति ॥८॥ श्रीशुक उवाच ॥ एवं

श्रीशुक उवाच ॥ आसीत् सत्राजितः सूर्यो भक्तस्य परमः सखा ॥ प्रीतस्तस्मै मणिं प्रादात् सूर्यस्तुष्टः स्यमन्तकम् ॥ ३ ॥ स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः ॥ प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ४ ॥ तं विलोक्य जना दूरात् तेजसा मुष्टदृष्टयः ॥ दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ५ ॥ नारायण नमस्तेऽस्तु शंखचक्रगदाधर ॥ दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ६ ॥ एष आयाति सविता त्वां दिदृक्षुर्जगत्पते ॥ मुष्णन् गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥७॥ नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः ॥ ज्ञात्वाऽद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥८॥ श्रीशुक उवाच ॥ निशम्य बालवचनं प्रहस्याम्बुजलोचनः ॥ प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥९॥ सत्राजित् स्वगृहं श्रीमत्कृतकौतुकमङ्गलम् ॥ प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ १० ॥ दिनेदिने स्वर्णभारानष्टौ स सृजति प्रभो ॥ दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः ॥ न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥ ११ ॥ स याचितो मणिं क्वापि यदुराजाय शौरिणा ॥ नैवार्थकामुकः प्रादाद्याच्ञाभङ्गमतर्कयन् ॥ १२ ॥ तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम् ॥ प्रसेनो हयमारुह्य मृगयां व्यचरद्वने ॥ १३ ॥



बालसदृशं वचः श्रुत्वा प्रहस्य कृष्णः आह । नासौ रविः किन्तु सत्राजिन्मणिना ज्वलन् ॥९॥ ततः सत्राजित् स्वगृहं प्रविश्य विप्रैरभिषिच्य देवालये मणिं निवेशयामास ॥१०॥ स मणिर्दिनेदिनेऽष्टौस्वर्णभारान् सृजति । यत्रमणिरास्ते तत्र दुर्भिक्षसर्पाधिव्याधयो न भवंति ॥११॥ एकदा कृष्णः उग्रसेनार्थं तं मणिं ययाचोस तु न प्रादात्॥१२॥ततः एकदा सत्राजितो भ्राता प्रसेनस्तं मणिं कण्ठे वद्ध्वाऽश्वमारुह्य मृगयार्थं वनं ययौ१३॥

१ मारी अकालमृत्युः ।

तत्र सिंहः साश्वं तं हत्वा मणिं गृहीत्वा गिरिं प्राविशत् ! तत्र जाम्बवान् तं सिंहं निहत्य मणिं गृहीत्वा ॥१४॥ स्वगुहायां कुमारस्य क्रीडनकं चक्रे । तदा सत्राजितो भ्रातरमदृष्ट्वा सन्तप्तः सन् जगाद॥१५॥ मणिग्रीवो मम भ्राता वनं गतः सन् प्रायः कृष्णेन हत इति । तत् श्रुत्वा जनाः कर्णे कर्णेऽब्रुवन् ॥१६॥ कृष्णोऽपि तत् श्रुत्वा दुर्यशो दूरीकर्तुं जनैः सह प्रसेनपदवीं गतः सन् ॥१७॥ वने साश्वं प्रसेनं सिंहेन हतं वीक्ष्याऽग्रे विचिन्वन् सिंहमपि गिरिपृष्ठे ऋक्षेण हतं वीक्ष्य ॥१८॥ प्रजाः बहिः स्थापयित्वा स्वयमेकस्तमसा व्याप्तं बिलं विवेश ॥१९॥ तत्र मणिं दृष्ट्वा

प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी ॥ गिरिं विशन् जाम्बवता निहतो मणिमिच्छता ॥ १४ ॥ सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले ॥ अपश्यन् भ्रातरं भ्राता सत्राजित् पर्यतप्यत ॥ १५॥ प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः ॥ भ्राता ममेति तच्छ्रुत्वा कर्णकर्णेऽजपन् जनाः ॥१६॥ भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि ॥ मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥ १७ ॥ हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने ॥ तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥ १८ ॥ ऋक्षराजबिलं भीममन्धेन तमसावृतम् ॥ एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ १९ ॥ तत्र दृष्ट्वा मणिं श्रेष्ठं बालक्रीडनकं कृतम् ॥ हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ २० ॥ तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ॥ तच्छ्रुत्वाऽभ्यद्रवत् क्रुद्धो जाम्बवान् बलिनां वरः ॥ २१ ॥ स वै भगवता तेन युयुधे स्वामिनाऽऽत्मनः ॥ पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ २२ ॥ द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ॥ आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ २३ ॥ आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः ॥ वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४ ॥ कृष्णमुष्टिविनिष्पातनिष्पिष्टांगोरुबन्धनः ॥ क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥ २५ ॥ जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् ॥ विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥

तं हर्तुं बालसमीपे तस्थौ ॥२०॥ ततोऽपूर्वं नरं दृष्ट्वा धात्री चुक्रोश । तत् श्रुत्वा जाम्बवान् क्रुद्धः सन्नभ्यद्रवत् ॥२१॥ स प्राकृतं पुरुषं मत्वा कृष्णेन सह युयुधे ॥२२॥ तयोरुभयोः अष्टाविंशतिदिनान्यविरतं द्वन्द्वयुद्धं बभूव ॥ २३ ॥ २४ ॥ ततः कृष्णमुष्टिभिः श्लथिताङ्गो जाम्बवान् विस्मितः सन् कृष्णं जगाद ॥ २५ ॥ हे भगवन् ! सर्वभूतानामीश्वरं विष्णुं त्वां जाने ॥ २६ ॥

हे हरे त्वं विश्वसृजां स्रष्टा कालश्च ॥२७॥ यस्य क्रोधकटाक्षेण समुद्रो भीतः सन् मार्गं ददौ । यस्य बाणैः रावणादीनां मस्तकानि भुवि पेतुः स एव त्वमिति जाने॥२८॥ततः कृष्णस्तं पाणिनाऽभिमृश्य कृपया गम्भीरया गिरा जगाद॥२९॥३०॥हे जाम्बवान् ! अहं मिथ्याभिशापं मणिना दूरीकर्तुमिह प्राप्तः॥३१॥इत्युक्तो जाम्बवान् मणिना सह जाम्बवतीं कन्यां कृष्णाय ददौ॥३२॥ततो बिलद्वारे स्थिताः यादवाः कृष्णस्य निर्गमं

त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ॥ कालः कलयतामीशः पर आत्मा तथाऽऽत्मनाम् ॥ २७ ॥ यस्ये- षदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिंगलोऽब्धिः ॥ सेतुः कृतः स्वयश उज्ज्वलिता च लङ्का रक्षश्शिरांसि भुवि पेतुरिषुक्षतानि ॥ २८ ॥ इति विज्ञातविज्ञानमृक्षराजानमच्युतः ॥ व्याजहार महाराज भगवान् देवकीसुतः ॥ २९ ॥ अभिमृश्यारविन्दाक्षः पाणिना शङ्करेण तम् ॥ कृपया परया भक्तं प्रेमगम्भीरया गिरा ॥ ३० ॥ मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ॥ मिथ्याऽभिशापं प्रमृजन्नात्मनो मणिनाऽमुना ॥ ३१ ॥ इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा ॥ अर्हणार्थं स मणिना कृष्णायोपजहार ह ॥ ३२ ॥ अदृष्ट्वा निर्गमं शौरेः प्रवि- ष्टस्य बिलं जनाः ॥ प्रतीक्ष्य द्वादशाहानि दुःखिता स्वपुरं ययुः ॥३३॥ निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः ॥ सुहृदो ज्ञातयोऽशोचन् बिलात् कृष्णमनिर्गतम् ॥ ३४ ॥ सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः ॥ उप- तस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ३५ ॥ तेषां तु देव्युपस्थानात् प्रत्यादिष्टाशिषा स च ॥ प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन् हरिः ॥ ३६ ॥ उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ॥ सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ॥ ३७ ॥ सत्राजितं समाहूय सभायां राजसन्निधौ ॥ प्राप्तिं चाख्याय भगवान् मणिं तस्मै न्यवेदयत ॥ ३८ ॥

द्वादश दिनानि प्रतीक्ष्य दुखिताः द्वारकामेत्य सर्वमूचुः ॥३३॥ तत् श्रुत्वा रुक्मिणीदेवकीवसुदेवादयो ज्ञातयोऽशोचन् ॥३४॥ ततो द्वारकौकसः सत्राजितं शपन्तः सन्तः कृष्णप्राप्तये चन्द्रभागां नाम दुर्गामुपासाञ्चक्रिरे ॥३५॥ ततः आराधनादेव सस्त्रीकः श्रीकृष्णो लोकान् हर्षयन् प्रादुर्ब- भूव॥३६॥ततः सर्वे जनाः मणिग्रीवं पत्नीसहितं तं प्राप्य जातोत्सवाः आसन्॥३७॥ततः कृष्णः सभायां सत्राजितमाहूय मणिप्राप्तिमाख्याय

१ तथा । २ दत्तयाऽऽशिषा ।

तस्मै मणिं ददौ ॥३८॥ स लज्जितः सन् मणिं गृहीत्वा स्वगृहं जगाम ॥३९॥ ( यदचिन्तयत् तदाह) ममाऽपराधं कथं मृजामि । अच्युतः कथं प्रसीदेत् ॥ ४० ॥ किं कृत्वा मम भद्रं स्यात् । मां जनो न शपेत् ॥४१॥ एवं ध्यायन् कृष्णाय कन्यां मणिं च दास्यामि । अयं श्रेष्ठः उपायः । अन्यथा तस्य शान्तिर्न ॥ ४२ ॥ एवं सत्राजिन्मनसि निश्चित्य मणिना सह स्वसुतां सत्यभामां कृष्णाय ददौ ॥ ४३ ॥ ततो भगवान् पूर्वं बहुभिर्याचितां तां यथाविधि परिणिन्ये ॥ ४४ ॥ सत्राजिता मणौ दत्ते सति तं भगवानाह—हे सत्राजिद् ! वयं मणिं न

स चातिव्रीडितो रत्नं गृहीत्वाऽवाङ्मुखस्ततः ॥ अनुतप्यमानो भवनमगमत्स्वेन पाप्मना ॥ ३९ ॥ सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ॥ कथं मृजाम्यात्मरजः प्रसीदेद् वाऽच्युतः कथम् ॥४०॥ किं कृत्वा साधु मह्यं स्यान्न शपेद् वा जनो यथा ॥ अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥ ४१ ॥ दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ॥ उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥ ४२ ॥ एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम् ॥ मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥४३॥ तां सत्यभामां भगवानुपयेमे यथाविधि ॥ बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥४४॥ भगवानाह न मणिं प्रतीच्छामो वयं नृप ॥ तवास्तां देवभक्तस्य वयं च फलभागिनः ॥ ४५ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे जाम्बवतीविवाहो नामषट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ श्रीशुक उवाच ॥ विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् ॥ कुन्तीं च कुल्यकरणे[1] सहरामो ययौ कुरून् ॥ १ ॥ भीष्मं कृपं सविदुरं गान्धारीं द्रोणमेव च ॥ तुल्यदुःखौ च संगम्य हा कष्टमिति होचतुः ॥ २ ॥

स्वीकुर्मः । अयं मणिः सूर्यभक्तस्य तवैवास्ताम् । वयं फलभागिनः ॥४५॥ इति श्रीभागवते दश० चू० उत्त० षट्पञ्चाशत्तमोऽध्यायः॥५६॥ सप्तपञ्चाशत्तमे तु पुनः शतधनोर्वधे । प्राप्तं स्म दुर्यशो मार्ष्टि कृष्णोऽक्रूराहृतान्मणेः ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! विज्ञातार्थोऽपि कृष्णः पाण्डवान् दग्धान् श्रुत्वा सरामो हस्तिनापुरं ययौ ॥ १ ॥ तत्र भीष्मद्रोणविदुरान् मिलित्वा तुल्यदुःखौ हा कष्टमित्यूचतुः ॥ २ ॥

१ कुलोचितव्यवहारार्थम् ।

हे राजन्! एतदन्तरं लब्ध्वाऽक्रूरकृतवर्माणौ शतधन्वानं मणिः कुतो न गृह्यते त्वयेत्यूचतुः ॥३॥ यः सत्राजिदस्मभ्यं कन्यां दातुं प्रतिश्रुत्य कृष्णाय ददौ स न कुतो म्रियताम्॥४॥एवं ताभ्यां भिन्नमतिः शतधन्वा शयानं सत्राजितं हत्वा॥५॥स्त्रीणां विक्रोशमानानां सतीनां मणिं गृहीत्वा ययौ॥६॥ तदा सत्यभामा तं पितरं वीक्ष्य ताततातेति विललाप ॥७॥ ततस्तं तैलद्रोण्यां निक्षिप्य हस्तिनापुरं गत्वा कृष्णाय पितुर्वधं कथयामास ॥८॥ तदा रामकृष्णौ नृलोक इव विलापं चक्रतुः । ततः साग्रजः सभार्यः कृष्णो द्वारकामेत्य शतधन्वानं हन्तुं मणिं हर्तुं मन-

लब्ध्वैतदन्तरं राजन् शतधन्वानमूचतुः ॥ अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥ ३ ॥ योऽस्मभ्यं संप्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः ॥ कृष्णायादान्न सत्राजित्कस्माद् भ्रातरमन्वियात् ॥४॥ एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः॥ शयानमवधील्लोभात्स पापः क्षीणजीवितः ॥५॥ स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत् ॥ हत्वा पशून् सौनिकवन्मणिमादाय जग्मिवान् ॥६॥ सत्यभामा च पितरं हतं वीक्ष्य शुचार्पिता ॥ व्यलपत् ताततातेति हा हतास्मीति मुह्यती ॥ ७ ॥ तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् ॥ कृष्णाय विदितार्थाय तप्ताऽचख्यौ पितुर्वधम् ॥ ८ ॥ तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम् ॥ अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥ ९ ॥ आगत्य भगवांस्तस्मात् सभार्यः साग्रजः पुरम् ॥ शतधन्वानमारेभे हन्तुं हर्तुं मणिं ततः ॥१०॥ सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया॥ साहाय्ये कृतवर्माणमयाचत सचाब्रवीत् ॥ ११ ॥ नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः ॥ को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् ॥१२॥ कंसः सहानुगोऽपीतो यद्द्वेषात् त्याजितः श्रिया ॥ जरासन्धः सप्तदश संयुगान् विरथो गतः ॥ १३ ॥ प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत ॥ सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम् ॥ १४ ॥

श्चक्रे ॥ ९ ॥ १० ॥ तदा तदुद्योगं ज्ञात्वा शतधन्वा भीतः सन् साहाय्यार्थं कृतवर्माणं ययाचे ॥११॥ तदा स आह ईश्वरयोस्तयोरपराधं न कुर्याम् ॥१२॥ यद्द्वेषात् कंसो मृतः, जरासन्धः सप्तदशवारं विरथो गतः ॥१३॥ इत्याकर्ण्य शतधन्वाऽक्रूरं साहाय्यार्थं ययाचे। सोप्याह। ईश्वरयोर्बलं जानन् को विरुध्येत ॥ १४ ॥

१ प्रसेनम् । २ अनुगच्छेत् । म्रियतामित्यर्थः । ३ व्याप्ता । ४ क्षिप्त्वा । ५ प्रतिकूलम् ।

यो भवान् लीलया विश्वस्य सृष्ट्यादि करोति॥१५॥यः सप्तवर्षः पाणिना गोवर्धनं दधार ॥१६॥ तस्मै भगवते कृष्णाय नमः॥१७॥एवमक्रूरेण कथितः शतधन्वा मणिमक्रूरे न्यस्य शतयोजनगामिनमश्वमारुह्य प्राणरक्षणाय ययौ॥१८॥तदा तत्पलायनं श्रुत्वा रामकृष्णौ रथमारुह्य श्वशुरहन्तारंतमन्वयाताम् ॥१९॥ ततः शतधन्वा मिथिलादेशोपवने श्रान्तं पतितमश्वं त्यक्त्वा पद्भ्यामधावत्। कृष्णोऽपि रथे रामं निधाय रुषा पद्भ्यामन्वद्रवत् ॥२०॥ चक्रेण शिरश्छित्त्वा वस्त्रयोर्मणिं व्यचिनोत् ॥२१॥ अप्राप्तमणिः कृष्णः आगत्य रामं जगाद–मया शतधन्वा वृथा

य इदं लीलया विश्वं सृजत्यवति हन्ति च।चेष्टां विश्वसृजो यस्य न विदुर्मोहिताऽजया॥१५॥यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना॥दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः॥१६॥नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे॥अनन्तायादिभूताय कूटस्थायात्मने नमः॥१७॥प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् ॥ तस्मिन् न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥१८॥ गरुडध्वजमारुह्य रथं रामजनार्दनौ ॥ अन्वयातां महावेगैरश्वैः राजन् गुरुद्रुहम्॥१९॥मिथिलाया उपवने विसृज्य पतितं हयम् ॥ पद्भ्यामधावत् संत्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा ॥२०॥ पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना ॥ चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम्॥२१॥अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् ॥ वृथा हतः शतधनुर्मणिस्तत्र न विद्यते॥२२॥ तत आह बलो नूनं स मणिः शतधन्वना॥कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेष पुरं व्रज॥२३॥अहंविदेहमिच्छामि द्रष्टुं प्रियतमं मम॥इत्युक्त्वा मिथिलां राजन् विवेश यदुनन्दनः॥२४॥ तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः॥अर्हयामास विधिवदर्हणीयं समर्हणैः॥उवास तस्यां कतिचिन्मिथिलायां समा विभुः॥२५॥

हतः । तत्र मणिर्नास्ति ॥२२॥ तदा रामस्तमाह । हे कृष्ण ! स मणिः शतधन्वना कस्मिंश्चित् पुरुषे न्यस्तः । तमन्विच्छ । पुरं व्रज ॥२३॥ अस्माकं मणेः प्रयोजनं नास्ति । अहं जनकं द्रष्टुमिच्छामि इत्युक्त्वा रामो मिथिलां विवेश॥२४॥ ततो जनको रामं दृष्ट्वोत्थाय प्रीतोऽर्हणैः पूजयामास । तेन प्रार्थितस्तत्र कतिचित् संवत्सरानुवास ॥ २५ ॥

१ मोहिताः अजया मायया । संधिरार्षः । २ वर्यम् । ३ तीक्ष्णः ।

ततो दुर्योधनो रामाद् गदायुद्धं शिशिक्षे ॥२६॥ ततः कृष्णो द्वारकामेत्य शतधन्वनो मरणं मणेरप्राप्तिं च सत्यभामायै जगाद ॥२७॥ ततः शतधन्वनः क्रियाः कारयामास ॥२८॥ ततः शतधन्वनो वधं श्रुत्वाऽक्रूरकृतवर्माणौ भयेन द्वारकायाः पलायितौ ॥ २९ ॥ ततोऽक्रूरे गते सति द्वारकायां शारीराः दैविकादयस्तापा अभवन् ॥३०॥ इत्थमेके कथयन्ति । यत्र कृष्णनिवासस्तत्राऽरिष्टदर्शनं घटेत किम् ॥३१॥ किञ्च प्राक्

ततोऽशिक्षद् गदां काले धार्तराष्ट्रः सुयोधनः ॥ २६ ॥ केशवो द्वारकामानितः प्रीतियुक्तेन जनकेन महात्मना ॥ ततोऽशिक्षद् गदां काले धार्तराष्ट्रः सुयोधनः ॥ २६ ॥ केशवो द्वारका-
मेत्य निधनं शतधन्वनः ॥ अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद् विभुः ॥ २७ ॥ ततः स कारयामास क्रिया
बन्धोर्हतस्य वै ॥ साकं सुहृद्भिर्भगवान् या याः स्युः साम्परायिकाः॥२८॥अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम् ॥
व्यूषतुर्भयवित्रस्तो द्वारकायाः प्रयोजकौ ॥ २९ ॥ अक्रूरे प्रोषितेऽरिष्टान्यासन् वै द्वारकौकसाम् ॥ शारीरा मान-
सास्तापा मुहुर्दैविकभौतिकाः ॥३०॥ इत्यङ्गोपदिशन्त्येके विस्मृत्य प्रागुदाहृतम् ॥ मुनिवासनिवासे किं घटेतारिष्ट-
दर्शनम् ॥ ३१ ॥ देवेऽवर्षति काशीशः श्वफल्कायागताय वै ॥ स्वसुतां गान्दिनीं प्रादात् ततोऽवर्षत् स्म काशिषु
॥ ३२ ॥ तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह ॥ देवोऽभिवर्षते तत्र नोपतापा न मारिकाः ॥ ३३ ॥ इति वृद्धवचः
श्रुत्वा नेतावदिह कारणम् ॥ इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ॥ ३४ ॥ पूजयित्वाभिभाष्यैनं कथयित्वा
प्रियाः कथाः ॥ विज्ञाताखिलचित्तज्ञः स्मयमान उवाच ह ॥ ३५ ॥ ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना ॥
स्यमन्तको मणिः श्रीमान् विदितः पूर्वमेव नः ॥ ३६ ॥

काश्यामनावृष्टौ सत्यामागताय श्वफल्काय काशिराजः स्वसुतां गान्दिनीं प्रादात् । ततो वृष्टिरभवत् ॥३२॥ तत्सुतोऽक्रूरोऽपि तत्प्रभावो यत्र तिष्ठति तत्रोपतापादयो न भवन्ति ॥३३॥ इति वृद्धवचः श्रुत्वाऽक्रूरमानाय्य कृष्णः सभायां पूजयित्वा प्रियाः कथाः कथयित्वा स्मयमानः उवाच ॥ ३४ ॥ ३५ ॥ हे अक्रूर ! शतधन्वना स्यमन्तकमणिस्त्वयि न्यस्तः सोऽस्माभिः पूर्वमेव विदितः ॥ ३६ ॥

---

१ पारलौकिक्यः । २ मणिहरणे शतधन्वनः प्रवर्तकौ । ३ मुनीनां वासो यस्मिन् तस्मिन् ।

सत्राजितोऽनपत्यत्वाद्दायं सत्यभामासुताः गृह्णीयुः ॥३७॥ तथापि स मणिस्त्वय्यास्ताम् । परन्तु रामो मणिविषये मां प्रति न विश्वसिति ॥३८॥ अतो मणिं दर्शयित्वा बन्धूनां शान्तिं कुरु । नास्तीति न वक्तव्यं, यतस्ते रुक्मवेदयो मखाः अद्य वर्तन्ते ॥३९॥ एवं भगवता साममभिरुक्तोऽक्रूरो वाससाच्छन्नं मणिं तस्मै ददौ ॥ ४० ॥ ततः कृष्णस्तं मणिं ज्ञातिभ्यो दर्शयित्वा स्वमिथ्याभिशापं दूरीकृत्य पुनरक्रूराय ददौ ॥ ४१ ॥ यः एतत् श्रीकृष्णगुणैर्युक्तं स्यमन्तकोपाख्यानं पठति शृणोति वा स दुष्कीर्तिमपोह्य शान्तिं याति ॥४२॥ इति श्रीभागवते दश० चू० उत्त० सप्त-

सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहितुः सुताः ॥ दायं निनीयापः पिण्डान् विमुच्य[1]र्णं स च शोषितम्[2] ॥३७॥ तथापि दुर्धर-स्त्वय्येवास्तां सुव्रत मणिः ॥ किन्तु मामग्रजः सम्यङ्न प्रत्येति मणिं प्रति ॥ ३८ ॥ दर्शयस्व महाभाग बन्धूनां शान्तिमावह ॥ अव्युच्छिन्ना मखास्तेऽद्य वर्तन्ते रुक्मवेदयः ॥ ३९ ॥ एवं सामभिरालब्धः श्वफल्कतनयो मणिम् ॥ आदाय वाससाच्छन्नं ददौ सूर्यसमप्रभम् ॥ ४० ॥ स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः ॥ विसृ[3]ज्य मणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः ॥ ४१ ॥ यस्त्वेतद्भगवत ईश्वरस्य विष्णोर्वीर्याढ्यं वृजिनहरं सुमङ्गलं च ॥ आख्यानं पठति शृणोत्यनुस्मरेद्वा दुष्कीर्तिं दुरितमपोह्य याति शांतिम् ॥ ४२ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे स्यमन्तकोपाख्यानं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ श्रीशुक उवाच ॥ एकदा पाण्डवान् द्रष्टुं प्रतीतान्[4] पुरुषोत्तमः ॥ इन्द्रप्रस्थं गतः श्रीमान् युयुधानादिभिर्वृतः ॥ १ ॥ दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम् ॥ उत्तस्थुर्युगपद्वीराः प्राणं मुख्यमिवागतम् ॥ २ ॥ परिष्वज्याच्युतं वीरा अङ्गसङ्गहतैनसः ॥ सानुराग-स्मितं वक्त्रं वीक्ष्य तस्य मुदं ययुः ॥ ३ ॥

पञ्चाशत्तमोऽध्यायः ॥५७॥ अष्टपञ्चाशत्तमे तु कृष्णः पञ्च करेऽग्रहीत् ॥ कालिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम् ॥१॥ कालिन्दीं निजलाभाय तपः परमुपेयुषीम् ! परिणेष्यन् प्रियावासमिन्द्रप्रस्थमथागमत् ॥२॥ श्रीशुक उवाच ॥ हे राजन् ! एकदा कृष्णः सात्यक्यादिभिः सह पाण्डवान् द्रष्टुमिन्द्रप्रस्थं गतः ॥१॥ पाण्डवास्तं कृष्णं प्राप्तं दृष्ट्वा युगपदुत्थाय परिष्वज्य सुस्मितं तन्मुखं वीक्ष्य मुदं प्रापुः ॥ २ ॥ ३ ॥

१ दत्त्वा । २ दायविशेषणमेतत् । ३ 'विमृज्य' इ० पा० । ४ नष्टानपि द्रुपदगृहे पुनर्दृष्टान् ।

ततः कृष्णो भीमयुधिष्ठिरौ नत्वाऽऽर्जुनमालिङ्ग्य नकुलसहदेवाभ्यां वन्दितः सन्॥४॥आसने उपविवेश। ततो नवोढा द्रौपदी लज्जया तं ननाम ॥५॥ तथैव सात्यकिरपि तैः पूजितः सन्नन्यासने उपविष्टः॥६॥ ततः कृष्णः पृथां नत्वा कुशलं पृष्टवान्॥७॥तदा पृथा तान् क्लेशान् स्मरन्ती सती तमाह॥८॥हे कृष्ण! त्वया यदाऽक्रूरः प्रेषितस्तदैव नः कुशलं जातम्॥९॥तव स्वः परो न। तथापि स्मरतां निरन्तरं क्लेशान् हंसि।१०।युधिष्ठिर उवाच॥

युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम् ॥ फाल्गुनं परिरभ्याथ यमाभ्यां चाभिवंदितः ॥४॥ परमासन आसीनं कृष्णा कृष्णमनिंदिता ॥ नवोढा व्रीडिता किञ्चिच्छनैरेत्याभ्यवन्दत ॥ ५ ॥ तथैव सात्यकिः पार्थैः पूजितश्चाभिवंदितः ॥ निषसादासनेऽन्ये च पूजिताः पर्युपासिताः[1] ॥ ६ ॥ पृथां समागत्य कृताभिवादनस्तयातिहार्दार्द्रदृशाऽभिरम्भितः ॥ आपृष्टवांस्तां कुशलं सहस्नुषां पितृष्वसारं परिपृष्टबान्धवः ॥ ७ ॥ तमाह प्रेमवैक्लव्य[2]रुद्धकण्ठाश्रुलोचना ॥ स्मरन्ती तान् बहून् क्लेशान् क्लेशापायात्मदर्शनम्[3] ॥ ८ ॥ तदैव कुशलं नोऽभूत् सनाथास्ते कृता वयम् ॥ ज्ञातीन् नः स्मरता कृष्ण भ्राता मे प्रेषितस्त्वया ॥९॥ न तेऽस्ति स्वपरभ्रांतिर्विश्वस्य सुहृदात्मनः ॥ तथापि स्मरतां शश्वत् क्लेशान् हंसि हृदि स्थितः ॥ १० ॥ युधिष्ठिर उवाच ॥ किं न आचरितं श्रेयो न वेदाहमधीश्वरः ॥ योगेश्वराणां दुर्दर्शो यन्नो दृष्टः कुमेधसां[4] ॥ ११ ॥ इति वै वार्षिकान् मासान् राज्ञा सोऽभ्यर्थितः सुखम् ॥ जनयन्नयनानन्दमिन्द्रप्रस्थौकसां विभुः ॥ १२ ॥ एकदा रथमारुह्य विजयो वानरध्वजम् ॥ गाण्डीवं धनुरादाय तूणौ चाक्षयसायकौ ॥ १३ ॥ साकं कृष्णेन संनद्धो विहर्तुं गहनं वनम् ॥ बहुव्यालमृगाकीर्णं प्राविशत् परवीरहा ॥ १४ ॥ तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून् ॥ शरभान्गवयान्खड्गान्हरिणाञ्शशशल्लकान् ॥ १५ ॥

हे कृष्ण! अस्माभिः श्रेयः किमाचरितं यतस्त्वं दृष्टः॥११॥ हे राजन् ततो युधिष्ठिरेण प्रार्थितो भगवान् वार्षिकान् मासानवसत्॥१२॥(चतुर्थविवाहमाह) एकदाऽर्जुनः कृष्णेन सह रथमारुह्य धनुर्गृहीत्वा ॥१३॥ विहर्तुं वनं प्राविशत् ॥१४॥ तत्र व्याघ्रसूकरमहिषहरिणादीन् शरैर्हत्वा ॥१५॥

१ 'पर्युपासत' इ० पा०। २ स्नेहः। ३ क्लेशापाये आत्मनि दर्शने यस्य। ४ विषयासक्तचित्तानाम्।

सेवकैस्तान् मेध्यान् युधिष्ठिराय प्रैषयत् ततोऽर्जुनस्तृषितः सन् यमुनां जगाम ॥ १६ ॥ तत्राचम्य जलं पीत्वा कृष्णपार्थौ तपश्चरन्तीं कन्यां ददृशतुः ॥ १७ ॥ तदा कृष्णेन प्रेषितोऽर्जुनस्तां गत्वा पप्रच्छ ॥१८॥ हे कन्ये ! त्वं का ? कस्यासि ? किं चिकीर्षसि ? अहं त्वां पतिमिच्छन्तीं मन्ये । अतः सर्वं कथय ॥ १९ ॥ कालिन्द्युवाच ॥ हे पार्थ ! अहं सूर्यसुता विष्णुं पतिमिच्छन्ती तपोऽकरवम् ॥२०॥ अन्यं पतिं न वृणे । स भगवान् मे तुष्यताम् ॥ २१ ॥ अहं कालिन्दी यावद् विष्णुदर्शनं स्यात् तावदत्र यमुनातीरे एव वसामि ॥ २२ ॥ ततः

तान् निन्युः किङ्करा राज्ञे मेध्यान् पर्वण्युपागते ॥ तृट्परीतः परिश्रान्तो बीभत्सुर्यमुनामगात् ॥ १६ ॥ तत्रोपस्पृश्य विशदं पीत्वा वारि महारथौ ॥ कृष्णौ ददृशतुः कन्यां चरन्तीं चारुदर्शनाम् ॥ १७ ॥ तामासाद्य वरारोहां सुद्विजां रुचिराननाम् ॥ पप्रच्छ प्रेषितः सख्या फाल्गुनः प्रमदोत्तमाम् ॥१८॥ का त्वं कस्यासि सुश्रोणि कुतोऽसि किं चिकीर्षसि ॥ मन्ये त्वां पतिमिच्छन्तीं सर्वं कथय शोभने ॥ १९ ॥ कालिन्द्युवाच ॥ अहं देवस्य सवितुर्दुहिता पतिमिच्छती ॥ विष्णुं वरेण्यं वरदं तपः परममास्थिता ॥२०॥ नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् ॥ तुष्यतां मे स भगवान् मुकुन्दोऽनाथसंश्रयः ॥ २१ ॥ कालिंदीति समाख्याता वसामि यमुनाजले ॥ निर्मिते भवने पित्रा यावदच्युतदर्शनम् ॥ २२ ॥ तथाऽवदद् गुडाकेशो वासुदेवाय सोऽपि ताम् ॥ रथमारोप्य तद् विद्वान् धर्मराजमुपागमत् ॥ २३ ॥ तदैव कृष्णः संदिष्टः पार्थानां परमाद्भुतम् ॥ कारयामास नगरं विचित्रं विश्वकर्मणा ॥ २४ ॥ भगवांस्तत्र निवसन् स्वानां प्रियचिकीर्षया ॥ अग्नये खाण्डवं दातुमर्जुनस्यास सारथिः ॥ २५ ॥ सोऽग्निस्तुष्टो धनुरदाद्धयाञ्श्वेतान् रथं नृप ॥ अर्जुनायाक्षयौ तूणौ वर्म चाभेद्यमस्त्रिभिः ॥ २६ ॥

पार्थः कृष्णाय तथैवाऽवदत् । स कृष्णस्तां रथमारोप्य धर्मराजं जगाम ॥ २३ ॥ यदैव पार्थैर्विज्ञापितः कृष्णस्तदैव विश्वकर्मणा तेषां नगरं कारयामास ॥ २४ ॥ तत्र वसन् सन्नग्नये खाण्डवं वनं दातुमर्जुनस्य सारथिर्बभूव ॥ २५ ॥ ततस्तुष्टोऽग्निरर्जुनाय धनुरश्वान् रथमक्षयसायकौ तूणावभेद्यं कवचं च ददौ ॥ २६ ॥

अग्नेर्मोचितो मयोऽर्जुनाय सभां ददौ, यस्यां दुर्योधनाय जलस्थलयोर्दृष्टेर्भ्रम आसीत् ॥ २७ ॥ ततो युधिष्ठिरेणानुज्ञातः कृष्णः सात्यकि प्रमुखैर्वृतः सन् ॥ २८ ॥ द्वारकामेत्य सुमुहूर्ते विधिना कालिन्दीमुपयेमे ॥२९॥ ( पञ्चमविवाहमाह ) अवन्तिराजानौ विन्दानुविन्दौ स्वयं-वरे कृष्णे सक्तां स्वभगिनीं न्यषेधताम् ॥ ३० ॥ ततः कृष्णः पितृभगिनीसुतां तां मित्रविन्दां राज्ञां पश्यतां बलात्कारेण हृतवान् ॥३१॥ ( षष्ठ विवाहमाह ) अथाऽयोध्यापतिर्नग्नजिन्नाम राजाऽऽसीत् । तस्य सत्या नाम कन्या ॥ ३२ ॥ तस्याः स्वयंवरे राजानस्तीक्ष्णशृङ्गान्

मयश्च मोचितो वह्नेः सभां सख्य उपाहरत् ॥ यस्मिन् दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः ॥ २७ ॥ स तेन समनुज्ञातः सुहृद्भिश्चानुमोदितः ॥ आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः ॥ २८॥ अथोपयेमे कालिंदीं सुपुण्यर्त्वृक्ष ऊर्जिते ॥ वितन्वन् परमानन्दं स्वानां परममङ्गलम् ॥२९॥ विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ ॥ स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ॥३०॥ राजाधिदेव्यास्तनयां मित्रविंदां पितृष्वसुः ॥ प्रसह्य हृतवान् कृष्णो राजन् राज्ञां प्रपश्यताम् ॥३१॥ नग्नजिन्नाम कौसल्य आसीद् राजातिधार्मिकः ॥ तस्य सत्याऽभवत कन्या देवी नाग्नजिती नृप ॥३२॥ न तां शेकुर्नृपा वोढुमजित्वा सप्त गोवृषान् ॥ तीक्ष्णशृंगान् सुदुर्धर्षान् वीरगन्धासहान् खलान् ॥३३॥ तां श्रुत्वा वृषजिल्लभ्यां भगवान् सात्वतां पतिः ॥ जगाम कौसल्यपुरं सैन्येन महता वृतः ॥ ३४ ॥ स कोसलपतिः प्रीतः प्रत्युत्थानासना-दिभिः ॥ अर्हणेनापि गुरुणाऽपूजयत्प्रतिनन्दितः ॥ ३५ ॥ वरं विलोक्याभिमतं समागतं नरेन्द्रकन्या चकमे रमाप-तिम् ॥ भूयादयं मे पतिराशिषोऽमलाः करोतु सत्या यदि मे धृतो व्रतैः ॥३६॥ यत्पादपङ्कजरजः शिरसा बिभर्ति श्रीरब्जजः स गिरिशः सह लोकपालैः ॥ लीलातनूः स्वकृतसेतुपरीप्सया यः काले दधत् स भगवान् मम केन तुष्येत् ॥३७॥

खलान् सप्त गोवृषान् न जित्वा तां कन्यां वोढुं न शेकुः ॥३३॥ एवं वृषजिल्लभ्यां तां श्रुत्वा कृष्णः सेनया सह कौसल्यपुरं जगाम ॥३४॥ ततः कृष्णे आगते नग्नजिद् राजा प्रीतः सन् अर्हणैः पूजयामास ॥ ३५ ॥ तदा सत्या रमापतिं विलोक्य वरं चकमे । अयं पतिर्भूयात् ॥ ३६ ॥ यत्पादरजः शिवादयः शिरसा धारयन्ति स श्रीशो मम केन तुष्येत् ॥ ३७ ॥

१ दृष्टि:। २ सुपुण्य ऋतुः ऋक्षं च यस्मिन् तस्मिन् । ३ ग्रहबलवति मुहूर्ते । ४ वृषान् जयति यस्तेन लभ्याम् । ५ हृदि चिन्तितः । ६ मर्यादा । ७ रक्षणेच्छया ।

ततो राजाऽऽह—हे जगत्पते! पूर्णस्य तव स्वल्पकोऽहं किं करवाणि॥३८॥श्रीशुक उवाच॥तदा कृतार्हणः कृष्णो हृष्टः सन् जगाद॥३९॥ श्रीभगवानुवाच ॥ हे नरेन्द्र! क्षत्रियस्य याञ्चा निन्दिता। तथापि तव सौहृदेच्छया त्वदीयां कन्यां याचे । न वयं द्रव्यादिप्रदाः॥४०॥ राजोवाच ॥ हे नाथ ! त्वत्तोऽधिको वरः कोऽन्योऽस्ति यस्याङ्के श्रीर्वसति॥४१॥परन्तु पुंसां वीर्यपरीक्षार्थं पूर्वं पणो मया कृतः॥४२॥ एतैरशिक्षितैरनाथितैः

अर्चितं पुनरित्याह नारायणजगत्पते ॥ आत्मानन्देन पूर्णस्य करवाणि किमल्पकः ॥ ३८ ॥ श्रीशुक उवाच ॥ तमाह भगवान् तुष्टः कृतासनपरिग्रहः ॥ मेघगम्भीरया वाचा सस्मितं कुरुनन्दन ॥ ३९ ॥ श्रीभगवानुवाच ॥ नरेन्द्र याञ्चा कविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः ॥ तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां नहि शुल्कदा वयम् ॥ ४० ॥ राजोवाच ॥ कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः ॥ गुणैकधाम्नो यस्यांगे श्रीर्वसत्यनपायिनी ॥४१॥ किंत्वस्माभिः कृतः पूर्वं समयः सात्वतर्षभ ॥ पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया ॥४२॥ सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः ॥ एतैर्भग्ना सुबहवो भिन्नगात्रा नृपात्मजाः ॥ ४३ ॥ यदीमे निगृहीताः स्युस्त्वयैव यदुनन्दन ॥ वरो भवानभिमतो दुहितुर्मे श्रियः पते ॥४४॥ एवं समयमाकर्ण्य बद्ध्वा परिकरं प्रभुः ॥ आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान् ॥ ४५ ॥ बद्ध्वा तान् दामभिः शौरिर्हतदर्पान् हतौजसः ॥ व्यकर्षल्लीलया बद्धान्बालो दारुमयान् यथा ॥४६॥ ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः ॥ तां प्रत्यगृह्णाद्भगवान् सदृशीं विधिवत् प्रभुः ॥ ४७ ॥ राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम् ॥ लेभिरे परमानन्दं जातश्च परमोत्सवः ॥ ४८ ॥

सप्तगोवृषैः पूर्वं बहवो नृपाः भग्नगात्राः आसन् ॥४३॥ अतस्त्वयैते सप्त वृषाः निगृहीता यदि स्युः तर्हि मे कन्याया वरो भवान् मान्यः ॥४४॥ तदा कृष्णः एवं पणं श्रुत्वा परिकरं बद्ध्वाऽऽत्मानं सप्तधा कृत्वा लीलयैव ॥४५॥ तान् वृषान् दामभिर्बध्वा व्यकर्षयत् बालो दारुमयान् यथा ॥४६॥ ततः प्रीतो नग्नजित् तां कृष्णाय ददौ। कृष्णस्तां विधिनोपयेमे ॥४७॥ तदा राजपत्न्यः स्वदुहितुः प्रियं पतिं कृष्णं लब्ध्वा मुमुदिरे ॥४८॥

१ नाथः नासारज्जुः सैषां न संजातेत्यनाथिताः तैः । २ अशिक्षिताः । ३ अवरावत्ताः ।

शङ्खभेर्यादयश्च नेदुः । द्विजाः आशिषो ददुः । वस्त्रालङ्कृताः नराः महोत्सवं चक्रुः ॥४९॥ ततो राजा दुहित्रे पारिबर्हं दशसहस्रं धेनूः स्त्रीणां
त्रिसाहस्रम् ॥५०॥ नव सहस्राणि गजान् नवलक्षरथान् नवकोटयश्वान् नवार्बुदनरान् ददौ । ततौ दम्पती रथमारोप्य प्रस्थापयामास ॥५१॥
॥५२॥ तत् श्रुत्वा भग्नवीर्याः भूपाः कन्यां नयन्तं कृष्णं पथि रुरुधुः ॥५३॥ ततः शरान् प्रक्षिपतस्तान् बन्धुप्रियकृदर्जुनो गाण्डीवेन पीडया-
मास ॥५४॥ ततः कृष्णो द्वारकामेत्य तया सह रेमे ॥५५॥ (सप्तमं विवाहमाह) ततः पितृष्वसुः श्रुतकीर्तेः सुतां भद्रां कृष्णः उपयेमे ॥५६॥ (अष्टमं

शंखभेर्यानकानेदुर्गीतवाद्यद्विजाशिषः ॥ नरा नार्यः प्रमुदिताः सुवासस्स्त्रगलङ्कृताः ॥ ४९ ॥ दशधेनुसहस्राणि पारि-
बर्हमदाद्विभुः ॥ युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम् ॥ ५० ॥ नवनागसहस्राणि नागाच्छतगुणान् रथान् ॥ रथा-
च्छतगुणानश्वानश्वाच्छतगुणान् नरान् ॥५१॥ दम्पती रथमारोप्य महत्या सेनया वृतौ ॥ स्नेहप्रक्लिन्नहृदयो यापया-
मास कोसलः ॥५२॥ श्रुत्वैतद् रुरुधुर्भूपा नयन्तं पथि कन्यकाम् ॥ भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥५३॥
तानस्यतः शरव्रातान्बन्धुप्रियकृदर्जुनः ॥ गाण्डीवी कालयामास सिंहः क्षुद्रमृगानिव ॥५४॥ पारिबर्हमुपागृह्य द्वारका-
मेत्य सत्यया ॥ रेमे यदूनामृषभो भगवान् देवकीसुतः ॥ ५५ ॥ श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ॥ कैकेयीं
भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः ॥५६॥ सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् ॥ स्वयंवरे जहारैकः स सुपर्णः
सुधामिव ॥ ५७ ॥ अन्याश्चैवंविधा भार्याः कृष्णस्यासन् सहस्रशः ॥ भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥५८॥
इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे अष्टमाहेष्युद्वाहो नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ राजोवाच ॥
यथा हतो भगवता भौमो येन च ताः स्त्रियः ॥ निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥ १ ॥

विवाहमाह) ततो मद्राधिपतेः सुतां लक्ष्मणामेक एव कृष्णः स्वयंवरे आजहार (तस्याः विस्तरं त्र्यशीतितमेऽध्याये ८३ वक्ष्यति) ॥५७॥ एवं
भौमं हत्वा तस्य गृहादानीताः सहस्रशः कन्याः कृष्णस्य भार्याः आसन् ॥५८॥ इति श्रीभागवते दश० चू० उत्त० अष्टपञ्चाशत्तमोऽध्यायः ॥
॥५८॥ ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः । कन्याः सहस्रशः प्राप पारिजातं दिवोऽहरत् ॥१॥ परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ॥
आत्मारामोऽप्यसौ रेमे तद्गृहेषु गृहस्थवत् ॥ २ ॥ राजोवाच ॥ हे ब्रह्मन् भगवता येन कारणेन यथा भौमो हतः तद्वद ॥ १ ॥

श्रीशुक उवाच ॥ एकदा दुःखितेनेन्द्रेण विज्ञापितो भगवान् सत्यभामया सह गरुडारूढः सन् घोरैर्गिरिशस्त्रजलाग्निवायुमुरपाशैः सर्वतो वेष्टितं प्राग्ज्योतिषपुरं ययौ ॥ २ ॥ ३ ॥ हरिर्गदयाऽद्रीन् बाणैः शस्त्रदुर्गाणि चक्रेणाग्निं जलं वायुं चाऽसिना मुरपाशान् गदया च प्राकारान् बिभेद । शङ्खनादेन च शत्रूणां हृदयानि कम्पयामास ॥ ४ ॥ ५ ॥ तदा शङ्खशब्दं श्रुत्वा शयानः पञ्चमुखो मुरो जलादुत्तस्थौ ॥ ६ ॥

श्रीशुक उवाच ॥ इन्द्रेण हृतच्छत्रेण हृतकुण्डलबन्धुना[1] ॥ हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥ २ ॥ सभार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ ॥ गिरिदुर्गैश्शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम् ॥ मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥ ३ ॥ गदया निर्बिभेदाद्रीञ्शस्त्रदुर्गाणि सायकैः ॥ चक्रेणाग्निं जलं वायुं मुरपाशांस्तथासिना ॥ ४ ॥ शङ्खनादेन यन्त्राणि हृदयानि मनस्विनाम् ॥ प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः ॥५॥ पाञ्चजन्यध्वनिं श्रुत्वा युगान्ताशनिभीषणम् ॥ मुरः शयान उत्तस्थौ दैत्यः पञ्चशिरा जलात् ॥ ६ ॥ त्रिशूलमुद्यम्य सुदुर्निरीक्षणो युगान्तसूर्यानलरोचिरुल्बणः ॥ ग्रसंस्त्रिलोकीमिव पञ्चभिर्मुखैरभ्यद्रवत् तार्क्ष्यसुतं यथोरगः ॥ ७ ॥ आविध्य शूलं तरसा गरुत्मते निरस्य वक्त्रैर्व्यनदत् स पञ्चभिः ॥ स रोदसी सर्वदिशोऽम्बरं महानापूरयन्नण्डकटाहमावृणोत् ॥ ८ ॥ तदापतद् वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधौजसा ॥ मुखेषु तं चापि शरैरताडयत् तस्मै गदां सोऽपि रुषा व्यमुञ्चत ॥ ॥ ९ ॥ तामापतन्तीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा ॥ उद्यम्य बाहूनभिधावतोऽजितः शिरांसि चक्रेण जहार लीलया ॥ १० ॥

पञ्चमुखैस्त्रिलोकं ग्रसन् शूलमुद्यम्य कृष्णमभ्यद्रवत् ॥ ७ ॥ गरुडाय शूलं प्रक्षिप्य पञ्चमुखैर्व्यनदत् । स शब्दो ब्रह्माण्डमावृणोत् ॥ ८ ॥ तदा हरिस्तच्छूलं शराभ्यां त्रिखण्डं कृत्वा तं मुखेषु बाणैरताडयत् । सोऽपि मुरो रुषा कृष्णाय गदां व्यमुञ्चत् ॥९॥ तां गदां कृष्णः स्वगदया सहस्रधा छित्त्वा चक्रेण तस्य शिरांसि चिच्छेद ॥ १० ॥

१ हृते कुण्डले यस्याः साऽदितिर्बन्धुः माता यस्य तेन।

वसुः ५ नभस्वान् ६ अरुणः ७ तदा गतप्राणः सोऽम्भसि पपात । तस्य सप्त पुत्राः ॥११॥ ताम्रः १ अन्तरिक्षः २ श्रवणः ३ विभावसुः ४ वसुः ५ नभस्वान् ६ अरुणः ७ एते धृतायुधाः भौमप्रेरिताः सन्तः सैन्यपतिं पीठमग्रेकृत्य संग्रामे समागताः ॥१२॥ शरखड्गशक्तिशूलानि कृष्णे प्राक्षिपन् । ततः कृष्णस्त-च्छत्रकूटं स्वबाणैस्तिलशश्चकर्त ॥ १३ ॥ तान् पीठमुख्यान् यमालयं निनाय । तदा नरकः कृष्णचक्रेण सेनापतीन् नाशितान् निरीक्ष्य

तस्यात्मजाः सप्त पितुर्वधातुराः प्रतिक्रियामर्षजुषः समु-
द्यताः ॥११॥ ताम्रोऽन्तरिक्षः श्रवणो विभावसुर्वसुर्नभस्वानरुणश्च सप्तमः ॥ पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता
निरगन् धृतायुधाः ॥१२॥ प्रायुञ्जतासाद्य शरानसीन् गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः ॥ तच्छस्त्रकूटं भगवान्
स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्त ह ॥ १३ ॥ तान् पीठमुख्याननयद् यमालयं निकृत्तशीर्षोरुभुजाङ्घ्रिवर्मणः ॥ स्वा-
नीकपानच्युतचक्रसायकैस्तथा निरस्तान् नरको धरासुतः ॥१४॥ निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्नि-
रक्रमत् ॥ दृष्ट्वा सभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात् सतडिद्घनं यथा ॥ कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च
सर्वे युगपत् स्म विव्यधुः ॥१५॥ तद् भौमसैन्यं भगवान् गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः ॥ निकृत्तबाहू-
रुशिरोङ्घ्रिविग्रहं चकार तत्रैव हताश्वकुञ्जरम् ॥ १६ ॥ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह ॥ हरिस्तान्य-
च्छिनत् तीक्ष्णैः शरैरेकैकशस्त्रिभिः ॥ १७ ॥ उह्यमानः सुपर्णेन पक्षाभ्यां निघ्नता गजान् ॥ गरुत्मता हन्यमाना-
स्तुण्डपक्षनखैर्गजाः ॥ १८ ॥ पुरमेवाविशन्नार्ता नरको युध्ययुध्यत ॥ दृष्ट्वा विद्रावितं सैन्यं गरुडेनार्दितं स्वकम् ॥१९॥

गजमारुह्य पुराद् निर्गत्य गरुडोपरि स्थितं सभार्यं कृष्णं दृष्ट्वा शतघ्नीं मुमोच । तया योधा अपि विव्यधुः ॥ १४ ॥ १५ ॥ तदा कृष्णो बाणैश्छिन्नावयवं भौमसैन्यं चकार ॥ १६ ॥ शूरैः प्रेरितानि शस्त्राणि हरिः शरैरच्छिनत् ॥ १७ ॥ गजाश्च गरुडस्य तुण्डपक्षनखैस्ताडिताः सन्तः पुरं विविशुः । ततो नरकः स्वसैन्यं गरुडेनार्दितं दृष्ट्वा रणेऽयुध्यत ॥ १८ ॥ १९ ॥

१ निरागमन् । २ पत्रेत्यर्थः । ३ "शिरोध्रविग्रहम्" इ० पा० ।

तं गरुडं शक्त्या प्राहरत् । तया विद्धोऽपि गरुडो नाकम्पत ॥ २० ॥ ततो भौमः कृष्णं हन्तुं शूलमाददे । शूलक्षेपात् पूर्वमेव हरिश्चक्रेण तस्य शिरश्चिच्छेद॥२१॥किरीटकुण्डलयुतं तच्छिरो भूमौ पतितं बभौ । तदाऽसुराः हाहेति चुक्रुशुः । ऋषयो देवाश्च पुष्पैः कृष्णं वर्षयन्तः स्तुतिं चक्रिरे ॥ २२ ॥ ततो भूमिः कृष्णं प्राप्य सुवर्णकुण्डले वारुणं छत्रं वनमालां महामणिं च समर्पयामास ॥ २३ ॥ प्राञ्जलिः सती हरिं

तं भौमः प्राहरच्छक्त्या वज्रः प्रतिहतो यतः ॥ नाकम्पत तया विद्धो मालाहत इव द्विपः ॥२०॥ शूलं भौमोऽच्युतं हन्तुमाददे वितथोद्यमः ॥ तद्विसर्गात् पूर्वमेव नरकस्य शिरो हरिः ॥ अपाहरद् गजस्थस्य चक्रेण क्षुरनेमिना ॥ २१ ॥ सकुण्डलं चारुकिरीटभूषणं बभौ पृथिव्यां पतितं समुज्ज्वलत ॥ हाहेति साध्वित्यृषयः सुरेश्वरा माल्यैर्मुकुन्दं विकिरन्त ईडिरे ॥२२॥ ततश्च भूः कृष्णमुपेत्य कुण्डले प्रतप्तजाम्बूनदरत्नभास्वरे ॥ सवैजयन्त्या वनमालयाऽर्पयत् प्राचेतसं छत्रमथो महामणिम् ॥२३॥ अस्तौषीदथ विश्वेशं देवी देववरार्चितम् ॥ प्राञ्जलिः प्रणता राजन् भक्तिप्रवणया धिया ॥ २४ ॥ भूमिरुवाच ॥ नमस्ते देवदेवेश शंखचक्रगदाधर ॥ भक्तेच्छोपात्तरूपाय परमात्मन् नमोऽस्तु ते ॥ २५ ॥ नमः पङ्कजनाभाय नमः पंकजमालिने ॥ नमः पंकजनेत्राय नमस्ते पंकजाङ्घ्रये ॥ २६ ॥ नमो भगवते तुभ्यं वासुदेवाय विष्णवे ॥ पुरुषायादिबीजाय पूर्णबोधाय ते नमः ॥ २७ ॥ अजाय जनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये ॥ परावरात्मन् भूतात्मन् परमात्मन् नमोऽस्तु ते ॥ २८ ॥ त्वं वै सिसृक्षू रज उत्कटं प्रभो तमो निरोधाय बिभर्ष्यसंवृतः ॥ स्थानाय सत्त्वं जगतो जगत्पते कालः प्रधानं पुरुषो भवान् परः ॥ २९ ॥

तुष्टाव ॥ २४ ॥ भूमिरुवाच । हे देवदेवेश ! हे शङ्खचक्रगदाधर ! हे परमात्मन् ! तुभ्यं नमोऽस्तु ॥२५॥ हे भगवन् ! पङ्कजनाभाय कमलमालिने कमलनेत्राय ते नमोऽस्तु ॥ २६ ॥ वासुदेवाय पुरुषाय ॥२७॥ अजायानन्तशक्तये हे परमात्मन् ! ते नमोऽस्तु ॥ २८ ॥ हे ईश ! त्वं जगतः सृष्ट्यादौ सत्त्वादिगुणान् धत्से ॥ २९ ॥

१ वैजयन्त्यासहेत्यर्थः । २ तमसो धारणेऽप्यसंवृत एव । ३ पालनाय ।

पृथ्व्यादिपञ्चतत्त्वानि शब्दादिपञ्चमात्राणि इन्द्रियादीनि च इति सर्वं चराचरं त्वयि भ्रमोऽस्ति ॥ ३० ॥ हे भगवन् ! भौमस्य ( भगदत्तो नाम ) पुत्रो भीतः सन् तव चरणकमलं प्रापितः । अतोऽभयं दत्त्वा पाहि॥३१॥श्रीशुक उवाच ॥ एवं भूम्या प्रार्थितो भगवान् भगदत्तस्या-भयं दत्त्वा सकलसमृद्धिमद् भौमस्य गृहं प्राविशत् ॥३२॥ भौमेनाहृतानां कन्यानां षट्सहस्राधिकं दशसहस्रं ददृशे ॥३३॥ ततस्ताः नरवीरं कृष्णं दृष्ट्वा विमोहिताः सत्यो मनसा पतिं वव्रिरे ॥ ३४ ॥ पृथक्पृथगूचुश्च । यथाऽयं मम पतिर्भूयात् तथा विधाताऽनुमोदताम् ॥ ३५ ॥

अहं पयो ज्योतिरथानिलो नभो मात्राणि देवा मन इंद्रियाणि ॥ कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगव-
न्नयं भ्रमः ॥ ३० ॥ तस्यात्मजोऽयं तव पादपंकजं भीतः प्रपन्नार्तिहरोपसादितः ॥ तत्पालयैनं कुरु हस्तपंकजं
शिरस्यमुष्याखिलकल्मषापहम् ॥ ३१ ॥ श्रीशुक उवाच ॥ इतिभूम्याऽर्थितो वाग्भिर्भगवान् भक्तिनम्रया ॥ दत्त्वा-
ऽभयं भौमगृहं प्राविशत् सकलर्द्धिमत् ॥ ३२ ॥ तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् ॥ भौमाहृतानां विक्रम्य
राजभ्यो ददृशे हरिः ॥ ३३ ॥ तं प्रविष्टं स्त्रियो वीक्ष्य नरवीरं विमोहिताः ॥ मनसा वव्रिरेऽभीष्टं पतिं दैवोपसा-
दितम् ॥ ३४ ॥ भूयात् पतिरयं मह्यं धाता तदनुमोदताम् ॥ इति सर्वाः पृथक् कृष्णे भावेन हृदयं दधुः ॥ ३५ ॥
ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोऽम्बराः ॥ नरयानैर्महाकोशान् रथाश्वान् द्रविणं महत् ॥ ३६ ॥ ऐरावतकुले-
भांश्च चतुर्दन्तांस्तरस्विनः ॥ पाण्डुरांश्च चतुष्षष्टिं प्रेषयामास केशवः ॥ ३७ ॥ गत्वा सुरेन्द्रभवनं दत्त्वाऽदित्यै च
कुण्डले ॥ पूजितस्त्रिदशेन्द्रेण सहेन्द्राण्या च स प्रियः ॥३८॥ चोदितो भार्ययोत्पाट्य पारिजातं गरुत्मति ॥ आरो-
प्य सेन्द्रान् विबुधान् निर्जित्योपानयत्पुरम् ॥ ३९ ॥

तदा कृष्णस्तासां हृद्गतं ज्ञात्वा ताः कन्याः शिबिकादिभिर्द्वारकां प्राहिणोत् । तथा कोशान् रथान् प्राहिणोत् ॥३६॥ चतुर्दन्तान् श्वेतानैरावत-कुलोत्पन्नान् गजान् चतुष्षष्टिं प्राहिणोत् ॥ ३७ ॥ ततः कृष्णः इन्द्रभवनं गत्वाऽदित्यै कुण्डले दत्त्वेन्द्रेण पूजितः ॥ ३८ ॥भार्यया प्रेरितः सन्पारिजातमुत्पाट्य गरुडे निधाय सेन्द्रान् देवान् जित्वा द्वारकामानयत् ॥ ३९ ॥

१ हे प्रपन्नार्तिहर । २ उपसादितः ।

सत्यभामायाः गृहोद्याने स्थापितवान् ॥ ४० ॥ अहो यः इन्द्रः पूर्वमर्थसाधनायाच्युतं प्रार्थितवान् स एव सिद्धार्थः सन् कृष्णेन सह द्वेषं करोति । अतः आढ्यतां धिक् ॥४१॥ अथ हरिरेकस्मिन् मुहूर्ते नानागृहेषु तावद्रूपधरः सन् यथावत् ताः कन्याः उपयेमे ॥ ४२ ॥ ततो हरिर्गृहस्थवत् तासां गृहेषु स्थितः सन् लक्ष्म्यंशभूताभिस्ताभिस्सह रेमे ॥४३॥ स्त्रियस्त्वित्थं लक्ष्मीपतिं प्राप्य नवसङ्गमेन लज्जासहिताः सेवनं चक्रुः ॥४४॥ ताः स्त्रियो दासीशता अपि ताम्बूलगन्धवीजनपादप्रक्षालनादिभिर्विभोर्दास्यं स्वयं विदधुः ॥४५॥ इति श्रीभागवते दशम०

स्थापितः सत्यभामाया गृहोद्यानोपशोभनः ॥ अन्वगुर्भ्रमराः स्वर्गात् तद्गन्धासवलम्पटाः ॥ ४० ॥ ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम् ॥ सिद्धार्थ एतेन विगृह्यते महानहो सुराणां च तमोधिगाढ्यताम् ॥ ॥ ४१ ॥ अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः ॥ यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः ॥ ४२ ॥ गृहेषु तासामनपाय्यतर्क्यकृन्निरस्तसाम्यातिशयेष्ववस्थितः ॥ रेमे रमाभिर्निजकामसंप्लुतो यथेतरो गार्हकमेधिकांश्चरन् ॥ ४३ ॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसंगमजल्पलज्जाः ॥ ४४ ॥ प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ४५ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे नरकवधपारिजातहरणं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ श्रीशुक उवाच ॥ कर्हिचित् सुखमासीनं स्वतल्पस्थं जगद्गुरुम् ॥ पतिं पर्यचरद्भैष्मी व्यजनेन सखीजनैः ॥ १ ॥

चू० उत्त० एकोनषष्टितमोऽध्यायः ॥५९॥ अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीम् । कोपयित्वा ततः प्रेमकलहे तामसान्त्वयत् ॥ १ ॥ रामारामजनानन्दमहोदयविडम्बनैः । रुक्मिण्या प्रेमकलहच्छद्मनैश्वर्यमीर्यते ॥२॥ श्रीशुक उवाच । हे राजन् ! कदाचित् स्वतल्पस्थं कृष्णं पतिं रुक्मिणी व्यजनेन पर्यचरत् ॥ १ ॥

१ अनपायी विश्लेषरहितः । २ स्वानन्दपरिपूर्णः । ३ गृहस्थधर्मान् । ४ पादसंवाहनम् । ५ केशप्रसाधनम् । ६ दासीनां शतानि विद्यन्ते यासां ताः ।

योऽजः स स्वमार्गरक्षणाय यदुषु जातः ॥२॥ अथ मन्दिरं वर्णयति । तस्मिन् मुक्तादामवितानेन मणिमयदीपैश्च विराजिते ॥३॥ मल्लिकादिभिः पुष्पैर्भ्रमरयूथैर्नादिते ॥४॥ जालरन्ध्रेण विनिर्गतैरगुरुधूपैर्विराजिते ॥५॥ एतादृशेऽन्तर्गृहे सा पयःफेननिभे पर्यङ्के स्थितं कृष्णम् ॥ ६ ॥ सखीहस्ताद्रत्नदण्डं व्यजनं गृहीत्वा वीजयति ॥७॥ तदा मणिनूपुराभ्यां क्वणयती वस्त्रान्तेन स्थगितकुचाभ्यां कुचकुङ्कुमशोणहारेण नितम्बे-

यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः ॥ स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः ॥२॥ तस्मिन्नन्तर्गृहे भ्राजन्मुक्तादामविलम्बिना ॥ विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ३॥ मल्लिकादामभिः पुष्पैर्द्विरेफकुलनादिते ॥ जालरन्ध्रप्रविष्टैश्च गोभिश्चन्द्रमसोऽमलैः ॥४॥ पारिजातवनामोदवायुनोद्यानशालिना ॥ धूपैरगुरुजै राजन् जालरन्ध्रविनिर्गतैः ॥५॥ पय फेननिभे शुभ्रे पर्यङ्के कशिपूत्तमे ॥ उपतस्थे सुखासीनं जगतामीश्वरं पतिम् ॥६॥ वालव्यजनमादाय रत्नदण्डं सखीकरात् ॥ तेन वीजयती देवी उपासाञ्चक्र ईश्वरम् ॥ ७ ॥ सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेऽङ्गुलीयवलयव्यजनाग्रहस्ता ॥ वस्त्रान्तगूढकुचकुंकुमशोणहारभासा नितम्बधृतया च परार्ध्यकाञ्च्या ॥ ८ ॥ तां रूपिणीं श्रियमनन्यगतिं निरीक्ष्य या लीलया धृततनोरनुरूपरूपा ॥ प्रीतः स्मयन्नलककुण्डलनिष्ककण्ठवक्त्रोल्लसत्स्मितसुधां हरिराबभाषे ॥ ९ ॥ श्रीभगवानुवाच ॥ राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः ॥ महानुभावैः श्रीमद्भी रूपौदार्यबलोर्जितैः ॥ १० ॥ तान् प्राप्तानर्थिनो हित्वा चैद्यादीन्स्मरदुर्मदान् ॥ दत्ता भ्रात्रा स्वपित्रा च कस्मान्नो ववृषेऽसमान् ॥११॥ राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान् ॥ बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान् ॥१२॥

मूल्यकाञ्च्या चाङ्गुलीयवलयाभ्यां व्यजनेन च व्यग्रहस्ता च रेजे ॥८॥ तदा कृष्णः श्रीरूपिणीं हास्यमुखां प्रेमयुक्तां वीक्ष्य प्रीतः सन् जगाद ॥९॥ श्रीभगवानुवाच । हे राजपुत्रि ! त्वं श्रीमद्भिर्भूपैरीप्सिता सती ॥१०॥ भ्रातृपितृभ्यां दत्ता च सती तान् शिशुपालादीन् हित्वाऽस्मान् कस्मात् त्वं वृतवती ॥११॥ कीदृशान् नः जरासन्धादिभ्यो भीतान् समुद्रं शरणं गतान् बलवद्भिः कृतद्वेषान् त्यक्तनृपासनान् ॥१२॥

१ रक्षणाय । २ किरणैः । ३ उपाच्युतम् अच्युतस्य समीपम् ।

किंच अविज्ञाताचाराणां पुंसां मार्गमनुसृताः स्त्रियः प्रायो दुःखं प्राप्नुवन्ति ॥१३॥ किञ्च वयं निष्किञ्चनजनप्रियाः तस्माद्धनाढ्याः मां न भजन्ति ॥१४॥ ययोर्वित्तजन्मैश्वर्यादि समं तयोर्विवाहो मैत्री च। उत्तमाऽधमयोर्न ॥१५॥ हे वैदर्भि ! एतदविज्ञाय गुणैर्हीनाः वयं त्वया वृताः ॥१६॥ अतः आत्मनः सदृशं क्षत्रियर्षभं भजस्व। येनत्वमिहामुत्र च मनोरथान् लप्स्यसे॥१७॥ हे वामोरु! चैद्यशाल्वजरासन्धादयस्तवाग्रजो

अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम् ॥ आस्थिताः पदवीं सुभ्रूः प्रायः सीदन्ति योषितः ॥१३॥ निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः ॥ तस्मात् प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे ॥ १४ ॥ ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः ॥ तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥ १५ ॥ वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया ॥ वृत्ता वयं गुणैर्हीना भिक्षुभिः श्लाघिता मुधा ॥ १६ ॥ अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम् ॥ येन त्वामाशिषः सत्या इहामुत्र च लप्स्यसे ॥ १७ ॥ चैद्यशाल्वजरासन्धदन्तवक्त्रादयो नृपाः ॥ मम द्विषन्ति वामोरु रुक्मी चापि तवाग्रजः ॥ १८ ॥ तेषांवीर्यमदान्धानां दृप्तानां स्मयनुत्तये ॥ आनीताऽसि मया भद्रे तेजोऽपहरतासताम् ॥ १९ ॥ उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः ॥ आत्मलब्ध्याऽऽस्महे पूर्णा गेहयोर्ज्योतिरक्रियाः ॥ २० ॥ श्रीशुक उवाच ॥ एतावदुक्त्वा भगवानात्मानं वल्लभामिव ॥ मन्यमानामविश्लेषात् तद्दर्पघ्न उपारमत् ॥२१॥ इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम्॥आश्रुत्य भीता हृदि जातवेपथुश्चिन्तां दुरन्तां रुदती जगाम ह ॥२२॥ पदा सुजातेन नखारुणश्रिया भुवं लिखन्त्यश्रुभिरञ्जनासितैः ॥ आसिञ्चती कुङ्कुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २३ ॥

रुक्मी च मां द्विषन्ति ॥ १८ ॥ अतो मदान्धानां तेषां गर्वनाशाय मया त्वमानीता ॥ १९ ॥ परन्तु वयं स्त्रीपुत्रकामेच्छवो न। किन्तु देहगेहयोरुदासीनाः ॥२०॥ श्रीशुक उवाच ॥ भगवानात्मानं वल्लभां मन्यमानां तामेतावदुक्त्वा तूष्णीमासीत् ॥२१॥ सा रुक्मिणी प्रियस्याश्रुतपूर्वमप्रियं वचः श्रुत्वा जातवेपथुर्भीता सती महाचिन्तां प्राप॥२२॥तदा पदा भुवं लिखन्त्यधोमुख्यश्रुभिः स्तनौ सिञ्चती रुद्धवाक् तस्थौ॥२३॥

१ गर्वपरिहाराय। २ देहगेहयोः। ३ प्रदीपवत्साक्षिमात्रतया क्रियारहिताः।

पतितो दुःखेन विनष्टबुद्धेस्तस्याः पतितवलयाद् हस्ताद् व्यजनं तदनु देहश्च पपात ॥२४॥ ततः कृष्णः प्रियायाः प्रेमबन्धनं दृष्ट्वा करुणः सन्न-न्वकम्पत ॥२५॥ पर्यङ्कादवरुह्य चतुर्भुजः आशु तामुत्थाप्य केशान् समुह्य पाणिना मुखं प्रमृज्य ॥२६॥ अनन्यविषयां तां बाहुभ्यामालिंग्य ॥२७॥ कृष्णो हास्यार्थमविज्ञाय भ्रमच्चित्तां तां सान्त्वयामास ॥२८॥ श्रीभगवानुवाच ॥ हे वैदर्भि ! मां मा असूयेथाः । मत्परायणां त्वां जाने।

तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतो व्यजनं पपात ॥ देहश्च विक्लवधियः सहसैव मुह्यन् रम्भेव वायुविहता प्रविकीर्य केशान् ॥ २४ ॥ तद् दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबन्धनम् ॥ हास्यप्रौढिमजानन्त्याः करुणः सोऽन्वकम्पत ॥ २५ ॥ पर्यंकादवरुह्याशु तामुत्थाप्य चतुर्भुजः ॥ केशान् समुह्य तद्वक्त्रं प्रामृजत् पद्मपाणिना ॥ २६ ॥ प्रमृज्याश्रुकले नेत्रे स्तनौ चोपहतौ शुचा ॥ आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥२७॥ सान्त्वयामास सान्त्वज्ञः कृपयाऽकृपणां प्रभुः ॥ हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः ॥ २८ ॥ श्रीभगवानुवाच ॥ मा मां वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् ॥ त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमङ्गने ॥ २९ ॥ मुखं च प्रेमसंरम्भस्फुरिताधरमीक्षितुम् ॥ कटाक्षेपारुणापाङ्गं सुन्दरभ्रुकुटीतटम् ॥ ३० ॥ अयं हि परमो लाभो गृहेषु गृहमेधिनाम् ॥ यन्नर्मैर्नीयते यामः प्रियया भीरुभामिनि ॥ ३१ ॥ श्रीशुक उवाच ॥ सैवं भगवता राजन् वैदर्भी परिसान्त्विता ॥ ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ ॥ ३२ ॥ बभाषे ऋषभं पुंसां वीक्षन्ती भगवन्मुखम् ॥ सव्रीडहासरुचिरस्निग्धापांगेन भारत ॥ ३३ ॥

त्वद्वचः श्रोतुमिच्छया कापटयेनैवमुक्तम् ॥२९॥ किञ्च तव स्फुरिताधरंसुन्दरं भ्रुकुटीतटं कटाक्षयुक्तं मुखं द्रष्टुमेवमुक्तम् ॥३०॥ हे भीरु ! स्त्रियाः प्रियवाक्यादिभिर्यः कालो नीयते स हि गृहस्थाश्रमिणां परमो लाभः ॥३१॥ श्रीशुक उवाच ॥ हे राजन् ! एवं भगवता सान्त्विता रुक्मिणी तां परिहासोक्तिं ज्ञात्वा पतित्यागभयं जहौ ॥३२॥ ततः सव्रीडहासेन कृष्णस्य मुखं वीक्ष्य पूर्वोक्तानां कटाक्षभाषणानामुत्तराण्याह ॥३३॥

१ नर्मणा । २ कटः कटाक्षः ।

रुक्मिण्युवाच । हे कमलनेत्र ! तव ममासाम्यं त्वयोक्तं सत्यमेव, यतो ब्रह्मादीनामधीशस्त्वं क्व । गुणमयी प्रकृतिरहं क्व ॥ ३४ ॥ हे उरुक्रम ! राजभ्यो बिभ्यत् समुद्रं शरणं गतः इति यदुक्तं तत् सत्यम् । त्वं शब्दादि विषयेभ्यो भीतः इव हृदये प्रकाशसे । त्यक्तनृपासनाः वयमिति यदुक्तं तदाह । हे हरे ! नृपासनं नरकतुल्यमिति ज्ञात्वा त्वत्सेवकैरपित्यक्तम् । किं पुनर्वक्तव्यं त्वया त्यक्तमिति ॥३५॥ अस्पष्टवर्त्मनां पुंसामित्युक्तं तदाह । नृलोके नृपशुभिस्तव पादाब्जमार्गो दुर्विभाव्यः ॥३६॥ निष्किञ्चनाः वयमित्यस्योत्तरमाह । ब्रह्मादयो यस्मै तुभ्यं बलिं

रुक्मिण्युवाच ॥ नन्वेवमेतदरविन्दलोचनाऽऽह यद् वै भवान् भगवतोऽसदृशी विभूम्नः ॥ क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृतिरज्ञगृहीतपादा ॥३४॥ सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र उपलम्भनमात्र आत्मा ॥ नित्यं कदिन्द्रियगणैः कृतविग्रहस्त्वं त्वत्सेवकैर्नृपपदं विधुतं तमोऽन्धम् ॥ ३५ ॥ त्वत्पादपद्ममकरन्दजुषां मुनीनां वर्त्मास्फुटं नृपशुभिर्ननु दुर्विभाव्यम् ॥ यस्मादलौकिकमिवेहितमीश्वरस्य भूमंस्तवेहितमथो अनु ये भवन्तम् ॥३६॥ निष्किञ्चनो ननु भवान् न यतोऽस्ति किंचिद् यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः ॥ न त्वा विदन्त्यसुतृपान्तकमाढ्यतान्धाः प्रेष्ठो भवान् बलिभुजामपि तेऽपि तुभ्यम् ॥ ३७ ॥ त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम् ॥ तेषां विभो समुचितो भवतः समाजः पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥ ३८ ॥ त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्मात्मदश्च जगतामिति मे वृतोऽसि ॥ हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्ये ॥ ३९ ॥

हरन्ति तस्य ते दरिद्रता न घटते । निष्किञ्चनजनप्रियस्योत्तरमाह । ब्रह्मादीनां त्वं प्रेष्ठः । ते च तव प्रेष्ठाः । आढ्याः मां न भजन्ति तस्योत्तरं ये स्वाढ्यतयान्धास्तेऽन्तकं त्वां न जानन्ति ॥३७॥ ययोरेव समं वित्तमिति यदुक्तं तदुद्धरति । हे ईश्वर ! त्वं सर्वार्थमयः फलात्मा । सुमतयो यद्वाञ्छया कृत्यं त्यजन्ति ॥३८॥ जगदात्माऽऽत्मदश्चेति ज्ञात्वैव ब्रह्मादीनपि हित्वा मया वृतोऽसि । अन्ये कुतः ॥ ३९ ॥

१ समुद्रवदगाधे हृदये निश्चलतया प्रकाशते । २ चैतन्यधनः । ३ कुत्सितैः बहिर्मुखैरिन्द्रियगणैः । ४ गाढम् । ५ अनुवर्तन्ते । ६ कृत्स्नं व्यवहारमित्यर्थः । ७ भवतो भ्रुवः सकाशादुदीरितो यः कालस्तस्य वेगस्तेन ध्वस्ताः आशिषो येषां तान् ब्रह्मादीनपि विहाय कुतोऽन्ये वराका इत्यर्थः ।

अपि च यस्त्वं धनुश्शब्देन जरासन्धादीन् विद्राव्य मां हृतवानसि अतः समुद्रं प्रपन्नः इति यत् तव वचस्तन्न घटते ॥ ४० ॥ मां भजन्तो राज्यं त्यक्त्वा वनं गत्वा तव मार्गं श्रिताः । ते किं सीदन्ति ? दुःखं प्राप्नुवन्तीत्युक्तस्योत्तरमाह । तव भजनेच्छया पृथुभरतययातिगयादयो राज्यं त्यक्त्वा वनं गत्वा तव मार्गं श्रिताः । ते किं सीदन्ति ? नेत्यर्थः ॥४१॥ आत्मसमं क्षत्रियर्षभं भजस्वेत्युक्तस्योत्तरमाह । गुणालयस्य तव सन्मुखरितं पादकमलगन्धं घ्रात्वा का मरणधर्मिका स्त्री



सिंहो यथा स्वबलिमीश पशून् स्वभागं तेभ्यो भयाद् यदुदधिं शरणं प्रपन्नः ॥४०॥ यद्वाञ्छया नृपशिखामणयोऽङ्गवैन्यजायन्तनाहुषगयादय ऐकपत्यम् ॥ राज्यं विसृज्य विविशुर्वनमम्बुजाक्ष सीदंति तेऽनु पदवीं त इहास्थिताः किम् ॥४१॥ कान्यं श्रयेत तव पादसरोजगंधमाघ्राय सन्मुखरितं जनताऽपवर्गम्[1] ॥ लक्ष्म्यालयं त्वविगणय्य गुणालयस्य मर्त्या सदोरुभयमर्थविविक्तदृष्टिः[2][3] ॥४२॥ तं त्वानुरूपमभजं जगतामधीशमात्मानमत्र च परत्र च कामपूरम् ॥ स्यान्मे तवाङ्घ्रिररणं[4] सृतिभिर्भ्रमन्त्याः[5] यो वै भजन्तमुपयात्यनृतापवर्गः[6] ॥४३॥ तस्याः स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वबिडालभृत्याः ॥ यत्कर्णमूलमरिकर्षण नोपयायाद् युष्मत्कथा मृडविरिञ्चसभासु गीता ॥ ४४ ॥ त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्कफपित्तवातम् ॥ जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ४५ ॥

जाड्यं वचस्तव गदाग्रज यस्तु भूपान् विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ॥

लक्ष्म्यालयमपि परं श्रयेत् ॥४२॥ अतः इह परत्र च मनोरथपूरकं जगतामधीशं त्वां सेवे ॥४३॥ हे अच्युत ! स्त्रीणां मध्ये गृहेषु खरगोश्वबिडालभृत्यसदृशास्त्वयोक्ताः राजानस्तस्याः दुर्भगायाः पतयस्स्युर्यस्याः कर्णमूलं तव कथा नोपयाति ॥४४॥ हे हरे ! त्वत्पादाम्बुजं हित्वा या स्त्री मूढा सा त्वङ्मांसरुधिरास्थिनिर्मितं जीवच्छवं पतिबुद्ध्या सेवते ॥ ४५ ॥



---

१ जनतायाः मोक्षरूपम् । २ उरुभयमन्यं श्रयेतेति योज्यम् । ३ अर्थे विविक्ता विवेकवती दृष्टिर्यस्याः सा । ४ शरणम् । ५ देवतिर्यगादिभिर्जन्मभिः । ६ अनृतस्य संसारस्य नाशो यस्मात् भजन्तमुपयाति अङ्गीकरोति यस्तस्य तवेति योज्यम् ।

अतो हे अम्बुजाक्ष ! यद्यपि त्वं निरपेक्षः तथापि तव चरणयोर्मम प्रीतिरस्तु ॥४६॥ हे भगवन् ! तव वचो मिथ्या न मन्ये । यथा काशिराजकन्यानां तिसृणां मध्येऽम्बायाः एव शाल्वे रतिर्जाता तथा कन्यायाः क्वचिदेव रतिः स्यात् ॥४७॥ परिणीताया अपि जारिण्या मनो नवं नवं पुरुषं गच्छति । अतो बुधः उभयलोकभ्रंशकर्त्रीं तां न बिभृयात् । ( एतादृशी नाहम् ) ॥ ४८ ॥ श्रीभगवानुवाच ॥ हे साध्वि !

अस्त्वम्बुजाक्ष मम ते चरणानुराग आत्मन्[1] रतस्य मयि चानतिरिक्तदृष्टेः[2] ॥ यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो[3] मामीक्षसे तदु ह नः परमाऽनुकम्पा ॥४६॥ नैवालीकमहं मन्ये वचस्ते मधुसूदन ॥ अम्बाया इव हि प्रायः कन्यायाःस्याद् रतिः क्वचित् ॥४७॥ व्यूढायाश्चापि पुंश्चल्या मनोऽभ्येति नवं नवम् ॥ बुधोऽसतीं न बिभृयात् तां बिभ्रदुभयच्युतः[4] ॥ ४८ ॥ श्रीभगवानुवाच ॥ साध्व्येतच्छ्रोतुकामैस्त्वं राजपुत्रिप्रलम्भिता ॥ मयोदितं यदन्वात्थ सर्वं तत्सत्यमेव हि ॥ ४९ ॥ यान्यान् कामयसे कामान् मय्यकामाय भामिनि ॥ सन्ति ह्येकांतभक्तायास्तव कल्याणि नित्यदा ॥ ५० ॥ उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे ॥ यद् वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता ॥ ५१ ॥ ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया ॥ कामात्मानोऽपवर्गेशं मोहिता मम मायया ॥ ५२ ॥ मां प्राप्य मानिन्यपवर्गसंपदं[5] वाञ्छन्ति ये संपद एव तत्पतिम्[6] ॥ ते मन्दभाग्या निरयेऽपि ये नृणां[7] मात्रात्मकत्वान्निरयः[8] सुसंगमः ॥ ५३ ॥

त्वद्वचश्श्रवणेच्छया मयोपहासः कृतः । तथापि यत् त्वमाख्यातवती तत् सत्यमेव ॥४९॥ हे भामिनि ! एकान्तभक्तायास्ते कामा मोक्षपर्यवसायिनः सन्ति ॥ ५० ॥ यद् वाक्यैश्चाल्यमानायास्तव धीरन्यविषया न जाता । अतस्त्वया पातिव्रत्यं सम्पादितम् ॥ ५१ ॥ ये मोक्षदं मां सुखाद्यर्थं भजन्ति ते मन्दभाग्याः स्युः ॥ ५२ ॥ ५३ ॥

---

१ आत्मनि । २ मय्यनतिरिक्ता नातिशयवती दृष्टिर्यस्य तस्य । ३ अस्य विश्वस्य वृद्धस्य उपात्ता रजसोऽतिमात्रा औत्कटयं येन स तथाभूतः । ४ लोकद्वयाद् भ्रष्टः । ५ अपवर्गेण सह संपदो यस्मिस्तम् । ६ सम्पदो वाञ्छन्ति सम्पदां पतिं च मां न वाञ्छन्तीत्यर्थः । ७ अतिनिकृष्टयोनावपि ये स्युस्तान्विषयान् वाञ्छन्ति ये ते मन्दभाग्याः । ८ विषयात्मकत्वात् ।

तस्माद् हे स्त्रि ! त्वया मयि निष्कामा प्रीतिः कृता । एतद्दिष्टया ॥ ५४ ॥ गृहेषु त्वादृशीं गृहिणीं न पश्यामि । यतो विवाहकाले प्राप्तान् नृपान् न विगणय्य द्विजः प्रेषितः ॥ ५५ ॥ तथा युधि निर्जितस्य स्वभ्रातुर्विरूपकरणं ततोऽनिरुद्धविवाहे द्यूतसभायां तद्वधं च स्मरन्त्यपि वियोगभीत्या तद्दुःखं सोढवती । तेन वयं जिताः स्मः ॥५६॥ मत्प्राप्त्यर्थं श्वो भाविनि विवाहे आगन्तव्यमितिकृते समये त्वयि न प्राप्तवति

दिष्टया गृहैश्वर्यसकृन्मयि त्वया कृतानुवृत्तिर्भवमोचनी खलैः ॥ सुदुष्कराऽसौ सुतरां दुराशिषो ह्यसुम्भरायां निकृतिं जुषः स्त्रियाः ॥५४॥ न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यथा स्वविवाहकाले ॥ प्राप्तान् नृपानविगणय्य रहोहरो मे प्रस्थापितो द्विज उपश्रुतसत्कथस्य ॥ ५५ ॥ भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ॥ दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते॥५६॥ दूतस्त्वयाऽऽत्मलभने सुविविक्तमन्त्रः प्रस्थापितो मयि चिरायति शून्यमेतत् ॥ मत्वा जिहास इदमङ्गमनन्ययोग्यं तिष्ठेत तत् त्वयि वयं प्रतिनन्दयामः ॥५७॥ श्रीशुक उवाच ॥ एवं सौरतसंलापैर्भगवान् जगदीश्वरः ॥ स्वरतो रमया रेमे नरलोकं विडम्बयन् ॥ ५८ ॥ तथान्यासामपि विभुर्गृहेषु गृहवानिव ॥ आस्थितो गृहमेधीयान् धर्माँल्लोकगुरुर्हरिः ॥ ५९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे कृष्णरुक्मिणीसंवादो नाम षष्टितमोऽध्यायः ॥ ६० ॥

विश्वं शून्यं मत्वा प्राणान् त्यजामि इत्येवं निश्चित्य दूतः प्रेषितः । ततः तव कर्म त्वय्येव तिष्ठेत् ॥५७॥ श्रीशुक उवाच ॥ एवं जगदीश्वरो नर्मगोष्ठीभिः रमया सह रेमे ॥ ५८ ॥ तथान्यासामपि गृहेषु गृहस्थ इव रेमे ॥ ५९ ॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायामुत्तरार्द्धे षष्टितमोऽध्यायः ॥ ६० ॥

१ दुरभिप्रायायाः । २ प्राणसर्पणपरायाः । ३ वञ्चनपरायाः । ४ गुह्यसन्देशहरः । ५ उपश्रुताः सत्यः कथाः यस्य तस्य । ६ मत्प्राप्त्यर्थम् । ७ त्यक्तुमिच्छामीति दूतः प्रेषितः । ८ न तत् प्रतिकर्तुं शक्यमित्यर्थः ।

एकषष्टितमे शौरेः पुत्रपौत्रादिसन्ततिः । अनिरुद्धविवाहे च रुक्मिणो रामतो वधः ॥१॥ अष्टाधिकशतद्व्यष्टसहस्रस्त्रीसमुद्भवान् । कोटिशः पुत्रपौत्रादीन् हरिर्दारैरयोजयत् ॥२॥ श्रीशुक उवाच । हे राजन् ! कृष्णस्य ताः स्त्रियः एकैकशः सर्वात्मसंपदा पितृसमान् दशदश पुत्रान् जनयामासुः ॥ १ ॥ ताः गृहाद् न गच्छन्तं कृष्णं वीक्ष्य स्वंस्वं प्रियं मेनिरे ॥ २ ॥ ताः स्त्रियः स्वहावभावकटाक्षैर्भगवतो मनो वशीकर्तुं न समर्थाः बभूवुः ॥ ३ ॥ षोडशसहस्रमपि पत्न्यः कामबाणैर्यस्येन्द्रियं क्षोभयितुं न शेकुः ॥४॥ ब्रह्मादयोऽपि यस्य पदवीं न विदुः । इत्थं

श्रीशुक उवाच ॥ एकैकशस्ताः कृष्णस्य पुत्रान् दशदशाबलाः ॥ अजीजनन्ननवमान् पितुः सर्वात्मसम्पदा ॥ १ ॥ गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम् ॥ प्रेष्ठं न्यमंसत स्वंस्वं न तत्तत्त्वविदः स्त्रियः ॥ २ ॥ चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ॥ संमोहिता भगवतो न मनो विजेतुं स्वैर्विभ्रमैः समशकन् वनिता विभूम्नः ॥ ३ ॥ स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ॥ पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न शेकुः ॥ ४ ॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसंगमलालसाद्यम् ॥ ५ ॥ प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ६ ॥ तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः ॥ अष्टौ महिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामि ते ॥ ७ ॥ चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् ॥ सुचारुश्चारुगुप्तश्च भद्रचारुस्तथापरः ॥ ८ ॥ चारुचन्द्रो विचारुश्च चारुश्च दशमो हरेः ॥ प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः पितुः ॥ ९ ॥

लक्ष्मीपतिं पतिं प्राप्य मुदा ताः विभोः स्वयं ताम्बूलसंवाहनादिभिर्दास्यं चक्रुः । सानुरागस्मितकटाक्षनवसंगमौत्सुक्यादि च भेजुः ॥५॥६॥ तासां मध्ये याः पूर्वमुक्ताः अष्टौ महिष्यस्तत्पुत्रान् कथयामि ॥७॥ तत्र प्रद्युम्नः १ चारुदेष्णः २ सुदेष्णः ३ चारुदेहः ४ सुचारुः ५ चारुगुप्तः ६ भद्रचारुः ७ चारुचन्द्रः ८ विचारुः ९ चारुः १० एते दश पितुः समाः रुक्मिण्यां जाताः ॥ ८ ॥ ९ ॥

१ परिपूर्णस्य । २ गूढहसितयुक्ता अवलोकलवाः कटाक्षाः । ३ सुरतवर्धकाः मन्त्राः तेषु शौण्डैः प्रगल्भैः । ४ मनः ।

श्रीभानुः ९ प्रतिभानुः १० एते दश भानुः १ सुभानुः २ स्वर्भानुः ३ प्रभानुः ४ भानुमान् ५ चन्द्रभानुः ६ बृहद्भानुः ७ अतिभानुः ८ ॥१०॥ सत्यभामायां जाताः ॥११॥ साम्बः १ सुमित्रः २ पुरुजिव ३ शतजित् ४ सहस्रजित् ५ विजयः ६ चित्रकेतुः ७ वसुमान् ८ द्रविडः ९ क्रतुः १० एते दश जाम्बवत्यात्मजाः ॥१२॥ वीरः १ चन्द्रः २ अश्वसेनः ३ चित्रगुः ४ वेगवान् ५ वृषः ६ आमः ७ शंकुः ८ वसुः ९ कुन्तिः १० एते दश नाग्नजितेः सत्यायामभवन् ॥ १३ ॥ श्रुतः १ कविः २ वृषः ३ वीरः ४ सुबाहुः ५ एकोभद्रः ६ शान्तिः ७ दर्शः ८ पूर्णमासः ९ सोमकः १० एते दश कालिन्द्यात्मजाः ॥१४॥ प्रघोषः १ गात्रवान् २ सिंहः ३ बलः ४ प्रबलः ५ ऊर्ध्वगः ६ महाशक्तिः ७ सहः ८ ओजः ९

चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः ॥ १० ॥ श्रीभानुः प्रतिभानुश्च भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा ॥ विजयश्चित्रकेतुश्च वसुमान्द्रविडः सत्यभामात्मजा दश ॥ साम्बः सुमित्रः पुरजिच्छतजिच्च सहस्रजित् ॥ ११ ॥ वीरश्चन्द्रोऽश्वसेनश्च चित्रगुर्वेगवान्वृषः ॥ आमः शंकुः क्रतुः ॥ जाम्बवत्या सुता ह्येते साम्बाद्याः पितृसंमताः ॥१२॥ श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः ॥ शान्तिर्दर्शः पूर्णमासः र्वसुः श्रीमान् कुन्तिर्नाग्नजितेः सुताः ॥ १३ ॥ माद्र्याः पुत्रा महाशक्तिः सह ओजो- कालिन्द्याः सोमकोऽवरः ॥१४॥ प्रघोषो गात्रवान्सिंहो बलः प्रबल ऊर्ध्वगः ॥ ऽपराजितः ॥१५॥ वृको हर्षोऽनिलो गृध्रो वर्धनोऽन्नाद एव च ॥ महाशः पावनो वह्निर्मित्रविन्दात्मजाः क्षुधिः ॥१६॥ संग्रामजिद् बृहत्सेनः शूरः प्रहरणोऽरिजित् ॥ जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः ॥ १७ ॥ दीप्तिमांस्ताम्रत- प्ताद्या रोहिण्यास्तनया हरेः ॥ प्रद्युम्नाच्चानिरुद्धोऽभूद् रुक्मवत्यां महाबलः ॥ १८ ॥



अपराजितः १० एते दश लक्ष्मणाया आत्मजाः ॥ १५ ॥ वृकः १ हर्षः २ अनिलः ३ गृध्रः ४ वर्धनः ५ अन्नादः ६ महाशः ७ पावनः ८ वह्निः ९ क्षुधिः १० एते दश मित्रविन्दात्मजाः ॥१६॥ संग्रामजित् १ बृहत्सेनः २ शूरः ३ प्रहरणः ४ अरिजित् ५ जयः ६ सुभद्रः ७ वामः ८ आयुः ९ सत्यकः १० एते दश भद्रात्मजाः ॥ १७ ॥ षोडशसहस्रस्त्रीणां मध्ये रोहिणी मुख्या । तस्यास्ताम्रतप्ताद्याः दश पुत्राः अभवन् । प्रद्युम्नात् रुक्मवत्यां महाबलोऽनिरुद्धोऽभूत ॥ १८ ॥

भोजकटे पुरे रुक्मी प्रद्युम्नाय रुक्मवतीं कन्यां ददौ। एतेषां पुत्रपौत्राः कोटिशो बभूवुः ॥१९॥ राजोवाच। रुक्मी रिपुपुत्राय प्रद्युम्नाय कन्यां कथं प्रादात् यः कृष्णेन पराभवं प्राप्तः सन् हंतुं तं रन्ध्रं प्रतीक्षते। एतद् वद। हे ब्रह्मन्! त्वादृशाः योगिनो भूतभविष्यद्वर्तमानं जानन्ति॥२०॥ ॥२१॥ श्रीशुक उवाच॥ यदा स्वयंवरे रुक्मवत्याऽभिलषितः प्रद्युम्नो युधि राज्ञो निर्जित्य तां जहार ॥२२॥ रुक्मी पूर्वं वैरं स्मरन्नपि स्वसुः प्रियं कुर्वन् सन् भागिनेयाय सुतां प्रादात् ॥२३॥ रुक्मिण्याः कन्यां चारुमतीं कृतवर्मसुतो बली परिणिन्ये ॥२४॥रुक्मी बद्धवैरोऽपि भगि-

पुत्र्यां तु रुक्मिणो राजन् नाम्ना भोजकटे पुरे॥ एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप॥ मातरः कृष्णजातानां सहस्राणि च षोडश ॥१९॥ राजोवाच॥ कथं रुक्म्यरिपुत्राय प्रादाद् दुहितरं युधि॥ कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते ॥२०॥ एतदाख्याहि मे विद्वन् द्विषोर्वैवाहिकं मिथः॥ अनागतमतीतं च वर्तमानमतीन्द्रियम्॥ विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिनः ॥२१॥ श्रीशुक उवाच॥ वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया॥ राज्ञः समेतान् निर्जित्य जहारैकरथो युधि ॥२२॥ यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः॥ व्यतरद् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम् ॥२३॥ रुक्मिण्यास्तनयां राजन् कृतवर्मसुतो बली॥ उपयेमे विशालाक्षीं कन्यां चारुमतीं किल ॥ २४॥ दौहित्रायानिरुद्धाय पौत्रीं रुक्म्यददद्धरेः॥ रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया॥ जानन्नधर्मं तद्यौनं स्नेहपाशानुबन्धनः॥ २५॥ तस्मिन्नभ्युदये राजन् रुक्मिणी रामकेशवौ॥ पुरं भोजकटं जग्मुः साम्बप्रद्युम्नकादयः ॥ २६॥ तस्मिन् निवृत्त उद्वाहे कालिङ्गप्रमुखा नृपाः॥ दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय॥ २७॥ अन-क्षज्ञो ह्ययं राजन्नपि तद्व्यसनं महत्॥ इत्युक्तो बलमाहूय तेनाक्ष रुक्म्यदीव्यत॥ २८॥

नीप्रियकाम्यया स्वपौत्रीं रोचनां दौहित्रायाऽनिरुद्धाय ददौ ॥२५॥ हे राजन्! तस्मिन् विवाहे[1] रामकृष्णाद्याः यादवाः भोजकटं पुरं जग्मुः ॥ २६॥ विवाहे निवृत्ते सति गर्विष्ठाः कालिङ्गप्रमुखाः नृपाः रुक्मिणमूचुः—हे राजन्! अयं रामोऽनक्षज्ञोऽस्ति। अतः एनमक्षैर्निर्जय ॥ २७॥ इत्युक्तो रुक्मी बलमाहूय तेन सह क्रीडितवान् ॥ २८॥

१ विवाहम्।

॥२९॥ ततो रुक्मी लक्षं पणं तत्र रामः शतं सहस्रमयुतं पणमाददे । पणं रुक्मी जिगाय । तदा कालिङ्गो दन्तान् संदर्शयन् रामं प्राहसत् ॥२९॥ ततो रुक्मी लक्षं पणं जगृहे । तत्र बलो जिगाय । रुक्मी त्वहं जितवानिति मिथ्याऽऽह ॥३०॥ तदा क्रुद्धस्ताम्रलोचनो रामो दशकोटीः पणमाददे ॥३१॥ तं चाऽपि रामो धर्मेण जितवान् तदा रुक्मी कपटमाश्रित्य मया जितं हे सभासदः ! यूयं ब्रूतेत्याह ॥३२॥ तदाऽऽकाशवाणी जगाद । रामेण धर्मतो वचनेनैव पणो जितः । रुक्मी मृषा वदति ॥३३॥ ततो दुष्टराजन्यप्रेरितो रुक्मी तां वाणीमनादृत्य रामं परिहसन् बभाषे ॥ ३४ ॥ अहो !

शतं सहस्रमयुतं रामस्तत्राददे पणम् ॥ तं तु रुक्म्यजयत् तत्र कालिङ्गः प्राहसद् बलम् ॥ दन्तान् संदर्शयन्नुच्चैर्नामृष्यत् तद्धलायुधः ॥ २९ ॥ ततो लक्षं रुक्म्यगृह्णाद् ग्लहं तत्राजयद्बलः ॥ जितवानहमित्याह रुक्मी कैतवमाश्रितः ॥ ३० ॥ मन्युना क्षुभितः श्रीमान् समुद्र इव पर्वणि ॥ जात्यारुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ॥ ३१ ॥ तं चापि जितवान् रामो धर्मेण च्छलमाश्रितः ॥ रुक्मी जितं मयात्रेमे वदन्तु प्राश्निका इति॥३२॥ तदाऽब्रवीन्नभो वाणी बलेनैव जितो ग्लहः ॥ धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥ ३३ ॥ तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः॥ संकर्षणं परिहसन् बभाषे कालचोदितः ॥३४॥ नैवाक्षकोविदा यूयं गोपाला वनगोचराः ॥ अक्षैर्दीव्यन्ति राजानो बाणैश्च न भवादृशाः ॥३५॥ रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः ॥ क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि ॥ ३६ ॥ कलिङ्गराजं तरसा गृहीत्वा दशमे पदे ॥ दन्तानपातयत् क्रुद्धो योऽहसद् विवृतैर्द्विजैः ॥ ३७ ॥ अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः ॥ राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥ ३८ ॥ निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा ॥ रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद् हरिः ॥ ३९ ॥

वनगोचराः गोपालाः यूयमक्षकोविदाः न । अक्षैर्बाणैश्च राजानः क्रीडन्ति ॥ ३५ ॥ एवं रुक्मिणा तिरस्कृतो रामः क्रुद्धः सन् परिघमुद्यम्य मंगलसभायां तं हत्वा ॥३६॥ कालिंगं दशमे पदे गृहीत्वा तस्य दन्तानपातयत् ॥ ३७ ॥ ततोऽन्ये राजानो रामपरिघेणार्दिताः भिन्नाङ्घ्रिबाहवो दुद्रुवुः ॥ ३८ ॥ रुक्मिणि श्याले हते सति हरिः रुक्मिणीबलयोः स्नेहभङ्गभयात साध्वसाधु वा नाब्रवीत ॥ ३९ ॥

ततो वध्वा सहानिरुद्धं रथं समारोप्य रामकृष्णादयो भोजकटाद्द्वारकां ययुः॥४०॥इति श्रीभागवते दश० चू० उत्त०एकषष्टितमोऽध्यायः॥६१॥
द्वियुक्षष्टितमे प्रोक्तमनिरुद्धस्य रोधनम्।कन्यया रममाणस्य बाणेन बहुबाहुना॥१॥अनिरुद्धोद्वहेऽन्यस्मिन् बाणयादवसंयुगे।श्रीकृष्णः श्रीहरं जित्वा बाणबाहूनथाच्छिनत् ॥२॥ राजोवाच ॥ हे ब्रह्मन् ! अनिरुद्धो बाणस्य तनयामूषामुपयेमे । तत्र कृष्णशङ्करयोर्महद् युद्धं बभूव । तत् सर्वं कथयितुमर्हसि ॥१॥ श्रीशुक उवाच ॥ बलेः शतं पुत्राः तेषु बाणो ज्येष्ठः आसीत् ॥ २ ॥ स दृढव्रतः शिवभक्तिरतः ॥३॥ शोणितपुरे

ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम् ॥ रामादयो भोजकटाद्दशार्हाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ४० ॥ इति श्रीभाग० महापु० दशमस्कन्धे उ० अनिरुद्धविवाहे रुक्मिवधो नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ राजोवाच ॥ बाणस्य तनयामूषामुपयेमे यदूत्तमः ॥ तत्र युद्धमभूद् घोरं हरिशङ्करयोर्महत् ॥ एतत्सर्वं महायोगिन् समाख्यातुं त्वमर्हसि ॥ १ ॥ श्रीशुक उवाच ॥ बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः ॥ येन वामनरूपाय हरयेऽदायि मेदिनी ॥ २ ॥ तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ॥ मान्यो वदान्यो धीमांश्च सत्यसन्धो दृढव्रतः ॥ ३ ॥ शोणिताख्यपुरे रम्ये स राज्यमकरोत् पुरा ॥ तस्य शम्भोः प्रसादेन किंकरा इव तेऽमराः ॥ सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम् ॥ ४ ॥ भगवान् सर्वभूतेशः शरण्यो भक्तवत्सलः ॥ वरेण च्छन्दयामास स तं वव्रे पुराधिपम् ॥ ५ ॥ स एकदाऽऽह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ॥ किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम् ॥ ६ ॥ नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ॥ पुंसामपूर्णकामानां कामपूरामराङ्घ्रिपम् ॥ ७ ॥ दोस्सहस्रं त्वया दत्तं परं भाराय मेऽभवत् ॥ त्रिलोक्यां प्रतियोद्धारं न लभे त्वदृते समम् ॥ ८ ॥

राज्यं चकार। तस्य शिवप्रसादेन देवाः किंकरा इवाऽऽसन्।स च तपसा प्राप्तसहस्रबाहुः सन् ताण्डवे शिवं तोषयामास॥४॥ ततो भक्तवत्सलः शिवो वरं वरयेत्याह। तदा स तं शिवं पुररक्षार्थं वव्रे ॥ ५ ॥ बाणः एकदा वीर्यदुर्मदः सन् किरीटेन तत्पदाम्बुजं स्पृशन् जगाद ॥६॥ हे महादेव । सर्वेश्वरं त्वां नमस्ये ॥ ७ ॥ मह्यं भुजसहस्रं त्वया दत्तम् । परन्तु मे भाराय, यतस्त्रिलोक्यां त्वां विना सहयोद्धारं न लभे ॥ ८ ॥

१ वानशौण्डः । २ कल्पवृक्षम् ।

हे आद्य ! अहं कण्डूत्या पूर्णैर्भुजैः पर्वतान् चूर्णयन् दिग्गजानगच्छम् । तेऽपि भीताः सन्तः संद्रुद्रुवुः ॥९॥ एवं तद्वचः श्रुत्वाः क्रुद्धः शङ्करः आह । हे मूढ ! यदा तव केतुर्भज्यते तदा मत्सदृशेन त्वद्दर्पघ्नं युद्धं भवेत् ॥१०॥ इत्याकर्ण्य बाणो हृष्टः सन् गृहं प्राप्य तत्कालं प्रतीक्षन् तस्थौ ॥११॥ तस्योषा नाम कन्याऽऽसीत् ! साऽनिरुद्धेन सह स्वप्ने रतिं प्राप ॥१२॥ ततः सा स्वप्ने एव पतिमपश्यन्ती हे कान्त ! त्वं कासि कासि इति वादिनी समुत्तस्थौ ॥१३॥ तदा बाणस्य मन्त्री कुम्भाण्डः तत्सुता चित्रलेखोषां पप्रच्छ ॥१४॥ हे सुभ्रूः ! त्वं कं मृगयसे ।

कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ॥ आद्याऽयां चूर्णयन्नद्रीन् भीतास्तेऽपि प्रदुद्रुवुः ॥ ९ ॥ तच्छ्रुत्वा भगवान्क्रुद्धः केतुस्ते भज्यते यदा ॥ त्वद्दर्पघ्नं भवेन्मूढ संयुगं मत्समेन ते ॥ १० ॥ इत्युक्तः कुमतिर्हृष्टः स्वगृहं प्राविशन्नृप ॥ प्रतीक्षन् गिरिशादेशं स्ववीर्यनाशनं कुधीः ॥११॥ तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् ॥ कन्याऽलभत कान्तेन प्रागदृष्टश्रुतेन च ॥ १२ ॥ सा तत्र तमपश्यन्ती क्वासि कान्तेतिवादिनी ॥ सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् ॥ १३ ॥ बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता ॥ सख्यपृच्छत्सखीमूषां कौतूहलसमन्विता ॥ १४ ॥ कं त्वं मृगयसे सुभ्रूः कीदृशस्ते मनोरथः ॥ हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये ॥ १५ ॥ ऊषोवाच ॥ दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः ॥ पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः ॥ १६ ॥ तमहं मृगये कान्तं पाययित्वाऽधरं मधु ॥ क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे ॥ १७ ॥ चित्रलेखोवाच ॥ व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते ॥ तमानेष्ये नरं यस्ते मनोहर्ता तमादिश ॥ १८ ॥



तव मनोरथः कः । हे राजकन्ये ! अद्यापि तव भर्तारं न पश्यामि ॥ १५ ॥ ऊषोवाच ॥ हे सखि ! मया स्वप्ने कश्चित् श्यामः कमलनेत्रः पीतवासाः नरश्रेष्ठो दृष्टः ॥१६॥ स मां मधुराधरं पाययित्वा दुःखाब्धौ क्षिप्त्वा क्वापि गतः । तं मृगये ॥१७॥ चित्रलेखोवाच ॥ हे सखि ! तव दुःखं हरामि । यस्तव मनोहर्ता स त्रैलोक्ये यदि स्यात् तर्हि तमानेष्ये ॥ १८ ॥

१ याधातोर्लङ् उत्तमपुरुषैकवचनम् ।

इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगदैत्यविद्याधरयक्षमनुजान् यथावत् पटे लिलेख ॥ १९ ॥ मनुजानां मध्ये वृष्णीन् रामकृष्णौ प्रद्युम्नमनिरुद्धं च लिलेख ॥२०॥ अनिरुद्धं वीक्ष्य लज्जयाऽवाङ्मुखी सती सोऽसाविति प्राह ॥ २१ ॥ ततश्चित्रलेखा तं कृष्णस्य पौत्रं ज्ञात्वाऽऽकाशमार्गेण द्वारकां गत्वा ॥२२॥ तत्र पर्यङ्के सुप्तमनिरुद्धं योगमायया गृहीत्वा शोणितपुरमानीय सख्यैः प्रियं दर्शयामास ॥२३॥ ऊषा तं

इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान् ॥ दैत्यविद्याधरान् यक्षान्मनुजांश्च यथाऽलिखत् ॥ १९ ॥ मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम् ॥ व्यलिखद् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता ॥२०॥ अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया ॥ सोऽसावसाविति प्राह स्मयमाना महीपते ॥२१॥ चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी ॥ ययौ विहायसा राजन् द्वारकां कृष्णपालिताम् ॥ २२ ॥ तत्र सुप्तं सुपर्यङ्के प्राद्युम्निं योगमास्थिता ॥ गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् ॥ २३ ॥ सा च तं सुन्दरवरं विलोक्य मुदितानना[1] ॥ दुष्प्रेक्ष्ये स्वगृहे पुंभी रेमे प्राद्युम्निना समम् ॥ २४ ॥ परार्ध्यवासस्स्रग्गन्धधूपदीपासनादिभिः ॥ पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्चितः ॥ २५ ॥ गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया ॥ नाहर्गणान् स बुबुधे ऊषयाऽपहृतेन्द्रियः ॥२६॥ तां तथा यदुवीरेण भुज्यमानां हतव्रताम् ॥ हेतुभिर्लक्षयाञ्चक्रुराप्रीतां दुरवच्छदैः[2] ॥२७॥ भटा आवेदयाञ्चक्रू राजंस्ते दुहितुर्वयम् ॥ विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥२८॥ अनपायिभिरस्माभिर्गुप्तायाश्च[3] गृहे प्रभो ॥ कन्याया दूषणं पुम्भिर्दुष्प्रेक्षाया न विद्महे ॥२९॥ ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ॥ त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद् यदूद्वहम् ॥ ३० ॥

विलोक्य मुदितानना सती स्वगृहेऽनिरुद्धेन सह रेमे ॥२४॥ अनिरुद्धो वासस्स्रग्गन्धभोजनादिभिः सेवया चाऽर्चितः ऊषया रममाणः सन् दिनसमूहान् न बुबुधे ॥२५॥२६॥ ततः सेवकास्तां यदुवीरेण भुज्यमानां हेतुभिर्ज्ञात्वा ॥२७॥ राजानमकथयन् । हे राजन्! तव कन्यायाः कुलदूषणं विरुद्धाचरणं लक्षयामः । तत् कुतः इति न जानीमः ॥२८॥२९॥ ततस्तच्छ्रुत्वा बाणो व्यथितः सन् कन्यागृहं गत्वाऽनिरुद्धं ददर्श ॥ ३० ॥

१ अतिहृष्टाम् । २ छादयितुमशक्यैः । ३ अप्रमत्तैः ।

तत्र कामात्मजं भुवनैकसुन्दरं श्यामं पीतवाससं कुण्डलयुतम् ॥३१॥ ऊषया सहाऽक्षैः क्रीडन्तं मालां बाह्वोर्मध्ये दधानं तं वीक्ष्य विस्मितो बभूव ॥ ३२ ॥ ततोऽनिरुद्धः ससैन्यं तं दृष्ट्वा परिघमुद्यम्य तस्थौ ॥ ३३ ॥ जेतुमिच्छया प्रसर्पतस्तान् जघान। ते हन्यमाना भवनाद् विनिर्गताः सन्तः प्रदुद्रुवुः ॥ ३४ ॥ तदा बाणः कुपितः सन् तं नागपाशैर्बबन्ध । ततस्तं बद्धं दृष्ट्वोषा रुरोद ॥ ३५॥ इति श्रीभागवते द० चू०

कामात्मजं तं भुवनैकसुन्दरं श्यामं पिशङ्गाम्बरमम्बुजेक्षणम् ॥ बृहद्भुजं कुण्डलकुन्तलत्विषा स्मितावलोकेन च मण्डिताननम् ॥ ३१ ॥ दीव्यन्तमक्षैः प्रिययाऽभिनृम्णया तदङ्गसङ्गस्तनकुंकुमस्रजम् ॥ बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥ ३२ ॥ स तं प्रविष्टं वृतमाततायिभिर्भटैरनेकैरवलोक्य माधवः ॥ उद्यम्य मौर्वं परिघं व्यवस्थितो यथान्तको दण्डधरो जिघांसया ॥ ३३ ॥ जिघृक्षया तान् परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ॥ ते हन्यमाना भवनाद् विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥ ३४ ॥ तं नागपाशैर्बलिनन्दनो बली घ्नन्तं स्वसैन्यं कुपितो बबन्ध ह ॥ ऊषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् ॥३५॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे अनिरुद्धबन्धो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

श्रीशुक उवाच ॥ अपश्यतां चानिरुद्धं तद्बन्धूनां च भारत ॥ चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ १ ॥ नारदात् तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ॥ प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ २ ॥ प्रद्युम्नो युयुधानश्च गदः साम्बोऽथ सारणः ॥ नन्दोपनन्दभद्राद्या रामकृष्णानुवर्तिनः ॥ ३ ॥

उ० द्विषष्टितमोऽध्यायः ॥ ६२ ॥ त्रियुक्षष्टितमे चाथ बाणयादवसङ्गरे । स्तुतिर्ज्वरेण रुद्रेण बाणबाहुभिदो हरेः ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! ततोऽनिरुद्धस्याऽदर्शनेन शोचतां ज्ञातीनां द्वारकायां चत्वारो वार्षिका मासा व्यतीयुः ॥१॥ एकदा नारदाद् बद्धस्यानिरुद्धस्य वार्तां तत्कृतं युद्धादिकं च श्रुत्वा वृष्णयः शोणितपुरं ययुः ॥ २ ॥ ते प्रद्युम्नसात्यकिसाम्बभद्रनन्दादयः ॥ ३ ॥

१ सर्वमङ्गलया । २ उद्यतशस्त्रैः । ३ मुरुर्लोहविशेषः तन्निर्मितम् । ४ अरोदीत् ।

द्वादशाक्षौहिणीसैन्यैः समन्ताद्बाणनगरं रुरुधुः ॥ ४ ॥ ततो बाणो भज्यमानपुरोद्यानादिकं वीक्ष्य ससैन्यो ययौ ॥५॥ तदा बाणार्थे शिवः ससुतैः प्रमथगणैर्वृतः सन् वृषमारुह्य संग्रामे आगत्य रामकृष्णाभ्यां युयुधे ॥६॥ तदाऽद्भुतं रोमहर्षणं युद्धमासीत् । तत्र कृष्णशङ्करयोः प्रद्युम्न-कार्तिकेययोः ॥ ७ ॥ कुम्भाण्डकूपकर्णाभ्यां बलस्य । साम्बस्य बाणपुत्रेण, सात्यकेर्बाणेन सह युद्धमासीत् ॥८॥ तदा ब्रह्मादयो देवा गन्ध-र्वादयश्च विमानैर्युद्धं द्रष्टुमागमन् ॥ ९ ॥ ततः श्रीकृष्णः शङ्करानुचरान् भूतप्रमथगुह्यकडाकिनीप्रेतपिशाचब्रह्मराक्षसादीन् बाणैर्द्रावयामास

अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतो दिशम् ॥ रुरुधुर्बाणनगरं समन्तात् सात्वतर्षभाः ॥ ४ ॥ भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ॥ प्रेक्षमाणो रुषाविष्टस्तुल्यसैन्योऽभिनिर्ययौ ॥ ५ ॥ बाणार्थे भगवान् रुद्रः ससुतैः प्रमथैर्वृतः ॥ आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः ॥ ६ ॥ आसीत् सुतुमुलं युद्धमद्भुतं रोमहर्षणम् ॥ कृष्णशङ्करयो राजन्प्रद्युम्नगुहयोरपि ॥ ७ ॥ कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगः ॥ साम्बस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥ ८ ॥ ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः ॥ गन्धर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥ ९ ॥ शङ्करानुचराञ्शौरिर्भूतप्रमथगुह्यकान् ॥ डाकिनीर्यातुधानांश्च वेतालान्सविनायकान् ॥ १० ॥ प्रेतमातृपिशाचांश्च कूष्माण्डान्ब्रह्मराक्षसान् ॥ द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥११॥ पृथग्विधानि प्रायुङ्क्त पिनाक्यस्त्राणि शार्ङ्गिणे ॥ प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥ १२ ॥ ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ॥ आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥ १३ ॥ मोहयित्वा तु गिरिशं जृम्भणास्त्रेण जृम्भितम् ॥ बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥ १४ ॥ स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानः समन्ततः ॥ असृग्विमुञ्चन् गात्रेभ्यः शिखिनाऽपाक्रमद्रणात् ॥१५॥

॥ १० ॥११॥ तदा शिवः कृष्णाय पृथग्विधान्यस्त्राणि योजयामास । तानि भगवान् प्रत्यस्त्रैः शमयामास ॥ १२ ॥ ब्रह्मास्त्रस्य ब्रह्मास्त्रम् । वायव्यस्य पार्वतम् ॥ आग्नेयस्य पार्जन्यम् । पाशुपतास्त्रस्य नारायणास्त्रम् ॥ १३ ॥ ततः कृष्णो जृम्भणास्त्रेण शिवं मोहयित्वा गदेषुभिर्बाणस्य सेनां जघान ॥ १४ ॥ स्कन्दः प्रद्युम्नबाणैः पीडितः सन् रक्तं विमुञ्चन् रणादपाक्रमत् ॥ १५ ॥

१ मयूरेण वाहनेन सह ।

कुम्भाण्डकूपकर्णौ मुसलार्दितौ सन्तौ पेततुः । तदा बाणसैन्यानि दुद्रुवुः ॥१६॥ ततो बाणः स्वसैन्यं पलायमानं दृष्ट्वा युद्धे सात्यकिं हित्वा कृष्णमभ्यद्रवत् ॥ १७॥ बाणः पञ्च शतानि धनूंष्याकृष्य युगपदेकैकस्मिन् द्वौ द्वौ शरौ संदधे ॥ १८ ॥ हरिस्तानि धनूंषि युगपत् छित्त्वा सारथिं रथमश्वांश्च हत्वा शङ्खनादं चकार ॥१९॥ तदा बाणस्य माता कोटरा नाम्नी पुत्र प्राणरक्षणार्थं नग्ना सती कृष्णस्याग्रेऽवतस्थे ॥२०॥

कुम्भाण्डः कूपकर्णश्च पेततुर्मुसलार्दितौ ॥ दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥ १६ ॥ विशीर्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षणः ॥ कृष्णमभ्यद्रवत्संख्ये रथी हित्वैव सात्यकिम् ॥१७॥ धनूंष्याकृष्य युगपद्बाणः पञ्च शतानि वै ॥ एकैकस्मिञ्छरौ द्वौ द्वौ संदधे रणदुर्मदः ॥१८॥ तानि चिच्छेद भगवान् धनूंषि युगपद्धरिः ॥ सारथिं रथमश्वांश्च हत्वा शंखमपूरयत ॥१९॥ तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा ॥ पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥ २० ॥ ततस्तिर्यङ्मुखो नग्नामनिरीक्षन् गदाग्रजः ॥ बाणश्च तावद्विरथश्छिन्नधन्वाऽविशत् पुरम् ॥ २१ ॥ विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात ॥ अभ्यधावत दाशार्हं दहन्निव दिशो दश ॥ २२ ॥ अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥ २३ ॥ माहेश्वरः समाक्रन्दन् वैष्णवेन बलार्दितः ॥ अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वरः ॥ शरणार्थी हृषीकेशं तुष्टाव प्रयताञ्जलिः ॥२४॥ ज्वर उवाच ॥ नमामि त्वाऽनन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् ॥ विश्वोत्पत्तिस्थानसंरोधहेतुं यत् तद् ब्रह्म ब्रह्मलिङ्गं[1] प्रशान्तम् ॥ २५ ॥



कृष्णस्तां नग्नां निरीक्ष्य तिर्यङ्मुखो बभूव । तावद्विरथो बाणः पुरमाविशत् ॥२१॥ एवं भगवता भूतगणे विद्राविते सति शैवो ज्वरः कृष्णमभ्यपद्यत ॥ २२ ॥ अथ कृष्णस्तं ज्वरं दृष्ट्वा शीतज्वरं ससर्ज । ततस्तौ ज्वरौ युयुधाते ॥ २३ ॥ तदा वैष्णवज्वरेण पीडितः शैवज्वरो भीतः सन् कृष्णं तुष्टाव ॥ २४ ॥ ज्वर उवाच ॥ हे भगवन् ! अनन्तशक्तिं परेशं सर्वात्मानं त्वां नमामि ॥ २५ ॥

---

१ ब्रह्मणा वेदेन लिङ्ग्यते द्योत्यते इति ।

कालादिकं सर्वं त्वन्माययैव । अतस्तन्नाशकं त्वां भजे ॥२६॥ मत्स्याद्यवतारैर्देवादीन् पालयसि । एतत् तव जन्म भूमेर्भारहरणाय ॥२७॥ हे प्रभो ! तव शीतज्वरेण तप्तोऽस्मि । यावत् तवाङ्घ्रिमूलं नो सेवेरन् तावत् देहिनां तापो युक्तः । सेवायां प्रवृत्तानां त्वत्तो भयं न भवेत् ॥ २८ ॥ श्रीभगवानुवाच ॥ हे त्रिशिरः ! तुभ्यं प्रसन्नोऽस्मि । तव मज्ज्वराद् भयं व्येतु । यो नौ संवादं स्मरति तस्य त्वत्तो भयं न भवेत्

कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः ॥ तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥२६॥ नानाभावैर्लीलयैवोपपन्नैर्देवान् साधून् लोकसेतून् बिभर्षि ॥ हंस्युन्मार्गान् हिंसया वर्तमानान् जन्मैतत् ते भारहाराय भूमेः ॥२७॥ तप्तोऽहं ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण ॥ तावत् तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन् यावदाशानुबद्धाः ॥ २८ ॥ श्रीभगवानुवाच ॥ त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वराद् भयम् ॥ यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥ २९ ॥ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ॥ बाणस्तु रथमारूढः प्रागाद्योत्स्यन् जनार्दनम् ॥ ३० ॥ ततो बाहुसहस्रेण नानायुधधरोऽसुरः ॥ मुमोच परमक्रुद्धो बाणांश्चक्रायुधे नृप ॥३१॥ तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना ॥ चिच्छेद भगवान् बाहून् शाखा इव वनस्पतेः ॥ ३२ ॥ बाहुषु छिद्यमानेषु बाणस्य भगवान् भवः ॥ भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत ॥ ३३ ॥ श्रीरुद्र उवाच ॥ त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये ॥ यं पश्यन्त्यमलात्मान आकाशमिव केवलम् ॥ ३४ ॥

॥ २९ ॥ इत्याकर्ण्य शैवज्वरोऽच्युतं प्रणम्य गतः । बाणस्तु रथमारूढः सन् योद्धुं कृष्णं जगाम ॥ ३० ॥ ततो बाणः कृष्णे बाहुसहस्रेण बाणान् मुमोच ॥ ३१ ॥ कृष्णश्चक्रेण वनस्पतेः शाखा इव तस्य बाहूंश्चिच्छेद ॥ ३२ ॥ तदा भक्तानुकम्पी शिवः कृष्णसमीपमागत्य बभाषे ॥ ३३ ॥ रुद्र उवाच । त्वं परं ब्रह्मासि । अमलात्मानः केवलं यं पश्यन्ति ॥ ३४ ॥

---

१ भूतसूक्ष्माणि । २ शरीरम् । ३ अहंकारः । ४ एकादशेन्द्रियाणि महाभूतानि चेति षोडशकः । ५ लिङ्गदेहः । ६ अङ्कुरः । ७ तस्य निषेधः अपोहो यस्मिस्तं त्वाम् । ८ मत्स्याद्यवतारैः ।

( अतो विराड्रूपेण स्तौति ) यस्य नभो नाभिः । अग्निर्मुखम् । अम्बु रेतः । द्यौः शीर्षम् । दिशः कर्णौ । भूः पादौ । चन्द्रो मनः । अर्को नेत्रे । अहं शिवोऽहङ्कारः समुद्रो जठरम् । इन्द्रो बाहुः ॥ ३५ ॥ औषधयो रोमाणि । मेघाः केशाः । ब्रह्मा बुद्धिः । प्रजापतिर्मेढ्रम् । धर्मो हृदयम् । स भवान् लोककल्पः पुरुषोऽस्ति ॥ ३६ ॥ विराड्रूपस्य तवायमवतारो धर्मरक्षणाय जगतश्च कल्याणाय वर्तते ॥३७॥ त्वमेक

नाभिर्नभोऽग्निर्मुखमम्बु रेतो द्यौः शीर्षमाशाः श्रुतिरङ्घ्रिरुर्वी ॥ चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्रः ॥३५॥ रोमाणि यस्यौषधयोऽम्बुवाहाः केशा विरिञ्चो धिषणा विसर्गः ॥ प्रजापतिर्हृदयं यस्य धर्मः स वै भवान् पुरुषो लोककल्पः ॥३६॥ तवावतारोऽयमकुण्ठधामन् धर्मस्य गुप्त्यै जगतो भवाय ॥ वयं च सर्वे भवताऽनुभाविता विभावयामो भुवनानि सप्त ॥ ३७ ॥ त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्घेतुरहेतुरीशः ॥ प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुणप्रसिद्ध्यै ॥३८॥ यथैव सूर्यः पिहितश्छायया स्वया छायां च रूपाणि च संचकास्ति ॥ एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥३९॥ यन्मायामोहितधियः पुत्रदारगृहादिषु ॥ उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥४०॥ देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ॥ यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥ ४१ ॥ यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ॥ विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन् ॥ ४२ ॥ अहं ब्रह्माऽथ विबुधा मुनयश्चामलाशयाः ॥ सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम् ॥ ४३ ॥

आद्योऽद्वितीयः स्वमायया सर्वविषयप्रकाशनाय प्रतीयसे ॥ ३८ ॥ हे भगवन् ! त्वमहङ्कारेण छादितोऽपि सत्त्वादीन् प्रकाशयसि ॥ ३९ ॥ यन्मायामोहिताः पुत्रादिषु प्रसक्ताः दुःखसागरे उन्मज्जन्ति निमज्जन्ति ॥४०॥ इमं नृदेहं लब्ध्वा यस्त्वत्पादौ नाद्रियेत स शोच्यः ॥४१॥ य ईश्वरं विसृजते सोऽमृतं त्यक्त्वा विषं भक्षयति ॥ ४२ ॥ अतोऽहं ब्रह्माद्याश्च त्वां प्रपन्नाः ॥ ४३ ॥



१ अभ्युदयाय । २ पालयामः । ३ शुद्धः । ४ जीवान् ।

अस्य विश्वस्य स्थित्यादिहेतुं त्वां भवापवर्गाय भजाम ॥४४॥ हे ईश ! अयं बाणो मम प्रियः। अस्य मयाऽभयं दत्तम् । अतोऽस्मिन् प्रसादः संपाद्यताम् ॥४५॥ श्रीभगवानुवाच । हे भव ! त्वं यदात्थ तत् तव प्रियं करवाम ॥४६॥ अयं बाणो ममाप्यवध्योऽस्ति । यतः प्रह्लादाय तव वंशो मया न वध्य इति वरो दत्तः ॥४७॥ तथापि गर्वनाशार्थमस्य बाहवश्छिन्नाः ॥ भुवो भारभूतं सैन्यं च नाशितम् ॥४८॥ अस्यावशिष्टा-श्चत्वारो भुजा अजरामरा भविष्यन्ति । अयं बाणस्तव पार्षदगणेषु मुख्यो भविष्यति ॥४९॥ इत्यभयं लब्ध्वा शिरसा कृष्णं प्रणम्योषया

तं त्वां जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्मदैवम्॥अनन्यमेकं जगदात्मकेतं[1] भवापवर्गाय भजाम देवम् ॥४४॥ अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव ॥ संपाद्यतां तद् भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥ ४५ ॥ श्रीभगवानुवाच ॥ यदात्थ भगवंस्त्वं नः करवाम प्रियं तव ॥ भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥ ४६ ॥ अवध्योऽयं ममाप्येष वैरोचनिसुतोऽसुरः ॥ प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥४७॥ दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ॥ सूदितं च बलं भूरि यच्च भारायितं भुवः ॥४८॥ चत्वारोऽस्य भुजाः शिष्टा भविष्यन्त्यजरामराः ॥ पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः ॥४९॥ इति लब्ध्वाऽभयं कृष्णं प्रणम्य शिरसाऽसुरः ॥ प्राद्युम्निं रथमारोप्य सवध्वा समुपानयत्॥५०॥अक्षौहिण्या परिवृतं सुवासःसमलङ्कृतम् ॥ सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥५१॥ स्वराजधानीं समलङ्कृतां ध्वजैः सतोरणैरुक्षितमार्गचत्वराम् ॥ विवेश शंखानकदुन्दुभिस्वनैरभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥ ५२ ॥ य एवं कृष्णविजयं शङ्करेण च संयुगम् ॥ संस्मरेत् प्रातरुत्थाय न तस्य स्यात् पराजयः ॥५३॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे बाणनिग्रहो नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

सहानिरुद्धं रथमारोप्य तस्य समीपं निनाय ॥ ५० ॥ ततः कृष्णः सपत्नीकमक्षौहिणीपरिवृतमनिरुद्धं पुरस्कृत्य ययौ ॥ ५१ ॥ ध्वजतोरणैः समलङ्कृतां सिक्तमार्गचत्वरां ब्राह्मणादिभिरभिमुखं गत्वा सत्कृतः शङ्खानकदुन्दुभिस्वनैः स्वराजधानीं विवेश॥५२॥ यः प्रातरुत्थायैवं कृष्णविजयं स्मरेत् तस्य पराजयो न स्यात् ॥५३॥ इति श्रीभागवते महापुराणे दशमस्कन्धे चूर्णिकायामुत्तरार्द्धे त्रिषष्टितमोऽध्यायः ॥६३॥

[1] जगतामात्मनां च केतमधिष्ठानम् ।

विभूतिभाग्यभोगादिमदोन्नद्धमनोरथान् ॥ ब्रह्मस्वहारिदोषोक्त्या राज्ञो दृष्टानशिक्षयत् ॥ १ ॥
चतुःषष्टितमे कृष्णो नृगं शापादमोचयत् ॥ अन्वशासद् यदून् कृष्णो नृगोद्धारप्रसङ्गतः ॥२॥ श्रीशुक उवाच । हे राजन् ! एकदा साम्बादयो यदुकुमारा विहर्तुमुपवनं जग्मुः ॥१॥ तत्र सुचिरं क्रीडित्वा तृषिता जलं विचिन्वन्तो जलरहिते कूपेऽद्भुतं सत्त्वं ददृशुः ॥२॥ गिरिनिभं कृकलासं वीक्ष्य विस्मिताः कृपया तस्योद्धरणे यत्नं चक्रुः ॥३॥ यदा पतितं तं चर्मतान्तवैः पाशैर्बद्ध्वा निष्कासितुं नाशक्नुवन् तदा कृष्णाय कथयामासुः ॥ ४ ॥ तदा कृष्णस्तत्रागत्य

श्रीशुक उवाच ॥ एकदोपवनं राजन् जग्मुर्यदुकुमारकाः ॥ विहर्तुं साम्बप्रद्युम्नचारुभानुगदादयः ॥ १ ॥ क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः ॥ जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ २ ॥ कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः ॥ तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयान्विताः ॥३॥ चर्मजैस्तान्तवैः पाशैर्बद्ध्वा पतितमर्भकाः ॥ नाशक्नुवन् समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥४॥ तत्रागत्यारविन्दाक्षो भगवान् विश्वभावनः ॥ वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥५॥ स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम् ॥ सन्तप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालंकरणाम्बरस्रक् ॥ ६ ॥ पप्रच्छ विद्वानपि तन्निदानं जनेषु विख्यापयितुं मुकुन्दः ॥ कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम् ॥७॥ दशामिमां वा कतमेन कर्मणा संप्रापितोऽस्यतदर्हः सुभद्रः ॥ आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे नः क्षममत्र वक्तुम् ॥८॥ श्रीशुक उवाच ॥ इति स्म राजा संपृष्टः कृष्णेनानन्तमूर्तिना ॥ माधवं प्रणिपत्याह किरीटेनार्कवर्चसा ॥ ९ ॥

तं वीक्ष्य लीलया वामकरेणोज्जहार ॥ ५ ॥ श्रीकृष्णकरस्पृष्टः स तद्रूपं सद्यो विहाय सप्तसुवर्णो[1] देवो बभूव ॥६॥ तदा भगवान् जानन्नपि जनेषु तन्निदानं[2] विख्यापयितुं पप्रच्छ । हे महाभाग ! त्वं कोऽसि । अहं त्वां देवोत्तमं गणयामि ॥ ७ ॥ त्वं केन कर्मणेमां दशां प्रापितः ! हे सुभद्र ! अत्र योग्यं यदि मन्यसे तर्हि नः कथय ॥ ८ ॥ श्रीशुक उवाच ॥ इति कृष्णेन पृष्टो राजा माधवं प्रणिपत्याह ॥ ९ ॥



१ सुवर्णम् । २ कारणम् ।

नृग उवाच ॥ हे प्रभो ! अहमिक्ष्वाकुपुत्रो नृगो नाम राजाऽस्मि । दानिषु विख्यातश्चास्मि ॥१०॥ हे नाथ ! भवता किं न विदितम् । तथापि तवाज्ञया वक्ष्ये ॥११॥ हे भगवन् ! यावत्यो भूमेः सिकतास्तथा दिवि तारकास्तथा वर्षधारास्तावतीर्गाः ॥१२॥पयस्विनीस्तरुणीः कपिलवर्णाः सवत्सा हेमशृङ्गी रूप्यखुरा न्यायार्जिताः॥१३॥स्वलङ्कृतेभ्यस्तपः शीलगुण वद्भ्यो द्विजपुङ्गवेभ्यः प्रादाम्॥१४॥तथा गोभूहिरण्यगृहाश्व हस्ति कन्यादासीतिलरूप्यशय्यावस्त्ररत्नरथांश्च प्रादाम् । यज्ञैरिष्टं वापीकूपखननादिकं च कृतम् ॥१५॥ एवंभूतस्य मम किञ्चित् संकटं प्राप्तं तच्छृणु ।

नृग उवाच ॥ नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो ॥ दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥ १० ॥ किं नु ते विदितं नाथ सर्वभूतात्मसाक्षिणः ॥ कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥ ११ ॥ यावत्यः सिकता भूमेर्यावत्यो दिवि तारकाः ॥ यावत्यो वर्षधाराश्च तावतीरददं स्म गाः ॥ १२ ॥ पयस्विनीस्तरुणीः शीलरूपगुणोपपन्नाः कपिला हेमशृङ्गीः ॥ न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम् ॥ १३ ॥ स्वलङ्कृतेभ्यो गुणशीलवद्भ्यः सीदत्कुटुम्बेभ्य ऋतव्रतेभ्यः ॥ तपःश्रुतब्रह्मवदान्यसद्भ्यः प्रादां युवभ्यो द्विजपुङ्गवेभ्यः ॥ १४ ॥ गोभूहिरण्यायतनाश्वहस्तिनः कन्याः सदासीस्तिलरूप्यशय्याः ॥ वासांसि रत्नानि परिच्छदान् रथानिष्टं च यज्ञैश्चरितं च पूर्तम् ॥१५॥ कस्यचिद्द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने ॥ संपृक्ताऽविदुषा सा च मया दत्ता द्विजातये ॥ ॥ १६ ॥ तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति तम् ॥ ममेति प्रतिग्राह्याय नृगो मे दत्तवानिति ॥ १७ ॥ विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ ॥ भवान् दाताऽपहर्तेति तच्छ्रुत्वा मेऽभवद्भ्रमः ॥ १८ ॥ अनुनीतावुभौ विप्रौ धर्मकृच्छ्रगतेन वै ॥ गवां लक्षं प्रकृष्टानां दास्याम्येषा प्रदीयताम् ॥ १९ ॥

कस्यचित् प्रतिग्रहरहितस्य द्विजस्य भ्रष्टा गौर्मम गोधने मिलिता। सा चाऽजानता मयाऽन्यस्मै विप्राय दत्ता॥१६॥ततस्तेन नीयमानां तां दृष्ट्वा तत्स्वामी ममेति तमाह । प्रतिग्राही नृगो मे दत्तवान् इति जगाद ॥१७॥ एवं विवदमानौ तौ विप्रौ मामूचतुः । भवान् दाताऽपहर्तेति तत् श्रुत्वा भ्रमो जातः ॥१८॥ ततो मयोभौ विप्रौ प्रार्थितौ । हे अप्रतिग्राहिन् ! एषास्य दीयताम्,तव गवां लक्षंदास्यामि प्रतिग्राहिणमप्येवमवोचम्॥१९॥

हे द्विजौ ! नरके पतन्तं मां समुद्धरतम् ॥ २० ॥ ततः स्वामी गवां लक्षं न गृह्णामि इत्युक्त्वा गतः । प्रतिग्राह्यपि तथैवोक्त्वा गां त्यक्त्वा ययौ ॥ २१ ॥ एतस्मिन्समये यमदूतैर्यमलोकमहं नीतः सन् तत्र यमेन पृष्टः ॥२२॥ हे नृप ! पूर्वं त्वमशुभं भुङ्क्ष्व उत शुभम् । तव दानधर्मस्यान्तं न पश्यामि ॥ २३ ॥ तदा पूर्वमशुभं भुञ्ज इति मयोक्ते सति स पतेति प्राह । तावत् पतन् सन्नात्मानं कृकलासमद्राक्षम् ॥ २४ ॥ हे केशव ! तव दासस्य मे स्मृतिरद्यापि न विभ्रष्टा ॥२५॥ हे विभो ! त्वं योगेश्वरैरपि हृदि चिन्त्यः स कृकलासजन्मदुःखेनान्धबुद्धेर्ममाऽक्षि

नाहं प्रतीच्छे वै भवन्तावनुगृह्णीतां किङ्करस्याविजानतः ॥ समुद्धरतं मां कृच्छ्रात्पतन्तं निरयेऽशुचौ ॥ २० ॥ नान्यद्गवामप्ययुतमिच्छामीत्यपरो ययौ ॥२१॥ एतस्मिन्नन्तरे याम्यैर्दूतैर्नीतोयमक्षयम् ॥ यमेन पृष्टस्तत्राऽहं देवदेव जगत्पते ॥ २२ ॥ पूर्वं त्वमशुभं भुङ्क्षे उताहो नृपते शुभम् ॥ नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः ॥ २३ ॥ पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः ॥ तावदद्राक्षमात्मानं कृकलासं पतन् प्रभो ॥ २४ ॥ ब्रह्मण्यस्य वदान्यस्य तव दासस्य केशव ॥ स्मृतिर्नाद्यापि विध्वस्ता भवत्संदर्शनार्थिनः ॥२५॥ स त्वं कथं मम विभोऽक्षिपथः परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः ॥ साक्षादधोक्षज उरुव्यसनान्धबुद्धेः स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः ॥ २६ ॥ देवदेव जगन्नाथ गोविन्द पुरुषोत्तम ॥ नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय ॥२७॥ अनुजानीहि मां कृष्ण यान्तं देवगतिं प्रभो ॥ यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम् ॥ २८ ॥ नमस्ते सर्वभावाय ब्रह्मणेऽनन्तशक्तये ॥ कृष्णाय वासुदेवाय योगानां पतये नमः ॥ २९ ॥ इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ॥ अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम् ॥ ३० ॥

गोचर इति चित्रम् ॥२६॥ हे देवदेव ! हे पुरुषोत्तम ! हे नारायण ! हे कृष्ण ! देवगतिं यान्तं ममाज्ञां देहि । यत्र क्वापि त्वच्चरणारविन्दे रतिर्भूयात् ॥ २७ ॥ २८ ॥ हे भगवन् ! ब्रह्मणेऽनन्तशक्तये कृष्णाय तुभ्यं नमः ॥ २९ ॥ इत्युक्त्वा तं परिक्रम्य स्वमुकुटेन पादौ स्पृष्ट्वा कृष्णस्याज्ञां गृहीत्वा विमानमारुह्य स्वर्गं ययौ ॥ ३० ॥

१ उपनिषच्चक्षुषा । २ यस्य संसारनिवृत्तिर्नियंता तस्यैव त्वं दृश्यो भवसीत्यर्थः । ३ इष्टापूर्तादिकर्मणाम् । ४ फलवात्रे ।

ततः कृष्णो राज्ञः शिक्षयन् स्वजनं प्राह ॥३१॥ भो जनाः ! ब्रह्मस्वं किञ्चिदपि तेजस्विनोऽपि वह्नेर्दुर्जरं बत । राज्ञां किमुत ॥ ३२ ॥ किंच अहं हालाहलं विषं न मन्ये । यतस्तस्य प्रतिक्रियाऽस्ति । ब्रह्मस्वं हि विषं प्रोक्तम् अस्य प्रतिक्रिया भुवि नास्ति ॥ ३३ ॥ विषं भक्षण-कर्तारं हिनस्ति । अग्निरद्भिः शाम्यति । इदं तु समूलं कुलं दहति ॥ ३४ ॥ अनुज्ञां विना ब्रह्मस्वं भुक्तं चेत् त्रिपुरुषं हन्ति । राजाश्रयतो हठाद्भुक्तं चेत् दश पूर्वान् दशापरान् पुरुषान् हन्ति ॥ ३५ ॥ ये राजानो ब्रह्मस्वमिच्छन्ति तेऽज्ञाः आत्मपातं न पश्यन्ति ॥ ३६ ॥ हृत

कृष्णः परिजनं प्राह भगवान् देवकीसुतः ॥ ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ ३१ ॥ दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ॥ तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ ३२ ॥ नाहं हालाहलं मन्ये विषं यस्य प्रति-क्रिया ॥ ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥ ३३ ॥ हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति ॥ कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ ३४ ॥ ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् ॥ प्रसह्य तु बलाद्भुक्तं दशपूर्वान् दशापरान् ॥३५॥ राजानो राजलक्ष्म्याऽन्धा नात्मपातं विचक्षते ॥ निरयं येऽभिमन्यन्ते ब्रह्मस्वं साधु बालिशाः ॥ ॥ ३६ ॥ गृह्णन्ति यावतः पांसून् क्रन्दतामश्रुबिन्दवः ॥ विप्राणां हृतवृत्तीनां वदान्यानां कुटुम्बिनाम् ॥ ३७ ॥ राजानो राजकुल्याश्च तावतोऽब्दान् निरंकुशाः ॥ कुम्भीपाकेषु पच्यन्ते ब्रह्मदायापहारिणः ॥ ३८ ॥ स्वदत्तां पर-दत्तां वा ब्रह्मवृत्तिं हरेच्च यः ॥ षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ ३९ ॥ न मे ब्रह्मधनं भूयाद् यद् गृध्वा-ल्पायुषो नराः ॥ पराजिताश्च्युता राज्याद् भवन्त्युद्वेजिनोऽहयः ॥४०॥ विप्रं कृतागसमपि नैव द्रुह्यत मामकाः ॥ घ्नन्तं बहुशपन्तं वा नमस्कुरुत नित्यशः ॥ ४१ ॥

वृत्तीनां विप्राणां क्रन्दतां सतामश्रुबिन्दवो यावतः पांसून् गृह्णन्ति तावतोऽब्दान् ब्रह्मस्वहारिणः कुम्भीपाकेषु पच्यन्ते ॥ ३७ ॥ ३८ ॥ यः स्वदत्तां वा परदत्तां वा ब्रह्मवृत्तिं हरेत् स षष्टिवर्षसहस्राणि विष्ठायां कृमिर्जायते ॥ ३९ ॥ अतो मे ब्रह्मस्वं मा भूत् । नृपास्तद्धनमभिकाङ्क्ष्य स्वल्पायुषो राज्यभ्रष्टाः पराजिताश्च भवन्ति ॥ ४० ॥ हे मामकाः ! कृतागसमपि घ्नन्तं बहु शपन्तं विप्रं नमस्कुरुत ॥ ४१ ॥

अहं यथा नमामि तथा यूयं नमत । यो न नमेत् स मत्तो दण्डभाक् स्यात् ॥४२॥ अपहृतं ब्रह्मस्वं हर्तारमधः पातयति । अजानन्तं नृगं ब्राह्मणगौरिव ॥४३॥ भगवानेवं विश्राव्य निजमन्दिरं विवेश ॥४४॥ इति श्रीभा० द० चू० उ० चतुःषष्टितमोऽध्यायः ॥६४॥ पञ्चषष्टितमे रामश्चक्रे गोकुलमागतः । रममाणस्तु गोपीभिः कालिन्द्याकर्षणं मदात् ॥१॥ रामस्य चरितं चित्रं कालिन्द्याकर्षणादि यत् ॥ पौण्ड्रकान्तादि कृष्णस्य पृथगुक्तमतः परम् ॥२॥ श्रीशुक उवाच ॥ हे राजन् ! बलरामः सुहृद्दिदृक्षया रथमास्थितः सन् गोकुलं ययौ ॥१॥ ततो गोपगोपी-

यथाहं प्रणमे विप्राननुकालं समाहितः ॥ तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ॥ ४२ ॥ ब्राह्मणार्थो ह्यपहृतो हर्तारं पातयत्यधः ॥ अजानन्तमपि ह्येनं नृगं ब्राह्मणगौरिव ॥ ४३ ॥ एवं विश्राव्य भगवान् मुकुन्दो द्वारकौकसः ॥ पावनः सर्वलोकानां विवेश निजमन्दिरम् ॥ ४४ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे नृगोपाख्यानं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ श्रीशुक उवाच ॥ बलभद्रः कुरुश्रेष्ठ भगवान्रथमास्थितः ॥ सुहृद्दिदृक्षुरुत्कण्ठः प्रययौ नन्दगोकुलम् ॥१॥ परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेव च ॥ रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः ॥२॥ चिरं नः पाहि दाशार्ह सानुजो जगदीश्वरः ॥ इत्यारोप्याङ्कमालिंग्य नेत्रैः सिषिचतुर्जलैः ॥ ३ ॥ गोपवृद्धांश्च विधिवद् यविष्ठैरभिवन्दितः ॥ यथावयो यथासख्यं यथासम्बन्धमात्मनः ॥ ४ ॥ समुपेत्याथ गोपालान्हास्यहस्तग्रहादिभिः ॥ विश्रान्तं सुखमासीनं पप्रच्छुः पर्युपागताः ॥ ५ ॥ पृष्टाश्चानामयं स्वेषु प्रेमगद्गदया गिरा ॥ कृष्णे कमलपत्राक्षे संन्य-स्ताखिलराधसः ॥६॥ कच्चिन्नो बान्धवा राम सर्वे कुशलमासते ॥ कच्चित् स्मरथ नो राम यूयं दारसुतान्विताः ॥७॥

भिरालिङ्गितो रामः पितरौ प्रणतवान् । ततस्तावाशिषं दत्त्वोचतुः ॥ २ ॥ हे दाशार्ह ! सानुजो नश्चिरं पाहि । इत्युक्त्वाङ्कमारोप्यालिङ्ग्य तं नेत्रोदकैः सिषिचतुः॥ ३॥ ततो रामो गोपवृद्धान् प्रणम्य कनिष्ठैर्वन्दितः॥ ४ ॥ ततो गोपालान् हास्यहस्तग्रहादिभिः समुपेत्य कुशलं पप्रच्छ । ते च रामं यादवेषु कुशलं पप्रच्छुः ॥ ५ ॥ ६ ॥ हे राम ! सर्वे बान्धवाः कुशलमासते कच्चित् । यूयं नः स्मरथ किम् ? ॥ ७ ॥

१ कृष्णाप्राप्त्यर्थम् । २ त्यक्तसर्वविषयाः ।

किञ्च। भवद्भिः कंसो हतः। सुहृज्जना मुक्ताः। रिपून् निर्जित्य यूयं दुर्गं श्रिताः। एतद् दिष्ट्या ॥८॥ ततो गोप्यो हसन्त्यः सत्यः पप्रच्छुः। हे राम! स्त्रीजनवल्लभः कृष्णः सुखमास्ते किम् ॥ ९ ॥ तथा मातापितरौ स्मरति किम्। अस्माकं सेवामनुस्मरति किम् ॥ १० ॥ हे राम! यदर्थं वयं पतिं पुत्रादीन् स्वजनान् त्यक्तवत्यस्ता नः सद्यस्त्यक्त्वा गतः। स्त्रीभिस्तादृशं भाषितं कथं न श्रद्धीयेत ॥ ११ ॥ १२ ॥ तस्य कृतघ्नस्य वचः पुरस्त्रियः कथं गृह्णन्ति ॥ १३ ॥ हे गोप्यः! तत्कथया नः किम्। अपराः कथाः कथयत। यथास्माभिर्विना तस्य कालो

दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः ॥ निहत्य निर्जित्य रिपून् दिष्ट्या दुर्गं समाश्रिताः ॥८॥ गोप्यो हसन्त्यः पप्रच्छुः रामसंदर्शनादृताः ॥ कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः ॥ ९ ॥ कच्चित्स्मरति वा बन्धून् पितरं मातरं च सः ॥ अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः ॥१०॥ मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि ॥ यदर्थेऽजहिम दाशार्ह दुस्त्यजान् स्वजनान् प्रभो॥११॥ ता नः सद्यः परित्यज्य गतः संछिन्नसौहृदः॥ कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम् ॥ १२ ॥ कथं नु गृह्णन्त्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः पुरस्त्रियः ॥ गृह्णन्ति वै चित्रकथस्यसुन्दर स्मितावलोकोच्छ्वसितस्मरातुराः ॥१३॥ किं नस्तत्कथया गोप्यः कथाः कथयतापराः ॥ यात्यस्माभिर्विना कालो यदि तस्य तथैव नः ॥१४॥ इति प्रहसितं शौरेर्जल्पितं चारु वीक्षितम् ॥ गतिं प्रेमपरिष्वङ्गं स्मरन्त्यो रुरुदुः स्त्रियः॥१५॥संकर्षणस्ताः कृष्णस्य संदेशैर्हृदयङ्गमैः ॥ सान्त्वयामास भगवान् नानाऽनुनयकोविदः ॥ १६ ॥ द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च ॥ रामः क्षपासु भगवान् गोपीनां रतिमावहन् ॥१७॥ पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना ॥ यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः ॥ १८ ॥

याति तथैव तेन विनाऽस्माकम् (परन्तु तस्य सुखेन अस्माकं दुखेनेति विशेषः) ॥ १४ ॥ एवं कृष्णस्य चरितं स्मृत्वा स्त्रियो रुरुदुः ॥ १५ ॥ तदा रामः कृष्णस्य संदेशैस्ताः सान्त्वयामास ॥ १६ ॥ तत्र चैत्रवैशाखौ द्वौ मासौ वसन् सन् रामो रात्रिषु स्त्रीगणैर्वेष्टितः सन् यमुनोपवने पूर्णचन्द्रोदये सति रेमे ॥ १७ ॥ १८ ॥

१ कुमुद्वती।

तदा वरुणप्रेषिता वारुणी देवी वृक्षकोटरात् पतन्ती स्वगन्धेनाऽध्यवासयत् ॥१९॥ बलस्तं गंधमाघ्राय तत्र गतः सन् स्त्रीभिः सह मदिरां पपौ ॥२०॥ ततो मदविह्वललोचनः स्त्रीभिर्गीतचरितो रामो वनेषु व्यचरत् ॥२१॥ एककुण्डलो वैजयन्त्या मालया मतः स्वेदबिन्दुना भूषितं मुखं बिभ्रत् सन् ॥२२॥ जलक्रीडार्थं यमुनामाजुहाव । ततो मत्तोऽयमिति ज्ञात्वा तस्य वाक्यमनादृत्याऽनागतां तां हलाग्रेणाकृष्य क्रोधेनाह ॥२३॥ हे पापे! मामवज्ञाय नायासि । अतो हलाग्रेण कामचारिणीं त्वां शतधा करिष्यामि ॥२४॥ हे नृप ! एवं निर्भर्त्सिता यमुना भीता सती

वरुणप्रेषिता देवी वारुणी वृक्षकोटरात् ॥ पतन्ती तद्वनं सर्वं स्वगन्धेनाध्यवासयत् ॥ १९ ॥ तं गन्धं मधुधाराया वायुनोपहृतं बलः ॥ आघ्रायोपगतस्तत्र ललनाभिः समं पपौ ॥ २० ॥ उपगीयमानचरितो वनिताभिर्हलायुधः ॥ वनेषु व्यचरत् क्षीबो मदविह्वललोचनः ॥ २१ ॥ स्रग्व्येककुण्डलो मत्तो वैजयन्त्या च मालया ॥ बिभ्रत्स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ॥ २२ ॥ स आजुहाव यमुनां जलक्रीडार्थमीश्वरः ॥ निजंवाक्यमनादृत्य मत्त इत्यापगां बलः ॥ अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥२३॥ पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता ॥ नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ॥ २४ ॥ एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् ॥ उवाच चकिता वाचं पतिता पादयोर्नृप ॥ २५ ॥ राम राम महाबाहो न जाने तव विक्रमम् ॥ यस्यैकांशेन विधृता जगती जगतः पते ॥ २६ ॥ परं भावं भगवतो भगवान् मामजानतीम् ॥ मोक्तुमर्हसि विश्वात्मन् प्रपन्नां भक्तवत्सल ॥२७॥ ततो व्यमुञ्चद् यमुनां याचितो भगवान् बलः ॥ विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥ २८ ॥ कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे ॥ भूषणानि महार्हाणि ददौ कान्तिः शुभां स्रजम् ॥ २९ ॥ वसित्वा वाससी नीले मालामामुच्य काञ्चनीम् ॥ रेजे स्वलंकृतो लिप्तो माहेन्द्र इव वारणः ॥ ३० ॥

नत्वा तं जगाद ॥ २५ ॥ हे राम ! तव विक्रमं न जाने । यस्य शेषाख्येनैकांशेन पृथिवी धृता ॥ २६ ॥ हे भक्तवत्सल ! तव वीर्यजमानतीं मां मोक्तुमर्हसि ॥ २७ ॥ एवं याचितो रामो यमुनां विसृज्य स्त्रीभिः सह जले क्रीडित्वा बहिर्ययौ ॥ २८ ॥ तदा लक्ष्मीस्तस्मै नीलाम्बरभूषणानि मालां च ददौ ॥ २९ ॥ ततो रामो नीले वाससी परिधाय स्रक्चन्दनादिभिरलंकृतः सन् शुशुभे ॥ ३० ॥

हे नृप ! अद्यापि यमुना बलस्य वीर्यं सूचयन्तीव दृश्यते ॥ ३१ ॥ एवं व्रजे रममाणस्य रामस्य सर्वा निशा एकेव याताः ॥ ३२ ॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायामुत्तरार्धे पञ्चषष्टितमोऽध्यायः ॥६५॥ षड्युक्षष्टितमे काशीं गत्वाऽहन्पौण्ड्रकं हरिः ॥ तन्मित्रं च ततो वृत्तं सुदक्षिणवधादिकम् ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! रामे व्रजं गते सति पौण्ड्रकोऽहं वासुदेव इति दूतं प्राहिणोत् ॥ १ ॥त्वं वासुदेवो जगत्पतिरवतीर्ण इत्यज्ञैः प्रोत्साहित आत्मानं कृष्णं मेने ॥२॥ बालैर्नृपत्वेन क्रीडायां कल्पितो बाल इव कृष्णाय दूतं प्राहिणोत् ॥ ३ ॥

अद्यापि दृश्यते राजन् यमुना कृष्टवर्त्मना ॥ बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥३१॥ एवं सर्वा निशा याता एकेव रमतो व्रजे ॥ रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥ ३२ ॥ इति श्रीभावगते महापुराणे दशमस्कन्धोत्तरार्धे बलदेवविजये यमुनाकर्षणं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ श्रीशुक उवाच ॥ नन्दव्रजं गते रामे करूषाधिपतिर्नृप ॥ वासुदेवोऽहमित्यज्ञो दूतं कृष्णाय प्राहिणोत् ॥१॥ त्वं वासुदेवो भगवानवतीर्णो जगत्पतिः॥ इति प्रस्तोभितो बालैर्मेन आत्मानमच्युतम् ॥ २ ॥ दूतं च प्राहिणोन्मन्दः कृष्णायाव्यक्तवर्त्मने॥ द्वारकायां यथा बालो नृप बालकृतोऽबुधः ॥ ३ ॥ दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् ॥ कृष्णं कमलपत्राक्षं राजसन्देशमब्रवीत् ॥ ४ ॥ वासुदेवोऽवतीर्णोऽहमेक एव न चापरः ॥ भूतानामनुकम्पार्थं त्वं तु मिथ्याऽभिधां त्यज ॥५॥ यानि त्वमस्मच्चिह्नानि मौढ्याद् बिभर्षि सात्वत ॥ त्यक्त्वैहि मां त्वं शरणं नो चेद्देहि ममाहवम् ॥ ६ ॥ श्रीशुक उवाच॥ कत्थनं तदुपाकर्ण्य पौण्ड्रकस्याल्पमेधसः॥ उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तथा ॥ ७ ॥ उवाच दूतं भगवान्परिहासकथामनु ॥ उत्स्रक्ष्ये मूढ चिह्नानि यैस्त्वमेवं विकत्थसे ॥ ८ ॥

दूतस्तु द्वारकामेत्य सभायां स्थितं कृष्णं राजसंदेशं जगाद ॥४॥ अहं वासुदेव एक एव न चापरः । अतस्त्वं मिथ्याभिधां त्यज ॥५॥ अस्मच्चिह्नानि मौढ्याद्बिभर्षि तानि त्यक्त्वा मां शरणमेहि । नो चेद् युद्धं देहि ॥६॥ श्रीशुक उवाच ॥ एवं तत्कथनं श्रुत्वोग्रसेनादय उच्चैर्जहसुः ॥ ७ ॥ ततः परिहासकथामनु दूतं कृष्ण आह । हे मूढ ! मच्चिह्नानि त्वयि प्रक्षेप्स्यामि ॥ ८ ॥

हे अज्ञ ! युद्धे हतस्त्वं कङ्कगृध्रवटैर्वेष्टितः सन् शुनां शरणं भविष्यसि ॥९॥ ततो दूतस्तं संदेशं सर्वं स्वामिने कथयामास । कृष्णोऽपि रथमास्थाय काशीं जगाम ॥१०॥ तदा पौण्ड्रकोऽपि तस्योद्योगं ज्ञात्वाऽक्षौहिणीभ्यां संयुक्तः सन् पुराद् निश्चक्राम ॥११॥ तस्य पृष्ठतो रक्षकः काशीपतिरन्वयात् । कृष्णश्च तथाऽवस्थितं पौण्ड्रकमपश्यत् ॥१२॥ तदा हरिः शङ्खचक्रगदाशार्ङ्गयुतं कौस्तुभवनमालाभ्यां भूषितम् ॥१३॥

मुखं तदपिधायाज्ञ कंकगृध्रवटैर्वृतः ॥ शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥ ९ ॥ इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् ॥ कृष्णोऽपि रथमास्थाय काशीमुपजगाम ह ॥१०॥ पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः ॥ अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद्द्रुतम् ॥११॥ तस्य काशीपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृप ॥ अक्षौहिणीभिस्तिसृभिरपश्यत् पौण्ड्रकं हरिः ॥१२॥ शंखार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितम् ॥ बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ १३ ॥ कौशेयवाससी पीते वसानं गरुडध्वजम् ॥ अमूल्यमौल्याभरणं स्फुरन्मकरकुण्डलम् ॥ १४ ॥ दृष्ट्वा तमात्मनस्तुल्यवेषं कृत्रिममास्थितम् ॥ यथा नटं रङ्गगतं विजहास भृशं हरिः ॥१५॥ शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः ॥ असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम् ॥ १६ ॥ कृष्णस्तु तत् पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत् ॥ गदासिचक्रेषुभिरार्दयद्भृशं यथा युगान्ते हुतभुक्पृथक्प्रजाः ॥१७॥ आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैररिणावखण्डितैः ॥ बभौ चितं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥ १८ ॥ अथाह पौण्ड्रकं शौरिर्भो भो पौण्ड्रक यद्भवान् ॥ दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥ १९ ॥



पीतवाससं कृत्रिमगरुडध्वजं स्फुरन्मकरकुण्डलम् ॥१४॥ एतादृशं कृत्रिमवेषेण स्वदृशं पौण्ड्रकं दृष्ट्वा जहास ॥१५॥ शत्रवः शूलगदापरिघशक्त्यृष्टिप्रासतोमरासिबाणैः कृष्णं प्राहरन् ॥१६॥ कृष्णस्तु पौण्ड्रककाशिराजयोश्चतुर्विधं सैन्यं गदासिचक्रेषुभिः पीडयामास ॥१७॥ तदा रणस्थानं चक्रेण खण्डितैः रथाश्वगजपत्तिभी रेजे ॥१८॥ ततः कृष्णः पौण्ड्रकमाह हे पौण्ड्रक ! दूतवाक्येन भवान् यन्मामाह तान्यस्त्राण्युत्सृजामि ॥१९॥

१ वटाः कङ्कादिपक्षिविशेषः ।

त्वया मृषा धृतं मेऽभिधानं त्याजयिष्ये किं च अहं यदि युद्धं नेच्छामि तर्हि ते शरणं व्रजामि ॥२०॥ इत्युक्त्वा तीक्ष्णबाणैः पौण्ड्रकं विरथीकृत्य चक्रेण तच्छिरो जहार ॥ २१ ॥ ततः काशिपतेः शिरो बाणैश्छित्त्वा काशिपुर्यां पातयामास ॥ २२ ॥ हरिरेवं ससखं पौण्ड्रकं हत्वा सिद्धैर्गीयमानयशा द्वारकां प्रविवेश ॥२३॥ ततः पौण्ड्रको हरे रूपं बिभ्राणस्तन्मयो जातः ॥ २४ ॥ ततो राजद्वारे सकुण्डलं पतितं काशिपतेः शिर आलोक्य जनाः किमिदं कस्य वा वक्रमिति संशयं प्राप्ताः ॥२५॥ तदा काशिपतेः शिर इति ज्ञात्वा तत्स्त्रियः पुत्रबान्धवाश्च हा

त्याजयिष्येऽभिधानं मे यत् त्वयाऽज्ञ मृषा धृतम् ॥ व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥२०॥ इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम् ॥ शिरोऽवृश्चद्रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥ २१ ॥ तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः ॥ न्यपातयत् काशिपुर्यां पद्मकोशमिवानिलः ॥२२॥ एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः ॥ द्वारकामाविशत् सिद्धैर्गीयमानकथामृतः ॥२३॥ स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबन्धनः ॥ बिभ्राणश्च हरे राजन् स्वरूपं तन्मयोऽभवत् ॥ २४ ॥ शिरः पतितमालोक्य राजद्वारे सकुण्डलम् ॥ किमिदं कस्य वा वक्रमिति संशयिरे जनाः ॥ २५ ॥ राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः ॥ पौराश्च हा हता राजन् नाथनाथेति प्रारुदन् ॥ २६ ॥ सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः ॥ निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ २७ ॥ इत्यात्मनाऽभिसंधाय सोपाध्यायो महेश्वरम् ॥ सुदक्षिणोऽर्चयामास परमेण समाधिना ॥ २८ ॥ प्रीतो विमुक्तो भगवांस्तस्मै वरमदाद् भवः ॥ पितृहन्तृवधोपायं स वव्रे वरमीप्सितम् ॥ २९ ॥ दक्षिणाग्निं परिचर ब्राह्मणैः सममृत्विजम् ॥ अभिचारविधानेन स चाग्निः प्रमथैर्वृतः ॥ ३० ॥

हता इत्युक्त्वा प्रारुदन् ॥२६॥ तत्पुत्रः सुदक्षिणः पितुरुत्तरक्रियां कृत्वा पितृहन्तारं निहत्य पितृऋणाद् मोक्ष्ं प्राप्स्ये ॥२७॥ इति बुद्ध्या निश्चित्य सोपाध्यायः सुदक्षिणः शिवमाराधयामास ॥२८॥ तदा शिवः प्रीतः सन् तस्मै वरं वृणीष्वेत्युक्तवान् । स पितृहन्तृवधोपायं वव्रे ॥ २९ ॥ तदा शिव आह । हे सुदक्षिण ! त्वं ब्राह्मणैः सहाभिचारविधानेन दक्षिणाग्निं यज । स च प्रमथगणैर्वृतोऽग्निः ॥ ३० ॥

---

१ संशिश्यिरे । २ और्ध्वदैहिकम् । ३ अनृणत्वम् । ४ 'आत्मानः' इ० पा० । ५ ऋत्विजमिव स्वनियोगकारिणम् । दक्षिणाग्निविशेषणमेतत् ।

अब्रह्मण्ये प्रयोजितश्चेत् तव संकल्पं साधयिष्यति । इत्यादिष्टः सुदक्षिणस्तथाभिचारं कुर्वन् गृहीतानियमश्चक्रे ॥३१॥ ततः कुण्डात् मूर्तिमान् भीषणस्तप्ततामशिखाश्मश्रुरग्निरुत्थितः ॥३२॥ स उग्रदंष्ट्रः क्रूरमुखो नग्नस्त्रिशूलं विधुन्वन् ॥३३॥ तालप्रमाणाभ्यां पद्भ्यां महीं कम्पयन् दिशः प्रदहन् द्वारकां ययौ ॥३४॥ तमायान्तं विलोक्य सर्वे द्वारकौकसस्तत्रसुः ॥३५॥ सर्वे भयातुराः सन्तः सभायामक्षैः क्रीडमानं भगवन्तमाहुः

साधयिष्यति संकल्पमब्रह्मण्ये प्रयोजितः ॥ इत्यादिष्टस्तथा चक्रे कृष्णायाभिचरन् व्रती ॥ ३१ ॥ ततोऽग्निरुत्थितः कुण्डान्मूर्तिमानतिभीषणः ॥ तप्ततामशिखाश्मश्रुरङ्गारोद्गारिलोचनः ॥ ३२ ॥ दंष्ट्रोग्रभ्रुकुटीदंडकठोरास्यः स्वजिह्वया ॥ आलिहन् सृक्किणी नग्नो विधुन्वंस्त्रिशिखं ज्वलन् ॥ ३३ ॥ पद्भ्यां तालप्रमाणाभ्यां कम्पयन्नवनीतलम् ॥ सोऽभ्यधावद् वृतो भूतैर्द्वारकां प्रदहन्दिशः ॥ ३४ ॥ तमाभिचारदहनमायान्तं द्वारकौकसः ॥ विलोक्य तत्रसुः सर्वे वनदाहे मृगा यथा ॥ ३५ ॥ अक्षैः सभायां क्रीडन्तं भगवन्तं भयातुराः ॥ त्राहित्राहि त्रिलोकेश वह्नेः प्रदहतः पुरम् ॥ ३६ ॥ श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम् ॥ शरण्यः संप्रहस्याह मा भैष्टेत्यविताऽस्म्यहम् ॥ ३७ ॥ सर्वस्यान्तर्बहिः साक्षी कृत्यां माहेश्वरीं विभुः ॥ विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत् ॥ ३८ ॥ तत् सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम् ॥ स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुन्दास्त्रमथाऽग्निमार्दयत् ॥३९॥ कृत्यानलः प्रतिहतः स रथांगपाणेरस्त्रौजसा स नृप भग्नमुखो निवृत्तः ॥ वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत्स्वकृतोऽभिचारः ॥ ४० ॥ चक्रं च विष्णोस्तदनु प्रविष्टं वाराणसीं साट्टसभालयापणाम् ॥ सगोपुराट्टालककोष्ठसंकुलां सकोशहस्त्यश्वरथान्नशालाम् ॥ ४१ ॥

हे त्रिलोकेश ! पुरं प्रदहतो वह्नेस्त्राहित्राहि ॥३६॥ तदा भगवान् स्वानां भयं दृष्ट्वा प्रहस्य मा भैष्टेत्याह ॥३७॥ सर्वस्यान्तर्बहिः साक्षी कृष्णस्तां शैवीं कृत्यां ज्ञात्वा तन्नाशार्थं चक्रमादिशत् ॥३८॥ तत् सूर्यकोटिसदृशं प्रलयाग्निप्रभं सुदर्शनं स्वतेजसा कृत्याग्निं पीडयामास ॥३९॥ तदा कृत्याग्निस्तत्तेजसा नष्टः सन् काशीं गत्वा सर्त्विग्जनं सुदक्षिणं समदहत् ॥४०॥ तदनु प्रविष्टं सुदर्शनं च कोशहस्त्यश्वरथसंकुलामट्टालसहिताम् ॥४१॥

१ कृत्याज्वलः ।

सर्वां वाराणसीं दग्ध्वा भूयः कृष्णस्य पार्श्वमुपतस्थे ॥४२॥ य एनमुत्तमश्लोकविक्रमं श्रावयेद्वा शृणुयाद्वा से सर्वपापैः प्रमुच्यते ॥ ४३ ॥
इति श्रीभागवते दशमस्कन्धे चू० उत्तरार्द्धे षट्षष्टितमोऽध्यायः ॥६६॥ सप्तषष्टितमे रामो गिरौ रैवतके मदात् । स्वैरं युवतिभिः क्रीडन्नव-
धीद् द्विविदं खलम् ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन् ! अद्भुतकर्मणो रामस्य चरितं भूयः श्रोतुमिच्छामि ॥१॥ श्रीशुक उवाच ॥ हे राजन् !
नरकस्य सखा द्विविदो नाम वानरः ॥२॥ भौमासुरस्य सख्युरानृण्यं कुर्वन्पुरग्रामाकरगोष्ठान्ददाह ॥३॥ क्वचित् शैलानुत्पाट्य तैर्देशाना-

दग्ध्वा वाराणसीं सर्वां विष्णोश्चक्रं सुदर्शनम् ॥ भूयः पार्श्वमुपातिष्ठत् कृष्णस्याक्लिष्टकर्मणः ॥ ४२ ॥ य एनं श्रावये-
न्मर्त्य उत्तमश्लोकविक्रमम् ॥ समाहितो वा शृणुयात् सर्वपापैः प्रमुच्यते ॥ ४३ ॥ इति श्रीभागवते महापुराणे
दशमस्कन्धोत्तरार्धे पौण्ड्रकादिवधो नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥ राजोवाच ॥ भूयोऽहं श्रोतुमिच्छामि
रामस्याद्भुतकर्मणः ॥ अनन्तस्याप्रमेयस्य यदन्यत्कृतवान्प्रभुः ॥ १ ॥ श्रीशुक उवाच ॥ नरकस्य सखा कश्चिद्
द्विविदो नाम वानरः ॥ सुग्रीवसचिवः सोऽथ भ्राता मैन्दस्य वीर्यवान् ॥ २ ॥ सख्युः सोऽपचितिं कुर्वन् वानरो
राष्ट्रविप्लवम् ॥ पुरग्रामाकरान् घोषानदहद्वह्निमुत्सृजन् ॥ ३ ॥ क्वचित् स शैलानुत्पाट्य तैर्देशान् समचूर्णयत् ॥
आनर्तान् सुतरामेव यत्रास्तेऽमित्रहा हरिः ॥ ४ ॥ क्वचित् समुद्रमध्यस्थो दोर्भ्यामुत्क्षिप्य तज्जलम् ॥ देशान्नागा-
युतप्राणो वेलाकूलानमज्जयत् ॥ ५ ॥ आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन् ॥ अदूषयच्छकृन्मूत्रैरग्नीन्वैता-
निकान्खलः ॥ ६ ॥ पुरुषान्योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः ॥ निःक्षिप्य चाप्यधाच्छैलैः पेशस्कारीव कीट-
कम् ॥ ७ ॥ एवं देशान्विप्रकुर्वन्दूषयंश्च कुलस्त्रियः ॥ श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ ॥ ८ ॥

र्नर्तदेशांश्च समचूर्णयत् ॥ ४ ॥ कदाचित् समुद्रमध्यस्थः सन् दोर्भ्यां जलमुद्धृत्य तीरे वर्तमानान् देशान् प्लावयामास ॥५॥ तथा ऋषि-
मुख्यानामाश्रमान् भग्नवनस्पतीन् कृत्वा विष्ठामूत्रैरग्नीन्दूषयामास ॥ ६ ॥ तथा पुरुषान्स्त्रींश्च गिरिगुहासु निःक्षिप्य द्वारं शैलैराच्छादयत
॥ ७ ॥ एवं देशेषूपद्रवं कुर्वन्स्त्रीर्दूषयन्सुन्दरं गीतं श्रुत्वा रैवतकं पर्वतं ययौ ॥ ८ ॥

१ पिदधे । २ भ्रमरः ।

तत्र स्त्रीणां मध्ये स्थितं पुष्करमालिनं रामम् ॥९॥ वारुणीं मदिरां पीत्वा गायन्तं दृष्ट्वा ॥ १० ॥ दुष्टो वानरो वृक्षशाखामारुह्य द्रुमान्कम्प यन्देहं दर्शयन् किलकिलाशब्दं चक्रे ॥११॥ ततस्तरुण्यः स्त्रियस्तस्य कपेर्धार्ष्ट्यं वीक्ष्य जहसुः ॥१२॥ स कपी रामस्य पश्यतः सतो गुदं दर्शयन्भ्रूक्षेपैस्ता हेलयामास ॥ १३ ॥ ततो बलः क्रुद्धः सन् ग्राव्णा तं प्राहरत् । कपिर्ग्रावाणं वञ्चयित्वा मदिराकलशं गृहीत्वा तं निर्भिद्य

तत्रापश्यद्यदुपतिं रामं पुष्करमालिनम् ॥ सुदर्शनीयसर्वाङ्गं ललनायूथमध्यगम् ॥ ९ ॥ गायन्तं वारुणीं पीत्वा मद-
विह्वललोचनम् ॥ विभ्राजमानं वपुषा प्रभिन्नमिव वारणम् ॥ १० ॥ दुष्टः शाखामृगः शाखामारूढः कम्पयन्द्रु-
मान् ॥ चक्रे किलकिलाशब्दमात्मानं संप्रदर्शयन् ॥ ११ ॥ तस्य धार्ष्ट्यं कपेर्वीक्ष्य तरुण्यो जातिचापलाः[१] ॥
हास्यप्रिया विजहसुर्बलदेवपरिग्रहाः ॥ १२ ॥ ता हेलयामास कपिर्भ्रूक्षेपैः संमुखादिभिः ॥ दर्शयन्स्वगुदं तासां
रामस्य च निरीक्षतः ॥ १३ ॥ तं ग्राव्णा प्राहरत्क्रुद्धो बलः प्रहरतां वरः ॥ स वञ्चयित्वा ग्रावाणं मदिराकलशं
कपिः ॥१४॥ गृहीत्वा हेलयामास धूर्तस्तं कोपयन् हसन् ॥ निर्भिद्य कलशं धृष्टो वासांस्यास्फालयद्बलम् ॥ १५ ॥
कदर्थीकृत्य[२] बलवान्विप्रचक्रे मदोद्धतः ॥ तं तस्याविनयं दृष्ट्वा देशांश्च तदुपद्रुतान् ॥ क्रुद्धो मुसलमादत्त हलं चारि-
जिघांसया ॥ १६ ॥ द्विविदोऽपि महावीर्यः शालमुद्यम्य पाणिना ॥ अभ्येत्य तरसा तेन बलं मूर्धन्यताडयत् ॥१७॥
तं तु संकर्षणो मूर्ध्नि पतन्तमचलो यथा ॥ प्रतिजग्राह बलवान्सुनन्देनाहनच्च तम् ॥ १८ ॥ मुसलाहतमस्तिष्को[३]
विरेजे रक्तधारया ॥ गिरिर्यथा गैरिकया[४] प्रहारं नानुचिन्तयन् ॥ १९ ॥ पुनरन्यं समुत्क्षिप्य कृत्या निष्पत्रमोजसा ॥
तेनाहनत सुसंक्रुद्धस्तं बलः शतधाऽच्छिनत् ॥ २० ॥



रामं कोपयन् योषितां वासांस्यास्फालयत् ॥ १४ ॥ १५ ॥ एवं तस्य कपेरनम्रत्वं तदुपद्रुतान् देशांश्च दृष्ट्वा रामः क्रुद्धो भूत्वा तं हन्तुं मुसलं हलं चाददे ॥१६॥ द्विविदोऽपि पाणिना शालं वृक्षमुत्पाट्य रामस्य मूर्धनि ताडयामास ॥१७॥ रामो मूर्ध्नि पतन्तं वृक्षं गृहीत्वा तं कपिं मुसलेन जघान ॥१८॥ तदा कपिहतमस्तकः सन् रक्तधारया रेजे ॥ १९ ॥ ततोऽन्येन वृक्षेण रामं जघान । रामस्तं वृक्षं शतधाऽच्छिनत् ॥ २० ॥

१ जात्या स्वभावेनैव चापलं यासां ताः । २ अपाकृतवान् । ३ शिरोगतं भेदः । ४ लोहितधातुना ।

एवं कपिः पुनः पुनर्वृक्षेण तं जघान । रामस्तान् सर्वान् चिच्छेद ॥ २१ ॥ एवं युध्यन् वनं निर्वृक्षं चकार । ततः कपिर्बलरामोपरि शिलावर्षं चकार । बलस्तत् सर्वं चूर्णयामास ॥ २२ ॥ ततः कपीश्वरो मुष्टिभ्यां रामवक्षसि ताडयामास ॥ २३ ॥ रामोऽपि क्रुध्यन् सन् हलमुसले त्यक्त्वा मुष्टिभ्यां तस्य कण्ठमूलेऽताडयत् । तदा स रुधिरं वमन् पपात ॥ २४ ॥ पतता तेन सवनस्पतिः पर्वतश्चकम्पे ॥ २५ ॥ तदाम्बरात् पुष्पवृष्टिरभूत् देवमुनीनां जयशब्दो नमः शब्दश्चाभूत् ॥ २६ ॥ एवं दुष्टं द्विविदं हत्वा जनैः स्तूयमानो रामो द्वारकामाविशत् ॥२७॥ इति

ततोऽन्येन रुषा जघ्ने तं चापि शतधाऽच्छिनत् ॥ एवं युध्यन् भगवता भग्ने भग्ने पुनः पुनः ॥२१॥ आकृष्य सर्वतो वृक्षान् निर्वृक्षमकरोद्वनम् ॥ ततोऽमुञ्चच्छिलावर्षं बलस्योपर्यमर्षितः ॥ तत् सर्वं चूर्णयामास लीलया मुसलायुधः ॥ २२ ॥ स बाहू तालसङ्काशौ मुष्टीकृत्य कपीश्वरः ॥ आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत् ॥ २३ ॥ यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्गले ॥ जत्रावभ्यर्दयत् क्रुद्धः सोऽपतद् रुधिरं वमन् ॥ २४ ॥ चकम्पे तेन पतता सटङ्कः[1] सवनस्पतिः ॥ पर्वतः कुरुशार्दूल वायुना नौरिवाम्भसि ॥ २५ ॥ जयशब्दो नमः शब्दः साधुसाध्विति चाम्बरे ॥ सुरसिद्धमुनीन्द्राणामासीत् कुसुमवर्षिणाम् ॥ २६ ॥ एवं निहत्य द्विविदं जगद्व्यतिकरावहम् ॥ संस्तूयमानो भगवान् जनैः स्वपुरमाविशत्॥२७॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे द्विविदवधो नाम सप्तषष्टितमोऽध्यायः ॥६७॥ श्रीशुक उवाच ॥ दुर्योधनसुतां राजन् लक्ष्मणां समितिंजयः॥ स्वयंवरस्थामहरत् साम्बो जाम्बवतीसुतः ॥ १ ॥ कौरवाः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः ॥ कदर्थीकृत्य नः कन्यामकामामहरद् बलात् ॥ २ ॥

श्रीभागव० द० उ० सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ अष्टषष्टितमे साम्बेऽनिरुद्धे कौरवैर्युधि । तद्विमोक्षाय रामेण गजाह्वयविकर्षणम् ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! दुर्योधनसुतां लक्ष्मणां स्वयंवरस्थां साम्बो जहार ॥ १ ॥ तदा कौरवाः क्रुद्धाः सन्त ऊचुः । अयं बालो दुर्विनीतः । अस्मान् तुच्छीकृत्य बलात् कन्यां जहार ॥ २ ॥

[1] टंकाः—सतोयविवराणि "टांकी" इति महाराष्ट्रप्रसिद्धानि ।

अतः इमं बध्नीत । वृष्णयः किं करिष्यन्ति । येऽस्मद्दत्तां महीं भुञ्जते ॥३॥ बद्धं पुत्रं श्रुत्वा यादवा यदि समेष्यन्ति तर्हि भग्नगर्वाः शान्तिं यास्यन्ति ॥ ४ ॥ इति भीष्मानुमोदिताः कर्णशलभूरियज्ञकेतुदुर्योधनाः साम्बं बद्धुमारेभिरे ॥ ५ ॥ तदा साम्बोऽनुधावतस्तान् दृष्ट्वा धनुः प्रगृह्य सिंह इवैकलस्तस्थौ ॥ ६ ॥ ते कौरवास्तिष्ठतिष्ठेति भाषमाणाः साम्बसमीपमेत्य बाणैरवाकिरन् ॥७॥ हे कुलश्रेष्ठ ! साम्बः कुरुबाणैर्विद्धोऽपि नाकम्पत ॥८॥ धनुर्विस्फूर्य बाणैः पृथक्-पृथक् कर्णादीन् विव्याध ॥९॥ चतुर्भिश्चतुरो वाहान् सारथीन् रथिनश्च जघान । ते षड्-

बध्नीतेमं दुर्विनीतं किं करिष्यन्ति वृष्णयः ॥ येऽस्मत्प्रसादोपचितां दत्तां नो भुञ्जते महीम् ॥ ३ ॥ निगृहीतं सुतं श्रुत्वा यद्येष्यन्तीह वृष्णयः ॥ भग्नदर्पाः शमं यान्ति प्राणा[1] इव सुसंयताः ॥४॥ इति कर्णः शलो भूरिर्यज्ञकेतुः सुयोधनः ॥ साम्बमारेभिरे बद्धुं कुरुवृद्धानुमोदिताः ॥ ५ ॥ दृष्ट्वानुधावतः साम्बो धार्तराष्ट्रान् महारथः ॥ प्रगृह्य रुचिरं चापं तस्थौ सिंह इवैकलः ॥ ६ ॥ तं ते जिघृक्षवः क्रुद्धास्तिष्ठतिष्ठेतिभाषिणः ॥ आसाद्य धन्विनो बाणैः कर्णाग्रण्यः[2] समाकिरन् ॥ ७ ॥ सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः ॥ नामृष्यत् तदचिन्त्यार्भः[3] सिंहः क्षुद्रमृगैरिव ॥ ८ ॥ विस्फूर्ज्य रुचिरं चापं सर्वान् विव्याध सायकैः ॥ कर्णादीन् षड्रथान् वीरस्तावद्भिर्युगपत् पृथक् ॥ ९ ॥ चतुर्भिश्चतुरो वाहानेकैकेन च सारथीन् । रथिनश्च महेष्वासांस्तस्य तत्तेऽभ्यपूजयन् ॥१०॥ तं तु ते विरथं चक्रुश्चत्वारश्चतुरो हयान् ॥ एकस्तु सारथिं जघ्ने चिच्छेदान्यः शरासनम् ॥ ११ ॥ तं बद्ध्वा विरथीकृत्य कृच्छ्रेण कुरवो युधि ॥ कुमारं स्वस्य कन्यां च स्वपुरं जयिनोऽविशन् ॥ १२ ॥ तच्छ्रुत्वा नारदोक्तेन राजन् संजातमन्यवः । कुरून्प्रत्युद्यमं चक्रुरुग्रसेनप्रचोदिताः ॥ १३ ॥

वीरास्तस्य तत्कर्म पूजयामासुः ॥१०॥ ततस्ते चत्वारो वीराः साम्बस्य चतुरो हयान् जघ्नुः । एकः सारथिं जघान । अन्यो धनुः ॥११॥ एवं कौरवास्तं साम्बं विरथीकृत्य बद्ध्वा तं स्वकन्यां च गृहीत्वा स्वपुरं विविशुः ॥१२॥ ततो यादवा नारदात् पुत्रबन्धनं श्रुत्वा क्रुद्धाः सन्तः कुरून् प्रति युद्धोद्यमं चक्रुः ॥ १३ ॥

१ इन्द्रियाणि । २ कर्णोऽग्रणीर्येषां ते । ३ अचिन्त्यस्य भगवतोऽर्भः अर्भकः ।

तदा रामः कुरूणां वृष्णीनां च कलहमनिच्छन् युद्धाय कृतोद्यमांस्तान् सान्त्वयामास ॥१४॥ ब्राह्मणैः कुलवृद्धैश्च सह रथेन हस्तिनापुरं जगाम ॥१५॥ ततो गजाह्वयं गत्वोपवनमास्थितः सन् धृतराष्ट्रं प्रत्युद्धवं प्रेषयामास ॥१६॥ स उद्धवस्तत्र गत्वा धृतराष्ट्रादीन् नत्वा राममागतं जगाद ॥ १७ ॥ तत् श्रुत्वा ते प्रीताः सन्त उद्धवमर्चयित्वोपायनहस्ता रामं सम्मुखं ययुः ॥ १८ ॥ ते कुरवो राममालिङ्गय सम्पूज्य शिरसा प्रणेमुः ॥१९॥ ततः कुशलं पप्रच्छुः । अथ रामस्तान् बभाषे ॥ २० ॥ हे कुरवः ! उग्रसेनो राजा वो यदाज्ञापयत् तत्

सान्त्वयित्वा तु तान् रामः सन्नद्धान् वृष्णिपुङ्गवान् ॥ नैच्छत् कुरूणां वृष्णीनां कलिं कलिमलापहः ॥ १४ ॥ जगाम हास्तिनपुरं रथेनादित्यवर्चसा ॥ ब्राह्मणैः कुलवृद्धैश्च वृतश्चन्द्र इव ग्रहैः ॥१५॥ गत्वा गजाह्वयं रामो बाह्योपवनमास्थितः ॥ उद्धवं प्रेषयामास धृतराष्ट्रं बुभुत्सया ॥१६॥सोऽभिवन्द्याम्बिकापुत्रं भीष्मं द्रोणं च बाह्लिकम् ॥ दुर्योधनं च विधिवद् राममागतमब्रवीत् ॥ १७ ॥तेऽतिप्रीतास्तमाकर्ण्य प्राप्तं रामं सुहृत्तमम् ॥ तमर्चयित्वाभिययुः सर्वे मङ्गलपाणयः ॥१८॥ तं संगम्य यथान्यायं गामर्घ्यं च न्यवेदयन् ॥ तेषां ये तत्प्रभावज्ञाः प्रणेमुः शिरसा बलम् ॥ १९ ॥ बन्धून् कुशलिनः श्रुत्वा पृष्ट्वा शिवमनामयम् ॥ परस्परमथो रामो बभाषेऽविक्लवं वचः ॥ २० ॥ उग्रसेनः क्षितीशेशो यद्व आज्ञापयत् प्रभुः ॥ तदव्यग्रधियः श्रुत्वा कुरुध्वं मा विलम्बितम् ॥ २१ ॥ यद् यूयं बहवस्त्वेकं जित्वाऽधर्मेण धार्मिकम् ॥ अबध्नीताथ तान्मृष्ये बन्धूनामैक्यकाम्यया ॥ २२ ॥ वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमं वचः ॥ कुरवो बलदेवस्य निशम्योचुः प्रकोपिताः ॥ २३ ॥ अहो महच्चित्रमिदं कालगत्या दुरत्यया ॥ आरुरुक्षत्युपानद्वै शिरोमुकुटसेवितम् ॥ २४ ॥ एते यौनेन संबद्धाः सहशय्यासनाशनाः ॥ वृष्णयस्तुल्यतां नीता अस्मद्दत्तनृपासनाः ॥ २५ ॥

श्रुत्वा शीघ्रं कुरुध्वम् ॥२१॥ यूयं बहवोऽधर्मेणैकं धार्मिकं जित्वाऽबध्नीत । तद् बन्धूनां प्रियकाम्यया सहे । परन्तु तमानीय शीघ्रं समर्पयत ॥२२॥ एवं वीर्यबलयुतं बलदेवस्य वचः श्रुत्वा कुरवः क्रुद्धाः सन्तः ऊचुः ॥२३॥ अहो ? दुरत्यया कालगतिः । पादरक्षा शिर आरोढुमिच्छति । इदं महदाश्चर्यम् ॥२४॥ अस्माभिः पृथायाः विवाहसम्बन्धेनैते वृष्णयस्तुल्यतां नीताः ॥ २५ ॥

१ अभिप्रायजिज्ञासया ।

अस्मद्दत्तनृपासनाः सन्तोऽस्मदुपेक्षया चामरव्यजनच्छत्रकिरीटासनशय्या उपभुञ्जति ॥२६॥ अधुना यदूनां राजचिह्नैरलम् । यतो गतलज्जाः सन्तो यादवा अस्मानाज्ञापयन्ति॥२७॥ भीष्मद्रोणार्जुनादिभिरदत्तमिन्द्रोऽपि कथं स्वीकुर्यात् ? यादवाः कुतः॥ २८॥ श्रीशुक उवाच॥ हे राजन् ! ते दुर्जना राममेवं कठोरं वच आश्राव्य पुरं विविशुः ॥२९॥ ततो राम एवं कुरूणां दौःशील्यं अनुभूय क्रुद्धः सन् प्रावोचत् ॥३०॥ मदोन्मत्ताः

अलं यदूनां नरदेवलाञ्छनैर्दातुः प्रतीपैः फणिनामिवामृतम् ॥ येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्यगतत्रपा बत ॥ २७ ॥ कथ-
चामरव्यजने शंखमातपत्रं च पाण्डुरम् ॥ किरीटमासनं शय्यां भुञ्जत्यस्मदुपेक्षया ॥ २६ ॥

मिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः ॥ अदत्तमवरुन्धीत सिंहग्रस्तमिवोरणः[1] ॥२८॥ श्रीशुक उवाच ॥ जन्मबंधुश्रियोन्नद्धमदास्ते भरतर्षभ ॥ आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन् ॥ २९ ॥ दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वाऽवाच्यानि चाच्युतः ॥ अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन् मुहुः ॥ ३० ॥ नूनं नानामदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः ॥ तेषां हि प्रशमो दंडः पशूनां लगुडो यथा ॥३१॥ अहो यदून् सुसंरब्धान् कृष्णं च कुपितं शनैः ॥ सान्त्वयित्वाऽहमेतेषां शममिच्छन्निहागतः ॥ ३२ ॥ त इमे मन्दमतयः कलहाभिरताः खलाः ॥ तं मामवज्ञाय मुहुर्दुर्भाषान् मानिनोऽब्रुवन् ॥ ३३ ॥ नोग्रसेनः किल विभुर्भोजवृष्ण्यन्धकेश्वरः ॥ शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥ ३४ ॥ सुधर्माऽऽक्रम्यते येन पारिजातोऽमराङ्घ्रिपः ॥ आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥ ३५ ॥ यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ॥ स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥ ३६ ॥



असाधवः शान्तिं नेच्छन्ति । तेषां दण्ड एव प्रशम इति ॥३१॥ अहो ! अयमेषां कल्याणमिच्छन् क्रुद्धान्यदून् कृष्णं च सान्त्वयित्वेहागतः ॥३२॥ त इमे मन्दमतयो मामवज्ञयाऽवाच्यशब्दान् जगदुः॥३३॥ यस्याज्ञावर्तिनो लोकपालाः स उग्रसेनो नृपो न किल॥३४॥ येन श्रीकृष्णेन पारिजात आनीय भुज्यते स राज्यासनार्हः किं न ॥३५॥ यस्य पादयुगं श्रीरुपासते स कृष्णो राजचिह्नार्हो न भवति किम् ॥ ३६ ॥

[1] उरणः मेषः ।

यस्य चरणरजो लोकपालैर्ब्रह्मादिभिश्च शिरोभिर्धृतं तस्य नृपासनं क्व ॥३७॥ वृष्णयः कुरुभिर्दत्तं भूखण्डं भुञ्जते। वयमुपानहः कुरवः शिरः किल ॥ ३८ ॥ अहो ! एवं मत्तानां रूक्षा गिरः कः सहेत ॥ ३९ ॥ इत्युक्त्वाद्य निष्कौरवीं पृथ्वीं करिष्यामीति क्रुद्धः सन् जगत्त्रयं दहन्निव हलं गृहीत्वोत्तस्थौ ॥४०॥ ततो हलाग्रेण पुरमुत्पाट्य गङ्गायां विचकर्ष ॥४१॥ तदा जले नौकामिव गङ्गायां पतमानं नगरं विलोक्य

यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम्[1] ॥ ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥ ३७ ॥ भुञ्जते कुरुभिर्दत्तं भूखण्डं वृष्णयः किल ॥ उपानहः किल वयं स्वयं तु कुरवः शिरः ॥ ३८ ॥ अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ॥ असम्बद्धा गिरो रूक्षाः कः सहेतानुशासिता ॥३९॥ अद्य निष्कौरवीं पृथ्वीं करिष्यामीत्यमर्षितः ॥ गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥४०॥ लाङ्गलाग्रेण नगरमुद्विदार्य गजाह्वयम् ॥ विचकर्ष स गङ्गायां प्रहरिष्यन्नमर्षितः ॥ ४१ ॥ जलयानमिवाघूर्णं गंगायां नगरं पतत ॥ आकृष्यमाणमालोक्य कौरवा जातसंभ्रमाः ॥ ४२ ॥ तमेव शरणं जग्मुः सकुटुम्बा जिजीषवः ॥ सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयः प्रभुम् ॥ ४३ ॥ राम रामाखिलाधार प्रभावं न विदाम ते ॥ मूढानां नः कुबुद्धीनां क्षन्तुमर्हस्यतिक्रमम् ॥ ४४ ॥ स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ॥ लोकान् क्रीडनकानीश क्रीडतस्ते वदन्ति हि॥४५॥त्वमेव मूर्ध्नीदमनन्त लीलया भूमण्डलं बिभर्षि सहस्रमूर्धन् ॥ अन्ते च यः स्वात्मनिरुद्धविश्वः शेषेऽद्वितीयः परिशिष्यमाणः॥४६॥कोपस्तेऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात ॥ बिभ्रतो भगवन् सत्त्वं स्थितिपालनतत्परः[2]॥४७॥

कौरवाः जातसंभ्रमाः सन्तः ॥४२॥ जीवितुमिच्छवो लक्ष्मणया सह साम्बमग्रतः कृत्वा तमेव शरणं जग्मुः ऊचुश्च ॥४३॥ हे राम हे राम ! तव पराक्रमं न जानीमः मूढानामपराधं नः क्षन्तुमर्हसि ॥ ४४ ॥ हे राम ! अस्य जगतः स्थित्यादीनां त्वमेव हेतुः ॥४५॥ हे अनन्त ! इदं भूमण्डलं लीलया त्वमेव मूर्ध्नि बिभर्षि। अन्ते आत्मनि विश्वमाकृष्य शयनं करोषि ॥ ४६ ॥ तव कोपोऽखिलशिक्षार्थम् न द्वेषतः ॥४७॥

१ उपासितानि तीर्थानि यैस्तेषामपि तीर्थम्। २ स्थितिपालनतत्परः—तात्पर्यवान्।

हे विश्वकर्मन् ! तुभ्यं नमोऽस्तु त्वां वयं शरणं गताः ॥४८॥ श्रीशुक उवाच ॥ एवं शरणागतैस्तैः प्रसादितो रामो मा भैष्टेत्यभयं ददौ ॥४९॥
तदा दुर्योधनो द्वादशशतानि षष्टिवर्षात्मकान् पूर्णतारुण्यान् गजान् द्वादश शतान्ययुतान्यश्वान् ॥५०॥ षट् सहस्राणि रथान् समलंकृताः
सहस्रं दासीः। एवं पारिबर्हं ददौ ॥५१॥ ततो रामस्तत् सर्वं प्रगृह्य ससुतः सस्नुषो द्वारकां ययौ ॥५२॥ स्वपुरं प्रविष्टः सन् बन्धून् मिलित्वा
यदुपुङ्गवानां सभामध्ये कुरुषु स्वचेष्टितं शशंस ॥५३॥ अद्यापि हस्तिनापुरं रामपराक्रमं सूचयद् गङ्गायां दक्षिणतउन्नतं दृश्यते ॥५४॥ इति

नमस्ते सर्वभूतात्मन्सर्वशक्तिधराव्यय ॥ विश्वकर्मन् नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ ४८ ॥ श्रीशुक उवाच ॥ एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः[1] ॥ प्रसादितः सुप्रसन्नो मा भैष्टेत्यभयं ददौ ॥४९॥ दुर्योधनः पारिबर्हं कुञ्जरान् षष्टिहायनान् ॥ ददौ च द्वादशशतान्ययुतानि तुरंगमान् ॥ ५० ॥ रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ॥ दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ ५१ ॥ प्रतिगृह्य तु तत्सर्वं भगवान् सात्वतर्षभः ॥ ससुतः सस्नुषः प्रायात् सुहृद्भिरभिनन्दितः ॥ ५२ ॥ ततः प्रविष्टः स्वपुरं हलायुधः समेत्य बन्धूननुरक्तचेतसः ॥ शशंस सर्वं यदुपुङ्गवानां मध्ये सभायां कुरुषु स्वचेष्टितम् ॥५३॥ अद्यापि च पुरं ह्येतत् सूचयद्रामविक्रमम् ॥ समुन्नतं दक्षिणतो गङ्गायामनु दृश्यते ॥५४॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्धे हास्तिनपुरकर्षणरूपसंकर्षणविजयो नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ श्रीशुक उवाच ॥ नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम् ॥ कृष्णेनैकेन बह्वीनां तद्दिदृक्षुः स्म नारदः ॥ १ ॥ चित्रं बतैतदेकेन वपुषा युगपत् पृथक् ॥ गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥२॥ इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत् ॥ पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥ ३ ॥



श्रीभागवते द० चूर्णिका० उ० अष्टषष्टितमोऽध्यायः ॥६८॥ एकोनसप्ततितमे गार्हस्थ्यं प्रतिमन्दिरम् ॥ कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन् ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! नरकं निहतं श्रुत्वा तथैकेन कृष्णेन बह्वीनां योषितां विवाहं च श्रुत्वा॥१॥एकेन वपुषा युगपत् पृथक् गृहेषु षोडशसहस्रस्त्रियः कथं परिणीतवान्॥२॥ एतदाश्चर्यं द्रष्टुं नारदो द्वारकां जगाम। द्वारकामनुवर्णयति। उद्यानेषु द्विजकुलैर्नादिताम्॥३॥

[1] वेपमानं कम्पमानमयनं पुरं येषां तैः ।

प्रफुल्लकमलादिभिर्व्याप्तेषु सरस्सु हंससारसैः कूजिताम् ॥ ४ ॥ स्फाटिकराजतैर्नवभिः प्रासादलक्षैः सेविताम् ॥ ५ ॥ पृथक् पृथक् रथ्या राजमार्गचत्वराट्टशालासभासुरालयैर्युक्तां संसिक्तमार्गां ध्वजपताकादिभिर्निवारितातपाम् ॥ ६ ॥ तस्यां द्वारकायां विश्वकर्मणा कौशलेन निर्मितमिन्द्रादिलोकपालैः पूजितं षोडशसहस्रगृहैः समलङ्कृतं हरेर्भवनम् ॥७॥ तत्र हरेः पत्नीनां भवनेषु मध्ये पूर्वं रुक्मिण्या गृहं विवेश

उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः ॥ छुरितेषु सरस्सूच्चैः कूजितां हंससारसैः ॥ ४ ॥ प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः ॥ महामरकतप्रख्यैः स्वर्णरत्नपरिच्छदैः ॥ ५ ॥ विभक्तरथ्यापथचत्वरापणैः शालासभाभी रुचिरां सुरालयैः ॥ संसिक्तमार्गाङ्गणवीथिदेहलीं पतत्पताकाध्वजवारितातपाम् ॥ ६ ॥ तस्यामन्तःपुरं श्रीमदर्चितं सर्वधिष्ण्यपैः ॥ हरेः स्वकौशलं यत्र त्वष्ट्रा कार्त्स्न्येन दर्शितम् ॥ ७ ॥ तत्र षोडशभिः सद्मसहस्रैः समलङ्कृतम् ॥ विवेशैकतमं शौरेः पत्नीनां भवनं महत् ॥ ८ ॥ विष्टब्धं विद्रुमस्तम्भैर्वैडूर्यफलकोत्तमैः ॥ इन्द्रनीलमयैः कुड्यैर्जगत्या चाऽहतत्विषा ॥९॥ वितानैर्निर्मितैस्त्वष्ट्रामुक्तादामविलम्बिभिः ॥ दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १० ॥ दासीभिर्निष्ककण्ठीभिः सुवासोभिरलङ्कृतम् ॥ पुंभिः सकञ्चुकोष्णीषसुवस्त्रमणिकुण्डलैः ॥ ११ ॥ रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग ॥ नृत्यन्ति यत्र विहितागुरुधूपमक्षैर्[1]निर्यान्तमीक्ष्य घनबुद्धय उन्नदन्तः ॥ १२ ॥ तस्मिन् समानगुणरूपवयःसुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ॥ विप्रो ददर्श चमरव्यजनेन रुक्मदण्डेन सात्वतपतिं परिवीजयन्त्या ॥ १३ ॥

॥ ८ ॥ तत् कीदृशम् ? प्रवालस्तम्भैरिन्द्रनीलमयैः कुड्यादिभिश्चेन्द्रनीलमय्या भूम्या च शोभितम् ॥९॥ मुक्तादामवितानैर्मणिभूषितदान्तपर्यङ्कैः ॥१०॥ वस्त्रालङ्कारभूषितैर्दासीभिः सुवस्त्रमणिकुण्डलैः पुंभिश्च शोभितम् ॥११॥ रत्नमयदीपैर्गतान्धकारम् । यत्र मयूरा अगुरुधूपं जालैर्निर्गतं वीक्ष्य मेघोऽयमिति मन्वाना नृत्यन्ति॥१२॥तस्मिन् गृहे व्यजनेन परिवीजयन्त्या रुक्मिण्या सह स्थितं श्रीकृष्णं नारदो ददर्श॥१३॥

१ गवाक्षमार्गः ।

ततो भगवान् तं नारदं वीक्ष्य रुक्मिण्याः पर्यङ्कात् समुत्थाय तं शिरसा प्रणम्य साञ्जलिः सन् स्वस्यासने निवेशयामास॥१४॥ततो भगवान् तच्चरणौ प्रक्षाल्य जगद्गुरुरपि तज्जलं शिरसि दधार ॥ १५ ॥ ततो नारायणो विधिना देवर्षिं संपूज्य जगाद । हे नारद ! वयं ते किं करवाम ॥१६॥ नारद उवाच ॥ हे अखिललोकनाथ ! अयं तेऽवतारो जगतः कल्याणाय । अतः खलानां दमः साधूनां संमाननं युक्तम् ॥१७॥ हे हरे ।

तं संनिरीक्ष्य भगवान् सहसोत्थितः श्रीपर्यङ्कतः सकलधर्मभृतां वरिष्ठः ॥ आनम्य पादयुगलं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासने स्वे ॥ १४ ॥ तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ॥ ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥१५॥ संपूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ॥ वाण्याभिभाष्य मितयाऽमृतमिष्टया तं प्राह प्रभो भगवते करवामहे किम् ॥ १६॥ नारद उवाच ॥ नैवाद्भुतं तव विभोऽखिललोकनाथ मैत्री जनेषु सकलेषु दमः खलानाम्॥ निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥१७॥ दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥ १८ ॥ श्रीशुक उवाच ॥ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः ॥ योगेश्वरेश्वरस्याङ्ग योगमायाविवित्सया ॥ १९ ॥ दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च ॥ पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥ २० ॥ पृष्टश्चाविदुषेवासौ कदाऽऽयातो भवानिति ॥ क्रियते किं नु पूर्णानामपूर्णैरस्मदादिभिः ॥ २१ ॥ अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु ॥ स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम् ॥ २२ ॥

॥१६४॥

तवाङ्घ्रिकमलं मोक्षदं दृष्टम् । अतः कृतार्थोऽस्मि । यथा तव स्मृतिः स्यात् तथाऽनुग्रहं कुरु॥१८॥श्रीशुक उवाच ॥ ततो नारदोऽन्यद्गेहं प्राविशत्॥१९॥तत्रापि स्त्रियोद्धवेन च सहाक्षैः क्रीडन्तं ददर्श । ततः कृष्णेन प्रत्युत्थानादिभिः पूजितः॥२०॥हे नारद ! त्वं कदाऽऽयात इति पृष्टः । किंच । अपूर्णैरस्मदादिभिः पूर्णानां वः किं कर्तव्यम् ॥२१॥ तथापि नो जन्मसाफल्यं कुरु । ततः सतूष्णीमुत्थायान्यद्गृहं जगाम ॥२२॥

१ गङ्गा। २ "स्वपि" इ० पा०। ३ 'लोकनाथं' इ० पा०। ४ विप्रः।

तत्रापि शिशून् लालयन्तं गोविन्दं ददर्श । ततोऽन्यस्मिन् गृहे स्नानायोद्युक्तम् ॥२३॥ क्वचिद् वितानाग्नीन् जुह्वतम् । क्वचित् पञ्चभिर्महा-यज्ञैर्यजन्तम् ! कुत्रचिद् द्विजान् भोजयन्तम् । क्वाप्यवशेषितमन्नं भुञ्जानम् ॥२४॥ कु० सन्ध्यामुपासीनम् । कु० ब्रह्म जपन्तम् । क्वचित् खड्गचर्मभ्यां चरन्तम् ॥२५॥ कु० अश्वगजरथैश्चरन्तम् । क्व० पर्यङ्के शयानम् । कु० बन्दिभिः स्तूयमानम् ॥२६॥ क्वचिदुद्धवादिभिर्वि-चारयन्तम् । कु० वारस्त्रीभिर्जलक्रीडारतम् ॥२७॥ क्वापि द्विजमुख्येभ्यो गां ददतम् । कु० इतिहासपुराणानि शृण्वन्तम् ॥ २८ ॥ हास्य

तत्राप्याचष्ट गोविन्दं लालयन्तं सुताङ्घ्रिशून् ॥ ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥ २३ ॥ जुह्वतं च वितानाग्नीन् यजन्तं पञ्चभिर्मखैः ॥ भोजयन्तं द्विजान् क्वापि भुञ्जानमवशेषितम् ॥ २४ ॥ क्वापि संध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम् ॥ एकत्र चासिचर्मभ्यां चरन्तमसिवर्त्मसु ॥२५॥ अश्वैर्गजै रथैः क्वापि विचरन्तं गदाग्रजम् ॥ कचिच्छयानं पर्यङ्के स्तूयमानं च बन्दिभिः ॥ २६ ॥ मन्त्रयन्तं च कस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः ॥ जलक्री-डारतं क्वापि वारमुख्याऽबलावृतम् ॥ २७ ॥ कुत्रचिद्द्विजमुख्येभ्यो ददतं गाः स्वलङ्कृताः ॥ इतिहासपुराणानि शृण्वन्तं मङ्गलानि च ॥ २८ ॥ हसन्तं हासकथया कदाचित् प्रियया गृहे ॥ क्वापि धर्मं सेवमानमर्थकामौ च कुत्र-चित् ॥२९॥ ध्यायन्तमेकमासीनं पुरुषं प्रकृतेः परम् ॥ शुश्रूषन्तं गुरून् क्वापि कामैर्भोगैः सपर्यया ॥ ३० ॥ कुर्वन्तं विग्रहं कैश्चित् सन्धिं चान्यत्र केशवम् ॥ कुत्रापि सह रामेण चिन्तयन्तं सतां शिवम् ॥ ३१ ॥ पुत्राणां दुहितॄणांच काले विध्युपयापनम् ॥ दारैर्वरैस्तत्सदृशैः कल्पयन्तं विभूतिभिः ॥ ३२ ॥ प्रस्थापनोपानयनैरपत्यानां महोत्सवान् ॥ वीक्ष्य योगेश्वरेशस्य येषां लोका विसिस्मिरे ॥ ३३ ॥

कथया प्रियया क्वापि हसन्तम् । क्वापि धर्मं सेवमानम् । कु० अर्थकामौ सेवमानम् ॥२९॥ क्वापि परं पुरुषं ध्यायन्तम् । कु० गुरूञ्छुश्रूषन्तम् ॥३०॥ क्व० कैश्चिद् विग्रहं कुर्वन्तम् । कु० मैत्रीं कुर्वन्तम् । क्वापि रामेण सह साधूनां शिवं चिन्तयन्तम् ॥३१॥ कु० पुत्राणां कन्यानां च विवाहं विधिना कल्पयन्तम् ॥३२॥ क्वापि दुहितृजामात्रादीन् स्वगृहात् तद्गृहं प्रति नयन्तम् । कु० तद्गृहात् पुनरानयन्तम् ॥ ३३ ॥

कुत्रचिद् देवान् यजन्तम् । क्वापि वापीकूपादिखननं कारयन्तम् ॥ ३४ ॥ क्वचिदश्वमारुह्य यादवैः सह मृगयां चरन्तम् ॥३५॥ क्वचित् तासां तासां स्त्रीणां भावं ज्ञातुमिच्छया गृहादिषु वेषान्तरं धृत्वा चरन्तम् ॥३६॥ एवं गृहीतमनुष्यावतारस्य हरेर्योगमायोदयं वीक्ष्य नारदः प्रहसन् जगाद ॥३७॥ हे योगेश्वर ! योगमायां विदाम ॥३८॥ हे देव ! ममानुज्ञां देहि। अहं तव लीलां गायँल्लोकान् पर्यटामि ॥३९॥ श्रीभग-

यजन्तं सकलान् देवान् क्वापि क्रतुभिरूर्जितैः ॥ पूर्तयन्तं क्वचिद्धर्मं कूपाराममठादिभिः ॥ ३४ ॥ चरन्तं मृगयां क्वापि हयमारुह्य सैन्धवम् ॥ घ्नन्तं ततः पशून् मेध्यान् परीतं यदुपुङ्गवैः ॥ ३५ ॥ अव्यक्तलिङ्गं प्रकृतिष्वन्तः पुरगृहादिषु ॥ क्वचिच्चरन्तं योगेशं तत्तद्भावबुभुत्सया ॥ ३६ ॥ अथोवाच हृषीकेशं नारदः प्रहसन्निव ॥ योगमायोदयं वीक्ष्य मानुषीमीयुषो गतिम् ॥ ३७ ॥ विदाम योगमायास्ते दुर्दर्शा अपि मायिनाम् ॥ योगेश्वरात्मन् निर्भाता भवत्पादनिषेवया ॥ ३८ ॥ अनुजानीहि मां देव लोकांस्ते यशसा प्लुतान् ॥ पर्यटामि तवोद्गायँल्लीलां भुवनपावनीम् ॥३९॥ श्रीभगवानुवाच ॥ ब्रह्मन् धर्मस्य वक्ताऽहं कर्ता तदनुमोदिता ॥ तच्छिक्षयँल्लोकमिममास्थितः पुत्र मा खिदः ॥ ४० ॥ श्रीशुक उवाच ॥ इत्याचरन्तं सद्धर्मान् पावनान् गृहमेधिनाम् ॥ तमेव सर्वगेहेषु सन्तमेकं ददर्श ह ॥ ४१ ॥ कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् ॥ मुहुर्दृष्ट्वा ऋषिरभूद्विस्मितो जातकौतुकः ॥ ४२ ॥ इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना ॥ सम्यक्सभाजितः प्रीतस्तमेवानुस्मरन्ययौ ॥ ४३ ॥ एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवाय गृहीतशक्तिः ॥ रेमेऽङ्ग षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ ४४ ॥

वानुवाच ॥ हे ब्रह्मन् ! अहं धर्मस्य कर्ता वक्ताऽनुमोदिताऽस्मि । अतो धर्मं लोकाञ्छिक्षयन्नास्थितः । हे पुत्र ! त्वं मा खिदः ॥४०॥ श्रीशुक उवाच ॥ हे राजन् ! नारदः सर्वगृहेषु सद्धर्मानाचरन्तं तमेवैकं ददर्श॥४१॥नारदो योगमायामहोदयं दृष्ट्वा विस्मितो जातः ॥४२॥ ततः श्रीकृष्णेन धर्मार्थकामेषु सत्कृतो नारदस्तं कृष्णं स्मरन् ययौ ॥४३॥ एवं मनुष्यपदवीं वर्तमानो नारायणः षोडशसहस्रस्त्रीणां गृहेषु रेमे ॥४४॥

१ ईयुषः—प्राप्तवतः । २ प्रतीताः । ३ सर्वपालनाय । ४ गृहीतावतारः ।

यो हरेः कर्माणि गायति शृणोति तस्य भगवति भक्तिर्भवति ॥ ४५ ॥ इति श्रीभा० द० चू० उ० एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि ॥ दूतनारदयोः कार्यं कार्यमन्त्रविचारणम् ॥ १ ॥ जगन्मङ्गलचारित्रमाह्निकं जगदीशितुः । नारदेन क्वचित् किंचिद्दृष्टमाह यथाक्रमम् ॥२॥ श्रीशुक उवाच ॥ हे राजन् ! उषसि प्राप्तायां सत्यां श्रीकृष्णे गृहीतकण्ठचो माधवस्त्रियः कूजतः कुक्कुटान्

यानीह विश्वविलयोद्भववृत्तिहेतुः कर्माण्यनन्यविषयाणि हरिश्चकार ॥ यस्त्वङ्ग गायति शृणोत्यनुमोदते वा भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥४५॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उ० कृष्णगार्हस्थ्यदर्शनं नाम एकोनसप्ततितमोऽध्यायः ॥६९॥ श्रीशुक उवाच ॥ अथोषस्युपवृत्तायां कुक्कुटान् कूजतोऽशपन् ॥ गृहीतकण्ठ्यः पतिभिर्माधव्यो विरहातुराः ॥१॥ वयांस्यरूरुवन् कृष्णं बोधयन्तीव बन्दिनः ॥ गायत्स्वलिष्वनिद्राणि मन्दारवनवायुभिः ॥२॥ मुहूर्तं तं तु वैदर्भी नामृष्यदतिशोभनम् ॥ परिरम्भणविश्लेषात् प्रियबाह्वन्तरं गता ॥ ३ ॥ ब्राह्मे मुहूर्त उत्थाय वार्युपस्पृश्य माधवः ॥ दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥ ४ ॥ एकं स्वयं ज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम् ॥ ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ॥५॥ अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापे परिधाय वाससी ॥ चकार सन्ध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥ ६ ॥ उपस्थायार्कमुद्यन्तं तर्पयित्वाऽऽत्मनः कलाः ॥ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्य चात्मवान् ॥ ७ ॥

शेपुः ॥१॥ तदा पक्षिणो बन्दिन इव श्रीकृष्णं बोधयन्तः सन्तोऽकूजन् ॥ २ ॥ तदा रुक्मिण्याद्याः स्त्रियः पत्यालिङ्गनवियोगाद् न प्रसन्ना बभूवुः ॥ ३ ॥ श्रीकृष्णो ब्राह्मे मुहूर्ते उत्थायाचम्यात्मानं गतकल्मषं ब्रह्माख्यं दध्यौ ॥ ४ ॥ ५ ॥ ततो निर्मलजले स्नात्वा वाससी परिधाय संध्यां कृत्वा ( काण्वशाखित्वादुदयात् पूर्वं ) वैश्वानरं हुत्वा मौनेन गायत्रीं जजाप ॥ ६ ॥ सूर्योदये जाते सूर्योपस्थानं कृत्वा देवर्षिपितॄन् तर्पयित्वा विप्रान पूजयत् ॥ ७ ॥

१ वैदर्भीत्यन्यासां स्त्रीणामुपलक्षणम् । २ निरुपाधिम् । ३ विश्वस्य ।

धेनूनां चतुर्दशलक्षाणि ददौ ॥८॥ ९ ॥
ततो दिनेऽलङ्कृतेभ्यो विप्रेभ्यः स्वर्णशृङ्गीणां सुशीलानां पयस्विनीनां सवत्सानां मौक्तिकमालानां
ततो गोविप्रगुरुदेवतावृद्धान् नत्वामङ्गलानि समस्पृशत् ॥ १० ॥ लोकसुन्दरमात्मानं वस्त्रालङ्कारस्रग्गन्धानुलेपनैर्भूषयामास ॥ ११ ॥
ततः आज्यमादर्शं च विलोक्य सर्ववर्णान् प्रधानादिसेवकांश्च कामैः प्रतोष्य प्रत्यनन्दत ॥ १२ ॥ विप्रादीन् स्रक्ताम्बूलानुलेपनादीन् दत्त्वा

ददौ रूप्यखुरग्राणां क्षौमाजिनतिलैः सह ॥ अलङ्कृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिनेदिने ॥ ९ ॥ गोविप्रदेवतावृद्धगुरून् भूतानि सर्वशः ॥ नमस्कृत्यात्मसंभूतीर्मङ्गलानि समस्पृशत् ॥ १० ॥ आत्मानं भूषयामास नरलोकविभूषणम् ॥ वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥ ११ ॥ अवेक्ष्याज्यं तथाऽऽदर्शं गोवृषद्विजदेवताः ॥ कामांश्च सर्ववर्णानां पौरान्तःपुरचारिणम् ॥ प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनन्दत ॥ १२ ॥ स विभज्याग्रतो विप्रान् स्रक्ताम्बूलानुलेपनैः सुहृदः प्रकृतीर्दारानुपायुङ्क्त ततः स्वयम् ॥ १३ ॥ तावत् सूत उपानीय स्यन्दनं परमाद्भुतम् ॥ सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥ १४ ॥ गृहीत्वा पाणिना पाणिं सारथेस्तमथारुहत् ॥ सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५ ॥ ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः ॥ कृच्छ्राद्विसृष्टो निरगाज्जातहासो हरन्मनः ॥ १६ ॥ सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ॥ प्राविशद्यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः ॥ १७ ॥ तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ॥ वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥ १८ ॥

स्वयं जग्राह ॥ १३ ॥ तावत् सूतः सुग्रीवाद्यश्वैर्युक्तमद्भुतं रथमानीय प्रणम्याग्रतः स्थितः ॥१४॥ ततो भगवान् सात्यक्युद्धवसंयुतः सन् रथमारुहत् ॥ १५ ॥ प्रेमवीक्षितैरीक्षितोऽन्तःपुरस्त्रीणां मनो हरन् सन् निरगात् ॥ १६ ॥ यत्र कामक्रोधादयो न सन्ति तां सुधर्माख्यां सभां प्रविश्य ॥ १७ ॥ परमासने उपविष्टः सन् वृष्णिभिर्वृतश्चन्द्र इव शुशुभे ॥ १८ ॥

१ चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः । बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश । (१)

तत्र परिहासका नानाहास्यरसैर्विभुं तोषयामासुः । नटा नर्तक्यश्च पृथक्ताण्डवैरुपतस्थुः ॥१९॥ सूतमागधबन्दिनस्तुष्टुवुः ॥२०॥ ब्राह्मणाः पूर्वेषां राज्ञां कथा अकथयन् ॥२१॥ तदैकः पुरुषः आगतः । स द्वारपालैः प्रवेशितः सन् ॥२२॥ कृष्णं नत्वा कृताञ्जलिः सन्राज्ञां जरासंधनिरोधजं दुःखं कथयामास ॥२३॥ हे हरे ! ये नृपा जरासन्धस्य दिग्विजये नम्रतां न ययुः । ते द्वे अयुते जरासन्धेन बलाद्गिरिव्रजे निरुद्धाः सन्ति ॥ २४ ॥ ते त्वामूचुः हे कृष्ण कृष्ण ! शरणागतभयभञ्जन ! वयं त्वां शरणं याताः ॥ २५ ॥ लोको दुष्टकर्मनिरतः स्वकुशले

तत्रोपमन्त्रिणो राजन्नानाहास्यरसैर्विभुम् ॥ उपतस्थुर्नटाचार्या नर्तक्यस्ताण्डवैः पृथक् ॥ १९ ॥ मृदङ्गवीणामुरजवेणुतालदर्रस्वनैः ॥ ननृतुर्जगुस्तुष्टुवुश्च सूतमागधबन्दिनः ॥ २० ॥ तत्राहुर्ब्राह्मणाः केचिदासीना ब्रह्मवादिनः ॥ पूर्वेषां पुण्ययशसां राज्ञां चाकथयन्कथाः ॥ २१ ॥ तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः ॥ विज्ञापितो भगवते प्रतीहारैः प्रवेशितः ॥ २२ ॥ स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः ॥ राज्ञामावेदयद् दुःखं जरासन्धनिरोधजम् ॥ २३ ॥ ये च दिग्विजये तस्य सन्नतिं न ययुर्नृपाः ॥ प्रसह्य रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे ॥ २४ ॥ कृष्ण कृष्णाप्रमेयात्मन्प्रपन्नभयभञ्जन ॥ वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥ २५ ॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ॥ यस्तावदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ २६ ॥ लोके भवाञ्जगदिनः कलयाऽवतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यः ॥ कश्चित्त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः ॥२७॥ स्वप्नायितं नृपसुखं परतन्त्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ॥ हित्वा तदात्मनिसुखं त्वदनीहलभ्यं क्लिश्यामहेऽतिकृपणास्तव माययेह ॥ २८ ॥

धर्मे भवतोऽर्चनरूपे प्रमत्तो भवति । अतस्तस्य यः सद्यो जीविताशां छिनत्ति तस्मै कालात्मने नमः ॥२६॥ हे ईश ! त्वं लोके सतां रक्षणाय दुष्टनिग्रहायावतीर्णः।जरासन्धादिः किं तवाज्ञामतिक्रामति । किं वा त्वया रक्ष्यमाणोऽपि जनः स्वकर्मजं दुखं प्राप्नोत्येव इति न विद्मः ॥२७॥ स्वप्नवद् नृपसुखं पुत्रदारादिचिन्तां केवलं वहामः । आत्मसुखं हित्वा त्वन्मायया क्लिश्यामहे ॥ २८ ॥

१ शंखः । २ जगदीश्वरः । ३ शश्वद्भयं यस्मिंस्तेन । ४ मृततुल्येन शरीरेण । ५ त्वत्तो यदनीहैः निष्कामैर्लभ्यम् ।

अतोऽस्मान्मागधाह्वयकर्मपाशान्मोचय । यो जरासन्धोऽयुतगजवीर्यं बिभ्रत् सन् स्वगृहेऽस्मान् रुरोध ॥२९॥ किंच त्वया यो युद्धे सप्तदश-वारं जितः ॥ पश्चादष्टादशतमे संग्रामे त्वां जित्वा प्राप्तगर्वो योऽस्मान्पीडयति । तत्र यद्युक्तं तद्विधेहि ॥३०॥ दूत उवाच ॥ इति तव पादमूलं शरणार्थमागतानां तेषां शं विधीयताम् ॥३१॥ श्रीशुक उवाच ॥ इति दूते प्रवदति सति सूर्य इव नारदः प्रादुरासीत् ॥३२॥ भगवान् तं दृष्ट्वा

तन्नो भवान्प्रणतशोकहराङ्घ्रियुग्मो बद्धान्वियुङ्क्ष्व मगधाह्वयकर्मपाशात् ॥ यो भूभुजोऽयुतमतङ्गजवीर्यमेको बिभ्रद् रुरोध भवने मृगराडिवाऽवीः ॥२९॥ यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे खलु भवन्तमनन्तवीर्यम् ॥ जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित तद्विधेहि ॥ ३० ॥ दूत उवाच ॥ इति मागधसंरुद्धा भवद्दर्शनकाङ्क्षिणः ॥ प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥ श्रीशुक उवाच ॥ राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ॥ बिभ्रत्पिङ्गजटाभारं प्रादुरासीद्यथा रविः ॥ ३२ ॥ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः ॥ ववन्द उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥ ३३ ॥ सभाजयित्वा विधिवत् कृतासनपरिग्रहम् ॥ बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन्मुनिम् ॥ ३४ ॥ अपि स्विदद्य लोकानां त्रयाणामकुतोभयम् ॥ ननु भूयान्भगवतो लोकान्पर्यटतो गुणः ॥ ३५ ॥ नहि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथ पृच्छामहे युष्मान्पाण्डवानां चिकीर्षितम् ॥ ३६ ॥ नारद उवाच ॥ दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ॥ भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम् ॥ ३७ ॥ तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ॥ यद्विद्यमानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३८ ॥

ससभ्य उत्थाय शिरसा ववन्दे ॥३३॥ ततो विधिवत् संपूज्य तं मुनिं बभाषे ॥३४॥ हे मुने ! त्रयाणां लोकानामभयमस्ति किम् ? ॥३५॥ किं च यतो लोके तवाविदितं किंचिन्नास्ति । अतः पाण्डवानां चिकीर्षितं पृच्छामहे ॥३६॥ नारद उवाच ॥ हे विभो ! ब्रह्मणोऽपि दुरत्यया तव माया मया बहुशो दृष्टा ॥ ३७ ॥ तव विचारं को ज्ञातुमर्हति तव माययेदं जगदसदप्यवभासते । तस्मै अचिन्त्याय नमस्ते ॥ ३८ ॥

१ मेधीः । २ हे उद्यतसुदर्शन । ३ तद्यद् युक्तमिति शेषः । ४ ईश्वरः कर्ता येषु तेषु ।

अनर्थवहात् शरीराद् मोक्षोपायमजानतो जीवस्य यो लीलावतारैर्मोक्षोपायं स्वयशोदीपं प्रकाशितवान् तं त्वां शरणागतोऽस्मि ॥ ३९ ॥ हे भगवन् ! अथापि भक्तस्य युधिष्ठिरस्य चिकीर्षितं कथयामि ॥४०॥ हे विभो ! युधिष्ठिरो राजसूययज्ञेन त्वां यष्टुमिच्छति । तद्भवाननुमोदताम् ॥४१॥ तस्मिन् यज्ञे त्वां दिदृक्षवो देवादयो राजानश्च समेष्यन्ति ॥ ४२ ॥ तत्रागताः सर्वे त्वद्दर्शनादिना पूता भविष्यन्ति ॥४३॥ यस्य निर्मलं यशो विश्वं पुनाति तथा तव चरणोदकं च दिवि मन्दाकिनीति पाताले भोगवतीति भूमौ गंगेति च संपुनाति (तस्य तवाग-

जीवस्य यः संसरतोऽविमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ॥ लीलावतारैः स्वयशःप्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ॥ ३९ ॥ अथाप्याश्रावये ब्रह्मन्नरलोकविडम्बनम् ॥ राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम् ॥ ४० ॥ यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः ॥ पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदताम् ॥ ४१ ॥ तस्मिन्देव क्रतुवरे भवन्तं वै सुरादयः ॥ दिदृक्षवः समेष्यन्ति राजानश्च यशस्विनः ॥ ४२ ॥ श्रवणात्कीर्तनाद्ध्यानात्पूयन्तेऽन्तेवसायिनः[1] ॥ तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः[2] ॥ ४३ ॥ यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमङ्गलदिग्वितानम् ॥ मन्दाकिनीति दिवि भोगवतीति चाधो गंगेति चेह चरणाम्बु पुनाति विश्वम् ॥ ४४ ॥ श्रीशुक उवाच ॥ तत्र तेष्वात्मपक्षेष्वगृह्णत्सु विजिगीषया ॥ वाचःपेशैः[3] स्मयन्भृत्यमुद्धवं प्राह केशवः ॥ ४५ ॥ श्रीभगवानुवाच ॥ त्वं हि नः परमं चक्षुः सुहृन्मन्त्रार्थतत्त्ववित् ॥ तथाऽत्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥ ४६ ॥ इत्युपामन्त्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ॥ निदेशं शिरसाऽऽधाय उद्धवः प्रत्यभाषत ॥ ४७ ॥ इति श्रीभा० महा० दशमस्कन्धोत्तरार्द्धे भगवद्याने सप्ततितमोऽध्यायः ॥ ७० ॥

मनात् सर्वं पवित्रं भविष्यति ) ॥४४॥ श्रीशुक उवाच ॥ हे राजन् ! तद्यादवेष्वमन्यमानेषु नारदोक्तं श्रुत्वा केशव उद्धवं जगाद ॥ ४५ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! मन्त्रार्थतत्त्ववित्त्वं नःसुहृत् । अतोऽत्र यत्कर्तव्यं तद् ब्रूहि तत्करवाम ॥४६॥ एवं भगवता पृष्टः उद्धव आज्ञां शिरसा धृत्वा बभाषे ॥ ४७ ॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायाम् उत्तरार्द्धे सप्ततितमोऽध्यायः ॥ ७० ॥

१ श्वपचाः। २ ईक्षा चाभिमर्शः स्पर्शनं च विद्यते येषाम्। ३ पेशलवाग्भिः।

अथैकसप्ततितम उद्धवस्य तु मन्त्रतः ॥ इन्द्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥१॥ श्रीशुक उवाच । हे राजन्! उद्धव एवं श्रीकृष्णोक्तं श्रुत्वा नारदस्य सभ्यानां कृष्णस्य च मतं ज्ञात्वाऽब्रवीत् ॥१॥ उद्धव उवाच । हे देव ! नारदेन यदुक्तं युधिष्ठिरस्य साहाय्यं तत् कार्यम् । तथा राज्ञां रक्षा कार्या ॥ २ ॥ दिग्विजयं कृत्वा राजसूयेन यष्टव्यम्। दिग्विजयाज्जरासुतजयो भविष्यति एवं राजसूयार्थः शरणागतरक्षार्थश्च भविष्यति ॥ ३ ॥ हे गोविन्द ! राज्ञो मुञ्चतस्तव यशो भविष्यति ॥ ४ ॥ बले नागायुतसमः स जरासन्धो भीमसेनं विनाऽन्येषां दुःसहः ॥ ५ ॥ अतो भीमसेनेन द्वन्द्वयुद्धे जेतव्यः । स विप्रैः प्रार्थितः सन् न निराकरोति ॥६॥ अतो भीमार्जुनाभ्यां सह ब्रह्मवेषं धृत्वा

**श्रीशुक उवाच ॥ इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ॥ सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥१॥ उद्धव उवाच ॥ यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया ॥ कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम् ॥२॥ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ॥ अतो जरासुतजय उभयार्थोमतो मम ॥ ३ ॥ अस्माकं च महानर्थो ह्येतेनैव भविष्यति ॥ यशश्च तव गोविन्द राज्ञो बद्धान्विमुञ्चतः ॥ ४ ॥ स वै दुर्विषहो राजा नागायुतसमो बले ॥ बलिनामपि चान्येषां भीमं समबलं विना ॥ ५ ॥द्वैरथे स जेतव्यो मा शताक्षौहिणीयुतः ॥ ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित ॥ ६ ॥ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ॥ हनिष्यति न संदेहो द्वैरथे तव सन्निधौ ॥७॥ निमित्तं परमीशस्य विश्वसर्गनिरोधयोः ॥ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ८ ॥ गायन्ति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च ॥ गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च ॥ ९ ॥**

तत्र गत्वा भीमेन तं प्रति द्वन्द्वयुद्धं भिक्षितव्यम् । ततो भीमस्तव संनिधौ तं हनिष्यति ॥७॥ हे कृष्ण ! यथा तव विश्वस्योत्पत्तिनाशयोर्ब्रह्मरुद्रौ निमित्तमात्रौ, तथाऽत्र त्वमेव संनिधिमात्रेण हन्ता । भीमो निमित्तमात्रम् ॥ ८ ॥ हे भगवन् ! जरासन्धेन रुद्धानां राज्ञां स्त्रियो जरासन्धस्य वधार्थं पतीनां मोक्षणार्थं च तव निर्मलं कर्म गृहेषु गायन्ति । यथा गोप्यः शंङ्खचूडवधं स्वमोक्षं च गायन्ति । यथा मुनयो गजेन्द्रादिमोक्षं गायन्ति तथा । अतस्त्वया तथैव कर्तव्यम् ॥ ९ ॥

१ द्वन्द्वयुद्धे स जेतुं शक्यः शतेनाक्षौणीभिर्युक्तः मागधोऽन्यथा मा—न जेतुं शक्य इत्यर्थः । २ देवकीवसुदेवयोः कंसान्मोक्षम् ।

हे भगवन्! जरासन्धवधः कृतश्चेत् शिशुपालवधादयोऽपि सुलभा भविष्यन्ति ॥१०॥ श्रीशुक उवाच ॥ हे नृप ! इत्युद्धववचो नारदो यदुवृद्धाः कृष्णश्च पूजयामासुः ॥११॥ अथ कृष्ण इन्द्रप्रस्थं प्रति गमनाय दारुकादीनादिशत् ॥१२॥ ततो वसुदेवादीन् प्रणम्य स्त्रीभिः प्रयाणं कारयित्वा सूतानीतं स्वरथमारुहत् ॥१३॥ गजाश्वरथपदातिसेनया सह मृदङ्गशङ्खभेर्यादिभिर्नादितो निरगात् ॥१४॥ तदा ससुताः

जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पकते ॥ प्रायः पाकविपाकेन तव चाभिमतः क्रतुः ॥१०॥ श्रीशुक उवाच ॥ इत्युद्धववचो राजन् सर्वतोभद्रमच्युतम् ॥ देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥ ११ ॥ अथादिशत् प्रयाणाय भगवान् देवकीसुतः ॥ भृत्यान् दारुकजैत्रादीननुज्ञाप्य गुरून् विभुः ॥ १२ ॥ निर्गमय्यावरोधान् स्वान् ससुतान् सपरिच्छदान् ॥ संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ॥ सूतोपनीतं स्वरथमारुहद् गरुडध्वजम् ॥ १३ ॥ ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ॥ मृदङ्गभेर्यानकशंखगोमुखैः प्रघोषघोषितककुभो निराक्रमत् ॥ १४ ॥ नृवाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ॥ वराम्बराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥ नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ॥ स्वलङ्कृताःकटकुटिकम्बलाम्बराद्युपस्करा ययुरधियुज्य सर्वतः ॥१६॥ बलं बृहद् ध्वजपटच्छत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ॥ दिवांऽशुभिस्तुमुलरवं बभौ रवेर्यथार्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १७ ॥ अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा ॥ निशम्य तद्व्यवसितमाहृतार्हणो मुकुन्दसंदर्शननिर्वृतेन्द्रियः ॥ १८ ॥

स्त्रियोऽश्वैः शिबिकाभिश्चाच्युतं पतिमनुययुः ॥ १५ ॥ वारयोषितश्च नरोष्ट्रवृषशकटगजादिषूपस्करान् संनह्य ययुः ॥ १६ ॥ तदा सैन्यं ध्वजच्छत्रचामरवरायुधाभरणकिरीटकवचैर्बभौ ॥ १७ ॥ ततो नारदः श्रीकृष्णेन सत्कृतः सन् तं प्रणतश्च तन्निश्चितं निशम्य ययौ ॥ १८ ॥

---

१ कर्मफलेन राज्ञः पुण्योदयाज्जरासन्धस्य च पापोदयात् । २ अश्वारोहाः । ३ कटकुटयः—उशीरादितृणनिर्मितगृहाः कम्बलाम्बरादयश्चोपस्कराः कुट्यादिरूपा यासां ताः ।

ततो भगवान् राजदूतं जगाद । भद्रमस्तु । यूयं मा भैष्ट । जरासन्धं घातयिष्यामि ॥१९॥ इत्युक्तो दूतस्तत्र गत्वा नृपान् यथावदवदत् । तेऽपि श्रीकृष्णस्य दर्शनं प्रत्यैक्षन्त ॥ २० ॥ ततो हरिरानर्तसौवीरमरुकुरुक्षेत्रं चातिक्रम्य ॥ २१ ॥ सरस्वतीं तीर्त्वा मत्स्यानतीत्येन्द्रप्रस्थं जगाम ॥ २२ ॥ तदा श्रीकृष्णमागतं श्रुत्वा युधिष्ठिरः सोपाध्यायः सुहृद्वृतः सन् निरगात् ॥ २३ ॥ गीतवादित्रघोषेण कृष्णमभ्ययात् ॥२४॥ कृष्णं दृष्ट्वा स्नेहेनार्द्रहृदयः पुनः पुनः परिरेभे ॥ २५ ॥ युधिष्ठिरो मुकुन्दगात्रं दोर्भ्यामालिङ्ग्य हताशुभः सन् मुदं लेभे ॥ २६ ॥

राजदूतमुवाचेदं भगवान् प्रीणयन् गिरा ॥ मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥ १९ ॥ इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ॥ तेऽपि सन्दर्शनं शौरेः प्रत्यैक्षन्यन्मुमुक्षवः ॥ २० ॥ आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ॥ गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥ ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम् ॥ पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥ २२ ॥ तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ॥ अजातशत्रुर्निरगात् सोपाध्यायः सुहृद्वृतः ॥ २३ ॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ॥ अभ्ययात् स हृषीकेशं प्राणाः प्राणमिवादृतः ॥ २४ ॥ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः ॥ चिराद् दृष्टं प्रियतमं सस्वजेऽथ पुनःपुनः॥२५॥दोर्भ्यां परिष्वज्य रमाऽमलालयं मुकुन्दगात्रं नृपतिर्हताशुभः ॥ लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥ तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन् प्रेमजवाकुलेन्द्रियः ॥ यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥ अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ॥ ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथाऽर्हतः ॥ २८ ॥ मानितो मानयामास कुरुसृञ्जयकैकयान् ॥ सूतमागधगन्धर्वान् बंदिनश्चोपमन्त्रिणः ॥ २९ ॥

प्रेम्णा व्याकुलेन्द्रियो भीमो मातुलेयं कृष्णमालिलिङ्ग । नकुलसहदेवावर्जुनश्च मुदा कृष्णमालिलिङ्गुः ॥२७॥ (ततः श्रीकृष्णो युधिष्ठिरं भीमं च नत्वा ) अर्जुनेनालिङ्गितो यमाभ्यां वन्दितः सन् ब्राह्मणान् वृद्धान् नमस्कृत्य ॥२८॥ कौरवसृंजयादीन् मानयामास । सूतमागधगन्धर्वादीनां च मानं चक्रे ॥ २९ ॥

१ व्यवहारः ।

ब्राह्मणाः कृष्णं तुष्टुवुः ॥ मृदङ्गशङ्खादिभिर्गन्धर्वादयो जगुः । नर्तक्यो ननृतुः ॥३०॥ एवं भगवान् सुहृद्वृतः सन् स्वलङ्कृतमिन्द्रप्रस्थं विवेश ॥३१॥ तत्कीदृशम् । गजानां मदगन्धतोयैः संसिक्तमार्गम् । चित्रध्वजैः कनकतोरणपूर्णकुम्भैर्वस्त्रालंकारयुक्तैः स्त्रीपुरुषैश्च विराजमानम् ॥ ३२ ॥ प्रतिगृहं पुष्पधूपदीपादिभिर्युक्तं पुरं ददर्श ॥ ३३ ॥ तदा पौरस्त्रियस्तल्पे पतीन् गृहकृत्यं च विसृज्य कृष्णं द्रष्टुं राजमार्गे ययुः ॥ ३४ ॥

मृदङ्गशंखपटहवीणापणवगोमुखैः ॥ ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥ एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ॥ संस्तूयमानो भगवान्विवेशालङ्कृतं पुरम् ॥ ३१ ॥ संसिक्तवर्त्म करिणां मदगन्धतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥ उद्दीप्तदीपबलिभिः[1] प्रतिसद्मजालनिर्यातधूपरुचिरं विलसत्पताकम् ॥ मूर्धन्यहेमकलशै रजतोरुशृङ्गैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥ प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबन्धाः ॥ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३४ ॥ तस्मिन्सुसंकुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ॥ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥ ३५ ॥ ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्तारा यथोडुपसहाः[2] किमकार्यमूभिः ॥ यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३६ ॥ तत्रतत्रोपसंगम्य पौरा मङ्गलपाणयः ॥ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या[3] हतैनसः ॥ ३७ ॥ अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम् ॥ ३८ ॥ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ॥ प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे ॥ ३९ ॥

तस्मिन्निभाश्वरथद्विपद्भिर्व्याप्ते मार्गे सभार्यं कृष्ण दृष्ट्वा गृहानधिरुह्य पुष्पैस्तं विकीर्य मनसोपगुह्य सुस्वागतं विदधुः ॥३५॥ कृष्णपत्नीर्वीक्ष्योचुः । अमूभिः किं पुण्यं कृतं यासां चक्षुषां हरिर्हास्यावलोकनादिभिरानन्दं ददाति ॥३६॥ ततः पौरास्तत्रतत्र पूजाद्रव्यैः कृष्णं पूजयामासुः ॥३७॥ एवमन्तःपुरजनैः सत्कृतो भगवान् राजमन्दिरं प्राविशत् ॥३८॥ ततः कुन्ती पर्यङ्कादुत्थाय कृष्णं परिषस्वजे ॥ ३९ ॥

१ दीपैर्बलिभिः पुष्पादिप्रकारैश्च । २ चन्द्रसहचराः । ३ एकशिल्पोपजीविनां संघाः श्रेण्यः ।

युधिष्ठिरो गोविन्दं गृहमानीय हर्षेण युक्तः पूजां नाविदत् ॥४०॥ तदा कृष्णः कुन्त्याः गुरुस्त्रीणां च वन्दनं चक्रे। ततो द्रौपदी सुभद्रा च
कृष्णवन्दनं चक्राते ॥४१॥ ततो द्रौपदी रुक्मिण्याद्याः कृष्णपत्नीर्वस्त्रभूषणादिभिरानर्च ॥४२॥४३॥ ततो युधिष्ठिरः ससैन्यं सभार्यं कृष्णं
सुखं निवासयामास ॥४४॥ श्रीकृष्णोऽर्जुनेन युतः सन् खाण्डववनेनाऽग्निं तर्पयित्वा तत्र मयं मोचयामास। मयेन दिव्या सभा कृता ॥४५॥
राज्ञः प्रियं कर्तुमिच्छया कतिचिन्मासानुवास ॥ ४६ ॥ इति श्रीभा० द० चू० उ० एकसप्ततितमोऽध्यायः ॥ ७१ ॥ ततो द्विसप्ततितमे

**गोविन्दं गृहमानीय देवदेवेशमादृतः ॥ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥ ४० ॥ पितृष्वसुर्गुरुस्त्रीणां कृष्ण-**
**श्चक्रेऽभिवादनम् ॥ स्वयं च कृष्णया राजन्भगिन्या चाभिवन्दितः ॥ ४१ ॥ श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीश्च**
**सर्वशः ॥ आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥ ४२ ॥ कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं**
**सतीम् ॥ अन्याश्चाभ्यागता यास्तु वासः स्रङ्मण्डनादिभिः ॥ ४३ ॥ सुखं निवासयामास धर्मराजो जनार्दनम् ॥**
**ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥ ४४ ॥ तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः ॥ मोचयित्वा मयं**
**येन राज्ञे दिव्या सभा कृता ॥ ४५ ॥ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया ॥ विहरन्रथमारुह्य फाल्गुनेन**
**भटैर्वृतः ॥४६॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥ श्रीशुक उवाच ॥**
**एकदा तु सभामध्ये आस्थितो मुनिभिर्वृतः ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥ १ ॥ आचार्यैः कुलवृ-**
**द्धैश्च ज्ञातिसम्बन्धिबान्धवैः ॥ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥ युधिष्ठिर उवाच ॥ क्रतुराजेन गोविंद**
**राजसूयेन पावनीः ॥ यक्ष्ये विभूतीर्भवतस्तत्सम्पादय नः प्रभो ॥ ३ ॥**

राज्ञा कार्ये निवेदिते ॥ दुर्जयं मागधं बुद्ध्वा भीमेनाघातयद् हरिः ॥ १ ॥ श्रीशुक उवाच ॥ एकदा सभामध्ये मुनिभिर्ब्राह्मणक्षत्रियवैश्यै-
र्भ्रातृभिः ॥ १ ॥ आचार्यैः कुलवृद्धादिभिश्च वेष्टितो युधिष्ठिर एषां शृण्वतां सतां श्रीकृष्णं जगाद ॥ २ ॥ युधिष्ठिर उवाच ॥ हे गोविन्द !
अहं राजसूययज्ञेन तव विभूतीर्यक्ष्ये । तं सम्पादय ॥ ३ ॥

१ भो भोः कृष्ण भवतवत्सलेत्येवं सम्बोध्य ।

ये पापनाशके त्वत्पदाम्बुजे देहेन पूजयन्ति मनसा च ध्यायन्ति ते मोक्षं विन्दन्ति । आशिषो त एव विन्दन्ति नान्ये चक्रवर्तिनोऽपि ॥४॥ अत एष लोकस्तव पादकमलसेवानुभावं पश्यतु । हे देव ! ये त्वां भजन्ति न भजन्ति वा तेषामुभयेषां स्थितिं प्रदर्शय ॥ ५ ॥ हे ईश ! समदृशः सर्वात्मनस्तव स्वपरभेदो न तथाऽपि सेवमानानामेव त्वत्प्रसादः । अन्येषां न ॥ ६ ॥ श्रीभगवानुवाच ॥ हे राजन् ! तव सम्यग् विचारितं येन कर्मणा तव कीर्तिः सर्वलोकव्याप्ता भविष्यति ॥ ७ ॥ अयं क्रतुराड् ऋषिपितृदेवसुहृदामीप्सितोऽस्ति ॥ ८ ॥

त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ॥ विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥ ४ ॥ तद्देवदेव भवतश्चरणारविन्दसेवाऽनुभावमिह पश्यतु लोक एषः ॥ ये त्वां भजन्ति न भजन्त्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥ ५ ॥ न ब्राह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ॥ संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र ॥ ६ ॥ श्रीभगवानुवाच ॥ सम्यग् व्यवसितं राजन् भवता शत्रुकर्शिना[1] ॥ कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥७॥ ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ॥ सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥ विजित्य नृपतीन् सर्वान् कृत्वा च जगतीं वशे ॥ संभृत्य सर्वसंभारानाहरस्व महाक्रतुम् ॥ ९ ॥ एते ते भ्रातरो राजन् लोकपालांशसम्भवाः ॥ जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥ न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ॥ विभूतिभिर्वाऽभिभवेद् देवोऽपि किमु पार्थिवः ॥ ११ ॥ श्रीशुक उवाच ॥ निशम्य भगवद्गीतं प्रीतः फुल्लमुखाम्बुजः ॥ भ्रातॄन् दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान्[2] ॥ १२ ॥

अतः सर्वान् राज्ञो विजित्य पृथ्वीं वशीकृत्य सम्भारान्सपाद्य क्रतुमनुतिष्ठ ॥९॥ हे नृप ! एते भ्रातरो लोकपालांशोत्पन्नाः सन्ति । त्वया दुर्जयोऽहं च जितोस्मि ॥ १० ॥ किंच । लोके देवा अपि प्रतापेन श्रिया सैन्यादिभिश्च मद्भक्तं पराभवितुं न समर्थाः । नृपाः कुतः ॥११॥ श्रीशुक उवाच । हे राजन् एवं भगवद्वाक्यं श्रुत्वा युधिष्ठिरः प्रीतः सन् दिग्विजयार्थं भ्रातॄन् युयुजे ॥ १२ ॥

---

१ "शत्रुकर्शन" इ० पा० । २ तेजसोपबृंहितान् आर्षः संधिः ।

दक्षिणस्यां सृञ्जयैः सह सहदेवं प्रतीच्यां मत्स्यैः सह नकुलमुदीच्यां केकयैः सहार्जुनं पूर्वस्यां मद्रकैः सह भीमं प्रेषयामास ॥१३॥ ततस्ते नृपान् विजित्य दिग्भ्यो धनमानीय युधिष्ठिराय ददुः ॥१४॥ हरिर्जरासन्धमजितं श्रुत्वा नृपतेर्ध्यायतः सतः उद्धवोक्तमुपायं जगाद ॥१५॥ ततो भीमोऽर्जुनः श्रीकृष्णश्चैते त्रयो ब्राह्मणा भूत्वा यत्र जरासन्धस्तत्र जग्मुः ॥१६॥ ते आतिथ्यवेलायां तत्र गत्वा जरासन्धमयाचन्त॥१७॥ हे जरासन्ध ! अस्मान् दूरमागताननतिथीन् विद्धि । तव भद्रमस्तु । यद् वयमिच्छामस्तत् प्रयच्छ ॥१८॥ यथाऽसाधूनामकार्यं नास्ति तथा

सहदेवं दक्षिणस्यामादिशत्सह सृञ्जयैः ॥ दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम् ॥ प्राच्यां वृकोदरं मत्स्यैः केकयैः सह मद्रकैः ॥१३॥ ते विजित्य नृपान् वीरा आजह्रुर्दिग्भ्य ओजसा ॥ अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥ श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः ॥ आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ १५ ॥ भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्त्रयः ॥ जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥ ते गत्वातिथ्यवेलायां गृहेषु गृहमेधिनम् ॥ ब्रह्मण्यं समयाचेरन् राजन्या ब्रह्मलिंगिनः ॥ १७ ॥ राजन् विद्ध्यतिथीन् प्राप्तानर्थिनो दूरमागतान् ॥ तन्नः प्रयच्छ भद्रं ते यद् वयं कामयामहे ॥ १८ ॥ किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ॥ किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥१९॥ योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ॥ नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः ॥२०॥ हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः ॥ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥ श्रीशुक उवाच ॥ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबन्धून् विज्ञाय दृष्टपूर्वानचिन्तयत ॥ २२ ॥ राजन्यबन्धवो ह्येते ब्रह्मलिंगानि बिभ्रति ॥ ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ २३ ॥

सुखदुःखादिसहनकर्तॄणां दुःसहं नास्ति । तथा दातॄणामदेयं नास्ति । समदर्शिनां शत्रुर्नास्ति ।(अतो विशेषकथनेन किम्) ॥१९॥ यो नश्वरशरीरेण यशो न संपादयति स शोच्यो निन्द्यश्च ॥ २० ॥ हरिश्चन्द्रः १ रन्तिदेवः २ शिबिः ३ बलिः ४ व्याधः ५ कपोतः ६ इमे नश्वरेण शरीरेण ब्रह्मलोकं गताः ॥२१॥ श्रीशुक उवाच ॥ हे राजन् ! जरासन्धो भाषणैराकृतिभिस्तान् क्षत्रियान् ज्ञात्वा चिन्तयामास ॥२२॥ एते ब्रह्मवेषधरा नृपाः सन्ति । तथापि तेभ्यो देहमपि भिक्षितं ददामि ॥ २३ ॥

यतो विप्रवेषेण विष्णुना राज्याद्भ्रंशितस्य बलेः कीर्तिः श्रूयते ॥२४॥ शुक्रेण वार्यमाणोऽपि बलिर्द्विजरूपिणे विष्णवे महीं प्रादात् ॥ २५ ॥ ब्राह्मणकार्यार्थं विपुलं यशोऽसंपादयता क्षात्रदेहेन को न्वर्थः । न कोऽपि ॥२६॥ इति निश्चित्य कृष्णार्जुनभीमानाह ! हे विप्राः ! वाञ्छितं व्रियताम् । आत्मशिरोऽपि वो ददामि ॥२७॥ श्रीभगवानुवाच । हे राजेन्द्र ! द्वन्द्वयुद्धं देहि । वयं युद्धार्थिनः प्राप्ताः । अन्नार्थिनो न ॥२८॥ असौ भीमः । अयमर्जुनः । अनयोर्मातुलेयं मां कृष्णं ते रिपुं विद्धि ॥२९॥ एवं श्रुत्वा जरासन्ध उच्चैः प्रहस्य क्रोधयुक्तः सन् प्राह । हे मन्दाः !

बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ॥ ऐश्वर्याद् भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४ ॥ श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ॥ जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ २५ ॥ जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबंधुना ॥ देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ॥ हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥ २७ ॥ श्रीभगवानुवाच ॥ युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे ॥ युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः ॥२८॥ असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ॥ अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥ २९ ॥ एवमावेदितो राजा जहासोच्चैः स्म मागधः ॥ आह चामर्षितो मन्दा युद्धं तर्हि ददामि वः ॥ ३० ॥ न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा॥ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥ अयं तु वयसातुल्यो नातिसत्त्वो न मे समः ॥ अर्जुनो नभवेद्योद्धा भीमतुल्यबलो मम ॥३२॥ इत्युक्त्वा भीमसेनाय प्रादाय महतीं गदाम् ॥ द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ॥ ३३ ॥ ततः समे खले वीरौ संयुक्तावितरेतरौ ॥ जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥

तर्हि वो युद्धं ददामि ॥ ३० ॥ परंतु हे कृष्ण ! त्वं मद्भयान्मथुरां त्यक्त्वा समुद्रं शरणं गतः अतो भययुक्तेन त्वया न योत्स्ये ॥ ३१ ॥ अयमर्जुनोऽपि वयसाऽतुल्यो मे समो न भीमस्तु मम तुल्यबलः ॥ ३२ ॥ इत्युक्त्वा भीमसेनाय महतीं गदां दत्त्वा द्वितीयां स्वयमादाय पुराद्बहिर्युद्धाय निर्जगाम ॥३३॥ ततो रणाङ्गणे रणदुर्मदौ वीरौ परस्परं गदाभ्यां जघ्नतुः ॥ ३४ ॥

१ उद्धर्तुमिच्छता। त्रयाणां शब्दानां पूर्वश्लोकेनान्वयः । २ ब्राह्मणार्थाय विपुलं यशो नेहता—नेहमानेन—न सम्पादयतेत्यन्वयः ।

प्राप्तक्रोधयोर्गदे स्कन्धकटिपादकरोरुज-
ततो विचित्राणि मण्डलानि चरतोस्तयोर्युद्धं शुशुभे ॥३५॥ ततो गदयोश्चटचटाशब्दो जातः॥३६॥ तयोस्तलताडनोत्थः शब्दो वज्रपात इव बभूव ॥
त्रुषूपेत्य चूर्णीबभूवतुः[1] ॥३७॥ इत्थं तौ भग्नगदौ क्रुद्धौ नृवीरौ स्वमुष्टिभिर्युद्धं चक्रतुः ॥ ततो दिवा युद्ध्यतोर्निशि सुहृद्वत्तिष्ठतोः सतोः सप्तविंशतिर्दिनानि गतानि ॥ ४० ॥
॥३८॥ एवं तयोः प्रहरतोर्निर्विशेषं युद्धं जातम् ॥३९॥ एवं दिवा युद्ध्यतोर्निशि सुहृद्वत्तिष्ठतोः सतोः सप्तविंशतिर्दिनानि गतानि ॥ ४० ॥

मण्डलानि विचित्राणि सव्यं दक्षिणमेव च ॥ चरतोः शुशुभे युद्धं नटयोरिव रंगिणोः ॥ ३५ ॥ ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ॥ गदयोः क्षिप्तयो राजन् दन्तयोरिव दन्तिनोः ॥३६॥ ते वै गदे भुजजवेन निपात्यमाने अन्योऽन्यतोंऽसकटिपादकरोरुजत्रून् ॥ चूर्णीबभूवतुरुपेत्य यथाऽर्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्य्वोः ॥ ३७ ॥ इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिंष्टाम् ॥ शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ ३८ ॥ तयोरेवं प्रहरतोः समशिक्षाबलौजसोः ॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ ३९ ॥ एवं तयोर्महाराज युध्यतोः सप्तविंशतिः ॥ दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥ ४० ॥ एकदा मातुलेयं वै प्राह राजन्वृकोदरः ॥ न शक्तोऽहं जरासन्धं निर्जेतुं युधि माधव ॥ ४१ ॥ शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम् ॥ पार्थमाप्याययन्स्वेन तेजसाऽचिन्तयद्धरिः ॥ ४२ ॥ सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः ॥ दर्शयामास विटपं पाटयन्निव संज्ञया ॥ ४३ ॥ तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ॥ गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥४४॥ एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ॥ गुदतः पाटयामास शाखामिव महागजः ॥ ४५ ॥



ततः शत्रोर्जन्ममृती जराकृतं जीवितं च ज्ञात्वा श्रीकृष्णः
तत एकदा भीमः कृष्णं प्राह । हे माधव ! युधि जरासन्धं जेतुं न शक्तः ॥४१॥ ततो हरिः करेण शाखां गृहीत्वा पाटयन्निव भीमं सङ्केतेन दर्श-
स्वतेजसा भीममाप्याययन् कथं शकलो भवेदिति चिन्तयामास ॥४२॥ एकं पादं पदाक्रम्य दोर्भ्यामन्यं पादं प्रगृह्य गुदतः पाटयामास॥४५॥
यामास॥४३॥ भीमस्तद्विज्ञाय शत्रुं पादयोर्गृहीत्वा भूमौ निपात्य॥४४॥

[1] चूर्णीचक्रतुः ।

ततः एकपादोरुवृषणकटिपृष्ठस्तनांसबाह्वक्षिभ्रूकर्णे द्वे शकले प्रजा ददृशुः ॥ ४६ ॥ एवं मागधे निहते सति महान् हाहाकार आसीत् । ततः कृष्णार्जुनौ भीममालिङ्ग्य पूजयामासतुः ॥ ४७ ॥ ततो भगवान् जरासन्धपुत्रं सहदेवं मगधानां पतिं चकार । ततो मागधेन रुद्धान् राज्ञो मोचयामास ॥ ४८ ॥ इति श्रीभागवते दशमस्कन्धोत्तरार्धे चू० जरासन्धवधो नाम द्विसप्ततितमोऽध्यायः ॥७२॥ ततस्त्रिसप्ततितमे मोचयित्वा नृपान् हरिः ॥ राजार्हभोगैः स्वान् देशान् प्रस्थाप्य पुनरागमत् ॥ १ ॥ अत्युन्नद्धजरासन्धवधात् तद्रुद्धभूपतीन् ॥ विमोच्य कृपया

एकपादोरुवृषणकटिपृष्ठस्तनांसके ॥ एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४६ ॥ हाहाकारो महानासीन्निहते मगधेश्वरे ॥ पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४७ ॥ सहदेवं तत्तनयं भगवान् भूतभावनः ॥ अभ्यषिञ्चदमेयात्मा मगधानां पतिं प्रभुः ॥ मोचयामास राजन्यान् संरुद्धा मागधेन ये ॥ ४८ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे जरासन्धवधो नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ श्रीशुक उवाच ॥ अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ॥ ते निर्गता गिरिद्रोण्यां मलिना मलवाससः ॥ १ ॥ क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः ॥ ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ २ ॥ श्रीवत्साङ्कं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ॥ चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम् ॥ ३ ॥ पद्महस्तं गदाशंखरथाङ्गैरुपलक्षितम् ॥ किरीटहारकटककटिसूत्राङ्गदाचितम् ॥ ४ ॥ भ्राजद्वरमणिग्रीवं निवीतं वनमालया ॥ पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ ५ ॥ जिघ्रन्त इव नासाभ्यां रम्भन्त इव बाहुभिः । प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ६ ॥

कृष्णो निजरूपमदर्शयत् ॥२॥ श्रीशुक उवाच ॥ हे राजन् ! येऽष्टशताधिकविंशतिसहस्रं २०८०० राजानो दिग्विजिये जरासन्धेन निर्जिता गिरिद्रोण्यां रुद्धाश्च । ते मलिनाः शुष्कमुखाः संरोधेन कर्शिताः निर्गताः सन्तः कृष्णं ददृशुः ॥१॥२॥ कथंभूतम् । घनश्यामं श्रीवत्साङ्कं चतुर्बाहुं प्रसन्नवदनं शङ्खचक्रगदापद्मधरं किरीटहारकटककटिसूत्राङ्गदैर्युक्तम् ॥३॥४॥ वनमालया युतं चक्षुर्भ्यां पिबन्त इव जिह्वया लिहन्त इव ॥ ५ ॥ बाहुभ्यामालिङ्गन्त इव हरेः पादयोर्मूर्धभिः प्रणेमुः ॥ ६ ॥

कृष्णदर्शनाद् गतक्लेशाः प्राञ्जलयः सन्तो गीर्भिस्तुष्टुवुः॥७॥ राजान ऊचुः ॥ हे देवदेव ! तुभ्यं नमः । घोरसंसृतेः खेदयुक्तान् नः पाहि॥८॥ हे नाथ ! एनं जरासन्धं वयं दोषदृष्ट्या न पश्यामः । राज्यैश्वर्येणोन्मत्तो नृपः श्रेयो न विन्दते । तव मायामोहितः सन् संपदमचलां मन्यते ॥९॥१०॥ यथाऽज्ञा मृगतृष्णां जलाशयं मन्यन्ते। एवमविवेकिनो मायां वस्तु चक्षते॥११॥ वयं पुरा मदान्धाः सन्तस्त्वामविगणय्य स्थिताः

कृष्णसंदर्शनाह्लादध्वस्तसंरोधनक्लमाः ॥ प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥ ७ ॥ राजान उचुः ॥ नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ॥ प्रपन्नान् पाहि नः कृष्ण निर्विण्णान् घोरसंसृतेः ॥ ८ ॥ नैनं नाथान्वसूयामो मागधं मधुसूदन ॥ अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥९॥ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः ॥ त्वन्मायामोहितोऽनित्या मन्यते सम्पदोऽचलाः ॥१०॥ मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् ॥ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ ११ ॥ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या[1] इतरेतरस्पृधः[2] ॥ घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः ॥१२॥ त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रिया ॥ कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मराम ते ॥ १३ ॥ अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत् पतता रुजां भुवा ॥ उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १४ ॥ तं नः समादिशोपायं येन ते चरणाब्जयोः ॥ स्मृतिर्यथा न विरमेदपि संसरतामिह ॥१५॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविंदाय नमो नमः ॥ १६ ॥ श्रीशुक उवाच ॥ संस्तूयमानो भगवान्राजभिर्मुक्तबन्धनैः ॥ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥ १७ ॥

॥१२॥ त एव वयमद्य गतदर्पास्तव चरणौ स्मरामः॥१३॥ अथो मृगतृष्णिकासदृशं राज्यं देहेन सेव्यं न स्पृहयामहे । परलोके च कर्णरोचनस्वर्गादिफलं न स्पृहयामहे ॥१४॥ तस्मात् तव चरणाब्जयोः स्मृतिर्येन न विरता स्यात् तथोपायं समादिश॥१५॥ हे ईश ! कृष्णाय वासुदेवाय क्लेशनाशाय गोविन्दाय तुभ्यं नमो नमः ॥१६॥ श्रीशुक उवाच ॥ एवं राजभिः स्तूयमानो भगवान् स्निग्धया गिरा तानाह ॥१७॥

१ पृथिव्याः । २ स्पर्धमानाः ।

श्रीभगवानुवाच ॥ हे भूपाः ! अद्यप्रभृति वो मयि सुदृढा भक्तिरस्तु ॥१८॥ भवद्भिर्मद्भजनं कर्तव्यमिति निश्चितम् एतद्दिष्ट्या । किञ्च ! नृणां श्रीमदेन बन्धनं पश्यामि ॥१९॥ यतो हैहयो नहुषो रावणो वेनो नरकोऽपरे च श्रीमदेन स्थानाद्भ्रंशिताः ॥२०॥ अतो यूयमेतज्ज्ञात्वा मां यज्ञैर्यजन्तः सन्तो धर्मेण प्रजा रक्षथ ॥२१॥ किंच । प्रजातन्तून् विस्तारयन्तः सुखं दुःखं प्राप्तं सेवन्तो मच्चिंता विचरिष्यथ ॥२२॥ देहादादुदासीनाः सन्तो मयि मन आवेश्यान्ते मां यास्यथ ॥ २३ ॥ श्रीशुक उवाच ॥ कृष्णो नृपानित्यादिश्य ततस्तेषां मज्जनकर्मणि पुरुषान्

श्रीभगवानुवाच ॥ अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ॥ सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥ १८ ॥ दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥ १९ ॥ हैहयो नहुषो वेनो रावणो नरकोऽपरे ॥ श्रीमदाद्भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥२०॥ भवन्त एतद्विज्ञाय देहाद्युत्पाद्यमन्तवत् ॥ मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥ २१ ॥ सन्तन्वन्तः प्रजातन्तून् सुखं दुःखं भवाभवौ ॥ प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ॥२२॥ उदासीनाश्च देहादावात्मारामा धृतव्रताः ॥ मय्यावेश्य मनः सम्यङ् मामन्ते ब्रह्म यास्यथ ॥२३॥ श्रीशुक उवाच ॥ इत्यादिश्य नृपान् कृष्णो भगवान् भुवनेश्वरः ॥ तेषां न्ययुङ्क्त पुरुषान् स्त्रियो मज्जनकर्मणि ॥ २४ ॥ सपर्यां कारयामास सहदेवेन भारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २५ ॥ भोजयित्वा वरान्नेन सुस्नातान् समलङ्कृतान् ॥ भोगैश्च विविधैर्युक्तान् ताम्बूलाद्यैर्नृपोचितैः ॥ २६ ॥ ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः ॥ विरेजुर्मोचिताः क्लेशात् प्रावृडन्ते यथा ग्रहाः ॥ २७ ॥ रथान् सदश्वानारोप्य मणिकाञ्चनभूषितान् ॥ प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत् ॥ २८ ॥ त एवं मोचिताः कृच्छ्रात् कृष्णेन सुमहात्मना ॥ ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥ २९ ॥

स्त्रियश्च युयोज ॥२४॥ ततस्तेषां सहदेवेन वस्त्रभूषणादिभिः पूजां कारयामास ॥२५॥ ततः सुस्नातान् भोगैश्च युक्तान् वरान्नेन भोजयित्वा ( पुनस्तेषां सपर्यां सहदेवेन कारयामास ) ॥२६॥ एवं मुकुन्देन पूजिता राजानः क्लेशाद् मोचिताः सन्तो विरेजुः॥२७॥ ततः कृष्णः स्वर्णभूषितान् रथान् प्रति तानारोप्य स्वस्वदेशान् प्रेषयामास ॥२८॥ एवं दुःखाद् मोचिता राजानः पथि कृष्णकृतानि ध्यायन्तो ययुः ॥२९॥

स्वदेशान् गत्वा यथा भगवानादिशत् तथा चक्रुः ॥३०॥ ततः श्रीकृष्णः सहदेवेन पूजितः सन् भीमार्जुनाभ्यां संयुतः प्रायात् ॥३१॥ जिता-
रय इन्द्रप्रस्थं गत्वा शङ्खं दध्मुः ॥ ३२ ॥ तत् श्रुत्वा जना जरासन्धं हतं मेनिरे । युधिष्ठिरः पूर्णमनोरथ आसीत् ॥ ३३ ॥ ततो भीमा-
र्जुनजनार्दना युधिष्ठिरं नत्वा सर्वं कथयामासुः ॥ ३४ ॥ तद् भगवदनुकम्पितं ज्ञात्वा युधिष्ठिरः आनन्दाश्रुकलां मुञ्चन् किञ्चन नोवाच
॥३५॥ इति श्रीभागवते द० चू० उ० त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ चतुर्युक्सप्ततितमे राजसूयक्रिया द्विजैः ॥ अग्रपूजा प्रसंगेन चैद्यघा-

जरासन्धं घातयित्वा
भीमसेनेन केशवः ॥ पार्थाभ्यां संयुतः प्रायात् सहदेवेन पूजितः॥३१॥गत्वा ते खाण्डवप्रस्थं शंखान् दध्मुर्जितारयः ॥
हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥३२॥ तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः ॥ मेनिरे मागधं शान्तं राजा
चाप्तमनोरथः ॥ ३३ ॥ अभिवन्द्याथ राजानं भीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयाञ्चक्रुरात्मना यदनुष्ठितम् ॥ ३४ ॥
निशम्य धर्मराजस्तत्केशवेनानुकम्पितम् ॥ आनन्दाश्रुकलां मुञ्चन्प्रेम्णा नोवाच किञ्चन ॥३५॥ इति श्रीभा० महा०
दशमस्कन्धोत्तरार्धे कृष्णाद्यागमने त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ श्रीशुक उवाच ॥ एवं युधिष्ठिरो राजा जरासन्ध-
वधं विभोः ॥ कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥१॥ युधिष्ठिर उवाच ॥ ये स्युस्त्रैलोक्यगुरवः सर्वे लोक-
महेश्वराः ॥ वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥२॥ स भवानरविन्दाक्षो दीनानामीशमानिनाम् ॥ धत्तेऽनुशासनं
भूमंस्तदत्यन्तविडम्बनम् ॥३॥ न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ॥ कर्मभिर्वर्धते तेजो ह्रसते च यथारवेः ॥४॥

जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ॥ यथाऽन्वशासद्भगवांस्तथा चक्रुरतन्द्रिताः ॥ ३० ॥

तादि वर्ण्यंते ॥ १ ॥ राजसूयमखे हत्वा जरासन्धं तदन्तरे ॥ चैद्यं तदन्ते कुर्वन्तं बीजं कलिमिवावपत् ॥२॥ श्रीशुक उवाच ॥ हे राजन् !
युधिष्ठिरः एवं कृष्णस्यानुभावं श्रुत्वा प्रीतः सन् तमब्रवीद ॥ १ ॥ युधिष्ठिर उवाच ॥ ये सनकादयस्त्रैलोक्यगुरवोऽपि यस्य तवाज्ञां
शिरसा वहन्ति ॥ २ ॥ हे भगवन् । स त्वं राजेत्यभिमानिनामस्माकमाज्ञां धत्से तदत्यन्तमाश्चर्यम् ॥ ३ ॥ अद्वितीयस्य परमात्मनस्तव
तेजः कर्मभिर्न वर्द्धते न ह्रसते च ॥ ४ ॥

हे अजित ! तव भक्तानां मम तवेति भेदबुद्धिर्नास्ति । ( किंपुनस्तव नास्तीति वक्तव्यम् ) ॥५॥ श्रीशुक उवाच । इत्युक्त्वा कृष्णप्रेरितो युधिष्ठिरो यज्ञोचिते वसन्तादिकाले होतृमुखान् ऋत्विजो वव्रे ॥६॥ ते के । व्यासः १ भरद्वाजः २ सुमन्तुः ३ गौतमः ४ असितः ५ वसिष्ठः ६ च्यवनः ७ कण्वः ८ मैत्रेयः ९ कवषः १० त्रितः ११ ॥७॥ विश्वामित्रः १२ वामदेवः १३ सुमतिः १४ जैमिनिः १५ क्रतुः १६ पैलः १७ पराशरः १८ गर्गः १९ वैशम्पायनः २० ॥८॥ अथर्वा २१ कश्यपः २२ धौम्यः २३ रामः २४ भार्गवः २५ आसुरिः २६ वीतिहोत्रः २७

न वै तेऽजित भक्तानां ममाहमिति माधव ॥ त्वं तवेति च नाना धीः पशूनामिव वैकृता ॥५॥ श्रीशुक उवाच ॥ इत्युक्त्वा यज्ञिये काले वव्रे युक्तान् स ऋत्विजः ॥ कृष्णानुमोदितः पार्थो ब्राह्मणान् ब्रह्मवादिनः ॥६॥ द्वैपायनो भरद्वाजः सुमन्तुर्गोतमोऽसितः ॥ वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥७॥ विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ॥ पैलः पराशरो गर्गो वैशम्पायन एव च ॥ ८ ॥ अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ॥ वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥९॥ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ॥ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥१०॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ॥ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥११॥ ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः ॥ कृष्ट्वा तत्र यथाऽऽम्नायं दीक्षयाञ्चक्रिरे नृपम् ॥ १२ ॥ हैमाः किलोपकरणा वरुणस्य यथा पुरा ॥ इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः ॥१३॥ सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ॥ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥१४॥ राजानश्च समाहूता राजपत्न्यश्च सर्वशः ॥ राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै॥१५॥

मधुच्छन्दाः २८ वीरसेनः २९ अकृतव्रणः ३० ॥९॥ तथाऽन्ये द्रोणभीष्मकृपादय उपहूताः सुतैः सह धृतराष्ट्रः विदुरः ॥१०॥ चत्वारो वर्णाश्च सर्वे राजानश्च यज्ञं द्रष्टुं तत्रागताः ॥ ११ ॥ ततस्ते ब्राह्मणाः स्वर्णलाङ्गलैः कर्षणादिभिर्भूमिः संशोध्य(१ धर्मं दीक्षासंस्कारयुक्तं चक्रुः ॥१२॥ तत्र यज्ञे उपस्करा हैमा आसन् । ततो ब्रह्मशिवसंयुता इन्द्रादिलोकपालाः ॥ १३ ॥ सिद्धगन्धर्वविद्याधरोरगा मुनयो यक्षरक्षःखगकिन्नरचारणाः ॥ १४ ॥ राजानो राजपत्न्यश्च राजसूययज्ञं प्रतिजग्मुः ॥ १५ ॥

१ शरीरविषया ।

ततः ऋत्विजो युधिष्ठिरं राजसूयेन विधिवद् याजयामासुः यथा देवा वरुणम् । ततः सोमवल्लीरसपानदिने युधिष्ठिरः ऋत्विजः सभ्यांश्च यथावत् पूजयामास ॥ १६ ॥ १७ ॥ तदा सभासदोऽग्रपूजार्हं विचारयन्तः सन्तो योग्यानां बाहुल्याद् यदा नाध्यगच्छन् तदा सहदेवो जगाद ॥ १८ ॥ हे सभ्याः एषोऽच्युतोऽग्रपूजामर्हति ॥ १९ ॥ यतो यदात्मकं विश्वं यदात्मिका आहुतयो मन्त्रा यत्पराः ॥ २० ॥ सोऽसावेक एव नापरः स्वयं विश्वं सृजत्यवति हन्ति च ॥ २१ ॥ किंच । सोऽयं यस्यानुग्रहेण तपोयोगादीनि कुर्वन् जनः श्रेयः साधयति

मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ॥ अयाजयन् महाराजं याजका देववर्चसः ॥ १६ ॥ राजसूयेन विधिवत् प्राचेतसमिवामराः ॥ सौत्येऽहन्यवनीपालो याजकान् सदसस्पतीन् ॥ अपूजयन्महाभागान् यथावत सुसमाहितः ॥ १७ ॥ सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः ॥ नाध्यगच्छन्ननैकान्त्यात् सहदेवस्तदाऽब्रवीत् ॥ १८ ॥ अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः ॥ एष वै देवताः सर्वा देशकालधनादयः ॥ १९ ॥ यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ॥ अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः ॥ २० ॥ एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ॥ आत्मनाऽऽत्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥ २१ ॥ विविधानीह कर्माणि जनयन् यदवेक्षया ॥ ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥२२॥ तस्मात् कृष्णाय महते दीयतां परमार्हणम् ॥ एवं चेत् सर्वभूताना-मात्मनश्चार्हणं भवेत् ॥२३॥ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ॥ देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ २४ ॥ इत्युक्त्वा सहदेवोऽभूत् तूष्णीं कृष्णानुभाववित् ॥ तच्छ्रुत्वा तुष्टुवुः सर्वे साधुसाध्विति सत्तमाः ॥ २५ ॥ श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ॥ समर्हयद् हृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥

॥ २२ ॥ तस्मात् कृष्णायाग्रपूजा दीयताम् । एवं कृते सति सर्वभूतानां पूजनं भवेत् ॥ २३ ॥ अनन्तफलमिच्छता पुरुषेण पूजनं पूर्णाय निरस्तभेदमतये कृष्णाय देयम् ॥२४॥ इत्युक्त्वा सहदेवस्तूष्णीमभूत् ॥ तच्छ्रुत्वा सर्वे साधुसाध्वित्यूचुः ॥ २५ ॥ ततो युधिष्ठिरो विप्राणां साधुसाध्विति घोषं श्रुत्वा सभासदामभिप्रायं ज्ञात्वा प्रीतः सन् कृष्णं पूजयामास ॥ २६ ॥

तदा तत्पादौ प्रक्षाल्य तज्जलं सकुटुम्बः शिरसि दधार ॥२७॥ वस्त्रभूषणादिभिः श्रीकृष्णं पूजयित्वाऽश्रुपूर्णाक्षः सन् तमीक्षितुं नाशक्नोत् ॥२८॥ इत्थं पूजितं कृष्णं वीक्ष्य प्राञ्जलयः सर्वे जनास्तं प्रणेमुः । तदा पुष्पवृष्टयः पेतुः ॥ २९ ॥ ततः शिशुपालस्तत् सर्वं दृष्ट्वा क्रुद्धः सन्नासनादुत्थाय बाहुमूर्ध्वं कृत्वा भगवन्तं निन्द्यवाक्यानि श्रावयन् जगाद ॥३०॥ हे सभ्याः ! कालो दुरत्यय इति श्रुतिः सत्या । यतो वृद्धानामपि बुद्धिर्बालवाक्यैर्भिद्यते ॥ ३१ ॥ हे सभासदः ! पात्रविदां श्रेष्ठा यूयं कृष्णोऽर्हणे मान्य इति बालभाषितं मा गृणीत ॥ ३२ ॥

**तत्पादाववनिज्यापः शिरसा लोकपावनीः ॥ सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥ २७ ॥ वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ॥ अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत् समवेक्षितुम् ॥ २८ ॥ इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः ॥ नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥ २९ ॥ इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन् भगवते परुषाण्यभीतः ॥ ३० ॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ॥ वृद्धानामपि यद् बुद्धिर्बालवाक्यैर्विभिद्यते ॥३१॥ यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ॥ सदसस्पतयः सर्वे कृष्णो यत् संमतोऽर्हणे ॥ ३२ ॥ तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन् ब्रह्मनिष्ठान् लोकपालैश्च पूजितान् ॥३३॥ सदसस्पतीनतिक्रम्य गोपालः कुलपांसनः ॥ यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥३४॥ वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ॥ स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥ ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ॥ वृथा पानरतं शश्वत्सपर्यां कथमर्हति ॥ ३६ ॥ ब्रह्मर्षिसेवितान् देशान्हित्वैतेऽब्रह्मवर्चसम् ॥ समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ ३७ ॥**

अहो ! तपोविद्यादियुक्तानृषीन् ब्रह्मनिष्ठान् ॥३३॥ सदसस्पतींश्च हित्वा गोपालः सपर्यां कथमर्हति । यथा काकः पुरोडाशम् ॥३४॥ किंच अयं सर्वधर्मबहिष्कृतो वर्णाश्रमकुलात् परो गुणैर्हीनः । अतः पूजायाः कथं योग्यो भवति ॥३५॥ एषां कुलं ययातिना शप्तं सद्भिर्बहिष्कृतम् । तस्य पूजा कथम् ॥ ३६ ॥ एते ब्रह्मर्षिसेवितान् देशान् हित्वा समुद्रं दुर्गं कृत्वा प्रजा बाधन्ते ॥ ३७ ॥

स शिशुपाल एवमादीनि निन्द्यवाक्यानि बभाषे । तथापि भगवान् किञ्चिन्नोवाच ॥ ३८ ॥ तदा सभ्यास्तन्निन्दनं श्रुत्वा कर्णौ पिधाय शिशुपालं शपन्तः सन्तो निर्जग्मुः ॥३९॥ यतो यः पुमान् भगवद्भक्तस्तस्य च निन्दां शृणोति ततो नापैति च सोऽधो याति ॥४०॥ ततः पाण्डवा मत्स्यकैकयसृञ्जयाश्च क्रुद्धाः सन्तः शिशुपालं हन्तुमुत्तस्थुः ॥ ४१ ॥ ततः शिशुपालः कृष्णपक्षीयान् निर्भर्त्सयन् खड्गचर्मणी जगृहे ॥ ४२ ॥ तावत् कृष्ण उत्थाय स्वान् निवार्य चक्रेण तस्य शिरो जहार ॥४३॥ तदा शिशुपाले हते कोलाहलशब्द आसीत् तस्यानुवर्त्तिनो भूपाश्च दुद्रुवुः ॥ ४४ ॥ ततः सर्वेषां पश्यतां चैद्यदेहोत्थं ज्योतिः श्रीकृष्णं प्राविशत् ॥ ४५ ॥ स वैरबुद्ध्या ध्यायन् त्रिभिर्जन्मभिस्तन्मयतां प्राप्तः ॥४६॥ ततो धर्म ऋत्विग्भ्यः सदस्येभ्यो दक्षिणां दत्त्वाऽवभृथस्नानं चक्रे ॥ ४७ ॥ ततः कृष्णो राज्ञो यज्ञं साधयित्वा सुहृद्भिः प्रार्थितस्तत्र कतिचिन्मासानुवास ॥ ४८ ॥ ततोऽनिच्छतो राज्ञ आज्ञां गृहीत्वा भार्याभिः सह द्वारकां ययौ ॥ ४९ ॥

एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ॥ नोवाच किञ्चिद् भगवान् यथा सिंहः शिवारुतम् ॥३८॥ भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः ॥ कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥३९॥ निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥४०॥ ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृञ्जयाः ॥ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥४१॥ ततश्चैद्यस्त्वसंभ्रान्तो जगृहे खड्गचर्मणी ॥ भर्त्सयन् कृष्णपक्षीयान् राज्ञः सदसि भारत ॥४२॥ तावदुत्थाय भगवान् स्वान् निवार्य स्वयं रुषा ॥ शिरः क्षुरान्तचक्रेण[१] जहारापततो रिपोः ॥४३॥ शब्दः कोलाहलोऽप्यासीच्छिशुपाले हते महान् ॥ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४४ ॥ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४५ ॥ जन्मत्रयानुगुणितवैरसंरब्धया धिया ॥ ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥४६॥ ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ॥ सर्वान् संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥४७॥ साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ॥ उवाच कतिचिन्मासान् सुहृद्भिरभियाचितः ॥ ४८ ॥ ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः ॥ ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥ ४९ ॥

१ क्षुरान्तवत् तीक्ष्णेन चक्रेण ।

हे परीक्षित ! विप्रशापाद्वैकुण्ठवासिनोर्जन्म तेऽनुवर्णितम् ॥९०॥ अवभृथे स्नातो युधिष्ठिरो ब्रह्मक्षत्रसभामध्य इन्द्र इव शुशुभे ॥ ९१ ॥ ततो राज्ञा सत्कृताः सर्वे सुरमानवादयः कृष्णं यज्ञं च प्रशंसन्तः स्वस्वधामानि ययुः ॥९२॥ दुर्योधनस्तस्य श्रियमसहमानो न मुमुदे ॥९३॥ य इदं शिशुपालवधादिकं कर्म राजमोक्षं यज्ञं च कीर्तयेत्स सर्वपापैः प्रमुच्यते ॥९४॥ इति श्रीभागवते द० स्कन्धे चू० उ० चतुःसप्ततितमोऽध्यायः ॥७४॥ पञ्चयुक्सप्ततितमे यज्ञावभृथसंभ्रमः ॥ सुयोधनस्य चाक्षान्त्या मानभङ्गो दृशिभ्रमात् ॥१॥ राजोवाच ॥ हे ब्रह्मन् ! नृदेवादयो युधिष्ठि-

वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ॥ वैकुण्ठवासिनोर्जन्म विप्रशापात्पुनः पुनः ॥९०॥ राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ९१ ॥ राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ॥ कृष्णंक्रतुं च शंसन्तः स्वधामानि ययुर्मुदा ॥ ९२ ॥ दुर्योधनमृते पापं कलिं कुरुकुलामयम् ॥ यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम् ॥९३॥ य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ॥ राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥९४॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे शिशुपालवधो नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ राजोवाच ॥ अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ॥ सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥१॥ दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ॥ इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥ श्रीशुक उवाच ॥ पितामहस्य ते यज्ञे राजसूये महामनाः ॥ बान्धवाः परिचर्यायां तस्यासन् प्रेमबन्धनाः ॥ ३ ॥ भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ॥ सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥४॥ गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ॥ परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥ ५ ॥ युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ॥ बाह्लीकपुत्रा भूर्याद्या ये च सन्तर्दनादयः ॥ ६ ॥

रस्य यज्ञमहोदयं दृष्ट्वा सर्वे मुमुदिरे ॥१॥ दुर्योधनं विना राजानो देवादयश्च यज्ञमहोदयं दृष्ट्वा मुमुदिरे इति त्वन्मुखात् श्रुतम् । तत्र कारण-मुच्यताम् ॥ २ ॥ श्रीशुक उवाच ॥ तव पितामहस्य यज्ञे बान्धवाः परिचर्यायामासन् ॥ ३ ॥ ते च यथा । भीमः पाककर्मणि । दुर्योधनः कोशस्थाने । सहदेवः पूजायाम् । नकुलो नानावस्तुसाधने ॥४॥ अर्जुनः शुश्रूषणे । कृष्णः पादप्रक्षालने । द्रौपदी परिवेषणे । कर्णो दाने ॥ ५ ॥ तथा सात्यकिविकर्णौ विदुरादयः ॥ ६ ॥

एवं यज्ञे चैद्यज्योतिषि कृष्णे प्रविष्टे सति यज्ञसमाप्तौ ऋत्विगादिषु दक्षिणादिभिः
महायज्ञे नानाकर्मसु प्रेरिता सन्तः प्रवर्तन्ते स्म ॥ ७ ॥ सम्यक्पूजितेषु सत्सु सर्वे गङ्गायामवभृथस्नानं चक्रुः ॥८॥ तदा मृदङ्गशङ्खभेर्यादयो नेदुः ॥९॥ नर्तक्यो ननृतुः । गायका जगुः । तन्नादो दिवमस्पृशत् ॥१०॥ तदा यदु सृञ्जयकाम्बोजादयो राजानो यजमानपुरस्सराः सन्तो नानावाहनैश्चतुरङ्गसैन्यैः सह निर्ययुः॥११॥१२॥तथा

प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः ॥ ७ ॥ ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ॥ चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८ ॥ मृदङ्गशंखपणवधुन्धुर्यानकगोमुखाः ॥ वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥ नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ॥ वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥ चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः ॥ स्वलङ्कृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥ यदुसृञ्जयकाम्बोजकुरुकेकयकोसलाः ॥ कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥१२॥ सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ॥ देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥ स्वलङ्कृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः॥विलिम्पन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥१४॥ तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ॥ पुंभिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १५ ॥ गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ॥ ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥ ता देवरानुत सखीन् सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकबराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥

ऋत्विगादयो ब्रह्मघोषेण निर्ययुः।देवाः पुष्पवृष्टिं कुर्वन्तः सन्तस्तुष्टुवुः ॥१३॥ स्वलङ्कृता नरा नार्यश्च मिथः क्रीडां चक्रुः ॥१४॥ वारयोषितश्च तैलगोरसहरिद्राकुंकुमादिभिः पुरुषान् लिम्पन्त्यो विजह्रुः ॥१५॥ तथा राजपत्न्यो मातुलेयैः सखिभिश्च सिच्यमानाः सत्यो विरेजुः ॥ १६ ॥ ता राजपत्न्यो देवरान् सखींश्च चर्मादिसेचनपात्रैः सिषिचुः ॥ १७ ॥

१ अर्वा—अश्वः । २ कामिनाम् ।

तदा युधिष्ठिरो रथमारूढः सन् स्वपत्नीभिः शुशुभे क्रियाभिः क्रतुराडिव ॥१८॥ ततस्ते ऋत्विजः पत्नीसंयाजान् नाम यज्ञावभृथसम्बन्धि-कर्माणि चाऽनुष्ठाय युधिष्ठिरं गङ्गायां स्नापयाञ्चक्रुः ॥१९॥ तदा नरदुन्दुभिभिः समं देवदुन्दुभयो नेदुः । देवर्षिपितृमानवाः पुष्पवर्षाणि मुमुचुः ॥२०॥ ततो वर्णाश्रमयुता नरास्तत्र स्नानं चक्रुः । यतो महापातक्यपि सद्यः पापात् मुच्यते ॥ २१ ॥ अथ राजा श्रेष्ठे वाससी परि-धाय भूषणानि धृत्वा ऋत्विगादीनाभरणाम्बरैरानर्च ॥२२॥ ततो नृपो बन्धुमित्रज्ञातिसुहृदादीन् वस्त्रालङ्कारैः पूजयामास ॥ २३ ॥ तदा

स सम्राड् रथमारूढः सदश्वं रुक्ममालिनम् ॥ व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥ पत्नीसंयाजा-वभृथ्यैश्चरित्वा ते तमृत्विजः ॥ आचान्तं स्नापयाञ्चक्रुर्गङ्गायां सह कृष्णया ॥ १९ ॥ देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् ॥ मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥ सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः ॥ महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥ २१ ॥ अथ राजाऽहते क्षौमे परिधाय स्वलङ्कृतः ॥ ऋत्विक्सदस्यविप्रादीनानर्चाभरणा-म्बरैः ॥ २२ ॥ बन्धुज्ञातिनृपान् मित्रसुहृदोऽन्यांश्च सर्वशः ॥ अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥ सर्वे जनाः सुररुचौ मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ॥ नार्यश्च कुण्डलयुगालकवृन्दजुष्टवक्त्रश्रियः कनक-मेखलया विरेजुः ॥ २४ ॥ अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ॥ ब्रह्मक्षत्त्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥ देवर्षिपितृभूतानि लोकपालाः सहानुगाः ॥ पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥ हरिदासस्य राजर्षे राजसूयमहोदयम् ॥ नैवातृप्यन् प्रशंसन्तः पिबन् मर्त्योऽमृतं यथा ॥ २७ ॥

सर्वे नरा नार्यश्च मणिकुण्डलोष्णीषकञ्चुकदुकूलहारादिभिर्विरेजुः ॥ २४ ॥ तत ऋत्विजः सदस्या ब्रह्मक्षत्रियविट्शूद्रा राजानः ॥ २५ ॥ देवर्षिपितृमानवा लोकपालाश्च ये यज्ञे समागताः ते राज्ञा पूजिताः सन्तस्तमनुज्ञाप्य स्वधामानि ययुः ॥२६॥ युधिष्ठिरस्य राजसूयमहोदयं प्रशंसन्तस्ते सर्वे नैवातृप्यन् मर्त्योऽमृतं पिबन् यथा ॥ २७ ॥

१ "गता." इ० क्वाचित्कः पाठः ।

ततो युधिष्ठिरः सुहृदादीन् कृष्णं च प्रीत्या निवासयामास ॥२८॥ भगवानपि साम्बादीन् द्वारकां प्रेष्य स्वयं तत्र न्यवात्सीत् ॥२९॥ इत्थं धर्म-
राजः कृष्णेन सुदुस्तरं मनोरथमहार्णवमुत्तीर्य गतक्लेश आसीत् ॥३०॥ एकदा दुर्योधनो युधिष्ठिरस्यैश्वर्यं यज्ञमहोत्सवं च दृष्ट्वाऽतप्यत् ॥ ३१ ॥
यस्मिन् गृहे मयेन रचिता देवासुरमनुष्याणां विभूतयो भान्ति । ताभिः सह द्रौपदी पतीन् सेवते ॥३२॥ यस्मिन् गृहे कृष्णस्य षोडशसहस्र-
स्त्रियः श्रोणीभरेण शनकैरङ्घ्रिभूषणानि क्वणयन्त्यः कुचकुङ्कुमरक्तहारैः कुण्डलैश्च शोभमाना इतस्ततश्चलन्ति ॥३३॥ कदाचिद् मयासुर-

ततो युधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान् ॥ प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥ २८ ॥ भगवानपि
तत्राङ्ग न्यवात्सीत् तत्प्रियङ्करः ॥ प्रस्थाप्य यदुवीरांश्च साम्बादींश्च कुशस्थलीम् ॥२९॥ इत्थं राजा धर्मसुतो मनोरथ-
महार्णवम् ॥ सुदुस्तरं समुत्तीर्य कृष्णेनासीद् गतज्वरः ॥३०॥ एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ॥ अतप्य-
द्राजसूयस्य महित्वं चाच्युतात्मनः ॥ ३१ ॥ यस्मिन् नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मीर्नाना विभान्ति किल विश्वसृजोप-
क्लृप्ताः ॥ ताभिः पतीन् द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥३२॥ यस्मिंस्तदा मधुपतेर्महिषी-
सहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ॥ मध्ये सुचारुकुचकुंकुमशोणहारं श्रीमन्मुखं प्रचलकुण्डलकुन्तलाढ्यम्
॥३३॥ सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ॥ वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥३४॥ आसीनः
काञ्चने साक्षादासने मघवानिव ॥ पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बन्दिभिः ॥३५॥ तत्र दुर्योधनो मानी परीतो
भ्रातृभिर्नृप ॥ किरीटमाली न्यविशदसिहस्तः क्षिपन्[1] रुषा ॥ ३६ ॥ स्थलेऽभ्यगृह्णाद्वस्त्रान्तं जलं मत्वा स्थलेऽपतत् ॥
जले च स्थलवद् भ्रान्त्या मयमायाविमोहितः ॥ ३७ ॥

निर्मितायां सभायां बन्धुभिः कृष्णेन च वृतो युधिष्ठिरः ॥३४॥ सुवर्णसिंहासन आसीनो बन्दिभिः स्तूयमानः सन्निन्द्र इव शुशुभे ॥३५॥ तत्र
बन्धुभिः सह दुर्योधनोऽसिहस्तः सभायां विवेश ॥ ३६ ॥ ततो मयमायाविमोहितः स तस्यां जलभ्रान्त्या स्थले वस्त्रान्तमाकुञ्चितवान्
तथा तथाऽग्रे स्थलभ्रान्त्या जलेऽपतत् ॥ ३७ ॥

१ अधिक्षिपन् । द्वाःस्थादीनिति पाठः ।

तदा भीमः स्त्रियोऽपरे नृपतयश्च राज्ञा निवार्यमाणा अपि कृष्णानुमोदिता जहसुः ॥ ३८ ॥ तदा दुर्योधनो व्रीडितः सन् रुषा ज्वलन् तूष्णीं गजाह्वयं प्रययौ । युधिष्ठिरः खेदयुक्तो बभूव । भगवान् भूभार जिहीर्षुस्तूष्णीमासीद् यस्य दृष्टिमात्रेण दुर्योधनो भ्रान्ति प्राप ॥३९॥ हे राजन्! यज्ञे दुर्योधनस्य दौरात्म्यं यत् पृष्टं तत्ते कथितम् ॥ ४० ॥ इति श्रीभागवते म० दशमस्कन्धे चू० उ० पञ्चसप्ततितमोऽध्यायः ॥७५॥ ततः षट्सप्ततितमे वृष्णिशाल्वमहामृधे ॥ द्युमद्गदाप्रहारेण रणात् प्रद्युम्ननिर्गमः ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! अथान्यदपि कृष्णस्याद्भुतं

जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ॥ निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ॥ ३८ ॥ स व्रीडितोऽवाग्वदनो रुषा ज्वलन् निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ॥ हाहेति शब्दः सुमहानभूत् सतामजातशत्रुर्विमना इवाभवत् ॥ बभूव तूष्णीं भगवान् भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥ ३९ ॥ एतत्तेऽभिहितं राजन् यत् पृष्टोऽहमिह त्वया ॥ सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उ० दुर्योधनमानभङ्गो नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥ श्रीशुक उवाच ॥ अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ॥ क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥१॥ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ॥ यदुभिर्निर्जितः सङ्ख्ये जरासन्धादयस्तथा ॥ २ ॥ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ॥ अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ ३ ॥ इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ॥ आराधयामास नृप पांसुमुष्टिं सकृद् ग्रसन् ॥ ४ ॥ संवत्सरान्ते भगवानाशुतोष उमापतिः ॥ वरेण च्छन्दयामास शाल्वं शरणमागतम् ॥५॥ देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ॥ अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ ६ ॥

कर्म शृणु ॥ १ ॥ एकदा रुक्मिण्युद्वाहे प्राप्तः शाल्वो जरासन्धादयश्च यदुभिर्निर्जिताः ॥ २ ॥ तदा सर्वराजानां शृण्वतां सतां शाल्वः प्रतिज्ञां चकार । अद्यायादवीं महीं करिष्ये । मम पौरुषं पश्यत ॥३॥ इति प्रतिज्ञां कृत्वा पांसुमुष्टिं सकृद् भक्षयन् शिवमाराधयामास ॥४॥ ततो वर्षान्ते शिवस्तुष्टः सन् शाल्वं प्रति वरं वृणीष्वेत्युवाच ॥५॥ तदा शाल्वो देवासुरमनुष्यगंधर्वसर्परक्षसामभेद्यं कामगं वृष्णिभीषणं विमानं वव्रे ॥६॥

तदा शिवस्तथेत्युक्त्वा मयासुरस्याज्ञां दत्तवान्। मया लोहमयं सौभनामकं विमानं निर्माय शाल्वाय ददौ ॥ ७ ॥ शाल्वः कामगं विमानं
लब्ध्वा पूर्ववैरं स्मरन् द्वारकां ययौ ॥ ८ ॥ महत्या सेनया तां पुरीं रुद्ध्वोपवनोद्यानानि बभञ्ज ॥ ९ ॥ गोपुराणि गृहान् क्रीडास्थनानि च
बभञ्ज। विमानाग्र्यात् शस्त्रवृष्टयो निपेतुः ॥१०॥ शिला द्रुमाः सर्पाः शर्करा निपेतुः। प्रचण्डश्चक्रवातश्चाभूत् ॥११॥ एवं सौभेन पीडयमाना

तथेति गिरिशादिष्टो मयः परपुरञ्जयः ॥ पुरं निर्माय शाल्वाय प्रादात् सौभमयस्मयम् ॥७॥ स लब्ध्वा कामगं यानं
तमोधाम दुरासदम् ॥ ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥८॥ निरुध्य सेनया शाल्वो महत्या भरतर्षभ ॥
पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ॥ ९ ॥ सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ॥ विहारान् स विमाना-
ग्र्यान्निपेतुः शस्त्रवृष्टयः ॥ १० ॥ शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः ॥ प्रचंडश्चक्रवातोऽभूद् रजसाऽऽच्छा-
दिता दिशः ॥ ११ ॥ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ॥ नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥
प्रद्युम्नो भगवान् वीक्ष्य बाध्यमाना निजाः प्रजाः ॥ मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥ १३ ॥ सात्यकि-
श्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः ॥ हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ १४ ॥ अपरे च महेष्वासा
रथयूथपयूथपाः ॥ निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥ ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ॥
यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १६ ॥ ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ॥ क्षणेन नाशयामास
नैशं तम इवोष्णगुः ॥ १७ ॥

द्वारका सुखं नाभ्यपद्यत ॥ १२ ॥ तदा प्रद्युम्नस्तेन पीडयमानाः प्रजा वीक्ष्य मा भैष्टेत्युक्त्वा रथमारुह्य निर्ययौ ॥ १३ ॥ तदनु सात्यकिः १
चारुदेष्णः २ साम्बः ३ अक्रूरः ४ हार्दिक्यः ५ भानुविंदः ६ गदः ७ शुकः ८ सारणः ९ ॥ १४ ॥ एतेऽपरे च रथाश्वगजपदातियुक्तया सेनया
सह निर्ययुः ॥ १५ ॥ ततः शाल्वानां यदुभिः सह युद्धं जातम् ॥ १६ ॥ तदा प्रद्युम्नो दिव्यास्त्रैः शाल्वस्य मायां नाशयामास ॥ १७ ॥



१ प्रासादाः। गृहाः। अट्टालाः तदुपरिगृहाः। तोलिकाः तत्पर्यन्तकुड्यानि। २ सूर्यः।

ततः शाल्वस्य सेनान्यं पञ्चविंशतिबाणैर्विव्याध ॥१८॥ ततः शाल्वं शतबाणेनैकेन सेनाभटान् दशभिर्दशभिः सारथींस्त्रिभिस्त्रिभिर्वाहनानि ताडयामास ॥१९॥ तत्प्रद्युम्नस्याद्भुतं कर्म दृष्ट्वा स्वपरसैनिकास्तत्संमानं चक्रुः ॥२०॥ ततस्तद्विमानं कदाचिद्बहुरूपं कदाचिदेकरूपं क्वचिद्दृश्यते क्वचिन्न दृश्यते । एवं परैरवितर्क्यमभूत् ॥२१॥ किं च क्व० भूमौ । क्व० आकाशे । क्व० गिरिमस्तके । क्व० जले । एवं भ्राम्यत् सत् सौभमनवस्थितमभूत् ॥२२॥ तदा यत्रयत्र सविमानः शाल्वो दृश्यते तत्रतत्र वृष्णियूथपाः शरानमुञ्चन् ॥२३॥ एवमरिभिः पीडयमानं विमानं

विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ॥ शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १८ ॥ शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् ॥ दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥१९॥ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ॥ दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥२०॥ बहुरूपैकरूपं तद्दृश्यते न च दृश्यते ॥ मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥२१॥ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ॥ अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम् ॥२२॥ यत्रयत्रोपलक्ष्येत ससौभः सहसैनिकः ॥ शाल्वस्ततस्ततोऽमुञ्चञ्छरान्सात्वतयूथपाः ॥ २३ ॥ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ॥ पीडयमानपुरानीकः शाल्वोऽमुह्यत्परैरितैः ॥ २४ ॥ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ॥ न तत्यजू रणं स्वंस्वं लोकद्वयजिगीषवः ॥ २५ ॥ शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ॥ आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६ ॥ प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिन्दमम् ॥ अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥ लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ॥ अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥

सैन्यं च दृष्ट्वा शाल्वोऽमुह्यत् ॥२४॥ यदुवीराः परशस्त्रौघैरर्द्यमाना अपि संग्रामं न तत्यजुः ॥२५॥ ततो द्युमान्नामा शाल्वप्रधानः प्रद्युम्नसमीपं गत्वा गदाप्रहारं कृत्वा व्यनदत् ॥२६॥ तदा दारुकात्मजः सारथिर्गदाविशीर्णवक्षसं प्रद्युम्नं रणाद्रथं निनाय ॥२७॥ ततः प्रद्युम्नो मुहूर्तेन सावधानः सन् सारथिं जगाद । हे सूत ! यद्रणान्मापसर्पणं कृतं तदसाधु ॥ २८ ॥

---

१ सर्पवद् दुःसहः । २ पीडयमानं पुरमनीकानि च यस्य सः । ३ परैः यदुभिरीरितैः प्रेरितैः ।

यत्सूतेन त्वया प्राप्तकिल्बिषान्मत्तो विना यदुकुलजो रणात्पलायितः कोऽपि न श्रूयते ॥२९॥ रामेकेशवौ पितरौ गत्वा ताभ्यां पृष्टः सन्नात्मनो योग्यं किं वक्ष्ये ॥३०॥ भ्रातृभार्या मां हसन्त्यः सत्यो मम क्लैब्यं कथयिष्यन्ति ॥३१॥ सारथिरुवाच । हे आयुष्मन् ! सूतो दुःखप्राप्तं रथिनं रथी च सूतं रक्षेदिति धर्मं ज्ञात्वा मयैतत्कृतम् ॥ ३२ ॥ त्वं शत्रुगदया हतो मूर्च्छितः अतो मया रणादपनीतः ॥३३॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायामुत्तरार्द्धे षट्सप्ततितमोऽध्यायः ॥७६॥ सप्तयुक्सप्ततितमे नानामायायाविचक्षणः । कृष्णेनागत्य शाल्वस्तु हतः सौभं

न यदूनां कुले जातः श्रूयते रणविच्युतः ॥ विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २९ ॥ किं नु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ ॥ युद्धात्सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम् ॥ ३० ॥ व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ॥ क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥ ३१ ॥ सारथिरुवाच ॥ धर्मं विजानताऽऽयुष्मन्कृतमेतन्मया विभो ॥ सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥ एतद्विदित्वा तु भवान्मयापोवाहितो रणात् ॥ उपसृष्टः[1] परेणेति मूर्च्छितो गदया हतः ॥ ३३ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे शाल्वयुद्धे षट्सप्ततितमोध्यायः ॥ ७६ ॥ श्रीशुक उवाच ॥ स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ॥ नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥ विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ॥ प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्वयम् ॥ २ ॥ चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ॥ द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥ गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम् ॥ पेतुः समुद्रे सौभेयाः सर्वे संच्छिन्नकन्धराः ॥ ४ ॥



च चूर्णितम् ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! ततः स प्रद्युम्नः सलिलमुपस्पृश्य धनुर्गृहीत्वा द्युमतः समीपं मां नयेति सारथिं जगाद॥१॥ ततः प्रद्युम्नः स्वसैन्यानि मर्दयन्तं द्युमन्तं प्रतिरुध्याष्टभिर्बाणैरविध्यत् ॥ २ ॥ तत्र चतुर्भिश्चतुरोऽश्वान् एकेन सूतं द्वाभ्यां धनुः ध्वजं च एकेन शिरो जघान ॥३॥ तदा गदसात्यकिसाम्बादयः शाल्वस्य सैन्यं जघ्नुः । तदा सौभस्थाः पुरुषाश्छिन्नशिरसः सन्तः समुद्रे पेतुः ॥४॥

---

१ उपसर्गं पीडां प्राप्तः ।

एवं यदूनां शाल्वानां सप्तविंशत्यहोरात्राणि युद्धं बभूव ॥ ५ ॥ अथेन्द्रप्रस्थं गतः कृष्णो राजसूये समाप्ते शिशुपाले निहते सति घोराणि दुश्चिह्नानि पश्यन् सन् कुरुवृद्धाननुज्ञाप्य द्वारकां ययौ ॥ ६ ॥ ७ ॥ तदा मार्गे एवमचिन्तयत् अहं रामसहित इहायातः । अतः शिशुपाल-पक्षीया राजानो नूनं मे पुरीं क्लेशयेयुः ॥८॥ एवं चिन्तयन् द्वारकामेत्य स्वानां तत् कदनं निरीक्ष्य सौभं शाल्वं च वीक्ष्य पुररक्षणं प्रति रामं नियुज्य कृष्णो दारुकं प्राह ॥९॥ हे सूत ! मम रथं शाल्वस्य समीपं शीघ्रं प्रापय विचारो न कर्तव्यः ॥१०॥ इत्युक्तो दारुको रथमा-

एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ॥ युद्धं त्रिणवरात्रं तदभूत् तुमुलमुल्बणम् ॥ ५ ॥ इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥ ६ ॥ कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् ॥ निमित्तान्यतिघोराणि पश्यन् द्वारवतीं ययौ ॥७॥ आह चाहमिहायात आर्यमिश्राभिसंगतः ॥ राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥८॥ वीक्ष्य तत् कदनं स्वानां निरूप्य पुररक्षणम् ॥ सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥ ९ ॥ रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै ॥ संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥१०॥ इत्युक्तश्चो-दयामास रथमास्थाय दारुकः ॥ विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ ११ ॥ शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ॥ प्राहरत् कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १२ ॥ तामापतन्तीं नभसि महोल्कामिव रंहसा ॥ भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥ १३ ॥ तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ॥ अवि-ध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥ १४ ॥ शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ॥ बिभेद न्यपतद् हस्ताच्छार्ङ्गमासीत् तदद्भुतम् ॥ १५ ॥

स्थाय प्रेरयामास । तदा स्वपरसैनिकाः प्रविशन्तं गरुडध्वजं रथं ददृशुः ॥११॥ ततः शाल्वो युद्धे कृष्णं दृष्ट्वा दारुकाय शक्तिं प्राहरत् ॥१२॥ कृष्णो नभसा पतन्तीं तां शक्तिं बाणैः शतधाऽच्छिनत् ॥१३॥ तथा शाल्वं षोडशभिर्बाणैर्विद्ध्वा शरजालैः सौभमविध्यत् ॥ १४ ॥ ततः शाल्वः कृष्णस्य दक्षिणं बाहुं बिभेद । तदा हस्तात् शार्ङ्गं धनुः पपात ॥ १५ ॥

१ घोरम् । २ गदजम् ।

तदा महान् हाहाकार आसीत् । शाल्वः उच्चैर्नादं कृत्वा जनार्दनं जगाद॥१६॥ हे मूढ ! त्वया मे सख्युः शिशुपालस्य भार्या पश्यतां लोकाना पुरो हृता स च सभामध्ये हतः ॥१७॥ तं त्वामद्य बाणैर्मृत्युं नयामि । यदि ममाग्रतः स्थास्यसि ॥१८॥ श्रीभगवानुवाच ॥ हे मन्द ! त्वं वृथा भाषसे । समीपे मृत्युं न पश्यसि । किं च शूराः पराक्रमं दर्शयन्ति न बहु भाषन्ते ॥१९॥ इत्युक्त्वा कृष्णो गदया शाल्वं जत्रौ ताडयाम । तदा स रक्तं वमन् चकम्पे॥२०॥ततो गदयां निवृत्तायां शाल्वोऽन्तरधीयत। ततो मुहूर्तेन पुरुषरूपं धृत्वाऽऽगत्याच्युतं नत्वा देवक्या प्रेषितोऽस्मीति

हाहाकारो महानासीद् भूतानां तत्र पश्यताम् ॥ विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥ यत् त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ॥ प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥ १७ ॥ तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् ॥ नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥ श्रीभगवानुवाच ॥ वृथा त्वं कत्थसे मंद न पश्यस्यन्तिकेऽन्तकम् ॥ पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥१९॥ इत्युक्त्वा भगवान् शाल्वं गदया भीमवेगया ॥ तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ॥ २० ॥ गदायां संनिवृत्तायां शाल्वस्त्वन्तरधीयत ॥ ततो मुहूर्त आगत्य पुरुषः शिरसाऽच्युतम् ॥ देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥२१॥ कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल ॥ बद्ध्वाऽपनीतः शाल्वेन सौनिकेन यथा पशुः ॥ २२ ॥ निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ॥ विमनस्को घृणी स्नेहाद् बभाषे प्राकृतो यथा ॥ २३ ॥ कथं राममसंभ्रान्तं जित्वाऽजेयं सुरासुरैः ॥ शाल्वेनाल्पीयसा नीतः पिता मे बलवान् विधिः ॥ २४ ॥ इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः ॥ वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥२५॥ एष ते जनिता तातो यदर्थमिह जीवसि ॥ वधिष्ये वीक्षतस्तेऽमुमीशश्चेत् पाहि बालिश ॥ २६ ॥

रुदन् वच आह ॥२१॥ हे कृष्ण ! हे पितृवत्सल ! शाल्वेन तव पिता बद्ध्वा नीतः॥२२॥कृष्ण एवं विपरीतं निशम्य दयायुक्तः सन् प्राकृतवद् बभाषे ॥२३॥ अरे ! सुरासुरैरजेयं रामं जित्वा शाल्वेन मे पिता कथं नीतः ।तस्मात् प्रारब्धं बलवत्॥२४॥इति गोविन्दे वदति सति शाल्वो मायारूपं वसुदेवमानीय कृष्णं जगाद ॥२५॥ हे कृष्ण ! एष ते पिता ! अधुना तव पश्यतः सतः एनं वधिष्ये । त्वं समर्थश्चेत् पाहि॥२६॥

स एवं निर्भर्त्स्य खड्गेन वसुदेवशिरश्छित्त्वा गृहीत्वा खस्थं विमानमाविशत्॥२७॥ततः कृष्ण स्वतः सिद्धज्ञानवानपि स्वजनस्नेहतो मुहूर्तं मानुष-स्वभावे निमग्न आस्ते। ततस्तत्सर्वं मायेति ज्ञातवान्॥२८॥तदा तत्र दूतं पितुर्देहं च नापश्यत्। ततः सौभस्थं रिपुं वीक्ष्य तं हन्तुमुद्योगं चक्रे॥२९॥ हे राजर्षे ! केचन केचन ऋषयः पूर्वापरानुसन्धानरहिताः सन्तः कृष्णे शोकमोहभयादयः संभवन्तीति वदन्ति॥३०॥३१॥ किंच। यत्पा-

एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः॥ उत्कृत्य शिर आदाय खस्थं सौभं समाविशत्॥ २७॥ ततो मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषङ्गतः॥ महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम्॥ २८॥ न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः॥ स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः॥ २९॥ एवं वदन्ति राजर्षे ऋषयः केचनान्विताः॥ यत स्ववाचो विरुध्येत नूनं तन्नः स्मरन्त्युत॥ ३०॥ क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः॥ क्व चाखण्डितविज्ञानज्ञानैश्वर्यस्त्वखंडितः॥ ३१॥ यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम्॥ लभन्त आत्मीयमनन्तमैश्वरं कुतो न मोहः परमस्य सद्गतेः॥ ३२॥ तं शस्त्रपूगैः प्रहरन्तमोजसा शाल्वं शरैः शौरिरमोघविक्रमः॥ विद्ध्वाऽच्छिनद् वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह॥ ३३॥ तत कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा॥ विसृज्य तद् भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद् द्रुतम्॥ ३४॥ आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाऽथ रथाङ्गमद्भुतम्॥ वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद् बभौ सार्क इवोदयाचलः॥३५॥ जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः॥वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम्॥३६॥

दसेवयाऽविद्यां नाशयन्ति मोक्षं च लभन्ते तस्य शोकादिकं कुतः। अत एतद् वचनं न सत्यम्॥३२॥ततः कृष्णस्तं शाल्वं शरैर्विद्ध्वा वर्म धनुः शिरोमणिं च छित्त्वा गदया सौभं च बभञ्ज॥३३॥तदा तत् सौभं तोये पपात।ततः शाल्वः सौभं त्यक्त्वा गदां गृहीत्वा भूतले स्थितः सन् कृष्णं द्रुतमगात्॥ ३४॥ तदा कृष्णस्तस्य सगदं बाहुं बाणेन छित्त्वा तद्वधाय प्रलयार्कसन्निभं चक्रं गृहीत्वा॥ ३५॥ तेनैव चक्रेण कुण्डलकिरीट-

१ मयनिर्मितान्। २ स्वप्नप्रपञ्चम्। ३ 'आत्मनाम्' इ० पा०। ४ सतां गतेः। ५ प्रलयकालिकसूर्यसदृशम्।

युतं शाल्वस्य शिरश्चिच्छेद । तदा नृणां हाहेति शब्दो बभूव ॥३६॥ तस्मिन् शाल्वे निपतिते गदया सौभे च नाशिते दिवि दुन्दुभयो नेदुः ।
ततो हे राजन् ! मित्राणां प्रियं कुर्वन् दन्तवक्रो रुषाऽभ्यगात् ॥३७॥ इति श्रीभागवते द० चू० उ० सप्तसप्ततितमोऽध्यायः ॥७७॥ ततोऽष्ट-
सप्ततितमे दन्तवक्रविदूरथौ ॥ हत्वा हरिः पुरे रेमे रामः सूतं ततोऽवधीत् ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! दन्तवक्रो मृतानां चैद्यपौण्ड्रकशा-
ल्वानां पारोक्ष्यसौहृदं कुर्वन् ॥१॥ एकः पदातिर्गदां गृहीत्वा महीं कम्पयन् व्यदृश्यत ॥२॥ तदा कृष्णस्तं विलोक्य रथादुत्तीर्य गदामादाय तं

तस्मिन् निपतिते पापे सौभे च गदया हते ॥ नेदुर्दुन्दुभयो राजन् दिवि देवगणेरिताः ॥ सखीनामपचितिं कुर्वन् दन्त-
वक्रो रुषाऽभ्यगात ॥ ३७ ॥ इति श्रीभा० म० द० उत्त० सौभशाल्ववधो नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
श्रीशुक उवाच ॥ शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतिः ॥ परलोकगतानां च कुर्वन् पारोक्ष्यसौहृदम् ॥ १ ॥
एकः पदातिः संक्रुद्धो गदापाणिः प्रकम्पयन् ॥ पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥ २ ॥ तं तथाऽऽयान्त-
मालोक्य गदामादाय सत्वरः ॥ अवप्लुत्य रथात् कृष्णः सिन्धुं वेलेव प्रत्यधात् ॥ ३ ॥ गदामुद्यम्य कारूषो मुकुन्दं
प्राह दुर्मदः ॥ दिष्ट्यादिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥ ४ ॥ त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि ॥
अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ॥ ५ ॥ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ॥ बन्धुरूपमरिं हत्वा
व्याधिं देहचरं यथा ॥ ६ ॥ एवं रूक्षैस्तुदन् वाक्यैः कृष्णं तोत्रैरिव द्विपम् ॥ गदयाऽताडयन् मूर्ध्नि सिंहवद् व्यन-
दच्च सः ॥ ७ ॥ गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ॥ कृष्णोऽपि तमहन् गुर्व्या कौमोदक्या स्तनान्तरे ॥८॥

रुरोध ॥३॥ ततः स करूषदेशाधिपतिर्दन्तवक्रो गदामुद्यम्य कृष्णं प्राह । हे कृष्ण ! त्वमद्य मम दृष्टिपथं गतः एतद् दिष्टियादिष्ट्या ॥४॥
हे कृष्ण ! त्वं नो मातुलेयो मां जिघांससि । अतस्त्वां गदया हनिष्ये ॥५॥ तर्हि मित्राणामानृण्यमुपैमि ॥६॥ एवं रूक्षवाक्यैः कृष्णं व्यथयन्
सन् गदया मूर्ध्नि ताडयामास ॥ ७ ॥ तदा कृष्णो गदया हतोऽपि न चचाल । स्वकौमोदक्या गदया तं वक्षःस्थले जघान ॥ ८ ॥

१ 'महीम्' इ० पा० । २ अङ्कशादिभिः ।

तदा दन्तवक्रो मुखाद्रुधिरं वमन् केशबाह्वङ्घ्रीन् प्रसार्य गतप्राणो भूमौ पपात ॥ ९ ॥ तदा सर्वेषां पश्यतां तदुत्थं ज्योतिः कृष्णं प्राविशत् ॥ १० ॥ ततस्तद्भ्राता विदूरथः शोकव्याप्तः सन्नसिचर्मभ्यां तज्जिघांसयाऽऽगच्छत् ॥ ११ ॥ तदा कृष्णश्चक्रेण तस्य सकिरीटकुण्डलं शिर आजहार ॥१२॥ एवं सौभं शाल्वं दन्तवक्रं विदूरथं च हत्वा सुरमानवमुनिसिद्धगन्धर्वादिभिरुपगीयमानविजयः पुष्पैरभिवर्षितो यदुभिर्वृतः सन् ध्वजतोरणादिभिरलङ्कृतां पुरीं विवेश ॥१३॥१४॥१५॥ एवं योगेश्वरः कृष्णो बलिष्ठानपि जयति। तथापि पशुदृष्टीनां क्वचिन्नि-

गदानिर्भिन्नहृदय उद्वमन् रुधिरं मुखात् ॥ प्रसार्य केशबाह्वङ्घ्रीन्धरण्यां न्यपतद्व्यसुः ॥ ९ ॥ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ॥ पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥ १० ॥ विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ॥ आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥११॥ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ॥ शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥ १२ ॥ एवं सौभं च शाल्वं च दन्तवक्रं सहानुजम् ॥ हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥१३॥ मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः ॥ अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥१४॥ उपगीयमानविजयः कुसुमैरभिवर्षितः ॥ वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतां पुरीम् ॥ १५ ॥ एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः ॥ ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥१६॥ श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः ॥ तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १७ ॥ स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ॥ सरस्वतीं प्रति स्रोतं ययौ ब्राह्मणसंवृतः ॥ १८ ॥ पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ॥ विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥ १९ ॥ यमुनामनु यान्येव गंगामनु च भारत ॥ जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥ २० ॥

र्जित इति प्रतीयते ॥ १६ ॥ तत एकदा रामः कुरूणां पाण्डवैः सह युद्धोद्यमं श्रुत्वा तीर्थयात्रामिषेण ययौ ॥ १७ ॥ ततः स प्रभासे स्नात्वा देवर्षिपितृमानवान् संतर्प्य संमुखं सरस्वतीं ययौ ॥१८॥ ततः पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनतीर्थं विशालं ब्रह्मतीर्थं चक्रतीर्थम् ॥ १९ ॥ यमुनां गङ्गातीर्थानि गत्वा तत्र ऋषयः सत्रमासते तन्नैमिषं जगाम ॥ २० ॥

तदा मुनयः स राम इति ज्ञात्वोत्थाय प्रणम्यार्चयन् ॥२१॥ ततः पूजितो राम आसीनं रोमहर्षणं ददर्श ॥२२॥ रामः प्रत्युत्थानरहितमकृतप्रणाममुच्चासने स्थितं सूतं वीक्ष्य चुकोप ॥२३॥ अहो ! असौ ब्राह्मण्यां क्षत्रियाज्जातः सूतो विप्रेभ्य उच्चासन आस्ते अस्मानविगणय्य च । अतो वधमर्हति ॥ २४ ॥ अयमृषेर्व्यासस्य शिष्यो भूत्वाऽनेन सेतिहासपुराणानि धर्मशास्त्राण्यधीतानि ॥ २५ ॥ तथापि वृथापण्डितमानिनोऽनम्रस्यास्य गुणाय न भवन्ति ॥२६॥ इह पातकिनो धर्मध्वजिनो वध्या एतदर्थं मयाऽवतारो धृतः ॥ २७ ॥ इत्युक्त्वाऽसद्वधाद्

तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ॥ अभिवन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ २१ ॥ सोऽर्चितः सपरीवारः कृतासनपरिग्रहः ॥ रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥ २२ ॥ अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम् ॥ अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ २३ ॥ कस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः ॥ धर्मपालस्तथैवास्मान्वधमर्हति दुर्मतिः ॥ २४ ॥ ऋषेर्भगवतो भूत्वा शिष्योधीत्य बहूनि च ॥ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ २५ ॥ अदान्तस्याविनीतस्य वृथापण्डितमानिनः ॥ न गुणाय भवन्ति स्म नटस्येवाजितात्मनः[1] ॥ २६ ॥ एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ॥ वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥२७॥ एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि ॥ भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥ २८ ॥ हाहेति वादिनः सर्वे मुनयः खिन्नमानसाः ॥ ऊचुः संकर्षणं देवमधर्मस्ते कृतः प्रभो ॥ २९ ॥ अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन ॥ आयुश्चात्माऽक्लमं तावद्यावत्सत्रं समाप्यते ॥ अजानतैवाचरितस्त्वया ब्रह्मवधो यथा ॥ ३० ॥



निवृत्तोऽपि करस्थेन कुशाग्रेणाहनत् । तथा च "आषाढशुक्लद्वादश्यां पारणाहनि पार्वति ॥ पूर्वार्धयामवेलायां भावित्वात्कृष्णमायया ॥ मुग्धो दर्भकरो रामः प्राहरल्लोमहर्षणम् ॥" इति पाद्मोत्तरे ॥ २८ ॥ तदा खिन्नमानसा मुनयो हाहेति वादिनः सन्तः संकर्षणमूचुः हे प्रभो ! त्वयाऽधर्मः कृतः ॥ २९ ॥ यावत्सत्रं समाप्यते तावदस्यास्माभिर्ब्रह्मासनमायुश्च दत्तम् । अजानता त्वया ब्रह्मवधः कृतः ॥ ३० ॥

१ आत्मनः शरीरस्य नास्ति क्लमो यस्मिंस्तत् ।

यदि हि शासको वेदो न तथापि हे लोकपावन ! त्वं ब्रह्मवधप्रायश्चितं यदि करिष्यसि तर्हि लोकसंग्रहः स्यात् अन्यथा न ॥३१॥ श्रीभगवानुवाच ॥ हे ऋषयः ! अहं लोकानुग्रहकाम्यया वधप्रायश्चितं करिष्ये । अतो यद् मुख्यं तत् कथ्यताम् ॥३२॥ किं च । एतस्य दीर्घमायुर्बलं च भवद्भिर्यदपेक्षितं तद् ब्रूत । सर्वं साधये ॥ ३३ ॥ ऋषय ऊचुः ॥ हे राम ! तवास्त्रस्य मृत्योरस्मद्वचसश्च सत्यत्वं यथा स्यात् तथा कुरु ॥३४॥ श्रीभगवानुवाच ॥ हे मुनयः ! आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् । तस्मादस्योग्रश्रवाः पुत्रं आयुरिन्द्रियबलवान् पुराण-

योगेश्वरस्य भवतो नाम्ना योऽपि नियामकः ॥ यद्येतद् ब्रह्महत्यायाः पावनं लोकपावन ॥ चरिष्यति भवान् लोकसंग्रहोऽनन्यचोदितः ॥३१॥ श्रीभगवानुवाच ॥ करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ॥ नियमः प्रथमे कल्पे यावान् स तु विधीयताम् ॥३२॥ दीर्घमायुर्बतैतस्य सत्त्वमिन्द्रियमेव च ॥ आशासितं यत् तद् ब्रूत साधये योगमायया ॥ ३३ ॥ ऋषय ऊचुः ॥ अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ॥ यथा भवेद्वचः सत्यं तथा राम विधीयताम् ॥ ३४ ॥ श्रीभगवानुवाच ॥ आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ॥ तस्मादस्य भवेद्वक्ता आयुरिन्द्रिय सत्त्ववान् ॥ ३५ ॥ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ॥ अजानतस्त्वपचितिं यथा मे चिन्त्यतां बुधाः ॥ ३६ ॥ ऋषय ऊचुः ॥ इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ॥ स दूषयति नः सत्रमेत्य पर्वणिपर्वणि ॥ ३७ ॥ तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ॥ पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥ ३८ ॥ ततश्च भारतं वर्षं परीत्य सुसमाहितः ॥ चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यसे ॥ ३९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे बलदेवचरित्रे बल्वलवधोपक्रमो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

वक्ता भवेत् ॥३५॥ हे मुनिश्रेष्ठाः ! अन्यो वः कः कामोऽस्ति तं ब्रूत । अथाजानतो मम पापस्य निष्कृतिं चिन्तयत ॥३६॥ ऋषय ऊचुः ॥ हे भगवन् ! इल्वल सुतो बल्वलो नाम दैत्यः पर्वणिपर्वणि नः सत्रं दूषयति ॥३७॥ पूयशोणितविण्मूत्रसुरामांसादिभिर्वृष्टिं करोति । तं पापिष्ठं जहि तन्नः शुश्रूषणम् ॥३८॥ ततस्त्वं भारतवर्षं प्रदक्षिणीकृत्य द्वादशमासान् तीर्थस्नायी सन् चत्वारि कृच्छ्राणि चरित्वा विशुध्यसे ॥३९॥ इति श्रीभागवते द० चू० उ० अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

ऊनाशीतितमे रामो बल्वलं द्विजतुष्टये ॥ निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् ॥१॥ श्रीशुक उवाच ॥ हे राजन् ! ततः पर्वणि प्राप्ते सति पांसुवर्षणः पूयगन्धः प्रचण्डो वायुरभूत् ॥१॥ ततो यज्ञशालायां मांसमेदोमयं वर्षमभूत् । ततः शूलधृक् बल्वलो ददृशे ॥ २ ॥ बृहत्कायं कृष्णवर्णमुदग्रदंष्ट्रं तं दैत्यं दृष्ट्वा ॥ ३ ॥ रामो मुसलं हलं च सस्मार । तदा ते शीघ्रमुपतस्थतुः ॥ ४ ॥ ततो गगने चरन्तं हलाग्रेणाकृष्य मुसलेन मूर्धनि जघान ॥५॥ तदा बल्वलो रुधिरं वमन्नार्तस्वरं मुञ्चन् भुवि पपात ॥ ६ ॥ ततो मुनयो रामं संस्तुत्याशिषः प्रयुज्याऽभ्यषिञ्च-

श्रीशुक उवाच ॥ ततः पर्वण्युपावृत्ते प्रचंडः पांसुवर्षणः ॥ भीमो वायुरभूद्राजन् पूयगन्धस्तु सर्वशः ॥१॥ ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् ॥ अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक् ॥ २ ॥ तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् ॥ तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥ सस्मारः मुसलं रामः परसैन्यविदारणम् ॥ हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥ ४ ॥ तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् ॥ मुसलेनाहनत् क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥५॥ सोऽपतद् भुवि निर्भिन्नललाटोऽसृक् समुत्सृजन् ॥ मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ॥६॥ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ॥ अभ्यषिञ्चन्महाभागा वृत्रघ्नं विबुधा यथा ॥ ७ ॥ वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम्॥रामाय वाससी दिव्ये दिव्यान्याभरणानि च॥८॥अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ॥ स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥ ९ ॥ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ॥ स्नात्वा संतर्प्य देवादीञ्जगाम पुलहाश्रमम् ॥ १० ॥ गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः ॥ गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसङ्गमे॥११॥

यन् ॥ ७ ॥ ततो रामाय वैजयन्तीं मालां दिव्यवस्त्राभरणानि च ददुः ॥ ८ ॥ अथ तैरनुज्ञातो रामः कौशिकीं गत्वा तत्र स्नात्वा सरोवरमगात् । यतः सरयूरास्रवत ॥९॥ ततः प्रयागं गत्वा तत्र स्नात्वा देवादीन् संतर्प्य पुलहाश्रमं जगाम ॥१०॥ पश्चात् गोमतीं गण्डकीं विपाशां शोणनदं च गत्वा तत्र स्नात्वा गयां पितॄनिष्ट्वा गङ्गासागरसंगमे ॥ ११ ॥

१ रुधिरेणेति शेषः ।

उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वा संपूज्य सप्तगोदावरीं वेणां पम्पां भीमरथीं गत्वा ॥१२॥ततः स्वामिकार्त्तिकं दृष्ट्वा श्रीशैलं ययौ । ततो द्रविडेषु वेङ्कटं दृष्ट्वा॥१३॥ ततः कामकोष्णीं काञ्चीपुरीं श्रीरङ्गम् ॥१४॥ ऋषभाद्रिं दक्षिणमथुरां रामेश्वरं जगाम ॥१५॥ तत्र ब्राह्मणेभ्योऽयुतधेनूर्ददौ ॥ ततः कृतमालां ताम्रपर्णीं मलयं कुलाचलं च दृष्ट्वा ॥ १६ ॥ तत्रासीनमगस्त्यं नमस्कृत्य तेनानुज्ञातः सन् दक्षिणसमुद्रं गत्वा तत्र कन्याख्यां दुर्गां ददर्श ॥१७॥ ततोऽनन्तपुरमागत्य पञ्चाप्सरसं सरो गत्वा तत्र स्नात्वा गवामयुतं ददौ ॥ १८ ॥ ततः केरलान् त्रिगर्तान् देशान् गत्वा

उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाऽभिवाद्य च ॥ सप्तगोदावरीं वेणां पम्पां भीमरथीं ततः ॥१२॥ स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ॥ द्रविडेषु महापुण्यं दृष्ट्वाऽद्रिं वेङ्कटं प्रभुः॥१३॥कामकोष्णीं पुरीं काञ्चीं कावेरीं च सरिद्वराम् ॥ श्रीरङ्गाख्यं महापुण्यं यत्र सन्निहितो हरिः ॥ १४ ॥ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ॥ सामुद्रं सेतुमगमन्महा-पातकनाशनम् ॥१५॥ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ॥ कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥१६॥ तत्रा-गस्त्यं समासीनं नमस्कृत्याभिवाद्यच॥योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ॥ दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः॥१७॥ततः फाल्गुनमासाद्य पञ्चाप्सरसमुत्तमम् ॥ विष्णुः सन्निहितो यत्र स्नात्वाऽस्पर्शद् गवां युतम्॥१८॥ ततोऽभिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान् ॥ गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ १९ ॥ आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः ॥ तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् ॥२०॥ प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ॥ मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥२१॥ श्रुत्वा द्विजैः कथ्यमानं कुरुपाण्डवसंयुगे ॥ सर्वराजन्यनिधनंभारं मेने हृतं भुवः ॥ २२ ॥ स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे ॥ वारयिष्यन् विनशनं जगाम यदुनन्दनः ॥ २३ ॥

गोकर्णाख्यं शिवक्षेत्रमागत्य॥१९॥ततो द्वैपायनीमार्यां दृष्ट्वा शूर्पारकं जगाम । ततस्तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्य दण्डकारण्यं प्रविश्य ॥ २० ॥ रेवामगमत् । यत्र माहिष्मती पुरी । ततो मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २१ ॥ तत्र द्विजैः कथ्यमानं कुरुपाण्डवयुद्धे सर्वक्षत्रियमृत्युं श्रुत्वा भूभारं हृतं मेने ॥ २२ ॥ ततो भीमदुर्योधनयोर्गदाभ्यां युध्यतोः सतोस्तौ प्रतिवारयिष्यन् कुरुक्षेत्रं जगाम ॥ २३ ॥

तं दृष्ट्वा युधिष्ठिरो नकुलसहदेवौ कृष्णार्जुनौ च वन्दनं कृत्वा किं वदिष्यतीति भयात्तूष्णीमभवन् ॥ २४ ॥ ततो राम उभौ भीमदुर्योधनौ गदापाणी मण्डलानि चरन्तौ दृष्ट्वा जगाद ॥२५॥ हे राजन् ! हे वृकोदर ! युवां तुल्यबलौ स्तः । यत एकं बलाधिकमपरं शिक्षयाऽधिकं मन्ये ॥ २६ ॥ तस्माद् युवयोर्मध्य एकतरस्य जयः पराजयो वा न दृश्यते । ततो विफलः संग्रामो विरमतु ॥ २७ ॥ एवमुक्तौ तौ रामवाक्यं न जगृहतुः ॥ २८ ॥ तदा रामस्तयोर्दैवमिति मत्वा द्वारवतीं ययौ । उग्रसेनादिभिः समुपागतः ॥ २९ ॥ पुनर्नैमिषं जगाम । तत्र ऋषयस्तं

युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥ २४ ॥ गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ॥ मण्डलानि विचित्राणि चरन्ताविदमब्रवीत्॥२५॥ युवां तुल्यबलौ वीरौ हे राजन् हे वृकोदर ॥ एकं प्राणाधिकं मन्ये उतैकं शिक्षयाऽधिकम् ॥२६॥ तस्मादेकतरस्येह युवयोः समवीर्ययोः ॥ न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥२७॥ न तद् वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ॥ अनुस्मरन्तावन्योऽन्यं दुरुक्तं दुष्कृतानि च ॥२८॥ दिष्टं तदनु मन्वानो रामो द्वारवतीं ययौ ॥ उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥ २९ ॥ तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन् मुदा ॥ क्रत्वङ्गं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥ ३० ॥ तेभ्यो विशुद्धविज्ञानं भगवान् व्यतरद्विभुः ॥ येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥३१॥ स्वपत्न्यावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः ॥ रेजे स्वज्योत्स्नयेवेन्दुः सुवासाः सुष्ठ्वलङ्कृतः॥३२॥ईदृग्विधान्यसङ्ख्यानि बलस्य बलशालिनः॥अनन्तस्याप्रमेयस्य मायामर्त्यस्य सन्ति हि ॥३३॥ योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः॥सायं प्रातरनन्तस्य विष्णोः स दयितो भवेत्॥३४॥
इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे बलदेवतीर्थयात्रानिरूपणं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

यज्ञमूर्तिं रामं यज्ञैरयाजयन् ॥ ३० ॥ ततो भगवान् रामस्तेभ्यो विशुद्धविज्ञानं ददौ ॥ ३१ ॥ ततः स्वपत्न्या सहावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः सन् स्वप्रभया च चन्द्र इव शुशुभे ॥३२॥ एवमनन्तस्य बलस्यासङ्ख्यानि कर्माणि सन्ति ॥३३॥ तानि यः सायं प्रातः स्मरेत स विष्णोः प्रियो भवेत् ॥३४॥ इति श्रीभागवते द० चू० उ० एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

अथाशीतितमे कृष्णः श्रीदामानं गृहागतम् । संपूज्यापृच्छदर्थैप्सुं गुरुवासकथां मुदा ॥१॥ राजोवाच । हे ब्रह्मन् ! मुकुन्दस्यान्यानि वीर्याणि श्रोतुमिच्छामः ॥ १ ॥ हे ऋषे ! उत्तमश्लोकस्य सत्कथाश्रवणात्सारवित् को विरमेत ॥२॥ किंच । या भगवद्गुणान् गृणीते सा वाक् । यौ तत्कर्मकरौ तौ हस्तौ । यत् श्रीहरिं स्मरेत्तन्मनः । यो भगवत्कथां शृणोति स कर्णः ॥ ३ ॥ यद्भगवन्तं नमेत्तच्छिरः । यत् श्रीहरिं पश्यति तच्चक्षुः । यानि विष्णोर्भक्तानां च पादोदकं भजन्ति तान्यङ्गानि ॥४॥ सूत उवाच ॥ एवं परीक्षिता पृष्टः कृष्णे निमग्नहृदयः शुकस्तमब्र-

राजोवाच ॥ भगवान् यानि चान्यानि मुकुन्दस्य महात्मनः ॥ वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामहे प्रभो ॥१॥ को नु श्रुत्वा सकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ॥ विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥ २ ॥ सा वाग्यया तस्य गुणान्गृणीते करौ च तत्कर्मकरौ मनश्च ॥ स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥३॥ शिरस्तु तस्योभयलिङ्गमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ॥ अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥ ४ ॥ सूत उवाच ॥ विष्णुरातेन संपृष्टो भगवान्बादरायणिः ॥ वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ ५ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ॥ विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥ ॥ ६ ॥ यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा ॥ ७ ॥ पतिव्रता पतिं प्राह म्लायता वदनेन सा ॥ दरिद्रा सीदमाना सा वेपमानाऽभिगम्य च ॥८॥ ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः ॥ ब्रह्मण्यश्च शरण्यश्च भगवान् सात्वतर्षभः ॥ ९ ॥ तमुपेहि महाभाग साधूनां च परायणम् ॥ दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ १० ॥

वीत् ॥ ५ ॥ श्रीशुक उवाच ॥ हे राजन् ! कश्चिद् द्विजो विषयेषु विरक्तः सन् श्रीकृष्णस्य सखाऽऽसीत् ॥६॥ स यदृच्छालाभसंतुष्टो गृहाश्रमी तस्य भार्या क्षुत्क्षामा ॥ ७ ॥ पतिव्रतैकदा भयेन कम्पमाना शुष्कवदना पतिमभिगम्य प्राह ॥ ८ ॥ हे ब्रह्मन् ! तव साक्षात् श्रीपतिर्ब्रह्मण्यो भगवान् सखाऽस्ति ॥ ९ ॥ तं त्वं गच्छ स दुःखिताय तुभ्यं धनं दास्यति ॥ १० ॥

१ उभयं स्थिरं जङ्गमं च तस्यैव लिङ्गमिति मत्वा ।

स कृष्णोऽधुना द्वारकायामास्ते । स पादकमलं स्मरतः पुंस आत्मानमपि दास्यति ॥ ११ ॥ किं पुनरर्थकामान् दास्यतीति वक्तव्यम् । एवं भार्यया बहुशः प्रार्थितो विप्रः ॥१२॥ श्रीकृष्णदर्शनमेव परो लाभ इति मनसा संचिन्त्य गमनाय मतिं दधे। हे कल्याणि ! गृहे किंचिदुपानमस्ति चेद्दीयताम् ॥१३॥ ततः सा स्त्री चतुरो मुष्टीन्पृथुकतण्डुलान्याचित्वा वस्त्रखण्डेन बद्ध्वा भर्त्रे प्रादात् ॥१४॥ स तान् गृहीत्वा मह्यं कृष्णदर्शनं कथं स्यादिति चिन्तयन् द्वारकां प्रययौ ॥ १५ ॥ ततः स त्रीणि सैन्यस्थानानि तथा तिस्रः प्रतोलीश्चातिक्रम्यान्धकवृष्णीनाम्

आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ॥ स्मरतः पादकमलमात्मानमपि यच्छति ॥ ११ ॥ किन्त्वर्थकामान्भजतो नात्यभीष्टाञ्जगद्गुरुः ॥ स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदुः ॥१२॥ अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥ इति संचिन्त्य मनसा गमनाय मतिं दधे ॥ अप्यस्त्युपायनं किञ्चिद् गृहे कल्याणि दीयताम् ॥ १३ ॥ याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतण्डुलान् ॥ चैलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ १४ ॥ स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ॥ कृष्णसंदर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥ १५ ॥ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च स द्विजः ॥ विप्रोऽगम्यान्धकवृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥ १६ ॥ गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ॥ विवेशैकतमं श्रीमद्ब्रह्मानन्दं गतो यथा ॥ १७ ॥ तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः ॥ सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १८ ॥ सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ॥ प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः॥१९॥अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ॥ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः॥२०॥

॥ १६ ॥ गृहेषु मध्ये हरेः षोडशसहस्रस्त्रीणां गृहास्तेषु मध्ये श्रीमदेकतमं गृहं विवेश ॥ १७ ॥ तदा श्रीकृष्णो दूरात्तं विप्रं विलोक्य स्त्रीपर्यङ्कात् शीघ्रमुत्थाय तत्रैत्य मुदाऽऽलिङ्गितवान् ॥ १८ ॥ ततः प्रियस्याङ्गसङ्गेन प्रीतः कृष्णो नेत्राभ्यामश्रूणि व्यमुञ्चत् ॥ १९ ॥ तं द्विजं पर्यङ्के उपवेश्य स्वयं तस्मा उपायनं दत्त्वा तस्य पादौ प्रक्षाल्य तज्जलम् ॥ २० ॥

१ परिपाकविरसत्वात् । २ अच्युतः अविच्छिन्नो धर्मो येषां तेषाम् । ३ पादोदकम् ।

लोकपावनः कृष्णः शिरसा जग्राह। ततश्चन्दनकुङ्कुमैस्तं व्यलिम्पत् ॥२१॥ धूपदीपादिभिर्मित्रं पूजयित्वा ताम्बूलं गां च दत्त्वा स्वागतमित्य-ब्रवीत् ॥ २२ ॥ तदा रुक्मिणी मलिनं कुचैलं शिराभिर्व्याप्तं द्विजं चामरव्यजनाभ्यां पर्यचरत् ॥ २३ ॥ ततः कृष्णेन प्रीत्या सत्कृतमवधूतं दृष्ट्वाऽन्तःपुरजनो विस्मितो जातः ॥२४॥ अहो अनेन भिक्षुणा किं पुण्यं कृतम् ॥२५॥ योऽसौ श्रीकृष्णेन पर्यङ्कस्थां श्रियं हित्वा संमानितः आलिङ्गितश्च ॥२६॥ ततस्तौ द्विजकृष्णौ परस्परं करौ गृहीत्वा गुरुकुले वसतोरात्मनोः पूर्वाः कथाः कथयाञ्चक्रतुः ॥२७॥ श्रीभगवानुवाच॥

अग्रहीच्छिरसा राजन् भगवान् लोकपावनः ॥ व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुंकुमैः ॥२१॥ धूपैः सुरभिभि-र्मित्रं प्रदीपावलिभिर्मुदा ॥ अर्चित्वाऽऽवेद्य ताम्बूलं गां च स्वागतमब्रवीत् ॥२२॥ कुचैलं मलिनं क्षामं द्विजं धम-निसंततम् ॥ देवी पर्यचरच्छैब्यां चामरव्यजनेन वै ॥२३॥अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ॥ विस्मितोऽभूद-तिप्रीत्या अवधूतं सभाजितम् ॥२४॥ किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ॥ श्रिया हीनेन लोकेऽस्मिन् गर्हितेना-धमेन च ॥२५॥ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन संभृतः ॥ पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥२६॥ कथयाञ्चक्रतुर्गाथाः पूर्वा गुरुकुले सतोः ॥ आत्मनोर्ललिता राजन् करौ गृह्य परस्परम् ॥ २७ ॥ श्रीभगवानुवाच ॥ अपि ब्रह्मन् गुरुकुलाद् भवता लब्धदक्षिणात् ॥ समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥ २८ ॥ प्रायो गृहेषु ते चित्तमकामविहतं तथा ॥ नैवातिप्रीयसे विद्वन् धनेषु विदितं हि मे ॥ २९ ॥ केचित् कुर्वन्ति कर्माणि कामैरहत-चेतसः ॥ त्यजन्तः प्रकृतीर्दैवीर्यथाऽहं लोकसंग्रहम् ॥ ३० ॥ क्वचिद् गुरुकुले वासं ब्रह्मन् स्मरसि नो यतः ॥ द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥ ३१ ॥

हे ब्रह्मन् ! गुरुकुलाद् निर्गतेन त्वया सदृशी भार्या परिणीता न वा ॥२८॥ किंच हे विद्वन् ! तव चित्तं गृहेषु मनोरथैर्लुब्धं न भवतीति मया विदितम् । त्वं द्रव्यवस्त्रादिषु नैव प्रीयसे । (ज्ञानिनस्तव तद् युक्तम् ) ॥२९॥ केचिद् विषयवासनास्त्यजन्तो लोकसंग्रहार्थं कर्माणि कुर्वन्ति यथाऽहम् ॥ ३० ॥ हे द्विज ! क्वचिदावयोर्गुरुकुले वासं स्मरसि यतो गुरोः सकाशादात्मतत्त्वं ज्ञात्वा संसारस्य पारं प्राप्नोति ॥ ३१ ॥

१ "साक्षात्" इति तु श्रीधरसंमतः पाठः ।

सर्वेषामाश्रमिणामपि ज्ञानदो यः स
इह संसारे त्रयो गुरवः। यत्र जन्ममात्रं स पिता प्रथमो गुरुः। तत उपनीय वेदाध्यापको द्वितीयो गुरुः। सर्वेषामाश्रमिणामपि ज्ञानदो यः स
तु साक्षादहमेव तृतीयो गुरुः ॥३२॥ अतो(ज्ञानप्रदं) गुरुरूपं मां श्रित्वा भवार्णवं तरन्ति ॥३३॥ हे ब्रह्मन्! अहं गुरुशुश्रूषया यथा तुष्येयं
तथा गृहस्थादिधर्मैर्न ॥३४॥ हे ब्रह्मन्! गुरुकुले वसतामस्माकं वृत्तं स्मर्यते किमु। एकदा गुरुदारैः काष्ठानयनार्थं वयं नोदिताः ॥३५॥ तदा
महारण्ये प्रविष्टानां सतामकाले प्रचण्डो वायुर्वर्षं च जातम् ॥३६॥ तावत् सूर्योऽप्यस्तं गतः। तदा तमसा दिशो व्याप्ताः। तदोच्चनीचस्थानं

स वै सत्कर्मणां साक्षाद् द्विजातेरिह संभवः ॥ आद्योऽङ्ग यत्राश्रमिणां यथाऽहं ज्ञानदो गुरुः ॥३२॥ नन्वर्थकोविदा
ब्रह्मन् वर्णाश्रमवतामिह ॥ ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥ ३३ ॥ नाहमिज्याप्रजातिभ्यां तपसोपश-
मेन च ॥ तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ ३४ ॥ अपि नः स्मर्यते ब्रह्मन् वृत्तं निवसतां गुरौ ॥ गुरुदारै-
श्चोदितानामिन्धनानयने क्वचित् ॥ ३५ ॥ प्रविष्टानां महारण्यमपर्तौ सुमहद् द्विज ॥ वातवर्षमभूत तीव्रं निष्ठुराः
स्तनयित्नवः ॥ ३६ ॥ सूर्यश्चास्तं गतस्तावत् तमसा चावृता दिशः ॥ निम्नं कूलं जलमयं न प्राज्ञायत किञ्चन ॥
॥ ३७ ॥ वयं भृशं तत्र महानिलाम्बुभिर्निहन्यमाना मुहुरम्बुसंप्लवे ॥ दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः
परिबभ्रिमातुराः ॥ ३८ ॥ एतद् विदित्वा उदिते रवौ सान्दीपनिर्गुरुः ॥ अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदा-
तुरान् ॥ ३९ ॥ अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ॥ आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ४० ॥
एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ॥ यद् वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ४१ ॥

नादृश्यत् ॥३७॥ तत्र वयं महावायुजलैः पीडिता दिशोऽजानन्तो गृहीतान्योऽन्यहस्ता धृतकाष्ठभाराः सन्तोऽभ्राम्याम ॥३८॥ एतद्विदित्वा
सूर्य उदिते सति सांदीपनिर्गुरुः शिष्यानन्विष्यमाण आतुरान् नो ददर्श ॥३९॥ हे पुत्रकाः! अहो अस्मदर्थं यूयं भृशं दुःखिताः। प्राणिनां
देह इष्टः। तमनादृत्य मत्परा जाताः ॥४०॥ सच्छिष्यैर्गुरोः प्रत्युपकार एष एव कर्तव्यः गुरौ देहार्पणमिति यत् ॥ ४१ ॥

१ सत्कर्मणां वध संभवः—उपनीय वेदाध्यापक इत्यर्थः। २ सुखेनेव। ३ प्रजातिः ब्रह्मचारिधर्मः। ४ अत्र सन्ध्यभाव आर्षः।

हे द्विजश्रेष्ठाः ! अहं तुष्टोऽस्मि युष्माकं मनोरथाः सत्याः सन्तु किं च । छन्दांसि युवयोरगतसाराणि भवन्तु ॥ ४२ ॥ एवमनेकानि वृत्तानि ( त्वया स्मर्यते किम्) किं च। गुरुप्रसादेनैव पुमान् पूर्णो भवति ॥४३॥ ब्राह्मण उवाच॥ हे देवदेव! अस्माभिः किमसम्पन्नम् ! यतो येषां नस्त्वया सह गुरौ वासो जातः ॥४४॥ किंच। तस्य तव वेदाख्यं वपुस्तस्य गुरौ वास आश्चर्यम् ॥४५॥ इति श्रीभा० द० चू० उ० अशीतितमोऽध्यायः ॥ ८० ॥ एकाशीतितमे सख्युर्जग्ध्वा पृथुकतण्डुलान् ॥ श्रियं निर्मितवानिन्द्रदुर्लभां तु तदाश्रमे ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! स

तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः ॥ छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥४२॥ इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु॥गुरोरनुग्रहेणैव पुमान् पूर्णः प्रशान्तये ॥४३॥ ब्राह्मण उवाच ॥ किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ॥ भवता सत्यकामेन येषां वासो गुरावभूत् ॥४४॥ यस्य च्छन्दोमयं ब्रह्म देह आवपनं विभो ॥ श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥४५॥ इति श्रीभा० म० द० उ० श्रीसुदामाचरिते अशीतितमोऽध्यायः ॥८०॥ श्रीशुक उवाच ॥ स इत्थं द्विजमुख्येन सह संकथयन् हरिः॥सर्वभूतमयोऽभिज्ञः स्मयमान उवाच तम्॥१॥ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम्॥प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः॥२॥श्रीभगवानुवाच॥किमुपायनमानीतं ब्रह्मन्मे भवता गृहात् ॥ अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥३॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति॥तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥४॥ इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ॥ पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥५॥ सर्वभूतात्मदृक् साक्षात् तस्यागमनकारणम् ॥ विज्ञायाचिन्तयन्नायं श्रीकामो माऽभजत्पुरा ॥६॥

कृष्णो द्विजमुख्येन सहेत्थं सुखगोष्ठीः कुर्वन्नाश्चर्ययुक्तः सन् तमुवाच ॥ १ ॥ ब्रह्मण्यः कृष्णः केलिं कुर्वन् प्रेम्णा ॥२॥ श्रीभगवानुवाच ॥ हे ब्रह्मन् ! त्वया गृहाद् मह्यमुपायनं किमानीतम् । यतो भक्तैः प्रेम्णा स्वल्पमप्यानीतं मे भूर्येव भवेत् । अभक्तेनानीतं भूर्यपि मम तोषाय न भवति ॥३॥ यो भक्त्या मम पत्रं पुष्पं फलं तोयमर्पयति तदहमश्नामि ॥४॥ हे राजन् ! इत्युक्तोऽपि द्विजो लज्जयाऽवाङ्मुखः सन् तस्मै पृथुकग्रन्थिं न ददौ॥५॥ ततः सर्वभूतानां मनः साक्षी भगवान् तस्यागमनकारणं विज्ञायाचिन्तयत्। अयं पुरा श्रीकामनया मां नाभजत् ॥६॥

१ 'भूतमनोऽभिज्ञः' इ० पा० ।

इदानीं तु पत्न्याः प्रियं कर्तुमिच्छया मां प्राप्तः। अतो देवदुर्लभाः संपदोऽस्मै दास्यामि ॥७॥ इत्थं विचिन्त्य भगवान् द्विजस्य वस्त्रखण्डे बद्धान् पृथुकतण्डुलानिदं किमिति स्वयं जहार ॥८॥ हे सखे! त्वयेदं ममातिप्रियमानीतम्। एते पृथुकतण्डुला विश्वात्मानं तर्पयन्ति ॥९॥ इति वदन् कृष्ण एकां मुष्टिं जग्ध्वा द्वितीयां जग्धुमाददे। तावल्लक्ष्मीर्हस्तं जगृहे ॥१०॥ हे विश्वात्मन्! तव तोषस्य कारणं यथा भवेत् तथा सर्वसंपत्समृद्धयेऽलम् ॥११॥ ततः स ब्राह्मणस्तां रात्रिमच्युतमन्दिरे उषित्वा तत्र भुक्त्वा पीत्वाऽऽत्मानं स्वर्गगतं मेने ॥१२॥ ततः सूर्य उदिते सति

पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया॥प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः ॥७॥ इत्थं विचिन्त्यवसनाच्चीरबद्धान्द्विजन्मनः॥ स्वयं जहार किमिदमितिपृथुकतण्डुलान् ॥८॥ नन्वेतदुपनीतं मे परमप्रीणनं सखे॥ तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः ॥९॥ इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे॥तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥ १० ॥ एतावताऽलं विश्वात्मन् सर्वसंपत्समृद्धये॥ अस्मिँल्लोके तथाऽमुष्मिन् पुंसस्त्वत्तोषकारणम् ॥ ११ ॥ ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतमन्दिरे॥भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा ॥१२॥ श्वोभूते विश्वभावेन[1] स्वसुखेनाभिवन्दितः॥ जगाम स्वालयं तात पथ्यनुव्रज्य नन्दितः ॥१३॥ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम्॥ स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः॥ १४ ॥ अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया॥ यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥ १५ ॥ क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः॥ ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥१६॥निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा॥ महिष्या वीजितः श्रान्तो बालव्यजनहस्तया ॥१७॥

श्रीकृष्णेनाभिनन्दितः स स्वालयं जगाम ॥१३॥ स कृष्णाद्धनमलब्ध्वाऽपि स्वयं न याचितवान् किं तु श्रीकृष्णदर्शननिर्वृतः सन् स्वगृहं जगाम ॥ १४ ॥ निर्वृतिमेवाह। अहो! श्रीकृष्णस्य ब्रह्मण्यताऽद्य मया दृष्टा। यतो लक्ष्मीमुरसि बिभ्रता भगवता दरिद्रतमोऽहमाश्लिष्टः ॥ १५ ॥ अहो! अहं पापीयान् दरिद्रः क्व। श्रीनिवासः क्व। तथापि तेन बाहुभ्यामालिङ्गितः ॥ १६ ॥ किंच। बन्धुरिव स्वपर्यङ्केऽहं निवासितः। अपि च बालव्यजनेन रुक्मिण्या वीजितः ॥ १७ ॥

[1] विश्वं भावयता।

तथा कृष्णेन पादसंवाहनादिशुश्रूषया देववत्पूजितः ॥१८॥ (ततः स्वस्य द्रव्यादाने कारणं कल्पयति)स्वर्गापवर्गयोः सर्वासां सिद्धीनामपि तच्चरणार्चनं मूलम् ॥१९॥ अधनो धनं प्राप्य मां न स्मरेत् इति हेतोर्मे धनं भूरि न ददौ ॥ २० ॥ इति मार्गे संचिन्तयन्द्विजो निजगृहान्तिकं प्राप्तः। कीदृशं गृहम्। सूर्याऽग्नीन्दुसदृशैर्विमानैर्वेष्टितम् ॥२१॥ विचित्रोपवनैरुद्यानैश्च वेष्टितम्। यत्र पक्षिवृन्दानि नादं कुर्वन्ति। प्रोत्फुल्लकमलादिपुष्पाणि च शोभन्ते ॥२२॥ तथा स्वलङ्कृतैः स्त्रीपुरुषैर्व्याप्तम्। एतादृशं गृहं दृष्ट्वा किमिदं कस्य वा स्थानं कथं तदेवंरूपमभूत् ॥२३॥

शुश्रूषया परमया पादसंवाहनादिभिः ॥ पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १८ ॥ स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ॥ सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १९ ॥ अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ॥ इति कारुणिको नूनं धनं मे भूरि नाददात् ॥२०॥ इति तच्चिन्तयन्नन्तः प्राप्तो निजगृहान्तिकम् ॥ सूर्यानलेन्दुसंकाशैर्विमानैः सर्वतोवृतम् ॥२१॥ विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ॥ प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः ॥ २२ ॥ जुष्टं स्वलंकृतैः पुंभिः स्त्रीभिश्च हरिणाक्षिभिः ॥ किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ २३ ॥ एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः ॥ प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा ॥ २४ ॥ पतिमागतमाकर्ण्य पत्न्युद्धर्षाऽतिसंभ्रमा ॥ निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥ २५ ॥ पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाश्रुलोचना ॥ मिलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥ पत्नीं वीक्ष्य विस्फुरन्तीं देवीं वैमानिकीमिव ॥ दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः ॥ २७ ॥ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् ॥ मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ २८ ॥

इति तर्कयन्तं तं नरा नार्यश्चोपायनानि गृहीत्वा गीतवाद्येनादृतवन्तः ॥२४॥ तदा पतिमागतं श्रुत्वा तत्पत्नी श्रीरिव तूर्णं गृहाद् निश्चक्राम ॥२५॥ ततः पतिव्रता प्रेमोत्कण्ठाश्रुलोचना सती पतिं मनसा परिषस्वजे ॥२६॥ तदा दासीनां मध्ये देवपत्नीमिव शोभमानां पत्नीं वीक्ष्य ॥ २७ ॥ प्रीतः सन् तया सह निजमन्दिरं विवेश। तत् कीदृशम्। मणिस्तम्भशतोपेतम् ॥ २८ ॥

यत्र पयः फेननिभाः शय्याः रुक्मपरिच्छदा गजदन्तमयाः पर्यङ्काः । स्वर्णदण्डानि चामरव्यजनानि ॥२९॥ यत्र च हैमान्यासनानि मुक्तादामवितानानि च शोभन्ते ॥३०॥ स्वच्छस्फटिककुडयेषु रत्नदीपाः प्रकाशन्ते ॥३१॥ तत्र स ब्राह्मणः सर्वसम्पदां समृद्धिं विलोक्य स्थिरः सन् कुत एषाऽऽगतेति तर्कयामास ॥ ३२ ॥ दुर्भगस्य दरिद्रस्य मे समृद्धिहेतुः श्रीकृष्णस्यावलोकनतोऽन्यो नैव ॥३३॥ मम सखा भगवानब्रुवाण एव याचकाय ददाति पर्जन्यवत् ॥३४॥ किंच । स्वदत्तं बह्वपि स्वल्पं मन्यते ॥ सुहृत्कृतं स्वल्पमपि बहु मन्यते । अत एव मयोपनीतां पृथुकतण्डुलैकमुष्टिं प्रीतियुतः सन् स्वयं गृहीतवान् ॥३५॥ तस्य भगवतः सौहृदसख्यमैत्रीदास्यं मम जन्मनि जन्मनि स्यात्तथा तद्भक्तसङ्गश्च ॥ ३६ ॥ अहो ! भगवान् धनिनां मदोद्भवं निपातं पश्यन् भक्ताय संपदो राज्यं विभूतींश्च न ददाति । ( मह्यं तु भक्त्यभावाद्दत्तम् ) अतस्तद्भक्तिरेव स्यात् ॥ ३७ ॥ इत्थं बुद्ध्या निश्चित्य विषयाणां शनैस्त्यागमभ्यरयन्नातिलम्पटः सन् स्त्रिया सह विषयान्बुभुजे ॥ ३८ ॥

पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ॥ पर्यङ्काः हेमदण्डानि चामरव्यजनानि च ॥ २९ ॥ आसनानि च हैमानि मृदूपस्तरणानि च ॥ मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ ३० ॥ स्वच्छस्फटिककुडयेषु महामारकतेषु च ॥ रत्नदीपान्भ्राजमानाल्ललनारत्नसंयुतान् ॥ ३१ ॥ विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसंपदाम् ॥ तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३२ ॥ नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ॥ महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥ ३३ ॥ नन्वब्रुवाणो दिशतेऽसमक्षं याचिष्णवे भूर्यपि भूरिभोजः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥३४॥ किंचित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारि ॥ मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥३५॥ तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् ॥ महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३६ ॥ भक्ताय चित्रा भगवान् हि संपदो राज्यं विभूतीर्न समर्द्धयत्यजः ॥ अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३७ ॥ इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ॥ विषयाञ्जायया त्यक्ष्यन्बुभुजे नातिलम्पटः ॥ ३८ ॥

१ आत्मकामत्वाल्लक्ष्मीपतित्वाच्च । २ विशेषेण सङ्गं प्राप्नुवतः ।

यज्ञपतेर्देवदेवस्य श्रीकृष्णस्य ब्राह्मणाः परं दैवतम् ॥३९॥ एवं स विप्रो भक्तैः पराजितं भगवन्तं दृष्ट्वा तद्ध्यानेन गताहंकारः सन्नचिरतस्तद्धाम लेभे ॥४०॥ एतत् श्रीदामचरित्रं श्रुत्वा नरो भगवति प्राप्तभक्तिः सन् कर्मबन्धाद् मुच्यते ॥४१॥ इति श्रीभागवते० द० चू० उ० एकाशीतितमोऽध्यायः ॥८१॥ द्व्यशीतितम आगत्य कुरुक्षेत्रं रविग्रहे ॥ वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथा मिथः ॥१॥ श्रीदामसुहृदः कृष्णः प्रकल्प्यैन्द्रं पदं भुवि ॥ नन्दादिसुहृदानन्दीकुरुक्षेत्रं जगाम सः ॥२॥ श्रीशुक उवाच ॥ हे राजन् ! एकदा द्वारकायां रामकृष्णयोर्वसतोः सतोः

तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ॥ ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥ एवं स विप्रो भगवत्सुहृत् तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् ॥ तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥ ॥ ४० ॥ एतद् ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ॥ लब्धभावो भगवति कर्मबन्धाद् विमुच्यते ॥ ४१ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्धे पृथुकोपाख्यानं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ श्रीशुक उवाच ॥ अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ॥ सूर्योपरागः सुमहानासीत् कल्पक्षये यथा ॥१॥ तं ज्ञात्वा मनुजा राजन् पुरस्तादेव सर्वतः ॥ स्यमन्तपञ्चकं क्षेत्रं ययुः श्रेयोविधित्सया ॥२॥ निःक्षत्रियां महीं कुर्वन् रामः शस्त्रभृतां वरः ॥ नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥ ईजे च भगवान् रामो यत्रास्पृष्टोऽपि कर्मणा ॥ लोकस्य ग्राहयन्नीशो यथाऽन्योऽघापनुत्तये ॥ ४ ॥ महत्यां तीर्थयात्रायां तत्रागन् भारतीः प्रजाः ॥ वृष्णयश्च तथाऽक्रूरवसुदेवाहुकादयः ॥ ५ ॥ ययुर्भारत तत् क्षेत्रं स्वमघं क्षपयिष्णवः ॥ गदप्रद्युम्नसाम्बाद्याः सुचन्द्रशुकसारणैः ॥ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥ ६ ॥

खग्रासं सूर्यग्रहणमासीत् ॥१॥ तत् ज्ञात्वा मनुजाः श्रेयःप्राप्तीच्छया सर्वतः पूर्वमेव स्यमन्तपञ्चकं क्षेत्रं ययुः ॥२॥ यत्र परशुरामो नृपाणां रुधिरौघेण महाह्रदान् चक्रे ॥३॥ किंच कर्मणाऽस्पृष्टोऽपि भगवान् रामो यत्र लोकसंग्रहार्थं यज्ञं चकार ॥४॥ तत्र भारत्यः प्रजा वृष्णयश्च तथाऽक्रूरवसुदेवोग्रसेनादयो महातीर्थयात्रामागन् ॥५॥ गदसाम्बप्रद्युम्नादयश्च स्वपापं नाशयितुं ययुः ॥ अनिरुद्धः कृतवर्मा च द्वारकायां रक्षार्थमास्ते ॥६॥

ततस्ते तत्र ततस्ते यादवा गजाश्वरथपत्तिभिः ॥७॥ सह स्वर्णमालिनो महातेजस उत्तमवस्त्रालङ्कारैर्युक्ताः सभायां मार्गे देवा इवाशोभन्त ॥८॥ ततस्ते तत्र स्नात्वोपोष्य ब्राह्मणेभ्यः सालङ्कृता धेनूर्ददुः ॥९॥ ततो रामह्रदेषु विधिवत् स्नानं कृत्वा कृष्णे नो भक्तिरस्तु इति ब्राह्मणेभ्यः श्रेष्ठमन्नं ददुः ॥१०॥ ततो विप्रानुज्ञां गृहीत्वा यादवाः स्वयं भुक्त्वा वृक्षमूलेषु यथास्थानं विविशुः ॥११॥ ततस्तत्रागतान् सुहृत्संबन्धिनो नृपान् ददृशुः।

व्यरोचन्त महातेजाः पथि काञ्चनमालिनः ॥ दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ॥८॥ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ ब्राह्मणेभ्यो ददुर्धेनूर्वासःस्रग्रुक्ममालिनीः ॥ ९ ॥ रामह्रदेषु विधिवत् पुनराप्लुत्य वृष्णयः ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ॥१०॥ स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु ॥ ११ ॥ तत्रागतांस्ते ददृशुः सुहृत्संबन्धिनो नृपान् ॥ मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान् ॥ १२ ॥ काम्बोजकैकयान् मद्रान् कुन्तीनानर्तकेरलान् ॥ अन्यांश्चैवात्मपक्षीयान् परांश्च शतशो नृप ॥ नन्दादीन् सुहृदो गोपान् गोपीश्चोत्कण्ठिताश्चिरम् ॥१३॥ अन्योऽन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ १४ ॥ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापाङ्गदृशोऽभिरेभिरे ॥ स्तनैः स्तनान् कुंकुमपङ्करूषितान् निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १५ ॥ ततोऽभिवाद्य ते वृद्धान् यविष्ठैरभिवन्दिताः ॥ स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथा मिथः ॥ १६ ॥

ततस्ते यादवा गजाश्वरथपत्तिभिः [१] ... रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः [२] ॥ गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥७॥

ते के मत्स्यः उशीनरः कौशल्यो विदर्भः कुरुः सृञ्जयः ॥१२॥ काम्बोजः कैकयो मद्रः कुन्तिरानर्तः केरलः अन्येस्वपरपक्षीय नृपा नन्दादिगोपा गोप्यः एतान् सर्वान् ददृशुः ॥१३॥ ततस्तेऽन्योऽन्यसंदर्शनहर्षवेगेन गाढमालिङ्ग्य प्रेमाश्रूणि मुञ्चन्तो मुदं प्रापुः ॥१४॥ तथा स्त्रियश्चान्योऽन्यं वीक्ष्य हर्षिताः सत्यो दोर्भिः परिरेभिरे ॥१५॥ ततस्ते यादवा वृद्धान् प्रणम्य कनिष्ठैरभिवन्दिताः सन्तः कुशलं पृष्ट्वा मिथः कृष्णकथाश्चक्रुः ॥१६॥

१ विमानसंकाशैः । २ तरङ्गगतिभिः ।

ततः कुन्ती भ्रातृभगिन्यादीन् कृष्णं च वीक्ष्य मिथः प्रेमगोष्ठीभिः शोकान् जहौ ॥१७॥ कुन्त्युवाच ॥ हे भ्रातः! अपूर्णमनोरथमात्मानं मन्ये। यत आपत्सु मद्वार्तां नानुस्मरथ ॥ १८ ॥ यस्य दैवं नानुकूलं तं सुहृत् सम्बन्धिबान्धवा नानुस्मरन्ति ॥ १९ ॥ वसुदेव उवाच ॥ हे अम्ब! अस्मान् माऽसूयेथाः । यतो लोक ईशस्य वशे ॥२०॥ किंच च कंसेन तापिता वयं दश दिशो याताः । संप्रत्येव पुनर्दैवेन स्थानं प्राप्ताः ॥ २१ ॥ श्रीशुक उवाच ॥ हे राजन्! ततो वसुदेवादिभिः पूजिता नृपाः कृष्णदर्शनेन निर्वृता आसन् ॥२२॥ ततो भीष्मो द्रोणो धृतराष्ट्रो गान्धारी

पृथा भ्रातॄन् स्वसुर्वीक्ष्य तत्पुत्रान् पितरावपि ॥ भ्रातृपत्नीर्मुकुन्दं च जहौ संकथया शुचः ॥१७॥ कुन्त्युवाच ॥ आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् ॥ यद् वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ १८ ॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ॥ नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥१९॥ वसुदेव उवाच ॥ अम्ब मास्मानसूयेथा दैवक्रीडनकान् नरान् ॥ ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा ॥२०॥ कंसप्रतापिताः सर्वे वयं याता दिशो दश ॥ एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥२१॥ श्रीशुक उवाच ॥ वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ॥ आसन्नच्युतसंदर्शपरमानन्दनिर्वृताः ॥२२॥ भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा ॥ सदाराः पाण्डवाः कुन्ती सृञ्जयो विदुरः कृपः ॥२३॥ कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान् ॥ पुरुजिद् द्रुपदः शल्यो धृष्टकेतुः सकाशिराट् ॥२४॥ दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ ॥ युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥२५॥ राजानो ये च राजेन्द्र युधिष्ठिरमनुव्रताः ॥ श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः ॥ २६ ॥ अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदा युक्ता वृष्णीन् कृष्णपरिग्रहान् ॥२७॥ अहो भोजपते यूयं जन्मभाजो नृणामिह ॥ यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ २८ ॥

सभार्याः पाण्डवाः कुन्ती विदुरः कृपः ॥२३॥ विराटो भीष्मकः पुरुजिद् द्रुपदः शल्यः काशिराजः ॥ २४ ॥ दमघोषो मैथिलेयः कैकयो युधामन्युः सुशर्मा ॥२५॥ अन्ये च युधिष्ठिरमनुव्रता राजानः कृष्णस्य लक्ष्मीस्थानं सस्त्रीकं वपुर्वीक्ष्य विस्मिता बभूवुः ॥२६॥ ततो रामकृष्णाभ्यां पूजितास्ते राजानो वृष्णीन् मुदा प्रशशंसुः ॥२७॥ अहो भोजपते! नृणां मध्ये यूयं सफलजन्मानः यतो निरन्तरं श्रीकृष्णं पश्यथ ॥२८॥

यस्य श्रीकृष्णस्य कीर्तिः पादोदकं गङ्गा वाक्यरूपो वेदश्च विश्वं पुनाति। पृथ्वी कालेन दग्धबीजाऽपि यदङ्घ्रिस्पर्शेन पुष्टा सती नोऽखिलार्थान् वर्षति ॥२९॥ येषां वो गृहे स्वयं विष्णुराविर्भूतः सन् युस्माकं सुखप्रदो बभूव ॥३०॥ श्रीशुक उवाच ॥ हे नृप! नन्दस्तत्र यदून् प्राप्तान् ज्ञात्वा गोपैर्वृतः सन् तेषां दिदृक्षया स्वयं जगाम ॥३१॥ वृष्णयस्तं नन्दं दृष्ट्वा हृष्टमानसा गूढमालिङ्गनं चक्रुः ॥३२॥ ततो वसुदेवः प्रीतो नन्दं परिष्वज्य

यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ॥ भूः कालभर्जितभगाऽपि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥ २९ ॥ तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिण्डबन्धः ॥ येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ३० ॥ श्रीशुक उवाच ॥ नन्दस्तत्र यदून् प्राप्तान् ज्ञात्वा कृष्णपुरोगमान् ॥ तत्रागमद् वृतो गोपैरनःस्थार्थैर्दिदृक्षया ॥ ३१ ॥ तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ॥ परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ ३२ ॥ वसुदेवः परिष्वज्य संप्रीतः प्रेमविह्वलः ॥ स्मरन् कंसकृतान् क्लेशान् पुत्रन्यासं च गोकुले ॥३३॥ कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ॥ न किंचनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ ३४ ॥ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ॥ यशोदा च महाभागा सुतौ विजहतुः शुचः ॥ ३५ ॥ रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ॥ स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः ॥३६॥ का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि ॥ अवाप्याप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ३७ ॥

कंसकृतान् क्लेशान् तथा गोकुले पुत्रस्थापनं च स्मरन् प्रेमविह्वलो बभूव॥३३॥ ततः कृष्णरामौ मातापितरौ प्रणम्य साश्रुकण्ठौ सन्तौ किंचन नोचतुः॥३४॥ तदा यशोदानन्दौ रामं कृष्णं चोत्सङ्गे आरोप्य बाहुभ्यामालिङ्ग्य वियोगशोकान् जहतुः॥३५॥ ततो रोहिणी देवकी च यशोदां परिष्वज्य तत्कृतां मैत्रीं स्मरन्त्यावूचतुः॥३६॥ हे यशोदे ! तव मैत्रीं का विस्मरेत्॥ इन्द्रस्यैश्वर्यं प्राप्यापि यस्याः प्रत्युपकारं कर्तुं न शक्यते॥३७॥



१ प्रवृत्तिमार्गे । २ शकटेषु स्थापितैरर्थैः । ३ निवृत्तिकारणे सत्यप्यनुवर्तमानाम् ।

किंच हे व्रजेश्वरि ! एतौ रामकृष्णौ युवयोर्न्यस्तौ सन्तौ पोषणपालनादि प्राप्य वासं चक्रतुः ॥ ३८ ॥ श्रीशुक उवाच ॥ हे राजन् ! ततो गोप्यश्चिरात्कृष्णं प्राप्तं दृष्ट्वा दृष्टिषु पक्ष्मकृतं शपन्त्यः सत्यो दृग्भिस्तं हृदि कृत्वाऽऽलिङ्ग्य च ताः सर्वास्तदात्मतां प्रापुः ॥३९॥ भगवानप्येकान्ते ता उपगम्यालिङ्ग्य कुशलं पृष्ट्वा प्रहस्य जगाद ॥४०॥ हे सख्यः ! यूयं शत्रून्नाशयितुं चिरकालगतान्नः स्मरथ किम् ॥४१॥ किंच । अकृतज्ञा एते इत्यस्मानवजानीथ किम् । ओमिति चेद्वदति । हे सख्यः! भगवान्भूतानि युनक्ति वियुनक्ति च ॥ ४२ ॥ वायुर्मेघतृणा-

एतावदृष्टपितरौ युवयोः स्म पित्रोः संप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्ताव कुत्र च भयौ न सतां परः स्वः ॥ ३८ ॥ श्रीशुक उवाच ॥ गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ॥ दृग्भिर्हृदि कृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ३९ ॥ भगवांस्तास्तथाभूता विविक्त उपसंगतः ॥ आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४० ॥ अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ॥ गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥ ४१ ॥ अप्यवध्यायथाऽस्मान्स्विदकृतज्ञा विशङ्कया ॥ नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥ ४२ ॥ वायुर्यथा घनानीकं तृणं तूलं रजांसि च ॥ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥ ४३ ॥ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥ ४४ ॥ अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः ॥ भौतिकानां यथा खं वा भूर्वायुर्ज्योतिरङ्गनाः ॥ ४५ ॥ एवं ह्येतानि भूतानि भूतेष्वात्मात्मना ततः ॥ उभयं मय्यथ परे पश्यताभातमक्षरे ॥ ४६ ॥

दिकं यथा संयोज्य पुनराक्षिपते तथा कालो भूतानि ॥ ४३ ॥ किंच । मयि प्राणिनां भक्तिर्मोक्षाय कल्पते । अतो भवतीनां मयि स्नेह आसीत् । एतद्दिष्ट्या ॥ ४४ ॥ हे अङ्गनाः । अहं सर्वभूतानामादिरन्तोऽन्तरं बहिश्चास्मि ॥ ४५ ॥ अत एतद्भूतभौतिकरूपं भोग्यं भोक्तारमात्मानं च मयि प्रकाशमानं पश्यत ॥ ४६ ॥

---

१ एवं वैषम्यं नास्तीति शेषः । २ दृशिषु नेत्रेषु व्यवधायकपक्ष्मकृतं विधातारम् । ३ आरूढयोगिनामपि । ४ मत्प्राप्तिकरः ।

श्रीशुक उवाच ॥ एवं श्रीकृष्णेनाध्यात्मशिक्षया शिक्षितास्ता गोप्यस्तमेव प्रापुः ॥४७॥ आहुश्च । हे भगवन् ! गृहसेविनामपि नो मनसि योगेश्वरैर्हृदि विचिन्त्यं ते पादारविन्दमाविर्भवतु ॥४८॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायामुत्तरार्द्धे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
त्र्यशीतितम एवं च स्त्रीणां कृष्णकथोत्सवे ॥ द्रौपद्यै कृष्णभार्याभिरुक्ताः स्वस्वकरग्रहाः ॥ १ ॥ श्रीशुक उवाच । हे राजन् ! ततः कृष्णो

श्रीशुक उवाच ॥ अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ ४७ ॥ आहुश्च ते नलिननाभं पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलम्बं गेहंजुषामपि मनस्युदियात्सदा नः ॥ ४८ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे वृष्णिगोपसंगमो नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ श्रीशुक उवाच ॥ तथानुगृह्य भगवान् गोपीनां स गुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥ १ ॥ त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥ कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ॥ पिबन्ति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम् ॥ ३ ॥ हित्वाऽऽत्मधामविधुतात्मकृतत्र्यवस्थामानन्दसंप्लवमखण्डमकुण्ठबोधम् ॥ कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्मः ॥ ४ ॥ ऋषिरुवाच ॥ इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वन्धककौरवस्त्रियः ॥ समेत्य गोविन्दकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ॥ ५ ॥

युधिष्ठिरादीन् कुशलं पप्रच्छ ॥ १ ॥ एवं लोकनाथेन संमानितास्ते युधिष्ठिरादय ऊचुः ॥ २ ॥ हे भगवन् ! तव कीर्तिं कर्णपुटैर्ये पिबन्ति तेषामभद्रं कुतः ॥ ३ ॥ हे प्रभो ! सर्वानन्दकदम्बरूपमकुण्ठचिच्छक्तिं परमहंसगतिं वयं नताः स्मः ॥ ४ ॥ ऋषिरुवाच ॥ हे राजन् ! एवं श्रीकृष्णं जनेषु स्तुवत्सु सत्सु यादवकौरवस्त्रियो मिथो मिलित्वा गोविन्दकथा अगृणन् । तास्ते वर्णयामि शृणु ॥ ६ ॥



१ तत्पाददर्शनेन नाशितानि पापानि येषां ते । २ महतां सकाशात् । ३ देहकृत् ईश्वरः तद्विषयकाज्ञानच्छिदम् । ४ स्वरूपप्रकाशेन निरस्ता बुद्धिनिमित्तास्तिस्रोऽवस्था यस्मिंस्तम् । ५ कालेन विप्लुतानां वेदानां रक्षणे ।

द्रौपद्युवाच ॥ हे रुक्मिणि ! हे भद्रे ! हे जाम्बवति ! हे सत्ये ! हे सत्यभामे ! हे कालिन्दि ! हे मित्रविन्दे ! हे लक्ष्मणे ! हे रोहिणि ! ॥६॥ हे कृष्णपत्न्यः ! भगवान् वो यथोपयेमे तदस्माकं ब्रूत॥७॥ रुक्मिण्युवाच ॥ हे द्रौपदि ! शिशुपालाय मां संपादयितुं गृहीतधनुर्बाणेषु जरासंधादिषु सत्सु तेषां मूर्ध्नि पदं दत्त्वा कृष्णो मां निन्ये । तस्य चरणो ममार्चनायास्तु ॥८॥ सत्यभामोवाच ॥ यो मे पित्रा प्राप्तं दुर्यशो दूरीकर्तुं जाम्बवन्तं जित्वा स्यमन्तकमानीय मत्पित्रे दत्तवान् ॥ ततो मत्पिता स्वापराधेन भीतः सन् श्रीकृष्णाय मां ददौ ॥९॥ जाम्बवत्यु-

द्रौपद्युवाच ॥ हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौसले ॥ हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे:॥ ६ ॥ हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान् स्वयम् ॥ उपयेमे यथा लोकमनुकुर्वन् स्वमायया ॥ ७ ॥ रुक्मिण्युवाच ॥ चैद्याय मार्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरिताङ्घ्रिरेणुः॥ निन्ये मृगेन्द्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८ ॥ सत्यभामोवाच ॥ यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथ रत्नमदात् स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥ ९ ॥ जाम्बवत्युवाच ॥ प्राज्ञाय देहकृदमुं निजनाथदेवं सीतापतिं[1] त्रिणवहान्यमुनाऽभ्ययुध्यत ॥ ज्ञात्वा परीक्षित[2] उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥ १० ॥ कालिन्द्युवाच ॥ तपश्चरन्तीमाज्ञाय स्वपादस्पर्शनाशया ॥ सख्योपेत्याग्रहीत् पाणिं योऽहं तद्गृहमार्जनी ॥ ११ ॥ मित्रविन्दोवाच ॥ यो मां स्वयंवर उपेत्य विजित्य भूपान् निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ॥ भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्[3]तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनत्वम् ॥ १२ ॥

वाच ॥ मत्पितामुं श्रीकृष्णं निजनाथं रामं ज्ञात्वा सप्तविंशतिदिनानि युयुधे । ततोऽसौ राम एवेति तं ज्ञात्वा पादौ प्रगृह्य मणिना सह मां तस्मै समर्पितवान् । अतोऽहममुष्य दासी जाता ॥१०॥ कालिन्द्युवाच ॥ यस्य पादस्पर्शनेच्छया तपश्चरन्तीं मां ज्ञात्वाऽर्जुनेन सहागत्य यः पाणिं जग्राह तस्याहं गृहसंमार्जनकर्त्री ॥ ११ ॥ मित्रविन्दोवाच ॥ यो मम स्वयंवरे भूपान् मे भ्रातॄंश्च विजित्य मां स्वपुरं निन्ये तस्य चरणक्षालनकर्तृत्वं जन्मनि जन्मनि मेऽस्तु ॥ १२ ॥

---

१ अक्रूरादिभ्यः प्रतिश्रुतामपीत्यर्थः । २ संजाता सीतापतिरिति परीक्षा यस्य सः । ३ लक्ष्मीनिवासः ।

सत्योवाच ॥ मम पित्रा राजवीर्यपरीक्षार्थं संपादितान् वीर्यदुर्मदनाशकान् तीक्ष्णशृङ्गान् सप्त वृषभान् यः शीघ्रं दमयित्वा क्रीडन्निव बबंध ॥ १३ ॥ किं च । पथि राजन्यान् निर्जित्य मां निन्ये तस्य मम दास्यमस्तु ॥ १४ ॥ भद्रोवाच ॥ हे द्रौपदि ! मम पिता श्रुतकीर्तिर्मातुलेयाय कृष्णायाहूय तच्चित्तां मामक्षौहिण्या सखीजनैः सह दत्तवान् ॥१५॥ तस्य पादस्पर्शो मम जन्मनि जन्मनि भूयात् ॥१६॥ लक्ष्मणोवाच ॥ हे राज्ञि ! नारदेन गीतमच्युतजन्मकर्म श्रुत्वा मम चित्तं कृष्णे आसीत् ॥ १७ ॥ तदा मे पिता बृहत्सेन एवं मम मतं ज्ञात्वा

सत्योवाच ॥ सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान् पित्रा कृतान् क्षितिपवीर्यपरीक्षणाय ॥ तान् वीरदुर्मदहनस्तरसा-
तिगृह्य क्रीडन् बबन्ध ह यथा शिशवोऽजतोकान् ॥ १३ ॥ य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् ॥ पथि
निर्जित्य राजन्यान् निन्ये तद्दास्यमस्तु मे ॥ १४ ॥ भद्रोवाच ॥ पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ॥ कृष्णे
कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥१५॥ अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि ॥ कर्मभिर्भ्राम्यमाणाया
येन तच्छ्रेय आत्मनः ॥ १६ ॥ लक्ष्मणोवाच ॥ ममापि राज्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह ॥ चित्तं
मुकुन्दे किल पद्महस्तया वृतः सुसंमृश्य विहाय लोकपान् ॥ १७ ॥ ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ॥
बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥१८॥ यथा स्वयंवरे राज्ञि मत्स्यः पार्थेप्सया कृतः ॥ अयं तु बहिराच्छन्नो
दृश्यते स जले परम् ॥ १९ ॥ श्रुत्वैतत् सर्वतो भूपा आययुर्मत्पितुः पुरम् ॥ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः
सहस्रशः ॥२०॥ पित्रा संपूजिताः सर्वे यथावीर्यं यथावयः ॥ आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः ॥२१॥ आदाय
व्यसृजन् केचित् सज्यं कर्तुमनीश्वराः ॥ आकोष्ठं ज्यां समुत्कृष्य पेतुरेकेऽमुनाहताः ॥ २२ ॥

तत्रोपायं चकार ॥१८॥ हे द्रौपदि यथा तव स्वयंवरेऽर्जुनप्राप्तीच्छया मत्स्यः कृतः । तथा मत्स्यं कारितवान् । स तु बहिराच्छन्नो नांतः । अयं तु न तथा किं तु स्तम्भमूले स्थापितकलशे जले केवलं दृश्यते । अतो दृष्टिरध उपरि लक्ष्यम् । तस्मात् श्रीकृष्णं विना न कस्यापि भेद्यः ॥ १९ ॥ तच्छ्रुत्वा भूपाः सर्वास्त्रशस्त्रतत्त्वज्ञा मत्पितुः परं ययुः ॥२०॥ ततः पित्रा यथायोग्यं पूजितास्ते मत्स्यं वेद्धुं सशरं चापं जगृहुः ॥२१॥ केचित्तद्गृहीत्वा व्यसृजन् । केचित् सज्यं कर्तुमसमर्थाः । केचिज्ज्यामाकृष्य चापेन ताडिताः पेतुः ॥ २२ ॥

अपरे जरासंधशिशुपालभीमदुर्योधनादयो वीरा धनुः सज्यं कृत्वा मत्स्यस्य स्थितिं नाविन्दन् ॥ २३ ॥ ततोऽर्जुनो जले मत्स्याभासं वीक्ष्य तदवस्थितिं ज्ञात्वा बाणं ससर्ज । बाणो मत्स्यं नाच्छिनत् किंतु पस्पर्श ॥२४॥ एवं भग्नमानेषु सर्वराजन्येषु सत्सु भगवान् धनुरादाय सज्यं कृत्वा ॥२५॥ तद्धनुषि बाणं संधाय जले सकृद्वीक्ष्याऽभिजिन्मुहूर्ते बाणेन तं छित्त्वा पातयामास ॥२६॥ तदा दिवि दुन्दुभयो नेदुः देवाः पुष्पवर्षाणि मुमुचुः ॥२७॥ तदा हस्ते रत्नमालां गृहीत्वा नूपुरशब्दयुक्ताभ्यां पद्भ्यां तद्रङ्गं प्राविशम् ॥२८॥ ततो हास्यकटाक्षावलोकनैरासक्त

सज्यं कृत्वाऽपरे वीरा मागधाम्बष्ठचेदिपाः ॥ भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥२३॥ मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ॥ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत् पस्पृशे परम् ॥२४॥ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ॥ भगवान् धनुरादाय सज्यं कृत्वाऽथ लीलया ॥२५॥ तस्मिन् संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ॥ छित्त्वेषुणाऽपातयत् तं सूर्ये चाभिजिति स्थिते ॥ २६ ॥ दिवि दुन्दुभयो नेदुर्जयशब्दयुता भुवि ॥ देवाश्च कुसुमासारान् मुमुचुर्हर्षविह्वलाः ॥२७॥ तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ॥ नूत्ने[1] निवीय परिधाय च कौशिकाग्र्ये सव्रीडहाससवदना कबरीधृतस्रक् ॥ २८ ॥ उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विट् गण्डस्थलं शिशिरहासकटाक्षमोक्षैः ॥ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥ २९ ॥ तावन्मृदङ्गपटहाः शंखभेर्यानकादयः ॥ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥ एवं वृते भगवति मयेशे नृपयूथपाः ॥ न सेहिरे याज्ञसेनि स्पर्धन्तो हृच्छयातुराः ॥ ३१ ॥ मां तावद्रथमारोप्य हयरत्नचतुष्टयम्[2] ॥ शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावाजौ चतुर्भुजः ॥ ३२ ॥

हृदयाऽहं परितो राज्ञो निरीक्ष्य कृष्णस्य स्कन्धे मालां निदधे ॥२९॥ तदा मृदङ्गभेर्यादयो नेदुः । नर्तक्यो ननृतुः । गायका जगुः ॥३०॥ हे द्रौपदि ! मयैवं भगवति वृते सति स्पर्धन्तो नृपा न सेहिरे ॥३१॥ ततः कृष्णोमां रथमारोप्य चतुर्भुजः सन् द्वाभ्यां मामालिङ्ग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा संग्रामे तस्थौ ॥ ३२ ॥

१ नूतने । २ हयरत्नानां चतुष्टयं यस्मिंस्तं रथम् ।

ततो दारुकः सुवर्णोपस्कृतं रथं प्रेरयामास ॥३३॥ तदा केचन राजानो मार्गे निरोधयितुमग्रतो गत्वोर्ध्वकृतचापास्तस्थुः ॥३४॥ ततः कृष्ण बाणौघैश्छिन्नबाह्वङ्घ्रिकन्धरा भुवि पेतुः । केचिद्र् रणं त्यक्त्वा दुद्रुवुः ॥३५॥ एवं युद्धं कृत्वा कृष्णो ध्वजतोरणपताकादिभिरलङ्कृतां द्वारकां प्राविशत् यथा सूर्योऽस्ताचलम् ॥३६॥ तदा मे पिता मित्रसंबन्धिबान्धवान् वस्त्रालङ्कारादिभिरपूजयत् ॥३७॥ श्रीकृष्णाय च शय्यासनपरिच्छ-

दारुकश्चोदयामास काञ्चनोपस्करं रथम् ॥ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥३३॥ तेऽन्वसज्जन्त राजन्या निषेद्धुं पथि केचन ॥ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥ ३४ ॥ ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वङ्घ्रिक-न्धराः ॥ निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥ ३५ ॥ ततः पुरीं यदुपतिरत्यलङ्कृतां रविच्छदध्वजपटचित्र-तोरणाम्[1] ॥ कुशस्थलीं दिविभुवि चापि संस्तुतां समाविशत् तरणिरिव स्वकेतनम् ॥ ३६ ॥ पिता मे पूजयामास सुहृत्संबन्धिबान्धवान् ॥ महार्हवासोऽलङ्कारैः शय्यासनपरिच्छदैः ॥ ३७ ॥ दासीभिः सर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥ ३८ ॥ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ॥ सर्वसंगनि-वृत्त्याऽद्धा तपसा च बभूविम ॥ ३९ ॥ महिष्य ऊचुः ॥ भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षिति जये जितराजकन्याः ॥ निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः पादाम्बुजं परिणिनाय य आप्तकामः ॥ ४० ॥ न वयं साध्वि साम्राज्यं स्वाराज्यं भोज्यमप्युत ॥ वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम् ॥ ४१ ॥ कामयामह एतस्य श्रीमत्पादरजः श्रियः[3] ॥ कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ ४२ ॥

दैर्दासीभिर्गजाश्वरथपत्तिभिश्च सहायुधानि ददौ ॥३८॥ इमा अष्टौ वयमात्मारामस्य कृष्णस्य गृहदासिकाः अभवाम ॥३९॥ महिष्य ऊचुः ॥ हे द्रौपदि ! दिग्विजये भौमेन जितानां राज्ञां कन्या वयं रुद्धा इति ज्ञात्वा कृष्णो भौमं हत्वाऽस्मान् निर्मुच्य पूर्णकामोऽपि परिणीतवान् ॥४०॥ हे साध्वि ! वयं साम्राज्यादि ब्रह्मपदं च नेच्छामः ॥४१॥ किं तु अस्य श्रीकृष्णस्य पादरजो मूर्ध्ना धारयितुमिच्छामः ॥ ४२ ॥

१ रविं छादयन्तीति तादृशा ध्वजपटा यस्यां सा च चित्रतोरणा च । २ तत्सालोक्यादि । ३ श्रियः कुचकुङ्कुमेति योग्यम् ।

यतो व्रजस्त्रियस्तृणवीरुधो गावो गोपाश्च कृष्णस्य पादस्पर्शमिच्छन्ति॥४३॥इति श्रीभागवते द० चू० उ० त्र्यशीतितमोऽध्यायः ॥८३॥ चतु-
भिरधिकाशीतितमे मुनिसमागमे ॥वसुदेवमखोत्साहबन्धुप्रस्थापनादिकम्॥१॥ श्रीशुक उवाच॥ हे राजन्! ततः कुन्ती गान्धारी द्रौपदी सुभद्रा
तथा राजपत्न्यो गोप्यश्च श्रीकृष्णे तासां स्नेहानुबन्धं श्रुत्वा विस्मयं प्रापुः॥१॥इति स्त्रीभिः स्त्रीषु नृभिर्नृषु संभाष्यमाणेषु सत्सु कृष्णरामदिदृ-
क्षया मुनयस्तत्राययुः॥२॥ ते के। व्यासो नारदश्च्यवनो देवलोऽसितः शतानन्दो भारद्वाजो गौतमः ॥३॥ परशुरामो वसिष्ठो गालवो भृगुः

व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः ॥ गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥४३॥ इति श्रीभाग० महापु०
दशमस्कन्धोत्तरार्द्धे त्र्यशीतितमोऽध्यायः ॥८३॥श्रीशुक उवाच ॥ श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षिति
पपत्न्य उत स्वगोप्यः॥कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः॥१॥इतिसंभाष्यमा-
णासु स्त्रीभिः स्त्रीषु नृभिर्नृषु॥आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया॥२॥द्वैपायनो नारदश्च च्यवनो देवलोऽसितः॥
विश्वामित्रः शतानन्दो भारद्वाजोऽथ गौतमः॥३॥ रामःसशिष्यो भगवान्वसिष्ठो गालवो भृगुः॥पुलस्त्यः कश्यपोऽत्रिश्च
मार्कण्डेयो बृहस्पतिः ॥४॥ द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रास्तथाङ्गिराः ॥ अगस्त्योयाज्ञवल्क्यश्च वामदेवादयोऽपरे ॥५॥
तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ॥ पाण्डवाः कृष्णरामौ च प्रणेमुर्विश्ववन्दितान् ॥६॥ तानानर्चुर्यथा सर्वे सह
रामोऽच्युतोऽर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥ उवाच सुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदस-
स्तस्य महतो यतवाचोऽनुशृण्वतः ॥८॥ श्रीभगवानुवाच ॥ अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम्॥ देवानामपि
दुष्प्रापं यद्योगेश्वरदर्शनम्॥९॥किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम्॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम्॥१०॥

पुलस्त्यः कश्यपोऽत्रिर्मार्कण्डेयो बृहस्पतिः ॥४॥ द्वितस्त्रित एकतो ब्रह्मपुत्रोऽङ्गिरा अगस्त्यो याज्ञवल्क्यो वामदेवादयश्च॥५॥ एतान् ऋषीन्दृष्ट्वा
पाण्डवादयो रामकृष्णौ चोत्थाय प्रणेमुः ॥६॥ ततस्ते सर्वे रामकृष्णौ च तानानर्चुः ॥७॥ ततोभगवान्सुखमास्थितांस्तान्सर्वेषां शृण्वतां जगाद
॥८॥ श्रीभगवानुवाच ॥ अहो! वयं सफलजन्मानः। यतो दुष्प्रापं योगेश्वराणां दर्शनं जातम्॥९॥ तीर्थस्नानादिमात्रे तपोबुद्धीनां तथा प्रतिमायां

देवदृष्टीनां योगेश्वरदर्शनमसंभावितमस्ति ॥ १० ॥ अम्मयानि तीर्थानि मृच्छिलामया देवाश्च बहुकालेन पुनन्ति । साधवो दर्शनादेव पुनन्ति ॥ ११ ॥ अग्निः १ सूर्यः २ चन्द्रः ३ तारकाः ४ भूः ५ जलं ६ आकाशं ७ वायुः ८ एते उपासिताः सन्तः पापं हरन्ति न तु तन्मूलमज्ञानम् । साधवस्तु मुहूर्तसेवया समूलं पापं घ्नन्ति ॥ १२ ॥ अतो यस्य वातपित्तश्लेष्मयुक्ते शरीरे आत्मबुद्धिः कलत्रादिषु स्वीया इति बुद्धिः स दारुणो वृषरूपः खर इव ज्ञातव्यः ॥१३॥ श्रीशुक उवाच ॥ हे राजन् ! मुनयः कृष्णस्य वचो निशम्य तूष्णीमासन् ॥१४॥ ततश्चिरं विचार्य

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥११॥ नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ् मनः ॥ उपासिता भेदकृतो हरन्त्यघं विपश्चितोघ्नन्ति मुहूर्तसेवया॥१२॥यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः॥यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः॥१३॥श्रीशुक उवाच॥निशम्येत्थं भगवतःकृष्णस्याकुण्ठमेधसः ॥ वचो दुरन्वयं विप्रास्तूष्णीमासन्भ्रमद्धियः॥१४॥ चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् ॥ जनसंग्रह इत्यूचुःस्मयन्तस्तं जगद्गुरुम् ॥ १५ ॥ यन्माययातत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ॥ यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥१६॥ अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ॥ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥१७॥ अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च ॥ स्वलीलयावेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥१८॥ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ॥यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम् ॥ १९ ॥

जनसंग्रहमात्रमेतत् इति जगद्गुरुमूचुः ॥ १५ ॥ मुनय ऊचुः ॥ हे कृष्ण ! यन्मायया वयं विमोहिताः स त्वमनीश्वरवदाचरसि । अहो ! तव विचेष्टितमतर्क्यम् ॥ १६ ॥ हे कृष्ण ! इच्छारहित एको भवान्बहुधाऽऽत्मना विश्वं सृजति पाति संहरति च ॥ १७ ॥ अथापि भक्तरक्षार्थं दुष्टनिग्रहाय च सत्त्वात्मकं रूपं बिभर्षि ॥ १८ ॥ किंच शुद्धं वेदाख्यं ब्रह्म ते हृदयमस्ति ॥ १९ ॥



१ भेदबुद्धिं कुर्वतः । २ भूविकारे प्रतिमादौ । ३ देवताबुद्धिः । ४ अनीश्वरवदाचरति । ५ नरचेष्टितेन । ६ घटादिविकारैः । ७ परिपूर्णस्य । ८ यत्र ब्रह्मणि । ९ व्यक्तं कार्यम् । अव्यक्तं कारणम् ततः परं यत् सन्मात्रं ब्रह्मोपलब्धमिति योज्यम् ।

अत एव ब्राह्मणकुलं त्वं पूजयसि । तस्माद् ब्रह्मण्यानां मध्ये त्वं मुख्यः ॥२०॥ अद्य नो जन्मसाफल्यम् । यतस्तव समागमात् कृतार्था जाताः अतः श्रेयसां त्वं परोऽवधिः ॥ २१ ॥ तस्मै भगवते कृष्णाय परमात्मने नमः ॥२२॥ हे ईश ! अमी भूपा वृष्णयश्च यं कालमीश्वरं त्वां न विदन्ति ॥२३॥ यथा पुरुषः स्वप्नान् पश्यन्निन्द्रियेणाभातं सिंहव्याघ्रादिरूपमात्मानं वेद ॥ २४ ॥ एवं त्वां स्वप्नादितुल्यविषयेषु मायया

तस्माद् ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसि सद्धाम तद् ब्रह्मण्याग्रणीर्भवान् ॥ २० ॥ अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ॥ त्वया संगम्य सद्गत्या यदन्तः श्रेयसां परः ॥ २१ ॥ नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ॥ स्वयोगमायया छन्नमहिम्ने परमात्मने ॥२२॥ न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः ॥ मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥ यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ॥ नाममात्रेन्द्रियाभातं न वेदरहितं परम् ॥ २४ ॥ एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया ॥ मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥ २५ ॥ तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥ २६ ॥ श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् ॥ राजर्षे स्वाश्रमान्गन्तुं मुनयो दधिरे मनः ॥ २७ ॥

भ्रमच्चित्तः सन् न वेद ॥ २५ ॥ तस्य तव योगेश्वरैर्हृदि कृतं चरणकमलं वयं ददृशिम अतोऽस्माकमनुग्रहं कुरु ॥ २६ ॥ श्रीशुक उवाच ॥ इति कृष्णं युधिष्ठिरादिकं चानुज्ञाप्य ऋषयः स्वाश्रमान् गन्तुं मनो दधुः ॥ २७ ॥

---

१ आत्मनो वेदप्रमाणकस्य तव सद्धाम श्रेष्ठमुपलब्धिस्थानम् । २ यद् यस्मात्त्वं श्रेयसां परोऽन्तः अवधिः । ३ एकस्मिन्नेव स्थाने भोजनशयनादिनाऽऽरमणं येषां ते । ४ स्वप्नविषयेषु तत्त्वदृष्टिः । ५ नाममात्रं मिथ्याभूतम् । इन्द्रियेण मनसा । आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद । ६ इन्द्रियार्थेहा प्रवृत्तिः सैव माया तयेति योज्यम् । ७ विवेकनाशात् । ८ नाशकं तादृशतीर्थं गङ्गा तदाश्रयम् । ९ उद्रिक्तया भक्त्योपहत आशयलक्षणो जीवकोशो येषां ते तादृशाः पूर्वे भवद्गीतमापुरिति ।

तदा नम्रो वसुदेवस्तानृषीनुपव्रज्य प्रणम्य बभाषे॥२८॥ वसुदेव उवाच॥ हे ऋषयः ! नमो वः। येन कर्मणा कर्मनाशो भवति तद् मह्यमुच्य-
ताम् ॥ २९ ॥ ( तदा श्रीकृष्णं हित्वाऽऽस्मान् पृच्छतीति विस्मितान् मुनीन् नारद आह )। हे विप्राः ! कृष्णमर्भकं मत्वा वसुदेव आत्मनः
श्रेयः पृच्छति इति न चित्रम् ॥३०॥ यतो मर्त्यानां सांनिध्यमनादरे कारणं भवति। यथा गथा गङ्गोदकं हित्वा तत्रस्था जनाः शुद्धयेऽन्यजलं यान्ति
॥ ३१ ॥ किंच। यस्य ज्ञानं कुतश्चिदपि विश्वस्य लयोत्पत्त्यादिनाऽपि न नश्यति ॥३२॥ तमद्वितीयं कृष्णमज्ञः सत्त्वादि गुणप्रवाहैर्मनुष्यं

तद् वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः ॥ प्रणम्य चोपसंगृह्य बभाषेदं सुयन्त्रितः ॥२८॥ वसुदेव उवाच ॥ नमो
वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ॥ कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २९ ॥ नारद उवाच ॥ नाति-
चित्रमिदं विप्रा वसुदेवो बुभुत्सया ॥ कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥३०॥ सन्निकर्षोऽत्र मर्त्यानामना-
दरणकारणम् ॥ गाङ्गं हित्वा यथाऽन्याम्भस्तत्रत्यं याति शुद्धये ॥३१॥ यस्यानुभूतिकालेन लयोत्पत्त्यादिनाऽस्य वै ॥
स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३२ ॥ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ॥
प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३ ॥ अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दु-
भिम् ॥ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३४ ॥ कर्मणा कर्मनिर्हार एष साधु निरूपितः ॥ यच्छ्रद्धया
यजेद् विष्णुं सर्वयज्ञेश्वरं मखैः ॥३५॥ चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ॥ दर्शितः सुगमो योगो धर्मश्चा-
त्ममुदावहः ॥३६॥ अयं स्वस्त्ययनः पन्थाः द्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥३७॥

मन्येत ॥ ३३ ॥ अथ मुनयोऽच्युतरामयो राज्ञां च शृण्वतां सतां वसुदेवं जगदुः ॥३४॥ हे वसुदेव ! कर्मणा कर्मनाश एवं निरूपितः। कथं
चेदाहुः। यज्ञः श्रद्धया विष्णुं यजेत ॥३५॥ कविभिरयं सुगमो मोक्षोपायो दर्शितः ॥३६॥ अयं गृहे संसारिणो द्विजातेः श्रेयस्करो मार्गः
यतो निष्कामतया शुद्धेन प्राप्तवित्तेन परमात्मा यष्टव्यः ॥ ३७ ॥

१ स्वतो नाशो यथा विद्युतः। अन्यस्माद् यथा घटस्य पाषाणादिताडनात्। गुणतो यथा रूपाद्यन्तरोत्पत्तेः २ राहुः। ३ स्वस्ति क्षेममीयतेऽनेनेति।

बुधो यज्ञदानैर्वित्तैषणां त्यजेत् । गृहोचितैर्भोगदारपुत्रैषणां कालेन क्षयानुसंधानेन स्वर्गादिलोकैषणां त्यजेत् ॥ ३८ ॥ एवं त्यक्तैषणा धीराः सन्तस्तपोवनं ययुः । किं च । अयं द्विजस्त्रिभिर्ऋणैः सह जातोऽस्ति । अतो यज्ञाध्ययनपुत्रैस्तानि ऋणान्यदूरीकृत्य देहं त्यजन्नधः पतेत् ॥ ३९ ॥ त्वं तु ऋषिपित्रोर्ऋणाभ्यां मुक्तोऽसि । अथ यज्ञैर्देवर्णमुन्मुच्य गृहात् प्रव्रज ॥ ४० ॥ हे वसुदेव ! ( अयं क्रमोऽविशुद्धचित्तानाम् त्वं तु कृतार्थ एव) भगवान् युवयोः पुत्रतां गतः ॥४१॥ श्रीशुक उवाच ॥ एवमृषीणां वचनं श्रुत्वा वसुदेवस्ताम् प्रणम्य ऋत्विजो वव्रे ॥४२॥

वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणां देव कालेन विसृजेद् बुधः ॥ ३८ ॥ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन् पतेत् ॥३९ ॥ त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भव॥४०॥ वसुदेव भवान् नूनं भक्त्या परमया हरिम् ॥ जगतामीश्वरं प्रार्चः स यद् वां पुत्रतां गतः ॥ ४१ ॥ श्रीशुक उवाच ॥ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ॥ तानृषीनृत्विजो वव्रे मूर्ध्नानम्य प्रसाद्य च ॥ ४२ ॥ त एनमृषयो राजन्वृता धर्मेण धार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ॥ ४३ ॥ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ॥ स्नाताः सुवाससो राजन् राजानः सुष्ठ्वलङ्कृताः ॥४४॥ तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४५ ॥ नेदुर्मृदङ्गपटहशंखभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ जगुः सुकण्ठ्यो गन्धर्व्यः संगीतं सहभर्तृकाः ॥ ४६ ॥ तमभ्यषिञ्चन् विधिवदक्तमभ्यक्तमृत्विजः ॥ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥

ततस्ते ऋषयस्तस्मिन् क्षेत्रे मखैर्वसुदेवं याजयामासुः ॥४३॥ एवं यज्ञदीक्षायां प्रवृत्तायां वृष्णयो राजानस्तन्महिष्यश्च सुवाससः स्वलङ्कृताः मुदिताः वस्तुपाणयः सत्यो यज्ञशालामुपाजग्मुः ॥ ४४ ॥ ४५ ॥ तदा मृदङ्गशङ्खभेर्यादयो नेदुः । नटनर्तक्यो ननृतुः । सूतादयस्तुष्टुवुः । गन्धर्वा गन्धर्व्यश्च जगुः ॥ ४६ ॥ ततः ऋत्विजः सपत्नीकं वसुदेवं सतारं चन्द्रमसमिवाभ्यषिञ्चन् ॥ ४७ ॥

१ देवानामपि मृत्युना । मृत्युहेतुभूतेनेत्यर्थः । २ अर्चितवान् । ३ नेत्रयोरञ्जनेन । ४ सर्वाङ्गेषु नवनीतेन ।

अष्टादशभिः पत्नीभिर्दीक्षितो वसुदेवो बभौ ॥ ४८ ॥ तस्य सदस्यैः सहिता ऋत्विजो रक्तकौशेयवासो विरेजुः ॥ ४९ ॥ तदा रामकृष्णौ
स्वपुत्रदारै रेजतुः ॥ ५० ॥ एवं प्रतियज्ञं प्राकृतैर्वैकृतैर्यज्ञैरीश्वरमीजे ॥ ५१ ॥ अथ वसुदेव ऋत्विग्भ्यो दक्षिणा गोभूकन्याश्च ददौ ॥ ५२ ॥
ततः पत्नीसंयाजावभृथ्यैश्चरित्वा यजमानपुरःसराः सर्वे ऋषयो रामह्रदे स्नानं चक्रुः ॥५३॥ ततो वसुदेवः स्त्रियश्च स्नात्वाऽलङ्कारवासांसि
बन्दिभ्यो ददुः । ततः सारमेयादिसर्वभूतान्यन्नेन संतर्प्य स्त्रीपुत्रसहितान् बन्धून् विदर्भकोसलादिराजान् सदस्यर्त्विक्सुरगणान् नृभूतपितृ-

ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः॥स्वलङ्कृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥ ४८ ॥ तस्यर्त्विजो महाराज रत्नकौ-
शेयवाससः ॥ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९॥ तदा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ ॥ रेजतुः
स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥ ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रिये-
श्वरम् ॥ ५१ ॥ अथर्त्विग्भ्योऽददात् काले यथाऽऽम्नातं स दक्षिणाः ॥ स्वलङ्कृतेभ्यो विप्रेभ्यो गोभूकन्या महाधनाः
॥५२॥पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ॥ सस्नू रामह्रदे विप्रा यजमानपुरःसरा ॥ ५३ ॥ स्नातोऽलंकारवासांसि
बन्दिभ्योऽदात तथा स्त्रियः ॥ ततः स्वलंकृतो वर्णानाश्वभ्योऽन्नेन पूजयत् ॥५४॥ बन्धून् सदारान् ससुतान् पारिब-
र्हेण भूयसा ॥ विदर्भकोसलकुरून् काशिकेकयसृञ्जयान् ॥ ५५ ॥ सदस्यर्त्विक्सुरगणान् नृभूतपितृचारणान् ॥
श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥५६॥ धृतराष्ट्रोऽर्जुनः पार्था भीष्मो द्रोणः पृथा यमौ ॥ नारदो भगवान्
व्यासः सुहृत्संबन्धिबान्धवाः ॥ ५७ ॥ बंधून् परिष्वज्य यदून् सौहृदात् क्लिन्नचेतसः॥ययुर्विरहकृच्छ्रेण स्वदेशांश्चा-
परे जनाः ॥ ५८ ॥ नन्दस्तु सह गोपालैर्बृहत्या पूजयार्चितः ॥ कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद् बन्धुवत्सलः ॥ ५९ ॥

चारणान् वस्त्रादिभिः पूजयामास । ततस्ते श्रीकृष्णमनुज्ञाप्य प्रययुः ॥५४॥५५॥५६॥ ततो धृतराष्ट्रो विदुरो युधिष्ठिरभीमार्जुना भीष्मो
द्रोणः पृथा नकुलसहदेवौ नारदो व्यासः सुहृत्संबन्धिनोऽन्ये जनाश्च यदूनालिङ्ग्य वियोगदुःखेन स्वदेशान् ययुः ॥५७॥ ५८ ॥ नन्दस्तु
कृष्णरामोग्रसेनाद्यैः पूजितः सन् गोपालैः सह प्रीत्या न्यवात्सीत् ॥ ५९ ॥

तदा वसुदेवः प्रीतमना हस्तं गृहीत्वा नन्दं जगाद ॥६०॥ वसुदेव उवाच ॥ हे भ्रातः ! इमं स्नेहपाशं शूराणां योगिनामपि दुस्त्यजं मन्ये ॥६१॥ किं च । भवद्भिरुपकारमजानत्स्वस्मास्वनुपमा यस्माद् मैत्री समर्पिता ॥६२॥ हे भ्रातः ! वयं प्रागसामर्थ्याद्वः कुशलं नाचराम अधुना श्रीमदान्धाक्षा वो न पश्यामः ॥६३॥ अतः श्रेयस्कामस्य पुंसो राज्यश्रीर्माभूत् ॥६४॥ श्रीशुक उवाच ॥ एवं वसुदेवो नन्दकृतां मैत्रीं स्मरन्नश्रुलोचनो

वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् ॥ सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन् ॥६०॥ वसुदेव उवाच ॥ भ्रातरीश कृतः पाशो नृणां यः स्नेहसंज्ञितः ॥ तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥ ६१ ॥ अस्मास्वप्रतिकल्पेयं यत्कृताऽज्ञेषु सत्तमैः ॥ मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हिचित् ॥ ६२ ॥ प्रागकल्पाच्च कुशलं भ्रातर्वो नाचराम हि ॥ अधुना श्रीमदान्धाक्षा न पश्यामः पुरः सतः ॥ ६३ ॥ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ॥ स्वजनानुत बन्धून् वा न पश्यति ययान्धदृक् ॥६४॥ श्रीशुक उवाच ॥ एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः ॥ रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥६५॥ नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः ॥ अद्य श्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥ ६६ ॥ ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः ॥ पराद्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ ६७ ॥ वासुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ॥ दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥ ६८ ॥ नन्दो गोपाश्च गोप्यश्च गोविन्दचरणाम्बुजे ॥ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥ ६९ ॥ * बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥ वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥ ७० ॥

रुरोद ॥६५॥ ततो नन्दो रामकृष्णयोः प्रेम्णा त्रीन् मासान् तत्र स्नानपानवस्त्रालंकारादिकामैः पूर्यमाणो व्रजवासिभिः सहावसत् ॥६६॥६७॥ ततो वसुदेवोग्रसेनकृष्णोद्धवरामादिभिर्दत्तं पारिबर्हं गृहीत्वा यदुभिर्यापितो ययौ ॥ ६८ ॥ नन्दो गोपा गोप्यश्च कृष्णचरणाम्बुजे संलग्नं मनः पुनर्हर्तुमसमर्थाः सन्तो मथुरां ययुः ॥ ६९ ॥ ततो वृष्णयो नन्दादिषु गतेषु वर्षाकालं प्राप्तं वीक्ष्य पुनर्द्वारकां ययुः ॥ ७० ॥

* "इतोऽग्रे पाण्डवाश्च महात्मानः पृथा च नृपसत्तम ॥ अनुज्ञाताः केशवेन बाष्पगद्गदभाषिणः ॥ शक्रप्रस्थं ययुः सर्वे स्वजनैः परिवारिताः ।" इतिक्वचिदधिकः पाठः ।

तीर्थयात्रायां जातं यज्ञोत्सवं सुहृत्संदर्शनादिकं च जनेभ्यः कथयाञ्चक्रुः॥७१॥इति श्रीभागवते महापु० दशम० चू० उ० चतुरशीतितमोऽध्यायः ॥८४॥ पञ्चाशीतितमे रामकृष्णौ संप्रार्थितौ सुतौ॥पित्रे ज्ञानमथो मात्रे मृतान् पुत्रानयच्छताम्॥१॥नन्दयित्वा कुरुक्षेत्रयात्रायां सुहृदोबहून्॥ तत्त्वज्ञानं ततः पित्रोरादिशन्मृतसूनुभिः॥२॥श्रीशुक उवाच॥ हे राजन् ! एकदा वसुदेवः कृतप्रणामौ रामकृष्णौ दृष्ट्वाऽऽह ॥१॥ पुत्रयोः प्रभा-वसूचकमृषिवचः श्रुत्वा तद्वीर्यै जातविश्वासः सन् प्रीत्या बभाषे ॥२॥ हे कृष्ण ! हे राम ! युवां प्रधानपुरुषेश्वरौ जाने ॥३॥ हे ईश ! सप्तवि-

जनेभ्यः कथयाञ्चक्रुर्यद्दुदेवमहोत्सवम् ॥ यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम् ॥ ७१ ॥ इति श्रीभागवते महा-पुराणे दशमस्कन्धोत्तरार्धे तीर्थयात्रानुवर्णनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ श्रीबादरायणिरुवाच ॥ अथैकदाऽऽत्मजौ प्राप्तौ कृतपादाभिवन्दनौ ॥ वासुदेवोऽभिनन्द्याह प्रीत्या संकर्षणाच्युतौ ॥ १ ॥ मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम् ॥ तद्वीर्यैर्जातविश्रम्भः परिभाष्याभ्यभाषत ॥ २ ॥ कृष्णकृष्ण महायोगिन्संकर्षण सनातन ॥ जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ ॥ ३ ॥ यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ ४ ॥ एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज ॥ आत्मनाऽनुप्रविश्यात्मन्प्राणो जीवो बिभर्ष्यज ॥ ५ ॥ प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः ॥ पारतन्त्र्याद्वैसादृश्याद्द्वयोश्चेष्टैवचेष्टताम् ॥ ६ ॥ कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम् ॥ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७ ॥ तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः ॥ ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥

भक्तयर्थरूपस्त्वमेव ! त्वत्त इदं विश्वं पृथग् भोग्यभोक्तृरूपयोः साक्षादीश्वरस्त्वमेव ॥४॥ हे अधोक्षज ! अजस्त्वमेतन्नानाविधं विश्वं विभर्षि ॥५॥ यथा वेधशक्तिर्बाणस्य न किंतु पुरुषस्य । तथा प्राणादीनां यास्ता ईश्वरस्यैव ॥६॥ किं च । चन्द्रस्य कान्तिः ! अग्नेस्तेजः । अर्कस्य प्रभा । विद्युल्लतानां स्फुरणम् । पर्वतानां स्थैर्यं । भूमेर्गन्धः ॥ ७ ॥ अपां रसः । वायोर्गतिः । एषा तवैव शक्तिः ॥ ८ ॥

१ अस्य विश्वस्य । २ द्वयोः भगवतः प्राणादिवर्गस्य च चेतनाचेतनत्वेन विसदृशत्वात् । ३ चेष्टमानानामेषांचेष्टैव न तु शक्तिः । ४ वस्तुतः । ५ तृप्तिजनकत्वम् । ६ जीवनहेतुत्वम् ।

दिशां अवकाशः ॥९॥ इन्द्रियाणां विषयप्रकाशनशक्तिः ॥१०॥ भूतेन्द्रियदेवतानां कारणं त्रिविधोऽहङ्कारः । सर्वमेतत् त्वम् ॥११॥ यथा मृत्सुवर्णादिकार्येषु घटकुण्डलादिषु नाशवत्सु च मृत्सुवर्णादिमात्रमनश्वरं तथा नाशवत्सु भावेषु शिष्यमाणं रूपं तत् त्वम् ॥१२॥ हे विभो ! एते त्रयो गुणाः तद्वृत्तयश्च परे ब्रह्मणि त्वयि मायया कल्पिताः सन्ति ॥१३॥ अतो यदि त्वयि कल्पिताः तथाऽपि वस्तुतस्ते त्वयि न सन्ति

दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ॥ नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः ॥ ९ ॥ इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः ॥ अवबोधो भवान् बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥ भूतानामसि भूतादिरिन्द्रियाणां च तैजसः ॥ वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥११॥ नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥ १२ ॥ सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ॥ त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥ तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः ॥ त्वं चामीषु विकारेषु ह्यन्यदाऽव्यावहारिकः ॥ १४ ॥ गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ॥ गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥ ॥ १५ ॥ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ॥ स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥ असावहं ममैवैते देहे चास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नाति भवान् सर्वमिदं जगत् ॥ १७ ॥ युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ ॥ भूभारक्षत्रक्षपण अवतीर्णौ तथाऽऽत्थ ह ॥ १८ ॥

॥१४॥ एवं तव सूक्ष्मां गतिं ज्ञात्वा देहाभिमानेन कृतकर्मभिर्जन्ममरणे प्राप्नोति ॥१५॥ किंच । अयं जनो यदृच्छया मनुष्यदेहं प्राप्य यः स्वार्थे प्रमत्तः तस्यायुर्वृथा गतम् ॥१६॥ हे कृष्ण ! असावहं ममैते । एवमिदं त्वं स्नेहपाशैर्बध्नासि ॥ १७ ॥ किंच । युवां मम सुतौ न । किं तु साक्षात्प्रधानपुरुषेश्वरौ स्थः । भूभारहरणायावतीर्णौ ॥ १८ ॥

१ आकृतीनां पदार्थानाम् । पृथक् स्मृतिः करणमभिधानं यस्मात् तत् पद सुवन्तं च तिङन्तं वर्णपदाद्यात्मिका वैखरी च त्वामित्यर्थः । २ अध्यवसायशक्तिः । ३ प्रतिसंधानशक्तिः । ४ प्रकृतिः । ५ जीवानाम् । ६ अधिकल्पकः । ७ पट्तरेन्द्रियाम् । ८ पुत्राविषु ।

अतो हे आर्तबन्धो ! संसृतिभयनाशकं ते पादारविन्दं शरणं प्राप्तोऽस्मि । येनाहं देह आत्मबुद्धिस्त्वयि परमेश्वरे पुत्रबुद्धिश्च ॥१९॥ किंच । अहं परमेश्वरो नेति वदसि चेत् तत्राह ॥ हे भगवन् ! प्रतियुगं स्वधर्मरक्षणायाज एवं संजज्ञे इति भवान् सूतिकागृहे जगाद तस्य सर्वगतस्य मायां को वेद ॥२०॥ श्रीशुक उवाच । हे राजन् ! श्रीकृष्णः इत्थं पितुर्वाक्यं श्रुत्वा हसन् तमाह ॥२१॥ श्रीभगवानुवाच । हे तात ! पुत्रानुद्दिश्य त्वया तत्त्वग्रामो निरूपितः । एतत् ते वचो युक्तार्थं मन्यामहे ॥ २२ ॥ हे पितः अहमसौ रामो यूयमेते सर्वे चराचरं विश्वं ब्रह्मत्वेन

तते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ॥ एतावताऽलमलमिन्द्रियलालसेन[1] मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥ सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ॥ नानातनूर्गगनवद् विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥ श्रीशुक उवाच ॥ आकर्ण्येत्थं पितुर्वाक्यं भगवान् सात्वतर्षभः ॥ प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥ श्रीभगवानुवाच ॥ वचो वः समवेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान् समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥ अहं यूयमसावार्य इमे च द्वारकौकसः ॥ सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥ २३ ॥ आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ॥ आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते॥२४॥खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम्॥आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि ॥ २५ ॥ श्रीशुक उवाच ॥ एवं भगवता राजन् वसुदेव उदाहृतः ॥ श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतिमना अभूत् ॥ २६ ॥ अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ॥ श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७ ॥



विमृश्यम् ॥ २३ ॥ आत्मैको निर्गुणो गुणैर्भूतेषु बहुधा प्रतीयते ॥ २४ ॥ एकोऽप्यात्मा यथोपाधिपञ्चभूतकृतेष्वाविर्भावतिरोभावस्वल्पत्वमहत्त्वे नानात्वं याति ॥२५॥ श्रीशुक उवाच । एवमुक्तो वसुदेवो विनष्टनानाबुद्धिः सन् तूष्णीं बभूव ॥ २६ ॥ अथ देवकी रामकृष्णाभ्यां गुरोः पुत्रमानीतं श्रुत्वा ॥ २७ ॥

---

१ इन्द्रियार्थतृष्णया ।

कंसेन हिंसितान् स्वपुत्रान् स्मरति स्म । अश्रुलोचना सती दीनवत् तौ प्राह ॥ २८ ॥ देवक्युवाच ॥ हे राम ! हे कृष्ण ! आदिपुरुषौ वां जाने ॥२९॥ युवां भूमेर्भारायमाणानां राज्ञां नाशार्थं मय्यवतीर्णौ ॥ ३० ॥ हे विश्वात्मन् ! यस्यांशांशांशेन विश्वस्योत्पत्त्यादयो भवन्ति तं त्वां शरणं गताऽस्मि ॥३१॥ किञ्च । गुरुणा मृतपुत्रानयने प्रेरितौ सन्तौ यमस्थानात् तत्सुतमानीतवन्तौ ॥ ३२ ॥ तथा मे कामं कुरु-

कृष्णरामौ समाश्राव्य पुत्रान् कंसविहिंसितान् ॥ स्मरन्ती कृपणं प्राह वैक्लव्यादश्रुलोचना ॥ २८ ॥ देवक्युवाच ॥ रामरामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर ॥ वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ॥ २९॥ कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम्॥भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥३०॥ यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ॥ भवन्ति किल विश्वात्मंस्तं त्वाऽद्याहं गतिं गता ॥ ३१ ॥ चिरान्मृतसुतादाने गुरुणा किल चोदितौ ॥ आनिन्यथुः पितृस्थानाद् गुरवे गुरुदक्षिणाम् ॥ ३२ ॥ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ॥ भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥३३॥ श्रीशुक उवाच ॥ एवं संचोदितौ मात्रा रामः कृष्णश्च भारत ॥ सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥ तस्मिन् प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां तथात्मनः ॥ तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥३५॥ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ॥ दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद् यदम्बु ह ॥ ३६॥ समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७ ॥

तम् । कंसहतान् पुत्रान् द्रष्टुमिच्छामि ॥ ३३ ॥ श्रीशुक उवाच ॥ एवं मात्रा प्रेरितौ रामकृष्णौ सुतलं गतौ सन्तौ बलेः सद्म विविशतुः ॥ ३४ ॥ तदा बलिस्तावागतौ दृष्ट्वा सद्य उत्थायानन्देन सपरिवारो ननाम ॥ ३५ ॥ ततस्तयोर्वरासनं दत्त्वा तत्र तयोः पादौ प्रक्षाल्य तज्जलं सकुटुम्बः शिरसा दधार ॥ ३६ ॥ ततस्तौ प्रतिवस्त्राभरणानुलेपनताम्बूलामृतभक्षणादिभिः पूजयामास ॥ ३७ ॥

१ निधनार्थमिति शेषः । २ विश्वस्यात्मभूतं देवम् । ३ ययोः पादयोः अम्बुजलं गङ्गात्मकम् ।

ततो बलिर्भगवत्पदाम्बुजं मुहुर्मुहुर्धृत्वा हृष्टरोमा गद्गदाक्षरं जगाद ॥ ३८ ॥ बलिरुवाच ॥ अनन्ताय कृष्णाय ब्रह्मणे परमात्मने तुभ्यं नमो-
ऽस्तु ॥३९॥ रजस्तमःस्वभावानां नस्तव दर्शनं दुर्लभम् ॥ ४० ॥ दैत्यगन्धर्वसिद्धविद्याधरचारणा यक्षरक्षःपिशाचाश्च ॥ ४१ ॥ जयमन्ये च
सत्त्वस्वरूपे त्वयि नित्यं बद्धवैराः ॥ ४२ ॥ केचन वैरेण केचन भक्त्या केचन कामतो यथा त्वयि प्राप्ताः तथा देवादयः सत्त्वगुणात्मका

स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ॥ उवाच हाऽनन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप-
गद्गदाक्षरम् ॥ ३८ ॥ बलिरुवाच ॥ नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे ॥ साङ्ख्ययोगवितानाय ब्रह्मणे पर-
मात्मने ॥ ३९ ॥ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ॥ रजस्तमःस्वभावानां यन्नः प्राप्तो यदृच्छया ॥४०॥
दैत्यदानवगन्धर्वाः सिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ४१ ॥ विशुद्धसत्त्वधाम्न्यद्धा
त्वयि शास्त्रशरीरिणि ॥ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥ ४२ ॥ केचनोद्बद्धवैरेण भक्त्या केचन
कामतः ॥ न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३ ॥ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ॥ न विद-
न्त्यपि योगेशा योगमायां कुतो वयम् ॥ ४४ ॥ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणान्यगृहान्धकू-
पात् ॥ निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सर्वसखैश्चरामि ॥ ४५ ॥ शाध्यस्मानीशितव्ये-
श निष्पापान् कुरु नः प्रभो ॥ पुमान् यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥ ४६ ॥

अपि त्वत्स्वरूपं न प्राप्ताः ॥४३॥ हे योगेश्वर ! योगेशास्तव योगमायां न विदन्ति । वयं तु कुतः ॥ ४४ ॥ हे ईश ! यथा निष्कामः सन्
गृहान्धकूपात् निर्गत्य वने गलितफलादीन् भक्षयन् त्वां ध्यायन् चरामि तथा कुरु ॥४५॥ हे प्रभो ! आज्ञापय नः निष्पापान् कुरु ॥४६॥



१ आप्तकामैर्विमृग्यं तव पादारविन्दं तदेवाश्रयस्तस्मादन्यद् गृहं स एवान्धकूपस्तस्मात् । २ विश्वस्य शरणं=रक्षितास्तेषामङ्घ्रिमूलेषु स्वत एव गलितैः फलादिभिरुपलब्धा=प्राप्ता वृत्तिः जीविका येन सः । ३ सर्वेषां सखायः=महान्तः । ४ ईशितव्याः=जीवाः । तेषामीश । ५ विधिनिषेधलक्षणायाः ।

श्रीभगवानुवाच । हे बले! स्वायम्भुवमन्वन्तरे मरीचेः सकाशादूर्णायां षट् पुत्रा आसन् । ते स्वकन्यां प्रति मैथुनायोद्युक्तं ब्रह्माणं जहसुः ॥४७॥ ततस्ते तत्क्षणमेव ब्रह्मशापेनासुरीं योनिं प्राप्ताः सन्तो हिरण्यकशिपोः सकाशाज्जाताः॥४८॥ ततस्ते तस्माद्योगमायया ऽऽकर्षिताः सन्तो देवक्या उदरे जाताः ते च कंसेन नाशिताः । अतो देवकी तान् शोचति । ते इमे तव समीपं आसते॥४९॥ अत इतो मातृशोकदूरीकरणे एतान्नेष्यामः । ततः शापाद् मुक्ताः सन्तो देवलोकं गमिष्यन्ति॥५०॥ ते च स्मरः १ उद्गीथः २ परिष्वङ्गः ३ पतङ्गः ४ क्षुद्रभृत् ५ घृणी ६ इमे षट् मत्प्रसादेन मोक्षं

श्रीभगवानुवाच ॥ आसन्मरीचेः षट् पुत्रा ऊर्णायां प्रथमेऽन्तरे ॥ देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥ ४७ ॥ तेनासुरीमगन्योनिमधुनाऽवद्यकर्मणा ॥ हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥ ४८ ॥ देवक्या उदरे जाता राजन्कंसविहिंसिताः ॥ सा ताञ्शोचत्यात्मजान्स्वांस्त इमेऽध्यासतेऽन्तिके ॥ ४९ ॥ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततः शापाद् विनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥ ५० ॥ स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद् घृणी ॥ षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम् ॥ ५१ ॥ इत्युक्त्वा तान्समादाय इन्द्रसेनेन पूजितौ ॥ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥ अपाययत्स्तनं प्रीता सुतस्पर्शपरिप्लुता ॥ मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५४ ॥ पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ॥ नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥ ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् ॥ मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥ ५६ ॥ तद् दृष्ट्वा देवकी देवी मृतागमननिर्गमम् ॥ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥ ५७ ॥

यास्यन्ति॥५१॥ इत्युक्त्वा तान्गृहीत्वा पुनर्द्वारवतीमागत्य मातुः पुत्रान्समर्पयामासतुः॥५२॥ ततो देवकी तान् पुत्रान् दृष्ट्वा स्नेहस्रवत्स्तनी॥५३॥ प्रीत्या स्तनं पाययामास॥५४॥ ततस्ते कृष्णस्य पीतावशेषममृतमयं तस्याः पयः पीत्वा नारायणाङ्गस्पर्शेनप्राप्तज्ञानाः सन्तः॥५५॥ गोविंदं देवकीं वसुदेवं रामं च नमस्कृत्य सर्वभूतानां पश्यतां सतां देवलोकं ययुः ॥५६॥ तेषां मृतानामागमननिर्गमने दृष्ट्वा देवकी कृष्णस्य मायां मेने॥५७॥

हे राजन्! एवं विधानि वीर्याण्यनन्तस्यानन्तानि सन्ति॥५८॥सूत उवाच॥इदं व्यासपुत्रेण वर्णितं मुरारेश्चरितं यः श्रृणोति श्रावयेद्वा स भगवति प्रवेशितचित्तः सन् तल्लोकं याति ॥५९॥ इति श्रीभागवते द० चू० उ० पञ्चाशीतितमोऽध्यायः॥८५॥षडशीतितमे दम्भात्सुभद्रामर्जुनोऽहरत् ॥ गत्वा च मिथिलां कृष्णो नृपविप्रावनन्दयत् ॥१॥ राजोवाच॥हे ब्रह्मन् अर्जुनो रामकृष्णयोर्भगिनीं सुभद्रां यथोपयेमे तद् ज्ञातुमिच्छामः॥१॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पृथ्वीं पर्यटन् प्रभासं गतः। तत्र रामः सुभद्रां दुर्योधनाय दास्यति । अपरे वसुदेवादयो न दास्यन्तीति

एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ॥ वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत॥५८॥सूत उवाच ॥ य इदमनुश्रृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः॥जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे मृताग्रजानयनं नाम पञ्चाशीतितमोऽध्यायः ॥८५॥ राजोवाच ॥ ब्रह्मन्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ॥ यथोपयेमे विजयो या ममासीत्पितामही ॥ १ ॥ श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ॥ गतः प्रभासमश्रृणोन्मातुलेयीं स आत्मनः ॥ २ ॥ दुर्योधनाय रामस्तां दास्यतीति न चापरे ॥ तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ॥ ३ ॥ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः ॥ ४ ॥ एकदा गृहमानीय आतिथ्येन निमन्त्र्य तम् ॥ श्रद्धयोपाहृतं भैक्ष्यं बलेन बुभुजे किल ॥५॥ सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ॥ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥ ६ ॥ साऽपि तं चकमे वीक्ष्य नारीणां हृदयङ्गमम् ॥ हसन्ती व्रीडितापाङ्गी तन्न्यस्तहृदयेक्षणा ॥ ७ ॥ तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः ॥ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥८॥

शुश्राव । तां सुभद्रामिच्छुरर्जुनस्त्रिदण्डी यतिवेषं धृत्वा द्वारकां जगाम॥२॥३॥तत्र वार्षिकान् मासानुवास । तत एकदाऽजानता रामेणातिथ्येन निमन्त्र्य गृहमानीतः श्रद्धया परिविष्टं भैक्ष्यं स्वार्थसाधकोऽर्जुनो बुभुजे॥४॥५॥तदा सोऽर्जुनस्तत्र महतीं मनोहरां कन्यां वीक्ष्य तस्यां मनो दधे ॥६॥ साऽपि तं वीक्ष्य हसन्ती लज्जया सती पश्यन्ती तं चकमे ॥७॥ ततोऽर्जुनस्तां हर्तुमवसरं प्रेप्सुः कामेन भ्रमच्चित्तः सन् सुखं न लेभे ॥८॥

तत एकदा देवयात्रायां रथस्थां तामर्जुनो वसुदेवदेवक्योः कृष्णस्य चानुमतेन॥९॥ रथस्थः सन् धनुरादाय वेष्टनं कुर्वतो भटान् विद्राव्य स्वभागं सिंह इव जहार॥१०॥ तत् श्रुत्वा रामोऽक्रुध्यत । तदा कृष्णेन गृहीतपादोऽन्वशाम्यत ॥११॥ ततो बलो वरवध्वोर्महाधनोपस्करहस्तिरथाश्वनरयोषितः पारिबर्हाणि प्राहिणोत्॥१२॥ श्रीशुक उवाच॥ हे राजन्! श्रीकृष्णस्य सखा शान्तोऽलम्पटः श्रुतदेव इति विप्र आसीत्॥१३॥ स गृहस्थाश्रमी यदृच्छालाभसंतुष्टः शान्तः सन् मिथिलायामुवास। शरीरादिनिर्वाहमात्रं भोज्यं प्रत्यागच्छति नाधिकम्। तेन यथोचिताः क्रियाश्चक्रे

महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ॥ जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥ ९ ॥ रथस्थो धनुरादाय शूरांश्चारुन्धतो भटान् ॥ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥१०॥ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ॥ गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥ प्राहिणोत् पारिबर्हाणि वरवध्वोर्मुदा बलः ॥ महाधनोपस्करेभरथाश्वनरयोषितः ॥ १२ ॥ श्रीशुक उवाच ॥ कृष्णस्यासीद् द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ॥ कृष्णैकभक्त्या पूर्णार्थः शांतः कविरलम्पटः ॥ १३ ॥ स उवाच विदेहेषु मिथिलायां गृहाश्रमी ॥ अनीहयाऽऽगताहार्यनिर्वर्तितनिजक्रियः ॥ १४ ॥ यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ॥ नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥ १५ ॥ तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः ॥ मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥ १६ ॥ तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम् ॥ आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥ १७ ॥ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ॥ अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १८ ॥ तत्र तत्र तमायान्तं पौरा जानपदा नृप ॥ उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥ १९ ॥ आनर्तधन्वकुरुजाङ्गलकङ्कमत्स्यपाञ्चालकुन्तिमधुकेकयकोसलार्णाः ॥ अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ २० ॥

॥१४॥१५॥तथा बहुलाश्व इति विश्रुतस्तद्राष्ट्रपालः आसीत्। एतावुभावप्यच्युतप्रियौ॥१६॥अतस्तयोः प्रसन्नो भगवान् रथमारुह्य मुनिभिः सह विदेहान् प्रययौ ॥१७॥ ते च ऋषयः। नारदः१वामदेवः२अत्रिः३व्यासः४परशुरामः५अहम्६असितः७अरुणिः८बृहस्पतिः९कण्वः१०मैत्रेयः११च्यवनादयः॥१८॥एवमादिमुनिभिः सह प्राप्तं श्रीकृष्णं श्रुत्वा पौरा जानपदा गृहीतार्हणपाणयः आजग्मुः॥१९॥ तत आनर्तकुरुजाङ्गलमत्स्य-

विदेहान् ययौ ॥२१॥ तैर्गीतं स्वयशः शृण्वन् तेभ्योऽभयं प्रयच्छन् स कृष्णोऽपि ॥२०॥ पपुः

पाञ्चालादिदेशवर्तिन्यो नृनार्यो दृग्भिस्तन्मुखकमलं पपुः ॥२०॥ स कृष्णोऽपि तेभ्योऽभयं प्रयच्छन् तैर्गीतं स्वयशः शृण्वन् विदेहान् ययौ ॥२१॥

ततस्ते पौराः जानपदाः प्राप्तमच्युतं श्रुत्वाऽर्हणपाणयः संमुखं ययुः ॥२२॥ ततस्त उत्तमश्लोकं दृष्ट्वा कृष्णमृषींश्च शिरोभिः प्रणेमुः ॥२३॥

तथा मैथिलश्रुतदेवौ स्वानुग्रहाय प्राप्तं कृष्णं मत्वा तस्य पादयोः पेततुः ॥२४॥ ततो मैथिलः श्रुतदेवश्च युगपद् मुनिभिः सह कृष्णमातिथ्येन

तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ॥ शृण्वन् दिगन्तधवलं स्वयशोऽशुभघ्नं
गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥ २१ ॥ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ॥ अभीयुर्मुदितास्तस्मै गृही-
तार्हणपाणयः ॥ २२ ॥ दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ॥ कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥
॥ २३ ॥ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् ॥ मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥२४॥ न्यमन्त्र-
येतां दाशार्हमातिथ्येन सह द्विजैः ॥ मैथिलः श्रुतदेवश्च युगपत् संहताञ्जली ॥२५॥ भगवांस्तदभिप्रेत्य द्वयोः प्रिय-
चिकीर्षया ॥ उभयोराविशद् गेहमुभाभ्यां तदलक्षितः ॥ २६ ॥ श्रोतुमप्यसतां दूराञ्जनकः स्वगृहागतान् ॥ आनी-
तेष्वासनाग्र्येषु सुखासीनान्महामनाः ॥ २७ ॥ प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः ॥ नत्वा तदङ्घ्रीन् प्रक्षाल्य
तदपो लोकपावनीः ॥२८॥ सकुटुम्बो वहन् मूर्ध्ना पूजयाञ्चक्र ईश्वरान् ॥ गन्धमाल्याम्बराकल्पधूपदीपार्घगोवृषैः
॥२९॥ वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ॥ पादावंकगतौ विष्णोः संस्पृशन् शनकैर्मुदा ॥३०॥ राजोवाच ॥
भवान् हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो ॥ अथ नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः ॥ ३१ ॥



न्यमन्त्रयताम् ॥२५॥ भगवान् तदङ्गीकृत्य द्वयोः प्रियचिकीर्षया द्विधा रूपं कृत्वोभाभ्यामलक्षितः सन्नुभयोर्गृहं प्राविशत् ॥ २६ ॥ ततो
जनको गृहागतान् तान् सहकृष्णान् मुनीन् नत्वा तदङ्घ्रीन् प्रक्षाल्य तज्जलम् ॥२७॥२८॥ सकुटुम्बो मूर्ध्ना धारयन् गन्धमाल्याम्बरादिभि-
स्तान् पूजयाञ्चक्रे ॥२९॥ विष्णोरङ्कगतौ पादौ संमर्दयन् मधुरवाण्या प्रीणयन्नुवाच ॥३०॥ राजोवाच । हे भगवन् ! त्वं भूतानामात्मा ॥३१॥

१ तत्त्वज्ञानम् । २ असतां श्रोतुमपि दूरान् दुर्जनानां श्रवणेन्द्रियस्याप्यविषयान् ।

किञ्च । बन्धुः भार्या ब्रह्माऽपि अनन्यभक्तान् न मे प्रियतमाः इति स्ववचः सत्यं कर्तुं नो दृग्गोचरो जातः ॥३२॥ अतस्त्वच्चरणकमलं को नु पुमान् विसृजेत् । त्वं निष्किञ्चनानां मुनीनामात्मदः ॥३३॥ यो भवान्यदुकुलेऽवतीर्य संसारोपशमाय यशो वितेने ॥३४॥ तस्मै कृष्णाय शान्ताय नारायणाय तुभ्यं नमः ॥ ३५ ॥ किं च । हे भूमन् ! मुनिभिः सह कतिचिद् दिनानि नो गृहान् स्थित्वा पादरजसा निमेः कुलं पुनीहि ॥ ३६ ॥ इति राज्ञा प्रार्थितो भगवान् पुरवासिनां कल्याणं कुर्वन्नुवास ॥३७॥ तथा श्रुतदेवोऽपि स्वगृहान् मुनिभिः सह प्राप्तमच्युतं

स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ॥ यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः ॥ ३२ ॥ को नु त्वच्चरणाम्भोजमेवंविद् विसृजेत् पुमान् ॥ निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥ ३३ ॥ योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ॥ यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम् ॥ ३४ ॥ नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे ॥ नारायणाय ऋषये सुशान्तं तप इयुषे॥३५॥दिनानि कतिचिद् भूमन् गृहान् नो निवस द्विजैः॥समेतःपादरजसा पुनीहीदं निमेः कुलम् ॥३६॥ इत्युपामन्त्रितो राज्ञा भगवाँल्लोकभावनः॥ उवाच कुर्वन् कल्याणं मिथिलानरयोषिताम् ॥३७॥ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा ॥ नत्वा मुनीन् सुसंहृष्टो धुन्वन् वासो ननर्त ह ॥३८॥ तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ॥ स्वागतेनाभिनन्द्याङ्घ्रीन्सभार्योऽवनिजे मुदा ॥ ३९ ॥ तदम्भसा महाभाग आत्मानं स गृहान्वयम् ॥ स्नापयाञ्चक्र उद्धर्षो लब्धसर्वमनोरथः ॥४०॥ फलार्हणोशीरशिवामृताम्भसा मृदा सुरभ्या तुलसीकुशाम्बुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनान्धसा[1] ॥ ४१ ॥ स तर्कयामास कुतो ममान्वभूद् गृहान्धकूपे पतितस्य संगमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥

नत्वा संहृष्टः सन् वस्त्राणि परिभ्रामयन्ननर्त ॥ ३८ ॥ ततस्तान्दर्भपीठाद्यासनेषूपवेश्य तदङ्घ्रीन् प्रक्षालयामास ॥ ३९ ॥ तदम्भसाऽऽत्मानं स गृहान्वयं स्नापयाञ्चक्रे ॥ ४० ॥ तत आमलकादिफलैः कंदमूलैः सुवासितजलैस्तुलस्यादिपुष्पैः पूजयाऽऽराधयामास ॥४१॥ ततः स गृहान्धकूपे पतितस्य मम मुनिभिः कृष्णेन च सह संगमः कुतः इति तर्कयामास ॥ ४२ ॥

१ सत्त्वविवर्धनं यदन्धः अन्नं तेन ।

ततस्तेषां समीपे सभार्यः स्थितः स कृष्णचरणं मर्दयन् जगाद ॥ ४३ ॥ श्रुतदेव उवाच । हे भगवन् ! अस्माकमद्यैव दर्शनं प्राप्तः इति न किन्तु यदा शक्तिभिरिदं सृष्ट्वा तस्मिन् स्वसत्त्या प्रविष्टः तदैव प्राप्तोऽसि ॥४४॥ भवानात्ममायया लोकं सृष्ट्वा तस्मिन् प्रविश्याऽवभासते ॥ ४५ ॥ किं च नित्यं श्रवणकीर्तनादिषु तत्परायणानां नृणां हृदि त्वं भासि । मम तु प्रत्यक्ष इति महद् भाग्यम् ॥४६॥ त्वं हृदिस्थोऽपि

सभार्यः स्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः ॥४३॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४ ॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४५ ॥ शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवन्दताम् ॥ नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥ हृदिस्थोप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम् ॥ ४७ ॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिङ्गमीयुषे स्वमाययाऽसंवृतरुद्धदृष्टये ॥ ४८ ॥ स त्वं शाधि स्वभृत्यान् नः किं देव करवामहे ॥ एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचरः ॥ ४९ ॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान् प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥ ५० ॥ श्रीभगवानुवाच ॥ ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरन्ति मया लोकान्पुनन्तः पादरेणुभिः ॥ ५१ ॥

सूपविष्टान् कृतातिथ्यान् श्रुतदेव उपस्थितः ॥

कर्मविक्षिप्तचेतसामतिदूरस्थोऽसि ॥४७॥ अध्यात्मविदां मोक्षप्रदायाज्ञानिनां संसारप्रदाय तुभ्यं नमोऽस्तु ॥ ४८ ॥ एवंभूतो भगवान् स्वभृत्यान् नः शिक्षयतु ॥ ४९ ॥ श्रीशुक उवाच । हे राजन् ! भगवान् तच्छुत्वा हस्तेन हस्तं गृहीत्वा प्रहसन्नाह ॥ ५० ॥ श्रीभगवानुवाच ॥ हे ब्रह्मन् ! तवानुग्रहाय प्राप्तानमून् मुनीन् विद्धि ॥ ५१ ॥

---

१ अहंकारादिभिः । २ अन्ति समीपे । ३ उपेतगुणः प्राप्तश्रवणकीर्तनादिसंस्कार आत्मा येषां तेषाम् ।४ सकारणं कार्यम् । अकारणं प्रकृतिः । तदुभयलिङ्गमुपाधिम् । ५ स्वमाययाऽलुप्तैश्वर्ययापि मायावित्वादन्येषां रुद्धा दृष्टिर्येन तस्मै ।

हे विप्र ! देवक्षेत्रतीर्थादयःकालेन पुनन्ति । एते तु दर्शनात्सद्यः पुनन्ति ॥५२॥ ब्राह्मणस्तपो विद्यादिना सर्वेषां श्रेष्ठोऽस्ति । मदुपासनयुक्तः किमु ॥५३॥ हे द्विज ! मम चतुर्भुजं रूपं ब्राह्मणात्प्रियं न । यतः सर्ववेदमयो विप्रः अहं सर्वदेवमयः ॥ ५४ ॥ दुष्टबुद्धय एवं न जानन्ति ॥५५ विप्रो विश्वस्य कारणभूता महदादयो मद्रूपाणीति चेतसि धत्ते ॥ ५६ ॥ तस्मादेतान्ब्रह्मर्षीन्मच्छ्रद्धयाऽर्चय । तेनाहमर्चितोऽस्मि ॥५७ ॥ श्रीशुक उवाच । इत्थं प्रभुणाऽऽदिष्टः श्रुतदेवः सकृष्णान्मुनीनाराध्य मैथिलेन सह सद्गतिं प्राप ॥ ५८ ॥ हे राजन् ! भगवानेवं

देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥ ब्राह्मणो जन्मना श्रेया-न्सर्वेषां प्राणिनामिह ॥ तपसा विद्यया तुष्टया किमु मत्कलया युतः ॥ ५३ ॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भु-जम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥ दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः ॥ गुरुं मां विप्रमात्मा-नमर्चादाविज्यदृष्टयः ॥ ५५ ॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया॥५६॥तस्माद्ब्रह्मऋषीनेतान् ब्रह्मन्मच्छ्रद्धयाऽर्चय ॥ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ५७ ॥ श्रीशुक उवाच ॥ स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान् द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥ ॥ ५८ ॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः ॥ ८६ ॥ परीक्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥ कथं चरंति श्रुतयः साक्षात् सदसतः परे ॥ १ ॥

तयोः सन्मार्गमुपदिश्य द्वारकां जगाम ॥ ५९ ॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायामुत्तरार्द्धे षडशीतितमोऽध्यायः ॥ ८६ ॥ सप्ताशी-तितमे नारायणनारदवादतः । वेदैः स्तुतिर्गुणालम्बा निर्गुणावधि वर्ण्यते ॥१॥ (पूर्वाध्यायान्ते भगवान्स्वभक्तयोः स्वतः प्रमाणभूतानां वेदानां ब्रह्मपरत्वमुपदिश्य जगामेत्युक्तम् ! तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानो राजा पृच्छति ) परीक्षिदुवाच ॥ हे ब्रह्मन् ! अनिर्देश्ये निर्गुणे सदसतः परे ब्रह्मणि गुणैर्वर्तमानाश्रुतयः कथं स्तुवन्ति ॥ १ ॥

---

१ देवादिनि यत्पुनन्ति तदप्यर्हत्तमानामीक्षया । २ प्रतिभादिषु पूज्यबुद्धयः । ३ ममैव सर्वत्रेक्षया ।

श्रीशुक उवाच ॥ हे राजन्! प्रभुर्जीवानां चतुर्विधपुरुषार्थसिद्धये बुद्धीन्द्रियमनःप्राणान् ससर्ज। अयमभिप्रायः सगुणमेवेश्वरं गुणैरनभिभूतं सर्वज्ञं सर्वेश्वरं सर्वोपास्यं सच्चिदानन्दं भगवन्तं श्रुतयः प्रतिपादयन्ति। एवं च साक्षादुपाधिनिषेधेन श्रुतीनां निर्गुण एव पर्यवसानम् ॥२॥ (अत्र चानादिशिष्टपरंपरागतत्वान्न सन्देहो युक्त इत्याह)। सैषोपनिषद् ब्रह्मपराऽस्ति। य एतां श्रद्धया धारयेत् स परं पदं प्राप्नुयात् ॥३॥ हे राजन्! अत्रार्थे तव नारायणनारदसंवादरूपमितिहासं वर्णयिष्यामि ॥४॥ एकदा नारदो लोकान्पर्यटन्नृषिं नारायणं द्रष्टुं बदरिकाश्रमं

श्रीशुक उवाच बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ॥ मात्रा[1]र्थं च भवा[2]र्थं च आ[3]त्मनेऽकल्प[4]नाय च ॥ २ ॥ सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः ॥ ३ ॥ अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः ॥ सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥५॥ यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥८॥ श्रीभगवानुवाच ॥ स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां[5] मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

ययौ ॥५॥ योऽस्मिन्भारतखण्डे नृणां क्षेमायाकल्पात्तप आस्थितः ॥६॥ नारदस्तत्र गत्वा ऋषिभिस्तत्र वेष्टितं नारायणं प्रणम्येदमेव पप्रच्छ ॥७॥ तदा नारायण ऋषीणां शृण्वतां सतां यः पूर्वं सनकादीनां जनलोकवासिनां ब्रह्मवादो बभूव तं नारदाय जगाद ॥८॥ श्रीनारायण उवाच ॥ हे नारद! पुरा जनलोके तत्रस्थानां जनकादीनां ब्रह्मविचारो बभूव ॥ ९ ॥



---

१ विषयार्थम्। २ भवः—जन्मलक्षणं कर्म। तत्प्रभृति कर्मकरणार्थमित्यर्थः। ३ आत्मने लोकान्तरगामिने आत्मनस्तत्तल्लोकभोगायेत्यर्थः। ४ अकल्पनाय—कल्पनानिवृत्तये। मुक्तये इत्यर्थः—अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः। ५ ब्रह्मणो मनसः जातानां सनकादीनां पुत्राणाम्।

तथा त्वय्यनिरुद्धमीशं द्रष्टुं श्वेतद्वीपं गते सति स ब्रह्मवादः प्रवृत्तः। यद् मां त्वं पृच्छसि। तत्रायं प्रश्नो जातः ॥१०॥ तत्र सर्वे सनकाद्या श्रुततपआदिभिस्तुल्या अप्येकं प्रवक्तारं कृत्वाऽन्ये त्रयः पप्रच्छुः ॥११॥ सनन्दन उवाच ॥ हे ऋषयः! इदं स्वसृष्टं प्रलये संहृत्य शक्तिभिःसह शयानमीश्वरं प्रलयान्ते प्रथमं निवासभूताः श्रुतयस्तत्प्रतिपादकवाक्यैः परमेश्वरं प्रबोधयामासुः॥१२॥ यथा शयानं नृपं बन्दिन उषसि गत्वा तत्पराक्रमैर्बोधयन्ति तद्वत् ॥१३॥ श्रुतय ऊचुः। हे अजित! उत्कर्षमाविष्कुरु। केन व्यापारेण सर्वजीवानामानन्दाद्यावरणाय गृहीतगुणां मायां नाशय। यतस्त्वं प्राप्तसमस्तैश्वर्योऽसि। ननु जीवा एव तां किं न हन्युरत आह। तेषां स्थावरजङ्गमात्मकशरीराणां त्वमेवान्तर्यामी

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ यत्र हाऽयमभूत् प्रश्नस्त्वं मां यमनु पृच्छसि ॥ १० ॥ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥११॥ सनन्दन उवाच ॥ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः॥ तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥१२॥ यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १३ ॥ श्रुतय ऊचुः ॥ जयजय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ॥ अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥ १४ ॥ बृहदुपलब्धमेतदवयन्त्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात ॥ अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथाभवन्ति भुवि दत्तपदानि नृणाम् ॥ १५ ॥

सर्वशक्त्युद्बोधकः। अतो न ते स्वतन्त्राः। नन्वहमेवाप्यविद्याहन्तेत्यत्र किं प्रमाणमिति चेद् मय्येवंभूतेऽहमेव प्रमाणम्। ननु कथं वेदप्रवृत्तिस्तत्राह। कदाचित् सृष्ट्यादिसमये मायया क्रीडमानं त्वां वेदाः प्रतिपादयन्ति ॥ १४ ॥ ननु श्रुतिभिरिन्द्राग्न्यादयः प्रतिपाद्यन्ते कथमहमेवेत्युच्यते इति चेत्तत्राह। हे ईश! एतदुपलब्धमिन्द्रादिकं सर्वं ब्रह्म त्वमेवेत्यवशेषतया जानन्ति। यतोऽविकारिणि त्वय्येवाऽस्य विश्वस्योत्पत्तिलयौ स्तः। यथा घटादेर्मृदि तद्वत्। अतो मंत्रास्त्वय्येव तात्पर्यविधानं धृतवन्तो न पृथग्विकारेष्वित्यर्थः। अत्र दृष्टान्तः। यथा नृणां कुत्रापि क्षिप्तानि पदानि भुवि दत्तानि भवन्ति तथा यत्किमपि विकारजातं वदन्तो वेदाः परमार्थभूतं त्वामेव प्रतिपादयन्ति ॥ १५ ॥

१ निरुपमकरणा इत्यर्थः। २ चरन्तमित्यर्थः। कर्मणि षष्ठी।

किंच हे। त्रिगुणमायामृगीनर्तक! विवेकिनः सर्वजनपापनाशकं तव कीर्तिसुधाब्धिं प्रविश्य पापानि जहुः। यदा त्वत्कथामात्रेण पापत्यागस्तदा किं वक्तव्यं यैः स्वरूपस्फुरणेन रागादयोऽन्तःकरणगुणाः कालगुणा जरादयस्त्यक्तास्ते निरन्तरमखण्डानन्दमनुभवन्तीति ॥१६॥ अथ पूर्वोक्तोभयविधभजनहीनान्निन्दति। हे ईश! नरास्तव भक्ताश्चेत्तर्हि सफलजीवनाः। अन्यथा भस्त्रा इव वृथाश्वासाः। ननु तेषां कामादिफलमस्त्येव नेत्याह। यतो महदादयो यस्यानुप्रवेशेन वीर्यं प्राप्येदं समष्टिव्यष्टिरूपं सृष्टवन्तः। तत्र च पञ्च कोशानन्नमयादीन् प्रविश्य तत्तदाकारः सन् यश्चेतयते स पुरुषविधस्त्वम् ननु चिद्घनस्य कथं तत्तदाकारता। तत्राह। एष्वन्नमयादिषु तवान्वयात्। एवं तर्हि सत्यत्वमसङ्गत्वं च कथं तत्राह अन्नमयादिषु यः

इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथाऽमृताब्धिमवगाह्य तपांसि जहुः ॥ किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम् ॥१६॥ दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयोऽण्डमसृजन् यदनुग्रहतः पुरुषविधो[1]ऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥ उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम् ॥ तत उदगादनन्त तव धाम शिरः परमं पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥१८॥ स्वकृत[2]विचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्स्यनलवत् स्वकृतानुकृतिः ॥ अथ वितथास्वमूष्ववितथं तव धाम समं[3] विरजधियो[4]ऽन्वयन्त्यभिविपण्यव एकरसम्[5] ॥१९॥

पुच्छत्वेनोक्तः स त्वम्। तथाप्यसंगत्वहानिरेव तत्राह। यत् स्थूलसूक्ष्मान्नमयादेर्व्यतिरिक्तं तत् साक्षिभूतमबाध्यं सत्यं तव त्वं तर्हि किमर्थं तेष्वन्वय उक्तः। शाखाचन्द्रवत् स्वरूपलक्षणार्थम्॥१७॥ अथ भजनमेव दृढीकृत्य श्रुतयः स्तुवन्ति। ये ऋषिसंप्रदायमार्गेषु स्थूलदृष्टयस्ते उदरलम्बनं मणिपूरकस्थं ब्रह्म ध्यायन्ति। आरुणयस्तु साक्षान्नाडीप्रसारणस्थानं हृदयस्थं सूक्ष्ममेवोपासते। ततो हृदयाद् ब्रह्मरन्ध्रं प्रति तमोपलब्धिस्थानं सुषुम्नाख्यमुद्गतम्। यत्प्राप्य जनः पुनाः संसारे न पतन्ति॥१८॥ नन्वीशस्यापि जीववदुदरादिसंबन्धे सति केन विशेषेण सेव्यत्वमितीमां शङ्कां परिहरन्त्यः श्रुतयः स्तुवन्ति। हे ईश! त्वया कृतेषूच्चनीचमध्यमदेहेषु कारणतया विशन्निव वर्तमानस्त्वं न्यूनाधिकभावेनावभाससे

१ पुरुषस्यान्नमयादेर्विधेव विधोऽकारो यस्य स तथा। २ स्वकृता योनीरनुकरोतीति। अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण तथातथा प्रकाशते तद्वदित्यर्थः। ३ अविशेषम्। ४ अभितो विगतव्यवहार ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः। ५ सन्मात्रम्।

काष्ठेऽग्निरिव। अत एषु मिथ्याभूतदेहेषु सत्यं तव स्वरूपं निर्मलधियो जानन्ति। अतोऽप्रच्युतैश्वर्यस्य तवैवोपास्यत्वमिति॥ १९॥ काश्चिच्छ्रुतयः कृतावतारस्य भगवतश्चरणभजनमुपायं वदन्तीत्याह। स्वकर्मोपार्जितनरादिदेहेषु भोक्तृत्वेन वर्तमानं पुरुषं त्वद्रूपं वदन्ति। एवं जीवस्य तत्त्वं विशोध्य कवयो मर्त्यलोके भवनिवर्तकं तेऽङ्घ्रिं सेवन्ते ॥ २० ॥ अथ पुनश्च भक्तिमेव दृढीकरोति। भो ईश्वर! दुर्बोधस्य स्वरूपस्य ज्ञानार्थमाविष्कृतमूर्तेस्तव चरितमहामृताब्धाववगाहेन गतश्रमा ये ते तव चरणसरोजे हंसवद्रममाणसाधुवृन्दसंगेन विसृष्टगृहाः सन्तो मोक्षमपि नेच्छन्ति कुतोऽन्यत्। एवं तावद् भक्तेराधिक्यं सूचितम् ॥२१॥ किंच श्रुतय ईश्वरे रतिमुपदिशन्तीत्याह। हे ईश! त्वत्सेवौपयिकं शरीरं सुहृदादिवत् स्वाधीनतया वर्तते।

स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम्[2] ॥ इति नृगतिं विविच्य कवयो निगमावपनं[3] भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥२०॥ दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥ न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २१ ॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ॥ न बत रमन्त्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ २२ ॥ निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥ स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ २३ ॥ क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये ॥ तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ २४ ॥

एवं सत्यपि ये जीवा उन्मुखत्वात्सुसेव्यं त्वां न भजन्ति ते आत्मघातिनः संसारे भ्रमन्ति ॥२२॥ अथ भगवतः स्मरणानुभावं वर्णयन्ति। हे प्रभो मुनयः प्राणादीन् जित्वा दृढयोगाभ्यासेन हृदि यत्तत्त्वमुपासते तदरयोऽपि तव स्मरणात्स्त्रियोऽपि कामतः प्रापुः तथा वयमपि समास्त्वदङ्घ्रिसरोजं सुष्ठु धारयन्त्यः ॥२३॥ भगवत्तत्त्वं दुर्ज्ञेयं वदन्त्यो भक्तिमेव श्रेष्ठां स्तुवन्ति। हे भगवन्! त्वत्तोऽर्वागुत्पत्तिनाशवान्पुमान्पूर्वप्रसिद्धं त्वां को वेद न कोऽपि। यतस्त्वत्तो ब्रह्मोत्पन्नः। ब्रह्माणमनु आध्यात्मिकाधिदैविका देवगणा उत्पन्नाः। तदा त्वं सर्वमाकृष्य शेषे। तदा जीवानां

---

१ वहिः कार्यम्। अन्तरं कारणं वस्तुस्तदावरणशून्यम्। तयोरसत्त्वादित्यर्थः। २ अंश इवांशः। कृत इव कृतः तवांशकृतं त्वद्रूपमित्यर्थः। ३ निगमोक्तकर्मणामावपनं क्षेत्रम्। सर्वकर्मार्पणविषयमित्यर्थः ४ देहाद्युपलालनेन। ५ यस्यामसदुपासनायामनुशयः वासना येषां ते। ६ अक्षम् इंद्रियम्। ७ परिच्छिन्नदृष्टय। इत्यर्थः। ८ कृपाविषयतयेति शेषः। ९ सममपरिच्छिन्नं त्वां पश्यन्त्यः।

स्वरूपज्ञानस्याशक्यत्वाद्ग्-
ज्ञानसाधनं नास्ति। यतस्तदा स्थूलमाकाशादि सूक्ष्ममहदादिशरीरं न। शास्त्रमपि नास्ति। भवानेक एवाऽवशिष्यते।
यद्यदुप-
वैशेषिकादयो जगत उत्पत्तिं वदन्ति। एवमादिवादिनो
क्तिरेव सुलभा॥२४॥ इतो ज्ञानं न सुशकम्। उपदिशतामपि भ्रमबाहुल्यादित्याहुः।
त्रिगुणमयः पुमानिति यो भेदः स त्वद्विषयाज्ञानविज्
दिशन्ति तद्भ्रान्त्यैव न तत्त्वदृष्ट्या। ननु पुरुषस्य त्रिगुणमयत्वे इदं संगच्छेत तत्तु नेत्याह।
ननु यद्यसन्नोत्पद्यते त्रिगुणमयः पुरुषो न भवति तर्हीदं प्रपञ्चजातं पुरुषश्च पृथङ्नास्तीत्युक्तं स्यात्
म्भितः ज्ञानघने त्वय्यबोधोऽपि न संभवति॥२५॥
कथं तर्हि तयोः सत्यत्वप्रतीतिरत आह। इदमसन्मनोमात्रविलसितं त्रिगुणात्मकं प्रपञ्चजातं मनुजमभिव्याप्य सदिव भाति। कथम्। अधिष्ठान

आरुपितैः॥ त्रिगुणमयः पुमानिति भिदा जनिमसतः संतो मृतिमुतात्मनि ये च भिदां विपणंमृतं स्मरन्त्युपदिशन्ति त यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥२५॥ सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात् सदभिमृश-
न्त्यशेषमिदमात्मतयाऽऽत्मविदः ॥ न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वंकृतमनुप्रविष्टमिदमात्मत-
याऽवसितम् ॥२६॥ तव परि ये चरन्त्यखिलसत्त्वनिकेततया त उत पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥ परि-
वयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥ २७ ॥ त्वमकरणः स्वराड-
खिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ॥ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति
यत्र ये त्वधिकृता भवतश्चकिताः ॥ २८ ॥

आत्मविदस्त्विदंविश्वंसदितिजानन्ति। आत्मकार्यत्वान्न
सत्यतया सत्यवत्प्रतीयते। नन्वात्मविदामपि विश्वं सदेवस्फुरतिकथंमिथ्येत्यत आह।
ननु भगवत्प्रतिपादकं ज्ञानं सुखकर मेवेति
पृथगित्यर्थः। अत्र दृष्टान्तः। यथा कनकार्थिनः सुवर्णविकारं कुण्डलादिकं तदात्मतयैव गृह्णन्ति॥२६॥
येत्वय्यभक्तास्तान्
न भक्त्याप्रयोजनमिति चेदाह। हे भगवन्! ये त्वामखिलनिवासभूतस्थानत्वेन सेवन्ते ते तिरस्कृत्य मृत्योर्मूर्धनि पदं ददति।
नन्वीश्वरस्य सर्वभूतावास-
विदुषोऽपि वाण्या पशूनिव बध्नासि ते आत्मानं न पुनन्ति। ये त्वयि कृतसौहृदास्ते खल्वात्मानं पवित्रयन्ति॥२७॥
हेईश! त्वमिन्द्रियरहितोऽपि
त्वात् कर्तृत्वादि प्राप्तम्। अतोजीवेश्वरयोस्तुल्यत्वात् कथं सेव्यसेवकत्वमित्याशङ्कां हरन्त्यः श्रुतयः स्तुवन्ति।

१ सत एकैकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदंति नैयायिकाः। २ आत्मनि भेदं पश्यन्ति साङ्ख्यादयः। ३ कर्मफलव्यवहारं सत्यं स्मरन्ति मीमांसकाः। ४ स्वकृतमिदं विश्वमनुप्रविष्टं पुरुषरूपमात्मतयं वावसितं निश्चितम्।

स्वतः सिद्धज्ञानशक्तिः सर्वेन्द्रियशक्तिधरोऽसि। अतो ब्रह्मादयो देवास्तव पूजां कुर्वन्ति। तथा ते मनुष्यैर्दत्तं बलिं स्वयं भक्षयन्ति। यथा खण्डमण्डलपतयो नृपाः सार्वभौमाय बलिं समर्पयन्ति तद्वत्। मायाऽऽवृताः सर्वे देवादयो यस्मिन्कर्मणि नियुक्तास्तत्त्वतो भीताः कुर्वन्ति ॥ २८ ॥ हे नित्यमुक्त ! यदा तव मायया क्रीडा भवति तदा सर्वे जीवाः स्युः। ननु मयि लीनानां जीवानां कथं जन्म स्यात् तत्राह हे जीवास्तवावलोकनेनैवाऽऽविर्भूतकर्मभिः संयुज्योत्पद्यन्ते। ननु किं निमित्तान्तरकल्पनया जीवोत्पादनं मदिच्छयैव भवतु न त्वयि वैषम्या-भावादित्याह। तव समस्य स्वीयः परश्च नास्ति ॥२९॥ हे ध्रुव ! जीवा अनन्ता नित्याः सर्वगताश्च यदि स्युः तर्हि तेषां समत्वात् शास्यता

स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥ न हि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवाऽपदस्य तव शून्यतुलां दधतः ॥ २९ ॥ अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ॥ अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥ ३० ॥ न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ॥ त्वयि त इमे ततो विविध-नामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ ३१ ॥

न घटेत नियमनं त्वया न स्यात्। इतरथा तु घटेत। कथम्। यन्मयमुपाधितो यद्विकारप्रायं यज्जीवाख्यं विकारप्रायजातं तत्स्वविकारस्य नियामकं भवेत् जानीम इति वदतामविज्ञातप्रायं यद् न जानीम इति वदतां ज्ञातप्रायं एवंभूतं किमपि समं नियन्तृ भवेत् ॥ ३० ॥ अथ जीवानामुपाधिजन्मनैव जन्मोच्यते। न स्वतः। अघटनात् इत्याह। अजयोः प्रकृतिपुरुषयोर्जीवरूपेणोद्भवो न घटते। उभयोः परस्परसङ्गेन जीवा जायमानाः। यथा जलबुद्बुदाः केवलेन जलेन वायुना वा न भवन्ति किंतु मिलिताभ्यां तद्वत्। एवंभूता जीवास्त्वय्यनेकप्रकार-कार्योपाधिभिः सह लीनाः स्युः सुषुप्तिप्रलययोर्मुक्तौ च क्रमेण मधुनि सर्वकुसुमरसा इव सरितः समुद्र इव लीयन्ते ॥ ३१ ॥

---

१ ततः अजातः—मायायाः। परस्य—दूरे वर्तमानस्य। २ न पद्यत इत्यपदः तस्य। वाङ्मनसयोरगोचरस्येत्यर्थः। ३ कारणतयाऽपरित्यज्य। ४ अनुस्यूतम्। ५ मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात्। ६ निरुपाधौ।

संसारचक्रभ्रमणमुक्तम् । इदानीं संसारनिवृत्तये भगवद्भावं
एवं परमेश्वराज्जीवा जायन्ते–तद्वशेन च कर्माणि कुर्वन्ति–पुनस्तत्र लीयन्त इति संसारचक्रभ्रमणमुक्तम् । इदानीं संसारनिवृत्तये भगवद्भावं श्रुतयो विदधतीत्याह । हे ईश ! सुधियो जीवेषु त्वन्मायया भ्रमणं ज्ञात्वा त्वयि भावं कुर्वन्ति । एवं त्वां भजतां भवभयं न स्यात् कुतः–यस्मात्तव भ्रूभङ्गरूपः कालो भवान् शरणं येषां न तेषु । किन्तु अभक्तेष्वेव भवभयं करोति ॥३२॥ मनसि नियमे सतीश्वरे भावो भवति । सोऽपि गुरुप्रसादाद् ज्ञानं दधाति अतो गुरुप्रसादज्ञानार्थं गुरुमेवाभिगच्छेदित्याह । हे अज ! ये गुरोश्चरणं हित्वा जितेन्द्रियप्राणैर्नरैरपि दुर्दमनं मनोरूपं तुरङ्गं वशीकर्तुं यत्नं कुर्वन्ति खिद्यन्ते चोपायेषु ते दुःखाकुलाः सन्तः इह संसारे दुःखमेव प्राप्नुवन्ति । तथा जलधावकृतकर्णधारा वणिजः ।

**नृषु तव मायया भ्रममभीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम्[1] ॥ कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिर[2]भवच्छरणेषु भयम् ॥३२॥ विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यन्तुमतिलोलमुपायखिदः ॥ व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाऽज सन्त्यकृतकर्णधरा जलधौ ॥३३॥ स्वजनसुतात्मदारधनधामधराऽसुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ॥ इति सदजानतां मिथुनतो रतये चरतां सुखयति को न्विह स्वविहते[3] स्वनिरस्तभगे[4] ॥३४॥ भुवि पुरु[5]पुण्यतीर्थसदनान्यृषयो विमदास्त उतभवत्पदाम्बुजहृदो[6]ऽघभिदङ्घ्रिजलाः ॥ दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान्[7] ॥ ३५ ॥**

कीदृशो गुरुः 'प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा । देशाभाषादिभिः शिष्यं बोधयेत्स गुरुः स्मृतः' इति तस्माद्गुरुयुतानां सर्वं सिध्यतीति भावः ॥३३॥ अथ श्रुतयो भक्तेरङ्गं वैराग्यं विदधतीत्याह । हे ईश ! सुखरूपे त्वयि सति नृणां तदभक्तस्य तुच्छैः स्वजनसुतदेहादिभिः क उपयोगः । एवं सत्यं परमार्थसुखमजानतः अत एव स्त्रिया च सह मिथुनीभूय वर्तमानान्पुरुषान्संसारे कोऽर्थः सुखयति न कोऽपि । अतस्त्वद्भजनमेवोचितम् ॥३४॥ अथ श्रुतयः सत्संगेन तत्त्वज्ञानं दृढं स्यादित्याहुः । मुनयः स्वयं पूता अपि निरहङ्कारा भुवि पुण्यतीर्थक्षेत्राण्येव सेवन्ते । यतस्तत्रैव सत्सङ्गो भवति । एवंभूता एते पुनर्गृहान्न सेवन्ते । सकृदपि त्वयि ये मनो दधति तेऽपि गृहादिष्वासक्ता न भवन्ति किं पुनरेवंभूता इति ॥३५॥



---

१ अनु अन्वनु प्रभावोर्यस्मिस्तं भ्रमम् । २ तिस्रो नेमय इवावच्छेदाः शीतोष्णवर्षाकाला यस्य संवत्सरात्मकस्य कालस्य सः । ३ स्वत एव नश्वरे । ४ स्वत एव शतसारे । ५ बहु । ६ भवतः पदाम्बुजं हृदि येषां ते । ७ पुरुषाणां सारं विवेकस्थैर्यधैर्यक्षमाशांतिप्रमुखं हरन्तीति तयाभूतानावसथान् गृहान् ।

मुनयस्तीर्थानि पर्यटन्तीत्युक्तम्। इदानीं प्रश्नोत्तराभ्यामनेन तत्त्वावधारणप्रकारमाह। इदं विश्वं सत्यरूपादुत्पन्नम्।अतः सदिति चेन्न। यतः क्वचिद्व्यभिचारो यथा पितृपुत्रादिषु। क्वचिच्च मिथ्यात्वं यथा स्रक्सर्पादिषु। तथाप्युभययुग् न। किं तु व्यवहारीयान्धपरम्परया विकल्पः कृतः। हे भगवन्! तव वेदलक्षणा वाणी कर्म श्रद्धाभराक्रान्तमन्दमतीन्मोहयति ॥३६॥ तदेवं प्रपञ्चस्य सत्यत्वे साधकं नास्तीत्युक्तम्। इदानीमसत्त्वे प्रमाणमाह। इदं विश्वं सृष्टेः पूर्वं नासीत्। तथा प्रलयानन्तरमपि न भविष्यति। अतो मध्येऽपि न। तथापि त्वयि सत्ये मिथ्यारूपमेवभाति। यथा घटमुकुटादौ नामधेयतामात्रताकारणं मृदाद्येव सत्यम्। अतो य इदं सत्यमिति वदन्ति तेऽज्ञाः॥३७॥ अथ श्रुतयो जीवेश्वरयोर्विशेषमाहुः

सत इदमुत्थितं सदिति चेन्नतु तर्कहतं व्यभिचरति क्वचक्व च मृषा न तथोभययुक् ॥ व्यवहृतये विकल्प इषितो-ऽन्धपरम्परया भ्रमयति भारतीत उरुवृत्तिभिरुक्थजडान् ॥३६॥ न यदिदमग्र आस न भविष्यदतो निधनादनुमितम-न्तरा त्वयि विभाति मृषैकरसे॥ अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥३७॥ स यदजया त्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनुमृत्युमपेतभगः ॥ त्वमुत जहासि तामहिरिव त्वचमा-त्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥ यदि न समुद्धरंति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ॥ असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ ३९ ॥

हे ईश! यो माययाऽविद्यामालिङ्गत्ततो देहादिधर्मान्सदा सेवमान आच्छादितानन्दादिगुणः संसारं प्राप्नोति स जीवः। तदर्थं कर्मकाण्डम्। त्वं तु कन्चुकमहिरिव तां मायां जहासि।कथम्।अपरिमितैश्वर्यः। अतस्तवैव सेव्यत्वम्॥३८॥उक्तसाधनेन ये भगवन्तं भजन्ति ते मृत्युं तरन्तीतरे संसरन्तीत्युक्तम्।इदानीं ये बहिः सङ्गं परित्यज्य भगवन्मार्गे प्रवृत्ता अपि कामेच्छवस्ते दुःखं प्राप्नुवन्ति इत्याह। हे भगवन्! दाम्भिका यतयो हृदि स्थिताः कामवासना यदि नोत्पाटयन्ति तर्हि तेषां हृदयस्थोऽपि त्वं दुष्प्रापः। कथं विस्मृतकण्ठमणिरिव। किं च। तेषामिहामुत्र च दुःखमेवेत्याह। इह लोके जनाराधनद्रव्यसंपादनादिक्लेशाद्दुःखम्। परलोके भवतो दुःखम् ॥ ३९ ॥

१ इष्टः । २ बह्वीभिर्गौणलक्षणादिवृत्तिभिः । ३ द्रविणजातीनां–मृत्सुवर्णरूपाणां विकल्पा=भेदाः घटकुण्डलादयस्तेषां पन्थानः=मार्गाः=प्रकारास्तैः । ४ नित्यप्राप्तैश्वर्यः। ५ उत्सवे । ६ पूज्यसे=विराजसे । ७ अणिमाद्यष्टविभूतिमति । ८ इंद्रियतर्पणपराणाम् । ९ अनिवृत्तान्मृत्योः । १० अनधिरूढं पद=स्वरूपं यस्य तस्मात् ।

सुखदुःखसंबन्धा-नन्नु यतेर्नैकिमपि कृत्यमस्ति किमिति वृथा शप्यते तत्राह। हे हरे! तव ज्ञानं यो वेत्ति स पुमान् प्राचीनपुण्यकर्मणोः फलभूतान् सुखदुःखसंबन्धा-
नन्नु यतेर्नैकिमपि कृत्यमस्ति किमिति वृथा शप्यते तत्राह। हे हरे! तव ज्ञानं यो वेत्ति स पुमान् ... मनुजैर्नित्यं श्रवणेनान्तः करणे धृतस्त्वं तेषां मोक्षं ददासि। अतो
न्नानुसन्धत्ते तथा विधिनिषेधलक्षणां वाणीं नानुसंधत्ते।इदं तस्य योग्यम् । यतो मनुजैर्नित्यं श्रवणेनान्तः करणे धृतस्त्वं तेषां मोक्षं ददासि। अतो
योगकापटचेनेन्द्रियलालसानामुभयतोऽपि दुःखम्॥४०॥किंच।हे भगवन्!ब्रह्मादयः स्वर्गपतयस्तवान्तं न प्रापुः।कुतः।अनन्तत्वात् आस्तांतेन
प्रापुरिति यतस्त्वमपि स्वान्तं न यासि। कुतस्तर्हि सर्वज्ञतासर्वशक्तिता-तत्राह।अनन्ततया अन्ताभावेन। शशशृङ्गस्याज्ञानं सार्वज्ञ्यं न हन्ति।तद-
प्रप्तिर्वाशक्तिर्वैभवम् ।अनन्तत्वमेवाह। यस्य तव मध्ये सप्तावरणयुक्ता ब्रह्माण्डसमूहा कालचक्रेण खेरजांसीव परिभ्रमन्ति ।अतः श्रुतयोर्यद्दृष्टं

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ॥ अनुयुगमन्वहं सगुणगीतपरम्परया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥ द्युपतय एव त न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः ॥ ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥४१॥ श्रीभगवानुवाच॥ इत्येतद् ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम्॥ सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥४२॥ इत्यशेषसमाम्नायपुराणोपनिषद्रसः॥ समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥४३॥ त्वं चैतद् ब्रह्मदायाद श्रद्धयात्मानुशासनम् ॥ धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥४४॥ श्रीशुक उवाच ॥ एवं स ऋषिणा दिष्टं गृहीत्वा श्रद्धयात्मवान्॥ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः॥४५॥ नारद उवाच ॥ नमस्तस्मै भगवते कृष्णायामलकीर्तये॥ यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥४६॥ इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ॥ ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥४७॥

तन्नेति नेतितात्पर्यवृत्त्या त्वयि पर्यवस्यन्ति। एवं नहि। निरवधिर्निषेधः संभवतीतितावदवधिभूते त्वयि श्रुतयः फलंति॥४१॥ श्रीभगवानुवाच ॥ हेनारद! एवंब्रह्मपुत्रा आत्मानुशासनं श्रुत्वा सनन्दनमानर्चुः॥४२॥ एवं सर्वश्रुतिपुराणरहस्यतात्पर्यं सनकादिभिरुद्धृतम्॥४३॥ हेनारद! नृणांकामभर्जनमेतज्ज्ञानं त्वं धारयन् यथेच्छं महींचर॥४४॥ श्रीशुक उ०॥ एवंनारायणेन कथितंश्रुत्वा कृतकृत्यः श्रुतमर्थं मनसि धारयन्नैष्ठिको जगाद॥४५॥ नारद उवाच ॥ य ईशो भूतानां मोक्षार्थं कला धत्ते तस्मै भगवते कृष्णाय नमोऽस्तु ॥४६॥ एवं नारदो नारायणं तच्छिष्यांश्च नत्वा मम पितु-

१ भवतः कर्मफलदातुरीश्वराद् हेतोरुत्थयोः आविर्भूतयोः शुभाशुभयोः ।२ देहाभिमानिनां प्रवृत्तिनिवृत्तिकरीर्गिरः । ३ प्रतियुगं गीतपरम्परया=उपदेशसन्तत्यासत्संप्रदायानुसारिणेत्यर्थः । ४ अपवर्गरूपा गतिः । ५ भवतित्वयि निधनं=समाप्तिर्यासां ताः । ६ उशतीः=कामयमानाः ।

राश्रमं जगाम ॥ ४७ ॥ तेन संमानितो नारदो नारायणमुखोक्तं व्यासाय वर्णयामास ॥ ४८ ॥ एवं हे परीक्षित् ! त्वया निर्गुणे ब्रह्मणि श्रुतिः कथं चरेदिति यत् पृष्टं तत् मया कथितम् ॥४९॥ किंच य ईशः प्रकृति पुरुषेश्वर इदं विश्वं सृष्ट्वा तदनुप्रविश्य शरीराणि कृत्वा तानि शास्ति यं प्राप्य जीवोऽविद्यां त्यजति तं भयनिवर्तकं हरिं निरन्तरं ध्यायेत् ॥ ५० ॥ इति श्रीभा० द० चू० उ० सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते ततोऽर्वाग्देवभक्तस्तु विभूतिमिति वर्ण्यते ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन् । देवासुरमनुष्येषु ये

सभाजितो भगवता कृतासनपरिग्रहः ॥ तस्मै तद् वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥ इत्येतद् वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया ॥ यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि श्रुतिश्चरेत् ॥४९॥ योऽस्योत्प्रेक्षक आदिमध्यनिधने यो-ऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः ॥ यं संपद्य जहात्यजामनुशयि सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ५० ॥ इति श्रीभा० म० द० उ० नारायणनारदसंवादे वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ राजोवाच ॥ देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ॥ प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम् ॥ १ ॥ एतद् वेदितुमिच्छामः संदेहोऽत्र महान् हि नः ॥ विरुद्धशीलयोः प्रभ्वो-र्विरुद्धा भजतां गतिः ॥२॥ श्रीशुक उवाच ॥ शिवः शक्तियुतः शश्वत् त्रिलिंगो गुणसंवृतः ॥ वैकारिकस्तैजसश्च ताम-सश्चेत्यहं त्रिधा ॥३॥ ततो विकारा अभवन् षोडशामीषु कञ्चन ॥ उपधावन् विभूतीनां सर्वासामश्नुते गतिम् ॥४॥

शिवं भजन्ति ते बहुधा भोगिनो धनिनश्च भवन्ति । ये लक्ष्मीपतिं हरिं भजन्ति ते तु न ॥ १ ॥ अत्र महान् संदेहः यतो विरुद्धस्वभावयोः प्रभ्वोर्भजतां विपरीता गतिः । एतत् ज्ञातुमिच्छामः ॥ २ ॥ श्रीशुक उवाच ॥ हे राजन् ! शिवः शक्तियुक्तस्त्रिगुणसंवृतः सात्त्विकादिभेदेन त्रिधाऽभवत् ॥३॥ ततः षोडश विकारा अभवन् । अतः साधकः तपाधियुक्तां विभूतिं भजन् तस्या रूपं प्राप्नोति ॥ ४ ॥

---

१ जीवानां समस्तपुरुषार्थसिद्धये सृष्टिस्थितिप्रलयादिप्रापणीयमित्यालोचक इत्यर्थः । २ जीवेन सह । ३ यथा सुप्तं शरीरवन्तमन्ये पश्यन्ति स तु नात्मानं तथा पश्यति । एवं जीवनन्मुक्त मप्यन्ये देहवन्तं पश्यन्ति स तु न किंचित् पश्यति । ४ योनिः=मूलकारणं माया । ५ अहम्=अहंकारः ।

हरिस्तु निर्गुणः प्रकृतेः परः । तस्य भजने निर्गुणो भवेत् ॥ ५ ॥ हे राजन् ! अश्वमेधेषु समाप्तेषु युधिष्ठिरोऽच्युतमिदमेव पप्रच्छ ॥ ६ ॥
तदा भगवान् प्रीतस्तस्मै प्राह ॥ ७ ॥ श्रीभगवानुवाच ॥ हे धर्म ! अहं यं प्रत्यनुगृह्णामि तस्य धनं शनैर्हरिष्ये । ततोऽधनं तं स्वजनास्त्य-
जन्ति ॥८॥ ततः स धनेच्छया यदा विरक्तः स्यात् तदाऽहमनुग्रहं करिष्ये ॥ ९ ॥ अतो दुराध्यं मां हित्वा जनोऽन्यं भजते ॥ १० ॥
ततः शीघ्रप्रसन्नेभ्यः प्राप्तराज्याद्यैश्वर्येण मत्तो वरदान् विस्मरन्ति ॥११॥ श्रीशुक उवाच ॥ हे राजन् ! शापप्रसादयोरीशा ब्रह्मविष्णुशिवा-

हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः ॥ सर्वदृगुपद्रष्टा तं भजन् निर्गुणो भवेत् ॥ ५ ॥ निवृत्तेष्वश्वमेधेषु राजा
युष्मत्पितामहः ॥ शृण्वन् भगवतो धर्मानपृच्छदिदमच्युतम् ॥ ६ ॥ स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः ॥
नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ॥ ७ ॥ श्रीभगवानुवाच ॥ यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ॥
ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम् ॥ ८ ॥ स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया ॥ मत्परैः कृत-
मैत्रस्य करिष्ये मदनुग्रहम् ॥९॥ तद् ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् ॥ अतो मां सुदुराराध्यं हित्वाऽन्यान्
भजते जनः ॥ १० ॥ ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ॥ मत्ताः प्रमत्ता वरदान् विस्मरन्त्यवजानते
॥ ११ ॥ श्रीशुक उवाच ॥ शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ॥ सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः
॥ १२ ॥ अत्र चोदाहरन्तीममितिहासं पुरातनम् ॥ वृकासुराय गिरिशो वरं दत्त्वाप संकटम् ॥ १३ ॥ वृको
नामासुरः पुत्रः शकुनेः पथि नारदम् ॥ दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥ स आह देवं गिरिशमु-
पाधावाशु सिध्यति ॥ योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ १५ ॥

दयः । तेषां मध्ये सद्यः शापदः प्रसादकश्च शिवो ब्रह्मा न नाच्युतः ॥१२॥ अत्रेतिहासं कथयिष्यामि । शिवो वृकासुराय वरं दत्त्वा संकटं
प्राप ॥ १३ ॥ एकदा शकुनेः पुत्रो वृकासुरः पथि नारदं दृष्ट्वा त्रिषु देवेषु शीघ्रं कस्तुष्यति इति पप्रच्छ ॥ १४ ॥ तदा नारद आह—हे
दैत्य ! शिवं भज । स स्वल्पगुणदोषाभ्यां तुष्यति कुप्यति च ॥ १५ ॥

१ साक्षी । यतः सर्वदिक् यतः सर्वे पश्यन्तीति ।

स एकदा रावणबाणासुरयोस्तुष्टः सन्नतुलैश्वर्यं दत्त्वा संकटं प्राप ॥१६॥ इत्याकर्ण्य वृकासुरो हिमपृष्ठे केदारे गत्वा स्वमांसेनाग्निमुखं हरं जुह्वन् सन्॥१७॥ देवमप्राप्य सप्तमेऽहनि स्वशिरः खड्गेन छेत्तुमुद्यतः॥१८॥ तदा महादयायुक्तः शिवोऽग्निमुखादुत्थाय हस्तं गृहीत्वा न्यवारयत्। दैत्यः शिवस्पर्शेन पूर्ववत्स सर्वाङ्गो बभूव॥१९॥शिव उवाच॥ हे वृक अभिलषितं वरं वृणीष्व,तुभ्यं ददामि॥२०॥ इत्याकर्ण्य स पापी-

दशास्यबाणयोस्तुष्टः स्तुवतोर्वन्दिनोरिव ॥ ऐश्वर्यमतुलं दत्त्वा तत आप सुसंकटम् ॥१६॥ इत्यादिष्टस्तमसुर उपाधावत् स्वगात्रतः॥ केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम्॥ १७॥ देवोपलब्धिमप्राप्य निर्वेदात् सप्तमेऽहनि॥ शिरोऽवृश्चत स्वधितिना तत्तीर्थक्लिन्नमूर्धजम्॥१८॥तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात्॥ निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद् भूय उपस्कृताकृतिः॥ १९॥ तमाह चाङ्गालमलं वृणीष्व मे यथाभिकामं वितरामि ते वरम्॥ प्रीयेय तोयेन नृणां प्रपद्यतामहो त्वयाऽऽत्मा भृशमर्द्यते वृथा॥२०॥ देवं स वव्रे पापीयान् वरं भूतभयावहम्॥ यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति॥२१॥तच्छ्रुत्वा भगवान् रुद्रो दुर्मना इव भारत॥ ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा॥२२॥ इत्युक्तः सोऽसुरोनूनं गौरीहरणलालसः॥ स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः॥२३॥ स्वहस्तं धातुमारेभे सोऽबिभ्यत् स्वकृताच्छिवः॥ तेनोपसृष्टः संत्रस्तः पराधावत् सवेपथुः॥ यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक्॥२४॥अजानन्तः प्रतिविधिं तूष्णीमासन् सुरेश्वराः॥ततो वैकुण्ठमगमद् भास्वरं तमसः परम्॥२५॥ यत्र नारायणः साक्षान्न्यासिनां परमा गतिः॥ शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः॥२६॥

यान् भूतभयावहं यस्य यस्य शीर्ष्णि करं धास्ये स म्रियतामित्ययाचत॥२१॥तच्छ्रुत्वा शिवो दुःखित इव भूत्वा सर्पस्यामृतमिव तस्मै वरं ददौ॥ ॥२२॥ ततो वृको गौरीहरणलालसः सन् तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि हस्तं दातुं प्रारेभे॥२३॥ तदा स्वकृताद् भीतः शिवः संत्रस्तः सन् ब्रह्माण्डमधावत्॥२४॥ तदा देवाः प्रतिविधिमजानन्तः संतस्तूष्णीमासन्। ततः शिवो वैकुण्ठं जगाम॥२५॥ यत्र साक्षान्नारायण आस्ते॥२६॥

१ वयमधुनातना यथा दुःखेन मर्तुकामं वारयामस्तथेति योज्यम्। २ दिशाम्।

तदा दुःखनाशको हरिस्तं शिवं दुःखितं दृष्ट्वा दूराद् योगमायया मेखलाऽजिनदण्डाद्यैर्बटुरूपं धृत्वा दैत्यसंमुखमेत्याभिवादयामास ॥२७॥
॥२८॥ श्रीभगवानुवाच ॥ हे वृक ! त्वं दूरमागतः । अतः श्रान्तोऽसि । तस्माद् क्षणं विश्रम्यताम् ॥२९॥ किं च तव यन्निश्चितं तत् कथ्य-
ताम् ॥३०॥ श्रीशुक उवाच ॥ एवं भगवता पृष्टो वृको यथापूर्वमनुष्ठितं तस्मै जगाद ॥३१॥ श्रीभगवानुवाच ॥ हे वृक ! एवं चेत्तर्हि शिव-
वाक्यं वयं न श्रद्दधीमहि । यो दक्षशापात् पैशाच्यं प्राप्त उन्मत्तो मिथ्यावादी ॥३२॥ तव तस्मिन् शिवे विश्वासश्चेत् तर्हि स्वशिरसि हस्तं

**तं तथाव्यसनं दृष्ट्वा भगवान् वृजिनार्दनः ॥ दूरात् प्रत्युदियाद् भूत्वा बटुको योगमायया ॥ २७ ॥ मेखलाजिनद-
ण्डाक्षैस्तेजसाग्निरिव ज्वलन् ॥ अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥ २८ ॥ श्रीभगवानुवाच ॥ शाकुनेय
भवान् व्यक्तं श्रान्तः किं दूरमागतः ॥ क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् ॥ २९ ॥ यदि नः श्रवणायालं
युष्मद्व्यवसितं विभो॥भण्यतां प्रायशः पुंभिर्धृतैः स्वार्थान् समीहते ॥३०॥ श्रीशुक उवाच॥एवं भगवता पृष्टो वचसा
ऽमृतवर्षिणा ॥ गतक्लमोऽब्रवीत् तस्मै यथापूर्वमनुष्ठितम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ एवं चेत् तर्हि तद्वाक्यं न वयं
श्रद्दधीमहि ॥ यो दक्षशापात् पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥३२॥ यदि वस्तत्र विश्रम्भो दानवेन्द्र जगद्गुरौ ॥ तर्ह्य-
ङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥ ३३ ॥ यद्यसत्यं वचः शम्भोः कथंचिद् दानवर्षभ ॥ तदैनं जह्यसद्वाचं
न यद्वक्ताऽनृतं पुनः ॥ ३४ ॥ इत्थं भगवतश्चित्रवचोभिः स सुपेशलैः ॥ भिन्नधीर्विस्मितः शीर्ष्णि स्वहस्तं कुमतिर्न्य-
धात् ॥ ३५ ॥ अथापतद्भिन्नशिरा वज्राहत इव क्षणात् ॥ जयशब्दो नमःशब्दः साधुशब्दोऽभवद् दिवि ॥ ३६ ॥
मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ॥ देवर्षिपितृगन्धर्वा मोचितः संकटाच्छिवः ॥ ३७ ॥**



न्यस्य प्रतीयताम् ॥३३॥ शम्भोर्वचोऽसत्यं चेत् तर्हि तमेनं जहि । यतः पुनरनृतं न वक्ता ॥ ३४ ॥ इत्यादिभगवद्वाक्यैर्मोहितः स कुमतिः
स्वशिरसि हस्तं न्यधात् ॥३५॥ तदैव भिन्नशिराः सन् भूमौ पपात । तदा दिवि जयशब्दः नमः शब्दः साधुशब्दोऽभवत् ॥३६॥ देवादयो
वृकासुरे हते पुष्पवर्षाणि मुमुचुः । एवं शिवः सङ्कटात् मोचितः ॥ ३७ ॥

१ त्वमिति शेषः ।

ततो मुक्तं शिवं भगवानाह । अहो देव ! महादेव ! अयं पापः स्वपापेनैव हतः ॥३८॥ हे ईश ! महत्सु कृतापराधः पुमान् को नु क्षेमी स्यात् ॥३९॥ एवं यो हरेः शिवमोक्षचरित्रं कथयेत् शृणोति वा स रिपुभयात् संसाराच्च मुच्यते ॥४०॥ इति श्रीभागवते द० चू० उ० अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ नवाशीतितमे देवः को महानिति संशये ॥ परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद् भृगुः ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् ! एकदा सरस्वत्यास्तटे ऋषयो यज्ञमकुर्वत । तदा त्रिषु देवेषु को महान् इति तेषां वितर्कः समभूत् ॥१॥ ततस्ते ऋषयस्तत् ज्ञातु-

मुक्तं गिरिशमभ्याह भगवान् पुरुषोत्तमः॥अहो देव महादेव पापोऽयं स्वेन पाप्मना॥३८॥हतःको नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः ॥ क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ॥३९॥य एवमव्याकृतशक्त्युदन्वतः[1] परस्य साक्षात्परमात्मनो हरेः॥गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः ॥४०॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्द्धे रुद्रमोक्षणं नामाष्टाशीतितमोऽध्यायः ॥८८॥ श्रीशुक उवाच ॥ सरस्वत्यास्तटे राजन् ऋषयः सत्रमासत ॥ वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥१॥ तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ॥ तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद् ब्रह्मणः सभाम् ॥ २ ॥ न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया[2] ॥ तस्मै चुक्रोध भगवान् प्रज्वलन् स्वेन तेजसा ॥३॥ स आत्मन्युत्थितं मन्युमात्मजायात्मना[3] प्रभुः ॥ अशीशमद्यथा वह्निं स्वयोन्या वारिणाऽऽत्मभूः ॥ ४ ॥ ततः कैलासमगमत् स तं देवो महेश्वरः ॥ परिरब्धुं समारेभे उत्थाय भ्रातरं मुदा ॥५॥ नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ॥ शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥ ६ ॥

मिच्छया भृगुं प्रेषयामासुः । तदा भृगुर्ब्रह्मणः सभां जगाम ॥ २ ॥ ब्रह्मसत्त्वपरीक्षार्थं तस्मै नमस्कारादिकं न चक्रे । तदा ब्रह्मा तस्मै भृगवे चुक्रोध ॥ ३ ॥ स्वपुत्रं मत्वा क्रोधं शमयामास ॥४॥ ततः स भृगुः कैलासं जगाम । तदा शिव उत्थाय मुदा तं भ्रातरमालिङ्गितुं प्रारेभे ॥ ५ ॥ तदा भृगुस्त्वमुत्पथग इत्युक्त्वाऽऽलिङ्गनं नैच्छत् । तदा क्रुद्धः शिवः शूलमुद्यम्य तं हंतुं प्रारेभे ॥ ६ ॥

---

१ वाङ्मनसाऽगोचरशक्तिसमुद्रस्य । २ स्वकार्येण । ३ "आत्मनः" इ० पा० ।

तद् दृष्ट्वा पार्वती शिवस्य पादयोः पतित्वा सान्त्वयामास । भृगुर्वैकुण्ठं जगाम ॥७॥ लक्ष्म्या उत्सङ्गे सुप्तं विष्णुं दृष्ट्वा यदा वक्षसि ताड-
यामास तदा हरिर्लक्ष्म्या सहोत्थाय तल्पात् शीघ्रमवरुह्य तं शिरसा ननाम ॥ ८ ॥ स्वागतमित्युक्त्वा हे ब्रह्मन् ! आसने निषीदेत्याह ।
हे ब्रह्मन् ! युष्मानागतान् न जानतां नः विषये क्षन्तुमर्हसि ॥९॥ हे मुने ! तव चरणावतीव कोमलौ इत्युक्त्वा विप्रचरणौ स्वहस्तेन मर्दयन्
॥ १० ॥ हे मुने ! पादोदकेन सहलोकं मां पुनीहि ॥११॥ हे भगवन् ! अद्य लक्ष्म्या एकान्तभाजनमासम् । हे विप्र ! भवत्पादहतपापस्य
ममोरसि लाञ्छनमिव वत्स्यति ॥ १२ ॥ श्रीशुक उवाच ॥ एवं हरौ ब्रुवति सति भृगुस्तूष्णीमास ॥ १३ ॥ ततो भृगुः पुनर्यज्ञस्थानमेत्य
स्वानुभूतं सर्वं वर्णयामास ॥१४॥ तन्निशम्य मुनयो गतसंशयाः सन्तो विष्णुं महत्तमं निश्चितवन्तः । यस्मिन् शान्तिरभयम् ॥१५॥ यतो
धर्मो ज्ञानं वैराग्यमात्ममलापहं यशश्च ॥ १६ ॥ किंच । यं शान्तानां समचेतसां साधूनां गतिमाहुः ॥ १७ ॥

**पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा ॥ अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥७॥ शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ॥ तत उत्थाय भगवान् सह लक्ष्म्या सतां गतिः ॥ स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् ॥ ८ ॥ आह ते स्वागतं ब्रह्मन् निषीदात्रासने क्षणम् ॥ अजानतामागतान् वः क्षन्तुमर्हथ नः प्रभो ॥ ९ ॥ अतीव कोमलौ तात चरणौ ते महामुने ॥ इत्युक्त्वा विप्रचरणौ मर्दयन् स्वेन पाणिना ॥ १० ॥ पुनीहि सहलोकं मां लोक-पालांश्च मद्गतान् ॥ पादोदकेन भवतस्तीर्थानां तीर्थकारिणा[1] ॥ ११ ॥ अद्याहं भगवँल्लक्ष्म्या आसमेकान्तभाजनम् ॥ वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥ १२ ॥ श्रीशुक उवाच ॥ एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ॥ निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥ १३ ॥ पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ॥ स्वानुभूतमशेषेण राजन् भृगुरवर्णयत् ॥ १४ ॥ तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ॥ भूयांसः श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥ १५ ॥ धर्मः साक्षाद् यतो ज्ञानं वैराग्यं च तदन्वितम् ॥ ऐश्वर्यं चाष्टधा यस्माद् यशश्चात्ममलापहम् ॥ १६ ॥ मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ॥ अकिञ्चनानां साधूनां यमाहुः परमां गतिम् ॥ १७ ॥**

१ तीर्थत्वनिमित्तेन ।

किं च यस्येष्टदेवताः ब्राह्मणाः साधवो यं भजन्ति॥ १८ ॥ तस्य देवासुरराक्षसा इति त्रिविधा आकृतयः सन्ति । तासु सत्त्वमेव पुरुषार्थे हेतुः ॥१९॥ श्रीशुक उवाच ॥ एवं सरस्वतीतीरवासिन ऋषयोविष्णुसेवया तद्गतिं गताः॥२०॥सूत उवाच ॥ हे शौनक ! एतत् श्रीशुकमुखाद् निर्गतं हरेर्यशः संसारी यः सेवते स मुक्तो भवति ॥२१॥ श्रीशुक उवाच ॥ एकदा द्वारकायां विप्रपत्न्याः पुत्रो जातमात्रः सन् भुवं स्पृष्ट्वा ममार ॥२२॥ ततो विप्रस्तं मृतपुत्रं गृहीत्वा राजद्वारि निधाय विलपन् जगाद ॥२३॥ ब्रह्मद्विषः शठधियो विषयात्मनः क्षत्रबन्धोः कर्मदोषाद्

सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ॥ भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥ १८ ॥ त्रिविधाकृतयः स्तस्य राक्षसा असुराः सुराः ॥ गुणिन्या मायया सृष्टाः सत्त्वं तत् तीर्थसाधनम् ॥ १९ ॥ श्रीशुक उवाच ॥ एवं सारस्वता विप्रा नृणां संशयनुत्तये ॥ पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥ २० ॥ सूत उवाच ॥ इत्येतन्मुनितनया-स्यपद्मगन्धपीयूषं भवभयभित् परस्य पुंसः ॥ सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णं पान्थोऽध्वभ्रमणपरिश्रमं जहाति ॥२१॥ श्रीशुक उवाच ॥ एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः ॥ जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥ ॥ २२ ॥ विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः ॥ इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥ २३ ॥ ब्रह्मद्विषः शठ-धियो लुब्धस्य विषयात्मनः ॥ क्षत्रबन्धोःकर्मदोषात् पञ्चत्वं मे गतोऽर्भकः ॥२४॥ हिंसाविहारं नृपतिं दुःशीलमजिते-न्द्रियम् ॥ प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥२५॥ एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च ॥ विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥ तामर्जुन उपश्रुत्य कर्हिचित् केशवान्तिके ॥ परेते नवमे बाले ब्राह्मणं सम-भाषत ॥ २७ ॥ किंस्विद् ब्रह्मंस्त्वन्निवास इह नास्ति धनुर्धरः ॥ राजन्यबन्धुरेते वै ब्राह्मणाः सत्रमासते ॥ २८ ॥

मे बालो मृत्युं प्राप्तः ॥२४॥ किं च दुःशीलमजितेन्द्रियं नृपतिं भजन्त्यः प्रजा नित्यं दुःखिता भवन्ति ॥२५॥ एवं द्विजो द्वितीयं तृतीयं पुत्रं राजद्वारि त्यक्त्वा तां गाथां जगौ ॥२६॥ कदाचित् कृष्णसमीपे स्थितोऽर्जुनो नवमे बाले मृते द्विजस्य तां गाथां श्रुत्वा ब्राह्मणं समभाषत ॥ २७ ॥ हे ब्रह्मन् ! इह त्वन्निवासे सर्वेऽप्येते ब्राह्मणाः सत्रमासते धनुर्धरो नास्ति किम् ॥ २८ ॥

यस्मिन् राज्ये धनदारादिवियुक्ता ब्राह्मणाः शोचन्ति ते राजानो राजवेषेण नटा इव जीविकां सम्पादयन्ति॥२९॥हे ब्रह्मन्! तव प्रजामहं रक्षिष्ये तत् नष्टप्रतिज्ञश्चेद् वह्निं प्रवेक्ष्ये ॥३०॥ ब्राह्मण उवाच ॥ हे अर्जुन!संकर्षणः कृष्णः प्रद्युम्नोऽनिरुद्ध एते मे प्रजाः संरक्षितुं न शक्नुवन्ति॥३१॥ तत् कर्म बालबुद्धया त्वं कथं चिकीर्षसि । अतो वयं ते वचो न श्रद्दध्महे ॥३२॥ अर्जुन उवाच ॥ हे ब्रह्मन् ! अहं संकर्षणो न, कृष्णो न, तर्हि यस्य गाण्डीवं धनुस्त्र्यम्बकतोषणं वीर्यं च सोऽहमर्जुनः युद्धे मृत्युं विजित्य तव प्रजामानेष्ये ॥३३॥३४॥ एवमर्जुनेन विश्वासं प्रापितो विप्रः स्वगृहं

धनदारात्मजाऽपृक्ता यत्र शोचन्ति ब्राह्मणाः ॥ ते वै राज्यन्यवेषेण नटा जीवन्त्यसुम्भराः॥२९॥अहं प्रजा वां भगवान् रक्षिष्ये दीनयोरिह ॥ अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥३०॥ ब्राह्मण उवाच ॥ संकर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः॥अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत्॥३१॥तत् कथं नु भवान् कर्म दुष्करं जगदीश्वरैः ॥ चिकीर्षसि त्वं बालिश्यात् तन्न श्रद्दध्महे वयम्॥३२॥अर्जुन उवाच ॥ नाहं संकर्षणो ब्रह्मन् न कृष्णः कार्ष्णिरेव च ॥ अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः ॥३३॥ माऽवमंस्था मम ब्रह्मन् वीर्यं त्र्यम्बकतोषणम्॥मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ॥३४॥ एवं विश्रम्भितो विप्रः फाल्गुनेन परन्तप॥जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन्[1] ॥३५॥ प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ॥ पाहिपाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥३६॥ स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम्॥दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे॥३७॥न्यरुणत् सूतिकाऽगारं शरैर्नानास्त्रयोजितैः॥ तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥३८॥ ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ॥ सद्योऽदर्शनमापेदे सशरीरो[2] विहायसा ॥३९॥ तदाऽऽह विप्रो विजयं विनिन्दन्कृष्णसन्निधौ ॥ मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥४०॥

जगाम॥३५॥ततः स द्विजो भार्यायाः प्रसूतिकाले प्राप्ते सति मृत्योः प्रजां पाहिपाहीत्यर्जुनं जगाद॥३६॥ तदार्जुनस्तद्गृहे गत्वाऽऽचम्य शिवं नत्वा दिव्यास्त्राणि स्मृत्वा गाण्डीवं जग्राह॥३७॥ततः सूतिकागारं सर्वतो बाणैरावृत्य शरपञ्जरं चकार ॥३८॥ततो विप्रपत्न्याः पुत्रः सञ्जज्ञे ततःस पुत्रो रुदन् सदेहोऽन्तर्धानं प्राप॥३९॥तदा विप्रः कृष्णसन्निधावर्जुनं नीत्वा तं निन्दन् जगाद। अहो ! मे मूर्खत्वं पश्यत योऽहं क्लीबकत्थनं श्रद्दधे॥४०॥

१ शृण्वन् । २ देहोऽपि नावशिष्ट इत्यर्थः ।

अहो ! मम प्रजा रक्षितुं कृष्णरामादयो न शेकुः । ता अन्यः को रक्षिष्यति ॥४१॥ एवं मिथ्यावादिनमर्जुनं धिक् । तस्य धनुर्धिक् । यो दैवोपसृष्टमानेष्य इति बभाषे ॥४२॥ एवं विप्रे शपति सत्यर्जुनः स्वविद्यामास्थाय शीघ्रं यमपुरीं ययौ ॥४३॥ तत्र विप्रबालकमदृष्ट्वा पूर्वां जगाम । एवमग्निनिर्ऋतिकुबेरवायुवरुणानां पुरीः रसातलं स्वर्गमन्यस्थानानि च गत्वा धृतायुधः ॥४४॥ अलब्धद्विजपुत्रः सन् पुनरेत्याग्निं विविक्षुस्तदा कृष्णेन वारितः ॥ ४५ ॥ ततः कृष्ण आह । हे अर्जुन ! अहं द्विजपुत्रान् त्वां दर्शये । ये मनुष्या निन्दन्ति त एव तव कीर्तिं

न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ॥ यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥४१॥ धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ॥ दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः ॥ ४२ ॥ एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ॥ ययौ संयमिनीमाशु यत्रास्ते भगवान् यमः ॥४३॥ विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात् पुरीम् ॥ आग्नेयीं नैर्ऋतिं सौम्यां वायव्यां वारुणीमथ ॥ रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥ ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥ अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥४५॥ दर्शये द्विजसूनूंस्ते मावज्ञात्मानमात्मना ॥ ये ते हि कीर्तिं विमलां मनुष्याः स्थापयन्ति नः ॥४६॥ इति संभाष्य भगवानर्जुनेन सहेश्वरः ॥ दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥ सप्तद्वीपान्सप्तसिन्धून्सप्तसप्तगिरीनथ ॥ लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४८ ॥ तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ४९ ॥ तान् दृष्ट्वा भगवान् कृष्णो महायोगेश्वरेश्वरः ॥ सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत् पुरः ॥ ५० ॥ तमः सुघोरं गहनं कृतं महद्विदारयद् भूरितरेण रोचिषा ॥ मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥

स्थापयिष्यन्ति ॥ ४६ ॥ इत्युक्त्वाऽर्जुनेन सह रथमास्थाय प्रतीचीं दिशं गत्वा ॥ ४७ ॥ सप्त गिरीन् सप्त द्वीपान् सप्त समुद्रान् लोकालोकं चातिक्रम्य महत्यन्धकारे विवेश ॥४८॥ तदा शैब्यसुग्रीवाद्या अश्वास्तमसि नष्टगतयो बभूवुः ॥४९॥ भगवान् कृष्णस्तान् दृष्ट्वा सहस्रसूर्यसदृशं सुदर्शनमग्रे प्राहिणोत् ॥ ५० ॥ तदा चक्रं स्वतेजसा घोरं तमो विदारयद्विवेश ॥ ५१ ॥

१ निन्दन्तीति शेषः ।

यस्मिन् राज्ये धनदारादिवियुक्ता ब्राह्मणाः शोचन्ति ते राजानो राजवेषेण नटा इव जीविकां सम्पादयन्ति॥२९॥हे ब्रह्मन्! तव प्रजामहं रक्षिष्ये नष्टप्रतिज्ञश्चेद् वह्निं प्रवेक्ष्ये ॥३०॥ ब्राह्मण उवाच ॥ हे अर्जुन!संकर्षणः कृष्णः प्रद्युम्नोऽनिरुद्ध एते मे प्रजाः संरक्षितुं न शक्नुवन्ति॥३१॥ तव कर्म बालबुद्ध्या त्वं कथं चिकीर्षसि। अतो वयं ते वचो न श्रद्दध्महे ॥३२॥ अर्जुन उवाच ॥ हे ब्रह्मन्! अहं संकर्षणो न, कृष्णो न, तर्हि यस्य गाण्डीवं धनुस्त्र्यम्बकतोषणं वीर्यं च सोऽहमर्जुनः युद्धे मृत्युं विजित्य तव प्रजामानेष्ये ॥३३॥३४॥ एवमर्जुनेन विश्वासं प्रापितो विप्रः स्वगृहं

धनदारात्मजाऽपृक्ता यत्र शोचन्ति ब्राह्मणाः ॥ ते वै राज्यन्यवेषेण नटा जीवन्त्यसुम्भराः॥२९॥अहं प्रजा वां भगवान् रक्षिष्ये दीनयोरिह ॥ अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥३०॥ ब्राह्मण उवाच ॥ संकर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः॥अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत्॥३१॥तत् कथं नु भवान् कर्म दुष्करं जगदीश्वरैः ॥ चिकीर्षसि त्वं बालिश्यात् तन्न श्रद्दध्महे वयम्॥३२॥अर्जुन उवाच ॥ नाहं संकर्षणो ब्रह्मन् न कृष्णः कार्ष्णिरेव च ॥ अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः ॥३३॥ माऽवमंस्था मम ब्रह्मन् वीर्यं त्र्यम्बकतोषणम्॥मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ॥३४॥ एवं विश्रम्भितो विप्रः फाल्गुनेन परन्तप॥जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥३५॥ प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ॥ पाहिपाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥३६॥ स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम्॥दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे॥३७॥न्यरुणत् सूतिकाऽगारं शरैर्नानास्त्रयोजितैः॥ तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥३८॥ ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ॥ सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥३९॥ तदाऽऽह विप्रो विजयं विनिन्दन्कृष्णसन्निधौ ॥ मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥४०॥



जगाम॥३५॥ततः स द्विजो भार्यायाः प्रसूतिकाले प्राप्ते सति मृत्योः प्रजां पाहिपाहीत्यर्जुनं जगाद॥३६॥ तदार्जुनस्तद्गृहे गत्वाऽऽचम्य शिवं नत्वा दिव्यास्त्राणि स्मृत्वा गाण्डीवं जग्राह॥३७॥ततः सूतिकागारं सर्वतो बाणैरावृत्य शरपञ्जरं चकार ॥३८॥ततो विप्रपत्न्याः पुत्रः स जज्ञे ततः स पुत्रो रुदन् सदेहोऽन्तर्धानं प्राप॥३९॥तदा विप्रः कृष्णसन्निधावर्जुनं नीत्वा तं निन्दन् जगाद। अहो! मे मूर्खत्वं पश्यत योऽहं क्लीबकत्थनं श्रद्दधे॥४०॥

१ भृण्वन्। २ देहोऽपि नावशिष्ट इत्यर्थः।

अहो ! मम प्रजा रक्षितुं कृष्णरामादयो न शेकुः । ता अन्यः को रक्षिष्यति ॥४१॥ एवं मिथ्यावादिनमर्जुनं धिक् । तस्य धनुर्धिक् । यो दैवोपसृष्टमानेष्य इति बभाषे ॥४२॥ एवं विप्रे शपति सत्यर्जुनः स्वविद्यामास्थाय शीघ्रं यमपुरीं ययौ ॥४३॥ तत्र विप्रबालकमदृष्ट्वा पूर्वां जगाम । एवमग्निनिर्ऋतिकुबेरवायुवरुणानां पुरीः रसातलं स्वर्गमन्यस्थानानि च गत्वा धृतायुधः ॥४४॥ अलब्धद्विजपुत्रः सन् पुनरेत्याग्निं विविक्षुस्तदा कृष्णेन वारितः ॥ ४५ ॥ ततः कृष्ण आह । हे अर्जुन ! अहं द्विजपुत्रान् त्वां दर्शये । ये मनुष्या निन्दन्ति त एव तव कीर्तिं

न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ॥ यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥४१॥ धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ॥ दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः ॥ ४२ ॥ एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ॥ ययौ संयमिनीमाशु यत्रास्ते भगवान् यमः ॥४३॥ विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात् पुरीम् ॥ आग्नेयीं नैर्ऋतिं सौम्यां वायव्यां वारुणीमथ ॥ रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥ ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥ अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥४५॥ दर्शये द्विजसूनूंस्ते मावज्ञात्मानमात्मना ॥ ये ते हि कीर्तिं विमलां मनुष्याः स्थापयन्ति नः ॥४६॥ इति संभाष्य भगवानर्जुनेन सहेश्वरः ॥ दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥ सप्तद्वीपान्सप्तसिन्धून्सप्तसप्तगिरीनथ ॥ लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४८ ॥ तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ४९ ॥ तान् दृष्ट्वा भगवान् कृष्णो महायोगेश्वरेश्वरः ॥ सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत् पुरः ॥ ५० ॥ तमः सुघोरं गहनं कृतं महद्विदारयद् भूरितरेण रोचिषा ॥ मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥

स्थापयिष्यन्ति ॥ ४६ ॥ इत्युक्त्वाऽर्जुनेन सह रथमास्थाय प्रतीचीं दिशं गत्वा ॥ ४७ ॥ सप्त गिरीन् सप्त द्वीपान् सप्त समुद्रान् लोकालोकं चातिक्रम्य महत्यन्धकारे विवेश ॥४८॥ तदा शैब्यसुग्रीवाद्या अश्वास्तमसि नष्टगतयो बभूवुः ॥४९॥ भगवान् कृष्णस्तान् दृष्ट्वा सहस्रसूर्यसदृशं सुदर्शनमग्रे प्राहिणोत् ॥ ५० ॥ तदा चक्रं स्वतेजसा घोरं तमो विदारयद्विवेश ॥ ५१ ॥

---

१ निन्दन्तीति शेषः ।

अर्जुनः प्रसृतं तेजो द्रष्टुं न सेहे। नेत्रे न्यमीलयत् ॥५२॥ ततो जलं प्रविष्टः तत्र सलिले मणिस्तम्भसहस्रशोभितं महाकालपुरं दृष्ट्वा ॥५३॥ तस्मिन् महाभीमं सहस्रफणं श्वेतकान्ति शेषं ददर्श ॥५४॥ ततः शेषदेहे स्थितं विभुं पुरुषोत्तमं घनश्यामं पीताम्बरधरम् ॥५५॥ किरीटकुण्डलादिप्रभया शोभमानम्। अष्टभुजं श्रीवत्सकौस्तुभवनमालाभिर्युतम् ॥५६॥ सुनन्दादिस्वपार्षदैः सेव्यमानं मूर्तिमद्भिश्चक्राद्यायुधैः सेव्यमानं परमेश्वरं दृष्ट्वा

द्वारेण चक्रानुपथेन[1] तत्तमः[2] परं परं[3] ज्योतिरनन्तपारम् ॥ समश्नुवानं[4] प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी-उभे ॥५२॥ ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्[5] बृहदूर्मिभूषणम् ॥ तत्राद्भुतं वै भवनं द्युमत्तमं[6] भ्राजन्मणि-स्तम्भसहस्रशोभितम् ॥ ५३ ॥ तस्मिन्महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः ॥ विभ्राजमानं द्विगुणो-ल्बणेक्षणं[7] सिताचलाभं शितिकण्ठजिह्वम्[8] ॥५४॥ ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ॥ सान्द्रा-म्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥ ५५ ॥ महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्त-लम् ॥ प्रलम्बचार्वष्टभुजं सकौस्तुभं श्रीवत्सलक्ष्म्या वनमालया वृतम् ॥५६॥ सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभि-र्मूर्तिधरैर्निजायुधैः ॥ पुष्ट्या श्रिया कीर्त्यजया[9]ऽखिलर्द्धिभि[10]र्निषेव्यमाणं परमेष्ठिनां पतिम् ॥५७॥ ववन्द आत्मान-मनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः ॥ तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया[11] गिरा ॥ ५८ ॥ द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये ॥ कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरये-तमन्ति मे ॥ ५९ ॥ पूर्णकामावपि युवां नरनारायणावृषी ॥ धर्ममाचरतां स्थित्यै वृषभौ लोकसंग्रहम् ॥ ६० ॥ इत्या-दिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ॥ ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ ६१ ॥



॥५७॥ अर्जुनः कृष्णश्च तं ववन्दे। ततः शेषशायी प्रभुस्तौ जगाद ॥५८॥ हे कृष्णार्जुनौ ! एते द्विजपुत्रा युवयोर्दिदृक्षया मयाऽऽनीताः। युवां धर्मरक्षणाय कलया भुव्यवतीर्णौ। अतो भूभारं दूरीकृत्य शीघ्रं मे समीपमागच्छतम् ॥ ५९ ॥ युवां साक्षान्नरनारायणौ पूर्णकामावपि लोक-संग्रहं धर्ममाचरताम् ॥ ६० ॥ इत्याकर्ण्य तावोमित्युक्त्वा तमीश्वरं नत्वा द्विजपुत्रान् गृहीत्वा ॥ ६१ ॥

१ चक्रमनुगतेन। २ तस्मात् तमसः परम्। ३ श्रेष्ठम्। ४ व्याप्नुवत्। ५ एजन्तः उच्चलन्तः। ६ द्युतिमस्तु श्रेष्ठम्। ७ द्विसहस्रनेत्रैरूर्जितम्। ८ शितयः नीलाः कण्ठा जिह्वाश्च यस्य तम्। ९ समूहः। १० कीर्तिसहितयाऽजया। ११ उर्जितया।

स्वकं धामागत्य विप्राय यथारूपं यथावयः पुत्रान् प्रददतुः ॥६२॥ पार्थो वैष्णवं धाम दृष्ट्वा विस्मितः सन् पुंसां यत्किंचित् पौरुषं तत् कृष्णानुकम्पितं मेने ॥६३॥ भगवानेवमनेकानि वीर्याणि दर्शयन् विषयान् बुभुजे ॥६४॥ विप्रेषु निखिलान् कामान् शक्र इव ववर्ष ॥६५॥ एवमधर्मिष्ठान् नृपान् हत्वार्जुनादिभिश्च घातयित्वा युधिष्ठिरादिभिर्धर्मं प्रवर्तयामास ॥६६॥ इति श्रीभागवते म० द० चू० उ० नवाशीतितमोऽध्यायः ॥८९॥
चरमे तु पुनः प्रोक्ता कृष्णलीला समासतः ॥ यदुवंशप्रसूतानामानन्त्यं च सकारणम् ॥१॥ श्रीशुक उवाच ॥ एकदा द्वारकायां श्रीकृष्णः सुखं

न्यवर्ततां स्वकं धाम संप्रहृष्टौ यथागतम् ॥ विप्राय ददतुः पुत्रान् यथारूपं यथावयः ॥६२॥ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ॥ यत्किंचित् पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥६३॥ इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ॥ बुभुजे विषयान् ग्राम्यानीजे चात्यूर्जितैर्मखैः ॥ ६४ ॥ प्रववर्षाखिलान् कामान् प्रजासु ब्राह्मणादिषु ॥ यथा कालं यथैवेन्द्रो भगवान् श्रैष्ठ्यमास्थितः ॥६५॥ हत्वा नृपानधर्मिष्ठान् घातयित्वार्जुनादिभिः ॥ अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः ॥ ६६ ॥ इति श्रीभागवते महापुराणे दशमस्कधे उ० द्विजकुमारानयनं नाम नवाशीतितमोऽध्यायः ॥ ८९ ॥ श्रीशुक उवाच ॥ सुखं स्वपुर्यां निवसन् द्वारकायां श्रियः पतिः ॥ सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥१॥ स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ॥ कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥२॥ नित्यं संकुलमार्गायां मदच्युद्भिर्मतङ्गजैः ॥ स्वलङ्कृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥ उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ॥ निर्विशद् भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥ रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ॥ तावद्विचित्ररूपोऽसौ तद्गृहेषु महर्द्धिषु ॥ ५ ॥ प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः ॥ वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ ६ ॥ विजहार विगाह्याम्भो ह्रदिनीषु महोदयः ॥ कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम् ॥ ७ ॥

निवसन्। कथं भूतायाम्।सर्वसंपत्समृद्धायाम्॥१॥ उत्तमवेषाभिर्हर्म्येषुक्रीडमानाभिः स्त्रीभिः॥२॥ मदोन्मत्तगजैःस्वलङ्कृतभटैरश्वैःकनकोज्ज्वलैरथैश्चनित्यं व्याप्तमार्गायाम्॥३॥ उद्यानोपवनेषु पुष्पितवृक्षपङ्क्तिषु भ्रमरादिभिर्नादितायां तस्याम्॥४॥षोडशसहस्रस्त्रीणां वल्लभस्तावद्रूपः सन् तासां गृहेषु रेमे ॥५॥ तथा कमलरेणुभिः सुवासितजलेषु ह्रदेषु ॥६॥ जलं विगाह्य स्त्रीणां कुचकुङ्कुमैर्लिप्ताङ्गः सन् ताभिः सह विजहार॥७॥

तदा मृदङ्गवीणा वादयमानैर्गन्धर्वैर्गीयमानः॥ ८ ॥ स्त्रीणां रेचकैः सिच्यमानः सन् स्वयं ताः प्रतिषिञ्चन् चिक्रीडे ॥ ९ ॥ तदा ताः स्त्रियः रेचकजिहीर्षया कान्तमालिङ्ग्य जातस्मरोत्सवलसद्वदना विरेजुः ॥ १० ॥ कृष्णस्तु सिच्यमानो मुहुः स्वयं सिंचन् करिणीभिर्गज इव रेमे ॥ ११ ॥ ततः कृष्णः स्त्रियश्च क्रीडालङ्कारवासांसि नटनर्तकीभ्यो ददुः ॥ १२ ॥ एवं विहरतः कृष्णस्य हास्यविलोकनभाषणैर्हृतधियः

उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् ॥ वादयद्भिर्मुदा वीणां सूतमागधबन्दिभिः ॥ ८ ॥ सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स्म रेचकैः ॥ प्रतिषिञ्चन् विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९ ॥ ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ॥ कान्तं स्म रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥१०॥ कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक् क्रीडाभिषङ्गधुतकुन्तलवृन्दबन्धः ॥ सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥ ११ ॥ नटानां नर्तकीनां च गीतवाद्योपजीविनाम् ॥ क्रीडालंकारवासांसि कृष्णोऽदात् तस्य च स्त्रियः ॥ १२ ॥ कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः ॥ नर्मक्ष्वेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः ॥ १३ ॥ ऊचुर्मुकुन्दैकधियो गिर उन्मत्तवज्जडम् ॥ चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु ॥ १४ ॥ महिष्य ऊचुः ॥ कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ॥ वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १५ ॥ नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि ॥ दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १६ ॥

स्त्रियः ॥ १३ ॥ श्रीकृष्णं चिन्तयन्त्य उन्मत्तवद् यानि वाक्यान्यूचुः तानि मत्तः शृणु ॥१४॥ महिष्य ऊचुः ॥ हे कुररि ! श्रीकृष्णे सुप्ते त्वं निद्राभङ्गं कुर्वती सती वयमिव विलपसि ॥ १५ ॥ हे चक्रवाकि ! त्वमदृष्टपतिः सती नेत्रे निमील्य रोरवीषि । अतो वयमिवाच्युतपादलग्नां मालां कबरेण वोढुमिच्छसि किम् ॥ १६ ॥

१ जलक्षेपणयन्त्रैः ।२ तत्स्तनेभ्यो विषज्जितकुंकुमा स्रक् यस्य । ३ यथा भवति तथा । ४ गुप्तो बोधः बाह्यविषयज्ञानं यस्य सः ।

हे समुद्र ! अलब्धनिद्रः सन् शब्दं करोषि । अतोऽस्माभिः प्राप्तां दशां त्वमपि प्राप्तोऽसि किम् यथा वयं सम्भोगेन हृतकुङ्कुमादिलाञ्छना-स्तथा त्वमपि हृतकौस्तुभादिलाञ्छनो लक्ष्यसे ॥१७॥ हे इन्दो ! त्वं यक्ष्मणा गृहीतः अत एव क्षीणः सन् स्वकिरणैस्तमो न क्षिणोषि । तव किं कृष्णगदितानि विस्मृत्य तच्चिन्तया वयमिव स्तब्धवाक् न क्षिणोषि किम् ॥१८॥ हे मलयानिल ! तवाप्रियमस्माभिः किं कृतम् । यस्त्वं कृष्णकटाक्षैर्भिन्ने नो हृदि स्मरं प्रेरयसि । तत्तवानुचितम् ॥१९॥ हे मेघ ! त्वं श्रीकृष्णस्य सखासि । अतो वयमिव तं ध्यात्वा गद्ग-

भोभोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ॥ किं वा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥१७॥ त्वं यक्ष्मणा बलवताऽसि गृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ॥ कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ १८ ॥ किं त्वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ॥ गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १९ ॥ मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं श्रीवत्साङ्कं वयमिव भवान् ध्यायति प्रेमबद्धः ॥ अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वास्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥२०॥ प्रियरावपदानि[1] भाषसेऽमृतसञ्जीविकयाऽनया गिरा ॥ करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥२१॥ न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ॥ अपि बत वसुदेव नन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २२ ॥ शुष्यद्ह्रदाः कृशतरा बत सिन्धुपत्न्यः संप्रत्यपास्तकमलश्रिय इष्टभर्तुः[2] ॥ यद्वद्वयं यदुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्मः ॥ २३ ॥

दकण्ठः सन् बाष्पधाराः मुहुर्मुहुर्विसृजसि ॥२०॥ हे कोकिल ! त्वं कृष्णस्य शब्दमिव शब्दं भाषसे अतस्ते प्रियमद्य किं करवाणि ॥२१॥ हे पर्वत ! त्वं न चलसि न वदसि । तत् किं कृष्णाङ्घ्रिं (शृङ्गरूपैः) स्तनैर्धर्तुं वयमिव कामयसे ॥२२॥ हे नद्यः ! वयं कृष्णस्य प्रेमावलोकनमप्राप्य यथा कृशाः तद्वद् यूयमपि शुष्यद्ध्रदाः स्थ ॥ २३ ॥

---

१ प्रियरावस्य प्रियंवदस्य पदानीव पदानि । २ प्रियतमस्य भर्तुः ।

हे हंस ! तव स्वागतम्। अत्र स्थीयताम्। पयः पिब । शौरेः कथां ब्रूहि।त्वां कृष्णदूतं जानीमः।स कुशल्यास्ते किमु ? हे क्षुद्रस्य दूत ! स पूर्वमेकांते उक्तं तत् स्मरति किम्।ओमिति चेदाहुः।वयं तं कस्माद् भजामः।अहो स भगवानाह्वयति तर्हि श्रियं विहाय तमाकारय कामदम् ॥२४॥ एवंमाधव्यः ईदृशेन भावेन परमां गतिं लेभिरे॥२५॥यः श्रुतमात्रोऽपि स्त्रीणां मन आकर्षति स भगवानात्मानं पश्यन्तीनां मन आकर्षतीतिकिं वक्तव्यम्॥२६॥ किंच याः स्त्रियो जगद्गुरुं पतिबुद्ध्या आर्चयन् तासः तपः किं वर्ण्यते॥२७॥ एवं भगवन् वेदोक्तधर्ममनुतिष्ठन् गृहं धर्मार्थकामानां स्थानमित्य

हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ॥ किं वा नश्चलसौहृदः स्मरति तं कस्माद् भजामो वयं क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठां स्त्रियाम् ॥ २४ ॥ इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ॥ क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥२५॥ श्रुतमात्रोऽपि यःस्त्रीणां प्रसह्याकर्षते मनः ॥ उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनः ॥ २६ ॥ या संपर्यचरन् प्रेम्णा पादसंवाहनादिभिः ॥ जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥ २७ ॥ एवं वेदोदितं धर्ममनुतिष्ठन् सतां गतिः ॥ गृहं धर्मार्थकामानां मुहुश्चादर्शयत् पदम् ॥२८॥ आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ॥ आसन् षोडशसाहस्रं महिष्योऽष्टशताधिकम् ॥२९॥ तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ॥ रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥ ३० ॥ एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान् ॥ यावत्य आत्मनो भार्या अमोघगतिरीश्वरः ॥ ३१ ॥ तेषामुद्दामवीर्याणामष्टादश महारथाः ॥ आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ ३२ ॥ प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान् भानुरेव च ॥ साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥ ३३ ॥

दर्शयत् ॥२८॥ एवं कृष्णस्याष्टशताधिकषोडशसहस्रस्त्रिय आसन् ॥२९॥ तासां मध्ये रुक्मिण्यादयोऽष्टौ प्रागुक्ताः तासां पुत्राश्चोक्ताः॥३०॥ हे राजन् ! श्रीकृष्णः एकैकस्यां दशदश पुत्रान् जनयामास॥३१॥एवं लक्षमेकमशीत्युत्तरैकषष्टिसहस्राणि च भवन्ति १६१०८०तेषां मध्येऽष्टादश महारथाः तन्नामानि शृणु॥३२॥प्रद्युम्नः १ अनिरुद्धः २ दीप्तिमान् ३ भानुः ४ साम्बः ५ मधुः ६ बृहद्भानुः ७ चित्रभानुः ८ वृकः ९ अरुणः १०॥३३॥

१ एकपरायणा । २ स्त्रीषु । ३ उरुभिर्गायैः गीतैरुरुधा गीतः ।

पुष्करः ११ देवबाहुः १२ श्रुतदेवः १३ सुनन्दनः १४ चित्रबाहुः १५ विरूपः १६ कविः १७ न्यग्रोधः १८ ॥ ३४ ॥ एतेषां मध्ये प्रथमः प्रद्युम्नः पितृवद्देवासीत् ॥३५॥ स रुक्मिणः कन्यामुपयेमे । तस्मादनिरुद्धः ॥ ३६ ॥ स रुक्मिणः पौत्रीं विरोचनामुपयेमे । तस्य वज्रः । यो मौसलादवशेषितः ॥ ३७ ॥ तस्य प्रतिबाहुः । तस्यसुबाहुः । ततः शान्तसेनः । तस्मात् शतसेनः ॥ ३८ ॥ एतस्मिन्कुले स्वल्पधनप्रजायुर्वीर्या अब्रह्मण्याश्च न जज्ञिरे ॥३९॥ हे राजन् ! यदुवंशप्रसूतानां पुंसां वर्षशतैरपि संख्याः कर्तुं न शक्यते ॥४०॥ अपरिमितानां यदुकुमाराणा-

पुष्पकरो देवबाहुश्च श्रुतदेवः सनन्दनः ॥ चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥ ३४ ॥ एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ॥ प्रद्युम्न आसीत् प्रथमः पितृवद्रुक्मिणीसुतः ॥३५॥ स रुक्मिणो दुहितरमुपयेमे महारथः ॥ तस्मात् सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ ३६ ॥ स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ॥ वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः ॥ ३७ ॥ प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः ॥ सुबाहोः शान्तसेनोऽभूच्छतसेनस्तुतत्सुतः ॥३८॥ न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः ॥ अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ३९ ॥ यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ॥ संख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ ४० ॥ तिस्रः कोटयः सहस्राणामष्टाशीतिशतानि च ॥ आसन् यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥४१॥ संख्यानं यादवानां कः करिष्यति महात्मनाम् ॥ यत्रायुतानामयुतलक्षेणास्ते स आहुकः ॥ ४२ ॥ देवासुराहवहता दैतेया ये सुदारुणाः ॥ ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ४३ ॥ तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ॥ अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ ४४ ॥ तेषां प्रमाणं भगवान् प्रभुत्वेनाभवद् हरिः ॥ ये वानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ ४५ ॥

माचार्यास्तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च ३८८००००० आसन् इति श्रुतम् ॥४१॥ हे राजन्! यादवानां संख्यानं कः करिष्यति। यत्रायुतानामयुतलक्षेण स उग्रसेन आस्ते ॥४२॥ हे राजन् ! देवासुरयुद्धे ये मृता दैत्यास्ते मनुष्येषूत्पन्नाः सन्तः प्रजा बबाधिरे ॥ ४३ ॥ तेषां नाशाय हरिणा प्रेरिता देवा यदोः कुलेऽवतीर्णाः तेषामेकाधिकं शतं कुलान्यासन् ॥४४॥ तेषां मध्ये प्रभुत्वेन भगवान्कृष्ण आसीत् ॥४५॥

यादवास्तं कृष्णं परमात्मानं न विदुः ॥४६॥ हे नृप ! यदुषु यत् कृष्णकीर्तिरूपं तीर्थं जातं तद्गङ्गारूपं तीर्थं स्वल्पं चक्रे । एवंभूतस्य काल-चक्रायुधस्य भूभारहरणादि नाश्चर्यम् ॥ ४७ ॥ हे राजन् ! स श्रीकृष्णः स्थिरचरवृजिनघ्नो हास्यमुखेन व्रजस्त्रीणां कामं वर्धयन् सन् जयति ॥४८॥ एवंभूतस्य श्रीकृष्णस्य भक्तिमिच्छन्कर्मक्षालनानि कर्माणि शृणुयात् ॥ ४९ ॥ यतो मर्त्यो रात्रिन्दिनं श्रीकृष्णकथाश्रवण-

शय्यासनाटनालापक्रीडास्नानादिकर्मसु ॥ न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ ४६ ॥ तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वः सरित्पादशौचं विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ॥ यन्नामाऽमङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ४७ ॥ जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥ स्थिरचरवृजिनघ्नः सुस्मितः श्रीमुखेन व्रजपुरवनितानां वर्धय-न्कामदेवम् ॥४८॥ इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्तलीलातनोस्तदनुरूपविडम्बनानि ॥ कर्माणि कर्मकषणानि यदू-त्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ४९ ॥ मर्त्यस्तयानुसवमेधितया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्त-यैति ॥ तद्धाम दुस्तरकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥५०॥ इति श्रीभागवते महापुराणेऽष्टादश साहस्र्यां संहितायां वैयासिक्यां दशमस्कन्धोत्तरार्द्धे श्रीकृष्णचरितानुवर्णनं नाम नवतितमोऽध्यायः ॥ ९० ॥

कीर्तनचिन्तया तद्धाम प्राप्नोति । राजानो यदर्था ग्रामाद्वनं ययुः ॥५०॥ इति श्रीभागवते दशमस्कन्धे चूर्णिकायामुत्तरार्द्धे कृष्णचरितानु-वर्णनं नाम नवतितमोऽध्यायः ॥९०॥ अस्मिन् स्कन्धे सर्ववृत्तानुष्टुप्श्लोकाः १९२९ चूर्णिका० १९०० ॥

१ शत्रवो मित्राणि च । २ सारूप्यम् । ३ अजिता कैश्चिदप्यप्राप्ता परा सर्वतः परिपूर्णा श्रीः कृष्णस्यैव । ४ यस्याः श्रियोऽर्थे ब्रह्मादीनां यत्नः । ५ गोत्रेषु तत्तद्वृष्णिवंशेषु धर्मो यत्कृतः येन प्रवर्तितः । ६ देवक्यां जन्मेतिवादमात्रं यस्य सः, वस्तुतोऽजन्मा । ७ क्षिपन् । ८ दुष्परिहरो यः कृतान्तवेगः कालवेगस्तद्रहितम् । नित्यमिति यावत् ।

इति सच्चूर्णिके श्रीमद्भागवते दशमस्कन्धोत्तरार्द्धः समाप्तः

# अथ सचूर्णिके श्रीमद्भागवते एकादशस्कन्धः प्रारभ्यते

श्रीगणेशाय नमः ॥ श्रीकृष्णो जयति ॥ विजयन्ते परानन्दकृष्णपादरजःस्रजः ॥ या धृता मूर्ध्नि जायन्ते महेन्द्रादिमहःस्रजः ॥ १ ॥ उक्तै-कत्रिंशताध्यायैर्मुक्तिरेकादशे ततः ॥ जायते येतिहासाद्यैः समासव्यासरूपतः ॥२॥ नारदो वसुदेवाय समासेन ह्यवर्णयत् ॥ भगवानुद्धवायाथ विस्तरेणोपपत्तिभिः ॥३॥ तत्र तु प्रथमेऽध्याये यदुवंशस्य संशयः ॥ उपक्षिप्तो विरागाय मौसलव्यपदेशतः ॥४॥ प्रवृत्तितः परानन्द कृष्ण-क्रीडानुवर्णिता ॥ तन्निवृत्त्या परानन्दपदारोहोऽनुवर्ण्यते ॥ ५ ॥ श्रीशुक उवाच ॥ अथ सरामः कृष्णो दैत्यवधं कृत्वा वेगवत्तरं कलिं जनयन् भुवो भारमवतारयत् ॥१॥ किंच दुर्योधनादिभिर्द्यूतकेशाकर्षणगरदानादिना कोपिताः ये पाण्डवास्तान् निमित्तं कृत्वोभयोः पक्षयोर्मिलितान्

श्रीबादरायणिरुवाच ॥ कृत्वा दैत्यवधं कृष्णः सरामो यदुभिर्वृतः ॥ भुवोऽवतारयद् भारं जविष्ठं जनयन्कलिम् ॥ ॥१॥ ये कोपिताः सुबहु पाण्डुसुताः सपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥ कृत्वा निमित्तमितरेतरतः समेतान्हत्वा नृपान्निरहरत्क्षितिभारमीशः ॥ २ ॥ भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः ॥ मन्येऽवने-र्ननु गतोऽप्यगतं हि भारं यद्यादवं कुलमहो ह्यविषह्यमास्ते ॥ ३ ॥ नैवान्यतः परिभवोऽस्य भवेत्कथंचिन्मत्संश्रयस्य विभवोन्नहनस्य नित्यम् ॥ अन्तःकलिं यदुकुलस्य विधाय वेणुस्तम्बस्य वह्निमिव शान्तिमुपैमि धाम ॥ ४ ॥ एवं व्यवसितो राजन्सत्यसङ्कल्प ईश्वरः ॥ शापव्याजेन विप्राणां संजह्रे स्वकुलं विभुः ॥ ५ ॥ स्वमूर्त्या लोकलावण्य-निर्मुक्त्या लोचनं नृणाम् ॥ गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः ॥ ६ ॥

नृपान् हत्वा भगवान् भूभारं जहार ॥२॥ अपि च भगवान् यदुभिर्भूभारराजसेनाः हत्वाऽचिन्तयत् । अहो भूभारो लोकप्रतीत्या गतः । तथा गतोऽप्यगत एवेति मन्ये । यतोऽसह्यं यदुकुलमास्ते ॥३॥ मदाश्रयस्यान्यतः कथंचित् पराभवो न स्यात् । यदुकुलस्यान्तःकलहं विधाय शान्तिं प्राप्य ततो वैकुण्ठं गमिष्यामि ॥ ४ ॥ एवं कृतनिश्चयः ईश्वरो विप्राणां शापनिमित्तेन स्वकुलं संहृतवान् ॥५॥ एवमवतारप्रयोजनं संपाद्य स्वानां सर्वेषां चक्षुरादिवृत्तीः स्वस्मिन्नेकनिष्ठाः कृत्वा ॥ ६ ॥

---

१ गजतुरंगादिभिरुच्छृङ्खलस्य । २ लोकानां लावण्यस्य निर्मुक्तिः त्यागो यया । याममेक्ष्य लोकेषु लावण्यं नास्तीत्यर्थः । ३ स्वमूर्त्या नृणां लोचनं स्वगीर्भिश्चित्तं स्वपदैरन्यत्र गमनादिक्रियाः आकृष्य ।

इतः परं जनिष्यमाणानां संसारतरणार्थं स्वकीर्तिं विस्तार्यानया कीर्त्या तमस्तरिष्यन्तीत्यभिप्रेत्य प्रभुः स्वस्थानं जगाम ॥७॥ राजोवाच ॥ हे मुने ! ब्रह्मण्यानां वदान्यानां कृष्णचेतसां यदूनां विप्रशापः कथमभूत् ॥८॥ किंच स शापो यन्निमित्तो यादृशो जातः । तथैकचित्तानां तेषां भेदश्च कथम् ? एतत् सर्वं वद ॥९॥ श्रीशुक उवाच । हे नृप ! भगवान् सुन्दरं वपुर्बिभ्रत् प्राप्तकामोऽपि द्वारवत्यां गृहमास्थाय गृहे रममाणान् कर्म ग्राहयितुं स्वयं कर्माचरन् रममाणः सन् स्वकुलं संहर्तुमैच्छत् ॥१०॥ तथा कर्मार्थमाहूताः मुनयः पुण्यप्रदानि कर्माणि कृत्वा श्रीकृ-

आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यञ्जसा नु कौ[१] ॥ तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वरः ॥ ७ ॥ राजोवाच ॥ ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् ॥ विप्रशापःकथमभूद्वृष्णीनां कृष्णचेतसाम् ॥ ८ ॥ यन्निमित्तः स वै शापो यादृशो द्विजसत्तम ॥ कथमेकात्मनां भेद एतत्सर्वं वदस्व मे ॥९॥ श्रीशुक उवाच ॥ बिभ्रद्वपुः सकलसुन्दर-सन्निवेशं[२] कर्माचरन्भुवि सुमङ्गलमाप्तकामः ॥ आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्य-शेषः ॥ १० ॥ कर्माणि पुण्यनिवहानि[३] सुमङ्गलानि गायज्जगत्कलिमलापहराणि[४] कृत्वा ॥ कालात्मना निवसता यदुदेवगेहे पिण्डारकं समगमन्मुनयो विसृष्टाः ॥११॥ विश्वामित्रोऽसितः कण्वो दुर्वासा भृगुरङ्गिराः ॥ कश्यपो वाम-देवोऽत्रिर्वसिष्ठो नारदादयः ॥ १२ ॥ क्रीडन्तस्तानुपव्रज्य कुमारा यदुनन्दनाः ॥ उपसंगृह्य पप्रच्छुरविनीता विनी-तवत् ॥ १३ ॥ ते वेषयित्वा स्त्रीवेषैः साम्बं जाम्बवतीसुतम् ॥ एषा पृच्छति वो विप्रा अन्तर्वत्न्यसितेक्षणा ॥ १४ ॥

ष्णेन विसर्जिताः सन्तो द्वारकासमीपं पिण्डारकं तीर्थं जग्मुः ॥११॥ ते के विश्वामित्रः १ असितः २ कण्वः ३ दुर्वासाः ४ भृगुः ५ अङ्गिराः ६ कश्यपः ७ वामदेवः ८ अत्रिः ९ वसिष्ठः १० नारदादयः ॥१२॥ तत्र यदुकुमाराः क्रीडमानाः सन्तस्तानुपव्रज्य प्रणम्य पप्रच्छुः ॥१३॥ प्रश्नमाह । ते कुमाराः स्त्रीवेषैः साम्बं वेषयित्वोचुः हे विप्राः ! एषा गर्भिणी युष्मान् साक्षात् प्रष्टुं लज्जमानाऽस्मन्मुखेनैव पृच्छति । अत इयं



१ पृथिव्याम् । २ सकलानां सुन्दरवस्तूनां सन्निवेशो यस्मिंस्तत् । ३ कीर्तनादिना पुण्यानि निवहन्ति प्रापयन्तीति । ४ गायतो जगतः कलिमलापहराणि ।

प्राप्तप्रसवकाला किं कन्यां वा पुत्रं वा जनयिष्यति तद्ब्रूत ॥ १४ ॥ १५ ॥ एवं वञ्चिताः मुनयः कुपिताः सन्तः ऊचुः हे मन्दाः । इयं वः कुलनाशनं मुसलं जनयिष्यति ॥१६॥ तच्छ्रुत्वा ते बालाः अतिसंत्रस्ताः सन्तः सहसा तदुदरं विमुच्य तत्र लोहमयं मुसलं ददृशुः ॥१७॥ मन्दभाग्यैरस्माभिः किमिदं कृतम् । अस्मान् जनाः किं वदिष्यन्ति । एवं विह्वलितास्ते मुसलं गृहीत्वा गृहान् ययुः ॥१८॥ तन्मुसलं सभायां नीत्वोग्रसेनाय निवेदयामासुः न तु कृष्णाय ॥१९॥ ततः सर्वे द्वारकौकसोऽमोघं विप्रशापं श्रुत्वा मुसलं च दृष्ट्वा भयभीताः बभूवुः ॥२०॥

प्रष्टुं विलज्जती साक्षात्प्रब्रूतामोघदर्शनाः ॥ प्रसोष्यन्ती पुत्रकामा किंस्वित्संजनयिष्यति ॥१५॥ एवं प्रलब्धा मुनयस्तानूचुः कुपिता नृप ॥ जनयिष्यति वो मन्दा मुसलं कुलनाशनम् ॥१६॥ तच्छ्रुत्वा तेऽतिसंत्रस्ता विमुच्य सहसोदरम् ॥ साम्बस्य ददृशुस्तस्मिन्मुसलं खल्वयस्मयम् ॥ १७ ॥ किं कृतं मन्दभाग्यैर्नः किं वदिष्यन्ति नो जनाः ॥ इति विह्वलिता गेहानादाय मुसलं ययुः ॥ १८ ॥ तच्चोपनीय सदसि परिम्लानमुखश्रियः ॥ राज्ञ आवेदयाञ्चक्रुः सर्वयादवसन्निधौ ॥ १९ ॥ श्रुत्वाऽमोघं विप्रशापं दृष्ट्वा च मुसलं नृप ॥ विस्मिता भयसंत्रस्ता बभूवुर्द्वारकौकसः ॥ ॥ २० ॥ तच्चूर्णयित्वा मुसलं यदुराजः स आहुकः ॥ समुद्रसलिले प्रास्यल्लोहं चास्यावशेषितम् ॥ २१ ॥ कश्चिन्मत्स्योऽग्रसील्लोहं चूर्णानि तरलैस्ततः ॥ उह्यमानानि वेलायां लग्नान्यासन्किलैरकाः ॥ २२ ॥ मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ॥ तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥ २३ ॥ भगवान्ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ॥ कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ २४ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे यदुकुलस्य विप्रशापो नाम प्रथमोऽध्यायः ॥ १ ॥

ततः उग्रसेनस्तन्मुसलं चूर्णयित्वा समुद्रोदके प्रास्यत् अवशिष्टं लोहं च ॥२१॥ तल्लोहं कश्चिन्मत्स्यो जग्रास तच्चूर्णानि तरङ्गैरुह्यमानानि तटे लग्नानि । तान्येरकाः आसन् ॥२२॥ ततः स मत्स्योऽब्धावन्यमत्स्यैः सह मत्स्यघ्नैर्जालेन गृहीतः। तदुदरस्थं लोहं लुब्धकः शराग्रे फलं चकार ॥२३॥ ज्ञातसर्वार्थोभगवान् समर्थोऽपि विप्रशापमन्यथा कर्तुं नैच्छत् ॥२४॥ इति श्रीभागवते एकादशस्कन्धेचूर्णिकायां प्रथमोऽध्यायः॥१॥

द्वितीये निमिजायन्तसंवादेनाह नारदः ॥ धर्मान् भागवतान् भक्त्या वसुदेवाय पृच्छते ॥ १ ॥ श्रीशुक उवाच ॥ गोविन्दरक्षितायां द्वार-
कायां कृष्णदर्शनलालसो नारद उवास ॥१॥ हे नृप ! एवंभूतं कृष्णचरणकमलं सर्वतोमृत्युः पुमान् का तु न भजेत् ॥२॥ अथैकदा वसु-
देवो गृहागतं नारदं सुखमासीनं नत्वा जगाद ॥३॥ वसुदेव उवाच ॥ हे भगवन् ! यथा पित्रोरागमनं बालानां मङ्गलाय तथा भवतः आग-
मनं सर्वदेहिनां स्वस्तये ॥४॥ किं च देवानां वृष्ट्यादि चरितं भूतानां सुखाय अतिवृष्ट्यादि दुःखायापि भवति । त्वादृशां साधूनां सुखायैव

श्रीशुक उवाच ॥ गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ॥ अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालसः ॥ १ ॥
को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ॥ न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः ॥२॥ तमेकदा तु देवर्षिं वसु-
देवो गृहागतम् ॥ अर्चितं सुखमासीनमभिवाद्येदमब्रवीत् ॥ ३ ॥ वसुदेव उवाच ॥ भगवान्भवतो यात्रा स्वस्तये
सर्वदेहिनाम् ॥ कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ ४ ॥ भूतानां देवचरितं दुःखाय च सुखाय च ॥ सुखा-
यैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥ भजन्ति ये यथा देवान्देवा अपि तथैव तान् ॥ छायेव कर्मसचिवाः
साधवो दीनवत्सलाः ॥ ६ ॥ ब्रह्मंस्तथापि पृच्छामो धर्मान्भागवतांस्तव ॥ याञ्छ्रुत्वा श्रद्धया मर्त्यो मुच्यते विश्वतो-
भयात् ॥ ७ ॥ अहं किल पुरानन्तं प्रजार्थो भुवि मुक्तिदम् ॥ अपूजयं न मोक्षाय मोहितो देवमायया ॥ ८ ॥
यथा विचित्रव्यसनाद्भवद्भिर्विश्वतो भयात् ॥ मुच्येमह्यञ्जसैवाद्धा तथा नः शाधि सुव्रत ॥ ९ ॥ श्रीशुक उवाच ॥
राजन्नेवं कृतप्रश्नो वसुदेवेन धीमता ॥ प्रीतस्तमाह देवर्षिर्हरेः संस्मारितो गुणैः ॥ १० ॥

भवति ॥ ५ ॥ ये यथा देवान् भजन्ति तथैव तान् देवाः भजन्ति । यथा पुरुषो यत् करोति तथैव छायापि । साधवस्तु दीनवत्सला एव
॥ ६ ॥ हे ब्रह्मन् ! अतो भागवतधर्मान् पृच्छामः । यान् श्रुत्वा मर्त्यः सर्वभयाद् मुच्यते ॥ ७ ॥ हे नारद ! पुरा पुत्रार्थी सन् मुक्तिदमनन्तम-
पूजयं न तु मोक्षाय ॥८॥ अतो विचित्रव्यसनात् संसाराद् भवद्भिर्हेतुभूतैर्यथा वयं मुच्येमहि तथा नः शिक्षय ॥ ९ ॥ श्रीशुक उवाच ॥ हे
राजन् ! एवं वसुदेवेन कृतप्रश्नो नारदः प्रीतः सन् तमाह ॥ १० ॥

नारद उवाच ॥ हे वसुदेव ! त्वया सम्यङ्‌ निश्चितम् । यतः सर्वशोधकान् भगवद्धर्मान् पृच्छसि ॥ ११ ॥ हे वसुदेव ! श्रुतः पठितो ध्यातो भगवद्धर्मो विश्वद्रुहोऽपि सद्यः पुनाति ॥ १२ ॥ अहो वसुदेव ! त्वया पुण्यश्रवणकीर्तनो नारायणो देवो मम संस्मारितः ॥ १३ ॥ अत्र त्वत्पृष्टे भगवद्धर्मनिर्णये ऋषभपुत्राणां जनकस्य च संवादरूपमितिहासं कथयामि त्वं शृणु ॥१४॥ मनोः पुत्रः प्रियव्रतः । तस्याग्नीध्रः । ततो नाभिः । तस्य ऋषभः ॥ १५ ॥ तमृषभं वासुदेवांशं मोक्षधर्मं वक्तुमिच्छयाऽवतीर्णं जगदुः । तस्य पुत्रशतमासीत् ॥१६॥ तेषां मध्ये नारा-

नारद उवाच ॥ सम्यगेतद्व्यवसितं भवता सात्वतर्षभ ॥ यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥ ११ ॥ श्रुतो नु पठितो ध्यात आदृतो वाऽनुमोदितः ॥ सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ १२ ॥ त्वया परमकल्याणः पुण्यश्रवणकीर्तनः ॥ स्मारितो भगवानद्य देवो नारायणो मम ॥१३॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ आर्षभाणां च संवादं विदेहस्य महात्मनः ॥१४॥ प्रियव्रतो नाम सुतो मनोः स्वायंभुवस्य यः ॥ तस्याग्नीध्रस्ततो नाभिर्ऋषभस्तत्सुतः स्मृतः ॥१५॥ तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ॥ अवतीर्णं सुतशतं तस्यासीद्वेदपारगम् ॥ १६ ॥ तेषां वै भरतो ज्येष्ठो नारायणपरायणः ॥ विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥१७॥ स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ॥ उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥ तेषां नव नवद्वीपपतयोऽस्य समन्ततः ॥ कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातयः ॥१९॥ नवाभवन् महाभागा मुनयो ह्यर्थशंसिनः ॥ श्रमणा वातरशना आत्मविद्याविशारदाः ॥ २० ॥ कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ॥ आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २१ ॥

यणपरो भरतो ज्येष्ठः तन्नाम्नेदमजनाभं सद्भारतं वर्षं जातम् ॥१७॥ स भुक्तभोगां महीं त्यक्त्वा गृहान्निर्गतः सन् हरिं सेवमानस्त्रिभिर्जन्मभिस्तत्पदवीं लेभे॥१८॥ तेषु नव सुताः नवानां ब्रह्मावर्तादीनां भरतवर्षखण्डानां पतयः आसन् । तत्रैकाशीति सुताः कर्ममार्गप्रवर्तकाः ब्राह्मणाः आसन् ॥ १९ ॥ तत्र च नव महाभागाः मुनयो दिगम्बराः आत्मविद्याविशारदाः अभवन् ॥ २० ॥ ते च—कविः १ हरिः २ अन्तरिक्षः ३ प्रबुद्धः ४ पिप्पलायनः ५ आविर्होत्रः ६ द्रुमिलः ७ चमसः ८ करभाजनः ९ ॥ २१ ॥

एते भगवद्रूपं विश्वं स्वाव्यतिरेकेण पश्यन्तो महीं व्यचरन् ॥२२॥ अकुण्ठितेष्टगतयो मुक्ताः सुरसिद्धसाध्यगन्धर्वादिलोकान् तथा मुनिचा-
रणविद्याधरादीनां भुवनानि कामं चरन्ति ॥ २३ ॥ ते एकदा ऋषिभिर्विस्तार्यमाणं निमेर्यज्ञं यदृच्छयोपजग्मुः ॥ २४ ॥ तान्सूर्यप्रभान्महा-
भागवतान्दृष्ट्वा निमिरग्नयो विप्राश्चोपतस्थिरे ॥ २५ ॥ ततो नारायणपरांस्ताञ्ज्ञात्वा विदेहः प्रीतः सन् तेषां पूजां चकार ॥२६॥ ब्रह्मपुत्रोप-
मान् तान् पप्रच्छ ॥ २७ ॥ विदेह उवाच । अहं वो भगवतः पार्षदान्मन्ये । यतो विष्णुभक्ताः लोकपावनाय सर्वत्र चरन्ति ॥ २८ ॥

एते वै भगवद्रूपं विश्वं सदसदात्मकम् ॥ आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन् महीम् ॥ २२ ॥ अव्याहतेष्टग-
तयः सुरसिद्धसाध्यगन्धर्वयक्षनरकिन्नरनागलोकान् ॥ मुक्ताश्चरन्ति मुनिचारणभूतनाथविद्याधरद्विजगवां भुवनानि
कामम् ॥२३॥ त एकदा निमेः सत्रमुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरजनाभेर्महात्मनः ॥२४॥ तान् दृष्ट्वा सूर्य-
संकाशान्महाभागवतान्नृप ॥ यजमानोऽग्नयो विप्राः सर्व एवोपतस्थिरे ॥२५॥ विदेहस्तानभिप्रेत्य नारायणपरायणान्॥
प्रीतः संपूजयांचक्र आसनस्थान्यथार्हतः ॥२६॥ तान्रोचमानान्स्वरुचा ब्रह्मपुत्रोपमान्नव ॥ पप्रच्छ परमप्रीतः प्रश्रया-
वनतो नृपः ॥ २७ ॥ विदेह उवाच ॥ मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः ॥ विष्णोर्भूतानि लोकानां पावनाय
चरंति हि ॥ २८ ॥ दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः ॥ तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ २९ ॥ अत
आत्यंतिकं क्षेमं पृच्छामो भवतोऽनघाः॥ संसारेऽस्मिन्क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥ ३० ॥ धर्मान् भागवतान्
ब्रूत यदि न श्रुतये क्षमम् ॥ यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ ३१ ॥ नारद उवाच ॥ एवं ते निमिना
पृष्टा वसुदेव महत्तमाः ॥ प्रतिपूज्याब्रुवन्प्रीत्या ससदस्यर्त्विजं नृपम् ॥ ३२ ॥

मानुषो देहो दुर्लभः क्षणभंगुरः तत्रापि वैकुण्ठप्रियदर्शनं दुर्लभं मन्ये ॥२९॥ हे ऋषयः ! अतो युष्मानात्यन्तिकं क्षेमं पृच्छामः । यतोऽत्र
संसारे क्षणार्धमपि सत्सङ्गो निधिलाभवदानन्दकरः ॥३०॥ तदर्थं च भागवतान् धर्मान् ब्रूत । यैर्धर्मैस्तुष्टो हरिः शरणागतायात्मानमपि
दास्यति ॥ ३१ ॥ नारद उवाच ॥ हे वसुदेव ! एवं निमिना पृष्टास्ते ससदस्यर्त्विजं निमिं जगदुः ॥ ३२ ॥

कविरुवाच । हे नृप ! अत्र भवेऽच्युतस्य पादाम्बुजोपासनं निर्भयं मन्ये । यत्र निःशेषं भयं निवर्तते ॥३३॥ श्रीभगवता स्वमुखेनैवाविदुषां पुंसामनायासेनात्मलब्धये ये उपायाः प्रोक्ताः तान् भागवतान् धर्मान् विद्धि ॥३४॥ हे राजन् ! नरो यान् धर्मानास्थाय विघ्नैर्न विहन्यते नेत्रे निमील्य धावन्नपि न स्खलेन्न पतेत् ॥३५॥ देहवाङ्मनइन्द्रियबुद्धिचित्तैः स्वभावेन च यत् करोति तत्सर्वं नारायणाय समर्पयेत् । एवं कृते सकलो भगवद्धर्मो भवति ॥३६॥ किं च ईशपराङ्मुखस्य तन्मायया भयं भवति । अतो बुधो भक्त्या तमेव भजेत् ॥३७॥ अयं द्वैतप्रपञ्चोऽवा-

कविरुवाच ॥ मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् । उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ ३३ ॥ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये । अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥३४॥ यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् । धावन् निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ ३५ ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ ३६ ॥ भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः । तन्माययाऽतो बुध आभजेत्तं भक्त्यैक-येशं गुरुदेवतात्मा ॥ ३७ ॥ अविद्यमानोऽप्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथौ यथा । तत्कर्मसंकल्पविक-ल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥३८॥ शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके । गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः ॥ ३९ ॥ एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुत-चित्त उच्चैः । हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥

स्तवोऽपि ध्यातुर्मनसा स्वप्नमनोरथाविव भवति । अतस्तन्मनः स्वाधीनं कुर्यात् । ततोऽभयं स्यात् ॥३८॥ किं च हरेः सुभद्राणि जन्म-कर्माणि तदर्थकानि नामानि च गायन् शृण्वंश्चासङ्गो लोके विचरेत् ॥३९॥ एवं भजन्पुमान् हरिनामकीर्त्या जातप्रेमा सन् हसति रोदिति गायति नृत्यति एवमुन्मादिवत् करोति स लोकबाह्यः ॥ ४० ॥

१ असति देहादौ आत्मभावाद् आत्मबुद्ध्या हेतुनोद्विग्नबुद्धेरिति योज्यम् । २ तन्मायाऽस्मृतिः भगवतः स्वरूपाऽस्फूर्तिः । ततो विषयो देहोऽस्मीत्येवं रूपः ततो द्वितीयाभिनिवेशाद् भयं भवति । ३ गुरुरेव देवता ईश्वरः आत्माप्रेष्ठश्च यस्य ।

किंच खं वायुं जलं पृथ्वीमग्निं गृहादीन् वृक्षान् सरित्समुद्रान् हरेः शरीरं ज्ञात्वा प्रणमेत् ॥४१॥ हरिं भजतः पुंसः एकदैव भक्तिर्भगवद्रूपस्मृति-वैराग्यं चैतत् त्रिकं भवति । यथाऽश्नतः पुंसः सुखमुदरभरणं क्षुन्नाशश्च तथा ॥४२॥ एवमच्युताङ्घ्रिं भजतो भक्तस्य भक्तिवैराग्यभगवत्प्रबोधाः भवन्ति । ततः स शान्तिं प्राप्नोति ॥४३॥ राजोवाच ॥ हे ऋषयः यद्धर्मैं निष्ठितो यत्स्वभावो यथा वर्तते यैः लिङ्गैर्हरिप्रियो भवति तं भागवतं धर्मं ब्रूत ॥४४॥ हरिरुवाच ॥ यः स्वस्मिन् सर्वभूतेषु भगवद्भावं तथा भूतानि भगवति पश्यति स भागवतोत्तमः ॥४५॥ यः ईश्वरे भक्तेष्वज्ञेषु

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ॥ सरित्समुद्रांश्च हरेः शरीरं यत् किं च भूतं प्रण-मेदनन्यः ॥ ४१ ॥ भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः ॥ प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥ ४२ ॥ इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः ॥ भवन्ति वै भागव-तस्य राजंस्ततः परां शान्तिमुपैति साक्षात् ॥ ४३ ॥ राजोवाच ॥ अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् ॥ यथा चरति यद् ब्रूते यैर्लिङ्गैर्भगवत्प्रियः ॥ ४४ ॥ हरिरुवाच ॥ सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ॥ भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ४५ ॥ ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ॥ प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥४६॥ अर्चायामेव हरये पूजां यः श्रद्धयेहते ॥ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥ गृहीत्वा-पीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति ॥ विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः ॥ ४८ ॥ देहेन्द्रियप्राणमनो-धियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ॥ संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ४९ ॥ न कामकर्म-बीजानां यस्य चेतसि संभवः ॥ वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ५० ॥

शत्रुषु प्रेममैत्रीकृपोपेक्षाः करोति स मध्यमः ॥४६॥ यश्च श्रद्धया प्रतिमायामेव पूजां करोति न तद्भक्तेष्वन्येषु वा स प्राकृतो भक्तः शनैः श्रेष्ठः स्यात् ॥४७॥ य इन्द्रियैर्विषयान् गृहीत्वापि न द्वेष्टि न हृष्यति स उत्तमः ॥४८॥ किंच देहेन्द्रियादीनां जन्मनाशक्षुत्तृषादिसंसारधर्मैर्यो न मुह्यति स भागवतप्रधानः ॥ ४९ ॥ यस्य चेतसि कामकर्मवासनानां न संभवो य केवलं वासुदेवाश्रयः सोपि भागवतोत्तमः ॥ ५० ॥

यस्य च जन्मकर्मवर्णाश्रमादिभिरस्मिन् देहेऽहंभावो न स हरेः प्रियः ॥५१॥ यस्य स्वः पर इति वित्तेषु देहेषु च भेदो न स उत्तमः ॥ ५२ ॥ किंच त्रैलोक्यराज्यार्थं निमिषार्धमपि भगवत्पदारविन्दभजनाद् यो न चलति स वैष्णवेषु श्रेष्ठः ॥५३॥ हृदि हरिं भजतां पुंसां कामतापो न संभवति। उदिते चन्द्रेऽर्कताप इव ॥५४॥ येन प्रेमरशनया स्वहृदये हरिचरणकमलं निबद्धम्। हरिरपि यस्य हृदयं न मुञ्चति स भागवत-

न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ॥ सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥ ५१ ॥ न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा ॥ सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥ त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् ॥ चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥५३॥ भगवत उरुविक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया निरस्ततापे ॥ हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ५४ ॥ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः ॥ प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥५५॥ इति श्रीभाग० म० एका० नारदवसुदेवसंवादान्तर्गतनिमिजायन्तेयसंवादे द्वितीयोऽध्यायः ॥ २ ॥ राजोवाच ॥ परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् ॥ मायां वेदितुमिच्छामि भगवन्तो ब्रुवन्तु नः ॥१॥ नानुतृप्ये जुषन् युष्मद्वचो हरिकथामृतम् ॥ संसारतापनिस्तप्तो मर्त्यस्तत्तापभेषजम् ॥ २ ॥ अन्तरिक्ष उवाच ॥ एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ॥ ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥ ३ ॥

प्रधानः ॥ ५५ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे चू० द्वितीयोऽध्यायः ॥ २ ॥ माया तत्तरणं ब्रह्म कर्म प्रश्नचतुष्टये ॥ तृतीये तूत्तरं दत्तमार्षभैर्मुनिभिः पृथक् ॥ १ ॥ राजोवाच ॥ हे योगिनः ! विष्णोः मायिनामपि मोहिनीं मायां ज्ञातुमिच्छामः ॥ १ ॥ संसारतापतप्तोऽहं हरिकथां शृण्वन् न तृप्यामि ॥ २ ॥ अन्तरिक्ष उवाच ॥ हे राजन् ! हरिर्जीवस्य विषयभोगार्थमेभिर्महाभूतैर्भूतानि ससर्ज ॥ ३ ॥

१ अजिते हरावेवात्मा येषां तथाभूतैः सुरादिभिरपि दुर्लभात् । २ उरुविक्रमौ च तावङ्घ्री च तयोः शाखाः अंगुलयः । ३ अवशेनाप्यभिहितमात्रोऽप्यघौघं नाशयति यः सः । ४ त्वं मिमीते प्रमिमीतमुपास्ते यः स स्वमाता तस्यात्मनः जीवस्य प्रकृष्टायं सिद्धये ।

एवं भूतानि महाभूतैः सृष्ट्वाऽन्तर्यामिरूपेण तेषु प्रविश्य मनसा बाह्येन्द्रियरूपेणात्मानं विभजन् विषयान् सेवते ॥ ४ ॥ स जीवः ईश्वरेण प्रका-
शितैरिन्द्रियैर्विषयान् भुञ्जानः । शरीरमात्मानं मन्वानः शरीरादौ सज्जते ॥ ५ ॥ कर्मेन्द्रियैः सवासनानि कर्माणि कुर्वन् तत्फलं च सुखदुःखा-
त्मकं गृह्णन् जीवः इह संसारे भ्रमति न मुच्यते ॥६॥ एवं जीवः कर्मगतीर्भ्रमन् प्रलयपर्यन्तं जन्ममरणे प्राप्नोति ॥७॥ एवमुक्त्वा प्रलयं दर्श-
यति । महाभूतानां नाशहेतौ प्राप्ते सति स्थूलसूक्ष्मात्मकं कार्यजातमव्यक्ताय नेतुं कालः आकर्षति ॥८॥ ततो नाशहेतूनाह । आदौ शतवर्ष

एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः ॥ एकधा दशधात्मानं विभजञ्जुषते गुणान् ॥ ४ ॥ गुणैर्गुणान्स भुञ्जान आत्मप्रद्योतितैः प्रभुः ॥ मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥५॥ कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत् ॥ तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरम् ॥ ६ ॥ इत्थं कर्मगतीर्गच्छन्बह्वभद्रवहाः पुमान् ॥ आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ॥ ७ ॥ धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ॥ अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ॥ ८ ॥ शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि ॥ तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति ॥ ९ ॥ पातालतलमारभ्य संकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखो विष्वग् वर्धते वायुनेरितः ॥ १० ॥ सांवर्तको मेघगणो वर्षति स्म शतं समाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥ ११ ॥ ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ॥ अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः ॥ १२ ॥ वायुना हृतगन्धा भूः सलिलत्वाय कल्पते ॥ सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते ॥ १३ ॥ हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ॥ हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥ १४ ॥

भुव्यनावृष्टिर्भविष्यति । ततः सूर्यो लोकत्रयं प्रतपिष्यति ॥९॥ संकर्षणमुखाग्निः पातालतलमारभ्य सर्वतो दहन् वर्धते ॥१०॥ ततो मेघगणो-
हस्तिशुण्डातुल्यधाराभिः शतवर्षं वर्षति तदा विराट् जले लीयते॥११॥ततो वैराजः पुरुषोऽधिराड्रूपं हित्वा कारणं प्रविशति अग्निर्निरिन्धनं
इव ॥१२॥ ततो वायुना हृतगन्धा भूर्जले लीयते । तत् जलं तेजसि लीयते । तत् तेजो वायौ लीयते स वायुराकाशे लीयते ॥ १३ ॥ १४ ॥

१ प्रलयकर्ता । २ आकाशेन ।

आकाशं तमसाहंकारे लीयते । बुद्धीन्द्रियाणि राजसाहंकारे लीयन्ते । मनोदेवाः सात्त्विकाहंकारे लीयन्ते । एवं त्रिविधाहंकारो महत्तत्त्वे लीयते । स महान् मायायां लीयते ॥ १५ ॥ हे जनक ! एषा सर्गस्थित्यन्तकारिणी त्रिगुणा भगवतो माया वर्णिता । भूयः किं श्रोतुमिच्छसि ॥ १६ ॥ जनक उवाच ॥ हे महर्षे ! स्थूलधियः एतां दुस्तरां मायां सुखेन तरन्ति तथेदमुच्यताम् ॥ १७ ॥ प्रबुद्ध उवाच ॥ हे नृप ! दुःखनाशाय सुखप्राप्तये च मैथुनकर्म कुर्वतां नृणां वैपरीत्यं फलं पश्येत् ॥ १८ ॥ नित्यदुःखदेन धनेन गृहपुत्रपशुभिरेतैश्चलैः का

कालात्मना हृतगुणं नभ आत्मनि लीयते ॥ इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ प्रविशन्ति ह्यहंकारं स्वगुणैरहमात्मनि ॥ १५ ॥ एषा माया भगवतः सर्गस्थित्यन्तकारिणी ॥ त्रिवर्णा वर्णिताऽस्माभिर्भूयः किं श्रोतुमिच्छसि ॥ १६ ॥ राजोवाच ॥ अथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ॥ तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥ १७ ॥ प्रबुद्ध उवाच ॥ कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ॥ पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ १८ ॥ नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ॥ गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥१९॥ एवं लोकं परं विद्यान्नश्वरं कर्म निर्मितम् ॥ सतुल्यातिशयध्वंसं[1] यथा मण्डलवर्तिनाम्[2] ॥ २० ॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ॥ शब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥२१॥ तत्र भागवतान्धर्माञ्छिक्षेद्गुर्वात्मदैवतः ॥ अमाययाऽनुवृत्त्या यैस्तुष्येदात्मप्रदो हरिः ॥ २२ ॥ सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ॥ दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ २३ ॥

प्रीतिः न कापि इति पश्येत् ॥ १९ ॥ एवं कर्मनिर्मितं स्वर्गादिलोकमपि नश्वरं पश्येत् ॥ २० ॥ तस्माच्छ्रेयो जिज्ञासुः पुमान् शाब्दे परे च ब्रह्मणि निपुणं गुरुं शरणं गच्छेत् ॥ २१ ॥ तत्र गुरुरेवात्मा दैवतं च यस्य तादृशः सन् भगवद्धर्मान् शिक्षेत, यैर्हरिस्तुष्यति ॥ २२ ॥ किंच सर्वतः सङ्गं त्यक्त्वाऽऽदौ साधुसङ्गं कृत्वा हीनेषु दयां समेषु मैत्रीमुत्तमेषु नम्रतां च शिक्षेत ॥ २३ ॥

---

१ सह तुल्येनातिशयेन ध्वंसेन च वर्तमानम् । अतस्तुल्ये स्पर्धाऽतिशयेऽसूया ध्वंसालोचने भयादिकं चापरिहार्यमित्यर्थः । २ माण्डलिकानां राज्ञाम् ।

तथा शौचं स्वधर्माचरणं क्षमां मौनं स्वाध्यायं सरलतां ब्रह्मचर्यमहिंसां द्वन्द्वसमत्वम् ॥२४॥ सर्वत्रात्मेश्वरान्वीक्षां मोक्षं गृहादिषु निरभिमानित्वं शुद्धवल्कलपरिधानं यथालाभेन सन्तोषम् ॥ २५ ॥ भागवते शास्त्रे श्रद्धामन्यशास्त्रेऽनिन्दां मनसः प्राणायामेन वाचो मौनेन कर्मणोऽनीहया दण्डं शिक्षेत ॥ २६ ॥ हरेर्जन्मकर्मगुणानां श्रवणं कीर्तनं ध्यानं हरौ सर्वकर्मार्पणम् ॥२७॥ यज्ञदानतपोजपादि सर्वं स्त्रीपुत्रगृहप्राणानालक्ष्येश्वराय निवेदनं यत्तच्छिक्षेत ॥ २८ ॥ एवं कृष्णात्मनाथेषु नृषु सख्यं स्थावरजङ्गमयोः पूजां च शिक्षेत ॥ २९ ॥ मिथो-

शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ॥ ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ २४ ॥ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ॥ विविक्तचीरवसनं सन्तोषं येन केनचित् ॥ २५ ॥ श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ॥ मनोवाक्कर्मदण्डं च सत्यं शमदमावपि ॥२६॥ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ २७ ॥ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ॥ दारान्सुतान् गृहान्प्राणान् यत् परस्मै निवेदनम् ॥ २८ ॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ॥ परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ २९ ॥ परस्परानुकथनं पावनं भगवद्यशः ॥ मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ३० ॥ स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ॥ भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ३१ ॥ क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ॥ गायन्ति नृत्यन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥ ३२ ॥ इति भागवतान्धर्माञ्छिक्षन्भक्त्या तदुत्थया ॥ नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ३३ ॥

भगवद्यशसः कथनं मिथः प्रीतिर्मिथः सन्तोषः एतच्छिक्षेत ॥ ३० ॥ एवं मिथोऽघौघहरं हरिं स्मरन्तःस्मारयन्तो ये ते साधनभक्त्या संजातया प्रेमलक्षणया भक्त्या रोमाञ्चिततनुं बिभ्रति ॥ ३१ ॥ क्वचिद् हरिचिन्तया रुदन्ति, क्वचिद् हसन्ति, क्वचिद् नृत्यन्ति। एवं परं भावं प्राप्य निर्वृताः सन्तस्तूष्णीं भवन्ति ॥ ३२ ॥ इति भागवतान्धर्मान् शिक्षन्नारायणपरः पुमान् मायां तरति ॥ ३३ ॥

१ हर्षविषादराहित्यम् । २ शीतोष्णसुखदुःखादिरूपयोः ।

जनक उवाच। हे ब्रह्मज्ञाः! नारायणाख्यब्रह्मणः स्वरूपमस्मान् वक्तुमर्हथ ॥ ३४ ॥ पिप्पलायन उवाच। यः उत्पत्तिपालननाशानां हेतुरपि स्वयमहेतुः, यश्च जाग्रत्स्वप्नसुषुप्तिषु समाध्यादौ चानुवर्तमानः, येन च सजीवितानि देहेन्द्रियादीनि प्रवर्तन्ते–तं नारायणं परमात्मानं ब्रह्मतत्त्वं जानीहि ॥ ३५ ॥ शब्दोऽप्यात्मनि प्रमाणं सदर्थादुक्तं यथा भवति तथा बोधयति न साक्षात्। कुतः स्वस्यैव बोधकस्य निषेध-

राजोवाच ॥ नारायणाभिधानस्य ब्रह्मणः परमात्मनः ॥ निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः ॥३४॥ पिप्पलायन उवाच ॥ स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ॥ देहेन्द्रियासुहृदयानि चरंति येन सञ्जीवितानि तदवेहि परं नरेन्द्र ॥ ३५ ॥ नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथाऽनलमर्चिषः स्वाः ॥ शब्दोऽपि बोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥ ३६ ॥ सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदंति जीवम् ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥ ३७ ॥ नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि ॥ सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥ ३८ ॥

रूपत्वात्। "यतो वाचो निवर्तन्ते" इत्यादि श्रुतेः तदेव परं ब्रह्म जानीहि ॥ ३६ ॥ किं च आदावेकं ब्रह्म तदेव सत्त्वं रजस्तम इति त्रिवृत्प्रधानं जीवं वदन्ति। ततः सूत्रं महानित्यादिस्थूलं सूक्ष्मं च सकलं विपरिणमते ब्रह्मैव भाति एवं जानीहि ॥ ३७ ॥ आत्मनो जायते वर्धते म्रियते विनश्यतीति विकाराः न संति ॥ ३८ ॥

---

१ विश्वस्य। २ असवः– प्राणाः। ३ प्राप्नोति। ४ वागपि। ५ अग्नि यथा स्वा विस्फुलिङ्गा न प्रकाशयन्ति तथा परं ब्रह्म मनःप्रभृतयोऽपि न प्रकाशयन्ति। ६ ब्रह्मणो विना न निषेधसिद्धिः। सर्वस्य निषेधस्य सावधित्वात्। ७ ज्ञानं देवताः क्रियाः– इंद्रियाणि। अर्थाः–विषयाः। फलं–तस्यप्रकाशः सुखादिर्वा तद्रूपतया। ८ सदसतोः। ९ आगमापायिनां बाल्युवादिदेहानां तत्तत्कालद्रष्टा। न ह्यवस्थावतां द्रष्टा तदवस्थो भवतीत्यर्थः १० ननु निरवस्थः कोऽसावात्माऽस्त आह–उपलब्धिमात्रमिति। नन्वायातं तर्हि क्षणितत्वं नेत्याह सर्वत्रेति। सर्वत्र देशे शश्वत् सदा अनपायि अनुवर्तमानं। ननु नीलज्ञानं जातं पीतज्ञानं नष्टमिति प्रतीतेन ज्ञानस्यानपयित्वमत आह इंद्रियबलेनेति। सदेव ज्ञानमिन्द्रियबलेन विकल्पितं, विविधं कल्पितम्। व्यभिचारिष्वव्यभिचारे दृष्टान्तमाह प्राणो यथेति।

अण्डजेषु जरायुजेषूद्भिज्जेषु स्वेदजेषु प्राणो जीवमुपधावति ॥ ३९ ॥ यदा भगवच्चरणेच्छया याऽतिभक्तिर्भवति तया पुमान् चेतोमलानि नाशयेत् तदा शुद्धे चेतसि सत्यविघ्नेनात्मतत्त्वं प्राप्यते। तथाऽमलयोर्दृशोः पूर्वसिद्धः सूर्यप्रकाशस्तद्वत् ॥ ४० ॥ जनक उवाच ॥ हे ऋषयः ! अस्मान् कर्मयोगं वदत। येन पुमानिह कर्माणि विधूय ज्ञानं विन्दते ॥ ४१ ॥ इममेव प्रश्नं पूर्वं सनकादीनपृच्छम्। ते नाऽब्रु-

अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ॥ संन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥ ३९ ॥ यर्ह्यब्जनाभचरणैषणयोरुभक्त्याचेतोमलानि विधमेद् गुणकर्मजानि ॥ तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद् यथाऽमलदृशोः सवितृप्रकाशः ॥४०॥ राजोवाच ॥ कर्मयोगं वदत नः पुरुषो येन संस्कृतः ॥ विधूयेहाशु कर्माणि नैष्कर्म्यं विन्दते परम् ॥ ४१ ॥ एवं प्रश्नमृषीन् पूर्वमपृच्छं पितुरन्तिके ॥ नाब्रुवन् ब्रह्मणः पुत्रास्तत्र कारणमुच्यताम् ॥ ४२ ॥ आविर्होत्र उवाच ॥ कर्माकर्मविकर्मेति वेदवादो न लौकिकः ॥ वेदस्य चेश्वरात्मत्वात् तत्र मुह्यन्ति सूरयः ॥ ४३ ॥ परोक्षवादो वेदोऽयं बालानामनुशासनम् ॥ कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ ४४ ॥ नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः ॥ विकर्मणो ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४५ ॥

वन्। तत्र कारणमुच्यताम् ॥ ४२ ॥ आविर्होत्र उवाच। वेदविहितं कर्म। निषिद्धमकर्म। विहिताकरणं विकर्म इदं त्रयं वेदैकगम्यं न लौकिकम्। तच्च दुष्करम्। अतस्तदा तव बालत्वात् ते नैवाब्रुवन् ॥ ४३ ॥ अयं वेदः परोक्षवादः कर्ममोक्षाय कर्माणि विधत्ते, यथा क्षेमार्थं बालखण्डलड्डुकादिभिर्लोभयन्नौषधं दापयति तथा वेदोऽपि स्वर्गादिफलैर्लोभयन् कर्ममोक्षायैवकर्माणि विधत्ते ॥ ४४ ॥ योऽज्ञो वेदोक्तं नाचरेत् स तेनाधर्मेण मृत्युं प्राप्नोति ॥ ४५ ॥



१ लीने। २ यदा। ३ निर्विकारः। ४ लिङ्गशरीरमुपाधिं विना। विकारहेतोरुपाधेरभावादित्यर्थः। ५ तस्य दर्शनस्पर्शनादिविशेषज्ञानशून्यस्य सुखात्मनः सुषुप्तिसाक्षिणः स्मृतिरस्माकं भवति एतावन्तंकालं सुखमहं सुप्तो न किंचिद्वेदिषमिति। ६ यत्राऽन्यथा स्थितोऽर्थः स गोपायितुमन्यथा कृत्योच्यते स परोक्षवादः।

वेदोक्तमेव कुर्वाणो नरो नैष्कर्म्यसिद्धिं लभते । फलश्रुतिस्तु रोचनार्थैव ॥४६॥ किं च यो जीवस्य हृदयग्रन्थिं छेत्तुमिच्छेत् स तन्त्रवेदोक्त-विधिना हरिं भजेत् ॥४७॥ विधिना पूजाप्रकारं ज्ञात्वेप्सितमूर्त्यां हरिं भजेत् ॥४८॥ शुचिमूर्तः संमुखम् आसीनः प्राणायामभूतशुद्धयादि-भिर्देहं संशोध्य न्यासैः रक्षां कृत्वा हरिमर्चयेत् । तथा पुष्पादिपूजाद्रव्याणि संपाद्य सम्प्रोक्ष्य च स्थानं शुद्धं कृत्वा ॥ ४९ ॥ ५० ॥ पाद्यार्घ्याणि पात्राणि चोपकल्प्य प्रतिमादौ हृदयेऽपिकृतन्यासो मूलमन्त्रेण यथालब्धोपचारैः॥५१॥ साङ्गोपाङ्गां सपार्षदां तामिष्टमूर्तिं पाद्या-

वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ॥ नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ ४६ ॥ य आशु हृदय-ग्रन्थिं निर्जिहीर्षुः परात्मनः विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥ ४७ ॥ लब्धानुग्रह आचार्यात्तेन सन्दर्शि-तागमः ॥ महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः ॥ ४८ ॥ शुचिः संमुखमासीनः प्राणसंयमनादिभिः ॥ पिण्डं विशोध्य संन्यासकृतरक्षोऽर्चयेद्धरिम् ॥ ४९ ॥ अर्चादौ हृदये चापि यथालब्धोपचारकैः ॥ द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥ ५० ॥ पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः ॥ हृदादिभिः कृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५१ ॥ साङ्गोपाङ्गां सपार्षदां तां तां मूर्तिं स्वमन्त्रतः ॥ पाद्यार्घ्याचमनीयाद्यैः स्नानवासोविभूषणैः ॥ ॥ ५२ ॥ गन्धमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥ साङ्गं संपूज्य विधिवत् स्तवैः स्तुत्वा नमेद्धरिम् ॥ ५३ ॥ आत्मानं तन्मयं ध्यायन्मूर्तिं सम्पूजयेद्धरेः ॥ शेषामाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५४ ॥ एवमग्न्यर्क-तोयादावतिथौ हृदये च यः ॥ यजतीश्वरमात्मानमचिरान्मुच्यते च सः ॥ ५५ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे वसुदेवनारदसंवादे जायन्तेयोपाख्याने विदेहप्रश्ने तृतीयोऽध्यायः ॥ ३ ॥

र्घ्याचमनीयाद्यैः स्नानवस्त्रभूषणैः ॥५२॥ गन्धाक्षतपुष्पधूपदीपनैवेद्यादिभिः संपूज्य स्तोत्रैः स्तुत्वा हरिं प्रणमेत् ॥ ५३ ॥ तन्मयमात्मानं ध्यायन्निर्माल्यं शिरस्यादाय मूर्तिं मंदिरकरण्डादिषु संस्थाप्य पूजाविधिं समापयेत् ॥५४॥ एवमग्नौ सूर्यं जलेऽतिथौ हृदये यः आत्मानमी-श्वरं यजति सोऽचिरात् मुच्यते ॥ ५५ ॥ इति श्रीभाग० एकादश० चू० तृतीयोऽध्यायः ॥ ३ ॥

१ नैष्कर्म्यरूपाम् । २ द्रव्याणि पुष्पादीनि जलादिप्रोक्षणेन क्षितिसंमार्जनादिना आत्मानमव्यग्रतया लिङ्गं मूर्तिमनुलेपक्षालनादिना निष्पाद्य योग्यानि कृत्वा । ३ पूजाविधिं समापयेदिति शेषः ।

चतुर्थे त्ववतारेहाप्रश्नस्योत्तरमुक्तवान ॥ जयन्तीनन्दनो नाम्ना द्रुमिलो मुनिसत्तमः ॥१॥ जनक उवाच । इह हरिर्यैर्यैः स्वछन्दजन्मभिर्यानि यानि कर्माणि चक्रे करोति करिष्यति तानि नो ब्रुवन्तु ॥१॥ द्रुमिल उवाच । हे नृप ! योऽनन्तस्यानन्तगुणान्सङ्ख्यातुमिच्छति स मन्दमतिर्विद्वानपि भूमे रजांसि महता कालेन गणयेत् परन्तु भगवतो गुणान्नैव । अतः संक्षेपतस्तान् वक्ष्यामि ॥२॥ आदौ पुरुषावतारमाह । भगवान् पञ्चभूतैर्विराड्देहं निर्माय तस्मिन् ( लीलया न तु भोक्तृत्वेन ) प्रविष्टः सन् पुरुषाभिधानं प्राप ॥३॥ अस्य गुणकर्माण्याह । यस्यैष भुवन-

राजोवाच ॥ यानि यानीह कर्माणि यैर्यैः स्वच्छन्दजन्मभिः ॥ चक्रे करोति कर्ता वा हरिस्तानि ब्रुवन्तु नः ॥ १ ॥ द्रुमिल उवाच॥ यो वा अनन्तस्य गुणाननन्तानुक्रमिष्यन्स तु बालबुद्धिः ॥ रजांसि भूमेर्गणयेत्कथंचित्कालेन नैवाखिलशक्तिधाम्नः ॥ २ ॥ भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् ॥ स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥ यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि ॥ ज्ञानं स्वतः श्वसनतो बलमोजं ईहां सत्त्वादिभिः स्थितिलयोद्भवः आदिकर्ता ॥ ४ ॥ आदावभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः ॥ रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥ ५ ॥ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नरऋषिप्रवरः प्रशान्तः ॥ नैष्कर्म्यलक्षणमुवाच चचार कर्म योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥ ६ ॥

त्रयरूपो देहो यस्येन्द्रियैर्जीवानामिन्द्रियाणि यत्सत्त्वाद् ज्ञानं यत्प्राणतो देहेंद्रियकर्मशक्तयो यश्च सत्त्वादिभिर्गुणैर्विश्वस्यस्थित्यादावादिकर्ता ॥४॥ सोऽस्य सर्गे रजसा आदौ ब्रह्माऽभूत् । पालनार्थे सत्त्वेन विष्णुरभूत् । तथाऽस्य नाशाय तमसा रुद्रोऽभूत् ॥५॥ ततो धर्मात् मूर्त्यां भार्यायां नारायणो नर इति द्विमूर्त्या जातः सन् ज्ञानयोगं नारदादिभ्यः उक्त्वा स्वयं च तपश्चचार । सोऽद्याप्यास्ते ॥ ६ ॥

---

१ वै । २ स्वरूपभूतात् । ३ देहशक्तिः । ४ इन्द्रियशक्तिः । ५ क्रियाशक्तिः ।

ततः ईशस्तपसा मम स्थानं ग्रहीष्यतीतीन्द्रो विशङ्क्य तस्य तपोनाशाय बदर्याश्रमं प्रत्यप्सरोगणवसन्तसुमन्दवायुभिः सह मदनं प्रेषयामास। स तत्र गत्वा स्त्रियः अवलोकनकटाक्षबाणैस्तं विव्याध ॥७॥ नारायणः एवमिन्द्रकृतमपराधं ज्ञात्वा प्रहस्य कम्पितान् गणान् माभैष्टेत्याह। हे कामादयः ! मत्तः आतिथ्यं स्वीकुरुत। अन्यथाऽयमाश्रमः शून्यः स्यात् ॥८॥ एवं नारायणे वदति सति कामादयो नम्रशिरसो दयावन्तं तमूचुः। हे विभो ! मायातः परे त्वय्येतदक्षोभानुकम्पादि नाश्चर्यम् ॥९॥ अस्माकं चापराधाचरणं स्वभावत्वान्न चित्रम्। ( कर्मफलं ) स्वर्ग

इन्द्रो विशङ्क्य मम धाम जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम् ॥ गत्वाप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः[1] ॥ ७ ॥ विज्ञाय शक्रकृतमक्रममादिदेवः प्राह प्रहस्य गतविस्मय एजमानान् ॥ मा भैष्ट भो मदनमारुतदेववध्वो गृह्णीत नो बलिमशून्यमिमं कुरुध्वम् ॥ ८ ॥ इत्थं ब्रुवत्यभयदे नरदेव देवाः सव्रीडनम्रशिरसः सघृणं तमूचुः ॥ नैतद्विभो त्वयि परेऽविकृते विचित्रं स्वारामधीरनिकरानतपादपद्मे[2] ॥ ९ ॥ त्वां सेवतां सुरकृता बहवोऽन्तरायाः स्वौको विलङ्घ्य परमं व्रजतां पदं ते ॥ नान्यस्य बर्हिषि[3] बलीन्ददतः स्वभागान्[4]धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥ क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यानस्मानपारजलधीनतितीर्य केचित्[5] ॥ क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति ॥११॥ इति प्रगृणतां तेषां स्त्रियोऽत्यद्भुतदर्शनाः ॥ दर्शयामास शुश्रूषां स्वर्चिताः कुर्वतीर्विभुः ॥ १२ ॥

विहाय त्वत्पादं गच्छतां नृणां देवकृताः विघ्नाः भवन्ति तथापि त्वद्भक्तो विघ्नस्य मूर्ध्नि पदं धत्त इति भावः ॥ १० ॥ किंच केचित्क्षुत्तृट्शीतोष्णवर्षमारुतजिह्वाशिश्नोपभोगान् दुस्तरसमुद्ररूपानस्मान् विलङ्घ्य गोष्पदे जले मज्जन्ति। यतो विफलस्य क्रोधस्य वशं यान्ति। ते तु शापादिना वृथा तपस्त्यजन्ति ॥११॥ एवं ब्रुवतां तेषां स्वसेवां कुर्वतीर्योगनिर्मिताः अद्भुतदर्शनाः स्त्रियः विभुर्दर्शयामास ॥ १२ ॥

---

१ न तस्य महिमानं जानातीति। २ आत्मारामाणां धीराणां च समूहैरानतं पादपद्मं यस्य तस्मिन्। ३ यज्ञे। ४ स्वभागान् पुरोडाशादीन् बलीन् करान् इन्द्रादिभ्यो ददतः प्रयच्छतः अन्यस्य त्वामसेवमानस्य कर्मव्यग्रस्य सुरकृता अन्तरायाः न भवन्ति मोक्षं कामयमानस्यैव भवन्तीत्यर्थः। ५ भक्त इति शेषः।

तदा तासां रूपौदार्यहतश्रियस्ते कामादयस्ताः लक्ष्मीरिव रूपिणीः स्त्रियो दृष्ट्वा सुगन्धेन मुमुहुः ॥१३॥ तदा नारायणः प्रहस्य ताञ्जगाद। आसां मध्ये एकां सवर्णरूपां स्वर्गभूषणां वृणीध्वम् ॥१४॥ एवं प्रभोराज्ञां स्वीकृत्य तं नत्वा श्रेष्ठामुर्वशीमग्रतः कृत्वा स्वर्गं ययुः ॥ १५ ॥ तत इन्द्राय नत्वा सदसि देवानां शृण्वतां नारायणतपोबलमूचुः। तदेन्द्रो विस्मितः सन् त्रासं प्राप्तः ॥१६॥ अथान्यानवतारानाह। ईशो हंसो भूत्वाऽऽत्मयोगमवदत्। तथा दत्तः कुमारो मत्पिता ऋषभश्च। ततो हयग्रीवावतारे पातालतो वेदानानीतवान् ॥ १७ ॥ तथा प्रलये मत्स्यो भूत्वा मनुपृथ्व्यौषधीनां रक्षणं चक्रे। वाराहावतारेण महीमुद्धरता हिरण्याक्षो हतः। कूर्मावतारेणामृतमथने पृष्ठे मन्दरो धृतः। तथा

ते देवानुचरा दृष्ट्वा स्त्रियः श्रीरिवरूपिणीः ॥ गन्धेन मुमुहुस्तासां रूपौदार्यहतश्रियः ॥ १३ ॥ तानाह देवदेवेशः प्रणतान्प्रहसन्निव ॥ आसामेकतमां वृङ्ध्वं सवर्णां स्वर्गभूषणाम् ॥ १४ ॥ ओमित्यादेशमादाय नत्वा तं सुरवन्दिनः ॥ उर्वशीमप्सरःश्रेष्ठां पुरस्कृत्य दिवं ययुः ॥१५॥ इन्द्रायानम्य सदसि शृण्वतां त्रिदिवौकसाम् ॥ ऊचुर्नारायणबलं शक्रस्तत्रास विस्मितः ॥ १६ ॥ हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान्पिता नः ॥ विष्णुः शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥ १७ ॥ गुप्तोऽप्ययं मनुरिलौषधयश्च मात्स्ये क्रौडे हतो दितिज उद्धरताम्भसः क्ष्माम् ॥ कौर्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहात्प्रपन्नमिभराजममुञ्चदार्तम् ॥ १८ ॥ संस्तुन्वतोऽब्धिपतिताच्छ्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् ॥ देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे ॥ १९ ॥ देवासुरे युधि च दैत्यपतीन्सुरार्थे हत्वान्तरेषु भुवनान्यदधात्कलाभिः ॥ भूत्वाऽथ वामन इमामहरद्बलेः क्ष्मां याञ्चाछलेन समदाददितेः सुतेभ्यः ॥ २० ॥

हर्यवतारेण शरणागतो गजेन्द्रो ग्राहाद् मोचितः॥१८॥तथा च कश्यपार्थं समिदाहरणे गोष्पदे निमग्नान् वालखिल्यानुद्धृत्य संकटाद् मोचयामास। वृत्रवधतो ब्रह्महत्यायां प्रविष्टमिन्द्रं मोचयामास। तथाऽनाथाः दैत्यगृहे रुद्धाः देवस्त्रियो मोचयामास। तथा नृसिंहरूपेण हिरण्यकशिपुर्हतः ॥१९॥देवदैत्ययुद्धे सुरार्थे दैत्यान् हत्वा मन्वन्तरेषु भुवनानि कलाभिरपालयत्।तथा वामनो भूत्वा बलेः पृथ्वीं याञ्चाछलेन हृत्वेन्द्राय ददौ।२०।

तथा परशुरामः एकविंशतिवारं भूमिं निःक्षत्रियां चकार । सीतापती रामः सेतुं बद्ध्वा लङ्केशं रावणं जघान ॥२१॥ तथा भूभारनाशाय यदुषु जातः सन् दुष्कराणि कर्माणि करिष्यति । तथा बुद्धो यज्ञे दैत्यान् वादैर्मोहयिष्यति । कलौ कल्किः क्षितिभुजः शूद्रान् हनिष्यति ॥२२॥ हे नृप ! एवमीश्वरस्य विविधानि चरित्राणि वर्णितानि ॥२३॥ इति श्रीभागवते एका० चू० चतुर्थोऽध्यायः ॥४॥ पञ्चमे भक्तिहीनानां का निष्ठा को युगे युगे । पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते ॥१॥ जनक उवाच ॥ हे ज्ञानविदां श्रेष्ठाः ! हरिं ये बहुधा न भजन्ति तेषामशान्तकामानां प्राप्यं

निःक्षत्रियामकृत गां च त्रिःसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः ॥ सोऽब्धिं बबन्ध दशवक्त्रमहन्सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्तिः ॥ २१ ॥ भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि ॥ वादैर्विमोहयति यज्ञकृतोऽतदर्हाञ्छूद्रान्कलौ क्षितिभुजो न्यहनिष्यदन्ते ॥ २२ ॥ एवंविधानि कर्माणि जन्मानि च जगत्पतेः ॥ भूरीणि भूरियशसो वर्णितानि महाभुज ॥ २३ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे वसुदेवनारदसंवादे जायन्तेयोपाख्याने विदेहप्रश्ने चतुर्थोऽध्यायः ॥ ४ ॥ राजोवाच ॥ भगवन्तं हरिं प्रायो न भजन्त्यात्मवित्तमाः ॥ तेषामशान्तकामानां का निष्ठाऽविजितात्मनाम् ॥ १ ॥ चमस उवाच ॥ मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ॥ चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥२॥ य एषां पुरुषं साक्षादात्मप्रभावमीश्वरम् ॥ न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥३॥ दूरेहरिकथाः केचिद् दूरे चाच्युतकीर्तनाः ॥ स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥४॥ विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम् ॥ श्रौतेन जन्मनाऽथापि मुह्यन्त्याम्नायवादिनः ॥५॥

किं तद् वदत ॥१॥ चमस उवाच ॥ हे राजन् ! आदावीशमुखात् सत्त्वेन विप्रो जातः ! तथा बाह्वोः सत्त्वरजोभ्यां क्षत्रियः । ऊरोः रजस्तमोभ्यां वैश्यः । पादात् तमसा शूद्रः । एवमेते चत्वारः आश्रमैः सह जाताः ॥२॥ एषां मध्ये स्वजनकमीश्वरं ये न भजन्ति न जानन्ति च ते वर्णाश्रमहीनाः सन्तोऽधः पतन्ति॥३॥तत्र येऽज्ञा दूरेऽच्युतकीर्तनाः स्त्रीशूद्रादयस्ते भवादृशैरनुकम्प्याः ॥४॥ विप्रक्षत्रियवैश्याः उपनयनादिना हरिभजने श्रेष्ठाधिकारं प्राप्ताः अपि वेदार्थवादैः कर्मफलेषु सज्जन्ते ॥ ५ ॥

१ यज्ञानर्हान् । २ हरिकथाऽच्युतकीर्तनं च दूरे येषामिति कथंचिद् योज्यम् ।

ये एवंभूतास्ते मूर्खाः कर्म कर्तुमज्ञाः पण्डितमानिनो यज्ञादिसाधनैरप्सरोभिः सह विहरिष्याम इति प्रियशब्दान् वदन्ति ॥६॥ अत एव स्वयं तेऽभिचारादिसंकल्पाः दाम्भिकाः पापाः सन्तोऽच्युतप्रियान् विहसन्ति ॥७॥ किं च स्त्रीसक्ताः सन्तो मैथुनसुखेषु गृहेषु मयाद्येदं लब्धमिमं प्राप्स्ये इदमस्ति पुनर्धनं भविष्यतीत्याशिषो वदन्ति । अविधिना यजन्ते तद्दैवजीविकार्थं पशून् घ्नन्ति ॥८॥ तथा च लक्ष्म्यैश्वर्येण सत्कुलजन्मादिना च जातगर्वेणान्धधियः सन्तो हरिं भक्तांश्च न मानयन्ति ॥९॥ एवं वर्तमानास्ते सर्वप्राणिषु खमिव स्थितमीशं वेदगीतमपि न

रजसा घोरसंकल्पाः कामुका अहिमन्यवः ॥ दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ ७ ॥ वदन्ति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यसुखेषु चाशिषः ॥ यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥ श्रिया विभूत्याभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ॥ जातस्मयेनान्धधियः सहेश्वरान्सतोऽवमन्यन्ति हरिप्रियान्खलाः ॥ ९ ॥ सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् ॥ वेदोपगीतं च न शृण्वतेऽबुधामनोरथानां प्रवदन्ति वार्तया ॥ १० ॥ लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना ॥ व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ ११ ॥ धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशान्ति ॥ गृहेषु युञ्जन्ति कलेवरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ १२ ॥

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ॥ वदन्ति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ॥ ६ ॥

शृण्वते । यतः स्त्रीसंगादिवार्तया निवृत्तिपरं वेदं प्रवृत्तिपरं वर्णयन्ति ॥१०॥ अहो स्त्रीसंगमांसभक्षणमद्यपानानां योग्यत्वात् किमेवं निन्द्यते अत आह लोके स्त्रीसंगमांसमद्यसेवाः प्राणिमात्रस्य रागत एव नित्यप्राप्ताः अतस्तासु विधिर्नास्ति । ननु ऋतुस्नातां गच्छेदिति विधिर्दर्शितः । स सत्यम् अयमपूर्वविधिर्न । तर्हि किम् ? तासु विवाहयज्ञसुराग्रहैरनुज्ञारूपो नियमः क्रियते । एवं च तासु निवृत्तिरिष्टा ॥ ११ ॥ प्रवृत्तिवादिनो ये ते धर्मद्वाराऽऽत्मप्रापकं धनं गृहेषु देहाद्यर्थं युञ्जन्ति । यतो देहस्य ते मृत्युं न पश्यन्ति ॥ १२ ॥



१ मधुमय्या । २ 'मैथुन्यपरेषु' इति पाठान्तरम् । ३ न सृष्टाः न संपादिताऽन्नविधानदक्षिणाः यथा तथा । ४ हिंसादोषानभिज्ञाः । ५ मनोरथानां व्यवायामिषमद्यसेवाविषयाणां वार्तया तत्परत्वेनेत्यर्थः । ६ धनं धर्मैकफलं कुतोऽत आह– यत इति । यतः यस्माद् धर्मात् सविज्ञानपरोक्षज्ञानसहितं दृढं परोक्षज्ञानं भवति । कथंभूतम् ? अनुप्रशांति अनु अनंतरमेव प्रकृष्टा शांतिर्निर्वाणलक्षणा यस्य तत् ।

किंच व्यवस्थयाऽपि स्त्रीसंगाद्याज्ञा न यथेष्टमपि त्वन्यथैवेत्याह । यस्माद् यज्ञे सुरायाः अवघ्राणं यत् तदेव विहितं न पानं तथा देवतोद्देशेन पशोर्यद् हननं सा हिंसा न । 'या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते' इति वचनात् । स्वेच्छया भक्षणार्थं हननं तु हिंसैव । एवं मैथुनमपि प्रजार्थं न रत्यै । एवं शुद्धं धर्मं ते न विदुः ॥ १३ ॥ ये त्वेवं शुद्धं धर्मं न ज्ञात्वा यान् पशून् द्रुह्यन्ति ते पशवो मृत्वा परलोके तान् खादन्ति ॥ १४ ॥ अत एवान्यदेहेष्वात्मानं हरिं द्विषन्तोऽत्र देहे स्नेहबद्धाः सन्तोऽधः पतन्ति ॥ १५ ॥ किंच ये नात्यन्तमज्ञाः न च

यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ॥ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥ ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ॥ पशून्द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥ १४ ॥ द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ॥ मृतके सानुबन्धेऽस्मिन्बद्धस्नेहाः पतन्त्यधः ॥ १५ ॥ ये कैवल्यमसंप्राप्ता[1] ये चातीताश्च मूढताम् ॥ त्रैवर्गिका[2] ह्यक्षणिका[3] आत्मानं घातयन्ति ते ॥ १६ ॥ एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ॥ सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ १७ ॥ हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ॥ तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥१८॥ राजोवाच ॥ कस्मिन्काले स भगवान्किंवर्णः कीदृशो नृभिः ॥ नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥१९॥ करभाजन उवाच ॥ कृतं त्रेता द्वापरं च कलिरित्येषु केशवः ॥ नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥ २० ॥

तत्त्वज्ञास्ते स्वात्मानं स्वयमेव घातयन्ति ॥ १६ ॥ तथा येऽज्ञाने ज्ञानमानिनः कालध्वस्तमनोरथास्ते दुःखमाप्नुवन्ति ॥ १७ ॥ तथा देहे प्रयत्नेन रचितः गृहपुत्रसुहृच्छ्रियो हित्वाऽनिच्छन्तस्तमो विशन्ति । यतः ईशपराङ्मुखाः ॥ १८ ॥ जनक उवाच ॥ कस्मिन् काले भगवान् किंवर्णः कीदृशो नृभिः ॥ केन नाम्ना केन विधिना पूज्यते तदुच्यताम् ॥ १९ ॥ करभाजन उवाच ॥ सत्यादिचतुर्युगेषु केशवो नानावर्णो नामाकारो नानामार्गेण पूज्यते ॥ २० ॥

१ पुत्रादिसहिते । २ धर्मार्थकामपराः । ३ उपशान्तिक्षणरहिताः ।

तत्र विशेषमाह। सत्ययुगे श्वेतवर्णः। चतुर्बाहुः वल्कलाम्बरधरः। मृगचर्मोपवीतादिदण्डकमण्डलुधारीबटुवेषो वर्तते ॥२१॥ तदा शान्ताः निर्वैराः नराः देवं तपसा शमदमाभ्यां च यजन्ते ॥२२॥ हंसः सुपर्णो वैकुण्ठो योगेश्वर इत्यादिनामभिर्गीयते ॥ २३ ॥ अथ त्रेतायुगे रक्तवर्णश्चतुर्बाहुर्यज्ञमूर्तिः स्रुक्स्रुवादियुक्त आस्ते ॥२४॥ तं तदा मनुजाः ब्रह्मवादिनस्त्रय्या विद्यया यजन्ते ॥२५॥ विष्णुर्यज्ञ उरुक्रमो जयन्त इति नामभिर्गीयते ॥२६॥ अथ द्वापरे श्यामः पीतवासाः चक्रादिधारी श्रीवत्सादिचिह्नैरुपलक्षितः आस्ते ॥ २७ ॥ तदा मनुजाः परमेश्वरं

कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दण्डकमण्डलू ॥२१॥ मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः ॥ यजन्ति तपसा देवं शमेन च दमेन च ॥ २२ ॥ हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरो मनुः ॥ ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥ २३ ॥ त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ २४ ॥ तं तदा मनुजा देवं सर्वदेवमयं हरिम् ॥ यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः ॥ २५ ॥ विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः ॥ वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते ॥ २६ ॥ द्वापरे भगवाञ्छ्यामः पीतवासा निजायुधः ॥ श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥ २७ ॥ तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ॥ यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ॥ २८ ॥ नमस्ते वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः ॥ २९ ॥ नारायणाय ऋषये पुरुषाय महात्मने ॥ विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः ॥ ३० ॥ इतिद्वापर उर्वीश स्तुवन्ति जगदीश्वरम् ॥ नानातन्त्रविधानेन कलावपि यथा शृणु ॥ ३१ ॥ कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ॥ यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ३२ ॥

ज्ञातुमिच्छवो वेदतन्त्राभ्यां तं पूजयन्ते ॥ २८ ॥ वासुदेवाय संकर्षणाय प्रद्युम्नायानिरुद्धाय ॥ २९ ॥ नारायणाय पुरुषाय तुभ्यं नमः ॥ ३० ॥ इति नामभिर्नानातन्त्रमार्गेणेश्वरं स्तुवते ॥ ३१ ॥ अथ कलामिन्द्रनीलमणिवत् समुज्ज्वलं त्विषा श्यामं श्रीकृष्णं नामोच्चारणप्रधानैर्यज्ञैर्विवेकिनो जनाः स्तुवते ॥ ३२ ॥

स्तुतिमाह । हे महापुरुष ! तव चरणारविंदं वन्दे । कथंभूतं तत् कामपूरकं शिवविरिञ्चिस्तुतं भक्तपालकं संसारार्णवतारकं च ॥ ३३ ॥ किञ्च यः ईश्वरो रामः सुरेप्सितराज्य लक्ष्मीं हित्वा पितृवचसाऽरण्यं जगाम । तथा सीतयेप्सितं मायामृगं प्रति योऽन्वधावत् । तस्य भगवतश्चरणारविंन्दं वन्दे ॥३४॥ एवं नामरूपाभ्यां युगवर्तिभिर्मनुष्यैर्हरिरिज्यते ॥३५॥ गुणज्ञाः श्रेष्ठाः एषु चतुर्युगेषु कलिरेव श्रेष्ठ इति मानयन्ति । यत्र हरिकीर्तनेनैव सर्वः स्वार्थो लभ्यते ॥ ३६ ॥ तस्मात्कलौ संकीर्तनात्परमो लाभोऽस्ति । यतः संसृतिर्नश्यति ॥ ३७ ॥ अतः सत्ययुगादिषु

ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ॥ भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वंदे महापुरुष ते चरणारविंदम् ॥ ३३ ॥ त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ॥ मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविंदम् ॥ ३४ ॥ एवं युगानुरूपाभ्यां भगवान्युगवर्तिभिः ॥ मनुजैरिज्यते राजच्छ्रेयसामीश्वरो हरिः ॥ ३५ ॥ कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ॥ यत्र संकीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥३६॥ न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ॥ यतो विंदेत परमां शान्तिं नश्यति संसृतिः ॥३७॥ कृतादिषु प्रजा राजन्कलाविच्छन्ति सम्भवम् ॥ कलौ खलु भविष्यंति नारायणपरायणाः ॥३८॥ क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥३९॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ॥ प्रायो भक्ता भविष्यंति वासुदेवेऽमलाशयाः ॥४०॥ देवर्षिभूताप्तनृणां पितॄणां नकिङ्करो नायमृणी च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥४१॥

वर्तमानाः प्रजाः कलौ जन्मेच्छन्ति यतो नारायणपराः सर्वे जनाः भविष्यंति ॥ ३८ ॥ हे जनक ! क्वचित्क्वचिद्द्रविडेषु च बहुशः । तत्रापि यत्र ताम्रपर्णी कृतमाला पयस्विनी ॥३९॥ कावेरी प्रतीची इति महानद्यः सन्ति तासां जलं ये पिबन्ति ते बहुधा भक्ता भविष्यन्ति ॥ ४० ॥ अथ भक्तस्य विधिनिषेधनिवृत्तेः कृतकृत्यतामाह । यो भक्तकृत्यं हित्वा सर्वभावेन मुकुन्दम् शरणं गतः स देवर्षिपितृभूतादीनामृणी न स्यात्॥४१॥

किञ्च स्वपादमूलं भजतो भक्तस्य कर्मलोपो यदि स्यात्तर्हि तदपि हृदिस्थो हरिर्धुनोति ॥ ४२ ॥ नारद उवाच ॥ एवं मिथिलेश्वरो जनको भगवद्धर्मान् श्रुत्वा जयन्ती पुत्रान्नव मुनीन् प्रीतः पूजयामास ॥४३॥ ततस्ते सिद्धाः अन्तर्दधिरे । जनकस्तान् धर्मानास्थितः सन् परमां गतिं प्राप ॥४४॥ हे वसुदेव ! त्वमप्येतान् धर्मानास्थितः सन्निःसङ्गो भूत्वा परं पदं यास्यसि ॥४५॥ यतो वां पुत्रतां हरिः प्राप्तः अतो युवयोर्यशसा जगत्पूर्णम् ॥४६॥ तथा कृष्णे पुत्रस्नेहं कुर्वतोर्युवयोर्देहस्तस्य दर्शनालिङ्गनभाषणशयनासनभोजनैः शोधितो जातः ॥४७॥ किञ्च यं

स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ॥ विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि सन्निविष्टः ॥ ४२ ॥ नारद उवाच ॥ धर्मान्भागवतान्नित्यं श्रुत्वाऽथ मिथिलेश्वरः ॥ जायन्तेयान्मुनीन्प्रीतः सोपाध्यायो ह्यपूजयत् ॥ ४३ ॥ ततोऽन्तर्दधिरे सिद्धाः सर्वलोकस्य पश्यतः ॥ राजा धर्मानुपातिष्ठन्नवाप परमां गतिम् ॥ ४४ ॥ त्वमप्येतान्महाभाग धर्मान्भागवताञ्छ्रुतान् ॥ आस्थितः श्रद्धया युक्तो निःसङ्गो यास्यसे परम् ॥ ४५ ॥ युवयोः खलु दम्पत्योर्यशसा पूरितं जगत् ॥ पुत्रतामगमद्यद्वां भगवानीश्वरो हरिः ॥ ४६ ॥ दर्शनालिंगनालापैः शयनासनभोजनैः ॥ आत्मा वां पावितः कृष्णे पुत्रस्नेहं प्रकुर्वतोः ॥४७॥ वैरेण यं नृपतयः शिशुपालपौंड्रशाल्वादयो गतिविलासविलोकनाद्यैः ॥ ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥ ४८ ॥ मापत्यबुद्धिमकृथाः कृष्णे सर्वात्मनीश्वरे ॥ मायामनुष्यभावेन गूढैश्वर्यो परेऽव्यये ॥ ४९ ॥ भूभारासुरराजन्यहन्तवे गुप्तये सताम् ॥ अवतीर्णस्य निर्वृत्त्यै यशो लोके वितन्यते ॥ ५० ॥ श्रीशुक उवाच ॥ एतच्छ्रुत्वा महाभागो वसुदेवोऽतिविस्मितः ॥ देवकी च महाभागा जहतुर्मोहमात्मनः ॥ ५१ ॥

शिशुपालपौण्ड्रशाल्वादयो वैरेण ध्यायन्तस्तत्सारूप्यं प्रापुः । आसक्तधियां सारूप्यं स्यादिति किं वक्तव्यम् ॥४८॥ हे वसुदेव ! मायामनुष्यभावेन गूढैश्वर्यं कृष्णे पुत्रबुद्धिं मा कृथाः ॥ ४९ ॥ यतो भूभारभूतानसुरक्षत्रियान् हन्तुं साधूनां पालनाय च लोकेऽवतीर्णस्य यशो मोक्षाय वितन्यते ॥५०॥ श्रीशुक उवाच ॥ एतद्वसुदेवो देवकी च श्रुत्वा विस्मितौ मोहं जहतुः ॥ ५१ ॥

१ तत्त्वाकारधियः ।

य इमं पुण्यमितिहासं धारयेत् स देहे मोहं विधूय मोक्षाय कल्पते ॥५२॥ इति श्रीभा० ए० चू० पञ्चमोऽध्यायः ॥५॥ षष्ठे ब्रह्मादिभिः स्तुत्वा गन्तुं विज्ञापितं हरिम् ॥ उद्धवः प्रार्थयामास स्वधाम नय मामिति ॥१॥ श्रीशुक उवाच ॥ अथ ब्रह्मा सनकादिभिः प्रजापतिभिश्च वेष्टितः । तथा भूतगणैः शिवः ॥१॥ मरुद्भिरिन्द्रः ।आदित्या वसवोऽश्विनावृभवोऽङ्गिरसो रुद्रा विश्वेदेवाः साध्याः ॥२॥ गन्धर्वाप्सरसो नागाः सिद्ध-चारणगुह्यकाः ऋषयः पितरो विद्याधराः किन्नराः ॥३॥ एवमेते सर्वे येन वपुषा श्रीकृष्णः श्रेष्ठः सन् लोकेषु यशो वितेने तत्सुन्दरं वपुर्द्रष्टुं

इतिहासमिमं पुण्यं धारयेद्यः समाहितः ॥ स विधूयेह शमलं ब्रह्मभूयाय कल्पते ॥ ५२ ॥ इति श्रीभा० म० ए० पञ्च-मोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ अथ ब्रह्मात्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् ॥ भवश्च भूतभव्येशो ययौ भूतग-णैर्वृतः ॥१॥ इन्द्रोमरुद्भिर्भगवानादित्या वसवोऽश्विनौ ॥ ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः ॥ २ ॥ गन्ध-र्वाप्सरसो नागाः सिद्धचारणगुह्यकाः ॥ ऋषयः पितरश्चैव सविद्याधरकिन्नराः ॥ ३ ॥ द्वारकामुपसञ्जग्मुः सर्वे कृष्ण-दिदृक्षवः ॥ वपुषा येन भगवान्नरलोकमनोरमः ॥ यशो वितेने लोकेषु सर्वलोकमलापहम् ॥४॥ तस्यां विभ्राजमानायां समृद्धायां महर्द्धिभिः ॥ व्यचक्षतावितृप्ताक्षाः कृष्णमद्भुतदर्शनम् ॥५॥ स्वर्गोद्यानोपगैर्माल्यैश्छादयन्तो यदूत्तमम् ॥ गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम् ॥ ६ ॥ देवा ऊचुः ॥ नताः स्म ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोव-चोभिः ॥ यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैर्मुमुक्षुभिः कर्ममयोरुपाशात् ॥ ७ ॥ त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः ॥ नैतैर्भवानजित कर्मभिरज्यते वै यत्स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥८॥

महर्द्धिभिः समृद्धायां द्वारकायां जग्मुः ॥४॥ तत्राद्भुतदर्शनं कृष्णमवितृप्तनेत्राः सन्तो ददृशुः ॥५॥ स्वर्गोद्यानगैः पुष्पैर्वृष्टिं कुर्वन्तो गीर्भिः कृष्णं तुष्टुवुः ॥६॥ देवा ऊचुः ॥ हे नाथ ! मुमुक्षुभिर्यद् हृदि चिन्त्यते तत् ते चरणारविन्दं नताः स्मः ॥ ७ ॥ हे अजित ! त्वं मायया स्वात्मनि विश्वं सृजसि पासि संहरसि तथापि तैस्त्वं न लिप्यसे ॥ ८ ॥

हे स्तुत्य ! त्वद्यशः श्रद्धया सतां यथा शुद्धिः स्यात् तथा हे ऋषभ ! रागिणां विद्या श्रुतादिभिर्न॥९॥ अस्माभिस्तवाङ्घ्रिर्दृष्टः । सोऽस्मद्विष-यवासनादाहकः स्यात् । कथंभूतः सः मुमुक्षुभिर्मोक्षार्थं चिंत्यमानः तथा भक्तैः समानैश्वर्यायार्चितः वासुदेवादिव्यूहे ज्ञानिभिर्वैकुण्ठप्राप्तयेऽर्चितः ॥१०॥ तथा हविर्गृहीत्वा यज्ञे याज्ञिकैर्यश्चिन्त्यते । योगिभिरणिमादिसिद्धयर्थं यश्चिन्त्यते । तथा मुक्तैः सर्वतः पूजितः ॥११॥ किं च सपत्नी-वत् भक्तार्पितवनमालया स्पर्धमानां लक्ष्मीमनादृत्य भक्तार्पितेति सुष्ठु सम्पादितं पूजनं वनमालया स्वीकृतवान् तस्य तव चरणो विषयवासना

शुद्धिर्नृणां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभिः ॥ सत्त्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्र-द्धया श्रवणसंभृतया यथा स्यात् ॥ ९ ॥ स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्य-मानः ॥ यः सात्त्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः सवनशः स्वरतिक्रमाय ॥ १० ॥ यश्चिन्त्यते प्रयतपा-णिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वा ॥ अध्यात्मयोग उत योगिभिरात्ममायां जिज्ञासुभिः परमभाग-वतैः परीष्टः ॥ ११ ॥ पर्युष्टया तव विभो वनमालयेयं संस्पर्धिनी भगवती प्रतिपत्निवच्छ्रीः ॥ यः सुप्रणीतम-मुयाऽर्हणमाददन्नो भूयात्सदाङ्घ्रिरशुभाशयधूमकेतुः ॥ १२ ॥ केतुस्त्रिविक्रमयुतस्त्रिपतत्पताको यस्ते भयाभय-करोऽसुरदेवचम्वोः ॥ स्वर्गाय साधुषु खलेष्वितराय भूमन् पादः पुनातु भगवन्भजतामघं नः ॥ १३ ॥ नस्योत गाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः ॥ कालस्य ते प्रतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥

नाशकः स्यात् ॥१२॥ हे ईश ! यस्ते चरणो बलिबन्धने त्रिविक्रमैर्युतः उच्छ्रितो विजयध्वज इव त्रिधा पतन्ती गङ्गा पताका यस्य तथा यो देवासुरसैन्ययोः क्रमादभयाभयकरः स नः पुनातु ॥१३॥ हे भगवन् ! ब्रह्मादयः सर्वे मिथः पीडयमानाः सन्तः कालरूपस्य तव वशे भवन्ति न तु जये पराजये वा स्वतंत्राः । नासिकामाविध्य बद्धाः वृषभा इवास्वतन्त्राः ! एवं भूतस्य तेऽङ्घ्रिर्नः शं तनोतु ॥१४॥

१ त्रिकालम् । २ स्वर्गमतिक्रम्य ( वैकुण्ठप्राप्तये ) । ३ संयतहस्तैः । ४ श्रुत्या विहितेन विधिना । ५ पर्युषितया । ६ अधोगमनाय । ७ प्रवर्तकस्य ।

किं च अस्य जगतः उत्पत्तिपालननाशानां त्वं हेतुः ॥ १५ ॥ हे विभो ! पुरुषः शक्तिं त्वत्तः प्राप्य यया मायया विश्वस्य गर्भमिवमहत्त्त्वं धत्ते सोऽयं महानावरणसहितमाण्डकोशं तयैव माययाऽनुगतः ससर्ज ॥१६॥ अत एव त्वमस्य स्थावरस्य जङ्गमस्याधीशोऽसि । यतो मायोत्पन्नयेन्द्रियवृत्त्या विषयान् सेवमानोऽपि तैर्न लिप्तोऽसि ॥१७॥ षोडशसहस्रं पत्न्यस्तु कामबाणैर्यस्य ते मनो वशीकर्तुं न समर्थाः स

अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः ॥ सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गंभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥ त्वत्तः पुमान्समधिगम्य यया स्ववीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः ॥ सोऽयं तयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥१६॥ तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् ॥ अर्थाञ्जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतादपि बिभ्यति स्म ॥ ॥ १७ ॥ स्मायावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ॥ पत्न्यस्तु षोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियं विमथितुं करणैर्न विभ्व्यः ॥ १८ ॥ विभ्व्यस्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् ॥ आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्तउपस्पृशन्ति ॥ १९ ॥ बादरायणिरुवाच ॥ इत्यभिष्टूय विबुधैः सेशः शतधृतिर्हरिम् ॥ अभ्यभाषत गोविन्दं प्रणम्याम्बरमाश्रितः ॥ २० ॥ ब्रह्मोवाच ॥ भूमेर्भारावताराय पुरा विज्ञापितः प्रभो ॥ त्वमस्माभिरशेषात्मंस्तत्तथैवोपपादितम् ॥ २१ ॥

भवान् कर्मभिरलिप्तः ॥१८॥ हे ईश ! तवामृतरूपकथोदकप्रवाहाः गङ्गाद्याश्च त्रिलोक्याः पापानि हन्तुं विभ्व्यः केन प्रकारेण तदुभयं तीर्थं श्रवणेन्द्रियैरङ्गसगैश्च ये सेवन्ते तेषामिति ॥ १९ ॥ बादरायणिरुवाच ॥ एवं स्तुत्वा देवैः सह ब्रह्मा हरिं प्रणम्य खमाश्रित्योवाच ॥ २० ॥ ब्रह्मोवाच ॥ हे प्रभो ! अस्माभिर्भूभारहरणाय यथा विज्ञापितः तथैव सम्पादितम् ॥ २१ ॥

१ प्रकृतिपुरुषमहतत्त्वानाम् । २ नियन्तारम् । ३ त्रीणि चातुर्मास्यानि नाभयो यस्य । ४ सर्वस्य जगतः क्षये । ५ 'स्वस्य वीर्यम्' इ० पा० । ६ इन्द्रियपते । ७ जीवाः । ८ त्यक्तात् विषयसेवनात् । ९ कीर्तिरूपम् । १० स्वाश्रमधर्मस्थिताः ।

तथा त्वया सत्सु धर्मः स्थापितः । कीर्तिश्च दिक्षु विस्तारिता ॥२२॥ यदोर्वंशेऽवतीर्य जगतो हितार्थं विक्रान्तानि कर्माणि भगवान् कृतवान् ॥२३॥ हे ईश ! मनुष्याः साधवः कलौ तव चरितानि शृण्वन्तः कीर्तयन्तोऽञ्जसा तमस्तरिष्यन्ति॥२४॥हे कृष्ण ! यदुकुलेऽवतीर्णस्य तव पञ्चविंशाधिकं शरच्छतं व्यतीयाय ॥२५॥ तथा देवकार्यमपि शेषितं न।इदं यदुकुलं च विप्रशापेन नष्टप्रायम् ॥२६॥ अतो यदि मन्यसे तर्हि वैकुण्ठं प्रविश लोकपालान् पाहि ॥२७॥ श्रीभगवानुवाच ॥ हे ब्रह्मन् ! यत् त्वं वदसि तदवधारितम् । सर्वं वः कार्यं कृतम् । भूभारो दूरीकृतः ॥ २८ ॥ इदं यादवकुलं वीर्यशौर्ययुक्तया श्रियोन्मत्तं लोकस्य घातकं मया निरुद्धम् ॥ २९ ॥ यदीदं यादवकुलमसंहृत्य गमिष्यामि तर्हि लोको नङ्क्ष्यति ॥ ३० ॥ अतस्तत्कुलस्य नाशः आरब्धः । तदन्ते वैकुण्ठं यास्यन् तव भवनं यास्यामि ॥३१॥ श्रीशुक उवाच ॥ एवं श्रीकृष्णेनोक्तो ब्रह्मा देवैः सह तं प्रणम्य स्व धाम जगाम ॥ ३२ ॥

धर्मश्च स्थापितः सत्सु सत्यसन्धेषु वै त्वया ॥ कीर्तिश्च दिक्षु विक्षिप्ता सर्वलोकमलापहा ॥२२॥ अवतीर्य यदोर्वंशे बिभ्रद्रूपमनुत्तमम् ॥ कर्माण्युद्दामवृत्तानि हिताय जगतोऽकृथाः॥२३॥यानि ते चरितानीश मनुष्याः साधवः कलौ ॥ शृण्वन्तः कीर्तयन्तश्च तरिष्यन्त्यञ्जसा तमः ॥ २४ ॥ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ॥ शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ॥ २५ ॥ नाधुना तेऽखिलाधार देवकार्यावशेषितम् ॥ कुलं च विप्रशापेन नष्टप्रायमभूदिदम् ॥ ॥ २६ ॥ ततः स्वधाम परमं विशस्व यदि मन्यसे ॥ सलोकांल्लोकपालान्नः पाहि वैकुण्ठकिङ्करान् ॥ २७ ॥ * श्रीभगवानुवाच ॥ अवधारितमेतन्मे यदात्थ विबुधेश्वर ॥ कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ २८ ॥ यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ॥ लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥२९॥ यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ॥ गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनङ्क्ष्यति ॥ ३० ॥ इदानीं नाश आरब्धः कुलस्य द्विजशापजः ॥ यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ॥३१॥ श्रीशुक उवाच ॥ इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तम् ॥ सहदेवगणैर्देवः स्वधाम समपद्यत ॥ ३२ ॥

१ लङ्घितमर्यादेन । २ हे विष्णो । * श्रीशुक उवाच ॥ संस्तुतो भगवानित्थं विबुधैः पद्मजादिभिः ॥ प्रतिनन्द्याह तान्राजन्मायामनुज ईश्वरः ॥ अयमधिकः पाठः क्वचित्पुस्तकेषु दृश्यते ।

अथ द्वारकायामुत्पन्नान् महोत्पातान् दृष्ट्वा श्रीकृष्णो यदुवृद्धानाह ॥३३॥ श्रीभगवानुवाच ॥ हे यादवाः ! एते उत्पाताः सर्वतः उत्तिष्ठन्ति अस्माकं कुलस्य विप्रशापः आसीत् ॥३४॥ अतोऽत्र जिजीविषुभिर्न वस्तव्यम् । अद्यैव पुण्यं प्रभासक्षेत्रं यास्यामः मा चिरम् ॥३५॥ चन्द्रो दक्षशापात् क्षयरोग्यपि तत्र स्नात्वा मुक्तः सन् पुनः कलावृद्धिं भेजे ॥३६॥ अतो वयं तत्र गत्वा स्नात्वा देवपितॄन् तर्पयित्वा विप्रान् श्रेष्ठान्नेन भोजयित्वा ॥३७॥ तेभ्यो दानानि दत्त्वा दानरूपनौकाभिः समुद्रमिव दुःखानि तरिष्यामः॥३८॥श्रीशुक उवाच॥एवं भगवताऽऽदिष्टाः याद-

अथ तस्यां महोत्पातान् द्वारवत्यां समुत्थितान् ॥ विलोक्य भगवानाह यदुवृद्धान् समागतान् ॥ ३३ ॥ श्रीभगवानुवाच ॥ एते वै सुमहोत्पाता ह्युत्तिष्ठन्तीह सर्वतः ॥ शापश्च नः कुलस्यासीद् ब्राह्मणेभ्यो दुरत्ययः ॥ ३४ ॥ न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ॥ प्रभासं सुमहत् पुण्यं यास्यामोऽद्यैव मा चिरम् ॥ ३५ ॥ यत्र स्नात्वा दक्षशापाद् गृहीतो यक्ष्मणोडुराट् ॥ विमुक्तः किल्बिषात् सद्यो भेजे भूयः कलोदयम् ॥ ३६ ॥ वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन् सुरान् ॥ भोजयित्वोशिजो विप्रान्नानागुणवतान्धसा ॥ ३७ ॥ तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै ॥ वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥ ३८ ॥ श्रीशुक उवाच ॥ एवं भगवताऽऽदिष्टा यादवाः कुलनन्दन ॥ गन्तुं कृतधियस्तीर्थं स्यन्दनान् समयूयुजन् ॥ ३९ ॥ तन्निरीक्ष्योद्धवो राजञ्छ्रुत्वा भगवतोदितम् ॥ दृष्ट्वाऽरिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥ ४० ॥ विविक्त उपसङ्गम्य जगतामीश्वरेश्वरम् ॥ प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥ ४१ ॥ उद्धव उवाच ॥ देवदेवेश योगेश पुण्यश्रवणकीर्तन ॥ संहृत्यैतत् कुलं नूनं लोकं संत्यक्ष्यते भवान् ॥ विप्रशापं समर्थोऽपि प्रत्यहन् न यदीश्वरः ॥ ४२ ॥

वास्तीर्थं गमनार्थं रथानयूयुजन्॥३९॥ततो भगवतोदितं सर्वं श्रुत्वाऽरिष्टानि च दृष्ट्वोद्धवः॥४०॥ श्रीकृष्णमेकान्ते मिलित्वा पादौ प्रणम्य प्राञ्जलिराह॥४१॥ उद्धव उवाच ॥ हे देवदेवेश। एतत्कुलं संहृत्य मर्त्यलोकं नूनं त्यक्ष्यसि। यतोविप्रशापं दूरीकर्तुं समर्थोऽपि न प्रतिहतवान्॥४२॥

१ उशिजः कमनीयान् ।

अतस्तव चरणकमलं क्षणार्धमपि त्यक्तुं नोत्सहे । हे नाथ ! स्वधाम मां नय ॥ ४३ ॥ हे कृष्ण ! जनस्तव चरितामृतमास्वाद्यान्यस्पृहां त्यजति ॥४४॥ अतो वयं शय्यासनाटनस्नानाशनक्रीडादिषु वर्तमानं त्वां कथं त्यजाम ॥४५॥ त्वयोपभुक्तानि यानि स्रग्गन्धवस्त्रालङ्कारादीनि तैरलंकृता उच्छिष्टभोजिनो वयं तव मायां जयेम ॥ ४६ ॥ किं च ब्रह्मचारिणो वाताहाराः ऋषयो यद्धाम यान्ति ॥ ४७ ॥ तद्धाम भक्तैः सह त्वद्वार्तया संसारं तीर्त्वा ॥ ४८ ॥ तव कृतानि कथितानि च स्मरन्तः सन्तो यास्यामः ॥४९॥ श्रीशुक उवाच ॥ हे परीक्षित् !

नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव ॥ त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥४३॥ तव विक्रीडितं कृष्ण नृणां परममङ्गलम् ॥ कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥ ४४ ॥ शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ॥ कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥ ४५ ॥ त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ॥ उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ ४६ ॥ वातांशना य ऋषयः श्रमणा ऊर्ध्वमन्थिनः ॥ ब्रह्माख्यं धाम ते यांति शान्ताः संन्यासिनोऽमलाः ॥ ४७ ॥ वयं त्विह महायोगिन् भ्रमन्तः कर्मवर्त्मसु ॥ त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ ॥४८॥ स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ॥ गत्युत्स्मितेक्षणक्ष्वेलीर्यन्नृलोकविडम्बनम् ॥ ४९ ॥ श्रीशुक उवाच ॥ एवं विज्ञापितो राजन् भगवान् देवकीसुतः ॥ एकान्तिनं प्रियं भृत्यमुद्धवं समभाषत ॥५०॥ इति श्रीभाग० म० एका० स्कं० ब्रह्मादिप्रार्थनानिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥ श्रीभगवानुवाच ॥ यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ॥ ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः ॥ १ ॥ मया निष्पादितं ह्यत्र देवकार्यमशेषतः ॥ यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः ॥ २ ॥

एवं प्रार्थितः स भगवानेकान्तिनं प्रियं भक्तमुद्धवं बभाषे ॥ ५० ॥ इति श्रीभागवते एकादशस्कन्धे चू० षष्ठोऽध्यायः ॥ ६ ॥ सप्तमे तूद्धवस्यात्मज्ञानसिद्ध्यै हरिः स्वयम् । अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव ! त्वं मां यद्वदसि तन्मे कर्तुमिष्टम् । ब्रह्मशिवादयोऽपि मम वैकुण्ठवासमिच्छन्ति ॥ १ ॥ किं च हे उद्धव ! यदर्थमहमवतीर्णः तद्देवकार्यं संपादितम् ॥ २ ॥

१ 'वातरशना' इ० पा० । २ परिहासोक्तिः ।

इदं यदुकुलं चान्योऽन्यद्वेषाद् नङ्क्ष्यति । ततः सप्तमेऽहनि पुरीं समुद्रः प्लावयिष्यति ॥ ३ ॥ यदेमं लोकं त्यक्ष्ये तदैवायं लोको नष्टमङ्गलः कलिव्याप्तश्च भविष्यति ॥४॥ अतो हे सखे ! अत्र त्वया न वस्तव्यम् । जनोऽधर्मरुचिर्भविष्यति ॥५॥ तस्मात् त्वं तु स्वजनबन्धुषु स्नेहं हित्वा मयि मनः आवेश्य समदृक् सन् महीं विचर ॥ ६ ॥ किं च मनोवाक्चक्षुः श्रवणादिभिर्गृह्यमाणमिदं प्रपञ्चमात्रं मायेति नश्वरमिति च जानीहि ॥ ७ ॥ मनोमयत्वे हेतुः । विक्षिप्तमनसः पुंसो भेदविषयोऽयं भ्रमः । स एव गुणदोषभाक् कर्माकर्मविकर्मेति गुणदोष-

कुलं वै शापनिर्दग्धं नंक्ष्यत्यन्योऽन्यविग्रहात् ॥ समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥ ३ ॥ तर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ॥ भविष्यत्यचिरात्साधो कलिनाऽपि निराकृतः ॥ ४ ॥ न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ॥ जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥ ५ ॥ त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ॥ मय्यावेश्य मनः सम्यक्समदृक् विचरस्व गाम् ॥ ६ ॥ यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ॥ नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥ ७ ॥ पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् ॥ कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥ तस्माद् युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ॥ आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ ९ ॥ ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ॥ आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ १० ॥ दोषबुद्ध्योभयातीतो[1] निषेधान्न निवर्तते ॥ गुणबुद्ध्या च विहितं न करोति यथार्भकः ॥ ११ ॥ सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ॥ पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥

धियो भेदतः स्युः । एवं चाविद्यावद्विषय एव भेद इति ॥ ८ ॥ तस्माद् युक्तचित्तस्त्वं विश्वमात्मन्यात्मानं च मयि पश्य ॥९॥ ज्ञानविज्ञानसंयुक्तः स्वानुभवतुष्टः सन् विघ्नैर्न बाध्यसे ॥१०॥ किंच कर्माणि गुणदोषबुद्ध्याऽतीतोऽपि योगी बालक इव क्वचित् कर्म करोति कुतश्चिन्निवर्तते । यत्करोति न तु तद् गुणबुद्ध्या नापि कुतश्चिन्निवर्तते दोषबुद्ध्या ॥ ११ ॥ एवं वर्तमानो यो मदात्मकं विश्वं पश्यति स पुनः संसारं न प्राप्नोति ॥ १२ ॥

---

१ उभयं दोषबुद्धिर्गुणबुद्धिश्च ।

श्रीशुक उवाच ॥ हे नृप ! एवं भगवताऽऽदिष्टः उद्धवः कृष्णं नत्वा जगाद ॥१३॥ उद्धव उवाच ॥ हे योगेश ! हे योगात्मन् । अयं संन्या-सलक्षणस्त्यागो मम कल्याणाय त्वयोक्तः ॥ १४ ॥ तथापि स विषयात्मभिर्दुष्कर इति मे मतिः । अभक्तैरतिदुष्करः ॥१५॥ एवमुपदेश-पात्रमहं ममाहमिति मूढबुद्ध्या पुत्रादिसहिते त्वन्मायया रचिते देहे निमग्नः । अतस्त्वदुक्तं यथाऽनायासेन जानामि तथा मां शिक्षय ॥१६॥

श्रीशुक उवाच ॥ इत्यादिष्टो भगवता महाभागवतो नृप ॥ उद्धवः प्रणिपत्याह तत्त्वजिज्ञासुरच्युतम् ॥ १३ ॥
उद्धव उवाच ॥ योगेश योगविन्यास योगात्मन् योगसंभव ॥ निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १४ ॥
त्यागोऽयं दुष्करो भूमन् कामनां विषयात्मभिः ॥ सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ १५ ॥ सोऽहं ममा-हमिति मूढमतिर्विगाढस्त्वन्मायया विरचितात्मनि सानुबन्धे ॥ तत्त्वञ्जसा निगदितं भवता यथाऽहं संसाधयामि भगवन् ननु शाधि भृत्यम् ॥ १६ ॥ सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेष्वपि नानुचक्षे ॥ सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥ तस्माद् भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम् ॥ निर्विण्णधीरहमु ह वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥
श्रीभगवानुवाच ॥ प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः ॥ समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥
आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ॥ यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ २० ॥

त्वद्भिन्नोपदेशकर्तारं देवेष्वप्यन्यं न पश्यामि, यतो ब्रह्मादयस्त्वन्मायया मोहितधियः॥१७॥ अतो दुःखतप्तोऽहं नारायणं त्वामेव शरणं प्रपद्ये ॥ १८ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! लोकतत्त्वपरीक्षकाः आत्मानं स्वयमेव विषयवासनातः उद्धरन्ति ॥ १९ ॥ तदेवाह । पश्वा-दिदेहे हिताहितज्ञाने आत्मनः आत्मैव गुरुः पुरुषदेहस्य तु विशेषतः । यतोऽसौ प्रत्यक्षानुमानाभ्यां श्रेयो विन्दते ॥ २० ॥



१ स्वप्रकाशस्य । २ मां प्रति । ३ तेऽन्यं त्वत्तोऽन्यमिति योज्यम् । ४ विषयेष्वर्थबुद्धयः । ५ कालादिभिरकुण्ठो विकुण्ठलोको धिष्ण्यं स्थानं यस्य ।

तत्र प्रत्यक्षमाह । ये बुद्धिमन्तस्ते नृदेहे आविस्तरां मां पश्यन्ति ॥२१॥ यतः एकद्वित्रिचतुष्पादाद्याः बह्वचः पुर्यः संति । तत्र पौरुषी तनूः-प्रिया ॥ २२ ॥ अनुमानमाह । अत्र नृदेहे मां ज्ञानिनोऽनुमानतः शोधयंति ॥ २३ ॥ अत्राप्यवधूतस्य दत्तात्रेयस्य यदोश्च संवादरूपमितिहासं कथयंति ॥२४॥ हे उद्धव ! यदुः कश्चिदवधूतं तरुणं निर्भयं चरन्तं दृष्ट्वा पप्रच्छ ॥ २५ ॥ यदुरुवाच ॥ हे ब्रह्मन् ! कर्म न कुर्वतस्तव सर्वलोकविलक्षणेयं बुद्धिः कुतः । तां बुद्धिमासाद्य विद्वानपि लोकं बालवच्चरति ॥ २६ ॥ हे द्विज ! बहुधा मनुष्याः आयुर्यशआदि

पुरुषत्वे च मां धीराः साङ्ख्ययोगविशारदाः ॥ आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥ २१ ॥ एकद्वित्रिचतुष्पादो बहुपादस्तथाऽपदः ॥ बह्वचः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ॥ २२ ॥ अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ॥ गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः ॥ २३ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ अवधूतस्य संवादं यदोरमिततेजसः ॥२४॥ अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ॥ कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥२५॥ यदुरुवाच ॥ कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ॥ यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥२६॥ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ॥ हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥ २७ ॥ त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ॥ न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥ २८ ॥ जनेषु दह्यमानेषु कामलोभदवाग्निना ॥ न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः ॥२९॥ त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ॥ ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥ श्रीभगवानुवाच ॥ यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा ॥ पृष्टः सभाजितः प्राह प्रश्रयावनतं नृपम् ॥ ३१ ॥

कामनया धर्मार्थकामेषु प्रवर्तन्ते ॥ २७ ॥ त्वं तु समर्थः कविर्दक्षोऽपि जडोन्मत्तपिशाचवत् कर्म न करोषि न च किंचिदिच्छसि ॥ २८ ॥ तथा कामलोभदवाग्निना दह्यमानेषु सत्सु न तप्यसे । अग्निना मुक्तो गजो गङ्गाजलस्थ इव ॥ २९ ॥ एवं तवानन्दकारणं किमस्ति तद् ब्रूहि ॥ ३० ॥ श्रीभगवानुवाच ॥ एवं यदुना पृष्टो द्विजो नम्रं तं जगाद ॥ ३१ ॥

१ आत्मविचारे । २ अचितः । ३ "द्विजः" इ० पा० ।

ब्राह्मण उवाच ॥ हे राजन् ! मम गुरवो बुद्ध्युपाश्रिताः बहवः सन्ति । येभ्यस्तां तां बुद्धिं गृहीत्वा मुक्तः सन् भ्रमामि ताञ्छृणु ॥३२॥ पृथ्वी १ वायुः २ खं ३ जलम् ४ अग्निः ५ चन्द्रः ६ सूर्यः ७ कपोतः ८ अजगरः ९ समुद्रः १० पतङ्गः ११ मधुमक्षिका १२ गजः १३ ॥३३॥ भ्रमरः १४ हरिणः १५ मीनः १६ पिङ्गला १७ कुररः १८ बालकः १९ कुमारी २० बाणकर्ता २१ सर्पः २२ ऊर्णनाभिः २३ पेशकृत् २४ ॥ ३४ ॥ हे राजन् ! एते चतुर्विंशतिर्गुरवो मयाश्रिताः । एतेषां वृत्तिभिस्त्यागग्रहणादीनर्थान् शिक्षितवान् ॥ ३५ ॥ हे यदो ! यतो यत् शिक्षितं तद्

ब्राह्मण उवाच ॥ सन्ति मे गुरवो राजन्बहवो बुद्ध्युपाश्रिताः ॥ यतो बुद्धिमुपादाय मुक्तोऽटामीह ताञ्छृणु ॥ ३२ ॥ पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ॥ कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥ ३३ ॥ मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ॥ कुमारी शरकृत्सर्प ऊर्णनाभिःसुपेशकृत् ॥ ३४ ॥ एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ॥ शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ ३५ ॥ यतो यदनुशिक्षामि यथा वा नहुषात्मज ॥ तत् तथा पुरुषव्याघ्र निबोध कथयामि ते ॥ ३६ ॥ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ॥ तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥ ३७ ॥ शश्वत्परार्थसर्वेहः परार्थैकान्तसंभवः ॥ साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ ३८ ॥ प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः ॥ ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ ३९ ॥

वदामि ॥३६॥ तत्र पृथिव्याः शिक्षितमाह । दैवाधीनभूतैः पीडचमानोऽपि भूतानां दैवाधीनत्वं विद्वान् स्वमार्गात् न चलेत् यथा भूर्दुष्टैः पीडच-मानाऽपिनचलति इति भूमेः क्षमागुणः शिक्षितः ॥ ३७ ॥ तथा परार्थसर्वव्यापारवत्त्वं शैलरूपभूमेः शिक्षितम् । परार्थजन्मत्वं च वृक्षरूपभूमेः शिक्षितम् ॥३८॥ अथ वायोः शिक्षितम् । स द्विविधः-प्राणो बाह्यश्च । तत्र प्राणस्य गुरुत्वमाह । यथा स आहारादिमात्रेण प्रवर्तते विषयांस्तु नेच्छति तथा मुनिरपि भवेत् । किं च ज्ञाननाशो वाङ्मनसोर्विक्षेपो यथा न स्यात् तथा देहनिर्वाहः कर्तव्यः इति प्राणवायोः शिक्षितम् ॥३९॥



१ वृक्षशिष्यः । २ पराधीनात्मताम् ।

विषयेषु योगी विशन्नपि वायुवत् न सज्जेत । इति बाह्यवायोः शिक्षितम् ॥४०॥ किं च इह देहेषु योगी प्रविष्टोऽपि देहगुणैर्न सक्तो भवेत् गन्धैर्वायुरिव । इति च वायोः शिक्षितम् ॥ ४१ ॥ अथाकाशाच्छिक्षितमाह । ततो मुनिर्देहान्तर्गतोऽप्यात्मनोऽव्यवच्छेदमभेदत्वं भावयेत् नभोवत् । तथा देहादिगुणैः पुमान् वायुना प्रेरितैर्मेघाद्यैर्नभ इव न स्पृश्यते । इत्याकाशाच्छिक्षितम् । जलाच्छिक्षितमाह । ततः स्वच्छत्वमाधुर्य-स्निग्धत्वादिगुणैरवलोकनस्पर्शकीर्तनैश्चोदकं यथा जगत्पुनाति । तद्वद् मुनिरपि भवेत् । इत्युदकाच्छिक्षितम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ अग्नेः

विषयेष्वाविशन्योगी नानाधर्मेषु[1] सर्वतः ॥ गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ ४० ॥ पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥ ४१ ॥ अन्तर्हितश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन ॥ व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो मुनिर्नभस्त्वं विततस्य[2] भावयेत् ॥ ४२ ॥ तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ॥ न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान् ॥४३॥ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम्[3] ॥ मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥ ४४ ॥ तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः[4] ॥ सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ ४५ ॥ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छताम् ॥ भुङ्क्ते सर्वत्र दातॄणां दहन्प्रागुत्तराशुभम् ॥४६॥ स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ॥ प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि ॥ ४७ ॥ विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः ॥ कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ ४८ ॥

शिक्षितमाह । यथाऽग्निस्तेजस्वी दीप्तः सर्वभक्षोऽपि मलं नादत्ते । किं च । क्वचिद् गुप्तः क्वचित्स्पष्टोऽन्येच्छया हविर्गृह्णाति दातॄणां भूतं भविष्यच्च पापं नाशयति तथा मुनिरपि भवेत् ॥४५॥४६॥ किंच इदं विश्वं प्रति प्रविष्ट आत्मा देवतिर्यगादिरूपं काष्ठेऽग्निरिव लभते न वस्तुत इत्यग्नेः शि० ॥ ४७ ॥ चन्द्राच्छिक्षितमाह । यथा कलानां क्षयवृद्ध्यादयो भवन्ति । न चन्द्रस्य । तथा देहस्य जन्मादिश्मशानान्ता विकारा नात्मनः इति चन्द्राच्छिक्षितम् ॥ ४८ ॥

१ शीतोष्णादिधर्मकेषु । २ सर्वगतस्य । ३ मधुरभाषी । ४ अक्षोभ्योऽपरिग्रहश्च ।

हे यदो ! कालेन देहानां जन्ममृत्यू नित्यावपि न दृश्येते अग्निज्वालावत् । इदं वैराग्यार्थं पुनरग्नेः शिक्षितम् ॥४९॥ सूर्याच्छिक्षितमाह । किं चात्मा भेदहीनोऽप्युपाधिवशाद्भेद-योगीन्द्रियैर्विषयान् गृह्णाति । अर्थिनि प्राप्ते ददाति च । तेषु न सज्जते किरणैर्जलानि सूर्य इव ॥५०॥ किं चात्मा भेदहीनोऽप्युपाधिवशाद्भेद-रूपो दृश्यते घटादिषु प्रविष्टोऽर्कइव इति सूर्याच्छिक्षितम् ॥५१॥ अथ कपोताच्छिक्षितमाह । हे यदो ! अतीव क्वापि केनचित्स्नेहः सङ्गो वा

कालेन ह्योघवेगेन[1] भूतानां प्रभवाप्ययौ ॥ नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ॥ ४९ ॥ गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ॥ न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥ ५० ॥ बुध्यते स्वे[2] न भेदेन व्यक्तिस्थ[3] इव तद्गतः[4] ॥ लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत् ॥ ५१ ॥ नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ॥ कुर्वन्विन्देत सन्तापं कपोत इव दीनधीः ॥ ५२ ॥ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ॥ कपोत्या भार्यया सार्धमुवास कतिचित् समाः ॥ ५३ ॥ कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ॥ दृष्टिं दृष्ट्याङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ॥ ५४ ॥ शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् ॥ मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ५५ ॥ यं यं वाञ्छति सा राजंस्तर्पयन्त्यनुकम्पिता[5] ॥ तं तं समानयत् कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ५६ ॥ कपोती प्रथमं गर्भं गृह्णती काल आगते ॥ अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती ॥ ५७ ॥

न कर्तव्यः, कृतश्चेत् कपोत इव सन्तापं प्राप्नोति ॥५२॥ हे राजन् ! कश्चित् कपोतो वने कृतनीडः सन् कपोत्या सह कतिचिद्वर्षाण्युवास ॥ ५३ ॥ ततस्तौ गृहधर्मिणौ स्नेहबद्धहृदयौ शय्यासनाटनवार्ताक्रीडादिषु मिथुनीभूय निःशङ्कौ वनपक्षिषु चेरतुः ॥५४॥५५॥ सा कपोती यं यं कामं वाञ्छति तं तं कपोतः सम्पादयामास ॥ ५६ ॥ ततः कपोताद् प्रथमं गर्भं धृत्वा काले पतिसंनिधावण्डानि सुषुवे ॥ ५७ ॥



१ ओघवत् वेगो यस्य तेन । २ स्वस्वरूपे । अवस्थितपदेनतत्पदे योज्यम् । ३ उपाधौ प्रतिबिम्बितः । ४ तद्गत इव उपाधिप्रविष्ट इव । ५ प्रीणयन्ती । सहासवीक्षिताभिरिति शेषः ।

तेषु कालेन हरेः शक्तिभिः कोमलाङ्गकेशाः पक्षिणो जाताः ॥५८॥ पुत्रवत्सलौ तौ तासां कलभाषणं शृण्वन्तौ तासां पक्षस्पर्शैर्बालचेष्टितैः प्रत्यागमनैश्च मुदं प्रापतुः ॥५९॥६०॥ विष्णुमायया मोहितौ स्नेहेन बद्धहृदयौ तौ शिशून् पुपुषतुः ॥६१॥ एकदा तेषामन्नार्थं तौ दम्पती तत्र समीपे वने चेरतुः ॥६२॥ तस्मिन्नेव समये कश्चिद् लुब्धको नीडसमीपे तान् बालान् दृष्ट्वा जालं प्रसार्य जगृहे ॥६३॥ ततस्तौ दम्पती तदन्नं गृहीत्वा स्वनीडं प्राप्तौ ॥ ६४ ॥ तदा कपोती स्वात्मजान् जालवेष्टितान् दृष्ट्वा क्रोशन्ती दुःखिता सती बालान् प्रति पपात ॥६५॥

तेषु काले व्यजायन्त रचितावयवा हरेः ॥ शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥ ५८ ॥ प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ ॥ शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः ॥५९॥ तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ॥ प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥६०॥ स्नेहानुबद्धहृदयावन्योऽन्यं विष्णुमायया ॥ विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ॥ ६१ ॥ एकदा जग्मतुस्तासामन्नार्थं तौ कुटुम्बिनौ ॥ परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ६२ ॥ दृष्ट्वा ताँल्लुब्धकः कश्चिद्यदृच्छातो वनेचरः ॥ जगृहे जालमातत्य चरतः स्वालयान्तिके ॥६३॥ कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ॥ गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ६४ ॥ कपोती स्वात्मजान् वीक्ष्य बालकान् जालसंवृतान् ॥ तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ६५ ॥ साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया ॥ स्वयं चाबध्यत शिचा बद्धान् पश्यन्त्यपस्मृतिः ॥६६॥ कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकान् प्रियान् ॥ भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥६७॥ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ॥ अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥६८॥ अनुरूपाऽनुकूला च यस्य मे पतिदेवता ॥ शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥६९॥

सा विष्णुमायया स्वयं च जालेन बद्धा ॥ ६६ ॥ ततः कपोतो भार्यां बालांश्च जालेन बद्धान् वीक्ष्य दुःखितः सन् विललाप ॥६७॥ अहो अल्पपुण्यस्य दुर्मतेर्मे नाशं पश्यत । यतोऽतृप्तस्य मे त्रिवर्गसंपादको गृहाश्रमो नष्टः ॥ ६८ ॥ इयं सा अनुरूपानुकूला पतिव्रता मे स्त्री मां हित्वा पुत्रैः सह स्वर्गं याति ॥ ६९ ॥

अतो मृतदारप्रजः शून्यगृहे किमर्थं जिजीविषामि॥७०॥एवं तान् विलप्य स्वयं च कृपणः सन् तेषां बन्धनं पश्यन्नपि स्वयं जालेषु पपात॥७१॥
ततो लुब्धकः पुत्रदारसहितं कपोतं लब्ध्वा सिद्धार्थः सन् गृहं प्रययौ॥७२॥ हे राजन्! एवं द्वन्द्वारामः कुटुम्बी पुमान् कुटुम्बं पुष्णन् सानुबन्धः
कपोतवद् दुःखं प्राप्नोति॥७३॥यो मुक्तिद्वारं मानुषं देहं प्राप्य गृहेषु पक्षिवत् सज्जते तमारूढपतितं विदुः॥७४॥ इति श्रीभा० एकादश०
चू० सप्तमोऽध्यायः॥७॥अष्टमेऽजगरादिभ्यो नवभ्यः शिक्षितं हरिः। अवधूतगिरा प्राह विवेकायोद्धवं प्रति॥१॥ ब्राह्मण उवाच। अथाजगरा-

सोऽहं शून्ये गृहे पीनो मृतदारो मृतप्रजः॥ जिजीविषे किमर्थं वा विधुरो दुःखजीवितः॥ ७०॥ तांस्तथैवावृतान् शिग्भिः मृत्युग्रस्तान्विचेष्टतः॥ स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत्॥७१॥ तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम्॥ कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम्॥७२॥ एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत्॥पुष्णन्कुटुम्बं कृपणः सानुबन्धोऽवसीदति॥७३॥ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्॥ गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः॥ ७४॥ इति श्रीभा० म० एका० अवधूतगीतेऽष्टगुरुनिरूपणं नाम सप्तमोऽध्यायः॥ ७॥ ब्राह्मण उवाच॥ सुखमैन्द्रियकं राजन्स्वर्गे नरक एव च॥ देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः॥ १॥ ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा॥ यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः॥ २॥ शयीताहानि भूरीणि निराहारोऽनुपक्रमः॥ यदि नोपनमेद्ग्रासो महाहिरिव दिष्टभुक्॥ ३॥ ओजःसहोबलयुतं बिभ्रद्देहमकर्मकम्॥ शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि॥ ४॥



च्छिक्षितमाह। हे यदो! यदैन्द्रियकं सुखं तत् स्वर्गे नरके च भवत्येव। यथा दुःखम्। तस्माद् बुधस्तन्नेच्छेत्॥१॥ किंच ग्रासं सुमृष्टं विरसं महान्तमल्पमेव वा यदृच्छया प्राप्तमजगरवद् ग्रसेत्॥२॥किञ्च यदि ग्रासो नोपलभ्येत तर्हि निराहारः प्रारब्धभुक् निरुद्यमोऽहिरिव बहुदिनानि शयीत॥३॥किञ्च इन्द्रियमनःशरीरबलयुतं देहं बिभ्रत् कर्म त्यक्त्वा शयान एवं भवेत्। एवं कृते इन्द्रियवानपि दर्शनादिव्यापारहीनो भवति॥४॥

१ सपुत्रपौत्रः। २ अजगरवृत्तिः। ३ उदासीनः। ४ दैवमेव प्रापकमिति धैर्यवान्।

समुद्राच्छिक्षितमाह । मुनिर्गम्भीरः आकलयितुमशक्योऽनन्तपारः स्थिरोदकसमुद्रवद् भवेत् ॥५॥ किञ्च यथा वर्षासु सरिद्भिः समृद्धोऽपि सागरो न हृष्येत् ग्रीष्मे तद्विहीनोऽपि न शुष्येत् तथा पूर्णकामो लब्धकामोऽपि मुनिर्नारायणपरः सन् न हृष्येन्न शोचेत् ॥ ६ ॥ पतङ्गात् शिक्षितमाह । अजितेन्द्रियः पुमान् स्त्रियं दृष्ट्वा तद्भावैर्लोभितः सन् तमसि पतति ॥ ७ ॥ किञ्च मायारचितेषु स्त्रीसुवर्णादिषु भोगबुद्ध्या लोभितश्चेत् पतङ्ग इव नश्यति ॥८॥ भ्रमरात् शिक्षितमाह । यथा भ्रमरो गन्धलोभेन कस्मिंश्चित् कमले वसन् सूर्यास्ते संकुचितपद्मे बध्यते

मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ॥ अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥ ५ ॥ समृद्धकामो हीनो वा नारायणपरो मुनिः ॥ नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ६ ॥ दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ॥ प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः ॥ प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥ स्तोकंस्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता ॥ गृहानहिंसन्नातिष्ठेद् वृत्तिं माधुकरीं मुनिः ॥ ९ ॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ॥ सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥१०॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ॥ पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥११॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः ॥ मक्षिका इव संगृह्णन्सह तेन विनश्यति ॥ १२ ॥ पदाऽपि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ॥ स्पृशन्करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १३ ॥

तथा मुनिरपि गुणलोभेनैकस्मिन्नेव गृहे आश्रितो मोहेन बध्यते ॥ ९ ॥ पुमान् लघुबृहद्ग्रन्थेभ्यः सारं गृह्णीयात् पुष्पेभ्यो भ्रमरवत् ॥१०॥ किञ्च भिक्षितमन्नादि सायं श्वो वा इदं भोक्ष्यामीति न संगृह्णीत किंतूदरपूर्तिमात्रं ग्राह्यम् । संग्रहीष्यति चेद् मधुमक्षिकेव तेन सह नश्यति ॥ ११ ॥ १२ ॥ गजात् शिक्षितमाह । भिक्षुः पदाऽपि काष्ठमयीमपि स्त्रियं न स्पृशेत् स्पृशन् हस्तिन्यङ्गसङ्गात् करीव बध्येत ॥ १३ ॥

१ गृहस्थान् । २ अपीडयन् । ३ पात्रम् ।

किञ्च ज्ञानी नरः स्त्रियं नाधिगच्छेत् । गच्छन् गजैर्गजवद् हन्येत ॥१४॥ मधुहन्तुः शिक्षितमाह । यद् धनं लुब्धैः संचितं न देयं नोपभोग्यं चेत् तर्हि तत् अन्यः उपायं ज्ञात्वा मधुहेव भुङ्क्ते ॥१५॥ किञ्च गृहाश्रमिणामन्नादि यतिर्मधुहेव भुङ्क्ते । अन्ने उद्यमं विनापि भोगसंभवो भवतीत्युक्तम् ॥१६॥ हरिणाच्छिक्षितमाह । यतिर्ग्राम्यगीतं न शृणुयात् । इदं लुब्धकस्य गीतमोहिताद् हरिणात् शिक्षितम् ॥ १७ ॥ किं च स्त्रीणां नृत्यगीतानि सेवमानः नरस्तासां वश्यो भवति । मृगीसुतः ऋष्यशृङ्ग इव ॥१८॥ अथ मत्स्याच्छिक्षितमाह । जनो जिह्वया

नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ॥ बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ १४ ॥ न देयं नोपभोग्यं च लुब्धैर्यद्दुखसंचितम् भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥ सुदुःखोपार्जितैर्वित्तैराशासानां[1] गृहाशिषः ॥ मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥१६॥ ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः कचित् ॥ शिक्षेत हरिणाद् बद्धान्मृगयोर्गीतमोहितात् ॥ १७ ॥ नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ॥ आसां क्रीडनको राजन् ऋष्यशृङ्गो मृगीसुतः ॥ १८ ॥ जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥ इंद्रियाणि जयन्त्याशु निराहारा मनीषिणः ॥ वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥ २० ॥ तावज्जितेंद्रियो न स्याद् विजितान्येन्द्रियः पुमान् ॥ न जयेद् रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥ पिङ्गला नाम वेश्याऽऽसीद् विदेहनगरे पुरा ॥ तस्या मे शिक्षितं किंचिन्निबोध नृपनन्दन ॥ २२ ॥

रसमोहितश्चेद् मृत्युं प्राप्नोति । यथाऽऽस्वादेच्छया मांसलिप्तलोहकण्टकैर्मत्स्यो मृत्युं प्राप्नोति तथा ॥१९॥ बुद्धिमन्तः आहारं हित्वा रसनेन्द्रियं विनेन्द्रियाणि जयन्ति । तन्निरन्नस्य वर्धते ।अतो रसनाशक्तिं जित्वौषधवत् क्षुधाशान्त्यर्थं भुञ्जीत ॥२०॥ यावद् रसनेन्द्रियं न जयेत् तावज्जितान्येन्द्रियोऽपि जितेन्द्रियो न स्यात् । रसे जिते सर्वं जितं स्यात् ॥ २१ ॥ अथ पिङ्गलायाः शिक्षितं वक्तुं तदाख्यानमाह । हे नृप ! पुरा विदेहनगरे पिङ्गला नाम वेश्याऽऽसीत् । तस्याः शिक्षितं शृणु ॥ २२ ॥



१ अवासानानाम् ।

एकदा सा रतिस्थाने कान्तं नेष्यन्ती सती सुन्दरवेषं धृत्वा सायंकाले द्वारे तस्थौ ॥२३॥ मार्गे धनदान् पुरुषान् वीक्ष्य सम्भोगयोग्यान् मेने ॥२४॥ एवं तेषु गतागतेषु सत्सु स मामन्यो भूरिवित्तदः एष्यति ॥२५॥ इति दुराशया गतनिद्रा द्वारि निर्गच्छति प्रविशत्येवं कुर्वती निशीथं समपद्यत ॥२६॥ एवं धनाशया शुष्कमुखायास्तस्याः सुखदं वैराग्यं जज्ञे ॥२७॥ ततः खेदयुक्तचित्तायास्तस्या गीतं मत्तः शृणु । पुरुष-

सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती ॥ अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ २३ ॥ मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ ॥ ताञ्छुल्कदान्वित्तवतः कान्तान्मेनेऽर्थकामुका ॥ २४ ॥ आगतेष्वपयातेषु सा सङ्केतोपजीविनी ॥ अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति भूरिदः ॥ २५ ॥ एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बती ॥ निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २६ ॥ तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ॥ निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥ २७ ॥ तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ॥ निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥ २८ ॥ नह्यङ्गाजातनिर्वेदो देहबन्धंजिहासति ॥ यथा विज्ञानरहितो मनुजो ममतां नृप ॥ २९ ॥ पिङ्गलोवाच ॥ अहो मे मोहविततिं पश्यताऽविजितात्मनः ॥ या कान्तादसतः कामं कामये येन बालिशा ॥३०॥ सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ॥ अकामदं दुःखभयादिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३१ ॥ अहो मयाऽऽत्मा परितापितो वृथा साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया ॥ स्त्रैणान्नराद्याऽर्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ३२ ॥

स्याशापाशानां निर्वेदः खड्ग इव छेत्ताऽस्ति ॥२८॥२९॥ पिङ्गलोवाच । अहो मे मोहविस्तारं पश्यत । याऽहं तुच्छनरात् कामं कामये ॥ ॥३०॥ किं च स्वसमीपे वसन्तं नित्यं सर्वार्थदमपीश्वरं विहायदुःखादियुक्तं नरं भजे । अतोऽहमज्ञा ॥३१॥ अहो एतावत्पर्यन्तं देहं विक्रीयाऽनया निन्द्यवार्तया वृथा देहस्तापितः ॥ ३२ ॥

१ त्यक्तुमिच्छति । २ लुब्धाद् ।

किञ्च इदं शरीररूपं गृहमस्थिभिरेव निर्मितं त्वचा रोमनखैराच्छादितं क्षरन्नवद्वारं विण्मूत्रपूर्णं मदन्या का भजेत् । अतो मां धिक् ॥३३॥ अत्र विदेहनगरेऽहमेकैवाऽज्ञा यतोऽन्तर्यामिणं हरिं हित्वाऽन्यं भोगं भजे ॥३४॥ अतः परमेनं देहं विक्रीयात्मनैव लक्ष्मीवद्रमे ॥३५॥ किञ्च आद्यन्तवतो विषयाः कामदाः नराः देवाः वा भार्यायाः किं प्रियं कृतवन्तः न किञ्चिदपि ॥३६॥ किञ्च अद्य केनापि भाग्योदयेन विष्णुर्मे प्रीतः । यतः एवं मे सुखावहो निर्वेदो जातः ॥३७॥ अहं मन्दभाग्या चेत्स्यां तर्हि वैराग्यहेतवः क्लेशाः न स्युः ॥ वैराग्येण गृहादिकं त्यक्त्वा

यदस्थिभिर्निर्मितवंश[1]वंश्य[2]स्थूणं त्वचा रोमनखैः पिनद्धम् ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति काऽन्या ॥३३॥ विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ॥ याऽन्यमिच्छन्त्यसत्यस्मादात्मदात्काममच्युतात् ॥३४॥ सुहृत्प्रेष्ठतमो नाथ आत्मा चाहं शरीरिणाम् ॥ तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३५ ॥ कियत्प्रियं ते व्यभजन् कामं ये कामदा नराः ॥ आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ३६ ॥ नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा ॥ निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥३७॥ मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ॥ ये नानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥३८॥ तेनोपकृतमादाय शिरसा ग्राम्यसंगताः ॥ त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३९ ॥ संतुष्टा श्रद्दधत्येतद्यथालाभेन जीवती ॥ विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ४० ॥ संसारकूपे पतितं विषयैर्मुषितेक्षणम् ॥ ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्यस्त्रातुमधीश्वरः ॥ ४१ ॥ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलात् ॥ अप्रमत्त इदं पश्येद् ग्रस्तं कालाहिना जगत् ॥ ४२ ॥

शान्ति प्राप्नोति ॥ ३८ ॥ ततस्तेन विष्णुना कृतमुपकारं शिरसा गृहीत्वा विषयासंगताशां हित्वा तमेव शरणं व्रजामि तथा यथालाभेन जीवती तेनैव रमणेन विहरामि ॥३९॥४०॥ किञ्च संसारकूपे पतितमपहृतविवेकं कालसर्पेण ग्रस्तमात्मानं त्रातुमन्यः कः समर्थः ॥ ४१ ॥ इदं जगत् कालग्रस्तं दृष्ट्वा सर्वतो निर्विद्येत तदाऽऽत्मनः आत्मैव गोप्ता भवति ॥ ४२ ॥



---

१ वंशो नाम स्थूणासु निहितस्तिर्यग्वेणुः । २ वंश्यास्तस्मिन्नुभयतो निहिताः वेणवः ।

ब्राह्मण उवाच ॥ हे यदो ! एवं निश्चितमतिः सा पत्युराशां छित्वासुखेन शय्यायां सुष्वाप ॥४३॥ आशा निश्चयेनातिदुःखम् । नैराश्यं परमं सुखम् ! अत्र पिङ्गला उदाहरणम् ॥४४॥ इति श्रीभा० एकादश० चू० अष्टमोऽध्यायः ॥ ८ ॥ नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ॥१॥ ब्राह्मण उवाच ॥ अथ कुरराच्छिक्षितमाह ॥ हे यदो ! यद्यद्र नृणां प्रियतमं तत्तद्ग्रहणं दुःखमिति ज्ञात्वा त्यक्तपरिग्रहः स्यात् । यथाह ॥१॥ मांससहितं कुररं दृष्ट्वा मांसहीनाः अन्ये कुररास्तं जघ्नुः तदा स मांसं त्यक्त्वा सुखं प्रापेति ॥२॥ अर्भकाच्छिक्षितमाह । हे यदो ! मम मानापमानौ गृहपुत्रवतां चिन्ता च न । अहं त्वात्मक्रीडो बालवद् विचरामि ॥ ३ ॥ किञ्च अत्र लोके

ब्राह्मण उवाच ॥ एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् ॥ छित्वोपशममास्थाय शय्यामुपविवेश सा ॥४३॥ आशा हि परमं दुंख नैराश्यं परमं सुखम् ॥ यथा संच्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ ४४ ॥ इति श्रीभागवते महा० एकाद० अजगरादिनवगुरुशिक्षानिरूपणं नाम अष्टमोऽध्यायः ॥८॥ ब्राह्मण उवाच ॥ परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् ॥ अनन्तं सुखमाप्नोति तद्विद्वान्यस्त्वकिञ्चनः॥१॥सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ॥ तदामिषं परित्यज्य स सुखं समविन्दत॥२॥ न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ॥ आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥ ३ ॥ द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ॥ यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ॥ ४ ॥ कचित्कुमारी त्वात्मानं वृणानान्गृहमागतान् ॥ स्वयं तानर्हयामास कापि यातेषु बन्धुषु ॥ ५ ॥ तेषामभ्यवहारार्थं शालीन्रहसि पार्थिवः ॥ अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ॥ ६ ॥

चिन्ताहीनावानन्दव्याप्तौ च द्वावेव योऽज्ञो यश्च गुणेभ्यः परमीश्वरं प्राप्तः ॥४॥ अथ कुमार्याः शिक्षितं वक्तुं तत्कथामाह। कदाचित् कुमारी वरयितुं प्राप्तान् पुरुषान् दृष्ट्वा पित्रादिषु गतेषु स्वयं तान् पूजयामास॥५॥ततस्तेषां भोजनार्थमेकान्ते शालीन् अवघ्नन्त्यास्तस्याः कुमार्याः शङ्खाः शब्दं चक्रुः ॥ ६ ॥

---

१ तर्षं अभिलाषः ।

तदा सा इदं निन्द्यमिति मत्वा करादेकैकं निःसृत्य पुनरवघ्नन्त्यास्तस्याः शंखाः शब्दं चक्रुः । कराभ्यामेकैकं निःसार्यैकैकमवशेषयत् । ततः शब्दो नाभवत् ॥७॥८॥ हे यदो ! तस्याः इममुपदेशमन्वशिक्षम् ॥९॥ एवं बहूनामेकत्र वासे कलहः ॥ द्वयोस्तु वार्ता स्यात् अतस्त-स्याः कङ्कणवदेक एव चरेत् ॥१०॥ अथ बाणकाराच्छिक्षितमाह । मुनिरासनप्राणौ जित्वा मन एकत्र संयुञ्ज्यात् ॥११॥ एवं कृते स्थिरं सद्-मनः कर्मवासनाः मुञ्चति । ततो वृद्धेन सत्त्वेन रजस्तमसी दूरीकृत्य ध्येयाकारेणावस्थानं प्राप्नोति ॥१२॥ एवं मनसि स्थिरे जाते सति पुमान्

सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ॥ बभञ्जैकैकशः शंखान् द्वौ द्वौ पाण्योरशेषयत् ॥७॥ उभयोरप्यभूद्घोषो ह्यवघ्नन्त्याः स्म शंखयोः ॥ तत्राप्येकं निरभिददेकस्मान्नाभवद्ध्वनिः ॥ ८ ॥ अन्वशिक्षमिमं तस्या उपदेशमरिन्दम ॥ लोकाननुचरन्नेतांल्लोकतत्त्वविवित्सया ॥ ९ ॥ वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ॥ एक एव चरेत्तस्मात्कुमार्या एव कङ्कणः ॥ १० ॥ मन एकत्रसंयुञ्ज्याज्जितश्वासो जितासनः ॥ वैराग्याभ्यासयोगेन ह्रियमाणमतन्द्रितः ॥ ११ ॥ यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् ॥ सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥१२॥ तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा ॥ यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥ एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ॥ अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥ १४॥ गृहारम्भो हि दुःखाय विफलश्चाध्रुवात्मनः ॥ सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥ एको नारायणो देवः पूर्वसृष्टं स्वमा-यया ॥ संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥

बहिरन्तरं न वेद । तथा बाणकर्ता बाणे दत्तचित्तः पार्श्वगतं नृपतिं न ददर्श ॥१३॥ अथ सर्पाच्छिक्षितमाह । मुनिरेकचारी गृहरहित आचारै-रलक्ष्यमाणो भवेत् ॥१४॥ किञ्च गृहारम्भो दुःखाय भवतीति ज्ञात्वा सर्पः परकृतं गृहं प्रविश्य सुखं प्राप्नोति यथा तद्वत् गृहारम्भो न कार्यः॥ ॥ १५ ॥ अथोर्णनाभेः शिक्षितमाह । नारायणो देवः स्वमायया सृष्टमिदं कल्पान्ते संहृत्य ॥ १६ ॥



१ परमानन्द रूपे भगवति । २ निर्गुणम्

एक एवात्माधारोऽखिलाश्रयः प्रकृतिपुरुषेश्वरः ॥ १७ ॥ मोक्षसंज्ञितः परमानन्दः आस्ते । अनेन लयो दर्शितः ॥१८॥ किञ्च ईशस्त्रिगुणात्मिकां मायां कालेन निमित्तेन क्षोभयन् महत्तत्त्वमादौ सृजति ॥१९॥ यत्रेदं विश्वं प्रोतम् । येन महता पुमान् संसरते । अनेनोत्पत्तिर्दर्शिता ॥ ॥२०॥ यथोर्णनाभिर्हृदयान्निर्गतामूर्णां वक्त्रेण प्रसार्य क्रीडित्वा पुनर्ग्रसति एवमीश्वरः ॥२१॥ पेशस्कृतः शिक्षितमाह । तथा पेशस्कृता कुडयां

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ॥ कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ १७ ॥ परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ केवलानुभवानन्दसंदोहो निरुपाधिकः ॥ १८ ॥ केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ॥ संक्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम ॥ १९ ॥ तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् ॥ यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥ यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः ॥ तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥ यत्र यत्र मनो देही धारयेत्सकलं धिया ॥ स्नेहाद् द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ॥ २२ ॥ कीटः पेशस्कृतं ध्यायन्कुडयां तेन प्रवेशितः ॥ याति तत्सात्मतां राजन्पूर्वरूपमसंत्यजन् ॥ २३ ॥ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ॥ स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥ देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कम् ॥ तत्त्वान्यनेन विमृशामि यथातथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥

रुद्धः कीटस्तं ध्यायन पूर्वरूपं त्यक्त्वा तद्रूपं प्राप्नोति । यथा देही यत्रयत्र स्नेहादिना मनो धारयेत् ॥ तत्तत्स्वरूपतां प्राप्नोति ॥२२॥२३॥ एवमेतेभ्यो गुरुभ्यो मयैषा बुद्धिः शिक्षिता ॥२४॥ अथ स्वदेहादेव शिक्षितमाह । हे यदो ! अयं देहो मे गुरुः । यतो विरक्तिविवेकयोर्हेतुः । तदपि कुतः ! यतो जन्मनिधने बिभर्ति । किञ्च अनेन तत्त्वानि विमृश्यापि पारक्यमिति ज्ञात्वाऽसङ्गश्चरामि ॥ २५ ॥

१ परे ब्रह्मादयः अपरे अन्ये च मुक्ताः जीवाः तेषां परमः प्राप्यः । २ सूत्रस्यैव तामिति स्त्रीलिङ्गेन निर्देशः । ३ गुणत्रयकार्यम् । ४ सततदुःखमेवोदर्कम्–उत्तरफलं यस्य तादृशं जन्मनिधनम् ।

किंच यत्प्रियं कर्तुं पुमान् स्त्रीपुत्रादीन् पुष्णाति स देहः आयुषोऽन्ते तान् विसृज्य नश्यति ॥२६॥ अपि च अमुं देहं जिह्वादिसर्वेन्द्रियाणि स्वस्वविषयं प्रत्यपकर्षन्ति। यथा बह्वयः सपत्न्यो गेहपतिं त्रोटयन्ति ॥२७॥ इदानीमीश्वरनिष्ठां विधत्ते। अहो ब्रह्मदेवो विविधानि वृक्षसरीसृपपशुपक्ष्यादिशरीराणि सृष्ट्वा तैस्तैरसंतुष्टहृदयो नृशरीरं पुरं निर्माय हर्षं प्राप ॥२८॥ एवं नृशरीरं बहुजन्मान्ते लब्ध्वा तत्रापि पुरुषार्थप्रदं

जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णाति यत्प्रियचिकीर्षया वितन्वन् ॥ स्वान्ते सकृच्छ्रमवरुद्धधनः सदेहः सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मा ॥ २६ ॥ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥ सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या वृक्षान्सरीसृपपशून्खगदंशमत्स्यान् ॥ तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः ॥ २८ ॥ लब्ध्वा सुदुर्लभमिदं बहुसंभवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ॥ तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥ एवं संजातवैराग्यो विज्ञानालोक आत्मनि ॥ विचरामि महीमेतां मुक्तसङ्गोऽनहंकृतिः ॥ ३० ॥ नह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम् ॥ ब्रह्मैतदद्वितीयं हि गीयते बहुधर्षिभिः ॥ ३१ ॥ श्रीभगवानुवाच ॥ इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः ॥ वन्दितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥

ज्ञात्वा धीरो यावद् मृत्युर्न पतेत् तावद् मोक्षाय प्रयत्नं कुर्यात् न विषयार्थम्। यतो विषयस्तु सर्वत्र स्यात् ॥ २९ ॥ हे यदो! एवं संजातवैराग्यो निरहंकारश्च सङ्गं हित्वा महीं विचरामि ॥३०॥ किंच एकस्माद् गुरोः स्थिरं पुष्कलं च ज्ञानं न प्राप्नोति। यतोऽद्वितीयं ब्रह्म ऋषिभिर्बहुधा गीयते ॥३१॥ श्रीभगवानुवाच। हे उद्धव! एवं दत्तात्रेयो यदुमुक्त्वा यदुना वन्दितः प्रार्थितः प्रीतः सन् यदृच्छया ययौ ॥ ३२ ॥



१ आयुषोऽन्ते। २ सकृच्छं, यथा भवति तथा संचितधनः। ३ पुरुषस्य। ४ देहान्तरबीजम्। ५ पिपासा। ६ कर्मेन्द्रियम्। ७ जन्मरहितया। ८ ब्रह्मसाक्षात्काराय धिषणा बुद्धिर्यस्य तं पुरुषम्। ९ मरणधर्मकमिदं शरीरम्।

हे उद्धव ! अस्माकं पूर्वेषां पूर्वजः स यदुरवधूतवचः श्रुत्वा सर्वसङ्गमुक्तः सन् समचित्तो बभूव ॥३३॥ इति श्रीभा० एका० चू० नवमोऽध्यायः ॥ ९ ॥ चतुर्विंशतिगुर्वाख्यालब्धसंभावनाभुवः ॥ उद्धवस्यात्मतत्त्वाप्त्यै साधनोक्तिरतः परैः ॥१॥ दशमे देहसम्बंधात् संसृतिर्नात्मनः स्वतः । इत्येतद्वर्णयामास मतान्तरनिरासतः ॥२॥ श्रीभगवानुवाच । हे उद्धव ! मयोक्तेषु स्वस्वधर्मेषु वर्णाश्रमकुलाचारं तान्निष्कामतया आचरेत् ॥ १ ॥ विषयात्मनां देहिनां विषमेषु सत्यत्वेन यः आरम्भस्तेषां फलवैपरीत्यं पश्येत् ॥ २ ॥ किं च यथा सुप्तस्य स्वप्ने विषयालोकस्तथा मनोरथश्च विफलः एवमात्मनींन्द्रियैर्या बहिर्नानाबुद्धिः सा विफला ॥३॥ मत्परः पुमान्निवृत्तं कर्म सेवेत प्रवृत्तं कर्म त्यजेत्

अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ॥ सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ॥ ३३ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे नवगुरुशिक्षानिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥ श्रीभगवानुवाच ॥ मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥ १ ॥ अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् ॥ गुणेषु तत्त्वध्यानेन सर्वारम्भविपर्ययम् ॥ २ ॥ सुप्तस्य विषयालोको ध्यायतो वा मनोरथः ॥ नानात्मकत्वाद्विफलस्तथा भेदात्मधीर्गुणैः ॥ ३ ॥ निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ॥ जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥ ४ ॥ यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् ॥ मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥ ५ ॥ अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ॥ असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६ ॥ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनः समं पश्यन्सर्वेष्वर्थमिवात्मनः ॥ ७ ॥ विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् ॥ यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥ ८ ॥

तत्राप्यात्मविचारे सम्यक्प्रवृत्तनिवृत्तकर्मप्रेरणामपि नाद्रियेत ॥ ४ ॥ किं च अहिंसादिनियमान्पुनः पुनः सेवेत नियमांस्तु यथाशक्ति । यमेष्वप्यादरं हित्वा मद्रूपं शान्तं गुरुमुपासीत ॥ ५ ॥ सेवकधर्मानाह । मानरहितोऽनलसो गुरौ दृढस्नेहः अव्यग्रचित्तः सत्यवाक् ॥ ६ ॥ स्त्रीगृहादिषूदासीनः सर्वेष्वात्मनः प्रयोजनं सममिव पश्यन्सन्गुरुमुपासीत ॥७॥ कोऽसौ । तमाह । स्थूलसूक्ष्मदेहद्वयादात्मा अन्यः । यतो द्रष्टा यथाऽग्निर्दाहकः प्रकाशकः काष्ठाद्भिन्नः तद्वत ॥ ८ ॥

अपि च यथाऽग्निर्दारुषु प्रविष्टः सन् तत्कृतनाशादीन् प्राप्नोति एवं परोऽप्यात्मा देहगुणानुत्पत्त्यादीननुभवति॥९॥ किं च ईशस्य मायागुणः रचितदेहाज्जीवस्य संसारो भवति। वस्तुतो जीवो देहात्परः ॥१०॥ तस्माद्विचारेण देहस्थितमात्मानं ज्ञात्वा देहादौ सत्यबुद्धिं त्यजेत्॥११॥ अथ गुरोरविद्यानाशकविद्योत्पत्तिप्रकारमग्निरूपकेणाह।आचार्योऽधरारणिः शिष्य उत्तरारणिः।तयोर्मध्ये मन्थनकाष्ठमुपदेशः। हे उद्धव! विद्या तु तदग्निरिव ॥१२॥ एवंभूता विद्या मायां धुनोति। यथा काष्ठरहितोऽग्निः स्वयं शाम्यति तथा शाम्यति। एवं विद्यया आत्मा आनन्दरूपो

निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान्गुणान् ॥ अन्तःप्रविष्ट आधत्ते एवं देहगुणान्परः ॥ ९ ॥ योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ॥ संसारस्तन्निबन्धोऽयं पुंसो विद्याच्छिदात्मनः ॥ १० ॥ तस्माज्जिज्ञासयात्मानमात्मस्थं केवलं परम् ॥ सङ्गम्य निरसेदेतद्वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥ आचार्योऽरणिराद्यः स्यादन्तेवास्युत्तरारणिः ॥ तत्सं-धानं प्रवचनं विद्यासन्धिः सुखावहः ॥१२॥ वैशारदी सातिविशुद्धबुद्धिर्धुनोति मायां गुणसंप्रसूताम् ॥ गुणांश्च संदह्य यदात्ममेतत् स्वयं च शाम्यत्यसमिद्यथाग्निः ॥१३॥ अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः ॥ नानात्वमथ नित्य-त्वं लोककालागमात्मनाम् ॥ १४ ॥ मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी यथा ॥ तत्तदाकृतिभेदेन जायते विद्यते च धीः ॥१५॥ एवमप्यङ्ग सर्वेषां देहिनां देहयोगतः ॥ कालावयवतः सन्ति भावा जन्मादयोऽसकृत ॥१६॥

भवति ॥ १३ ॥ एवं तावद् नित्यः एक एवात्मा। कर्तृत्वादिधर्मास्तस्य देहोपाधिकाः । यदि कर्मकर्तॄणां सुखदुःखभोक्तॄणां जीवानां नानात्वं मन्यसे ॥ १४ ॥ यदि च सर्वभावानां स्रक्चन्दनादीनां स्थितिः प्रवाहरूपेण नित्या। अतस्तत्कर्तेश्वरोऽपि नास्तीत्येवमङ्गीकृत्य निराकरोति ॥ १५ ॥ हे उद्धव। सर्वदेहिनां जन्मादयो भावाः कालात् सन्ति ॥ १६ ॥



---

१ ब्रह्मविद्या। २ छिद् छेत्री। अज्ञानस्येति शेषः। ३ अतिनिपुणशिष्यप्राप्ता। ४ यदात्मकमेतद्विश्वम्। ५ लोकः भोगस्थानानि कालः भोगकालः आगमः तदुपायकर्मबोधकः आत्मा एतेषां चतुर्णां नित्यत्वं मन्यसे। ६ तत्तद्बुद्धिः। ७ संवत्सरादिरूपात्।

किंच कर्मणां कर्तुः सुखदुःखभोक्तुश्च पुंसोऽत्रापि स्वातन्त्र्यं नास्ति ॥१७॥ तथा विदुषामपि सुखं न विद्यते । तथा मूढानां दुःखं न । अतो वयं कर्मकुशलत्वात् सुखिन इति तेषां वृथैवाहंकारः ॥१८॥ एवं भूताः एते सुखदुःखप्राप्तिनाशौ जानन्ति । तथापि येन मृत्युर्न स्यात् तदुपायं न विदुः ॥१९॥ अत एनं पुरुषं को न्वर्थः सुखयति । यतो मृत्युः समीपे वर्तते । यथा वधस्थानं नीतस्य वध्यस्यार्थो न तुष्टिदः तद्वत् ॥२०॥ किं च श्रुतं स्वर्गादि । तद् भूलोकवत् स्पर्धेर्ष्यानाशापक्षयैर्दुष्टं निष्फलं च ॥२१॥ किं च यदि धर्मो विघ्नैर्न हतः स्वनुष्ठितः । तेन

अत्रापि कर्मणां कर्तुरस्वातन्त्र्यं च लक्ष्यते ॥ भोक्तुश्च दुःखसुखयोः को न्वर्थो विवशं भजेत् ॥ १७ ॥ न देहिनां सुखं किंचिद्विद्यते विदुषामपि ॥ तथा च दुःखं मूढानां वृथाहंकरणं परम् ॥ १८ ॥ यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः ॥ तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा ॥ १९ ॥ को न्वर्थः सुखयंत्येनं कामो वा मृत्युरन्तिके ॥ आघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥ २० ॥ श्रुतं च दृष्टवद्दुष्टं स्पर्धासूयात्ययव्ययैः ॥ बह्वन्तरायकामत्वात्कृषिवच्चापि निष्फलम् ॥ २१ ॥ अन्तरायैरविहतो यदि धर्मः स्वनुष्ठितः ॥ तेनापि निर्जितं स्थानं यथा गच्छति तच्छृणु ॥२२॥ इष्ट्वेह देवता यज्ञैः स्वर्लोकं याति याज्ञिकः ॥ भुञ्जीत देववत्तत्र भोगान्दिव्यान्निजार्जितान् ॥२३॥ स्वपुण्योपचिते शुभ्रे विमान उपगीयते ॥ गन्धर्वैर्विहरन् मध्ये देवीनां हृद्यवेषधृक्॥२४॥ स्त्रीभिः कामगयानेन किंकिणीजालमालिना ॥ क्रीडन्न वेदात्मपातं सुराक्रीडेषु निर्वृतः ॥२५॥ तावत् प्रमोदते स्वर्गे यावत्पुण्यं समाप्यते ॥ क्षीणपुण्यः पतत्यर्वागनिच्छन्कालचालितः ॥ २६ ॥ यद्यधर्मरतः सङ्गादसतां वाऽजितेन्द्रियः ॥ कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ॥ २७ ॥

धर्मेण जितं स्थानं पुमान् यथा गच्छति तच्छृणु ॥२२॥ याज्ञिक इह यज्ञैर्देवानिष्ट्वा स्वर्गं याति । तत्र दिव्यान् भुङ्क्ते ॥२३॥ ततः शुभ्रे विमाने श्रेष्ठवेषधृक् देवीनां मध्ये विहरत् गन्धर्वैरुपगीयते॥२४॥ तथा कामगेन विमानेन विचरन् स्त्रीभिर्देवोद्यानेषु क्रीडन्नात्मपातं न वेद ॥२५॥ एवंभूतः पुमान् यावत् पुण्यं तावत् स्वर्गे मोदते क्षीणपुण्योऽधः पतति ॥२६॥ अथ यदि पुरुषोऽधर्मरतः स्त्रीवशो भूतहिंसकः सन् ॥ २७ ॥

१ विवशः । २ कालकर्मगुणाधीनं पुरुषम् । ३ सुखयेत् । ४ बहवो विघ्ना यस्मिन् कामे सुखे तस्य भावस्तत्त्वं तस्मात् ।

पशूनविधिना हत्वा प्रेतभूतगणान् यजते स नरकान् गत्वा ततः स्थावरतां याति ॥२८॥ एवं देहेन दुःखोदर्काणि कर्माणि यः करोति स पुनर्देहं प्राप्नोति । अतस्तत्र मर्त्यधर्मिणः किं सुखं स्यात् ॥२९॥अपि च लोकानां तत्पालानां च द्विपरार्धायुषो ब्रह्मणोऽपि च मत्तो भयं किं पुनरन्येषाम् ॥३०॥ पूर्वं यदुक्तं कर्तृभोक्तृरूपमेवात्मैतन्निराकरोति । सत्त्वादिगुणाः इंद्रियाणि सृजन्ति । इन्द्रियाणि कर्माणि सृजन्ति । जीवस्त्विन्द्रियादिसंयुक्तः कर्मफलानि भुङ्क्ते ॥३१॥ तथा जीवस्य यावद् गुणवैषम्यं तावन्नानात्वम् । यावन्नानात्वं तावत् पारतन्त्र्यम् ॥३२॥यावत्पारतन्त्र्यं तावन्मत्तो भयम् ।

पशूनविधिनाऽऽलभ्य प्रेतभूतगणान् यजन् ॥ नरकानवशो जन्तुर्गत्वा यात्युल्बणं तमः ॥ २८ ॥ कर्माणि दुःखोदर्काणि कुर्वन् देहेन तैः पुनः ॥ देहमाभजते तत्र किं सुखं मर्त्यधर्मिणः ॥२९॥ लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ॥ ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥३०॥ गुणाः सृजन्ति कर्माणि गुणोऽनुसृजते गुणान् ॥ जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्मफलान्यसौ ॥ ३१ ॥ यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ॥ नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि ॥ ३२ ॥ यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ॥ य एतत् समुपासीरंस्ते मुह्यन्ति शुचार्पिताः ॥ ३३ ॥ काल आत्मागमो लोकः स्वभावो धर्म एव च ॥ इति मां बहुधा प्राहुर्गुणव्यतिकरे सति ॥ ३४ ॥ उद्धव उवाच ॥ गुणेषु वर्तमानोऽपि देहजेष्वनपावृतः ॥ गुणैर्न बध्यते देहो बध्यते वा कथं विभो ॥३५॥ कथं वर्तेत विहरेत्कैर्वा ज्ञायेत लक्षणैः ॥ किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा ॥ ३६ ॥ एतदच्युत मे ब्रूहि प्रश्नं प्रश्नविदां वर ॥ नित्यबद्धो नित्यमुक्त एक एवेति मे भ्रमः ॥ ३७ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धव संवादे संसारप्रकारनिरूपणं नाम दशमोऽध्यायः ॥ १० ॥

एतद्गुणं वैषम्यं ये च सेवेरन् ते शुचार्पिताः मुह्यन्ति ॥३३॥ गुणव्यतिकरे जाते सति कालात्मागमादिरूपं मायेवं बहुधा प्राहुः कालादयो मद्भिन्नाः न सन्ति । एवं च निवृत्तिरेव श्रेष्ठा ॥ ३४ ॥ उद्धव उवाच ॥ देहजेषु गुणेषु वर्तमानो जीवोऽनपावृतः सन् गुणेषु न बध्यते, बध्यते वा कथमिति वद ॥३५॥ किं च बद्धमुक्तो जीवः कथं वर्तेत किं भुञ्जीत कैर्लक्षणैर्ज्ञायेत कथं याति ॥३६॥ हे अच्युत ! एतत्प्रश्नं मे ब्रूहि । नित्यमुक्तो नित्यबद्धः एक एवेति मे भ्रमो भवति ॥३७॥ इति श्रीभागवते महा० एकाद० चू० दशमोऽध्यायः ॥१०॥

एकादशे तु बद्धानां मुक्तानां चाथ लक्षणम् । साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव ! जीवो बद्धो मुक्तश्च मदधीनोपाधितो न वस्तुतः । कुतः । गुणस्य मायामूलत्वाद् बन्धो न मोक्षोऽपि न इति मे व्याख्या अतिकुतर्कैरलम् ॥ १ ॥ किंच शोक-मोहौ सुखं दुखं देहोत्पत्तिश्च मायया । तथा संसृतिश्च । यथा स्वप्नो बुद्धेर्विवर्तः तद्वत् ॥ २ ॥ हे उद्धव ! शरीरिणां विद्याविद्ये इमे माया विनिर्मिते मम शक्ती मोक्षबन्धनकर्यौ । एवं च यावदविद्यां प्रवर्तयामि तावद् बन्धः, यदा विद्यां ददामि तदा मोक्षः ॥३॥ हे महामते !

श्रीभगवानुवाच ॥ बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥ गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ ॥ १ ॥ शोकमोहौ सुखं दुखं देहोत्पत्तिश्च मायया ॥ स्वप्नो यथात्मनः ख्यातिः संसृतिर्नतु वास्तवी ॥ २ ॥ विद्या-विद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ॥ मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ ३ ॥ एकस्यैव ममांशस्य जीवस्यैव महामते ॥ बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः ॥ ४ ॥ अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते ॥ विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥ ५ ॥ सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे ॥ एक-स्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥ ६ ॥ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः ॥ योऽविद्यया युक्स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥ ७ ॥ देहस्थोऽपि न देहस्थोविद्वान् स्वप्नाद्यथोत्थितः ॥ अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग् यथा ॥ ८ ॥

ममांशस्य जीवस्याविद्यया बन्धः, विद्यया मोक्षः ॥४॥ अथ बद्धमुक्तयोर्लक्षणं वदामि ॥५॥ देहरूपे वृक्षे हृदय एव कृतनीडावेतौ पक्षिणौ सखायौ वर्तेते । तयोर्मध्य एको जीवः कर्मफलं खादति । अन्यः ईशोऽभोक्तापि ज्ञानादिशक्त्याऽधिकः स आत्मानमन्यं च वेद, जीवस्तु तथा न वेद । अतो योऽविद्यया युक्तः स नित्यबद्धः, यो विद्यया युक्तः स नित्यमुक्तः ॥ ६ ॥ ७ ॥ यो मुक्तः स देहस्थोऽपि न देहस्थः स्वप्नादुत्थित इव । तथा यो बद्धः सोऽदेहस्थोऽपि देहस्थो भवति स्वप्नवत् ॥ ८ ॥

१ शोकानन्दवतोः । २ एक एव धर्मः यस्य तत् शरीरं तस्मिन् स्थितयोर्नियम्यनियन्तृत्वेनेति शेषः । ३ कर्मणः फलं भुङ्क्ते इत्यर्थः ।

यो मुक्तः स इन्द्रियैर्गृह्यमाणेषु विषयेषु सत्सु गृह्णामीत्यहं न करोति ॥ ९ ॥ यस्तु दैवाधीनो शरीरे वर्तमानेऽज्ञः सोऽहं कर्तास्मीति बध्यते ॥१०॥ एवमन्यगतमेव कर्म मां बध्नाति इत्येवं विरक्तः सन् विद्वान् शयनासनदर्शनभोजनादिष्विन्द्रियैर्गुणान् भोजयन्नप्यविद्वानिव न बध्यते यथा वायुः सर्वत्र चरन्नपि न सज्जते ॥११॥१२॥ एवं वैराग्यज्ञानेन छिन्नसंशयः पुमान् देहादिप्रपञ्चाद् निवर्तते स्वप्नात् प्रबुद्ध इव॥१३॥ यस्य प्राणादीनां वृत्तयः संकल्पहीनाः स्युः स देहस्थोऽपि तद्गुणैर्मुक्तः स्यात् ॥१४॥ यस्य देहो दुर्जनैरन्यैर्वा पीड्यतेऽर्च्यते वा । तत्र यो विकारं न

इन्द्रियैरिन्द्रियार्थेषु गुणैरपि[1]गुणेषु च ॥ गृह्यमाणेष्वहं कुर्यान्न विद्वान् यस्त्वविक्रियः ॥ ९ ॥ दैवाधीने शरीरेऽस्मिन्गुणभाव्येन कर्मणा ॥ वर्तमानोऽबुधस्तत्र कर्तास्मीति निबध्यते ॥ १० ॥ एवं विरक्तः शयन आसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥ न तथा बध्यते विद्वांस्तत्र तत्रादयन्गुणान् ॥ प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः ॥ १२ ॥ वैशारद्येक्षयाऽसङ्गशितया[2][3][4] भिन्नसंशयः ॥ प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥१३॥ यस्य स्युर्वीतसंकल्पाः प्राणेन्द्रियमनोधियाम् ॥ वृत्तयः स विनिर्मुक्तो देहस्थोऽपि हि तद्गुणः ॥ १४ ॥ यस्यात्मा हिंस्यते हिंस्रैर्येन किञ्चिद्यदृच्छया ॥ अर्च्यते वा क्वचित्तत्र न व्यतिक्रियते बुधः ॥ १५ ॥ न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा ॥ वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः ॥ १६ ॥ न कुर्यान्न वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा ॥ आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ १७ ॥ शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि ॥ श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥ १८ ॥ गां दुग्धदोहामसतीं च भार्यां देहं पराधीनमसत्प्रजां च ॥ वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी[5] ॥ १९ ॥



प्राप्नुते स बुधः ॥१५॥ मुनिः साध्वसाधु वा कुर्वतो वदतो वा नरान् न स्तुवीत न निन्देत॥१६॥ तथा साध्वसाधु वा न कुर्यात् न ध्यायेत्। एवं वृत्त्या जडवत् चरेत् ॥१७॥ यस्तु वेदब्रह्मणिनिपुणः सन् परे ब्रह्मणि न निपुणश्चेत् तर्हि तस्य श्रमश्चिरप्रसूतां गां रक्षतामिव व्यर्थः॥१८॥ एतदेवाह । अदुग्धां गां कामहीनां स्त्रियं पराधीनं देहमसत्प्रजां पात्रेऽदत्तं वित्तं कृष्णेन हीनां वाचमेतान् यो रक्षति स दुःखदुःखी ॥ १९ ॥

१ इंद्रियकृतेन । २ अतिनिपुणया । ३ ईक्षणेन दर्शनेन । ४ असङ्गेन वैराग्येण शितया तीक्ष्णया । ५ दुःखानन्तरं दुःखमेव यस्य सः ।

यस्यां वाण्यां मे पवित्रकर्म जन्म वा नास्ति तां वाणीं धीरो न बिभृयात् ॥ २० ॥ एवं विचारेणात्मनि देहाद्यभिमानं हित्वा पूर्णे मयि निर्मलं मनः संधायोपारमेत ॥२१॥ हे उद्धव ! ब्रह्मणि स्थिरं मनो धारयितुं समर्थश्चेत्तर्हि मयि सर्वकर्माणि समर्पय ॥ २२ ॥ तथा श्रद्धालुर्मे कथाः शृण्वन् मे कर्म गायन् जन्म स्मरन् ॥२३॥ मदर्थे धर्मकामार्थानाचरन् यो वर्तते स मयि स्थिरां भक्तिं लभते ॥ २४ ॥ एवं सत्सङ्गप्राप्तया

यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य[1] ॥ लीलावतारेप्सितजन्म[2] वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥२०॥ एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ॥ उपारमेत विरजं मनोमय्यर्प्य सर्वगे ॥ २१ ॥ यद्यनीशो धारयितुं मनो ब्रह्मणिनिश्चलम् ॥ मयि सर्वाणि कर्माणि निरपेक्षः समाचर ॥ २२ ॥ श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः ॥ गायन्ननुस्मरन्कर्म जन्म चाभिनयन्[3]मुहुः ॥ २३ ॥ मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः ॥ लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥ २४ ॥ सत्सङ्गलब्धया भक्त्या मयि मां समुपासिता ॥ स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥ २५ ॥ उद्धव उवाच ॥ साधुस्तवोत्तमश्लोक मतः कीदृग्विधः प्रभो ॥ भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृता ॥ २६ ॥ एतन्मे पुरुषाध्यक्ष लोकाध्यक्ष जगत्प्रभो ॥ प्रणतायानुरक्ताय प्रपन्नाय च कथ्यताम् ॥ २७ ॥ त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः ॥ अवतीर्णोऽसि भगवन्स्वेच्छोपात्तपृथग्वपुः ॥ २८ ॥ श्रीभगवानुवाच ॥ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ॥ सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ २९ ॥ कामैरहतधीर्दान्तो मृदुः शुचिरकिंचनः ॥ अनीहो मितभुक्शान्तः स्थिरो मच्छरणो मुनिः ॥ ३० ॥

भक्त्या मामुपासिता पुमान् मत्पदं प्राप्नोति ॥२५॥ उद्धव उवाच ॥ हे कृष्ण ! तव साधुः कीदृक्संमतः । तथा त्वयि कीदृशी भक्तिः कर्तव्या ॥२६॥ एतद् नम्राय शरणागताय मे वद ॥२७॥ यतः प्रकृतेः परस्त्वं परब्रह्मावतीर्णोऽसि ॥ २८ ॥ श्रीभगवानुवाच । हे उद्धव ! साधुलक्षणं शृणु । कृपालुः सुखदुःखसमः सर्वोपकारकः ॥ २९ ॥ कामैरक्षुभितचित्तः शुचिर्मितभुक्शान्तो मदाश्रयः ॥ ३० ॥

१ अस्य जगतः स्थित्युत्पत्तिसंहाररूपं तद्धेतुरित्यर्थः । २ लीलावतारेष्वीप्सितं जगतः प्रेमास्पदं श्रीरामकृष्णादि-जन्म । ३ अनुकुर्वन् ।

अप्रमत्तो जितषड्गुणोऽमानी मैत्रः कविः ॥ ३१ ॥ एवं गुणाननुक्तदोषांश्च ज्ञात्वा धर्मान् संत्यज्य यो मां भजेत स उत्तमः ॥ ३२ ॥ किञ्च यावान् यादृशोऽहं तथा मां ज्ञात्वापि ये भजन्ति ते मे भक्ततमाः मान्याः ॥ ३३ ॥ अथ भक्तिलक्षणमाह ॥ मत्प्रतिमामद्भक्तदर्शनस्पर्श-नार्चनं मे गुणकर्मानुकीर्तनम् ॥३४॥ मत्कथाश्रवणे श्रद्धा मम ध्यानं दास्येनात्मसमर्पणम् ॥३५॥ मज्जन्मकर्म कथनं मम जन्माष्टम्यादिपर्व-

अप्रमत्तो गभीरात्मा धृतिमाञ्जितषड्गुणः ॥ अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३१ ॥ आज्ञायैवं गुणान्दोषान्मयाऽऽदिष्टानपि स्वकान् ॥ धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः ॥ ३२ ॥ ज्ञात्वाऽज्ञात्वाऽथ ये वै मां यावान्यश्चास्मि यादृशः ॥ भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥ मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्च-नम् ॥ परिचर्या स्तुतिः प्रह्वगुणकर्मानुकीर्तनम् ॥ ३४ ॥ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव ॥ सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥ ३५ ॥ मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ॥ गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥ ३६ ॥ यात्राबलिविधानं च सर्ववार्षिकपर्वसु ॥ वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥ ३७ ॥ ममार्चास्था-पने श्रद्धा स्वतः संहत्य चोद्यमः ॥ उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ३८ ॥ संमार्जनोपलेपाभ्यां सेकमण्डल-वर्तनैः ॥ गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ ३९ ॥

णामनुमोदनं गीतवादित्रादिभिर्मम मन्दिरोत्सवः ॥३६॥ सर्ववार्षिकपर्वसु पुष्पोपहारादिसमर्पणं मदीयव्रतधारणम् ॥ ३७ ॥ मत्प्रतिमास्था-पने श्रद्धा मम पूजनार्थं स्वतः उद्यानोपवनादिरोपणम् । असामर्थ्येऽन्यैः संगत्योद्यमकरणम्॥ ३८ ॥ संमार्जनोपलेपाभ्यां प्रोक्षणेन सर्वतो भद्रलेखनादिना दासवन्मम मन्दिरसेवनम् ॥ ३९ ॥



---

१ अन्येभ्यो मानं ददातीति । २ परबोधने दक्षः । ३ अवञ्चकः । ४ सम्यग्ज्ञानी । ५ वेदरूपान् भगवतो निःश्वसितभूतान् । ६ प्रह्वत्वं प्रणाम इति यावत् । ७ सर्वस्य लब्धस्य समर्पणम् । ८ उद्यानं पुष्पप्रधानम् । उपवनं फलप्रधानम् । आक्रीडः क्रीडास्थानम् ।

अमानित्वं कृतस्याऽननुकीर्तनम्। मन्निवेदितं न कार्यान्तरार्थं ग्राह्यम् ॥४०॥ किंच यद्यद् लोके आत्मनः प्रियं तत्तद् मह्यं निवेदयेत् ॥ ४१ ॥ अथपूजास्थानान्याह। सूर्यः १ अग्निः २ ब्राह्मणः ३ गावः ४ वैष्णवः ५ खं ६ वायुः ७ जलम् ८ भूः ९ आत्मा १० सर्वभूतानि ११। हे उद्धव! ममेमानि पूजास्थानानि ॥४२॥ सूर्यंउपस्थानादिना मां यजेत्। अग्नौ हविषा। द्विजे आतिथ्येन। गोषु तृणादिना ॥ ४३ ॥ वैष्णवे बन्धुवत् सम्मानेन। हृदाकाशे ध्यानेन। वायौ प्राणदृष्ट्या! जले जलादिभिस्तर्पणादिना ॥ ४४ ॥ भूमौ मन्त्रन्यासैः। देहे भोगैः सर्वभूतेषु

अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् ॥ अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥४०॥ यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥४१॥ सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ॥ भूरात्मा सर्वभूतानि भद्रपूजापदानि मे ॥४२॥ सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ॥ आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना ॥ ४३ ॥ वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ॥ वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥४४॥ स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ॥ क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥४५॥ धिष्ण्येष्वेष्विति मद्रूपं शंखचक्रगदाम्बुजैः ॥ युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहितः ॥ ४६ ॥ इष्टापूर्तेन मामेवं यो यजेत समाहितः ॥ लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया ॥ ४७ ॥ प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ॥ नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥ ४८ ॥ अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन ॥ सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखा ॥ ४९ ॥ इति श्रीभागवते म० एकाद० भगवदुद्धवसंवाद एकादशोऽध्यायः ॥ ११ ॥

समत्वेन मां यजेत ॥ ४५ ॥ एषु स्थानेषु मद्रूपं शंखचक्रादियुतं चतुर्भुजं ध्यात्वाऽर्चयेत् ॥४६॥ इष्टापूर्तकर्मणैवं यो मां यजेत् स भक्तिं लभते ॥४७॥ हे उद्धव! बहुधा भक्तियोगेन सत्सङ्गेन च विना संसारतरणेऽन्यः उपायो नास्ति ॥ ४८ ॥ अथ गुह्यं शृण्वतस्तुभ्यमन्यच्च गोप्यमपि वक्ष्यामि। यतस्त्वं मे भृत्यः सुहृत् सखा ॥ ४९ ॥ इति० श्रीभा० एकादशस्कन्धे चू० एकादशोऽध्यायः ॥ ११ ॥

१ प्रकृष्टः आश्रयः।

द्वादशे साधुसङ्गस्य महिमा वर्णिता पुरा ॥ कर्मानुष्ठानतत्त्यागव्यवस्था च ततः परम् ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव ! मामष्टाङ्गयोगः साङ्ख्यं धर्मः स्वाध्यायस्तपस्त्यागादयो व्रतानि यज्ञो मन्त्रास्तीर्थानि यमनियमास्तथा न वशीकुर्वन्ति यथा सत्सङ्गो मां वशीकरोति ॥१॥२॥ अहो सत्सङ्गेन दैत्यराक्षसाः मृगखगगन्धर्वाप्सरसो नागादयः॥३॥विद्याधरास्तथा मनुष्येषु वैश्यशूद्रस्त्रियोऽन्त्यजः एते रजस्तमःप्रकृतयोऽपि तत्तद्युगे मत्पदं बहवः प्राप्ताः॥४॥किंच वृत्रः१ प्रह्लादः२ वृषपर्वा ३ बलिः ४ बाणः५ मयः ६ विभीषणः ७ ॥५॥ सुग्रीवः ८ हनूमान् ९ जाम्बवान् १० जटायुः११ तुलाधारः१२ व्याधः१३ कुब्जा१४ गोप्यः १५ यज्ञपत्न्यः१६ अन्ये च॥६॥ एते सर्वे नाधीतश्रुतिगणाः नोपासितमहत्तमाः सत्सङ्गादेव मां प्राप्ताः॥७॥ तत्र गोप्यो गावो नगा मृगाः नागाः एते मूढधियः केवलभावेन मां प्रापुः॥८॥ योगसाङ्ख्यदानव्रततप आदिभिर्यत्नवानपि मां न प्राप्नुयात्॥९॥ गोपीनां भावं प्रपञ्चयति।अक्रूरेण मथुरां मयि नीते सति गोप्य सुखप्राप्तये मत्तोऽन्यं न ददृशुः॥१०॥मया कृष्णेन तास्ताः

श्रीभगवानुवाच ॥ न रोधयति मां योगो न साङ्ख्यं धर्म एव च ॥ न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ १ ॥ व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ॥ यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २ ॥ सत्सङ्गेन हि दैतेया यातुधाना मृगाः खगाः ॥ गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥३॥ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेऽनघ ॥ ४ ॥ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ॥ ५ ॥ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ॥ व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे ॥ ६ ॥ ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ॥ अव्रतातप्ततपसः सत्सङ्गान्मामुपागताः ॥ ७ ॥ केवलेन हि भावेन गोप्यो गावो नगा मृगाः ॥ येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ ८ ॥ यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः ॥ व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ९ ॥ रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ॥ विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥ १० ॥

रात्रयः क्षणार्धवन्नीताः ताः पुनर्मया हीनाः गोपीनां कल्पसमाः बभूवुः ॥११॥ अपि च ताः गोप्यो सक्तधियः सत्यः स्वदेहं परलोकमिमं लोकं च नाविदन्। यथा मुनयः समाधौ नामरूपे न विदुः तद्वत् ॥१२॥ एवं ताः शतसहस्रशो गोप्यो जारभावेनापि संगताः बुध्द्या अवेद्यमपि ब्रह्मस्वरूपं मां सत्सङ्गादेव प्रापुः ॥१३॥ अतो हे उद्धव! त्वं श्रुतिं स्मृतिं च हित्वा विधिनिषेधं च त्यक्त्वा ॥१४॥ सर्वात्मभावेन मां शरणं याहि ततो मयैव निर्भयो भव ॥१५॥ उद्धव उवाच ॥ हे कृष्ण! तव वाचं शृण्वतो मे हृदिस्थः संशयो न निवर्तते येन मे मनो भ्राम्यति। (अतस्तं छिन्धि) ॥१६॥ श्रीभगवा-

तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण ॥ क्षणार्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः ॥ ११ ॥ ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् ॥ यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ १२ ॥ मत्कामा रमणं जारमस्वरूपविदोऽबलाः ॥ ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥ १३ ॥ तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥ प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥ याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ १५ ॥ उद्धव उवाच ॥ संशयः शृण्वतो वाचं तव योगेश्वरेश्वर ॥ न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥ १६ ॥ श्रीभगवानुवाच ॥ एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ॥ मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ १७ ॥ यथाऽनलः खेऽनिलबन्धुरूष्मा बलेन दारुण्यधिमथ्यमानः ॥ अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥ १८ ॥

नुवाच। ईशस्तावद् मायया प्रपञ्चात्मना भाति। तत्प्रपञ्चाध्यासाच्च जीवानामविद्या। तया कर्तृत्वादि। ततो विधिनिषेधाधिकारः। तदा चित्तशुद्ध्यर्थं कर्माणि कुर्वित्युक्तम्। चित्ते शुद्धे कर्मादरं हित्वा मां भजेत्युक्तम्। तत्र तावदीश्वरात् प्रपञ्चोद्गममाह। स परोक्षः ईश्वरः आधारादिचक्रेषु व्यक्तः सन्नादौ पराख्येन नादवता प्राणेन सहाधारचक्रं प्रविष्टः। ततो मनोमयं सूक्ष्मं रूपं पश्यन्त्याख्यं मध्यमाख्यं च मणिपूरकचक्रं विशुद्धचक्रं च क्रमेण प्राप्य वक्रे मात्रा वरो वर्ण इत्येवं वैखर्याख्यः सन् नानावेदशाखात्मको भवति ॥ १७ ॥ अत्र दृष्टान्तः ॥ यथाऽग्निः खेऽदृश्यः ऊष्म-

१ आविर्भावरूपा। २ वेदलक्षणा।

रूपो वर्तते स काष्ठे मथितश्चेत् पवनसाहाय्येन सूक्ष्मरूपो विस्फुलिङ्गो भवति पुनर्हविषा वर्धते तथैवेयं वाणी ममाभिव्यक्तिः ॥१८॥ एवं भाषणहस्तपादविसर्गघ्राणरसदृक्स्पर्शश्रवणमनोबुद्ध्यादिसर्वप्रपञ्चो मे व्यक्तिः ॥१९॥ अयमीश्वरः आदावव्यक्तरूपस्त्रिगुण एक एव । ततः कालेन विभक्तेन्द्रियादिशक्तिरूपो बहुप्रकार इव भाति । यथा क्षेत्रं प्राप्य बीजानि॥२०॥एवंभूतः संसारवृक्षः प्रवृत्तिस्वभावो भोगापवर्गौ जनयति यस्मिन् विश्वं प्रोतं पटतन्तुवत् ॥ २१ ॥ अस्य वृक्षस्य पुण्यपापे द्वे बीजे । अपरिमितवासना मूलम् । त्रयो गुणाः अङ्कुराणि । पञ्च भूतानि

एवं गदिः कर्मगतिर्विसर्गो घ्राणो रसो दृक्स्पर्शः श्रुतिश्च ॥ संकल्पविज्ञानमथाभिमानः सूत्रं रजः सत्त्वतमोविकारः ॥ १९ ॥ अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको वयसा स आद्यः ॥ विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥२०॥ यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः ॥ य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥ द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः ॥ दशैकशाखो द्विसुपर्णनीडस्त्रि-वल्कलो द्विफलोऽर्कं प्रविष्टः ॥२२॥ अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः ॥ हंसा य एकं बहुरूप-मिज्यैर्मायामयं वेद स वेदवेदम् ॥ २३ ॥ एवं गुरूपासनयैव भक्त्या विद्याकुठारेण शितेन धीरः ॥ विवृश्च्य जीवा-शयमप्रमत्तः संपद्य चात्मानमथ त्यजास्त्रम् ॥ २४ ॥ इति श्रीभा० म० एकादशस्कन्धे भगवदुद्धवसंवादे सत्सङ्ग-माहात्म्यादिनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

स्कन्धाः । शब्दादिविषयाः उत्पत्तिः । एकादशेन्द्रियाणि शाखाः द्विसुपर्णो द्विफलः सूर्यमण्डलादिपर्यन्तं व्याप्तो वर्तते ॥ २२ ॥ एवं भूतवृक्षस्यैकं दुःखफलं गृहस्थाः खादन्ति तथाऽन्यत् सुखफलं संन्यासिनः खादन्ति । एकं बहुरूपमीश्वरं गुरुभिः कृत्वा यो वेद स वेदार्थं वेत्ति ॥२३॥ हे उद्धव ! एवं गुरुपासनया भक्त्या तीक्ष्णेन विद्यापरशुनाहंकारं छित्वा परमात्मानं प्राप्य साधानं त्यज ॥२४॥ इति श्रीभाग-वते महा० एकादशस्कन्धे चूर्णिकायां द्वादशोऽध्यायः ॥१२॥



१ त्रिगुणकोऽप्यमेषः त्रिविधः प्रपञ्चः । २ लोकपद्मस्य कारणभूतः । ३ वात्तपित्तश्लेष्माणस्त्रयो धातवः वल्कलानि । ४ सुखदुःखे । ५ गृध्यन्तीति गृध्राः । कामिन इति यावत् ।

त्रयोदशेऽथ सत्त्वस्य वृद्ध्या विद्योदयक्रमः ॥ हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥१॥ श्रीभगवानुवाच ॥ हे उद्धव ! सत्त्वादिगुणाः प्रकृतेः सन्ति नात्मनः । अतः सत्त्ववृद्ध्या रजस्तमो हन्यात् । सत्त्वं तु सत्त्वेनैव हन्यात् ॥१॥ ननु सत्त्ववृद्ध्येतरशक्त्यः कथं हन्तव्यास्तत्राह । वृद्धसत्वाद् मद्भक्तिलक्षणो धर्मो भवेत् । सत्त्वं तु सात्त्विकपदार्थसेवया वर्तते । ततो धर्मः प्रवर्तते ॥ २ ॥ स च धर्मो रजस्तमो हन्यात् । तन्नाशेऽधर्मो नश्यति ॥३॥ शास्त्रं जलं प्रजा देशः कालः कर्म जन्म ध्यानं मन्त्रः संस्कारः एते दश त्रिगुणहेतवः ॥४॥ एषु यद् यद् वृद्धाः

श्रीभगवानुवाच ॥ सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ॥ सत्त्वेनान्यतमौ हन्यात्सत्त्वं सत्त्वेन चैव हि ॥ १ ॥ सत्त्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः ॥ सात्त्विकोपासया सत्त्वं ततो धर्मः प्रवर्तते ॥२॥ धर्मो रजस्तमो हन्यात्सत्त्ववृद्धिरनुत्तमः ॥ आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥ ३ ॥ आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ॥ ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ॥ ४ ॥ तत्तत्सात्त्विकमेवैषां यद्यद्वृद्धाः प्रचक्षते ॥ निन्दन्ति तामसं यत्तद्राजसं तदुपेक्षितम् ॥५॥ सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये ॥ ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम् ॥ ६ ॥ वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् ॥ एवं गुणव्यत्ययजो देहः शाम्यति तत्क्रियः ॥ ७ ॥ उद्धव उवाच ॥ विदन्ति मर्त्याः प्रायेण विषयान्पदमापदाम् ॥ तथापि भुञ्जते कृष्ण तत्कथं श्वखराजवत् ॥ ८ ॥

प्रशंसन्ति तत् तत् सात्त्विकम् । यद् निन्दन्ति तत् तामसम् । तदितरं राजसं ज्ञातव्यम् ॥५॥ सत्त्ववृद्धये सात्त्विकान् सेवेत । ततो धर्मस्ततो ज्ञानं भवति ॥६॥ ननु गुणेभ्यो जातो देहः तान्गुणान्दूरीकृत्य कथं स्वयमुपरमेत् तत्राह । यथा वेणुसंघर्षजोऽग्निः स्वोत्पन्नज्वालाभिस्तद्वनं सर्वं दग्ध्वा पश्चात् स्वयं शाम्यति । एवं देहोऽपि ॥७॥ उद्धव उवाच ॥ हे कृष्ण ! मर्त्याः विषया दुःखदा इति ज्ञात्वा श्वखराजवत् पुनस्तान् सेवन्ते । तत् कथम् ॥ ८ ॥

---

१ सत्त्वस्य वृद्धिर्यस्मिन् कारणे सः । २ न स्तुतं नापि निंदितम् । ३ आत्मापरोक्ष्यम् । ४ देहद्वयतत्कारणभूतगुणापोहः । ५ तस्य अग्नेरिव क्रिया—व्यापारो यस्य सः ।

मिथ्याभिनिवेशेन भुञ्जत इति सहेतुकमाह । श्रीभगवानुवाच ॥ हे उद्धव ! मत्तस्य पुंसो देहादावहमिति मिथ्याबुद्धिर्हृदि मनो व्याप्नोति ततो मनः प्रति रजो व्याप्नोति ॥९॥ तता रजोयुक्तमनसो विकल्पः संकल्पश्च स्यात् । ततः कामः ॥ १० ॥ ततः कामवशगोऽजितेन्द्रियः कर्माणि करोति ॥११॥ एवं चेत कस्यापि दुःखनिवृत्तिर्न स्यादित्याह यद्यपि रजस्तमोभ्यां विक्षिप्तधीः तथापि विवेकी मनो रुन्धन् तत्र न सज्जते ॥ १२ ॥ मनोनिरोधे सुखोपायमाह । अनलसः पुमान् जितश्वासो जितासनः आनन्दरूपे मनोऽर्पयन् समादध्यात् ॥ १३ ॥

श्रीभगवानुवाच ॥ अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि ॥ उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ९ ॥ रजोयुक्तस्य मनसः संकल्पः सविकल्पकः ॥ ततः कामो गुणध्यानाद् दुःसह स्याद्धि दुर्मतेः ॥ १० ॥ करोति कामवशगः कर्माण्यविजितेन्द्रियः ॥ दुःखोदर्काणि संपश्यन्रजोवेगविमोहितः ॥ ११ ॥ रजस्तमोभ्यां यदपि विद्वान्विक्षिप्तधीः पुनः ॥ अतन्द्रितो मनो युञ्जन्दोषदृष्टिर्न सज्जते ॥ १२ ॥ अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयञ्छनैः ॥ अनिर्विण्णो यथाकालं जितश्वासो जितासनः ॥ १३ ॥ एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः ॥ सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ॥ १४ ॥ उद्धव उवाच ॥ यदा त्वं सनकादिभ्यो येन रूपेण केशव ॥ योगमादिष्टवानेतद्रूपमिच्छामि वेदितुम् ॥ १५ ॥ श्रीभगवानुवाच ॥ पुत्रा हिरण्यगर्भस्य मानसाः सनकादयः ॥ पप्रच्छुः पितरं सूक्ष्मां योगस्यैकान्तिकीं गतिम् ॥ १६ ॥ सनकादय ऊचुः ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो ॥ कथमन्योन्यसंत्यागो मुमुक्षोरतितितीर्षोः ॥ १७ ॥ श्रीभगवानुवाच ॥ एवं पृष्टो महादेवः स्वयंभूर्भूतभावनः ॥ ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥

सर्वतो मनः आकृष्य मय्यावेश्यते । एतावान् योगोमच्छिष्येभ्यः सनकादिभ्यः मयाऽऽदिष्टः ॥ १४ ॥ उद्धव उवाच ॥ हे कृष्ण ! यदा त्वं सनकादिभ्यो यद्रूपेण योगं कथितवान् तद्रूपं ज्ञातुमिच्छामि ॥ १५ ॥ श्रीभगवानुवाच ॥ एकदा सनकादयो योगस्य सूक्ष्मां गतिं ब्रह्माणं पप्रच्छुः ॥ १६ ॥ सनकादय ऊचुः ॥ हे ब्रह्मन् ! विषयेषु स्वभावतश्चित्तं विशति । ते च चित्ते विशन्ति । एवं सत्यन्योन्यसंत्यागः कथम् ॥ १७ ॥ श्रीभगवानुवाच ॥ एवं पृष्टो ब्रह्मा ध्यायमानः सन् प्रश्नबीजं नाविन्दत । यतः कर्मविक्षिप्तधीः ॥ १८ ॥

ततः स प्रश्नोत्तरं ज्ञातुमिच्छया मामचिन्तयत् । तदाऽहं हंसरूपेण तत्समीपं प्राप्तः॥१९॥ततः सनकादयो मां दृष्ट्वा ब्रह्माणमग्रतः कृत्वा को भवान् इति मां पप्रच्छुः ॥२०॥ एवं तैः पृष्टो यदवोचं तच्छृणु ॥ २१ ॥ हे मुनयः ! युष्माभिः कृतः प्रश्नः किमात्मविषयको देहविषयको वा । यदि प्रथमः तर्ह्यात्मनः एकत्वाद्बहुषु निर्धारणरूपोऽयं प्रश्नः कथं घटेत । किं च अविशेषे आत्मनि कं जात्यादिविशेषमाश्रित्य प्रश्नोत्तरं वक्ष्यामि ॥२२॥ देहविषयत्वेऽपि वः प्रश्नोऽनर्थकः । कुतः ॥ सर्वेषां देहानां पञ्चभूतात्मकत्वात् पुनश्च परमकारणात्मनाऽभिन्नत्वात् ॥२३॥

स मामचिन्तयद्देवः प्रश्नपारतितीर्षया ॥ तस्याहं हंसरूपेण सकाशमगमं तदा ॥ १९ ॥ दृष्ट्वा मां त उपव्रज्य कृत्वा पादाभिवन्दनम् ॥ ब्रह्माणमग्रतः कृत्वा पप्रच्छुः को भवानिति ॥ २० ॥ इत्यहं मुनिभिः पृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहं तेभ्यस्तदुद्धव निबोध मे ॥२१॥ वस्तुनो यद्यनानात्वमात्मनः प्रश्न ईदृशः ॥ कथं घटेत वो विप्रा वक्तुर्वा मे क आश्रयः ॥ २२ ॥ पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः ॥ को भवानिति वः प्रश्नो वाचारम्भो ह्यनर्थकः ॥२३॥ मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः ॥ अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥ २४ ॥ गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ॥ जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २५ ॥ गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ॥ गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥ २६ ॥ जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ॥ तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥ २७ ॥

तत्र परमकारणाभेदमाह । मनोवाग्दृष्टिभिरन्द्रियैर्यद् गृह्यते तदहमेव । एतेन सर्वात्मकोऽहमित्युक्तम् ॥२४॥ हे पुत्रकाः गुणेषु चेतः आविशते गुणाश्चेतसि । इदं सत्यम् । एवं गुणाश्चेतश्चोभयं ग्रथितं ब्रह्मरूपस्य जीवस्य देहे अध्यस्तः उपाधिः न स्वरूपम् ॥२५॥ अतः पुनः पुनर्गुणसेवया मिथो गुणचेतसोः प्रवेशो भवति एवं यदुभयं तत् मद्रूपः सन् त्यजेत् ॥२६॥ ननु जाग्रदाद्यवस्थावतः कुतस्त्वद्रूपता तत्राह । जाग्रत्स्वप्नसुषुप्तयो गुणतो बुद्धेरेव वृत्तयः जीवस्तु तद्रहितः यतस्तत्साक्षित्वेन निश्चितः ॥ २७ ॥

१ उत्तरवातुः ।

तर्हि कथमहं जागर्मीति प्रतीतिः तत्राह। यतो बुद्धचा बन्धोऽयं जीवस्य गुणवृत्तीर्ददाति। अतस्तुरीयेऽर्थेमयि स्थित्वमं बन्धं त्यजेत्। गुणानां चेतसश्चान्योन्यं त्यागो भवति ॥२८॥ तथा चात्मनोऽहंकारकृतंबन्धमनर्थहेतुं विद्वान् दुःखमेतदिति ज्ञात्वा तुर्ये मयि स्थित्वा संसारचिन्तां त्यजेत् ॥२९॥ पुंसो नानाधीर्यावन्न निवर्तेत तावज्जाग्रदपि सुप्त एव ॥ ३० ॥ ननु नानाधीः कथं निवर्तेत तत्राह। देहादीनां वर्णाश्रमादिरूपो भेदः स्वर्गादिफलानि गतयः कर्माणि हेतवश्चास्यात्मनो मृषा ॥ ३१ ॥ यो जागरे विषयान्भुङ्क्ते तानेव वासनया स्वप्नेऽपि भुङ्क्ते। सुषुप्ते

यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तिदः ॥ मयि तुर्ये स्थितो जह्यात्त्यागस्तद्गुणचेतसाम् ॥२८॥ अहंकारकृतं बंधमात्मनोऽर्थविपर्ययम् ॥ विद्वान्निर्विद्य संसारचिन्तां तुर्ये स्थितस्त्यजेत्॥२९॥यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः ॥ जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥३०॥ असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा ॥गतयो हेतवश्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥ यो जागरे बहिरनुक्षणधर्मिणोऽर्थान् भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् ॥ स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥ एवं विमृश्य गुणतो मनसस्त्र्यवस्थामन्मायया मयि कृता इति निश्चितार्थाः ॥संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजत माऽखिलसंशयाधिम्॥३३॥ ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ॥ विज्ञानमेकमुरुधेव विभातिमाया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥३४॥ दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततृष्णस्तूष्णीं भवेन्निजसुखानुभवोनिरीहः ॥ संदृश्यते क्व च यदीदमवस्तुबुद्धचा त्यक्तं भ्रमाय न भवेत्स्मृतिरानिपातात् ॥ ३५ ॥



तु तानुपसंहरति। स एकोऽवस्थात्रयद्रष्टा ॥ ३२ ॥ एवं विमृश्य ज्ञानासिनाऽहंकारं संछिद्य हृदि स्थितं मां भजत ॥ ३३ ॥ इदं सर्वं दृश्यं मायेति ज्ञात्वा ॥ ३४ ॥ दृश्याद्दृष्टिं निवर्त्य निरीहः स्वसुखानुभवो भवेत् । यद्यप्यावश्यकाहारादिष्विदं दृश्यते तथाप्यसद्बुद्धचा मोहाय न भवेत्। किं तु संस्कारमात्रेणावभासः आदेहनिपातं भवेत् ॥ ३५ ॥

---

१ क्षणिकबाल्यतारुण्यादिधर्मवतः। २ जगतो विभ्रमस्य मनोविजृम्भितत्त्वं दृष्टत्वं विनष्टत्वमतिलोलत्वं चालातचक्रस्येवेति त्रयो हेतवः। ३ परिणामः। ४ भेदः।

एतदेवोपपादयति । एवं सिद्धः पुमान् येन देहेन स्वरूपं ज्ञातवान् स देहः स्थितो गत इत्यादि न पश्यति मदिरामदान्धः परिहितं वासो यथा ॥३६॥ एवं चेद् देहः पतेत् । नेत्याह । देहोऽपि दैववशगो यावत् स्वारम्भकं कर्म तावज्जीवत्येव । एवं प्रतिबुद्धवस्तुः पुमान् स्वप्नदेहवत् पुनस्तस्मिन्न आसज्जते ॥३७॥ हे सनकादयः ! मयैतत् साङ्ख्ययोगयोर्गुह्यमुक्तं वो धर्मान् वक्तुं यज्ञमूर्तिमागतं मां जानीत ॥३८॥ किं च अहं योगस्य साङ्ख्यस्य प्रमीयमाणानुष्ठीयमानधर्मयोः प्रभावस्य च परमाश्रयः ॥३९॥ सर्वे गुणाः निर्गुणं निरपेक्षं सुहृदं मां यजन्ति ॥४०॥

देहं च नश्वरमवस्थिमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥ दैवादपेतमुत दैववशादुपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रति समीक्षत एव सासुः ॥ तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥३७॥ मयैतदुक्तं वो विप्रा गुह्यं यत्साङ्ख्ययोगयोः ॥ जानीत माऽऽगतं यज्ञं युष्मद्धर्मविवक्षया ॥ ३८ ॥ अहं योगस्य साङ्ख्यस्य सत्यस्यर्तस्य तेजसः ॥ परायणं द्विजश्रेष्ठाः श्रियः कीर्तेर्दमस्य च ॥ ३९ ॥ मां यजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ॥ सुहृदं प्रियमात्मानं साम्याऽसंगादयो गुणाः ॥ ४० ॥ इति मे छिन्नसंदेहा मुनयः सनकादयः ॥ सभाजयित्वा परयाभक्त्याऽगृणत संस्तवैः ॥ ४१ ॥ तैरहं पूजितः सम्यक्संस्तुतः परमर्षिभिः ॥ प्रत्येयाय स्वकं धाम पश्यतः परमेष्ठिनः ॥ ४२ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे चित्तगुणविश्लेषवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ उद्धव उवाच ॥ वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ॥ तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥ १ ॥

हे उद्धव ! एवं मत्तश्छिन्नसन्देहाः सनकादयो मां सत्कृत्य भक्त्या तुष्टुवुः ॥४१॥ अहं तैः पूजितः स्तुतो ब्रह्मणः पश्यतः स्वधाम प्रत्यागतोऽस्मि ॥४२॥ इति श्रीभागवते म० एका० चू० त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशे परं श्रेयो भक्तिरेव न चेतरत् ॥ इत्येतद्वर्ण्यते ध्यानयोगश्च सह साधनैः ॥१॥ उद्धव उवाच ॥ हे कृष्ण ! ब्रह्मवादिनो बहूनि श्रेयांसि वदन्ति । तत्र सर्वेषां प्राधान्यं वा विकल्पेनैकस्यैव मुख्यता ॥ १ ॥

१ प्राणेन्द्रियसहितः ।

हे स्वामिन् ! भवता फलानुसन्धानरहितो भक्तियोग उक्तः । येन त्वयि मनः प्रविशेत् ॥२॥ श्रीभगवानुवाच ॥ हे उद्धव ! इयं वेदलक्षणा वाणी कालेन नष्टा । आदौ मया सा ब्रह्मणे प्रोक्ता ॥३॥ तेन स्वपुत्राय मनवे उक्ता । ततो भृग्वादयः सप्त ऋषयो जगृहुः ॥४॥ तेभ्यस्तत्पुत्राः देव-दैत्यसिद्धगन्धर्वविद्याधरचारणाः ॥५॥ किंदेवकिन्नरनागरक्षःकिंपुरुषादयो जगृहुः । एताः रजःसत्त्वतमःप्रकृतयः ॥६॥ याभिर्देवासुरमनुष्यादीनि भिद्यन्ते ॥७॥ एवं प्रकृतिवैचित्र्यान्नृणां मतयो भिद्यन्ते । केषांचिदविदुषामुपदेशेन भिद्यन्ते । अपरे पाखण्डमतयः ॥८॥ एते सर्वे मन्माया-

भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः ॥ निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मनः ॥ २ ॥ श्रीभगवानुवाच ॥
कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ॥ मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥ तेन प्रोक्ता च पुत्राय
मनवे पूर्वजाय सा ॥ ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः ॥ ४ ॥ तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ॥
मनुष्याः सिद्धगन्धर्वाः सविद्याधरचारणाः ॥ ५ ॥ किंदेवाः किन्नरा नागा रक्षःकिंपुरुषादयः ॥ बह्वयस्तेषां प्रकृतयो
रजःसत्त्वतमोभुवः ॥ ६ ॥ याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा ॥ यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि
॥७॥ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ॥ पारम्पर्येण केषांचित्पाखण्डमतयोऽपरे ॥ ८ ॥ मन्मायामोहित-
धियः पुरुषा पुरुषर्षभ ॥ श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥९॥ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम् ॥
अन्ये वदन्ति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥ १० ॥ केचिद्यज्ञतपोदानं व्रतानि नियमान्यमान् ॥ आद्यन्तवन्त
एवैषां लोकाः कर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः ॥ ११ ॥

मोहितधियः सन्तो नानाविधं श्रेयो वदन्ति ॥९॥ तदेवाह । मीमांसकाः कर्म । काव्यालङ्कारकृतो यशः । वात्स्यायनादयः कामम् । योग-शास्त्रकृतः सत्यशमदमादि । दण्डनीतिकृतः ऐश्वर्यमेव पुरुषार्थं वदन्ति । त्यागं भोजनं च पुरुषार्थं वदन्ति चार्वाकानुयायिनः ॥१०॥ केचिद्यज्ञतपोदानव्रतानि नियमान् यमान् परमेतैः साध्यानि स्वर्गादिफलान्यनित्यानि दुःखोदर्काणि । अतस्तुच्छान्येव ॥ ११ ॥

१ प्रजापतयः । २ वेदार्थव्याख्यानविषया इति शेषः ।

अथ भक्तेर्मुख्यत्वमाह । हे उद्धव ! मय्यर्पितात्मनो निरपेक्षस्य पुंसो यत्सुखं तद्विषयात्मनां कुतः स्यात् ॥१२॥ एवं मयि सन्तुष्टमनसः शांतस्य समचेतसः पुंसः सर्वा दिशः सुखमय्यः ॥ १३ ॥ एवं मय्यर्पितात्मा पुमान् ब्रह्मलोकं सार्वभौमं रसाधिपत्यं योगसिद्धिं मोक्षमपि नेच्छति। अहमेव तस्य प्रियः ॥१४॥ हे उद्धव ! यथा भवान् भक्तः प्रियः तथा ब्रह्मा शिवो बलरामः श्रीः स्वदेहश्च न ॥१५॥ एवंभूतं निरपेक्षं भक्तं मदन्तर्वर्तिब्रह्माण्डानि तस्यास्य भक्तस्य पादरेणुभिः पवित्रीकुर्यामिति भावेन तमनुव्रजामि ॥ १६ ॥ एवंभूताः भक्ताः कामैरस्पृष्टचित्ताः ये ते

मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ॥ मयाऽऽत्मना सुखं यत्तत कुतः स्याद्विषयात्मनाम् ॥ १२ ॥ अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः ॥ मया संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १३ ॥ न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ १४ ॥ न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ॥ न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥ १५ ॥ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ॥ अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ १६ ॥ निष्किञ्चना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः ॥ कामैरनालब्धधियो जुषन्ति यत् तन्नैरपेक्ष्यं न विदुः सुखं मम ॥ १७ ॥ बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ॥ प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ १८ ॥ यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ॥ तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १९ ॥ न साधयति मां योगो न सांख्यं धर्म उद्धव ॥ न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ २० ॥ भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ॥ भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥ २१ ॥

नैरपेक्ष्यं मे सुखं यत्सेवन्ते तन्नान्ये लभन्ते॥१७॥ प्राकृतोऽपि मद्भक्तो विषयैराकृष्यमाणोऽपि समर्थया भक्त्या तैर्विषयैः पराभवं न प्राप्नोति ॥१८॥ हे उद्धव ! यथा प्रदीप्तोऽग्निः काष्ठानि भस्मसात्करोति तथा मद्विषया भक्तिः पापानि ॥१९॥ अपि च यथा भक्तिर्मां वशीकरोति तथा साङ्ख्यधर्मतपोयोगादयो न ॥२०॥ अहमेकभक्त्यैव ग्राह्यः । मन्निष्ठा भक्तिः श्वपाकानपि जातिदोषात्पुनाति ॥ २१ ॥

१ स्वर्गम् ।

सत्यदयायुतोऽपि धर्मो भक्तिहीनं नरं पुनाति ॥२२॥ रोमहर्षानन्दाश्रुणा विना कथं भक्तिः। तया विना मनः कथं शुध्येत् ॥ २३ ॥ यस्य वाग्गद्गदा यस्य चित्तं द्रवते क्वचिद्रुदति हसति नृत्यते सः मद्भक्तो भुवनं पुनाति ॥ २४ ॥ यथाऽग्निना तापितं सुवर्णं मलं हित्वा निजरूपं प्राप्नोति एवमात्मा भक्तियोगेन कर्मवासनां हित्वा मद्रूपतां प्राप्नोति ॥२५॥ अपि च चित्तं यथा कथाश्रवणादिभिः शुध्यति तथा सूक्ष्मं रूपं पश्यति ॥२६॥ विषयान्ध्यायतश्चित्तं विषयेषु सज्जते । एवं मां स्मरतश्चित्तं मय्येव लीयते ॥२७॥ तस्मादन्यसाधनं मिथ्येति ज्ञात्वा तद्धि-

धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ॥ मद्भक्त्याऽपेतमात्मानं न सम्यक् प्रपुनाति हि ॥ २२ ॥ कथं विना रोमहर्षं द्रवता चेतसा विना ॥ विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः ॥ २३ ॥ वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च ॥ विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥ २४ ॥ यथाग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते स्वरूपम् ॥ आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ ॥ २५ ॥ यथायथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ॥ तथातथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥ २६ ॥ विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ॥ मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २७ ॥ तस्मादसदभिध्यानं यथा स्वप्नमनोरथान् ॥ हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २८ ॥ स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ॥ क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥२९॥ न तथाऽस्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः ॥ योषित्सङ्गाद्यथा पुंसो यथातत्सङ्गिसङ्गतः ॥ ३० ॥ उद्धव उवाच ॥ यथा त्वामरविन्दाक्ष यादृशं वा यदात्मकम् ॥ ध्यायेन्मुमुक्षुरेतन्मे ध्यानं मे वक्तुमर्हसि ॥ ३१ ॥ श्रीभगवानुवाच ॥ सम आसन आसीनः समकायो यथासुखम् ॥ हस्तावुत्सङ्ग आधाय स्वनासाग्रकृतेक्षणः ॥ ३२ ॥



हाय मयि मनः समाधत्स्व ॥ २८ ॥ स्त्रीणां तत्संगिनां च संगं हित्वैकान्ते स्थित्वा मां चिन्तयेत् ॥ २९ ॥ यथा स्त्रीसङ्गात्तत्सङ्गिसङ्गतश्च क्लेशो बन्धो भवेत्तथाऽन्यसङ्गतो न ॥ ३० ॥ उद्धव उवाच ॥ हे कृष्ण ! मुमुक्षुर्यादृशं त्वां ध्यायेत्तद्ध्यानं वद ॥ ३१ ॥ श्रीभगवानुवाच ॥ समे आसने आसीनो हस्तावुत्सङ्गे आधाय नासाग्रदृष्टिः पुमान् ॥ ३२ ॥

पूरककुम्भकरेचकैः प्राणस्य मार्गं शोधयेत् घण्टानादतुल्यमोङ्कारं मूलादारभ्योर्ध्वं मूर्धाग्रपर्यन्तं नीत्वा स्थिरं कुर्यात् ॥ ३३ ॥ ३४ ॥ एवं प्रणवयुक्तं प्राणायामं दिनेदिने त्रिकालं दशकृत्वोऽभ्यस्य मासादर्वाक् जितानिलो भवति॥३५॥ततः ऊर्ध्वनालमधोमुखं देहान्तर्वर्ति हृत्कमलमूर्द्धमुखं ध्यात्वा ॥३६॥ तत्कर्णिकायां सोमाद्यन्तर्गतवह्निमण्डले मम रूपं स्मरेत् ॥३७॥ कथंभूतं रूपम् ! चतुर्भुजं सुमुखं शान्तं सुकपोलम् ॥३८॥ कुण्डलाभ्यां देदीप्यमानं पीताम्बरं घनश्यामं श्रीवत्सलाञ्छनम् ॥३९॥ शङ्खचक्रगदादियुक्तं वनमालया शोभितं नूपुरैर्लसत्पादम् ॥४०॥

प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ॥ विपर्ययेणापि शनैरभ्यसेन्निर्जितेन्द्रियः ॥ ३३ ॥ हृद्यविच्छिन्नमोङ्कारं घण्टानादं बिसोर्णवत्॥प्राणेनोदीर्य तत्राथ पुनः संवेशयेत् स्वरम्॥३४॥एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत्॥दशकृत्वस्त्रिषवणं मासादर्वाग्जितानिलः ॥ ३५ ॥ हृत्पुण्डरीकमन्तःस्थमूर्ध्वनालमधोमुखम् ॥ ध्यात्वोर्ध्वमुन्निद्रमष्टपत्रं सकर्णिकम् ॥३६॥ कर्णिकायां न्यसेत् सूर्यसोमाग्नीनुत्तरोत्तरम्॥वह्निमध्ये स्मरेद्रूपं ममैतद्ध्यानमङ्गलम् ॥३७॥ समं प्रशान्तंसुमुखं दीर्घचारुचतुर्भुजम्॥सुचारुसुन्दरग्रीवं सुकपोलं शुचिस्मितम् ॥३८॥ समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम्॥हेमाम्बरं घनश्यामं श्रीवत्सं श्रीनिकेतनम्॥३९॥शंखचक्रगदापद्मवनमालाविभूषितम् ॥ नूपुरैर्विलसत्पादं कौस्तुभप्रभया युतम् ॥४०॥ द्युमत्किरीटकटककटिसूत्राङ्गदायुतम् ॥ सर्वाङ्गसुन्दरं हृद्यं प्रसादसुमुखेक्षणम् ॥ ४१ ॥ सुकुमारमभिध्यायेत् सर्वाङ्गेषु मनो दधत् ॥ इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः ॥ बुद्ध्या सारथिना धीरः प्रणयेन्मयिसर्वतः ॥ ४२ ॥ तत सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत् ॥ नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥

किरीटकटिसूत्राङ्गदैर्युक्तं सर्वाङ्गसुन्दरं प्रसन्नेक्षणम् ॥ ४१ ॥ एतद् रूपं स्मृत्वा सर्वाङ्गेषु मनो दधत् पुरुषः एवं ध्यायेत् । किंच विषयेभ्यः इन्द्रियाणि मनसाऽऽकृष्य तन्मनो बुद्ध्याऽऽकृष्य सर्वाङ्गयुक्ते मयि नयेत् ॥४२॥ तत् सर्वाङ्गव्यापकं मनः आकृष्यैकत्र धृत्वा सुस्मितं मुखं भावयेत् भूयोऽन्यत् न चिन्तयेत् ॥ ४३ ॥

१ रेचककुम्भकपूरकक्रमेणापि । २ प्रसादेन शोभनं मुखमीक्षणे च यस्मिंस्तत् ।

तत्रस्थिरं समाकृष्य सर्वकारणरूपे मयि धृत्वा तच्च कारणं हित्वा ध्यातृध्येयविभागमपि न चिन्तयेत् ॥४४॥ एवं समाहितमतिर्मामात्मन्या-त्मानं मयि सर्वात्मनि पश्यति ज्योतिर्ज्योतिषि युक्तमिव ॥४५॥ एवं तीव्रेण ध्यानेन मनो युञ्जतो योगिनो दृश्यद्रष्टृदर्शनरूपो भ्रमः शांतिं याति ॥४६॥ इति श्रीभा० म० एका० चू० चतुर्दशोऽध्यायः ॥१४॥ ततः पञ्चदशे प्रोक्ताः सिद्धयो धारणानुगाः ॥ श्रीविष्णुपदसंप्राप्तावन्तरायतया मताः ॥ १ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! जितेन्द्रियस्य योगिनः सिद्धयः स्वयमेवोपतिष्ठन्ति ॥१॥ उद्धव उवाच ॥ हे अच्युत ! कया

तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत् ॥ तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥४४॥ एवं समाहित-मतिर्मामेवात्मानमात्मनि ॥ विचष्टे मयि सर्वात्मञ्ज्योतिर्ज्योतिषि संयुतम् ॥४५॥ ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः ॥ संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥४६॥ इति श्रीभागवते एकादशस्कन्धे भगवदुद्धवसंवादे भक्ति-ध्यानयोर्वर्णनं नाम चतुर्दशोऽध्यायः ॥१४॥ श्रीभगवानुवाच ॥ जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः ॥ मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः ॥१॥ उद्धव उवाच ॥ कया धारणया कास्वित्कथं वा सिद्धिरच्युत ॥ कति वा सिद्धयो ब्रूहि योगिनां सिद्धिदो भवान् ॥२॥ श्रीभगवानुवाच ॥ सिद्धयोऽष्टादशप्रोक्ता धारणायोगपारगैः ॥ तासामष्टौ मत्प्र-धाना दशैव गुणहेतवः ॥३॥ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ॥ प्राकाश्यंश्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥४॥

धारणया किंनाम्नी कीदृशी वा सिद्धिः प्राप्यते । सिद्धयो धारणाश्च कति सन्ति तत् सर्वं ब्रूहि । यतस्त्वमेवैतत् जानासि नान्यः ॥ २ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! योगपारगैः सिद्धयोऽष्टादश प्रोक्ताः धारणाश्चाष्टादश । तासां मध्येऽष्टौ मत्प्रधानाः दश गुणहेतवः ॥ ३ ॥ ताश्चाह । अणिमा १ महिमा २ लघिमा ३ एता देहस्य स्युः । प्राप्तिः ४ प्राकाश्यम् ५ ईशिता ६ ॥ ४ ॥



---

१ मयि=शुद्ध ब्रह्मण्यारूढः सन् । २ अहमेव प्रधानं=मुख्यः स्वभावतः आश्रयो यासां ताः । ३ सत्त्वोत्कर्षहेतुकाः । ४ अणिमा महिमा-लघिमा च मूर्तेरिति तिस्रो देहस्य । प्राप्ति=सर्वप्राणिनामिन्द्रियैः सह तत्तद्विषयप्राप्तिः । प्राकाश्यं=श्रुतेषु दृष्टेषु च पदार्थेषु तद्दर्शनसामर्थ्यम् । शक्तीनां माया दंशशक्तीनां प्रेरणमीशिता न मेसिद्धिस्तत्रेश्वरे मायायाः अन्येषु तदंशानां प्रेरणम् ।

वशिता ७ प्राकाम्यम् ८ एताः अष्ट सिद्धयो मे स्वाभाविक्यः ॥५॥ अन्याः आह । देहे क्षुत्पिपासादिराहित्यम् १ दूरश्रवणं २ दूरदर्शनं ३ मनोवेगः ४ कामितरूपप्राप्तिः ५ परकायप्रवेशः ॥ ६ ॥ स्वेच्छया मृत्युः ७ देवानामप्सरोभिः सह क्रीडानुदर्शनम् ८ संकल्पानुरूपप्राप्तिः अकुण्ठिताज्ञा १० ॥७॥ अथ क्षुद्रसिद्धीराह ॥ त्रिकालज्ञत्वम् १ द्वन्द्वराहित्यम् २ परचित्तज्ञानम् ३ अग्न्यर्काम्बुविषादीनां स्तम्भनम् ४ अपराजयः ५ ॥ ८ ॥ यथा धारणया या स्यात् तां धारणां शृणु ॥ ९ ॥ भूतसूक्ष्मोपाधौ मयि भूतसूक्ष्माकारं मनो धारयन्नणिमानं

गुणेष्वसंगो वशितां यत्कामस्तदवस्यति ॥ एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ ५ ॥ अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवः कामरूपं परकायप्रवेशनम् ॥ ६ ॥ स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ॥ यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहताऽगतिः ॥ ७ ॥ त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ॥ अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः ॥ ८ ॥ एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ॥ यया धारणया या स्याद्यथा वा स्यान्निबोध मे ॥ ९ ॥ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयेन्मनः ॥ अणिमानमवाप्नोति तन्मात्रोपासको मम ॥१०॥ महत्यात्मन्मयि परे यथासंस्थं मनो दधत् ॥ महिमानमवाप्नोति भूतानां च पृथक् पृथक् ॥ ११ ॥ परमाणुमये चित्तं भूतानां मयि रञ्जयन् ॥ कालसूक्ष्मार्थतां योगी लघिमानमवाप्नुयात् ॥ १२ ॥ धारयन्मय्यहंतत्त्वे मनो वैकारिकेऽखिलम् ॥ सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥

प्राप्नोति ॥ १० ॥ ज्ञानशक्तिरूपमहत्तत्त्वोपाधौ मयि महत्तत्त्वाकारं तथाऽऽकाशादिभूतोपाधौ च मयि मनो धारयन् तत्तद्भूतं महिमानं प्राप्नोति ॥ ११ ॥ तथा वाय्वादिभूतपरमाणुमये मयि चित्तं रञ्जयन् लघिमानं प्राप्नोति ॥ १२ ॥ वैकारिकाहंकारोपाधौ मयि चित्तमेकाग्रं धारयन्निन्द्रियाधिष्ठातृत्वप्राप्तिं प्राप्नुयात् ॥ १३ ॥

---

१ विषयभोगेषु । २ एतन्नाम्नी सिद्धिः । ३ तस्यतस्य सीमानं प्राप्नोति । ४ अप्रतिहता अकुण्ठिता । आ समन्तात् गतिर्यस्याःस्तावृश्याज्ञा । ५ तत्तद्भूतोपाधावित्यर्थः । ६ कालपरमाणूपाधि रूपमिति लघिमपदविवरणमेतत् ।

क्रियाशक्तिप्रधानरूपमहत्तत्त्वोपाधौ मयि यश्चित्तं धारयेत् स मे सर्वोत्कृष्टं प्राकाश्यं विन्दते ॥१४॥ यस्त्रिगुणमायाप्रेरके विष्णौ चित्तं धारयेत् स ईशित्वं प्राप्नोति ॥ १५ ॥ यो योगी तुरीयाख्ये नारायणे मयि धारयेत् स वशितां प्राप्नोति ॥ १६ ॥ योऽगुणे ब्रह्मणि मयि मनो धारयेत् स परमानन्दं प्राकाम्यं प्राप्नोति ॥१७॥ अथ गुणहेतुकाः सिद्धिराह ॥ श्वेतद्वीपपतौ मयि चित्तं धारयन् शुद्धरूपतां याति ॥१८॥ आकाशात् प्राणरूपे मयि मनसा नादं चिन्तयन् जीवः स्वयं तत्र ज्ञाता आकाशस्थः भूतानां वाचः शृणोति ॥ १९ ॥ त्वष्टर्यादित्ये चक्षुः

महत्यात्मनि यः सूत्रं धारयेन्मयि मानसम् ॥ प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः[1] ॥ १४ ॥ विष्णौ त्र्यधीश्वरे चित्तं धारयेत्कालविग्रहे[2] ॥ स ईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनाम्[3] ॥ १५ ॥ नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते ॥ मय्यादधद् योगी मद्धर्मा[4] वशितामियात् ॥ १६ ॥ निर्गुणे ब्रह्मणि मयि ॥ धारयन् विशदं मनः परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥ १७ ॥ श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि ॥ धारयन् श्वेततां याति षडूर्मिरहितो नरः ॥ १८ ॥ मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन् ॥ तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥१९॥ चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि ॥ मां तत्र मनसा ध्यायन्विश्वं पश्यति सूक्ष्मदृक् ॥२०॥ मनो मयि ॥ सुसंयोज्य देहं तदनु वायुना ॥ मद्धारणाऽनुभावेन तत्रात्मा यत्र वै मनः ॥ २१ ॥ यदा मन उपादाय यद्यद्रूपं बुभूषति ॥ तत्तद्भवेन्मनोरूपं मद्योगबलमाश्रयः ॥ २२ ॥

तं चक्षुषि संयोज्य तत्र मनसा मां ध्यायन् विश्वं दूरतः पश्यति ॥२०॥ मनो देहं च तदनुवर्तिना वायुना सह मयि संयोज्य या मद्धारणा क्रियते तस्याः प्रभावेण यत्र मनो याति तत्र देहो याति ॥ २१ ॥ योगी मनः उपादानकारणं कृत्वा यद्यद् देवादिरूपं सम्पादयितुमिच्छति तत् तन्मनः इच्छितं रूपं स भवेत् ॥ २२ ॥

१ अव्यक्ताज्जन्म यस्य तस्य सूत्रस्य । तदुपाधेर्ममेत्यर्थः । २ कालरूपे विष्णौ । ३ क्षेत्रज्ञानां जीवानां तदुपाधीनां च चोदना प्रेरणारूपमीशित्वं ननु विश्वसृष्ट्यादिकर्तृत्वं लक्षणमित्यर्थः । ४ ममैव धर्मः विषयभोगेष्वसङ्गित्वरूपो यस्य सः ।

यत्र परकाये प्रविशेत् तत्रात्मानं चिन्तयेत् । ततः स्वदेहं हित्वा वायुभूतः सन् पुष्पात्पुष्पान्तरं भृंगवत्प्रविशेत् ॥२३॥ स्वच्छन्दमृत्युमाह ॥ पार्ष्णिना गुदं निरुध्य प्राणोपाधिमात्मानं हृदुरःकण्ठमूर्धसुसमारोप्य मूर्ध्नः द्वारेण ब्रह्म स्वेष्टस्थानं वा मनसा नीत्वा तनुं विसृजेत् ॥२४॥ ततो देवाक्रीडे क्रीडन् शुद्धसत्त्वं चिन्तयेत् । तदा सुरस्त्रियो विमानेनोपतिष्ठन्ति ॥२५॥ मत्परः पुमान् सत्यसंकल्पे मयि मनो युञ्जन् यथा बुद्ध्या संकल्पयेत्तत् तथा प्राप्नोति ॥ २६ ॥ यः पुमान् सर्वनियन्तुः स्वतन्त्रस्य मम मनः स्वभावं प्राप्तस्तस्याज्ञा च कुतश्चिद् न कुण्ठते

परकायं विशन् सिद्ध आत्मानं तत्र भावयेत् ॥ पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ॥२३॥ पार्ष्ण्याऽऽपीड्य गुदं प्राणं हृदुरःकण्ठमूर्धसु ॥ आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत् तनुम् ॥२४॥ विहरिष्यन्सुराक्रीडे मत्स्थं सत्त्वं विभावयेत् ॥ विमानेनोपतिष्ठन्ति सत्त्ववृत्तीः सुरस्त्रियः ॥ २५ ॥ यथा संकल्पयेद् बुद्ध्या यदा वा मत्परः पुमान् ॥ मयि सत्ये मनो युञ्जंस्तथा तत्समुपाश्नुते ॥२६॥ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ॥ कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥२७॥ मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः ॥ तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥२८॥ अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ॥ मद्योगश्रान्तचित्तस्य यादसामुदकं यथा ॥ २९ ॥ मद्विभूतीरभिध्यायञ्छ्रीवत्सास्त्रविभूषिताः ॥ ध्वजातपत्रव्यजनैः स भवेदपराजितः ॥ ३० ॥ उपासकस्य मामेव योगधारणया मुनेः ॥ सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥ ३१ ॥

॥२७॥ अथ क्षुद्रसिद्धीराह ॥ मद्भक्त्या शुद्धसत्त्वस्य योगिनस्त्रिकालवस्तुविषया स्वजन्ममृत्युयुता बुद्धिर्जायते ॥२८॥ मद्योगश्रान्तचित्तस्य मुनेर्योगमयं वपुरग्न्यादिभिर्न हन्येत । यथा मत्स्यादीनां जलं घातकं न भवति तद्वत् ॥ २९ ॥ श्रीवत्सादिभूषितान् ममावतारान् ध्यायन्नपराजितो भवेत् ॥ ३० ॥ एवं योगधारणया ममोपासकस्य योगिनः पूर्वोक्ताः सर्वसिद्धयः उपतिष्ठन्ति ॥ ३१ ॥

---

१ यदा कदा वा अकालेऽपीत्यर्थः । *इत्यस्याग्रे "उदासीने मयि परे प्रकृतेर्गुणवृत्तिषु ॥ चिन्तयेद्धारयेच्चेतो द्वन्द्वैर्नैवाभिभूयते ॥ १ ॥ सर्वभूतहृदिस्थं मामात्मानं सर्वसाक्षिणम् ॥ धारयेदात्मनश्चित्तं परेषां परिपश्यति ॥ २ ॥" इति श्लोकद्वयमधिकं क्वचित् । २ "श्रीवत्सास्त्र" इ० पा० ।

जितेन्द्रियस्य जितश्वासस्य मुनेः का सिद्धि र्दुर्लभा ? कापि न ॥३२॥ यद्यप्येवं तथापि न प्रार्थ्याः इत्याह । योगं युञ्जतः पुंसः एताःविघ्नदायिका इति वदन्ति ॥३३॥ तस्मादहैतुकी धारणा कार्या नान्येत्याह । जन्मौषधितपोमन्त्रैर्यावतीः सिद्धीस्ताः योगेन प्राप्नोति । परंतु योगगतिमन्यैर्न व्रजेत् ॥३४॥ कुत इत्यत आह ॥ सर्वासां सिद्धीनां हेतुः पतिश्चाहम् । किंच योगस्य साङ्ख्यस्य धर्मस्य ब्रह्मवादिनां च प्रभुरहम् ॥३५॥अहं सर्वजीवानामात्मान्तर्यामी बहिर्व्यापकश्चास्मि।यथा पञ्चभूतानि भूतेष्वन्तर्बहिश्चसन्ति तथा॥३६॥इति श्रीभागवते म० एकादश०

जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ॥ मद्धारणां धारयतः का सा सिद्धिः सुदुर्लभा ॥ ३२ ॥ अन्तरायान् वदन्त्येता युञ्जतो योगमुत्तमम् ॥ मया संपद्यमानस्य कालक्षपणहेतवः[2]॥३३॥जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ॥ योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥ ३४ ॥ सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥३५॥ अहमात्मान्तरो बाह्योऽनावृतः[3] सर्वदेहिनाम् ॥ यथा भूतानि भूतेषु बहिरन्तः स्वयं तथा ॥ ३६ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादेऽष्टादशसिद्धिवर्णनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ उद्धव उवाच ॥ त्वं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् ॥ सर्वेषामपि भावानां त्राणस्थित्यप्ययोद्भवः[4] ॥ १ ॥ उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ॥ उपासते त्वां भगवन् याथातथ्येन ब्राह्मणाः ॥ २ ॥ येषुयेषु च भावेषु भक्त्या त्वां परमर्षयः ॥ उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे ॥ ३ ॥

चू० पञ्चदशोऽध्यायः ॥१५॥ षोडशे तु हरेराविर्भावयुक्ता विभूतयः ॥ ज्ञानवीर्यप्रभावादिविशेषेणोपवर्णिताः ॥१॥ अन्तश्चित्तेन यद्ध्यानमशक्यमकृतात्मनाम् ॥ अतस्तद्योग्यताऽऽपत्त्यै विभूत्यादिनिरूपणम् ॥२॥ उद्धव उवाच ॥ हे कृष्ण ! त्वं ब्रह्म परमं साक्षात्सर्वभावानामुपादानकारणम् ॥१॥ ज्ञानिनो यथार्थत्वेनैवंभूतं त्वामुपासते ॥२॥ येषुयेषु भावेषु त्वां परमर्षयः सेवमानाः सन्तः सिद्धिं प्रपद्यन्ते तद्वद ॥३॥



१ मां प्राप्स्यतो भक्तस्य । २ मत्प्राप्तिविषये विलम्बहेतवः । ३ अनावरणं स्वतन्त्रं वा । ४ रक्षणं पालनं नाशः उत्पत्तिश्चेत्यर्थः ।

हे पालक ! त्वं भूतानां मध्ये गूढश्चरसि पश्यन्तं त्वां मोहितानि भूतानि न पश्यन्ति ॥ ४ ॥ अथ हे महाविभूते ! भूमौ स्वर्गे पाताले याः काश्चित्ते विभूतयः सन्ति ताः मे कथय। तवाङ्घ्रिपद्मं नमामि ॥ ५ ॥ श्रीभगवानुवाच ॥ एवमर्जुनेन कुरुक्षेत्रे पुराऽहं पृष्टः ॥ ६ ॥ अर्जुनस्य विभूतिप्रश्ने कः प्रसङ्गस्तत्राह। राज्यहेतुकं ज्ञातिवधं निन्द्यं ज्ञात्वाऽहं हन्ताऽयं हत इति प्राकृतमतिः सन् ततो निवृत्तः ॥७॥ तदाऽर्जुनो युक्त्या बोधितः सन् रणमुखे मामभाषत विभूतीः कथयेति ॥८॥ हे उद्धव ! एषां भूतानामात्मेश्वरोऽहमिति जानीहि। तथा सर्वभूता-

गूढश्चरसि भूतात्मा भूतानां भूतभावन ॥ न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ॥ ४ ॥ याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ॥ ता मह्यमाख्याह्यनुभाविताste नमामि ते तीर्थपदाङ्घ्रिपद्मम् ॥ ५ ॥ श्रीभगवानुवाच ॥ एवमेतदहं पृष्टः प्रश्नं प्रश्नविदांवर ॥ युयुत्सुना विनशने सपत्नैरर्जुनेन वै ॥६॥ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् ॥ ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ॥७॥ स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ॥ अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥८॥ अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ॥ अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥ अहं गतिर्गतिमतां कालः कलयतामहम् ॥ गुणानां चाप्यहं साम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥ गुणिनामप्यहं सूत्रं महतां च महानहम् ॥सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥ ११ ॥ हिरण्यगर्भो वेदानां मन्त्राणां प्रणवस्त्रिवृत् ॥ अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम् ॥ १२ ॥

न्यहम्। तेषां पालनादिहेतुरहम् ॥ ९ ॥ गतिमतां गतिरहम्। वशीकुर्वतां कालोऽहम् ॥१०॥ गुणिनां प्रथमं कार्यमहम्। महतां महत्तत्वमहम् सूक्ष्माणां जीवोऽहम् दुर्जयानां मनोऽहम् ॥ ११ ॥ वेदानामध्यापको हिरण्यगर्भोऽहम्। मन्त्राणां प्रणवोऽहम् अक्षराणामकारः अहम्। छन्दसां गायत्री ०॥ १२ ॥

---

१ त्वयैव केनचिच्छक्तिविशेषेण संयोजिताः। २ तीर्थानां पदं च तदङ्घ्रिपद्मं च। ३ स्वाभाविकः। ४ उद्भूतगुणत्रयवान्। ५ त्रयाणामकारोकारमकाराणां वृत् वर्तनं यस्मिन् सः।

देवानामिन्द्रः अहम् । वसूनां हव्यवाट्० आदित्यानां विष्णुः० । रुद्राणां नीललोहितः ॥ १३ ॥ महर्षीणां भृगुः । राजर्षीणां मनुः० । देवर्षीणां नारदः० । धेनुषु कामधेनुः० ॥१४॥ सिद्धेश्वराणां कपिलः० । पक्षिणां गरुडः० । प्रजापतीनां दक्षः० । पितॄणामर्यमा० ॥ १५ ॥ दैत्यानां प्रह्लादः० । नक्षत्रौषधीनां सोमः० । यक्षरक्षसां कुबेरः ० ॥१६॥ गजानामैरावतः० जलचराणां वरुणं मां विद्धि । प्रकाशमानानामहं सूर्यः । मनुष्याणां नृपः० ॥१७॥ अश्वानामुच्चैःश्रवाः० । धातूनां सुवर्णम्० । दण्डयतां यमः० । सर्पाणां वासुकिः ॥ १८ ॥

इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ॥ आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥ १३ ॥ ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ॥ देवर्षीणां नारदोहं हविधान्यस्मि धेनुषु ॥ १४ ॥ सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्रिणाम् ॥ प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥ १५ ॥ मा विद्धयुद्धव दैत्यानां प्रह्लादमसुरेश्वरम् ॥ सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥१६॥ ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम्॥तपसां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥ १७ ॥ उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ॥ यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥ १८ ॥ नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ॥ आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ॥१९॥ तीर्थानां स्रोतसांगङ्गा समुद्रः सरसामहम् ॥ आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम्॥२०॥धिष्ण्यानामस्म्यहं मेरुर्गहनानां हिमालयः ॥ वनस्पतीनामश्वत्थ ओषधीनामहं यवः॥२१॥पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ॥ स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥२२॥ यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ॥ वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥२३॥



नागेन्द्राणां शेषः० । शृङ्गिदंष्ट्रिणां सिंहः० । आश्रमाणां संन्यासः० वर्णानां विप्रः० ॥ १९ ॥ तीर्थानां गङ्गा सरसां समुद्रः० आयुधानां धनुः । धनुर्धारिणां शिवः० ॥२०॥ वासस्थानानां मेरुः० । दुर्गमानां हिमालयः० । वृक्षाणामश्वत्थः० । धान्यानां यवः० । ॥२१॥ पुरोहितानां वसिष्ठः । ब्रह्मिष्ठानां बृहस्पतिः० । चमूपतीनां स्वामिकार्त्तिकः० । सन्मार्गप्रवर्तकानां मध्ये ब्रह्मा० ॥२२॥ यज्ञानां ब्रह्मयज्ञः० व्रतानामविहिंसा० । शुचीनां मार्जनतक्षणादीनां मध्ये वाय्वादिरूपः शोधकः० ॥ २३ ॥

योगानां समाधिः० । विजिगीषतां नीतिः० । विवेकादिनैपुणानामान्वीक्षिकी० । पञ्चख्यातिवादिनां विकल्पः० ॥२४॥ स्त्रीणां शतरूपा० । पुंसां स्वायम्भुवो मनुः० । मुनीनां नारायणः० । ब्रह्मचारिणां सनकादिः० ॥२५॥ धर्माणां संन्यासः० । निर्भयस्थानामन्तर्निष्ठा० । गुह्यानां प्रियवचनं मौनं च० । मिथुनानां प्रजापतिः० । ॥२६॥ अनिमिषाणां वत्सरः० । ऋतूनां वसन्तः० । मासानां मार्गशीर्षः० । नक्षत्राणामभिजित्० ॥२७॥ युगानां कृतम्० धीराणां देवलोऽसितश्च० । व्यासानां द्वैपायनः० । कवीनां भृगुः० । ॥ २८ ॥ भगवतां वासुदेवः० भक्तेषु त्वम्० ।

योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ॥ आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥
स्त्रीणां तु शतरूपाऽहं पुंसां स्वायंभुवो मनुः ॥ नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥ २५ ॥ धर्माणामस्मि संन्यासः क्षेमाणामबहिर्मतिः ॥ गुह्यानां सूनृतं मौनं मिथुनानामजस्त्वहम् ॥ २६ ॥ संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ॥ मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाभिजित ॥ २७ ॥ अहं युगानां च कृतं धीराणां देवलोऽसितः ॥ द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥ २८ ॥ वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ॥ किंपुरुषाणां हनुमान् विद्याध्राणां सुदर्शनः ॥ २९ ॥ रत्नानां पद्मरागोऽस्मि पद्मकोशः सुपेशसाम् ॥ कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविःष्वहम् ॥ ३० ॥ व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ॥ तितिक्षाऽस्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ॥ ३१ ॥ ओजः सहो बलवतां कर्माहं विद्धि सात्वताम् ॥ सात्वताम् नवमूर्तीनामादिमूर्तिरहं परः ॥ ३२ ॥ विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ॥ भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥ ३३ ॥

किंपुरुषाणां हनुमान्० । विद्याधराणां सुदर्शनः० ॥२९॥ रत्नानां पद्मरागः० सुन्दराणां पद्मकोशः० । दर्भजातीनां कुशः । हुतद्रव्यादिषु गोघृतम्॥३०॥व्यवसायिनां संपत्० । कपटानां छलम्० तितिक्षूणां तितिक्षा० । सत्त्ववतां सत्त्वम्॥३१॥बलवतां तेजो बलं च० । भागवतानां भक्तिकृतं कर्म० । नवव्यूहमूर्तीनां वासुदेवः ॥३२॥ गन्धर्वाणां विश्वावसुः० । अप्सरसां पूर्वचित्तिः भूधराणां स्थैर्यम्० । भुवो गन्धमात्रम्० ॥ ३३ ॥

१ आत्मानात्मविवेककारिणी विद्या । २ एवमिदमेवं वेत्ति । ३ चैत्रवैशाखात्मको वसंतः ।

अपां रसः० ।तेजिष्ठानां वह्निः० ।सूर्येन्दुताराणांप्रभा० ।नभसः पराख्यः शब्दः०॥३४॥ ब्रह्मण्यानां बलिः० ।वीराणामर्जुनः० ।भूतानां स्थित्या-दिरूपः० ॥३५॥ सर्वेन्द्रियाणां तत्तदर्थग्रहणशक्तिः ॥ ३६ ॥ पञ्चविंशतितत्त्वानि त्रयो गुणाः ब्रह्म चैतत्सर्वमहमेव ॥३७॥ किंच एतेषां परि-गणनं लक्षणतो ज्ञानं च तत्त्वनिश्चयश्चेति त्रयमहमेव । मद्विना किंचिदपि न ॥३८॥ हे उद्धव ! परमाणूनां संख्यानं मया कालेन क्रियते ।

अपां रसश्च परमस्तेजिष्ठानां विभावसुः ॥ प्रभासूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥ ३४ ॥ ब्रह्मण्यानां बलिरहं वीराणामहमर्जुनः ॥ भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसंक्रमः ॥ ३५ ॥ गत्युत्सर्गोपादानमानन्दस्पर्शलक्षणम् ॥ आस्वादः श्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ॥ ३६ ॥ पृथिवी वायुराकाश आपो ज्योतिरहं महान् ॥ विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम् ॥ ३७ ॥ अहमेतत् प्रसंख्यानं ज्ञानं तत्त्वविनिश्चयः ॥ मयेश्वरेण जीवेन गुणेन गुणिना विना ॥ सर्वात्मनाऽऽपि सर्वेण न भावो विद्यते क्वचित् ॥ ३८ ॥ संख्यानं परमाणूनां कालेन क्रियते मया ॥ न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥ ३९ ॥ तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ॥ वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥४०॥ एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः ॥ मनोविकारा एवैते यथा वाचाभिधीयते ॥४१॥ वाचं यच्छ मनो यच्छ प्राणान्यच्छेन्द्रियाणि च ॥ आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥४२॥

परंतु विभूतीनां संख्यानं न ॥३९॥ किंच यत्रयत्र तेजः श्रीः कीर्तिरैश्वर्यं त्यागो मनोनयनाह्लादकत्वं भाग्यं वीर्यं क्षमा विज्ञानं वर्तते सा सा मे विभूतिः ॥ ४० ॥ एवमेताः विभूतयः संक्षेपेण ते कथिताः । एताः सर्वाः परमार्थाः न किं तु मनोविकाराः । अतोऽत्राभिनिवेशो न कर्तव्यः ॥ ॥ ४१ ॥ हे उद्धव ! तस्माद् वाङ्मनः प्राणादीन् सात्त्विकबुद्ध्या बुद्धिं नियच्छ । एवं कृते भूयः संसाराय न कल्पसे ॥ ४२ ॥



१ प्रलयः । २ दर्शनम् । एवं गत्यादयः कर्मेन्द्रियव्यापाराः । स्पर्शादयो ज्ञानेन्द्रियव्यापाराः । ३ ईश्वरेण जीवेन चैवेति चेतनात्मको भावः । गुणेन सत्त्वादिना गुणिना महदादिना चेति जडात्मको भावः सर्वात्मना क्षेत्रज्ञरूपेण सर्वेण क्षेत्रेण चेति चिज्जडात्मको भावः । ४ यथा किञ्चित् खपुष्पादि वाङ्मात्रेणाभिधीयते तत्तुल्याः ।

यो वाङ्मनसीन यच्छति तस्य व्रततपोज्ञानमपक्वघटाम्बुवत्स्रवति ॥४३॥ तस्मान्मत्परायणो मद्भक्तियुक्तया बुद्ध्या मनोवचः प्राणान्नियच्छेत् । ततः कृतकृत्यो भवति ॥४४॥ इति श्रीभागवते म० एकादशे० चू० षोडशोऽध्यायः ॥१६॥ ततः सप्तदशे पृष्टे स्वधर्मे भक्तिलक्षणे । हंसोक्तं धर्ममन्वाह ब्रह्मचारिगृहस्थयोः ॥ १ ॥ उद्धव उवाच ॥ हे कृष्ण ! त्वया कल्पादौ त्वद्भक्तिसाधनरूपो धर्मः कथितः ॥१॥ तेन प्रकारेणा-नुष्ठीयमानेन स्वधर्मेण त्वयि नृणां भक्तिर्भवेत्तत्प्रकारं वद ॥२॥ किं च पुरा हंसरूपेण त्वं ब्रह्मणे परं धर्ममात्थ ॥ ३ ॥ स इदानीं महता

यो वै वाङ्मनसीसम्यगसंयच्छन्धिया यतिः ॥ तस्यव्रतं तपोज्ञानं स्रवत्यामघटाम्बुवत् ॥ ४३ ॥ तस्मान्मनोवचः प्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥४४॥ इति श्रीभा० म० एका० भगवदुद्धव संवादे विभूतिव० षोडशोऽध्यायः ॥ १६ ॥ उद्धव उवाच ॥ यस्त्वयाभिहितः पूर्वं धर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्र-माचारवतां सर्वेषां द्विपदामपि ॥ १ ॥ यथाऽनुष्ठीयमानेन त्वयि भक्तिर्नृणां भवेत् ॥ स्वधर्मेणारविन्दाक्ष तत्समाख्या-तुमर्हसि ॥२॥ पुरा किल महाबाहो धर्मं परमकं प्रभो ॥ यत्तेन हंसरूपेण ब्रह्मणेऽभ्यात्थ माधव ॥३॥ स इदानीं सुम-हता कालेनामित्रकर्शन ॥ न प्रायो भविता मर्त्यलोके प्रागनुशासितः ॥४॥ वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि ॥ सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥५॥ कर्त्राऽवित्रा प्रवक्त्रा च भवता मधुसूदन॥त्यक्ते महीतले देव विनष्टं कः प्रवक्ष्यति ॥६॥ तत्त्वं नः सर्वधर्मज्ञ धर्मस्त्वद्भक्तिलक्षणः ॥ यथा यस्यविधीयेत तथा वर्णय मे प्रभो ॥ ७ ॥ श्रीशुक उवाच ॥ इत्थं स्वभृत्यमुख्येन पृष्टः सः भगवान्हरिः ॥ प्रीतः क्षेमाय मर्त्यानां धर्मानाह सनातनान् ॥ ॥८॥ श्रीभगवानुवाच ॥ धर्म्य एष तव प्रश्नो नैःश्रेयसकरो नृणाम् ॥ वर्णाश्रमाचारवतां तमुद्धव निबोध मे ॥ ९ ॥

कालेन नष्टो मर्त्यलोके प्रायो न भविष्यति ॥ ४ ॥ यतो भुवि त्वत्तोऽन्यो धर्मवक्ता कर्ता रक्षकश्च नास्ति ॥ ५ ॥ त्वया महीतले त्यक्ते सति विनष्टं धर्मं कः प्रवक्ष्यति ॥ ६ ॥ तस्मात् हे प्रभो ! स धर्मो यथा यस्य विधीयते तथा वर्णय ॥ ७ ॥ ८ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! एष तव प्रश्नो धर्म्यः अतो वर्णाश्रमाचारवतां धर्मं वक्ष्यामि ॥ ९ ॥

आदौ कृतयुगे नृणां वर्णो हंस इति । तत्र प्रजाः जन्मनैव कृतकृत्याः । अतः कृतयुगं विदुः ॥१०॥ तथा वेदः प्रणव एवासीत् । अहं वृषरूपधृग्धर्मः तत्र तपोनिष्ठाः प्रजाः हंसं मामुपासते ॥ ११ ॥ ततस्त्रेतायुगप्रवेशे मे हृदयात्त्रयी विद्या प्रादुरभूत् । तस्याः सकाशाद्यज्ञरूपो विष्णुरासम् ॥ १२ ॥ ततो मम मुखबाहूरुपादेभ्यो विप्रादिवर्णाः स्वस्वधर्मज्ञापकाः आसन् ॥ १३ ॥ तथा मे जघनतो गृहाश्रमो जातः । हृदयाद्ब्रह्मचर्यम् । वक्षसो वानप्रस्थः । शीर्ष्णः संन्यासः ॥ १४ ॥ एषां वर्णादीनां जन्मस्थानानुसारिण्यः प्रकृतयः आसन् ॥ १५ ॥ तत्र

आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ॥ कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः ॥१०॥ वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक् ॥ उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः ॥११॥ त्रेतामुखे महाभाग प्राणान्मे हृदयात्त्रयी ॥ विद्या प्रादुरभूत्तस्या अहमासं त्रिवृन्मखः[1] ॥ १२ ॥ विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाता य आत्माचारलक्षणाः[2] ॥ १३ ॥ गृहाश्रमो जघनतो ब्रह्मचर्यं हृदो मम ॥ वक्षः स्थानाद्वने वासो न्यासः शीर्षणि संस्थितः ॥१४॥ वर्णानामाश्रमाणां च जन्मभूम्यनुसारिणीः ॥ आसन्प्रकृतयो नृणां नीचैर्नीचोत्तमोत्तमाः ॥१५॥ शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् ॥ मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥१६॥ तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः ॥ स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥१७॥ आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम् ॥ अतुष्टिरर्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥ १८ ॥ शुश्रूषणं द्विजगवां देवानां चाप्यमायया ॥ तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः ॥१९॥ अशौचमनृतं स्तेयं नास्तिक्यं शुष्कविग्रहः[3] ॥ कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायिनाम् ॥२०॥



शमदमतपः शौचसन्तोषक्षमाऽऽर्जवमद्भक्तिदयासत्यानि । एताः ब्रह्मप्रकृतयः ॥१६॥ तेजो बलं धैर्यं शौर्यमौदार्यमुद्यमो ब्रह्मण्यतैश्वर्यम् । इमाः क्षत्रप्रकृतयः ॥१७॥ आस्तिक्यं दाननिष्ठाऽदम्भो ब्रह्मसेवा द्रव्यैरतुष्टिः । इमा वैश्यप्रकृतयः ॥१८॥ द्विजगोदेवानां सेवा यत्र यथालब्धेन संतोषः । इमाः शूद्रप्रकृतयः ॥१९॥ अशौचमनृतं चौर्यं नास्तिक्यं निर्मूलक्लेशः क्रोधस्तृष्णा । अयं तद्बाह्यानां स्वभावः ॥ २० ॥

---

१ त्रिवृत्पो होत्राध्वर्यवौद्गात्रैः । २ आत्माचारः स्वधर्म एव लक्षणं ज्ञापको येषां ते । ३ निरर्थः कलहः ।

अहिंसा सत्यमचौर्यमकामोऽक्रोधोऽलोभो भूतानां प्रियेच्छा । अयं सार्ववर्णिकोधर्मः ॥ २१ ॥ अथ ब्रह्मचारिणो धर्मः स च द्विविधः- उपकुर्वाणो नैष्ठिकश्च। तत्रोपकुर्वाणब्रह्मचारिणो धर्ममाह। द्विजः उपनयनव्रताख्यं द्वितीयं जन्म प्राप्य गुरुकुले स्थित्वा गुरुणाऽऽहूतो वेदमधीयीत ॥२२॥ तथा मेखलाऽजिनदण्डयज्ञोपवीतकमण्डलुकुशान् जटाश्च दधत् ॥ २३ ॥ स्नानजपहोमभोजनेषु मूत्रपुरीषोत्सर्गयोश्च मौनं धारयेत् नखरोमाणि न छिन्द्यात् ॥ २४ ॥ बुद्धिपूर्वं रेतो नावकिरेत् । रेतःपाते सति स्नात्वा गायत्रीं जपेत् ॥ २५ ॥ शुचिरग्न्यर्काचार्य-

**अहिंसा सत्यमस्तेयमकामक्रोधलोभता ॥ भूतप्रियहितेहा च धर्मोऽयं सार्ववर्णिकः ॥ २१ ॥ द्वितीयं प्राप्यानुपूर्व्या- ज्जन्मोपनयनं द्विजः ॥ वसन्गुरुकुले दान्तो ब्रह्माधीयीत चाहुतः ॥ २२ ॥ मेखलाजिनदण्डाक्षब्रह्मसूत्रकमण्डलून् ॥ जटिलोऽधौतदद्वासोऽरक्तपीठः कुशान्दधत ॥२३॥ स्नानभोजनहोमेषु जपोच्चारे च वाग्यतः ॥ न च्छिन्द्यान्नखरोमाणि कक्षोपस्थगतान्यपि ॥ २४ ॥ रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम् ॥ अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत् ॥२५॥ अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुराञ्छुचिः ॥ समाहित उपासीत सन्ध्ये च यतवाग्जपन् ॥२६॥ आचार्यं मा विजानीयान्नावमन्येत कर्हिचित् ॥ न मर्त्यबुद्ध्याऽसूयेत् सर्वदेवमयो गुरुः ॥२७॥ सायं प्रातरुपानीय भैक्ष्यं तस्मै निवेदयेत् ॥ यच्चान्यदप्यनुज्ञातमुपयुञ्जीत संयतः ॥ २८॥शुश्रूषमाण आचार्यं सदोपासीत नीचवत् ॥ यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः ॥ २९ ॥ एवंवृत्तो गुरुकुले वसेद्भोगविवर्जितः ॥ विद्या समाप्यते यावद्बिभ्रद्व्रतमखण्डितम् ॥ ३० ॥ यद्यसौ छन्दसां लोकमारोक्ष्यन्ब्रह्मविष्टपम् ॥ गुरवे विन्यसेद्देहं स्वाध्यायार्थं बृहद्व्रतः ॥ ३१ ॥**

गोविप्रगुरुवृद्धादीनुपासीत ॥ मौनेन द्वे सन्ध्ये जपेत् ॥२६॥ आचार्यं मां ज्ञात्वा मर्त्यबुद्ध्या तं नावमन्येत । यतो गुरुः सर्वदेवमयः ॥२७॥ तथा सायं प्रातश्च भैक्ष्यमानीय गुरवे निवेद्य तदाज्ञया भुञ्जीत ॥२८॥ नित्यं यानशय्यासनादिषु नातिदूरे कृताञ्जलिर्नीचवद् गुरुमुपासीत ॥ २९ ॥ एवं गुरुकुले विद्यासमाप्तिपर्यन्तं भोगवर्जितो वसेत् ॥ ३० ॥ अथ नैष्ठिकब्रह्मचारिणो धर्मानाह । यदि महर्लोकं ततो ब्रह्मलोकं चारोढुमिच्छति तर्हि गुरवे दक्षिणार्थं देहं समर्पयेत् ॥ ३१ ॥

अग्नौ गुरावात्मनि सर्वभूतेष्वपृथग्बुद्ध्या मामुपासीत ॥ ३२ ॥ स्त्रीणां निरीक्षणस्पर्शभाषणपरिहासादिकं तासां संसर्गिणश्च दूरतस्त्यजेत् ॥३३॥ तथा शौचमाचमनं स्नानं संध्योपासनं तीर्थसेवनं कुर्यात् । अस्पृश्याभक्ष्यासंभाष्याणां वर्जनं कुर्यात् ॥ ३४ ॥ सर्वभूतेषु मद्भावः कार्यः । अयं सर्वाश्रमप्रयुक्तो नियमः ॥ ३५ ॥ एवं बृहद्व्रतधरस्तीव्रतपसा दग्धकिल्बिषोऽग्निरिव ज्वलन् मद्भक्तो भवति ॥ ३६ ॥ अथ पुनरुपकुर्वाणब्रह्मचारिणो धर्ममाह । वेदार्थं विचार्य गृहस्थाश्रमं प्रवेष्टुमिच्छन् गुरवे दक्षिणां दत्त्वाऽभ्यङ्गादिना स्नात्वा समावर्तनं कुर्यात्

अग्नौ गुरावात्मनि च सर्वभूतेषु मां परम् ॥ अपृथग्धीरुपासीत ब्रह्मवर्चस्व्यकल्मषः ॥ ३२ ॥ स्त्रीणां निरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ॥ प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजेत् ॥ ३३ ॥ शौचमाचमनं स्नानं संध्योपासनमार्जवम् ॥ तीर्थसेवा जपोऽस्पृश्याभक्ष्यासंभाष्यवर्जनम् ॥ ३४ ॥ सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन ॥ मद्भावः सर्वभूतेषु मनोवाक्कायसंयमः ॥ ३५ ॥ एवं बृहद्व्रतधरो ब्राह्मणोऽग्निरिव ज्वलन् ॥ मद्भक्तस्तीव्रतपसा दग्धकर्माशयोऽमलः ॥ ३६ ॥ अथानन्तरमावेक्ष्यन्यथा जिज्ञासितागमः ॥ गुरवे दक्षिणां दत्त्वा स्नायाद् गुर्वनुमोदितः ॥ ॥ ३७ ॥ गृहं वनं वोपविशेत् प्रव्रजेद्वा द्विजोत्तमः ॥ आश्रमादाश्रमं गच्छेन्नान्यथा मत्परश्चरेत् ॥ ३८ ॥ गृहार्थी सदृशीं भार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसीं तु वयसा यां सवर्णामनुक्रमात् ॥ ३९ ॥ इज्याध्ययनदानानि सर्वेषां च द्विजन्मनाम् ॥ प्रतिग्रहोऽध्यापनं च ब्राह्मणस्यैव याजनम् ॥ ४० ॥ प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक्तयोः ॥ ४१ ॥

॥३७॥ ततो गृहं वा वनं वा प्रविशेत् प्रव्रजेद् वा आश्रमादाश्रमं वा गच्छेत् ॥३८॥ गृहार्थी चेद् योग्यां सवर्णां यवीयसीं भार्यां क्रमादुद्वहेत् ॥ ३९ ॥ अथ द्विजधर्मानाह ॥ त्रिवर्णानां यजनाध्ययनदानानि विहितानि । प्रतिग्रहाध्यापनयाजनानि तु ब्राह्मणस्यैव ॥ ४० ॥ तत्र प्रतिग्रहे दोषं मन्यमानश्चेदन्याभ्यां जीवेत् । तयोरपि दोषं मन्यमानश्चेत् स्वामित्यक्तक्षेत्रपतितकणशैर्जीवेत् ॥ ४१ ॥



१ कामतस्तु यामन्यामुद्वहेत् तां सवर्णामनु सवर्णायाः अनन्तरमिति योज्यम् ।

हे उद्धव ! अयं ब्रह्मदेहः क्षुद्रकामाय न योग्यो भवति । इह तु कृच्छ्रतपआद्यर्थं प्रेत्य सुखाद्यर्थं योग्यः एवं शिलोञ्छवृत्त्या तुष्टचित्तो धर्मं सेवमानो मयिसमर्पितमनाः गृहे स्थितो नातिसक्तश्चेन्मोक्षमुपैति ॥ ४३ ॥ किंच मत्परं सीदन्तं विप्रं ये उद्धरन्ति तानापद्भ्यः उद्धरिष्ये ॥४४॥ अथ राज्ञः आवश्यकमिदमित्याह ॥ राजा सर्वंप्रजा दुःखात्समुद्धृत्यात्मनात्मानमुद्धरेत् ॥४५॥ एवंविधो नृपोऽत्र पापं विधूयेन्द्रेण सह मोदते ॥ ४६ ॥ अथ विपद्वृत्तीराह ॥ विप्रो दुःखितः सन् वैश्यवृत्त्या खड्गेन वा दुःखं तरेत् परंतु नीचसेवया न ॥ ४७ ॥ राजा तु

ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ॥ कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥ ४२ ॥ शिलोञ्छवृत्त्या परितुष्टचेता धर्मं महान्तं विरजं जुषाणः ॥ मय्यर्पितात्मा गृह एव तिष्ठन्नातिप्रसक्तः समुपैति शान्तिम् ॥ ४३ ॥ समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् ॥ तानुद्धरिष्ये न चिरादापद्भ्यो नौरिवार्णवात् ॥४४॥ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः ॥ आत्मानमात्मना धीरो यथागजपतिर्गजान् ॥ ४५ ॥ एवंविधो नरपतिर्विमानेनार्कवर्चसा विधूयेहाशुभं कृत्स्नमिन्द्रेण सह मोदते ॥ ४६ ॥ सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् ॥ खड्गेन वाऽऽपदाक्रान्तो न श्ववृत्त्या कथंचन ॥ ४७ ॥ वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययाऽऽपदि ॥ चरेद्वा विप्ररूपेण न श्ववृत्त्या कथंचन ॥ ४८ ॥ शूद्रवृत्तिं भजेद्वैश्यश्शूद्रः कारुकटक्रियाम् ॥ कृच्छ्रान्मुक्तो न गर्ह्येण वृत्तिं लिप्सेत कर्मणा ॥ ४९ ॥ वेदाध्यायस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ॥ देवर्षिपितृभूतानि मद्रूपाण्यन्वहं यजेत् ॥ ५० ॥ यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ॥ धनेनापीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ॥ ५१ ॥

वैश्यवृत्त्याऽध्यापनादिना वा विपत्तिं तरेन्नीचसेवया न ॥४८॥ तथा वैश्यः शूद्रवृत्तिं सेवेत ॥ शूद्रस्तुबुरुडादिवृत्तिं सेवेत । एवं दुःखाद् मुक्तः सन्निन्द्यकर्मणा न जीवेत् ॥४९॥ किंच ब्रह्मयज्ञेन ऋषीन् । स्वधाकारेण पितॄन् । स्वाहाकारेण देवान् । बलिदानेन भूतानि । अन्नोदकैर्मनुष्यान् । एषु मद्रूपाणि पश्यन् यजेत् ॥ ५० ॥ यथा यदृच्छया प्राप्तधनेन पोष्यानपीडयन् क्रतुं कुर्यात् ॥ ५१ ॥

१ शुद्धेन स्ववृत्त्या लब्धेन ।

तथा कुटुम्बेषु न सज्जेत । दृष्टादृष्टं नश्वरं पश्येत् ॥५२॥ पुत्रादिबन्धूनां सङ्गमः पान्थसङ्गम इवेति जानीयात् ॥५३॥ एवं विचार्य गृहेष्व-तिथिवद्वसन् तैर्न बध्यते ॥५४॥ एवं कर्मभिर्मामिष्ट्वा तिष्ठेद्वा वनं विशेद्वा प्रजावान् वा परिव्रजेत् ॥ ५५ ॥ यस्तु स्त्रीपुत्रवित्तैषणातुरो गेहे सक्तमतिः ॥ ममाहमिति बध्यते ॥५६॥ अहो मे पितरौ वृद्धौ बालप्रजा भार्या पुत्राश्च मां विना कथं जीवन्ति ॥ ५७ ॥ एवं मूढधीर्गृहादि-वासनासक्तो न तृप्तो मृत्युसमये तान् ध्यायन्नरकं विशते ॥५८॥ इति श्रीभा० म० एकाद० चू० सप्तदशोऽध्यायः ॥१७॥ अष्टादशेऽवदद्धर्मं

कुटुम्बेषु न सज्जेत न प्रमाद्येत्कुटुम्ब्यपि ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ ५२ ॥ पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गमः ॥ अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥५३॥ इत्थं परिमृशन्मुक्तो गृहेष्वतिथिवद्वसन् ॥ गृहैर-नुबध्येत निर्ममो निरहंकृतः ॥५४॥ कर्मभिर्गृहमेधीयैरिष्ट्वा मामेव भक्तिमान् ॥ तिष्ठेद्वनं वोपविशेत्प्रजावान्वा परि-व्रजेत् ॥५५॥ यस्त्वासक्तमतिर्गेहे पुत्रवित्तैषणातुरः ॥ स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥५६॥ अहो मे पितरौ वृद्धौ भार्या बालात्मजात्मजाः ॥ अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः ॥ ५७ ॥ एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् ॥ अतृप्तस्ताननुध्यायन्मृतोऽन्धं विशते तमः ॥ ५८ ॥ इति श्रीभा० महा० एकादश० भगवदुद्धवसंवादे ब्रह्मचर्यादि० सप्तदशोऽध्यायः ॥१७॥ श्रीभगवानुवाच ॥ वनं विविक्षुः पुत्रेषु भार्यां न्यस्य सहैव वा ॥ वन एव वसे-च्छान्तस्तृतीयं भागमायुषः ॥ १ ॥ कंदमूलफलैर्वन्यैर्मेध्यैर्वृत्तिं प्रकल्पयेत् ॥ वसीत वल्कलं वासस्तृणपर्णाजिनानि च ॥ २ ॥ केशरोमनखश्मश्रुमलानि बिभृयाद्दतः ॥ न धावेदप्सु मज्जेत त्रिकालं स्थण्डिलेशयः ॥ ३ ॥ ग्रीष्मे तप्येत पञ्चाग्नीन्वर्षास्वासारषाड्जले ॥ आकण्ठमग्नाः शिशिर एवं वृत्तस्तपश्चरेत् ॥ ४ ॥

वनस्थयतिगोचरम् ॥ अधिकारविशेषेण विशेषं चापि तद्गतम् ॥१॥ श्रीभगवानुवाच ॥ अथ वानप्रस्थधर्मानाह ॥ वनं विविक्षुर्नरः पुत्रेषु भार्यां स्थापयित्वा वा गृहीत्वा वाऽऽयुषस्तृतीयभागं वसेत् ॥१॥ तत्र शुष्ककन्दमूलफलादिभिर्वृत्तिं कल्पयेत् । तथा वल्कलतृणपर्णाजिनानि परिधाय ॥ २ ॥ केशरोमनखादि धृत्वा दन्तान्बहु न शोधयन् त्रिकालं स्नात्वा भूमौ शयीत ॥ ३ ॥ ग्रीष्मे पञ्चाग्नितापं सहेत । वर्षासु वृष्टिधारापतनं सहित्वा शिशिरे जले आकण्ठमग्नो भूत्वा तपश्चरेत् ॥ ४ ॥

किंच अग्निपक्कं वा कालपक्वमुलूखलेन पाषाणेन वा कुट्टमश्नीयात् ॥ ५ ॥ सर्वदेहवृत्तिकारणं स्वयमाहरेत् । कालान्तरे आहृतं न गृह्णीयात् ॥ ६ ॥ किंच वन्यैः फलैश्चरुपुरोडाशैर्नित्यान्याग्रयणादीनि कुर्यात् श्रौतेन पशुना न यजेत् ॥ ७ ॥ तथाग्निहोत्रदर्शपौर्णमासचातुर्मास्यादि कुर्यात् ॥ ८ ॥ एवं तपसा शुष्कमांसो मुनिर्मामाराध्य महर्लोकादिक्रमेण मां प्राप्नोति ॥ ९ ॥ एवं कृतं तपस्तुच्छकामाय यो युञ्ज्यात् सोऽज्ञः ॥ १० ॥ अथ यदाऽसौ स्वनियमेऽसमर्थो जरया जातकम्पः तदाऽऽत्मन्यग्निं स्थापयित्वा मच्चित्तो वह्निं प्रविशेत् ॥ ११ ॥ यदा

अग्निपक्वं समश्नीयात्कालपक्वमथापि वा ॥ उलूखलाश्मकुट्टो वा दन्तोलूखल एव वा ॥५॥ स्वयं संचिनुयात्सर्वमात्मनो वृत्तिकारणम् ॥ देशकालबलाभिज्ञो नाददीतान्यदाहृतम् ॥ ६ ॥ वन्यैश्चरुपुरोडाशैर्निर्वपेत् कालचोदितान् ॥ नतु श्रौतेन पशुना मां यजेत वनाश्रमी॥७॥अग्निहोत्रं च दर्शश्च पूर्णमासश्च पूर्ववत् ॥ चातुर्मास्यानि च मुनेराम्नातानि च नैगमैः[1] ॥ ८ ॥ एवं चीर्णेन तपसा मुनिर्धमनिसंततः ॥ मां तपोमयमाराध्यऋषिलोकादुपैति माम् ॥ ९ ॥ यस्त्वेतत्कृच्छ्रतश्चीर्णं तपो निःश्रेयसं महत् ॥ कामायाल्पीयसे युञ्ज्याद्बालिशः कोऽपरस्ततः ॥ १० ॥ यदाऽसो नियमेऽकल्पो[2] जरया जातवेपथुः ॥ आत्मन्यग्नीन् समारोप्य मच्चित्तोऽग्निं समाविशेत् ॥११॥ यदा कर्मविपाकेषु लोकेषु[3] निरयात्मसु[4]॥विरागो जायते सम्यङ् न्यस्ताग्निः प्रव्रजेत्ततः ॥१२॥ इष्ट्वा यथोपदेशं मां दत्त्वा सर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राण आवेश्य निरपेक्षः परिव्रजेत् ॥१३॥ विप्रस्य वै संन्यसतो देवा दारादिरूपिणः॥ विघ्नान्कुर्वन्त्ययं ह्यस्मानाक्रम्य समियात्परम् ॥१४॥ बिभृयाच्चेन्मुनिर्वासः कौपीनाच्छादनं परम् ॥ त्यक्तं न दण्डपात्राभ्यामन्यत्किंचिदनापदि[5]॥१५॥

सर्वलोकेषु विरागो जायते ॥ १२ ॥ तदा यथोपदेशं मामिष्ट्वा ऋत्विजे सर्वं दत्त्वाऽऽत्मन्यग्नीनावेश्य निरपेक्षः प्रव्रजेत् ॥ १३ ॥ एवं कुर्वतः पुरुषस्य दारादिरूपिणो देवाः विघ्नान् कुर्वन्ति । यतोऽस्मानतिक्रम्य परं याति ॥ १४ ॥ अथ यतिधर्मानाह ॥ यतिर्वस्त्रं यदि बिभृयात् तर्हि कोपीनमाच्छादनमात्रं धारयेत् ॥ अनापदि दण्डं कमण्डलुं विना किमपि न धारयेत् ॥ १५ ॥

---

१ वेदवादिभिः । २ असमर्थः । ३ स्वर्गादिषु । ४ दुःखबाहुल्येन नरकतुल्येषु । ५ आश्रमधर्मात् ।

तथा दृष्टिपूतं पादं न्यसेत्। वस्त्रगलितं जलं पिबेत्। सत्यां वाचं वदेत् मनसा विचार्य यत् शुद्धं तदाचरेत् ॥१६॥ तथा मौनं काम्यकर्मत्यागः प्राणायामः एते वाग्देहचेतसां दण्डाः यस्य न सन्ति स वेणुभिर्यतिर्न भवेत् ॥ १७ ॥ तथा भिक्षां ब्राह्मणेष्वेव वृत्तिभेदेन चतुर्विधेषु पूर्वपूर्वासंभवे वा सप्त गृहान् भिक्षेत् ॥ १८ ॥ ततो जलाशयं गत्वा मौनं धृत्वाऽन्नं देवभूतादिभ्यो विभज्य शेषं भुञ्जीत ॥ १९ ॥ एतां महीं

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ॥ सत्यपूतां वदेद्वाचं मनः पूतं समाचरेत् ॥१६॥ मौनानीहानिलायामा दण्डा वाग्देहचेतसाम् ॥ न ह्येतं यस्य सन्त्यङ्ग वेणुभिर्न भवेद्यतिः ॥ १७ ॥ भिक्षां चतुर्षु वर्णेषु विगर्ह्यान्वर्जयंश्चरेत् ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेनतावता ॥ १८ ॥ बहिर्जलाशयं गत्वा तत्रोपस्पृश्य वाग्यतः ॥ विभज्य पावितं शेषं भुञ्जीताशेषमाहृतम् ॥ १९ ॥ एकश्चरेन्महीमेतां निसंङ्गः संयतेन्द्रियः ॥ आत्मक्रीड आत्मरत आत्मवान्समदर्शनः ॥२०॥ विविक्तक्षेमशरणो मद्भावविमलाशयः ॥ आत्मानं चिंतयेदेकमभेदेन मया मुनिः ॥ २१ ॥ अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ॥ बन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयमः ॥ २२ ॥ तस्मान्नियम्य षड्वर्गं मद्भावेन चरेन्मुनिः ॥ विरक्तः क्षुल्लकामेभ्यो लब्ध्वात्मनि सुखं महत् ॥ २३ ॥ पुरग्रामव्रजान्सार्थान्भिक्षार्थं प्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्रमवतीं महीम् ॥२४॥ वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्ष्यमाचरेत् ॥ संसिध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलांधसा ॥२५॥ नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति॥असक्तचित्तो विरमेदिहामुत्र चिकीर्षितात् ॥२६॥

निःसङ्गः एकः आत्मरतः सन् चरेत् ॥२०॥ तथैकान्ते स्थित्वैकमात्मानं चिन्तयेत् ॥२१॥ ततः आत्मनो बन्धं मोक्षं च चिन्तयेत् ॥२२॥ तस्मात् षडिन्द्रियवर्गं जित्वा विरक्तः सन् चरेत् ॥ २३ ॥ पुरग्रामव्रजादिषु भिक्षार्थं प्रविश्य पुण्यदेशादियुतां महीं चरेत् ॥ २४ ॥ पुनः पुनर्वानप्रस्थेषु भैक्ष्यं चरेत् ॥ २५ ॥ इदं दृश्यमानं मिथ्येति ज्ञात्वेहामुत्र तदर्थकृत्याद्विरमेत ॥ २६ ॥



१ अत्रायं लाभो भविष्यतीति पूर्वमनुद्दिष्टान्। २ प्रोक्षणादिभिः शोधितम्। ३ विविक्तं विजनं क्षेमं निर्भयं शरणं स्थानं यस्य सः। ४ मयि भावेन विमलः आशयो यस्य सः। ५ यात्रिकजनसमूहान्

तथेदं विश्वं स्वशरीरं च मायेति ज्ञात्वा तत् न स्मरेत् ॥२७॥ अथ परमहंसधर्मानाह ॥ विरक्तो ज्ञाननिष्ठो यतिस्त्रिदण्डादिसहितान् तद्ध-र्मांस्त्यक्त्वा यथोचितं धर्मं चरेत् ॥२८॥ बुधः सन् बालवत् क्रीडेत् ज्ञानी सन् मत्तवत् चरेत् ॥ २९ ॥ वेदवादरतो न स्यात् । पाखण्डी न स्यात् । केवल तर्कनिष्ठो न स्यात् । कञ्चन पक्षं नाश्रयेत् ॥३०॥ जनात् नोद्विजेत् । स्वयं कमपि नोद्वेजयेत । देहमुद्दिश्य वैरं न कुर्यात् ॥ ३१ ॥ यतः सर्वभूतेष्वेक एवात्मा स्थितः । यथेन्दुर्जलकुम्भादिषु ॥३२॥ क्वचिदशनं न लब्ध्वा न खिद्येत लब्ध्वा न हृष्येत् । यतः

यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ॥ सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् ॥२७॥ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ॥ सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥ २८ ॥ बुधो बालकवत्क्रीडेत्कुशलो जडवच्च-रेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यां नैगमश्चरेत् ॥२९॥ वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ॥ शुष्कवादविवादे न कञ्चित्पक्षं समाश्रयेत ॥३०॥ नोद्विजेत जनाद्धीरो जनं नोद्वेजयेन्न तु ॥ अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ॥ देहमुद्दिश्य पशुवद्वैरं कुर्यान्न केनचित ॥ ३१ ॥ एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ॥ यथेन्दुरुदपात्रेषु भूता-न्येकात्मकानि च ॥३२॥ अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ॥ लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रि-तम् ॥ ३३ ॥ आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ॥ तत्त्वं विमृश्यते तेन तद्विज्ञाय विमुच्यते ॥ ३४ ॥ यदृच्छ-योपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ तथा वासस्तथा शय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥ ३५ ॥ शौचमाचमनं स्नानं नतु चोदनया चरेत् ॥ अन्यांश्च नियमाञ्ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३६ ॥ नहि तस्य विकल्पाख्या या च मद्वीक्षया हता ॥ आ देहान्तात्क्वचित् ख्यातिस्ततः संपद्यते मया ॥ ३७ ॥

उभयं दैवाधीनम् ॥ ३३ ॥ तथापि भिक्षामाहारार्थं समीहेतैव । यतस्तया प्राणधारणं भवति तेन च तत्त्वविचारः ततस्तत्त्वं विज्ञाय मुच्यते ॥३४॥ किञ्च यदृच्छया प्राप्तमन्नादि वस्त्रं शय्यां च सेवेत ॥ ३५ ॥ अनासक्तः शौचाचमनस्नानादिविधीन् कुर्यात् ॥ ३६ ॥ एवंभूतस्यापि भेदप्रीतीतिरादेहान्ताद् दग्धपटवद् भाति । ततो मया संपद्यते ॥ ३७ ॥

१ आत्मनि मायेत्यन्वयः। २ वेदार्थनिष्ठः। ३ मिष्टमिष्टं वा।

अथ वैराग्यवन्तं विविदिषुं यतिं प्रत्याह । दुःखोदर्केषु कामेषु जातविरागो यतिर्मद्धर्मं ज्ञातुं गुरुं व्रजेत् ॥३८॥ यतो यावद् ब्रह्म जानीयात् तावत् गुरुं सेवेत ॥३९॥ यस्तु षड्वर्गं न जित्वा ज्ञानादिरहितः सन् त्रिदण्डमुपजीवति ॥४०॥ स देवानात्मस्थं मां च न जानाति । अतो-ऽस्मादमुष्माच्च नश्यति ॥४१॥ चतुर्णां मुख्यधर्मानाह ॥ भिक्षोर्धर्मः शमोऽहिंसा । तपस्तत्त्वविचारश्च वानप्रस्थस्य। भूतरक्षा यागश्च गृहस्थस्य। ब्रह्मचारिणो द्विजस्याचार्यसेवनम् ॥४२॥ गृहस्थधर्मो ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदमृतुगमनं सर्वेषु मद्भावः ॥ ४३ ॥ एवं यो मां

दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् ॥ अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३८ ॥ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ॥ यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥३९॥ यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ॥ ज्ञान-वैराग्यरहितस्त्रिदण्डमुपजीवति ॥ ४० ॥ सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ॥ अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ ४१ ॥ भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः ॥ गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवनम् ॥ ४२ ॥ ब्रह्मचर्यं तपः शौचं सन्तोषो भूतसौहृदम् ॥ गृहस्थस्याप्यृतौ गन्तुः सर्वेषां मदुपासनम् ॥ ४३ ॥ इति मां यः स्वध-र्मेण भजन्नित्यमनन्यभाक् ॥ सर्वभूतेषु मद्भावो मद्भक्तिं विन्दतेऽचिरात् ॥४४॥ भक्त्योद्धवानपायिन्या सर्वलोकमहे-श्वरम् ॥ सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥४५॥ इति स्वधर्मनिर्णिक्तसत्त्वो निर्ज्ञातमद्गतिः ॥ ज्ञानविज्ञान-संपन्नो न चिरात्समुपैति माम् ॥ ४६ ॥ वर्णाश्रमवतां धर्म एष आचारलक्षणः ॥ स एव मद्भक्तियुतो निःश्रेयसकरः परः॥४७॥एतत्तेऽभिहितं साधो भवान्पृच्छति यच्च माम् ॥ यथा स्वधर्मसंयुक्तो भक्तो मां समियात्परम्॥४८॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे वनस्थयत्यादिधर्मनिरूपणं नामाऽष्टादशोऽध्यायः ॥ १८ ॥



भजति स शीघ्रं मद्भक्तिं लभते ॥४४॥ एवं भक्तो भक्त्या वेदकारणं मां याति ॥ ४५ ॥ किञ्च स्वधर्मेण शुद्धसत्त्वो ज्ञातमद्गतिः पुमान् शीघ्रं मामुपैति ॥ ४६ ॥ हे उद्धव ! अयं वर्णाश्रमवतां धर्मो मद्भक्तियुतश्चेत् मोक्षकरो भवति ॥ ४७ ॥ हे साधो ! भवान् यत् मां पृच्छति तत् ते कथितम् । यथा स्वधर्मयुक्तो भूत्वा मां प्राप्नुयात् ॥ ४८ ॥ इति श्रीभागवते महापुराणे एकादशे चूर्णिकायामष्टादशोऽध्यायः ॥ १८ ॥

१ मद्भक्तश्चैव गुरुं परिचरेत् ।

ज्ञानादेर्निर्णयः पूर्वं कृतो ह्याश्रमधर्मतः । अत्रोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥१॥ श्रीभगवानुवाच । योऽनुभवपर्यन्तं ज्ञानेन सम्पन्नः स इदं द्वैतं मयि मायामात्रं ज्ञात्वा ज्ञानं च तत्साधनेन च संन्यसेत् । अयं विद्वत्संन्यासः ॥ १ ॥ ज्ञानिनस्त्वहमेवेष्टः मद्भिनाऽन्यत्स्वर्गादि न ॥२॥ ये तु ज्ञानविज्ञानसिद्धास्ते मम पदं विदुः । किंच ज्ञानी तु मां बिभर्ति । अतः स मे प्रियतमः ॥३॥ तस्य ज्ञानं स्तौति । हे उद्धव ! ज्ञानलेशेन या सिद्धिः स्यात्सा तपस्तीर्थजपादिभिर्न ॥ ४ ॥ तस्माद् ज्ञानपर्यन्तं यथा तथा स्वात्मानं ज्ञात्वा ज्ञानविज्ञानसम्पन्नः सन्

श्रीभगवानुवाच ॥ यो विद्याश्रुतसम्पन्न आत्मवान्नानुमानिकः ॥ मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥१॥ ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ॥ स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥ २ ॥ ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम ॥ ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ ३ ॥ तपस्तीर्थं जपो दानं पवित्राणीतराणि च ॥ नालंकुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥ ४ ॥ तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ॥ ज्ञानविज्ञान-सम्पन्नो भज मां भक्तिभावितः ॥ ५ ॥ ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि ॥ सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन् ॥ ६ ॥ त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायान्तराऽऽपतति नाद्यपवर्गयोर्यत् ॥ जन्मादयोऽस्य यदमी तव यस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥ उद्धव उवाच ॥ ज्ञानं विशुद्धं विपुलं यथैतद्वैरा-ग्यविज्ञानयुतं पुराणम् ॥ आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यम् ॥ ८ ॥

मामेव भज ॥ ५ ॥ किंच पूर्वं मुनयो ज्ञानविज्ञानयज्ञेन मामिष्ट्वा यज्ञं मां प्राप्ताः ॥ ६ ॥ हे उद्धव ! अयं त्रिविधः आध्यात्मिकादिविकारो देहेन्द्रिय देवतारूपः स त्वयि माया न तु परमार्थः । यस्मान्मध्य एवापतति रज्जौ सर्पमालादिवन्नाद्यन्तयोः । अस्य विकारस्य जन्माद-योऽधिष्ठानस्य तव कथं स्युः । असतः सर्पादेराद्यन्तयोर्यदेव रज्ज्वादि तदेव मध्ये अतस्त्वं निर्विकारं ब्रह्मेति ॥ ७ ॥ उद्धव उवाच ॥ हे कृष्ण ! शुद्धज्ञानं वैराग्ययुतं भक्तियोगं च कथय ॥ ८ ॥

---

१ नात्यर्थम् । २ महद्भिः ब्रह्मादिभिर्विमृग्यम् ।

अत्र संसारे त्रिविधतापेन तप्तजनस्य तवाङ्घ्रिद्वन्द्वादन्यच्छरणं न पश्यामि ॥ ९ ॥ अतोऽत्र संसारकूपे पतितं कालसर्पेण दष्टं क्षुद्राणि सुखान्यत्यर्थमभिलषन्तं जनं कृपया वागमृतैरासिच्योद्धर ॥१०॥ श्रीभगवानुवाच ॥ हे उद्धव ! एवं युधिष्ठिरः पुरा भीष्मं प्रपच्छ॥११॥भारते युद्धे निवृत्ते सति सम्बन्धिवधविह्वलः सन् बहून् धर्मान् श्रुत्वा मोक्षधर्मान् पप्रच्छ॥१२॥भीष्ममुखाच्छ्रुतान् ज्ञानादियुक्तान् तान् धर्मान् कथयिष्यामि ॥१३॥ प्रकृत्याद्यष्टाविंशतितत्त्वानि कार्येष्वनुगतानि । तथा तत्त्वेष्वनुगतमेकं तत्त्वम् । तथेदं जगत्परमकारणात्मकमेकं नतु ततः पृथगिति ।

तापत्रयेणाभिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीश ॥ पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात्[1] ॥९॥ दष्टं जनं सम्पतितं बिलेऽस्मिन्कालाहिनाक्षुद्रसुखोरुतर्षम् ॥ समुद्धरैनं कृपयाऽऽपवर्ग्यैर्[2]वचोभिरासिञ्च महानुभाव ॥१०॥ श्रीभगवानुवाच ॥ इत्थमेतत्पुरा राजा भीष्मं धर्मभृतां वरम् ॥ अजातशत्रुः पप्रच्छ सर्वेषां नोऽनुशृण्वताम् ॥११॥ निवृत्ते भारते युद्धे सुहृन्निधनविह्वलः ॥श्रुत्वा धर्मान्बहून्पश्चान्मोक्षधर्मानपृच्छत ॥ १२ ॥ तानहं तेऽभिधास्यामि देवव्रतमुखाच्छ्रुतान् ॥ ज्ञानवैराग्यविज्ञानश्रद्धाभक्त्युपबृंहितान् ॥ १३ ॥ नवैकादश पञ्च त्रीन्भावन्भूतेषु येन वा ॥ ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥१४॥ एतदेव हि विज्ञानं न तथैकेन येन यत् ॥ स्थित्युत्पत्त्यप्ययान्पश्येद्भावानां त्रिगुणात्मनाम्[3] ॥ १५ ॥ आदावन्ते च मध्ये च सृज्यात्सृज्यं यदन्वियात् ॥ पुनस्तत्प्रतिसंक्रामे मच्छिष्येत तदेव सत् ॥ १६ ॥ श्रुतिःप्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ॥ प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते ॥ १७ ॥

इदं त्रयं येन पश्यति तद् ज्ञानम् ॥ १४ ॥ विज्ञानमाह । यदा येनैकेनानुगतानेकात्मकान् भावान् पूर्वमैक्षत तान् तथा पूर्ववद् नेक्षेत किंतु तदेकं परमकारणं ब्रह्मैव । तदेतदेव विज्ञानम् ॥ १५ ॥ तथाऽऽदावन्ते मध्ये कार्यात्कार्यान्तरमन्वियात्पुनस्तत्प्रलये च यदवशिष्यते तत्सदिति पश्येत् ॥ १६ ॥ वैराग्यमाह । श्रुतिः १ प्रत्यक्षम् २ ऐतिह्यम् ३ अनुमानम् ४ एवं प्रमाणचतुष्टयम् । एतैर्बाधितत्वात्स एवं सर्वानुगतं



१ अमृतमभितो वर्षति यत्तस्मात् । २ अपवर्गबोधकैः । ३ सावयवानामित्यर्थः । विमताः भवाः उत्पत्त्यादिमन्तः सावयवत्वाद् घटादिवदिति पश्येत् ।

सत्यमात्मतत्त्वं पश्यन् प्रपञ्चजालाद् विरक्तो भवति ॥ १७ ॥ ज्ञानी ब्रह्मलोकपर्यन्तमदृष्टमपि सुखं दुःखरूपं नश्वरं च पश्येत् ॥ १८ ॥ हे उद्धव ! भक्तियोगस्तु पुरैवोक्तः । पुनश्च भक्तेः कारणं वक्ष्यामि ॥१९॥ मम कथायां श्रद्धा । मत्कीर्तनम् । मत्पूजायां निष्ठा । मत्स्तवनम् ॥२०॥ मम नमनम् । मद्भक्तपूजा । सर्वत्र मन्मतिः ॥२१॥ मदर्थेष्वङ्गचेष्टा । वचसा मद्गुणकथनम् । मनसो मय्यर्पणम् ॥२२॥ मद्भजनार्थं तद्विरोधिनोऽर्थस्य त्यागः । इष्टदानादि सर्वं कर्म मदर्थं कार्यम् ॥२३॥ एवं धर्मैरात्मनिवेदिनां नृणां मयि भक्तिर्जायते ॥२४॥ किंच यदा

कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम् ॥ विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥ १८॥ भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ॥ पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥१९॥ श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम् ॥ परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥२०॥ आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ॥ मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः ॥ २१ ॥ मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ॥ मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥२२॥ मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च॥ इष्टं दत्तं हुतं जप्तं मदर्थे यद् व्रतं तपः ॥२३॥ एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥ मयि सञ्जायते भक्तिः कोन्योऽर्थोऽस्यावशिष्यते ॥ २४ ॥ यदात्मन्यर्पितं चित्तं शान्तं सत्त्वोपबृंहितम् ॥ धर्मज्ञानं सवैराग्यमैश्वर्यं चाभिपद्यते॥२५॥यदर्पितं तद् विकल्पे इन्द्रियैः परिधावति॥रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् ॥ २६ ॥ धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्म्यदर्शनम्॥गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥२७॥ उद्धव उवाच ॥ यमः कतिविधः प्रोक्तो नियमो वाऽरिकर्शन ॥ कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो॥२८॥किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते॥ कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा॥२९॥

चित्तमात्मनि समर्पितं तदा पुमान् धर्मादीन् प्राप्नोति ॥२५॥ यदा चित्तं देहगृहादावर्पितं सद् धावति तदाऽसन्निष्ठं भवति। तस्मादधर्मादिकं विद्धि ॥२६॥ किंच मद्भक्तिकृद् यः स धर्मः । ऐकात्म्यदर्शनं यत् तज्ज्ञानम् । विषयेष्वसङ्गो वैराग्यम् ॥२७॥ उद्धव उवाच ॥ हे कृष्ण ! यमनियमौ कतिविधौ प्रोक्तौ शमः तथा दमः तितिक्षा धृतिः ॥ २८ ॥ दानं तपः शौर्यं सत्यम् ऋतं त्यागः इष्टं धनं यज्ञो दक्षिणा ॥२९॥

बलम् ऐश्वर्यं लाभो विद्या लज्जा श्रीः सुखं दुःखम् ॥३०॥ पण्डितः मूर्खः पन्था उत्पथः स्वर्गो नरको बन्धुर्गृहम् ॥३१॥ आढ्यो दरिद्रः कृपण- ईश्वरः इत्येतानि कानि । हे भगवन् ! एतान् प्रश्नान् नो ब्रूहि ॥३२॥ श्रीभगवानुवाच ॥ अहिंसा १ सत्यम् २ अचौर्यं ३ लज्जा ४ असंगः ५ असंचयः ६ धर्मे विश्वासः ७ ब्रह्मचर्यं ८ मौनं ९ स्थैर्यं १० क्षमा ११ अभयम् १२ एते द्वादश यमाः ॥ ३३ ॥ शौचं १ जपः २ तपः ३ होमः ४ श्रद्धा ५ आतिथ्यं ६ मदर्चनं ७ तीर्थाटनं ८ परेहा ९ अर्थेहा १० तुष्टिः ११ गुरुसेवा १२ एते द्वादश नियमाः ॥३४॥ एते उपासिताः

पुंसः किंस्विद् बलं श्रीमन् भगो लाभश्च केशव ॥ का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव च ॥ ३० ॥ कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः ॥ कः स्वर्गो नरकः कः स्वित् को बन्धुरुत किं गृहम् ॥३१॥ क आढ्यः को दरिद्रो वा कृपणः कः क ईश्वरः ॥ एतान् प्रश्नान् मम ब्रूहि विपरीतांश्च सत्पते ॥ ३२ ॥ श्रीभगवानुवाच ॥ अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ॥ आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ ३३ ॥ शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् ॥ तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥३४॥ एते यमाः सनियमा उभयोर्द्वादश स्मृताः ॥ पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥ ३५ ॥ शमो मन्निष्ठता बुद्धेर्दम इंद्रियसंयमः ॥ तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥ ३६ ॥ दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् ॥ स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३७ ॥ ऋतं च सूनृता वाणी कविभिः परिकीर्तिता ॥ कर्मस्वसङ्गमः शौचं त्यागः संन्यास उच्यते ॥ ३८ ॥ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः ॥ दक्षिणा ज्ञानसन्देशः प्राणायामः परं बलम् ॥ ३९ ॥

सन्तः पुंसां कामान् दुहन्ति ॥ ३५ ॥ बुद्धेर्मन्निष्ठा शमः । इन्द्रियसंयमो दमः । दुःखसहनं तितिक्षा । जिह्वोपस्थवेगधारणं धैर्यम् ॥ ३६ ॥ भूतद्रोहत्यागो दानम् । कामत्यागस्तपः । वासनाजयः शौर्यम् । सर्वत्र समदर्शनं सत्यम् ॥ ३७ ॥ प्रियभाषणम् ऋतम् । कर्मस्वनासक्तिः शौचं संन्यासस्त्यागः ॥ ३८ ॥ धर्मः इष्टं धनम् अहमेव परमेश्वरो यज्ञः । ज्ञानोपदेशो दक्षिणा । प्राणायामो बलम् ॥ ३९ ॥

मदीयमैश्वर्यादिषाड्गुण्यं भगः । मद्भक्तिर्लाभः । भेदरहिता दृष्टिर्विद्या । अकर्मसु हेयत्वदर्शनं लज्जा ॥४०॥ नैरपेक्ष्यादिगुणाः श्रीः । दुःखसुखत्यागः सुखम् । कामसुखेच्छा दुःखम् । बन्धमोक्षवित् पण्डितः ॥४१॥ देहादिष्वहंबुद्धिर्मूर्खः । मत्प्रापको मार्गः । प्रवृत्तिमार्गः उत्पथः । सत्त्वगुणोदयः स्वर्गः ॥४२॥ तमआधिक्यं नरकः । गुरुरेव बन्धुः । नृशरीरं गृहम् । गुणसम्पन्नः आढ्यः ॥४३॥ असन्तुष्टो दरिद्रः । अजितेन्द्रियः कृपणः । विषयेष्वनासक्तः समर्थः । तेषु सक्तोऽसमर्थः ॥४४॥ हे उद्धव ! एते सर्वे तव प्रश्नाः मया सम्यङ्निरूपिताः । गुणदोषयोर्लक्षणेन बहुधा

भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः ॥ विद्याऽऽत्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु ॥ ४० ॥ श्रीर्गुणा नैरपेक्ष्याद्या सुखं दुःखसुखात्ययः ॥ दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित् ॥४१॥ मूर्खो देहाद्यहं बुद्धिः पन्था मन्निगमस्मृतः ॥ उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४२ ॥ नरकस्तम उन्नाहो बन्धुर्गुरुरहं सखे ॥ गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४३ ॥ दरिद्रो यस्त्वसन्तुष्टः कृपणो योऽजितेन्द्रियः ॥ गुणेष्वसक्तधीरीशो गुणसङ्गो विपर्ययः ॥ ४४ ॥ एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः ॥ किं वर्णितेन बहुना लक्षणं गुणदोषयोः ॥ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥ ४५ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भगवदुद्धवसंवादे ज्ञानत्यागो नाम एकोनविंशोऽध्यायः ॥ १९ ॥ उद्धव उवाच ॥ विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते ॥ अवेक्षतेऽरविन्दाक्ष गुणदोषं च कर्मणाम् ॥ १ ॥ वर्णाश्रमविकल्पं च प्रतिलोमानुलोमजम् ॥ द्रव्यदेशवयः कालान् स्वर्गं नरकमेव च ॥ २ ॥ गुणदोषभिदा दृष्टिमन्तरेण वचस्तव ॥ निःश्रेयसं कथं नृणां निषेधविधिलक्षणम् ॥ ३ ॥

वर्णितेन किम् । गुणदोषयोर्दर्शनं दोषः । गुणस्तूभयदर्शनवर्जितः स्वभावः ॥ ४५ ॥ इति श्रीभागवते म० एकादश० चू० एकोनविंशोऽध्यायः ॥ १९ ॥ विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् । गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥१॥ उद्धव उवाच ॥ हे कृष्ण ! विधिर्निषेधश्च तवाज्ञारूपो वेदः । स कर्मणां गुणदोषमवेक्षते ॥१॥ तथा वर्णाश्रमाणां भेदं गुणदोषरूपमवेक्षते । किंच प्रतिलोमानुलोमजं द्रव्यदेशवयः कालस्वर्गनरकांश्च गुणदोषरूपानवेक्षते ॥ २ ॥ एवं सति गुणदोषभिदा दृष्टिं विना ते गुणदोषरहितं वचो निःश्रेयसपरं कथं स्यात् ॥ ३ ॥

तथा पितृदेवमनुष्याणां मोक्षस्वर्गादौ साध्यमिदमस्यैतत् साधनमित्यत्र च त्वद्वाक्यरूपो वेद एव श्रेष्ठं चक्षुः। तदेवं पुनर्गुणदोषदृष्ट्यभावेसाध्यसाधनयोः प्रकाशनं न घटते ॥४॥ किंच शास्त्रेणैव विहितां भेददृष्टिं तदेव शास्त्रं कथं निवर्तयेत। अत्र भ्रमो भवति। तं निवर्तय ॥५॥ श्रीभगवानुवाच ॥ हे उद्धव! योगास्त्रिविधाः मया प्रोक्ताः ॥६॥ तत्र विरक्तानां ज्ञानयोगः सिद्धिदः। कामिनां कर्मयोगः ॥७॥ यस्तु न विरक्तो नातिसक्तश्च तस्य भक्तियोगः सिद्धिदः ॥ ८ ॥ हे उद्धव! यावद्वैराग्यमथवा मत्कथाश्रवणादौ श्रद्धा न जाता तावत् कर्माणि कुर्यात् ॥९॥ एवं

पितृदेवमनुष्याणां वेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेऽर्थे साध्यसाधनयोरपि ॥ ४ ॥ गुणदोषभिदादृष्टिर्निगमात्ते न हि स्वतः ॥ निगमेनापवादश्च भिदाया इति ह भ्रमः ॥ ५ ॥ श्रीभगवानुवाच ॥ योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया ॥ ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥६॥ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ॥ तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥ ७ ॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥ न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥८॥ तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ॥ मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥९॥ स्वधर्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव ॥ न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ॥ १० ॥ अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः ॥ ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ॥११॥ स्वर्गिणोऽप्येनमिच्छन्ति लोकं निरयिणस्तथा ॥ साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ॥ १२ ॥ न नरः स्वर्गतिं काङ्क्षेन्नारकीं वा विचक्षणः ॥ नेमं लोकं च काङ्क्षेत देहावेशात्प्रमाद्यति ॥ १३ ॥ एतद्विद्वान् पुरा मृत्योरभवाय घटेत सः ॥ अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ॥ १४ ॥

स्वधर्मस्थः स्वर्गादिषु निष्कामः सन् निषिद्धं यदि नाचरेत् तर्हि स्वर्गनरकौ न याति ॥१०॥ किंच अस्मिन्नेव देहे ज्ञानं भक्तिं वा प्राप्नोति ॥११॥ स्वर्गिणोऽप्येनं नृदेहमिच्छन्ति तथा नारकिणोऽपि ॥१२॥ अतो नरः स्वर्गमिमं लोकं च नेच्छेत् यतो देहेऽस्मिन्नासज्यावधानशून्यो भवति ॥१३॥ इदं शरीरमर्थसाधकं मर्त्यं च ज्ञात्वा मृत्योः पूर्वं मोक्षार्थं यतेत ॥ १४ ॥



१ तं निवर्तयेति शेषः। २ स्वर्गिनारकिशरीरम्।

अत्र दृष्टान्तः यथा खगश्छिद्यमानं वृक्षं हित्वाऽन्यत्र याति ॥ १५ ॥ एवमहोरात्रैः क्षीयमाणं स्वायुर्ज्ञात्वा सङ्गं हित्वा निस्पृहः सन् शान्तिं गच्छेत् ॥१६॥ यः एवं यत्नं न कुर्यात् तं निन्दति । एवं सर्वफलानां मूलं नृदेहं नौकारूपं पटुतरं गुरुकर्णधारं प्राप्य यो भवाब्धिं न तरेत् स आत्महा ॥१७॥ अथ ज्ञानी कर्मसु विरक्तः सन् निश्चलं यथा भवति तथा मनो धारयेत् ॥१८॥ धार्यमाणमपि मनः परिभ्रमत् सत् चञ्चलं

छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् ॥ खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ १५ ॥ अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः ॥ मुक्तसङ्गः परं बुद्ध्वा निरीह उपशाम्यति ॥१६॥ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥ मया अनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा ॥१७॥ यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ॥ अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ १८ ॥ धार्यमाणं मनो यर्हि भ्राम्यदाश्वनवस्थितम् ॥ अतन्द्रितोऽनुरोधेन मार्गेणात्मवशं नयेत् ॥ १९ ॥ मनोगतिं न विसृजेज्जितप्राणो जितेन्द्रियः ॥ सत्त्वसंपन्नया बुद्ध्या मन आत्मवशं नयेत् ॥ २० ॥ एष वै परमो योगो मनसः संग्रहः स्मृतः ॥ हृदयज्ञत्वमन्विच्छन् दम्यस्येवार्वतो मुहुः ॥ २१ ॥ सांख्येन सर्वभावानां प्रतिलोमानुलोमतः ॥ भवाप्ययावनुध्यायेन्मनो यावत्प्रसीदति ॥ २२ ॥ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः ॥ मनस्त्यजति दौरात्म्यं चिन्तितंस्यानुचिन्तया ॥ २३ ॥

भवेच्चेत् तर्हि किंचिदपेक्षापूरणद्वारेण स्ववशं नयेत् ॥१९॥ जितप्राणो मनोगतिं नोपेक्षेत किं तु स्वस्थः सन् मनोगतिं लक्षयेत् ॥२०॥ मनसो निग्रहः परो योगः स्मृतःअत्र दृष्टान्तः—यथाऽश्वारूढः प्रथमं किंचिद्गतिमनुवर्तते तदा च रश्मिना तं धृत्वैव गच्छति न तूपेक्षते तद्वत् ॥२१॥ किंच तत्त्वविवेकेन महदादिदेहान्तानां जन्मनाशौ यावन्मनः प्रसीदति तावदनुध्यायेत् ॥२२॥ एवं विरक्तस्य पुंसो मनोऽभिमानं त्यजति ॥२३॥

---

१ यमवन्निर्दयैः । २ स्वस्याश्रयम् । ३ भयेन वेपथुः कम्पो यस्य सः । ४ वायुना प्रेरितम् । ५ दमनीयस्य । ६ तुरगस्य । ७ प्रतिलोमतः पृथिव्यादिक्रमेण नाशम् । अनुलोमतः प्रकृत्यादिक्रमेणोत्पत्तिं च । ८ गुरूपदिष्टस्य ।

किञ्च यमादियोगमार्गैर्मम पूजोपासनाभिर्वा योग्यं मनः परमात्मानं स्मरेत् अन्यैर्न । अतोऽन्यद् न कुर्यात् ॥ २४ ॥ यदि योगी प्रमादेन निषिद्धं कर्म कुर्यात् तर्हि योगेनैव पापं दहेत् ॥२५॥ ननु प्रायश्चित्तं विना योगेनैव कथं पापं दहेत् तत्राह । स्वेस्वेऽधिकारे या स्थितिः स गुण उक्तः । अनेनोत्पत्त्यैवाशुद्धानां कर्मणां संकोचः कृतः कुतः गुणदोषविधानेन संगानां त्याजनेच्छया । अतो योगिनः स्वाभाविकप्रवृत्त्य-भावात् प्रायश्चित्तादिविधिगोचरता न ॥ २६ ॥ अथ भक्तियोगमाह । मत्कथासु श्रद्धावान् भक्तो दुःखात्मकान् कामान् वेद । परंतु तत्त्यागे-

यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ॥ ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥२४॥ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ॥ योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥२५॥ स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः॥ विपर्ययस्तु दोषः स्यादुभयोरेष निर्णयः ॥ कर्मणां जात्यशुद्धानामनेन नियमः कृतः ॥ गुणदोषविधानेन संगानां त्याजनेच्छया ॥ २६ ॥ जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु ॥ वेद दुःखात्मकान्कामान् परित्यागेऽप्यनी-श्वरः ॥ २७ ॥ ततो भजेत मां प्रीतः श्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्च तान्कामान्दुःखोदर्कांश्च गर्हयन् ॥ २८ ॥ प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ॥ कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ॥२९॥ भिद्यते हृदयग्र-न्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥३०॥ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ३१ ॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ॥ योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३२ ॥



ऽसमर्थश्चेत् तर्हि ॥२७॥ तान् कामान् सेवमानः प्रीतः सन् मां भजेत् तेषु प्रीतिं न कुर्यात् ॥ २८ ॥ एवं भक्तियोगेन भजतो नरस्य हृदि मयि स्थिते सति कामाः नश्यन्ति ॥ २९ ॥ हृदयग्रन्थिर्भिद्यते । सर्वसंशयाश्छिद्यन्ते । कर्माणि क्षीयन्ते ॥ ३० ॥ तस्माद् मद्भक्तियुक्तस्य पुंसो ज्ञान वैराग्यादिभिर्बहुधा श्रेयो न भवेत् ॥ ३१ ॥ किंच कर्मतपोज्ञानवैराग्ययोगदानादिभिः ॥ ३२ ॥

---

१ पदार्थस्य शोधनेनेत्यर्थः । २ कृच्छ्रादि प्रायश्चित्तम् । ३ पापासम्भावनायाम् । ४ सहसा सर्वतो निवृत्तिं कर्तुं न शक्यते । अत इदं न कर्तव्यमिदमेव कर्तव्यमित्येव स्वाभाविकप्रवृत्तिसंकोचद्वारेण निवृत्तिरवक्रियत ति तात्पर्यम् । ५ हृद्गताः ।

यद्भाव्यं चित्तशुद्ध्यादि सत्सर्वं मद्भक्तियोगेन मद्भक्तो लभते तथा यदीच्छति तर्हि स्वर्गं मोक्षं वा प्राप्नोति ॥३३॥ ये तु मद्भक्ताः साधवस्ते मया दत्तमपि मोक्षं न वाञ्छन्ति ॥३४॥ यतो नैरपेक्ष्यं परं श्रेयः प्राहुः । तस्माद् निराशिषो भक्तस्य मे भक्तिर्भवेत् ॥३५॥ हे उद्धव ! मय्येकान्तभक्तानां गुणदोषोद्भवाः पुण्यपापादयो गुणाः न भवन्ति ॥ ३६ ॥ हे उद्धव ! मयोदितानेतान् मार्गान् येऽनुतिष्ठन्ति ते कालमायादिरहितं मम लोकं विन्दन्ति ॥ ३७ ॥ इति श्रीभागवते म० एकादश० चू० विंशोऽध्यायः ॥ २० ॥ एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ॥ कामिनां

सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ॥ स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥ ३३ ॥ न किंचित्साधवो धीरा भक्ता ह्येकान्तिनो मम ॥ वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥३४॥ नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ॥ तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥३५॥ न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ॥ साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥ ३६ ॥ एवमेतान्मयादिष्टाननुतिष्ठन्ति मे पथः ॥ क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥३७॥ इति श्रीभा० म० एका० भगवदुद्धवसंवादे योगत्रयभक्त्यादिनि० विंशतितमोऽध्यायः ॥२०॥ श्रीभगवानुवाच॥ य एतान्मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ॥ क्षुद्रान्कामांश्चलैः प्राणैर्जुषन्तः संसरन्ति ते ॥ १ ॥ स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः ॥ विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ २ ॥ शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु ॥ द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाशुभौ ॥ ३ ॥

द्रव्यदेशादिगुणदोषाः प्रपञ्चिताः ॥१॥ श्रीभगवानुवाच । हे उद्धव ! ये भक्तिज्ञानक्रियात्मकान् त्रीन् योगान् हित्वेन्द्रियैः कामान् जुषन्ते ते गुणदोषभाजः नाना योनीः प्राप्नुवन्ति ॥१॥ एतौ गुणदोषौ त्वधिकारभेदेन कल्पितौ न वस्तुनिष्ठौ ॥२॥ तदेवाह । समानेषु वस्तुषु द्रव्यस्य योग्यमयोग्यं चेति विचिकित्सार्थं शुद्ध्यशुद्ध्यादि विधीयते ॥ ३ ॥

---

१ वैकुण्ठम् । २ बुद्धेः परम् ईश्वरम् । ३ तन्निमित्तावुपादेयत्वानुपादेयत्वे । ४ तन्निमित्तावर्थानर्थौ ।

तत्र धर्मार्थं शुद्ध्यशुद्धी । व्यवहारार्थं गुणदोषौ । यात्रार्थं शुभाशुभौ । अयमाचारः कर्मजडानां मन्वादिरूपेण मया दर्शितः ॥४॥ समानेष्वपि वस्तुष्विति यदुक्तं तत्प्रपञ्चयति । ब्रह्मादिस्थावरान्तेषु भूतेषु देहात्मत्वेनैकरूपेष्वपि वेदेन विषमाणि नामरूपाणि धर्मादि सिद्धये कल्प्यन्ते ॥५॥ ॥ ६ ॥ तथा कर्मणां सङ्कोचार्थं देशकालादीनां गुणदोषौ मया विधीयेते ॥७॥ तदेवाह । देशानां मध्ये कृष्णमृगरहितो देशोऽशुचिः कृष्णमृगयुतोऽपि सौवीरकीकटादिर्न शुचिः ॥८॥ कालस्तु द्रव्यसंपत्त्या युतः शुभः । तद्रहितः सूतकादिरशुभः ॥९॥ वस्त्रादेः शुद्ध्यशुद्धी तु द्रव्येण

धर्मार्थं व्यवहाराय यात्रार्थमिति चानघ ॥ दर्शितोऽयं मयाऽऽचारो धर्ममुद्वहतां धुरम् ॥४॥ भूम्यम्ब्वग्न्यनिलाकाशा भूतानां पञ्च धातवः ॥ आब्रह्मस्थावरादीनां शारीरा आत्मसंयुताः ॥ ५ ॥ वेदेन नामरूपाणि विषमाणि समेष्वपि ॥ धातुषूद्धव कल्प्यन्त एतेषां स्वार्थसिद्धये ॥ ६ ॥ देशकालादिभावानां वस्तूनां मम सत्तम ॥ गुणदोषौ विधीयेते नियमार्थं हि कर्मणाम् ॥७॥ अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ॥ कृष्णसारोऽप्यसौवीर कीकटासंस्कृतेरिणम् ॥ ८ ॥ कर्मण्यो गुणवान्कालो द्रव्यतः स्वत एव वा ॥ यतो निवर्त्तते कर्म स दोषोऽकर्मकः स्मृतः ॥ ९ ॥ द्रव्यस्य शुद्ध्यशुद्धी च द्रव्येण वचनेन च ॥ संस्कारेणाथ कालेन महत्त्वाल्पतयाऽथवा ॥ १० ॥ शक्त्याऽशक्त्याऽथवा बुद्ध्या समृद्ध्या च यदात्मने ॥ अघं कुर्वन्ति हि यथा देशावस्थानुसारतः ॥ ११ ॥

तोयादिना शुद्धिर्मूत्रादिना त्वशुद्धिः । ब्राह्मणवचनेनापि शुद्धमशुद्धं वेति ज्ञायते । प्रोक्षणादिना पुष्पादेः शुद्धिः अवघ्राणादिनाऽशुद्धिः । दशाहादिना नवोदकादेः शुद्धिः । पर्युषितान्नादेस्त्वशुद्धिः । चाण्डालादीनां महाजले स्पर्शेऽपि शुद्धिः, अल्पजलेस्पर्शेऽशुद्धिः ॥१०॥ ग्रहणसूतकान्नादेः शक्तान् प्रत्यशुद्धिः अशक्तान् प्रति शुद्धिः ॥ बुद्ध्या पुत्रजननादौ दशाहाद्बहिर्ज्ञानेन शुद्धिरन्तर्ज्ञानेनाशुद्धिः । समृद्ध्या जीर्णमलवद्वस्त्रादेः

१ अशुद्धावपि राजादीनां व्यवहारदर्शनाद्युपादेयं नान्यदिति । २ दोषत्वे व्यापत्सु शरीरनिर्वाहमात्रोपादाने पापमधिकोपादाने पापमिति । ३ असंस्कृतः संमार्जना दिशून्यो म्लेच्छबहुलो वा । ४ ईरिणमूषरम् । ५ यस्मिन् द्रव्यलाभेन कर्म निवर्त्तते यश्चाकर्मकः कर्मानर्हः सूतकादौ दशाहादिरूपः स कालो दोषः अशुद्ध इत्यर्थः ।

समृद्धं प्रत्यशुद्धिर्दरिद्रं प्रति शुद्धिः । एते द्रव्यवचनादयो यदात्मनेऽर्थं कुर्वन्ति तद् देशावस्थानुसारेणैव यथावत् कुर्वन्ति न सर्वतः । निर्भये एव देशे कुर्वन्ति न तु चौराद्याकुले रोगादिव्यतिरिक्तयुवाद्यवस्थायामेव कुर्वन्ति न बाल्यरोगाद्यवस्थायामिति॥११॥किं च धान्यकाष्ठगज-दन्ततैलघृतसुवर्णादीनां शुद्धिस्तु कालवाय्वग्निमृत्तोयैर्ज्ञेया ॥ १२ ॥ अमेध्यलिप्तं यत् पीठपात्रवस्त्रादि येन क्षाराम्लोदकादिना गन्धं लेपं च त्यजति तत् तस्य शोधकम् ॥ १३ ॥ कर्त्ता तु स्नानदानतप आदिना मत्स्मरणेन च देहं विशोध्य कर्माचरेत् ॥१४ ॥ किं च सद्गुरुमुखात्

धान्यदार्वस्थितन्तूनां रसतैजसचर्मणाम् ॥ कालवाय्यग्निमृत्तोयैः पार्थिवानां युतायुतैः ॥ १२ ॥ अमेध्यलिप्तं यद्येन गन्धं लेपं व्यपोहति ॥ भजते प्रकृतिं तस्य तच्छौचं तावदिष्यते ॥१३॥ स्नानदानतपोऽवस्थावीर्यसंस्कारकर्मभिः ॥ मत्स्मृत्या चात्मनः शौचं शुद्धः कर्माचरेद्द्विजः ॥ १४ ॥ मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् ॥ धर्मः संपद्यते षड्भिरधर्मस्तु विपर्ययः ॥ १५ ॥ क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः ॥ गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ १६ ॥ समानकर्माचरणं पतितानां च पातकम् ॥ औत्पत्तिको गुणः संगो न शयानः पतत्यधः ॥ ॥१७॥ यतोयतो निवर्त्तेत विमुच्येत ततस्ततः ॥ एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥१८॥ विषयेषु गुणाध्यासात्पुंसः संगस्ततो भवेत् ॥ संगात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥ १९ ॥

यथावज्ज्ञानं मन्त्रशुद्धिर्मदर्पणं कर्मशुद्धिर्देशादिषड्शुद्धिभिर्धर्मः संपद्यते॥१५॥ क्वचिद्गुणोऽपि दोषः स्यात् दोषोऽपि विधिना गुणः स्यात् । एवं यो गुणदोषयोरेकस्मिन्नर्थे नियमः स तयोर्भेदमेव बाधते ॥१६॥ पतितानां सुरापानाद्याचरणं न दोषः पूर्वमेव पतितत्वात् । यथा शयानोऽधो न पतति ॥ १७ ॥ किंच यतोयतो निवर्तेत ततस्ततो विमुच्यते । अयं धर्म्मो नृणां क्षेमकरः ॥ १८ ॥ अथ प्रवृत्तिमार्गस्यानर्थतामाह । पुंसो विषयेषु गुणाध्यासात् सङ्गः तस्मात् कामः । ततः कलहः ॥ १९ ॥

---

१ रथ्याकर्दमघटेष्टकादीनाम् । २ मिलितैः केवलैश्च । देशकालादिभिरिति शेषः । ३ इयं शुद्धिर्न व्यवहारार्था किंतु विहितकर्मार्था । ४ देशकालद्रव्यकर्तृमन्त्रकर्मेति मिलित्वा षड्भिः शुद्धैः । ५ भेदस्य वास्तवत्वे एवं विपर्ययो न स्यादित्यर्थः । ६ समानस्य तस्यैव कर्मणः सुरापानादेराचरणम् । ७ संगोऽपि यो यतेर्दोषः स गृहस्थस्यौत्पत्तिकः पूर्वस्वीकृतो न दोषोऽपितु गुणः । ऋतौ भार्यामुपेयादित्यादि विधानात् ।

कलेः क्रोधः । ततो मोहः । तेन पुंसः कार्याकार्यस्मृतिर्ग्रस्यते ॥२०॥ जन्तुस्तया रहितोऽसत्सदृशो भवति । एवं सति पुरुषार्थहानिः स्यात् ॥२१॥ ततश्चायं पुमान् भस्त्रेव श्वसन्नात्मानं परं च न वेद ॥२२॥ हे उद्धव ! इयं फलश्रुतिर्नृणां श्रेयो न किं तु भैषज्यसेवने खण्डलड्डुकादिवत् फलश्रुतिः प्रीत्युत्पत्तिकरी ॥ २३ ॥ एवं न चेत् तर्हि वेदः स्वभावत एवानर्थहेतुषु कामायुर्बलस्त्रीपुत्रादिषु सक्तमनसो मर्त्यान् नानायोनिषु भ्रमतस्तान् पुनः काम्यकर्मसु कथं युञ्ज्यात् । एवं सति वेदोऽनाप्त एव स्यात् ॥ २४ ॥ २५ ॥ एवं वेदाभिप्रायमज्ञात्वा

कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्त्तते ॥ तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम् ॥ २० ॥ तया विरहितः साधो जन्तुः शून्याय कल्पते ॥ ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च ॥२१॥ विषयाभिनिवेशेन नात्मानं वेद नापरम् ॥ वृक्षंजीविकया जीवन् व्यर्थं भस्त्रेव यः श्वसन् ॥ २२ ॥ फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् ॥ श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥ उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च ॥ आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥२४॥ न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ॥ कथं युञ्ज्यात पुनस्तेषु तांस्तमो विशतो बुधः ॥२५॥ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः ॥ फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि ॥२६॥ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः ॥ अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते ॥२७॥ न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः ॥ उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥

केचित् कुबुद्धयः फलश्रुतिं सत्यां वदन्ति ॥ २६ ॥ ते कामिनो लुब्धाः पुष्पेषु फलबुद्धयोऽग्निसाध्यकर्माभिनिवेशेन लुप्तविवेका धूमतान्ताः सन्तः आत्मतत्त्वं न विदन्ति ॥ २७ ॥ तदेवाह । हे उद्धव ! ते प्राणतर्पणपराः पुरुषाः हृदिस्थं मां न जानन्ति । यथा तमोव्याप्तचक्षुषो न जानन्ति तद्वत् ॥ २८ ॥



१ वृक्षो यथा जलमात्रग्रहणेन जीवति तथा पुरुषार्थाननुसन्धानपूर्वकमाहारग्रहणमात्रेण जीवन्नित्यर्थः । २ फलश्रुतिं कुसुमिताम् अवान्तरफलप्ररोचनया रमणीयां परमफलश्रुतिं वदन्ति ते कुबुद्धयः । हि यस्मात् वेदज्ञाः व्यासादयस्तथा न वदन्तीति । ३ धूमतान्ताः धूममार्गोऽन्ते येषां ते । ४ उक्थं कर्मैव शस्त्रं शंस्यं कथनीयं येषां ते ।

एवंभूताः ये ममास्फुटं मतं ज्ञात्वा हिंसाक्रीडकाः सन्तः ॥२९॥ पशुभिः स्वर्गसुखेच्छया यज्ञैः पितृभूतपतीन् यजन्ते ॥३०॥ ते स्वप्नोपमं परलोकमाशिषश्चास्मिँल्लोके हृदि संकल्प्य विघ्नबाहुल्यादर्थान् त्यजन्ति ॥३१॥ अतस्ते रजःसत्त्वतमोनिष्ठा इंद्रादीनुपासते न तु माम् ॥३२॥ किं च एवं विचारं कुर्वन्ति अस्मिन् लोके यज्ञैर्देवताः इष्ट्वा स्वर्गे गत्वा क्रीडामहे तदन्तेऽत्र महागृहस्थाः भूयास्म ॥३३॥ एवं पुष्पितवाचा

ते मे मतमविज्ञाय परोक्षं विषयात्मकाः ॥ हिंसाया यदि रागः स्याद्यज्ञ एव न चोदना ॥ २९ ॥ हिंसाविहारा ह्यालब्धैः पशुभिः स्वसुखेच्छया ॥ यजन्ते देवता यज्ञैः पितृभूतपतीन् खलाः ॥ ३० ॥ स्वप्नोपमममुं लोकमसन्तं श्रवणप्रियम् ॥ आशिषो हृदि संकल्प्य त्यजत्यर्थान् यथा वणिक् ॥ ३१ ॥ रजःसत्त्वतमोनिष्ठा रजःसत्त्वतमोजुषः ॥ उपासत इन्द्रमुख्यान् देवादीन्न तथैव माम् ॥ ३२ ॥ इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ॥ तस्यान्त इह भूयास्म महाशाला महाकुलाः ॥ ३३ ॥ एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् ॥ मानिनां चातिस्तब्धानां मद्वार्तापि न रोचते ॥ ३४ ॥ वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे ॥ परोक्षवादा ऋषयः परोक्षं मम च प्रियम् ॥ ३५ ॥ शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ॥ अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ३६ ॥

चञ्चलमनसां नृणां मद्वार्ताऽपि न रोचते ॥३४॥ अथ हे उद्धव ! वेदास्तु ब्रह्मात्मविषयाः ऋषयस्तु परोक्षवादाः । परोक्षं च मम प्रियम् ॥३५॥ ननु जैमिन्यादयः किमिति तथा न वर्णयन्ति तत्राह । एवंभूतं शब्दब्रह्म सुदुर्बोधम् ॥ ३६ ॥

---

१ हिंसायां मांसभक्षणार्थं तत्फलार्थं च यदि रागःस्यात्तर्हि यज्ञ एवेत्यस्यनुज्ञाद्वारा परिसंख्येयं न त्वपूर्वविधिरिति तात्पर्यम् । २ यथा कश्चिद्वणिक् दुस्तरसमुद्रलङ्घनेन बहुधनार्जनं भवतीतिश्रुत्वा तदिच्छया सिद्धं धनं त्यजन्नु-भयभ्रष्टो नौभङ्गादिना भवति तद्वदित्यर्थः । ३ ब्रह्मैवात्मा न संसारीत्येतत्पराः । ४ कर्मब्रह्मदेवताकाण्डविषयाः । ५ अस्फुटं वदन्तीति । ६ प्रथमं प्राणमयंपराख्यम् । ततो मनोमयं पश्यन्ताख्यम् । तत् इंद्रियमयं मध्यमाख्यं तस्य वाग्जनकत्वेन वागिन्द्रियप्रधानत्वात् ।

यतोऽनन्तशक्तिना मया रचितं तद्भूतेषु नादरूपेण मनीषिभिर्लक्ष्यते॥३७॥ तस्माद्वैखर्याः उत्पत्तिमाह । यथोर्णनाभिर्मुखादूर्णामुद्वमते तथा-ऽऽकाशाद्धिरण्यगर्भरूपः तेन रूपेण भगवान् ॥३८॥ वेदमूर्तिः सन् सहस्रपदवीं हृद्गतात् सूक्ष्मादोङ्कारात् कण्ठादिसङ्गेन व्यञ्जितैः स्पर्शादिभिर्भूषिताम् ॥३९॥ गायत्र्यादिच्छन्दोभिरुपलक्षितां वैखरीं वाचं हृदयात् प्रभुः सृजति संहरति च॥४०॥ तेषु कतिचिच्छन्दांसि दर्शयति। तत्र

मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना ॥ भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥ यथोर्णनाभिर्हृदयादूर्णामुद्वमते मुखात् ॥ आकाशाद् घोषवान्प्राणो मनसा स्पर्शरूपिणा ॥ ३८ ॥ छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः ॥ ओंकाराद्व्यञ्जितस्पर्शस्वरोष्मान्तःस्थभूषिताम् ॥ ३९ ॥ विचित्रभाषावितता छन्दोभिश्चतुरुत्तरैः ॥ अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम् ॥ ४० ॥ गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट् ॥ ४१ ॥ किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ॥ इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥ ४२ ॥

चतुर्विंशत्यक्षरा गायत्री । अष्टाविंशत्यक्षरोष्णिक् । एवं सर्वाणि चतुरुत्तराणि छन्दांसि ज्ञेयानि । यथान्त्यातिविराट् चतुःषष्ट्यक्षरेति॥४१॥ किं च वेदः कर्मकाण्डे विधिवाक्यैः किं विधत्ते ! देवताकाण्डे मन्त्रवाक्यैः किं प्रकाशयति । ज्ञानकाण्डे किमनूद्य विकल्पयेत् एवं वेदहृदयं मत्तोऽन्यः कश्चिदपि न वेद ॥ ४२ ॥



---

१ अपरिच्छिन्नेन। २ नादोपादानरूपेण। ३ मनसा निमित्तरूपेण। ४ स्पर्शादीन् वर्णान् रूपयति संकल्पयतीति स्पर्शरूपी तेन। कादयो मावसानाः स्पर्शाः । वर्णानामुपलक्षणमेतत्। ५ वेदमूर्तिः । स्वतस्त्वमृतमयः । प्राणविशेषणे एते । ६ ओंकारश्चात्र हृद्गतः सूक्ष्मोऽभिप्रेतः न त्वकारादिवर्णरूपः । ततो व्यञ्जितैःस्पर्शादिभिर्भूषिताम् । उक्ताःस्पर्शाः । स्वराः अकारादयः षोडश । ऊष्माणः शषसहाः । अन्तस्थाः यरलवाः । ७ लौकिकवैदिकेति विचित्रभाषा । ८ यथोत्तरं चत्वारिचत्वार्यक्षराण्युत्तराणि अधिकानि येषां तैश्छन्दोभिरुपलक्षिताम् ।

नन्‌ु तर्हि मत्कृपया कथय ओमिति कथयति । हे उद्धव ! वेदो मां विधत्ते । मामेव तत्तद्देवतारूपमभिधत्ते । यच्चाकाशादिप्रपञ्चजातं तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादिना विकल्प्यापोह्यते निराक्रियते तदप्यहमेव मत्तः पृथङ्‌ न । एतावान्सर्ववेदार्थः । तमाह । मामाश्रित्य भिदां मायामात्रमित्यनूद्य नेह नानास्ति किंचनेति प्रतिषिध्य निवृत्तव्यापारो भवति ॥४३॥ इति श्रीभागवते महापुराणे एकादशे चू० एकविंशोऽध्यायः ॥२१॥ द्वाविंशे तत्त्वसंख्यानामविरोधविधोच्यते ॥ पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च॥१॥उद्धव उवाच ॥ हे विश्वेश! ऋषिभिः कति तत्त्वानि सङ्‌ख्यातानि । त्वं तु अष्टाविंशतितत्त्वानि वदसि तदहं श्रुतवान्‌ ॥१॥ केचित्‌ २६ प्राहुः । अपरे २९ । एके ७ ।

मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम्‌ ॥ एतावान्सर्ववेदार्थः शब्द आस्थाय मां भिदाम्‌ ॥ मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति।।४३।।इति श्रीभा० महा० एका० भगवदुद्धवसंवादे गुणदोषव० एकविंशोऽध्यायः ॥ २१ ॥ उद्धव उवाच ॥ कतितत्त्वानि विश्वेश सङ्‌ख्यातान्यृषिभिः प्रभो ॥ नवैकादश पञ्च त्रीण्यात्थ त्वमिह शुश्रुम ॥१॥ केचित्षड्विंशतिं प्राहुरपरे पञ्चविंशतिम्‌ ॥ सप्तैके नव षट्‌ केचिच्चत्वार्येकादशापरे ॥ २ ॥ केचित्सप्तदश प्राहुः षोडशैके त्रयोदश ॥ एतावत्त्वं हि सङ्‌ख्यानामृषयो यद्विवक्षया ॥ गायन्ति पृथगायुष्मन्निदं नो वक्तुमर्हसि ॥३॥ श्रीभगवानुवाच ॥ युक्तं च सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा ॥ मायां मदीयामुद्‌गृह्य वदतां किंनु दुर्घटम्‌ ॥ ४ ॥ नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ॥ एवं विवदतां हेतुं शक्तयो मे दुरत्ययाः ॥ ५ ॥ यासां व्यतिकरादासीद्विकल्पो वदतां पदम्‌ ॥ प्राप्ते शमदमेऽप्येति वादस्तमनुशाम्यति ॥ ६ ॥

केचित्‌ ९ । अन्ये ६ । केचित्‌ ४ । अन्ये । ११ ॥२॥ केचित्‌ १७ । एके १६ । अन्ये १३ । एवं तत्त्वानां नानात्वं यद्विवक्षया गायन्ति तद्वद ॥३॥ श्रीभगवानुवाच ॥ हे उद्धव ! यथा ब्राह्मणाःभाषन्ते तद्युक्तं न च वस्तुतः । यस्मात्सन्ति सर्वत्रान्तर्भूतानि सर्वाणि तत्त्वानि । मन्मायां स्वीकृत्य वदतां किं दुर्घटम्‌ ॥४॥ हे विप्र ! यथा त्वं वदसि तथा न । यद्यथाहं वच्मि तत्तथैव । एवं हेतुं विवदतां मे शक्तय एव हेतुः ॥५॥ किंच यासां शक्तीनां क्षोभाद्वदतां भेदः आसीत्‌ । स भेदः शमे दमे प्राप्ते लीयते । ततो वादः शाम्यति ॥ ६ ॥

१ अमूर्तं ।

तथा कारणभूत-
हे उद्धव । तत्त्वानां परस्परानुवेशाद्वक्तुर्विवक्षया संख्यानं भवति ॥७॥ एकस्मिन्नपि तत्त्वेऽन्यतत्त्वानि प्रविष्टानि दृश्यन्ते । तथा कारणभूत-
तत्त्वे कार्यतत्त्वानि कार्यतत्त्वे कारणतत्त्वानि च प्रविष्टानि दृश्यन्ते॥८॥ अतः एषां तत्त्वानां तत्तत्कारणकार्यत्वं प्रसंख्यानं च न्यूनाधिक्यमि-
च्छतां वादिनां मध्ये यथा वक्तुमिच्छया यस्य मुखं प्रवर्तते तत्सर्वं निश्चितं वयं गृह्णीमः ॥९॥ ननु जीवेश्वरयोर्भेदाभेदविवक्षया २६–२५
तत्त्वपक्षौ कथं प्रवृत्तौ अत आह । तत्राविद्यायुक्तजीवस्य ज्ञानं स्वतो न भवति । अतो ज्ञानदोऽन्यो भवेत् । एवं भेदेन २६ पक्षः प्रवृत्तः ।

परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ ॥ पौर्वापर्यप्रसंख्यानं यथा वक्तुर्विवक्षितम् ॥ ७ ॥ एकस्मिन्नपि दृश्यन्ते प्रविष्टानी-
तराणि च ॥ पूर्वस्मिन्वाऽऽपरस्मिन्वा तत्त्वे तत्त्वानि सर्वशः ॥ ८ ॥ पौर्वापर्यमतोऽमीषां प्रसङ्ख्यानमभीप्सताम् ॥
तथा विविक्तं यद्वक्रं गृह्णीमो युक्ति संभवात् ॥ ९ ॥ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ॥ स्वतो न सम्भवादन्य-
स्तत्त्वज्ञो ज्ञानदो भवेत् ॥१०॥ पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ॥ तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥११॥
प्रकृतिर्गुणसाम्यं वै प्रकृतेर्नात्मनो गुणः ॥ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥ १२ ॥ सत्त्वं ज्ञानं रजः कर्म
तमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥ पुरुषः प्रकृतिर्व्यक्तमहंकारो नभोऽनिलः ॥
ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥

॥ १० ॥ अथ २५ पक्षमाह । पुरुषेश्वरयोर्विसदृशत्वं नास्ति । अतस्तयोरभेदात् २५ पक्षः प्रवृत्तः ॥ ११ ॥ ननु ज्ञानाज्ञानकर्मकालस्वभा-
वानां पृथक्त्वात्पक्षयोस्तत्त्वाधिक्यं स्यात् नेत्याह । सत्त्वादिगुणाः प्रकृतेरेव नात्मनः ॥ १२ ॥ सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानम् एतेषां
यथायथं स्वस्वकारणेऽन्तर्भावात्तत्त्वाधिक्यं न ॥ १३॥ तत्र नव तत्त्वानि दर्शयति । पुरुषप्रकृतिमहदहंकाराः ४ पृथ्वी १ आपः २ तेजः ३
वायुः ४ आकाशमिति भूतानि ९ ॥ १४ ॥

१ पूर्वा अल्पसंख्या अपरा अधिकसंख्या तयोर्भावः पौर्वापर्यम् । २ व्यर्था । ३ गुणानां व्यतिकरो यस्मात् स ईश्वर एव कालो नाम । ४ स्वभावो नाम सूत्रं महत्तत्त्वमेव ।

श्रोत्रत्वक्चक्षुर्घ्राणजिह्वावाक्पाणिपाय्वङ्घ्र्युपस्थानि दश १० मनः १ ॥१५॥ शब्दस्पर्शरूपरसगन्धाः ५ ॥१६॥ एतानि साधारणानि। स्वमते तु एतानि २५ गुणास्त्रयः ३ एवं २८ तत्त्वानि ॥१७॥ एतानि महदादीनि तत्त्वानि पुरुषावलोकनेन वीर्यं लब्ध्वा प्रकृतिमाश्रित्यैकीभूयाण्डं सृजन्ति ॥१८॥ अथ मतान्तरे तत्त्वानि । तत्र सप्तपक्षे भूतानि ५ जीवेश्वरौ २ एवम् ७ । तत्र प्रकृत्यादीनां कारणत्वेनाकाशादिष्वन्तर्भावः । उत्तरेषामन्तर्भावमाह । तेभ्यः सप्तभ्यो देहादिसर्वकार्याणि जायन्ते एवं सर्वत्र ज्ञातव्यम् ॥ १९ ॥ षट्पक्षे भूतानि ५ ईश्वरः १ एवम् ६ ।

श्रोत्रं त्वक् दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः ॥ वाक्पाण्युपस्थपाय्वङ्घ्रिकर्माण्यङ्गोभयं मनः ॥ १५ ॥ शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः ॥ गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥ सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी ॥ सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते ॥ १७ ॥ व्यक्तादयो विकुर्वाणा धातवः पुरुषेक्षया ॥ लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥ १८ ॥ सप्तैव धातव इति तत्रार्थाः पञ्च खादयः ॥ ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥ १९ ॥ षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान् ॥ तैर्युक्त आत्मसम्भूतैः सृष्ट्वेदं समुपाविशत् ॥ २० ॥ चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः ॥ जातानि तैरिदं जातं जन्मावयविनः खलु ॥२१॥ संख्याने सप्तदशके भूतमात्रेन्द्रियाणि च ॥ पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥ २२ ॥ तद्वत्षोडशसंख्याने आत्मैव मन उच्यते ॥ भूतेन्द्रियाणि पञ्चैव मन आत्मा त्रयोदश ॥ २३ ॥

अन्येषामन्तर्भावः ॥ २० ॥ चतुःपक्षे तेजः १ जलं २ पृथ्वी ३ आत्मा ४ । अन्येषामन्तर्भावः ॥ २१ ॥ सप्तदशपक्षे भूतानि ५ विषयाः ५ ज्ञानेन्द्रियाणि ५ मनः १ आत्मा १ एवम् १७ ॥ २२ ॥ षोडशपक्षे भूतानि ५ विषयाः ५ इन्द्रियाणि ५ मनआत्मनोरैक्यम् १ एवम् १६ । त्रयोदशपक्षे भूतानि ५ इन्द्रियाणि ५ मनः १ जीवेश्वरौ २ एवं १३ ॥ २३ ॥

---

१ अङ्ग हे उद्धव । २ उभयेन्द्रियसाधारणमित्यर्थः । ३ कर्मेन्द्रियफलानि । ४ सृज्यत्वाद्यवस्थां धत्ते । उपादानकारणरूपत्वात् । ५ अपरिणामनिमित्तभूतः सन् । ६ जानातीति ज्ञानं जीवः उभयो द्रष्टृदृश्ययोराधार आत्मा चेति सप्त । ७ जीवात्मा चेति द्विविधः ।

एकादशपक्षे भूतानि ५ इन्द्रियाणि ५ मनोजीवयोरैक्यम् १ एवम् ११ । नवपक्षे भूतानि ५ प्रकृतिः १ महत्तत्त्वम् १ अहङ्कारः १ पुरुषः १ एवं ९ ॥ २४ ॥ एवमृषिभिः कृतं तत्त्वसङ्ख्यानं युक्त्या सर्वं योज्यम् ॥ २५ ॥ उद्धव उवाच ॥ हे कृष्ण ! प्रकृतिः पुरुषश्च जडाजडस्वभावेन विलक्षणौ स्तः । तयोर्भेदो न दृश्यते ॥२६॥ तदेवाह । प्रकृतावात्माऽऽत्मनि प्रकृतिश्च लक्ष्यते । अतो भेदो न एवं मे संशयं छिन्धि ॥२७॥

एकादशत्वमात्माऽसौ महाभूतेन्द्रियाणि च ॥ अष्टौ प्रकृतयश्चैव पुरुषश्च नवेत्यथ ॥ २४ ॥ इति नानाप्रसङ्ख्यानं तत्त्वानामृषिभिः कृतम् ॥ सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥ २५ ॥ उद्धव उवाच ॥ प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ ॥ अन्योन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ॥ २६ ॥ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथात्मनि ॥ एवं मे पुण्डरीकाक्ष महान्तं संशयं हृदि ॥ छेत्तुमर्हसि सर्वज्ञ वचोभिर्नयनैपुणैः ॥ २७ ॥ त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तेऽत्र शक्तितः ॥ त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥ २८ ॥ श्रीभगवानुवाच ॥ प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ॥ एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥२९॥ ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीश्च गुणैर्विधत्ते ॥ वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ ३० ॥

हे भगवन् ! यतस्त्वमेव स्वमायागतिं जानासि ॥२८॥ श्रीभगवानुवाच ॥ हे उद्धव ! प्रकृतिः पुरुषश्चेति अत्यन्तभेद एव ! कुतः इत्यपेक्षायां प्रकृतिशब्दोक्तदेहादिसंघस्य विकारित्वं दर्शयति । एष देहादिसंघातो विकारवान् । यतो गुणक्षोभकृतः ॥ २९ ॥ नानात्वमाह । इयं मे प्रकृतिरनेकधा भेदं तद्बुद्धीश्च गुणैर्विधत्ते । अनेकत्वमाह । अयं देहादिसंघः आधिभौतिकाध्यात्मिकादिदैविकेतिरूपेण त्रिधा ॥ ३० ॥



---

१ परस्परपरिहारेणाप्रतीतेरित्यर्थः । २ तत्कार्ये देहे । ३ अहमित्यभेदप्रतीतेर्न देहात्मनोर्भेद इत्यर्थः । ४ नये युक्तौ नैपुणं येषां तैः । ५ भ्रंशः । ६ ज्ञाने । ७ रूपमिति शेषः ।

तानि दर्शयति । दृगध्यात्मम् । रूपमधिभूतम् । अस्मिन् गोलके प्रविष्टोऽर्कांशोऽधिदैवम् । एतत् त्रयं परस्परं सिद्ध्यति । यस्त्वाकाशे वर्ततेऽर्को मण्डलात्मा स स्वतः सिद्ध्यति । एवमन्येष्विन्द्रियेष्वपि । अथात्मनो विकारित्वाद्यभावेन सूर्यवद्भेदमाह । यतः आत्मैषाम-ध्यात्मादीनां कारणमित्यादि ॥३१॥ ननु पुनरपि वैलक्षण्यमेवोक्तम् । परं तु प्रपञ्चभिन्नात्मप्राप्तिः कुतः स्यात् । सा त्वहङ्कारनिवृत्त्या भवति

दृग्रूपमार्कं वपुरत्र रन्ध्रे परस्परं सिध्यति यः स्वतः खे ॥ आत्मा यदेषामपरो य आद्यः स्वयानुभूत्याऽखिलसिद्ध-सिद्धिः ॥ एवं त्वगादि श्रवणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥ ३१ ॥ योऽसौ गुणक्षोभकृतो विकारः प्रधा-नमूलान्महतः प्रसूतः ॥ अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥३२॥ आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः ॥ व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात ॥ ३३ ॥ उद्धव उवाच ॥ त्वत्तः परावृत्तधियः स्वकृतैः कर्मभिः प्रभो ॥ उच्चावचान्यथा देहान्गृह्णन्ति विसृजन्ति च ॥ ३४ ॥

सोऽहङ्कारस्तु मोहविकल्पहेतुः ॥ ३२ ॥ किंच आत्मा ज्ञानविलसितत्वात् तज्ज्ञानेन तन्निवृत्तिर्भेदनिवृत्तिश्च भवति ॥ ३३ ॥ उद्धव उवाच ॥ हे कृष्ण । आत्मनो देहान्तरगमनमकर्तुः कर्माणि च नित्यस्य जन्ममरणादि च कथम् ॥ ३४ ॥

---

१ भिन्नः । यतः एषां कारणम् । स्वप्रकाशत्वादपि भिन्न इत्याह । स्वयेति । स्वयानुभूत्या स्वतः सिद्धप्रकाशेन । अखिलानां सिद्धानां सिद्धिः प्रकाशो यस्मादिति बहुव्रीहिः । परस्पर प्रकाशकानामपि प्रकाशक इत्यर्थः । २ त्वक्स्पर्शो वायुरिति । श्रवणं शब्दो दिश इति । जिह्वा रसो वरुण इति । नासा गन्धोऽश्विनाविति । ३ यथेति शेषः । ४ चित्तेन युक्तमन्तःकरणान्तरमपि । चित्तं चेतयितव्यं वासुदेव इति । मनो मन्तव्यं चन्द्र इति । बुद्धिबोद्धव्यं ब्रह्मेति । अहङ्कारोऽहं कर्तव्यं रुद्र इति । ५ गुणक्षोभं करोतीति गुणक्षोभकृत् तस्मात् । ६ प्रधानं यस्य प्रकृतिः मूलमुपादानं तस्मात् । ७ मोहमयस्य विकल्पस्य हेतुः । ८ त्रिवृत्त्वमेवाह । वैकारिक इत्यादि । ९ विवादो भिदार्थ-निष्ठ एव न तु वस्तुमात्रनिष्ठः । १० अहंकारो विकल्पश्च व्यर्थोऽपि अर्थरहितोऽपि स्वलोकात् स्वरूपभूतान्मत्तो बहिर्मुखानां नैवोपरमेत् प्रत्युताहंकारकृतैः कर्मभिरुच्चनीचदेहेषु ते संसरन्ति ।

एतद् ज्ञानिभिर्दुर्विभाव्यं नः कथय ॥३५॥ श्रीभगवानुवाच ॥ हे उद्धव ! कर्ममयं नृणां मनो देहाद्देहान्तरं याति । ततोऽन्य एवात्मा तन्मनोऽहङ्कारेण गच्छति ॥ ३६ ॥ ततस्तन्मनः कर्मोपस्थापितान् दृष्टान् वेदोक्तान् वा विषयान् ध्यायेत् तेषु चाविर्भवेत् सत् पूर्वदेहविषयेषु च लीनं भवति तदनु जीवस्य पूर्वपरानुसन्धानं नश्यति ॥३७॥ ततश्चात्मनः पूर्वदेहेऽत्यन्तविस्मृतिः स एव मृत्युरित्युच्यते ॥ ३८ ॥ जन्म तु देहस्यात्मतया सर्वभावेनाभिमानं प्राहुः । यथा स्वप्नश्च मनोरथश्च ॥ ३९ ॥ जीवः प्राक्तनं न स्मरति । पूर्वसिद्धमप्यात्मानमद्य जातमिव

तन्ममाख्याहि गोविन्द दुर्विभाव्यमनात्मभिः ॥ न ह्येतत् प्रायशो लोके विद्वांसः सन्ति वञ्चिताः॥३५॥श्रीभगवानुवाच ॥
मनः कर्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम् ॥ लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्तते ॥३६॥ ध्यायन्मनोऽनु विषयान् दृष्टान् वाऽनुश्रुतानथ ॥ उद्यत्सीदत् कर्मतन्त्रं स्मृतिस्तदनु शाम्यति ॥ ३७ ॥ विषयाभिनिवेशेन नात्मानं यत्स्मरेत् पुनः ॥ जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥ जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः ॥ ३९ ॥ स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ ॥ तत्र पूर्वमिवात्मानमपूर्वं चानुपश्यति ॥ ४० ॥ इन्द्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि ॥ बहिरन्तर्भिदा हेतुर्जनोऽसज्जनकृद् यथा ॥४१॥ नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ॥ कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते ॥ ४२ ॥ यथार्चिषां स्रोतसां च फलानां वा वनस्पतेः ॥ तथैव सर्वभूतानां वयोऽवस्थादयः कृताः ॥ ४३ ॥

पश्यति ॥४०॥ इन्द्रियायनस्य मनसो देहान्तराभिनिवेशेन योत्पत्तिस्तयाऽऽत्मनीदमुत्तममध्यमनीचत्वमसदेव भाति ! एवंभूतः आत्मा बाह्यविषयान् सुखादींश्च पश्यति ॥४१॥ किंच शरीराणि क्षणं क्षणं समुत्पद्यन्ते नश्यन्ति च कालस्यातिसूक्ष्मत्वात् तत्कृतं भवनमभवनं वाऽविवेकिभिर्न दृश्यते ॥ ४२ ॥ किंच अर्चिषां स्रोतसां फलानां चावस्थाः कालेन कृताः तथाभूतानां वयोऽवस्थादयः कालकृताः ज्ञेयाः ॥ ४३ ॥

१ एतद् विद्वांसो न सन्ति । यतो वञ्चिताः मायया मोहिताः । २ पूर्वं चेत्यपूर्वमिव चेति चान्वयः । ३ जनः जीवः स्वप्नेऽसतो जनान् देहान् कुर्वन् पश्यन् बहुरूपो भाति तद्वत् ।

अपि च यथा सोऽयं दीपः तदिदं जलं तथा सोऽयं पुमानिति धीर्वाणी च मृषा ॥४४॥ किंच आत्मनः कर्मणा बीजभूतेन पूर्वोक्तो विवेक्यपि न जायते लये वा न म्रियते। किं त्वियं भ्रान्तिः यथाऽग्निराकल्पं स्थितोऽपि काष्ठसंयोगवियोगाभ्यां जन्मनाशौ प्राप्नोति ॥४५॥ किंच जठरे प्रवेशवृद्धिजन्मबाल्यकौमारयौवनमध्यजरामृत्यव इति नवावस्थाः देहस्य सन्ति ॥४६॥ एताः अवस्थाः देहस्य गुणसङ्गात्कश्चिद् गृह्णाति। कश्चिदीशानुग्रहात्त्यजति ॥४७॥ किञ्च आत्मनः पितृपुत्राभ्यां जन्मनाशावनुमाने कर्तव्ये जन्मनाशवतां वस्तूनां यो द्रष्टा स जन्मनाशधर्मको

सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् ॥ सोऽयं पुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥४४॥ मा स्वस्य कर्मबीजेन जायते सोऽप्ययं पुमान् ॥ म्रियते वाऽमरो भ्रान्त्या यथाऽग्निर्दारुसंयुतः ॥ ४५ ॥ निषेकगर्भजन्मानि बाल्यकौमारयौवनम् ॥ वयो मध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥४६॥ एता मनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ॥ गुणसंगादुपादत्ते क्वचित्कश्चिज्जहाति च ॥४७॥ आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ न भवाप्ययवस्तूनामभिज्ञो द्वयलक्षणः ॥४८॥ तरोर्बीजविपाकाभ्यां यो विद्वान् जन्मसंयमौ ॥ तरोर्विलक्षणो द्रष्टा एवं द्रष्टा तनोः पृथक् ॥४९॥ प्रकृतेरेवमात्मानमविविच्याबुधः पुमान् ॥ तत्त्वेन स्पर्शसंमूढः संसारं प्रतिपद्यते ॥ ५० ॥ सत्त्वसंगादृषीन् देवान् रजसाऽसुरमानुषान् ॥ तमसा भूततिर्यक्त्वं भ्रामितो याति कर्मभिः ॥ ५१ ॥ नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ॥ एवं बुद्धिगुणान्पश्यन्ननीहोप्यनुकार्यते ॥ ५२ ॥

न भवति ॥४८॥ यथा तरोर्बीजविपाकाभ्यां जन्मनाशौ द्रष्टा भिन्नः तथा शरीरस्य द्रष्टा पृथक् ॥४९॥ अथ यः प्रकृतेर्भिन्नमात्मानमज्ञात्वा तत्त्वदृष्ट्या विषयेषु मूढः स्यात्स संसारं प्राप्नोति ॥ ५० ॥ ततो जीवः सत्त्वसंगाद्देवर्षीन्रजसा दैत्यमानुषान् तमसा भूतप्रेततिर्यगादीन् स्वकर्मभिर्भ्रमन् याति ॥ ५१ ॥ यथा जीवो नृत्यतो गायतो जनान् पश्यन् स्वमनसि स्वरतालाद्यनुवर्तयति एवमिच्छारहितोऽपि बुद्धिगुणान्पश्यन्ननुकार्यते ॥ ५२ ॥

१ मृषाव्यर्थमायुर्येषाम् । अविवेकिनामित्यर्थः। २ बीजाज्जन्म विपाकात् संयमं नाशं चेति योज्यम् ।

यथा जलप्रचलनेन वृक्षाश्चला इव दृश्यन्ते मनः कल्पिता एव तेषु ते गुणाः न यथार्थतः सन्ति । अतो मनोनिबन्धन एव संसारो भासते॥५३॥ यथा मनोरथधियः स्वप्नदृष्टाः धियश्च तथा पुरुषस्य विषयानुभवो मृषा तथाऽऽत्मनः संसारोऽपि मृषैव ॥५४॥ तत्र प्रपञ्चे कोऽप्यर्थो नास्ति । तथापि संसारो जीवस्य न निवर्तते । स्वप्ने यथा सर्पदंशाद्यनर्थप्राप्तिः ॥५५॥ तस्माद् हे उद्धव ! दुष्टेन्द्रियैर्विषयान् मा भुङ्क्ष्व । इदं सर्वं भ्रमं पश्य ॥५६॥ किंच केनचिदाक्षिप्तोऽवमानितः उपहसितस्ताडितो मूत्रितो निष्ठीवनविषयीकृतः एवं बहुधा दुष्टैर्दुःखं प्रापितोऽपि श्रेयस्कामः

यथाम्भसा प्रचलता तरवोऽपि चला इव ॥ चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ ५३ ॥ यथा मनोरथधियो विषयानुभवो मृषा ॥ स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ॥ ५४ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥५५॥ तस्मादुद्धव मा भुङ्क्ष्व विषयानसदिन्द्रियैः ॥ आत्माऽग्रहणनिर्भातं पश्य वैकल्पिकं भ्रमम् ॥ ५६ ॥ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा ॥ ताडितः सन्निबद्धो वा वृत्त्यां वा परिहापितः ॥ ५७ ॥ निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः ॥ श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ॥ ५८ ॥ उद्धव उवाच ॥ यथैवमनुबुद्ध्येयं वद नो वदतांवर ॥ सुदुःसहमिमं मन्ये आत्मन्यसदतिक्रमम् ॥ ५९ ॥ विदुषामपि विश्वात्मन् प्रकृतिर्हि बलीयसी ॥ ऋते त्वद्धर्मनिरताञ्छान्तांस्ते चरणालयान् ॥ ६० ॥ इति श्रीभागवते म० एका० भगवदुद्धवसंवादे तत्त्वसंख्याऽविरोधादिव० द्वाविंशोऽध्यायः ॥ २२ ॥ बादरायणिरुवाच ॥ स एवमाशंसित उद्धवेन भागवतमुख्येन दाशार्हमुख्यः ॥ सभाजयन्भृत्यवचो मुकुन्दस्तमाबभाषे श्रवणीयवीर्यः॥१॥

पुमानात्मनाऽऽत्मानमुद्धरेत् ॥५७॥५८॥ उद्धव उवाच ॥ हे कृष्ण ! आत्मनि दुष्टकृतापराधं दुःसहं मन्ये अतो यथा बुद्ध्येयं तथा वद ॥५९॥ हे विश्वात्मन् । यतस्त्वद्धर्मरतान्भवत्पदशरणान्विना ज्ञानिनामपि प्रकृतिर्बलीयसी ॥६०॥ इति श्रीभागवते म० एकादशे चू० द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे तिरस्कारसहनोपाय ईर्यते ॥ भिक्षुगीतप्रकारेण मनसः संयमो धिया ॥ १ ॥ दुर्जनोपद्रवो नूनं दुःसहो हि महीयसाम् ॥ अतश्चतुर्भिरध्यायैः सहनोपायवर्णनम् ॥ २ ॥ श्रीशुक उवाच ॥ स कृष्णः एवमुद्धवेन प्रार्थितः सन् तद्वचः सत्कृत्य बभाषे ॥ १ ॥

१ कृतेऽपि वृत्तिनाशे ।

श्रीभगवानुवाच । हे उद्धव ! अत्र लोके स साधुर्नास्ति यो दुर्जनोक्तः क्षुभितं मनः शमयितुं समर्थः स्यात् ॥२॥ किंच पुमान् बाणैर्विद्धस्तथा न तप्यते यथा निष्ठुरवाचा ॥३॥ अत्र पुण्यमितिहासं कथयन्ति तं दुर्जनैरुपद्रुतेन केनचिद्भिक्षुणा गीतं शृणु ॥ ४ ॥ ५ ॥ हे उद्धव ! मालव-देशेषु कश्चित्कदर्यो द्विजो धनाढ्यः कृषिवाणिज्यादिवृत्तिः क्रोधी लुब्धः आसीत् ॥६॥ तेन ज्ञातयोऽतिथयश्च वाण्याऽपि नार्चिताः । तथा काले

श्रीभगवानुवाच ॥ बार्हस्पत्य स वै नात्र साधुर्वै दुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥२॥ न तथा तप्यते विद्धः पुमान्बाणैः सुमर्मगैः ॥ यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥३॥ कथयन्ति महत्पुण्यमितिहासमिहोद्धव ॥ तमहं वर्णयिष्यामि निबोध सुसमाहितः ॥४॥ केनचिद्भिक्षुणा गीतं परिभूतेन दुर्जनैः ॥ स्मरता धृतियुक्तेन विपाकं निजकर्मणाम् ॥५॥ अवन्तिषु द्विजः कश्चिदासीदाढ्यतमः श्रिया ॥ वार्तावृत्तिः कदर्यस्तु कामी लुब्धोऽतिकोपनः ॥ ६ ॥ ज्ञातयोऽतिथयस्तस्य वाङ्मात्रेणापि नार्चिता ॥ शून्यावसथ आत्मापि काले कामैरनर्चितः ॥७॥ दुःशीलस्य-कदर्यस्य द्रुह्यन्ते पुत्रबान्धवाः ॥ दारा दुहितरो भृत्या विषण्णा नाचरन्प्रियम् ॥८॥ तस्यैवं यक्षवित्तस्य च्युतस्योभय लोकतः ॥ धर्मकामविहीनस्य चुक्रुधुः पंचभागिनः ॥९॥ तदवध्यानविस्रस्तपुण्यस्कन्धस्य भूरिद ॥ अर्थोऽप्यगच्छ-न्निधनं बह्वायासपरिश्रमः ॥१०॥ ज्ञातयो जगृहुः किञ्चित्किंचिद्दस्यव उद्धव ॥ दैवतः कालतः किंचिद्ब्रह्मबन्धोर्नृपार्थि वात् ॥ ११ ॥ स एवं द्रविणे नष्टे धर्मकामविवर्जितः ॥ उपेक्षितश्च स्वजनैश्चिन्तामाप दुरत्ययाम् ॥ १२ ॥

देहोऽपि भोगादिभिर्न तोषितः ॥७॥ तस्य कदर्यस्य स्त्रीपुत्रबान्धवादयः खिन्ना भूत्वा द्रुह्यन्तस्तत्प्रियं नाचरन् ॥ ८ ॥ एवं धर्मादिरहितस्य द्रव्यरक्षकस्य तस्य पञ्चयज्ञदेवताश्चुक्रुधुः ॥ ९ ॥ ततस्तस्यातिश्रमेण प्राप्तं धनं नाशं प्राप ॥ १० ॥ तदेवाह । तद्धनं किंचिद् ज्ञातयश्चोराश्च जगृहुः ॥ किंचिद्गृहदाहादिना नष्टम् । किंचिद् राज्ञा नरैश्च हृतम् ॥११॥ एवं नष्टे द्रविणे सति स स्वजनैस्तिरस्कृतः सन् चिन्तां प्राप ॥१२॥

---

१ परुषोक्तिरूपा इषवः 'बाणाः । २ धर्मकर्महीने गृहे । ३ पञ्चयज्ञदेवतानामनादरेण विशीर्णः पुण्यस्यार्थलाभमात्रहेतुरंशो यस्य तस्य । ४ बह्वायासः कृप्यादिभिः केवलं श्रमो यस्मिन् । ५ कालतो निखातधान्या-दिनाशं प्रापेत्यर्थः ।

एवं नष्टधनस्य द्रव्यनाशात्संतप्तस्य गद्गदकण्ठस्य वैराग्यं जातम् ॥१३॥ स च कष्टमाह । वृथा माया देहस्तापितो यस्य ममार्थायासो न धर्माय न कामाय ॥ १४ ॥ बहुधा कदर्याणामर्थाः सुखाय न किन्तु तापाय अन्ते च नरकाय ॥ १५ ॥ किञ्च स्वल्पोऽपि लोभो यशः सद्गुणान् हन्ति कुष्ठं रूपमिव॥१६॥अर्थस्य पूर्वं साधने ततस्तस्मिन् सिद्धेऽपि सिद्धस्य तस्य संवर्धने रक्षणे नाश उपभोगे नृणामायासत्रासादयो भवन्ति॥१७॥स्तेयम् १ हिंसा २ अनृतम् ३ दम्भः ४ कामः ५ क्रोधः ६ गर्वः ७ मदः ८ वैरम् ९ अविश्वासः १० स्पर्धा ११ भेदः १२ स्त्रीद्यूतमद्यानि १३–१५ ॥ १८ ॥ एते पञ्चदश द्रव्यार्थेऽनर्थाः भवन्ति । तस्माच्छ्रेयोऽर्थी द्रव्यं दूरतस्त्यजेत्॥ १९॥किंच स्त्रीपितृभ्रातृसुहृदादयः सर्वे स्नेहं हित्वा काकिण्यापि सद्यः शत्रवो भवन्ति ॥२०॥ तथा मित्रत्वं हित्वा मिथस्त्यजन्ति घ्नन्ति च ॥२१॥ किञ्च अस्मिन् लोके देवैः प्रार्थ्यं विप्रदेहं प्राप्य तमनादृत्य ये स्वार्थं घ्नन्ति ते दुर्गतिं यान्ति॥२२॥अतः एवं स्वर्गमोक्षयोर्द्वारं नृदेहं प्राप्य द्रविणे कः आसक्तिं कुर्यात्॥२३॥

तस्यैवं ध्यायतो दीर्घं नष्टरायस्तपस्विनः ॥ खिद्यतो बाष्पकण्ठस्य निर्वेदः सुमहानभूत् ॥ १३ ॥ सचाहेदमहो कष्टं वृथाऽऽत्मा मेऽनुतापितः ॥ न धर्माय न कामाय यस्यार्थायास ईदृशः ॥ १४ ॥ प्रायेणार्थाः कदर्याणां न सुखाय कदाचन ॥ इह चात्मोपतापाय मृतस्य नरकाय च ॥ १५ ॥ यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ॥ लोभः स्वल्पोऽपि तान्हन्ति श्वित्रो रूपमिवेप्सितम् ॥ १६ ॥ अर्थस्य साधने सिद्ध उत्कर्षे रक्षणे व्यये ॥ नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ १७ ॥ स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः ॥ भेदो वैरमविश्वासः संस्पर्धाव्यसनानि च ॥ १८ ॥ एते पंचदशानर्था ह्यर्थमूला मता नृणाम् ॥ तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ १९ ॥ भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ॥ एकास्निग्धाः[1] काकिणिना सद्यः सर्वेऽरयः कृताः ॥२०॥ अर्थेनाल्पीयसा ह्येते संरब्धा[2] दीप्तमन्यवः ॥ त्यजन्त्याशुस्पृधो घ्नन्ति सहसोत्सृज्य सौहृदम् ॥२१॥ लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम् ॥ तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥२२॥ स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ॥ द्रविणे कोऽनुषज्जेत मर्त्योऽनर्थस्य धामनि ॥ २३ ॥

१ एके एकप्राणाश्च ते आस्निग्धाः अतिप्रियाश्च । २ स्पर्धमानाः ।

तथा देवर्षिपितृभूतबन्धवादीन् भागार्हान् यो न ददाति स नरके पतति॥२४॥द्रव्येच्छया मत्तस्य मे वयोबलादि व्यर्थं गतम्। अतः परं वृद्धोऽहं किं नु साधये ॥२५॥ एवं जानन्नप्यर्थेच्छया क्लिश्यते। अतोऽयं लोकः कस्यचिन्मायया मोहितोऽस्ति ॥२६॥ अपि च मृत्युना ग्रस्यमानस्य पुंसो धनादिभिः कर्मभिर्वा किम् ॥२७॥ मम त्वद्य हरिस्तुष्टः। यतः एवं दशां प्राप्तोऽहम् ॥२८॥ सोऽहं शेषमायुश्चेत् तर्हि तपसा स्वाङ्गं शोष-

देवर्षिपितृभूतानि ज्ञातीन् बन्धूंश्च भागिनः ॥ असंविभज्य चात्मानं यक्षवित्तः पतत्यधः ॥ २४ ॥ व्यर्थयाऽर्थेहया वित्तं प्रमत्तस्य वयो बलम् ॥ कुशला येन सिध्यन्ति जरठः किं नु साधये ॥ २५ ॥ कस्मात्संक्लिश्यते विद्वान् व्यर्थयाऽर्थेहयाऽसकृत् ॥ कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः ॥ २६ ॥ किं धनैर्धनदैर्वा किं कामैर्वा कामदैरुत[1] ॥ मृत्युना ग्रस्यमानस्य कर्मभिर्वोत जन्मदैः ॥ २७ ॥ नूनं मे भगवांस्तुष्टः सर्वदेवमयो हरिः ॥ येन नीतो दशामेतां निर्वेदश्चात्मनः प्लवः ॥२८॥ सोऽहं कालावशेषेण[3] शोषयिष्येऽङ्गमात्मनः ॥ अप्रमत्तोऽखिलस्वार्थे[2] यदि स्यात्सिद्ध आत्मनि[4] ॥ २९ ॥ तत्र मामनुमोदेरन् देवास्त्रिभुवनेश्वराः ॥ मुहूर्तेन ब्रह्मलोकं खट्वाङ्गः समसाधयत् ॥ ३० ॥ श्रीभगवानुवाच ॥ इत्यभिप्रेत्य मनसा ह्यावन्त्यो द्विजसत्तमः ॥ उन्मुच्य हृदयग्रन्थीन्शान्तो भिक्षुरभून्मुनिः ॥३१॥ स चचार महीमेतां संयतात्मेन्द्रियानिलः ॥ भिक्षार्थं नगरग्रामानसंगोऽलक्षितोऽविशत् ॥३२॥ तं वै प्रवयसं भिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वा पर्यभवन्भद्र बह्वीभिः परिभूतिभिः ॥ ३३ ॥ केचित्त्रिवेणुं जगृहुरेके पात्रं कमण्डलुम् ॥ पीठं चैकेऽक्षसूत्रं च कन्थां चीराणि केचन ॥ ३४ ॥

यिष्ये॥२९॥ तत्र देवाः मामनुगृह्णन्तु। ननु त्वं वृद्धः स्वल्पकालेन किं साधयिष्यसि तत्राह। खट्वाङ्गो मुहूर्तेन ब्रह्मलोकमसाधयत्॥३०॥ श्रीभगवानुवाच। हे उद्धव! स कदर्यः एवं निश्चित्य ममतां हित्वा भिक्षुर्बभूव॥३१॥ एतां महीं विचचार। भिक्षार्थं नगरग्रामादिष्वलक्षितो विवेश॥३२॥ तमवधूतं भिक्षुं दुर्जनाः अपमेनिरे ॥३३॥ तदाह। केचिद्भिक्षोर्दण्डं जगृहुः। एके कमण्डलुम्। केचन रुद्राक्षमालाम्। अपरे चीराणि ॥३४॥

१ उत पुनरपि। २ अखिले स्वार्थे धर्मादिसाधने। ३ कालावशेषः इति शेष। ४ आत्मन्येव सिद्धः तुष्टः सन्।

पापिष्ठाः अन्ने मूत्रयन्ति मस्तके श्लेष्माणं त्यजन्ति पुनस्तानि दर्शितानि सन्ति प्रदाय पुनर्जुगृहुः।ततो भैक्ष्यमन्नं गृहीत्वा सरित्तटे भुञ्जानस्य॥३५॥ पापिष्ठाः अन्ने मूत्रयन्ति मस्तके श्लेष्माणं त्यजन्ति मौनं धरन्तं भाषयन्ति । न वक्ति चेत् ताडयन्ति ॥३६॥ एके चौरोऽयमिति वदन्तो भीषयन्ति रज्ज्वा च बध्नन्ति ॥ ३७॥ एके निन्दन्ति अहो एष धर्मध्वजो लोकवञ्चकः क्षीणवित्तः इमां वृत्तिं जगृहे ॥ ३८ ॥ अहो एष बली सन् मौनेन बकवदर्थं साधयति ॥३९॥ एवं वदन्तो-

प्रदाय च पुनस्तानि दर्शितान्याददुर्मुनेः ॥ अन्नं च भैक्ष्यसंपन्नं भुञ्जानस्य सरित्तटे ॥ ३५ ॥ मूत्रयन्ति च पापिष्ठाः ष्ठीवन्त्यस्य च मूर्धनि॥ यतवाचं वाचयन्ति ताडयन्ति न वक्ति चेत् ॥ ३६ ॥ तर्जयन्त्यपरे वाग्भिः स्तेनोऽयमिति वादिनः॥ बध्नन्ति रज्ज्वा तं केचिद् बध्यतां बध्यतामिति ॥३७॥ क्षिपन्त्येकऽवजानन्त एष धर्मध्वजः शठः॥ क्षीणवित्त इमां वृत्तिमग्रहीत्स्वजनोज्झितः ॥३८॥ अहो एष महासारो धृतिमान्गिरिराडिव ॥ मौनेन साधयत्यर्थं बकवद्दृढ-निश्चयः ॥ ३९ ॥ इत्येके विहसन्त्येनमेके दुर्वातयन्ति च ॥ तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् ॥ ४० ॥ एवं स भौतिकं दुःखं दैहिकं दैविकं च यत् ॥ भोक्तव्यमात्मनो दिष्टं प्राप्तंप्राप्तमबुध्यत ॥ ४१ ॥ परिभूत इमां गाथामगायत नराधमैः ॥ पातयद्भिः स्वधर्मस्थो धृतिमास्थाय सात्त्विकीम् ॥४२॥ द्विज उवाच ॥ नायं जनो मे सुखदुःखहेतुर्न देवताऽऽत्मा ग्रहकर्मकालाः ॥ मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत् ॥ ४३ ॥ मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि ॥ शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति ॥ ४४ ॥

ऽधोवायुं मुञ्चन्ति तं च केचिद् बबन्धुः रुरुधुश्च ॥४०॥ एवं स प्राप्तंप्राप्तं दुःखं भोक्तव्यमात्मनो दैवप्राप्तमबुध्यत ॥४१॥ ततो दुर्जनैर्धर्मात् पातितोऽपि स्वधर्मस्थो धैर्यं धृत्वेदं जगौ ॥४२॥ द्विज उवाच । मम सुखदुःखहेतुरयं जनस्तथा देवता देहो ग्रहकर्मकालाः न सुखदुःखयोः कारणं मन एव वदन्ति ॥४३॥ एवंभूतं मनो गुणवृत्तीः सृजति गुणवृत्तिभ्यः सात्विकानि तामसानि राजसानि च कर्माणि भवन्ति । कर्मभ्यो देवतिर्यङ्नरादिजातयो भवंति ॥ ४४ ॥



१ क्रीडानिमित्तम् । २ पक्षिणम् । ३ दुर्जनाविकृतम् । ४ ज्वरादिकम् । ५ शीतोष्णादिप्रभवम् । ६ तत्तत्कर्मानुरूपाः ।

ततश्चेदं जन्ममरणमविद्यया मनोऽध्यासेन जीवस्य भवति न स्वतः । यतस्तद्रहितस्येश्वरस्य सा नास्ति । अतो जीवस्य बन्धः नेशस्य ॥४५॥ किंच दानस्वधर्मनियमयमादयः सर्वे उपायाः मनोनिग्रहार्थम् । परो योगस्तु मनोनिग्रह एव ॥४६॥ यस्य मनः शांतं तस्य दानादिना किं वद । यस्य मनोऽसंयतं तस्य दानादिभिः किमपरं प्रयोजनं स्यात् न किंचित् ॥४७॥ किं च मनसि वश्ये इन्द्रियाणि तद्देवताश्च

अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे ॥ मनः स्वलिङ्गं परिगृह्य कामाञ्जुषन्निबद्धो गुणसङ्गतोऽसौ ॥४५॥ दानं स्वधर्मो नियमो यमश्च श्रुतानि कर्माणि च सद्व्रतानि ॥ सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥ ४६ ॥ समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम् ॥ असंयतं यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः ॥ ४७ ॥ मनोवशेऽन्ये ह्यभवन् स्म देवा मनश्च नान्यस्य वशं समेति ॥ भीष्मो हि देवः सहसः सहीयान् युञ्ज्याद्वशे तं स हि देवदेवः ॥ ४८ ॥ तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् ॥ कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून् विमूढाः ॥ ४९ ॥ देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः ॥ एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ॥ ५० ॥

वशे भवंति । मनोऽन्यस्य वशं नायाति । यो मनो जयेत् स देवदेवः ॥४८॥ तत् मनोऽविजित्य केचिदसद्विग्रहं कुर्वन्ति ते मूढाः ॥ ४९ ॥ मनोमात्रमिमं देहं गृहीत्वा तत्र ममाहमिति ये बुद्धिं कुर्वन्ति ते संसारे भ्रमन्ति ॥ ५० ॥

---

१ मनसा समीहमानेन सह नियन्तृत्वेन वर्तमानोऽप्यात्मा अनीहः तत्क्रियासङ्गरहितः । यतो हिरण्मयः विद्याशक्तिप्रधानः । यतो मत्सखः मम जीवस्य सखा नियन्ता । अतः उद्विचष्टे उच्चैरतिरोहितज्ञानेन केवलं पश्यति । २ असौ पुनरहं जीवः स्वलिङ्गं स्वस्मिन् आत्मनि लिङ्गयति द्योतयति संसारमिति तथा । तन्मनः परिगृह्य आत्मत्वेन स्वीकृत्य । गुणवृत्त्या संगतः मनसा कर्मभिः सम्बद्धो गुणसङ्गाद्वा कामान् जुषन्निबद्धः । ३ नित्यनैमित्तिकः । ४ आलस्यादिना लीयमानो योगिनामपि भयंकरो मनोलक्षणो देवः । कुतः । सहसः बलादपि बलिनोऽपि वा सहीयान् बलवान् ।

यथा क्वचित् स्वदन्तैर्जिह्वां दशति तद्वेदनायां कस्मै कुप्येत् ॥५१॥
सुखदुःखहेतुर्जनश्चेत्तर्ह्यात्मनः किम्। तत् स्थूलसूक्ष्मदेहयोर्न त्वात्मनः। यथा क्वचित् स्वदन्तैर्जिह्वां दशति तद्वेदनायां कस्मै कुध्येत ॥५२॥ यदि सुखदुः-
किं च सुखदुःखयोर्हेतुर्देवता यदि तथाप्यात्मनः किम्। यतस्तद्दुःखं देवयोरेव। यदाङ्गेनाङ्गं हन्यते तदा कस्मै क्रुध्येत
खहेतुरात्मा तथाप्यन्यतः किम्। यतोऽयं निजस्वभावः अतः आत्मना विना किमपि न। यद्यस्ति तर्हि तन्मृषा। अतः कस्मै क्रुध्येत
॥५३॥ किं च सुखदुःखहेतवो ग्रहाश्चेत् तर्ह्यात्मनः किम्? तद्देहस्यैव ग्रहगतैव तु पीडा तल्लग्नोत्पन्ने देहे पुरुषस्य तस्याभिमानाद्भवति। ततो

जिह्वां क्वचित् सन्दशति स्वदद्भिस्तद्वेदनायां कतमाय
जनस्तु हेतुः सुखदुखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत्॥ कुप्येत् ॥ ५१ ॥ दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकार्ययोस्तत् ॥ यदङ्गमङ्गेन निहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ ५२ ॥ आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः ॥ न ह्यात्मनो-ऽन्यद्यदि तन्मृषा स्यात् क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ५३ ॥ ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै ॥ ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥ कर्मास्तु हेतुः सुखदुःखयोर्वै किमात्मनस्तद्धि जडाजडत्वे ॥ देहस्त्वचित् पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै नहि कर्ममूलम् ॥ ५५ ॥ कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ ॥ नाग्नेर्हि तापो न हिमस्य तत्स्यात् क्रुद्ध्येत कस्मै न परस्य द्वन्द्वम् ॥ ५६ ॥

ग्रहाद्देहाच्चान्यः कस्मै क्रुध्येत ॥५४॥ सुखदुःखहेतुः कर्म चेत्तथाप्यात्मनः किम्। तर्हि देहस्य स्यात्। तस्य न संभवति। यतः स देहो जडः
अतस्तस्य कर्मैव नास्ति तस्मात् कस्मै क्रुध्येत ॥ ५५ ॥ यदि सुखदुःखहेतुः कालः तथाप्यात्मनः किम्? कालस्य जीवात्मवद्ब्रह्मांशत्वात्
स्वांशस्य स्वतः पीडा नास्ति अतः कस्मै क्रुध्येत ॥ ५६ ॥



---

१ विकारयोः विक्रियमाणयोः देवयोः हस्तेन मुखेऽभिहस्ते तेन वा हस्ते दष्टे तदभिमानिनोर्वह्नीन्द्रयोरेव तत् नत्वविक्रियस्यानहंकारस्यात्मनः। २ यदि स्यात् अस्तीति प्रतीयेत तन्मृषैव। ३ अन्तरिक्षस्थैर्ग्रहैस्तत्रस्थस्य ग्रहस्यैव पादार्द्धादिदृष्ट्यादिभेदैः पीडां वदन्ति दैवज्ञाः नतु गृहकोणादिषु स्थितस्य तद्दृष्ट्यगोचरस्य पुरुषस्य। ४ हि यस्मात्। कर्म हेतुः स्यादेकस्य जडाजडत्वे सति जडत्वाद्विकारित्वोपपत्तेः अजडत्वाच्च हितानुसन्धानतः प्रवृत्तिसम्भवात्। ५ शुद्धज्ञानस्वरूपः। ६ शैत्यम्। ७ परस्य वस्तुनः कालादिभिन्नस्य द्वन्द्वं सुखदुःखादि नास्ति।

किंच यथाऽहङ्कारस्य द्वन्द्वसंबन्धः स्यात् तथा प्रकृतेः परस्यात्मनो न। एवं यो जानाति स भूतैर्न बिभेति ॥५७॥ अत एतामृषिभिः सेविता मात्मनिष्ठामास्थाय मुकुन्दाङ्घ्रिसेवयाऽज्ञानं तरिष्यामि ॥५८॥ श्रीभगवानुवाच ॥ हे उद्धव ! एवं नष्टद्रविणः स कदर्यो गां पर्यटन् दुष्टै-स्तिरस्कृतोऽपि गाथामिमां जगौ॥५९॥पुरुषस्य सुखदुःखदोऽन्यो नास्ति तथा मित्रोदासीनशत्रवो न।एवं सर्वोऽपि संसारोऽज्ञानतो मनोविभव मात्रकृतः न तात्त्विकः ॥६०॥ तस्माद् हे उद्धव ! सर्वात्मना मनो नियच्छ । मयि स्थापितबुद्ध्या युक्तो भव । अयमेव योगसंग्रहः ॥६१॥

न केनचित्क्वापि कथञ्चनास्य द्वन्द्वोपरागः परतः परस्य ॥ यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो न बिभेति भूतैः ॥ ५७ ॥ एतां समास्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महर्षिभिः ॥ अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रि-निषेवयैव ॥५८॥ श्रीभगवानुवाच ॥ निर्विद्य नष्टद्रविणो गतक्लमः प्रव्रज्य गां पर्यटमान इत्थम् ॥ निराकृतोऽसद्भि-रपि स्वधर्मादकम्पितोऽमुं मुनिराह गाथाम् ॥ ५९ ॥ सुखदुःखप्रदो नान्यः पुरुषस्यात्मविभ्रमः ॥ मित्रोदासीनरिपवः संसारस्तमसः कृतः ॥६०॥ तस्मात् सर्वात्मना तात निगृहाण मनो धिया ॥ मय्यावेशितया युक्त एतावान् योगसंग्रहः ॥ ६१ ॥ य एतां भिक्षुणां गीतां ब्रह्मनिष्ठा समाहितः ॥ धारयञ्छ्रावयञ्छृण्वन् द्वन्द्वैर्नैवाभिभूयते ॥ ६२ ॥ इति श्रीभाग० म० एकादश० भगवदुद्धवसंवादे भिक्षुगीता नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ श्रीभगवानुवाच ॥ अथ ते संप्रवक्ष्यामि सांख्यं पूर्वैर्विनिश्चितम् ॥ यद्विज्ञाय पुमान् सद्यो जह्याद्वैकल्पिकं भ्रमम्[1] ॥ १ ॥ आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम्[2] ॥ यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ २ ॥

य एतां भिक्षुणा गीतां ब्रह्मनिष्ठां धारयेत् श्रावयेत् शृणुयात् स सुखदुःखादिभिः पराभवं न प्राप्नोति॥६२॥ इति श्रीभा० म० एकादश० चू० त्रयोविंशोऽध्यायः॥२३॥चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते । आत्मनः सर्वभावानामागमापायचिन्तया॥१॥ स्वपदद्वन्द्वभक्ताना-मद्वन्द्वत्वाय संयमः ॥ चित्तस्योक्तः पुनः कृष्णः सांख्यमत्राह तत्कृते ॥२॥ श्रीभगवानुवाच ॥ हे उद्धव ! पूर्वनिश्चितं सांख्यं प्रवक्ष्यामि यत् ज्ञात्वा पुमान् भेदभ्रमं जह्यात् ॥१॥ प्रलये तथाऽऽद्यकृतयुगेऽन्यदापि यदा विवेकनिपुणाः जनाः भवंति तदा कृत्स्नोऽप्यर्थो ज्ञानं द्रष्टा सर्व

१ भेदनिमित्तम् । २ सुखदुःखादिरूपम् ।

ब्रह्मणि लीनमासीत् ॥२॥ तद् ब्रह्म ततो द्विधा बभूव॥३॥तयोर्मध्ये एकतरोऽर्थः सा प्रकृतिः अन्यतमोऽर्थः पुरुषः॥४॥ततःप्रकृतेः सत्त्वादयस्त्रयो गुणाः आसन्॥५॥गुणेभ्यः सूत्रं जातम् । ततो महान्॥६॥तस्मात्त्रिविधोऽहङ्कारो जातः॥७॥ततस्तामसाहङ्काराद्भूतानि राजसादिन्द्रियाणि सात्त्विकादेकादश देवताश्च अभवन्॥८॥तत एते भावाः मया प्रेरिताः सन्तः एकत्र मिलित्वाकार्यकारणसमर्थाः मत्स्थानमण्डमुत्पा-

तन्मायाफलरूपेण केवलं निर्विकल्पितम् ॥ वाङ्मनोऽगोचरं सत्यं द्विधा समभवद् बृहत् ॥ ३ ॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ॥ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ॥४॥ तमो रजः सत्त्वमिति प्रकृतेरभवन्गुणाः ॥ मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन च ॥ ५ ॥ तेभ्यः समभवत्सूत्रं महान् सूत्रेण संयुतः ॥ ततो विकुर्वतो जातोऽहङ्कारो यो विमोहनः ॥६॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् ॥ तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ॥ ७ ॥ अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च ॥ तैजसाद्देवता आसन्नेकादश च वैकृतात् ॥ ८ ॥ मया सञ्चोदिता भावाः सर्वे संहत्यकारिणः ॥ अण्डमुत्पादयासासुर्ममायतनमुत्तमम् ॥ ९ ॥ तस्मिन्नहं समभवमण्डे सलिलसंस्थितौ ॥ मम नाभ्यामभूत्पद्मं विश्वाख्यं तत्र चात्मभूः ॥१०॥ सोऽसृजत्तपसा युक्तो रजसा मदनुग्रहात् ॥ लोकान्सपालान्विश्वात्मा भूर्भुवः स्वरिति त्रिधा ॥११॥ देवानामोक आसीत्स्वर्भूतानां च भुवःपदम् ॥ मर्त्यादीनां च भूर्लोकः सिद्धानां त्रितयात्परम् ॥ अधोऽसुराणां नागानां भूमेरोकोऽसृजत्प्रभुः ॥ १२ ॥

दयामासुः ॥ ९ ॥ ततस्तस्मिन् जलस्थेऽण्डेऽहं स्थितः । ततो मम नाभ्यांपद्मं जातम् । तत्र ब्रह्मा जातः ॥ १० ॥ स रजोगुणेन युक्तः सन् मदनुग्रहात् त्रीन लोकान् भूरादीन् सपालान् ससर्ज ॥ ११ ॥ तत्रदेवानां स्वर्लोको निवासस्थानम् । भूतानामन्तरिक्षम् । मर्त्यानां भूर्लोकः । सिद्धानां महर्लोकादि । भूमेरधोऽतलादि दैत्यादीनां स्थानम् । सर्वमेतद्ब्रह्मा ससर्ज ॥ १२ ॥

१ मायादृश्यं फलं तत्प्रकाशः तद्रूपेणमायाविलासरूपेण वा । २ द्रष्टा । ३ जीवस्य भ्रमहेतुः । ४ शब्दादितन्मात्रकारणात् । ५ दशानामिन्द्रियाणां दश मनसश्च चन्द्रमा इत्येकादश ।

एवं त्रिगुणात्मककर्मणः सर्वगतयस्त्रिलोक्यामेव । योगतपः संन्यासानां महर्लोकादिगतयः ॥ १३ ॥ भक्तियोगस्य तु गतिर्वैकुण्ठम् । तद्भिना सर्वा गतयश्चलाः इत्याह । कालात्मना मयेदं जगत् संसारः उन्मज्जति निमज्जति ॥१४॥ यो यो भावः सर्वोऽपि प्रकृतिपुरुषयुक्तोऽस्ति ॥१५॥ यस्य यः आदिरन्तश्च तस्य मध्यं स एव । अतः स एव सन् सर्वो विकारो व्यवहारार्थः ! यथा कटककुण्डलादयो घटशरावादयश्च ॥१६॥ कारणरूपो महदादिभावो यत् स्वीकृत्यापरमहङ्कारादिकं कार्यं सृजति आदिरन्तो यद्यदा यस्य तत्तदा सत्यं श्रुत्योच्यते ॥ १७ ॥ सतः

**त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥ योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ॥ १३ ॥ महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् ॥ गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥१४॥ अणुर्बृहत्कृशः स्थूलो यो यो भावः प्रसिद्ध्यति ॥ सर्वोऽप्युभयसंयुक्तः प्रकृत्या पुरुषेण च ॥१५॥ यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् ॥ विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १६ ॥ यदुपादाय पूर्वस्तु भावो विकुरुतेऽपरम् ॥ आदिरन्तो यदा यस्य तत्सत्यमभिधीयते ॥ १७ ॥ प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥ १८ ॥ सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः ॥ महान्गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ॥ १९ ॥ विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः ॥ पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥ २० ॥ अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते ॥ धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २१ ॥**

कार्यस्योपादानं माया । आधारः पुरुषः गुणक्षोभेणाऽभिव्यञ्जकः कालः । एतत् त्रयं ब्रह्मरूपोऽहमेव ॥ १८ ॥ अयं महान् सर्गो यावत् परमेश्वरस्येक्षणं तावत् पितृपुत्रादिरूपेण नित्यशो वर्तते ॥१९॥ अथ प्रलयमाह । मया कालात्मना ब्रह्माण्डं व्याप्यमानं सत् भुवनैः सह प्रलयाय योग्यं भवति ॥ २० ॥ तं प्रकारमाह । शरीरमन्ने लीयते । अन्नं बीजेषु । बीजानि भूमौ भूमिर्गन्धे लीयते ॥ २१ ॥

१ गुणेषु देहेषु विविधतया सृज्यत इति गुणविसर्गो जीवः तदर्थः तद्भोगप्रयोजनः । २ यावत् स्थितेरन्तः । ३ यावच्च परमेश्वरस्येक्षणं तावत् । ४ लोकानामहरहः कल्पाः सृष्टिप्रलयाः विविधाः कल्पन्ते यस्मिंस्तान् विकल्पयतीति तथा ।

गन्धोऽप्सु प्रलीयते । जलं स्वगुणे रसे । रसो ज्योतिषि । ज्योतिः रूपे ॥२२॥ रूपं वायौ । वायुः स्वगुणे स्पर्शे । स्पर्शः आकाशे । खं शब्दे । इन्द्रियाणि स्वप्रवर्तकदेवतासु ॥ २३ ॥ देवताः मनश्च सात्त्विकाहङ्कारे । शब्दोऽहङ्कारे । त्रिविधोऽप्यहङ्कारो महत्तत्त्वे ॥ २४ ॥ महत्तत्त्वं स्वकारणेषु गुणेषु । गुणाः प्रकृतौ । सा कालेनैकीभूय तिष्ठति ॥२५॥ कालो मायाप्रवर्तके महापुरुषे महापुरुषो मय्यात्मनि । आत्मा त्वात्मस्थ एव लीयते नान्यत्र ॥२६॥ एवं विचार्यमाणस्य पुंसो मनसि वैकल्पिको भ्रमः कथं स्यात् जातो वा हृदि कथं तिष्ठेत् । यथा व्योम्नि

अप्सु प्रलीयते गन्ध आपश्च स्वगुणे रसे ॥ लीयते ज्योतिषि रसो ज्योती रूपे प्रलीयते ॥ २२ ॥ रूपं वायौ स च स्पर्शे लीयते सोऽपि चाम्बरे ॥ अम्बरं शब्दतन्मात्रे इन्द्रियाणि स्वयोनिषु ॥ २३ ॥ योनिर्वैकारिके सौम्य लीयते मनसीश्वरे ॥ शब्दो भूतादिमप्येति भूतादिर्महति प्रभुः ॥२४॥ स लीयते महान् स्वेषु गुणेषु गुणवत्तमः ॥ तेऽव्यक्ते संप्रलीयन्ते तत्काले लीयतेऽव्यये ॥ २५ ॥ कालो मायामये जीवे जीव आत्मनि मय्यजे ॥ आत्मा केवल आत्मस्थो विकल्पापायलक्षणः ॥२६॥ एवमन्वीक्षमाणस्य कथं वैकल्पिको भ्रमः ॥ मनसो हृदि तिष्ठेत व्योम्नीवार्कोदये तमः ॥ २७ ॥ एष सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः ॥ प्रतिलोमानुलोमाभ्यां परावरदृशा मया ॥ ॥ २८ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे सांख्यनिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ श्रीभगवानुवाच ॥ गुणानामसमिश्राणां पुमान्येन यथा भवेत् ॥ तन्मे पुरुषवर्येदमुपधारय शंसतः ॥ १ ॥

सूर्योदये तमः ॥२७॥ हे उद्धव ! मया प्रतिलोमानुलोमाभ्यां परावरदृशा नृणां संशयग्रन्थिभेदनः एष सांख्यो विधिः कथितः ॥२८॥ इति श्रीभागवते एकाद० चू० चतुर्विंशोऽध्यायः ॥२४॥ पञ्चविंशे स्वनैर्गुण्यप्रतिपत्त्यै निरूप्यते ॥ चित्तप्रभावसत्त्वादिगुणवृत्तिरनेकधा ॥ १ ॥ श्रीभगवानुवाच । हे उद्धव ! विभक्तानां गुणानां मध्ये पुमान् येन गुणेन यादृशो भवेत् तद् मत्तो निबोध ॥ १ ॥



---

१ शब्दश्च तन्मात्रं चेति विग्रहः कार्यः । २ नियन्तरि । मनसो विशेषणमेतत् । ३ समर्थः सर्वजगन्मोहकत्वात् । ४ ज्ञानक्रियाशक्तिमत्त्वात् । ५ उपरतवृत्तौ । ६ विकल्पापायाभ्यां विश्वोत्पत्ति प्रलयाभ्यां लक्ष्यतेऽधिष्ठानत्वेनाधिगम्यत इति तथा । ७ सह मिश्रीभूय वर्तमानाःसमिश्राः न समिश्राः असमिश्राः तेषाम् ।

तत्र सत्त्ववृत्तीराह॥शमो दमो विवेकस्तपः सत्यं तितिक्षा दया स्मृतिः सन्तोषस्त्याग इत्यादि॥२॥रजोवृत्तीराह॥अभिलाषो व्यापारो दर्पस्तृष्णा गर्वो भेदबुद्धिर्यशः प्रीतिर्हास्यमित्यादि॥३॥ततस्तमोवृत्तीराह॥क्रोधो लोभो हिंसा याञ्चा दम्भः श्रमः कलहः शोको मोहो निद्रेत्यादि॥४॥ एताः सत्त्वादिगुणानां वृत्तयो वर्णिताः॥ अथ सन्निपातं शृणु॥५॥ हे उद्धव! अहं ममेति या धीः स सन्निपातो ज्ञेयः॥ किञ्च मन आदिभिर्यो व्यवहारः सोऽपि सन्निपातः॥६॥ अपि च असौ पुमान् धर्मार्थकामेषु यदा स्थितो भवति तदाऽयं त्रिषु निष्ठारूपः सन्निपातो ज्ञेयः

शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः॥ तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः॥ २॥ काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम्॥ मदोत्साहो यशः प्रीतिर्हास्यं वीर्यं बलोद्यमः॥ ३॥ क्रोधो लोभोऽनृतं हिंसा याञ्चा दम्भः क्लमः कलिः॥ शोकमोहौ विषादार्ती निद्राऽऽशा भीरनुद्यमः॥ ४॥ सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्वशः॥ वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु॥५॥ सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः॥ व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः॥६॥ धर्मे चार्थे च कामे च यदाऽसौ परिनिष्ठितः॥ गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः॥ ७॥ प्रवृत्तिलक्षणे निष्ठा पुमान् यर्हि गृहाश्रमे॥ स्वधर्मे चानुतिष्ठेत गुणानां समितिर्हि सा॥ ८॥ पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः॥ कामादिभी रजोयुक्तं क्रोधाद्यैस्तमसा युतम्॥ ९॥ यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः॥ तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव च॥ १०॥ यदा आशिष आशास्य मां भजेत स्वकर्मभिः॥ तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम्॥ ११॥

॥७॥ यदा काम्यधर्मेषु पुंसो निष्ठा भवति यथा गृह एवासक्तः सन् स्वधर्मे तिष्ठेत् सोऽपि सन्निपातः॥८॥अथ केवलसत्त्वयुक्तं पुरुषं शमादिभिरनुमीयात्। रजोयुक्तं कामादिभिः। तमोयुक्तं क्रोधाद्यैः॥९॥पुमान् निरपेक्षः सन् यदा भक्त्या मां भजति तं पुरुषं स्त्रियं वा सत्त्वप्रकृतिं जानीयात्॥१०॥यदा कामेच्छया मां भजेत् तं रजःप्रकृतिं जानीयात्। शत्रुमारणादिकमाशास्य मां भजेत् तं तमःप्रकृतिं जानीयात्॥११॥

---

१ धनाद्यभिलाषे देवताविप्रार्थनम्। २ मदेन युद्धाद्यभिनिवेशः। ३ मात्राणि विषयाः। ४ श्रद्धेत्यादीनि क्रमेण सत्त्वरजस्तमोमयानि।

हे उद्धव। एते त्रयोगुणाः जीवस्यैव न मे। अतस्तैः स एव बध्यते नाहम्॥१२॥ यदा सत्त्वगुणो रजस्तमसी जयेत् तदा पुमान् सुखादिभि- युंज्येत ॥१३॥ यदा रजः सत्त्वतमसी जयेत् तदा पुमान् कर्मयशआदिभिः सह दुःखेन युज्येत ॥१४॥ यदा तमः सत्त्वरजसी जयेत् तदा पुमान् शोकहिंसादिभिर्युज्येत॥१५॥ यदा चित्तप्रसन्नतेन्द्रियाणां निर्वृतिर्मनो निःसङ्गं च भवेत् तदा सत्त्वमुद्रिक्तं विद्धि॥१६॥ यदा कर्मणा विकारं प्राप्नुवन् विक्षिप्तबुद्धिरिन्द्रियाणामनुपरतिः कर्मेन्द्रियाणामस्वास्थ्यं मनो भ्रान्तं च भवेत् तदोत्कृष्टं रजो जानीहि॥१७॥ यदा चित्तं

सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे॥ चित्तजा यस्तु भूतानां सज्जमानो निबध्यते ॥१२॥ यदेतरो जयेत् सत्त्वं भास्वरं विशदं शिवम्॥ तदा सुखेन युज्येत धर्मज्ञानादिभिः पुमान्॥ १३॥ यदा जयेत्तमः सत्त्वं रजः संगंभिदा- बलम्॥ तदा दुःखेन युज्येत कर्मणा यशसा श्रिया॥ १४॥ यदा जयेद्रजः सत्त्वं तमो मूढं लयं जडम्॥ युज्येत शोकमोहाभ्यां निद्रया हिंसयाऽऽशया॥ १५॥ यदा चित्तं प्रसीदेत इन्द्रियाणां च निर्वृतिः॥ देहेऽभयं मनोऽसङ्गं तत्सत्त्वं विद्धि मत्पदम्॥ १६॥ विकुर्वन् क्रियया चाधीरनिर्वृत्तिश्च चेतसाम्॥ गात्रास्वास्थ्यं मनो भ्रान्तं रज एतैर्निशामय॥ १७॥ सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम्॥ मनो नष्टं तमो ग्लानिस्तमस्तदुपधारय ॥१८॥ एधमानो गुणे सत्त्वे देवानां बलमेधते॥ असुराणां च रजसि तमस्युद्धव रक्षसाम्॥१९॥ सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्॥ प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततम्॥ २०॥

दुःखितं लीयेत मनोऽपि नष्टं खेदश्च भवेत् तदोत्कटं तमो जानीहि॥१८॥सत्त्वाधिक्ये सति देवबलं वर्धते। तथा रजआधिक्ये दैत्यानां बलं वर्धते तथा तमआधिक्ये रक्षसां बलं बर्धते॥१९॥ अथ गुणेभ्योऽवस्थाभेदमाह॥ सत्त्वाज्जन्तोर्जागृतिं विद्धि। रजसा स्वप्नं तमसा निद्रां जानीहि। त्रिष्वेकरूपं तुरीयं तत्तत्त्वं विद्यात्॥ २०॥



१ देहरूपाणामन्येषां च मध्ये। २ संगहेतुः। ३ भेदहेतुः। ४ प्रवृत्तिस्वभावम्। ५ विवेकभ्रंशकम्। ६ आवरणात्मकम्। ७ अनुद्यमात्मकम्। ८ मदुपलब्धिस्थानम्। ९ आसमन्ताद्विक्षिप्ता धीर्यस्य स आधिः
१० चेतसो ग्रहणे चिदाकारपरिणामे।

किंच ब्राह्मणाः सत्त्वेनोपर्युपरि गच्छन्ति तमसा त्वधोऽधो गच्छन्ति रजसा मनुष्या एव ॥२१॥ सत्त्वेन मृताः स्वर्गं यान्ति। रजसा मृताः नृलोकम्। तमसा मृताः नरकम्। निर्गुणाः मामेव यांति ॥२२॥ फलरहितं मदर्पणं कर्म सात्त्विकम्। फलेच्छया कृतं राजसम्॥ हिंसोद्देशेन कृतं तामसं ज्ञेयम् ॥२३॥ आत्मविषयकं ज्ञानं सात्त्विकम्। वैकल्पिकं यत् तद् राजसम्। बालमूकादिज्ञानतुल्यं यत् तत् तामसम्। मन्निष्ठं ज्ञानं निर्गुणम् ॥ २४ ॥ वने तु सात्त्विको वासः। ग्रामवासी राजसः। द्यूतगृहवासस्तामसः। मन्मन्दिरे वासो निर्गुणः ॥ २५ ॥ अनासक्तः

उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः॥तमसाऽधोध आमुख्यांद्रजसान्तरचारिणः ॥२१॥ सत्त्वे प्रलीनाःस्वर्यान्ति नरलोकं रजोलयाः ॥ तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः॥ २२ ॥ मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ॥ राजसं राजसंकल्पं हिंसाप्रायादि तामसम् ॥ २३ ॥ कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत् ॥ प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥ वने तु सात्त्विको वासो ग्रामे राजस उच्यते॥ तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम्॥२५॥सात्त्विकः कारकोऽसङ्गो रागान्धो राजसः स्मृतः॥ तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥२६॥ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी॥ तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥२७॥ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् ॥ राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ २८ ॥ सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ॥ तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥

कर्त्ता सात्त्विकः। क्रोधान्धो राजसः। अनुसन्धानशून्यस्तामसः। मदेकशरणो निर्गुणः ॥२६॥ आध्यात्मिकी श्रद्धा सात्त्विकी। कर्म श्रद्धा राजसी। अधर्म श्रद्धा तामसी। मत्सेवायां श्रद्धा निर्गुणा ॥२७॥ पथ्यं शुद्धं यद् भक्ष्यादि तत् सात्त्विकम्। कट्वम्ललवणादि तद् राजसम्। दुःखदमशुद्धं च तामसम्। च शब्दाद् मन्निवेदितं निर्गुणम् ॥ २८ ॥ आत्मानात्मविचारोत्थं सुखं सात्त्विकम्। विषयोत्थं राजसम्। मोहदुःखोत्थं तामसम्। मदाश्रयं निर्गुणम् ॥ २९ ॥

१ स्थावरानभिव्याप्य। २ अनायासतः प्राप्तम्।

भा० ए० ॥६२॥

चू० अ० २६

द्रव्यदेशफलकालज्ञानकर्मादिः सर्वो भावस्त्रिगुणात्मक एव ॥३०॥ न केवलमेष एव किन्तु यावन्तः पुरुषा व्यक्ताधिष्ठिताः दृष्टश्रुतादिभावास्ते
सर्वे त्रिगुणात्मका एव ॥३१॥ एताः गुणकर्म निबन्धनाः संसृतयो येन जिताः स भक्तियोगेन मन्निष्ठः सन् मोक्षयोग्यो भवति ॥ ३२ ॥
तस्मान्नृदेहं लब्ध्वा विषयसङ्गं त्यक्त्वा ज्ञानिनो मां भजन्तु ॥ ३३ ॥ किञ्च निःसङ्गो विद्वान् मां भजेत् तथा त्रिगुणान् जयेत् ॥ ३४ ॥
एवं भूतो यः सः लिङ्गशरीरं हित्वा मां प्राप्नोति तथा मयैव ब्रह्मणा पूर्णः सन् बहिर्विषयभोगेनान्तस्तत्स्मरणेन चरेत् ॥ ३५॥ इति श्रीभा-

द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ॥ श्रद्धावस्थाऽऽकृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥ ३० ॥ सर्वे गुणमया
भावाः पुरुषाव्यक्तधिष्ठिताः ॥ दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥३१॥ एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः ॥
येन मे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ॥ भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥ ३२ ॥ तस्माद्देहमिमं
लब्ध्वा ज्ञानविज्ञानसम्भवम् ॥ गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः॥३३॥ निःसङ्गो मां भजेद्विद्वानप्रमत्तो जिते-
न्द्रियः ॥ रजस्तमश्चाभिजयेत्सत्त्वसंसेवया मुनिः ॥ सत्त्वं चाभिजयेद्युक्तो नैरपेक्ष्येण शान्तधीः ॥३४॥ सम्पद्यते गुणै-
र्मुक्तो जीवो जीवं विहाय माम् ॥ जीवो जीवविनिर्मुक्तो गुणैश्चाशयसम्भवैः ॥ मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥
॥ ३५ ॥ इति श्रीभा० म० एकादशस्कन्धे वृत्तिभेदनि० पञ्चविंशोऽध्यायः ॥ २५ ॥ श्रीभगवानुवाच ॥ मल्लक्षण-
मिमं कामं लब्ध्वा मद्धर्म आस्थितः ॥ आनन्दं परमात्मानमात्मस्थं समुपैति माम् ॥ १ ॥

॥६२॥

गवते म० एकादश स्कन्धे चू० पञ्चविंशोऽध्यायः ॥ २५ ॥ षड्विंशे योगनिष्ठाया विघातो दुष्टसंगतः । साधुसङ्गेन तन्निष्ठा परा काष्ठेति
वर्ण्यते ॥१॥ योगिनो योगविभ्रंशः सङ्गतः संभवेदिति ॥ सर्वथा तन्निवृत्त्यर्थमैलगीतं वितन्यते ॥ २ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! पुमान्
नृदेहं लब्ध्वा भक्तिलक्षणधर्मे स्थितः सन् वर्तेत तर्हि मां प्राप्नोति ॥ १ ॥

१ अवस्था जागरणादिः । आकृतिः देवत्वादिरूपा । निष्ठा स्वर्गादिः । एवं २०–२१–२२ श्लोकोक्ताः ।

किञ्च गुणमयी या जीवोपाधिभूता तया विनिर्मुक्तः पुमान् गुणेषु वर्तमानोऽपि तैः सङ्गं नाप्नोति ॥२॥ तथाप्यसतां सङ्गं न कुर्यात् । यत स्तदनुगोऽन्धे तमसि पतति अन्धानुगोऽन्धवत् ॥३॥अत्रेतिहासमाह।ऐलश्चक्रवर्ती महाकीर्तिः प्रियया उर्वश्या वियोगाद् मुह्यन् शोकापगमे सति ततो निर्विण्णः ॥४॥ आत्मानं त्यक्त्वा गच्छन्तीं तां हे जाये ! हे घोरे!तिष्ठतिष्ठेति विक्लवो भूत्वा नग्नः उन्मत्तवद् विलपन्नन्वगात् ॥५॥ कामान् जुषन् गतागतरात्रीरजानन् कदाचित् निर्विण्णः सन्निमां गाथां जगौ॥६॥ ऐल उवाच ॥ अहो तया गृहीतकण्ठस्य मे मोहवि-

गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया ॥ गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः ॥ वर्तमानोऽपि न पुमान्यु-ज्यते वस्तुभिर्गुणैः ॥ २ ॥ सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ॥ तस्यानुगस्तमस्यन्धे पतत्यन्धानुगोऽन्ध-वत् ॥ ३ ॥ ऐलः सम्राडिमां गाथामगायत बृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णः शोकसंयमे ॥ ४ ॥ त्यक्त्वा ऽऽत्मानं व्रजन्तीं तां नग्न उन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जाये घोरे तिष्ठेति विक्लवः ॥५॥ कामानतृप्तोऽनुजुषन्क्षुल्ल-कान्वर्षयामिनीः ॥ न वेद यान्तीर्नायान्तीरुर्वश्याऽऽकृष्टचेतनः ॥ ६ ॥ ऐल उवाच ॥ अहो मे मोहविस्तारः कामक-श्मलचेतसः ॥ देव्या गृहीतकण्ठस्य नायुःखण्डा इमे स्मृताः ॥ ७ ॥ नाहं वेदाभिनिर्मुक्तः सूर्यो वाऽभ्युदितोऽमुया ॥ मुषितो वर्षपूगानां बताहानि गतान्युत ॥ ८ ॥ अहो मे आत्मसंमोहो येनात्मा योषितां कृतः ॥ क्रीडामृगश्चक्रवर्ती नरदेवशिखामणिः ॥ ९ ॥ सपरिच्छदमात्मानं हित्वा तृणमिवेश्वरम् ॥ यान्तीं स्त्रियं चान्वगमं नग्न उन्मत्तवद्रुदन् ॥ १० ॥ कुतस्तस्यानुभावः स्यात्तेज ईशत्वमेव वा ॥ योऽन्वगच्छम् स्त्रियं यान्तीं खरवत्पादताडितः ॥ ११ ॥

स्तारं पश्यत । यतो मयेमे दिनरात्रिरूपाः आयुःखण्डा न स्मृताः ॥७॥ किञ्च अनया वञ्चितः सन्नहं सूर्यास्तोदयौ न वेद॥८॥ अहो आत्म-संमोहः येन मोहेनायं चक्रवर्ती मद्देहः क्रीडामृगवत् तदधीनः कृतः ॥९॥ किञ्च चक्रवर्तिनं मां तृणमिव हित्वा यान्तीं तां नग्नः उन्मत्तवद् रुदन्नन्वगमम् ॥१०॥ योऽहं खरवत् पादताडितोऽपि तामगच्छम् एवंविधस्य मे प्रभावस्तेजः स्वामित्वं कुतः स्यात् ॥ ११ ॥

१ शिश्नोदरे तर्पयन्तीति तेषाम् । २ अस्तमितः । ३ राज्यादिसहितम् ।

किं च योऽहमीश्वरत्वं प्राप्य स्त्रीभिर्गोखरवद् जितः। अतःस्वार्थेऽज्ञं मां
यस्य मनः स्त्रीभिर्हृतं तस्य विद्यातपःसंन्यासादिभिः किम्॥१२॥ धिक्॥१३॥ अहो कष्टं तस्याः अधरामृतं बहुकालं सेवतो मम कामोऽद्यापि न तृप्यति॥१४॥ पुंश्चल्या हृतं मे चित्तं हरिं विनाऽन्यो मोचयितुं कः समर्थः ॥ १५ ॥ उर्वश्या यथार्थवचनेन बोधितस्यापि मे मनोगतमोहो न गच्छति ॥ १६ ॥ अतः कामिनामस्माकमुर्वश्याः अपकारः कः कृतः न कोऽपि अतोऽहमेवापराधी ॥ १७ ॥ किञ्च अयं मलिनकायः क्क तत्र सौकुमार्यसुगन्धादिगुणः क्व । परंतु तत्राध्यासोऽविद्यया

किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ॥ किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ १२ ॥ स्वार्थस्याकोविदं धिङ् मां मूर्खं पंडितमानिनम् ॥ योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ॥ १३ ॥ सेवतो वर्षपूगान् मे उर्वश्या अधरासवम् ॥ न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥ १४ ॥ पुंश्चल्याऽपहृतं चित्तं को न्वन्यो मोचितुं प्रभुः ॥ आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ॥ १५ ॥ बोधितस्यापि देव्या मे सूक्तवाक्येन दुर्मतेः ॥ मनोगतो महामोहो नापयात्यजितात्मनः ॥ १६ ॥ किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः ॥ रज्जुस्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥१७॥ क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ॥ क्व गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १८ ॥ पित्रोः किं स्वं नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ॥ किमात्मनः किं सुहृदामिति यो नावसीयते ॥ १९ ॥ तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विषज्जते ॥ अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियः ॥ २० ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ॥ विण्मूत्रपूये रमतां कृमीणां कियदन्तरम् ॥ २१ ॥

कृतः ॥ १८ ॥ तत्र ममत्वमपि परिकल्पितमित्याह । अयं देहः पित्रोः किं वा भार्यायाः स्वामिनः श्वगृध्रयोर्वा इत्येवं यो न निश्चीयते ॥१९॥ स तत्रामेध्ये विषज्जते तदाह । अहो स्त्रियो मुखं सुमङ्गलं सुस्मितम् ॥ २० ॥ परंतु त्वङ्मांसरुधिरादिरचिते देहे विण्मूत्रपूये रमतां पुंसां कृमीणां च कियदंतरम् ॥ २१ ॥



---

१ एकान्तसेवया । २ यद् यस्माद् योऽहमजितेन्द्रियः स एवापराधीति योज्यम् । ३ तुच्छा कृमिविड्भस्मलक्षणा निष्ठा अन्तो यस्य तस्मिन् ।

अतः स्त्रीषु स्त्रैणेषु च सङ्गं न कुर्यात्। यतो विषयेन्द्रियसंयोगान्मनः क्षुभ्यति ॥ २२ ॥ किंच अदृष्टश्रुतपदार्थान्मनःक्षोभो न जायते। इन्द्रियाणि स्वाधीनं कुर्वतः पुंसो मनः शाम्यति ॥२३॥ तस्मात् स्त्रीषु स्त्रैणेषु सङ्गो न कार्यः। यतः षड्वर्गो ज्ञानिनामपि न विश्वसनीयः मादृशां किं वक्तव्यम् ॥ २४ ॥ श्रीभगवानुवाच ॥ एवं स राजा गाथां गायन् सन्नुर्वशीलोकंहित्वाऽऽत्मनि मां प्राप्योपारमत् ॥ २५ ॥ हे उद्धव ! अतो दुःसङ्गं हित्वा सत्सु सज्जेत। सन्तः एतस्य हितोपदेशैर्व्यासङ्गं छिन्दन्ति ॥२६॥ सतां लक्षणमाह। मच्चित्ताः इच्छारहिताः।

अथापि नोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित् ॥ विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥२२॥ अदृष्टादश्रुताद्भावान्नभाव उपजायते ॥ असम्प्रयुञ्जतः प्राणाञ्छाम्यति स्तिमितंमनः ॥ २३ ॥ तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः ॥ विदुषां चाप्यविश्रब्धः षड्वर्गः किमु मादृशाम् ॥ २४ ॥ श्रीभगवानुवाच ॥ एवं प्रगायन्नरदेवदेवः स उर्वशीलोकमथो विहाय ॥ आत्मानमात्मन्यवगम्य मां वै उपारमज्ज्ञानविधूतमोहः ॥ २५ ॥ ततो दुःसंगमुत्सृज्य सत्सु सज्जेत बुद्धिमान् ॥ सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः॥२६॥सन्तोऽनपेक्षा मच्चित्ताः प्रणताः समदर्शनाः॥ निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ॥२७॥ तेषु नित्यं महाभाग महाभागेषु मत्कथाः ॥ संभवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् ॥२८॥ ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ॥ मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ २९ ॥ भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ॥ मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ३० ॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम् ॥ शीतं भयं तमोऽप्येति साधून्संसेवतस्तथा ॥ ३१ ॥

समदर्शनाः निरहङ्काराः। एवंभूताः साधव इति ॥२७॥ तेषु मत्कथाः नित्यं सम्भवन्ति। ताः शृण्वतामघं पुनन्ति ॥२८॥ ताः ये शृण्वन्ति गायन्ति ते मयि भक्तिं विन्दन्ति॥२९॥ मयि भक्तिं लब्धवतः साधोः किमपि नावशिष्यते ॥ ३० ॥ यथाऽग्निमाश्रितस्य शीतं भयं तमो नश्यति तथा साधून् सेवतः पुंसः कर्मादिजाड्यमागामि संसारभयं तन्मूलमज्ञानं च नश्यति ॥ ३१ ॥

१ अनियच्छतः।

अत्र घोरे भवाब्धावुच्चनीचयोनीर्गच्छतां नृणां परमाश्रयः साधुरेव–अप्सु मज्जतां नौरिव ॥३२॥ प्राणिनां प्राणाः अन्नम् । दुःखितानां रक्षण कर्ताहम् । नृणां परलोके धर्म एव वित्तं यथा तथा संसारतापाद्बिभ्यतः पुंसः शरणं साधुरिति ॥ ३३ ॥ किं च सन्तः सगुणनिर्गुणज्ञानानि दिशन्ति । देवताः बान्धवाः संतः आत्मा संतः सन्तोऽहमेव ॥३४॥ हे उद्धव ! एवं पुरूरवाः उर्वश्याः लोकनिःस्पृहः सन् मुक्तसङ्गः एतां महीं विचचार ॥ ३५ ॥ इति श्रीभाग० एकादशे चू० षड्विंशोऽध्यायः ॥ २६ ॥ सप्तविंशे क्रियायोगः सद्यश्चित्तप्रसादकः ॥ सर्वकामाप्तिहेतुश्च

अन्नं हि प्राणिनां प्राणा आर्तानां शरणं त्वहम् ॥ धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग्बिभ्यतोऽरणम् ॥ ३३ ॥ सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः ॥ देवता बान्धवाः सन्तः सन्त आत्माहमेव च ॥ ३४ ॥ वैतसेनस्ततोऽप्येवमुर्वश्या लोकनिःस्पृहः ॥ मुक्तसङ्गो महीमेतामात्मारामश्चचार ह ॥ ३५ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे ऐलगीतं नाम षड्विंशोऽध्यायः ॥ २६ ॥ उद्धव उवाच ॥ क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ॥ यस्मात्त्वां ये यथार्चन्ति सात्वताः सात्वतर्षभ ॥ १ ॥ एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ॥ नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥ २ ॥ निःसृतं ते मुखाम्भोजाद्यदाह भगवानजः ॥ पुत्रेभ्यो भृगुमुख्येभ्यो देव्यै च भगवान्भवः ॥ ३ ॥ एतद्वै सर्ववर्णानामाश्रमाणां च संमतम् ॥ श्रेयसामुत्तमं मन्ये स्त्रीशूद्राणां च मानद ॥ ४ ॥

निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम् ॥ सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ३२ ॥

साङ्गः प्रोक्तः समासतः ॥१॥ रागाद्याकुलचित्तानां कुतोऽऽसङ्गादिसम्भवः ॥ इति कृष्णार्चनं भद्रमनुस्मृत्यानुपृच्छति ॥२॥ उद्धव उवाच ॥ हे कृष्ण ! भक्ता यथा त्वामर्चयन्ति तथा भवदाराधनं क्रियायोगं समाचक्ष्व ॥ १ ॥ किंच एतदेव नृणां कल्याणकरम् इति नारदव्यासादयो मुनयो वदंति ॥२॥ यथा त्वयापि ब्रह्मणे उपदिष्टम् । ब्रह्मा स्वपुत्रेभ्यो भृग्वादिभ्यः आह । तथा शिवः पार्वत्यै आह ॥ ३॥एतद्वर्णाश्रमाणां स्त्रीशूद्राणां चोत्तमं श्रेयःसाधनं मन्ये ॥ ४ ॥

१ ये यथा यस्मात् त्वामर्चयन्तीति योज्यम् ।

अतो हे कमलपत्राक्ष ! कर्मबन्धविमोचनमिदं भक्ताय मे ब्रूहि ॥५॥ श्रीभगवानुवाच ॥ हे उद्धव ! कर्मकाण्डस्यान्तो नास्ति । तथापि संक्षेपेण वर्णयिष्यामि ॥ ६ ॥ तत्र मे पूजाविधिस्त्रिधा–वैदिकः १ तान्त्रिकः २ मिश्रः ३ इति । तेष्वीप्सितेन मां पूजयेत् ॥ ७ ॥ तदाह । अथ पुरुषो द्विजत्वं प्राप्य स्ववेदेन भक्त्या यथा यजेत् तथा शृणु ॥८॥ प्रतिमाभूम्यग्निसूर्यजलहृदयद्विजगुरुषु मामर्चयेत् ॥९॥ आदौ दन्तान् संशोध्य स्नानं कृत्वा ततो मन्त्रैर्मृत्तिकादिस्नानं कुर्यात् ॥१०॥ ततः सन्ध्यादिकर्माणि वेदेन साकल्येन विहितानि कृत्वा ततः संकल्प्य

एतत्कमलपत्राक्ष कर्मबन्धविमोचनम् ॥ भक्ताय चानुरक्ताय ब्रूहि विश्वेश्वरेश्वर ॥ ५ ॥ श्रीभगवानुवाच ॥ न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ॥ संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥ ६ ॥ वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ॥ त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ७ ॥ यदा स्वनिगमेनोक्तंद्विजत्वं प्राप्य पूरुषः ॥ यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥ ८ ॥ अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाप्सु हृदि द्विजे ॥ द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ ९ ॥ पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ॥ उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिभिः ॥ १० ॥ संध्योपास्त्यादिकर्माणि वेदेनाऽऽचोदितानि ये ॥ पूजां तैः कल्पयेत् सम्यक्संकल्पः[1] कर्मपावनीम्[2] ॥११॥ शैली दारुमयी लौही लेप्या लेख्या च सैकती ॥ मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥ ॥ १२ ॥ चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम्[3] ॥ उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ॥ १३ ॥ अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद् द्वयम् ॥ स्नपनं त्वविलेप्यायामन्यत्र[4] परिमार्जनम् ॥ १४ ॥

मां पूजयेत्॥११॥पूजाभेदमाह । पाषाणमयी काष्ठमयी स्वर्णताम्रादिमयी मृच्चन्दनादिमयी लेख्या वालुकामयी मनोमयी मणिमयी । एताः अष्टविधाः प्रतिमाः ॥१२॥ तत्र प्रतिमा चलाचलेति द्विविधा । तत्र स्थिरायामावाहनविसर्जने न स्तः ॥ १३ ॥ चलायां विकल्पः । भूमौ तु द्वयमपि । लेप्यायां लेख्यायां च मार्जनम् ॥ १४ ॥

---

१ सम्यक् परमेश्वरविषय एव संकल्पो यस्य सः । २ कर्मनिर्हारिणीम् । ३ भगवन्मन्दिरम् । ४ मृन्मयलेख्यव्यतिरिक्तायाम् ।

प्रतिमादिषु सकामस्य नानाद्रव्यैर्मत्पूजा निष्कामस्य यथालब्धद्रव्यैः । हृदि चेत् तदा मानसोपचारैर्मत्पूजा ॥१५॥ प्रतिमायां स्नानवस्त्रालङ्कारादिकरणं मे प्रियम् । भूमौ देवानां तत्तन्मन्त्रैः स्थापनम् । अग्नौ हविः ॥१६॥ सूर्ये उपस्थानादि । जले तर्पणादि । श्रद्धया भक्तेन दत्तं जलमपि मे प्रियम् ॥१७॥ अभक्तदत्तं भूर्यपि मे संतोषाय न स्यात् ॥१८॥ अथ कर्त्ता प्रागेव संभृतपूजासाधनः पवित्रः सन् कुशासने उपविश्य पूर्वमुखः उत्तरमुखः संमुखो वा स्थित्वा ॥ १९ ॥ न्यासादि कृत्वा कृतमूलमन्त्रन्यासां प्रतिमां निर्माल्यापकर्षणादिना संशोधयेत् ।

द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ॥ भक्तस्य च यथा लब्धैर्हृदि भावेन चैव हि ॥ १५ ॥ स्नानालङ्करणं प्रेष्ठमर्चायामेव तूद्धव ॥ स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ॥ १६ ॥ सूर्ये चाभ्यर्हणं प्रेष्ठं सलिले सलिलादिभिः ॥ श्रद्धयोपाहृतं प्रेष्ठं भक्तेन मम वार्यपि ॥१७॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः ॥ १८ ॥ शुचिः संभृतसंभारः प्राग्दर्भैः कल्पितासनः ॥ आसीनः प्रागुदग् वार्चेदर्चायामथ सम्मुखः ॥१९॥ कृतन्यासः कृतन्यासां मदर्चां पाणिना मृजेत् ॥ कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ॥ २० ॥ तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ॥ प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ॥ २१ ॥ पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि दैशिकः ॥ हृदा शीर्ष्णाथ शिखया गायत्र्या चाभिमन्त्रयेत ॥ २२ ॥ पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ॥ अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥ २३ ॥

कलशादिपूजाद्रव्यपात्राणि निधाय गन्धाक्षतैः कलशं संपूज्य॥२०॥प्रोक्षणीयाद्भिः पूजाद्रव्याणि देवपूजास्थानं च संप्रोक्ष्य॥२१॥पाद्यार्घ्याचमनीयार्थं पात्रत्रयमासाद्य हृच्छीर्षशिखामन्त्रैः क्रमेणाभिमन्त्र्य ततः सर्वाणि गायत्रीमन्त्रेण प्रोक्षयेत् ॥ २२ ॥ ततो भूतशुद्ध्यादि कृत्वा स्वदेहे हृत्पद्मस्थां श्रीनारायणमूर्तिं ध्यात्वा ॥ २३ ॥



---

१ प्रोक्षणार्थोदकपात्रम् । २ कोष्ठगतेन वायुना संशोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृतप्लावनेनामृतमये जाते । ३ प्रणवस्याकारोकारमकारबिन्दुनादाः पञ्चांशास्तत्र नादान्ते सिद्धैर्ध्याताम् ।

तां मानसोपचारैः संपूज्य ततः प्रतिमादिषु तां निधाय पूजयेत् ॥ २४ ॥ तदाह । पाद्यार्घ्याद्युपचारान् प्रकल्प्य धर्मादिभिर्नवभिर्ममासनं कल्पयित्वा ॥ २५ ॥ तत्राष्टदलं पद्मं कृत्वा वेदतन्त्राभ्यामायुधपार्षदगणादीन् पूजयेत् ॥ २६ ॥ तन्नामानि सुदर्शनं शङ्खं गदां खड्गं धनुर्हलं मुसलं बाणान् कौस्तुभं मालादीन् ॥ २७ ॥ तथा नन्दं सुनन्दं गरुडं प्रचण्डं चण्डं महाबलं बलं कुमुदं कुमुदेक्षणम् ॥२८॥ दुर्गां गणेशं व्यासं विष्वक्सेनं गुरून् लोकपालान् प्रतिसंमुखान् स्वे स्वे स्थाने निधाय पूजयेत् ॥ २९ ॥ ततश्चन्दनकर्पूरकेशरादिसुवासितैर्जलैर्मां

तयात्मभूतया पिण्डे व्याप्ते संपूज्य तन्मयः ॥ आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥२४॥ पाद्योपस्पर्शार्हणादीनुपचारान् प्रकल्पयेत् ॥ धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ॥ २५ ॥ पद्ममष्टदलं तत्र कर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ॥२६॥ सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ॥ मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥ २७ ॥ नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ॥ महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥२८॥ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ॥ स्वे स्वे स्थाने त्वभिमुखान् पूजयेत्प्रोक्षणादिभिः ॥२९॥ चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ॥ सलिलैः स्नापयेमन्त्रैर्नित्यदा विभवे सति ॥ ३० ॥ स्वर्णधर्मानुवाकेन महापुरुषविद्यया ॥ पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥ ३१ ॥ वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ॥ अलंकुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥ ३२ ॥ पाद्यमाचमनीयं च गन्धं सुमनसोऽक्षतान् ॥ धूपदीपोपहार्याणि दद्यान्मे श्रद्धयार्चकः ॥ ३३ ॥ गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ॥ संयावदधिसूपांश्च नैवेद्यं सति कल्पयेत् ॥ ३४ ॥

विभवे सति ॥ ३० ॥ स्वर्णघर्मानुवाकेन महापुरुषविद्यया पुरुषसूक्तेन वा स्नापयेत् ॥ ३१ ॥ तथा वस्त्रोपवीताभरणस्रग्गन्धलेपनैर्मामलंकुर्वीत ॥ ३२ ॥ पाद्यमाचमनीयं गन्धपुष्पाक्षतादि धूपदीपनैवेद्यानि च मे दद्यात् ॥ ३३ ॥ तथा गुडं पायसं घृतं शष्कुल्यपूपमोदकान् संयावदधिसूपादीन् नैवेद्यं कल्पयेत् ॥ ३४ ॥

१ धर्मादिभिर्नवभिः शक्तिभिश्चासनं कल्पयित्वा । धर्मादयः श्रीधरीयटीकातो ज्ञेयाः । २ कर्णिकया केसरैः तत्रस्थसूर्यादिमण्डलश्चोज्ज्वलम् । ३ वेदतन्त्रोक्तमुक्तिभुक्तिप्राप्तये ।

तथाऽभ्यङ्गोन्मर्दनाभिषेकादि गीतनृत्यादि चैकादश्याद्युत्सवे प्रत्यहं वा कुर्यात् ॥ ३५ ॥ अग्नावपि पूजाप्रकारमाह । विधिना कुण्डं निर्माय तत्राग्निं संस्थाप्यान्वाधाय परिसमूहनादि कृत्वा तत्र मां ध्यायेत् ॥ ३६ ॥ ३७ ॥ ध्यानप्रकारमाह । शङ्खचक्रगदापद्मयुक्तैश्चतुर्भुजैः शोभितं पीताम्बरम् ॥ ३८ ॥ किरीटकङ्कणकटिसूत्राङ्गदैर्युक्तं कौस्तुभादिभिः शोभितम् ॥ ३९ ॥ एवंभूतं मां ध्यायन् सन्नभ्यर्च्य घृतप्लुतसमिधोऽग्नौ

अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ॥ अन्नाद्यं गीतनृत्यानि पर्वणि स्युरुतान्वहम् ॥ ३५ ॥ विधिना विहिते कुण्डे मेखलागर्तवेदिभिः ॥ अग्निमाधाय परितः समूहेत् पाणिनोदितम् ॥ ३६ ॥ परिस्तीर्याथ पर्युक्षेदन्वाधाय यथा विधि ॥ प्रोक्षण्याऽऽसाद्य द्रव्याणि प्रोक्ष्याग्नौ भावयेत माम् ॥ ३७ ॥ तप्तजाम्बूनदप्रख्यैः शंखचक्रगदाम्बुजैः ॥ लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥ ३८ ॥ स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ॥ श्रीवत्सवक्षसं भ्राजत्कौ-स्तुभं वनमालिनम् ॥३९॥ ध्यायन्नभ्यर्च्य दारूणि हविषाऽभिघृतानि च ॥ प्रास्याज्यभागावाघारौ दत्त्वा चाज्यप्लुतं हविः ॥ ४०॥ जुहुयान्मूलमन्त्रेण षोडशर्चाऽवदानतः ॥ धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥ ४१ ॥ अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ॥ मूलमन्त्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥४२॥ दत्त्वाऽऽचमनमुच्छेषं विष्वक्सेनाय कल्पयेत् ॥ मुखवासं सुरभिमत्ताम्बूलाद्यमथार्हयेत् ॥ ४३ ॥ उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम ॥ मत्कथाः श्रावयञ्छृण्वन् मुहूर्तं क्षणिको भवेत् ॥ ४४ ॥

प्रक्षिप्याज्यभागावाघारौ च हुत्वा॥४०॥ततो मूलमन्त्रेण पुरुषसूक्तेन च प्रत्यृचमाहुतिग्रहेण हुत्वा धर्मादिभ्यश्च पूजाक्रमेणैव नाममन्त्रैर्हुत्वा स्विष्टकृतं जुहुयात् ॥४१॥ ततोऽग्निष्ठं मां संपूज्य नत्वा ततः पार्षदेभ्यो बलिं दत्त्वा देवाग्रे मूलमन्त्रं जपेत् ॥४२॥ ततःआचमनं दत्त्वा शेषं विष्वक्सेनाय प्रकल्प्य ताम्बूलं दत्त्वा पुष्पाञ्जलिं दद्यात् ॥४३॥ ततो मत्कर्माणि गायन् मत्कथाः श्रावयन् शृण्वन् स्वस्थो भवेत् ॥४४॥



१ अन्नं भोज्यम् । आद्यं भक्ष्यम् । २ "विस्तारोच्छ्रायतस्तिस्रो मेखलाश्चतुरंगुलाः । हस्तमात्रो भवेद्गर्तः सयोनिर्वेदिका तथा ॥" इत्युक्तम् । ३ एकत्र मेलयेत् । ४ प्रज्वलितम् । ५ सुवर्णम् । ६ पूजयेत् । पुष्पाञ्जलिनेति शेषः ।

ततः स्तोत्रैः स्तुत्वा हे भगवन् ! प्रसीद इति वदन् ॥ ४५ ॥ मम पादौ बाहुभ्यां गृहीत्वा मत्पादयोः शिरः कृत्वा हे ईश ! मृत्यु-ग्रहार्णवाद्भीतं शरणागतं मां पाहि इत्युक्त्वा नमेत् ॥ ४६ ॥ ततो निर्माल्यं मस्तके धृत्वा विसर्जयेत् ॥ ४७ ॥ किञ्च उक्तासु प्रतिमासु यत्र श्रद्धा तत्र मामर्चयेत् । यतः सर्वत्राहं स्थितः ॥४८॥ एवं यः पूजयेत् स इहामुत्र च सिद्धिं प्राप्नोति ॥ ४९ ॥ किंच हे उद्धव ! यो मन्दिरं कृत्वा तत्र मूर्तिं स्थापयित्वा तत्र पुष्पोद्यानादि करोति ॥ ५० ॥ तथा पूजादीनां प्रवाहार्थं क्षेत्रापणपुरग्रामान् ददाति स मत्समानमैश्वर्यं

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ॥ स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ४५ ॥ शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम् ॥ प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ॥४६॥ इति शेषं मया दत्तं शिरस्याधाय सादरम् ॥ उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः ॥४७॥ अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत् ॥ सर्वभूतेष्वात्मनि च सर्वात्माहमवस्थितः ॥ ४८ ॥ एवं क्रियायोगपथैः पुमान्वैदिकतांत्रिकैः ॥ अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥ ४९ ॥ मदर्चां संप्रतिष्ठाप्य मन्दिरं कारयेद् दृढम् ॥ पुष्पोद्यानानि रम्याणि पूजायात्रोत्सवाश्रितान् ॥ ५० ॥ पूजादीनां प्रवाहार्थं महापर्वस्वथान्वहम् ॥ क्षेत्रापणपुरग्रामान्दत्त्वा मत्सार्ष्टितामियात् ॥ ५१ ॥ प्रतिष्ठया सार्वभौमं दानेन भुवनत्रयम् ॥ पूजादिना ब्रह्मलोकं त्रिभिर्मत्समतामियात् ॥ ५२ ॥ मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ॥ भक्तियोगं स लभते एवं यः पूजयेत माम् ॥ ५३ ॥ यः स्वदत्तां परैर्दत्तां हरेत सुरविप्रयोः ॥ वृत्तिं स जायते विड्भुग्वर्षाणामयुतायुतम् ॥ ५४ ॥

प्राप्नुयात् ॥ ५१ ॥ किञ्च फलमाह । प्रतिष्ठया सार्वभौमत्वं प्राप्नुयात् । दानेन भुवनत्रयं पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यं प्राप्नोति ॥ ५२ ॥ एवं यो निष्कामनया मां यजेत् स भक्तियोगं लब्ध्वा मां विन्दति ॥ ५३ ॥ यो देवब्राह्मणयोः स्वदत्तां परैर्दत्तां वा वृत्तिं हरेत् स वर्षाणामयुतायुतं विड्भुग्जायते ॥ ५४ ॥

१ क्षेत्रादीन् । २ सन्ततानुवृत्त्यर्थम् ।

किञ्च कर्तुर्यत् फलं तत साह्यकर्तुः प्रेरकस्यानुमोदितुश्च भवति ॥५५॥ इति श्रीभागवते एकादश० चू० सप्तविंशोऽध्यायः ॥ २७ ॥ अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ॥ ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते ॥ १ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! विश्वमेकात्मकं पश्यन् परस्वभावकर्माणि न स्तुवीत न निन्देत् ॥१॥ यः पुमान् परस्वभावकर्माणि स्तौति निन्दति च स ज्ञाननिष्ठालक्षणाद्भ्रश्यते ॥२॥ तदाह । यथेन्द्रियगणे निद्रायुक्ते सति जीव स्वप्नरूपां मायां प्राप्नोति तद्वद् द्वैताभिनिवेशी पुमान् स्वरूपभ्रंशं प्राप्नोति ॥ ३ ॥ किंच अवस्तुनो

कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च ॥ कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥ ५५ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे प्रतिमापूजानि० सप्तविंशोऽध्यायः ॥ २७ ॥ श्रीभगवानुवाच ॥ परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ॥ विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥१॥ परस्वभावकर्माणि यः प्रशंसति निन्दति ॥ स आशु भ्रश्यते स्वार्थादसत्यभिनिवेशतः ॥ २ ॥ तैजसे निद्रयापन्ने पिण्डस्थो नष्टचेतनः ॥ मायां प्राप्नोति मृत्युं वा तद्वन्नानार्थदृक्पुमान् ॥ ३ ॥ किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् ॥ वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥ छाया प्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः ॥ एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ५ ॥ आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः ॥ त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥६॥ तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः ॥ निरूपितेयं त्रिविधा निर्मूला भांतिरात्मनि ॥ इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ७ ॥

द्वैतस्य मध्ये भद्रमभद्रं वा किम् वाचोदितं मनसा ध्यातं सर्वमिदमनृतम् ॥४॥ तर्हि देहादीनां भयहेतुत्वं कथं तत्राह । यथा-प्रतिबिम्बं प्रतिध्वनिर्जलाभासः शुक्तिरजतादिश्चैते मिथ्याभूता अप्यर्थकारिणो भवन्ति एवं देहादिभावाः मृत्युपर्यन्तं भयं ददति ॥५॥ इदं विश्वमीश्वर एव प्रभुः सृजति सृज्यते पालयति पाल्यते हरति ह्रियते च तेन ॥६॥ अत आत्मनोऽन्यत्किमपि नास्ति । इदं दृश्यं तु मायाकृतं विद्धि ॥७॥



१ यतः एते सारथ्यादयः प्रेत्य कर्मणां भागिनः भागार्हाः । २ अधिकस्याधिकं फलमित्यर्थः । ३ असति मिथ्याभूते द्वैते । ४ सृष्टचातिरिक्तात् । ५ आध्यात्मिकादिरूपा । ६ प्रतीतिः ।

एतद् मदुक्तं विद्वान् कमपि न निन्दति न च स्तौति लोके समानः सन् सूर्यवद् विचरति ॥८॥ अतः प्रत्यक्षानुमानादिभिरिदमाद्यन्तवद्ज्ञात्वा
निःसंगो विचरेत् ॥९॥ उद्धव उवाच ॥ हे ईश ! इदं जन्म मरणं च नात्मनो न देहस्य यतः आत्मा ज्ञानरूपो देहस्तु जडः । मा भूद् द्वयो-
रपि तत्राह–उपलभ्यते । तथापि अन्तः कस्य स्यात् तद् वद ॥१०॥११॥ श्रीभगवानुवाच ॥ हे सखे ! आत्मनो यावद् देहादिसंबन्ध-
स्तावद् मिथ्यापि संसारः स्फुरति ॥ १२ ॥ किंच अर्थेऽविद्यमानेऽपि संसृतिर्न गच्छति स्वप्नेऽनर्थागमवत् ॥ १३ ॥ यथा स्वप्नोऽप्रतिबुद्धस्य

एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम् ॥ न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ ८ ॥ प्रत्यक्षेणानुमानेन
निगमेनात्मसंविदा ॥ आद्यन्तवदसज्ज्ञात्वा निःसंगो विचरेदिह ॥ ९ ॥ उद्धव उवाच ॥ नैवात्मनो न देहस्य संसृति-
र्द्रष्टृदृश्ययोः ॥ अनात्मस्वदृशोरीश कस्य स्यादुपलभ्यते ॥ १० ॥ आत्माऽव्ययोऽगुणः शुद्धः स्वयंज्योतिरनावृतः ॥
अग्निवद्दारुवदचिद्देहः कस्येह संसृतिः ॥ ११ ॥ श्रीभगवानुवाच ॥ यावद्देहेन्द्रियप्राणैरात्मनः संनिकर्षणम् ॥ संसारः
फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ १२ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्ने-
ऽनर्थागमो यथा ॥१३॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् ॥ स एवं प्रतिबुद्धस्य न वै मोहाय कल्पते ॥१४॥
शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥ १५ ॥ देहेन्द्रियप्राणमनो-
ऽभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः ॥ सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतन्त्रः ॥१६॥ अमूलमे-
तद्बहुरूपरूपितं मनोवचःप्राणशरीरकर्म ॥ ज्ञानासिनोपासनया शितेन च्छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १७ ॥

बहूननर्थान् पुष्णाति तथा प्रतिबुद्धस्य मोहाय न कल्पते ॥ १४ ॥ अहंकारलक्षणे देहादिसंबन्ध एवं संसारालम्बनमित्याह । यद्यथा शोकहर्षा-
दयो जन्म मृत्युश्चाहंकारस्य नात्मनः ॥१५॥ अथ संसारनिवृत्त्या मुक्तिमाह । देहेन्द्रियाभिमानी जीवः संसारे परमेश्वराधीनः सर्वतो धावति
॥ १६ ॥ हे उद्धव ! इदमहंकारकृतं संसारादि ज्ञानासिना छित्त्वाऽतृष्णः सन् मुनिर्विचरति ॥ १७ ॥

१ एतद् वस्तुतो मूलशून्यमेभिः बहुभिः रूपैः देवादिशरीरैः रूपितं प्रकाशितम् ऐन्द्रजालिकतुल्यमिति वा ।

तदेव ज्ञानमाह। यदस्य कारणं प्रकाशकं च ब्रह्म तदात्मकमेवेदं विश्वम् इत्येवं वेद तपआदिसाधनैर्यो विवेको जायते तत् ज्ञानम् ॥१८॥ अत्र दृष्टान्तः यथा शुद्धं सुवर्णं मध्ये कटककुण्डलादिशब्दैर्व्यवहार्यमाणमप्याद्यन्तयोर्यदस्ति तदेव सत्यं तथाऽस्य कारणभूतोऽहमेव। न मत्तः

ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ १८ ॥ यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ॥ तदेव मध्ये व्यवहार्यमाणं नानाऽपदेशैरहमस्य तद्वत् ॥ १९ ॥ विज्ञानमेतत् त्रियवस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ ॥ समन्वयेन व्यतिरेकतश्च येनैव तुर्येणतदेव सत्यम् ॥ २० ॥ न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् ॥ भूतं प्रसिद्धं च परेण यद्यत्तदेवतत्स्यादिति मे मनीषा ॥ २१ ॥

पृथक् विश्वम् ॥ १९ ॥ किं च गुणात्मकं जगद् येन तुर्येणानुगतं सत् प्रकाशते तदेव सत्यं ब्रह्म ॥ २० ॥ किं च कारणप्रकाशव्यतिरेकेण कार्यस्य प्रकाशस्य चानुपलम्भात् सर्वं खल्विदं ब्रह्म ॥ २१ ॥

---

१ ऐतिह्यमुपदेशः। २ यदस्य जगतः आद्यन्तयोस्तदेव मध्येऽपि न तु केवलं जगदित्यर्थः। किं तदित्याकाङ्क्षायामाह—कालः इति। कालः कलयति प्रकाशयति यः तथा हेतुःकारणं च यत् तदेव। एतावेव यदस्य कारणं प्रकाशकं चेति चूर्णिकया विवृणोति। मूले तु ज्ञानं लक्ष्यं विवेको लक्षणं निगमादीनि तत्साधनानि। ३ सुष्ठु कुण्डलादिरूपेण अकृतं न विरचितम्। ४ पुरस्तादुत्पत्तेः नाशाच्च पश्चात् अनयोर्हिरण्मयस्य कुण्डलादेरित्यनेन सम्बन्धः। ५ जाग्रदादित्र्यवस्थम्। ६ मनस्तदवस्थाकारणरूपं च यद्गुणत्रयं यत्र कारणकार्यकर्त्रीति योज्यम्। कारणमध्यात्मम्। कार्यमधि भूतम्। कर्तृ अधिदैवम्। एतत् त्रिविधं जगद् येन तुर्येण सामान्यज्ञानमात्रेण समन्वयेन अनुगतं प्रकाशत इत्यर्थः। तमेव भान्तमनुभाति सर्वमित्यादिश्रुतेः। व्यतिरेकतश्च समाध्यादौ यदस्ति तदेव सत्यमिति। ७ पुरस्तादुत्पत्तेः पश्चान्नाशस्य यन्नास्ति पृथक् तत् मध्येऽपि पृथक् नास्ति। किंतु, व्यपदेशमात्रम्। कुतः। यद्यत् परेण जन्येन भूतं जातं प्रसिद्धं प्रकाशितं च तत् तदेव स्यान्न पृथगिति मे बुद्धिः।

किं च इदं विश्वं ब्रह्मकार्यभूत्वाद् ब्रह्मेव भाति । ब्रह्म तु स्वतः सिद्धं न कार्यम् ॥२२॥ एवं स्फुटं यथा भवति तथा ब्रह्म विवेकहेतुभिः प्रत्यक्षा-
नुमानादिभिर्देहादेरात्मत्वनिरासेन चात्मविषयं संदेहं छित्त्वा स्वानंदतुष्टः सन् इन्द्रियादिभ्यो निःसंगो भवेत् ॥२३॥ अथ निरासप्रकारमाह ।
वपुरात्मा न । पृथ्वीविकारत्वात् । इंद्रियादीन्यपि न । अन्नपुष्टत्वात् । यथा पृथिव्यादिभूतादयोऽपि न । जडत्वात् ॥ २४ ॥ एवं मे
स्वरूपं सुष्ठुविवेचितवतः पुंसः समाहितेन्द्रियैर्गुणः कः । विक्षिप्यमाणैर्दूषणं किं स्यात् खे तथा गतागतमेघैर्न किमपि तथा ॥२५॥ किंच

अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः ॥ ब्रह्म स्वयं ज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकार-
चित्रम् ॥ २२ ॥ एवं स्फुटं ब्रह्मविवेकहेतुभिः परापवादेन विशारदेन ॥ छित्त्वात्मसन्देहमुपारमेत स्वानन्दतुष्टो-
ऽखिलकामुकेभ्यः ॥ २३ ॥ नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुजलं हुताशः ॥ मनोऽन्नमात्रं धिषणा च
सत्त्वमहंकृतिः खं क्षितिरर्थसाम्यम् ॥ २४ ॥ समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेन्मत्सुविविक्तधाम्नः ॥ विक्षि-
प्यमाणैरुत किन्नु दूषणं घनैरुपेतैर्विगतैः रवेः किम् ॥ २५ ॥ यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वर्तुगुणैर्न सज्जते ॥
तथाऽक्षरं सत्त्वरजस्तमोमलैरहंमतेः संसृतिहेतुभिः परम् ॥ २६ ॥ तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु
तावत् ॥ मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनः कषायः ॥२७॥ यथामयोऽसाधु चिकित्सितो नृणां पुनः पुनः
संतुदति प्ररोहन् ॥ एवं मनोऽपक्वकषायकर्म कुयोगिनं विध्यति सर्वसंगम् ॥ २८ ॥

यथा नभोभूतानां रजोधूसरत्वादिभिर्गतागतैर्ऋतूनां न सज्जते तथा रजः सत्त्वादिमलैर्ब्रह्म न सज्जते ॥ २६ ॥ तथाऽपि यावत् मद्भक्ति-
योगेन मनःकषायो रागो निरस्येत तावद् विषयसंगो वर्ज्यः ॥ २७ ॥ अत्र दृष्टान्तः यथा रोगः सम्यगचिकित्सितः सन् वर्धते एवं सर्वसङ्गं
मनोऽविवेकिनं भ्रंशयति ॥ २८ ॥

---

१ रजोद्वारेण ब्रह्मकार्यभूत इत्यर्थः । २ प्रकाशकमित्यर्थः । अतः इन्द्रियाणि तन्मात्राणि मनोभूतानि च पञ्चत्येवं चित्रं ब्रह्मैव भाति । ३ गुरुणा निमित्तभूतेन । ४ अर्थाः शब्दादयः— साम्यं प्रकृतिः— धिषणा बुद्धिः—
सत्त्वं चित्तम्—देवाः इन्द्रियाधिष्ठातारः—इंद्रियाण्यहंकृतिश्चेति सर्वमन्नमयम् । ५ अगमापायिभिः । ६ अहंमतेः परमहंकारात् परम् । ७ अपक्वाः अदग्धाः कषाया रागादयस्तन्मूलानि कर्माणि च यस्मिंस्तत् ।

किं च येऽपक्वयोगिनस्ते विघ्नैर्विहता अपि पूर्वाभ्यासबलेन जन्मान्तरे योगं युञ्जन्ति न कर्मतन्त्रम् ॥२९॥ अथ च असौ जन्तुः संस्कारादिना प्रेरितः सन् कर्म मृत्युपर्यन्तं कृत्वा विक्रियते। विद्वांस्तु देहे स्थितोऽपि संसारं नाप्नोति। निरभिमानत्वात् ॥३०॥ एवंभूतो यस्तिष्ठन्तमासीनं शयानं मूत्रयन्तं व्रजन्तमित्यादिक्रियाविशिष्टं देहमपि न वेद ॥३१॥ यद्यपि विषयादिकं पश्यति तथापि तत् सत्यं न मन्यते ॥३२॥ इदं देहादिकमात्मन्यध्यासेनाविवेकेन स्वीकृतमासीत्। तदेव ज्ञानेन निवर्तते आत्मा तु केनापि रूपेण न गृह्यते न त्यज्यते च अतः आत्मनो

कुयोगिनो ये विहतान्तरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः[1][2][3] ॥ ते प्राक्तनाभ्यासबलेन भूयो युञ्जन्ति योगं न तु कर्मतन्त्रम् ॥ २९ ॥ करोति कर्म क्रियते च जन्तुः केनाप्यसौ चोदितं[4] आ निपातात् ॥ न तत्र विद्वान् प्रकृतौ स्थितोऽपि निवृत्ततृष्णः स्वसुखानुभूत्या ॥ ३० ॥ तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम् ॥ स्वभावमन्यत् किमपीहमानमात्मानमात्मस्थमतिर्न वेद ॥ ३१ ॥ यदि स्म पश्यत्यसदिन्द्रियार्थं नानानुमानेन विरुद्धमन्यत् ॥ न मन्यते वस्तुतया मनीषी स्वाप्नं यथोत्थाय तिरोदधानम् ॥ ३२ ॥ पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमङ्ग ॥ निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥ ३३ ॥ यथा हि भानोरुदयो नृचक्षुषां तमोनिहन्यान्न तु सद्विधत्ते ॥ एवं समीक्षा निपुणा सतीमे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ॥ ३४ ॥ एष स्वयंज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः ॥ एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरन्ति[5] ॥ ३५ ॥ एतावानात्मसंमोहो यद्विकल्पस्तु केवले ॥ आत्मन्नृते स्वमात्मानमवलम्बो[6] न यस्य हि ॥ ३६ ॥

विकारो न ॥३३॥ अत्र दृष्टांतः। यथा सूर्योदयोऽन्धकारं हन्यात् न तु सद् विधत्ते। एवमात्मविद्या पुरुषबुद्धेरज्ञानं हन्यात् ॥३४॥ किञ्च एष आत्मा निर्विकारः स्वयंज्योतिरजः। येन-प्रेरिताः वागादयश्चरन्ति ॥३५॥ अथैवमेकरूपे आत्मनि यो विकल्पः स मनसो भ्रम एव ॥३६॥

१ संधिरार्षः। २ बन्धुशिष्यादिरूपैः। ३ देवप्रेरितैः। ४ स्वभावप्राप्तम्। ५ "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।" इत्यादिश्रुतेः। ६ स्वमात्मानमृते विहाय यस्य विकल्पस्य अवलंबः आश्रयः स नास्ति।

यन्नामाकृतिभिर्ग्राह्यं पञ्चभूतात्मकं द्वैतं तन्मिथ्या । तत् पण्डितमानिनामबाधितमिति वेदांतेष्वर्थवादत्वाग्रहेण प्रतीतिर्भवति न तत्त्वविदाम् ॥३७॥ एवं योगनिष्ठस्य विघ्नप्रतीकारमाह एवं योगं युञ्जतः पुंसः कायो यदि विघ्नैर्विहन्येत॥३८॥ तर्हि योगधारणया तपोमन्त्रौषधादिभिस्ता-न्विघ्नान् दहेत् ॥३९॥ तत्र कांश्चित् मद्ध्यानेन नामकीर्तनादिना वा दहेत् ॥ ४० ॥ केचिद्धीराः एवमुपायैर्देहं जरारोगादिरहितं कृत्वापरकाय प्रवेशादिसिद्धये योगं युञ्जन्ति ॥ ४१ ॥ तेषां श्रमो व्यर्थ एव । देहस्य नाशवत्त्वात ॥ ४२ ॥ किंच योगं सेवतः पुंसः कायः समर्थश्चेत्तर्हि

यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ॥ व्यर्थेनाऽप्यर्थवादोयं द्वयं पण्डितमानिनाम् ॥ ३७ ॥ योगिनोऽपक्क-योगस्य युञ्जतः काय उत्थितैः ॥ उपसर्गैर्विहन्येत तत्रायं विहितो विधिः ॥ ३८ ॥ योगधारणया कश्चिदासनैर्धारणा-न्वितैः ॥ तपोमन्त्रौषधैः कांश्चिदुपसर्गान्विनिर्दहेत् ॥ ३९ ॥ कांश्चिन्ममानुध्यानेन नामसंकीर्तनादिभिः ॥ योगे-श्वरानुवृत्त्या वा हन्यादशुभदाञ्छनैः ॥ ४० ॥ केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम् ॥ विधाय विविधोपा-यैरथ युञ्जन्ति सिद्धये ॥ ४१ ॥ नहि तत्कुशलादृत्यं तदायासो ह्यपार्थकः ॥ अन्तवत्त्वाच्छरीरस्य फलस्येव वन-स्पतेः ॥४२॥ योगं निषेवतो नित्यं कायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्न मतिमान्योगमुत्सृज्य मत्परः ॥ ४३ ॥ योगचर्यामिमां योगी विचरन्मदृयपाश्रयः ॥ नान्तरायैर्विहन्येत निःस्पृहः स्वसुखानुभूः ॥ ४४ ॥ इति श्रीभा० म० एका० ज्ञानयोगनि० नामाष्टाविंशोऽध्यायः ॥ २८ ॥ उद्धव उवाच ॥ सुदुष्करामिमां मन्ये योगचर्यामनात्मनः ॥ यथाञ्जसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यञ्जसाऽच्युत ॥ १ ॥

योगं हित्वा सिद्धिं न विश्वसेत् ॥ ४३ ॥ निःस्पृहो योगी योगचर्यामाचरन् विघ्नैर्न हन्यते ॥ ४४ ॥ इति श्रीभागवते महापुराणे एकादश स्कन्धे चूर्णिकायामष्टाविंशोऽध्यायः ॥ २८ ॥ ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ॥ भक्तियोगस्तमेवाह स्वभक्ताय समासतः ॥ १ ॥ अतिक्लेशमिवालक्ष्य योगेऽसङ्गैकसम्पदि ॥ सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥२॥ उद्धव उवाच ॥ हे अच्युत । अवशीकृतमनसः पुंसः इमां योगचर्यां दुष्करां मन्ये । अतोऽप्रयत्नतो यथा सिद्ध्येत्तथा ब्रूहि ॥ १ ॥

१ विनाप्यर्थेन सा प्रतीतिर्द्वैतस्येत्यर्थः । २ प्रतीकारः । ३ कुशलैरादरणीयम् । ४ वनस्पतिवद्यात्मैव स्थायी । शरीरं तु झटिति फलवन्नश्वरमित्यर्थः ।

हे कृष्ण ! मनो युञ्जन्तो योगिनस्तस्यानिग्रहात् प्रायः क्लिश्यन्ति ॥ २ ॥ अतोज्ञानिनस्तव चरणकमलं सुखं यथा स्यात्तथा सेवन्ते॥३॥ अहो हे अच्युत ! दासेषु तव यत्तदधीनत्वमिदमाश्चर्यं न यतस्त्वं ब्रह्मादिदेवैर्वन्द्योऽपि श्रीरामरूपेण वानरैः सह सख्यं प्रीत्या कृतवान् ॥४॥ बलिप्रह्लादादिषु त्वया कृतमनुग्रहं जानन् कः एवंभूतं त्वां न भजेत ॥ ५ ॥ हे कृष्ण ! त्वत्कृतमुपकारं स्मरन्तः कवयोपि ब्रह्मायुषा-

प्रायशः पुण्डरीकाक्ष युञ्जन्तो योगिनो मनः ॥ विषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः ॥ २ ॥ अथात आनन्द-दुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचनं ॥ सुखं नु विश्वेश्वर योगकर्मभिस्त्वन्माययाऽमी विहता न मानिनः ॥ ॥ ३ ॥ किं चित्रमच्युत तवैतदशेषबन्धो दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ॥ योऽरोचयत्सह मृगैः स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठः ॥ ४ ॥ तं त्वाऽखिलात्मदयितेश्वरमाश्रितानां सर्वार्थदं स्वकृतविद्विसृजेत को नु ॥ को वा भजेत्किमपि विस्मृतयेऽनुभूत्यै किं वा भवेन्न तव पादरजोजुषां नः ॥५॥ नैवोपयन्त्यपचितिं कवयस्तवेश ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः ॥ योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ॥ ६ ॥ श्रीशुक उवाच ॥ इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः ॥ गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेममनोहरस्मितः ॥ ७ ॥ श्रीभगवानुवाच ॥ हन्त ते कथयिष्यामि मम धर्मान्सुमङ्गलान् ॥ यञ्छ्रद्धया-ऽऽचरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥ ८ ॥

प्यानृण्यं नाप्नुवन्ति । यस्त्वं बहिर्गुरुरूपेणान्तर्यामिरूपेण नृणां विषयवासनां दूरीकृत्य स्वं रूपं प्रकटयसि इत्येवमुपकारः अतो भक्तियोगं ब्रूहि ॥ ६ ॥ श्रीशुक उवाच ॥ एवमुद्धवेन पृष्टः श्रीकृष्णः प्रहस्य जगाद ॥ ७ ॥ श्रीभगवानुवाच ॥ हे उद्धव ! तुभ्यं मद्धर्मान्वक्ष्यामि श्रद्धया यानाचरन् मर्त्यो मृत्युं जयति ॥ ८ ॥



---

१ योगे कर्मभिर्मानिनः सन्तो ये तव पदाम्बुजं न श्रयन्ते ते त्वन्मायया विहताः । २ अखिलस्य जगतः आत्मानं चेतयितारम् आत्मत्वादेव दयितं प्रेष्ठं सुसेव्यम् । ईश्वरत्वादवश्यं भजनीयम् । ३ अनिरुक्तत्वाद्व्यतिरिक्तं स्वर्गादि त्वया दत्तमपि को वा भजेत् । यत्केवलं भूत्यै इन्द्रिय भोगाय अनु अनन्तरमेव त्वद्विस्मृतये भवति । ४ उपचितपरमानन्दाः । ५ जगत्क्रीडनं क्रीडोपकरणं यस्य सः । ६ सत्त्वादिभिः ।

तान् धर्मानाह । हे सखे ! पुमान् मां स्मृत्वा मदर्थं सर्वकर्माणि कुर्यात् ॥९॥ तथा पुण्यान् देशान् मद्भक्ताचरितानि च श्रयेत् ॥१०॥ किंच मम पर्वयात्रामहोत्सवान् स्वयमन्यैर्वा कारयेत् ॥ ११ ॥ तथा सर्वभूतेषु स्वात्मनि च स्थितं मामवेक्षेत ॥ १२ ॥ तथा सर्वभूतानि मद्भावेन सत्कृत्य ॥ १३ ॥ ब्राह्मणे पुल्कसे चौरेऽक्रूरे क्रूरे च यः समदृक् स पण्डितो मे मान्यः ॥ १४ ॥ एवं नृष्वीश्वरदृष्टिं कुर्वतः पुंसः साहंकाराः

कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ॥ मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥ ९ ॥ देशान्पुण्यान्संश्रयेत मद्भक्तैः साधुभिः श्रितान् ॥ देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥१०॥ पृथक्सत्रेण वा मह्यं पर्वयात्रामहोत्सवान् ॥ कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥ ११ ॥ मामेव सर्वभूतेषु बहिरन्तरपावृतम् ॥ ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥१२॥ इति सर्वाणि भूतानि मद्भावेन महाद्युते ॥ सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः॥१३॥ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ॥ अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ॥ १४ ॥ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ॥ स्पर्धासूयातिरस्काराः साहंकारा वियन्ति हि ॥ १५ ॥ विसृज्य स्मयमानान्स्वान्दृशं व्रीडां च दैहिकीम् ॥ प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥ १६ ॥ यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ॥ तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥ १७ ॥ सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ॥ परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः ॥ १८ ॥ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ॥ मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ १९ ॥

स्पर्धेर्ष्यादयो नश्यन्ति ॥१५॥ किंच हसतः स्वान् तथा देहेऽहमुच्चोऽन्यो नीच इति बुद्धिलज्जां च त्यक्त्वाऽश्वचाण्डालगोखरं भूमौ दण्डवत् प्रणमेत् ॥ १६ ॥ एवं यावत् सर्वभूतेषु मद्भावो नोपजायते तावत् मामुपासीत ॥ १७ ॥ एवं कुर्वतः पुंसः सर्वं ब्रह्मात्मकमेव भवति ॥ १८ ॥ हे उद्धव ! सर्वोपायमध्येऽयं श्रेष्ठः उपायः तमाह । सर्वभूतेषु मनोवाक्कायवृत्तिभिर्मद्भाव इति ॥ १९ ॥

१ मद्धर्मेष्वेवात्ममनसो रतिर्यस्य । २ सम्भूय इति शेषः । ३ अनावरणम् । ४ सर्वत्रेश्वरदृष्ट्या ।

हे उद्धव! एवं निष्कामस्य मद्धर्मस्यारम्भे वैगुण्यादिभिर्नाशो नास्त्येव। यतो मया सम्यक् निश्चितः ॥२०॥ किंच लौकिकोऽपि यो यो व्यर्थ आयासः स मयि निष्कामतया समर्पितश्चेद् धर्म एव स्यात् किं पुनर्वक्तव्यं मद्धर्मस्य न ध्वंस इति॥२१॥अत्र जन्मनि मर्त्यदेहेनानृतेनामृतंसत्यं मां प्राप्नोतीति यत् सैव बुद्धिमतां बुद्धिः ॥२२॥ हे उद्धव! एवं ब्रह्मवादस्य संग्रहः संक्षेपविस्तरभेदतः सर्वोऽपि तुभ्यमुक्तः ॥२३॥ एवं तुभ्य

न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि ॥ मया व्यवसितः सम्यङ् निर्गुणत्वादनाशिषः ॥ २० ॥ यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत् ॥ तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥२१॥ एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ॥ यत्सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥२२॥ एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रहः ॥ समासव्यासविधिना देवानामपि दुर्गमः ॥ २३ ॥ अभीक्ष्णशस्ते गदितं ज्ञानं विस्पष्टयुक्तिमत् ॥ एतद्विज्ञाय मुच्येत पुरुषो नष्टसंशयः ॥ २४ ॥ सुविविक्तं तव प्रश्नं मयैतदपि धारयेत् ॥ सनातनं ब्रह्मगुह्यं परं ब्रह्माधिगच्छति ॥२५॥ य एतन्मम भक्तेषु संप्रदद्यात्सुपुष्कलम् ॥ तस्याहं ब्रह्मदायस्य ददाम्यात्मानमात्मना॥२६॥य एतत्समधीयीत पवित्रं परमं शुचि ॥ स पूयेताहरहर्मां ज्ञानदीपेन दर्शयन् ॥ २७ ॥ य एतच्छ्रद्धया नित्यमव्यग्रः शृणुयान्नरः ॥ मयि भक्तिं परां कुर्वन् कर्मभिर्न स बध्यते ॥ २८ ॥ अप्युद्धव त्वया ब्रह्म सखे समवधारितम् ॥ अपि ते विगतो मोहः शोकश्चासौ मनोभवः ॥ २९ ॥ नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च ॥ अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् ॥३०॥

मुक्तं ज्ञानं विज्ञाय गतसंशयः पुमान् मुच्यते॥२४॥एतत् ज्ञानं यो धारयेत् स ब्रह्म प्राप्नोति॥२५॥अथ य एतद् मद्भक्तेषु प्रदद्यात् तस्याहमात्मानं ददामि॥२६॥य एतत् पवित्रं ज्ञानदं पठेत् स शुध्येत्॥२७॥ यः एतत् श्रद्धया नित्यं शृणुयात् स कर्मभिर्न बध्यते॥२८॥हे उद्धव ! त्वया ब्रह्मसम्यगवधारितं किम्। तव मोहः शोकश्च गतः किम् ॥२९॥ हे सखे ! एतत् त्वया दाम्भिकाय नास्तिकाय शठायाभक्ताय च न दीयताम् ॥३०॥



---

१ यतो मयैव निर्गुणत्वादयं धर्मः सम्यग् व्यवसितः निश्चितो न तु मन्वादिमुखेन। २ स आयासः। ३ निरर्थायासे दृष्टान्तः—यथा भयशोकादेर्हेतोः प्रलपनाक्रन्दनादिक्लेशस्तद्वत्। ४ बुद्धिः विवेकः मनीषा चातुर्यम्। ५ दत्तोत्तरम्। ६ आख्यानम्। ७ ज्ञानोपदेष्टुः।

एतैर्दोषैर्हीनाय ब्रह्मण्याय प्रियाय साधवे ब्रूयात् । भक्तिश्चेत् शूद्राणां स्त्रीणां च ब्रूयात् ॥३१॥ इदं ज्ञात्वा जिज्ञासोर्ज्ञातव्यं नावशिष्यते । यथा अमृतं पीत्वा पातव्यं नावशिष्यते तद्वत् ॥ ३२ ॥ हे उद्धव ! ज्ञाने मोक्षः—कर्मणि विहिते धर्मः—स्वभाविके तु कर्मणि कामः—योगेऽणिमादि सिद्धयः कृष्यादावर्थः—दण्डनीतावैश्वर्यमित्यादिः नृणां यावानर्थस्तावान् सर्वोऽप्यहमेव ॥३३॥ कुतः । यदा मर्त्यस्त्यक्तसर्वकर्मा सन् मे निवे- दितात्मा भवति तदाऽसौ मे विशेषेण कर्तुमिष्टो भवति । ततो मोक्षं प्राप्य मत्समानैश्वर्याय योग्यो भवति ॥३४॥ श्रीशुक उवाच ॥ हे राजन् !

एतैर्दोषैर्विहीनाय ब्रह्मण्याय प्रियाय च ॥ साधवे शुचये ब्रूयाद्भक्तिः स्याच्छूद्रयोषिताम् ॥ ३१ ॥ नैतद्विज्ञाय जिज्ञा- सोर्ज्ञातव्यमवशिष्यते ॥ पीत्वा पीयूषममृतं पातव्यं नावशिष्यते ॥ ३२ ॥ ज्ञाने कर्मणि योगे च वार्तायां दण्डधा- रणे ॥ यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः ॥ ३३ ॥ मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकी- र्षितो मे ॥ तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ॥ ३४ ॥ श्रीशुक उवाच ॥ स एवमादर्शितयोग- मार्गस्तदुत्तमश्लोकवचो निशम्य ॥ बद्धाञ्जलिः प्रीत्युपरुद्धकण्ठो न किञ्चिदूचेऽश्रुपरिप्लुताक्षः ॥ ३५ ॥ विष्टभ्य चित्तं प्रणयावघूर्णं धैर्येण राजन्बहु मन्यमानः ॥ कृताञ्जलिः प्राह यदुप्रवीरं शीर्ष्णा स्पृशंस्तच्चरणारविन्दम् ॥ ३६ ॥ उद्धव उवाच ॥ विद्रावितो मोहमहान्धकारो य आश्रितो मे तव सन्निधानात् ॥ विभावसोः किं नु समीप- गस्य शीतं तमो भीः प्रभवन्त्यजाद्य ॥ ३७ ॥ प्रत्यर्पितो मे भवताऽनुकम्पिना भृत्याय विज्ञानमयः प्रदीपः ॥ हित्वा कृतज्ञस्तव पादमूलं कोऽन्यत्समीयाच्छरणं त्वदीयम् ॥ ३८ ॥

एवं स दर्शितयोगमार्गः सन् कृष्णवचः श्रुत्वा बद्धाञ्जलिः रुद्धकण्ठोऽश्रुव्याप्तनेत्रः सन् न किंचिदूचे ॥३५॥ चित्तं धैर्येण विष्टभ्य तच्चरणा- रविन्दं शीर्ष्णा स्पृशन् प्राह ॥ ३६ ॥ उद्धव उवाच । हे कृष्ण ! मम मोहान्धकारो यः आसीत् स तव सन्निधानेनैव गतः ॥ ३७ ॥ तथा कृपालुना त्वया भृत्याय मे विज्ञानमयो दीपः समर्पितः । अतस्तव कृतज्ञः पुमान् को नाम त्वदीयचरणं हित्वान्यच्छरणं गच्छेत् ॥३८॥

१ यदीति शेषः । २ प्रणयेनावघूर्णं क्षुभितम् ।

किंच यो यादवेषु स्नेहपाशः प्रसारितः सोऽपि त्वया तत्त्वज्ञानशस्त्रेण छिन्नः ॥३९॥ अतो हे महायोगिन्। तुभ्यं नमोऽस्तु। शरणागतं मां यथा त्वच्चरणारविन्दे रतिः स्यात्तथा शिक्षय॥४०॥श्रीभगवानुवाच॥ हे उद्धव! मदाज्ञया त्वं बदर्याश्रमं गच्छ। तत्र मत्पादोदकतीर्थे स्नानादिना ॥४१॥ तथा गङ्गाया दर्शनेन निष्पापः सन् वल्कलवस्त्राणि धारयित्वा वन्यफलभोजनः ॥४२॥ शीतोष्णादिसुखदुःखसहो ज्ञानविज्ञानयुतः

वृक्णश्च मे सुदृढःस्नेहपाशो दाशार्हवृष्ण्यन्धकसात्वतेषु॥ प्रसारितः सृष्टिविवृद्धये त्वया स्वमायया ह्यात्मसुबोध-हेतिना ॥ ३९ ॥ नमोऽस्तु ते महायोगिन् प्रपन्नमनुशाधि माम्॥ यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनी ॥ ॥ ४० ॥ श्रीभगवानुवाच ॥ गच्छोद्धव मयादिष्टो बदर्याख्यं ममाश्रमम्॥ तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचिः ॥ ४१ ॥ ईक्षयाऽलकनन्दाया विधूताशेषकल्मषः॥ वसानो वल्कलान्यङ्ग वन्यभुक् सुखनिःस्पृहः ॥ ४२ ॥ तितिक्षुर्द्वन्द्वमात्राणां सुशीलः संयतेन्द्रियः॥ शान्तः समाहितधिया ज्ञानविज्ञानसंयुतः ॥ ४३ ॥ मत्तोऽनुशिक्षितं यत्ते विविक्तमनुभावयन्॥ मय्यावेशितवाक्चित्तो मद्धर्मनिरतो भव॥ अतिव्रज्य गतीस्तिस्रो मामेष्यसि ततः परम् ॥ ४४ ॥ श्रीशुक उवाच ॥ स एवमुक्तो हरिमेधसोद्धवः प्रदक्षिणं तं परिसृत्य पादयोः॥ शिरो निधायाश्रुक-लाभिरार्द्रधीर्न्यषिञ्चदद्वन्द्वपरोऽप्यपक्रमे ॥ ४५ ॥ सुदुस्त्यजस्नेहवियोगकातरो न शक्नुवंस्तं परिहातुमातुरः॥ कृच्छ्रं ययौ मूर्धनि भर्तृपादुके बिभ्रन्नमस्कृत्य ययौ पुनः पुनः ॥ ४६ ॥ ततस्तमन्तर्हृदि संनिवेश्य गतो महाभाग-वतो विशालाम्॥ यथोपदिष्टां जगदेकबन्धुना तपः समास्थाय हरेरगाद्गतिम् ॥ ४७ ॥

शान्तः ॥४३॥ मदनुशिक्षितं ज्ञात्वा मयि वाक्चेतसी निधाय मद्धर्मरतो भव। ततस्त्रिगुणात्मिका गतीरतिक्रम्य मामेष्यसि ॥४४॥ श्रीशुक उवाच। एवं हरिणोक्तः उद्धवस्तं परिक्रम्य प्रणम्य पादयोः शिरो निधायाश्रुकलाभिर्न्यषिञ्चत् ॥४५॥ ततः कृष्णवियोगभीतः सन् तत्पादुके मूर्ध्नि धृत्वा पुनः पुनर्नत्वा ययौ ॥ ४६ ॥ ततः कृष्णं हृदि निधाय बदर्याश्रमं गत्वा तपः कृत्वा हरेर्गतिं जगाम ॥ ४७ ॥

१ त्वया। २ सुविचारितम्। ३ संसारं हरति मेधा यस्य तेन श्रीकृष्णेन। ४ सुखदुःखविनिर्मुक्तोऽपि। ५ निर्गमनसमये।

यः इदं श्रीकृष्णेन भक्तायोक्तं ज्ञानमृतमीषदपि सेवित्वा वर्तते स मुच्यत इति किं वक्तव्यम् । तत्संगाज्जगदपि मुच्यते ॥ ४८ ॥ किं च ईश्वरः स्वभक्तानां संसारभयं हन्तुं भ्रमरवदमृतद्वयमुपजह्रे । तत्रैकं ज्ञानविज्ञानरूपं–द्वितीयं समुद्रोत्पन्नम् । तदुभयं यो भृत्यवर्गान् पाययामास तं कृष्णसंज्ञं नतोऽस्मि ॥४९॥ इति श्रीभागवते म० एकादशस्कन्धे चू० एकोनत्रिंशोऽध्यायः ॥२९॥ त्रिंशे तु प्रागुपक्षिप्तमौसलच्छलतो हरिः । स्वधाम गन्तुमन्विच्छन् संजहार निजं कुलम् ॥१॥ राजोवाच ॥ हे ब्रह्मन् ! ततः उद्धवे वनं गते सति भगवान् द्वारकायां किमकरोत् ॥१॥

य एतदानन्दसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम् ॥ कृष्णेन योगेश्वरसेविताङ्घ्रिणा सच्छ्रद्धयाऽऽसेव्यजगद्विमुच्यते ॥ ४८ ॥ भवभयमपहन्तुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृङ्गवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद् भृत्यवर्गान्पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोऽस्मि ॥ ४९ ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे भक्तियोगसंग्रहो नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥ राजोवाच ॥ ततो महाभागवत उद्धवे निर्गते वनम् ॥ द्वारवत्यां किमकरोद्भगवान्भूतभावनः ॥१॥ ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ॥ प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥२॥ प्रत्याक्रष्टुं नयनमबला यत्र लग्नं न शेकुः कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम् ॥ यच्छ्रीर्वाचां जनयति रतिं किं न मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥ श्रीशुक उवाच ॥ दिवि भुव्यन्तरिक्षे च महोत्पातान्समुत्थितान् ॥ दृष्ट्वासीनान्सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ ४ ॥

किं च ब्रह्मशापोपमृष्टे स्वकुले सति कृष्णः सर्वनेत्राणां प्रियां तनुं कथं तत्याज ॥२॥ तदाह–गोप्यो यस्मिन् शरीरे संलग्नं नेत्रमाकर्षयितुं न शेकुः तथाऽर्जुनरथे स्थितं यं दृष्ट्वा युधि ये मृतास्ते तत्साम्यं प्राप्ताः तत् केन रूपेण तत्याज ॥३॥ श्रीशुक उवाच । हे नृप ! ततो दिवि भुव्यन्तरिक्षे उत्पातान् दृष्ट्वा कृष्णो यदूनाह ॥ ४ ॥

१ आनन्दसमुद्रः भगवद्भक्तिमार्गः तस्मिन् सम्भृतमेकीकृतम् । २ यस्य श्रीः शोभा संकीर्त्यमाना कवीनां वाचो रतिमुल्लासविशेषं जनयति तेषां मानं जगत्पूज्यतां जनयतीति किमु वक्तव्यम् ।

श्रीभगवानुवाच ॥ हे यदुश्रेष्ठाः ! अत्र घोराः उत्पाता दृश्यन्ते । अतोऽस्माभिरत्र मुहूर्तमपि न स्थेयम् ॥५॥ तस्मात्स्त्रीबालवृद्धाः इतः शङ्खोद्धारं यान्तु । वयं तु यत्र पश्चिमवाहिनी सरस्वती तत्प्रभासक्षेत्रं यास्यामः ॥६॥ तत्र स्नात्वोपोष्य शुद्धाः सन्तो देवताः स्नापनालेपादिभिः पूजयिष्यामः ॥७॥ ब्राह्मणांश्च गोभूहिरण्यवस्त्रादिभिः पूजयिष्यामः ॥ ८ ॥ अयं विधिररिष्टनाशकः । किं च इदं मङ्गलकारकम् ॥ ९ ॥ एवं कृष्णवचः श्रुत्वा यादवास्तथेत्युक्त्वा नौभिरब्धिमुत्तीर्य रथैः प्रभासं ययुः ॥१०॥ तत्र गत्वा भगवदुक्तं सर्वं श्रेयः साधनं चक्रुः ॥११॥

श्रीभगवानुवाच ॥ एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ॥ मुहूर्तमपि न स्थेयमत्र नो यदुपुङ्गवाः ॥ ५ ॥ स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः ॥ वयं प्रभासं यास्यामो यत्र प्रत्यक्सरस्वती ॥ ६ ॥ तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ॥ देवताः पूजयिष्यामः स्नपनालेपनार्हणैः ॥ ७ ॥ ब्राह्मणांस्तु महाभागान्कृतस्वस्त्ययना वयम् ॥ गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ ८ ॥ विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ॥ देवद्विजगवां पूजा भूतेषु परमो भवः ॥९॥ इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ॥ तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥१०॥ तस्मिन्भगवतादिष्टं यदुदेवेन यादवाः ॥ चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहितम् ॥ ११ ॥ ततस्तस्मिन्महापानं पपुर्मैरेयकं मधु ॥ दिष्टविभ्रंशितधियो यद्द्रवैर्भ्रश्यते मतिः ॥ १२ ॥ महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ॥ कृष्णमायाविमूढानां संघर्षः सुमहानभूत् ॥ १३ ॥ युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः ॥ १४ ॥ पतत्पताकै रथकुञ्जरादिभिः खरोष्ट्रगोभिर्महिषैर्नरैरपि ॥ मिथः समेत्याश्वतरैः सुदुर्मदा न्यहञ्छरैर्दद्भिरिव द्विपा वने ॥ १५ ॥

ततस्तत्र सुरसं मदिराविशेषं पीत्वा दैवेन भ्रंशितधियो बभूवुः ॥१२॥ ततो मद्यपानमत्तानां कृष्णमायया मूढानां तेषां कलहोऽभूत् ॥१३॥ ततस्ते आततायिनः सन्तो धनुरसिभल्लगदादिभिर्युयुधुः ॥१४॥ चलत्पताकैः रथकुञ्जरादिभिः खरोष्ट्रादिभिश्च कृतवाहनाः मिथो मिलित्वा बाणैर्न्यघ्नन् वने गजाः दन्तैरिव ॥ १५ ॥



१ संधिरार्षः। २ यस्य रसैः

तत् कथयति । युधिप्रद्युम्नसाम्बौ अक्रूरभोजौ अनिरुद्धसात्यकी सुभद्रसङ्ग्रामजितौ गदौ सुमित्रसुरथौ ॥ १६ ॥ अन्ये च ये निशठोल्मुकादयः शतजिद्भानुमुख्याः एतेऽन्योन्यं मिलित्वा जघ्नुः ॥ १७ ॥ ततो दाशार्हवृष्ण्यन्धकादयोऽर्बुदशूरसेनादयश्च सौहृदं हित्वा जघ्नुः ॥ १८ ॥ पुत्राः पितृभिर्भ्रातरो भ्रातृभिर्भ्रातृव्यः पितृव्यैर्भागिनेयो मातुलैर्मित्राणि मित्रैः युयुधिरे । एवं मूढाः सर्वे न्यघ्नन् ॥ १९ ॥ एवं बाणधनुःशस्त्रेषु नष्टेष्वेरकाः मुष्टिभिर्जगृहुः ॥ २० ॥ ताः वज्रतुल्याः अभवन् । ततः एरकाभिस्ते कृष्णेन वार्यमाणा अपि मोहिताः सन्तः कृष्णं बलरामं च स्पर्धिनं मत्वा

प्रद्युम्नसाम्बौ युधि रूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ॥ सुभद्रसङ्ग्रामजितौ सुदारुणौ गदौ सुमित्रांसुरथौ समीयतुः ॥ १६ ॥ अन्ये च ये वै निशठोल्मुकादयः सहस्रजिच्छतजिद्भानुमुख्याः ॥ अन्योऽन्यमासाद्य मदान्धकारिता जघ्नुर्मुकुंदेन विमोहिता भृशम् ॥ १७ ॥ दाशार्हवृष्ण्यन्धकभोजसात्वता मध्वर्बुदामाथुरशूरसेनाः ॥ विसर्जनाः कुकुराः कुन्तयश्च मिथस्ततस्तेऽथ विसृज्य सौहृदम् ॥ १८ ॥ पुत्रा अयुध्यन्पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ॥ मित्राणि मित्रैः सुहृदः सुहृद्भिर्ज्ञातीस्त्वहन्ज्ञातय एव मूढाः ॥ १९ ॥ शरेषु क्षीयमाणेषु भज्यमानेषु धन्वसु ॥ शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जघ्नुरेरकाः ॥ २० ॥ ता वज्रकल्पा ह्यभवन्परिघा मुष्टिना भृताः ॥ जघ्नुर्द्विषस्ते कृष्णेन वार्यमाणास्तु तं च ते ॥ २१ ॥ प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ॥ हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ २२ ॥ अथ तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ॥ एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ २३ ॥ ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ॥ स्पर्धाक्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ २४ ॥ एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ॥ अवतारितो भुवो भार इति मेनेऽवशेषितः ॥ २५ ॥ रामः समुद्रवेलायां योगमास्थाय पौरुषम् ॥ तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥ २६ ॥

जघ्नुः ॥ २१ ॥ २२ ॥ अथ तावपि क्रुद्धावेरकामुष्टिरूपौ परिघावुद्यम्य तान् जघ्नतुः ॥ २३ ॥ ततस्तेषां स्पर्धानिमित्तो यः क्रोधो जातः स कुलं क्षयं निन्ये यथा वैणवोऽग्निर्वनम् ॥ २४ ॥ एवं सर्वेषु नष्टेषु कृष्णो भुवो भारो हृत इति मेने ॥ २५ ॥ ततो रामः समुद्रतीरे परमपुरुषध्यानलक्षणं योगमास्थायात्मन्यात्मानं संयोज्य भूलोकं जहौ ॥ २६ ॥

१ दैर्घ्यमार्षम् ।

एवं रामनिर्याणं दृष्ट्वा कृष्णो भूतले पिप्पलं प्राप्य उपाविशत् ॥२७॥ तदा चतुर्भुजं रूपं श्रीवत्साङ्कं मेघश्यामं पीताम्बरयुग्मेन युतं नीलकुन्तलमण्डितं स्फुरन्मकरकुण्डलं कटिसूत्रकिरीटाङ्गदहारनूपुरादिभिर्विराजितं कौस्तुभयुतं वनमालया स्वायुधैश्च युतं रूपं धृत्वा दक्षिणे ऊरौ वामपादं कृत्वाऽऽसीनम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ तं जरानामकलुब्धको मुसलावशेषायःखण्डकृतबाणेन मृगमुखसदृशं तच्चरणं मृग-

रामनिर्याणमालोक्य भगवान् देवकीसुतः ॥ निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ २७ ॥ बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ॥ दिशो वितिमिराः कुर्वन् विधूम इव पावकः ॥ २८ ॥ श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ॥ कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ २९ ॥ सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ॥ पुंडरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥३०॥ कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ॥ हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ ॥ ३१ ॥ वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥३२॥ मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरा ॥ मृगास्याकारं तच्चरणं विव्याध मृगशङ्कया ॥ ३३ ॥ चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः ॥ भीतः पपात शिरसा पादयोरसुरद्विषः ॥ ३४ ॥ अजानता कृतमिदं पापेन मधुसूदन ॥ क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ ३५ ॥ यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ॥ वदन्ति तस्य ते विष्णो मयाऽसाधु कृतं प्रभो ॥ ३६ ॥ तन्माशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् ॥ यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ ३७ ॥

शङ्कया विव्याध ॥ ३३ ॥ ततः स समीपमागत्य चतुर्भुजं तं दृष्ट्वा कृतापराधो भीतः सन् तच्चरणयोः पतित्वा जगाद ॥ ३४ ॥ हे कृष्ण ! अजानता मयेदं कृतं तव क्षन्तुमर्हसि ॥ ३५ ॥ हे कृष्ण ! यस्य ते स्मरणं नृणां पापनाशकं तस्य तव मयाऽसाधु कृतम् ॥ ३६ ॥ अतः पाप्मानं मां जहि । एवं कृते पुनः सतामपराधं न कुर्याम् ॥ ३७ ॥



---

१ तप्तहेमतेजसम् ।

हे कृष्ण! यस्य ते मायारचितं ब्रह्मादयो न विदुः एवं भूतं त्वां पापिष्ठाः वयं कथं वर्णयामः। अतो मां जहि॥३८॥श्रीभगवानुवाच ॥ हे लुब्धक ! त्वं मा भैः। उत्तिष्ठ। अयं कामो मयैव कृतः अतो मदाज्ञया त्वं स्वर्गं याहि। पूर्वजन्मकृतकर्मफलमवश्यमेव भवतीति सूचयितुं कृष्णो व्याधनिमित्तेन स्वधाम जगाम। अत्र चानन्दरामायणे वालिनं प्रति रामवचनम्-"यद्यपि त्वं दुराचारान्निहतोऽसि रणे मया ॥ तथापि भिल्ल-रूपेण द्वापरान्तेऽङ्घ्रिके मम ॥ प्रभासे त्वं शरं भित्त्वा पूर्ववैरेण वानर। भवेन्मद्धस्तमरणं चास्य कारणगौरवात् ॥ वालिन् मुक्तिं गच्छसि त्वं

**यस्याऽऽत्मयोग[1]रचितं न विदुर्विरिञ्चो रुद्रादयोऽस्य तनयः पतयो गिरां[2] ये ॥ त्वन्मायया पिहितदृष्टय एतदञ्जः किं तस्य ते वयमसद्गतयो गृणीमः ॥ ३८ ॥ श्रीभगवानुवाच ॥ मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो हि मे ॥ याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ ३९ ॥ इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ॥ त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ ४० ॥ दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् ॥ वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ ४१ ॥ तं तत्र तिग्मद्युभिरायुधैर्वृतं ह्यश्वत्थमूले कृतकेतनं पतिम् ॥ स्नेहप्लुतात्मा निपपात पादयो रथादवप्लुत्य सबाष्पलोचनः ॥ ४२ ॥ अपश्यतस्त्वच्चरणाम्बुजं प्रभो दृष्टिः प्रनष्टा तमसि प्रविष्टा ॥ दिशो न जाने न लभे च शान्तिं यथा निशायामुडुपे[3] प्रनष्टे ॥ ४३ ॥ इति ब्रुवति सूते वै रथो गरुडलाञ्छनः ॥ खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षितः ॥ ४४ ॥**

शुभां जन्मान्तरेण हि ॥" इति॥३९॥ एवं कृष्णेनादिष्टः स तं त्रिः परिक्रम्य नत्वा विमानेन स्वर्गं ययौ॥४०॥एतस्मिन्नेव समये दारुकः कृष्ण-मार्गमन्विच्छन् तुलसीगन्धवायुं घ्रात्वा तन्मार्गं ज्ञात्वा समीपं ययौ ॥ ४१ ॥ तत्र मूर्तिमद्भिरायुधैर्वेष्टितमश्वत्थमूले कृतासनं कृष्णं दृष्ट्वा स्नेहाश्रुपूर्णनयनः सन् दारुको रथादुत्तीर्य तत्पादयोः पपात। आह च ॥४२॥ हे प्रभो ! तव चरणाम्बुजमपश्यतो मे दृष्टिरन्धकारे प्रविष्टा॥ अतो दिशो न जाने शान्तिं न लभे ॥४३॥ एवं दारुके ब्रुवति सति साश्वध्वजो रथस्तस्य पश्यतः खमुत्पपात ॥ ४४ ॥

१ स्वाधीनमायया रचितम्। २ गिरां पतयः वेदद्रष्टारः ऋषयः। ३ चन्द्रे।

तमनु तदायुधानि जग्मुः । तेन विस्मितं सूतं कृष्णः आह॥४५॥हे दारुक ! त्वं द्वारकां गत्वा ज्ञातीनां परस्परं नाशं सङ्कर्षणस्य प्रयाणं मद्दशां च बन्धुभ्यो ब्रूहि ॥ ४६ ॥ किंच स्वस्वबन्धुभिर्भवद्भिर्द्वारकायां न स्थेयम् । यतो मया त्यक्तां पुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥ अतः सर्वे स्वं स्वं परिग्रहं नः पितरौ गृहीत्वाऽर्जुनेन रक्षिताः सन्तः इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥ हे सूत ! त्वं तु ज्ञाननिष्ठः सन् मन्मायारचना मेतां विज्ञाय शान्ति प्राप्नुहि शोकं मा कुरु॥४९॥ तदा दारुकः कृष्णवचः श्रुत्वा तं परिक्रम्य पुनः पुनर्नमस्कृत्य दुर्मनाः सन् पुरीं ययौ ॥५०॥



तमन्वगच्छन् दिव्यानि विष्णुप्रहरणानि च ॥ तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ ४५ ॥ गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः ॥ संकर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ ४६ ॥ द्वारकायां च न स्थेयं भवद्भिः स्वस्वबन्धुभिः ॥ मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति ॥ ४७ ॥ स्वंस्वं परिग्रहं सर्वे आदाय पितरौ च नः ॥ अर्जुनेनाविताः सर्व इन्द्रप्रस्थं गमिष्यथ ॥ ४८ ॥ त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ॥ मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ ४९ ॥ इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ॥ तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरीम् ॥ ५० ॥ इति श्रीभागवते महापुराणे एकादशस्कन्धे यदुकुलसंक्षयो नाम त्रिंशोऽध्यायः ॥ ३० ॥ श्रीशुक उवाच ॥ अथ तत्रागमद्ब्रह्मा भवान्या च समं भवः ॥ महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १ ॥ पितरः सिद्ध-गन्धर्वा विद्याधरमहोरगाः ॥ चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः ॥ २ ॥

इति श्रीभा० म० एकादशस्कन्धे चू० त्रिंशोऽध्यायः ॥ ३० ॥ एकत्रिंशे स्वकं धाम जगाम भगवानितः ॥ तमेवानुययुः प्रीत्या वसुदेवा-दयस्ततः ॥१॥ देवान् यदून् विधायादौ भूयो देवान् विधाय च ॥ श्रीकृष्णः स्वेच्छया धाम स्वतन्वैव समाविशत् ॥२॥ श्रीशुक उवाच ॥ अथ ब्रह्मा भवान्या सह शिवः इन्द्रादयो देवाः मुनयः सनकादयः प्रजापतयो मरीच्यादयश्च ॥ १ ॥ तथा पितृगन्धर्वविद्याधरोरगचारण-यक्षरक्षः किन्नराप्सरसो गरुडलोकनिवासिनः पक्षिणश्च ॥ २ ॥



१ पुत्रवित्ताविषूवासीनः ।

एते सर्वे भगवतः प्रयाणं द्रष्टुं तस्य जन्मकर्माणि गायन्त सन्तः ॥ ३ ॥ विमानपङ्क्तिभिराकाशं व्याप्तं कृत्वा भक्त्या पुष्पवृष्टिं चक्रुः ॥ ४ ॥ अथ श्रीकृष्णो ब्रह्माणमिन्द्रादींश्च वीक्ष्यात्मन्यात्मानं संयोज्य पद्मनेत्रे न्यमीलयत् ॥ ५ ॥ किंच लोकाभिरामां स्वतनुमाग्नेय्या योगधारणया अदग्ध्वैव स्वं धाम विवेश ॥ ६ ॥ तदा दिवि दुन्दुभयो नेदुः । खात् पुष्पाणि पेतुः । तदनु सत्यधर्मधृतिकीर्तिश्रियः भूमेः

द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ॥ गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ ३ ॥ ववृषुः पुष्पवर्षाणि विमानावलिभिर्नभः ॥ कुर्वन्तः संकुलं राजन् भक्त्या परमया युताः ॥ ४ ॥ भगवान् पितामहं वीक्ष्य विभूतीरात्मनो विभुः ॥ संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ ५ ॥ लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् ॥ योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥ ६ ॥ दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ॥ सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥ ७ ॥ देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि ॥ अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥८॥ सौदामन्या यथाकाशे यान्त्या हित्वाऽभ्रमण्डलम् ॥ गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ ९ ॥ ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ॥ विस्मितास्तां प्रशंसन्तः स्वंस्वं लोकं ययुस्तदा ॥ १० ॥ राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य ॥ सृष्ट्वात्मनेदमनुविश्यं विहृत्य चान्ते संहृत्य चात्ममहिमोपरतः स आस्ते ॥ ११ ॥

सकाशात्तमनु ययुः । ततो ब्रह्मादयः स्वधामनि विशन्तं श्रीकृष्णमदृष्ट्वा विस्मिताः आसन् ॥ ७ ॥ ८ ॥ अत्र दृष्टान्तः—यथा विद्युल्लतायाः गतिर्मनुष्यैर्न लक्ष्यते तथा कृष्णस्य गतिर्देवैर्न लक्ष्यते ॥९॥ ततो ब्रह्मादयो देवा हरेर्योगगतिं दृष्ट्वा तां प्रशंसन्तः स्वं स्वं लोकं ययुः ॥१०॥ हे नृप ! भगवतः इयं जननादिचेष्टा मायाविडम्बनं विद्धि । इदं स्वयमेव सृष्ट्वा परिपाल्य संहृत्य स्वमहिम्नोपरतः आस्ते ॥ ११ ॥

---

१ धारणयाध्यानस्य च मङ्गलम् । २ योगिनः स्वच्छन्दमृत्यवः स्वां तनुमाग्नेय्या योगधारणया दग्ध्वा लोकान्तरं प्रविशन्ति देवो भगवांस्तु तथेत्यभिप्रायः । यतोऽदग्ध्वैवं स्वां तनुं वैकुण्ठमाविशत् । ३ यथा सौदामन्या गतिर्मनुष्यैर्न लक्ष्यते देवैस्तु लक्ष्यते तथा भगवतो गतिर्देवैरपि न लक्ष्यते पार्षदैस्तु लक्ष्यते इत्यर्थः । ४ अन्तर्यामित्वेन प्रविश्य ।

किं च यो मनुष्यशरीरेण यमलोकगतं गुरुसुतमानीतवान् तथाऽस्त्रदग्धं त्वां च ररक्ष तथा शिवं बाणयुद्धे जितवान् तथा सदेहं लुब्धकं स्वर्गं निन्ये स स्वरक्षणेऽसमर्थः किम् ॥१२॥ किंच यद्यप्युक्तप्रकारेण सर्वजगतः उत्पत्त्यादिष्वेक एव कारणम् यतः स्वयमशेषशक्तिधृक् । तथापि यादवान् संहृत्य निजवपुरवशेषितं कर्तुं नैच्छत् ॥१३॥ यः एतां कृष्णपदवीं प्रातरुत्थाय कीर्त्तयेत् स तद्गतिं प्राप्नोति ॥१४॥ अथ दारुको

मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम् ॥ जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम् ॥ १२ ॥ तथाऽप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ॥ नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शयन् ॥ १३ ॥ य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ॥ प्रयतः कीर्त्त-येद्भक्त्या तामेवाप्नोत्यनुत्तमाम् ॥ १४ ॥ दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ॥ पतित्वा चरणावस्त्रैर्न्यषिञ्चत्कृष्ण-विच्युतः ॥ १५ ॥ कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ॥ तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ ॥ १६ ॥ तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ॥ व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आननम् ॥ १७ ॥ देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ॥ कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ १८ ॥ प्राणांश्च विजहुस्तत्र भगवद्विरहातुराः ॥ उपगुह्य पतींस्तात चितामारुरुहुः स्त्रियः ॥ १९ ॥

द्वारकां गत्वा वसुदेवोग्रसेनयोः पादयोः पतित्वाऽश्रुपातैर्न्यषिञ्चत् ॥ १५ ॥ तथा वृष्णीनां नाशं कृत्स्नशः कथयामास । तत् श्रुत्वा जनाः शोकमूर्च्छिताः कृष्णवियोगेन विह्वलाः आननं घ्नन्तः सन्तो यत्र ज्ञातयः शेरते तत्र त्वरिताः जग्मुः ॥ १६ ॥ १७ ॥ ततो देवकी रोहिणी वसुदेवः एते रामकृष्णौ पुत्रावपश्यन्तः सन्तः शोकार्ताः भूत्वा प्राणाञ्जहुः ॥ १८ ॥ स्त्रियः स्वपतीनालिङ्ग्य चितामारुरुहुः ॥ १९ ॥

१ मृत्युञ्जयम् । २ मर्त्येन देहेन किं न किञ्चित्कार्यमिति स्वस्थानात्मनिष्ठानां दिव्यां गतिमेव प्रकृष्टां दर्शयन् अन्यथा तेऽपि दिव्यां गतिमनादृत्य योगबलेन देहसिद्धिं विधायात्रैव रन्तुंयतेरंस्तन्माभूदित्येतदर्थमिति भावः ।

रामपत्न्यो रामदेहमालिङ्ग्याग्निं विविशुः । तथा वसुदेवपत्न्यस्तद्गात्रमालिङ्ग्याग्निं विविशुः । हरेः स्नुषाः प्रद्युम्नादीनालिङ्ग्य तथा कृष्ण-
पत्न्यो रुक्मिण्याद्या अग्निं प्राविशन् ॥२०॥ ततोऽर्जुनः कृष्णवियोगातुरः सन्नात्मानं कृष्णोक्तैर्वाक्यैः सान्त्वयामास ॥२१॥ ततो हतानां
नष्टसन्ततीनां बन्धूनां पिण्डोदकादि कारयामास ॥ २२ ॥ ततो हरिणा त्यक्तां द्वारकां समुद्रो भगवन्मन्दिरं विना तदैव प्लावयामास
॥ २३ ॥ यत्र मधुसूदनो नित्य सन्निहितः सर्वमङ्गलमङ्गलं तत्र वर्तते ॥ २४ ॥ अथार्जुनो हतशेषान् स्त्रीबालवृद्धान् गृहीत्वेन्द्रप्रस्थे स्थाप-

रामपत्न्यश्च तद्देहमुपगुह्याग्निमाविशन् ॥ वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषाः ॥ कृष्णपत्न्योऽविशन्नग्निं रुक्मि-
ण्याद्यास्तदात्मिकाः॥२०॥अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ॥ आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः
॥२१॥ बन्धूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ॥ हतानां कारयामास यथावदनुपूर्वशः ॥२२॥ द्वारकां हरिणा त्यक्तां
समुद्रोऽप्लावयत्क्षणात् ॥ वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ २३ ॥ नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः ॥
स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम् ॥ २४ ॥ स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जयः ॥ इन्द्रप्रस्थं समावेश्य वज्रं
तत्राभ्यषेचयत् ॥२५॥ श्रुत्वा सुहृद्वधं राजन्नर्जुनात्ते पितामहाः ॥ त्वां तु वंशधरं कृत्वा जग्मुः सर्वे महापथम् ॥ २६ ॥
य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च ॥ कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते ॥२७॥ इत्थं हरेर्भगवतो रुचि-
रावतारवीर्याणि बालचरितानि च शन्तमानि ॥ अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो भक्तिं परां परमहंसगतौ लभेत॥
॥२८॥ इति श्रीभा० महापु० एकादश० भगवदन्तर्द्धान० एकत्रिंशत्तमोऽध्यायः ॥३१॥ समाप्तोऽयमेकादशः स्कन्धः ॥

यित्वा तत्र वज्रमभ्यषेचयत् ॥२५॥ हे राजन् ! तव पितामहा अर्जुनात् सुहृत्क्षयं श्रुत्वा त्वां वंशधरं कृत्वा सर्वे स्वर्गं जग्मुः ॥२६॥ यो
विष्णोरेतत्कर्माणि जन्म च कीर्तयेत् स सर्वपापैः प्रमुच्यते ॥ २७ ॥ स इत्थं भगवतः कृष्णावतारस्य पराक्रमान् परममङ्गलानि बालचरि-
तानि च गृणन् श्रीकृष्णे परां भक्तिं लभेत ॥ २८ ॥ इति श्रीभागवते म० चूर्णिकायामेकादशस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥ अस्मिन्
स्कन्धेऽनुष्टुप्श्लोकसङ्ख्या-१३९१ ॥ अनुमानेन चूर्णिकानु०सङ्ख्या-१३७६ ॥ छ ॥ इत्येकादशस्कन्धचूर्णिका समाप्ता ॥ छ ॥

# अथ सचूर्णिके श्रीमद्भागवते द्वादशः स्कन्धः प्रारभ्यते

श्रीकृष्णाय नमः ॥ उक्तस्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः ॥ अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥१॥ उक्तो लयावधित्वेन प्राकृता-
त्यन्तिके लये ॥ अधिष्ठानतया चोक्तो महापुरुषलक्षणे ॥ २ ॥ तत्र तु प्रथमे भाविमागधान्वयभूमिपान् ॥ कलिप्रभावतः प्राह सङ्करादि-
मलीमसान् ॥ ३ ॥ राजोवाच ॥ हे मुने ! कृष्णे स्वधामानुगते सति पृथ्व्यां कस्य वंशो बभूव तद्वद ॥ १ ॥ श्रीशुक उवाच ॥ हे राजन् !
बृहद्रथवंशीयाः भाव्याः श्रुतश्रवइत्यादयो रिपुंजयान्ताः नवमे निरूपिताः तत्र योऽन्त्यो रिपुंजयः स एव पुरंजयः । तस्यामात्यः
शुनकः।स स्वामिनं पुरंजयं हत्वा स्वसुतं प्रद्योतसंज्ञं राजानं करिष्यति । तस्य पालकः ॥ २ ॥ तस्य विशाखयूपः । तस्य राजकः । तस्य-

श्रीकृष्णाय नमः ॥ राजोवाच ॥ स्वधामानुगते कृष्णे यदुवंशविभूषणे ॥ कस्य वंशोऽभवत्पृथ्व्यामेतदाचक्ष्व मे
मुने ॥ १ ॥ श्रीशुक उवाच ॥ योऽन्त्यः पुरंजयो नाम भाव्यो बार्हद्रथो नृप ॥ तस्यामात्यस्तु शुनको हत्वा स्वामि-
नमात्मजम् ॥ प्रद्योतसंज्ञं राजानं कर्ता यत्पालकः सुतः ॥ २ ॥ विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥ नन्दि-
वर्धनस्तत्पुत्रः पञ्च प्रद्योतना इमे ॥ ३ ॥ अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीं नृपाः ॥ शिशुनागस्ततो भाव्यः काक-
वर्णस्तु तत्सुतः ॥ क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥४॥ विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति ॥ दर्भकस्त-
त्सुतो भावी दर्भकस्याजयः स्मृतः ॥ ५ ॥ नन्दिवर्धन आजेयो महानन्दिः सुतस्ततः ॥ शिशुनागा दशैवैते षष्ट्यु-
त्तरशतत्रयम् ॥ ६ ॥ समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः ॥ महानन्दिसुतो राजञ्छूद्रीगर्भोद्भवो बली ॥
॥ ७ ॥ महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत् ॥ ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः ॥ ८ ॥ एकच्छत्रां
स पृथिवीमनुल्लङ्घितशासनः ॥ शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ ९ ॥

नन्दिवर्द्धनः । एते प्रद्योतनसंज्ञाः पञ्च नृपाः ॥३॥ अष्टात्रिंशदुत्तरशतम् १३८ वर्षाणि कलौ भूमिं भोक्ष्यन्ति । ततो भावी शिशुनागः । तस्य
काकवर्णः । तस्य क्षेमधर्मा । तस्य क्षेत्रज्ञः ॥४॥ तस्य विधिसारः । तस्याजातशत्रुः । तस्य दर्भकः । तस्याजयः ॥५॥ तस्य नन्दिवर्धनः । तस्य
महानन्दी । एते दश नृपाः षष्ट्युत्तरशतत्रयम् ३६० ॥६॥ वर्षाणि कलौ भुवं भोक्ष्यन्ति । ततो महानन्दिसुतः शूद्रीगर्भोद्भवः ॥७॥ नन्दनामा
भावी । ततः शूद्रप्रायाः अधार्मिकाः नृपा भविष्यन्ति ॥८॥ स नन्दः एकच्छत्रां पृथ्वीं पालयिष्यति द्वितीयः परशुराम इव ॥ ९ ॥

तस्य सुमाल्यप्रमुखाः अष्टौ सुताः शतं वर्षाणि महीं भोक्ष्यन्ति॥१०॥ततः एतान् नव नन्दान् कश्चित् चाणक्यो द्विजः उन्मूलयिष्यति। ततस्ते- षामभावे मौर्यसंज्ञा नृपाः महीं भोक्ष्यन्ति ॥११॥ स चाणक्यो द्विजो मौर्येषु प्रथमं चन्द्रगुप्तं राज्येऽभिषेक्ष्यति । तस्य पुत्रो वारिसारः । तस्याशोकवर्धनः ॥१२॥ तस्य सुयशाः। तस्य सङ्गतः । ततः शालिशूकः।तस्य सोमशर्मा॥१३॥तस्य शतधन्वा । तस्य बृहद्रथः । तत्प्रथमो दश रथश्चेति पराशरादिभिरुक्तः । एते दश मौर्याः १३७ सप्तत्रिंशदुत्तरशतवर्षाणि कलौ महीं भोक्ष्यन्ति॥१४॥बृहद्रथस्य सेनापतिः पुष्पमित्रः स

तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः ॥ य इमां भोक्ष्यन्ति महीं राजानः स्म शतं समाः ॥ १० ॥ नव नन्दान् द्विजः कश्चित्प्रपन्नानुद्धरिष्यति ॥ तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥ ११ ॥ स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥ तत्पुत्रो वारिसारस्तु ततश्चाशोकवर्धनः ॥ १२ ॥ सुयशा भविता तस्य सङ्गतः सुयशः- सुतः ॥ शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥ १३ ॥ शतधन्वा ततस्तस्य भविता तद्बृहद्रथः ॥ मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम् ॥ समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ॥ १४ ॥ अग्निमित्रस्ततस्तस्मा- त्सुज्येष्ठोऽथभविष्यति ॥ वसुमित्रो भद्रकश्च पुलिन्दो भविता सुतः ॥ १५ ॥ ततो घोषः सुतस्तस्माद्वज्रमित्रो भविष्यति ॥ ततो भागवतस्तस्माद्देवभूतिरिति श्रुतः ॥ १६ ॥ शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥ ततः काण्वानियं भूमिर्यास्यत्यल्पगुणान्नृप ॥ १७ ॥ शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥ स्वयं करिष्यते राज्यं वसुदेवो महामतिः ॥ १८ ॥ तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः ॥ काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च ॥ शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ॥ १९ ॥

स्वामिनं हत्वा राज्यं करिष्यति । शुङ्गानां प्रथमः । तस्याग्निमित्रः । तस्य सुज्येष्ठः । तस्य वसुमित्रः । तस्य भद्रकः । तस्य पुलिन्दः॥१५॥ तस्य घोषः । तस्य वज्रमित्रः । तस्य भागवतः । तस्य देवभूतिः ॥१६॥ एते दश शुङ्गाः शताधिकवर्षाणि भूमिं भोक्ष्यन्ति । ततः इयं भूमिः स्वल्पगुणान्काण्वान्यास्यति॥१७॥ ततो देवभूतिनामकं शुङ्गं हत्वा तस्य प्रधानो वसुदेवनामा कण्वो राज्यं करिष्यति ॥१८॥ तस्य भूमित्रः । तस्य नारायणः । तस्य सुशर्मा एते चत्वारः काण्वायनाः पञ्चचत्वारिंशदधिकत्रिशतं ३४५ वर्षाणि कलौ महीं भोक्ष्यन्ति ॥ १९ ॥

ततः काण्वं सुशर्माणं हत्वा तत्सेवकोऽन्ध्रजातीयो बली नाम शूद्रः कंचित्कालं गां भोक्ष्यति॥२०॥ततस्तद्भ्राता कृष्णनामा पृथ्वीपतिर्भविष्यति । तस्य श्रीशांतकर्णः । तस्य पौर्णमासः ॥२१॥ तस्य लम्बोदरः । तस्य विकलः । तस्य मेघस्वातिः । तस्याटमानः ॥२२॥ तस्यानिष्टकर्मा । तस्य हालेयः । तस्य तलकः । तस्य पुरीषभीरुः । तस्य सुनन्दनः ॥ २३ ॥ तस्य चकोरः । तस्य बहुसंज्ञकाः अष्ट पुत्राः । नवमः शिवस्वातिरिति । शिवस्वातेर्गोमतिः । तस्य पुरीमान् ॥२४॥ तस्य मेदःशिराः । तस्य शिवस्कन्दः । तस्य यज्ञश्रीः । तस्य विजयः । तस्य

हत्वा कण्वं सुशर्माणं तद्भृत्यो वृषलो बली ॥ गां भोक्ष्यत्यन्ध्रजातीयः कंचित्कालमसत्तमः ॥ २० ॥ कृष्णनामाऽथ तद्भ्राता भविता पृथिवीपतिः ॥ श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥२१॥ लम्बोदरस्तु तत्पुत्रस्तस्माद्विविकलो नृपः ॥ मेघस्वातिश्च विकलादटमानस्तु तस्य च ॥ २२ ॥ अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः ॥ पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः ॥ २३ ॥ चकोरो नवमो यत्र शिवस्वातिररिन्दमः ॥ तस्यापि गोमती पुत्रः पुरीमान् भविता ततः ॥ २४ ॥ मेदशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः ॥ विजयस्तत्सुतो भाव्यश्चन्द्रविज्ञः स लोमधिः ॥ २५ ॥ एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च ॥ षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन ॥ २६ ॥ सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः ॥ कङ्काः षोडश भूपाला भविष्यन्ति च लोलुपाः ॥२७॥ ततोऽष्टौ यवनाभाव्याश्चतुर्दश च पुष्कसाः ॥ भूयो दश गुरुण्डाश्च मौना एकादशैव तु ॥ २८ ॥ एते भोक्ष्यन्ति पृथिवीं दशवर्षशतानि च ॥ नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥२९॥ भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि तैः संस्थिते ततः ॥ किलकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरिः ॥ ३० ॥

चन्द्रविज्ञः । तस्य लोमधिः ॥२५॥ एते त्रिंशद्राजानः षट्पञ्चाशदधिकचतुःशतानि ४५६ वर्षाणि भूमिं भोक्ष्यन्ति ॥ २६ ॥ ततः आभीराः सप्त नृपाः । ततो गर्दभिनो नृपा दश । कङ्काः षोडश भविष्यन्ति ॥२७॥ ततोऽष्टौ यवनाः । ततश्चतुर्दश पुष्कसाः । ततो गुरुण्डा दश । ततो मौनाः एकादश ॥२८॥ एते सर्वे मौनव्यतिरिक्ताः पञ्चषष्टिर्भूपाः ६५ एकोनैकादशशतानि १०९९ वर्षाणि भुवं भोक्ष्यन्ति ॥ २९ ॥ तत एकादश मौनाः नृपाः त्रीणि शतानि ३०० वर्षाणि भुवं भोक्ष्यन्ति । मौनेषु मृतेषु किलकिलायां पुर्यां भूतनन्दो वङ्गिरिः ॥ ३० ॥

शिशुनन्दिस्तद्भ्राता यशोनन्दिः । एते राजानो १०६ षडुत्तरशतवर्षाणि महीं भोक्ष्यन्ति ॥३१॥ तेषां भूतनन्दवङ्गिर्यादीनां यथायथं त्रयोदश पुत्राः बाह्लिकनामानो भविष्यन्ति । अथ कश्चित्पुष्यमित्रो नृपो भविष्यति । तस्य दुर्मित्रः ॥३२॥ तथान्ध्राः सप्त ७ कौशलाः सप्त ७ विदूरपतयो निषधाश्च । एते एककालाः माण्डलिकाः राजानो बाह्लिकेभ्य एव भविष्यन्ति ॥ ३३ ॥ ततो मागधानां राजा विश्वस्फूर्जिनामा भविष्यति । स विप्रादिवर्णान् पुलिन्दयदुमद्रकसंज्ञान् म्लेच्छप्रायान् करिष्यति ॥ ३४ ॥ असतीः प्रजाः पालयिष्यति । स क्षत्रमु-

शिशुनन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः ॥ इत्येते वै वर्षशतं भविष्यन्त्यधिकानि षट् ॥ ३१ ॥ तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः ॥ पुष्यमित्रोऽथ राजन्यो दुर्मित्रोऽस्य तथैव च ॥ ३२ ॥ एककाला इमे भूपाः सप्तान्ध्राः सप्त कौशलाः ॥ विदूरपतयो भाव्या निषधास्तत एव हि ॥ ३३ ॥ मागधानां तु भविता विश्वस्फूर्जिः पुरंजयः ॥ करिष्यत्यपरो वर्णान् पुलिन्दयदुमद्रकान् ॥३४॥ प्रजाश्च ब्रह्मभूयिष्ठा स्थापयिष्यति दुर्मतिः ॥ वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि ॥ अनुगङ्गामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥३५॥ सौराष्ट्रावन्त्याभीराश्च शूद्रा अर्बुदमालवाः ॥ व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥ ३६ ॥ सिन्धोस्तटे चन्द्रभागां कौन्तीं काश्मीरमण्डलम् ॥ भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ॥ ३७ ॥ तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः ॥ एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥३८॥ स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ॥ उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥३९॥ असंस्कृताः क्रियाहीना रजसा तमसावृताः ॥ प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ॥४०॥

त्साद्य पद्मवत्यां नगर्यां वसन् गङ्गाद्वारमारभ्य प्रयागपर्यन्तां भूमिं भोक्ष्यति ॥ ३५ ॥ ततः सौराष्ट्राः आवन्त्याः आभीराः शूद्राः अर्बुदाः मालवा एतद्देशवासिनो द्विजाः व्रतहीनाः शूद्रप्रायाः नृपाः भविष्यन्ति ॥ ३६ ॥ एते सर्वे म्लेच्छप्रायाः नृपाश्च सिन्धोस्तटे चन्द्रभागां कौन्तीं काश्मीरमण्डलं समकालं भोक्ष्यन्ति । एते सर्वेऽधर्मतत्पराः अल्पदातारस्तीव्रमन्यवः ॥ ३७ ॥ ३८ ॥ स्त्रीबालगोद्विजघ्नाः परदारधनापहराः अल्पायुषः उदितास्तमितप्रायाः संस्कारहीनाः रजस्तमोभ्याप्ताः सन्तः प्रजाः पीडयिष्यन्ति ॥ ३९ ॥ ४० ॥



---

१ वेदाचारशून्याः । २ हर्षशोकादिबहुलाः । ३ गर्भाधानादिसंस्कारशून्याः । ४ धनाद्यपहारादिना पीडयिष्यंति ।

तदा तद्देशवासिनो मनुष्याः राजसदृशधर्म्मपराः अन्योऽन्यतो राजतश्च क्षयं यास्यन्ति ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे चूर्णिकायां प्रथमोऽध्यायः ॥१॥ द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः । अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥१॥ श्रीशुक उवाच ॥ ततो दिने दिने धर्मः सत्यं शौचं दया क्षमायुर्बलं स्मृतिर्नंश्यति ॥१॥ कलिधर्मानाह । कलौ वित्तमेव नृणां जन्माचारगुणोदयः ॥ धर्मन्याययोर्व्यवस्थायां बलमेव कारणम् ॥२॥ दाम्पत्ये रुचिरेव हेतुः न कुल गोत्रादि । क्रयविक्रयादौ व्यवहारे कापट्यम् । स्त्रीपुंसयोर्यावद्रतिस्तावत्प्रीतिः ।

तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ॥ अन्योऽन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे कलौ भाविनृपान्वय० प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ॥ कालेन बलिना राजन्नङ्क्ष्यत्यायुर्बलं स्मृतिः ॥ १ ॥ वित्तमेव कलौ नृणां जन्माचारगुणोदयः ॥ धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥ दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ॥ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥ ३ ॥ लिङ्गमेवाश्रमख्यातावन्योऽन्यापत्तिकारणम् ॥ अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥ ४ ॥ अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु ॥ स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥ दूरे वार्ययनं तीर्थं लावण्ये केशधारणम् ॥ उदरम्भरिता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥ दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् ॥ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥ ७ ॥

विप्रत्वे सूत्रधारणम् ॥३॥ आश्रमाणां ज्ञाने चिह्नमेव कारणं न त्वाचारः । पाण्डित्ये भाषणं हेतुः ॥४॥ असाधुत्वेऽनाढ्यता । साधुत्वे दम्भः । स्त्रीणां विवाहे स्वीकार एव । स्नानमेवालङ्कारः ॥५॥ दूरे यो जलाशयः स एव तीर्थम् । लावण्ये केशधारणम् । उदरभरणमेव पुरुषार्थः । सत्यत्वे धार्ष्ट्यमेव ॥ ६ ॥ कुटुम्बपोषणे दक्षत्वम् । यशोऽर्थं धर्मसेवनम् । एवं दुष्टप्रजाभिः क्षितिमण्डले व्याप्ते सति ॥ ७ ॥

१ दण्डाजिनादिकम् । २ आश्रमादाश्रमान्तरगमने ।

ब्रह्मविट्क्षत्रशूद्राणां मध्ये यो बली स नृपो भविष्यति । किंच लुब्धैर्निर्लज्जैश्चौर्यधर्मरतैः राजन्यैः ॥८॥ अपहृतदारद्रविणाः प्रजा गिरीं वनं यास्यन्ति शाकमूलमांसमधुफलपुष्पबीजभोजनाः ॥ ९ ॥ प्रजाः अनावृष्ट्या दुर्भिक्षकरैः शीतवाताऽतपादिभिः ॥ १० ॥ क्षुत्तृड्व्याधिभिः सन्तापेन चिन्तया च पीडिताः सत्यो नङ्क्ष्यन्ति । कलौ विंशतिः त्रिंशद्वर्षाणि वा नृणां परमायुः ॥ ११ ॥ एवं कलिदोषतो नृणां क्षीणेषु देहेषु वर्णाश्रमिणां वेदमार्गे च नष्टे ॥ १२ ॥ पाषण्डप्राये धर्मे चौरप्रायेषु राजसु चौर्यानृतहिंसादिप्रायेषु नृषु ॥ १३ ॥ शूद्रप्रायेषु वर्णेषु

ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥ आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ॥ शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥ ९ ॥ अनावृष्टया विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः ॥ शीतवातातपप्रावृड्ढिमैरन्योऽन्यतः प्रजाः ॥१०॥ क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्तापेन च चिन्तया ॥ त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥ क्षीयमाणेषु देहेषु देहिनां कलिदोषतः ॥ वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥ पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥ १३ ॥ शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ॥ गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ॥ १४ ॥ अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु ॥ विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥१५॥ इत्थं कलौ गतप्राये जने तु खरधर्मणि ॥ धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १६ ॥ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥१७॥ शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ॥ भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १८ ॥



छागप्रायासु धेनुषु गृहप्रायेषु आश्रमेषु यौनप्रायेषु बन्धुषु ॥१४॥ अणुप्रायास्वोषधीषु शमीप्रायेषु वृक्षेषु विद्युत्प्रायेषु मेघेषु धर्महीनेषु गृहेषु सत्सु ॥ १५ ॥ इत्थं कलौ समाप्तप्राये धर्मरक्षणाय सत्त्वगुणेन भगवान् ॥ १६ ॥ साधूनां मोक्षाय शम्भलग्रामे मुख्यस्य विष्णुयशसो द्विजस्य गृहे कल्किः प्रादुर्भविष्यति ॥ १७ ॥ १८ ॥

१ प्रमाणतः क्षीरतश्चाजासदृशीषु । २ योनितः सम्बद्धाः श्यालादयस्तत्प्रायेषु । ३ श्यामाकतुल्यासु । ४ वृक्षेषु ।

स शीघ्रगं देवदत्तमश्वमारुह्य भूमौ विचरन् खड्गेन राजवेषगुप्तान् दस्यून् कोटिशो हनिष्यति॥१९॥२०॥तदा वासुदेवस्याङ्गचन्दनसुगन्धवायुस्पर्शेन सर्वेषां मनांसि स्वच्छानि भविष्यन्ति ॥२१॥ वासुदेवे हृदि स्थिते सति प्रजोत्पत्तिविशेषाः भविष्यन्ति ॥ २२ ॥ यदा कल्किर्हरिर्भविता तदा कृतयुगं सात्त्विकी प्रजोत्पत्तिश्च भविष्यति॥२३॥किंच यदा चन्द्रसूर्यबृहस्पतीनां पुष्यनक्षत्रे समकाल एव प्रवेशस्तदैव कृतयुगप्रवृत्तिः स्यात्॥२४॥ हे राजन् ! ये गताः वर्तमाना भविष्यन्तो नृपास्ते सोमसूर्यवंशीयाः संक्षेपतः कथिताः ॥२५॥ तव जन्मारभ्य नन्दाभिषेकावधि

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ॥ असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥ विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ॥ नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति ॥ २० ॥ अथ तेषां भविष्यन्ति मनांसि विशदानि वै ॥ वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥ पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २१ ॥ तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति ॥ वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥ २२ ॥ यदाऽवतीर्णो भगवान्कल्किधर्मपतिर्हरिः ॥ कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥२३॥ यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती ॥ एकराशौ समेष्यन्ति तदा भवति तत्कृतम् ॥ २४ ॥ येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः ॥ ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः ॥ २५ ॥ आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ॥ एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥ २६ ॥ सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ॥ तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ २७ ॥ तेनैव ऋषयो युक्तास्तिष्ठन्त्यब्दशतानि च ॥ ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥२८॥ विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः ॥ तदाऽविशत्कलिर्लोकं पापे यद्रमते जनः ॥ २९ ॥

द्वाभ्यां न्यूनानि पञ्चदश शतानि १४९८ वर्षाणि भवन्ति ॥२६॥ हे राजन् ! सप्तर्षीणां मध्ये यौ पुलहक्रतुसंज्ञावुदयसमये प्रथममुदितौ दृश्येते तयोर्मध्ये यद् निशि नक्षत्रं दृश्यते ॥ २७ ॥ तेनैव युक्ता सप्तर्षयः एकस्मिन्नेकस्मिन् ऋक्षे नृणां शतंशतं समास्तिष्ठन्ति । तेऽधुना मघासु विचरन्ति ॥२८॥ यदा कृष्णो वैकुण्ठं गतस्तदा कलिर्लोकमाविशत् । यस्मिन् युगे जनः पापे रमते ॥ २९ ॥

यावद् भगवान् जिजीव तावत् कलिः स्वबलं कर्तुं नाशकत् ॥३०॥ किं च हे राजन् ! यदा सप्तर्षयो मघासु विचरन्ति तदा द्वादशाब्दशतात्मकः कलिः प्रवृत्तः ॥३१॥ यदा च मघाभ्यः पूर्वाषाढायां यास्यन्ति तदा कलिर्वृद्धिं प्राप्स्यति ॥३२॥ किं च यस्मिन् दिने श्रीकृष्णो वैकुण्ठं यातस्तदैव प्रविष्टः कलिरिति पुराविदः प्राहुः ॥३३॥ दिव्यसहस्रवर्षात्मके काले गते सति पुनः कृतं भविष्यति । तदा मनः आत्मप्रकाशकं

यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ॥ तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥ यदा देवर्षयः सप्त मघासु विचरन्ति हि ॥ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥ यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ॥ तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥ यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि ॥ प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥ दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम् ॥ भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥ इत्येष मानवो वंशो यथा संख्यायते भुवि ॥ तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगेयुगे ॥ ३५ ॥ एतेषां नाम[1]लिङ्गानां पुरुषाणां महात्मनाम् ॥ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ॥ ३६ ॥ देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ॥ कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥ ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥ ३८ ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ अनेन क्रमयोगेन भुवि प्राणिषु वर्त्तते ॥ ३९ ॥ राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे ॥ भूमौ ममत्वं कृत्वान्ते हित्वेमां निधनं गताः ॥ ४० ॥

स्यात्॥३४॥एवं मानवो वंशस्तथा विट्छूद्रविप्राणां च वंशः कथितः॥३५॥एतेषां पुरुषाणां महात्मनां कीर्तिरेव भुवि स्थिता॥३६॥किंच शन्तनोर्भ्राता देवापिरिक्ष्वाकुवंशजो मरुश्च कलापग्रामे आसाते ॥३७॥ तौ वासुदेवानुशिक्षया कलेरन्ते इहाऽऽगत्य धर्मं विस्तारयतः ॥३८॥ एवं क्रमेण सत्यादिकं चतुर्युगं भुवि प्राणिषु वर्तते ॥३९॥ हे राजन् ! ये मया प्रोक्ताः नृपाः अपरे च ते सर्वे भूमौ ममतां कृत्वा नाशं गताः ॥४०॥

१ नामैव प्रकाशकं येषाम् ।

किं च नृपस्यापि देहस्यान्ते कृमिविड्भस्मान्यतमसंज्ञा भविष्यति । अतो देहस्यार्थं यो भूतेभ्यो द्रुह्यति तस्य निरयो भवति ॥ ४१ ॥ इयं भूर्मत्पूर्वजैर्धृतेदानीं मत्पुत्रपौत्रजनस्यार्थं यास्यत्येवं ये विदन्ति ॥४२॥ तेऽज्ञाः अन्ते महीं शरीरं च हित्वा निधनं गताः ॥४३॥ ये ये भूपतयस्तेजसा भुवं भुञ्जन्ति ते सर्वे कालेन कथामात्राऽशेषिताः कृताः ॥४४॥ इति श्रीभा० म० द्वा० चू० द्वितीयोऽध्यायः ॥२॥ तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते ॥ कलौ च दोषभूयिष्ठे दोषहन्त्री हरेर्नुतिः ॥१॥ श्रीशुक उवाच ॥ अथ स्वस्य जये उद्युक्तान् नृपान् दृष्ट्वेयं भूर्हसति ।

कृमिविड्भस्मसंज्ञाऽन्ते राजनाम्नोऽपि यस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥४१॥ कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता ॥ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥४२॥ तेजोऽबन्नमयं कायं गृहीत्वात्मतयाऽबुधाः ॥ महीं ममतया चोभौ हित्वान्तेऽदर्शनं गताः ॥४३॥ ये ये भूपतयो राजन्भुञ्जन्ति भुवमोजसा ॥ कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४४ ॥ इति श्रीभा० म० द्वा० कल्क्यवतारादि० द्वितीयोऽध्यायः ॥ २ ॥ श्रीशुक उवाच ॥ दृष्ट्वाऽऽत्मनि जये व्यग्रान्नृपान्हसति भूरियम् ॥ अहो मां विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ १ ॥ काम एष नरेन्द्राणां मोहः स्याद्विदुषामपि ॥ येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः ॥२॥ पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः ॥ ततः सचिवपौराप्तकरीन्द्रानस्य कण्टकान् ॥ ३ ॥ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ॥ इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥ ४ ॥ समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥

अहो एते मृत्योः क्रीडनकाः नृपाः मां विजिगीषन्ते ॥ १ ॥ येन कामेन फेनोपमे देहे विश्वस्ता ये नृपास्तेषामेष कामो निष्फल एव स्यात् ॥२॥ तमेवमाह । पूर्वमिन्द्रियषड्वर्गं निर्जित्य राजमन्त्रिणो वशीकरिष्यामस्ततः प्रधानपौरादीन् जित्वा पृथ्वीं जेष्यामः ॥३॥ इत्याशाबद्धहृदयाः समीपे प्राप्तं कालं न पश्यन्ति ॥४॥ एवं केचित्पुनर्मां जित्वाऽतितृष्णयाऽब्धिं विशन्ति ॥ ५ ॥

१ राजेति नाम यस्य तस्य । २ करीन्द्राः हस्तिपकाः ।

यावद् भगवान् जिजीव तावत् कलिः स्वबलं कर्तुं नाशकत् ॥३०॥ किं च हे राजन् ! यदा सप्तर्षयो मघासु विचरन्ति तदा द्वादशाब्दशतात्मकः कलिः प्रवृत्तः ॥३१॥ यदा च मघाभ्यः पूर्वाषाढायां यास्यन्ति तदा कलिर्वृद्धिं प्राप्स्यति ॥३२॥ किं च यस्मिन् दिने श्रीकृष्णो वैकुण्ठं यातस्तदैव प्रविष्टः कलिरिति पुराविदः प्राहुः ॥३३॥ दिव्यसहस्रवर्षात्मके काले गते सति पुनः कृतं भविष्यति । तदा मनः आत्मप्रकाशकं

यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ॥ तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥ यदा देवर्षयः सप्त मघासु विचरन्ति हि ॥ तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥ यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ॥ तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥ यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि ॥ प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥ दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम् ॥ भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥ इत्येष मानवो वंशो यथा संख्यायते भुवि ॥ तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगेयुगे ॥ ३५ ॥ एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ॥ कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ॥ ३६ ॥ देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ॥ कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥ ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥ ३८ ॥ कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ॥ अनेन क्रमयोगेन भुवि प्राणिषु वर्त्तते ॥ ३९ ॥ राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे ॥ भूमौ ममत्वं कृत्वान्ते हित्वेमां निधनं गताः ॥ ४० ॥



स्यात् ॥३४॥ एवं मानवो वंशस्तथा विट्शूद्रविप्राणां च वंशः कथितः ॥३५॥ एतेषां पुरुषाणां महात्मनां कीर्तिरेव भुवि स्थिता ॥३६॥ किंच शन्तनोर्भ्राता देवापिरिक्ष्वाकुवंशजो मरुश्च कलापग्रामे आसाते ॥३७॥ तौ वासुदेवानुशिक्षया कलेरन्ते इहाऽऽगत्य धर्मं विस्तारयतः ॥३८॥ एवं क्रमेण सत्यादिकं चतुर्युगं भुवि प्राणिषु वर्तते ॥३९॥ हे राजन् ! ये मया प्रोक्ताः नृपाः अपरे च ते सर्वे भूमौ ममतां कृत्वा नाशं गताः ॥४०॥

---

१ नामैव प्रकाशकं येषाम् ।

किं च नृपस्यापि देहस्यान्ते कृमिविड्भस्मान्यतमसंज्ञा भविष्यति । अतो देहस्यार्थं यो भूतेभ्यो द्रुह्यति तस्य निरयो भवति ॥ ४१ ॥ इयं भूर्मत्पूर्वजैर्धृतेदानीं मत्पुत्रपौत्रजनस्यार्थं यास्यत्येवं ये विदन्ति ॥४२॥ तेऽज्ञाः अन्ते महीं शरीरं च हित्वा निधनं गताः ॥४३॥ ये ये भूपतयस्तेजसा भुवं भुञ्जन्ति ते सर्वे कालेन कथामात्राऽशेषिताः कृताः ॥४४॥ इति श्रीभा० म० द्वा० चू० द्वितीयोऽध्यायः ॥२॥ तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते ॥ कलौ च दोषभूयिष्ठे दोषहन्त्री हरेर्नुतिः ॥१॥ श्रीशुक उवाच ॥ अथ स्वस्य जये उद्युक्तान् नृपान् दृष्ट्वेयं भूर्हसति ।

कृमिविड्भस्मसंज्ञाऽन्ते राजनाम्नोऽपि[1] यस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥४१॥ कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता ॥ मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥४२॥ तेजोऽबन्नमयं कायं गृहीत्वात्मतयाऽबुधाः ॥ महीं ममतया चोभौ हित्वान्तेऽदर्शनं गताः ॥४३॥ ये ये भूपतयो राजन्भुञ्जन्ति भुवमोजसा ॥ कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४४ ॥ इति श्रीभा० म० द्वा० कल्क्यवतारादि० द्वितीयोऽध्यायः ॥ २ ॥ श्रीशुक उवाच ॥ दृष्ट्वाऽऽत्मनि जये व्यग्रान्नृपान्हसति भूरियम् ॥ अहो मां विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ १ ॥ काम एष नरेन्द्राणां मोहः स्याद्विदुषामपि ॥ येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः ॥२॥ पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः ॥ ततः सचिवपौराप्तकरीन्द्रानस्य[2] कण्टकान् ॥ ३ ॥ एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ॥ इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥ ४ ॥ समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥

अहो एते मृत्योः क्रीडनकाः नृपाः मां विजिगीषन्ते ॥ १ ॥ येन कामेन फेनोपमे देहे विश्वस्ता ये नृपास्तेषामेष कामो निष्फल एव स्यात् ॥२॥ तमेवमाह । पूर्वमिन्द्रियषड्वर्गं निर्जित्य राजमन्त्रिणो वशीकरिष्यामस्ततः प्रधानपौरादीन् जित्वा पृथ्वीं जेष्यामः ॥३॥ इत्याशाबद्धहृदयाः समीपे प्राप्तं कालं न पश्यन्ति ॥४॥ एवं केचित्पुनर्मां जित्वाऽतितृष्णयाऽब्धिं विशन्ति ॥ ५ ॥

१ राजेति नाम यस्य तस्य । २ करीन्द्राः हस्तिपकाः ।

यां मां विसृज्य मनवस्तत्सुताश्च गतास्तां मां मूढा नृपाः जेष्यन्ति किम् ! ॥६॥ मत्कृते पितृपुत्राणां भ्रातृणां च विग्रहो भवति ॥७॥ किंच इयं मही ममैव न तवेतिवादिनो नृपाः मिथो घ्नन्ति म्रियन्ते च ॥८॥ अहो पृथुः पुरूरवाः गाधिर्नहुषो भरतोऽर्जुनो मान्धाता सगरो रामः खट्वाङ्गो धुन्धुमारो रघुः ॥९॥ तृणबिन्दुर्ययातिः शन्तनुः शर्यातिर्गयो भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥१०॥ हिरण्यकशिपुर्वृत्रो रावणो नमुचिः शम्बरो भौमो हिरण्याक्षस्तारकः ॥११॥ एतेऽन्ये च सर्वविदः शूराः सर्वजितः ॥१२॥ ते मयि ममतां कृत्वावर्त्तन्त ते

यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ॥ गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥ ६ ॥ मत्कृते पितृपुत्राणां भ्रातृणां चापि विग्रहः ॥ जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥७॥ ममैवेयं मही कृत्स्ना न ते मूढेतिवादिनः ॥ स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥ ८ ॥ पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः ॥ मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥९॥ तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः ॥ भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥१०॥ हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः ॥ नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥ अन्ये च बहवो दैत्या राजानो ये महेश्वराः ॥ सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥ ममतां मय्यवर्त्तन्त कृत्वोच्चैर्मर्त्यधर्मिणः ॥ कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥१३॥ कथा इमास्ते कथिता महीयसां वितीर्य लोकेषु यशः परेयुषाम् ॥ विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥ १४ ॥ यस्तूत्तमश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ॥ तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥ १५ ॥ राजोवाच ॥ केनोपायेन भगवन् कलेर्दोषान्कलौ जनाः ॥ विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ॥ १६ ॥

सर्वे कालेन कथावशेषाः कृताः ॥ १३ ॥ हे राजन् ! येषां कथाः ज्ञानवैराग्यं ज्ञातुमिच्छया तुभ्यं कथिता एता वाग्विलासमात्ररूपाः न तु परमार्थकथनम् ॥१४॥ अतः कृष्णे भक्तिमिच्छुः पुरुषस्तद्गुणानुवादं नित्यं शृणुयात् ॥१५॥ राजोवाच ॥ हे भगवन् ! जनाः कलिदोषान् केनोपायेन नाशयिष्यन्ति तद् ब्रूहि ॥ १६ ॥

१ मृतानाम् । २ विज्ञानं विषयासारताज्ञानं ततो वैराग्यं तयोर्विवक्षया ।

तथा युगानि तद्धर्मान् प्रलयकल्पयोर्मानं च वद ॥१७॥ श्रीशुक उवाच ॥ कृतयुगे धर्मः सत्यं दया तपो दानमिति चतुष्पाद्वर्तते ॥ १८॥ तत्र जनाः संतुष्टा दयायुक्ताः शान्ताः आत्मारामा समदृशो भवन्ति ॥ १९ ॥ त्रेतायां धर्मस्य पादानां तुर्यांशोऽनृतहिंसाऽसन्तोषद्वेषरूपैरधर्मपादैः शनैर्ह्रीयते ॥२०॥ तदा क्रियातपोनिष्ठाः नातिहिंस्राः न लम्पटाः ब्राह्मणाधिकाः प्रजा भवन्ति ॥२१॥ अथ द्वापरे हिंसानृतासन्तोषद्वेषैरधर्मलक्षणैर्धर्मस्य द्वौ पादौ ह्रसतः॥२२॥तत्र जनाः यशस्विनः वेदाध्ययने रताः हृष्टा आढ्याः क्षत्रियब्राह्मणप्रधानाः अभवन् ॥२३॥

युगानि युगधर्मांश्च मानं प्रलयकल्पयोः ॥ कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥ श्रीशुक उवाच ॥ कृते प्रवर्त्तते धर्मश्चतुष्पात्तज्जनैर्धृतः ॥ सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥ संतुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ॥ आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥ त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ॥ अधर्मपादैरनृतहिंसाऽसन्तोषविग्रहैः ॥ २० ॥ तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः ॥ त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥ तपः सत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥ हिंसातुष्ट्यानृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥ यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः ॥ आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥ २३ ॥ कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ॥ एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २४ ॥ तस्मिँल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ॥ दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥ सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ॥ कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥

कलौ तु धर्मस्य पादानां चतुर्थांशो दृश्यते सोऽपि नङ्क्ष्यति ॥ २४ ॥ तदा प्रजाः लुब्धा दुराचारा निर्दयाः शुष्कवैरिण्यो दुर्भगाः अतितृष्णाः शूद्रभिक्षादिप्रधानाः भविष्यन्ति ॥ २५ ॥ एवं युगवैषम्ये हेतुमाह । ये सत्त्वादिगुणाः पुरुषे दृश्यन्ते ते कालप्रेरिता आत्मनि वर्तन्ते ॥ २६ ॥

---

१ आत्माभ्यासवन्तः । २ ब्राह्मणाधिकाः । ३ यशःप्रियाः । ४ सत्त्वमित्यादिभिः पञ्चभिः श्लोकैः युगानां वैषम्ये कारणमाह ।

यदा मनोबुद्धीन्द्रियाणि सत्त्वगुणे वर्तन्ते ज्ञाने तपसि रुचिश्च तदा कृतयुगं प्रवृत्तं विद्यात् ॥२७॥ यदा च काम्यकर्मसु नृणां प्रीतिस्तदा राजसं त्रेतायुगं विद्यात् ॥२८॥ यदा लोभोऽसन्तोषः काम्यकर्मसु प्रीतिश्च तदा रजस्तमः प्रधानं द्वापरं जानीहि ॥२९॥ यदा मायानृतमालस्यं निद्रा हिंसा दुःखं शोको मोहो भयं दीनत्वं तदा तामसः कलिर्ज्ञातव्यः ॥३०॥ अथ कलिदोषानाह । यद्धेतोर्मर्त्या क्षुद्रभाग्याः मन्दमतयो बह्वाहाराः निर्द्रव्याः स्त्रियश्च पुंश्चल्यो भविष्यन्ति ॥ ३१ ॥ चौराधिका देशा पाखण्डदूषिता वेदाः प्रजाभक्षका नृपाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥

प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च ॥ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः ॥२७॥ यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम् ॥ तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ॥२८॥ यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ॥ कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २९ ॥ यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम् ॥ शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥३०॥ यस्मात्क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ॥ कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥ दस्यूत्कृष्टा[1] जनपदा वेदाः पाषण्डदूषिताः ॥ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥ अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः ॥ तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः ॥ ३३ ॥ ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः ॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥३४॥ पणयिष्यन्ति वै क्षुद्राः किराटाः[2] कूटकारिणः ॥ अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम् ॥ ३५ ॥ पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ॥ भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥

ब्रह्मचारिणो योग्याचारशून्या गृहस्था भिक्षाटनपरास्तपस्विनो ग्रामवासाः यतयो द्रव्यलोलुपाः भविष्यन्ति ॥ ३३ ॥ किंच स्त्रियो लघुदेहा बह्वाहाराः बहुप्रजा गतलज्जाः कटुभाषिण्यश्चौर्यमायोरुसाहसयुताः भविष्यन्ति ॥३४॥ नीचवैश्यव्यवहारं वर्तयिष्यन्ति । अनापद्यपि निन्द्यवृत्तिं साधु मंस्यन्ते ॥३५॥ भृत्याः निर्द्रव्यं पतिं त्यक्ष्यन्ति । स्वामिनश्च रोगव्याप्तं भृत्यं त्यक्ष्यन्ति । दोग्धारोऽदोहाःगास्त्यक्ष्यन्ति ॥३६॥

---

१ दस्यव उत्कृष्टाः प्रचुराः येषु ते । २ वणिजः ।

पितृभ्रात्रादीन् हित्वा स्त्रीलम्पटाः नराः भार्याभगिनीभिर्भार्याभ्रातृभिश्च सह विचारं करिष्यन्ति॥३७॥शूद्रास्तपस्विवेषेण प्रतिग्रहं करिष्यन्ति। अधर्मज्ञाः उच्चासनम् आरुह्य धर्मं वक्ष्यन्ति ॥३८॥ कलावन्नहीने भूतले सत्यनावृष्ट्या भयातुराः नित्यं समुद्विग्नमनसः ॥३९॥ स्नानपान-शयनवस्त्रभूषणान्नैः रहिताः पिशाचसदृशाः प्रजाः भविष्यन्ति ॥ ४० ॥ किञ्च कलौ विंशतिवराटकमात्रेऽप्यर्थे वैरं कृत्वा त्यक्तसौहृदाः प्राणान् त्यक्ष्यन्ति ॥४१॥ पुत्राः वृद्धमातापितरौ न रक्षिष्यन्ति । पितरोऽपि कुशलान् पुत्रान् न रक्षिष्यन्ति ॥ ४२ ॥ हे राजन्! कलौ

पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः ॥ ननान्दृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥ ३७ ॥ शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः ॥ धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥ नित्यमुद्विग्नमनसो दुर्भिक्षकरपीडिताः ॥ निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥ वासोऽन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाः पिशाचसंदर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥ कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ॥ त्यक्ष्यन्ति च प्रियान्प्राणान् हनिष्यन्ति स्वकानपि ॥ ४१ ॥ न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि ॥ पुत्रान्सर्वार्थकुशलान् क्षुद्राः शिश्नोदरम्भराः ॥ ४२ ॥ कलौ न राजञ्जगतां परं गुरुं त्रैलोक्यनाथानतपादपङ्कजम् ॥ प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥ ४३ ॥ यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन्वा विवशो गृणन् पुमान् ॥ विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥ पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसम्भवान् ॥ सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ ४५ ॥ श्रुतः सङ्कीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ॥ नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥

पाषण्डविभिन्नचेतसो मनुष्याः बहुधा जगद्गुरुमच्युतं न यक्ष्यन्ति ॥४३॥ अहो म्रियमाणः आतुरो विवशः पतन् यन्नाम गृणन् विमुक्तकर्मबन्धनः सन् परमां गतिं प्राप्नोति तं जनाः न यक्ष्यन्ति ॥ ४४ ॥ अथ कलिदोषनाशोपायमाह । पुंसां चितस्थो भगवान् कलिकृतदोषान्हरति ॥४५॥ किं च श्रुतः कीर्त्तितो ध्यातः पूजितः आहृतोऽपि वा भगवान् नृणां जन्मायुतपापं दूरीकरोति ॥ ४६ ॥

अपि च भगवति हृदि स्थिते
यथा सुवर्णे स्थितोऽग्निस्ताम्रादिधातुजं दुर्वर्णं हन्ति तथाऽऽत्मगतो विष्णुर्योगिनामशुभान्तःकरणं हन्ति ॥४७॥ अपि च भगवति हृदि स्थिते
सत्यन्तरात्मा यथा शुद्धिं लभते तथा विद्यातपःप्राणायाममतीर्थयात्राव्रतादिभिर्न ॥४८॥ हे राजन् ! तस्मात् केशवं हृदिस्थं कुरु। ततः परां
गतिं यास्यसि ॥४९॥५०॥ किञ्च हे नृप ! दोषनिधेः कलेरेको महान् गुणोऽस्ति । कृष्णस्य कीर्त्तनादेव मुक्तबन्धः सन् परं पदं व्रजेत् ॥५१॥
किंच कृते विष्णोर्ध्यानतो यल्लभ्यते त्रेतायां यज्ञैर्द्वापरे हरिपूजया तत्फलं कलौ हरिकीर्त्तनाल्लभ्यते ॥५२॥ इति श्रीभा० द्वादशस्कन्धे चू०

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ॥ एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥४७॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ॥ नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥ तस्मात्सर्वात्मना राजन्हृदिस्थं कुरु केशवम् ॥ म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥४९॥ म्रियमाणैरभिध्येयो भगवान्परमेश्वरः ॥ आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसंश्रयः ॥ ५० ॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ॥ कीर्त्तनादेव कृष्णस्य मुक्तसंगः परं व्रजेत् ॥५१॥ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ॥ द्वापरे परिचर्यायां कलौ तद्धरिकीर्त्तनात् ॥ ५२ ॥ इति श्रीभा० महा० कलिदोषादिव० तृतीयोऽध्यायः ॥ ३ ॥ श्रीशुक उवाच ॥ कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप ॥ कथितो युगमानं च शृणु कल्पलयावपि ॥१॥ चतुर्युगसहस्रं च ब्रह्मणो दिनमुच्यते ॥ स कल्पो यत्र मनवश्चतुर्दश विशाम्पते ॥२॥ तदन्ते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता ॥ त्रयो लोका इमे तत्र कल्पन्ते प्रलयाय हि ॥३॥ एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ॥ शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः ॥४॥

तृतीयोऽध्यायः ॥३॥ चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः ॥ यत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥१॥ श्रीशुक उवाच ॥ हे नृप ! परमाण्वादिद्विपरार्द्धान्तः कालस्ते कथितः युगमानं च कथितम् । अथ कल्पलयौ शृणु ॥ १ ॥ चतुर्युगसहस्रं ब्रह्मणो दिनं स कल्पः । यत्र चतुर्दश मनवो भवन्ति ॥ २ ॥ ब्रह्मणो दिनान्ते तावान् प्रलयः । सा ब्राह्मी रात्रिः यत्र त्रयो लोकाः प्रलयाय कल्पन्ते ॥ ३ ॥ एष नैमित्तिकः प्रलयः प्रोक्तः । यत्र शेषासनो नारायणो विश्वं संहृत्य शेते ब्रह्मा च तस्मिन् शेते ॥ ४ ॥

अथ प्राकृतिकं लयमाह । ब्रह्मणः शतवर्षात्मके आयुषि गते सति महदहङ्कारपञ्चतन्मात्ररूपाः सप्त प्रकृतयः प्रलयाय कल्पन्ते॥५॥एष प्राकृतिकः प्रलयो यत्राण्डकोशो लीयते ॥६॥ तदा पर्जन्यः शतवर्षाणि भूमौ न वर्षति । तेन निरन्ने सति क्षुधार्दिताः अन्योऽन्यं भक्ष्यमाणाः सत्यः क्षयं यास्यन्ति ॥ ७ ॥ ततः प्रलयकालीनः सूर्यः सामुद्रं दैहिकं भौमं सर्वं रश्मिभिराकर्षति नैव मुञ्चति ॥८॥ ततः संकर्षणमुखोत्प-

द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ॥ तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥ ५ ॥ एष प्राकृतिको राजन् प्रलयो यत्र लीयते ॥ आण्डकोशस्तु संघातो विघात उपसादिते ॥ ६ ॥ पर्जन्यः शतवर्षाणि भूमौ राजन्न वर्षति ॥ तदा निरन्ने ह्यन्योऽन्यं भक्ष्यमाणाः क्षुधार्दिताः ॥ क्षयं यास्यन्ति शनकैः कालेनोपद्रुताः प्रजाः ॥७॥ सामुद्रं दैहिकं भौमं रसं सांवर्त्तको रविः ॥ रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ॥ ८ ॥ ततः संवर्तको वह्निः संकर्षणमुखोत्थितः ॥ दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥ ९ ॥ उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ॥ दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ॥ १० ॥ ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ॥ परः संवर्तको वाति धूम्रं खं रजसा वृतम् ॥ ११ ॥ ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः ॥ शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः ॥ १२ ॥ तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लवे ॥ ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते ॥ १३ ॥ अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ॥ ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १४ ॥

न्नोऽग्निर्भूविवरान्दहति ॥ ९ ॥ तदोपर्यधोऽग्निसूर्ययोर्ज्वालाभिर्दह्यमानं ब्रह्माण्डं विभाति दग्धगोमयपिण्डवत् ॥१०॥ ततः प्रचण्डो वायुर्वर्षाणामधिकं शतं वाति । तदा रजसा व्याप्तं खं धूम्रं भवति॥११॥ततो मेघकुलानि वर्षशतं वर्षन्ति । ततः एकोदकं ब्रह्माण्डं भवति॥१२॥तदा च भूमेर्गन्धगुणमापो ग्रसन्ति । नष्टगन्धा भूर्नश्यति॥१३॥ततस्तेजोऽपां रसं ग्रसते । ताः आपस्तेजसि लीयन्ते । वायुस्तेजसो रूपं ग्रसते॥१४॥

१ प्रकृतीनां तत्कार्याण्डकोशस्य च प्रलयात्प्राकृतिकः । २ विघातकारणे । ३ कालप्रापिते ।

तत्तेजो वायौ लीयते । वायोर्गुणं स्पर्शं खं ग्रसते । स वायुराकाशे लीयते ॥ १५ ॥ खस्य शब्दगुणं तामसाहङ्कारो ग्रसते । सात्त्विकाहङ्कारो देवान् ग्रसते । राजसाहङ्कारः इंद्रियाणि ग्रसते ॥ १६ ॥ महत्तत्त्वमहङ्कारं ग्रसते । महत्तत्त्वं त्रयो गुणाः ग्रसन्ते । गुणान् प्रधानतत्त्वं ग्रसते सैव प्रकृतिः ॥ १७ ॥ प्रधानतत्त्वस्य तु लयो नास्ति । तमाद्यन्तहीनमव्यक्तमव्ययं वदन्ति ॥ १८ ॥ यत्र वाचो मनस्त्रिगुणाः महत्तत्वाद-

लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ स वै विशति खं राजंस्ततश्च नभसो गुणम् ॥ १५ ॥ शब्दं ग्रसति भूतादिर्नभस्तमनु लीयते ॥ तैजसश्चेन्द्रियाण्यङ्ग देवान्वैकारिको गुणैः ॥ १६ ॥ महान्ग्रसत्यहङ्कारं गुणाः सत्त्वादयश्च तम् ॥ ग्रसतेऽव्याकृतं राजन् गुणान् कालेन चोदितम् ॥ १७ ॥ न तस्य कालावयवैः परिणामादयो गुणाः ॥ अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ १८ ॥ न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी ॥ न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ १९ ॥ न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ॥ संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ २० ॥ लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ॥ शक्तयः संप्रलीयन्ते विवशाः कालविद्रुताः ॥ २१ ॥ बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ॥ दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २२ ॥ दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ॥ एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ २३ ॥



यश्च न ॥ १९ ॥ किंच जाग्रदाद्यवस्थाः पञ्च तत्त्वानि च एतादृशं तन्मूलभूतं पदं कथयन्ति ॥२०॥ एष प्राकृतिको लयः यत्र सर्वशक्तयः प्रलीयन्ते ॥ २१ ॥ आत्यन्तिकप्रलयमाह । आत्यन्तिकलयो मोक्ष इत्युच्यते । स च ब्रह्मज्ञानेन सर्वप्रपञ्चलयात्मको बुद्धीन्द्रियार्थरूपेण तदाश्रयं ज्ञानं भाति ॥ २२ ॥ दीपश्चक्षुः रूपं च तेजसा पृथक् न । एवं धीरिन्द्रियाणि विषयाश्च ब्रह्मणः पृथक् न स्युः ॥ २३ ॥

---

१ ग्राहककरणग्राह्यरूपाणां बुद्ध्यादीनामामूलभूतम् । २ ज्ञानात्पृथक्त्वे हेतुः दृश्यत्वात्कारणाव्यतिरेकादाद्यन्तवत्त्वं रज्जुसर्पादाविव । ३ व्यतिरेकं प्रपञ्चयति न्दीपश्चेति ।

हे राजन् ! जागरणाद्यवस्थाः बुद्धेरुच्यन्ते प्रतिदेहं ममाहमिति नानात्वं मायामात्रम् ॥२४॥ किंच यथाऽऽकाशे मेघाः भवन्ति न भवंति तथा ब्रह्मणि विश्वमाद्यन्तवत्त्वादवयवी भवति ॥२५॥ सर्वावयविनामवयवः सत्यं प्रोक्तोऽवयविनं विना पृथगेवावयवाः प्रतीयेरन्। यथा वस्त्रस्यावयवास्तन्तवो वस्त्रात्पृथक्प्रतीयन्ते ॥२६॥ कारणकार्याभ्यां यल्लभ्येत स भ्रमः ॥२७॥ प्रकाशमानोऽपि प्रपञ्चः प्रत्यागात्मप्रकाशं विना न निरू-

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ॥ मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ॥२४॥ यथा जलधरा व्योम्नि भवन्ति न भवन्ति च ॥ ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥ २५ ॥ सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह ॥ विनार्थेन प्रतीयेरन्पटस्येवाङ्ग तन्तवः ॥ २६ ॥ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ॥ अन्योऽन्यापाश्रयात्सर्वमाद्यन्तवदवस्तु यत् ॥ २७ ॥ विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा ॥ न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥२८॥ न हि सत्यस्य नानात्वमविद्वान्यदि मन्यते ॥ नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥ २९ ॥ यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु ॥ एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ ३० ॥ यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः ॥ एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबन्धनः ॥ ३१ ॥

पितोऽस्ति ॥ २८ ॥ सत्यस्य नानात्वं न। अज्ञानी यदि नानात्वं मन्यते तर्हि घटाकाशमहाकाशयोरिव भवति ॥२९॥ यथा सुवर्णं व्यवहारमार्गेषु कटककुण्डलादिरूपेण प्रतीयते तथा भगवाँल्लौकिकवैदिकैर्वचोभिर्जनैर्व्याख्यायते॥ ३० ॥ यथा सूर्यप्रभवो मेघस्तेनैव प्रकाशितश्च नेत्रस्यार्कदर्शनप्रतिबन्धको भवति एवमहङ्कारो ब्रह्मकार्यभूतस्तेनैव प्रकाशितश्च जीवस्य ब्रह्मरूपदर्शनप्रतिबन्धको भवति ॥ ३१ ॥

---

१ आद्यन्तत्वादित्यस्यासिद्धिमाशङ्क्य सावयवत्वेन साधयति । सत्यमिति । यत्सावयवं तदाद्यन्तवदित्यर्थः । २ प्रतिज्ञातं कारणसत्यत्वं प्रतिपादयति । अवयविनाशेऽप्यवयवाः प्रतीयन्ते इत्यर्थः । ३ प्रकाशमानोऽपि ।

अहङ्कारनाशे स्वरूपदर्शनं भवति तत्राह। घनो यदा विदीर्यते तदा चक्षुः रविमीक्षते। यदाऽऽत्मनोऽहङ्कारो नश्यति तदा ब्रह्माहमिति पश्यति ॥३२॥ हे राजन् ! एतेन ज्ञानशस्त्रेणाहङ्कारबन्धनं छित्वा यदाऽच्युतात्मानुभवोऽवतिष्ठते तमात्यन्तिकं लयमाहुः ॥३३॥ अथ नित्यलयमाह। हे नृप ! ब्रह्मादिसर्वभूतानामुत्पत्तिप्रलयौ नित्यं सूक्ष्मज्ञाः प्रचक्षते ॥३४॥ कुतः इत्यत आह। कालरूपस्रोतसो वेगेन नदीप्रवाहदीपज्वाला-दीनां याः उच्चनीचावस्थास्ताः यथा स्पष्टतया न दृश्यन्ते तद्वद्देहादेर्जन्मलयौ न दृश्येते॥३५॥ईश्वरमूर्तिना कालेन जन्माद्यवस्थाः नैव दृश्यन्ते

घनो यदाऽर्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा ॥ यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्य-नुस्मरेत् ॥३२॥ यदैवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनम् ॥ छित्त्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहु-रात्यन्तिकमङ्ग संप्लवम्॥ ३३ ॥ नित्यदा सर्वभूतानां ब्रह्मादीनां परंतप ॥ उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥ ३४ ॥ कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा ॥ परिणामिनामवस्थास्ता जन्मप्रलयहेतवः ॥ ३५ ॥ अना-द्यन्तवताऽनेन कालेनेश्वरमूर्तिना ॥ अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥३६॥ नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ॥ आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥३७॥ एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखि-लसत्त्वधाम्नः ॥ लीलाकथास्ते कथिताः समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥ ३८ ॥ संसारसिन्धुमतिदुस्त-रमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥ ३९ ॥ पुराणसंहितामेतामृषिर्नारायणोऽव्ययः ॥ नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४० ॥



आकाशे गच्छतां चन्द्रादीनामिव ॥३६॥ एवं नित्यो नैमित्तिकः प्राकृतिकः आत्यन्तिकः इति चतुर्विधो लयस्ते कथितः॥३७॥ हे राजन् ! नारायणस्य लीलाकथाः संक्षेपेण ते कथिताः संपूर्णं वक्तुं ब्रह्माऽपि न समर्थः ॥ ३८ ॥ किंच संसारसिन्धुं तर्तुमिच्छोः पुंसो हरिलीला-कथारससेवनं विनाऽन्या नौका न ॥ ३९ ॥ हे नृप ! एतां संहितामृषिर्नारायणो नारदाय प्राह स व्यासाय ॥ ४० ॥

व्यासः इमां वेदसंमितां संहितां प्रीतो मह्यं प्राह ॥ ४१ ॥ तां संहितामसौ सूतो नैमिषारण्ये शौनकादिभ्यो वक्ष्यति । श्रोतुरादरदार्ढ्यायेयं संप्रदायप्रवृत्तिरुक्ता ॥ ४२ ॥ इति श्रीभागवते द्वादश० चू० चतुर्थोऽध्यायः ॥४॥ पञ्चमे तु समासेन परब्रह्मोपदेशतः । राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ १ ॥ श्रीशुक उवाच ॥ हे नृप ! अत्र भगवान्हरिरभीक्ष्णं वर्ण्यते । यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥१॥ हे राजन् ! एवभूतं हरिं शृण्वतः कुतोऽन्यस्माद्भयशङ्का । हे नृप ! त्वं तु कृतार्थोऽसि । अतोऽहं मरिष्यामीत्यज्ञानबुद्धिं त्यज । यथा देहः प्रागभूत एव अद्य जातः नङ्क्ष्यति । न त्वं पूर्वं नाभूर्न चाद्य जातोऽसि । अतो न नंक्ष्यसि ॥ २ ॥ हे राजन् ! त्व तु पुत्रपौत्रादिरूपवान्

स वै मह्यं महाराज भगवान्बादरायणः ॥ इमां भागवतीं प्रीतः संहितां वेदसंमिताम् ॥ ४१ ॥ एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये ॥ दीर्घसत्रे कुरुश्रेष्ठ संपृष्टः शौनकादिभिः ॥ ४२ ॥ इति श्रीभा० म० द्वादशस्कन्धे चतुर्लय० चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान्हरिः ॥ यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥१॥ त्वं तु राजन्मरिष्येति पशुबुद्धिमिमां जहि ॥ न जातः प्रागभूतोऽद्य देहवत्त्वं न नङ्क्ष्यसि ॥२॥ न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ॥ बीजाङ्कुरवद्देहादेर्व्यतिरिक्तो यथानलः ॥ ३ ॥ स्वप्ने यथा शिरश्छेदः पञ्चत्वाद्यात्मनः स्वयम् ॥ यस्मात्पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥४॥ घटे भिन्ने यथाऽकाश आकाशः स्याद्यथा पुरा ॥ एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ॥५॥ मनः सृजति वै देहान्गुणान् कर्माणि चात्मनः ॥ तन्मनः सृजते मायां ततो जीवस्य संसृतिः ॥ ६ ॥

बीजाङ्कुरवन्न भविष्यसि यतो देहादेर्भिन्नत्वं काष्ठाद्यथा वह्नेः । एवं च देहाद्देहो जायते नात्मेति ॥३॥ किं च यथा स्वप्ने स्वशिरश्छेदं स्वयं पश्यति एवं जागरेऽपि । यस्माद्देहस्य मरणादिक पश्यति तथाऽऽत्मनः इदं भ्रममात्रम् । वस्तुतः आत्माऽजरामरः ॥ ४ ॥ यथा घटे भिन्ने घटाकाशो महाकाशः स्यात एवं देहे तत्त्वज्ञानेन लीने सति जीवः पुनर्ब्रह्म संपद्यते ॥५॥ मनो देहादीन् । सृजति तच्च मनो मायां सृजति । ततो मायाद्युपाधिसमवायाज्जीवस्य संसृतिर्न वस्तुतः ॥ ६ ॥

मनो देहश्चैतन्यमेतैर्मनसः संसारो न चात्मनः ॥ ७ ॥ ननु तत्र प्रत्यक्षः
यथा तैलमधिष्ठानं वर्त्तिरग्निरेषां संयोगाद्दीपस्य दीपत्वं तथा कर्म मनो देहश्चैतन्यमेतैर्मनसः संसारो न चात्मनः ॥ ७ ॥ ननु तत्र प्रत्यक्षः आत्मा कुतस्तत्राह । आत्मा स्वयंज्योतिः स्थूलसूक्ष्मदेहयोः परो निर्विकारोऽस्ति ॥८॥ हे प्रभो ! एवमनुमानगर्भिण्या बुद्ध्या वासुदेवानुचिन्तया देहाद्युपाधिस्थमात्मानमात्मनि विचारय ॥९॥ एवं कृते द्विजप्रेरितस्तक्षकस्त्वां न धक्ष्यति ॥१०॥ अपि च योऽहं स ब्रह्मैव यद् ब्रह्म तदहमेव एवं समीक्षन्नुपाधिरहितः आत्मन्यात्मानं कृत्वा ॥११॥ पादे विषाननैर्दशन्तं तक्षकं शरीरं विश्वं चात्मनः पृथक् न द्रक्ष्यसि ॥१२॥

स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते ॥ ततो दीपत्वमेवं देहकृतो भवः ॥ रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥७॥ न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ॥ आकाश इव चाधारो ध्रुवोऽनन्तोपमस्ततः ॥८॥ एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ॥ बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिन्तया ॥ ९ ॥ चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः ॥ मृत्यवो नोपधक्ष्यन्ति मृत्यूनां मृत्युमीश्वरम् ॥ १० ॥ अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥ एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥ ११ ॥ दशन्तं तक्षकं पादे लेलिहानं विषाननैः ॥ न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ १२ ॥ एतत्ते कथितं तात यथात्मा पृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ १३ ॥ इति श्रीभा० महा० द्वा० तत्त्वोपदेशेन मृत्युभीतिनिवारणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

सूत उवाच ॥ एतन्निशम्य मुनिनाभिहितं परीक्षिद्व्यासात्मजेन निखिलात्मदृशा समेन ॥ तत्पादमूलमुपसृत्य नतेन मूर्ध्ना बद्धाञ्जलिस्तमिदमाह स विष्णुरातः ॥ १ ॥

हे तात ! यथा त्वं हरेर्लीलां पृष्टवांस्तथा ते कथितम् । भूयः किं श्रोतुमिच्छसि ॥१३॥ इति श्रीभागवते महा० द्वादश० चू० पञ्चमोऽध्यायः ॥५॥ षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात् ॥ वेदशास्त्रविभागोक्तौ त्रिवेदिव्यासवर्णनम् ॥ १ ॥ सूत उवाच । एवं राजा परीक्षित् शुकोक्तं निशम्य तत्पादौ शिरसि निधाय बद्धाञ्जलिः सन्निदमाह ॥ १ ॥

१ द्रष्टृदृश्यान्वयव्यतिरेकयुक्त्या ।

राजोवाच । हे मुने ! अहं करुणात्मना भवतानुगृहीतः कृतार्थोऽस्मि यतो मे हरिः श्रावितः ॥२॥ किंच मत्तुल्येष्वज्ञेष्वनुग्रह इति यावदच्युता-
त्मनां वोऽद्भुतं न मन्ये ॥ ३ ॥ एतां पुराणसंहितां त्वत्तो वयं श्रुतवन्तः यस्यामुत्तमश्लोको वर्ण्यते ॥ ४ ॥ हे भगवन् ! त्वया दर्शितं ब्रह्म
प्रविष्टोऽहमतस्तक्षकादिभ्यो मृत्युभ्यो न बिभेमि ॥५॥ हे ब्रह्मन् ! अहमिन्द्रियाणि नियम्य मुक्तकामाशयं चेतोऽधोक्षजे प्रवेश्य प्राणान् विसृ-
जामि । आज्ञां देहि ॥६॥ किंच त्वया भगवतः क्षेमं पदं दर्शितमत एव मेऽज्ञानं ज्ञानविज्ञाननिष्ठया निरस्तम् ॥७॥ सूत उवाच । इत्याकर्ण्य
शुकस्तमाज्ञाप्य राज्ञा पूजितः सन् भिक्षुभिः सह जगाम ॥८॥ परीक्षिदप्यात्मबुद्ध्या मनः समाधाय परमात्मानं दध्यौ ॥ ९ ॥ तदाह ।

राजोवाच ॥ सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ॥ श्रावितो यच्च मे साक्षादनादिनिधनो हरिः ॥२॥ नात्य-
द्भुतमहं मन्ये महतामच्युतात्मनाम् ॥ अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥ पुराणसंहितामेतामश्रौष्म भवतो
वयम् ॥ यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥४॥ भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ॥ प्रविष्टो ब्रह्म-
निर्वाणमभयं दर्शितं त्वया ॥ ५ ॥ अनुजानीहि मां ब्रह्मन्वाचं यच्छाम्यधोक्षजे ॥ मुक्तकामाशयं चेतः प्रवेश्य विसृ-
जाम्यसून् ॥६॥ अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ॥ भवता दर्शितं क्षेमं परं भगवतः पदम् ॥७॥ सूत उवाच ॥
इत्युक्तस्तमनुज्ञाप्य भगवान्बादरायणिः ॥ जगाम भिक्षुभिः साकं नरदेवेन पूजितः ॥८॥ परीक्षिदपि राजर्षिरात्मन्या-
त्मानमात्मना ॥ समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥९॥ प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः ॥ ब्रह्म-
भूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥१०॥ तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना ॥ हन्तुकामो नृपं गच्छन्ददर्श
पथि कश्यपम् ॥ ११ ॥ तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ॥ द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥१२॥

गङ्गातटे पूर्वाग्रे दर्भासने उदङ्मुखः आसीनो निःसङ्गो गतसंशयो राजा ब्रह्मभूतो बभूव ॥ १० ॥ तदा हे विप्राः ! क्रुद्धेन द्विजपुत्रेण प्रेरित-
स्तक्षको नृपं हन्तुकामो गच्छन् सन् मार्गे विप्रं दृष्ट्वाऽऽह ॥११॥ हे विप्र ! त्वं कः । क्व गमिष्यसि । सोऽप्याह । अहं द्रव्येच्छया परीक्षितो
विषोत्तारणाय गच्छामि तदा सोऽहं तक्षको मद्विषं दूरीकुर्वित्याह । तदा द्विजेन तक्षकालीढवटवृक्षस्य भस्मीभूतस्य पुनरङ्कुरादिक्रमेणोत्था-
पनाद् विषं दूरीकृतम् । तदा विस्मितस्तक्षकस्तं द्विजमतिद्रव्यैः संतर्प्य द्विजरूपेण गत्वा स्वस्वरूपेण नृपमदशत् ॥ १२ ॥

तदा ब्रह्मभूतस्य राज्ञो देहोऽहिविषाग्निना सद्यो भस्मसाद् बभूव ॥ १३ ॥ तदा सर्वत्र महान् हाहाकार आसीत् सर्वे देवासुरनराः विस्मिताः आसन् ॥ १४ ॥ तदा देवा दुन्दुभयो नेदुः । गन्धर्वाप्सरसो जगुः देवाः पुष्पवृष्टिं चक्रुः ॥ १५ ॥ अथ जनमेजयस्तक्षकभक्षितं स्वपितरं श्रुत्वा क्रुद्धः सन् द्विजैः सह सर्पान् सत्रे आजुहाव ॥१६॥ तस्मिन् सर्पयज्ञे दह्यमानान् महोरगान् दृष्ट्वा भीतस्तक्षकः इन्द्रं शरणं ययौ ॥ १७ ॥ तदा राजा तक्षकमपश्यन् द्विजानाह । हे द्विजाः ! सर्पाधमस्तक्षकः कस्मान्न दह्यते ॥ १८ ॥ ते ऊचुः हे नृप ! शरणागतं तमिन्द्रो रक्षति ।

ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ॥ बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥ हाहाकारो महानासीद्भुवि खे दिक्षु सर्वतः ॥ विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥१४॥ देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः ॥ ववर्षुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥१५॥ जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ॥ तथा जुहाव संक्रुद्धो नागान्सत्रे सह द्विजैः ॥ १६ ॥ सर्पसत्रे समिद्धाग्नौ दह्यमानान्महोरगान् ॥ दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥ अपश्यंस्तक्षकं तत्र राजा परीक्षितो द्विजान् ॥ उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥ तं गोपायति राजेन्द्र शक्रः शरणमागतम् ॥ तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥ पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ॥ सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २० ॥ तच्छ्रुत्वा जुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे ॥ तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥ २१ ॥ इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ॥ बभूव संभ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥ तं पतन्तं विमानेन सह तक्षकमम्बरात् ॥ विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥



अतोऽग्नौ न पतति ॥१९॥ एवं श्रुत्वा नृपः ऋत्विजः आह हे विप्राः ! सेन्द्रस्तक्षकोऽग्नौ किमिति न पात्यते ॥२०॥ ततो विप्राः राजवचः श्रुत्वात्र यज्ञे सेन्द्रं तक्षकं जुहुवुः । हे तक्षक ! इहेन्द्रेण सहाशु पत॥२१॥ इति ब्राह्मणोक्तैः कठोरवाक्यैः सविमानः सतक्षकः इन्द्रः स्थानात् प्रचलितो बभूव ॥ २२ ॥ तदाऽऽकाशात् पतन्तमिन्द्रं विलोक्य बृहस्पतिः राजानमाह ॥ २३ ॥

हे राजन् ! अयं सर्पराट् तक्षको वधं नार्हति । यतोऽनेनामृतं पीतम् ॥ २४ ॥ किंच हे नृप ! जन्तोर्जीवितं मरणं परलोकगतिः स्वकर्मणैव भवति । अतः सुखदुःखस्य प्रदातान्यस्यान्यो न ॥२५॥ सर्पचौराग्निविद्युत्क्षुत्तृड्व्याध्यादिभिर्जन्तुर्मृत्युं प्राप्नोतीति यत्तदारब्धं कर्मैव भुङ्क्ते ॥२६॥ इति हेतोरिदं हिंसाफलं सत्रं समाप्यताम् । हे नृप ! अनागसः सर्पाः दग्धाः तदपि जनैर्दिष्टं भुज्यते ॥२७॥ एवमुक्तो नृपः सर्पसत्रा-दुपरतः सन् बृहस्पतिं पूजयामास ॥२८॥ ननु कथं विदुषामप्येवं मोहो यतो ब्रह्मकोपाद्राज्ञो मृत्युर्जनमेजयकोपात् सर्पाणामित्यादि तत्राह ।

नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् । अनेन पीतममृतमथवा अजरामरः ॥ २४ ॥ जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा । राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥ २५ ॥ सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप । पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म तत् ॥ २६ ॥ तस्मात्सत्रमिदं राजन् संस्थीयेताभिचारिकम् । सर्पा आगसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥ सूत उवाच । इत्युक्तः स तथेत्याह महर्षेर्मानयन्वचः । सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥ सैषा विष्णोर्महामायाऽबाध्ययाऽलक्षणा यया । मुह्यन्त्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः ॥ २९ ॥ न यत्र दम्भीत्यभया विराजिता मायात्मवादेऽसकृदात्मवादिभिः । न यद्विवादो विविधस्तदाश्रयो मनश्च संकल्पविकल्पवृत्तिमत् ॥ ३० ॥ न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वितस्त्वहम् । तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन्विरमेत्स्वयं मुनिः ॥ ३१ ॥

सैषा विष्णोर्महामाया । अनया प्राणिनो बाध्यबाधकतां व्रजन्ति ॥२९॥ कथं तर्हि मायानिवृत्तिः । ईश्वरभजनादित्याह । आत्मवादिभिरात्मवादे क्रियमाणे यत्र स्वरूपे इयं मायाऽभया न प्रकाशिता किंतु भीत्या स्वकाय मोहादि कर्म कुर्वती कथंचिद्वर्तत इति प्रतिपादिता ॥ ३० ॥ यत्र कार्यकारणफलैर्युक्तो जीवश्चाहंकारात्मको नास्ति तस्मिन्मुनिरहंकारादीन् निषिध्य क्रीडेत ॥ ३१ ॥

---

१ अंशभूताः । २ देहेषु । ३ क्रोधादिभिः । ४ मायाकपटवानयं पुमानित्येवंभूतायां बुद्धावसकृदुल्लिख्यमाना मायेत्यर्थः । ५ यस्मिन् । ६ मायाश्रयः । ७ नास्तीत्यन्वयः । ८ 'यत्' इति पाठः । ९ सृजतो कारकवर्गेण सहोभयोः सृज्यस्रष्ट्रोः ।

योगिनो देहाद्यहंभावं विसृज्य हृदि ध्यानादिना यन्निश्चितं तद्वैष्णवं परं पदं कथयन्ति ॥३२॥ येषामहंममेति दौर्जन्यं न ते एतत् पदं गच्छन्ति ॥३३॥ अस्य प्राप्त्युपायमाह । परापवादनिन्दादीन् सहेत । कंचन नावमन्येत इमं देहमाश्रित्य केनचिद्वैरं न कुर्वीत ॥३४॥ सूतः शास्त्रसमाप्तौ गुरुं प्रणमति । यच्चरणकमलध्यानादिना संहितां प्राप्तवान् तस्मै व्यासाय भगवते नमः ॥ ३५ ॥ शौनक उवाच । व्यासशिष्यैः पैलादिभिर्वेदा कतिधा व्यस्तास्तद् ब्रूहि ॥३६॥ सूत उवाच ॥ हे शौनक ! आदौ ब्रह्मणो हृदयाकाशान्नादोऽभूद्यो नादः श्रोत्रनिरोधादस्मदादि-

परं पदं वैष्णवमामनन्ति तद् यन्नेति नेतीत्यतदुत्सिसृक्षवः ॥ विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥ ३२ ॥ ते एतदधिगच्छन्ति विष्णोर्यत्परमं पदम् ॥ अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥ अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ॥ न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित ॥ ३४ ॥ नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे ॥ यत्पादाम्बुरुहध्यानात्संहितामध्यगामिमाम् ॥ ३५ ॥ शौनक उवाच ॥ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ॥ वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ॥३६॥ सूत उवाच ॥ समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ॥ हृदाकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥ ३७ ॥ यदुपासनया ब्रह्मन् योगिनोऽमलमात्मनः ॥ द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥ ३८ ॥ ततोऽभूत्त्रिवृदोंकारो योऽव्यक्तप्रभवः स्वराट् ॥ यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ ३९ ॥ शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ॥ येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ४० ॥



ष्वपि वितर्क्यते ॥ ३७ ॥ यदुपासनया योगिनोऽध्यात्मादिमलं धूत्वा मोक्षं यान्ति ॥ ३८ ॥ ततः स स्वत एव हृदि प्रकाशमानस्त्रिवृदोंकारोऽभूत् ॥ ३९ ॥ किंच यस्य कर्णरोधादिनाऽवृत्तिकेऽपि श्रोत्रे सति शून्येऽपीन्द्रिये ज्ञानं यस्यैतादृशोऽयमव्यक्तमोंकारं शृणोति येन प्रणवेन बृहती वैखरी वाग् व्यज्यते ॥ ४० ॥

---

१ यद् तत्तदेवं परं पदमित्यर्थः । २ आत्मव्यतिरिक्तं त्यक्तुमिच्छवः । ३ द्रव्यमधिभूतक्रियाऽध्यात्मं कारकमधिदैवम् । ४ त्रिमात्रः । ५ गमकम् । ६ हृदयाकाशे ।

स प्रणवो ब्रह्मणः साक्षाद्वाचकः । सर्वमन्त्रोपनिषद्वेदादीनां बीजम् ॥४१॥ प्रणवस्याकाराद्यास्त्रयो वर्णाः आसन्॥४२॥ तेभ्योऽजोऽक्षरसमुदाय-
मन्तःस्थोष्मादिकमसृजत् ॥४३॥ तेन समुदायेन ब्रह्मा चतुर्भिश्चतुरो वेदानसृजत् ॥४४॥ ततो ब्रह्मा स्वपुत्रान् मरीच्यादीन् वेदानध्यापयत् ।
मरीच्यादयश्च स्वपुत्रेभ्यः आदिशन् ॥४५॥ एवं चतुर्युगेषु वेदास्तच्छिष्यैः परंपरया प्राप्ताः ॥४६॥ ततः क्षीणायुषो मन्दबुद्धीञ्जनान्वीक्ष्य ते

स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ॥ स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥ ४१ ॥ तस्य ह्यासन्त्रयो वर्णा अकाराद्या भृगूद्वह ॥ धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥४२॥ ततोऽक्षरसमाम्नायमसृजद्भगवानजः ॥ अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥ ४३ ॥ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया॥ ४४ ॥ पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान् ॥ ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन् ॥४५॥ ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥ ४६ ॥ क्षीणायुषः क्षीणसत्त्वान्दुर्मेधान्वीक्ष्य कालतः ॥ वेदान्ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः ॥ ४७ ॥ अस्मिन्नप्यन्तरे ब्रह्मन् भगवाँल्लोकभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥ ४८ ॥ पराशरात्सत्यवत्यामंशांशकलया विभुः ॥ अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥४९॥ ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः ॥ चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥ ५० ॥ तासां स चतुरः शिष्यानुपाहूय महामतिः॥ एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥५१॥

वेदाः द्वापरांते महर्षिभिर्विभक्ताः॥४७॥ अथास्मिन् वैवस्वतमन्वन्तरे ब्रह्मशिवादिभिर्धर्मरक्षया प्रार्थितो भगवान् ॥४८॥ पराशरात्सत्यवत्या-
मंशेनावतीर्णः संश्चतुर्विधंवेदं चक्रे ॥ ४९ ॥ चातुर्विध्यमेवाह । ऋग्यजुःसामाथर्वणां मन्त्राणां राशीन् तत्तत्प्रकरणभेदैरुद्धृत्य तैर्मन्त्रैश्चतस्रः
संहिताश्चक्रे ॥ ५० ॥ ततो व्यासश्चतुरः शिष्यानाहूय तेभ्यः एकैकां संहितां ददौ ॥ ५१ ॥

---

१ रहस्यम् । २ अन्तःस्थाः यरलवाः, उष्माणः शषसहाः, स्वराः अकारादयः, कादयो मावसानाः स्पर्शाः । ३ चतुर्भिर्होतृभिरनुष्ठेयं कर्म चातुर्होत्रम् ।

पैलाय ऋग्वेदसंहितां वैशम्पायनाय निगदाख्यां यजुःसंहिताम् ॥५२॥ जैमिनये छन्दोगाख्यां सामसंहितां सुमन्तवेऽथर्ववेदस्याथर्वाङ्गिरसीं नाम संहितां ददौ ॥५३॥तत्र पैलः स्वसंहितां द्वेधा विभज्येन्द्रप्रमितये बाष्कलाय चाह ॥५४॥ स बाष्कलः स्वां संहितां चतुर्धा व्यस्य बोध्ययाज्ञवल्क्यपराशराग्निमित्रेभ्यश्चतुर्भ्यः प्राह ॥५५॥ इन्द्रप्रमितिः स्वां संहितां स्वसुतं माण्डूकेयमध्यापयामास । माण्डूकेयस्य शिष्यो देवमित्रः सौभर्यादिभ्यः ऊचिवान् ॥५६॥ माण्डूकेयसुतः शाकल्यस्तां पञ्चधा व्यस्य वात्स्यमुद्गलशालीयगोखल्यशिशिरान् प्राह ॥५७॥ शाकल्यशिष्यो

पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ॥ वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥ ५२ ॥ साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ॥ अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे ॥ ५३ ॥ पैलः स्वां संहितामूच इन्द्रप्रमितये मुनिः ॥ बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥ ५४ ॥ चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय-भार्गव ॥ पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान् ॥ ५५ ॥ अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम् ॥ तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान् ॥ ५६ ॥ शाकल्यस्तत्सुतस्तां तु पञ्चधा व्यस्य संहिताम् ॥ वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥ ५७ ॥ जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ॥ बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥५८॥ बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ॥ चक्रे बालायनिर्भज्यः काशारश्चैव तां दधुः ॥ ५९ ॥ बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैनं छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥ ६० ॥ वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥

जातूकर्ण्यः स्वसंहितां त्रिधा विभज्य निरुक्तं च चतुर्थं कृत्वा बलाकपैजवैतालविरजेभ्यो ददौ ॥५८॥ ततः पूर्वोक्तबाष्कलस्य पुत्रो बाष्कलिः सर्वशाखाभ्यो वालखिल्याख्यसंहितां चक्रे । तां संहितां बालायन्यादयो विभज्याधीतवन्तः काशारश्च ॥५९॥ एताः बह्वृचाः संहिता एभिः ऋषिभिर्धृताः एषां छन्दसां विभागं श्रुत्वा सर्वपापैः प्रमुच्यते॥६०॥ यजुर्वेदतैत्तिरीयशाखोत्पत्तिप्रसंगमाह । अथ वैशम्पायनस्य शिष्याश्चरकाध्वर्यवो यतः स्वगुरोर्ब्रह्महत्यानाशनं व्रतं चेरुः अतश्चरका इति नाम प्रापुः ॥ ६१ ॥

तेषां मध्ये याज्ञवल्क्यः आह। गुरो! एतेषां चरितेन कियत् सुदुश्चरमप्यहं चरिष्यामि ॥६२॥ इत्याकर्ण्य गुरुः कुपितः सन्नाह। हे शिष्य! त्वया सर्वेषामपमानः कृतः अतो मदधीतं त्यक्त्वा याहि ॥ ६३ ॥ ततो याज्ञवल्क्यो यजुर्गणं छर्दित्वा गतः ॥ ६४ ॥ तच्छर्दितं दृष्ट्वा

याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्कियत् ॥ चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥६२॥ इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ॥ विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥ ६३ ॥ देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ॥ ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥६४॥ यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ॥ तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः ॥६५॥ याज्ञवल्क्यस्ततो ब्रह्मन्छन्दांस्यधिगवेषयन् ॥ गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥ याज्ञवल्क्य उवाच ॥ ॐ नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७ ॥

मुनयस्तित्तिरिपक्षिणो भूत्वा तद्भक्षणं चक्रुः। ततो हेतोस्तैत्तिरीयाः यजुःशाखा आसन् ॥ ६५ ॥ अथ याज्ञवल्क्यो गुरोरलब्धवेदः सन् सूर्यमुपतस्थे स्म ॥ ६६ ॥ याज्ञवल्क्य उवाच ॥ हे भगवन्! तुभ्यमादित्याय नमो नमः। किंच ब्रह्मादितृणपर्यन्तानां जगता-

---

१ एवं ह्यत्र कथा ब्रह्माण्डे। एकदा देवयज्ञे ब्राह्मणापमाने कृते सति वैशम्पायनस्य ब्रह्महत्याऽभूत्। ऋषय ऊचुः। चरकाध्वर्यवः केन कारणं ब्रूहि तत्त्वतः। किं चीर्णं कस्य वा हेतोश्चरकत्वं हि भेजिरे। सूत उवाच। कार्यमासीदृषीणां च किंचिद् ब्राह्मणसत्तमाः। मेरुपृष्ठं समासाद्य तैस्तदा त्विति मन्त्रितम्। यो वाऽत्र साप्तरात्रेण नागच्छेद्द्विजसत्तमः। स कुर्याद् ब्रह्महत्यां वै समयो नः प्रकीर्तितः। ततस्ते सगणाः सर्वे वैशम्पायनवर्जिताः। आययुः सप्तरात्रेण यत्र संधिः कृतोऽभवत्। ब्राह्मणानां तु वचनाद् ब्रह्महत्यां चकार सः। शिष्यानथ समानीय स वैशम्पायनोऽब्रवीत्। ब्रह्महत्यां चरध्वं वै मत्कृते द्विजसत्तमाः। सर्वे युगं समागम्य ब्रूत मा प्रेरितं वचः। तदा स्वगृहमागत्य शिष्यानाह। इमां हत्यां दूरीकुरुध्वमिति।

मात्मस्वरूपेणान्तर्हृदयेषु कालस्वरूपेण बहिरपि च वर्तमानो यस्त्वमेक एव लोकयात्रामनुवहसि ॥ ६७ ॥ हे विबुधर्षभ ! प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानामखिलदुःखनाशकं तव मण्डलं ध्यायेम ॥ ६८ ॥ किंच यो भवान् स्थावरजङ्गमानां जीवानां मनइन्द्रिय प्राणान् स्वयमन्तर्यामी प्रवर्तयति ॥ ६९ ॥ यः एक एव भवानन्धकारसंज्ञाजगरगिलितं मृतकमिवाचेतनमिमं लोकं दृष्ट्वा कृपया तं श्रेयसि

यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपनमण्डलम् ॥ ६८ ॥ य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणा-ननात्मनः स्वयमात्मान्तर्यामी प्रचोदयति ॥ ६९ ॥ य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्त्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥७०॥ परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥ ७१ ॥ अथ हे भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुष्काम उपसरामीति ॥ ७२ ॥ सूत उवाच ॥ एवं स्तुतः स भगवान् वाजिरूपधरो हरिः ॥ यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥७३॥ यजुर्भिर-करोच्छाखा दशपञ्चशतैर्विभुः ॥ जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥ ७४ ॥

प्रवर्तयति ॥ ७० ॥ भवानिन्द्रादिलोकपालैः कमलकोशसदृशैरञ्जलिभिर्दत्तार्घः ॥७१॥ हे भगवन् ! ब्रह्मादिभिर्वन्दितं तव चरणकमलयुगम-यातयामयजुष्कामोऽहं भजामि ॥७२॥ सूत उवाच ॥ एवं स्तुतो वाजिरूपधरः सूर्योऽयातयामानि यजूंषि मुनये प्रादात् ॥७३॥ याज्ञवल्क्य-स्तैर्यजुर्भिः पञ्चदश शाखाः अकरोत् । रविणाऽश्वरूपेण केशरेभ्यस्त्यक्ता अतो वेगेन त्यक्ता शाखाः काण्वमाध्यन्दिना जगृहुः ॥ ७४ ॥



---

१ जडान् । २ अन्यैर्यथावदविज्ञातानि ।

अथ सामवेदशाखाविभागमाह । जैमिनेः सुतः सुमन्तुः । तस्य सुतः सुन्वान् । ताभ्यामेकैकां संहितां प्राह ॥ ७५ ॥ जैमिनिशिष्यः सुकर्माऽपि सामवेदस्य सहस्रं संहिताभेदं चक्रे॥७६॥ततः सुकर्मणः शिष्यास्त्रयो हिरण्यनाभः १पौष्यञ्जिः २ आवन्त्यः ३ । एते ताः संहितां जगृहुः ॥७७॥ तेषां त्रयाणां शिष्याः प्रत्येकं पञ्च शतान्यासन् । ते तावतीः शाखाः यथायथं जगृहुः ॥ ७८ ॥ ततः पौष्यञ्जिशिष्याः पञ्च—लौगाक्षिः १ माङ्गलिः २ कुल्यः ३ कुशीदः ४ कुक्षिः ५ एते प्रत्येकं शतं शतं संहिताः जगृहुः ॥७९॥ हिरण्यनाभस्यान्यः कृतनामा शिष्यश्चतुर्विंशतिसं

जैमिनेः सामगस्यासीत्सुमन्तुस्तनयो मुनिः ॥ सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ७५ ॥ सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ॥ सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः ॥ ७६ ॥ हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च सुकर्मणः ॥ शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥ ७७ ॥ उदीच्याः सामगाः शिष्या आसन्पञ्चशतानि च ॥ पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च प्राच्यान् प्रचक्षते ॥ ७८ ॥ लौगाक्षिर्माङ्गलिः कुल्यः कुशीदः कुक्षिरेव च ॥ पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम् ॥ ७९ ॥ कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ॥ शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥ ८० ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः ॥६॥ सूत उवाच ॥ अथर्ववित्सुमन्तुश्च शिष्यमध्यापयत्स्वकम् ॥ संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ १ ॥ शौल्कायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः ॥ वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥ कुमुदः शुनको ब्रह्मञ्जाजलिश्चाप्यथर्ववित् ॥ २ ॥

हिताः स्वशिष्येभ्य ऊचे । आवन्त्यः शेषः संहिताः शिष्येभ्यः आह ॥८०॥ इति श्रीभा० म० चू० द्वादश० षष्ठोऽध्यायः ॥६॥ सप्तमेऽथर्वविस्तारः पुराणव्यसनं ततः ॥ पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥ १॥ सूत उवाच॥ अथर्ववेदविभागमाह । सुमन्तुः कबन्धनामानं शिष्यं स्वसंहितां प्राह।सोऽपि तां द्वेधा विभज्य पथ्याय वेददर्शाय च दत्तवान्॥१॥वेददर्शस्य शिष्याश्चत्वारः-शौल्कायनिः १ ब्रह्मबलिः२मोदोषः ३ पिप्पलायनिः४येभ्यश्चतस्रः संहिताः ददौ । अथ पथ्यः स्वशिष्येभ्यः कुमुदः १शुनकः २जाजलिः३इत्याख्येभ्यः स्वसंहितां त्रेधा विभज्य प्रादात्॥२॥

नक्षत्रकल्पादयोऽथर्वणाचार्याः आसन अथ शुनकः स्वशिष्याभ्यां बभ्रुसैन्धवायनाभ्यां द्वे संहिते प्राह । तौ सावर्ण्यादिभ्यः ऊचतुः ॥ ३ ॥ नक्षत्रकल्पादयोऽथर्वणाचार्याः आसन अथ पौराणिकान् शृणु ॥४॥ आदौ व्यासः षट् पुराणसंहिताः कृत्वा मत्पित्रे रोमहर्षणाय ददौ । तन्मुखात्त्रय्यारुणिः १ कश्यपः २ सावर्णिः ३ अकृतव्रणः ४ वैशंपायनः ५ हारीतः ६ इमे पौराणिकाः संहिताः षडध्यैयत । येषां षण्णां शिष्योऽहं ताः सर्वा अधीतवान् ॥ ५ ॥ ६ ॥ कश्यपः १ अहं २ सावर्णिः ३ अकृतव्रणः ४ एते वयं व्यासशिष्यान्मूलसंहिताः अध्यैमहि ॥७॥ हे शौनक ! अथ ब्रह्मर्षिभिर्निरूपितं पुराण

बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन एव च ॥ अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथाऽपरे ॥३॥ नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः ॥ एते आथर्वणाचार्याः शृणु पौराणिकान्मुने ॥ ४ ॥ त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ॥ वैशम्पायनहारीतौ षड् वै पौराणिका इमे ॥ ५ ॥ अधीयन्त व्यासशिष्यात्संहितां मत्पितुर्मुखात् ॥ एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥ ६ ॥ कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ॥ अधीमहि व्यासशिष्याच्चत्वारो मूलसंहिताः ॥ ७ ॥ पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् ॥ शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ८ ॥ सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च ॥ वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः ॥ ९ ॥ दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ॥ केचित्पञ्चविधं ब्रह्मन्महदल्पव्यवस्थया ॥ १० ॥ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ॥ भूतसूक्ष्मेन्द्रियार्थानां संभवः सर्ग उच्यते ॥ ११ ॥



लक्षणं शृणु ॥८॥ सर्गः १ विसर्गः२ वृत्तिः ३ रक्षा ४ मन्वन्तराणि ५ वंशः ६ वंश्यानुचरितम् ७ लयः ( मुक्तिः ) ८ ऊतयः ९ आश्रयः १० ॥ ९ ॥ एभिर्दशलक्षणैर्युक्तं महापुराणं विदुः । सर्गः १ विसर्गः २ वंशः ३ मन्वन्तराणि ४ वंशानुचरितम् ५ इति पञ्चलक्षणं पुराणमल्पं केचिदूचुः ॥१०॥ एषां दशलक्षणानामर्थमाह । महदहङ्कारभूतसूक्ष्मेन्द्रियार्थादीनां संभवः सर्ग इत्यच्युते ॥ ११ ॥

१ जगतः । २ स्थानपोषणे । ३ हेतुशब्देन जीवाश्रयवासनाशब्दवाच्याः ऊतयो गृह्यन्ते । ४ अव्याकृतात्प्रधानान्महांस्ततस्त्रिवृदहंकारस्ततो भूतादयः इति परम्परा ।

चराचरप्राणिनां संभवः विसर्गः २ ॥१२॥ ईश्वरेण भूतानां स्थापिता या जीविका सा वृत्तिः ३ ॥१३॥ भगवतो याऽवतारलीला सा रक्षा ४ ॥१४॥ मन्वन्तरं मनुर्देवा मनुपुत्राः इन्द्रः ऋषयो हरेरवतार इति षड्विधम् ५ ॥१५॥ शुद्धराजानां प्रसूतिर्वंशः ६ तद्वंशानां वृत्तान्तो वंश्यानुचरितम् ७ ॥१६॥ चतुर्विधः प्रलयः संस्था ८ । तथैव मुक्तिरप्युक्ता ॥ १७ ॥ अस्य जगतः सर्गादेर्निमित्तं यो जीवः सोऽत्र हेतुर्नामोतयो ज्ञेयाः ९ ॥ १८ ॥

पुरुषानुगृहीतानामेतेषां वासनामयः ॥ विसर्गोऽयं समाहारो बीजाद्बीजं चराचरम् ॥१२॥ वृत्तिर्भूतानि भूतानां चराणामचराणि च ॥ कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥१३॥ रक्षाऽच्युतावतारेहा विश्वस्यानु युगेयुगे ॥ तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥ १४ ॥ मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते ॥१५॥ राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः ॥ वंश्यानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ १६ ॥ नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः ॥ संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः ॥१७॥ हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः ॥ यं चानुशयिनं प्राहुरव्याकृतमुतापरम् ॥१८॥ व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु ॥ मायामयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥ १९ ॥ पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु ॥ बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥ २० ॥ विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम् ॥ योगेन वा तदात्मानं वेदेहा या निवर्तते ॥ २१ ॥ एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ॥ मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥ २२ ॥

जाग्रदाद्यवस्थासु यस्य व्यतिरेकान्वयस्तद्ब्रह्मापाश्रय इत्युच्यते १० ॥ १९ ॥ किं च यथा घटादिषु मृदादि द्रव्यं युक्तमयुक्तं च रूपनामसु च सत्तामात्रम् ॥ एवं गर्भाधानादिमरणान्तासु नवदेहावस्थास्वधिष्ठानत्वेन च युतमयुतं च तदपाश्रयः ॥२०॥ यदा सर्गादीनां मायामयत्वानुसंधानेन स्वयमेव चित्तं विरमेत् तदाऽऽत्मानं वेद तदा चाविद्या निवर्तते ॥ २१ ॥ एवं लक्षणैर्लक्षितानि अष्टादश १८ मुनयः प्राहुः ॥ २२ ॥

---

१ महदादीनाम् । २ पूर्वकर्मवासनाप्रधानः । ३ चकाराच्चराणि । ४ स्वभावेन । ५ यैरवतारैः ।

तानि ब्राह्मं पाद्मं वैष्णवं लैङ्गं गारुडं नारदीयं श्रीमद्भागवतमाग्नेयं स्कान्दम् ॥२३॥ भविष्यं ब्रह्मवैवर्त्तं मार्कण्डेयं वामनं वाराहं मात्स्यं कौर्मं ब्रह्माण्डमिति ॥ २४ ॥ हे शौनक ! इदं शाखाप्रणयनं मया कथितम् । इदं यः शृणोति तस्य ब्रह्मतेजोविवर्धनं भवति ॥ २५ ॥ इति श्रीभा० द्वादशस्कन्धे चू० सप्तमोऽध्यायः ॥७॥ अष्टमे तु तपश्चर्या मार्कण्डेयस्य मोहकैः ॥ कामादिभिरसंमोहो नरनारायणस्तुतिः ॥ १ ॥ शौनक उवाच ॥ हे सूत ! त्वं चिरं जीव यतः संसारे भ्रमतां नृणां त्वं पारदर्शनोऽसि ॥१॥ पुराणविभागप्रसंगात् तत्कर्तुर्मार्कण्डेयस्य चरितं

ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम् ॥ नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ॥२३॥ भविष्यं ब्रह्मवैवर्तमार्कण्डेयं सवामनम् ॥ वाराहं मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥२४॥ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः ॥ शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् ॥२५॥ इति श्रीभा० म० द्वाद० अथर्ववेदपुराणलक्षणादि नि० सप्तमोऽध्यायः ॥७॥ शौनक उवाच ॥ सूत जीव चिरं साधो वद नो वदतां वर ॥ तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥१॥ आहुश्चिरायुषमृषिं मृकण्डतनयं जनाः ॥ यः कल्पान्ते उर्वरितो येन ग्रस्तमिदं जगत् ॥२॥ स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः ॥ न वाऽधुनापि भूतानां संप्लवः कोऽपि जायते ॥ ३ ॥ एक एवार्णवे भ्राम्यन्ददर्श पुरुषं किल ॥ वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥४॥ एष नः संशयो भूयान् सूत कौतूहलं यतः ॥ तं नश्छिन्धि महायोगिन् पुराणेष्वपि संमतः ॥ ५ ॥ सूत उवाच ॥ प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः ॥ नारायणकथा यत्र गीता कलिमलापहा ॥ ६ ॥



पृच्छति शौनकः ॥ हे सूत ! सर्वे जनाः मार्कण्डेयं दीर्घायुषमाहुः । यः कल्पान्तेऽवशेषितो येन कल्पान्तेनेदं जगत् ग्रस्तमिदं कथं जातम् ॥२॥ किं च अधुना भूतानां कोऽपि प्रलयो नास्ति । एवं सत्यस्मिन् कल्पे सोऽस्मत्कुलोत्पन्नो भार्गवर्षभ इति च कथम् ॥३॥ एक एव समुद्रे भ्राम्यन् सन् वटपत्रपुटे शयानं बालकं ददर्श । इदमप्यघटितम् ॥ ४ ॥ हे सूत ! एवमेतद्विषये नः संशयोऽस्ति तं छिन्धि ॥५॥ सूत उवाच । हे शौनक ! अयं प्रश्नो लोकभ्रमनाशकस्त्वया कृतः । यत्र नारायणकथा गीयते ॥ ६ ॥

अथ प्राप्तद्विजातिसंस्कारो मार्कण्डेयो वेदानधीत्य तपः स्वाध्यायसंयुतः ॥७॥ नैष्ठिकब्रह्मचारी जटिलो वल्कलाम्बरः कमण्डलुं दण्डमुपवीतं मेखलां कृष्णाजिनं कुशांश्च बिभ्रद्धर्मवृद्धयेऽग्न्यर्कगुरुविप्रात्मसु हरिमर्चयन् ॥ ८ ॥ ९ ॥सायंप्रातर्भिक्षामाहृत्य गुरवे निवेद्य तदनुज्ञया स्वयं सकृद्भुञ्जन् नो चेदुपोषितः ॥ १० ॥ एवं तपःस्वाध्यायतत्परो वर्षाणामयुतायुतं हृषीकेशमाराधयन् दुर्जयं मृत्युं जिग्ये ॥ ११ ॥ तत्तपसा ब्रह्मा भृगुशिवदक्षादयो विस्मिता आसन् ॥१२॥ इत्थं तपादिभिरधोक्षजं दध्यौ ॥१३॥ एवं योगेन चित्तं युञ्जतस्तस्य षण्मन्वन्तरात्मकः

प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात् ॥ छन्दांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥७॥ बृहद्व्रतधरःशान्तो जटिलो वल्कलाम्बरः ॥ बिभ्रत्कमण्डलुं दण्डमुपवीतं समेखलम् ॥ ८ ॥ कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये ॥ अग्न्यर्कगुरुविप्रात्मस्वर्चयन् सन्ध्ययोर्हरिम् ॥ ९ ॥ सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः ॥ बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥१०॥ एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ॥ आराधयन्हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥ ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च ये परे ॥ नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥ इत्थं बृहद्व्रतधरस्तपः स्वाध्यायसंयमैः ॥ दध्यावधोक्षजं योगी ध्वस्तक्लेशान्तरात्मना॥१३॥तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः ॥ व्यतीयाय महान् कालो मन्वन्तरषडात्मकः ॥ १४ ॥ एतत्पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन्किलांतरे ॥ तपो विशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥ गन्धर्वाप्सरसः कामं वसन्तमलयानिलौ ॥ मुनये प्रेषयामास रजस्तोकमदौ तदा ॥ १६ ॥ ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे ॥ पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो ॥ १७ ॥ तदाश्रमपदं पुण्यं पुण्यद्रुमलताञ्चितम् ॥ पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥ १८ ॥

कालो गतः ॥१४॥ एतज्ज्ञात्वा इन्द्रः सप्तमे मन्वन्तरे मत्पदं ग्रहीष्यतीति शङ्कितः सन् तत्तपोनाशाय ॥१५॥ गन्धर्वाप्सरसः कामं वसन्तं सुगन्धमयं वायुं लोभमदौ च मुनये प्रेषयामास ॥ १६ ॥ ते उत्तरं हिमाद्रेः पार्श्वं यत्र पुष्पभद्रा नदी यत्र चित्राख्या च शिला तत्र तदाश्रमं जग्मुः ॥ १७ ॥ कथंभूतमाश्रमं पुण्यद्रुमलताभिः शोभितं पुण्यर्षीणां कुलैर्व्याप्तमतिनिर्मलजलाशयम् ॥ १८ ॥

मत्तभ्रमरसंगीतं मत्तकोकिलकूजितं मत्तमयूरनटाटोपं पक्षिकुलैर्व्याप्तम् ॥१९॥ एवं भूतमाश्रमं प्रविष्टो वायुः कामं प्रदीपयन् ववौ॥२०॥ तत्र वसन्तः प्रवालस्तबकादिभिर्गोपद्रुमलताजालैः पत्रपुष्पफलादिभिः प्रकटो बभूव ॥ २१ ॥ तत्र कामश्च गीतवादित्रयुक्तैर्गन्धर्वैरप्सरोभिश्च सहादृश्यत ॥२२॥ एवमिन्द्रकिङ्करास्तत्रासीनं मीलिताक्षमग्निमिव दुर्धर्षं मुनिं ददृशुः ॥२३॥ तस्य पुरतः स्त्रियो ननृतुर्गन्धर्वाः जगुः ॥२४॥ कामो धनुषि शोषणदीपनसंमोहनतापनोन्मादनेति पञ्चमुखं बाणं सन्दधे । वसन्तो लोभोऽन्ये चेन्द्रभृत्याः मुनेर्मनो व्यकम्पयन् ॥ २५ ॥

मत्तभ्रमरसंगीतं मत्तकोकिलकूजितम् ॥ मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥ १९ ॥ वायुः प्रविष्ट आदाय हिम-
निर्झरशीकरान् ॥ सुमनोभिः परिष्वक्तो ववावुत्तम्भयन्स्मरम् ॥ २० ॥ उद्यच्चन्द्रनिशावक्रः प्रवालस्तबकालिभिः ॥
गोपद्रुमलताजालैस्तत्रासीत्कुसुमाकरः ॥२१॥ अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथकैः ॥ अदृश्यतात्तचापेषु स्वःस्त्री
यूथपतिः स्मरः ॥ २२ ॥ हुत्वाग्निं समुपासीनं ददृशुः शक्रकिङ्कराः ॥ मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम् ॥
॥ २३ ॥ ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः ॥ मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम् ॥ २४ ॥ संदधेऽस्त्रं स्व-
धनुषि कामः पञ्चमुखं तदा ॥ मधुर्मनोरजस्तोकमिन्द्रभृत्या व्यकम्पयन् ॥ २५ ॥ क्रीडन्त्याः पुञ्जिकस्थल्याः
कन्दुकैः स्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः॥२६॥इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनुकन्दुकम् ॥
वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥२७॥ विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः ॥ सर्वं तत्राभवन्मोघम-
नीशस्य यथोद्यमः ॥ २८ ॥ त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने ॥ दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥
॥ २९ ॥ इतीन्द्रानुचरैर्ब्रह्मन्धर्षितोऽपि महामुनिः ॥ यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥ ३० ॥

तदैव कन्दुकैः क्रीडमानायाः कन्दुकमनुभ्रमद्दृष्टेरितस्ततश्चलन्त्यास्तस्याः पुञ्जिकस्थल्याः सूक्ष्मं वस्त्रं वायुर्जहार ॥२६॥२७॥ तदा कामो मुनौ बाणं विससर्ज । तत्र सर्वमिदं व्यर्थमभवत् ॥२८॥ ततः ऋषितेजसा दह्यमानाः कामाद्याः निववृतिरे ॥२९॥ एवमिन्द्रानुचरैर्धर्षितोऽपि महामुनिरहङ्कारस्य विकारं न प्राप ॥ ३० ॥

ततः इन्द्रः सगणं कामं निस्तेजसं दृष्ट्वा ऋषेरनुभावं श्रुत्वा विस्मयं प्राप ॥ ३१ ॥ एवं तपःस्वाध्यायसंयमैश्चित्तं युञ्जतस्तस्यानुग्रहाय नर-नारायणावृषी आविरास्ताम् ॥३२॥ तौ श्वेतकृष्णवर्णौ चतुर्भुजौ कृष्णाजिनवल्कलाम्बरौ पवित्रपाणी उपवीतदण्डकमण्डलुधरौ ॥ ३३ ॥ पद्माक्षमालां दर्भमुष्टिं च दधानौ साक्षात्तपोरूपिणाविन्द्रादिभिः पूजितौ ॥३४॥ नरनारायणावृषी दृष्ट्वोत्थाय तौ प्रति दण्डवन्ननाम ॥ ३५ ॥ तद्दर्शनात्प्रहृष्टरोमा ऋषिरश्रुपूर्णाक्षः सन् तावीक्षितुं नाशक्नोत् ॥३६॥ ततः उत्थाय प्राञ्जलिर्गद्गदाक्षरस्तौ नमोनम इति बभाषे ॥ ३७ ॥ तत-

दृष्ट्वा निस्तेजसं कामं सगणं भगवान्स्वराट् ॥ श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥ ३१ ॥ तस्यैवं युञ्जतश्चित्तं तपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरनारायणो हरिः ॥ ३२ ॥ तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ ॥ पवित्रपाणी उपवीतकं त्रिवृत्कमण्डलुं दण्डमृजुं च वैणवम् ॥ ३३ ॥ पद्माक्षमालामुत जन्तुमार्जनं वेदं च साक्षात्तप एव रूपिणौ ॥ तपत्तडिद्वर्णपिशङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥ ते वै भगवतो रूपे नरनारायणावृषी ॥ दृष्ट्वोत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥ ३५ ॥ स तत्सन्दर्शनानन्दनिर्वृतात्मेन्द्रियाशयः ॥ हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥ उत्थाय प्राञ्जलिः प्रह्वः औत्सुक्यादाश्लिषन्निव ॥ नमोनम इतीशानौ बभाषे गद्गदाक्षरः ॥ ३७ ॥ तयोरासनमादाय पादयोरवनिज्य च ॥ अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥ सुखमासनमासीनौ प्रसादाभिमुखौ मुनी ॥ पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥ मार्कण्डेय उवाच ॥ किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मनइन्द्रियाणि ॥ स्पन्दन्ति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबन्धुः ॥ ४० ॥ मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै ॥ नाना विभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥ ४१ ॥

स्तयोरासनं दत्त्वा पादौ प्रक्षाल्य गन्धपुष्पादिभिरपूजयत् ॥३८॥ पुनः सुखमासीनौ तौ प्रणम्य जगाद ॥३९॥ मार्कण्डेय उवाच ॥ हे विभो ! अहं त्वां कथं स्तौमि यतस्त्वयैव प्रेरिताः प्राणेन्द्रियादयश्चलन्ति । अतो न कस्यापि स्वाधीनस्त्वम्॥ ४० ॥ हे भगवन् ! त्वमिमे मूर्ती त्रिलोक्याः पालनाय दुःखनिवृत्त्यै मोक्षाय च बिभर्षि तथा मत्स्यकूर्माद्यन्यतनूश्च ॥ ४१ ॥

किंच मुनयो ब्रह्मप्राप्तयेऽभीक्ष्णं यत् स्तुवन्ति नमन्ति यजन्ति तत् तव जगत्पालकस्याङ्घ्रिमूलं सेवे ॥ ४२ ॥ हे मोक्षमूर्ते ! तवाङ्घ्रिपङ्कजं विना जनस्यान्यत्क्षेमं न विद्मः । ब्रह्मापि तव भ्रूविजृम्भरूपात् कालादतिबिभेति अपरे किमुत ॥४३॥ हे भगवन् ! अतस्तुच्छं नश्वरं देहादि भजनं त्यक्त्वा सत्यज्ञानस्वरूपस्य तव पादमूलं भजामि ॥४४॥ हे ईश ! यद्यपि त्वयैव सत्त्वं रजस्तम इति ह्युत्पत्तिपालननाशहेतवो मायामयाः

यद्वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं
तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं यत्स्थं न कर्मगुणकालरुजः स्पृशन्ति ॥ यद्वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै ॥ ४२ ॥ नान्यं तवाङ्घ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितो भिय ईश विद्मः ॥ ब्रह्मा बिभेत्यलमतो द्विपरार्ध्यधिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम् ॥ ४३ ॥ तद्वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि चात्मगुरोः परस्य ॥ देहाद्यपार्थमसदन्त्यमभिज्ञमात्रं विन्देत ते तर्हि सर्वमनीषितार्थम् ॥ ४४ ॥ सत्त्वं रजस्तम इतीश तवात्मबन्धो मायामयाः स्थितिलयोदयहेतवोऽस्य ॥ लीला धृता यदपि सत्त्वमयी प्रशान्त्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥ तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजन्ति ॥ यत्सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥ ४६ ॥ तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै ॥ नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥ यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ॥ तन्मायया ऽऽवृतमतिः स उ एव साक्षादाद्यस्तवाखिलगुरोरुपसाद्य वेदम् ॥ ४८ ॥

लीलाः धृताः । तथाऽपि या सत्त्वमयी मूर्तिः सैव मोक्षाय नान्या ॥४५॥ हे भगवन् ! ज्ञानिनस्तव नरनारायणाख्यां तनुं भजन्ति । यतो भक्ताः सत्त्वमेव पुरुषस्य रूपं मन्यन्ते न रजस्तमश्च ॥४६॥ अतो हे ईश पुरुषाय विश्वगुरवे नारायणाय ऋषये शुद्धाय वेदमार्गप्रवर्त्तकाय तस्मै नमोऽस्तु ॥ ४७ ॥ किंच कपटेन्द्रियमार्गैर्भ्रमद्बुद्धिः पुमान् स्वस्येन्द्रियादिषु स्थितमपि त्वां न वेद ॥ ४८ ॥



१ द्विपरार्धं स्थानं यस्य सः । २ तदहं भजामीति तृतीयेनानुषङ्गः । ३ स्वात्मावरकम् । ४ ब्रह्मरुद्रमूर्ती । ५ तव शुक्लां तनुं नारायणाख्यां तावकानां च नराख्याम् । ६ वैकुण्ठाख्यः । ७ पूर्वमविद्वानेव ८ वेदमुपसाद्य त्वां साक्षाद्वेदेत्यर्थः ।

ब्रह्मादिकवयोऽपि सांख्ययोगादिभिर्यत्नशीलास्त्वयि मुह्यन्ति । एवंभूतं महापुरुषं त्वामहं वन्दे ॥४९॥ इति श्रीभागवते द्वादशस्कन्धे चू० अष्टमोऽध्यायः ॥८॥ नवमे भगवन्मायादिदृक्षोर्दर्शने मुहुः ॥ मायाशिशोर्लयाब्धौ च मुनिर्निर्वेशनिर्गमैः ॥१॥ सूत उवाच ॥ इत्थं मार्कण्डेयेन संस्तुतो नरसखो नारायणः प्रीतः सन् ऋषिमाह ॥ १ ॥ श्रीभगवानुवाच ॥ भो भो ब्रह्मर्षिवर्य ! त्वं तपःस्वाध्यायसंयमैर्मयि भक्त्या च सिद्धोऽसि ॥ २ ॥ वयं तव तुष्टाः स्म । तव भद्रमस्त्वीप्सितं वरं वरय ॥ ३ ॥ मार्कण्डेय उवाच ॥ हे अच्युत ! यद् भवान् समदृश्यत

यद्दर्शनं निगम आत्मरहःप्रकाशं[1] मुह्यन्ति यत्र कवयोऽजपरा[2] यतन्तः ॥ तं सर्ववादविषयप्रतिरूपशीलं[3] वन्दे महापुरुषमात्मनिगूढबोधम् ॥ ४९ ॥ इति श्रीभा० महा० द्वादश० मार्कंडेयोपाख्याने नरनारायणस्तुतिर्नामाष्टमोऽध्यायः ॥ ८ ॥ सूत उवाच ॥ संस्तुतो भगवानित्थं मार्कंडेयेन धीमता ॥ नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥ श्रीभगवानुवाच ॥ भो भो ब्रह्मर्षिवर्यासि सिद्ध आत्मसमाधिना ॥ मयि भक्त्यानपायिन्या तपःस्वाध्यायसंयमैः ॥ २॥ वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ॥ वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥३॥ ऋषिरुवाच ॥ जितं ते देव देवेश प्रपन्नार्तिहराच्युत ॥ वरेणैतावताऽलं नो यद्भवान्समदृश्यत ॥ ४ ॥ गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम् ॥ मनसा योगपक्वेन स भवान्मेऽक्षिगोचरः ॥५॥ अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे ॥ द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम्[4] ॥६॥ सूत उवाच ॥ इतीडितोऽर्चितः काममृषिणा भगवान् मुने ॥ तथेति स स्मयन्प्रागाद्बदर्याश्रममीश्वरः॥७॥तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः ॥ वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु॥८॥

स एव वरः ॥ ४ ॥ ब्रह्मादयोऽपि मनसा यस्य पादाम्बुजदर्शनमिच्छन्ति स भवान् मेऽक्षिगोचरोऽन्यवरेण किम् ॥ ५ ॥ अथापि हे कमलनेत्र ! त्वन्मायां द्रष्टुमिच्छामि ॥ ६ ॥ सूत उवाच ॥ ईश्वरस्तथेत्युक्त्वा ऋषिणा पूजितो बदर्याश्रममगात् ॥७॥ ततः ऋषिस्तमेव मायादर्शनरूपमर्थं चिन्तयन् स्वाश्रम एव वसन् ॥ ८ ॥

---

१ तव रहस्यप्रकाशम् । २ ब्रह्ममुख्याः । ३ सांख्याविवादिनां वादविषयाः भेदावयस्तदनुसारि शीलं स्वभावो यस्य । ४ सति वस्तुनि भेदम् ।

सर्वत्र हरिं ध्यायन् मनोमयैर्द्रव्यैस्तमपूजयत् । कदाचित् प्रेमव्याप्तः सन् पूजां विसस्मार ॥९॥ हे शौनक ! एकदा पुष्पभद्रातटे तस्योपासीनस्य सतः सन्ध्यायां महान् वायुरभूत् ॥१०॥ तमनु मेघास्तडिद्भिः सहिता उच्चैर्गर्जन्तो वर्षधाराः मुमुचुः ॥११॥ ततश्चतुः समुद्राः लहरीभिर्भूतलं ग्रसन्तः उग्रनक्रावर्त्तगम्भीरघोषा व्यदृश्यन्त ॥१२॥ ततः आत्मना सह चतुर्विधं भीतं जगद् तथा जलाप्लुतां क्ष्मां च वीक्ष्य मुनिरत्र-

ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् ॥ क्वचित्पूजां विसस्मार प्रेमप्रसरसंप्लुतः ॥ ९ ॥ तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुने ॥ उपासीनस्य संध्यायां ब्रह्मन् वायुरभून्महान् ॥ १० ॥ तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन्करालाः ॥ अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥११॥ ततो व्यदृश्यन्त चतुःसमुद्राः समन्ततः क्ष्मातलमाग्रसन्तः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥ १२ ॥ अन्तर्बहिश्चाभिरतिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् ॥ चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥ तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः ॥ आपूर्यमाणोवर्षद्भिरम्बुदैः क्ष्मामप्यधाद् द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥ सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ॥ स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडान्धवत् ॥ १५ ॥ क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वताहतः ॥ तमस्यपारे पतितो भ्रमन्दिशो न वेद खं गां च परिश्रमेषितः ॥ १६ ॥ क्वचिद्गतो महावर्ते तरङ्गैस्ताडितः क्वचित् ॥ यादोभिर्भक्ष्यते क्वापि स्वयमन्योऽन्यघातिभिः ॥ १७ ॥

सत् ॥१३॥ तदा वायुनाघूर्णितजलः ऊर्मिभीषणः समुद्रो द्वीपवर्षाद्रिभिः सह क्ष्मां छादयामास॥१४॥ततस्त्रैलोक्यं सर्वं जलाप्लुतमासीत्। स मुनिरेक एवोर्वरितो जटाः विकीर्य जडान्धवद्बभ्राम ॥ १५ ॥ अपारे तमसि पतितो भ्रमन् मत्स्यमकरादिभिरुपद्रुतः स खं गां दिशश्च न वेद ॥ १६ ॥ क्वचित् जलभ्रमे गतः । क्वचित् तद्भक्षणाय परस्परं युध्यद्भिर्जलचरैर्भक्ष्यते ॥ १७ ॥

१ अतिक्रान्ता द्यौर्याभिः । २ सूर्यरश्मिभिर्वायुभिर्वेति शेषः । ३ दीर्घत्वमार्षम् । ४ जरायुजादिभेदेन । ५ ज्योतिर्गणसहितम् । ६ परिश्रमं परिगतः ।

क्वचिच्छोकं क्वचिन्मोहं क्वचित्सुखं दुःखचेतनां च प्राप्नोति ॥ १८ ॥ एवं तत्र भ्रमतोऽयुतायुतवर्षाणि व्यतीयुः ॥ १९ ॥ स कदाचित्तत्र भ्रमन्पृथिव्याः उच्चदेशे कोमलं वटवृक्षं ददर्श ॥२०॥ तस्येशानदिक्शाखापत्रपुटे शयानं स्वप्रभया तमो ग्रसन्तम् ॥२१॥ श्यामं कम्बुग्रीवं विशालवक्षसं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥ कर्णयोर्दाडिमपुष्पधारिणं रक्ताधरोष्ठकान्त्या किंचिच्छोणायितस्मितम् ॥ २३ ॥ ईषदरुणनेत्रप्रान्तं

क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम् ॥ क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥१८॥ अयुतायुतवर्षाणां सहस्राणि शतानि च ॥ व्यतीयुर्भ्रमतस्तस्मिन्विष्णुमायावृतात्मनः ॥ १९ ॥ स कदाचिद्भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः ॥ न्यग्रोधपोतं ददृशे फलपल्लवशोभितम्॥२०॥प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम् ॥ शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥२१॥ महामरकतश्यामं श्रीमद्वदनपङ्कजम् ॥ कम्बुग्रीवं महोरस्कं सुनासं सुंदरभ्रुवम् ॥२२॥ श्वासैजदलकाभातं कम्बुश्रीकर्णदाडिमम् ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥२३॥ पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम्॥श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥२४॥ चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीयचरणाम्बुजम् ॥ मुखे निधाय विप्रेन्द्रो धयन्तं वीक्ष्य विस्मितः॥२५॥ तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ॥ प्रहृष्टरोमाद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥ तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तःशरीरं मशको यथाऽविशत् ॥ तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥ २७ ॥ रोदसी भगणानद्रिसागरान्द्वीपान्सवर्षान्ककुभः सुरासुरान् ॥ वनानि देशान्सरितः पुराकरान्खेटान्व्रजानाश्रमवर्णवृत्तयः ॥२८॥

हृद्यहासावलोकनं निम्ननाभिम् ॥२४॥ हस्ताभ्यां चरणाङ्गुष्ठं मुखे निधाय चुम्बन्तं बालं मुकुन्दं वीक्ष्य ॥२५॥ तद्दर्शनाद्गतश्रमः प्रहृष्टरोमा मार्कण्डेयस्तं बालं प्रष्टुमग्रतो जगाम ॥ २६ ॥ तावच्छिशोः श्वसितेन मशक इव तदन्तराविशत्तदुदरे गतः सन् पूर्ववत्सर्वम् ॥ २७ ॥ खं भूभगणाद्रिसागरान्द्वीपखण्डदिशो देवासुरान्वनदेशादीन् ॥ २८ ॥

१ श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यङ्निम्नरेखास्ताभिः संविग्ना चञ्चला निम्ना गम्भीरा नाभिर्यस्मिंस्तत् ।

महाभूतानि भौतिकानि कालमन्यद्व्यवहारम् ॥२९॥ हिमालयं पुष्पवहां नदीं निजाश्रममृषींश्च दृष्ट्वा विस्मितः आस । एतह्यैव शिशोः श्वासा- द्बहिर्निर्गतः सन् प्रलयाब्धावपतत् ॥३०॥ पुनः पृथिव्याः उन्नतदेशे वटं तत्पत्रपुटे शयानं बालं च वीक्ष्य बालेन निरीक्षितः सन् ॥ ३१ ॥ नेत्राभ्यां हृदि रूपं संस्थाप्य तमधोक्षजमालिङ्गितुमभ्ययात् ॥३२॥ तावत्सर्वगुहाशयो भगवानन्तर्दधे ॥ ३३ ॥ तत्पश्चाद्वटः सलिलं लोकप्रल- यश्च सद्योऽन्तर्हितः मुनिश्च स्वाश्रमे पूर्ववत्स्थितः ॥३४॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे चू० नवमोऽध्यायः ॥ ९ ॥ दशमे शिव

महान्ति भूतान्यथ भौतिकान्यसौ कालं च नानायुतकल्पकल्पनम् ॥ यत्किञ्चिदन्यद्व्यवहारकारणं ददर्श विश्वं स- दिवावभासितम् ॥ २९ ॥ हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीनपश्यत् ॥ विश्वं विपश्यन् श्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥ तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शया- नम् ॥ तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥ अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ॥ अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥ तावत्स भगवान् साक्षाद्योगाधीशो गुहाशयः ॥ अन्त- र्दधे ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥ तमन्वथ वटो ब्रह्मन् सलिलं लोकसंप्लवः ॥ तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे वटपत्रे शिशुदर्शनं नाम नवमोऽध्यायः ॥ ॥ ९ ॥ सूत उवाच ॥ स एवमनुभूयेदं नारायणविनिर्मितम् ॥ वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥ मार्क- ण्डेय उवाच ॥ प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे ॥ यन्मायायाऽपि विबुधा मुह्यन्ति ज्ञानकाशया ॥ २ ॥ सूत उवाच ॥ तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ॥ रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥

आगत्य मुनेस्तुष्टो वरानदात् ॥ तेन साकमतिप्रीत्या समाभाष्यासभाजयत् ॥ १ ॥ सूत उवाच ॥ ऋषिरेवं नारायणनिर्मितं योगमाया वैभवं दृष्ट्वा तमेव शरणं ययौ ॥ १ ॥ मार्कण्डेय उवाच ॥ हे हरे ! शरणागतभयदूरकरं ते अङ्घ्रिमूलं शरणं गतोऽस्मि । यन्मायया ज्ञानिनोऽपि मुह्यन्ति ॥ २ ॥ सूत उवाच ॥ एकदा रुद्रः पार्वत्या स्वगणैश्च वृतो वृषेण दिवि पर्यटंस्तं ददर्श ॥ ३ ॥

अथोमा तमृषिं मार्कण्डेयं वीक्ष्य शिवमभाषत । हे शिव ! समाहितेन्द्रियमनसमेनं तपस्विनं विप्रं पश्य पश्य ॥ ४ ॥ भवान् सिद्धिदोऽस्य तपसः सिद्धिं त्वं कुरु ॥५॥ श्रीशिव उवाच ॥ हे देवि ! अयमृषिर्भगवति परां भक्तिं प्राप्तोऽत आशिषो मोक्षमपि नेच्छति ॥ ६ ॥ तथापि नृणां साधुसमागमः परो लाभः एतेन सह संवादं करिष्यामः ॥ ७ ॥ सूत उवाच ॥ इत्युक्त्वा सर्वविद्यानामीश्वरः शिवस्तत्समीपं ययौ ॥८ ॥ तदा ऋषिः समाधिस्थः सन् तयोरागमनं न वेद ॥ ९ ॥ तज्ज्ञात्वा शिवस्तद्धृदयाकाशमाविशत् वायुश्छिद्रमिव ॥१०॥ तदा मुनि-

अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ॥ पश्येमं भगवन् विप्रं निभृतात्मेन्द्रियाशयम् ॥ ४ ॥ निभृतोदझषव्रातं वातापाये यथार्णवम् ॥ कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥ श्रीभगवानुवाच ॥ नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥६॥ अथापि संवदिष्यामो भवान्येतेन साधुना ॥ अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥ सूत उवाच ॥ इत्युक्त्वा तमुपेयाय भगवान् सात्वतां पतिः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥ तयोरागमनं साक्षादीशयोर्जगदात्मनोः ॥ न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥ भगवांस्तदभिज्ञाय गिरिशो योगमायया ॥ आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥ आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम् ॥ त्र्यक्षं दशभुजं प्रांशुमुद्यन्तमिव भास्करम् ॥ ११ ॥ व्याघ्रचर्माम्बरं शूलधनुरिष्वसिचर्मभिः ॥ अक्षमालाडमरुककपालपरशुं सह ॥ बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः ॥१२॥ किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम् ॥ १३ ॥ रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥ तस्मै सपर्यां व्यदधात् सगणाय सहोमया ॥ स्वागतासनपाद्यार्घ्यगन्धस्रग्धूपदीपकैः ॥ १४ ॥

रात्मनि प्राप्तं त्रिनेत्रं दशभुजं पिङ्गजटाधरम् ॥११॥ व्याघ्रचर्माम्बरं शूलधनुरिष्वसिचर्माक्षमालाडमरुकपालपरशून् दधानं शिवं हृदि वीक्ष्य विस्मितोऽभवत् ॥ १२ ॥ इदं किं कुत एवेति समाधेर्विरतः सन् नेत्रे उन्मील्य उमया गणैश्च युतं शिवं दृष्ट्वा ॥ १३ ॥ शिरसा ननाम । ततः सहोमया सगणाय तस्मै अर्घपाद्यादिभिः पूजां चकार ॥ १४ ॥

आह च हे विभो ! पूर्णकामस्य ते किं करवाम ॥१५॥ तुभ्यं शिवाय शांताय सत्त्वाय नम इत्यस्तौत् ॥ १६ ॥ सूत उवाच ॥ एवं स्तुतः शिवस्तुष्टः सन् प्रहस्य तमृषिमाह ॥१७॥ श्रीशिव उवाच । हे ऋषे ! ईप्सितं वरं वृणु । वरं दातुं वयं त्रयः । येषां दर्शनं सफलम् ॥ १८ ॥ एवमुक्त्वा ब्राह्मणान् स्तौति । हे मुने ! ये ब्राह्मणाः साधवोऽस्मास्वेकान्तभक्ता निर्वैराश्च तानिन्द्रादिलोकपालाः अहं ब्रह्मा हरिश्चैते वन्दन्ते

आह चात्मानुभावेन पूर्णकामस्य ते विभो ॥ करवाम किमीशान येनेदं निर्वृतं जगत् ॥१५॥ नमः शिवाय शान्ताय सत्त्वाय प्रमृडाय च ॥ रजोजुषेऽप्यघोराय नमस्तुभ्यं तमोजुषे॥ १६ ॥ सूत उवाच ॥ एवं स्तुतः स भगवानादिदेवः सतां गतिः ॥ परितुष्टः प्रसन्नात्मा प्रहसन्तमभाषत ॥ १७ ॥ श्रीभगवानुवाच ॥ वरं वृणीष्व नः कामं वरदेशा वयं त्रयः ॥ अमोघं दर्शनं येषां मर्त्यो यद्विन्दतेऽमृतम् ॥ १८ ॥ ब्राह्मणाः साधवः शान्ता निःसंगा भूतवत्सलाः ॥ एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ १९ ॥ सलोका लोकपालास्तान् वन्दन्त्यर्चन्त्युपासते ॥ अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः ॥२०॥ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते॥ नात्मनश्च जनस्यापि तद्युष्मान् वयमीमहि ॥ २१ ॥ न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः ॥ ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः ॥ २२ ॥ ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥ २३ ॥ श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः ॥ शुध्येरन्नन्त्यजाश्चापि किमु संभाषणादिभिः ॥ २४ ॥

ऽर्चन्त्युपासते च ॥१९॥२०॥ एवंभूताः ये साधवस्ते मय्यच्युतेऽजे चाण्वपि भेदं न पश्यन्ति । अतो युष्मान् भजेम ॥ २१ ॥ देवतीर्थानि कालेन पुनन्ति यूयं दर्शनमात्रतः ॥ २२ ॥ अत एव ब्राह्मणेभ्यो नमस्यामो ये तपआदिभिरस्मद्रूपं धारयन्ति ॥२३॥ येषां श्रवणाद्दर्शनात् पातकिनोऽपि शुद्ध्येरन् तेषां संभाषणादिभिः शुध्यन्तीति पुनः किं वक्तव्यम् ॥ २४ ॥



१ येभ्यः। आत्मसमाधानं चित्तैकाग्र्यम् । २ तपः आलोचनम् । स्वाध्यायोऽध्ययनम् । संयमो वागादिनियमः ।

सूत उवाच ॥ एवं शिववचः शृण्वन्नपि ऋषिर्नातृप्यत् ॥२५॥ स विष्णोर्मायया भ्रमितः शिवस्य वाक्यामृतेन क्लेशहीनः सन् तमाह ॥ २६ ॥ मार्कण्डेय उवाच ॥ अहो इयमीश्वरलीला दुर्विभाव्या । यतः ईश्वरा अपि स्वनिर्मितानि नमन्ति भूतानि स्तुवन्ति ॥ २७ ॥ धर्मप्रवक्तारोऽपि देहिनां धर्मं ग्राहयितुं स्वयमाचरन्ति ॥ २८॥ एतावता भगवतस्तव प्रभावो न दुष्येत मायिनः कपटं यथा ॥ २९ ॥ मनसेदं विश्वं सृष्ट्वा गुणैः

सूत उवाच ॥ इति चन्द्रललामस्य धर्मगुह्योपबृंहितम् ॥ वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥ २५ ॥ स चिरं मायया विष्णोर्भ्रामितः कर्षितो भृशम् ॥ शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत् ॥ २६ ॥ ऋषिरुवाच ॥ अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम् ॥ यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः ॥ २७ ॥ धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ॥ आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च ॥ २८ ॥ नैतावता भगवतः स्वमायामय-वृत्तिभिः ॥ न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥ २९ ॥ सृष्ट्वेदं मनसा विश्वमात्मनानुप्रविश्य यः ॥ गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा ॥ ३० ॥ तस्मै नमो भगवते त्रिगुणाय गुणात्मने ॥ केवलायाद्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३१ ॥ कं वृणे नु परं भूमन् वरं त्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामः सत्यकामः पुमान्भवेत् ॥ ३२ ॥ वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात् ॥ भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥ ३३ ॥ सूत उवाच ॥ इत्य-र्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा ॥ तमाह भगवाञ्छर्वः शर्वया चाभिनंदितः ॥ ३४ ॥ कामस्तेऽयं महर्षेऽस्तु भक्तिमांस्त्वमधोक्षजे ॥ आ कल्पान्ताद्यशः पुण्यमजरामरता तथा ॥ ३५ ॥ ज्ञानं त्रैकालिकं ब्रह्मन्विज्ञानं च विर-क्तिमत् ॥ ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यताऽस्तु ते ॥ ३६ ॥

प्रविष्टो भाति ॥ ३० ॥ हे ईश ! एवंभूताय त्रिगुणाय ब्रह्ममूर्तये तुभ्यं गुरवे नमोऽस्तु ॥ ३१ ॥ किंच हे भगवन् ! वरददर्शनात्त्वत्तः कं वरं वृणे ॥ ३२ ॥ तथापि भगवति त्वयि साधुषु च भक्तिर्भवेत् एवं वृणे ॥ ३३ ॥ सूत उवाच ॥ एवं मुनिना स्तुतः शिवः ऋषिमाह ॥ ३४ ॥ हे मार्कण्डेय ! अयं ते मनोरथोऽस्तु । कल्पपर्यन्तं यशस्तथाऽजरामरता त्रैकालिकं ज्ञानं वैराग्यं विज्ञानं पुराणाचार्यता च तेऽस्तु ॥ ३५ ॥ ३६ ॥

१ 'चर्चयम्' इ० पा० ।

सूत उवाच ॥ हे शौनक ! एवं वरान्दत्त्वा तत्प्रतापं देव्यै कथयन्शिवोऽगात् ॥ ३७ ॥ ततः ऋषिर्हरावेकान्ततां गतः सन्नधुनाऽपि विचरति ॥ ३८ ॥ हे शौनक ! एतन्मार्कण्डेयस्य चरितं भगवतो मायावैभवं तेऽनुवर्णितम् ॥ ३९ ॥ एतन्मार्कण्डेयचरितं भगवन्मायावैभवमज्ञाः अनित्यं प्रचक्षते वस्तुतस्तु भगवल्लीलात्वेन नित्यमित्यर्थः किं च शिशोः श्वासोच्छ्वासाभ्यां सप्तवारं तदुदरप्रवेशनिर्गमतः क्षणमात्रेणैव सप्तकल्पानुभव इति न कश्चिद्विरोधः ॥ ४० ॥ एतदाख्यानं यः शृणुयाच्छ्रावयेत्तयोः संसृतिर्न भवेत् ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धे चूर्णिकायां दशमोऽध्यायः ॥१०॥ एकादशे तु पूजार्थं महापुरुषवर्णनम् ॥ रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक्पृथक् ॥ १ ॥

सूत उवाच ॥ एवं वरान्स मुनये दत्त्वाऽगात्त्र्यक्ष ईश्वरः ॥ देव्यै तत्कर्म कथयन्ननुभूतं पुरा मुनेः ॥ ३७ ॥ सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः ॥ विचरत्यधुनाप्यद्धा हरावेकान्ततां गतः ॥ ३८ ॥ अनुवर्णितमेतत्ते मार्कण्डेयस्य धीमतः ॥ अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ३९ ॥ एतत्केचिदविद्वांसो मायासंसृतिमात्मनः ॥ अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥ ४० ॥ य एवमेतद् भृगुवर्यवर्णितं रथाङ्गपाणेरनुभावभावितम् ॥ संश्रावयेत्संशृणुयादुतावुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४१ ॥ इति श्रीभागवते महापुराणे द्वादशस्कन्धेमार्कण्डेय० शिवदत्तवरदानं नाम दशमोऽध्यायः ॥ १० ॥ शौनक उवाच ॥ अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम् ॥ समस्ततन्त्रराद्धान्ते भवान्भागवततत्त्ववित् ॥ १ ॥ तान्त्रिकाः परिचर्यायां केवलस्य श्रियः पतेः ॥ अङ्गोपाङ्गायुधाकल्पान्कल्पयन्ति तथैव यैः ॥२॥ तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् ॥ येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥३॥ सूत उवाच ॥ नमस्कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि ॥ याः प्रोक्ता वेदतन्त्राभ्यामाचार्यैः पद्मजादिभिः॥४॥



येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः ॥ तं पृच्छति क्रियायोगं साङ्गोपाङ्गादिकल्पितम् ॥ २ ॥ शौनक उवाच ॥ हे सूत ! अथ त्वामिममेवार्थं पृच्छामः ॥ १ ॥ तन्त्रविदः पुरुषाः श्रियः पतेरुपासनायां विषयेऽङ्गानि पादादीन्युपाङ्गानि गरुडादीन्यायुधानि सुदर्शनादीन्याकल्पान्कौस्तुभादीन्यथा यैस्तत्त्वैः कल्पयन्ति ॥ २ ॥ तन्नो वर्णय । तव भद्रमस्तु । येन पूजायोगेन मर्त्यो मोक्षं प्राप्नोति ॥ ३ ॥ सूत उवाच ॥ हे शौनक ! गुरुं नमस्कृत्य वैष्णवीर्विभूतीर्वक्ष्ये ॥ ४ ॥

मायाद्यैर्नवभिस्तत्त्वैः षोडशविकारात्मको विराट् निर्मितो यत्रेदं त्रिभुवनं दृश्यते ॥ ५ ॥ एतत्पौरुषं रूपं जानीयात् । अस्याङ्गकल्पनामाह भूः पादौ । स्वर्गः शिरः । नभो नाभिः । सूर्योऽक्षिणी । वायुर्नासे दिशः कर्णौ ॥६॥ उपस्थं प्रजापतिः । मृत्युर्गुदम् । लोकपाला बाहवः । चन्द्रो मनः यमो भ्रुवौ ॥७॥ ऊर्ध्वोष्ठो लज्जा । लोभोऽधरोष्ठः । ज्योत्स्ना दन्ताः भ्रमो हास्यम् । वृक्षा रोमाणि । मेघाः केशाः॥८॥ यावानयं सप्त वितस्तिमितः पुमांस्तावानसौ प्रोक्तः ॥९॥ किंच कौस्तुभमिषेण भगवान् शुद्धचैतन्यं बिभर्ति । कौस्तुभप्रभैव श्रीवत्सं बिभर्ति । स्वमायां वनमालां

मायाद्यैर्नवभिस्तत्त्वैः स विकारमयो विराट् ॥ निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥ ५ ॥ एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः ॥ नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः ॥ ६ ॥ प्रजापतिः प्रजननमपानो मृत्युरीशितुः ॥ तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः ॥ ७ ॥ लज्जोत्तरोऽधरो लोभो दन्ता ज्योत्स्ना स्मयो भ्रमः ॥ रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्द्धजाः ॥ ८ ॥ यावानयं वै पुरुषो यावत्या संस्थया मितः ॥ तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥ कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभा व्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥ १० ॥ स्वमायां वनमालाख्यां नानागुणमयीं दधत् ॥ वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥ ११ ॥ बिभर्ति साङ्ख्यं योगं च देवो मकरकुण्डले ॥ मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम् ॥ १२ ॥ अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः ॥ धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥ १३ ॥ ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत् ॥ अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥ १४ ॥ नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् ॥ कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ १५ ॥

बिभर्ति । छन्दोमयंपीताम्बरं बि० । प्रणवरूपं यज्ञोपवीतं बि० ॥१०॥११॥ साङ्ख्ययोगरूपे कुण्डले बि० । ब्रह्मलोकं कुटुम्बं बि० ॥१२॥ प्रधानतत्त्वं शेषाख्यमासनं बि० । सत्त्वगुणाख्यं पद्मं बि० ॥१३॥ प्राणतत्त्वं गदां दधत् । जलतत्त्वं शङ्खं बि० । तेजस्तत्त्वं सुदर्शनं बि० ॥१४॥ आकाशतत्त्वमसिं बि० । तमोमयं चर्म बि० । कालरूपं धनुः बि० । कर्ममयं तूणीरं बि० ॥ १५ ॥

---

१ चेतनाधिष्ठिते । २ अवयवसन्निवेशेन ।

इन्द्रियाणि शरान् बि० । क्रीडायुक्तं मनस्तस्य रथं शब्दादीन् रथप्रकटरूपं बि० ॥१६॥ देवपूजाभूमिं सूर्यमण्डलं बि० । मन्त्रदीक्षामात्मपूजां बि० ॥१७॥ षड्गुणैश्वर्यं लीलापद्मं बि० । धर्मं चामरं यशो व्यजनं बि० ॥१८॥ छत्रं वैकुण्ठं वेदत्रयरूपं गरुडं वाहनं बि० ॥१९॥ भगवच्छक्तिं श्रियं पञ्चरात्राद्यागमरूपं विष्वक्सेनं पार्षदं बि० । अणिमाद्याः अष्टगुणास्ते नन्दसुनन्दाद्याः द्वारपालाः ॥२०॥ वासुदेवः संकर्षणः



इन्द्रियाणि शरानाहुराकूतीरस्य स्यन्दनम् ॥ तन्मात्राण्यस्याभिव्यक्तिं मुद्रां[1]र्थक्रियात्मताम् ॥ १६ ॥ मण्डलं देवयजनं दीक्षा संस्कार आत्मनः ॥ परिचर्या भगवत आत्मनो दुरितं[2]क्षयः ॥ १७ ॥ भगवान्भगशब्दार्थं लीलाकमलमुद्वहन् ॥ धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥ १८ ॥ आतपत्रं तु वैकुण्ठं द्विजा धामाकुतोभयम् ॥ त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥ १९ ॥ अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः ॥ विष्वक्सेनस्तन्त्र[3]मूर्तिर्विदितः पार्षदाधिपः ॥२०॥ नन्दादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ वासुदेवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम् ॥ अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥ २१ ॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ॥ अथेन्द्रियाशयज्ञानैर्भगवान्परिभाव्यते ॥ २२ ॥ अङ्गोपाङ्गायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्ति स्म चतुर्मूर्तिर्भगवान्हरिरीश्वरः ॥ २३ ॥ द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत् ॥ सृजति हरति पातीत्याख्ययाऽनावृताक्षो[4] विवृत इव निरुक्तस्तत्परैरात्मलक्ष्यः ॥ २४ ॥

प्रद्युम्नोऽनिरुद्धश्चेतिमूर्तिभेदो ज्ञेयः ॥ २१ ॥ स एव चतुर्मूर्तिरीश्वरो विश्वतैजसप्राज्ञतुरीया इति वृत्तिभिः परिभाव्यते ॥ २२ ॥ अङ्गोपाङ्गायुधाकल्पैरुपलक्षितो भगवान् वासुदेवादिचतुर्मूर्तिः सन् विश्वादिचतुष्टयं बिभर्ति ॥ २३ ॥ एवंभूतो देवकारणो हरिः स्वमाययेदं विश्वं सृजति हरति पाति च ॥ २४ ॥



१ मुद्रया धृतया वरदाभयदादिरूपत्वम् । २ आत्मनो दुरितक्षयायेत्येवं भावयेदित्यर्थः । ३ पञ्चरात्राद्यागमरूपः । ४ ब्रह्मादिरूपयाऽऽख्ययाऽनाच्छन्नज्ञानः । शास्त्रेषु भिन्नो न तु वस्तुतस्तथा ।

अतस्तं प्रार्थयते । हे कृष्ण ! हे अर्जुनसख ! अवनिद्रोहकर्तारो राजानः तेषां वंशदहनकर्ता हे गोविंद ! अस्मान् भृत्यान् पाहि ॥२५॥ इदं यः उषःकाले शुचिः सन् पठेत् स हृदिस्थं ब्रह्म पश्यति ॥२६॥ शौनक उवाच ॥ शुकः परीक्षिते सूर्यसंबन्धी सप्तानां गणो मासिमासि नानासप्तको वसतीति यत्पञ्चमस्कन्ध आह ॥२७॥ तेषां नामानि कर्माणि नो ब्रूहि ॥ २८ ॥ सूत उवाच ॥ हे शौनक ! माययाऽयं सूर्यो लोकयात्राप्रवर्तको लोकेषु वर्तते ॥२९॥ स सृष्टिकर्ता हरिरेव। सच सर्ववेदक्रियामूलं सत्तनोपाधिना ऋषिभिर्बहुधा वर्णितः ॥३०॥ स सूर्यो मायया कालः प्रात-

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंद गोपवनिताव्रजभृत्यगीत तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥२५॥ य इदं कल्य उत्थाय महापुरुषलक्षणम् ॥ तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥ शौनक उवाच ॥ शुको यदाह भगवान्विष्णुराताय शृण्वते ॥ सौरो गणो मासिमासि नाना वसति सप्तकः ॥ २७ ॥ तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः ॥ ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥ २८ ॥ सूत उवाच॥अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् ॥ निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्त्तते ॥ २९ ॥ एक एव हि लोकानां सूर्य आत्मादिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ३० ॥ कालो देशः क्रिया कर्त्ता कारणं कार्यमागमः ॥ द्रव्यं फलमिति ब्रह्मन्नवधोक्तोऽजयो हरिः ॥३१॥ मध्वादिषु द्वादशसु भगवान्कालरूपधृक् ॥ लोकतन्त्राय चरति पृथग्द्वादशभिर्गणैः ॥ ३२ ॥ धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने ॥ पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥३३॥अर्यमा पुलहोऽथौजाः प्रहेतिःपुञ्जिकस्थली ॥ नारदःकच्छनीरश्च नयन्त्येते स्म माधवम्॥३४॥

रादिः १ देशः समादिः २ क्रियाऽनुष्ठानं ३ कर्ता ब्राह्मणादिः ४ करणं स्रुगादि ५ कार्यं यागादि ६ आगमो मन्त्रादिः ७ द्रव्यं व्रीह्यादि ८ फलं स्वर्गादि ९ एवं नवप्रकारेण वर्णितः ॥३१॥ कालस्वरूपधारी भगवांश्चैत्रादिमासेषु लोकयात्रानिर्वाहाय द्वादशभिर्गणैश्चरति॥३२॥ तदेवाह। धाता सूर्यः। कृतस्थल्यप्सरसः। हेतिः राक्षसः। वासुकिर्नागः। रथकृद्यक्षः। पुलस्त्यः ऋषिः। तुम्बुरुर्गन्धर्वः एते चैत्रमासमनुवर्तयन्ति॥३३॥ अर्यमा सूर्यः। पुञ्जिकस्थली अ०। प्रहेतिः रा०। कच्छनीरः ना०। अथौजाः य०। पुलहः ऋ०। नारदः गन्धर्वः एते वैशाखमासं वर्तयन्ति॥३४॥

भा० द्वा०
॥२९॥

मित्रः सू० । मेनका अ० । पौरुषेयः रा० । तक्षकः ना० । रथसेनः य० । अत्रिः ऋ० । हाहाः गन्धर्वः । एते ज्येष्ठमासं नयन्ति ॥३५॥ वरुणः सू० । रम्भा अ० । चित्रस्वनः रा० । शुक्रः ना० । सहजन्यः य० । वसिष्ठः ऋषिः हूहूः गन्ध० । एते आषाढमासं वर्तयन्ति ॥३६॥ इन्द्रः सूर्यः । प्रम्लोचा अ० । वर्यो रा० । एलापत्रः ना० । श्रोता य० । अङ्गिरा ऋ० । विश्वावसुर्गन्ध० । एते श्रावणमासमनुवर्तयन्ति ॥३७॥ विवस्वान् सूर्यः । अनुम्लोचा अ० । व्याघ्रो रा० । शङ्खपालो ना० । आसारणो य० । भृगुर्ऋ० । उग्रसेनो गन्ध० । एते भाद्रपदमासं वर्तयन्ति ॥३८॥ पूषा सू० । घृताच्यप्स-रसः । वातो राक्षसः । धनंजयो नागः । सुरुचिर्यक्षः । गौतमः ऋ० । सुषेणो गन्धर्वः । एते माघमासं वर्तयन्ति ॥३९॥ पर्जन्यः सूर्यः । सेनजिद-

मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः ॥ रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥ ३५ ॥ वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः ॥ शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥ ३६ ॥ इन्द्रो विश्वावसुः श्रोता एलापत्रस्त-थांगिराः ॥ प्रम्लोचा राक्षसो वर्यो नभोमासं नयन्त्यमी ॥ ३७ ॥ विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः ॥ अनु-म्लोचा शंखपालो नभस्याख्यं नयन्त्यमी ॥ ३८ ॥ पूषा धनंजयो वातः सुषेणः सुरुचिस्तथा ॥ घृताची गौतम-श्चेति तपोमासं नयन्त्यमी ॥ ३९ ॥ ऋतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा ॥ विश्व ऐरावतश्चैव तपस्याख्यं नय-न्त्यमी ॥ ४० ॥ अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखः सहोमासं नयन्त्यमी ॥ ४१ ॥ भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पञ्चमः ॥ कर्कोटकः पूर्वचित्तिः पुष्यमासं नयन्त्यमी ॥ ४२ ॥ त्वष्टा ऋचीकतनयः कम्बलश्च तिलोत्तमा ॥ ब्रह्मापेतोऽथ शतजिद् धृतराष्ट्र इषंभराः ॥ ४३ ॥

प्सरसः । वर्चाः राक्षसः । ऐरावतो नागः । ऋतुर्यक्षः । भरद्वाजः ऋ० । विश्वो गन्धर्वः । एते फाल्गुनमासं वर्तयन्ति ॥४०॥ अंशुः सू० । उर्वशी अ० । विद्युच्छत्रुः राक्षसः । महाशङ्खो नागः । तार्क्ष्यो यक्षः । कश्यपः ऋ० । ऋतसेनो गन्धर्वः । एते मार्गशीर्षं वर्तयन्ति ॥४१॥ भगः सूर्यः । पूर्वचित्तिरप्सरसः । स्फूर्जो राक्षसः कर्कोटको नागः । ऊर्णो यक्षः । आयुर्ऋषिः अरिष्टनेमिर्गन्ध० ॥ एते पौषं वर्तयन्ति ॥४२॥ त्वष्टा सूर्यः । तिलोत्तमा अ० । ब्रह्मापेतो राक्षसः । कम्बलो ना० । शतजिद्यक्षः । जमदग्निर्ऋषिः । धृतराष्ट्रो गन्धर्वः । एते आश्विनमासं वर्त्तयन्ति ॥४३॥

विष्णुः सूर्यः । रम्भाऽप्सरसः । मखापेतो राक्षसः । अश्वतरो नागः । सत्यजिद् यक्षः । विश्वामित्रः ऋषिः । सूर्यवर्चाः गन्धर्वः । एते कार्ति-
कमनुवर्तयन्ति ॥४४॥ भगवत आदित्यस्य विभूतयः संध्ययोः ताः स्मरतां नृणां पापं हरन्ति ॥४५॥ असौ सूर्यो द्वादशमासेषु चरन् जनस्य
शुभां मतिं विस्तारयते ॥४६॥ ऋषयः एनं सूर्यं त्रिभिर्वेदैः स्तुवन्ति ॥ गन्धर्वाः गायन्त्यप्सरसोऽग्रतो नृत्यन्ति ॥ ४७ ॥ नागाः रथबन्धन-
रज्जवः । यक्षाः रथं योजयन्ति । राक्षसाः पृष्ठतो रथं प्रेरयन्ति ॥ ४८ ॥ अङ्गुष्ठपर्वप्रमाणाः वालखिल्याः षष्टिसहस्राण्यृषयः पुरुषोऽभिमुखं

विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित् ॥ विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी ॥ ४४ ॥ एता भगवतो
विष्णोरादित्यस्य विभूतयः ॥ स्मरतां संध्ययोर्नृणां हरन्त्यंहो दिनेदिने ॥ ४५ ॥ द्वादशस्वपि मासेषु देवोऽसौ षड्भि-
रस्य वै ॥ चरन्समन्तात्तनुते परत्रेह च सन्मतिम् ॥ ४६ ॥ सामर्ग्यजुर्भिस्तल्लिङ्गैरृषयः संस्तुवन्त्यमुम् ॥ गन्धर्वास्तु
प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ॥ ४७ ॥ उन्नह्यन्ति[1] रथं नागा ग्रामण्यो रथयोजकाः ॥ चोदयन्ति रथं पृष्ठे नैरृता
बलशालिनः ॥४८॥ वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः ॥ पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम् ॥४९॥
एवं ह्यनादिनिधनो भगवान्हरिरीश्वरः ॥ कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ॥ ५० ॥ इति श्रीभा० म०
द्वादश० आदित्यव्यूहविवरणं नामैकादशोऽध्यायः ॥११॥ सूत उवाच ॥ नमो धर्माय महते नमः कृष्णाय वेधसे ॥
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्ये सनातनान् ॥१॥ एतद्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ॥ भवद्भिर्यदहं पृष्ठो नराणां
पुरुषोचितम् ॥ २ ॥ अत्र सङ्कीर्तितः साक्षात्सर्वपापहरो हरिः ॥ नारायणो हृषीकेशो भगवान्सात्वतां पतिः ॥ ३ ॥

स्तुवन्ति ॥ ४९ ॥ हे शौनक ! एवमनादिनिधनो हरिः कल्पेकल्पे स्वमात्मानं विभज्य लोकान् पालयति ॥५०॥ इति श्रीभागवते द्वादश०
चू० एकादशोऽध्यायः ॥ ११ ॥ द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः प्रथमस्कन्धमारभ्य प्राधान्येन समासतः ॥ १ ॥ सूत उवाच ॥ हे
शौनक ! धर्माय कृष्णाय ब्राह्मणेभ्यश्च नमस्कृत्य सनातनान्धर्मान् वक्ष्ये ॥ १ ॥ हे द्विजाः ! भवद्भिर्यत्पृष्टं विष्णोरद्भुतं चरितं तत्कथि-
तम् ॥ २ ॥ अत्र पुराणे सर्वपापहरो नारायणो हरिः कीर्तितः ॥ ३ ॥

[1] दृढं बध्नन्ति ।

तथा परं ब्रह्म विज्ञानसहितं ज्ञानं तत्साधनं च कथितम् ॥४॥ तथा भक्तियोगो वैराग्यं चोक्तम् । अथ सर्वस्कन्धानां प्रकरणार्थान् वक्ष्यति । तत्र प्रथमे परीक्षितमाख्यानं ततो नारदाख्यानम् ॥५॥ राजर्षेर्विप्रशापाद्गङ्गायां प्रायोपवेशः । तत्र शुकपरीक्षित्संवादः ॥ ६ ॥ अथ द्वितीये योगधारणयाग्निलोकादिगतिर्ब्रह्मनारदयोः संवादोऽवतारानुगीतं प्राधानिकः सर्गः ॥ ७ ॥ अथ तृतीये विदुरोद्धवसंवादो विदुरमैत्रेयसंवादः

अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम्[1] ॥ ज्ञानं च तदुपाख्यानं[2] प्रोक्तं विज्ञानसंयुतम् ॥ ४ ॥ भक्तियोगः समाख्यातो वैराग्यं च तदाश्रयम् ॥ पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥ ५ ॥ प्रायोपवेशो राजर्षेर्विप्रशापात्परीक्षितः ॥ शुकस्यैव च ब्रह्मर्षेः संवादश्च परीक्षितः ॥ ६ ॥ योगधारणयोत्क्रान्तिः संवादो नारदाजयोः ॥ अवतारानुगीतं च सर्वं प्राधानिकोऽग्रतः ॥ ७ ॥ विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥ ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये ॥ ततो ब्रह्माण्डसम्भूतिर्वैराजः पुरुषो यतः ॥ ९ ॥ कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः ॥ भुव उद्धरणेऽम्भोधौ हिरण्याक्षवधो यथा ॥ १० ॥ ऊर्ध्वतिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च ॥ अर्धनारीनरस्याथ यतः स्वायंभुवो मनुः ॥ ११ ॥ शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा ॥ संतानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥ १२ ॥ अवतारो भगवतः कपिलस्य महात्मनः ॥ देवहूत्याश्च संवादः कपिलेन च धीमता ॥ १३ ॥

पुराण संहिताप्रश्नो महापुरुषस्य प्रलये तूष्णीमवस्थानम् ॥८॥ प्राकृतिकः सर्गो वैकृतिकः सर्गश्च । ततो ब्रह्माण्डसम्भवः ॥ ९ ॥ कालस्य गतिः पद्मोत्पत्तिर्वराहावतारो हिरण्याक्षवधः ॥ १० ॥ ऊर्ध्वतिर्यगादिसर्गो रुद्रसर्गः स्वायंभुवमनोरुत्पत्तिः ॥ ११ ॥ कर्दमस्य चरितम् । कपिलावतारः । कपिलदेवहूत्योः संवादः ॥ १२ ॥ १३ ॥



१ प्रभवत्यस्मादिति प्रभवम् । अप्येत्यस्मादित्यप्ययम् । २ तज्ज्ञानमुपाख्यायते यस्मात्तज्ज्ञानसाधनमित्यर्थः । ३ अस्मिन्द्वादशस्कन्धे इति शेषः । ४ अर्चिरादिगतिः । ५ प्रधानकार्यविराड्रूपः सर्गः ।

चतुर्थे मरीच्यादिनवप्रजापतीनामुत्पत्तिः दक्षयज्ञनाशो ध्रुवस्य पृथोः प्राचीनबर्हिषश्चरितानि प्राचीनबर्हिर्नारदयोः संवादः ॥ १४ ॥ अथ पञ्चमे प्रियव्रताख्यानं नाभेर्ऋषभस्य भरतस्य च चरितम् ॥१५॥ द्वीपखण्डसमुद्रनद्यादिवर्णनम् ! ज्योतिश्चक्रपातालनरकाणां वर्णनम् ॥१६॥ षष्ठस्कन्धेऽजामिलोपाख्यानं प्रचेतोभ्यो दक्षजन्म तत्कन्यानां वंशो यतो देवासुरनृतिर्यङ्नगखगादयो जाताः ॥१७॥ वृत्रस्य जन्म निधनम् । सप्तमे दितिपुत्रनाशः प्रह्लादस्य चरितं नृसिंहावतारो वर्णाश्रमानुवर्णनम् ॥१८॥ अष्टमे मन्वन्तरानुचरितं गजेन्द्रमोक्षणं मन्वन्तरावतारः ॥१९॥

नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः ॥ १४ ॥ नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः ॥ नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च ॥ १५ ॥ ततो द्वीपसमुद्राद्रिवर्षनद्युपवर्णनम् ॥ ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥ १६ ॥ दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च संततिः ॥ यतो देवासुरनरास्तिर्यङ्नगखगादयः ॥१७॥ त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः ॥ दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ॥ १८ ॥ मन्वन्तरानुचरितं गजेन्द्रस्य विमोक्षणम् ॥ मन्वन्तरावताराश्च विष्णोर्हयशिरादयः ॥ १९ ॥ कौर्मं मात्स्यं[1] नारसिंहं वामनं च जगत्पतेः ॥ क्षीरोदमथनं तद्वदमृतार्थं दिवौकसाम् ॥ २० ॥ देवासुरमहायुद्धं राजवंशानुकीर्तनम् ॥ इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः ॥ २१ ॥ इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ॥ सूर्यवंशानुकथनं शशादाद्या नृपादयः ॥ २२ ॥ सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः ॥ खट्वाङ्गस्य च मान्धातुः सौभरेः सगरस्य च ॥२३॥ रामस्य कोसलेन्द्रस्य चरितं किल्बिषापहम् ॥ निमेरङ्गपरित्यागो जनकानां च सम्भवः ॥ २४ ॥ रामस्य भार्गवेन्द्रस्य निःक्षत्रकरणं भुवः ॥ ऐलस्य सोमवंशस्य ययातेर्नाहुषस्य च ॥ २५ ॥

कूर्ममत्स्यवामनाद्यवताराः क्षीरोदमथनम् ॥२०॥ तत्र देवासुरसंग्रामः । नवमे राजवंशकीर्तनमिक्ष्वाकुजन्म सुद्युम्नजन्म इलोपाख्यानं तारोपाख्यानं सूर्यवंशकथनम् ॥ २१ ॥ २२ ॥ सुकन्याख्यानम् । शर्यातेः ककुत्स्थस्य खट्वाङ्गस्य मान्धातुः सौभरेः सगरस्य च चरितम् ॥ २३ ॥ श्रीरामचरितम् । निमेर्देहत्यागः । जनकानां राज्ञां संभवः ॥ २४ ॥ परशुरामचरितं सोमवंशस्य ऐलस्य ययातेः ॥ २५ ॥

---

१ 'धान्वन्तरं मात्स्यम्' इ० पा० ।

दौष्यन्तेर्भरतस्य शन्तनोर्भीष्मस्य च चरितं यदुवंशानुवर्णनम् ॥२६॥ यत्र कृष्णाख्यो भगवानवतीर्णः । अथ दशमे तस्य वसुदेवगृहे जन्म ततो गोकुले वृद्धिः ॥२७॥ पूतनायाः प्राणैः सह पयसः पानं शकटोच्चाटनम् ॥२८॥ तृणावर्तवधो बकवत्सधेनुकप्रलम्बानां नाशः ॥ २९ ॥ दावाग्नेः गोपानां रक्षणं कालियदमनं सर्पान्नन्दमोचनम् ॥ ३० ॥ कात्यायन्याः व्रतं यज्ञपत्नीष्वनुग्रहो विप्राणामनुतापनमिन्द्रयागभङ्गो वातवर्षभयाद्गोवर्धनोद्धरणमिन्द्रस्य सुरभेश्चाभिषेको रात्रिषु स्त्रीभिः सह क्रीडा ॥ ३१ ॥ ३२ ॥ शङ्खचूडवृषभासुरकेशिनां वधोऽक्रूरागमनं

दौष्यन्तेर्भरतस्यापि शन्तनोस्तत्सुतस्य च ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ॥ २६ ॥ यत्रावतीर्णो भगवान् कृष्णाख्यो जगदीश्वरः ॥ वसुदेवगृहे जन्म ततो वृद्धिश्च गोकुले ॥ २७ ॥ तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः ॥ पूतनाऽसुपयःपानं शकटोच्चाटनं शिशोः ॥ २८ ॥ तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः ॥ धेनुकस्य सह भ्रातुः प्रलम्बस्य च संक्षयः ॥ २९ ॥ गोपानां च परित्राणं दावाग्नेः परिसर्पतः ॥ दमनं कालियस्याहेर्महाहेर्नन्दमोक्षणम् ॥ ३० ॥ व्रतचर्या तु कन्यानां यत्र तुष्टोऽऽच्युतो व्रतैः ॥ प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥ ३१ ॥ गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ ॥ यज्ञाभिषेकः कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥ ३२ ॥ शंखचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः ॥ अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥ ३३ ॥ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः ॥ गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥ मृतस्यानयनं सूनोः पुनः सान्दीपनेर्गुरोः ॥ मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥ ३५ ॥ कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ जरासन्धसमानीतसैन्यस्य बहुशो वधः ॥ घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥ आदानं पारिजातस्य सुधर्मायाः सुरालयात् ॥ रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥ ३७ ॥

ततो रामकृष्णयोः प्रस्थानम् ॥३३॥ तदा व्रजस्त्रीणां विलापस्ततो मथुराऽवलोकनं गजमुष्टिकचाणूरकंसादीनां वधः ॥३४॥ सान्दीपनेर्गुरोर्मृतपुत्रानयनं व्रजे उद्धवगमनं ततः स्त्रीणां संवादः ॥ ३५ ॥ जरासन्धसैन्यवधः कालयवनघातो द्वारकायाः निर्माणं प्रवेशश्च ॥ ३६ ॥ परिजातकस्य सुधर्मासभायाश्च स्वर्गादानयनम् रुक्मिण्या हरणम् ॥ ३७ ॥

शिवस्य जृम्भणं बाणभुजच्छेदनम् । भौमासुरं हत्वा षोडशसहस्रकन्यानामानयनम् ॥ ३८ ॥ शिशुपालपौण्ड्रकशाल्वदन्तवक्रशम्बरद्विविद-पीठमुरपञ्चजनादीनां वधः ॥३९॥ वाराणसीदहनं पाण्डवान्निमित्तीकृत्य कौरवादिभूभारहरणम् ॥ ४० ॥ एकादशे विप्रशापनिमित्तेन स्वकुल-संहारः । भगवदुद्धवसंवादः ॥ ४१ ॥ यत्राखिलाऽऽत्मविद्या कथिता ततो लुब्धकबाणनिमित्तेन स्वधामगमनम् ॥ ४२ ॥ द्वादशे भविष्यद्राज्ञां वर्णनम् । युगलक्षणं तदनुरूपा वृत्तिश्चतुर्विधप्रलयाः ॥ ४३ ॥ राजर्षेः परीक्षितो देहत्यागो वेदानां शाखाविभागवर्णनम् मार्कण्डेया-

हरस्य जृम्भणां युद्धे बाणस्य भुजकृन्तनम् ॥ प्राग्ज्जोतिषपतिं हत्वा कन्यानां हरणं च यत् ॥ ३८ ॥ चैद्यपौण्ड्रक-शाल्वानां दन्तवक्रस्य दुर्मतेः ॥ शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः ॥ ३९ ॥ माहात्म्यं च वधस्तेषां वाराण-स्याश्च दाहनम् ॥ भारावतरणं भूमेर्निमित्तीकृत्य पाण्डवान् ॥४०॥ विप्रशापापदेशेन संहारः स्वकुलस्य च ॥ उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ॥ ४१ ॥ यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः ॥ ततो मर्त्यपरित्याग आत्म-योगानुभावतः ॥ ४२ ॥ युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ॥ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥ ४३ ॥ देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः ॥ शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा ॥ ४४ ॥ महापुरुषविन्यासः सूर्य-स्य जगदात्मनः ॥ इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः ॥ लीलावतारकर्माणि कीर्तितानीह सर्वशः ॥४५॥ पतितः स्खलितश्चार्तः क्षुत्त्वा वा विवशो ब्रुवन् ॥ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥ ४६ ॥

ख्यानम् ॥ ४४ ॥ महापुरुषस्याङ्गोपाङ्गादिवर्णनं सूर्यस्य गणैः सह प्रतिमासं भ्रमणं च । हे विप्राः । यद्वः पृष्टं तत्कथितम् । किंच हरेर्लीलावतारकर्माणि कीर्तितानि ॥ ४५ ॥ एतत्कीर्तनेन किमित्यत आह । कूपादिषु पतितः सोपानादिषु स्खलितो दुःखितः आतुरोऽपि क्षुतं कृत्वा विवशोऽपि हरये नमः इत्युच्चैर्ब्रुवन् सर्वपातकान्मुच्यते ॥ ४६ ॥

एवं कीर्त्यमानो भगवान् पुंसां चित्तं प्रविश्य दुःखं धुनोति ॥ ४७ ॥ हरिकीर्त्तनादन्यत्सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति । यासु वाणीषु भगवत्कथा न ताः वाण्यो मृषा ॥ ४८ ॥ किंच कथासु भगवद्यशोऽनुगीयत इति यत्तदेव सत्यं मङ्गलं पुण्यं रम्यं रुचिप्रदं नृणां शोकार्णवशोषणम् ॥४९॥ अपि च यद्वचो हरेर्जगत्पवित्रं यशो नोच्चारयेत्तत्काकतुल्यं तीर्थं न तु ज्ञानिभिः सेवितम् ॥५०॥ किंच भगवद्गुणानुव-

संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम् ॥ प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥ ४७ ॥ मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ॥ तदेव सत्यं तदु हैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ॥ ४८ ॥ तदेव रम्यं रुचिरं नवंनवं तदेव शश्वन्मनसो महोत्सवम् ॥ तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ॥ तद्ध्वाङ्क्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥ ५० ॥ स वाग्विसर्गो जनताऽघसंप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ५१ ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥ ५२ ॥ यशः श्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥ ५३ ॥



र्णने प्रतिश्लोकमबद्धवत्यपि साधवोऽनन्तस्य यशोऽङ्कितानि नामानि शृण्वन्ति गायन्ति गृणन्ति ॥५१॥ किंच ब्रह्मप्रकाशकं यद्ज्ञानं तदपि भक्तिहीनं चेन्न शोभते कुतः पुनरभद्रं ज्ञानं शोभते ॥ ५२ ॥ वर्णाश्रमाचारतपःशास्त्रादिषु यः परिश्रमः स यशोयुक्तायां श्रियामेव । कीर्तिः संपत्तिश्च केवलं तत्र परः पुरुषार्थः । भगवद्गुणानुवादिभिस्तु श्रीधरपादपद्मयोर्विस्मृतिर्न भवति ॥ ५३ ॥

कृष्णपादारविन्दयोः स्मृतिरभद्राणि नाशयति। चित्तशुद्धिं भक्तिं विरागविज्ञानयुक्तं ज्ञानं च तनोति ॥५४॥ हे द्विजश्रेष्ठाः! यूयं भूरिभागाः यतो मनसि हरिं विधाय तं भजत ॥५५॥ अहो अहमपि धन्यो यतः पुरा शुकमुखाच्छ्रुतमात्मतत्त्वमद्य स्मारितः ॥५६॥ हे विप्राः! एवं वासुदेवमाहात्म्यमशुभनाशकं वः कथितम् ॥ ५७ ॥ एवं यः इदं क्षणं श्रद्धावान् शृणुयात् श्रावयेत् स आत्मानं पुनाति ॥५८॥ एकादश्यां

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च ॥ सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥५४॥ यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम् ॥ नारायणं देवमदेवमीशमजस्रभावा भजताऽऽविवेश्य ॥ ५५ ॥ अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ॥ प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५६ ॥ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः ॥ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥ ५७ ॥ य एवं श्रावयेन्नित्यं यामं क्षणमनन्यधीः ॥ श्रद्धावान्योऽनुशृणुयात्पुनात्यात्मानमेव सः ॥ ५८ ॥ द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतस्ततो भवत्यपातकी ॥ ५९ ॥ पुष्करे मथुरायां च द्वारवत्यां यतात्मवान् ॥ उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥६०॥ देवता मुनयः सिद्धाः पितरो मनवो नृपाः ॥ यच्छन्ति कामान्गृणतः शृण्वतो यस्य कीर्तनात् ॥ ६१ ॥

द्वादश्यां वा शृण्वन् दीर्घायुः स्यात् अनश्नन् पठेत् स निष्पापः स्यात् ॥५९॥ पुष्करे मथुरायां द्वारवत्यामुपोष्येमां संहितां पठित्वा भयान्मुच्यते ॥ ६० ॥ इदं शृण्वतो गृणतः पुंसो देवमुनिसिद्धपितृमनुनृपाः मनोरथान् पूरयन्ति ॥ ६१ ॥

ऋग्यजूंषि सामान्यधीत्य मधुकुल्याः घृतकुल्याः पयःकुल्याः प्राप्नोति । तत् सर्वं फलमेतत्पाठात् प्राप्नोति ॥६२॥ किं चेमां पुराणसंहिता-मधीत्य नरो भगवत्पदं व्रजेत् ॥६३॥ विप्रः एतामधीत्य ज्ञानं प्राप्नुयात् । राजन्यः आसमुद्रान्तां पृथ्वीं प्राप्नुयात् । वैश्यो निधिपतित्वं प्राप्नुयात् । शूद्रः पातकान्मुच्येत ॥६४॥ कलिमलौघनाशको हरिरन्यपुराणादिष्वभीक्ष्णं न गीयते । अस्मिन् पुराणे तु कथाप्रसङ्गैः पदे पदे

ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते ॥ मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम् ॥ ६२ ॥ पुराण-संहितामेतामधीत्य प्रयतो द्विजाः ॥ प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत् ॥ ६३ ॥ विप्रोऽधीत्याप्नुयात्प्रज्ञां राज-न्योदधिमेखलाम् ॥ वैश्यो निधिपतित्वं च शूद्रः शुध्येत पातकात् ॥ ६४ ॥ कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् ॥ इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसंगैः ॥ ६५ ॥ तमहमजम-नन्तमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशङ्कराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥ ६६ ॥ उपचितनवशक्तिभिः[1] स्व आत्मन्युपरचितस्थिरजङ्गमालयाय ॥ भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय ॥ ६७ ॥ स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावो[2]ऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ॥ व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥ ६८ ॥ इति श्रीभाग० म० द्वा० द्वादशस्कन्धार्थसंग्रहो नाम द्वादशोऽध्यायः ॥ १२ ॥

वर्णितः ॥६५॥ तमनन्तं ब्रह्मरुद्रेन्द्रादिभिरज्ञातस्तोत्रमच्युतं नतोऽस्मि ॥६६॥ किंच सुरर्षभाय सनातनाय नवशक्तिभिरात्मनि रचितस्थिर-जङ्गमालयाय हरये नमोऽस्तु ॥६७॥ स्वगुरुं शुकं प्रणमति । स्वसुखेनैव पूर्णचित्तो यः कृष्णलीलासारमाकृष्य तत्त्वदीपं पुराणं कृपया व्यस्तार-यत् तं व्यासपुत्रमखिलदुःखनाशकं शुकं नतोऽस्मि ॥ ६८ ॥ इति श्रीभागवते द्वादशस्कन्धे चूर्णिकायां द्वादशोऽध्यायः ॥ १२ ॥



---

१ प्रकृतिपुरुषमहदहङ्कारतन्मात्ररूपाभिः । २ तनवे व्युदस्तोऽन्यस्मिन्भावो यस्य सः ।

त्रयोदशे पुराणानां संख्यामाह यथाक्रम् । दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १ ॥ सूत उवाच । ब्रह्मा वरुणेन्द्ररुद्रमरुतो दिव्यैः स्तोत्रैर्यं स्तुवन्ति सामगाः साङ्गपदक्रमोपनिषदैर्यं गायन्ति योगिनो मनसा यं पश्यन्ति देवादयो यस्यान्तं न विदुस्तस्मै देवाय नमः ॥१॥ हे शौनक । पृष्ठे भ्राम्यमाणस्य मन्दराचलस्य पाषाणाग्रघर्षणकण्डूयनान्निद्राशीलस्य कूर्मरूपिणो भगवतः श्वासानिलाः वः पान्तु । येषां श्वासा-

सूत उवाच ॥ यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ॥ ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥ पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ॥ यत्संस्कारकलानुवर्तनवशाद्वेलानिभेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २ ॥ पुराणसङ्ख्यासम्भूतिमस्य वाच्यप्रयोजने ॥ दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥ ३ ॥ ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च ॥ श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ ४ ॥

निलानां संस्कारलेशानुवशात्समुद्रस्य जलानां यातायातमद्यापि न विश्राम्यति ॥२॥ अथ पुराणसंख्यासमूहं श्रीमद्भागवतस्य विषयं प्रयोजनं दानं पाठादेर्माहात्म्यं च शृणुत ॥ ३ ॥ ब्राह्मं १०००० पाद्मं ५५०००वैष्णवं २३००० शैवम् २४००० ॥ ४ ॥

१ येषां श्वासानां संस्कारलेशानामनुवर्तनेन । २ क्षोभमिषेण यातायाते समुद्रक्षोभस्य कारणत्ववारणायेदम् । ३ अथात्र विशेष उक्तो मात्स्यपाद्मयोः । अथ विष्णोः परेशस्य नानाविग्रहधारिणः एकं पुराणफलकं तच्छृणुध्वं द्विजोत्तमाः ॥१॥ तत्र ब्रह्मकल्पवृत्तान्तोद्भवं ब्राह्मं हरेर्मस्तकं, पद्मकल्पवृत्ता० पाद्मं हृदयं, वाराहकल्पवृ० वैष्णवं दक्षिणबाहुः, श्वेतकल्पवृ० शिवपुराणं वामबाहुः, सारस्वत कल्पवृ० वक्षःस्थलं, बृहत्कल्पवृ० नारदीयं नाभिः, श्वेतवाराहकल्पवृ० मार्कण्डेयं दक्षिणाङ्घ्रिः, ईशानकल्पवृ० आग्नेयं वामाङ्घ्रिः, अघोरकल्पवृ० भविष्यं दक्षिणाजानुः, रथन्तरकल्पवृ०—

श्रीमद्भागवतं १८००० नारदं २५००० मार्कण्डेयम् ९००० आग्नेयं १५४०० ॥ ५ ॥ भविष्यं १४५०० ब्रह्मवैवर्तं १८००० लैंगं ११०००
॥ ६ ॥ वाराहं २४००० स्कान्दं ८११०० वामनं १०००० ॥ ७ ॥ कौर्मं १७००० मात्स्यं १४००० गारुडं १९००० ब्रह्माण्डम् १२०००



दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः ॥ मार्कण्डं नव वाह्नं तु दशपञ्चचतुः शतम् ॥ ५ ॥ चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च ॥ दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु ॥ ६ ॥ चतुर्विंशति वाराहमेकाशीतिसहस्रकम् ॥ स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥ कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश ॥ एकोनविंशत्सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥ ८ ॥ एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः ॥ तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते ॥ ९ ॥

॥ ८ ॥ एवं पुराणसन्दोहश्चतुर्लक्षः कथितः ॥ ९ ॥

---

ब्रह्मवैवर्तं वामजानुः, कल्पान्तवृत्तान्तोद्भवं लैङ्गं दक्षिणगुल्फः, मनुकल्पवृत्तान्तोद्भवं वाराहं वामगुल्फः;तत्पुरुषकल्पवृत्तान्तोद्भवं स्कान्दं हरे रोमाणि; शिवकल्पानुषङ्गिकं वामनं शरीरत्वक्, लक्ष्मीकल्पवृत्तान्तोद्भव कौर्मं पृष्ठं, कल्पादौ सप्तकल्पवृत्तान्तोद्भवं मात्स्यं मेढ्रं, गरुड़कल्पवृत्तान्तो० गारुडं दक्षिणपादाग्रं, भविष्यकल्पानां वृत्तान्तोद्भवं ब्रह्माडं वामपादाग्रम् ॥ एवं सत्त्वरजस्तमआद्यात्मकाष्टादश पुराणरूपो हरिः पुराणेषु प्रकाशते। तत्र सात्त्विकपुराणे विष्णोरधिकमाहात्म्यं राजसे प्रकृतिब्रह्मसूर्याणां तामसेऽग्निशिवभैरवादीनां माहात्म्यम्। मिश्रं तु पितृणां माहात्म्यम्। एवमष्टादशमुख्यपुराणसंख्यासमूहश्चतुर्लक्ष एव। अथ च–अष्टादशभ्यश्च पृथक् पुराणं यत्प्र० दृश्यते। विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥ एतेषां च पुराणानां व्याकर्ता तु भवेन्मनुः ॥ १ ॥ अथाष्टादशोपपुराणनामानि–सनत्कुमारम् १ नारसिंहम् २ बृहन्नारदीयम् ३ शिवरहस्याख्यम् ४ दौर्वाससम् ५ कापिलम् ६ वामनम् ७ भार्गवम् ८ वारुणम् ९ कालिकाख्यम् १० साम्बम् ११ नन्दिकृतम् १२ आदित्यपुराणम् १३ पाराशरम् १४ वासिष्ठम् १५ भगवतीभागवतम् १६ गणेशपुराणम् १७ हंसपुराणम् १८ इति। एवं मुद्गलरेणुकाविष्णुधर्मोत्तरशिवधर्मोत्तरादिलघुपुराणान्यप्यष्टादशैव सन्ति महाभारतं त्वितिहासोरामायणादीनि च अतोऽत्र मुख्यचतुर्लक्षपुराणसन्दोहमध्येऽष्टादशसाहस्रं श्रीभागवतमिष्यत इति।

इदं पुरा भगवता नाभिपद्मे स्थिताय ब्रह्मणे कृपया प्रकाशितम् ॥ १० ॥ इदमादिमध्यान्तेषु वैराग्याख्यानयुतम् ॥ ११ ॥ सर्ववेदान्तसारं ब्रह्मात्मैकत्वलक्षणं मोक्षैकप्रयोजनम् ॥१२॥ ईदृशपुराणपुस्तकं भाद्रपदपौर्णमास्यां सुवर्णसिंहासने विहितं यो ददाति स परमां गतिं याति ॥ १३ ॥ किंच यावद् भागवतं नैव श्रूयते तावदन्यपुराणानि साधुसभायां शोभंते ॥ १४ ॥ इदं सर्ववेदान्तसारम् । एतद्रसतृप्तस्यान्यत्र

इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे ॥ स्थिताय भवभीताय कारुण्यात्संप्रकाशितम् ॥ १० ॥ आदिमध्यावसानेषु वैराग्याख्यानसंयुतम् ॥ हरिलीलाकथाव्राताऽमृतानन्दितसत्सुरम् ॥ ११ ॥ सर्ववेदान्तसारं यद्ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम् ॥ १२ ॥ प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ॥ ददाति यो भागवतं स याति परमां गतिम् ॥ १३ ॥ राजन्ते तावदन्यानि पुराणानि सतां गणे ॥ यावद्भागवतं नैव श्रूयतेऽमृतसागरम् ॥ १४ ॥ सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥ १५ ॥ निम्नगानां यथा गङ्गा देवानामच्युतो यथा ॥ वैष्णवानां यथा शम्भुः पुराणानामिदं तथा ॥ १६ ॥ क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ॥ तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥ १७ ॥ श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन्पारमहंस्यमेकममलं ज्ञानं परं गीयते ॥ तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ १८ ॥

प्रीतिर्न स्यात् ॥ १५ ॥ नदीनां यथा गङ्गा श्रेष्ठा देवानां यथा विष्णुर्वैष्णवानां यथा शिवः ॥१६॥ क्षेत्राणां यथा काशी तथा पुराणेष्विदं श्रेष्ठम् ॥१७॥ श्रीमद्भागवतमिदं वैष्णवानां प्रियं यत्र परमहंसैः प्राप्यं ज्ञानं गीयते तच्छृण्वन् पठन् भक्त्या विचारणपरो नरो विमुच्येत् ॥१८॥

---

१ 'यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परम्' इति पाठः सर्वसंमतः । २ दृश्यते ध० पा० ।

ग्रन्थान्ते मङ्गलमाचरति। अयं श्रीभागवतरूपो ज्ञानप्रदीपः कल्पादौ ब्रह्मणे येन ब्रह्मरूपेण नारदाय प्रकाशितो नारदरूपेण व्यासाय व्यासरूपेण शुकाय शुकरूपेण राज्ञे परीक्षिते च तत् सत्यं विशोकं श्रीनारायणाख्यं तत्त्वं धीमहि ॥१९॥ यः इदं ब्रह्मणे व्याचचक्षे तस्मै वासुदेवाय भगवते नमः ॥ २० ॥ किंच यः परीक्षितं संसारसर्पदंशादमूमुचत् तस्मै योगीन्द्राय ब्रह्मरूपिणे शुकाय नमः ॥ २१ ॥ यतस्त्वं नो नाथः

कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ॥ योगीन्द्राय तदात्मनाथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १९ ॥ नमस्तस्मै भगवते वासुदेवाय साक्षिणे ॥ य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ २० ॥ योगीन्द्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे ॥ संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥२१॥ भवे भवे यथा भक्तिः पादयोस्तव जायते ॥ तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो ॥ २२ ॥ नामसंकीर्तनं यस्य सर्वपापप्रणाशनम् ॥ प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ २३ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां पारमहंस्यां संहितायां वैयासिक्यां द्वादशस्कन्धे पुराणसंख्यादानमाहात्म्यादिवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ हरिः ॐ ॥ समाप्तोऽयं द्वादशस्कन्धः ॥ १२ ॥

समाप्तं चेदं पुराणम् ॥



अतः हे देवेश ! भवेभवे यथा तव पादयोर्भक्तिर्जायते तथा कुरु ॥२२॥ यस्य नामकीर्तनं सर्वपापनाशकं प्रमाणो दुःखशमनस्तं हरिं नमामि ॥ २३ ॥ इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे चूर्णिकायां त्रयोदशोऽध्यायः ॥ १३ ॥ अस्मिन्स्कन्धे वृत्तानुष्टुप्श्लोकानां संख्या ॥ ५७२ ॥ अनुमानेन चूर्णिकासंख्या ९०९ श्रीकृष्णार्पणमस्तु ॥ समाप्तोऽयं ग्रन्थः ॥ ॥ शुभं भवतु ॥ ॥ सर्वे जनाः सुखिनो भवन्तु ॥

इदं पुस्तकं क्षेमराज-श्रीकृष्णदास श्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गल्ली खम्बाटा लैन ) स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् ) मुद्रणागारेऽङ्कयित्वा प्रकाशितम् ।

मुद्रक और प्रकाशक-खेमराज श्रीकृष्णदास, अध्यक्ष-"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बम्बई.

इति सच्चूर्णिके श्रीमद्भागवते द्वादशस्कन्धः समाप्तः

## विदुषामभ्यर्थना

अत्रास्माकं मुद्रणालये ऋगादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोपपुराणानि धर्मशास्त्र – कर्मकाण्ड – व्याकरण – न्याय – योग – सांख्य – मीमांसादिशास्त्रीयग्रन्थाः काव्य – नाटक – चम्पू – प्रभृतयो ग्रन्थाः सहस्रनामाद्यनेकस्तोत्रग्रन्था विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः ।

इति श्रीमद्भागवतं चूर्णिकासमेतं सटिप्पणं समाप्तम्।

## विदुषामभ्यर्थना

अत्रास्माकं मुद्रणालये ऋगादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादिमहापुराणोपपुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-सांख्य-मीमांसादिशास्त्रीयग्रन्थाः काव्य-नाटक-चम्पू-प्रभृतयो ग्रन्थाः सहस्रनामाद्यनेकस्तोत्रग्रन्था विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रिता योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहका यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः।


हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :

**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बॅक रोड कार्नर,
मुंबई - ४०० ००४.
दूरभाष / फैक्स-०२२-२३८५७४५६.
Web Site : http://www.khe-shri.com
E-mail : khemraj@vsnl.com

**गंगाविष्णु श्रीकृष्णदास**
लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डिंग,
जूना छापाखाना गली, अहिल्याबाई चौक,
ज्योति बिल्डिंग के पीछे,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष - ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट, पुणे - ४११०१३.
दूरभाष-०२०-२६८७१०२५,

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१.
दूरभाष - ०५४२-२४२००७८.

